# श्रीमहाभारतम्।

———•———

शल्यपर्व।






अथ शल्यवधपर्व॥



नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्॥
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥

जनमेजय उवाच। एवं निपातिते कर्णे समरे सव्यसाचिना।
अल्पावशिष्टाः कुरवः किमकुर्वत वै द्विज॥१॥ उदीर्य्यमाणञ्च
बलं दृष्ट्वा राजा सुयोधनः। पाण्डवैः प्राप्तकालञ्च किम्प्रापद्यत
कौरवः॥२॥ एतदिच्छाम्यहं श्रोतुं तदाचक्ष्व द्विजोत्तम। न
हि तृप्यामि पूर्व्वेषां शृण्वानश्चरितं महत्॥३॥

वैशम्पायन उवाच। ततः कर्णे हते राजन् धार्त्तराष्ट्रः सुयो-
धनः। भृशं शोकार्णवे मग्नो निराशः सर्व्वतोऽभवत्॥४॥ हा
कर्ण हा कर्ण इति शोचमानः पुनः पुनः। कृच्छ्रात् स्वशिविरं
प्रायाद्धतशेषैर्नृपैः सह॥५॥ स समाश्वास्यमानोऽपि हेतुभिः
शास्त्रनिश्चितैः। राजभिर्नालभच्छर्म्म सूतपुत्रवधं स्मरन्॥६॥
स दैवं बलवन्मत्वा भवितव्यञ्च पार्थिवः। संग्रामे निश्चयं कृत्वा
पुनर्युद्धाय निर्य्ययौ॥७॥ शल्यं सेनापतिं कृत्वा विधिवद्राजपुङ्गवः।
रणाय निर्य्ययौ राजन् हतशेषैर्नृपैः सह॥८॥ ततः सुतुमुलं
युद्धं कुरुपाण्डवसेनयोः। अभवद्भरतश्रेष्ठ देवासुररणोपमम्॥९॥

ततः शल्यो महाराज कृत्वा कदनमाहवे। हतसैन्योऽथ मध्याह्ने धर्मराजेन पातितः ॥ १० ॥ ततो दुर्य्योधनो राजा हतबन्धु रणाजिरात्। अपसृत्य ह्रदं घोरं विवेश रिपुजाद्भयात् ॥ ११ ॥ तथापराह्णे तस्याह्नः परिवार्य्य महारथैः। ह्रदादाहूय वेगेन भीमसेनेन पातितः ॥ १२ ॥ तस्मिन् हते महेष्वासे हतशिष्टास्त्रयो रथाः। संरब्धान्निशि राजेन्द्र जघ्नुः पाञ्चालसैनिकान् ॥ १३ ॥ ततः पूर्वाह्णसमये शिबिरादेत्य सञ्जयः। प्रविवेश पुरं दीनो दुःखशोकसमन्वितः ॥ १४ ॥ प्रविश्य च पुरं सूतो भुजावुच्छ्रित्य दुःखितः। वेपमानस्ततो राज्ञः प्रविवेश निवेशनम् ॥ १५ ॥ रुरोद स नरव्याघ्र हा राजन्निति दुःखितः। अहो बत विनिष्टाः स्मो निधनेन महात्मनः ॥ १६ ॥ अहो सुबलवान् कालो गतिश्च विषमा तथा। शक्रतुल्यबलाः सर्व्वे यत्रावध्यन्त पाण्डवैः ॥ १७ ॥ दृष्ट्वैव तु पुरो राजन् जनः सर्व्वः स सञ्जयम्। क्लेशेन महता युक्तं सर्व्वतो राजसत्तम। प्ररुरोद भृशोद्विग्नो हा राजन्निति सस्वरम् ॥ १८ ॥ आकुमारं नरव्याघ्र तत् पुरं वै समन्ततः। आर्त्तनादं ततश्चक्रे श्रुत्वा बिनिहतं नृपम् ॥ १९ ॥ धावतश्चाप्यपश्याम तत्र स्त्रीपुरुषांस्तथा। नष्टचित्तानिवोन्मत्तान् शोकेन भृशपीड़ितम् ॥ २० ॥ तथा स विह्वलः सूतः प्रविश्य नृपतिक्षयम्। ददर्श नृपतिश्रेष्ठं प्रज्ञाचक्षुषमीश्वरम् ॥ २१ ॥ दृष्ट्वा चासीनमनघं समन्तात् परिवारितम्। स्नुषाभिर्भरतश्रेष्ठं गान्धार्य्या विदुरेण च तथान्यैश्च सुहृद्भिश्च ज्ञातिभिश्च हितैः सदा ॥ २२ ॥ तमेव चार्थं ध्यायन्तं कर्णस्य निधनं प्रति। रुदन्नेवाब्रवीद्वाक्यं राजानं जनमेजय ॥ २३ ॥ नातिहृष्टमनाः सूतो वाष्पसन्दिग्धया गिरा। सञ्जयोऽहं नरव्याघ्र नमस्ते भरतर्षभ ॥ २४ ॥ मद्राधिपो हतः शल्यः शकुनिः सौबलस्तथा। उलूकः पुरुषव्याघ्र कैतव्यो दृढ़विक्रमः ॥ २५ ॥ संशप्तका हताः सर्व्वे काम्बोजाश्च शकैः सह।

म्लेच्छाश्च पार्वतीयाश्च यवनाश्च निपातिताः ॥ २६ ॥ प्राच्या हता महाराज दाक्षिणात्याश्च सर्वशः । उदीच्या निहताः सर्वे प्रतीच्याश्च नराधिप ॥ २७ ॥ राजानो राजपुत्राश्च सर्वशो निहता नृप । दुर्य्योधनो हतो राजा यथोक्तं पाण्डवेन ह ॥ २८ ॥ भग्नसक्थो महाराज शेते पांशुषु रूषितः । धृष्टद्युम्नो हतो राजन् शिखण्डी चापराजितः ॥ २९ ॥ उत्तमौजा युधामन्युस्तथा राजन् प्रभद्रकाः । पाञ्चालाश्च नरव्याघ्राश्चेदयश्च निसूदिताः ॥ ३० ॥ तव पुत्रा हताः सर्वे द्रौपदेयाश्च भारत । कर्णपुत्रो हतः शूरो वृषसेनो महाबलः ॥ ३१ ॥ नरा विनिहताः सर्वे गजाश्च विनिसूदिताः । रथिनश्च नरव्याघ्र हयाश्च पतिता युधि ॥ ३२ ॥ किञ्चिच्छेषञ्च शिविरं तावकानां कृतं प्रभो । पाण्डवानां कुरूणाञ्च समासाद्य परस्परम् ॥ ३३ ॥ प्रायः स्त्रीशेषमभवज्जगत् कालेन मोहितम् । सप्त पाण्डवतः शेषा धार्त्तराष्ट्रास्तथा त्रयः ॥ ३४ ॥ ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः । कृपश्च कृतवर्मा च द्रौणिश्च जयतां वरः ॥ ३५ ॥ तवाप्येते महाराज रथिनो नृपसत्तम । अक्षौहिणीणां सर्वासां समेतानां जनेश्वर ॥ ३६ ॥ एते शेषा महाराज सर्वेऽन्ये निधनं गताः । कालेन निहतं जगद्वै भरतर्षभ । दुर्य्योधनं वै पुरतः कृत्वा वैरञ्च भारत ॥ ३७ ॥

वैशम्पायन उवाच । एतच्छ्रुत्वा वचः क्रूरं धृतराष्ट्रो जनेश्वरः । निपपात महाराज गतसत्त्वो महीतले ॥ ३८ ॥ तस्मिन्निपतिते भूमौ विदुरोऽपि महायशाः । निपपात महाराज राजव्यसनकर्षितः ॥ ३९ ॥ गान्धारी च नृपश्रेष्ठ सर्वाश्च कुरुयोषितः । पतिताः सहसा भूमौ श्रुत्वा क्रूरं वचः सताः ॥ ४० ॥ निःसंज्ञं पतितं भूमौ तदासीद्राजमण्डलम् । प्रलापयुक्तं महति चित्रन्यस्तं पटे यथा ॥ ४१ ॥ कृच्छ्रेण तु ततो राजा धृतराष्ट्रो महीपतिः । शनैरलभत प्राणान् पुत्रव्यसनकर्षितः ॥ ४२ ॥ लब्ध्वा तु स नृपः

संज्ञां वेपमानः सुदुःखितः । उदीक्ष्य च दिशः सर्वाः क्षत्तारं वाक्यमब्रवीत् ॥ ४३ ॥ विद्वन् क्षत्तर्महाप्राज्ञ त्वं गतिर्भरतर्षभ । ममानाथस्य सुभृशं पुत्रैर्हीनस्य सर्वशः ॥ ४४ ॥ एवमुक्त्वा ततो भूयो विसंज्ञो निपपात ह । तं तथा पतितं दृष्ट्वा बान्धवा येऽस्य केचन ॥ ४५ ॥ शीतैस्ते सिषिचुस्तोयैर्विव्यजुर्व्यजनैरपि । स तु दीर्घेण कालेन प्रत्याश्वस्तो महीपतिः ॥ ४६ ॥ तूष्णीन्दध्यौ महीपालः पुत्रव्यसनकर्षितः । निश्वसन् जिह्मग इव कुम्भक्षिप्तो विशाम्पते ॥ ४७ ॥ सञ्जयोऽप्यरुदत्तत्र दृष्ट्वा राजानमातुरम् । तथा सर्वाः स्त्रियश्चैव गान्धारी च यशस्विनी ॥ ४८ ॥ ततो दीर्घेण कालेन विदुरं वाक्यमब्रवीत् । धृतराष्ट्रो नरश्रेष्ठ मुह्यमानो मुहुर्मुहुः ॥ ४९ ॥ गच्छन्तु योषितः सर्वा गान्धारी च यशस्विनी । तथेमे सुहृदः सर्वे भ्रश्यते मे मनो भृशम् ॥ ५० ॥ एवमुक्तस्ततः क्षत्ता ताः स्त्रियो भरतर्षभ । विसर्ज्जयामास शनैर्वेपमानः पुनः पुनः ॥ ५१ ॥ निश्चक्रमुस्ततः सर्वास्ता स्त्रियो भरतर्षभ । सुहृदश्च ततः सर्वे दृष्ट्वा राजानमातुरम् ॥ ५२ ॥ ततो नरपतिं तन्तु लब्धसंज्ञं परन्तप । अवैक्षत् सञ्जयो दीनो रोदमानं भृशातुरम् ॥ ५३ ॥ प्राञ्जलिर्निश्वसन्तञ्च तं नरेन्द्रं मुहुर्मुहुः । समाश्वासयत क्षत्ता वचसा मधुरेण ह ॥ ५४ ॥

इति शल्यपर्वणि शल्यवधपर्वणि धृतराष्ट्रप्रमोहे प्रथमोऽध्यायः ॥ १ ॥

---

वैशम्पायन उवाच । विसृष्टास्वथ नारीषु धृतराष्ट्रोऽम्बिकासुतः । विललाप महाराज दुःखाद्दुःखतरं गतः ॥ १ ॥ सधूममिव निश्वस्य करौ धून्वन् पुनः पुनः । विचिन्त्य च महाराज ततो वचनमब्रवीत् ॥ २ ॥

धृतराष्ट्र उवाच । अहो वत महद्दुःखं यदहं पाण्डवान्रणे । क्षेमिणश्चाव्ययांश्चैव त्वत्तः सूत शृणोमि वै ॥ ३ ॥ वज्रसारमयं नूनं हृदयं सुदृढं मम । यच्छ्रुत्वा निहतान् पुत्रान् दीर्य्यते न सहस्रधा ॥ ४ ॥ चिन्तयित्वा वयस्तेषां वालक्रीड़ाश्च सञ्जय । अद्य श्रुत्वा हतान् पुत्रान् भृशं मे दीर्य्यते मनः ॥ ५ ॥ अन्धत्वाद्यदि तेषान्तु न मे रूपनिदर्शनम् । पुत्रस्नेहकृता प्रीतिर्नित्यमेतेषु धारिता ॥ ६ ॥ वालभावमतिक्रान्तान् यौवनस्थांश्च तानहम् । मध्यप्राप्तांस्तथा श्रुत्वा हृष्ट आसं तदानघ ॥ ७ ॥ तानद्य निहतान् श्रुत्वा हतैश्वर्य्यान् हतौजसः । न लभे वै क्वचिच्छान्तिं पुत्राधिभिरभिप्लुतः ॥ ८ ॥ एह्येहि पुत्र राजेन्द्र ममानाथस्य साम्प्रतम् । त्वया हीनो महावाहो कान्नु यास्याम्यहं गतिम् ॥ ९ ॥ कथं त्वं पृथिवीपालांस्त्यक्त्वा तात समागतान् । शेषे विनिहतो भूमौ प्राकृतः कुनृपो यथा ॥ १० ॥ गतिर्भूत्वा महाराज ज्ञातीनां सुहृदां तथा । अन्धं वृद्धञ्च मां वीर विहाय क्वाभिगच्छसि ॥ ११ ॥ सा कृपा सा च ते प्रीतिः सा च राजन् सुमानिता । कथं विनिहतः पार्थैः संयुगेष्वपराजितः ॥ १२ ॥ को नु मामुत्थितं काले तात तातेति वक्ष्यति । महाराजेति सततं लोकनाथेति चासकृत् ॥ १३ ॥ परिष्वज्य च मां कण्ठे स्नेहेनाक्लिन्नलोचनः । अनुशाधीति कौरव्य तत् साधु वदसेव च ॥ १४ ॥ ननु नामाहमश्रौषं वचनं तव पुत्रक । भूयसी मम पृथ्वीयं यथा पार्थस्य नो तथा ॥ १५ ॥ भगदत्तः कृपः शल्य आवन्त्योऽथ जयद्रथः । भूरिश्रवाः शलश्चैव सोमदत्तोऽथ वाह्लिकः ॥ १६ ॥ अश्वत्थामा च भोजश्च मागधश्च महावलः । वृहद्वलश्च काशीशः शकुनिश्चापि सौवलः ॥ १७ ॥ म्लेच्छाश्च बहुसाहस्राः शकाश्च यवनैः सह । सुदक्षिणश्च काम्बोजस्त्रिगर्त्ताधिपतिस्तथा ॥ १८ ॥ भीष्मः पितामहश्चैव भारद्वाजोऽथ गौतमः । श्रुतायुश्चायुतायुश्च शतायुश्चैव वीर्य्यवान् ॥ १९ ॥ जल-

सन्धोऽथार्थ्यशृङ्गी राक्षसश्चाप्यलायुधः। अलम्बुषो महाबाहुः सुबाहुश्च महारथः॥ २०॥ एते चान्ये च बहवो राजानो राजसत्तम। मदर्थमुद्यताः सर्वे प्राणांस्त्यक्त्वा महारणे॥ २१॥ येषां मध्ये स्थितो युद्धे भ्रातृभिः परिवारितः। योधयिष्याम्यहं पार्थान् पाञ्चालांश्चैव सर्वशः॥ २२॥ चेदींश्च नृपशार्दूल द्रौपदेयांश्च संयुगे। सात्यकिं कुन्तिभोजञ्च राक्षसञ्च घटोत्कचम्॥ २३॥ एकोऽप्येषां महाराज समर्थः सन्निवारणे। समरे पाण्डवेयानां संक्रुद्धोऽप्यभिधावताम्॥ २४॥ किं पुनः सहिता वीराः कृतवैराश्च पाण्डवैः। अथ वा सर्व एवैते पाण्डवस्यानुयायिभिः। योत्स्यन्ते सह राजेन्द्र हनिष्यन्ति च तान्मृधे॥ २५॥ कर्णस्त्वेको मया सार्द्धं निहनिष्यति पाण्डवान्। ततो नृपतयो वीराः स्थास्यन्ति मम शासने॥ २६॥ यश्च तेषां प्रणेता वै वासुदेवो महाबलः। न स सन्नह्यते राजन्निति मामब्रवीद्वचः॥ २७॥ तस्याहं वदतः सूत बहुशो मम सन्निधौ। शक्तितो ह्यनुपश्यामि निहतान् पाण्डवान्मृधे॥ २८॥ तेषां मध्ये स्थिता यत्र हन्यन्ते मम पुत्रकाः। व्यायच्छमानाः समरे किमन्यद्भागधेयतः॥ २९॥ भीष्मश्च निहतो यत्र लोकनाथ प्रतापवान्। शिखण्डिनं समासाद्य मृगेन्द्र इव जम्बुकम्॥ ३०॥ द्रोणश्च ब्राह्मणो यत्र सर्वशास्त्रास्त्रपारगः। निहतः पाण्डवैः सङ्ख्ये किमन्यद्भागधेयतः॥ ३१॥ भूरिश्रवा हतो यत्र सोमदत्तश्च संयुगे। वाह्लीकश्च महाराजः किमन्यद्भागधेयतः॥ ३२॥ भगदत्तो हतो यत्र गजयुद्धविशारदः। जयद्रथश्च निहतः किमन्यद्भागधेयतः॥ ३३॥ सुदक्षिणो हतो यत्र जलसन्धश्च पौरवः। श्रुतायुश्चायुतायुश्च किमन्यद्भागधेयतः॥ ३४॥ महाबलस्तथा पाण्ड्यः सर्वशस्त्रभृताम्वरः। निहतः पाण्डवैः संख्ये किमन्यद्भागधेयतः॥ ३५॥ बृहद्बलो हतो यत्र मागधश्च महाबलः। उग्रायुधश्च विक्रान्तः प्रतिमानं धनुष्मताम्॥ ३६॥

आवन्त्यौ निहतौ यत्र त्रैगर्त्तश्च नराधिपः। संशप्तकाश्च बहवः किमन्यद्भागधेयतः॥ ३७॥ अलम्बुषस्तथा राजा राक्षसश्चाप्यलायुधः। आर्ष्यशृङ्गिश्च निहतः किमन्यद्भागधेयतः॥ ३८॥ नारायणा हता यत्र गोपाला युद्धदुर्म्मदाः। म्लेच्छाश्च बहुसाहस्राः किमन्यद्भागधेयतः॥ ३९॥ शकुनिः सौबलो यत्र कैतव्यश्च महाबलः। निहतः सबलो वीरः किमन्यद्भागधेयतः॥ ४०॥ यत्र शूरा महात्मानः सर्वशस्त्रास्त्रपारगाः। बहवो निहताः सूत महेन्द्रसमविक्रमाः॥ ४१॥ नानादेशसमावृत्ताः क्षत्रिया यत्र सञ्जय। निहताः समरे सर्व्वे किमन्यद्भागधेयतः॥ ४२॥ पुत्राश्च मे विनिहताः पौत्राश्चैव महाबलाः। वयस्या भ्रातरश्चैव किमन्यद्भागधेयतः॥ ४३॥ भागधेयसमायुक्तो ध्रुवमुत्पद्यते नरः। यस्तु भाग्यसमायुक्तः स शुभं प्राप्नुयान्नरः॥ ४४॥ अहं वियुक्तः स्वैर्भाग्यैः पुत्रैश्चैवेह सञ्जय। कथमद्य भविष्यामि वृद्धः शत्रुवशं गतः॥ ४५॥ नान्यदत्र परं मन्ये वनवासादृते प्रभो। सोऽहं वनं गमिष्यामि निर्बन्धुर्ज्ञातिसङ्क्षये॥ ४६॥ न हि मेऽन्यद्भवेच्छ्रेयो वनाय गमनादृते। इमामवस्थां प्राप्तस्य लूनपक्षस्य सञ्जय॥ ४७॥ दुर्य्योधनो हतो यत्र शल्यश्च निहतो युधि। दुःशासनो विशस्तश्च विकर्णश्च महाबलः॥ ४८॥ कथं हि भीमसेनस्य श्रोष्येऽहं शब्दमुत्तमम्। एकेन समरे येन हतं पुत्रशतं मम॥ ४९॥ असकृद्वदतस्तस्य दुर्य्योधनवधञ्च तम्। दुःखशोकाभिसन्तप्तो न श्रोष्ये परुषा गिरः॥ ५०॥

वैशम्पायन उवाच। एवं स शोकसन्तप्तः पार्थिवो हतबान्धवः। मुहुर्मुहुर्मुह्यमानः पुत्राधिभिरभिप्लुतः॥ ५१॥ विलप्य सुचिरं कालं धृतराष्ट्रोऽम्बिकासुतः। दीर्घमुष्णञ्च निश्वस्य चिन्तयित्वा पराभवम्॥ ५२॥ शोकेन महताविष्टः सन्तप्तो भरतर्षभ। पुनर्गावल्गणिं सूतं पर्य्यपृच्छद्यथातथम्॥ ५३॥

धृतराष्ट्र उवाच। भीष्मद्रोणौ हतौ श्रुत्वा सूतपुत्रञ्च पातितम्। सेनापतिं प्रणेतारं किमकुर्वत मामकाः॥ ५४॥ यं यं सेनाप्रणेतारं युधि कुर्वन्ति मामकाः। अचिरेणैव कालेन तं तं निघ्नन्ति पाण्डवाः॥ ५५॥ रणमूर्द्धि हतो भीष्मः पश्यतां वः किरीटिना। एवमेव हतो द्रोणः सर्वेषामेव पश्यताम्॥ ५६॥ एवमेव हतः कर्णः सूतपुत्रः प्रतापवान्। सराजकानां सर्वेषां पश्यतां वः किरीटिना॥ ५७॥ पूर्वमेवाहमुक्तो वै विदुरेण महात्मना। दुर्य्योधनापराधेन प्रजेयं विनशिष्यति॥ ५८॥ केचिन्न सम्यक् पश्यन्ति मूढ़ाः सम्यगवेक्ष्य च। तदिदं मम मूढ़स्य तथाभूतं वचस्तु तत्॥ ५९॥ यदब्रवीत् स धर्मात्मा विदुरः सर्वधर्मवित्। तत्तथा समनुप्राप्तं वचनं सत्यमीरितम्॥ ६०॥ दैवोपहतचित्तेन यन्मया न कृतं पुरा। अनयस्य फलं तस्य ब्रूहि गावल्गणे पुन॥ ६१॥ को वै मुखमनीकानामासीत् कर्णे निपातिते। अर्जुनं वासुदेवञ्च को वा प्रत्युद्ययौ रथी॥ ६२॥ केऽरचन् दक्षिणञ्चक्रं मद्रराजस्य संयुगे। वामञ्चा योद्धुकामस्य के वा वीरस्य पृष्ठतः॥ ६३॥ कथञ्च वः समेतानां मद्रराजो महाबलः। निहतः पाण्डवैः सङ्ख्ये पुत्रो वा मम सञ्जय॥ ६४॥ ब्रूहि सर्वं यथातत्त्वं भारतानां महाक्षयम्। यथा च निहतः संख्ये पुत्रो दुर्य्योधनो मम॥ ६५॥ पाञ्चालाश्च यथा सर्वे निहताः सपदानुगाः। धृष्टद्युम्नः शिखण्डी च द्रौपद्याः पञ्च चात्मजाः॥६५॥ पाण्डवाश्च यथा मुक्तास्तथोभौ सात्वतौ युधि। कृपश्च कृतवर्मा च भारद्वाजस्य चात्मजः॥ ६७॥ यद्यथा यादृशञ्चैव युद्धं वृत्तमभूत्ततः। अखिलं श्रोतुमिच्छामि कुशलो ह्यसि सञ्जय॥ ६८॥

इति शल्यपर्वणि शल्यवधपर्वणि धृतराष्ट्रविलापे
द्वितीयोऽध्यायः॥ २॥

---

सञ्जय उवाच। शृणु राजन्नवहितो यथा वृत्तो जनक्षयः।
कुरूणां पाण्डवानाञ्च समासाद्य परस्परम्॥ १॥ निहते सूत-
पुत्रे तु पाण्डवेन महात्मना। विद्रुतेषु च सैन्येषु समानीतेषु चास-
कृत्॥ २॥ घोरे मनुष्यदेहानामाजौ नरवरक्षये। यत्तत् कर्णे
हते पार्थः सिंहनादमथाकरोत्। तदा तव सुतान् राजन् प्राविशत्
सुमहद्भयम्॥ ३॥ न सन्धातुमनीकानि न चैवाथ पराक्रमे।
आसीद्बुद्धिर्हते कर्णे तव योधस्य कस्यचित्॥ ४॥ वणिजो नावि
भिन्नायामगाधे विप्लवा इव। अपारे पारमिच्छन्तो हते द्वीपे
किरीटिना॥ ५॥ सूतपुत्रे हते राजन् वित्रस्ताः शरविक्षताः।
अनाथा नाथमिच्छन्तो मृगाः सिंहार्द्दिता इव॥ ६॥ भग्नशृङ्गा
इव वृषाः शीर्णदंष्ट्रा इवोरगाः। प्रत्युपायाम सायाह्ने निर्ज्जिताः
सव्यसाचिना॥ ७॥ हतप्रवीरा विध्वस्ता निकृत्ता निशितैः शरैः।
सूतपुत्रे हते राजन् पुत्रास्ते प्राद्रवन् भयात्॥ ८॥ विशस्त्रकवचाः
सर्व्वे कान्दिशीका विचेतसः। अन्योऽन्यमभिनिघ्नन्तो वीक्षमाणा
भयार्द्दिताः॥ ९॥ मामेव नूनं बीभत्सुर्मामेव च वृकोदरः।
अभियातीति मन्वानाः पेतुर्म्मम्लुश्च भारत॥ १०॥ हयानन्ये रथा-
नन्ये गजानन्ये महारथाः। आरुह्य जवसम्पन्नान् पादातानाजहु-
र्भयात्॥ ११॥ कुञ्जरैः स्यन्दना भग्ना सादिनश्च महारथः।
पदातिसङ्घाश्चाश्वौघैः पलायद्भिर्भृशं हताः॥ १२॥ व्यालतस्कर-
सङ्कीर्णे सार्थहीना यथा वने। तथा त्वदीया निहते सूतपुत्रे
तदाभवन्॥ १३॥ हतारोहास्तथा नागाश्छिन्नहस्तास्तथापरे।
सर्व्वं पार्थमयं लोकमपश्यन् वै भयातुराः॥ १४॥ तान् प्रेक्ष्य
द्रवतः सर्व्वान् भीमसेनभयार्द्दितान्। दुर्य्योधनोऽथ स्वं सूतं हाहा
कृत्वेदमब्रवीत्॥ १५॥ नातिक्रमिष्यते पार्थो धनुष्पाणिमवस्थितम्।
जघने वर्त्तमानं मां तूर्णमश्वान् प्रचोदय॥ १६॥ समरे युध्य-
मानं हि कौन्तेयो मां धनञ्जयः। नोत्सहेदभ्यतिक्रान्तुं वेलामिव

महार्णवः ॥ १७ ॥ अथार्जुनं सगोविन्दं मानिनञ्च वृकोदरम्।
निहत्य शिष्टान् शत्रूंश्च कर्णस्यानृण्यमाप्नुयाम् ॥ १५ ॥ तच्छ्रुत्वा
कुरुराजस्य शूरार्य्यसदृशं वचः। सूतो हेमपरिच्छन्नाञ्छनैरश्वा-
नचोदयत् ॥ १९ ॥ गजाश्वरथहीनाश्च पादाताश्चैव मारिष।
पञ्चविंशति साहस्राः प्राद्रवञ्छनकैरिव ॥ २० ॥ तान् भीमसेनः
संक्रुद्धो धृष्टद्युम्नश्च पार्षतः। बलेन चतुरङ्गेण परिक्षिप्याहनच्छरैः
॥ २१ ॥ प्रत्ययुध्यन्त ते सर्वे भीमसेनं सपार्षतम्। पार्थपार्ष-
तयोश्चान्ये जगृहुस्तत्र नामनी ॥ २२ ॥ अक्रुध्यत रणे भीमस्तै-
र्मृधे पर्य्युपस्थितैः। सोऽवतीर्य्य रथात्तूर्णं गदापाणिरयुध्यत
॥ २३ ॥ न तान् रथस्थो भूमिष्ठान्धर्मापेक्षी वृकोदरः। योधयामास
कौन्तेयो भुजवीर्य्यं समाश्रितः ॥ २४ ॥ ततः शैक्यायसीं गुर्वीं
कालान्तकयमोपमाम्। जातरूपपरिच्छन्नां प्रगृह्य महतीं गदाम्।
न्यवधीत्तावकान् सर्वान्दण्डपाणिरिवान्तकः ॥ २५ ॥ पदातयो-
ऽतिसंरब्धास्त्यक्तजीवितबान्धवाः। भीममभ्यद्रवन् सङ्ख्ये पतङ्गा
ज्वलनं यथा ॥ २६ ॥ आसाद्य भीमसेनं ते संरब्धा युद्धदुर्मदाः।
विनेशुः सहसा दृष्ट्वा भूतग्रामा इवान्तकम् ॥ २७ ॥ श्येनवद्विचर-
न्भीमः खड्गेन गदया तथा। पञ्चविंशतिसाहस्रांस्तावकाना-
मपोथयत् ॥ २८ ॥ हत्वा तत् पुरुषानीकं भीमः सत्यपराक्रमः।
धृष्टद्युम्नं पुरस्कृत्य पुनस्तस्थौ महाबलः ॥ २९ ॥ धनञ्जयो रथा-
नीकमन्वपद्यत वीर्य्यवान्। माद्रीपुत्रौ तु शकुनिं सात्यकिश्च महा-
रथः। जवेनाभ्यपतन् हृष्टा हन्तुकामा महाबलाः ॥३०॥ तस्याश्व-
वरान् सुबहूंस्ते निहत्य शितैः शरैः। तमन्वधावंस्त्वरितास्तत्र
युद्धमभून्महत् ॥ ३१ ॥ ततो धनञ्जयो राजन् रथानीकमगाहत।
विश्रुतं त्रिषु लोकेषु गाण्डीवं विक्षिपन्धनुः ॥ ३२ ॥ कृष्णसारथि-
मायान्तं दृष्ट्वा श्वेतहयं रथम्। अर्जुनञ्चापि योद्धारं त्वदीयाः
प्राद्रवन् भयात् ॥ ३३ ॥ विप्रहीनरथाश्वाश्च शरैश्च परिवारिताः।

पञ्चविंशतिसाहस्राः पार्थमार्च्छन् पदातयः ॥ ३४ ॥ हत्वा तत्-
पुरुषानीकं पञ्चालानां महारथः । भीमसेनं पुरस्कृत्य नचिरात्
प्रत्यपद्यत ॥ ३५ ॥ महाधनुर्द्धरः श्रीमानमित्रगणमर्द्दनः । पुत्र-
पञ्चालराजस्य धृष्टद्युम्नो महायशाः ॥ ३६ ॥ पारावतसवर्णाश्वं
कोविदारवरध्वजम् । धृष्टद्युम्नं रणे दृष्ट्वा त्वदीया प्राद्रवन् भयात्
॥ ३७ ॥ गान्धारराजं शीघ्रास्त्रमनुसृत्य यशस्विनौ । नचिरात्
प्रत्यदृश्येतां माद्रीपुत्रौ ससात्यकी ॥ ३८ ॥ चेकितानः शिखण्डी च
द्रौपदेयाश्च मारिष । हत्वा त्वदीयं सुमहत् सैन्यं शङ्खानथाधमन्
॥ ३९ ॥ ते सर्वांस्तावकान् प्रेक्ष्य द्रवतो वै पराङ्मुखान् । अभ्य-
धावन्त निघ्नन्तो वृषान् जित्वा वृषा इव ॥ ४० ॥ सेनावशेषं तं
दृष्ट्वा तव पुत्रस्य पाण्डवः । व्यवस्थितं सव्यसाची चुक्रोध बलवा-
न्नृप । तत एनं शरै राजन् सहसा समवाकिरत् ॥ ४१ ॥ रजसा
चोद्गतेनाथ न स्म किञ्चन दृश्यते ॥ ४२ ॥ अन्धकारीकृते लोके
शरीभूते महीतले । दिशः सर्वा महाराज तावकाः प्राद्रवन्
भयात् ॥ ४३ ॥ भज्यमानेषु सैन्येषु कुरुराजो विशाम्पतिः ।
परेषामात्मनश्चैव समन्तात् समुपाद्रवत् ॥ ४४ ॥ ततो दुर्य्योधनः
सर्वानाजुहावाथ पाण्डवान् । युद्धाय भरतश्रेष्ठो देवानिव पुरा
बलिः ॥ ४५ ॥ त एनमभिगर्ज्जन्तं सहिताः समुपाद्रवन् । नाना-
शस्त्रसृजः क्रुद्धा भर्त्सयन्तो मुहुर्मुहुः ॥ ४६ ॥ दुर्य्योधनोऽप्यस-
म्भ्रान्तस्तानरीन् व्यधमच्छरैः । तत्राद्भुतमपश्याम तव पुत्रस्य
पौरुषम् ॥ ४७ ॥ यदेनं पाण्डवाः सर्वे न शेकुरतिवर्त्तितुम् ।
नातिदूरापयातन्तं कृतबुद्धिं पलायने ॥ ४८ ॥ दुर्य्योधनः स्वकं
सैन्यमपश्यद्भृशविक्षतम् । ततोऽवस्थाप्य राजेन्द्र कृतबुद्धिस्तवा-
त्मजः । हर्षयन्निव तान् योधानिदं वचनमब्रवीत् ॥ ४९ ॥ न
तं देशं प्रपश्यामि पृथिव्यां पर्वतेषु च । यत्र यातान्न वो हन्युः
पाण्डवाः किं सृतेन वः ॥ ५० ॥ स्वल्पञ्चापि बलं तेषां कृष्णौ च

भग्नविच्छतो। यदि सर्वेऽत्र तिष्ठामो ध्रुवो नो विजयो भवेत् ॥ ५१ ॥ विप्रयातांस्तु वो भिन्नान् पाण्डवाः कृतकिल्बिषान्। अनुसृत्य हनिष्यन्ति श्रेयो नः समरे वधः ॥ ५२ ॥ सुख सांग्रामिको मृत्युः क्षत्रधर्मेण युध्यतः। ततो दुःखं न जानीते प्रेत्य चानन्त्यमश्नुते ॥ ५३ ॥ शृण्वन्तु क्षत्रियाः सर्वे यावन्तो वै समागताः। द्विषतो भीमसेनस्य क्रुद्धस्य वशमेष्यथ। पितामहैराचरितं न धर्मं हातुमर्हथ ॥ ५४ ॥ न च कर्मास्ति पापीयः क्षत्रियस्य पलायनात् ॥ ५५ ॥ न युद्धधर्माच्छ्रेयान् हि पन्थाः स्वर्गस्य कौरवाः। सुचिरेणार्जितांल्लोकान् सद्यो योधः समश्नुते ॥ ५६ ॥ तस्य तद्वचनं राज्ञः पूजयित्वा महारथाः। पुनरेवाभ्यवर्त्तन्त क्षत्रियाः पाण्डवान् प्रति। पराजयममृष्यन्तः कृतचित्ताश्च विक्रमे ॥ ५७ ॥ तत प्रववृते युद्धं पुनरेव सुदारुणम्। तावकानां परेषाञ्च देवासुररणोपमम् ॥ ५८ ॥ युधिष्ठिरपुरोगांश्च सर्वसैन्येन पाण्डवान्। अन्वधावन्महाराज पुत्रो दुर्योधनस्तव ॥ ५९ ॥

इति शल्यपर्वणि शल्यवधपर्वणि कौरवपलायने

तृतीयोऽध्यायः ॥ ३ ॥

---

सञ्जय उवाच। पतितान्रथनीडांश्च रथांश्चापि महात्मनाम्। रणे विनिहतान् दृष्ट्वा नागान् पत्तींश्च मारिष ॥ १ ॥ आयोधनञ्चातिघोरं रुद्रस्याक्रीड़सन्निभम्। अप्रख्यातिं गतानान्तु राज्ञां शतसहस्रशः ॥ २ ॥ विमुखे तव पुत्रे तु शोकोपहतचेतसि। भृशोद्विग्नेषु सैन्येषु दृष्ट्वा पार्थस्य विक्रमम् ॥ ३ ॥ ध्यायमानेषु सैन्येषु दुःखं प्राप्तेषु भारत। बलानां मथ्यमानानां श्रुत्वा निनदमुत्तमम् ॥ ४ ॥ अभिज्ञानं नरेन्द्राणां विकृतं प्रेक्ष्य संयुगे। कृपाविष्टः कृपो राजन् वयःशीलसमन्वितः ॥ ५ ॥ अब्रवीत् तत्र तेजस्वी

वोऽभिसृत्य जनाधिपम् । दुर्य्योधनं मन्युवशाद्वचनं वचनक्षमः ॥६॥
दुर्य्योधन निबोधेदं यत्त्वां वक्ष्यामि भारत । श्रुत्वा कुरु महाराज
यदि ते रोचतेऽनघ ॥ ७ ॥ न युद्धधर्म्माच्छ्रेयान् वै पन्था राजेन्द्र
विद्यते । यं समाश्रित्य युध्यन्ते क्षत्रियाः क्षत्रियर्षभ ॥ ८ ॥ पुत्रो
भ्राता पिता चैव स्वस्रीयो मातुलस्तथा । सम्बन्धिबान्धवाश्चैव
योध्या वै क्षत्रजीविना ॥ ९ ॥ वधे चैव परो धर्म्मस्तथाधर्म्मः
पलायने । तस्माद्घोरां समापन्ना जीविकां जीवितार्थिनः ॥ १० ॥
तत्र त्वां प्रति वक्ष्यामि किञ्चिदेव हितं वचः । हते भीष्मे च द्रोणे
च कर्णे चैव महारथे ॥ ११ ॥ जयद्रथे च निहते तव भ्रातृषु
चानघ । लक्ष्मणे तव पुत्रे च किं शेषं पर्य्युपास्महे ॥ १२ ॥ येषु-
भारं समासज्य राज्ये मतिमकुर्म्महि । ते सन्त्यज्य तनूर्य्याताः
शूरा ब्रह्मविदां गतिम् ॥ १३ ॥ वयं त्विह विनाभूता गुणवद्भि-
र्म्महारथैः । कृपणं वर्त्तयिष्यामः पातयित्वा नृपान् बहून् ॥ १४ ॥
सर्व्वैरपि च जीवद्भिर्व्वीभत्सुर्न पराजितः । कृष्णनेत्रो महाबाहु-
र्द्देवैरपि दुराधरः ॥ १५ ॥ इन्द्रकार्म्मुकवज्राभमिन्द्रकेतुमिवोच्छ्रि-
तम् । वानरं केतुमासाद्य सञ्चचाल महाचमूः ॥ १६ ॥ सिंह-
नादेन भीमस्य पाञ्चजन्यस्वनेन च । गाण्डीवस्य च निर्घोषात्
संहृष्यन्ति मनांसि नः ॥ १७ ॥ चरन्तीव महाविद्युन्मुष्णन्ती
नयनप्रभाम् । अलातमिव चाविद्धं गाण्डीवं समदृश्यत ॥ १८ ॥
जाम्बूनदविचित्रञ्च धूयमानं महद्धनुः । दृश्यते दिक्षु सर्व्वासु विद्यु-
दभ्रघनेष्विव ॥ १९ ॥ श्वेताश्च वेगसम्पन्नाः शशिकाशसमप्रभाः ।
पिबन्त इव चाकाशं रथे युक्तास्तु वाजिनः ॥ २० ॥ उह्यमानाश्च
कृष्णेन वायुनेव वलाहकाः । जाम्बूनदविचित्राङ्गा वहन्ते चार्ज्जुनं
रणे ॥ २१ ॥ तावकं तद्बलं राजन्नर्ज्जुनोऽस्त्रविदाम्बरः । गहनं
शिशिरे कक्षं ददाहाग्निरिवोत्थितः ॥ २२ ॥ गाहमानमनीकानि
महेन्द्रसदृशप्रभम् । धनञ्जयमपश्याम चतुर्दंष्ट्रमिव द्विपम् ॥ २३ ॥

विक्षोभयन्तं सेनान्ते त्रासयन्तञ्च पार्थिवान्। धनञ्जयमपश्याम नलिनीमिव कुञ्जरम् ॥ २४ ॥ त्रासयन्तं तथा योधान् धनुर्घोषेण पाण्डवम्। भूय एनपश्याम सिंहं मृगगणानिव ॥ २५ ॥ सर्व-लोकमहेष्वासौ वृषभौ सर्वधन्विनाम्। आमुक्तकवचौ कृष्णौ लोक-मध्ये व्यराजताम् ॥ २६ ॥ अद्य सप्तदशाहानि वर्त्तमानस्य भारत। संग्रामस्यातिघोरस्य वध्यताञ्चाभितो युधि ॥ २७ ॥ वायुनेव विधू-तानि तवानीकानि सर्वशः। शरदम्भोदजालानि व्यशीर्य्यन्त सम-न्ततः ॥ २८ ॥ तां नावमिव पर्य्यस्तां वातभ्रान्तां महार्णवे। तव सेनां महाराज सव्यसाची व्यकम्पयत् ॥ २९ ॥ क्व नु ते सूत-पुत्रोऽभूत् क्व नु द्रोणः सहानुगः। अहं क्व च क्व चात्मा ते हार्द्दिक्यश्च तथा क्व नु। दुःशासनश्च भ्राता ते भ्रातृभिः सहितः क्व नु ॥ ३० ॥ वाणगोचरसंप्राप्तं प्रेक्ष्य चैव जयद्रथम्। सम्बन्धिन-स्तथा भ्रातॄन् सहायान्मातुलांस्तथा ॥ ३१ ॥ सर्वान् विक्रम्य मिषतो लोकञ्चाक्रम्य मूर्द्धनि। जयद्रथो हतो राजा किन्नुशेषमुपास्महे ॥ ३२ ॥ को वेह स पुमानस्ति यो विजेष्यति पाण्डवम् ॥ ३३ ॥ तस्य चास्त्राणि दिव्यानि विविधानि महात्मनः। गाण्डीवस्य च निर्घोषो वीर्य्याणि हरते हि नः ॥ ३४ ॥ नष्टचन्द्रा यथा रात्रिः सेनेयं हतनायका। नागभग्नद्रुमा शुष्का नदीवाकुलताङ्गता ॥३५॥ ध्वजिन्यां हतनेत्रायां यथेष्टं श्वेतवाहनः। चरिष्यति महाबाहुः कक्षेऽग्निरिव संज्वलन् ॥ ३६ ॥ सात्यकेश्चैव यो वेगो भीमसेनस्य चोभयोः। दारयेत गिरीन् सर्वान् शोषयेत च सागरान् ॥ ३७ ॥ उवाच वाक्यं यद्भीमः सभामध्ये विशाम्पते। कृतञ्च सकलं तेन भूयश्चैव करिष्यति ॥ ३८ ॥ प्रमुखस्थे तदा कर्णे बलं पाण्डव-रक्षितम्। दुरासदं तथा गुप्तं दृढ़ं गाण्डीवधन्वना ॥ ३९ ॥ युष्माभिस्तानि चीर्णानि यान्यसाधूनि साधुषु। अकारणकृतान्येव तेषां वः फलमागतम् ॥ ४० ॥ आत्मनोऽर्थे त्वया लोको यत्नतः

रणे श्राह्वतः । स ते संशयितस्तात आत्मा च भरतर्षभ ॥ ४१ ॥ रक्ष दुर्य्योधनात्मानमात्मा सर्व्वस्य भाजनम् । भिन्ने हि भाजने तात दिशो गच्छति तद्गतम् ॥ ४२ ॥ हीयमानेन वै सन्धिः पर्य्येष्टव्यः समेन च । विग्रहो वर्द्धमानेन नीतिरेषा बृहस्पतेः ॥ ४३ ॥ ते वयं पाण्डुपुत्रेभ्यो हीनाश्च बलशक्तितः । तदत्र पाण्डवैः सार्द्धं सन्धिं मन्ये क्षमं प्रभो ॥ ४४ ॥ न जानीते हि यः श्रेयः श्रेयसश्चावमन्यते । स क्षिप्रं भ्रश्यते राज्यान्न च श्रेयोऽनुविन्दति ॥४५॥ प्रणिपत्य हि राजानं राज्यं यदि लभेमहि । श्रेयः स्यान्न तु मौढ्येन राजन् गन्तुं पराभवम् ॥ ४६ ॥ वैचित्रवीर्य्यवचनात् कृपाशीलो युधिष्ठिरः । विनियुञ्जीत राज्ये त्वां गोविन्दवचनेन च ॥ ४७ ॥ यद्ब्रूयाद्धि हृषीकेशो राजानमपराजितम् । अर्जुनं भीमसेनञ्च सर्व्वं कुर्य्युरसंशयम् ॥ ४८ ॥ नातिक्रमिष्यते कृष्णो वचनं कौरवस्य ह । धृतराष्ट्रस्य मन्येऽहं नापि कृष्णस्य पाण्डवः ॥ ४९ ॥ एतत् क्षेममहं मन्ये तव पार्थैर्न विग्रहम् । न त्वां ब्रवीमि कार्पण्यात् न प्राणपरिरक्षणात् । पथ्यं राजन् ब्रवीमि त्वां तत्परासुः स्मरिष्यसि ॥ ५० ॥ इति वृद्धो विलप्यैतत् कृपः शारद्वतो वचः । दीर्घमुष्णञ्च निश्वस्य शुशोच च मुमोह च ॥५१॥

इति शल्यपर्व्वणि शल्यवधपर्व्वणि कृपाचार्य्यवाक्ये
चतुर्थोऽध्यायः ॥ ४ ॥

---

सञ्जय उवाच । एवमुक्तस्ततो राजा गौतमेन यशस्विना । निश्वस्य दीर्घमुष्णञ्च तूष्णीमासीद्विशाम्पते ॥ १ ॥ ततो मुहूर्त्तं स ध्यात्वा धार्त्तराष्ट्रो महामनाः । कृपं शारद्वतं वाक्यमित्युवाच परन्तपः ॥ २ ॥ यत् किञ्चित् सुहृदा वाच्यं तत् सर्व्वं श्रावितो ह्यहम् । कृतञ्च भवता सर्व्वं प्राणान् सन्त्यज्य युध्यता ॥ ३ ॥ गाह-

मानमनीकानि युध्यमानं महारथैः। पाण्डवैरतितेजोभिर्लोक-स्त्वामनुदृष्टवान् ॥ ४ ॥ सुहृदा यदिदं वाक्यं भवता श्रावितो ह्यहम्। न मां प्रीणाति तत् सर्वं मुमूर्षोरिव भेषजम् ॥ ५ ॥ हेतुकारणसंयुक्तं हितं वचनमुत्तमम्। उच्यमानं महाबाहो न मे विप्राग्र्य रोचते ॥ ६ ॥ राज्याद्विनिकृतोऽस्माभिः कथं सोऽस्मासु विश्वसेत्। अक्षद्यूतेन नृपतिर्जितोऽस्माभिर्महाबलः। स कथं मम वाक्यानि श्रद्दध्याद्भूय एव तु ॥ ७ ॥ तथा दौत्येन संप्राप्तः कृष्णः पार्थहिते रतः। विप्रलब्धो हृषीकेशस्तच्च कर्माविचारितम्। स च मे वचनं ब्रह्मन् कथमेवाभिपद्यते ॥ ८ ॥ विललाप हि यत् कृष्णा सभामध्ये समेयुषी। न तन्मर्षयते कृष्णो न राज्य-हरणं तथा ॥ ९ ॥ एकप्राणावुभौ कृष्णावन्योऽन्यप्रतिसंहतौ। पुरा यच्छ्रुतमेवासीदद्य पश्यामि तत् प्रभो ॥ १० ॥ स्वस्रीयञ्च हतं श्रुत्वा दुःखं स्वपिति केशवः। कृतागसो वयन्तस्य स मदर्थं कथं क्षमेत् ॥ ११ ॥ अभिमन्योर्विनाशेन न शर्म लभतेऽर्जुनः। स कथं मद्धिते यत्नं प्रकरिष्यति याचितः। मध्यमः पाण्डवस्तीक्ष्णो भीमसेनो महाबलः। प्रतिज्ञातञ्च तेनोग्रं स भज्येत न संनमेत् ॥ १३ ॥ उभौ तौ बद्धनिस्त्रिंशावुभौ चाबद्धकङ्कटौ। कृतवैरा-वुभौ वीरौ यमावपि यमोपमौ ॥ १४ ॥ धृष्टद्युम्नः शिखण्डी च कृतवैरौ मया सह। तौ कथं मद्धिते यत्नं प्रकुर्य्यातां द्विजोत्तम ॥ १५ ॥ दुःशासनेन यत् कृष्णा एकवस्त्रा रजस्वला। परिक्लिष्टा सभामध्ये सर्वलोकस्य पश्यतः ॥ १६ ॥ तथा विवसनां दीनां स्मरन्त्यद्यापि पाण्डवाः। न निवारयितुं शक्याः संग्रामात्ते पर-न्तपाः ॥ १७ ॥ यदा च द्रौपदी कृष्णा मद्विनाशाय दुःखिता। उग्रं तेपे तपः कृष्णा भर्त्तॄणामर्थसिद्धये। स्थण्डिले नित्यदा शेते यावद्वैरस्य यातनम् ॥ १८ ॥ निक्षिप्य मानं दर्पञ्च वासुदेवसहो-दरा। कृष्णायाः प्रेष्यवद्भूत्वा शुश्रूषां कुरुते सदा ॥ १९ ॥ इति

सर्व्वं समुन्नद्धं न निर्वाति कथञ्चन ॥ २० ॥ अभिमन्योर्विनाशेन सन्धेयः स कथं मया ॥ २१ ॥ कथञ्च नाम भुक्त्वेमां पृथिवीं सागराम्बराम्। पाण्डवानां प्रसादेन भोक्ष्ये राज्यमकण्टकम् ॥२२॥ उपर्य्युपरि वै राज्ञां ज्वलित्वा भास्करो यथा। युधिष्ठिरं कथं पश्चादनुयास्यामि दासवत् ॥ २३ ॥ कथं भुक्त्वा स्वयं भोगान् दत्त्वा दायांश्च पुष्कलान्। कृपणं वर्त्तयिष्यामि कृपणैः सह जीविकाम् ॥ २४ ॥ नाभ्यसूयामि ते वाक्यमुक्तं स्निग्धं हितं त्वया। न तु सन्धिमहं मन्ये प्राप्तकालं कथञ्चन ॥ २५ ॥ सुनीतमनुपश्यामि सुयुद्धेन परन्तप। नायं क्लीवायितुं कालः संयोद्धुं काल एव नः ॥ २६ ॥ इष्टं मे बहुभिर्यज्ञैर्दत्ता विप्रेषु दक्षिणा। प्राप्ताः कामाः श्रुता वेदाः शत्रूणां मूर्द्ध्नि च स्थितम ॥ २७ ॥ भृत्या मे सुभृतास्तात दीनश्चाभ्युद्धृतो जनः। नोत्सहेऽद्य द्विजश्रेष्ठ पाण्डवान् वक्तुमीदृशम् ॥ २८ ॥ जितानि परराष्ट्राणि स्वराष्ट्रमनुपालितम्। भुक्ताश्च विविधा भोगास्त्रिवर्गः सेवितो मया। पितृणां कृतमानृण्यं क्षत्रधर्मस्य चोभयोः ॥ २९ ॥ न ध्रुवं सुखमस्तीह कुतो राज्यं कुतो यशः। इह कीर्त्तिर्विधातव्या सा च युद्धेन नान्यथा ॥ ३० ॥ गृहे यत् क्षत्रियस्यापि निधनं तद्विगर्हितम्। अधर्मः सुमहानेष यच्छय्यामरणं गृहे ॥ ३१ ॥ अरण्ये यो विमुञ्चेत संग्रामे वा तनुं नरः। क्रतूनाहृत्य महतो महिमानं स गच्छति ॥ ३२ ॥ कृपणं विलपन्नार्त्तो जरयाभिपरिप्लुतः। म्रियते रुदतां मध्ये ज्ञातीनां न स पूरुषः ॥ ३३ ॥ त्यक्त्वा तु विविधान् भोगान् प्राप्तानां परमां गतिम्। अपीदानीं सुयुद्धेन गच्छेयं शक्रलोकताम् ॥ ३४ ॥ शूराणामार्य्यवृत्तीनां संग्रामेष्वनिवर्त्तिनाम्। धीमतां सत्यसन्धानां सर्व्वेषां क्रतुयाजिनाम्। शस्त्रावभृथपूतानां ध्रुवं वासस्त्रिपिष्टपे ॥ ३५ ॥ मुदा नूनं प्रपश्यन्ति युद्धे ह्यप्सरसाङ्गणाः। पश्यन्ति नूनं पितरः पूजितान् सुर-

संसदि । अप्सरोभिः परिवृतान् मोदमानांस्त्रिपिष्टपे ॥ ३६ ॥ पन्थानममरैर्यातं शूरैश्चापराणिनर्वर्त्तिभिः । अपि तैः सङ्गतं मार्गं वयमप्यारुहेमहि ॥३७॥ पितामहेन वृद्धेन तथाचार्य्येण धीमता। जयद्रथेन कर्णेन तथा दुःशासनेन च ॥ ३८ ॥ घटमाना मदर्थे-ऽस्मिन् हताः शूरा नराधिपाः । शेरते लोहिताक्ताङ्गाः पृथिव्यां शरविक्षताः ॥ ३९ ॥ उत्तमास्त्रविदः शूरा यथोक्तक्रतुयाजिनः। त्यक्त्वा प्राणान् यथान्यायमिन्द्रसद्मस्वधिष्ठिताः ॥ ४० ॥ तैस्त्वयं रचितः पन्था दुर्गमो हि सुखं भवेत् । सम्पतद्भिर्महावेगैर्यास्यद्भि-रिह सद्गतिम् ॥ ४१ ॥ ये मदर्थे हताः शूरास्तेषां कृतमनुस्मरन्। ऋणं तत् प्रतिमुञ्चानो न राज्ये मन आदधे ॥ ४२ ॥ पातयित्वा वयस्यांश्च भ्रातॄनथ पितामहान् । जीवितं यदि रक्षेयं लोको मां गर्हयेद्ध्रुवम् ॥ ४३ ॥ कीदृशं तद्भवेद्राज्यं मम हीनस्य बन्धुभिः । सखिभिश्च सुहृद्भिश्च प्रणिपत्य च पाण्डवम् ॥ ४४ ॥ सोऽहमेतादृशं कृत्वा जगतोऽस्य पराभवम् । सुयुद्धेन ततः स्वर्गं प्राप्स्यामि न तदन्यथा ॥ ४५ ॥ एवं दुर्य्योधनेनोक्ताः सर्वे सम्पूज्य तद्वचः । साधु साध्विति राजानं क्षत्रियाः संबभाषिरे ॥ ४६ ॥ पराजयमशोचन्तः कृतचित्ताश्च विक्रमे । सर्वे विनि-श्चिता योद्धुमुदग्रमनसोऽभवन् ॥ ४७ ॥ ततो वाहान् समाश्वास्य सर्वे युद्धाभिनन्दिनः । ऊने द्वियोजने गत्वा प्रत्यतिष्ठन्त कौरवाः ॥ ४८ ॥ आकाशे विद्रुमे पुण्ये प्रस्थे हिमवतः शुभे । अरुणां सरस्वतीं प्राप्य पपुः सस्नुश्च तज्जलम् । तव पुत्रकृतोत्साहाः पर्य्यवर्त्तन्त ते ततः ॥ ४९ ॥ पर्य्यवस्थाप्य चात्मानमन्योऽन्येन पुन-स्तदा । सर्वे राजन् न्यवर्त्तन्त क्षत्रियाः कालचोदिताः ॥ ५० ॥

इति शल्यपर्वणि शल्यवधपर्वणि दुर्य्योधनवाक्ये पञ्चमोऽध्यायः ॥ ५ ॥

सञ्जय उवाच। अथ हैमवते प्रस्थे स्थिता युद्धाभिनन्दिनः। सर्व एव महाराज योधास्तत्र समागताः ॥ १ ॥ शल्यश्च चित्रसेनश्च शकुनिश्च महारथः। अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ॥२॥ सुषेणोऽरिष्टसेनश्च धृतसेनश्च वीर्य्यवान्। जयत्सेनश्च राजानस्ते रात्रिमुषितास्ततः ॥ ३ ॥ रणे कर्णे हते वीरे त्रासिता जितकाशिभिः। नालभन् शर्म ते पुत्रा हिमवन्तमृते गिरिम् ॥ ४ ॥ तेऽब्रुवन् सहितास्तत्र राजानं शल्यसन्निधौ। कृतयत्ना रणे राजन् सम्पूज्य विधिवत्तदा ॥ ५ ॥ कृत्वा सेनाप्रणेतारं परांस्त्वं योद्धुमर्हसि। येनाभिगुप्ताः संग्रामे जयेमासुहृदो वयम् ॥ ६ ॥ ततो दुर्य्योधनः स्थित्वा रथे रथवरोत्तमम्। सर्वयुद्धविभागज्ञमन्तकप्रतिमं युधि ॥ ७ ॥ स्वङ्गं प्रच्छन्नशिरसं कम्बुग्रीवं प्रियम्वदम्। व्याकोषपद्मपत्राक्षं व्याघ्रास्यं मेरुगौरवम् ॥ ८ ॥ स्थाणोर्वृषस्य सदृशं स्कन्धनेत्रगतिस्वनैः। पुष्टश्लिष्टायतभुजं सुविस्तीर्णवनोरसम् ॥ ९ ॥ जवे बले च सदृशमरुणानुजवातयोः। आदित्यस्यार्च्चिषा तुल्यं बुद्ध्या चोशनसा समम् ॥१०॥ कान्तिरूपमुखैश्वर्य्यैस्त्रिभिश्चन्द्रमसा समम्। काञ्चनोत्पलसङ्घातैः सदृशं श्लिष्टसन्धिकम् ॥ ११ ॥ सुवृत्तोरुकटीजङ्घं सुपादं स्वङ्गुलीनखम्। स्मृत्वा स्मृत्वैव तु गुणान्धाता यत्नाद्विनिर्म्मितम् ॥ १२ ॥ सर्वलक्षणसम्पन्नं निपुणं श्रुतिसागरम्। जेतारं तरसारीणामजेयं शत्रुभिर्बलात् ॥ १३ ॥ दशाङ्गं यश्चतुष्पादमिष्वस्त्रं वेदतत्त्वतः। साङ्गांश्च चतुरो वेदान् सम्यगाख्यानपञ्चमान् ॥ १४ ॥ आराध्य त्र्यम्बकं यत्नाद्व्रतैरुग्रैर्महातपाः। अयोनिजायामुत्पन्नो द्रोणेनायोनिजेन यः ॥१५॥ तमप्रतिमकर्माणं रूपेणासदृशं भुवि। पारगं सर्वविद्यानां गुणार्णवमनिन्दितम् ॥१६॥ तमभ्येत्यात्मजस्तुभ्यमश्वत्थामानमब्रवीत्। यं पुरस्कृत्य सहिता युधि जेष्याम पाण्डवान् ॥ १७ ॥ गुरुपुत्रोऽद्य सर्वेषामस्माकं परमा गतिः। भवांस्तस्मान्नियोगात्ते कोऽस्तु सेनापतिर्मम ॥ १८ ॥

द्रौणिरुवाच। अयं कुलेन वीर्य्येण तेजसा यशसा श्रिया। सर्वैर्गुणैः समुदितः शल्यो नोऽस्तु चमूपतिः ॥ १९ ॥ भागिनेयान्निजांस्त्यक्त्वा कृतज्ञोऽस्मानुपागतः। महासेनो महाबाहुर्महासेन इवापरः ॥ २० ॥ एनं सेनापतिं कृत्वा नृपतिं नृपसत्तम। शक्यः प्राप्तुं जयोऽस्माभिर्देवैः स्कन्दमिवाजितम् ॥ २१ ॥ तथोक्ते द्रोणपुत्रेण सर्व एव नराधिपाः। परिवार्य्य स्थिताः शल्यं जयशब्दांश्च चक्रिरे। युद्धाय च मतिञ्चक्रुरावेशञ्च परं ययुः ॥ २२ ॥ ततो दुर्य्योधनः शल्यं भूमौ स्थित्वा रथे स्थितम्। उवाच प्राञ्जलिर्भूत्वा रामभीष्मसमं रणे ॥ २३ ॥ अयं स कालः संप्राप्तो मित्राणां मित्रवत्सल। यत्र मित्रममित्रम्वा परीक्षन्ते बुधा जनाः ॥ २४ ॥ स भवानस्तु नः शूरः प्रणेता वाहिनीमुखे। रणञ्च याते भवति पाण्डवा मन्दचेतसः। भविष्यन्ति सहामात्याः पाञ्चालाश्च निरुद्यमाः ॥ २५ ॥

शल्य उवाच। यत्तं मां मन्यसे राजन् कुरुराज करोमि तत्। त्वत् प्रियार्थं हि मे सर्वं प्राणा राज्यं धनानि च ॥ २६ ॥

दुर्य्योधन उवाच। सैनापत्येन वरये त्वमाहं मातुलातुलम्। सोऽस्मान् पाहि युधां श्रेष्ठ स्कन्दो देवानिवाहवे ॥ २७ ॥ अभिषिच्यस्व राजेन्द्र देवानामिव पावकिः। जहि शत्रून् रणे वीर महेन्द्रो दानवानिव ॥ २८ ॥

इति शल्यपर्व्वणि शल्यवधपर्व्वणि दुर्य्योधनवाक्ये षष्ठोऽध्यायः ॥ ६ ॥

---

सञ्जय उवाच। एतच्छ्रुत्वा वचो राज्ञो मद्रराजः प्रतापवान्। दुर्य्योधनं तदा राजन् वाक्यमेतदुवाच ह ॥ १ ॥ दुर्य्योधन महाबाहो शृणु वाक्यविदाम्वर। यावेतौ मन्यसे कृष्णौ

रथस्थौ रथिनान्वरौ। न मे तुल्यावुभावेतौ बाहुवीर्य्ये कथञ्चन॥ २॥ उद्यतां पृथिवीं सर्व्वां ससुरासुरमानवाम्। योधयेयं रणमुखे संक्रुद्धः किमु पाण्डवान्॥ ३॥ विजेष्ये च रणे पार्थान् सोमकांश्च समागतान्। अहं सेनाप्रणेता ते भविष्यामि न संशयः॥ ४॥ तञ्च व्यूहं विधास्यामि न तरिष्यन्ति यं परे। इति सत्यं ब्रवीम्येष दुर्य्योधन न संशयः॥ ५॥ एवमुक्तस्ततो राजा मद्राधिपतिमञ्जसा। अभ्यषिञ्चत सेनाया मध्ये भारतसत्तम। विधिना शास्त्रदृष्टेन हृष्टरूपो विशाम्पते॥ ६॥ अभिषिक्ते ततस्तस्मिन् सिंहनादो महानभूत्। तव सैन्येष्ववाद्यन्त वादित्राणि च भारत॥ ७॥ हृष्टाश्चासंस्ततो योधा मद्रकाश्च महारथाः। तुष्टुवुश्चैव राजानं शल्यमाहवशोभिनम्॥ ८॥ जय राजंश्चिरंजीव जहि शत्रून् समागतान्। तव बाहुबलं प्राप्य धार्त्तराष्ट्रा महाबलाः। निखिलां पृथिवीं सर्व्वां प्रशासन्तु हतद्विषः॥ ९॥ त्वं हि शक्तो रणे जेतुं ससुरासुरमानवान्। मर्त्त्यधर्म्माण इह तु किमु सोमकसृञ्जयाः॥ १०॥ एवं संस्तूयमानस्तु मद्राणामधिपो बली। हर्षं प्राप तदा वीरो दुरापमकृतात्मभिः॥ ११॥

शल्य उवाच। अद्य चाहं रणे सर्व्वान् पाञ्चालान् सह पाण्डवैः। निहनिष्यामि वा राजन् स्वर्गं यास्यामि वा हतः॥१२॥ अद्य पश्यन्तु मां लोका विचरन्तमभीतवत्। अद्य पाण्डुसुताः सर्व्वे वासुदेवःससात्यकिः॥ १३॥ पाञ्चालाश्चेदयश्चैव द्रौपदेयाश्च सर्व्वशः। धृष्टद्युम्नः शिखण्डी च सर्व्वे चापि प्रभद्रकाः॥ १४॥ विक्रमं मम पश्यन्तु धनुषश्च महाबलम्। लाघवञ्चास्त्रवीर्य्यञ्च भुजयोश्च बलं युधि॥ १५॥ अद्य पश्यन्तु मे पार्थाः सिद्धाश्च सह चारणैः। यादृशं मे बलं बाह्वोः सम्पदस्त्रेषु या च मे॥ १६॥ अद्य मे विक्रमं दृष्ट्वा पाण्डवानां महारथाः। प्रतीकारपरा भूत्वा चेष्टन्तां विविधाः क्रियाः॥ १७॥ अद्य सैन्यानि पाण्डूनां द्राव-

यिष्ये समन्ततः । द्रोणभीष्मावति विभो सूतपुत्रञ्च संयुगे । विचरिष्ये रणे युध्यन् प्रियार्थं तव कौरव ॥ १८ ॥

सञ्जय उवाच । अभिषिक्ते तदा शल्ये तव सैन्येषु मानद । न कर्णव्यसनं केचित् मेनिरे भरतर्षभ ॥ १९ ॥ हृष्टाः सुमनसश्चैव बभूवुस्तत्र सैनिकाः । मेनिरे निहतान् पार्थान् मद्रराजवशंगतान् ॥ २० ॥ प्रहर्षं प्राप्य सेना तु तावकी भरतर्षभ । तां रात्रिं सुखिनी सुप्ता सुस्थचित्ता च साभवत् ॥ २१ ॥ सैन्यस्य तव तं शब्दं श्रुत्वा राजा युधिष्ठिरः । वार्ष्णेयमब्रवीद्वाक्यं सर्वक्षत्रस्य शृण्वतः ॥ २२ ॥ मद्रराजः कृतः शल्यो धार्त्तराष्ट्रेण माधव । सेनापतिर्महेष्वासः सर्वसैन्येषु पूजितः ॥ २३ ॥ एतज्ज्ञात्वा यथा भूतं कुरु माधव यत् क्षमम् । भवान्नेता च गोप्ता च विधत्स्व यदनन्तरम् ॥ २४ ॥ तमब्रवीन्महाराज वासुदेवो जनाधिपम् । आर्त्तायनिमहं जाने यथातत्त्वेन भारत ॥ २५ ॥ वीर्य्यवांश्च महातेजा महात्मा च विशेषतः । कृती च चित्रयोधी च संयुक्तो लाघवेन च ॥ २६ ॥ यादृग्भीष्मो यथा द्रोणो यादृक् कर्णश्च संयुगे । तादृशस्तद्विशिष्टो वा मद्रराजो मतो मम ॥ २७ ॥ युध्यमानस्य तस्याजौ चिन्तयन्निव भारत । योद्धारं नाधिगच्छामि तुल्यरूपं जनाधिप ॥ २८ ॥ शिखण्ड्यर्जुनभीमानां सात्त्वतस्य च भारत । धृष्टद्युम्नस्य च तथा बलेनाभ्यधिको रणे ॥ २९ ॥ मद्रराजो महाराज सिंहद्विरदविक्रमः । विचरिष्यत्यभीः काले कालः क्रुद्धः प्रजास्विव ॥ ३० ॥ तस्याद्य न प्रपश्यामि प्रतियोद्धारमाहवे । त्वामृते पुरुषव्याघ्र शार्दूलसमविक्रमम् ॥ ३१ ॥ सदेवलोके कृत्स्नेऽस्मिन्नान्यस्त्वत्तः पुमान् भवत् । मद्रराजं रणे क्रुद्धं यो हन्यात् कुरुनन्दन ॥ ३२ ॥ अहन्यहनि युध्यन्तं क्षोभयन्तं बलं तव । तस्माज्जहि रणे शल्यं मघवानिव शम्बरम् ॥ ३३ ॥ अजेयश्चाप्यसौ वीरो धार्त्तराष्ट्रेण सत्कृतः । तवैव विजयो नूनं हते मद्रेश्वरे

युधि । तस्मिन् हते हतं सर्वं धार्त्तराष्ट्रस्य बलं महत् ॥ ३४ ॥ एतत् श्रुत्वा महाराज वचनं मम साम्प्रतम् । प्रत्युद्याहि रणे पार्थ मद्रराजं महारथम् ॥ ३५ ॥ जहि चैनं महाबाहो वासवो नमुचिं यथा । न चैवात्र दया कार्य्या मातुलोऽयं ममेति वै । क्षत्रधर्मं पुरस्कृत्य जहि मद्रजनेश्वरम् ॥ ३६ ॥ भीष्मद्रोणार्णवं तीर्त्वा कर्णपातालसम्भवम् । मा निमज्जस्व सगणः शल्यमासाद्य गोष्पदम् ॥ ३७ ॥ यच्च ते तपसो वीर्य्यं यच्च चात्रबलं तव । तद्दर्शय रणे सर्वं जहि चैनं महारथम् ॥ ३८ ॥ एतावदुक्त्वा वचनं केशवः परवीरहा । जगाम शिविरं सायं पूज्यमानोऽथ पाण्डवैः ॥ ३९ ॥ केशवे तु तदा याते धर्मराजो युधिष्ठिरः । विसृज्य सर्वान् भ्रातृंश्च पाञ्चालानथ सोमकान् । सुष्वाप रजनीं तान्तु विशल्य इव कुञ्जरः ॥ ४० ॥ ते च सर्वे महेष्वासाः पाञ्चालाः पाण्डवास्तथा । कर्णस्य निधने हृष्टाः सुषुपुस्तां निशान्तदा ॥४१॥ गतज्वरं महेष्वासं तीर्णपारं महारथम् । बभूव पाण्डवेयानां सैन्यं प्रमुदितं निशि । सूतपुत्रस्य निधने जयं लब्ध्वा च मारिष ॥ ४२ ॥

इति शल्यपर्व्वणि शल्यवधपर्व्वणि शल्यसैनापत्याभिषेके सप्तमोऽध्यायः ॥ ७ ॥

---

सञ्जय उवाच । व्यतीतायां रजन्यान्तु राजा दुर्य्योधनस्तदा । अब्रवीत्तावकान् सर्वान् सन्नह्यन्तां महारथाः ॥ १ ॥ राज्ञस्तु मतमाज्ञाय समनह्यत सा चमूः । अयोजयन्रथांस्तूर्णं पर्य्यधावंस्तथापरे ॥ २ ॥ अकल्प्यन्त च मातङ्गाः समनह्यन्त पत्तयः । रथांश्चास्तरणोपेतांश्चक्रुरन्ये सहस्रशः ॥ ३ ॥ वादित्राणाञ्च निनदः प्रादुरासीद्विशाम्पते । योधनार्थं हि सैन्यानां घोषानाञ्चाप्युदीर्य्यताम् ॥ ४ ॥ ततो बलानि सर्वाणि समाविष्टानि

भारत। सन्नद्धान्येव दृष्टशुर्मृत्युं कृत्वा निवर्त्तनम् ॥ ५ ॥ शल्यञ्च सेनापतिं कृत्वा मद्रराजं महारथाः। प्रविभज्य बलं सर्व्वमनीकेषु व्यवस्थिताः॥ ६ ॥ ततः सर्व्वे समागम्य पुत्रेण तव सैनिकाः। कृपश्च कृतवर्म्मा च द्रौणिः शल्योऽथ सौबलः ॥ ७ ॥ अन्ये च पार्थिवाः शेषाः समयं चक्रिरे तदा। न न एकेन योद्धव्यं कथञ्चिदपि पाण्डवैः ॥ ८ ॥ यो ह्येकः पाण्डवैर्युध्येद्यो वा युध्यन्तमुत्सृजेत्। स पञ्चभिर्भवेद्युक्तः पातकैश्चोपपातकैः। अन्योऽन्यं परिरक्षद्भिर्योद्धव्यं सहितैश्च नः ॥ ९ ॥ एवं ते समयं कृत्वा सर्व्वे तव महारथाः। मद्रराजं पुरस्कृत्य तूर्णमभ्यद्रवन् परान् ॥ १०॥ तथैव पाण्डवाः सर्व्वे व्यूह्य सैन्यं महारणे। अभ्ययुः कौरवान्राजन् योत्स्यमानाः समन्ततः ॥ ११ ॥ तद्बलं भरतश्रेष्ठ क्षुब्धार्णवसमस्वनम्। समुद्धतार्णवाकारमुद्धतरथकुञ्जरम् ॥ १२ ॥

धृतराष्ट्र उवाच। द्रोणस्य भीष्मस्य च वै राधेयस्य मया श्रुतम्। पातनं शंस मे भूयः शल्यस्याथ सुतस्य मे ॥ १३ ॥ कथं रणे हतः शल्यो धर्म्मराजेन सञ्जय। भीमसेनेन बलिना पुत्रो दुर्य्योधनो मम ॥ १४ ॥

सञ्जय उवाच। क्षयं मनुष्यदेहानां तथा नागाश्वसङ्क्षयम्। शृणु राजन् स्थिरो भूत्वा संग्रामं शंसतो मम ॥ १५ ॥ आशा बलवती राजन् पुत्राणान्तेऽभवत्तदा। हते द्रोणे च भीष्मे च सूतपुत्रे च पातिते। शल्यः पार्थान्रणे सर्व्वान्निहनिष्यति मारिष ॥ १६ ॥ तमाशां हृदये कृत्वा समाश्वस्य च भारत। मद्रराजञ्च समरे समाश्रित्य महारथम्। नाथवन्तं तदात्मानममन्यत सुतस्तव ॥ १७ ॥ यदा कर्णे हते पार्थाः सिंहनादं प्रचक्रिरे। तदा राजन् धार्त्तराष्ट्रानाविवेश महद्भयम् ॥ १८ ॥ तान् समाश्वास्य तु तदा मद्रराजः प्रतापवान्। व्यूह्य व्यूहं महाराज सर्व्वतोभद्रमृद्धिमत् ॥ १९ ॥ प्रत्युद्यातो रणे पार्थान्मद्रराजः प्रतापवान्।

विधन्वन् कार्मुकं चित्रं वेगवद्बलवत्तरम् ॥ २० ॥ रथप्रवरमास्थाय सैन्धवाश्वं महारथः। तस्य सीता महाराज रथस्थाशोभयद्रथम् ॥ २१ ॥ स तेन संवृतो वीरो रथेनामित्रकर्षणः। तस्थौ शूरो महाराज पुत्राणान्ते भयप्रणुत् ॥ २२ ॥ प्रयाणे मद्रराजोऽभू-न्मुखं व्यूहस्य दंशितः। मद्रकैः सहितो वीरैः कर्णपुत्रैश्च दुर्ज्जयैः ॥ २३ ॥ सव्येऽभूत् कृतवर्म्मा च त्रिगर्त्तैः परिवारितः। गौतमो दक्षिणे पार्श्वे शकैश्च जवनैः सह ॥ २४ ॥ अश्वत्थामा पृष्ठतोऽभूत् काम्बोजैः परिवारितः। दुर्य्योधनोऽभवन्मध्ये रक्षित कुरुपुङ्गवैः ॥ २५ ॥ हयानीकेन महता सौबलश्चापि संवृतः। प्रययौ सर्व्व-सैन्येन कैतव्यश्च महारथः ॥ २६ ॥ पाण्डवाश्च महेष्वासा व्यूह्य सैन्यमनिन्दिताः। त्रिधा भूत्वा महाराज तव सैन्यमुपाद्रवन् ॥ २७ ॥ धृष्टद्युम्नः शिखण्डी च सात्यकिश्च महारथः। शल्यस्य वाहिनीं तूर्णमभिदुद्रुवुराहवे ॥ २८ ॥ ततो युधिष्ठिरो राजा स्वेनानीकेन संवृतः। शल्यमेवाभिदुद्राव जिघांसुर्भरतर्षभ ॥ २९ ॥ हार्द्दि-क्यन्तु महेष्वासमर्ज्जुनः शत्रुपूगहा। संशप्तकगणांश्चैव वेगितोऽभि-प्रदुद्रुवे ॥ ३० ॥ गौतमं भीमसेनो वै सोमकाश्च महारथाः। अभ्य-वर्त्तन्त राजेन्द्र जिघांसन्तः परान् युधि ॥ ३१ ॥ माद्रीपुत्रौ तु शकुनिमुलूकञ्च महारथम्। ससैन्यं सहसैनौ तु उपतस्थतुराहवे ॥ ३२ ॥ तथैवायुतशो योधास्तावकाः पाण्डवान् रणे। अभ्यवर्त्तन्त संक्रुद्धा विविधायुधपाणयः ॥ ३३ ॥

धृतराष्ट्र उवाच। हते भीष्मे महेष्वासे द्रोणे कर्णे महारथे। कुरुष्वल्पावशिष्टेषु पाण्डवेयेषु संयुगे ॥३४॥ सुसंरब्धेषु पार्थेषु परा-क्रान्तेषु सञ्जय। मामकानां परेषाञ्च किं शिष्टमभवद्बलम् ॥ ३५ ॥

सञ्जय उवाच। यथा वयं परे राजन् युद्धाय समवस्थिताः। यावच्चासीद्बलं शिष्टं संग्रामे तन्निबोध मे ॥ ३६ ॥ एकादश सह-स्राणि रथानां भरतर्षभ। दश दन्तिसहस्राणि सप्त चैव शतानि

च ॥ ३७ ॥ पूर्णं शतसहस्रे द्वे हयानां भरतर्षभ। नरकोट्य-
स्तथा तिस्रो बलमेतत्तवाभवत् ॥ ३८ ॥ रथानां षट् सहस्राणि
षट् सहस्राश्च कुञ्जराः। दश चाश्वसहस्राणि पत्तिकोटी च
भारत ॥ ३९ ॥ एतद्बलं पाण्डवानामभवच्छेषमाहवे। एत एव
समाजग्मुर्युद्धाय भरतर्षभ ॥ ४० ॥ एवं विभज्य राजेन्द्र मद्र-
राजमते स्थिताः। पाण्डवान् प्रत्युदीयाम जयगृद्धाः प्रमन्यवः
॥ ४१ ॥ तथैव पाण्डवाः शूराः समरे जितकाशिनः। उपयाता
नरव्याघ्राः पाञ्चालाश्च यशस्विनः ॥ ४२ ॥ एवमेते महाराज पर-
स्परवधैषिणः। उपयाता नरव्याघ्राः पूर्वां सन्ध्यां प्रति प्रभो
॥ ४३ ॥ ततः प्रववृते युद्धं घोररूपं भयानकम्। तावकानां
परेषाञ्च निघ्नतामितरेतरम् ॥ ४४ ॥

इति शल्यपर्वणि शल्यवधपर्वणि व्यूहनिर्माने
अष्टमोऽध्यायः ॥ ८ ॥

---

सञ्जय उवाच। ततः प्रववृते युद्धं कुरूणां भयवर्द्धनम्।
सृञ्जयैः सह राजेन्द्र घोरं देवासुरोपमम् ॥ १ ॥ नरा रथगजौ-
घाश्च सादिनश्च सहस्रशः। वाजिनश्च पराक्रान्ताः समाजग्मुः
परस्परम् ॥ २ ॥ नागानां भीमरूपाणां द्रवतां निस्वनो महान्।
अश्रूयत यथा काले जलदानां नभस्तले ॥ ३ ॥ नागैरभ्याहताः
केचिद्विरथा रथिनोऽभवन्। अद्रवन्त रणे वीरा द्राव्यमाणा
मदोत्कटैः ॥ ४ ॥ हयौघान् पादरक्षांश्च रथिनस्तत्र शिक्षिताः।
शरैः सम्प्रेषयामासुः परलोकाय भारत ॥ ५ ॥ सादिनः शिक्षिता
राजन् परिवार्य्य महारथान्। विचरन्तो रणेऽभ्यघ्नन् प्रास-
शक्त्यृष्टिभिस्तथा ॥ ६ ॥ धन्विनः पुरुषाः केचित् परिवार्य्य महा-
रथान्। एकं बहव आसाद्य प्रेषयेयुर्यमक्षयम् ॥ ७ ॥ नागा

रथवराश्चान्ये परिवार्य्य महारथाः । शान्तरायुधिनं जघ्नुर्द्रं समाशं
महारथम् ॥ ८ ॥ तथा च रथिनं क्रुद्धं विकिरन्तं शरान् बहून् ।
नागा जघ्नुर्महाराज परिवार्य्य समन्ततः ॥ ९ ॥ नागो नाग-
मभिद्रुत्य रथी च रथिनं रणे । शक्तितोमरनाराचैर्निज्जघ्नुस्तत्र
भारत ॥ १० ॥ पादातानवमृद्नन्तो रथवारणवाजिनः । रणमध्ये
व्यदृश्यन्त कुर्वन्तो महदाकुलम् ॥ ११ ॥ हयाश्च पर्य्यधावन्त
चामरैरुपशोभिताः । हंसा हिमवतः प्रस्थे पिबन्त इव मेदिनीम्
॥ १२ ॥ तेषान्तु वाजिनां भूमिः खुरैश्चित्रा विशाम्पते । अशोभत
यथा नारी करजैः क्षतविक्षता ॥ १३ ॥ वाजिनां खुरशब्देन रथ-
नेमिस्वनेन च । पत्तीनाञ्चापि शब्देन नागानां बृंहितेन च ॥ १४ ॥
वादित्राणाञ्च घोषेण शङ्खानां निस्वनेन च । अभवन्नादिता भूमि-
र्निर्घातैरिव भारत ॥ १५ ॥ धनुषां कूजमानानां निस्त्रिंशानाञ्च
दीप्यताम् । कवचानां प्रभाभिश्च न प्राज्ञायत किञ्चन ॥ १६ ॥
बहवो बाहवश्छिन्ना नागराजकरोपमाः । उद्वेष्टन्ते विचेष्टन्ते
वेगं कुर्वन्ति दारुणम् ॥ १७ ॥ शिरसाञ्च महाराज पततां
वसुधातले । च्युतानामिव तालेभ्यः फलानां श्रूयते स्वनः ॥ १८ ॥
शिरोभिः पतितैर्भाति रुधिरार्द्रैर्वसुन्धरा । तपनीयनिभैः काले
नलिनैरिव भारत ॥ १९ ॥ उद्वृत्तनयनैस्तैस्तु गतसत्त्वैः सुविक्षतैः ।
व्यभ्राजत मही राजन् पुण्डरीकैरिवावृता ॥ २० ॥ बाहुभि-
श्चन्दनादिग्धैः सकेयूरैर्महाधनैः । पतितैर्भाति वसुधा यथा शक्र-
ध्वजैस्तथा ॥ २१ ॥ ऊरुभिश्च नरेन्द्राणां विनिकृत्तैर्महाहवे ।
हस्तिहस्तोपमैरन्यैः संवृतं तद्रणाङ्गनम् ॥ २२ ॥ कबन्धशतसङ्कीर्णं
छत्रचामरसङ्कुलम् । सेनावनं तच्छुशुभे वनं पुष्पाचितं यथा ॥२३॥
तत्र योधा महाराज विचरन्तो ह्यभीतवत् । दृश्यन्ते रुधिराक्ताङ्गाः
पुष्पिता इव किंशुकाः ॥ २४ ॥ मातङ्गाश्चाप्यदृश्यन्त शरतोमर-
पीड़िताः । पतन्तस्तत्र तत्रैव छिन्नाभ्रसदृशा रणे ॥ २५ ॥ गजा-

नीकं महाराज वध्यमानं महात्मभिः । व्यदीर्यंत दिशः सर्वा वातनुन्ना घना इव ॥ २६ ॥ ते गजा मेघसङ्काशाः पेतुरुर्व्यां समन्ततः । वज्रकृत्ता इव विभो पर्वता युगसङ्क्षये ॥ २७ ॥ हयानां सादिभिः सार्द्धं पतितानां महीतले । राशयः स्म प्रदृश्यन्ते गिरिमात्रास्ततस्ततः ॥ २८ ॥ सञ्जज्ञे रणभूमौ तु परलोकवहा नदी । शोणितोदा रथावर्त्ता ध्वजवृक्षास्थिशर्करा ॥ २९ ॥ भुजनक्रा धनुःस्रोता हस्तिशैला हयोपला । मेदोमज्जाकर्द्दमिनी छत्रहंसा गदोडुपा ॥ ३० ॥ कवचोष्णीषसम्पन्ना पताकारुचिरद्रुमा । चक्रचक्रावलीजुष्टा त्रिवेणूदण्डकावृता ॥ ३१ ॥ शूराणां हर्षजननी भीरूणां भयवर्द्धनी । प्रावर्त्तत नदी रौद्रा कुरुसृञ्जयसंकुला ॥ ३२ ॥ तां नदीं पितृलोकाय वहन्तीमतिभैरवाम् । तेरुर्वाहननौभिस्ते शूराः परिघबाहवः ॥ ३३ ॥ वर्त्तमाने तथा युद्धे निर्मर्य्यादे विशाम्पते । चतुरङ्गक्षये घोरे पूर्वं देवासुरोपमे ॥ ३४ ॥ व्याक्रोशन् बान्धवांश्चान्ये तत्र तत्र परन्तप । क्रोशद्भिर्बान्धवैश्चान्ये भयार्त्ता निववर्त्तिरे ॥ ३५ ॥ निर्मर्य्यादे तथा युद्धे वर्त्तमाने भयानके । अर्जुनो भीमसेनश्च मोहयाञ्चक्रतुः परान् ॥ ३६ ॥ सा वध्यमाना महती सेना तव जनाधिप । अमुह्यत्तत्र तत्रैव योषिन्मदवशादिव ॥ ३७ ॥ मोहयित्वा च तां सेनां भीमसेनधनञ्जयौ । दध्मतुर्वारिजौ तत्र सिंहनादांश्च नेदतुः ॥ ३८ ॥ श्रुत्वैव तु महाशब्दं धृष्टद्युम्नशिखण्डिनौ । धर्मराजं पुरस्कृत्य मद्रराजमभिद्रुतौ ॥ ३९ ॥ तत्राश्चर्य्यमपश्याम घोररूपं विशाम्पते । शल्येन स.ताः शूरा यदयुध्यन्त भागशः ॥ ४० ॥ माद्रीपुत्रौ तु रभसौ कृतास्त्रौ युद्धदुर्मदौ । अभ्ययातां त्वरायुक्तौ जिगीषन्तौ बलं तव ॥ ४१ ॥ ततो न्यवर्त्तत दलं तावकं भरतर्षभ । शरैः प्रणुन्नं बहुधा पाण्डवैर्जितकाशिभिः ॥ ४२ ॥ वध्यमाना चमूः सा तु पुत्राणां प्रेक्षतां तव । भेजे दिशो महाराज प्रणुन्ना दृढ़

धन्विभिः ॥ ४३ ॥ हाहाकारो महान् जज्ञे योधानां तव भारत । तिष्ठ तिष्ठेति चाप्यासीद्द्रावितानां महात्मनाम् । क्षत्रियाणां तदान्योऽन्यं संयुगे जयमिच्छताम् ॥ ४४ ॥ प्राद्रवन्नेव भग्नास्ते पाण्डवैस्तव सैनिकाः । त्यक्त्वा युद्धे प्रियान् पुत्रान् भ्रातॄनथ पितामहान् । मातुलान् भागिनेयांश्च तथा सम्बन्धिबान्धवान् ॥४५॥ हयान् द्विपांस्त्वरयन्तो योधा जग्मुः सहस्रशः । आत्मत्राणकृतोत्साहास्तावका भरतर्षभ ॥ ४६ ॥

शल्यपर्वणि शल्यवधपर्वणि संकुलयुद्धे

नवमोऽध्यायः ॥ ९ ॥

---

सञ्जय उवाच । तत् प्रभग्नं बलं दृष्ट्वा मद्रराजः प्रतापवान् । उवाच सारथिं तूर्णं चोदयाश्वान् मनोजवान् ॥ १ ॥ एष तिष्ठति वै राजा पाण्डुपुत्रो युधिष्ठिरः । छत्रेण ध्रियमाणेन पाण्डुरेण विराजता ॥ २ ॥ अत्र प्रापय मां क्षिप्रं पश्य मे सारथे बलम् । न समर्था हि मे पार्थाः स्थातुमद्य पुरो युधि ॥ ३ ॥ एवमुक्तस्ततः प्रायान्मद्रराजस्य सारथिः । यत्र राजा सत्यसन्धो धर्मराजो युधिष्ठिरः ॥ ४ ॥ अपतत्तच्च सहसा पाण्डवानां महद्बलम् । दधारैको रणे शल्यो वेलोद्धृतमिवार्णवम् ॥ ५ ॥ पाण्डवानां बलौघस्तु शल्यमासाद्य मारिष । व्यतिष्ठत तदा युद्धे सिन्धोर्वेग इवाचलम् ॥ ६ ॥ मद्रराजन्तु समरे दृष्ट्वा युद्धाय विष्ठितम् । कुरवः संन्यवर्त्तन्त मृत्युं कृत्वा निवर्त्तनम् ॥ ७ ॥ तेषु राजन्निवृत्तेषु व्यूढानीकेषु भागशः । प्रावर्त्तत महारौद्रः सङ्ग्रामः शोणितोदकः । समार्च्छच्चित्रसेनन्तु नकुलो युद्धदुर्मदः ॥ ८ ॥ तौ परस्परमासाद्य चित्रकार्मुकधारिणौ । मेघाविव यथोद्वृत्तौ दक्षिणोत्तरवर्षिणौ ॥ ९ ॥ शरतोयैः सिषिचतुस्तौ परस्परमाहवे ।

नान्तरं तत्र पश्यामि पाण्डवस्येतरस्य वा ॥ १० ॥ उभौ कृतास्त्रौ बलिनौ रथचर्य्याविशारदौ। परस्परवधे यत्तौ छिद्रान्वेषणतत्परौ ॥ ११ ॥ चित्रसेनस्तु भल्लेन पीतेन निशितेन च। नकुलस्य महाराज मुष्टिदेशेऽच्छिनद्धनुः ॥ १२ ॥ तथैनं छिन्नधन्वानं रुक्मपुङ्खैः शिलाशितैः। त्रिभिः शरैरसम्भ्रान्तो ललाटे वै समार्पयत् ॥ १३ ॥ हयांश्चास्य शरैस्तीक्ष्णैः प्रेषयामास मृत्यवे। तथा ध्वजं सारथिञ्च त्रिभिस्त्रिभिरपातयत् ॥ १४ ॥ स शत्रुभुजनिर्मुक्तैर्ललाटस्थैस्त्रिभिः शरैः। नकुलः शुशुभे राजंस्त्रिशृङ्ग इव पर्वतः ॥ १५ ॥ स छिन्नधन्वा विरथः खड्गमादाय चर्म च। रथादवातरद्वीरः शैलाग्रादिव केशरी ॥ १६ ॥ पद्भ्यामापततस्तस्य शरवृष्टिं समासृजत्। नकुलोऽप्यग्रसत्तां वै चर्मणा लघुविक्रमः ॥ १७ ॥ चित्रसेनरथं प्राप्य चित्रयोधी जितश्रमः। आरुरोह महाबाहुः सर्वसैन्यस्य पश्यतः ॥ १८ ॥ सकुण्डलं समुकुटं सुनसं स्वायतेक्षणम्। चित्रसेनशिरः कायादपाहरत पाण्डवः। स पपात रथोपस्थे दिवाकरसमप्रभः ॥ १९ ॥ चित्रसेनं विशस्तन्तु दृष्ट्वा तत्र महारथाः। साधुवादस्वनांश्चक्रुः सिंहनादांश्च पुष्कलान् ॥ २० ॥ विशस्तं भ्रातरं दृष्ट्वा कर्णपुत्रौ महारथौ। सुषेणः सत्यसेनश्च मुञ्चन्तौ निशिताञ्छरान् ॥ २१ ॥ ततोऽभ्यधावतां तूर्णं पाण्डवं रथिनाम्वरौ। जिघांसन्तौ यथा नागं व्याघ्रौ राजन् महावने ॥ २२ ॥ तावभ्यवर्षतां तीक्ष्णैर्द्वावप्येनं महारथम्। शरौघान् सम्यगस्यन्तौ जीमूतौ सलिलं यथा ॥ २३ ॥ स शरैः सर्वतो विद्धः प्रहृष्ट इव पाण्डवः। अन्यत् कार्मुकमादाय रथमारुह्य वीर्य्यवान्। अतिष्ठत रणे वीरः क्रुद्धरूप इवान्तकः ॥ २४ ॥ तस्य तौ भ्रातरौ राजन् शरैः सन्नतपर्वभिः। रथं विशकलीकर्त्तुं समारब्धौ विशाम्पते ॥ २५ ॥ ततः प्रहस्य नकुलश्चतुर्भिश्चतुरो रणे। जघान निशितैस्तीक्ष्णैः सत्यसेनस्य वाजिनः ॥ २६ ॥ ततः

सन्धाय नाराचं रुक्मपुङ्खं शिलाशितम्। धनुश्चिच्छेद राजेन्द्र सत्यसेनस्य पाण्डवः ॥२७॥ अथान्यं रथमास्थाय धनुरादाय चापरम्। सत्यसेनः सुषेणश्च पाण्डवं पर्य्यधावताम् ॥२८॥ अविध्यत्तावसंभ्रान्तो माद्रीपुत्रः प्रतापवान्। द्वाभ्यां द्वाभ्यां महाराज शराभ्यां रणमूर्द्धनि ॥२९॥ सुषेणस्तु ततः क्रुद्धः पाण्डवस्य महद्धनुः। चिच्छेद प्रहसन् युद्धे क्षुरप्रेण महारथः ॥३०॥ अथान्यद्धनुरादाय नकुलः क्रोधमूर्च्छितः। सुषेणं पञ्चभिर्विद्ध्वा ध्वजमेकेन चिच्छिदे ॥ ३१ ॥ सत्यसेनस्य च धनुर्हस्तावापञ्च मारिष। चिच्छेद तरसा युद्धे तत उच्चुक्रुशुर्ज्जनाः ॥३२॥ अथान्यद्धनुरादाय शत्रुघ्नं भारसाधनम्। शरैः संछादयामास समन्तात् पाण्डुनन्दनम् ॥३३॥ सन्निवार्य्य तु तान् बाणान् नकुलः परवीरहा। सत्यसेनं सुषेणञ्च द्वाभ्यां द्वाभ्यामविध्यत ॥ ३४ ॥ तावेनं प्रत्यविध्येतां पृथक् पृथगजिह्मगैः। सारथिञ्चास्य राजेन्द्र शितैर्विविधतुः शरैः ॥३५॥ सत्यसेनो रथेषान्तु नकुलस्य धनुस्तथा। पृथक् शराभ्यां चिच्छेद कृतहस्तः प्रतापवान् ॥ ३६ ॥ स रथेऽतिरथस्तिष्ठन्रथशक्तिं परामृषत्। स्वर्णदण्डामकुण्ठाग्रां तैलधौतां सुनिर्म्मलाम् ॥३७॥ लेलिहानामिव विभो नागकन्यां महाविषाम्। समुद्यम्य च चिक्षेप सत्यसेनस्य संयुगे ॥३८॥ सा तस्य हृदयं सङ्ख्ये बिभेद शतधा नृप। स पपात रथाद्भूमिं गतसत्त्वोऽल्पचेतनः ॥३९॥ भ्रातरं निहतं दृष्ट्वा सुषेणः क्रोधमूर्च्छितः। चकार सहसा सङ्ख्ये नकुलं विरथं ततः। अभ्यवर्षच्छरैस्तूर्णं पादातं पाण्डुनन्दनम् ॥४०॥ नकुलं विरथं दृष्ट्वा द्रौपदेयो महारथः। सुतसोमोऽभिदुद्राव परीप्सन् पितरं रणे ॥ ४१ ॥ ततोऽधिरुह्य नकुलः सुतसोमस्य तं रथम्। शुशुभे भरतश्रेष्ठो गिरिस्थ इव केशरी। सोऽन्यत् कार्म्मुकमादाय सुषेणं समरे धयन् ॥४२॥ तावुभौ शरवर्षाभ्यां समासाद्य परस्परम्।

परस्परवधे यत्नं चक्रतुः सुमहारथौ ॥ ४३ ॥ सुषेणस्तु ततः क्रुद्धः पाण्डवं विशिखैस्त्रिभिः। सुतसोमञ्च विंशत्या बाह्वोरुरसि चार्पयत् ॥ ४४ ॥ ततः क्रुद्धो महाराज नकुलः परवीरहा। शरैस्तस्य दिशः सर्वाश्छादयामास वेगवान् ॥ ४५ ॥ ततो गृहीत्वा तीक्ष्णाग्रमर्द्धचन्द्रं सुतेजनम्। स वेगयुक्तं चिक्षेप कर्णपुत्रस्य संयुगे ॥ ४६ ॥ तस्य तेन शिरः कायाज्जहार नृपसत्तम। पश्यतां सर्वसैन्यानां तदद्भुतमिवाभवत् ॥ ४७ ॥ स हतः प्रापतद्राजन्नकुलेन महात्मना। नदीवेगादिवारुग्णस्तीरजः पादपो महान् ॥ ४८ ॥ कर्णपुत्रवधं दृष्ट्वा नकुलस्य च विक्रमम्। प्रदुद्राव भयात् सेना तावकी भरतर्षभ ॥ ४९ ॥ तान्तु सेनां महाराज मद्रराजः प्रतापवान्। अपालयद्रणे शूरः सेनापतिररिन्दमः ॥ ५० ॥ अभीतस्थौ महाराज व्यवस्थाप्य च वाहिनीम्। सिंहनादं भृशं कृत्वा धनुःशब्दञ्च दारुणम् ॥ ५१ ॥ तावकाः समरे राजन् रक्षिता दृढ़धन्वना। प्रत्युद्ययुररातींस्ते समन्ताद्विगतव्यथाः ॥ ५२ ॥ मद्रराजं महेष्वासं परिवार्य्य समन्ततः। स्थिता राजन् महात्मानो योद्धुकामाः समन्ततः ॥ ५३ ॥ सात्यकिर्भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ। युधिष्ठिरं पुरस्कृत्य ह्रीनिषेवमरिन्दमम् ॥ ५४ ॥ परिवार्य्य रणे वीराः सिंहनादं प्रचक्रिरे। बाणशब्दरवांश्चोग्रान् क्ष्वेड़ांश्च विविधा मुहुः ॥ ५५ ॥ तथैव तावकाः सर्व्वे मद्राधिपतिमञ्जसा। परिवार्य्य सुसंरब्धाः पुनर्युद्धमरोचयन् ॥ ५६ ॥ ततः प्रवृत्ते युद्धं भीरूणां भयवर्द्धनम्। तावकानां परेषाञ्च मृत्युं कृत्वा निवर्त्तनम् ॥ ५७ ॥ यथा देवासुरं युद्धं पूर्व्वमासीद्विशाम्पते। अभीतानां तथा राजन् यमराष्ट्रविवर्द्धनम् ॥ ५८ ॥ ततः कपिध्वजो राजन् हत्वा संशप्तकान्रणे। अभ्यधावत तां सेनां कौरवीं पाण्डुनन्दन ॥ ५९ ॥ तथैव पाण्डवाः सर्व्वे धृष्टद्युम्नपुरोगमाः। अभ्यधावन्त तां सेनां विसृजन्तः शिताङ्कुरान् ॥ ६० ॥

पाण्डवैरवकीर्णानां सम्मोहः समजायत। न च जज्ञुरनीकानि दिशो वा विदिशस्तथा ॥ ६१ ॥ आपूर्य्यमाणा निशितैः शरैः पाण्डवचोदितैः। हतप्रवीरा विद्रुता कीर्य्यमाणा समन्ततः। कौरव्यवध्यत चमूः पाण्डुपुत्रैर्महारथैः ॥ ६२ ॥ तथैव पाण्डवी सेना शरै राजन् समन्ततः। रणेऽहन्यत पुत्रैस्ते शतशोऽथ सहस्रशः ॥ ६३ ॥ ते सेने भृशसन्तप्ते वध्यमाने परस्परम्। व्याकुले समपद्येतां वर्षासु सरिताविव ॥ ६४ ॥ आविवेश ततस्तीव्रं तावकानां महद्भयम्। पाण्डवानाञ्च राजेन्द्र तथाभूते महाहवे ॥ ६५ ॥

इति शल्यपर्व्वणि शल्यवधपर्व्वणि संकुलयुद्धे
दशमोऽध्यायः ॥ १० ॥

---

सञ्जय उवाच। तस्मिन् विलुलिते सैन्ये वध्यमाने परस्परम्। द्रवमाणेषु योधेषु निनदत्सु च दन्तिषु ॥ १ ॥ कूजतां स्तनताञ्चैव पदातीनां महाहवे। विद्रुतेषु महाराज हयेषु बहुधा तदा ॥ २ ॥ प्रक्षये दारुणे जाते संहारे सर्व्वदेहिनाम्। नानाशस्त्रसमावाये व्यतिषिक्तरथद्विपे ॥ ३ ॥ हर्षणे युद्धशौण्डानां भीरूणां भयवर्द्धने। गाहमानेषु योधेषु परस्परवधैषिषु ॥ ४ ॥ प्राणादाने महाघोरे वर्त्तमाने दुरोदरे। संग्रामे घोररूपे तु यमराष्ट्रविवर्द्धने ॥ ५ ॥ पाण्डवास्तावकं सैन्यं व्यधमन्त शितैः शरैः। तथैव तावका योधा जघ्नुः पाण्डवसैनिकान् ॥ ६ ॥ तस्मिंस्तथा वर्त्तमाने युद्धे भीरुभयावहे। पूर्व्वाह्ने चैव संग्रामे भास्करोदयनं प्रति ॥ ७ ॥ लब्धलक्ष्याः परे राजन्रक्षिताश्च महात्मना। अयोधयंस्तव बलं मृत्युं कृत्वा निवर्त्तनम् ॥ ८ ॥ बलिभिः पाण्डवैर्दृप्तैर्लब्धलक्ष्यैः प्रहारिभिः। कौरव्यसीदत् पृतना मृगीवाग्निसमाकुला ॥ ९ ॥ तां दृष्ट्वा सीदतीं सेनां पङ्के गामिव दुर्ब्बलाम्।

अभिहीर्षुस्तदा शल्यः प्रायात् पाण्डुचमूं प्रति ॥ १० ॥ मद्र-
राजस्तु संक्रुद्धो गृहीत्वा धनुरुत्तमम् । अभ्यद्रवत संग्रामे पाण्ड-
वानाततायिनः ॥ ११ ॥ पाण्डवापि महाराज समरे जितकाशिनः ।
मद्रराजं समासाद्य विव्यधुर्निशितैः शरैः ॥ १२ ॥ ततः शरशतै-
स्तीक्ष्णैर्मद्रराजो महाबलः । अर्दयामास तां सेनां धर्मराजस्य
पश्यतः ॥ १३ ॥ प्रादुरासंस्ततो राजन्निर्मित्तान्यनेकशः । चचाल
शब्दं कुर्वाणा मही चापि सपर्वता ॥ १४ ॥ सदण्डशूलदीप्ताग्रा
दीर्य्यमाणाः समन्ततः । उल्का भूमिं दिवः पेतुराहत्य रवि-
मण्डलम् ॥ १५ ॥ मृगाश्च महिषाश्चापि पक्षिणश्च विशाम्पते ।
अपसव्यं तदा चक्रुः सेनां ते बहुशो नृप ॥ १६ ॥ भृगुसूनुधरापुत्रौ
शशिजेन समन्वितौ । चरमं पाण्डुपुत्राणां पुरस्तात् सर्वभूभुजाम्
॥ १७ ॥ शस्त्राग्रेष्वभवज्ज्वाला नेत्राण्याहत्य वर्षती । शिरः-
स्वलीयत भृशं काकोलूकाश्च केतुषु ॥ १८ ॥ ततस्तद्युद्धमत्युग्र-
मभवत् सङ्घचारिणाम् ॥ १९ ॥ ततः सर्वाण्यनीकानि सन्निपत्य
जनाधिप । अभ्ययुः कौरवा राजन् पाण्डवानामनीकिनीम् ॥ २० ॥
शल्यस्तु शरवर्षेण वर्षन्निव सहस्रदृक् । अभ्यवर्षददीनात्मा कुन्ती-
पुत्रं युधिष्ठिरम् ॥ २१ ॥ भीमसेनं शरैश्चापि रुक्मपुङ्खैः शिला-
शितैः । द्रौपदेयांस्तथा सर्वान् माद्रीपुत्रौ च पाण्डवौ ॥ २२ ॥
धृष्टद्युम्नञ्च शैनेयं शिखण्डिनमथापि च । एकैकं दशभिर्बाणै-
र्विव्याध च महाबलः ॥ २३ ॥ ततोऽसृजद्बाणवर्षं घर्मान्ते मघ-
वानिव ॥ २४ ॥ ततः प्रभद्रका राजन् सोमकाश्च सहस्रशः ।
पतिताः पात्यमानाश्च दृश्यन्ते शल्यसायकैः ॥ २५ ॥ भ्रमराणामिव
व्राताः शलभानामिव व्रजाः । ह्रादिन्य इव मेघेभ्य शल्यस्य
न्यपतन् शराः ॥ २६ ॥ द्विरदास्तुरगाश्चार्त्ताः पत्तयो रथिनस्तथा ।
शल्यस्य बाणैर्न्यपतन् बभ्रमुर्व्यनदंस्तथा ॥ २७ ॥ आविष्ट इव
मन्युना मद्रेशो पौरुषेण च । प्राच्छादयदरीन् संख्ये कालसृष्ट

दूवान्तकः। विनर्द्दमानो मद्रेशो मेघह्रादो महाबलः ॥ २८ ॥
सा वध्यमाना शल्येन पाण्डवानामनीकिनी। अजातशत्रुं कौन्तेयमभ्यधावद्युधिष्ठिरम् ॥ २९ ॥ तां संमर्द्द्य ततः संख्ये लघुहस्तः शितैः शरैः। शरवर्षेण महता युधिष्ठिरमपीड़यत् ॥ ३० ॥
तमापतन्तं पत्त्रश्वैः क्रुद्धो राजा युधिष्ठिरः। अवारयच्छरैस्तीक्ष्णैर्मत्तं द्विपमिवाङ्कुशैः ॥ ३१ ॥ तस्य शल्यः शरं घोरं मुमोचाशीविषोपमम्। स निर्भिद्य महात्मानं वेगेन न्यपतच्च गाम् ॥ ३२ ॥ ततो वृकोदरः क्रुद्धः शल्यं विव्याध सप्तभिः। पञ्चभिः सहदेवस्तु नकुलो दशभिः शरैः ॥ ३३ ॥ द्रौपदेयाश्च शत्रुघ्नं शूरमार्त्तायनिं शरैः। अभ्यवर्षन्महावेगं मेघा इव महीधरम् ॥ ३४ ॥ ततो दृष्ट्वा तुद्यमानं शल्यं पार्थैः समन्ततः। कृतवर्म्मा कृपश्चैव संक्रुद्धावभ्यधावताम् ॥ ३५ ॥ उलूकश्च महावीर्य्यः शकुनिश्चापि सौवलः। स्मयमानस्तु शनकैरश्वत्थामा महारथः। तव पुत्राश्च कार्त्स्न्येन जुगुपुः शल्यमाहवे ॥ ३६ ॥ भीमसेनं त्रिभिर्विद्ध्वा कृतवर्म्मा शिलीमुखैः। बाणवर्षेण महता क्रुद्धरूपमवारयत् ॥ ३७ ॥ धृष्टद्युम्नं कृपः क्रुद्धो बाणवर्षैरताड़यत्। द्रौपदेयांश्च शकुनिर्यमौ च द्रौणिरभ्ययात् ॥ ३८ ॥ दुर्य्योधनो युधांश्रेष्ठ आहवे केशवार्जुनौ। समभ्ययातूग्रतेजाः शरैश्चाप्यहनद्बली ॥ ३९ ॥ एवं द्वन्द्वशतान्यासंस्त्वदीयानां परैः सह। घोररूपाणि चित्राणि तत्र तत्र विशाम्पते ॥ ४० ॥ ऋष्यवर्णान् जघानाश्वान् भोजो भीमस्य संयुगे। सोऽवतीर्य्य रथोपस्थाद्धताश्वः पाण्डुनन्दनः। कालो दण्डमिवोद्यम्य गदापाणिरयुध्यत ॥ ४१ ॥ प्रमुखे सहदेवस्य जघानाश्वांश्च मद्रराट्। ततः शल्यस्य तनयं सहदेवोऽसिनावधीत् ॥ ४२ ॥ गौतमः पुनराचार्य्यो धृष्टद्युम्नमयोधयत्। असम्भ्रान्तमसम्भ्रान्तो यत्नवान् यत्नवत्तरम् ॥ ४३ ॥ द्रौपदेयांस्तथा वीरानेकैकं दशभिः शरैः। अविध्यदाचार्य्यसुतो नाति-

क्रुद्धः स्मयन्निव ॥ ४४ ॥ पुनश्च भीमसेनस्य जघानाश्वांस्तथाहवे।
सोऽवतीर्य्य रथात्तूर्णं हताश्वः पाण्डुनन्दनः ॥ ४५ ॥ कालो दण्ड-
मिवोद्यम्य गदां क्रुद्धो महाबलः। पोथयामास तुरगान् रथञ्च
कृतवर्म्मणः। कृतवर्म्मा त्ववप्लुत्य रथात्तस्मादपाक्रमत् ॥ ४६ ॥
शल्योऽपि राजन् संक्रुद्धो निघ्नन् सोमकपाण्डवान्। पुनरेव शितै-
र्बाणैर्युधिष्ठिरमपीड़यत् ॥ ४७ ॥ तस्य भीमो रणे क्रुद्धः संदष्ट-
दशनच्छदः। विनाशायाभिसन्धाय गदामादत्तवीर्य्यवान् ॥ ४८ ॥
यमदण्डप्रतीकाशां कालरात्रिमिवोद्यताम्। गजवाजिमनुष्याणां
प्राणान्तकरणीमति ॥ ४९ ॥ हेमपट्टपरिक्षिप्तामुल्कां प्रज्वलिता-
मिव। शैक्यां व्यालीमिवात्युग्रां वज्रकल्पामयोमयीम् ॥ ५० ॥
चन्दनागुरुपङ्काक्तां प्रमदामीप्सितामिव। वसामेदोऽसृग्दिग्धाङ्गीं
जिह्वां वैवस्वतीमिव ॥ ५१ ॥ पटुघण्टारववतीं वासवीमशनी-
मिव। निर्मुक्ताशीविषाकारां पृक्तां गजमदैरपि ॥ ५२ ॥ त्रासनीं
रिपुसैन्यानां स्वसैन्यपरिहर्षणीम्। मनुष्यलोके विख्यातां गिरि-
शृङ्गविदारणीम् ॥ ५३ ॥ यया कैलासभवने महेश्वरसखं बली।
आह्वयामास कौन्तेयः संक्रुद्धमलकाधिपम् ॥ ५४ ॥ यया माया-
मयान् दृप्तान् सुबहून् गन्धमादने। जघान गुह्यकान् क्रुद्धो मन्दा-
रार्थं महाबलः। वार्य्यमाणोऽपि बहुभिर्द्रौपद्याः प्रियमास्थितः
॥ ५५ ॥ तां वज्रमणिरत्नाढ्यामष्टास्रिं वज्रगौरवाम्। समु-
द्यम्य महाबाहुः शल्यमभ्यद्रवद्रणे ॥ ५६ ॥ गदया युद्धकुशलस्तया
दारुणनादया। पोथयामास शल्यस्य चतुरोऽश्वान्महाजवान्
॥ ५७ ॥ ततः शल्यो रणे क्रुद्धः पीने वक्षसि तोमरम्। निचखान
नदन् वीरो वर्म्म भित्त्वास्य सोऽभ्यगात् ॥ ५८ ॥ वृकोदरस्त्वस-
म्भ्रान्तस्तमेवोद्धृत्य तोमरम्। यन्तारं मद्रराजस्य निर्बिभेद ततो
हृदि ॥ ५९ ॥ स भिन्नमर्म्मा रुधिरं वमन् वित्रस्तमानसः। पपा-
ताभिमुखो दीनो मद्रराजस्त्वपाक्रमत् ॥ ६० ॥ कृतप्रतिकृतं दृष्ट्वा

शल्यो विस्मितमानसः। गदामाश्रित्य धीरात्मा प्रत्यमित्रमवैक्षत
॥ ६१ ॥ ततः सुमनसः पार्था भीमसेनमपूजयन्। तद्दृष्ट्वा कर्म
संग्रामे घोरमक्लिष्टकर्मणः ॥ ६२ ॥

इति शल्यपर्वणि शल्यवधपर्वणि संकुलयुद्धे
एकादशोऽध्यायः ॥ ११ ॥

---

सञ्जय उवाच। पतितं प्रेक्ष्य यन्तारं शल्यः सर्वायसीं गदाम्।
आदाय तरसा राजंस्तस्थौ गिरिरिवाचलः ॥ १ ॥ तं दीप्तमिव
कालाग्निं पाशहस्तमिवान्तकम्। सशृङ्गमिव कैलासं सवज्रमिव
वासवम् ॥ २ ॥ सशूलमिव हर्य्यक्षं वने मत्तमिव द्विपम्। जवे-
नाभ्यपतद्भीमः प्रगृह्य महतीं गदाम् ॥ ३ ॥ ततः शङ्खप्रणादश्च
तूर्य्याणाञ्च सहस्रशः। सिंहनादश्च सञ्जज्ञे शूराणां हर्षवर्द्धनः
॥ ४ ॥ प्रेक्षन्तः सर्वतस्तौ हि योधा योधमहाद्विपौ। तावकाश्च
परे चैव साधुसाध्वित्यपूजयन् ॥ ५ ॥ न हि मद्राधिपादन्यो
रामाद्वा यदुनन्दनात्। सोढुमुत्सहते वेगं भीमसेनस्य संयुगे
॥ ६ ॥ तथा मद्राधिपस्यापि गदावेगं महात्मनः। सोढुमुत्सहते
नान्यो योधो युधि वृकोदरात् ॥ ७ ॥ तौ वृषाविव नर्द्दन्तौ
मण्डलानि विचेरतुः। आवल्गितपदौ वीरौ मद्रराजवृकोदरौ
॥ ८ ॥ मण्डलावर्त्तमार्गेषु गदाविहरणेषु च। निर्विशेषमभूद्युद्धं
तयोः पुरुषसिंहयोः ॥ ९ ॥ तप्तहेममयैः शुभ्रैर्बभूव भयवर्द्धिनी।
अग्निज्वालैरिवावद्धा पट्टैः शल्यस्य सा गदा ॥ १० ॥ तथैव चरतो
मार्गान् मण्डलेषु महात्मनः। विद्युदभ्रप्रतीकाशा भीमस्य शुशुभे
गदा ॥ ११ ॥ ताड़िता मद्रराजेन भीमस्य गदया गदा। दह्य-
माने रथे राजन् ससृजे पावकार्च्चिषः ॥ १२ ॥ तथा भीमेन शल्यस्य
ताड़िता गदया गदा। अङ्गारवर्षं मुमुचे तदद्भुतमिवाभवत् ॥ १३ ॥

दन्तैरिव महानागौ शृङ्गैरिव महर्षभौ। तोत्रैरिव तदान्योऽन्यं गदाग्राभ्यां निजघ्नतुः ॥ १४ ॥ तौ गदानिहतैर्गात्रैः क्षणेन रुधिरोक्षितौ। प्रेक्षणीयतरावास्तां पुष्पिताविव किंशुकौ ॥ १५ ॥ गदया मद्रराजेन सव्यदक्षिणमाहतः। भीमसेनो महाबाहुर्न चचालाचलोपमः ॥ १६ ॥ तथा भीमगदावेगैस्ताड्यमानो मुहुर्मुहुः। शल्यो न विव्यथे राजन् दन्तिनेव महागिरिः ॥ १७ ॥ शुश्रुवे दिक्षु सर्वासु तयोः पुरुषसिंहयोः। गदानिपातसंह्रादो वज्रयोरिव निस्वनः ॥ १८ ॥ निवृत्य तु महावीर्यौ समुच्छ्रितगदावुभौ। पुनरन्तरमार्गस्थौ मण्डलानि विचेरतुः ॥ १९ ॥ तथाभ्येत्य पदान्यष्टौ सन्निपातोऽभवत्तयोः। उद्यम्य लौहदण्डाभ्यामतिमानुषकर्मणोः ॥ २० ॥ प्रार्थयानौ तदान्योऽन्यं मण्डलानि विचेरतुः। क्रियाविशेषं कृतिनौ दर्शयामासतुस्तदा ॥ २१ ॥ अथोद्यम्य गदे घोरे सशृङ्गाविव पर्वतौ। तावाजघ्नतुरन्योऽन्यं यथा भूमिचलेऽचलौ ॥ २२ ॥ तौ परस्परवेगाच्च गदाभ्यां भृशविक्षतौ। युगपत् पेततुर्वीरावुभाविन्द्रध्वजाविव ॥ २३ ॥ उभयोः सेनयोर्वीरास्तदा हाहाकृतोऽभवन्। भृशं मर्मस्वभिहतावुभावास्तां सुविह्वलौ ॥ २४ ॥ ततः स्वरथमारोप्य मद्राणामृषभं बली। अपोवाह कृपः शल्यं तूर्णमायोधनादथ ॥ २५ ॥ क्षीबवद्विह्वलत्वात्तु निमेषात् पुनरुत्थितः। भीमसेनो गदापाणिः समाह्वयत मद्रपम् ॥ २६ ॥ ततस्तु तावकाः शूरा नानाशस्त्रसमायुताः। नानावादित्रशब्देन पाण्डुसेनामयोधयन् ॥ २७ ॥ भुजावुच्छ्रित्य शस्त्रञ्च शब्देन महता ततः। अभ्यद्रवन्महाराज दुर्योधनपुरोगमाः ॥ २८ ॥ तदनीकमभिप्रेक्ष्य ततस्ते पाण्डुनन्दनाः। प्रययुः सिंहनादेन दुर्योधनपुरोगमान् ॥ २९ ॥ तेषामापततां तूर्णं पुत्रस्ते भरतर्षभ। प्रासेन चेकितानं वै विव्याध हृदये भृशम् ॥ ३० ॥ स पपात रथोपस्थे तव पुत्रेण ताड़ितः। रुधिरौघ-

परिक्षिन्नः प्रविश्य विपुलं तमः ॥ ३१ ॥ चेकितानं हतं दृष्ट्वा पाण्डवानां महारथाः। असकृदभ्यवर्षन्त शरवर्षाणि भागशः ॥ ३२ ॥ तावकानामनीकेषु पाण्डवा जितकाशिनः। व्यचरन्त महाराज प्रेक्षणीयाः समन्ततः ॥ ३३ ॥ कृपश्च कृतवर्म्मा च सौवलश्च महाबलः। अयोधयन् धर्म्मराजं मद्रराजपुरस्कृताः ॥ ३४ ॥ भारद्वाजस्य हन्तारं भूरिवीर्य्यपराक्रमम्। दुर्य्योधनो महाराज धृष्टद्युम्नमयोधयत् ॥ ३५ ॥ त्रिसाहस्रा रथा राजंस्तव पुत्त्रेण चोदिताः। अयोधयन्त विजयं द्रौणपुत्त्रपुरस्कृताः ॥ ३६ ॥ विजये धृतसङ्कल्पाः समभित्यक्तजीविताः। प्राविशंस्तावका राजन् हंसा इव महत् सरः ॥ ३७ ॥ ततो युद्धमभूद्घोरं परस्परवधैषिणाम्। अन्योऽन्यवधसंयुक्तमन्योऽन्यप्रीतिवर्द्धनम् ॥ ३८ ॥ तस्मिन् प्रवृत्ते संग्रामे राजन् वीरवरक्षये। अनिलेनेरितं घोरमुत्तस्थौ पार्थिवं रजः ॥ ३९ ॥ श्रवणान्नामधेयानां पाण्डवानाञ्च कीर्त्तनात्। परस्परं विजानीमो ये चायुध्यन्नभीतवत् ॥ ४० ॥ तद्रजः पुरुषव्याघ्र शोणितेन प्रशामितम्। दिशश्च विमला राजंस्तस्मिंस्तमसि शामिते ॥ ४१ ॥ तथा प्रवृत्ते संग्रामे भीमरूपे भयानके। तावकानां परेषाञ्च नासीत् कश्चित् पराङ्मुखः ॥ ४२ ॥ ब्रह्मलोकपरा भूत्वा प्रार्थयन्तो जयं युधि। सुयुद्धेन पराक्रान्ता नराः स्वर्गमभीप्सवः ॥ ४३ ॥ भर्त्तृपिण्डविमोक्षार्थं मित्रकार्य्यविनिश्चिताः। स्वर्गसंसक्तमनसो योधा युयुधिरे तदा ॥ ४४ ॥ नानारूपाणि शस्त्राणि विसृजन्तो महारथाः। अन्योऽन्यमभिगर्ज्जन्तः प्रहरन्तः परस्परम् ॥ ४५ ॥ हत विध्यत गृह्णीत प्रहरध्वं निकृन्तत। इति स्म वाचः श्रूयन्ते तव तेषाञ्च वै रणे ॥ ४६ ॥ ततो शल्यो महाराज धर्म्मराजं युधिष्ठिरम्। विव्याध निशितैर्वाणैर्हन्तुकामो महारथम् ॥ ४७ ॥ तस्य पार्थो महाराज नाराचान् वै चतुर्द्दश। मर्म्माण्युद्दिश्य मर्म्मज्ञो निचखान हसन्निव ॥ ४८ ॥ आवार्य्य पाण्डवं

बाणैर्हन्तुकामो महायशाः। विव्याध समरे क्रुद्धो बहुभिः कङ्कपत्त्रिभिः॥ ४९॥ अथ भूयो महाराज शरेणानतपर्वणा। युधिष्ठिरं समाजघ्ने सर्वसैन्यस्य पश्यतः॥ ५०॥ धर्मराजोऽपि संक्रुद्धो मद्रराजं महायशाः। विव्याध निशितैर्बाणैः कङ्कबर्हिणवाजितैः॥ ५१॥ चन्द्रसेनञ्च सप्तत्या सूतञ्च नवभिः शरैः। द्रुमसेनञ्चतुःषष्ट्या निजघान महारथः॥ ५२॥ चक्ररक्षे हते शल्यः पाण्डवेन महात्मना। निजघान ततो राजंश्चेदीन् वै पञ्चविंशतिं॥ ५३॥ सात्यकिं पञ्चविंशत्या भीमसेनञ्च सप्तभिः। माद्रीपुत्रौ शतेनाजौ विव्याध निशितैः शरैः॥ ५४॥ एवं विचरतस्तस्य संग्रामे राजसत्तमः। संप्रैषयच्छितान् पार्थः शरानाशीविषोपमान्॥ ५५॥ ध्वजाग्रञ्चास्य समरे कुन्तीपुत्रो युधिष्ठिरः। प्रमुखे वर्त्तमानस्य भल्लेनापाहरद्रथात्॥ ५६॥ पाण्डुपुत्रेण वै तस्य केतुं छिन्नं महाहवे। निपतन्तमपश्याम गिरिशृङ्गमिवाहतम्॥ ५७॥ ध्वजं निपतितं दृष्ट्वा पाण्डवञ्च व्यवस्थितम्। संक्रुद्धो मद्रराजोऽभूच्छरवर्षं मुमोच ह॥ ५८॥ शल्यः सायकवर्षेण पर्ज्जन्य इव वृष्टिमान्। अभ्यवर्षदमेयात्मा क्षत्रियान् क्षत्रियर्षभः॥ ५९॥ सात्यकिं भीमसेनञ्च माद्रीपुत्रौ च पाण्डवौ। एकैकं पञ्चभिर्विद्ध्वा युधिष्ठिरमपीड़यत्॥ ६०॥ ततो बाणमयं जालं विततं पाण्डवोरसि। अपश्याम महाराज मेघजालमिवोद्गतम्॥ ६१॥ तस्य शल्यो रणे क्रुद्धो बाणैः सन्नतपर्वभिः। दिशः प्रच्छादयामास प्रदिशश्च महारथः॥ ६२॥ ततो युधिष्ठिरो राजा बाणजालेन पीड़ितः। बभूव हृतविक्रान्तो जम्भो वृत्रहणा यथा॥ ६२॥

इति शल्यपर्व्वणि शल्यवधपर्व्वणि शल्ययुधिष्टिरयुद्धे
द्वादशोऽध्यायः॥ १२॥

---

सञ्जय उवाच। पीड़िते धर्मराजेतु मद्रराजेन मारिष।
सात्यकिर्भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ। परिवार्य्य रथैः शल्यं
पीड़यामासुराहवे॥१॥ तमेकं बहुभिर्दृष्ट्वा पीड्यमानं महा-
रथैः। साधुवादो महान् जज्ञे सिद्धाश्चासन् प्रहर्षिताः। आश्चर्य्य-
मित्यभाषन्त मुनयश्चापि सङ्गताः॥२॥ भीमसेनो रणे शल्यं
शल्यभूतं पराक्रमे। एकेन विद्ध्वा वाणेन पुनर्विव्याध सप्तभिः॥३॥
सात्यकिश्च शतेनैनं धर्मपुत्रपरीप्सया। मद्रेश्वरमथाकीर्य्य सिंह-
नादमथानदत्॥४॥ नकुलः पञ्चभिश्चैनं सहदेवश्च सप्तभिः।
विद्ध्वा तन्तु ततस्तूर्णं पुनर्विव्याध सप्तभिः॥५॥ स तु शूरो रणे
यत्तः पीड़ितस्तैर्महारथैः। विकृष्य कार्म्मुकं घोरं वेगघ्नं भार-
साधनम्॥६॥ सात्यकिं पञ्चविंशत्या शल्यो विव्याध मारिष।
भीमसेनं त्रिसप्तत्या नकुलं सप्तभिस्तथा॥७॥ ततः सविशिखं
चापं सहदेवस्य धन्विनः। छित्त्वा भल्लेन समरे विव्याधैनं त्रि-
सप्तभिः॥८॥ सहदेवस्तु समरे मातुलं भूरिवर्च्चसम्। सज्यमन्य-
द्धनुः कृत्वा पञ्चभिः समताड़यत्। शरैराशीविषाकारैर्ज्वलज्ज्वलन-
सन्निभैः॥९॥ सारथिञ्चास्य समरे शरेणानतपर्व्वणा। विव्याध
भृशसंक्रुद्धस्तञ्च भूयस्त्रिभिः शरैः॥१०॥ भीमसेनस्तु सप्तत्या
सात्यकिर्नवभिः शरैः। धर्मराजस्तथा षष्ट्या गात्रे शल्यं समा-
र्पयत्॥११॥ ततः शल्यो महाराज निर्विद्धस्तैर्महारथैः। सुस्राव
रुधिरं गात्रैर्गैरिकं पर्व्वतो यथा॥१२॥ तांश्च सर्व्वान् महेष्वासान्
पञ्चभिः पञ्चभिः शरैः। विव्याध तरसा राजंस्तदद्भुतमिवाभवत्
॥१३॥ ततोऽपरेण भल्लेन धर्मपुत्रस्य मारिष। धनुश्चिच्छेद
समरे सज्यं स हि महारथः॥१४॥ अथान्यद्धनुरादाय धर्म-
पुत्रो महारथः। साश्वसूतध्वजरथं शल्यं प्राच्छादयच्छरैः॥१५॥
स छाद्यमानः समरे धर्मपुत्रस्य सायकैः। युधिष्ठिरमथाविध्य-
द्दशभिर्निशितैः शरैः॥१६॥ सात्यकिस्तु ततः क्रुद्धो धर्मपुत्रे

शरार्द्दिति। मद्राणामधिपं शूरं शरौघैः समवारयत्॥ १७॥ स
शात्यकेः प्रचिच्छेद क्षुरप्रेण महद्धनुः। भीमसेनमुखांस्तांश्च विभि-
स्त्रभिरताड़यत्॥ १८॥ तस्य क्रुद्धो महाराज शात्यकिः सत्य-
विक्रम। तोमरं प्रेषयामास स्वर्णदण्डं महाधनम्॥ १९॥ भीम-
सेनोऽथ नाराचं ज्वलन्तमिव पन्नगम्। नकुल समरे शक्तिं
सहदेवो गदां शुभाम्। धर्मराजः शतघ्नीन्तु जिघांसुः शल्यमाहवे
॥ २०॥ तानापतत एवाशु पञ्चानां वै भुजच्युतान्। वारयामास
समरे शस्त्रसङ्घान् स मद्रराट्॥ २१॥ सात्यकिप्रहितं शल्यो
भल्लैश्चिच्छेद तोमरम्। भीमेन प्रहितञ्चापि शरं कनकभूषणम्।
द्विधा चिच्छेद समरे कृतहस्तः प्रतापवान्॥ २२॥ नकुलप्रेषितां
शक्तिं हेमदण्डां भयावहाम्। गदाञ्च सहदेवेन शरौघैः सम-
वारयत्॥ २३॥ शराभ्याञ्च शतघ्नीं तां राज्ञश्चिच्छेद भारत।
पश्यतां पाण्डुपुत्राणां सिंहनादं ननाद च। नामृषत्तन्तु शैनेयः
शत्रोर्विजयमाहवे॥ २४॥ अथान्यद्धनुरादाय सात्यकिः क्रोध-
मूर्च्छितः। द्वाभ्यां मद्रेश्वरं बिद्धा सारथिञ्च त्रिभिः शरैः॥ २५॥
ततः शल्यो महाराज सर्वांस्तान् दशभिः शरैः। विव्याध सुभृशं
क्रुद्धस्तोत्त्रैरिव महाद्विपान्॥ २६॥ ते वार्य्यमाणाः समरे मद्र-
राजेन भारत। न शेकुः प्रमुखे स्थातुं तस्य शत्रुनिसूदनाः॥ २७॥
ततो दुर्य्योधनो राजा दृष्ट्वा शल्यस्य विक्रमम्। निहतान् पाण्ड-
वान् मेने पाञ्चालानथ सृञ्जयान्॥ २८॥ ततो राजन्महाबाहु-
र्भीमसेनः प्रतापवान्। सन्त्यज्य मनसा प्राणान् मद्राधिपमयोधयत्
॥ २९॥ नकुलः सहदेवश्च सात्यकिश्च महाबलः। परिवार्य्य
तदा शल्यं समन्ताद्व्यकिरञ्छरैः॥ ३०॥ स चतुर्भिर्महेष्वासैः
पाण्डवानां महारथैः। वृतस्तान् योधयामास मद्रराजः प्रताप-
वान्॥ ३१॥ तस्य धर्मसुतो राजन् क्षुरप्रेण महाहवे। चक्ररक्षं
जघानाशु मद्रराजस्य पार्थिवः॥ ३२॥ तस्मिंस्तु निहते शूरे

चक्ररक्षि महारथे। मद्रराजोऽतिबलवान् सैनिकांस्त्वकिरच्छरैः
॥ ३३ ॥ समाच्छन्नांस्ततस्तांस्तु राजन् वीक्ष्य स सैनिकान्।
चिन्तयामास समरे धर्मराजो युधिष्ठिरः ॥ ३४ ॥ कथं नूनं भवेत्
सत्यं तन्माधववचो महत्। न हि क्रुद्धो रणे राजा क्षपयेत बलं
मम ॥ ३५ ॥ ततः सरथनागाश्वाः पाण्डवाः पाण्डुपूर्वज। मद्रे-
श्वरं समासेदुः पीड़यन्तः समन्ततः ॥ ३६ ॥ नानाशस्त्रौघबहुलां
शरवृष्टिं समुत्थिताम्। व्यधमत् समरे राजा महाभ्राणीव मारुतः
॥ ३७ ॥ ततः कनकपुङ्खां तां शल्यक्षिप्तां वियद्गताम्। शरवृष्टि-
मपश्याम शलभानामिवायतिम् ॥ ३८ ॥ ते शरा मद्रराजेन प्रेषिता
रणमूर्द्धनि। सम्पतन्तः स्म दृश्यन्ते शकुनानां व्रजा इव ॥ ३९ ॥
मद्रराजधनुर्मुक्तैः शरैः कनकभूषणैः। निरन्तरमिवाकाशं सं-
बभूव जनाधिप। न पाण्डवानां नास्माकं तत्र कश्चित् व्यदृश्यत
॥ ४० ॥ बाणान्धकारे महति कृते तत्र महाहवे। मद्रराजेन
बलिना लाघवाच्छरवृष्टिभिः ॥ ४१ ॥ लोड्यमानं तथा दृष्ट्वा
पाण्डवानां बलार्णवम्। विस्मयं परमं जग्मुर्देवगन्धर्वदानवाः
॥ ४२ ॥ स तु तान् सर्वतो यत्नाच्छरैः सम्पीड्य मारिष। धर्म-
राजमवच्छाद्य सिंहवद्व्यनदन्मुहुः ॥ ४३ ॥ ते छन्नाः समरे तेन
पाण्डवानां महारथाः। न शेकुस्तं तदा युद्धे प्रत्युद्यातुं महा-
रथम् ॥ ४४ ॥ धर्मराजपुरोगास्तु भीमसेनमुखा रथाः। न जह्युः
समरे शूरं शल्यमाहवशोभिनम् ॥ ४५ ॥

इति शल्यपर्व्वणि शल्यवधपर्व्वणि संकुलयुद्धे
त्रयोदशोऽध्यायः ॥ १३ ॥

---

सञ्जय उवाच। अर्जुनो द्रौणिना विद्धो युद्धे बहुभिरायुगैः।
तस्य चानुचरैः शूरैस्त्रिगर्त्तानां महारथैः ॥ १ ॥ द्रौणिं विव्याध

समरे त्रिभिरेव शिलीमुखैः। तथेतरान्महेष्वासान् द्वाभ्यां द्वाभ्यां धनञ्जयः। भूयश्चैव महावाहुः शरवर्षैरवाकिरत् ॥ २ ॥ शर-कण्टकितास्ते तु तावका भरतर्षभ। न जहुः समरे पार्थं वध्यमानाः शितैः शरैः ॥ ३ ॥ तेऽर्जुनं शरवर्षेण द्रोणपुत्रपुरोगमाः। अयोधयन्त समरे परिवार्य्य महारथम् ॥ ४ ॥ तैस्तु क्षिप्ताः शरा राजन् कार्त्तस्वरविभूषिताः। अर्जुनस्य रथोपस्थं पूरयामासुरञ्जसा ॥ ५ ॥ तथा कृष्णौ महेष्वासावृषभौ सर्वधन्विनाम्। शरैर्वीक्ष्य वितुन्नाङ्गौ प्रहृष्टा युद्धदुर्मदाः ॥ ६ ॥ कूवरो रथ-चक्राणि ईषा योक्त्राणि वा विभो। युगञ्चैवानुकर्षश्च शरभूतमभूत्तदा ॥ ७ ॥ नैतादृशं दृष्टपूर्वं राजन्नैवापि च श्रुतम्। यादृशं तत्र पार्थस्य तावकाः संप्रचक्रिरे ॥ ८ ॥ स रथः सर्वतो भाति चित्रपुङ्खैः शितैः शरैः। उल्काशतैः संप्रदीप्तं विमानमिव भूतले ॥ ९ ॥ ततोऽर्जुनो महाराज शरैः सन्नतपर्वभिः। अवाकिरत्तां पृतनां मेघो वृष्ट्या यथाचलम् ॥ १० ॥ ते वध्यमानाः समरे पार्थ-नामाङ्कितैः शरैः। पार्थभूतममन्यन्त प्रेक्षमाणास्तथाविधाम् ॥११॥ ततोऽद्भुतशरज्वालो धनुःशब्दानिलो महान्। सेनेन्धनं ददाहाशु तावकं पार्थपावकः ॥ १२ ॥ चक्राणां पततश्चापि युगानाञ्च धरातले। तूणीराणां पताकानां ध्वजानाञ्च रथैः सह ॥ १३ ॥ ईषाणामनुकर्षाणां त्रिवेणूनाञ्च भारत। अक्षाणामथ योक्त्राणां प्रतोदानाञ्च सर्वशः ॥ १४ ॥ शिरसां पततां चैव कुण्डलोष्णीष-धारिणाम्। भुजानाञ्च महाराज जङ्घानाञ्च सहस्रशः ॥ १५ ॥ छत्राणां व्यजनैः सार्द्धं मुकुटानाञ्च राशयः। समदृश्यन्त पार्थस्य रथमार्गेषु भारत ॥ १६ ॥ ततः क्रुद्धस्य पार्थस्य रथमार्गे विशाम्पते। अगम्यरूपा पृथिवी मांसशोणितकर्द्दमा ॥ १७ ॥ बभूव भरतश्रेष्ठ रुद्रस्याक्रीड़नं यथा। भीरूणां त्रासजननी शूराणां हर्षवर्द्धनी ॥ १८ ॥ हत्वा तु समरे पार्थः सहस्रे द्वे परन्तपः।

रथानां सवरूथानां विधूमोऽग्निरिव ज्वलन् ॥ १९ ॥ यथा हि भगवानग्निर्जगद्दग्ध्वा चराचरम् । विधूमो दृश्यते राजंस्तथा पार्थो महारथः ॥ २० ॥ द्रौणिस्तु समरे दृष्ट्वा पाण्डवस्य पराक्रमम् । रथेनातिपताकेन पाण्डवं प्रत्यवारयत् ॥ २१ ॥ तावुभौ पुरुषव्याघ्रौ श्वेताश्वौ रथिनाम्वरौ । समीयतुस्तथा तूर्णं परस्परवधैषिणौ ॥ २२ ॥ तयोरासीन्महाराज बाणवर्षं सुदारुणम् । जीमूतयोर्यथा वृष्टिस्तपान्ते भरतर्षभ ॥ २३ ॥ अन्योऽन्यस्पर्द्धिनौ तौ तु शरैः सन्नतपर्वभिः । ततक्षतुर्मृधेऽन्योऽन्यं शृङ्गाभ्यां वृषभाविव ॥ २४ ॥ तयोर्युद्धं महाराज चिरं सममिवाभवत् । अस्त्राणां सङ्गमश्चैव घोरस्तत्राभवत् पुनः ॥ २५ ॥ ततोऽर्जुनं द्वादशभी रुक्मपुङ्खैः सुतेजनैः । वासुदेवञ्च दशभिर्द्रौणिर्विव्याध भारत ॥ २६ ॥ ततः प्रहस्य बीभत्सुर्व्याक्षिपद्गाण्डिवं धनुः । मानयित्वा मुहूर्त्तन्तु गुरुपुत्रं महाहवे ॥ २७ ॥ व्यश्वसूतरथञ्चक्रे सव्यसाची महारथः । मृदुपूर्वं ततश्चैनं त्रिभिर्विव्याध सायकैः ॥ २८ ॥ हताश्वे तु रथे तिष्ठन् द्रोणपुत्रस्तदा स्मयन् । मुषलं पाण्डुपुत्राय चिक्षेप परिघोपमम् ॥ २९ ॥ तमापतन्तं सहसा हेमपट्टविभूषितम् । चिच्छेद सप्तधा वीरः पार्थः शत्रुनिवर्हणः ॥ ३० ॥ स छिन्नं मुषलं दृष्ट्वा द्रौणिः परमकोपनः । आददे परिघं घोरं नगेन्द्रशिखरोपमम् । चिक्षेप चैव पार्थाय द्रौणिर्युद्धविशारदः ॥ ३१ ॥ तमन्तकमिव क्रुद्धं परिघं प्रेक्ष्य पाण्डवः । अर्जुनस्त्वरितो जघ्ने पञ्चभिः सायकोत्तमैः ॥ ३२ ॥ स छिन्नः पतितो भूमौ पार्थबाणैर्महाहवे । दारयन् पृथिवीन्द्राणां मनांसीव च भारत ॥ ३३ ॥ ततोऽपरैस्त्रिभिर्बाणैर्द्रौणिं विव्याध पाण्डवः । सोऽतिविद्धो बलवता पार्थेन सुमहाबलः । न सम्भ्रान्तस्तदा द्रौणिः पौरुषे स्वे व्यवस्थितः ॥ ३४ ॥ सुरथन्तु ततो राजन् भारद्वाजो महारथः । अवाकिरच्छरव्रातैः सर्वक्षत्रस्य पश्यतः ॥ ३५ ॥ ततस्तु सुरथो

ध्वजो पाञ्चालानां महारथः । रथेन मेघघोषेण द्रौणिमेवाभ्यधावत ॥ ३६ ॥ विकर्षन् वै धनुः श्रेष्ठं सर्वभारसहं दृढम् । ज्वलनाशीविषनिभैः शरैश्चैनमवाकिरत् ॥ ३७ ॥ सुरथं वीक्ष्य संक्रुद्धमापतन्तं महारथम् । चुक्रोध समरे द्रौणिर्दण्डाहत इवोरगः ॥ ३८ ॥ त्रिशिखां भ्रुकुटीं कृत्वा सृक्कणीपरिसंलिहन् । तं वीक्ष्य सुरथं रोषाद्धनुर्ज्यामवमृज्य च । मुमोच तीक्ष्णं नाराचं यमदण्डोपमं युधि ॥ ३९ ॥ स तस्य हृदयं भित्त्वा प्रविवेशातिवेगितः । शक्राशनिरिवोत्सृष्टो विदार्य्य धरणीतलम् ॥ ४० ॥ ततः स पतितो भूमौ नाराचेन समाहतः । वज्रेणेव तथा शृङ्गं पर्वतस्य विदारितम् ॥ ४१ ॥ तस्मिंस्तु निहते वीरे द्रोणपुत्रः प्रतापवान् । आरुरोह रथं तूर्णं तमेव रथिनांवरः ॥ ४२ ॥ ततः सज्जो महाराज द्रौणिराहवदुर्मदः । अर्जुनं योधयामास संशप्तकवृतो रणे ॥ ४३ ॥ तद्युद्धं सुमहच्चासीदेकस्य बहुभिः सह । मध्यन्दिनगते सूर्य्ये यमराष्ट्रविवर्द्धनम् ॥ ४४ ॥ तत्राश्चर्य्यमपश्याम दृष्ट्वा तेषां पराक्रमम् । यदेको युगपद्वीरान् समयोधयदर्जुनः ॥ ४५ ॥ विमर्द्दस्तु महानासीदर्जुनस्य परैः सह । शतक्रतोर्यथा पूर्वं महत्या दैत्यसेनया ॥ ४६ ॥

शल्यपर्वणि शल्यवधपर्वणि संकुलयुद्धे
चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

सञ्जय उवाच । दुर्य्योधनो महाराज धृष्टद्युम्नश्च पार्षतः । चक्रतु सुमहद्युद्धं शरशक्तिसमाकुलम् ॥ १ ॥ तयोरासीन्महाराज शरधाराः सहस्रशः । अम्बुदानां यथा काले जलधाराः समन्ततः ॥ २ ॥ राजा तु पार्षतं विद्ध्वा शरैः पञ्चभिराशुगैः । द्रोणहन्तारमुग्रेषु पुनर्विव्याध सप्तभिः ॥ ३ ॥ धृष्टद्युम्नस्तु समरे

बलवान् दृढ़विक्रमः । सप्तत्या विशिखानां वै दुर्य्योधनमपीड़यत् ॥ ४ ॥ पीड़ितं प्रेक्ष्य राजानं सोदर्य्या भरतर्षभ । महत्या सेनया सार्द्धं परिवव्रुः स्म पार्षतम् ॥ ५ ॥ स तैः परिवृतः शूरः सर्वतोऽतिरथैर्भृशम् । व्यचरत् समरे राजन् दर्शयन्नस्त्रलाघवम् ॥ ६ ॥ शिखण्डी कृतवर्म्माणं गौतमञ्च महारथम् । प्रभद्रकैः समायुक्तौ योधयामास धन्विनौ ॥ ७ ॥ तत्रापि सुमहद्युद्धं घोररूपं विशाम्पते । प्राणान् सन्त्यज्यतां युद्धे प्राणद्यूताभिदेवने ॥ ८ ॥ शल्यस्तु शरवर्षाणि विमुञ्चन् सर्वतो दिशम् । पाण्डवान् पीड़यामास ससात्यकिवृकोदरान् ॥ ९ ॥ तथोभौ च यमौ युद्धे यमतुल्यपराक्रमौ । योधयामास राजेन्द्र वीर्य्येण च बलेन च ॥ १० ॥ शल्यसायकनुन्नानां पाण्डवानां महामृधे । त्रातारं नाध्यगच्छन्त केचित्तत्र महारथाः ॥ ११ ॥ ततस्तु नकुलः शूरो धर्म्मराजे प्रपीड़िते । अभिदुद्राव वेगेन मातुलं माद्रिनन्दनः ॥ १२ ॥ आच्छाद्य समरे शल्यं नकुलः परवीरहा । विव्याध चैनं दशभिः स्मयमानस्तनान्तरे ॥ १३ ॥ सर्वपारशवैर्बाणैः कर्म्मारपरिमार्जितैः । स्वर्णपुङ्खैः शिलाधौतैर्धनुर्यन्त्रप्रचोदितैः ॥ १४ ॥ शल्यस्तु पीड़ितस्तेन स्वस्रीयेण महात्मना । नकुलं पीड़यामास पत्रिभिर्नतपर्वभिः ॥ १५ ॥ ततो युधिष्ठिरो राजा भीमसेनोऽथ सात्यकिः । सहदेवश्च माद्रेयो मद्रराजमुपाद्रवन् ॥ १६ ॥ तानापतत एवाशु पूरयाणान्रथस्वनैः । दिशश्च विदिशश्चैव कम्पयानांश्च मेदिनीम् । प्रतिजग्राह समरे सेनापतिरमित्रजित् ॥ १७ ॥ युधिष्ठिरं त्रिभिर्विद्ध्वा भीमसेनञ्च सप्तभिः । सात्यकिञ्च शतेनाजौ सहदेवं त्रिभिः शरैः ॥ १८ ॥ ततस्तु सशरञ्चापं नकुलस्य महात्मनः । मद्रेश्वरः क्षुरप्रेण तदा चिच्छेद मारिष । तदशीर्य्यत विच्छिन्नं धनुः शल्यस्य सायकैः ॥ १९ ॥ अथान्यद्धनुरादाय माद्रीपुत्रो महारथः । मद्रराजरथं तूर्णं पूरयामास पत्रिभिः ॥ २० ॥ युधि-

ष्ठिरस्तु मद्रेशं सहदेवश्च मारिष। दशभिर्दशभिर्बाणैरुरस्येन-
मविध्यताम्॥ २१॥ भीमसेनस्तु तं षष्ट्या सात्यकिर्नवभिः शरैः।
मद्रराजमभिद्रुत्य जघ्नतुः कङ्कपत्रिभिः॥ २२॥ मद्रराजस्ततः क्रुद्धः
सात्यकिं नवभिः शरैः। विव्याध भूयः सप्तत्या शराणां नतपर्व-
णाम्॥ २३॥ अथास्य सशरञ्चापं मुष्टौ चिच्छेद मारिष। हयांश्च
चतुरः संख्ये प्रेषयामास मृत्यवे॥ २४॥ विरथं सात्यकिं कृत्वा
मद्रराजो महारथः। विशिखानां शतेनैनमाजघान समन्ततः
माद्रपुत्रौ च संरब्धौ भीमसेनञ्च पाण्डवम्। युधिष्ठिरञ्च कौरव्य
विव्याध दशभिः शरैः॥ २६॥ तत्राद्भुतमपश्याम मद्रराजस्य
पौरुषम्। यदेनं सहिताः पार्था नाभ्यवर्त्तन्त संयुगे॥ २७॥
अथान्यं रथमास्थाय सात्यकिः सत्यविक्रमः। पीड़ितान् पाण्ड-
वान् दृष्ट्वा मद्रराजवशङ्गतान्। अभिदुद्राव वेगेन मद्राणामधिपं
बली॥ २८॥ आपतन्तं रथं तस्य शल्यः समितिशोभनः। प्रत्यु-
द्ययौ रथेनैव मत्तो मत्तमिव द्विपम्॥ २९॥ स सन्निपातस्तुमुलो
बभूवाद्भुतदर्शनः। सात्यकेश्चैव शूरस्य मद्राणामधिपस्य च।
यादृशो वै पुरा वृत्तः शम्बरामरराजयोः॥ ३०॥ सात्यकिः प्रेक्ष्य
समरे मद्रराजं व्यवस्थितम्। विव्याध दशभिर्बाणैस्तिष्ठ तिष्ठेति
चाब्रवीत्॥ ३१॥ मद्रराजस्तु सुभृशं विद्धस्तेन महात्मना।
सात्यकिं प्रतिविव्याध चित्रपुङ्खैः शितैः शरैः॥ ३२॥ ततः पार्था
महेष्वासाः सात्वताभिसृतं नृपम्। अभ्यद्रवन्नथैस्तूर्णं मातुलं वध-
काङ्क्षया॥ ३३॥ तत आसीत् परामर्दस्तुमुलः शोणितोदकः।
शराणां युध्यमानानां सिंहानामिव नर्दताम्॥ ३४॥ तेषामासी-
न्महाराज व्यतिक्षेपः परस्परम्। सिंहानामामिषेप्सूनां कूजता-
मिव संयुगे॥ ३५॥ तेषां बाणसहस्रौघैराकीर्णा वसुधाभवत्।
अन्तरीक्षञ्च सहसा बाणभूतमभूत्तदा॥ ३६॥ शरान्धकारं बहुधा
कृतं तत्र समन्ततः। अभ्रच्छायेव सञ्जज्ञे शरैर्मुक्तैर्महात्मभिः॥३७॥

तत्र राजञ्छरैर्मुक्तैर्निर्मुक्तैरिव पन्नगैः । स्वर्णपुङ्खैः प्रकाशद्भि-
र्व्यरोचन्त दिशस्तदा ॥ ३८ ॥ तत्राद्भुतं परञ्चक्रे शल्यः शत्रुनिव-
र्हणः । यदेकः समरे शूरो योधयामास वै बहून् ॥ ३९ ॥ मद्र-
राजभुजोत्सृष्टैः कङ्कबर्हिणवाजितैः । संपतद्भिः शरैर्घोरैरवा-
कीर्यत मेदिनी ॥ ४० ॥ तत्र शल्यरथं राजन् विचरन्तं महा-
हवे । अपश्याम यथा पूर्वं शक्रस्यासुरसङ्क्षये ॥ ४१ ॥

इति शल्यपर्व्वणि शल्यवधपर्व्वणि संकुलयुद्धे
पञ्चदशोऽध्यायः ॥ १५ ॥

---

सञ्जय उवाच । ततः सैन्यास्तव विभो मद्रराजपुरस्कृताः ।
पुनरभ्यद्रवन् पार्थान् वेगेन महता रणे ॥ १ ॥ पीड़ितास्तावकाः
सर्वे प्रधावन्तो रणोत्कटाः । क्षणेनैव पार्थांस्ते बहुत्वात् सम-
लोड़यन् ॥ २ ॥ ते वध्यमानाः कुरुभिः पाण्डवा नावतस्थिरे ।
निवार्य्यमाणा भीमेन पश्यतोः कृष्णपार्थयोः ॥ ३ ॥ ततो धन-
ञ्जयः क्रुद्धः कृप सह पदानुगैः । अवाकिरच्छरौघेण कृतवर्माण-
मेव च ॥ ४ ॥ शकुनिं सहदेवश्च ससैन्यं समवारयत् । नकुलः
पार्श्वतः स्थित्वा मद्रराजमवैक्षत ॥ ५ ॥ द्रौपदेया नरेन्द्रांश्च
भूयिष्ठान् समवारयन् । द्रोणपुत्रञ्च पाञ्चाल्यः शिखण्डी सम-
वारयत् ॥ ६ ॥ भीमसेनस्तु राजानं गदापाणिरवारयत् । शल्यन्तु
सह सैन्येन कुन्तीपुत्रो युधिष्ठिरः ॥ ७ ॥ ततः समभवद्युद्धं संसक्तं
तत्र तत्र ह । तावकानां परेषाञ्च संग्रामेष्वनिवर्त्तिनाम् ॥ ८ ॥
तत्र पश्यामहे कर्म्म शल्यस्यातिमहद्रणे । यदेकः सर्वसैन्यानि
पाण्डवानामयुध्यत ॥ ९ ॥ व्यदृश्यत तदा शल्यो युधिष्ठिरसमी-
पतः । रणे चन्द्रमसोऽभ्याशे शनैश्चर इव ग्रहः ॥ १० ॥ पीड़-
यित्वा तु राजानं शरैराशीविषोपमैः । अभ्यधावत् पुनर्भीमं

शरवर्षैरवाकिरन् ॥ ११ ॥ तस्य तल्लाघवं दृष्ट्वा तथैव च कृतास्त्र-
ताम् । अपूजयन्ननीकानि परेषां तावकानि च ॥ १२ ॥ पीड्य-
मानास्तु शल्येन पाण्डवा भृशविक्षताः । प्राद्रवन्त रणं हित्वा
क्रोशमाने युधिष्ठिरे ॥ १३॥ वध्यमानेष्वनीकेषु मद्रराजेन पाण्डवः ।
अमर्षवशमापन्नो धर्मराजो युधिष्ठिरः ॥ १४ ॥ ततः पौरुष-
मास्थाय मद्रराजमपीडयत् । जयो वास्तु वधो वेति कृतबुद्धि-
र्महारथः ॥ १५ ॥ समाहूयाब्रवीत् सर्वान् भ्रातॄन् कृष्णञ्च माध-
वम् । भीष्मो द्रोणश्च कर्णश्च ये चान्ये पृथिवीक्षितः ॥ १६ ॥
कौरवार्थे पराक्रान्ताः संग्रामे निधनं गताः । यथाभागं यथोत-
साहं भवन्तः कृतपौरुषाः ॥ १७ ॥ भागोऽवशिष्ट एकोऽयं मम
शल्यो महारथः । सोऽहमद्य युधा जेतुमाशंसे मद्रकेश्वरम् । तत्र
यन्मानसं मह्यं तत् सर्वं निगदामि वः ॥ १८ ॥ चक्ररक्षाविमौ
शूरौ मम माद्रवतीसुतौ । अजेयौ वासवेनापि समरे वीरसम्मतौ
॥ १९ ॥ साध्विमौ मातुलं युद्धे क्षत्रधर्मपुरस्कृतौ । मदर्थं
प्रतियुध्येतां मानार्हौ सत्यसङ्गरौ ॥ २० ॥ मां वा शल्यो रणे
हन्ता तं वाहं भद्रमस्तु वः । इति सत्यामिमां वाणीं लोकवीरा
र्निबोधत ॥ २१ ॥ योत्स्येऽहं मातुलेनाद्य क्षत्रधर्मेण पार्थिवाः ।
स्वयं समभिसन्धाय विजयायेतराय वा ॥ २२ ॥ तस्य मेऽभ्यधिकं
शस्त्रं सर्वोपकरणानि च । संयुज्यन्तु रथे क्षिप्रं शास्त्रवद्रथ-
योजकाः ॥ २३ ॥ शैनेयो दक्षिणं चक्रं धृष्टद्युम्नस्तथोत्तरम् ।
पृष्ठगोपो भवत्वद्य मम पार्थो धनञ्जयः ॥ २४ ॥ पुरःसरो ममा-
द्यास्तु भीमः शस्त्रभृतां वरः । एवमभ्यधिकः शल्याद्भविष्यामि
महामृधे ॥ २५ ॥ एवमुक्तास्तथा चक्रुः सर्वे राज्ञः प्रियैषिणः
॥ २३ ॥ ततः प्रहर्षः सैन्यानां पुनरासीत् तदा मृधे । पाञ्चालानां
सोमकानां मत्स्यानाञ्च विशेषतः ॥ २७ ॥ प्रतिज्ञां तां तदा राजा
कृत्वा मद्रे समभ्ययात् । ततः शङ्खांश्च भेरीश्च शतशश्चैव पुष्कलान् ।

अवादयन्त पाञ्चालाः सिंहनादांश्च नेदिरे ॥ २८ ॥ तेऽभ्यधावन्त संरब्धा मद्रराजन्तरस्विनः । महता हर्षजेनाथ नादेन कुरुपुङ्गवाः ॥ २९ ॥ ह्रादेन गजघण्टानां शङ्खानां निनदेन च । तूर्य्यशब्देन महता नादयन्तश्च मेदिनीम् । ३० ॥ तान् प्रत्यगृह्णात् पुत्रस्ते मद्रराजश्च वीर्य्यवान् । महामेघानिव बहून् शैलावस्तोदयाचलौ ॥ ३१॥ शल्यस्तु समरश्लाघी धर्मराजमरिन्दमम् । ववर्ष शरवर्षेण वर्षेण मघवानिव ॥ ३२ ॥ तथैव कुरुराजोऽपि प्रगृह्य रुचिरं धनुः । द्रोणोपदिष्टान् विविधान् दर्शयानो महामनाः ॥ ३३ ॥ ववर्ष शरवर्षाणि चित्रं लघु च सुष्ठु च । न चास्य विवरं कश्चिद्ददर्श चरतो रणे ॥ ३४ ॥ तावुभौ विविधैर्बाणैस्ततक्षाते परस्परम् । शार्द्दूलावामिषप्रेप्सू पराक्रान्ताविवाहवे ॥ ३५ ॥ भीमस्तु तव पुत्रेण रणशौण्डेन सङ्गतः । पाञ्चाल्यः सात्यकिश्चैव माद्रीपुत्रौ च पाण्डवौ । शकुनिप्रमुखान् वीरान् प्रत्यगृह्णन् समन्ततः ॥ ३६ ॥ तदासीत्तुमुलं युद्धं पुनरेव जयैषिणाम् । तावकानां परेषाञ्च राजन् दुर्मन्त्रिते तव ॥ ३७ ॥ दुर्य्योधनस्तु भीमस्य शरेणानतपर्व्वणा । चिच्छेदादिश्य संग्रामे ध्वजं हेमविभूषितम् ॥ ३८ ॥ स किङ्किणीकजालेन महता चारुदर्शनः । पपात रुचिरः संख्ये भीमसेनस्य मानद ॥ ३९ ॥ पुनश्चापि धनुश्चित्रं गजराजकरोपमम् । क्षुरेण शितधारेण प्रचकर्त्त नराधिप ॥ ४० ॥ स छिन्नधन्वा तेजस्वी रथशक्त्या सुतं तव । बिभेदोरसि विक्रम्य स रथोपस्थ आविशत् ॥ ४१ ॥ तस्मिन् मोहमनुप्राप्ते पुनरेव वृकोदरः । यन्तुरस्य शिरः कायात् क्षुरप्रेणाहरत्तदा ॥ ४२ ॥ हतसूता हयास्तस्य रथमादाय भारत । व्यद्रवन्त दिशो राजन् हाहाकारस्ततोऽभवत् ॥ ४३ ॥ तमभ्यधावत् त्राणार्थं द्रोणपुत्रो महारथः । कृपश्च कृतवर्मा च पुत्रं तव परीप्सवः ॥ ४४ ॥ तस्मिन् विलुलिते सैन्ये त्रस्तास्तस्य पदानुगाः । गाण्डीवधन्वा विस्फार्य्य

धनुस्तानहनच्छरैः ॥ ४५ ॥ युधिष्ठिरस्तु मद्रेशमभ्यधावदमर्षितः।
स्वयं सञ्चोदयन्नश्वान् दन्तवर्णान्मनोजवान् ॥ ४६ ॥ तत्राद्भुत-
मपश्याम कुन्तीपुत्रे युधिष्ठिरे। पुरा भूत्वा मृदुर्दान्तो यत्तदा
दारुणोऽभवत् ॥ ४७ ॥ विवृताक्षस्तु कौन्तेयो वेपमानश्च मन्युना।
चिच्छेद योधान्निशितैर्भल्लैः शतसहस्रशः ॥ ४८ ॥ यां यां प्रत्यु-
द्ययौ सेनां तां तां ज्येष्ठः स पाण्डवः। शरैरपातयद्राजन् गिरीन्
वज्रैरिवोत्तमैः ॥ ४९ ॥ साश्वसूतध्वजरथान् रथिनः पातयन्
बहून्। आक्रीडदेको बलवान् पवनस्तोयदानिव ॥ ५० ॥ साश्वा-
रोहांश्च तुरगान् पत्तींश्चैव सहस्रशः। व्यपोथयत संग्रामे क्रुद्धो
रुद्रः पशूनिव ॥ ५१ ॥ शून्यमायोधनं कृत्वा शरवर्षैः समन्ततः।
अभ्यद्रवत मद्रेशं तिष्ठ शल्येति चाब्रवीत् ॥ ५२ ॥ तस्य तच्चरितं
दृष्ट्वा संग्रामे भीमकर्मणः। वित्रेसुस्तावकाः सर्वे शल्यस्त्वेनं सम-
भ्ययात् ॥ ५३ ॥ ततस्तौ तु सुसंरब्धौ प्रध्माप्य सलिलोद्भवौ।
समाहूय तदान्योऽन्यं भर्त्सयन्तौ समीयतुः ॥ ५४ ॥ शल्यस्तु शर-
वर्षेण युधिष्ठिरमवाकिरत्। मद्रराजञ्च कौन्तेयः शरवर्षैरवा-
किरत् ॥ ५५ ॥ व्यदृश्येतां तदा राजन् कङ्कपत्रिभिराहवे। उद्भिन्न-
रुधिरौ शूरौ मद्रराजयुधिष्ठिरौ ॥ ५६ ॥ पुष्पिताविव रेजाते
वने शाल्मलिकिंशुकौ। दीप्यमानौ महात्मानौ नेदतुर्युद्धदुर्मदौ
॥ ५७ ॥ दृष्ट्वा सर्वाणि सैन्यानि नाध्यवस्यंस्तयोर्जयम्। हत्वा
मद्राधिपं पार्थो भोक्ष्यतेद्य वसुन्धराम्। शल्यो वा पाण्डवं हत्वा
दद्याद्दुर्योधनाय गाम् ॥ ५८ ॥ इतीव निश्चयो नाभूद्योधानां तत्र
भारत। प्रदक्षिणमभूत् सर्वं धर्मराजस्य युध्यत ॥ ५९ ॥ ततः
शरशतं शल्यो मुमोचाशु युधिष्ठिरे। धनुश्चास्य शिताग्रेण बाणेन
निरकृन्तत ॥ ६० ॥ सोऽन्यत् कार्मुकमादाय शल्यं शरशतैस्त्रिभिः।
अविध्यत् कार्मुकञ्चास्य क्षुरेण निरकृन्तत ॥ ६१ ॥ अथास्य
निजघानाश्वांश्चतुरो नतपर्वभिः। द्वाभ्यामतिशिताग्राभ्यामुभौ च

पार्ष्णिसारथी ॥ ६२ ॥ ततोऽस्य दीप्यमानेन पीतेन निशितेन च। प्रमुखे वर्त्तमानस्य भल्लेनापाहरद्ध्वजम्। ततः प्रभग्नं तत् सैन्यं दौर्य्योधनमरिन्दम ॥ ६३ ॥ ततो मद्राधिपं द्रौणिरभ्यधावत्तथा-कृतम्। आरोप्य स्वरथञ्चैनं त्वरमाणः प्रदुद्रुवे ॥ ६४ ॥ मुहूर्त्त-मिव तौ गत्वा नर्द्दमाने युधिष्ठिरे। स्थित्वा ततो मद्रपतिरन्यं स्यन्दनमास्थितः ॥ ६५ ॥ विधिवत् कल्पितं दिव्यं महाम्बुदनिना-दितम्। सज्जयन्त्रोपकरणं द्विषतां लोमहर्षणम् ॥ ६६ ॥

इति शल्यपर्वणि शल्यवधपर्वणि शल्ययुधिष्ठिरयुद्धे षोड़शोऽध्यायः ॥ १६ ॥

---

सञ्जय उवाच। अथान्यद्धनुरादाय बलवद्वेगवत्तरम्। युधि-ष्ठिरं मद्रपतिर्विद्धा सिंह इवानदत् ॥ ११ ॥ ततः स शरवर्षाणि पर्ज्जन्य इव वृष्टिमान्। अभ्यवर्षदमेयात्मा क्षत्रियान् क्षत्रियर्षभः ॥ २ ॥ सात्यकिं दशभिर्विद्धा भीमसेनं त्रिभिस्तथा। सहदेवं त्रिभिर्विद्धा युधिष्ठिरमपीड़यत् ॥ ३ ॥ तांस्तानन्यान्महेष्वासान् साश्वान् सरथकुञ्जरान्। अर्द्दयामास विशिखैरुल्काभिरिव कुञ्ज-रान्। कुञ्जरान् कुञ्जरारोहानश्वानश्वप्रयायिनः। रथांश्च रथिभिः सार्द्धं जघान रथिनांवरः ॥ ५ ॥ बाहूंश्चिच्छेद च तथा सायुधान् केतनानि च। चकार वै महीं योधैस्तीर्णां वेदीं कुशैरिव ॥ ६ ॥ तथा तमरिसैन्यानि घ्नन्तं मृत्युनिवान्तकम्। परि-वव्रुर्भृशं क्रुद्धाः पाण्डुपाञ्चालसोमकाः ॥ ७ ॥ तं भीमसेनश्च शिनेश्च नप्ता माद्राश्च पुत्रौ पुरुषप्रवीरौ। समागतं भीमबलेन राज्ञा पर्य्याप्तमन्योऽन्यमथाह्वयन्त ॥ ८ ॥ ततस्तु शूराः समरे नरेन्द्र मद्रेश्वरं प्राप्य युधांवरिष्ठम्। आवार्य्य चैनं समरे नृवीरं जघ्नुः शरैः पत्रिभिरुग्रवेगैः ॥ ९ ॥ संरक्षितो भीमसेनेन राजा

माद्रीसुताभ्यामथ माधवेन। मद्राधिपं पत्रिभिरुग्रवेगैस्तनान्तरे धर्मसुतो निजघ्ने ॥ १० ॥ ततो रणे तावकानां रथौघाः संवीक्ष्य मद्राधिपतिं शरार्त्तम्। नराः सर्वे परिवव्रुः सुसज्जा दुर्य्योधनस्यानुमते समन्तात् ॥ ११ ॥ ततो द्रुतं मद्रजनाधिपो रणे युधिष्ठिरं सप्तभिरभ्यविध्यत्। तञ्चापि पार्थो नवभिः पृषत्कैर्विव्याध राजंस्तुमुले महात्मा ॥ १२ ॥ आकर्णपूर्णायतसंप्रयुक्तैः शरैस्तथा संयति तैलधौतैः। अन्योऽन्यमाच्छादयतां महारथौ मद्राधिपश्चापि युधिष्ठिरश्च ॥ १३ ॥ ततस्तु तूर्णं समरे महारथौ परस्परस्यान्तरमीक्षमाणौ। शरैर्भृशं विव्यधतुर्नृपोत्तमौ महाबलौ शत्रुभिरप्यधृष्यौ ॥ १४ ॥ तयोर्धनुर्ज्यातलनिस्वनो महान् महेन्द्रवज्राशनितुल्यनिस्वनः। परस्परं बाणगणैर्महात्मनोः प्रवर्षतोर्मद्रपपाण्डुवीरयोः ॥ १५ ॥ तौ चेरतुर्व्याघ्रशिशुप्रकाशौ महावनेष्वामिषगृद्धिनाविव। विषाणिनौ नागवराविवोत्कटौ ततक्षतुः संयुगजातदर्पौ ॥ १६ ॥ ततस्तु मद्राधिपतिर्महात्मा युधिष्ठिरं भीमबलं प्रसह्य। विव्याध वीरं हृदयेऽतिवेगः शरेण सूर्य्याग्निसमप्रभेण ॥ १७ ॥ ततोऽतिविद्धोऽथ युधिष्ठिरस्तदा सुसंप्रयुक्तेन शरेण राजन्। जघान मद्राधिपतिं महात्मा मुदञ्च लेभे ऋषभः कुरूणाम् ॥१८॥ ततो मुहूर्त्तादिव पार्थिवेन्द्रो लब्ध्वा संज्ञां क्रोधसंरक्तनेत्रः। शतेन पार्थं त्वरितो जघान सहस्रनेत्रप्रतिमप्रभावः ॥ १९ ॥ त्वरंस्ततो धर्मसुतो महात्मा शल्यस्य क्रुद्धो नवभिः पृषत्कैः। भित्त्वा ह्युरस्तापनीयञ्च वर्म जघान षड्भिस्त्वरितः पृषत्कैः ॥ २० ॥ ततस्तु मद्राधिपतिः प्रहृष्टो धनुर्विकृष्य प्रसृजन् पृषत्कान्। द्वाभ्यां क्षुराभ्याञ्च तथैव राज्ञश्चिच्छेद चापं कुरुपुङ्गवस्य ॥ २१ ॥ नवं ततोऽन्यत् समरे प्रगृह्य राजा धनुर्घोरतरं महात्मा। शल्यं हि विव्याध शरैः समन्तात् यथा महेन्द्रो नमुचिं शिताग्रैः ॥ २२ ॥ ततस्तु शल्यो नवभिः पृषत्कैर्भीमस्य राज्ञश्च युधिष्ठिरस्य। निकृत्य रौक्मे पटुवर्मणी

तयोर्विदारयामास भुजौ महात्मा ॥ २३ ॥ ततोऽपरेण ज्वलनार्कतेजसा त्वरेण राज्ञो धनुरुन्ममाथ । कृपश्च तस्यैव जघान सूतं षड्भिः शरैः सोऽभिमुखं पपात ॥ २४ ॥ मद्राधिपश्चापि युधिष्ठिरस्य शरैश्चतुर्भिर्निजघान वाहान् । वाहांश्च हत्वा व्याकरोन्महात्मा योधक्षयं धर्मसुतस्य राज्ञः ॥ २५ ॥ तथाकृते राजनि भीमसेनो मद्राधिपस्याशु ततो महात्मा । छित्वा धनुर्वेगवता शरेण द्वाभ्यामविध्यत् सुभृशं नरेन्द्रम् ॥ २६ ॥ अथापरेणास्य जहार यन्तुः कायाच्छिरः सन्नहनीयमध्यात् । जघान चाश्वांश्चतुरः स शीघ्रं ततो भृशं कुपितो भीमसेनः ॥ २७ ॥ तमग्रणीः सर्वधनुर्द्धराणामेकश्चरन्तं समरेऽतिवेगम् । भीमः शतेन व्यकिरच्छराणां माद्रीपुत्रः सहदेवस्तथैव । तैः सायकैर्मोहितं वीक्ष्य शल्यं भीमः शरैरस्य चकर्त्त वर्म ॥ २८ ॥ स भीमसेनेन निकृत्तवर्मा मद्राधिपश्चर्म सहस्रतारम् । प्रगृह्य खड्गञ्च रथान्महात्मा प्रस्कन्द्य कुन्तीसुतमभ्यधावत् । छित्त्वा रथेषां नकुलस्य सोऽथ युधिष्ठिरं भीमबलोऽभ्यधावत ॥ २९ ॥ तञ्चापि राजानमथोत्पतन्तं क्रुद्धं यथैवान्तकमापतन्तम् । धृष्टद्युम्नो द्रौपदेयाः शिखण्डी शिनेश्च नप्ता सहसा परीयुः ॥ ३० ॥ अथास्य चर्म्माप्रतिमं न्यकृन्तद्भीमो महात्मा दशभिः पृषत्कैः । खड्गञ्च भल्लेन चकर्त्त मुष्टौ नदन् प्रहृष्टस्तव सैन्यमध्ये ॥ ३१ ॥ तत् कर्म भीमस्य समीक्ष्य हृष्टास्ते पाण्डवानां प्रवरा रथौघाः । नादं प्रचक्रुर्भृशमुत्स्मयन्तः शङ्खांश्च दध्मुः शशिसन्निकाशान् ॥ ३२ ॥ तेनाथ शब्देन विभीषणेन तवाभितप्तं बलमप्रहृष्टम् । स्वेदाभिभूतं रुधिरोक्षिताङ्गं विसंज्ञकल्पञ्च तथा विषण्णम् ॥ ३३ ॥ स मद्रराजः सहसावकीर्णो भीमाग्रगैः पाण्डवयोधमुख्यैः । युधिष्ठिरस्याभिमुखं जवेन सिंहो यथा मृगहेतोः प्रयातः ॥ ३४ ॥ स धर्मराजो निहताश्वसूतः क्रोधेन दीप्तज्वलनप्रकाशः । दृष्ट्वा तु मद्राधिपतिं स तूर्णं सम-

प्यधावत्तमरिं बलेन ॥ ३५ ॥ गोविन्दवाक्यं त्वरितं विचिन्त्य दध्रे मतिं शल्यविनाशनाय । स धर्म्मराजोऽभिहताश्वसूते रथे तिष्ठन् शक्तिमेवाभिकाङ्क्षन् ॥ ३६ ॥ तच्चापि शल्यस्य निशम्य कर्म्म तच्चात्मनो भागमथावशिष्टम् । स्मृत्वा मनः शल्यवधे यतात्मा यथोक्तमिन्द्रावरजस्य चक्रे ॥ ३७ ॥ स धर्म्मराजो मणिहेमदण्डां जग्राह शक्तिं कनकप्रकाशाम् । नेत्रे च दीप्ते सहसा विवृत्य मद्राधिपं क्रुद्धमना निरैक्षत् ॥ ३८ ॥ निरीक्षितो वै नरदेव राज्ञा पूतात्मना निर्हृतकल्मषेण । अभून्न यद्भस्मसान्मद्रराजस्तदद्भुतं मे प्रतिभाति राजन् ॥ ३९ ॥ ततस्तु शक्तिं रुचिरोग्रदण्डां मणिप्रवालोज्ज्वलितां प्रदीप्ताम् । चिक्षेप वेगात् सुभृशं महात्मा मद्राधिपाय प्रवरः कुरूणाम् ॥ ४० ॥ दीप्तामथैनां महता बलेन सविस्फुलिङ्गां सहसा पतन्तीम् । प्रैक्षन्त सर्व्वे कुरवः समेता दिवो युगान्ते महतीमिवोल्काम् ॥ ४१ ॥ तां कालरात्रीमिव पाशहस्तां यमस्य धात्रीमिव चोग्ररूपाम् । स ब्रह्मदण्डप्रतिमाममोघां ससर्ज्ज यत्तो युधि धर्म्मराजः ॥ ४२ ॥ गन्धस्रगग्र्यासनपानभोजनैरभ्यर्च्चितां पाण्डुसुतैः प्रयत्नात् । सम्वर्त्तकाग्निप्रतिमां ज्वलन्तीं कृत्यामथर्व्वाङ्गिरसीमिवोग्राम् ॥ ४३ ॥ ईशानहेतोः प्रतिनिर्म्मितान्तां त्वष्ट्रा रिपूणामसुदेहभक्ष्याम् । भूम्यन्तरीक्षादिजलाशयानि प्रसह्य भूतानि निहन्तुमीशाम् ॥ ४४ ॥ घण्टापताकामणिवज्रभाजं वैदूर्य्यचित्रां तपनीयदण्डाम् । त्वष्ट्रा प्रयत्नान्नियमेन कॢप्तां ब्रह्मद्विषामन्तकरीममोघाम् ॥ ४५ ॥ बलप्रयत्नादधिरूढवेगां मन्त्रैश्च घोरैरभिमन्त्र्य यत्नात् । ससर्ज्ज मार्गेण स तां परेण वधाय मद्राधिपतेस्तदानीम् ॥ ४६ ॥ हतोऽसि पापेत्यभिगर्ज्जमानो रुद्रोऽन्धकायान्तकरं यथेषुम् । प्रसार्य्य बाहुं सुदृढं सुपाणिं क्रोधेन नृत्यन्निव धर्म्मराजः ॥ ४७ ॥ तां सर्व्वशक्त्या प्रहितां सुशक्तिं युधिष्ठिरेणाप्रतिवार्य्यवीर्य्याम् । प्रतिग्रहायाभिननर्द्द शल्यः सम्यग्-

भूतामग्निरिवाज्यधाराम् ॥ ४८ ॥ सा तस्य मर्म्माणि विदार्य्य शुभ्रमुरो विशालञ्च तथैव भित्त्वा। विवेश गां तोयमिवाप्रसक्ता यशो विशालं नृपतेर्व्वहन्ती ॥ ४९ ॥ नासाक्षिकर्णास्यविनिःसृतेन प्रस्यन्दता च व्रणसम्भवेन। संसिक्तगात्रो रुधिरेण सोऽभूत् क्रौञ्चो यथा स्कन्दहतो महाद्रिः ॥ ५० ॥ प्रसार्य्य बाहू च रथाद्गतो गां सञ्छिन्नवर्म्मा कुरुनन्दनेन। महेन्द्रवाहप्रतिमो महात्मा वज्राहतं शृङ्गमिवाचलस्य ॥ ५१ ॥ बाहू प्रसार्य्याभिमुखो धर्म्मराजस्य मद्रराट्। ततो निपतितो भूमाविन्द्रध्वज इवोच्छ्रितः ॥ ५२ ॥ स तथा भिन्नसर्व्वाङ्गो रुधिरेण समुक्षितः। प्रत्युद्गत इव प्रेम्णा भूम्या स नरपुङ्गवः। प्रियया कान्तया कान्तः पतमान इवोरसि ॥ ५३ ॥ चिरं भुक्त्वा वसुमतीं प्रियां कान्तामिव प्रभुः। सर्व्वैः रथैः समाश्लिष्य प्रसुप्त इव सोऽभवत् ॥ ५४ ॥ धर्म्म्ये धर्म्मात्मना युद्धे निहतो धर्म्मसूनुना। सम्यग्धुत इव स्विष्टः प्रशान्तोऽग्निरिवाध्वरे ॥ ५५ ॥ शक्त्या विभिन्नहृदयं विप्रयुक्तायुधध्वजम्। प्रशान्तमपि मद्रेशं लक्ष्मीर्नैव व्यमुञ्चत ॥ ५६ ॥ ततो युधिष्ठिरश्चापमादायेन्द्रधनुःप्रभम्। व्यधमत् द्विषतः सङ्ख्ये खगराडिव पन्नगान्। देहांश्च निशितैर्भल्लै रिपूणां नाशयत् क्षणात् ॥ ५७ ॥ ततः पार्थस्य बाणौघैरावृताः सैनिकास्तव। निमीलिताक्षाः क्षिण्वन्तो भृशमन्योऽन्यमर्द्दिताः। स्यन्दन्तो रुधिरं देहैर्व्विशस्तायुधजीविताः ॥ ५८ ॥ ततः शल्येऽ निपतिते मद्रराजानुजो युवा। भ्रातुः सर्व्वैर्गुणैस्तुल्यो रथी पाण्डवमभ्ययात् ॥ ५९ ॥ विव्याध च नरश्रेष्ठो नाराचैर्व्वहुभिस्त्वरन्। हतस्यापचितिं भ्रातुश्चिकीर्षुर्युद्धदुर्म्मदः ॥ ६० ॥ तं विव्याधाशुगैः षड्भिर्धर्म्मराजस्त्वरन्निव। कार्म्मुकञ्चास्य चिच्छेद क्षुराभ्यां ध्वजमेव च ॥ ६१ ॥ ततोऽस्य दीप्यमानेन सुदृढ़ेन शितेन च। प्रमुखे वर्त्तमानस्य भल्लेनापाहरच्छिरः ॥ ६२ ॥ सकुण्डलं तद्ददृशे पतमानं शिरो रथात्।

पुण्यचर्य्यामिव प्राप्य पतन्तं स्वर्गवासिनम् ॥ ६३ ॥ तस्यापकृत्त-शीर्षन्तु शरीरं पतितं रथात। रुधिरेणावसिक्ताङ्गं दृष्ट्वा सैन्य-मभज्यत ॥ ६४ ॥ विचित्रकवचे तस्मिन् हते मद्रनृपानुजे। हाहा-कारं विकुर्वाणाः कुरवो विप्रदुद्रुवुः ॥ ६५ ॥ शल्यानुजं हतं दृष्ट्वा तावकास्त्यक्तजीविताः। वित्रेसुः पाण्डवभयाद्रजोध्वस्तास्तथा भृशम् ॥ ६६ ॥ तांस्तथा भज्यतस्त्रस्तान् कौरवान् भरतर्षभ। शिनेर्नप्ता किरन् वाणैरभ्यवर्त्तत सात्यकिः ॥ ६७ ॥ तमायान्तं महेष्वासमप्रसह्यं दुरासदम्। हार्द्दिक्यस्त्वरितो राजन् प्रत्यगृह्णा-दभीतवत् ॥ ६८ ॥ तौ समेतौ महात्मानौ वार्ष्णेयावपराजितौ। हार्द्दिक्यः सात्यकिश्चैव सिंहाविव मदोत्कटौ ॥ ६९ ॥ इषुभि-र्विमलाभासैश्छादयन्तौ परस्परम्। अर्च्चिर्भिरिव सूर्य्यस्य दिवा-करसमप्रभौ ॥ ७० ॥ चापमार्गवलोद्धूतान् मार्गणान् वृष्णि-सिंहयोः। आकाशे समपश्याम पतङ्गानिव शीघ्रगान् ॥ ७१ ॥ सात्यकिं दशभिर्विद्ध्वा हयांश्चास्य त्रिभिः शरैः। चापमेकेन चिच्छेद हार्द्दिक्यो नतपर्व्वणा ॥ ७२ ॥ तन्निकृत्तं धनुःश्रेष्ठमपास्य शिनि-पुङ्गवः। अन्यदादत्त वेगेन वेगवत्तरमायुधम् ॥ ७३ ॥ तदादाय धनुःश्रेष्ठं वरिष्ठः सर्व्वधन्विनाम्। हार्द्दिक्यं दशभिर्वाणैः प्रत्य-विध्यत् स्तनान्तरे ॥ ७४ ॥ ततो रथं युगेशाञ्च छित्त्वा भल्लैः सुसंयतैः। अश्वांस्तस्यावधीत्तूर्णमुभौ पार्ष्णिसारथी ॥ ७५ ॥ ततस्तं विरथं दृष्ट्वा कृपः शारद्वतः प्रभो। अपोवाह ततः क्षिप्रं रथमारोप्य वीर्य्यवान् ॥ ७६ ॥ मद्रराजे हते राजन् विरथे कृत-वर्म्मणि। दुर्य्योधनवलं सर्व्वं पुनरासीत् पराङ्मुखम् ॥ ७७ ॥ तत् परे नान्ववुध्यन्त सैन्ये च रजसा वृते। वलन्तु हतभूयिष्ठं तत्त-दासीत् पराङ्मुखम् ॥ ७८ ॥ ततो मुहूर्त्तात्तेऽपश्यन् रजो भौमं समुत्थितम्। विविधैः शोणितस्रावैः प्रशान्तं पुरुषर्षभ ॥ ७९ ॥ ततो दुर्य्योधनो दृष्ट्वा भग्नं स्ववलमन्तिकात्। जवेनापततः पार्था-

नेकः सर्वानवारयत् ॥ ८० ॥ पाण्डवान् सरथान् दृष्ट्वा धृष्टद्युम्नञ्च पार्षतम्। आनर्त्तञ्च दुराधर्षं शितैर्बाणैरवाकिरत् ॥ ८१ ॥ तं परे नाभ्यवर्त्तन्त मर्त्त्या मृत्युमिवागतम्। अथान्यं रथमास्थाय हार्द्दिक्योऽपि न्यवर्त्तत ॥ ८२ ॥ ततो युधिष्ठिरो राजा त्वरमाणो महारथः। चतुर्भिर्निजघानाश्वान् पत्रिभिः कृतवर्मणः। विव्याध गौतमञ्चापि षड्भिर्भल्लैः सुतेजनैः ॥ ८३ ॥ अश्वत्थामा ततो राज्ञा हताश्वं विरथीकृतम्। तमपोवाह हार्द्दिक्यं स्वरथेन युधिष्ठिरात् ॥ ८४ ॥ ततः शारद्वतोऽष्टाभिः प्रत्यविध्यद्युधिष्ठिरम्। विव्याध चाश्वान्निशितैस्तथाष्टाभिः शिलीमुखैः ॥ ५८ ॥ एवमेतन्महाराज युद्धशेषमवर्त्तत। तव दुर्मन्त्रिते राजन् सहपुत्रस्य भारत ॥ ८६ ॥ तस्मिन्महेष्वासवरे विशस्ते संग्राममध्ये कुरुपुङ्गवेन। पार्थाः समेताः परमप्रहृष्टाः शङ्खान् प्रदध्मुर्हतमीक्ष्य शल्यम् ॥ ८७ ॥ युधिष्ठिरञ्च प्रशशंसुराजौ पुरा सुरा वृत्रवधे यथेन्द्रम्। चक्रुश्च नानाविधवाद्यशब्दान् निनादयन्तो वसुधां समन्तात् ॥ ८८ ॥

इति शल्यपर्व्वणि शल्यवधपर्व्वणि शल्यवधे सप्तदशोऽध्यायः ॥ १७ ॥

---

सञ्जय उवाच। शल्ये तु निहते राजन् मद्रराजपदानुगाः। रथाः सप्तशता वीरा निर्ययुर्महतो बलात् ॥ १ ॥ दुर्य्योधनस्तु द्विरदमारुह्याचलसन्निभम्। छत्रेण ध्रियमाणेन वीज्यमानश्च चामरैः। न गन्तव्यं न गन्तव्यमिति मद्रानवारयत् ॥ २ ॥ दुर्य्योधनेन ते वीरा वार्य्यमाणाः पुनः पुनः। युधिष्ठिरं जिघांसन्तः पाण्डूनां प्राविशन् बलम् ॥ ३ ॥ ते तु शूरा महाराज कृतचित्ताः सुयोधने। धनुःशब्दं महत् कृत्वा सहायुध्यन्त पाण्डवैः ॥ ४ ॥ श्रुत्वा च निहतं शल्यं धर्म्मपुत्रञ्च पीड़ितम्। मद्रराजप्रियासक्ते-

मद्रकानां महारथैः ॥ ५ ॥ आजगाम ततः पार्थो गाण्डीवं विक्षिपन् धनुः। पूरयन्नथघोषेण दिशः सर्वा महारथः ॥ ६ ॥ ततोऽर्जुनश्च भीमश्च माद्रीपुत्रौ च पाण्डवौ। सात्यकिश्च नरव्याघ्रो द्रौपदेयाश्च सर्वशः ॥ ७ ॥ धृष्टद्युम्नः शिखण्डी च पाञ्चालाः सह सोमकैः। युधिष्ठिरं परीप्सन्तः समन्तात् पर्य्यवारयन् ॥ ८ ॥ ते समन्तात् परिवृता पाण्डवाः पुरुषर्षभाः। क्षोभयन्ति स्म तां सेनां मकराः सागरं यथा। वृक्षानिव महावाताः कम्पयन्ति स्म तावकान् ॥ ९ ॥ पुरोवातेन गङ्गेव क्षोभ्यमाणा महानदी। व्यक्षोभत तदा राजन् पाण्डूनां ध्वजिनी पुनः ॥ १० ॥ प्रस्कन्द्य सेनां महतीं महात्मानो महारथाः। बहवश्चुक्रुशुस्तत्र क्व स राजा युधिष्ठिरः ॥ ११ ॥ भ्रातरः पाण्डवाः शूरा दृश्यन्ते नेह केचन। पाञ्चाला वा महावीर्य्या शिखण्डी च महारथः। धृष्टद्युम्नोऽथ शैनेयो द्रौपदेया महारथाः ॥ १२ ॥ एवं तान् वादिनः शूरान् द्रौपदेया महारथाः। अभ्यघ्नन् युध्यमानांश्च मद्रराजपदानुगान् ॥ १३ ॥ रथैर्विमथिताः केचित् केचिच्छिन्नैर्महाध्वजैः। प्रत्यदृश्यन्त समरे तावका निहताः शरैः ॥ १४ ॥ आलोक्य पाण्डवान् युद्धे योधा वीरान् सहस्रशः। वार्य्यमाणा ययुर्वीरास्तव पुत्रेण भारत ॥ १५ ॥ दुर्य्योधनस्तु तान् वीरान् वारयामास सान्त्वयन्। न चास्य शासनं कश्चित्तत्र चक्रे महारथः ॥ १६ ॥ ततो गान्धारराजस्य पुत्रः शकुनिरब्रवीत्। दुर्य्योधनं महाराज वचनं वचनक्षमः ॥ १७ ॥ किन्नु नः प्रेक्षमाणानां मद्राणां हन्यते बलम्। न युक्तमेतत् समरे त्वयि तिष्ठति भारत ॥ १८ ॥ सहितैर्नाम योद्धव्यमित्येवं समयः कृतः। अथ कस्मात् परानेवं घ्नतो मर्षयसे नृप ॥ १९ ॥

दुर्य्योधन उवाच। वार्य्यमाणा मया पूर्वं नैते चक्रुर्वचो मम। एते हि सहिता सर्वे प्रस्कन्नाः पाण्डुवाहिनीम् ॥ २० ॥

शकुनिरुवाच। न भर्त्तु शासनं वीरा रणे कुर्वन्त्यमर्षिताः। अलं क्रोद्धं तवैतेषां नायं काल उपेक्षितुम् ॥ २१ ॥ यामः सर्वेऽत्र संभूय सवाजिरथकुञ्जराः। परित्रातुं महेष्वासान् मद्रराजपदानुगान् ॥ २२ ॥ अन्योऽन्यं परिरक्षामो यत्नेन महता नृप। एवं सर्वेऽनुसञ्चिन्त्य प्रययुर्यत्र सैनिकाः ॥ २३ ॥ एवमुक्तस्ततो राजा बलेन महता वृतः। प्रययौ सिंहनादेन कम्पयन्निव मेदिनीम् ॥ २४ ॥ हत विध्यत गृह्णीत प्रहरध्वं निकृन्तत। इत्यासीत्तुमुलः शब्दस्तव सैन्यस्य भारत ॥ २५ ॥ पाण्डवास्तु रणे दृष्ट्वा मद्रराजपदानुगान्। सहितानभ्यवर्त्तन्त गुल्ममास्थाय मध्यमम् ॥ २६ ॥ ते मुहूर्त्ताद्रणे वीरा हस्ताहस्ति विशाम्पते। निहताः प्रत्यदृश्यन्त मद्रराजपदानुगाः ॥ २७ ॥ ततो नः सम्प्रयातानां हतमद्रास्तरस्विनः। हृष्टाः किलकिलाशब्दमकुर्वन् सहिताः परे ॥ २८ ॥ अथोत्थितानि रुण्डानि समदृश्यन्त सर्वशः। पपात महती चोल्का मध्ये चादित्यमण्डलात् ॥ २९ ॥ रथैर्भग्नैर्युगाक्षैश्च निहतैश्च महारथैः। अश्वैर्निपतितैश्चैव संछन्नाभूद्वसुन्धरा ॥ ३० ॥ वातायमानैस्तुरगैर्युगासक्तैस्ततस्ततः। अदृश्यन्त महाराज योधास्तत्र रणाजिरे ॥ ३१ ॥ भग्नचक्रान्रथान् केचिदवहंस्तुरगा रणे। रथार्द्धं केचिदादाय दिशो दश विबभ्रमुः ॥ ३२ ॥ तत्र तत्र व्यदृश्यन्त योक्त्रैः श्लिष्टा स्म वाजिनः। रथिनः पतमानाश्च व्यदृश्यन्त नृपोत्तम। गगणात् प्रच्युताः सिद्धाः पुण्यानामिव सङ्क्षये ॥ ३३ ॥ निहतेषु च शूरेषु मद्रराजानुगेषु वै। अस्मानापततश्चैव दृष्ट्वा पार्था महारथाः। अभ्यवर्त्तन्त वेगेन जयगृद्धाः प्रहारिणः ॥ ३४ ॥ बाणशब्दरवान् कृत्वा विमिश्रान् शङ्खनिस्वनैः। अस्मांस्तु पुनरासाद्य लब्धलक्ष्याः प्रहारिणः। शरासनानि धुन्वानाः सिंहनादान् प्रचुक्रुशुः ॥ ३५ ॥ ततो हतमभिप्रेक्ष्य मद्रराजबलं महत्। मद्रराजञ्च समरे दृष्ट्वा शूरं निपातितम्। दुर्य्योधनबलं सर्व्वं

पुनरासीत् पराङ्मुखम् ॥ ३६ ॥ वध्यमानं महाराज पाण्डवैर्जितकाशिभिः। दिशो भेजेऽथ सम्भ्रान्तं त्रासितं दृढ़धन्विभिः ॥ ३७ ॥

इति शल्यपर्वणि शल्यवधपर्वणि दुर्य्योधनसैन्यापयाने अष्टादशोऽध्यायः ॥ १८ ॥

---

सञ्जय उवाच। पतिते युधि दुर्द्धर्षे मद्रराजे महारथे। तावकास्तव पुत्राश्च प्रायशो विमुखाभवन् ॥ १ ॥ वणिजो नावि भिन्नायां यथागाधेऽर्णवेप्लवे। अपारे पारमिच्छन्तो हते शूरे महात्मना ॥ २ ॥ मद्रराजे महाराज वित्रस्ताः शरविक्षताः। अनाथा नाथमिच्छन्तो मृगाः सिंहार्द्दिता इव ॥ ३ ॥ वृषा यथा भग्नशृङ्गाः शीर्णदन्ता गजा इव। मध्याह्ने प्रत्यपायाम निर्जिताजातशत्रुणा ॥ ४ ॥ न सन्धातुमनीकानि न च राजन् पराक्रमे। आसीद्बुद्धिर्हते शल्ये तव योधस्य कस्यचित् ॥ ५ ॥ भीष्मे द्रोणे च निहते सूतपुत्रे च भारत। यद्दुःखं तव योधानां भयञ्चासीद्विशाम्पते। तद्भयं स च नः शोको भूय एवाभ्यवर्त्तत ॥ ६ ॥ निराशास्तु जये तस्मिन् हते शल्ये महारथे। हतप्रवीरा विध्वस्ता निकृत्ताश्च शितैः शरैः। मद्रराजे हते राजन् योधास्ते प्राद्रवन् भयात् ॥ ७ ॥ अश्वानन्ये गजानन्ये रथानन्ये महारथाः। आरुह्य जवसम्पन्नाः पदाताः प्राद्रवन् भयात् ॥ ८ ॥ द्विसाहस्राश्च मातङ्गा गिरिरूपाः प्रहारिणः। सम्प्राद्रवन् हते शल्ये अङ्कुशाङ्गुष्ठचोदिताः ॥ ९ ॥ ते रणाद्भरतश्रेष्ठ तावकाः प्राद्रवन् दिशः। धावन्तश्चाप्यदृश्यन्त श्वसमानाः शराहताः ॥ १० ॥ तान् प्रभग्नान् द्रुतान् दृष्ट्वा हतोत्साहान् पराजितान्। अभ्यद्रवन्त पाञ्चालाः पाण्डवाश्च जयैषिणः ॥ ११ ॥ बाणशब्दरवश्चापि सिंहनादश्च पुष्कलः। शङ्खशब्दश्च शूराणां दारुणः समपद्यत ॥ १२ ॥ दृष्ट्वा तु कौरवं सैन्यं

भयवस्तं प्रविद्रुतम्। अन्योऽन्यं समभाषन्त पाञ्चालाः पाण्डवैः सह ॥ १३ ॥ अद्य राजा सत्यधृतिर्जितामित्रो युधिष्ठिरः। अद्य दुर्य्योधनो हीनो दीप्तया नृपतिश्रिया ॥ १४ ॥ अद्य श्रुत्वा हतं पुत्रं धृतराष्ट्रो जनेश्वरः। विह्वलः पतितो भूमौ किल्विषं प्रतिपद्यताम् ॥ १५ ॥ अद्य जानातु कौन्तेयं समर्थं सर्व्वधन्विनाम्। अद्यात्मानन्तु दुर्मेधा गर्हयिष्यति पापकृत् ॥ १६ ॥ अद्य क्षत्तुर्व्वचः सत्यं स्मरतां ब्रुवतो हितम्। अद्य प्रभृति पार्थांश्च प्रेष्यभूत उपाचरन्। विजानातु नृपो दुःखं यत् प्राप्तं पाण्डुनन्दनैः ॥ १७ ॥ अद्य कृष्णस्य माहात्म्यं जानातु स महीपतिः। अद्यार्ज्जुनधनुर्घोषं घोरं जानातु संयुगे। अस्त्राणाञ्च वलं सर्व्वं वाह्वोश्च वलमाहवे ॥ १८ ॥ अद्य ज्ञास्यति भीमस्य वलं घोरं महात्मनः। हते दुर्य्योधने युद्धे शक्रेणेवासुरे वले ॥ १९ ॥ यत् कृतं भीमसेनेन दुःशासनवधे तदा। नान्यः कर्त्तास्ति लोकेऽस्मिनृते भीमं महावलम् ॥ २० ॥ जानीतामद्य ज्येष्ठस्य पाण्डवस्य पराक्रमम्। मद्रराजं हते श्रुत्वा देवैरपि दुरासदम् ॥ २१ ॥ अद्य ज्ञास्यति संग्रामे माद्रीपुत्रौ च पाण्डवौ। निहते सौवले शूरे गान्धारेषु च सर्व्वशः ॥ २२ ॥ कथं तेषां जयो न स्याद्येषां योद्धा धनञ्जयः। सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ २३ ॥ द्रौपदीतनयाः पञ्च माद्रीपुत्रौ च पाण्डवौ। शिखण्डी च महेष्वासो राजा चैव युधिष्ठिरः ॥ २४ ॥ येषाञ्च जगतो नाथो नाथः कृष्णो जनार्द्दनः। कथं तेषां जयो न स्याद्येषां धर्म्मो व्यपाश्रयः ॥ २५ ॥ भीष्मं द्रोणञ्च कर्णञ्च मद्रराजानमेव च। अथान्यान्नृपतीन् सर्व्वान् शतशोऽथ सहस्रशः ॥ २६ ॥ कोऽन्यः शक्तो रणे जेतुमृते पार्थात् युधिष्ठिरात्। यस्य नाथो हृषीकेशः सदा धर्म्मयशोनिधिः ॥ २७ ॥ इत्येवं वदमानास्ते हर्षेण महता वृताः। प्रभग्नांस्तावकान् युद्धे सृञ्जयाः पृष्ठतोऽन्वयुः ॥ २८ ॥ धनञ्जयो रथानीकमभ्यवर्त्तत

वीर्य्यवान्। माद्रीपुत्रौ च शकुनिं सात्यकिश्च महारथः॥ २९॥
तान् प्रेच्य द्रवतः सर्व्वान् भीमसेनभयार्द्दितान्। दुर्य्योधनस्तदा
सूतमब्रवीद्विस्मयन्निव॥ ३०॥ मामतिक्रमते पार्थो धनुष्पाणिरव
स्थितः। जघने सर्व्वसैन्यानां ममाश्वान् प्रतिपादय॥ ३१॥ जघने
वर्त्तमानं हि कौन्तेयो मां धनञ्जयः। नोत्सहेत व्यतिक्रान्तुं
वेलामिव महोदधिः॥ ३२॥ पश्य सैन्यं महत् सूत पाण्डवैः
समभिद्रुतम्। सैन्यरेणुं समुद्भूतं पश्यस्वैनं समन्ततः॥ ३३॥
सिंहनादांश्च बहुशः शृणु घोरान्महाभयान्। तस्माद्याहि शनैः
सूत जघनं परिपालयन्॥ ३४॥ मयि स्थिते च समरे युध्यमाने
च पाण्डवम्। पुनरावर्त्तते सूत मामकं बलमोजसा॥ ३५॥
तच्छ्रुत्वा तव पुत्रस्य शूरार्य्यसदृशं वचः। सारथिर्हेमसंछन्नान्
शनैरश्वानचोदयत्॥ ३६॥ गजाश्वरथिभिर्हीनास्त्यक्तात्मानः
पदातयः। एकविंशतिसाहस्राः संयुगायावतस्थिरे॥ ३७॥ नाना-
देशसमुद्भूता नानानगरवासिनः। व्यवस्थितास्तदा योधाः प्रार्थ-
यन्तो महद्यशः॥ ३८॥ तेषामापततां तत्र संहृष्टानां परस्परम्।
संमर्द्दः सुमहान् यज्ञे घोररूपो भयानकः॥ ३९॥ भीमसेनस्तदा
राजन् धृष्टद्युम्नश्च पार्षतः। बलेन चतुरङ्गेन नानादेश्यानवार-
यत्॥ ४०॥ भीममेवाभ्यवर्त्तन्त रणेऽन्ये तु पदातयः। प्रक्ष्वेड़ा-
स्फोटसंहृष्टा वीरलोकं यियासवः॥ ४१॥ आसाद्य भीमसेनन्तु
संरब्धा युद्धदुर्म्मदाः। धार्त्तराष्ट्रा विनेदुर्हि नान्यञ्चाकथयन्
कथाम्। परिवार्य्य रणे भीमं निजघ्नुस्ते समन्ततः॥ ४२॥ स
वध्यमानः समरे पदातिगणसंवृतः। न चचाल ततः स्थानान्मैनाक
इव पर्वतः॥ ४३॥ ते तु क्रुद्धा महाराज पाण्डवानां महारथम्।
निग्रहीतुं प्रचक्रुर्हि योधांश्चान्यानवारयन्॥ ४४॥ अक्रुध्यत
रणे भीमस्तैं रथैः पर्य्यवस्थितैः। सोऽवतीर्य्य रथात्तूर्णं पदातिः
समुपस्थितः॥ ४५॥ जातरूपप्रतिच्छन्नां प्रगृह्य महतीं गदाम्।

अवधीत्तावकान् योधान् दण्डपाणिरिवान्तकः ॥ ४६ ॥ रथाश्व-
द्विपहीनांस्तु तान् भीमो गदया बली। एकविंशतिसाहस्रान्
पदातीनवपोथयत् ॥ ४७ ॥ हत्वा तत् पुरुषानीकं भीमः सत्य-
पराक्रमः। धृष्टद्युम्नं पुरस्कृत्य नचिरात् प्रत्यदृश्यत ॥ ४८ ॥
पादाता निहता भूमौ शिश्यिरे रुधिरोक्षिताः। संभग्ना इव
वातेन कर्णिकाराः सुपुष्पिताः ॥ ४९ ॥ नानापुष्पस्रजोपेता नाना-
कुण्डलधारिणः। नानाजात्या हतास्तत्र नानादेशसमागताः ॥५०॥
पताकाध्वजसंछन्नं पदातीनां महद्बलम्। निकृत्तं विबभौ रौद्रं
घोररूपं भयानकम् ॥५१॥ युधिष्ठिरपुरोगास्तु सहसैन्या महा-
रथाः। अन्वधावन्महात्मानं पुत्रं दुर्य्योधनं तव ॥ ५२ ॥ ते सर्व्वे
तावकान् दृष्ट्वा महेष्वासाः पराङ्मुखान्। नाभ्यवर्त्तन्त ते पुत्रं
वेलेव मकरालयम् ॥५३॥ तदद्भुतमपश्याम तव पुत्रस्य पौरुषम्।
यदेकं सहिताः पार्था न शेकुरतिवर्त्तितुम् ॥ ५४ ॥ नातिदूरापं-
यातन्तु कृतबुद्धिं पलायने। दुर्य्योधनः स्वकं सैन्यमब्रवीद्भृशविक्ष-
तम् ॥ ५५ ॥ न तं देशं प्रपश्यामि पृथिव्यां पर्वतेषु वा। यत्र
यातान्न वो हन्युः पाण्डवाः किं सृतेन वः ॥ ५६ ॥ अल्पञ्च बल-
मेतेषां कृष्णौ च भृशविक्षतौ। यदि सर्व्वेऽत्र तिष्ठामो ध्रुवं नो
विजयो भवेत् ॥ ५७ ॥ विप्रयातांस्तु वो भिन्नान् पाण्डवाः कृत-
किल्बिषाः। अनुसृत्य हनिष्यन्ति श्रेयो नः समरे स्थितम् ॥ ५८ ॥
शृणुध्वं क्षत्रियाः सर्व्वे यावन्तोऽत्र समागताः। यदा शूरञ्च भीरुञ्च
मारयत्यन्तकः सदा। को नु मूढ़ो न युध्येत पुरुषः क्षत्रियब्रुवः
॥ ५९ ॥ श्रेयो नो भीमसेनस्य क्रुद्धस्य प्रमुखे स्थितम्। सुखः
सांग्रामिको मृत्युः क्षत्रधर्म्मेण युध्यताम् ॥ ६० ॥ जित्वेह सुख-
माप्नोति हतः प्रेत्य महाफलम्। न युद्धधर्म्माच्छ्रेयान् वै पन्थाः
स्वर्गस्य कौरवाः। अचिरेणैव तान् लोकान् हतो युद्धे ह्यवाप्स्यथ
॥ ६१ ॥ श्रुत्वा तु वचनं तस्य पूजयित्वा च पार्थिवाः। पुनरेवाभ्य-

वर्त्तन्त पाण्डवानाततायिनः ॥ ६२ ॥ तानापतत एवाशु व्यूढ़ा-
नीकाः महारिथः। प्रत्युद्ययुस्तदा पार्थां जयगृद्धाः प्रमन्यवः
॥ ६३ ॥ धनञ्जयो रथेनाजावभ्यवर्त्तत वीर्य्यवान्। विश्रुतं त्रिषु
लोकेषु गाण्डीवं व्याक्षिपन्धनुः ॥ ६४ ॥ माद्रीपुत्रौ तु शकुनिं
सात्यकिश्च महाबलः। जवेनाभ्यपतन् वीरा यतो वै तावकं
बलम् ॥ ६५ ॥

इति शल्यपर्वणि शल्यवधपर्वणि संकुलयुद्धे
ऊनविंशोऽध्यायः ॥ १९ ॥

---

सञ्जय उवाच। सन्निवृत्ते बलौघे तु शाल्वो म्लेच्छगणाधिपः।
अभ्यधावत संक्रुद्धः पाण्डूनां सुमहद्बलम् ॥ १ ॥ आस्थाय सुमहा-
नागं प्रभिन्नं पर्वतोपमम्। दृप्तमैरावणप्रख्यममित्रगणमर्द्दनम् ॥२॥
योऽसौ महान् भद्रकुले प्रसूतः सुपूजितो धार्त्तराष्ट्रेण नित्यम्।
सुकल्पितः शास्त्रविनिश्चयज्ञैः सदोपवाह्यः समरेषु राजन्। तमा-
स्थितो राजवरो बभूव यथोदयस्थः सविता तपान्ते ॥ ३ ॥ स
तेन नागप्रवरेण राजन्नभ्युद्ययौ पाण्डुसुतान् समन्तात्। शितैः
पृषत्कैर्विददार चापि महेन्द्रवज्रप्रतिमैः सुघोरैः ॥ ४ ॥ ततः
शरान् वै सृजतो महारणे योधांश्च राजन्नयतो यमाय। नास्या-
न्तरं ददृशुः स्वे परे वा यथा पुरा वज्रधरस्य दैत्याः। ऐरा-
वणस्थस्य चमूविमर्द्दे दैत्याः पुरा वासवस्येव राजन् ॥ ५ ॥ ते
पाण्डवाः सोमकसृञ्जयाश्च तमेकनागं ददृशुः समन्तात्। सहस्रशो
वै विचरन्तमेकं यथा महेन्द्रस्य गजं समीके ॥ ६ ॥ संद्राव्यमाणन्तु
बलं परेषां परीतकल्पं विबभौ समन्तात्। नैवावतस्थे समरे
भृशं भयाद्विमृद्यमानन्तु परस्परं तदा ॥ ७ ॥ ततः प्रभग्ना सहसा
महाचमूः सा पाण्डवी तेन नराधिपेन। दिशश्चतस्रः सहसा

प्रधाविता गजेन्द्रवेगं तमपारयन्ती ॥ ८ ॥ दृष्ट्वा च तां वेगवतीं प्रभग्नां सर्वे त्वदीया युधि योधमुख्याः । सम्पूजयन्तश्च नराधिपं ते शङ्खान् प्रदध्मुः शशिसन्निकाशान् ॥ ९ ॥ श्रुत्वा निनादन्त्वथ कौरवाणां हर्षाद्विमुक्तं सह शङ्खशब्दैः । सेनापतिः पाण्डवसृञ्जयानां पाञ्चालपुत्रो न ममर्ष कोपात् ॥ १० ॥ ततस्तु तं वै द्विरदं महात्मा प्रत्युद्ययौ त्वरमाणो जयाय । जम्भो यथा शक्रसमागमे वै नागेन्द्रमैरावणमिन्द्रवाह्यम् ॥ ११ ॥ तमापतन्तं सहसा च दृष्ट्वा पाञ्चालराजं युधि राजसिंहः । तं वै द्विपं प्रेषयामास तूर्णं वधाय राजन् द्रुपदात्मजस्य ॥ १२ ॥ स तं द्विपं सहसाभ्यापतन्तमविध्यदग्निप्रतिमैः पृषत्कैः । कर्मारधौतैर्निशितैर्ज्वलद्भिर्नाराचमुख्यैस्त्रिभिरुग्रवेगैः ॥ १३ ॥ ततोऽपरान् पञ्च शितान्महात्मा नाराचमुख्यान् विससर्ज कुम्भे । स तैस्तु विद्धः परमद्विपो रणे तदा परावृत्य भृशं प्रदुद्रुवे ॥ १४ ॥ तं नागराजं सहसा प्रणुन्नं विद्राव्यमाणञ्च निगृह्य शाल्वः । तोत्राङ्कुशैः प्रेषयामास तूर्णं पाञ्चालराजस्य रथं प्रदिश्य ॥ १५ ॥ दृष्ट्वापतन्तं सहसा तु नागं धृष्टद्युम्नः स्वरथाच्छीघ्रमेव । गदां प्रगृह्याशु जवेन वीरो भूमिं प्रपन्नो भयविह्वलाङ्गः ॥ १६ ॥ स तं रथं हेमविभूषिताङ्गं साश्वं ससूतं सहसा विमृद्य । उत्क्षिप्य हस्तेन महाद्विपोऽथ विपोथयामास वसुन्धरातले ॥ १७ ॥ पाञ्चालराजस्य सुतं स दृष्ट्वा तदार्दितं नागवरेण तेन । तमन्वधावत् सहसा जवेन भीमः शिखण्डी च शिनेश्च नप्ता ॥ १८ ॥ शरैश्च वेगं सहसा निगृह्य तथाभितो ह्यापततो गजस्य । स संगृहीतो रथिभिर्गजो वै चचाल तैर्वार्यमाणश्च सङ्ख्ये ॥ १९ ॥ ततः पृषत्कान् प्रववर्ष राजा सूर्यो यथा रश्मिजालान् समन्तात् । तैराशुगैर्वध्यमाना रथौघाः प्रदुद्रुवुस्तत्र ततश्च सर्वे ॥ २० ॥ तत् कर्म शाल्वस्य समीक्ष्य सर्वे पाञ्चालमत्स्या नृप सृञ्जयाश्च । हाहाकारैर्नादयन्तः स्म युद्धे विप्रं समन्तादुरुधुः

नराग्रगाः ॥ २१ ॥ पाञ्चालराजस्त्वरितस्तु शूरो गदां प्रगृह्याचल-शृङ्गतुल्याम् । ससम्भ्रमं भारत शत्रुघाती जवेन वीरोऽनुससार नागम् ॥ २२ ॥ ततस्तु नागं धरणीधराभं मदं स्रवन्तं जलद-प्रकाशम् । गदां समासाद्य भृशं जघान पाञ्चालराजस्य सुत-स्तरस्वी ॥ २३ ॥ स भिन्नकुम्भः सहसा विनद्य मुखात् प्रभूतं क्षतजं विमुञ्चन् । पपात नागो धरणीधराभः क्षितिप्रकम्पे चलितो यथाद्रिः ॥ २४ ॥ निपात्यमाने तु तदा गजेन्द्रे हाहाकृते तव पुत्रस्य सैन्ये । स शाल्वराजस्य शिनिप्रवीरो जहार भल्लेन शिरः शितेन ॥ २५ ॥ कृत्तोत्तमाङ्गो युधि सात्वतेन पपात भूमौ सह नागराज्ञा । यथाद्रिशृङ्गं सहसा प्रणुन्नं वज्रेण देवाधिपचोदि-तेन ॥ २६ ॥

इति शल्यपर्वणि शल्यवधपर्वणि शाल्ववधे
विंशोऽध्यायः ॥ २० ॥

---

सञ्जय उवाच । तस्मिंस्तु निहते शूरे शाल्वे समितिशोभने । तवाभज्यद्बलं वेगाद्वातेनेव महाद्रुमः ॥ १ ॥ तत् प्रभग्नं बलं दृष्ट्वा कृतवर्मा महारथः । दधार समरे शूरः शत्रुसैन्यं महाबलः ॥२॥ सन्निवृत्तास्तु ते वीरा दृष्ट्वा सात्वतमाहवे । शैलोपमं स्थितं राजन् कीर्य्यमाणं शरैर्युधि ॥ ३ ॥ ततः प्रववृते युद्धं कुरूणां पाण्डवैः सह । निवृत्तानां महाराज मृत्युं कृत्वा निवर्त्तनम् ॥ ४ ॥ तत्राश्चर्य्यं महायुद्धं सात्वतस्य परैः सह । यदेको वारयामास पाण्डुसेनां दुरासदम् ॥ ५ ॥ तेषामन्योन्यसुहृदां कृते कर्मणि दुष्करे । सिंहनादः प्रहृष्टानां दिवस्पृक् सुमहानभूत् ॥ ६ ॥ तेन शब्देन वित्रस्ताः पाञ्चाला भरतर्षभ । शिनेर्नप्ता महाबाहु-रन्वपद्यत सात्यकिः ॥ ७ ॥ स समासाद्य राजानं क्षेमकीर्त्तिं

महाबलम्। सप्तभिर्निशितैर्बाणैरनयद्यमसादनम्॥ ८॥ तमायान्तं महाबाहुं प्रक्षिपन्तं शिताङ्कुरान्। जवेनाभ्यपतद्धीमान् हार्द्दिक्यः शिनिपुङ्गवम्॥ ९॥ तौ सिंहाविव नर्द्दन्तौ धन्विनौ रथिनाम्वरौ। अन्योऽन्यमभिधावेतां शस्त्रप्रवरधारिणौ॥ १०॥ पाण्डवाः सह पाञ्चालैर्योधाश्चान्ये नृपोत्तम। प्रेक्षकाः समपद्यन्त तयोर्घोरे समागमे॥ ११॥ नाराचैर्वत्सदन्तैश्च वृष्ण्यन्धकमहारथौ। अभिजघ्नतुरन्योऽन्यं प्रहृष्टाविव कुञ्जरौ॥ १२॥ चरन्तौ विविधान्मार्गान् हार्द्दिक्यशिनिपुङ्गवौ। मुहुरार्द्दयतामेतौ बाणवृष्ट्या परस्परम्॥१३॥ चापवेगबलोद्धूतान्मार्गणान् वृष्णिसिंहयोः आकाशे समपश्याम पतङ्गानिव शीघ्रगान्॥ १४॥ तमेकं सत्यकर्म्माणमासाद्य हृदिकात्मजः। अविध्यन्निशितैर्बाणैश्चतुर्भिश्चतुरो हयान्॥ १५॥ स दीर्घबाहुः संक्रुद्धस्तोत्त्रार्द्दित इव द्विपः। अष्टाभिः कृतवर्म्माणमविध्यत् परमेषुभिः॥ १६॥ ततः पूर्णायतोत्सृष्टैः कृतवर्म्मा शिलाशितैः। सात्यकिं त्रिभिराहत्य धनुरेकेन चिच्छिदे॥ १७॥ निकृत्तं तद्धनुःश्रेष्ठमपास्य शिनिपुङ्गवः। अन्यदादत्त वेगेन शैनेयः सशरं धनुः॥ १८॥ तदादाय धनुःश्रेष्ठं वरिष्ठः सर्व्वधन्विनाम्। आरोप्य च महावीर्य्यो महाबुद्धिर्महाबलः॥ १९॥ अमृष्यमाणो धनुषश्छेदनं कृतवर्म्मणा। कुपितोऽतिरथः शीघ्रं कृतवर्म्माणमभ्ययात्॥ २०॥ ततस्तु निशितैर्बाणैर्द्दशभिः शिनिपुङ्गवः। जघान सूतञ्चाश्वांश्च ध्वजञ्च कृतवर्म्मणः॥ २१॥ ततो राजन्महेष्वासः कृतवर्म्मा महारथः। हताश्वसूतं संप्रेक्ष्य रथं हेमपरिष्कृतम्॥ २२॥ रोषेण महताविष्टः शूलमुद्यम्य मारिष। चिक्षेप भुजवेगेन जिघांसुः शिनिपुङ्गवम्॥ २३॥ तच्छूलं सात्त्वतो ह्याजौ निर्भिद्य निशितैः शरैः। चूर्णितं पातयामास मोहयन्निव माधवम्। ततोऽपरेण भल्लेन हृद्येनं समताड़यत्॥ २४॥ स युद्धे युयुधानेन हताश्वो हतसारथिः। कृतवर्म्मा

कृतास्त्रेण धरणीमन्वपद्यत ॥ २५ ॥ तस्मिन् सात्यकिना वीरे द्वैरथे विरथीकृते। समपद्यत सर्वेषां सैन्यानां सुमहद्भयम् ॥ २६ ॥ पुत्रस्य तव चात्यर्थं विषादः समपद्यत। हतसूते हताश्वे तु विरथे कृतवर्म्मणि ॥ २७ ॥ हताश्वञ्च समालक्ष्य हतसूतमरिन्दमम्। अभ्यधावत् कृपो राजन् जिघांसुः शिनिपुङ्गवम् ॥ २८ ॥ तञ्चारोप्य रथोपस्थे मिषतां सर्वधन्विनाम्। अपोवाह महाबाहुस्तूर्णमायोधनाद्दहिः ॥ २९ ॥ शैनेयाधिष्ठिते राजन् विरथे कृतवर्म्मणि। दुर्य्योधनबलं सर्वं पुनरासीत् पराङ्मुखम् ॥ ३० ॥ तत् परे नावबुध्यन्त सैन्ये तु रजसावृते। तावकाः प्रद्रुता राजन् दुर्य्योधनस्तते नृपम् ॥ ३१ ॥ दुर्य्योधनस्तु संप्रेक्ष्य भग्नं स्वबलमन्तिकात्। जवेनाभ्यपतत्तूर्णं सर्वांश्चैको न्यबारयत् ॥ ३२ ॥ पाण्डूंश्च सर्वान् संक्रुद्धो धृष्टद्युम्नञ्च पार्षतम्। शिखण्डिनं द्रौपदेयान् पाञ्चालानाञ्च ये गणाः ॥३३॥ कैकेयान् सोमकांश्चैव पाञ्चालांश्चैव मारिष। असम्भ्रमं दुराधर्षः शितैः शस्त्रैरताड़यत् ॥ ३४ ॥ अतिष्ठदाहवे यत्नात् पुत्रस्तव महाबलः। यथा यज्ञे महानग्निर्म्मन्त्रपूतः प्रकाशवान्। तथा दुर्य्योधनो राजा संग्रामे सर्वतोऽभवत् ॥ ३५ ॥ तं परे नान्वपद्यन्त मर्त्त्या मृत्युमिवाहवे। अथान्यं रथमास्थाय हार्द्दिक्यः समपद्यत ॥ ३६ ॥

इति शल्यपर्वणि शल्यबधपर्वणि संकुलयुद्धे
एकविंशोऽध्यायः ॥ २१ ॥

---

सञ्जय उवाच। पुत्रस्तु ते महाराज रथस्थो रथिनां वरः। दुरुत्साहो बभौ युद्धे यथा रुद्रः प्रतापवान् ॥ १ ॥ तस्य बाणसहस्रैस्तु प्रच्छन्ना ह्यभवन्मही। परांश्च सिषिचे बाणैर्धाराभिरिव पर्वतान् ॥ २ ॥ न च सोऽस्ति पुमान् कश्चित् पाण्डवानां

महाहवे। हयो गजो रथो वापि योऽस्य वाणैरविक्षतः ॥ ३ ॥ यं यं हि समरे योधं प्रपश्यामि विशाम्पते। स तु वाणैश्चितोऽभूद्वै पुत्रेण तव भारत ॥ ४ ॥ यथा सैन्येन रजसा समुद्धूतेन वाहिनी। प्रत्यदृश्यत संछन्ना तथा वाणैर्महात्मनः ॥ ५ ॥ वाणभूतामपश्याम पृथिवीं पृथिवीपते। दुर्य्योधनेन प्रकृतां क्षिप्रहस्तेन धन्विना ॥ ६ ॥ तेषु योधसहस्रेषु तावकेषु परेषु च। एको दुर्य्योधनस्त्वासीत् स पुमानिति मे मतिः ॥ ७ ॥ तत्राद्भुतमपश्याम तव पुत्रस्य विक्रमम्। यदेनं सहिताः पार्थ्या नान्ववर्त्तन्त भारत ॥८॥ युधिष्ठिरं शतेनाजौ विव्याध भरतर्षभ। भीमसेनञ्च सप्तत्या सहदेवञ्च सप्तभिः ॥ ९ ॥ नकुलञ्च चतुःषष्ट्या धृष्टद्युम्नञ्च पञ्चभिः। सप्तभिर्द्रौपदेयांश्च त्रिभिर्विव्याध सात्यकिम्। धनुश्चिच्छेद भल्लेन सहदेवस्य मारिष ॥ १० ॥ तदपास्य धनुश्छिन्नं माद्रीपुत्रः प्रतापवान्। अभ्यधावत राजानं प्रगृह्यान्यन्महद्धनुः। ततो दुर्य्योधनं संख्ये विव्याध दशभिः शरैः ॥ ११ ॥ नकुलस्तु ततो वीरो राजानं नवभिः शरैः। घोररूपैर्महेष्वासो विव्याध च ननाद च ॥ १२ ॥ सात्यकिश्चापि राजानं शरेणानतपर्व्वणा। द्रौपदेयास्त्रिसप्तत्या धर्म्मराजश्च पञ्चभिः। अशीत्या भीमसेनश्च शरै राजानमार्द्दयत् ॥ १३ ॥ समन्तात् कीर्य्यमाणस्तु वाणसंघैर्महात्मभिः। न चचाल महाराज सर्व्वसैन्यस्य पश्यतः ॥ १४ ॥ लाघवं सौष्ठवञ्चापि वीर्य्यञ्चैव महात्मनः। अतिसर्व्वाणि भूतानि ददृशुः सर्व्वमानवाः ॥१५॥ धार्त्तराष्ट्रा हि राजेन्द्र यात्वा तु स्वल्पमन्तरम्। अपश्यमाना राजानं पर्य्यवर्त्तन्त दंशिताः ॥ १६ ॥ तेषामापततां घोरस्तुमुलः समजायत। क्षुब्धस्य हि समुद्रस्य प्रावृट्काले यथा स्वनः ॥ १७ ॥ समासाद्य रणे ते तु राजानमपराजितम्। प्रत्युद्ययुर्महेष्वासाः पाण्डवानाततायिनः ॥ १८ ॥ भीमसेनं रणे क्रुद्धं द्रोणपुत्रो न्यवारयत् ॥ १९ ॥ ततो वाणैर्महाराज प्रमुक्तैः सर्व्वतो दिशम्।

प्राच्छायन्त रणे वीरा न दिशः प्रदिशस्तथा ॥ २० ॥ तावुभौ क्रूरकर्माणावुभौ भारत दुःसहौ। घोररूपमयुध्येतां कृतप्रतिकृतैषिणौ। त्रासयन्तौ जगत् सर्वं ज्याक्षेपकठिनत्वचौ ॥ २१ ॥ शकुनिस्तु रणे वीरो युधिष्ठिरमताड़यत्। तस्याश्वांश्चतुरो हत्वा सुबलस्य सुतो बली। नादञ्चकार बलवान् सर्वसैन्यानि कम्पयन् ॥ २२ ॥ एतस्मिन्नन्तरे वीरं राजानमपराजितम्। अपोवाह रथेनाजौ सहदेवः प्रतापवान् ॥ २३ ॥ अथान्यं रथमास्थाय धर्मराजो युधिष्ठिरः। शकुनिं नवभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः। ननाद च महानादं प्रवरः सर्वधन्विनाम् ॥ २४ ॥ तद्युद्धमभवच्चित्रं घोररूपञ्च मारिष। प्रेक्षकप्रीतिजननं सिद्धचारणसेवितम् ॥२५॥ उलूकस्तु महेष्वासं नकुलं युद्धदुर्मदम्। अभ्यद्रवदमेयात्मा शरवर्षैः समन्ततः ॥ २६ ॥ अथैनं नकुलः शूरः सौबलस्य सुतं रणे। शरवर्षेण महता समन्तात् पर्य्यवारयत् ॥ २७ ॥ तौ तत्र समरे वीरौ कुलपुत्रौ महारथौ। योधयन्तावदृश्येतां परस्परकृतागसौ ॥ २८ ॥ तथैव कृतवर्मा तु शैनेयं शत्रुतापनम्। योधयन् शुशुभे राजन् बलं शक्र इवाहवे ॥ २९ ॥ दुर्य्योधनो धनुश्छित्त्वा धृष्टद्युम्नस्य संयुगे। अथैनं छिन्नधन्वानं विव्याध निशितैः शरैः ॥३०॥ धृष्टद्युम्नोऽपि समरे प्रगृह्य परमायुधम्। राजानं योधयामास पश्यतां सर्वधन्विनाम् ॥ ३१ ॥ तयोर्युद्धं महच्चासीत् संग्रामे भरतर्षभ। प्रभिन्नयोर्यथा सक्तं मत्तयोर्वनहस्तिनोः ॥ ३२ ॥ गौतमस्तु रणे क्रुद्धो द्रौपदेयान् महाबलान्। विव्याध बहुभिः शूरः शरैः सन्नतपर्वभिः ॥ ३३ ॥ तस्य तैरभवद्युद्धमिन्द्रियैरिव देहिनः। घोररूपमसम्वार्य्यं निर्मर्य्यादमतीव च ॥ ३४ ॥ ते च तं पीड़यामासुरिन्द्रियाणीव बालिशम्। स च तान् प्रतिसंयच्छन् प्रत्ययोधयदाहवे ॥ ३५ ॥ एवञ्चित्रमभूद्युद्धं तस्य तैः सह भारत। उत्थायोत्थाय च यथा देहिनामिन्द्रियैर्विभो ॥ ३६ ॥ नराश्चैव

नरैः सार्द्धं दन्तिनो दन्तिभिस्तथा। हया हयैः समायुक्ता रथिनो रथिभिस्तथा। सङ्कुलञ्चाभवद्भूयो घोररूपं विशाम्पते ॥ ३७ ॥ दृढञ्चित्रमिदं घोरमिदं रौद्रमिति प्रभो। युद्धान्यासन्महाराज घोराणि च बहूनि च ॥३८॥ ते समासाद्य समरे परस्परमरिन्दमाः। विव्यधुश्चैव जघ्नुश्च समासाद्य महाहवे ॥ ३९ ॥ तेषां शस्त्रसमुद्भूतं रजस्तीव्रमदृश्यत। वातेनेवोद्धतं राजन् धावद्भिश्चाश्वसादिभिः ॥४०॥ रथनेमिसमुद्भूतं निश्वासैश्चापि दन्तिनाम्। रजः सन्ध्याभ्रकलिलं दिवाकरपथं ययौ ॥ ४१ ॥ रजसा तेन संपृक्ते भास्करे निष्प्रभीकृते। संछादिताभवद्भूमिस्ते च शूराः महारथाः ॥४२॥ मुहूर्त्तादिव संवृत्तं नीरजस्कं समन्ततः। वीरशोणितसिक्तायां भूमौ भरतसत्तम ॥ ४३ ॥ उपाशाम्यत्ततस्तीव्रं तद्रजो घोरदर्शनम्। ततोऽपश्यं महाराज द्वन्द्वयुद्धानि भारत ॥ ४४ ॥ यथाप्राणं यथाश्रेष्ठं मध्याह्ने वै सुदारुणम्। वर्म्मणां तत्र राजेन्द्र व्यदृश्यन्तोज्ज्वलाः प्रभाः ॥ ४५ ॥ शब्दः सुतुमुलः सङ्ख्ये शराणां पततामभूत्। महावेणुवनस्येव दह्यमानस्य सर्वतः ॥ ४६ ॥

इति शल्यपर्व्वणि शल्यवधपर्व्वणि संकुलयुद्धे
द्वाविंशोऽध्यायः ॥ २२ ॥

---

सञ्जय उवाच। वर्त्तमाने तथा युद्धे घोररूपे भयानके। अभज्यत बलं तत्र तव पुत्रस्य पाण्डवैः ॥ १ ॥ तांस्तु यत्नेन महता सन्निवार्य्य महारथान्। पुत्रास्ते योधयामासुः पाण्डवानामनीकिनीम् ॥ २ ॥ निवृत्ताः सहसा योधास्तव पुत्रप्रियैषिणः। सन्निवृत्तेषु तेष्वेव युद्धमासीत् सुदारुणम् ॥ ३ ॥ तावकानां परेषाञ्च देवासुररणोपमम्। परेषां तव सैन्ये वा नासीत् कश्चित् पराङ्मुखः ॥ ४ ॥ अनुमानेन युध्यन्ते संज्ञाभिश्च परस्परम्। तेषां

त्वयो महानासीत् युध्यतामितरेतरम् ॥ ५ ॥ ततो युधिष्ठिरो राजा क्रोधेन महता युतः । जिगीषमाणः संग्रामे धार्त्तराष्ट्रान् सराजकान् ॥ ६ ॥ त्रिभिः शारद्वतं विद्ध्वा रुक्मपुङ्खैः शिलाशितैः । चतुर्भिर्निजघानाश्वान्नाराचैः कृतवर्मणः ॥ ७ ॥ अश्वत्थामा च हार्द्दिक्यमपोवाह यशस्विनम् । अथ शारद्वतोऽष्टाभिः प्रत्यविध्यद्युधिष्ठिरम् ॥ ८ ॥ ततो दुर्य्योधनो राजा रथान् सप्त शतान्रणे । प्रेषयद्यत्र राजा वै धर्मपुत्रो युधिष्ठिरः ॥ ९ ॥ ते रथा रथिभिर्युक्ता मनोमारुतरंहसः । अभ्यद्रवन्त संग्रामे कौन्तेयस्य रथं प्रति ॥ १० ॥ ते समन्तात् महाराज परिवार्य्य युधिष्ठिरम् । अदृश्यं सायकैश्चक्रुर्मेघा इव दिवाकरम् ॥ ११ ॥ ते दृष्ट्वा धर्मराजानं कौरवेयैस्तथाकृतम् । नामृष्यन्त सुसंरब्धाः शिखण्डिप्रमुखा रथाः ॥ १२ ॥ रथैरश्वरजवैर्युक्तैः किङ्किणीजालसंवृतैः । आजग्मुरभिरक्षन्तः कुन्तीपुत्रं युधिष्ठिरम् ॥ १३ ॥ ततः प्रववृते रौद्रः संग्रामः शोणितोदकः । पाण्डवानां कुरूणाञ्च यमराष्ट्रविवर्द्धनः ॥ १४ ॥ रथान् सप्त शतान् हत्वा कुरूणामाततायिनाम् । पाण्डवाः सह पाञ्चालैः पुनरेवाभ्यवारयन् ॥ १५ ॥ तत्र युद्धं महच्चासीत्तव पुत्रस्य पाण्डवैः । न च नस्तादृशं दृष्टं नैव चापि परिश्रुतम् ॥ १६ ॥ वर्त्तमाने तथा युद्धे निर्मर्य्यादे समन्ततः । वध्यमानेषु योधेषु तावकेष्वितरेषु च ॥१७॥ निनदत्सु च योधेषु शङ्खवर्य्यैश्च पूरितैः । उत्क्रुष्टैः सिंहनादैश्च गर्ज्जितेन च धन्विनाम् ॥ १८ ॥ अतिप्रवृद्धे युद्धे च छिद्यमानेषु मर्मसु । धावमानेषु योधेषु जयगृद्धिषु मारिष ॥ १९ ॥ संहारे सर्वतो जाते पृथिव्यां शोकसम्भवे । बह्वीनामुत्तमस्त्रीणां सीमन्तोद्धरणे तदा ॥ २० ॥ निर्मर्य्यादे ततो युद्धे वर्त्तमाने सुदारुणे । प्रादुरासन् विनाशाय तदोत्पाताः सुदारुणाः ॥ २१ ॥ चचाल शब्दं कुर्वाणा सपर्वतवना मही । सदण्डाः सोल्मुका राजन् शीर्य्यमाणाः समन्ततः । उल्काः

पेतुर्द्दिवो भूमावाहत्य रविमण्डलम् ॥ २२ ॥ विष्वग्वाताः प्रादुरासन् नीचैः शर्करवर्षिणः । अश्रूणि मुमुचुर्नागा वेपथुश्चाभवद्भृशम् ॥ २३ ॥ एतान् घोराननादृत्य समुत्पातान् सुदारुणान् । पुनर्युद्धाय सम्मन्त्र्य क्षत्रियास्तस्थुरव्यथाः । रमणीये कुरुक्षेत्रे पुण्ये स्वर्गं यियासवः ॥ २४ ॥ ततो गान्धारराजस्य पुत्रः शकुनिरब्रवीत् । युध्यध्वमग्रतो यावत् पृष्ठतो हन्मि पाण्डवान् ॥ २५ ॥ ततो नः संप्रयातानां मद्रयोधास्तरस्विनः । हृष्टाः किलकिलाशब्दमकुर्वन्तापरे तथा ॥ २६ ॥ अस्मांस्तु पुनरासाद्य लब्धलक्ष्या दुरासदाः । शरासनानि धुन्वन्तः शरवर्षैरवाकिरन् ॥ २७ ॥ ततो हतं परै राजन् मद्रराजबलं तदा । दुर्य्योधनबलं दृष्ट्वा पुनरासीत् पराङ्मुखम् ॥ २८ ॥ गान्धारराजस्तु पुनर्वाक्यमाह ततो बली । निवर्त्तध्वमधर्मज्ञा युध्यध्वं किं सृतेन वः ॥ २९ ॥ अनीकं दशसाहस्रमश्वानां भरतर्षभ । आसीद्गान्धारराजस्य विमलप्रासयोधिनाम् ॥ ३० ॥ बलेन तेन विक्रम्य वर्त्तमाने जयक्षये । पृष्ठतः पाण्डवानीकमभ्यघ्नन्निशितैः शरैः ॥ ३१ ॥ तदभ्रमिव वातेन क्षिप्यमाणं समन्ततः । अभज्यत महाराज पाण्डूनां सुमहद्बलम् ॥ ३२ ॥ ततो युधिष्ठिरः प्रेक्ष्य भग्नं स्वबलमन्तिकात् । अभ्यचोदयदव्यग्रः सहदेवं महाबलम् ॥ ३३ ॥ असौ सुबलपुत्रो नो जघनं पीड्य दंशितः । सेनां निसूदयत्येष पश्य पाण्डव दुर्मतिम् ॥ ३४ ॥ गच्छ त्वं द्रौपदेयैश्च शकुनिं सौबलं जहि । रथानीकमहं धक्ष्ये पाञ्चालसहितोऽनघ ॥ ३५ ॥ गच्छन्तु कुञ्जराः सर्व्वे वाजिनश्च सह त्वया । पादाताश्च त्रिसाहस्राः शकुनिं तैर्वृतो जहि ॥ ३६ ॥ ततो गजाः सप्तशताश्चापपाणिभिरावृताः । पञ्च चाश्वसहस्राणि सहदेवश्च वीर्य्यवान् ॥ ३७ ॥ पादाताश्च त्रिसाहस्रा द्रौपदेयाश्च सर्व्वशः । रणे ह्यभ्यद्रवंस्ते तु शकुनिं युद्धदुर्मदम् ॥३८॥ ततस्तु सौबलो राजन्नभ्यतिक्रम्य पाण्डवान् । जघान पृष्ठतः

सेनां जयगृद्धः प्रतापवान् ॥ ३९ ॥ अश्वारोहास्तु संरब्धाः पाण्डवानां तरस्विनाम्। प्राविशन् सौबलानीकमभ्यतिक्रम्य तान्रथान् ॥ ४० ॥ ते तत्र सादिनः शूराः सौबलस्य महद्बलम्। गजमध्ये स्थ तिष्ठन्तः शरवर्षैरवाकिरन् ॥ ४१ ॥ तदुद्यतगदाप्रासमहापुरुषसेवितम्। प्रावर्त्तत महद्युद्धं राजन् दुर्मन्त्रिते तव ॥ ४२ ॥ उपारमन्त ज्याशब्दाः प्रेक्षका रथिनो भवन्। न हि स्वेषां परेषां वा विशेषः प्रत्यदृश्यत ॥ ४३ ॥ शूरबाहुविसृष्टानां शक्तीनां भरतर्षभ। ज्योतिषामिव सम्पातमपश्यन् कुरुपाण्डवाः ॥४४॥ ऋष्टिभिर्विमलाभिश्च तत्र तत्र विशाम्पते। सम्पतन्तीभिराकाशमावृतं बहुशोभत ॥ ४५ ॥ प्रासानां पततां राजन् रूपमासीत् समन्ततः। शलभानामिवाकाशे तदा भरतसत्तम ॥ ४६ ॥ रुधिरोक्षितसर्वाङ्गा विप्रविद्धैर्नियन्तृभिः। हयाः परिपतन्ति स्म शतशोऽथ सहस्रशः। अन्योऽन्यं सन्निविष्टाश्च समासाद्य परस्परम् ॥ ४७ ॥ आविक्षताः स्म दृश्यन्ते वमन्तो रुधिरं मुखैः। ततोऽभवत्तमो घोरं सैन्ये तु रजसा वृते ॥ ४८ ॥ तानपाक्रमतोऽद्राक्षं तस्माद्देशादरिन्दमान्। अश्वान् राजन्मनुष्यांश्च तमसा संवृते सति ॥ ४९ ॥ भूमौ निपतितश्चान्ये वमन्तो रुधिरं बहु। केशाकेशिसमालग्ना न शेकुश्चेष्टितुं नराः ॥ ५० ॥ अन्योऽन्यमश्वपृष्ठेभ्यो विकर्षन्तो महाबलाः। मल्ला इव समासाद्य निजघ्नुरितरेतरम्। अश्वैश्च व्यपकृष्यन्त बहवोऽत्र गतासवः ॥ ५१ ॥ भूमौ निपतिताश्चान्ये बहवो विजयैषिणः। तत्र तत्र व्यदृश्यन्त पुरुषाः शूरमानिनः ॥ ५२ ॥ रक्तोक्षितैश्छिन्नभुजैरपकृष्टशिरोरुहैः। व्यदृश्यत मही कीर्णा शतशोऽथ सहस्रशः ॥ ५३ ॥ दूरं न शक्यं तत्रासीद्गन्तुमश्वेन केनचित्। हस्त्यश्वरोहैर्हतैरश्वैरावृते वसुधातले ॥ ५४ ॥ रुधिरोक्षितसन्नाहैरात्तशस्त्रैरुदायुधैः। नानाप्रहरणैर्घोरैः परस्परवधैषिभिः। सुसन्निकृष्टैः संग्रामे हतभूयिष्ठसैनिके ॥ ५५ ॥

स मुहूर्त्तं ततो युद्धा सौवलोऽथ विशाम्पते। षट्‌साहस्रैर्हयैः शिष्टैरपायाच्छकुनिस्ततः ॥ ५६ ॥ तथैव पाण्डवानीकं रुधिरेण समुच्छितम्। षट्‌साहस्रैर्हयैः शिष्टैरपायाच्छ्रान्तवाहनम् ॥ ५७ ॥ अश्वारोहास्तु पाण्डूनामब्रुवन् रुधिरोच्छिताः। सुसन्निविष्टाः संग्रामे भूयिष्ठे त्यक्तजीविताः ॥ ५८ ॥ नेह शक्यं रथैर्योद्धुं कुत एव महागजैः। रथानेव रथा यान्तु कुञ्जराः कुञ्जरानपि ॥५९॥ प्रतियातो हि शकुनिः स्वमनीकमवस्थितः। न पुनः सौवलो राजा युद्धमभ्यागमिष्यति ॥ ६० ॥ ततस्तु द्रौपदेयाश्च ते च मत्ता महाद्विपाः। प्रययुर्यत्र पाञ्चाल्यो धृष्टद्युम्नो महारथः ॥६१॥ सहदेवोऽपि कौरव्यो रजोमेघे समुत्थिते। एकाकी प्रययौ तत्र यत्र राजा युधिष्ठिरः ॥ ६२ ॥ ततस्तेषु प्रयातेषु शकुनिः सौवलः पुनः। पार्श्वतोऽभ्यहनत् क्रुद्धो धृष्टद्युम्नस्य वाहिनीम् ॥ ६३ ॥ तत पुनस्तुमुलं युद्धं त्यक्तप्राणमवर्त्तत। तावकानां परेषाञ्च परस्परबधैषिणाम् ॥६४॥ ते ह्यन्योऽन्यमवेक्षन्त तस्मिन् वीरसमागमे। योधाः पर्य्यपतन्राजन् शतशोऽथ सहस्रशः ॥ ६५ ॥ असिभिश्छिद्यमानानां शिरसां लोकसङ्क्षये। प्रादुरासीन्महाशब्दस्तालानां पततामिव॥६६ विमुक्तानां शरीराणां भिन्नानां पततां भुवि। सायुधानाञ्च बाहूनामूरूणाञ्च विशाम्पते। आसीच्चटचटाशब्दः सुमहांल्लोमहर्षणः ॥ ६७ ॥ निघ्नन्तो निशितैः शस्त्रैर्भ्रातॄन् पुत्रान् पितॄनपि। योधाः परिपतन्ति स्म यथामिषकृते खगाः ॥ ६८ ॥ अन्योऽन्यं प्रतिसंरब्धाः समासाद्य परस्परम्। अहं पूर्वमहं पूर्वमिति न्यघ्नन् सहस्रशः ॥ ६९ ॥ सङ्घातेनासनभ्रष्टैरश्वारोहैर्गतासुभिः। हताः परिपतन्ति स्म शतशोऽथ सहस्रशः ॥ ७० ॥ स्फुरतां प्रतिपिष्टानामश्वानां शीघ्रचारिणाम्। स्तनताञ्च मनुष्याणां सन्नद्धानां विशाम्पते ॥७१॥ शक्त्यृष्टिप्रासशब्दस्तु तुमुलः समजायत। भिन्दतां परमर्माणि राजन् दुर्म्मन्त्रिते तव ॥ ७२ ॥ श्रमाभिभूताः संरब्धाः श्रान्तवाहाः

पिपासिताः। विक्षताश्च शितः शस्त्रैरभ्यवर्त्तन्त तावकाः ॥ ७३ ॥ मत्ता रुधिरगन्धेन बहवोऽत्र विचेतसः। जघ्नुः परान् स्वकांश्चैव प्राप्तान् प्राप्ताननन्तरान् ॥ ७४ ॥ बहवश्च गतप्राणाः क्षत्रिया जयगृद्धिनः। भूमौ ह्यभ्यपतन्राजन् शरवृष्टिभिराहताः ॥ ७५ ॥ वृकगृध्रशृगालानां तुमुले मोदनेऽहनि। आसीद्बलक्षयो घोरस्तव पुत्रस्य पश्यतः ॥७६॥ नराश्वकायसंछन्ना भूमिरासीद्विशाम्पते। रुधिरोदकचित्रा च भीरूणां भयवर्द्धिनी ॥ ७७ ॥ असिभिः पट्टिशैः शूलैस्तक्ष्यमाणाः पुनः पुनः। तावकाः पाण्डवेयाश्च नाभ्यवर्त्तन्त भारत ॥ ७८ ॥ प्रहरन्तो यथाशक्ति यावत् प्राणस्य धारणम्। योधाः परिपतन्ति स्म वमन्तो रुधिरं व्रणैः ॥७९॥ शिरो गृहीत्वा केशेषु कवन्धश्च व्यदृश्यत। उद्यम्य च शितं खड्गं रुधिरेण परिप्लुतम् ॥ ८० ॥ अथोत्थितेषु बहुषु कवन्धेषु जनाधिप। तथा रुधिरगन्धेन योधान् कश्मलमाविशत् ॥ ८१ ॥ मन्दीभूते ततः शब्दे पाण्डवानां महद्बलम्। अल्पावशिष्टैस्तुरगैरभ्यवर्त्तत सौबलः ॥८२॥ ततोऽभ्यधावंस्त्वरिताः पाण्डवा जयगृद्धिनः। पदातयश्च नागाश्च सादिनश्चोद्यतायुधाः ॥ ८३ ॥ कोष्ठकीकृत्य चाप्येनं परिक्षिप्य च सर्वशः। शस्त्रैर्नानाविधैर्जघ्नुर्युद्धपारं तितीर्षवः ॥ ८४ ॥ त्वदीयांस्तांस्तु संप्रेक्ष्य सर्वतः समभिद्रुतान्। साश्वपत्तिद्विपरथाः पाण्डवानभिदुद्रुवुः ॥ ८५ ॥ केचित् पदातयः पद्भिर्मुष्टिभिश्च परस्परम्। निजघ्नुः समरे शूराः क्षीणशस्त्रास्ततोऽपतन् ॥८६॥ रथेभ्यो रथिनः पेतुर्द्विपेभ्यो हस्तिसादिनः। विमानेभ्य इव भ्रष्टाः सिद्धाः पुण्यक्षये यथा ॥८७ एवमन्योऽन्यमायस्ता योधा जघ्नुर्महामृधे। पितॄन् भ्रातॄन् वयस्यांश्च पुत्रानपि तथापरे ॥ ८८ ॥ एवमासीदमर्य्यादं युद्धं भरतसत्तम। प्रासासिबाणकलिले वर्त्तमाने सुदारुणे ॥ ८९ ॥

इति शल्यपर्वणि शल्यवधपर्वणि संकुलयुद्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

सञ्जय उवाच। तस्मिन् शब्दे मृदौ जाते पाण्डवैर्निहते बले। अश्वैः सप्तशतैः शिष्टैरुपावर्त्तत सौबलः॥ १॥ स यात्वा वाहिनीं तूर्णमब्रवीद्वै त्वरन् युधि। युध्यध्वमिति संहृष्टाः पुनः पुनररिन्दमाः॥ २॥ अपृच्छत् क्षत्रियांस्तत्र क्व नु राजा महारथः। शकुनेस्तु वचः श्रुत्वा त ऊचुर्भरतर्षभ। असौ तिष्ठति कौरव्यो रणमध्ये महारथः॥ ३॥ यत्रैतत् सुमहच्छत्रं पूर्णचन्द्रसमप्रभम्। यत्रैते सतनुत्राणा रथास्तिष्ठन्ति दंशिताः॥ ४॥ यत्रैष शब्दस्तुमुलः पर्ज्जन्यनिनदोपमः। तत्र गच्छ द्रुतं राजंस्ततो द्रक्ष्यसि कौरवम्॥ ५॥ एवमुक्तस्तु तैः शूरैः शकुनिः सौबलस्तदा। प्रययौ तत्र यत्रासौ पुत्रस्तव नराधिप। सर्व्वतः संवृतो वीरैः समरेष्वनिवर्त्तिभिः॥ ६॥ ततो दुर्य्योधनं दृष्ट्वा रथानीके व्यवस्थितम्। सरथांस्तावकान् सर्व्वान् हर्षयन् शकुनिस्ततः॥ ७॥ दुर्य्योधनमिदं वाक्यं हृष्टरूपो विशाम्पते। कृतकार्य्यमिवात्मानं मन्यमानोऽब्रवीन्नृपम्॥ ८॥ जहि राजन्रथानीकमश्वाः सर्व्वे जिता मया। नात्यक्त्वा जीवितं संख्ये शक्यो जेतुं युधिष्ठिरः॥ ९॥ हते तस्मिन्रथानीके पाण्डवेनाभिपालिते। गजानेतान् हनिष्यामः पदातींश्चेतरांस्तथा॥ १०॥ श्रुत्वा तु वचनं तस्य तावका जयगृद्धिनः। जवेनाभ्यद्रवन् हृष्टाः पाण्डवानामनीकिनीम्॥ ११॥ सर्व्वे विधूततूणीराः प्रगृहीतशरासनाः। शरासनानि धुन्वाना सिंहनादं प्रचक्रिरे॥ १२॥ ततो ज्यातलनिर्घोषः पुनरासीद्विशाम्पते। प्रादुरासीच्छराणाञ्च विमुक्तानां सुदारुणः॥ १३ तान् समीपगतान् दृष्ट्वा जवेनोद्यतकार्मुकान्। उवाच देवकीपुत्रं कुन्तीपुत्रो धनञ्जयः॥ १४॥ चोदयाश्वानसंभ्रान्तः प्रविशैनं बलार्णवम्। अन्तमद्य गमिष्यामि शत्रुणां निशितैः शरैः॥ १५॥ अष्टादश दिनान्यद्य युद्धस्यास्य जनार्द्दन। वर्त्तमानस्य महतः समासाद्य परस्परम्॥ १६॥ अनन्तकल्पा ध्वजिनी भूत्वा ह्येषां

महात्मनाम्। त्वयमद्य गता युद्धे पश्य दैवं यथाविधम् ॥ १७ ॥ समुद्रकल्पञ्च बलं धार्त्तराष्ट्रस्य माधव। अस्मानासाद्य सञ्जातं गोष्पदोपममच्युत ॥ १८ ॥ हते भीष्मे तु सन्ध्याच्छिवं स्यादिह माधव। न च तत् कृतवान् मूढ़ो धार्त्तराष्ट्रः सुबालिशः ॥ १९ ॥ उक्तं भीष्मेण यद्वाक्यं हितं पथ्यञ्च माधव। तच्चापि नासौ कृतवान् वीतबुद्धिः सुयोधनः ॥ २० ॥ तस्मिंस्तु निहते भीष्मे प्रच्युते पृथिवीतले। न जाने कारणं किन्नु येन युद्धमवर्त्तत ॥ २१ ॥ मूढांस्तु सर्वथा मन्ये धार्त्तराष्ट्रान् सुबालिशान्। पतिते शान्तनोः पुत्रे येऽकार्षुः संयुगं पुनः ॥ २२ ॥ अनन्तरञ्च निहते द्रोणे ब्रह्मविदां वरे। राधेये च विकर्णे च नैवाशाम्यत वैशसम् ॥२३॥ अल्पावशिष्टे सैन्येऽस्मिन् सूतपुत्रे च पातिते। सपुत्रे वै नरव्याघ्रे नैवाशाम्यत वैशसम् ॥ २४ ॥ श्रुतायुषि हते शूरे जलसन्धे च पौरवे। श्रुतायुधे च नृपतौ नैवाशाम्यत वैशसम् ॥ २५ ॥ भूरिश्रवसि शल्ये च शाल्वे चैव जनार्द्दन। आवन्त्येषु च वीरेषु नैवाशाम्यत वैशसम् ॥ २६ ॥ जयद्रथे च निहते राक्षसे चाप्यलायुधे। वाह्लीके सोमदत्ते च नैवाशाम्यत वैशसम् ॥ २७ ॥ भगदत्ते हते शूरे काम्बोजे च सुदक्षिणे। दुःशासने च निहते नैवाशाम्यत वैशसम् ॥२८॥ दृष्ट्वा च निहतान् शूरान् पृथङ्माण्डलिकान्नृपान्। बलिनश्च रणे कृष्ण नैवाशाम्यत वैशसम् ॥ २९ ॥ अक्षौहिणीं हतां दृष्ट्वा भीमसेनेन संयुगे। मोहाद्वा यदि वा लोभान्नैवाशाम्यत वैशसम् ॥ ३० ॥ को नु राजा कुले जातः कौरवेयो विशेषतः। निरर्थकं महद्वैरं कुर्य्यादन्यः सुयोधनात् ॥ ३१ ॥ गुणतोऽभ्यधिकं ज्ञात्वा बलतः शौर्य्यतोऽपि वा। अमूढ़ः को नु युध्येत जानन् प्राज्ञो हिताहितम् ॥ ३२ ॥ यन्न तस्य मनो ह्यासीत्त्वयोक्तस्य हितस्य च। प्रशमे पाण्डवैः सार्द्धं सोऽन्यस्य शृणुयात् कथम् ॥ ३३ ॥ येन शान्तनवो भीष्मो द्रोणो विदुर एव च। प्रत्याख्याताः

शमस्याथ किन्नु तस्याद्य भेषजम् ॥ ३४ ॥ मौढ्याद्येन पिता वृद्धः
प्रत्याख्यातो जनार्द्दन। तथा माता हितं वाक्यं भाषमाणा
हितैषिणी। प्रत्याख्याता ह्यसत्कृत्य स कस्माद्रोचयेद्वचः ॥ ३५ ॥
कुलान्तकरणो व्यक्तं जात एष जनार्द्दन। तथास्य दृश्यते चेष्टा
नीतिश्चैव विशाम्पते। नैष दास्यति नो राज्यमिति मे मतिरच्युत
॥ ३६ ॥ उक्तोऽहं बहुशस्तात विदुरेण महात्मना। न जीवन्
दास्यते भागं धार्त्तराष्ट्रः कथञ्चन ॥ ३७ ॥ यावत् प्राणान्धारयति
धृतराष्ट्रोऽपि मानद। तस्माद्युष्मासु पापोऽसौ प्रचरिष्यति पात-
कम् ॥३८॥ न च शक्योऽन्यथा जेतुमृते युद्धेन माधव। इत्यब्रवीत्
सदा मां हि विदुरः सत्यदर्शनः ॥ ३९ ॥ तत् सर्व्वमद्य जानामि
व्यवसायं दुरात्मनः। यदुक्तं वचनं तेन विदुरेण महात्मना ॥ ४० ॥
यो हि श्रुत्वा वचः पथ्यं जामदग्न्याद्यथातथम्। अवामन्यत
दुर्बुद्धिर्ध्रुवं नाशमुखे स्थितः ॥ ४१ ॥ उक्तं हि बहुभिः सिद्धै-
र्जातमात्रे सुयोधने। एनं प्राप्य दुरात्मानं क्षयं क्षत्रं गमिष्यति
॥ ४२ ॥ तदिदं वचनं तेषां निरुक्तं वै जनार्द्दन। क्षयं याता
हि राजानो दुर्य्योधनकृते भृशम्। सोऽद्य सर्व्वान्रणे योधान्निहनि-
ष्यामि माधव ॥ ४३ ॥ क्षत्रियेषु हतेष्वद्य शून्ये च शिविरे कृते।
वधाय चात्मनोऽस्माभिः संयुगं रोचयिष्यति ॥ ४४ ॥ तदन्तं हि
भवेद्वैरमनुमानेन माधव। एवं पश्यामि वार्ष्णेय चिन्तयन् प्रज्ञया
स्वया ॥ ४५ ॥ विदुरस्य च वाक्येन चेष्टया च दुरात्मनः। संयाहि
भारतीं वीर यावद्धन्मि शितैः शरैः। दुर्य्योधनं दुरात्मानं
वाहिनीञ्चास्य संयुगे ॥ ४६ ॥ क्षेममद्य करिष्यामि धर्म्मराजस्य
माधव। हत्वैतद्दुर्बलं सैन्यं धार्त्तराष्ट्रस्य पश्यतः ॥ ४७ ॥

सञ्जय उवाच। अभीषुहस्तो दाशार्हस्तथोक्तः सव्यसाचिना।
तद्बलौघममित्राणामभीतः प्राविशद्रणे ॥ ४८ ॥ शरासनवनं घोरं
शक्तिकण्टकसंवृतम्। गदापरिघपन्थानं रथनागमहाद्रुमम् ॥ ४९ ॥

हयपत्तिलताकीर्णं गाहमानो महायशाः । व्यरोचत्तत्र गोविन्दो रथेनातिपताकिना ॥ ५० ॥ ते हयाः पाण्डरा राजन् वहन्तोऽर्जुनमाहवे । दिक्षु सर्वास्वदृश्यन्त दाशार्हेण प्रचोदिताः ॥५१॥ ततः प्रायाद्रथेनाजौ सव्यसाची परन्तपः । किरञ्छरशतांस्तीक्ष्णान् वारिधारा इवाम्बुदः । प्रादुरासीन्महाशब्दः शराणां नतपर्वणाम् ॥ ५२ ॥ इषुभिश्छाद्यमानानां समरे सव्यसाचिना । असज्जन्तस्तनुत्रेषु शरौघाः प्रापतन् भुवि ॥ ५३ ॥ इन्द्राशनिसमस्पर्शा गाण्डीवप्रेषिताः शराः । नरान्नागान् समाहत्य हयांश्चापि विशाम्पते । अपतन्त रणे बाणाः पतङ्गा इव घोषिणः ॥ ५४ ॥ आसीत् सर्वमवच्छन्नं गाण्डीवप्रेषितैः शरैः । न प्राज्ञायन्त समरे दिशो वा विदिशोऽपि वा ॥ ५५ ॥ सर्वमासीज्जगत् पूर्णं पार्थनामाङ्कितैः शरैः । रुक्मपुङ्खैस्तैलधौतैः कर्मारपरिमार्जितैः ॥ ५६ ॥ ते दह्यमानाः पार्थेन पावकेनेव कुञ्जराः । समासीदन्त कौरव्या वध्यमानाः शितैः शरैः ॥ ५७ ॥ शरचापधरः पार्थः प्रज्वलन्निव भास्करः । ददाह समरे योधान् कक्षमग्निरिव ज्वलन् ॥ ५८ ॥ यथा वनान्ते वनगैर्विसृष्टः कक्षं दहेत् कृष्णगतिः सुघोषः । भूरिद्रुमं शुष्कलतावितानं भृशं समृद्धो ज्वलनः प्रतापी ॥ ५९ ॥ एवं स नाराचगणप्रतापी शरार्चिरुच्चावचतिग्मतेजाः । ददाह सर्वां तव पुत्रसेनाममृष्यमाणास्तरसा तरस्वी ॥ ६० ॥ तस्येषवः प्राणहराः सुमुक्ता नासज्जन् वै वर्म्मसु रुक्मपुङ्खाः । न स द्वितीयं प्रमुमोच बाणं नरे हये वा परमद्विपे वा ॥ ६१ ॥ अनेकरूपाकृतिभिर्हि बाणै र्महारथानीकमनुप्रविश्य । स एव एकस्तव पुत्रसेनां जघान दैत्यानिव वज्रपाणिः ॥ ६२ ॥

इति शल्यपर्वणि शल्यवधपर्वणि अर्जुनपराक्रमे चतुर्विंशोऽध्यायः ॥ २४ ॥

---

सञ्जय उवाच। अस्यतां यतमानानां शूराणामनिवर्त्तिनाम्।
सङ्कल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः॥ १॥ इन्द्राशनिसम-
स्पर्शानविषह्यान्महौजसः। विसृजन् दृश्यते वाणान् धारा मुञ्च-
न्निवाम्बुदः॥ २॥ तत् सैन्यं भरतश्रेष्ठ वध्यमानं किरीटिना।
सम्प्रदुद्राव संग्रामात्तव पुत्त्रस्य पश्यतः॥ ३॥ पितॄन् भ्रातॄन् परि-
त्यज्य वयस्यानपि चापरे। हतधुर्य्या रथाः केचिद्धतसूतास्तथा-
परे। भग्नेषायुगचक्राक्षाः केचिदासन् विशाम्पते॥ ४॥ अन्येषां
शायकाः क्षीणास्तथान्ये शरपीड़िताः। अक्षता युगपत् केचित्
प्राद्रवन् भयपीड़िताः॥ ५॥ केचित् पुत्त्रानुपादाय हतभूयिष्ठ-
वाहनाः। निचुक्रुशुः पितॄनन्ये सहायानपरे पुनः॥ ६॥ बान्ध-
वांश्च नरव्याघ्र भ्रातॄन् सम्बन्धिनस्तथा। दुद्रुवुः केचिदुत्सृज्य
तत्र तत्र विशाम्पते॥ ७॥ बहवोऽत्र भृशं विद्धा मुह्यमाना महा-
रथाः। निष्टनन्तः स्म दृश्यन्ते पार्थवाणाहता नराः॥ ८॥ तानन्ये
रथमारोप्य आश्वास्याथ मुहूर्त्तकम्। विश्रान्ताश्च वितृष्णाश्च
पुनर्युद्धाय जग्मिरे॥ ९॥ तानपास्य गताः केचित् पुनरेव युयुत्-
सवः। कुर्वन्तस्तव पुत्त्रस्य शासनं युद्धदुर्मदाः॥ १०॥ पानीय-
मपरे पीत्वा पर्य्याश्वास्य च वाहनम्। वर्म्माणि च समारोप्य
केचित् भरतसत्तम॥ ११॥ समाश्वास्यापरे भ्रातॄन् निक्षिप्य
शिविरेऽपि च। पुत्त्रानन्ये पितॄनन्ये पुनर्युद्धमरोचयन्॥ १२॥
सज्जयित्वा रथान् केचित् यथामुख्यं विशाम्पते। आप्लुत्य पाण्ड-
वानीकं पुनर्युद्धमरोचयन्॥ १३॥ ते शूराः किङ्किणीजालैः समा-
च्छन्ना बभासिरे। त्रैलोक्यविजये युक्ता यथा दैतेयदानवाः॥१४॥
आगम्य सहसा केचिद्रथैः स्वर्णविभूषितैः। पाण्डवानामनीकेषु
धृष्टद्युम्नमयोधयन्॥ १५॥ धृष्टद्युम्नोऽपि पाञ्चाल्यः शिखण्डी च
महारथः। नाकुलिश्च शतानीको रथानीकमयोधयन्॥ १६॥
पाञ्चाल्यस्तु ततः क्रुद्धः सैन्येन महता वृतः। अभ्यधावत् सुसंरब्धां-

स्तावकान् हन्तुमुद्यतः ॥ १७ ॥ ततस्त्वापततस्तस्य तव पुत्रो जनाधिप। वाणसङ्घाननेकान् वै प्रेषयामास भारत ॥१८॥ धृष्टद्युम्नस्ततो राजंस्तव पुत्रेण धन्विना। नाराचैर्बहुभिः क्षिप्रं बाह्वोरुरसि चार्पितः ॥ १९ ॥ सोऽतिविद्धो महेष्वासस्तोत्रार्दित इव द्विपः। तस्याश्वांश्चतुरो वाणैः प्रेषयामास मृत्यवे। सारथेश्चास्य भल्लेन शिरः कायादपाहरत् ॥२०॥ ततो दुर्य्योधनो राजा पृष्ठमारुह्य वाजिनः। अपाक्रामद्धतरथो नातिदूरमरिन्दमः ॥२१॥ दृष्ट्वा तु हतविक्रान्तं स्वमनीकं महाबलः। तव पुत्रो महाराज प्रययौ यत्र सौबलः ॥ २२ ॥ ततो रथेषु भग्नेषु त्रिसाहस्रा महाद्विपाः। पाण्डवान्रथिनः पञ्च समन्तात् पर्य्यवारयन् ॥ २३ ॥ ते वृता समरे पञ्च गजानीकेन भारत। अशोभन्त नरव्याघ्र ग्रहा व्याप्ता घनैरिव ॥ २४ ॥ ततोऽर्जुनो महाराज लब्धलक्षो महाभुजः। विनिर्ययौ रथेनैव श्वेताश्वः कृष्णसारथिः ॥ २५ ॥ तैः समन्तात् परिवृतः कुञ्जरैः पर्वतोपमैः। नाराचैर्विमलैस्तीक्ष्णैर्गजानीकमपोथयत् ॥ २६ ॥ तत्रैकवाणनिहतानपश्याम महागजान्। पतितान् पात्यमानांश्च निर्भिन्नान् सव्यसाचिना ॥ २७ ॥ भीमसेनस्तु तान् दृष्ट्वा नागान्मत्तगजोपमः। करेण गृह्य महतीं गदामभ्यद्रवद्बली। अथाप्लुत्य रथात्तूर्णं दण्डपाणिरिवान्तकः ॥२८॥ तमुद्यतगदं दृष्ट्वा पाण्डवानां महारथम्। वित्रेसुस्तावकाः सैन्याः शकृन्मूत्रे प्रसुस्रुवुः। आविग्नञ्च बलं सर्वं गदाहस्ते वृकोदरे ॥२९॥ गदया भीमसेनेन भिन्नकुम्भान्रजस्वलान्। धावमानानपश्याम कुञ्जरान् पर्वतोपमान् ॥ ३० ॥ प्रधाव्य कुञ्जरास्ते तु भीमसेनगदाहताः। पेतुरार्त्तस्वरं कृत्वा छिन्नपक्षा इवाद्रयः ॥ ३१ ॥ तान् भिन्नकुम्भान् सुबहून् द्रवमाणानितस्ततः। पतमानांस्तु संप्रेक्ष्य वित्रेसुस्तव सैनिकाः ॥ ३२ ॥ युधिष्ठिरोऽपि संक्रुद्धो माद्रीपुत्रौ च पाण्डवौ। गार्द्धपत्रैः शितैर्वाणैर्जघ्नुर्वै गजयोधिनः ॥३३॥

धृष्टद्युम्नस्तु समरे पराजित्य नराधिपम्। अपक्रान्ते तव सुते हयपृष्ठं समाश्रिते। दृष्ट्वा च पाण्डवान् सर्वान् कुञ्जरैः परिवारितान्॥३४॥ धृष्टद्युम्नो महाराज सह सर्वैः प्रभद्रकैः। पुत्रः पाञ्चालराजस्य जिघांसुः कुञ्जरान् ययौ॥३५॥ अदृष्ट्वा तु रथानीके दुर्य्योधनमरिन्दमम्। अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः। अपृच्छन् क्षत्रियांस्तत्र क्व नु दुर्य्योधनो गतः॥३६॥ अपश्यमाना राजानं वर्त्तमाने जनक्षये। मन्वाना निहतं तत्र तव पुत्रं महारथाः। विषस्मवदना भूत्वा पर्य्यपृच्छन्त ते सुतम्॥३७॥ आहुः केचिद्धते सूते प्रयातो यत्र सौबलः॥३८॥ अपरे त्वब्रुवं स्तत्र क्षत्रिया भृशविक्षताः। दुर्य्योधनेन किं कार्य्यं द्रक्ष्यध्वं यदि जीवति। युध्यध्वं सहिताः सर्व्वे किं वो राजा करिष्यति॥३९॥ ते क्षत्रियाः क्षतैर्गात्रैर्हतभूयिष्ठवान्धवाः। शरैः संपीड्यमानाश्च नातिव्यक्तमिवाब्रुवन्॥४०॥ इदं सर्व्वं बलं हन्मो येन स्म परिवारिताः। एते सर्व्वे गजान् हत्वा उपायान्ति स्म पाण्डवाः॥४१॥ श्रुत्वा तु वचनं तेषामश्वत्थामा महाबलः। भित्त्वा पाञ्चालराजस्य तदनीकं दुरुत्सहम्॥४२॥ कृपश्च कृतवर्मा च प्रययुर्यत्र सौबलः। रथानीकं परित्यज्य शूराः सुदृढधन्विनः॥४३॥ ततस्तेषु प्रयातेषु धृष्टद्युम्नपुरस्कृताः। आययुः पाण्डवा राजन् विनिघ्नन्तः स्म तावकान्॥४४॥ दृष्ट्वा तु तानापततः संप्रहृष्टान् महारथान्। पराक्रान्तांस्तथा वीरान्निराशञ्जीविते तदा। विवर्णमुखभूयिष्ठमभवत्तावकं बलम्॥४५॥ परिक्षीणबलान् दृष्ट्वा तानहं परिवारितान्। राजन् बलेन द्व्यङ्गेन त्यक्त्वा जीवितमात्मनः॥४६॥ आत्मना पञ्चमोऽयुध्यं पाञ्चालस्य बलेन ह। तस्मिन् देशे व्यवस्थाप्य यत्र शारद्वतः स्थितः॥४७॥ संप्रयुद्धा वयं पञ्च किरीटिशरपीड़िताः। धृष्टद्युम्नं महानीकं तत्र नोऽभूद्रणो महान्। जितास्तेन वयं सर्व्वे व्यपयाम रणात्ततः॥४८॥ अथापश्यं सात्यकिं

तमुपायान्तं महारथम्। रथैश्चतुःशतैर्वीरो माद्रीपुत्रमवाद्रवे ॥ ४९ ॥ धृष्टद्युम्नादहं मुक्तः कथञ्चिच्छ्रान्तवाहनात्। पतितो माधवानीकं दुष्कृती नरकं यथा। तत्र युद्धमभूद्घोरं मुहूर्त्तमतिदारुणम् ॥ ५० ॥ सात्यकिस्तु महाबाहुर्मम हत्वा परिच्छदम्। जीवग्राहमग्रह्णामां मूर्च्छितः पतितं भुवि ॥ ५१ ॥ ततो मुहूर्त्तादिव तन्नजानीकमवध्यत। गदया भीमसेनेन नाराचैरर्जुनेन च ॥ ५२ ॥ प्रतिपिष्टैर्महानागैः समन्तात् पर्वतोपमैः। नातिप्रसिद्धेव गतिः पाण्डवानामजायत ॥ ५३ ॥ रथमार्गांस्ततश्चक्रे भीमसेनो महाबलः। पाण्डवानां महाराज व्यपाकर्षन् महागजान् ॥५४॥ अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः। अपश्यन्तो रथानीके दुर्य्योधनमरिन्दमम्। राजानं मृगयामासुस्तव पुत्रं महारथम् ॥ ५५ ॥ परित्यज्य च पाञ्चाल्यं प्रयाता यत्र सौबलः। राज्ञो दर्शनसम्विग्ना वर्त्तमाने जनक्षये ॥ ५६ ॥

इति शल्यपर्वणि शल्यवधपर्वणि संकुलयुद्धे
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

सञ्जय उवाच। गजानीके हते तस्मिन् पाण्डुपुत्रेण भारत। बध्यमाने बले चैव भीमसेनेन संयुगे ॥ १ ॥ चरन्तञ्च तथा दृष्ट्वा भीमसेनमरिन्दमम्। दण्डहस्तं यथा क्रुद्धमन्तकं प्राणहारिणम् ॥ २ ॥ समेत्य समरे राजन् हतशेषाः सुतास्तव। अदृश्यमाने कौरव्ये पुत्रे दुर्य्योधने तव। सोदराः सहिता भूत्वा भीमसेनमुपाद्रवन् ॥ ३ ॥ दुर्मर्षणः श्रुतान्तश्च जैत्रो भूरिवलो रविः। जयत्सेनः सुजातश्च तथा दुर्विषहोऽरिहा ॥ ४ ॥ दुर्विमोचननामा च दुष्प्रधर्षस्तथैव च। श्रुतर्वा च महाबाहुः सर्व्वे युद्धविशारदाः

॥ ५ ॥ इत्येते सहिता भूत्वा तव पुत्राः समन्ततः। भीमसेनमभिद्रुत्य रुरुधुः सर्वतो दिशम् ॥ ६ ॥ ततो भीमो महाराज स्वरथं पुनरास्थितः। मुमोच निशितान् बाणान् पुत्राणां तव मर्मसु ॥ ७ ॥ ते कीर्य्यमाणा भीमेन पुत्रास्तव महारणे। भीमसेनमपाकर्षन् प्रवणादिव कुञ्जरम् ॥ ८ ॥ ततः क्रुद्धो रणे भीमः शिरो दुर्मर्षणस्य ह। क्षुरप्रेण प्रमथ्याशु पातयामास भूतले। ततोऽपरेण भल्लेन सर्वावरणभेदिना। श्रुतान्तमवधीद्भीमस्तव पुत्रं महारथम् ॥ १० ॥ जयत्सेनं ततो विद्धा नाराचेन हसन्निव। पातयामास कौरव्यं रथोपस्थादरिन्दमः। स पपात रथाद्राजन् भूमौ तूर्णं ममार च ॥ ११ ॥ श्रुतर्वा च ततो भीमं क्रुद्धो विव्याध ते सुतः। शतेन गृध्रवाजानां शराणां नतपर्वणाम् ॥ १२ ॥ ततः क्रुद्धो रणे भीमो जैत्रं भूरिबलं रविम्। त्रीनेतांस्त्रिभिरानर्च्छद्विषाग्निप्रतिमैः शरैः ॥ १३ ॥ ते हता न्यपतन् भूमौ स्यन्दनेभ्यो महारथाः। वसन्ते पुष्पशबला निकृत्ता इव किंशुकाः ॥ १४ ॥ ततोऽपरेण तीक्ष्णेन नाराचेन परन्तपः। दुर्विमोचनमाहत्य प्रेषयामास मृत्यवे ॥ १५ ॥ स हतः प्रापतद्भूमौ स्वरथाद्रथिनां वरः। गिरेस्तु कूटजो भग्नो मारुतेनेव पादपः ॥ १६ ॥ दुष्प्रधर्षं ततश्चैव सुजातञ्च सुतौ तव। एकैकं न्यवधीत् सङ्ख्ये द्वाभ्यां द्वाभ्याञ्चमूमुखे। तौ शिलीमुखविद्धाङ्गौ पेततू रथसत्तमौ ॥ १७ ॥ ततः पतन्तमपरमभिवीक्ष्य सुतं तव। भल्लेन प्रतिविव्याध भीमो दुर्विषहं रणे। स पपात हतो वाहात् पश्यतां सर्वधन्विनाम् ॥१८॥ दृष्ट्वा तु निहतान् भ्रातॄन् बहूनेकेन संयुगे। अमर्षवशमापन्नः श्रुतर्वा भीममभ्ययात् ॥ १९ ॥ विक्षिपन् सुमहच्चापं कार्त्तस्वरविभूषितम्। विसृजन् सायकांश्चैव विषाग्नि प्रतिमान् बहून् ॥२०॥ स तु राजन् धनुश्छित्त्वा पाण्डवस्य महामृधे। अथैनं छिन्नधन्वानं विंशत्या समवाकिरत् ॥ २१ ॥ ततोऽन्यद्धनुरादाय भीम-

सेनो महारथः। अवाकिरत्तत्र सुतं तिष्ठ तिष्ठेति चाब्रवीत् ॥२२॥ महदासीत्तयोर्युद्धं चित्ररूपं भयानकम्। यादृशं समरे पूर्वं जम्भवासवयोर्विभो ॥२३॥ तयोस्तत्र शरैर्मुक्तैर्यमदण्डनिभैः शितैः। समाच्छन्ना धरा सर्वा खञ्च सर्वा दिशस्तथा ॥ २४ ॥ ततः श्रुतर्वा संक्रुद्धो धनुरादाय सायकैः। भीमसेनं रणे राजन् बाह्वोरुरसि चार्पयत् ॥ २५ ॥ सोऽतिविद्धो महाराज तव पुत्रेण धन्विना। भीमः संचुक्षुभे क्षुब्धः पर्वणीव महोदधिः ॥ २६ ॥ ततो भीमो रुषाविष्टः पुत्रस्य तव मारिष। सारथिं चतुरश्चाश्वान् वाणैर्निन्ये यमक्षयम् ॥ २७ ॥ विरथं तं समालक्ष्य विशिखैर्लोमवाहिभिः। अवाकिरदमेयात्मा दर्शयन् पाणिलाघवम् ॥ २८ ॥ श्रुतर्वा विरथो राजन्नाददे खड्गचर्मणी। अथास्याददतः खड्गं शतचन्द्रञ्च भानुमत्। क्षुरप्रेण शिरः कायात् पातयामास पाण्डवः ॥ २९ ॥ छिन्नोत्तमाङ्गस्य ततः क्षुरप्रेण महात्मनः। पपात कायः स रथाद्वसुधामनुनादयन् ॥ ३० ॥ तस्मिन् निपतिते वीरे तावका भयमोहिताः। अभ्यद्रवन्त संग्रामे भीमसेनं युयुत्सवः ॥ ३१ ॥ तानापतत एवाशु हतशेषाद्बलार्णवात्। दंशितः प्रतिजग्राह भीमसेनः प्रतापवान्। ते तु तं वै समासाद्य परिवव्रुः समन्ततः ॥ ३२ ॥ ततस्तु संवृतो भीमस्तावकैर्निशितैः शरैः। पीड़यामास तान् सर्वान् सहस्राक्ष इवासुरान् ॥ ३३ ॥ ततः पञ्च शतान् हत्वा सवरूथान् महारथान्। जघान कुञ्जरानीकं पुनः सप्तशतं युधि ॥ ३४ ॥ हत्वा दशसहस्राणि पत्तीनां परमेषुभिः। वाजिनाञ्च शतान्यष्टौ पाण्डवः स विराजते ॥ ३५ ॥ भीमसेनस्तु कौन्तेयो हत्वा युद्धे सुतांस्तव। मेने कृतार्थमात्मानं सफलं जन्म च प्रभो ॥ ३६ ॥ तं तथा युध्यमानं वै विनिघ्नन्तञ्च तावकान्। ईक्षितुं नोत्सहन्ते स्म तव सैन्यानि मारिष ॥ ३७ ॥ विद्राव्य तु कुरून् सर्वांस्तांश्च हत्वा पदानुगान्। दोर्भ्यां शब्दं ततश्चक्रे त्रासयानो

महाद्विपान् ॥ ३८ ॥ हतभूयिष्ठयोधा तु तव सेना विशाम्पते।
किञ्चिच्छेषा महाराज कृपणा समपद्यत ॥ ३९ ॥

इति श्रलपर्व्वणि शल्यवधपर्व्वणि दुर्म्मर्षणादिवधे
षड्‌विंशोऽध्यायः ॥ २६ ॥

---

सञ्जय उवाच। दुर्य्योधनो महाराज सुदर्शश्चापि ते सुतः।
हतशेषौ तदा सङ्ख्ये वाजिमध्ये व्यवस्थितौ ॥ १ ॥ ततो दुर्य्यो-
धनं दृष्ट्वा वाजिमध्ये व्यवस्थितम्। उवाच देवकीपुत्रः कुन्तीपुत्रं
धनञ्जयम् ॥ २ ॥ शत्रवो हतभूयिष्ठा ज्ञातयः परिपालिताः।
गृहीत्वा सञ्जयञ्चासौ निवृत्तः शिनिपुङ्गवः ॥ ३ ॥ परिश्रान्तश्च
नकुलः सहदेवश्च भारत। योधयित्वा रणे पापान् धार्त्तराष्ट्रान्
सहानुगान् ॥ ४ ॥ दुर्य्योधनमभित्यज्य त्रय एते व्यवस्थिताः।
कृपश्च कृतवर्म्मा च द्रौणिश्चैव महारथः ॥ ५ ॥ असौ तिष्ठति
पाञ्चाल्यः श्रिया परमया युतः। दुर्य्योधनबलं हत्वा सह सर्व्वैः
प्रभद्रकैः ॥ ६ ॥ असौ दुर्य्योधनः पार्थ वाजिमध्ये व्यवस्थितः।
छत्रेण ध्रियमाणेन प्रेक्षमाणो मुहुर्म्मुहुः ॥ ७ ॥ प्रतिव्यूह्य बलं
सर्व्वं रणमध्ये व्यवस्थितः। एनं हत्वा शितैर्ब्बाणैः कृतकृत्यो भवि-
ष्यसि ॥ ८ ॥ गजानीकं हतं दृष्ट्वा त्वाञ्च प्राप्तमरिन्दमम्। यावन्न
विद्रवन्त्येते तावज्जहि सुयोधनम् ॥ ९ ॥ यातु कश्चित्तु पाञ्चाल्यं
क्षिप्रमागम्यतामिति। परिश्रान्तबलस्तात नैष मुच्येत किल्बिषी
॥ १० ॥ तव हत्वा बलं सर्व्वं सङ्ग्रामे धृतराष्ट्रजः। जितान् पाण्डु-
सुतान् मत्वा रूपं धारयते महत् ॥ ११ ॥ निहतं स्वबलं मत्वा
पीड़ितञ्चापि पाण्डवैः। ध्रुवमेष्यति संग्रामे वधायैवात्मनो नृपः।
एवमुक्तः फाल्गुनस्तु कृष्णं वचनमब्रवीत् ॥ १२ ॥ धृतराष्ट्रसुताः
सर्व्वे हता भीमेन मानद। यावेतावास्थितौ कृष्ण तावद्य न

भविष्यतः ॥ १३ ॥ हतो भीष्मो हतो द्रोणः कर्णो वैकर्त्तनो हतः ।
मद्रराजो हतः शल्यो हतः कृष्ण जयद्रथः ॥ १४ ॥ हयाः पञ्च-
शताः शिष्टाः शकुनेः सौबलस्य च । रथानाञ्च शते शिष्टे द्वे एव तु
जनार्द्दन । दन्तिनाञ्च शतं साग्रं त्रिसाहस्राः पदातयः ॥ १५ ॥
अश्वत्थामा कृपश्चैव त्रिगर्त्ताधिपतिस्तथा । उलूकः शकुनिश्चैव
कृतवर्मा च सात्वतः ॥१६॥ एतद्बलमभूच्छेषं धार्त्तराष्ट्रस्य माधव ।
मोक्षो न नूनं कालाद्धि विद्यते भुवि कस्यचित् ॥ १७ ॥ तथा
विनिहते सैन्ये पश्य दुर्य्योधनं स्थितम् । अद्याहनि महाराजो
हतामित्रो भविष्यति । न हि मे मोक्ष्यते कश्चित् परेषामिति
चिन्तये ॥ १८ ॥ ये त्वद्य समरं कृष्ण न हास्यन्ति रणोत्कटाः ।
तान् वै सर्वान् हनिष्यामि यद्यपि स्युरमानुषाः ॥ १९ ॥ अद्य
युद्धे सुसंक्रुद्धो दीर्घं राज्ञः प्रजागरम् । अपनेष्यामि गान्धारं
पातयित्वा शितैः शरैः ॥ २० ॥ निकृत्या वै दुराचारो यानि
रत्नानि सौबलः । सभायामहरद्द्यूते पुनस्तान्याहराम्यहम् ॥२१॥
अद्य ता अपि वेत्स्यन्ति सर्वा नागपुरस्त्रियः । श्रुत्वा पतींश्च
पुत्रांश्च पाण्डवैर्निहतान् युधि ॥ २२ ॥ समाप्तमद्य वै कर्म सर्वं
कृष्ण भविष्यति । अद्य दुर्य्योधनो दीप्तां श्रियं प्राणांश्च त्यक्ष्यति
॥ २३ ॥ नापयाति भयात् कृष्णसंग्रामादद्य चेन्मम । निहतं विद्धि
वार्ष्णेय धार्त्तराष्ट्रं सुबालिशम् ॥ २४ ॥ मम ह्येतदशक्तं वै
वाजिवृन्दमरिन्दम । सोढुं ज्यातलनिर्घोषं याहि यावन्निहन्म्यहम्
॥ २५ ॥ एवमुक्तस्तु दाशार्हः पाण्डवेन मनस्विना । अचोदय
द्धयान्राजन् दुर्य्योधनबलं प्रति ॥ २६ ॥ तदनीकमभिप्रेक्ष्य त्रयः
सज्जा महारथाः । भीमसेनोऽर्जुनश्चैव सहदेवश्च मारिष । प्रययुः
सिंहनादेन दुर्य्योधनजिघांसया ॥ २७ ॥ तान् प्रेक्ष्य सहितान्
सर्वान् जवेनोद्यतकार्मुकान् । सौबलोऽभ्यद्रवद्युद्धे पाण्डवानात-
तायिनः ॥ २८ ॥ सुदर्शनस्तव सुतो भीमसेनं समभ्ययात् । सुशर्मा

शकुनिश्चैव युयुधाते किरीटिना। सहदेवं तव सुतो हयपृष्ठगतोऽभ्ययात्॥ २९॥ ततो हि यत्नतः क्षिप्रं तव पुत्रो जनाधिप। प्रासेन सहदेवस्य शिरसि प्राहरद्भृशम्॥ ३०॥ सोपाविशद्रथोपस्थे तव पुत्रेण ताड़ितः। रुधिराप्लुतसर्वाङ्ग आशीविष इव श्वसन्॥ ३१॥ प्रतिलभ्य ततः संज्ञां सहदेवो विशाम्पते। दुर्य्योधनं शरैस्तीक्ष्णैः संक्रुद्धः समवाकिरत्॥ ३२॥ पार्थोऽपि युधि विक्रम्य कुन्तीपुत्रो धनञ्जयः। शूराणामश्वपृष्ठेभ्यः शिरांसि निचकर्त्त ह॥ ३३॥ तदनीकं तदा पार्थो व्यधमद्बहुभिः शरैः। पातयित्वा हयान् सर्वांस्त्रिगर्त्तानां रथान् ययौ॥ ३४॥ ततस्ते सहिता भूत्वा त्रिगर्त्तानां महारथा। अर्जुनं वासुदेवञ्च शरवर्षैरवाकिरन्॥ ३५॥ सत्यकर्माणमाक्षिप्य क्षुरप्रेण महायशाः। ततोऽस्य स्यन्दनस्येषां चिच्छेद पाण्डुनन्दनः॥ ३६॥ शिलाशितेन च विभो क्षुरप्रेण महायशाः। शिरश्चिच्छेद प्रहसंस्तप्तकाञ्चनभूषणम्॥ ३७॥ सत्येषुमथ चादत्त योधानां मिषतां ततः। यथा सिंहो वने राजन् मृगं परिबुभुक्षितः॥ ३८॥ तं निहत्य ततः पार्थः सुशर्म्माणं त्रिभिः शरैः। विद्ध्वा तानहनत् सर्वान्रथान्रुक्मविभूषितान्॥ ३९॥ ततः प्रायात्त्वरन् पार्थो दीर्घकालं सुसंभृतम्। मुञ्चन् क्रोधविषं तीक्ष्णं प्रस्थलाधिपतिं प्रति॥ ४०॥ तमर्जुनः पृषत्कानां शतेन भरतर्षभ। पूरयित्वा ततो वाहानहनत्तस्य धन्विनः॥ ४१॥ ततः शरं समाधाय यमदण्डोपमं परम्। सुशर्म्माणं समुद्दिश्य चिक्षेपाशु हसन्निव॥ ४२॥ स शरः प्रेषितस्तेन क्रोधदीप्तेन धन्विना। सुशर्म्माणं समासाद्य बिभेद हृदयं रणे॥ ४३॥ स गतासुर्महाराज पपात धरणीतले। नन्दयन् पाण्डवान् सर्वान् व्यथयंश्चापि तावकान्॥ ४४॥ सुशर्म्माणं रणे हत्वा पुत्रानस्य महारथान्। सप्त चाष्टौ च त्रिंशच्च शायकैरनयत् क्षयम्॥ ४५॥ ततोऽस्य निशितैर्वाणैः सर्वान् हत्वा पदानुगान्।

अभ्यवाद्भारतीं सेनां हतशेषां महारथः ॥ ४६ ॥ भीमस्तु समरे क्रुद्धः पुत्रं तव जनाधिप। सुदर्शनमदृश्यन्तं शरैश्चक्रे हसन्निव ॥ ४७ ॥ ततोऽस्य प्रहसन् क्रुद्धः शिरः कायादपाहरत्। क्षुरप्रेण सुतीक्ष्णेन स हतः प्रापतद्भुवि ॥ ४८ ॥ तस्मिंस्तु निहते वीरे ततस्तस्य पदानुगाः। परिवव्रू रणे भीमं किरन्तो विशिखाञ्छितान् ॥ ४९ ॥ ततस्तु निशितैर्बाणैस्तदनीकं वृकोदरः। इन्द्राशनिसमस्पर्शैः समन्तात् पर्य्यवाकिरत्। ततः क्षणात्तु तान् भीमो न्यहनद्भरतर्षभ ॥ ५० ॥ तेषु तूच्छिद्यमानेषु सेनाध्यक्षा महाबलाः। भीमसेनं समासाद्य ततोऽयुध्यन्त भारत ॥ ५१ ॥ तांस्तु सर्वान् शरै राजन्नवाकिरत पाण्डवः। तथैव तावका राजन् पाण्डवेयान् महारथान्। शरवर्षेण महता समन्तात् पर्य्यवारयन् ॥ ५२ ॥ व्याकुलं तदभूत् सर्वं पाण्डवानां परैः सह। तावकानाञ्च समरे पाण्डवेयैर्युयुत्सताम् ॥ ५३ ॥ तत्र योधास्तदा पेतुः परस्परसमाहताः। उभयोः सेनयो राजन् संशोचन्तः स्म बान्धवान् ॥ ५४ ॥

इति शल्यपर्वणि शल्यवधपर्वणि संकुलयुद्धे
सप्तविंशोऽध्यायः ॥ २७ ॥

---

सञ्जय उवाच। तस्मिन् प्रवृत्ते संग्रामे नरवाजिगजक्षये। शकुनिः सौबलो राजन् सहदेवं समभ्ययात् ॥ १ ॥ ततोऽस्यापततस्तूर्णं सहदेवः प्रतापवान्। शरौघान् प्रेषयामास पतङ्गानिव शीघ्रगान्। उलूकश्च रणे भीमं विव्याध दशभिः शरैः ॥ २ ॥ शकुनिस्तु महाराज भीमं विद्ध्वा त्रिभिः शरैः। सायकानां नवत्या वै सहदेवमवाकिरत् ॥ ३ ॥ ते शूराः समरे राजन् समासाद्य परस्परम्। विव्यधुर्निशितैर्बाणैः कङ्कबर्हिणवाजितैः। स्वर्णपुङ्खैः

शिलाधौतैराकर्णात् प्रहितैः शरैः ॥ ४ ॥ तेषाञ्चापभुजोत्सृष्टा शरवृष्टिर्विशाम्पते । आच्छादयद्रिपूः सर्वा धारा इव पयोमुचः ॥ ५ ॥ ततः क्रुद्धो रणे भीमः सहदेवश्च वीर्य्यवान् । चेरतुः कदनं सङ्ख्ये कुर्वन्तौ सुमहाबलौ ॥ ६ ॥ ताभ्यां शरशतैश्छन्नं तद्बलं तव भारत । अन्धकारमिवाकाशमभवत्तत्र तत्र ह ॥ ७ ॥ अश्वैर्विपरिधावद्भिः शरैश्छन्नैर्विशाम्पते । तत्र तत्र कृतो मार्गो विकर्षद्भिर्हतान् बहून् ॥ ८ ॥ निहतानां हयानान्तु सहैव हय-योधिभिः । चर्मभिर्विनिकृत्तैश्च प्रासैश्छिन्नैश्च मारिष ॥ ९ ॥ असिभिः शक्तिभिश्चैव तोमरैश्च समन्ततः । संछन्ना पृथिवी जज्ञे कुसुमैः शवला इव ॥ १० ॥ योधास्तत्र महाराज समासाद्य पर-स्परम् । व्यचरन्त रणे क्रुद्धा विनिघ्नन्तः परस्परम् ॥ ११ ॥ उद्वृत्तनयनै रोषात् सन्दष्टौष्ठपुटैर्मुखैः । सकुण्डलैर्मही छन्ना पद्मकिञ्जल्कसन्निभैः ॥ १२ ॥ भुजैश्छिन्नैर्महाराज नागराज-करोपमैः । साङ्गदैः सतनुत्रैश्च सासिप्रासपरश्वधैः ॥ १३ ॥ कबन्धै-रुत्थितैश्छिन्नैर्नृत्यद्भिश्चापरैर्युधि । क्रव्यादगणसङ्कीर्णा घोराभूत् पृथिवी विभो ॥ १४ ॥ अल्पावशिष्टे सैन्ये तु कौरवेयान् महा-हवे । प्रहृष्टाः पाण्डवाः भूत्वा निन्यिरे यमसादनम् ॥ १५ ॥ एतस्मिन्नन्तरे शूरः सौवलेयः प्रतापवान् । प्रासेन सहदेवस्य शिरसि प्राहरद्भृशम् । स विह्वलो महाराज रथोपस्थ उपा-विशत् ॥ १६ ॥ सहदेवं तथा दृष्ट्वा भीमसेनः प्रतापवान् । सर्व-सैन्यानि संक्रुद्धो वारयामास भारत ॥१७॥ निर्बिभेद च नाराचैः शतशोऽथ सहस्रशः । विनिर्भिद्याकरोच्चैव सिंहनादमरिन्दमः ॥ १८ ॥ तेन शब्देन वित्रस्ताः सर्वे सहयवारणाः । प्राद्रवन् सहसा भीताः शकुनेश्च पदानुगाः ॥ १९ ॥ प्रभग्नानथ तान् दृष्ट्वा राजा दुर्य्योधनोऽब्रवीत् । निवर्त्तध्वमधर्मज्ञा युध्यध्वं किं सृतेन वः ॥ २० ॥ इह कीर्त्तिं समाधाय प्रेत्य लोकान् समश्नुते ।

प्राणान् जहाति यो वीरो युधि पृष्ठमदर्शयन् ॥ २१ ॥ एवमुक्तास्तु ते राज्ञा सौबलस्य पदानुगाः। पाण्डवानभ्यवर्त्तन्त मृत्युं कृत्वा निवर्त्तनम् ॥ २२ ॥ द्रवद्भिस्तत्र राजेन्द्र कृतः शब्दोऽतिदारुणः। क्षुब्धसागरसङ्काशः क्षुभितः सर्व्वतोऽभवत् ॥ २३ ॥ तांस्तथापततो दृष्ट्वा सौबलस्य पदानुगान्। प्रत्युद्ययुर्महाराज पाण्डवा विजये स्थिताः ॥ २४ ॥ प्रत्याश्वास्य च दुर्द्धर्षः सहदेवो विशाम्पते। शकुनिं दशभिर्विद्धा हयांश्चास्य त्रिभिः शरैः। धनुश्चिच्छेद च शरैः सौबलस्य हसन्निव ॥ २५ ॥ अथान्यद्धनुरादाय शकुनिर्युद्ध-दुर्मदः। विव्याध नकुलं षष्ट्या भीमसेनञ्च सप्तभिः ॥ २६ ॥ उलूकोऽपि महाराज भीमं विव्याध सप्तभिः। सहदेवञ्च सप्तत्या परीप्सन् पितरं रणे ॥ २७ ॥ तं भीमसेनः समरे विव्याध निशितैः शरैः। शकुनिञ्च चतुःषष्ट्या पार्थस्तांश्च त्रिभिस्त्रिभिः ॥ २८ ॥ ते हन्यमाना भीमेन नाराचैस्तैलपायितैः। सहदेवं रणे क्रुद्धाश्छादयन् शरवृष्टिभिः। पर्व्वतं वारिधाराभि सविद्युत इवाम्बुदाः ॥ २९ ॥ ततोऽस्यापततः शूरः सहदेवः प्रतापवान्। उलूकस्य महाराज भल्लेनापाहरच्छिरः ॥ ३० ॥ स जगाम रथा-द्भूमिं सहदेवेन पातितः। रुधिराप्लुतसर्व्वाङ्गो नन्दयन् पाण्डवान् युधि ॥ ३१ ॥ पुत्रन्तु निहतं दृष्ट्वा शकुनिस्तत्र भारत। साश्रु-कण्ठो विनिश्वस्य क्षत्तुर्वाक्यमनुस्मरन् ॥ ३२ ॥ चिन्तयित्वा मुहूर्त्तं स वाष्पपूर्णेक्षणः श्वसन्। सहदेवं समासाद्य त्रिभिर्विव्याध सायकैः ॥ ३३ ॥ तानपास्य शरान्मुक्तान् शरसंघैः प्रतापवान्। सहदेवो महाराज धनुश्चिच्छेद संयुगे ॥ ३४ ॥ छिन्ने धनुषि राजेन्द्र शकुनिः सौबलस्तदा। प्रगृह्य विपुलं खड्गं सहदेवाय प्राहिणोत् ॥ ३५ ॥ तमापतन्तं सहसा घोररूपं विशाम्पते। द्विधा चिच्छेद समरे सौबलस्य हसन्निव ॥ ३६ ॥ असिं दृष्ट्वा द्विधा छिन्नं प्रगृह्य महतीं गदाम्। प्राहिणोत् सहदेवाय सा

मोघा न्यपतद्भुवि ॥ ३७ ॥ ततः शक्तिं महाघोरां कालरात्रि-
मिवोद्यताम् । प्रेषयामास संक्रुद्धः पाण्डवं प्रति सौवलः ॥ ३८ ॥
तामापतन्तीं सहसा शरैः काञ्चनभूषणैः । त्रिधा चिच्छेद समरे
सहदेवो हसन्निव ॥ ३९ ॥ सा पपात त्रिधा छिन्ना भूमौ कनक-
भूषणा । शीर्य्यमाणा यथा दीप्ता गगणाद्वै शतह्रदा ॥ ४० ॥
शक्तिं विनिहतां दृष्ट्वा सौवलञ्च भयार्द्दितम् । दुद्रुवुस्तावकाः सर्व्वे
भये जाते ससौवलाः ॥ ४१ ॥ अथोत्क्रुष्टं महच्चासीत् पाण्डवै-
र्ज्जितकाशिभिः । धार्त्तराष्ट्रास्ततः सर्व्वे प्रायशो विमुखाभवन् ॥४२॥
तान् वै विमनसो दृष्ट्वा माद्रीपुत्रः प्रतापवान् । शरैरनेकसाहस्रै-
र्व्वारयामास संयुगे ॥ ४३ ॥ ततो गान्धारकैर्गुप्तं पुष्टैरश्वैर्ज्जये
धृतम् । आससाद रणे यान्तं सहदेवोऽथ सौबलम् ॥ ४४ ॥
स्वमंशमवतिष्ठन्तं संस्मृत्य शकुनिं नृप । रथेन काञ्चनाङ्गेन सहदेवः
समभ्ययात् ॥ ४५ ॥ अधिज्यं बलवत् कृत्वा व्याक्षिपन् सुमहद्धनुः ।
स सौवलमभिद्रुत्य गार्द्धपत्रैः शिलाशितैः । भृशमभ्यहनत् क्रुद्ध-
स्तोत्रैरिव महाद्विपम् ॥ ४६ ॥ उवाच चैनं मेधावी निगृह्य
स्मारयन्निव । क्षत्रधर्म्मे स्थिरो भूत्वा युध्यस्व पुरुषो भव ॥ ४७ ॥
यत्तदा हृष्यसे मूढ ग्लहन्नक्षैः सभातले । फलमद्य प्रपश्यस्व
कर्म्मणस्तस्य दुर्म्मते ॥ ४८ ॥ निहतास्ते दुरात्मानो येऽस्मानवहसन्
पुरा । दुर्य्योधनः कुलाङ्गारः शिष्टस्त्वं चास्य मातुलः ॥ ४९ ॥
अद्य ते निहनिष्यामि क्षुरेणोन्मथितं शिरः । वृक्षात् फलमिवा-
विद्धं लगुड़ेन प्रमाथिना ॥ ५० ॥ एवमुक्त्वा महाराज सहदेवो
महाबलः । संक्रुद्धो नरशार्दूलो वेगेनाभिजगाम ह ॥ ५१ ॥
अभिगम्य तु दुर्द्धर्षः सहदेवो युधांपतिः । विकृष्य बलवच्चापं
क्रोधेन प्रदहन्निव ॥ ५२ ॥ शकुनिं दशभिर्व्विद्ध्वा चतुर्भिश्चास्य
वाजिनः । छत्रं ध्वजं धनुश्चास्य छित्त्वा सिंह इवानदत् ॥ ५३ ॥
छिन्नध्वजधनुश्छत्रः सहदेवेन सौवलः । कृतो विद्धश्च बहुभिः

सर्वमर्मसु सायकैः ॥ ५४ ॥ ततो भूयो महाराज सहदेवः प्रतापवान्। शकुनेः प्रेषयामास शरवृष्टिं दुरासदाम् ॥ ५५ ॥ ततस्तु क्रुद्धः सुबलस्य पुत्रो माद्रीसुतं सहदेवं विमर्द्दे। प्रासेन जाम्बूनदभूषणेन जिघांसुरेकोऽभिपपात शीघ्रम् ॥ ५६ ॥ माद्रीसुतस्तस्य समुद्यतं तं प्रासं सुवृत्तौ च भुजौ रणाग्रे। भल्लैस्त्रिभिर्युगपत् सञ्चकर्त्त ननाद चोच्चैस्तरसाजिमध्ये ॥ ५७ ॥ तस्याशुकारी सुसमाहितेन सुवर्णपुङ्खेन दृढ़ायसेन। भल्लेन सर्वावरणातिगेन शिरः शरीरात् प्रममाथ भूयः ॥ ५८ ॥ शरेण कार्त्तस्वरविभूषितेन दिवाकराभेन सुसंशितेन। हृतोत्तमाङ्गो युधि पाण्डवेन पपात भूमौ सुबलस्य पुत्रः ॥ ५९ ॥ स तच्छिरो वेगवता शरेण सुवर्णपुङ्खेन शिलाशितेन। प्रावेरयत् कुपितः पाण्डुपुत्रो यत्तत् कुरूणामनयस्य मूलम् ॥ ६० ॥ कृत्तोत्तमाङ्गं शकुनिं समीक्ष्य भूमौ शयानं रुधिरार्द्रगात्रम्। योधास्त्वदीया भयनष्टसत्त्वा दिशः प्रजग्मुः प्रगृहीतशस्त्राः ॥ ६१ ॥ विप्रद्रुता शुष्कमुखा विसंज्ञा गाण्डीवघोषेण समाहताश्च। भयार्द्दिता भग्नरथाश्वनागाः पदातयश्चैव स धार्त्तराष्ट्राः ॥ ६२ ॥ ततो रथाच्छकुनिं पातयित्वा मुदान्विता भारत पाण्डवेयाः। शङ्खान् प्रदध्मुः समरे प्रहृष्टाः सकेशवाः सैनिकान् हर्षयन्तः ॥ ६३ ॥ तञ्चापि सर्व्वे प्रतिपूजयन्तो हृष्टा ब्रुवाणाः सहदेवमाजौ। दिष्ट्या हतो नैकृतिको दुरात्मा सहात्मजो वीर रणे त्वयेति ॥ ६४ ॥

इति शल्यपर्व्वणि शल्यवधपर्व्वणि शकुन्युलूकवधे
अष्टाविंशोऽध्यायः ॥ २८ ॥

॥ समाप्तञ्च शल्यवधपर्व्व ॥

---

अथ ह्रदप्रवेशपर्व्व ।

सञ्जय उवाच । ततः क्रुद्धा महाराज सौबलस्य पदानुगाः । त्यक्ता जीवितमाक्रन्दे पाण्डवान् पर्य्यवारयन् ॥ १ ॥ तानर्ज्जुनः प्रत्यगृह्णात् सहदेवजये धृतः । भीमसेनश्च तेजस्वी क्रुद्धाशीविषदर्शनः ॥ २ ॥ शक्त्यृष्टिप्रासहस्तानां सहदेवं जिघांसताम् । सङ्कल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः ॥ ३ ॥ संगृहीतायुधान् बाहून् योधानामभिधावताम् । भल्लैश्चिच्छेद वीभत्सुः शिरांस्यपि हयानपि ॥ ४ ॥ ते हयाः प्रत्यपद्यन्त वसुधां विगतासवः । त्वरतां लोकवीराणां प्रहताः सव्यसाचिना ॥ ५ ॥ ततो दुर्य्योधनो राजा दृष्ट्वा स्वबलसङ्क्षयम् । हतशेषान् समानीय क्रुद्ध्यन्रथशतान् विभो ॥ ६ ॥ कुञ्जरांश्च हयांश्चैव पादातांश्च परन्तप । उवाच सहितान् सर्व्वान् धार्त्तराष्ट्र इदं वचः ॥ ७ ॥ समासाद्य रणे सर्व्वान् पाण्डवान् ससुहृद्गणान् । पाञ्चाल्यञ्चापि सबलं हत्वा शीघ्रं निवर्त्तत ॥ ८ ॥ तस्य ते शिरसा गृह्य वचनं युद्धदुर्म्मदाः । प्रत्युद्ययू रणे पार्थांस्तव पुत्रस्य शासनात् ॥ ९ ॥ तानभ्यापततः शीघ्रं हतशेषान्महारणे । शरैराशीविषाकारैः पाण्डवाः समवाकिरन् ॥ १० ॥ तत्सैन्यं भरतश्रेष्ठ मुहूर्त्तेन महात्मभिः । अवध्यत रणं प्राप्य त्रातारं नाभ्यविन्दत । प्रतिष्ठमानन्तु भयान्नावतिष्ठति दंशितम् ॥ ११ ॥ अश्वैर्विपरिधावद्भिः सैन्येन रजसावृतैः । न प्राज्ञायन्त समरे दिशश्च प्रदिशस्तथा ॥ १२ ॥ ततस्तु पाण्डवानीकान्निःसृत्य बहवो जनाः । अभ्यघ्नन् तावकान् युद्धे मुहूर्त्तादिव भारत । ततो निःशेषमभवत् तत् सैन्यं तव भारत ॥ १३ ॥ अक्षौहिण्यः समेतास्तु तव पुत्रस्य भारत । एकादश हता युद्धे ताः प्रभो पाण्डुसृञ्जयैः ॥ १४ ॥ तेषु राजसहस्रेषु तावकेषु महात्मसु । एको दुर्य्योधनो राजन्नदृश्यत भृशं क्षतः ॥ १५ ॥ ततो वीक्ष्य दिशः सर्व्वा दृष्ट्वा शून्याञ्च मेदिनीम् । विहीनः सर्व्वयोधैश्च

पाण्डवान् वीक्ष्य संयुगे ॥ १६ ॥ मुदितान् सर्वसिद्धार्थान्नर्दमानान् समन्ततः। वाणशब्दरवांश्चैव श्रुत्वा तेषां महात्मनाम् ॥ १७ ॥ दुर्य्योधनो महाराज कश्मलेनाभिसंवृतः। अपयाने मनश्चक्रे विहीनबलवाहन ॥ १८ ॥

धृतराष्ट्र उवाच। निहते मामके सैन्ये निःशेषे शिविरे कृते। पाण्डवानां बले सूत किन्नु शेषमभूत्तदा। एतन्मे पृच्छतो ब्रूहि कुशलो ह्यसि सञ्जय ॥ १९ ॥ यच्च दुर्य्योधनो मन्दः कृतवांस्तनयो मम। बलक्षयं तदा दृष्ट्वा स एकः पृथिवीपतिः ॥ २० ॥

सञ्जय उवाच। रथानां द्वे सहस्रे तु सप्त नागशतानि च। पञ्च चाश्वसहस्राणि पत्तीनाञ्च शतंशताः ॥ २१ ॥ एतच्छेषमभूद्राजन् पाण्डवानां महद्बलम्। परिगृह्य हि यद्युद्धे धृष्टद्युम्नो व्यवस्थितः ॥ २२ ॥ एकाकी भरतश्रेष्ठ ततो दुर्य्योधनो नृपः। नापश्यत् समरे कञ्चित् सहायं रथिनां वरः ॥ २३ ॥ नर्दमानान् परांश्चैव स्वबलस्य च सङ्क्षयम्। तथा दृष्ट्वा महाराज एकः स पृथिवीपतिः। हतं स्वहयमुत्सृज्य प्राङ्मुखः प्राद्रवद्रणात् ॥ २४ ॥ एकादशचमूभर्त्ता पुत्रो दुर्य्योधनस्तव। गदामादाय तेजस्वी पदातिः प्रस्थितो ह्रदम् ॥ २५ ॥ नातिदूरं ततो गत्वा पद्भ्यामेव नराधिपः। सस्मार वचनं क्षत्तुर्धर्म्मशीलस्य धीमतः ॥ २६ ॥ इदं नूनं महाप्राज्ञो विदुरो दृष्टवान् पुरा। महद्वैशसमस्माकं क्षत्रियाणाञ्च संयुगे ॥ २७ ॥ एवं विचिन्तयानस्तु प्रविविक्षुर्ह्रदं ततः। दुःखसन्तप्तहृदयो दृष्ट्वा राजा बलक्षयम् ॥ २८ ॥ पाण्डवापि महाराज धृष्टद्युम्नपुरोगमाः। अभ्यधावन्त संक्रुद्धास्तव राजन् बलं प्रति ॥ २९ ॥ शक्त्यृष्टिप्रासहस्तानां बलानामभिगर्ज्जताम्। सङ्कल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः ॥ ३० ॥ तान् हत्वा निशितैर्वाणैः सामात्यान् सह बन्धुभिः। रथे श्वेतहये तिष्ठन्नर्जुनो बह्वशोभत ॥ ३१ ॥ सुबलस्य हते पुत्रे सवाजिरथकुञ्जरे।

महावनमिव छिन्नमभवत्तावकं बलम् ॥ ३२ ॥ अनेकशतसाहस्रे बले दुर्य्योधनस्य ह । नान्यो महारथो राजन् जीवमानो व्यदृश्यत ॥ ३३ ॥ द्रोणपुत्त्रादृते वीरात्तथैव कृतवर्म्मणः । कृपाच्च गौतमाद्राजन् पार्थिवाच्च तवात्मजात् ॥ ३४ ॥ धृष्टद्युम्नस्तु मां दृष्ट्वा हसन् सात्यकिमब्रवीत् । किमनेन गृहीतेन नानेनार्थोऽस्ति जीवता ॥ ३५ ॥ धृष्टद्युम्नवचः श्रुत्वा शिनेर्नप्ता महारथः । उद्यम्य निशितं खड्गं हन्तुमामुद्यतस्तदा ॥ ३६ ॥ तमागम्य महाप्राज्ञः कृष्णो द्वैपायनोऽब्रवीत् । मुच्यतां सञ्जयो जीवन्न हन्तव्यः कथञ्चन ॥ ३७ ॥ द्वैपायनवचः श्रुत्वा शिनेर्नप्ता कृताञ्जलिः । ततो मामब्रवीन्मुक्त्वा स्वस्ति सञ्जय साधय ॥ ३८ ॥ अनुज्ञातस्त्वहं तेन न्यस्तवर्म्मा निरायुधः । प्रातिष्ठं येन नगरं सायाह्ने रुधिरोक्षितः ॥ ३९ ॥ क्रोशमात्रमपाक्रान्तं गदापाणिमवस्थितम् । एकं दुर्य्योधनं राजन्नपश्यं भृशविक्षतम् ॥ ४० ॥ स तु मामश्रुपूर्णाक्षो न शक्नोत्यभिवीक्षितुम् । उपप्रैक्षत मां दृष्ट्वा तदा दीनमवस्थितम् ॥ ४१ ॥ तञ्चाहमपि शोचन्तं दृष्ट्वैकाकिनमाहवे । मुहूर्त्तं नाशकं वक्तुं किञ्चिद्दुःखपरिप्लुतः ॥ ४२ ॥ ततोऽस्मै तदहं सर्व्वमुक्तवान् ग्रहणं तदा । द्वैपायनप्रसादाच्च जीवतो मोक्षमात्मनः ॥ ४३ ॥ मुहूर्त्तमिव च ध्यात्वा प्रतिलभ्य च चेतनाम् । भ्रातॄंश्च सर्व्वसैन्यानि समपृच्छत मां ततः ॥ ४४ ॥ तस्मै तदहमाचक्षं सर्व्वं प्रत्यक्षदर्शिवान् । भ्रातॄंश्च निहतान् सर्व्वान् सैन्यञ्च विनिपातितम् ॥ ४५ ॥ त्रयः किल रथाः शिष्टास्तावकानां नराधिप । इति प्रस्थानकाले मां कृष्णद्वैपायनोऽब्रवीत् ॥ ४६ ॥ स दीर्घमिव निश्वस्य विप्रेक्ष्य च पुनः पुनः । असौ मां पाणिना स्पृष्ट्वा पुत्त्रस्ते पर्य्यभाषत ॥४७॥ त्वदन्यो नेह संग्रामे कश्चिज्जीवति सञ्जय । द्वितीयं न हि पश्यामि ससहायाश्च पाण्डवाः ॥ ४८ ॥ ब्रूयाः सञ्जय राजानं प्रज्ञाचक्षुषमीश्वरम् । दुर्य्योधनस्तव सुतः प्रविष्टो ह्रदमित्युत ॥४९॥ सुहृद्भिः

स्तादृशैर्हीनः पुत्रैर्भ्रातृभिरेव च। पाण्डवैश्च हृते राज्ये को नु जीवेत मादृशः ॥ ५० ॥ आचक्षीथाः सर्वमिदं माञ्च मुक्तं महाहवात्। अस्मिंस्तोयह्रदे सुप्तं जीवन्तं भृशविक्षतम् ॥ ५१ ॥ एवमुक्त्वा महाराज प्राविशत्तं ह्रदं नृपः। अस्तम्भयत तोयञ्च मायया मनुजाधिपः ॥ ५२ ॥ तस्मिन् ह्रदं प्रविष्टे तु त्रीन्रथान् श्रान्तवाहनान्। अपश्यं सहितानेकस्तं देशं समुपेयुषः ॥ ५३ ॥ कृपं शारद्वतं वीरं द्रौणिञ्च रथिनां वरम्। भोजञ्च कृतवर्माणं सहितान् शरविक्षतान् ॥ ५४ ॥ ते सर्वे मामभिप्रेक्ष्य तूर्णमश्वान्नचोदयन्। उपयाय च मामूचुर्दिष्ट्या जीवसि सञ्जय ॥ ५५ ॥ अपृच्छंश्चैव ते सर्वे पुत्रं तव जनाधिपम्। कच्चिद्दुर्य्योधनो राजा स नो जीवति सञ्जय ॥ ५६ ॥ आख्यातवानहं तेभ्यस्तदा कुशलिनं नृपम्। तच्चैव सर्वमाचक्षं यन्मां दुर्य्योधनोऽब्रवीत्। ह्रदञ्चैवाहमाचक्षं यं प्रविष्टो नराधिपः ॥ ५७ ॥ अश्वत्थामा तु तद्राजन्निशम्य वचनं मम। तं ह्रदं विपुलं प्रेक्ष्य करुणं पर्य्यदेवयत् ॥५८॥ अहो धिङ् न स जानाति जीवतोऽस्मान्नराधिपः। पर्य्याप्ता हि वयं तेन सह योधयितुं परान् ॥ ५९ ॥ ते तु तत्र चिरं कालं विलप्य च महारथाः। प्राद्रवन् रथिनां श्रेष्ठा दृष्ट्वा पाण्डुसुतान्रणे ॥ ६० ॥ ते तु मां रथमारोप्य कृपस्य सुपरिष्कृतम्। सेनानिवेशमाजग्मुर्हतशेषास्त्रयो रथाः ॥ ६१ ॥ तत्र गुल्माः परित्रस्ताः सूर्य्ये चास्तमिते सति। सर्वे विचुक्रुशुः श्रुत्वा पुत्राणां तव सङ्क्षयम् ॥ ६२ ॥ ततो वृद्धा महाराज योषितां रक्षिणो नराः। राजदारानुपादाय प्रययुर्नगरं प्रति ॥ ६३ ॥ तत्र विक्रोशतीनाञ्च रुदतीनाञ्च सर्वशः। प्रादुरासीन्महाशब्दः श्रुत्वा तद्बलसङ्क्षयम् ॥ ६४ ॥ ततस्तु योषितो राजन् क्रन्दन्त्यो वै मुहुर्मुहुः। कुरर्य्य इव शब्देन नादयन्त्यो महीतलम् ॥ ६५ ॥ आजघ्नुः करजैश्चापि पाणिभिश्च शिरांस्युत। लुलुवुश्च तदा केशान् क्रोशन्त्यस्तत्र तत्र

ह ॥ ६६ ॥ हाहाकारविनादिन्यो विनिघ्नाना उरांसि च । क्रोश-
न्त्यस्तत्र रुरुदुः क्रन्दमाना विशाम्पते ॥ ६७ ॥ ततो दुर्य्योधना-
मात्याः साश्रुकण्ठा भयातुराः । राजदारानुपादाय प्रययुर्नगरं
प्रति । वेत्रव्यासक्तहस्ताश्च दाराध्यक्षा विशाम्पते ॥ ६८ ॥ शय-
नीयानि शुभ्राणि स्पर्द्ध्यास्तरणवन्ति च । समादाय ययुस्तूर्णं
नगरं जनरक्षिणः ॥ ६९ ॥ अदृष्टपूर्व्वा या नार्य्यो भास्करेणापि
वेश्मसु । ददृशुस्ता महाराज जना यान्तीः पुरं प्रति ॥ ७१ ॥
ताः स्त्रियो भरतश्रेष्ठ सौकुमार्य्यसमन्विताः । प्रययुर्नगरं तूर्णं
हतस्वजनबान्धवाः ॥ ७२ ॥ आगोपाला विपालेभ्यो द्रवन्तो नगरं
प्रति । ययुर्म्मनुष्याः संभ्रान्ता भीमसेनभयार्द्दिताः ॥७३ ॥ अपि
चैषां भयं तीव्रं पार्थेभ्योऽभूत् सुदारुणम् । प्रेक्षमाणास्तदा-
न्योऽन्यमधावन्नगरं प्रति ॥ ७४ ॥ तस्मिंस्तथा वर्त्तमाने विद्रवे
भृशदारुणे । युयुत्सुः शोकसंमूढ़ः प्राप्तकालमचिन्तयत् ॥ ७५ ॥
जितो दुर्य्योधनः सङ्ख्ये पाण्डवैर्भीमविक्रमैः । एकादशचमूभर्त्ता
भ्रातरश्चास्य सूदिताः ॥ ७६ ॥ हताश्च कुरवः सर्व्वे भीष्मद्रोण-
पुरःसराः । अहमेको विमुक्तस्तु भाग्ययोगाद्यदृच्छया ॥ ७७ ॥
विद्रुतानि च सर्व्वाणि शिविराणि समन्ततः । इतस्ततः पलायन्ते
हतनाथा हतौजसः ॥ ७८ ॥ अदृष्टपूर्व्वा दुःखार्त्ता भयव्याकुल-
लोचनाः । हरिणा इव वित्रस्ताः प्रेक्षमाणा दिशो दश ॥ ७९ ॥
दुर्य्योधनस्य सचिवा ये केचिदवशेषिताः । राजदारानुपादाय
व्यधावन्नगरं प्रति ॥ ८० ॥ प्राप्तकालमहं मन्ये प्रवेशं तैः सह
प्रभो । युधिष्ठिरमनुज्ञाप्य वासुदेवं तथैव च । एतदर्थं महा-
बाहुरुभयोः सन्न्यवेदयत् ॥ ८१ ॥ तस्य प्रीतोऽभवद्राजा नित्यं
करुणवेदिता । परिष्वज्य महाबाहुर्वैश्यापुत्रं व्यसर्ज्जयत् ॥ ८२ ॥
ततः स्वरथमास्थाय द्रुतमश्वानचोदयत् । सम्वाहयितवांश्चापि
राजदारान् पुरं प्रति ॥ ८३ ॥ तैश्चैव सहितः क्षिप्रमस्तं गच्छति

भास्करे। प्रविष्टो हास्तिनपुरं वास्पकण्ठोऽश्रुलोचनः ॥ ८४ ॥ अपश्यत महाप्राज्ञं विदुरं साश्रुलोचनम्। राज्ञः समीपनिष्क्रान्तं शोकोपहतचेतसम् ॥ ८५ ॥ तमब्रवीत् सत्यधृतिः प्रणतन्त्वग्रतः स्थितम्। अस्मिन् कुरुक्षये वृत्ते दिष्ट्या त्वं पुत्र जीवसि ॥ ८६ ॥ विना राज्ञः प्रवेशाद्वै किमसि त्वमिहागतः। एतन्मे कारणं सर्वं विस्तरेण निवेदय ॥ ८७ ॥

युयुत्सुरुवाच। निहते शकुनौ तात सज्ञातिसुतबान्धवे। हतशेषपरीवारो राजा दुर्य्योधनस्ततः। स्वकं स हयमुत्सृज्य प्राङ्मुखः प्राद्रवद्भयात् ॥ ८८ ॥ अपक्रान्ते तु नृपतौ स्कन्धावारनिवेशनात्। भयव्याकुलितं सर्वं प्राद्रवन्नगरं प्रति ॥ ८९ ॥ ततो राज्ञः कलत्राणि भ्रातॄणाञ्चास्य सर्वशः। वाहनेषु समारोप्य स्त्र्यध्यक्षाः प्राद्रवन् भयात् ॥ ९० ॥ ततोऽहं समनुज्ञाप्य राजानं सहकेशवम्। प्रविष्टो हास्तिनपुरं रक्षन् लोकान् प्रधावितान् ॥ ९१ ॥ एतत् श्रुत्वा तु वचनं वैश्यापुत्रेण भाषितम्। प्राप्तकालमिति ज्ञात्वा विदुरः सर्वधर्मवित्। अपूजयदमेयात्मा युयुत्सुं वाक्यकोविदम् ॥ ९२ ॥ प्राप्तकालमिदं सर्वं ब्रुवतो भरतक्षये। अद्य त्वमिह विश्रान्तः श्वोऽभिगन्ता युधिष्ठिरम् ॥ ९३ ॥ एतावदुक्त्वा वचनं विदुरः सर्वधर्मवित्। युयुत्सुं समनुज्ञाप्य प्रविवेश नृपक्षयम्। युयुत्सुरपि तां रात्रिं स्वगृहे न्यवसत्तदा ॥ ९४ ॥

इति शल्यपर्वणि ह्रदप्रवेशपर्वणि युयुत्सोर्नगरप्रवेशे
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

धृतराष्ट्र उवाच। हतेषु सर्वसैन्येषु पाण्डुपुत्रै रणाजिरे। मम सैन्यावशिष्टास्ते किमकुर्वत सञ्जय ॥ १ ॥ कृतवर्मा कृपश्चैव द्रोणपुत्रश्च वीर्य्यवान्। दुर्य्योधनश्च मन्दात्मा राजा किमकरोत्तदा ॥ २ ॥

सञ्जय उवाच । संप्रवृत्तस्तु दारेषु क्षत्रियाणां महात्मनाम् । विद्रुते शिविरे शून्ये भूयोहिमास्त्वनो रथाः ॥ ३ ॥ निशम्य पाण्डुपुत्राणां तदा विजयिनां स्वनम् । विद्रुतं शिविरं दृष्ट्वा सायाह्ने राजगृद्धिनः । स्थानं नारोचयंस्तत्र ततस्ते ह्रदमभ्ययुः ॥ ४ ॥ युधिष्ठिरोऽपि धर्मात्मा भ्रातृभिः सहितो रणे । हृष्टः पर्य्यचरद्राजन् दुर्य्योधनवधेप्सया ॥ ५ ॥ मार्गमाणास्तु संक्रुद्धास्तव पुत्रं जयैषिणः । यत्नतोऽन्वेषमाणास्तु नैवापश्यन् जनाधिपम् ॥ ६ ॥ स हि तीव्रेण वेगेन गदापाणिरपाक्रमत् । तं ह्रदं प्राविशच्चापि विष्टभ्यापः स्वमायया ॥ ७ ॥ यदा तु पाण्डवाः सर्व्वे सुपरिश्रान्तवाहनाः । ततः स्वशिबिरं प्राप्य व्यतिष्ठन्त ससैनिकाः ॥ ८ ॥ ततः कृपश्च द्रौणिश्च कृतवर्म्मा च सात्वतः । सन्निविष्टेषु पार्थेषु प्रयातास्तं ह्रदं शनैः ॥ ९ ॥ ते तं ह्रदं समासाद्य यत्र शेते जनाधिपः । अभ्यभाषन्त दुर्द्धर्षं राजानं सुप्तमम्भसि ॥ १० ॥ राजन्नुत्तिष्ठ युध्यस्व सहास्माभिर्युधिष्ठिरम् । जित्वा वा पृथिवीं भुङ्क्ष्व हतो वा स्वर्गमाप्नुहि ॥ ११ ॥ तेषामपि बलं सर्व्वं हतं दुर्य्योधन त्वया । प्रतिविद्धाश्च भूयिष्ठं ये शिष्टास्तत्र सैनिकाः ॥ १२ ॥ न ते वेगं विषहितुं शक्तास्तव विशाम्पते । अस्माभिरभिगुप्तस्य तस्मादुत्तिष्ठ भारत ॥ १३ ॥

दुर्य्योधन उवाच । दिष्ट्या पश्यामि वो मुक्तानीदृशात् पुरुषक्षयात् । पाण्डुकौरवसम्मर्द्दाज्जीवमानान्नरर्षभान् ॥ १४ ॥ विजेष्यामो वयं सर्व्वे विश्रान्ता विगतक्लमाः । भवन्तश्च परिश्रान्ता वयञ्च भृशविक्षताः । उदीर्णञ्च बलं तेषां तेन युद्धं न रोचये ॥ १५ ॥ न त्वेतदद्भुतं वीरा यद्वो महदिदं मनः । अस्मासु च परा भक्तिर्न तु कालः पराक्रमे ॥ १६ ॥ विश्रम्यैकां निशामद्य भवद्भिः सहितो रणे । प्रतियोत्स्याम्यहं शत्रून् श्वो न सेऽस्त्यत्र संशयः ॥ १७ ॥

सञ्जय उवाच । एवमुक्तोऽब्रवीद्द्रौणी राजानं युद्धदुर्मदम् ।

उत्तिष्ठ राजन् भद्रन्ते विजेष्यामो रणे परान्॥ १८॥ इष्टापूर्त्तेन दानेन सत्येन च जपेन च। शपे राजन् यथा ह्यद्य निहनिष्यामि सोमकान्॥ १९॥ मा स्म यज्ञकृतां प्रीतिं प्राप्नुयां सज्जनोचिताम्। यदीमां रजनीं व्युष्टां न निहन्मि परान्रणे॥ २०॥ नाहत्वा सर्व-पाञ्चालान् विमोच्य कवचं विभो। इति सत्यं ब्रवीम्येतत्तन्मे शृणु जनाधिप॥ २१॥ तेषु सम्भाषमाणेषु व्याधास्तं देशमाययुः। मांसभारपरिश्रान्ताः पानीयार्थं यदृच्छया॥ २२॥ ते हि नित्यं महाराज भीमसेनस्य लुब्धकाः। मांसभारानुपाजह्रुर्भक्त्या पर-मया विभो॥ २३॥ ते तत्राधिष्ठितास्तेषां सर्वं तद्वचनं रहः। दुर्य्योधनवचश्चैव शुश्रुवुः सङ्गता मिथः॥ २४॥ तेऽपि सर्वे महे-ष्वासा अयुद्धार्थिनि कौरवे। निर्बन्धं परमञ्चक्रुस्तदा वै युद्ध-काङ्क्षिणः॥ २५॥ तांस्तथा समुदीक्ष्याथ कौरवाणां महारथान्। अयुद्धमनसञ्चैव राजानं स्थितमम्भसि॥ २६॥ तेषां श्रुत्वा च संवादं राज्ञश्च सलिले सतः। व्याधाभ्यजानन् राजेन्द्र सलिलस्थं सुयोधनम्॥ २७॥ ते पूर्वं पाण्डुपुत्रेण पृष्टा ह्यासन् सुतं तव। यदृच्छोपगतास्तत्र राजानं परिमार्गता॥ २८॥ ततस्ते पाण्डु-पुत्रस्य स्मृत्वा तद्भाषितं तदा। अन्योऽन्यमब्रुवन्राजन् मृगव्याधाः शनैरिदम्॥ २९॥ दुर्य्योधनं ख्यापयामो धनं दास्यति पाण्डवः। सुव्यक्तमिह नः ख्यातो ह्रदे दुर्य्योधनो नृपः॥ ३०॥ तस्माद्गच्छा-महे सर्वे यत्र राजा युधिष्ठिरः। आख्यातुं सलिले सुप्तं दुर्य्यो-धनममर्षणम्॥ ३१॥ धृतराष्ट्रात्मजं तस्मै भीमसेनाय धीमते। शयानं सलिले सर्वे कथयामो धनुर्भृते॥ ३२॥ स नो दास्यति सुप्रीतो धनानि बहुलान्युत। किं नो मांसेन शुष्केण परिक्लिष्टेन शोषिणा॥ ३३॥ एवमुक्त्वा तु ते व्याधाः संप्रहृष्टा धनार्थिनः। मांसभारानुपादाय प्रययुः शिबिरं प्रति॥ ३४॥ पाण्डवापि महा-राज लब्धलक्ष्याः प्रहारिणः। अपश्यमानाः समरे दुर्य्योधन-

मवस्थितम् ॥ ३५ ॥ निकृतिस्तस्य पापस्य ते पारं गमनेप्सवः।
चारान् संप्रेषयामासुः समन्तात्तद्रणाजिरे ॥ ३६ ॥ आगम्य तु
ततः सर्व्वे नष्टं दुर्य्योधनं नृपम्। न्यवेदयन्त सहिता धर्म्मराजस्य
सैनिकाः ॥ ३७ ॥ तेषां तद्वचनं श्रुत्वा चाराणां भरतर्षभ। चिन्ता-
मभ्यागमत्तीव्रां निश्वश्वास च पार्थिवः ॥ ३८ ॥ अथ स्थितानां
दीनानां पाण्डूनां भरतर्षभ। तस्माद्देशादपाक्रम्य त्वरिता लुब्धका
विभो ॥ ३९ ॥ आजग्मुः शिविरं दृष्ट्वा हृष्टा दुर्य्योधनं नृपम्।
वार्य्यमाणाः प्रविष्टाश्च भीमसेनस्य पश्यतः ॥ ४० ॥ ते तु पाण्डव-
मासाद्य भीमसेनं महाबलम्। तस्मै तत् सर्व्वमाचख्युर्यद्वृत्तं यच्च
वै श्रुतम् ॥ ४१ ॥ ततो वृकोदरो राजन् दत्त्वा तेषां धनं बहु।
धर्म्मराजाय तत् सर्व्वमाचचक्षे परन्तपः ॥ ४२ ॥ असौ दुर्य्योधनो
राजन् विज्ञातो मम लुब्धकैः। संस्तभ्य सलिलं शेते यस्यार्थे
परितप्स्यसे ॥ ४३ ॥ तद्वचो भीमसेनस्य प्रियं श्रुत्वा विशाम्पते।
अजातशत्रुः कौन्तेयो हृष्टोऽभूत् सह सोदरैः ॥ ४४ ॥ तञ्च श्रुत्वा
महेष्वासं प्रविष्टं सलिलं ह्रदम्। क्षिप्रमेव ततोऽगच्छत् पुरस्कृत्य
जनार्द्दनम् ॥ ४५ ॥ ततः किलकिलाशब्दः प्रादुरासीद्विशाम्पते।
पाण्डवानां प्रहृष्टानां पाञ्चालानाञ्च सर्व्वशः ॥ ४६ ॥ सिंहनादां-
स्ततश्चक्रुः क्ष्वेड़ांश्च भरतर्षभ। त्वरिताः क्षत्रिया राजन् जग्मु-
र्द्वैपायनं ह्रदम् ॥ ४७ ॥ ज्ञातः पापो धार्त्तराष्ट्रो दृष्टश्चेत्यसकृद्रणे।
प्राक्रोशन् सोमकास्तत्र हृष्टरूपाः समन्ततः ॥ ४८ ॥ तेषामाशु
प्रयातानां रथानां तत्र वेगिनाम्। बभूव तुमुलः शब्दो दिवस्पृक्
पृथिवीपते ॥ ४९ ॥ दुर्य्योधनं परीप्सन्तस्तत्र तत्र युधिष्ठिरम्।
अन्वयुस्त्वरितास्ते वै राजानं श्रान्तवाहनाः ॥ ५० ॥ अर्ज्जुनो भीम-
सेनश्च माद्रीपुत्रौ च पाण्डवौ। धृष्टद्युम्नश्च पाञ्चाल्यः शिखण्डी
चापराजितः ॥ ५१ ॥ उत्तमौजा युधामन्युः सात्यकिश्च महारथः।
पाञ्चालानाञ्च ये शिष्टा द्रौपदेयाश्च भारत। हयाश्च सर्व्वे नागाश्च

शतशश्च पदातयः ॥ ५२ ॥ ततः प्राप्तो महाराज धर्मराजः प्रताप-
वान् । द्वैपायनह्रदं ख्यातं यत्र दुर्य्योधनोऽभवत् । शीतामलजलं
ह्रदं द्वितीयमिव सागरम् ॥ ५३ ॥ मायया सलिलं स्तभ्य यत्रा-
भूत्ते स्थितः सुतः । अत्यद्भुतेन विधिना दैवयोगेन भारत ॥ ५४ ॥
सलिलान्तर्गतः शेते दुर्द्धर्षः कस्यचित् प्रभो । मानुषस्य मनुष्येन्द्र
गदाहस्तो जनाधिपः ॥ ५५ ॥ ततो दुर्य्योधनो राजा सलिलान्त-
र्गतो वसन् । शुश्रुवे तुमुलं शब्दं जलदोपमनिस्वनम् ॥ ५६ ॥
युधिष्ठिरस्तु राजेन्द्र तं ह्रदं सह सोदरैः । आजगाम महाराज
तव पुत्रवधाय वै ॥ ५७ ॥ महता शङ्खनादेन रथनेमिस्वनेन च ।
उर्द्ध्वं धुन्वन्महारेणुं कम्पयंश्चापि मेदिनीम् ॥ ५८ ॥ यौधिष्ठिरस्य
सैन्यस्य श्रुत्वा शब्दं महारथाः । कृतवर्म्मा कृपो द्रौणी राजान-
मिदमब्रुवन् ॥ ५९ ॥ इमे ह्यायान्ति संहृष्टाः पाण्डवाः जित-
काशिनः । अपयास्यामहे तावदनुजानातु नो भवान् ॥ ६० ॥
दुर्य्योधनस्तु तत् श्रुत्वा तेषां तत्र तरस्विनाम् । तथेत्युक्त्वा ह्रदं तं
वै माययास्तम्भयत् प्रभो ॥ ६१ ॥ ते त्वनुज्ञाप्य राजानं भृशं
शोकपरायणाः । जग्मुर्दूरं महाराज कृपप्रभृतयो रथाः ॥ ६२ ॥
ते गत्वा दूरमध्वानं न्यग्रोधं प्रेक्ष्य मारिष । न्यविशन्त भृशं श्रान्ता
चिन्तयन्तो नृपं प्रति ॥ ६३ ॥ विष्टभ्य सलिलं सुप्तो धार्त्तराष्ट्रो
महाबलः । पाण्डवाश्चापि संप्राप्तास्तं देशं युद्धमीप्सवः ॥ ६४ ॥
कथं नु युद्धं भविता कथं राजा भविष्यति । कथं नु पाण्डवा
राजन् प्रतिपत्स्यन्ति कौरवम् ॥ ६५ ॥ इत्येवं चिन्तयानास्तु
रथेभ्योऽश्वान् विमुच्य ते । तत्रासाञ्चक्रिरे राजन् कृपप्रभृतयो
रथाः ॥ ६६ ॥

इति शल्यपर्व्वणि ह्रदप्रवेशपर्व्वणि दुर्य्योधनान्वेषणे
त्रिंशोऽध्यायः ॥ ३० ॥

---

सञ्जय उवाच । ततस्तेष्वपयातेषु रथेषु त्रिषु पाण्डवाः । तं
ह्रदं प्रत्यपद्यन्त यत्र दुर्य्योधनोऽभवत् ॥ १ ॥ आसाद्य च कुरु-
श्रेष्ठ तदा द्वैपायनं ह्रदम् । स्तम्भितं धार्त्तराष्ट्रेण दृष्ट्वा तं
सलिलाशयम् । वासुदेवमिदं वाक्यमब्रवीत् कुरुनन्दनः ॥ २ ॥
पश्येमां धार्त्तराष्ट्रेण मायामप्सु प्रयोजिताम् । विष्टभ्य सलिलं
शेते नास्य मानुषतो भयम् ॥ ३ ॥ दैवीं मायामिमां कृत्वा सलि-
लान्तर्गतो ह्ययम् । निकृत्या निकृतिप्रज्ञो न मे जीवन् विमो-
च्यते ॥ ४ ॥ यद्यस्य समरे साह्यं कुरुते वज्रभृत् स्वयम् । तथा-
प्येनं हतं युद्धे लोका द्रक्ष्यन्ति माधव ॥ ५ ॥

वासुदेव उवाच । मायाविन इमां मायां मायया जहि
भारत । मायावी मायया वध्यः सत्यमेतद्युधिष्ठिर ॥ ६ ॥ क्रिया-
भ्युपायैर्बहुभिर्मायामप्सु प्रयोज्य च । जहि त्वं भरतश्रेष्ठ माया-
त्मानं सुयोधनम् ॥ ७ ॥ क्रियाभ्युपायैरिन्द्रेण निहता दैत्य-
दानवाः । क्रियाभ्युपायैर्बहुभिर्बलिर्बद्धो महात्मना ॥ ८ ॥ क्रिया-
भ्युपायैर्बहुभिर्हिरण्याक्षो महासुरः । हिरण्यकशिपुश्चैव क्रिययैव
निसूदितौ । वृत्रश्च निहतो राजन् क्रिययैव न संशयः ॥ ९ ॥
तथा पुलस्त्यतनयो रावणो नाम राक्षसः । रामेण निहतो राजन्
सानुबन्धः सहानुगः । क्रियया योगमास्थाय तथा त्वमपि विक्रम
॥ १० ॥ क्रियाभ्युपायैर्निहतौ पुरा राजन् पुरातनौ । तारकश्च
महादैत्यो विप्रचित्तिश्च वीर्य्यवान् ॥ ११ ॥ वातापिरिल्वलश्चैव
त्रिशिराश्च तथा विभो । सुन्दोपसुन्दावसुरौ क्रिययैव निसूदितौ
॥ १२ ॥ क्रियाभ्युपायैरिन्द्रेण त्रिदिवं भुज्यते विभो । क्रिया
बलवती राजन्नान्यत् किञ्चिद्युधिष्ठिर ॥ १३ ॥ दैत्याश्च दानवाश्चैव
राक्षसाः पार्थिवास्तथा । क्रियाभ्युपायैर्निहताः क्रियां तस्मात्
समाचर ॥ १४ ॥

सञ्जय उवाच । इत्युक्तो वासुदेवेन पाण्डवः संशितव्रतः ।

जलस्थं तं महाराज तव पुत्रं महाबलम्। अभ्यभाषत कौन्तेयः प्रहसन्निव भारत ॥ १५ ॥ सुयोधन किमर्थोऽयमारम्भोऽप्सु कृतस्त्वया। सर्वं क्षत्रं घातयित्वा स्वकुलञ्च विशाम्पते ॥ १६ ॥ जलाशयं प्रविष्टोऽद्य वाञ्छन् जीवितमात्मनः। उत्तिष्ठ राजन् युध्यस्व सहास्माभिः सुयोधन ॥ १७ ॥ स ते दर्पो नरश्रेष्ठ स च मानः क्व ते गतः। यस्त्वं संस्तभ्य सलिलं भीतो राजन् व्यवस्थितः ॥१८॥ सर्वे त्वां शूर इत्येवं जना जल्पन्ति संसदि। व्यर्थं तद्भवतो मन्ये शौर्य्यं सलिलशायिनः ॥ १९ ॥ उत्तिष्ठ राजन् युध्यस्व क्षत्रियोऽसि कुलोद्भवः। कौरवेयो विशेषेण कुले जन्म च संस्मर ॥ १० ॥ स कथं कौरवे वंशे प्रशंसन् जन्म चात्मनः। युद्धाद्भीतस्ततस्तोयं प्रविश्य प्रतितिष्ठसि ॥ २१ ॥ अयुद्धमव्यवस्थानं नैष धर्म्मः सनातनः। अनार्य्यजुष्टमस्वर्ग्यं रणे राजन् पलायनम् ॥ २२ ॥ कथं पारमगत्वा हि युद्धे त्वं वै जिजीविषुः। इमान्निपतितान् दृष्ट्वा पुत्रान् भ्रातॄन् पितॄंस्तथा ॥ २३ ॥ सम्बन्धिनो वयस्यांश्च मातुलान् बान्धवांस्तथा। घातयित्वा कथं तात ह्रदे तिष्ठसि साम्प्रतम् ॥ २४ ॥ शूरमानी न शूरस्त्वं मृषा वदसि भारत। शूरोऽहमिति दुर्बुद्धे सर्वलोकस्य शृण्वतः ॥ २५ ॥ न हि शूराः पलायन्ते शत्रून् दृष्ट्वा कथञ्चन। ब्रूहि वा त्वं यया धृत्या शूर त्यजसि सङ्गरम् ॥ २६ ॥ स त्वमुत्तिष्ठ युध्यस्व विनीय भयमात्मनः। घातयित्वा सर्वसैन्यं भ्रातॄंश्चैव सुयोधन ॥ २७ ॥ नेदानीं जीविते बुद्धिः कार्य्या धर्म्मचिकीर्षया। क्षत्रधर्म्ममपाश्रित्य त्वद्विधेन सुयोधन ॥ २८ ॥ यत्तु कर्णमपाश्रित्य शकुनिञ्चापि सौबलम्। अमर्त्त्य इव सम्मोहात्त्वमात्मानं न बुद्धवान् ॥ २९ ॥ तत् पापं सुमहत् कृत्वा प्रतियुध्यस्व भारत। कथं हि त्वद्विधो मोहात् रोचयेत पलायनम् ॥ ३० ॥ क्व ते तत् पौरुषं तात क्व च मानः सुयोधन। क्व च विक्रान्तता याता क्व च विस्फूर्जितं महत् ॥ ३१ ॥ क्व ते

हतास्तता याता किन्नु शेषे जलाशये। स त्वमुत्तिष्ठ युध्यस्व
स्वधर्म्मेण भारत ॥३२॥ अस्मांस्त्वं वा पराजित्य प्रशाधि पृथिवी-
मिमाम्। अथवा निहतोऽस्माभिर्भूमौ स्वप्स्यसि भारत ॥ ३३ ॥
एष ते परमो धर्म्मः सृष्टो धात्रा महात्मना। तं कुरुष्व यथा
तथ्यं राजा भव महारथ ॥ ३४ ॥

सञ्जय उवाच। एवमुक्तो महाराज धर्मपुत्रेण धीमता।
सलिलस्थस्तव सुत इदं वचनमब्रवीत् ॥ ३५ ॥

दुर्य्योधनो उवाच। नैतच्चित्रं महाराज यद्भीः प्राणिनमाविशेत्।
न च प्राणभयाद्भीतो व्यपयातोऽस्मि भारत ॥ ३६ ॥ अरथश्चानिषङ्गी
च निहतः पार्ष्णिसारथिः। एकश्चाप्यगणः सङ्ख्ये
प्रत्याश्वासमरोचयम् ॥ ३७ ॥ न प्राणहेतोर्न भयान्न विषादा-
द्विशाम्पते। इदमम्भः प्रविष्टोऽस्मि श्रमात्त्विदमनुष्ठितम् ॥ ३८ ॥
त्वञ्चाश्वसिहि कौन्तेय ये चाप्यनुगतास्तव। अहमुत्थाय वः सर्वान्
प्रतियोत्स्यामि संयुगे ॥ ३९ ॥

युधिष्ठिर उवाच। आश्वस्ता एव सर्वे स्म चिरं त्वां मृगयामहे।
तदिदानीं समुत्तिष्ठ युध्यस्वेह सुयोधन ॥ ४० ॥ हत्वा वा
समरे पार्थान् स्फीतं राज्यमवाप्नुहि। निहतो वा रणेऽस्माभि-
र्वीरलोकमवाप्स्यसि ॥ ४१ ॥

दुर्य्योधन उवाच। यदर्थं राज्यमिच्छामि कुरूणां कुरु-
नन्दन। त इमे निहताः सर्वे भ्रातरो मे जनेश्वर ॥ ४२ ॥ क्षीण-
रत्नाञ्च पृथिवीं हतक्षत्रियपुङ्गवाम्। नाभ्युत्सहाम्यहं भोक्तुं
विधवामिव योषितम् ॥ ४३ ॥ अद्यापि त्वहमाशंसे त्वां विजेतुं
युधिष्ठिर। भंक्त्वा पञ्चालपाण्डूनामुत्साहं भरतर्षभ ॥ ४४ ॥ न
त्विदानीमहं मन्ये कार्य्यं युद्धेन कर्हिचित्। द्रोणे कर्णे च
संशान्ते निहते च पितामहे ॥ ४५ ॥ अस्त्विदानीमियं राजन्
केवला पृथिवी तव। असहायो हि को राजा राज्यमिच्छेत्

प्रशासितुम् ॥ ४६ ॥ सुहृदस्तादृशान् हत्वा पुत्रान् भ्रातृन् पितृ-
नपि। भवद्भिश्च हृते राज्ये को नु जीवेत मादृशः ॥ ४७ ॥ अहं
वनं गमिष्यामि ह्यजिनैः प्रतिवासितः। रतिर्हि नास्ति मे राज्ये
हतपक्षस्य भारत ॥४८॥ हतबान्धवभूयिष्ठा हताश्वा हतकुञ्जरा।
एषा ते पृथिवी राजन् भुङ्क्ष्वैनां विगतज्वरः ॥ ४९ ॥ वनमेव
गमिष्यामि वसानो मृगचर्मणी। न हि मे निर्जनस्यास्ति जीवि-
तेऽद्य स्पृहा विभो ॥ ५० ॥ गच्छ त्वं भुङ्क्ष्व राजेन्द्र पृथिवीं
निहतेश्वराम्। हतयोधां नष्टरत्नां क्षीणवप्रां यथासुखम् ॥५१॥

सञ्जय उवाच। दुर्य्योधनं तव सुतं सलिलस्थं महायशाः।
श्रुत्वा तु करुणं वाक्यमभाषत युधिष्ठिरः ॥ ५२ ॥

युधिष्ठिर उवाच। आर्त्तप्रलापान्मा तात सलिलस्थः प्रभा-
षिथाः। नैतन्मनसि मे राजन् वाशितं शकुनेरिव ॥ ५३ ॥ यदि
वापि समर्थः स्यास्त्वं दानाय सुयोधन। नाहमिच्छेयमवनिं त्वया
दत्तां प्रशासितुम् ॥ ५४ ॥ अधर्म्मेण न गृह्णीयां त्वया दत्तां महो-
मिमाम्। न हि धर्म्मः स्मृतो राजन् क्षत्रियस्य प्रतिग्रहः ॥ ५५ ॥
त्वया दत्तां न चेच्छेयं पृथिवीमखिलामहम्। त्वान्तु युद्धे विनि-
र्ज्जित्य भोक्तास्मि वसुधामिमाम् ॥ ५६ ॥ अनीश्वरश्च पृथिवीं
कथं त्वं दातुमिच्छसि। त्वयेयं पृथिवी राजन् किन्न दत्ता तदैव
हि। धर्मतो याचमानानां शमार्थञ्च कुलस्य नः ॥ ५७ ॥ वार्ष्णेयं
प्रथमं राजन् प्रत्याख्याय महाबलम्। किमिदानीं ददासि त्वं
को हि ते चित्तविभ्रमः ॥ ५८ ॥ अभियुक्तस्तु को राजा दातु-
मिच्छेद्धि मेदिनीम्। न त्वमद्य महीं दातुमीशः कौरवनन्दन
॥ ५९ ॥ आच्छेत्तुं वा बलाद्राजन् स कथं दातुमिच्छसि। मां
तु निर्ज्जित्य संग्रामे पालयेमां वसुन्धराम् ॥ ६० ॥ सूच्यग्रेणापि
यद्भूमिरपिधीयेत भारत। तन्मात्रमपि चेन्मह्यं न ददाति पुरा
भवान् ॥ ६१ ॥ स कथं पृथिवीमेतां प्रददासि विशाम्पते। सूच्यग्रं

नात्यजः पूर्व्वं स कथं त्यजसि क्षितिम्॥ ६२॥ एवमैश्वर्य्यमासाद्य प्रशास्य पृथिवीमिमाम्। को हि मूढ़ो व्यवस्येत शत्रोर्दातुं वसुन्धराम्॥ ६३॥ त्वन्तु केवलमौर्ख्येन विमूढ़ो नावबुध्यसे। पृथिवीं दातुकामोऽपि जीवितेन विमोक्ष्यसे॥ ६४॥ अस्मान् वा त्वं पराजित्य प्रशाधि पृथिवीमिमाम्। अथवा निहतोऽस्माभिर्व्रज लोकाननुत्तमान्॥ ६५॥ आवयोर्जीवतो राजन् मयि च त्वयि च ध्रुवम्। संशयः सर्व्वभूतानां विजये नो भविष्यति॥ ६६॥ जीवितं तव दुष्प्रज्ञ मयि सम्प्रति वर्त्तते। जीवयेयं त्वहं कामं न तु त्वं जीवितुं क्षमः॥ ६७॥ दहने हि कृतो यत्नस्त्वयास्मासु विशेषतः। आशीविषैर्व्विषैश्चापि जले चापि प्रवेशनैः॥ ६८॥ त्वया विनिकृता राजन् राज्यस्य हरणेन च। अप्रियाणाञ्च वचनैर्द्रौपद्याः कर्षणेन च॥ ६९॥ एतस्मात् कारणात् पाप जीवितं तेन विद्यते। उत्तिष्ठोत्तिष्ठ युध्यस्व तत्ते श्रेयो भविष्यति॥ ७०॥ एवन्तु विविधा वाचो जययुक्ताः पुनः पुनः। कीर्त्तयन्ति स्म ते वीरास्तत्र तत्र जनाधिप॥ ७१॥

इति शल्यपर्व्वणि ह्रदप्रवेशपर्व्वणि दुर्य्योधनभर्त्सने एकत्रिंशोऽध्यायः॥ ३१॥ समाप्तञ्च ह्रदप्रवेशपर्व्व॥

---

## अथ गदायुद्धपर्व्व।

धृतराष्ट्र उवाच। एवं सन्तर्ज्ज्यमानस्तु मम पुत्रो महीपतिः। प्रकृत्या मन्युमान् वीरः कथमासीत् परन्तपः॥ १॥ न हि सन्तर्ज्जना तेन श्रुतपूर्व्वा कथञ्चन। राजभावेन मान्यश्च सर्व्वलोकस्य सोऽभवत्॥ २॥ यस्यातपत्रच्छायापि स्वका भानोस्तथा प्रभा। खेदायैवाभिमानित्वात् सहेत् सैवं कथं गिरः॥ ३॥ इयञ्च पृथिवी सर्व्वा सम्लेच्छाटविका भृशम् प्रसादाद्ध्रियते यस्य प्रत्यक्षं तव

सञ्जय ॥४॥ स तथा तर्ज्जमानस्तु पाण्डुपुत्रैर्विशेषतः । विहीनश्च स्वकैर्भृत्यैर्निर्ज्जने चावृतो भृशम् ॥५॥ स श्रुत्वा कटुका वाचो जययुक्ताः पुनः पुनः । किमब्रवीत् पाण्डवेयांस्तन्ममाचक्ष्व सञ्जय ॥६॥

सञ्जय उवाच । तर्ज्जमानस्तथा राजन्नुदकस्थस्तवात्मजः । युधिष्ठिरेण राजेन्द्र भ्रातृभिः सहितेन ह ॥ ७ ॥ स श्रुत्वा कटुकां वाचो विषमस्थो जनाधिपः । दीर्घमुष्णञ्च निश्वस्य सलिलस्थः पुनः पुनः ॥ ८ ॥ सलिलान्तर्गतो राजा धुन्वन् हस्तौ पुनः पुनः । मनश्चकार युद्धाय राजानञ्चाप्यभाषत ॥ ९ ॥

दुर्य्योधन उवाच । यूयं ससुहृदः पार्थाः सर्व्वे सरथवाहनाः । अहमेकः परिद्यूनो विरथो हतवाहनः ॥ १० ॥ आत्तशस्त्रै रथोपेतैर्बहुभिः परिवारितः । कथमेकः पदातिः सन्नशस्त्रो योद्धुमुत्सहे ॥ ११ ॥ एकैकेन तु मां यूयं योधयध्वं युधिष्ठिर । न ह्येको बहुभिर्वीरैर्न्याय्यो योधयितुं युधि ॥ १२ ॥ विशेषतो विकवचः श्रान्तश्चापत्समाश्रितः । भृशं विक्षतगात्रश्च श्रान्तवाहनसैनिकः ॥ १३ ॥ न मे त्वत्तो भयं राजन्न च पार्थाद्वृकोदरात् । फाल्गुनाद्वासुदेवाद्वा पाञ्चालेभ्योऽथ वा पुनः ॥ १४ ॥ यमाभ्यां युयुधानाद्वा ये चान्ये तव सैनिकाः । एकः सर्व्वानहं क्रुद्धो वारयिष्ये युधि स्थितः ॥ १५ ॥ धर्म्ममूला सतां कीर्त्तिर्म्मनुष्याणां जनाधिप । धर्म्मञ्चैवेह कीर्त्तिञ्च पालयन् प्रब्रवीम्यहम् ॥ १६ ॥ अहमुत्थाय वः सर्व्वान् प्रतियोत्स्यामि संयुगे । अनुगत्यागतान् सर्व्वानृतून् संवत्सरो यथा ॥१७॥ अद्य वः सरथान् साश्वानशस्त्रो विरथोऽपि सन् । नक्षत्राणीव सर्व्वाणि सविता रात्रिसङ्क्षये । तेजसा नाशयिष्यामि स्थिरीभवत पाण्डवाः ॥ १८ ॥ अद्यानृण्यं गमिष्यामि क्षत्रियाणां यशस्विनाम् । वाह्लीकद्रोणभीष्माणां कर्णस्य च महात्मनः ॥ १९ ॥ जयद्रथस्य शूरस्य भगदत्तस्य चोभयोः । मद्रराजस्य शल्यस्य भूरिश्रवस एव च ॥ २० ॥ पुत्त्राणां भरतश्रेष्ठ

शकुनेः सौबलस्य च। मित्राणां सुहृदाञ्चैव बान्धवानां तथैव च
॥ २१ ॥ आनृण्यमद्य गच्छामि हत्वा त्वां भ्रातृभिः सह। एता-
वदुक्त्वा वचनं विरराम जनाधिप ॥ २२ ॥

युधिष्ठिर उवाच। दिष्ट्या त्वमपि जानीषे क्षत्रधर्म्मं सुयो-
धन। दिष्ट्या ते वर्त्तते बुद्धिर्युद्धायैव महाभुज ॥ २३ ॥ दिष्ट्या
शूरोऽसि कौरव्य दिष्ट्या जानासि सङ्गरम्। यस्त्वमेको हि नः
सर्व्वान् संयुगे योद्धुमिच्छसि ॥ २४ ॥ एक एकेन सङ्गम्य यत्ते
सम्मतमायुधम्। तत्त्वमादाय युध्यस्व प्रेक्षकास्ते वयं स्थिताः ॥२५॥
अयमिष्टञ्च ते कामं वीर भूयो ददाम्यहम्। हत्वैकं भव नो राजा
हतो वा स्वर्गमाप्नुहि ॥ २६ ॥

दुर्य्योधन उवाच। एकश्चेद्योद्धुमाक्रन्दे शूरोऽद्य मम दीय-
ताम्। आयुधानामियञ्चापि वृता त्वत्सम्मते गदा ॥ २७ ॥ हन्त्वैकं
भवतामेकः शक्यं मां योऽभिमन्यते। पदातिर्गदया सङ्ख्ये स
युध्यतु मया सह ॥ २८ ॥ वृत्तानि रथयुद्धानि विचित्राणि पदे
पदे। इदमेकं गदायुद्धं भवत्वद्याद्भुतं महत् ॥ २९ ॥ अन्नाना-
मपि पर्य्यायं कर्त्तुमिच्छन्ति मानवाः। युद्धानामपि पर्य्यायो भव-
त्वनुमते तव ॥३०॥ गदया त्वां महाबाहो विजेष्यामि सहानुजम्।
पाञ्चालान् सृञ्जयांश्चैव ये चान्ये तव सैनिकाः। न हि मे सम्भ्रमो
जातु शक्रादपि युधिष्ठिर ॥ ३१ ॥

युधिष्ठिर उवाच। उत्तिष्ठोत्तिष्ठ गान्धारे मां योधय सुयो-
धन। एक एकेन सङ्गम्य संयुगे गदया बली ॥ ३२ ॥ पुरुषो
भव गान्धारे युध्यस्व सुसमाहितः। अद्य ते जीवितं नास्ति
यद्यपीन्द्रोऽपि तवाश्रयः ॥ ३३ ॥

सञ्जय उवाच। एतत् स नरशार्दूलो नामृष्यत तवात्मजः।
सलिलान्तर्गतः श्वभ्रे महानाग इव श्वसन् ॥ ३४ ॥ तथासौ
वाक्प्रतोदेन तुद्यमानः पुनः पुनः। वचो न ममृषे राजन्नुत्तमाश्वः

कयामिव॥ ३५॥ सङ्क्षोभ्य सलिलं वेगाद्गदामादाय वीर्य्यवान्।
अद्रिसारमयीं गुर्वीं काञ्चनाङ्गदभूषणाम्। अन्तर्ज्जलात् समुत्तस्थौ नागेन्द्र इव निःश्वसन्॥ ३६॥ स भित्त्वा स्तम्भितं तोयं स्कन्धे कृत्वायसीं गदाम्। उदतिष्ठत पुत्रस्ते प्रतपन्रश्मिवानिव॥ ३७॥ ततः शैक्यायसीं गुर्वीं जातरूपपरिष्कृताम्। गदां परामृशद्धीमान् धार्त्तराष्ट्रो महाबलः॥ ३८॥ गदाहस्तन्तु तं दृष्ट्वा सशृङ्गमिव पर्वतम्। प्रजानामिव संक्रुद्धं शूलपाणिमिव स्थितम्॥ ३९॥ स गदी भारतो भाति प्रतपन् भास्करो यथा॥ ४०॥ तमुत्तीर्णं महाबाहुं गदाहस्तमरिन्दमम्। मेनिरे सर्व्वभूतानि दण्डपाणिमिवान्तकम्॥ ४१॥ वज्रहस्तं यथा शक्रं शूलहस्तं यथा हरम्। ददृशुः सर्व्वपाञ्चालाः पुत्रं तव जनाधिपम्॥ ४२॥ तमुत्तीर्णन्तु संप्रेक्ष्य समहृष्यन्त सर्व्वशः। पाञ्चालाः पाण्डवेयाश्च तेऽन्योऽन्यस्य तलान्ददुः॥ ४३॥ अवहासन्तु तं मत्वा पुत्रो दुर्य्योधनस्तव। उद्वृत्य नयनं क्रुद्धो दिधक्षुरिव पाण्डवान्॥ ४४॥ त्रिशिखां भ्रुकुटीं कृत्वा सन्दष्टदशनच्छदः। प्रत्युवाच ततस्तान् वै पाण्डवान् सहकेशवान्॥ ४५॥

दुर्य्योधन उवाच। अस्यावहासस्य फलं प्रतिभोक्ष्यथ पाण्डवाः। गमिष्यथ हताः सद्यः सपाञ्चाला यमक्षयम्॥ ४६॥

सञ्जय उवाच। उत्थितश्च जलात्तस्मात् पुत्रो दुर्य्योधनस्तव। अतिष्ठत गदापाणी रुधिरेण समुक्षितः॥ ४७॥ तस्य शोणितदिग्धस्य सलिलेन समुक्षितम्। शरीरं स्म तदा भाति स्रवन्निव महीधरः॥ ४८॥ तमुद्यतगदं वीरं मेनिरे तत्र पाण्डवाः। वैवस्वतमिव क्रुद्धं किङ्करोद्यतपाणिनम्॥ ४९॥ स मेघनिनदो हर्षान्नर्द्दन्निव च गोवृषः। आजुहाव ततः पार्थान् गदया युधि वीर्य्यवान्॥ ५०॥

दुर्य्योधन उवाच। एकैकेन च मां यूयमासीदत युधिष्ठिर।

न ह्येको बहुभिर्न्याय्यो वीरो योधयितुं युधि॥ ५१॥ न्यस्तवर्म्मा विशेषेण श्रान्तश्चाप्सु परिप्लुतः। भृशं विक्षतगात्रश्च हतवाहन-सैनिकः॥ ५२॥ सर्व्वोपकरणैर्हीनं वर्म्मशस्त्रविवर्ज्जितम्। एका-किनं युध्यमानं पश्यन्तु दिवि देवताः॥ ५३॥ अवश्यमेव योद्धव्यं सर्व्वैरेव मया सह। युक्तं न युक्तमित्येतद्वेत्सि त्वञ्चैव सर्व्वदा॥ ५४॥

युधिष्ठिर उवाच। मा भूदियं तव प्रज्ञा कथमेवं सुयोधन। यदाभिमन्युं बहवो जघ्नुर्युधि महारथाः॥ ५५॥ क्षत्रधर्म्मं भृशं क्रूरं निरपेक्षं सुनिर्घृणम्। अन्यथा तु कथं हन्युरभिमन्युं तथा-गतम्॥ ५६॥ सर्व्वे भवन्तो धर्म्मज्ञाः सर्व्वे शूरास्तनुत्यजः। न्यायेन युध्यतां प्रोक्ता शक्रलोकगतिः परा॥ ५७॥ यद्येकस्तु न हन्तव्यो बहुभिर्द्धर्म्म एष वः। तदाभिमन्युं बहवो निजघ्नुस्त्वन्मते कथम् ॥ ५८॥ सर्व्वो विमृशते जन्तुः कृच्छ्रस्थो धर्म्मदर्शनम्। पदस्थः पिहितं द्वारं परलोकस्य पश्यति॥ ५९॥ आमुञ्च कवचं वीर मूर्द्धजान् यमयस्व च। यच्चान्यदपि ते नास्ति तदप्यादत्स्व भारत ॥ ६०॥ इममेकञ्च ते कामं वीर भूयो ददाम्यहम्। पञ्चानां पाण्डवेयानां येन युद्धमिहेच्छसि॥ ६१॥ तं हत्वा वै भवान्राजा हतो वा स्वर्गमाप्नुहि। ऋते च जीविताद्वीर युद्धे किं कुर्म्म ते प्रियम्॥ ६२॥

सञ्जय उवाच। ततस्तव सुतो राजन् वर्म्म जग्राह काञ्चनम्। विचित्रञ्च शिरस्त्राणं जाम्बूनदपरिष्कृतम्॥ ६३॥ सोऽवबद्धशिर-स्त्राणः शुभकाञ्चनवर्म्मभृत्। रराज राजन् पुत्रस्ते काञ्चनः शैल-राडिव॥ ६४॥ सन्नद्धः स गदी राजन् सज्जः संग्राममूर्द्धनि। अब्रवीत् पाण्डवान् सर्व्वान् पुत्रो दुर्य्योधनस्तव॥ ६५॥ भ्रातॄणां भवतामेको युध्यतां गदया मया। सहदेवेन वा योत्स्ये भीमेन नकुलेन वा॥ ६६॥ अथ वा फाल्गुनेनाद्य त्वया वा भरतर्षभ। योत्स्येऽहं सङ्गरं प्राप्य विजेष्ये च रणाजिरे॥ ६७॥ अहमद्य

गमिष्यामि वैरस्यान्तं सुदुर्गमम् । गदया पुरुषव्याघ्र हेमपट्टनिबद्धया ॥ ६८ ॥ गदायुद्धे न मे कश्चित् सदृशोऽस्तीति चिन्तये । गदया वो हनिष्यामि सर्वानेव समागतान् ॥ ६९ ॥ न मे समर्थाः सर्वे वै योद्धुं न्यायेन केचन । न युक्तमात्मना वक्तुमेवं गर्वोद्धतं वचः । अथ वा सफलं ह्येतत् करिष्ये भवतां पुरः ॥ ७० ॥ अस्मिन् मुहूर्त्ते सत्यं वा मिथ्या वैतद्भविष्यति । गृह्णातु च गदां यो वै योत्स्यतेऽद्य मया सह ॥ ७१ ॥

इति शल्यपर्वणि गदायुद्धपर्वणि युधिष्ठिरदुर्य्योधनसंवादे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

सञ्जय उवाच । एवं दुर्य्योधने राजन् गर्ज्जमाने मुहुर्मुहुः । युधिष्ठिरस्य संक्रुद्धो वासुदेवोऽब्रवीदिदम् ॥ १ ॥ यदि नाम ह्ययं युद्धे वरयेत्त्वां युधिष्ठिर । अर्जुनं नकुलञ्चैव सहदेवमथापि वा ॥ २ ॥ किमिदं साहसं राजंस्त्वया व्याहृतमीदृशम् । एकमेव निहत्याजौ भव राजा कुरुष्विति ॥ ३ ॥ एतेन हि कृता योग्या वर्षाणीह त्रयोदश । आयसे पुरुषे राजन् भीमसेनजिघांसया ॥ ४ ॥ कथं नाम भवेत् कार्य्यमस्माभिर्भरतर्षभ । साहसं कृतवांस्त्वन्तु ह्यनुक्रोशान्नृपोत्तम ॥ ५ ॥ नान्यमस्यानुपश्यामि प्रतियोद्धारमाहवे । ऋते वृकोदरात् पार्थात् स च नातिकृतश्रमः ॥ ६ ॥ तदिदं द्यूतमारब्धं पुनरेव यथा पुरा । विषमं शकुनेश्चैव तव चैव विशाम्पते ॥ ७ ॥ बली भीमः समर्थश्च कृती राजा सुयोधनः । बलवान् वा कृती वेति कृती राजन् विशिष्यते ॥ ८ ॥ सोऽयं राजंस्त्वया शत्रुः समे पथि निवेशितः । न्यस्तश्चात्मा सुविषमे कृच्छ्रामापादिता वयम् ॥ ९ ॥ को नु सर्वान् विनिर्ज्जित्य शत्रूनेकेन वैरिणा । कृच्छ्रप्राप्तेन च तथा हारयेद्राज्यमागतम् ॥ १० ॥

न हि पश्यामि तं लोके योऽद्य दुर्य्योधनं रणे। गदाहस्तं विजेतुं व शक्तः स्यादमरोऽपि हि ॥ ११ ॥ न त्वं भीमो न नकुलः सहदेवोऽथ फाल्गुनः। जेतुं न्यायेन शक्तो वै कृती राजा सुयोधनः ॥ १२ ॥ स कथं वदसे शत्रुं युध्यस्व गदयेति हि। एकञ्च नो निहत्याजौ भव राजेति भारत ॥ १३ ॥ वृकोदरं समासाद्य संशयो विजये हि नः। न्यायतो युध्यमानानां कृती ह्येष महाबलः ॥ १४ ॥ एकं वास्मान्निहत्य त्वं भव राजेति वै पुनः। नूनं न राज्यभागेषा पाण्डोः कुन्त्याश्च सन्ततिः। अत्यन्तवनवासाय सृष्टा भैक्षाय वा पुनः ॥ १५ ॥

भीमसेन उवाच। मधुसूदन मा कार्षीर्विषादं यदुनन्दन। अद्य पारं गमिष्यामि वैरस्य भृशदुर्गमम् ॥ १६ ॥ अहं सुयोधनं सङ्ख्ये हनिष्यामि न संशयः। विजयो वै ध्रुवः कृष्ण धर्मराजस्य दृश्यते ॥ १७ ॥ अध्यर्द्धेन गुणेनेयं गदा गुरुतरी मम। न तथा धार्त्तराष्ट्रस्य मा कार्षीर्माधव व्यथाम् ॥ १८ ॥ अहमेनं हि गदया संयुगे योद्धुमुत्सहे। भवन्तः प्रेक्षकाः सर्व्वे मम सन्तु जनार्द्दन ॥ १९॥ सामरानपि लोकांस्त्रीन्नानाशस्त्रधरान् युधि। योधयेयं रणे कृष्ण किमुताद्य सुयोधनम् ॥ २० ॥

सञ्जय उवाच। तथा सम्भाषमाणन्तु वासुदेवो वृकोदरम्। हृष्टः संपूजयामास वचनञ्चेदमब्रवीत् ॥ २१ ॥ त्वामाश्रित्य महाबाहो धर्मराजो युधिष्ठिरः। निहतारिः स्वकां दीप्तां श्रियं प्राप्ता न संशयः ॥ २२ ॥ त्वया विनिहताः सर्व्वे धृतराष्ट्रसुता रणे। राजानो राजपुत्राश्च नागाश्च विनिपातिताः ॥ २३ ॥ कलिङ्गा मागधाः प्राच्या गान्धाराः कुरवस्तथा। त्वामासाद्य महायुद्धे निहताः पाण्डनन्दन ॥ २४ ॥ हत्वा दुर्य्योधनञ्चापि प्रयच्छोर्व्वीं ससागराम्। धर्मराजाय कौन्तेय यथा विष्णुः शचीपतेः ॥२५॥ त्वाञ्च प्राप्य रणे पापो धार्त्तराष्ट्रो विनङ्क्ष्यति। त्वमस्य सक्थिनी

भङ्क्त्वा प्रतिज्ञां पालयिष्यसि ॥ २६ ॥ यत्नेन तु सदा पार्थ योद्धव्यो धृतराष्ट्रजः । कृती च बलवांश्चैव युद्धशौण्डश्च नित्यदा ॥ २७ ॥ ततस्तु सात्यकी राजन् पूजयामास पाण्डवम् ॥ २८ ॥ पाञ्चालाः पाण्डवेयाश्च धर्मराजपुरोगमाः । तद्वचो भीमसेनस्य सर्व एवाभ्यपूजयन् ॥ २९ ॥ ततो भीमबलो भीमो युधिष्ठिरमथा-ब्रवीत् । सृञ्जयैः सह तिष्ठन्तं तपन्तमिव भास्करम् ॥ ३० ॥ अह-मेतेन सङ्गम्य संयुगे योद्धुमुत्सहे । न हि शक्तो रणे जेतुं मामेष पुरुषाधमः ॥ ३१ ॥ अद्य क्रोधं विमोक्ष्यामि निहितं हृदये भृशम् । सुयोधने धार्त्तराष्ट्रे खाण्डवेऽग्निमिवार्जुनः ॥ ३२ ॥ शल्यमद्योद्धरिष्यामि तव पाण्डव हृच्छयम् । निहत्य गदया पाप-मद्य राजन् सुखी भव ॥ ३३ ॥ अद्य कीर्त्तिमयीं मालां प्रति-मोक्ष्ये तवानघ । प्राणान् श्रियञ्च राज्यञ्च मोक्ष्यतेऽद्य सुयोधनः ॥ ३४ ॥ राजा च धृतराष्ट्रोऽद्य श्रुत्वा पुत्रं मया हतम् । स्मरि-ष्यत्यशुभं कर्म यत्तच्छकुनिबुद्धिजम् ॥ ३५ ॥ इत्युक्त्वा भरतश्रेष्ठो गदामुद्यम्य वीर्य्यवान् । उदतिष्ठत युद्धाय शक्रो वृत्रमिवाह्वयन् ॥ ३६ ॥ तदाह्वानममृष्यन् वै तव पुत्रोऽतिवीर्य्यवान् । प्रत्युपस्थित एवाशु मत्तो मत्तमिव द्विपम् ॥ ३७ ॥ गदाहस्तं तव सुतं युद्धाय समुपस्थितम् । ददृशुः पाण्डवाः सर्वे कैलासमिव शृङ्गिणम् ॥ ३८ ॥ तमेकाकिनमासाद्य धार्त्तराष्ट्रं महाबलम् । वियुथमिव मातङ्गं समहृष्यन्त पाण्डवाः ॥ ३९ ॥ न सम्भ्रमो न च भयं न च ग्लानिर्न च व्यथा । आसीद्दुर्य्योधनस्यापि स्थितः सिंह इवाहवे ॥ ४० ॥ तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम् । भीमसेनस्तदा राजन् दुर्य्योधनमथाब्रवीत् ॥ ४१ ॥ राज्ञापि धृतराष्ट्रेण त्वया चास्मासु यत् कृतम् । स्मर तद्दुष्कृतं कर्म यद्वृत्तं वारणावते ॥ ४२ ॥ द्रौपदी च परिक्लिष्टा सभामध्ये रजस्वला । द्यूते यद्विजितो राजा शकुने-र्बुद्धिनिश्चयात् ॥ ४३ ॥ यानि चान्यानि दुष्टात्मन् पापानि कृत-

वानसि। अनागःसु च पार्थेषु तस्य पश्य महत् फलम् ॥ ४४ ॥
त्वत्कृते निहतः शेते शरतल्पे महायशाः। गाङ्गेयो भरतश्रेष्ठः
सर्व्वेषां नः पितामहः ॥ ४५ ॥ हतो द्रोणश्च कर्णश्च हतः शल्यः
प्रतापवान्। वैरस्य चादिकर्त्तासौ शकुनिर्निहतो युधि ॥ ४६ ॥
भ्रातरस्ते हताः शूराः पुत्राश्च सहसैनिकाः। राजानश्च हताः
शूराः समरेष्वनिवर्त्तिनः ॥ ४७ ॥ एते चान्ये च निहता बहवः
क्षत्रियर्षभाः। प्रातिकामी तथा पापो द्रौपद्याः क्लेशकृद्धतः ॥ ४८ ॥
अवशिष्टस्त्वमेवैकः कुलघ्नोऽधमपूरुषः। त्वामप्यद्य हनिष्यामि
गदया नात्र संशयः ॥ ४९ ॥ अद्य तेऽहं रणे दर्पं सर्वं नाशयिता
नृप। राज्याशां विपुलां राजन् पाण्डवेषु च दुष्कृतम् ॥ ५० ॥

दुर्य्योधन उवाच। किं कथितेन बहुना युध्यस्वाद्य मया सह।
अद्य तेऽहं विनेष्यामि युद्धश्रद्धां वृकोदर ॥ ५१ ॥ किं न पश्यसि
मां पाप गदायुद्धे व्यवस्थितम्। हिमवच्छिखराकारां प्रगृह्य
महतीं गदाम् ॥ ५२ ॥ गदिनं कोऽद्य मां पाप जेतुमुत्सहते
रिपुः। न्यायतो युध्यमानस्य देवेष्वपि पुरन्दरः ॥ ५३ ॥ यदेतत्
कथितं पूर्वं मदीयं दुर्विचेष्टितम्। सर्वं तन्न च मे किञ्चिच्छकितं
कर्त्तुमेव हि ॥ ५४ ॥ अरण्ये चापि वसतिं दास्यञ्च परवेश्मसु।
तथा रूपविपर्य्यासं कारिताः स्थ मया बलात् ॥ ५५ ॥ हताश्च
बान्धवास्तुभ्यं क्षयस्तुल्योऽयमावयोः। पतनं संप्रति तु मे यदि
नाम भवेद्युधि। तदतिश्लाघ्यमेव स्यात् कालो वा तत्र कारणम्
॥ ५६ ॥ अद्यापि न हि मे जेता धर्मेणास्ति रणाजिरे। छद्मना
वा विजेष्यध्वमकीर्त्तिः स्थास्यति ध्रुवम्। अधर्म्या चायशस्या च
पश्चात्तप्स्यथ वै ध्रुवम् ॥ ५७ ॥ मा वृथा गर्ज्ज कौन्तेय शार-
दाभ्रमिवाजलम्। दर्शयस्व बलं युद्धे यावत्तत्तेऽद्य विद्यते ॥ ५८ ॥
तस्य तद्वचनं श्रुत्वा पाण्डवाः सहसृञ्जयाः। सर्वे सम्पूजयामासु-
स्तद्वचो विजिगीषवः ॥ ५९ ॥ तं मत्तमिव मातङ्गं तलशब्देन

मानवाः। भूयः संहर्षयामास राजन् दुर्य्योधनं नृपम्॥ ६०॥
बृंहन्ति कुञ्जरास्तत्र हया ह्रेषन्ति चासकृत्। शस्त्राणि संप्रदी-
प्यन्ते पाण्डवानां जयैषिणाम्॥ ६१॥

इति शल्यपर्वणि गदायुद्धपर्वणि भीमदुर्य्योधनवाक्ये
त्रयस्त्रिंशोऽध्यायः॥ ३३॥

---

सञ्जय उवाच। तस्मिन् युद्धे महाराज सुसंवृत्ते सुदारुणे।
उपविष्टेषु सर्वेषु पाण्डवेषु महात्मसु॥ १॥ ततस्तालध्वजो राम-
स्तयोर्युद्ध उपस्थिते। श्रुत्वा तच्छिष्ययो राजन्नाजगाम हलायुधः
॥ २॥ तं दृष्ट्वा परमप्रीताः पाण्डवाः सहकेशवाः। उपगम्योप-
संगृह्य विधिवत् प्रत्यपूजयन्॥ ३॥ पूजयित्वा ततः पश्चादिदं
वचनमब्रुवन्। शिष्ययोः कौशलं युद्धे पश्य रामेति पार्थिव॥४॥
अब्रवीच्च तदा रामो दृष्ट्वा कृष्णं सपाण्डवम्। दुर्य्योधनञ्च कौरव्यं
गदापाणिमवस्थितम्॥ ५॥ चत्वारिंशदहान्यद्य द्वे च मे निःसृतस्य
वै। पुष्येण संप्रयातोऽस्मि श्रवणे पुनरागतः। शिष्ययोर्वै गदा-
युद्धं द्रष्टुकामोऽस्मि माधव॥ ६॥ ततस्तदा गदाहस्तौ दुर्य्यो-
धनवृकोदरौ। युद्धभूमिगतौ वीरावुभावेव विरेजतुः॥ ७॥ ततो
युधिष्ठिरो राजा परिष्वज्य हलायुधम्। स्वागतं कुशलञ्चास्मै
पर्य्यपृच्छद्यथातथम्॥ ८॥ कृष्णौ चापि महेष्वासावभिवाद्य हला-
युधम्। सस्वजाते परिप्रीतौ प्रीयमाणौ यशस्विनौ॥ ९॥ माद्री-
पुत्रौ तथा शूरौ द्रौपद्याः पञ्च चात्मजाः। अभिवाद्य स्थिता राज-
न्रौहिणेयं महाबलम्॥ १०॥ भीमसेनोऽथ बलवान् पुत्रस्तव
जनाधिप। तथैव चोद्यतगदौ पूजयामासतुर्बलम्॥ ११॥ स्वाग-
तेन च तं तत्र प्रतिपूज्य नराधिपाः। पश्य युद्धं महाबाहो इति
ते राममब्रुवन्। एवमूचुर्महात्मानं रौहिणेयं महारथाः॥ १२॥

परिष्वज्य तदा रामः पाण्डवान् सृञ्जयानपि। अपृच्छत् कुशलं सर्व्वान् पार्थिवांश्चामितौजसः। तथैव ते समासाद्य पप्रच्छुस्तमनामयम् ॥ १३ ॥ प्रत्यभ्यर्च्य हली सर्व्वान् क्षत्रियांश्च महात्मनः। कृत्वा कुशलसंयुक्तां संविदञ्च यथावयः ॥ १४ ॥ जनार्द्दनं सात्यकिञ्च प्रेम्णा स परिषस्वजे। मूर्द्ध्नि चैतावुपाघ्राय कुशलं पर्य्यपृच्छत ॥ १५ ॥ तौ चैनं विधिवद्राजन् पूजयामासतुर्गुरुम्। ब्रह्माणमिव देवेशमिन्द्रोपेन्द्रौ मुदायुतौ ॥ १६ ॥ ततोऽब्रवीद्धर्म्मसुतो रौहिणेयमरिन्दमम्। इदं भ्रात्रोर्म्महायुद्धं पश्य रामेति भारत ॥ १७ ॥ तेषां मध्ये महाबाहुः श्रीमान् केशवपूर्व्वजः। न्यविशत् परमप्रीतः पूज्यमानो महारथैः ॥ १८ ॥ स बभौ राजमध्यस्थो नीलवासाः सितप्रभः। दिवीव नक्षत्रगणैः परिकीर्णो निशाकरः ॥ १९ ॥ ततस्तयोः सन्निपातस्तुमुलो लोमहर्षणः। आसीदन्तकरो राजन् वैरस्य तव पुत्रयोः ॥ २० ॥

इति शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवागमने
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

जनमेजय उवाच। पूर्व्वमेव यदा रामस्तस्मिन् युद्ध उपस्थिते। आमन्त्र्य केशवं यातो वृष्णिभिः सहितः प्रभुः ॥ १ ॥ साहाय्यं धार्त्तराष्ट्रस्य न च कर्त्तास्मि केशव। न चैव पाण्डुपुत्राणां गमिष्यामि यथागतम् ॥ २ ॥ एवमुक्त्वा तदा रामो यातः शत्रुनिवर्हणः। तस्य चागमनं भूयो ब्रह्मन् शंसितुमर्हसि ॥ ३ ॥ आख्याहि मे विस्तरतः कथं राम उपस्थितः। कथञ्च दृष्टवान् युद्धं कुशलो ह्यसि मे मतः ॥ ४ ॥

वैशम्पायन उवाच। उपप्लव्यनिविष्टेषु पाण्डवेषु महात्मसु। प्रेषितो धृतराष्ट्रस्य समीपं मधुसूदनः। शमम्प्रति महाबाहो

हितार्थं सर्वदेहिनाम् ॥ ५ ॥ स गत्वा हास्तिनपुरं धृतराष्ट्रं समेत्य च। उक्तवान् वचनं तथ्यं हितञ्चैव विशेषतः ॥ ६ ॥ न च तत् कृतवान्राजा यथाख्यातं हि ते पुरा ॥ ७ ॥ अनवाप्य शमं तत्र कृष्णः पुरुषसत्तमः। आगच्छत महाबाहुरुपप्लव्यं जनाधिप ॥ ८ ॥ ततः प्रत्यागतः कृष्णो धार्त्तराष्ट्रविसर्ज्जितः। अक्रियायां नरव्याघ्र पाण्डवानिदमब्रवीत् ॥ ९ ॥ न कुर्वन्ति वचो मह्यं कुरवः कालचोदिताः। निर्गच्छध्वं पाण्डवेयाः पुष्येण सहिता मया ॥ १० ॥ ततो विभज्यमानेषु वलेषु वलिनां वरः। प्रोवाच भ्रातरं कृष्णं रौहिणेयो महामनाः ॥ ११ ॥ तेषामपि महावाहो साहाय्यं मधुसूदन। क्रियतामिति तत् कृष्णो नास्य चक्रे वचस्तदा ॥ १२ ॥ ततो मन्युपरीतात्मा जगाम यदुनन्दनः। तीर्थयात्रां हलधरः सरस्वत्यां महायशाः ॥ १३ ॥ मैत्रनक्षत्रयोगेण सहितः सर्वयादवैः। आश्रयामास भोजस्तु दुर्य्योधनमरिन्दमम्। युयुधानेन सहितो वासुदेवस्तु पाण्डवान् ॥ १४ ॥ रौहिणेये गते शूरे पुष्येण मधुसूदनः। पाण्डवेयान् पुरस्कृत्य ययावभिमुखः कुरून् ॥ १५ ॥ गच्छन्नेव पथिस्थस्तु रामः प्रेष्यानुवाच ह। सम्भारांस्तीर्थयात्रायाः सर्वोपकरणानि च। आनयध्वं द्वारकायामग्नीन् वै याजकांस्तथा ॥ १६ ॥ सुवर्णं रजतञ्चैव धेनुर्वासांसि वाजिनः। कुञ्जरांश्च रथांश्चैव खरोष्ट्रवाहनानि च ॥ १७ ॥ क्षिप्रमानीयतां सर्वं तीर्थहेतोः परिच्छदम्। प्रतिस्रोतः सरस्वत्या गच्छध्वं शीघ्रगामिनः ॥ १८ ॥ ऋत्विजश्चानयध्वं वै शतशश्च द्विजर्षभान्। एवं सन्दिश्य तु प्रेष्यान् वलदेवो महावलः ॥ १९ ॥ तीर्थयात्रां ययौ राजन् कुरूणां वैशसे तदा। सरस्वतीं प्रतिस्रोतः समन्तादभिजग्मिवान् ॥ २० ॥ ऋत्विग्भिश्च सुहृद्भिश्च तथान्यैर्द्विजसत्तमैः। रथैर्गजैस्तथाश्वैश्च प्रेष्यैश्च भरतर्षभ। गोखरोष्ट्रप्रयुक्तैश्च यानैश्च बहुभिर्वृतः ॥ २१ ॥ श्रान्तानां क्लान्तवपुषां

श्रिगूनां विपुलायुषाम् । देशे देशे तु देयानि दानानि विविधानि च । अर्थाये चार्थिनां राजन् कॢप्तानि बहुशस्तथा ॥ २२ ॥ यो यो यत्र द्विजो भोज्यं भोक्तुं कामयते तदा । तस्य तस्य तु तत्रैव-मुपाजह्रुस्तदा नृप ॥ २३ ॥ तत्र स्थिता नरा राजन्नौहिणेयस्य शासनात् । भक्ष्यपेयस्य कुर्वन्ति राशींस्तत्र समन्ततः ॥२४॥ वासांसि च महार्हाणि पर्य्यङ्कास्तरणानि च । पूजार्थं तत्र कॢप्तानि विप्राणां सुखमिच्छताम् ॥ २५ ॥ यत्र यः स्वदते विप्रः क्षत्रियो वापि भारत । तत्र तत्र तु तस्यैव सर्वं कॢप्तमदृश्यत ॥ २६ ॥ यथासुखं जनः सर्वो याति तिष्ठति वै तदा । यातुकामस्य यानानि पानानि तृषितस्य च ॥ २७ ॥ बुभुक्षितस्य चान्नानि स्वादूनि भरतर्षभ । उपाजह्रुर्नरास्तत्र वस्त्राण्याभरणानि च ॥ २८ ॥ स पन्थाः प्रबभौ राजन् सर्वस्यैव सुखावहः । स्वर्गोपमस्तदा वीर नराणां तत्र गच्छताम् ॥ २९ ॥ नित्यप्रमुदितोपेतः स्वादुभक्ष्यशुभान्वितः । विपण्यापणपण्यानां नानाजनशतैर्वृतः । नानाद्रुमलतोपेतो नानारत्नविभूषितः ॥ ३० ॥ ततो महात्मा नियमे स्थितात्मा पुण्येषु तीर्थेषु वसूनि राजन् । ददौ द्विजेभ्यः क्रतुदक्षिणाश्च यदुप्रवीरो हलभृत् प्रतीतः ॥ ३१ ॥ दोग्ध्रीश्च धेनूश्च सहस्रशो वै सुवाससः काञ्चनबद्धशृङ्गीः । हयांश्च नानाविधदेशजातान् यानानि दासांश्च शुभान् द्विजेभ्यः ॥ ३२ ॥ रत्नानि मुक्तामणिविद्रुमञ्च शृङ्गीसुवर्णं रजतं सुशृङ्गम् । अयस्मयं ताम्रमयञ्च भाण्डं ददौ द्विजातिप्रवरेषु रामः ॥ ३३ ॥ एवं स वित्तं प्रददौ महात्मा सरस्वतीतीर्थवरेषु भूरि । ययौ क्रमेणाप्रतिमप्रभावस्ततः कुरुक्षेत्रमुदारवृत्तिः ॥३४॥

जनमेजय उवाच । सारस्वतानां तीर्थानां गुणोत्पत्तिं वदस्व मे । फलञ्च द्विपदां श्रेष्ठ कर्मनिर्वृत्तिमेव च ॥ ३५ ॥ यथाक्रमेण भगवन् तीर्थानामानुपूर्व्वशः । ब्रह्मन् ब्रह्मविदां श्रेष्ठ परं कौतूहलं हि मे ॥ ३६ ॥

वैशम्पायन उवाच। तीर्थानां विस्तरं राजन् गुणोत्पत्तिञ्च सर्वशः। मयोच्यमानं वै पुण्यं शृणु राजेन्द्र कृत्स्नशः॥ ३७॥ पूर्वं महाराज यदुप्रवीर ऋत्विक्सुहृद्विप्रगणैश्च सार्द्धम्। पुण्यं प्रभासं समुपाजगाम यत्रोडुराड्यक्ष्मणा क्लिश्यमान ॥३८॥ विमुक्तशापः पुनराप्य तेजः सर्वं जगद्भासयते नरेन्द्र। एवन्तु तीर्थप्रवरं पृथिव्यां प्रभासनात्तस्य ततः प्रभासः॥ ३९॥

जनमेजय उवाच। किमर्थं भगवान् सोमो यक्ष्मणा समगृह्यत। कथञ्च तीर्थप्रवरे तस्मिंश्चन्द्रो न्यमज्जत:॥ ४०॥ कथमाप्लुत्य तस्मिंस्तु पुनराप्यायितः शशी। एतन्मे सर्वमाचक्ष्व विस्तरेण महामुने॥ ४१॥

वैशम्पायन उवाच। दक्षस्य तनया यास्ताः प्रादुरासन् विशाम्पते। स सप्तविंशतिं कन्या दक्षः सोमाय वै ददौ॥ ४२॥ नक्षत्रयोगनिरताः संख्यानार्थञ्च ताभवन्। पत्न्यो वै तस्य राजेन्द्र सोमस्य शुभकर्म्मणः॥ ४३॥ तास्तु सर्वा विशालाक्ष्यो रूपेणाप्रतिमा भुवि। अत्यरिच्यत तासान्तु रोहिणी रूपसम्पदा॥ ४४॥ ततस्तस्यां स भगवान् प्रीतिञ्चक्रे निशाकरः। सास्य हृद्या बभूवाथ तस्मात्तां बुभुजे सदा॥ ४५॥ पुरा हि सोमो राजेन्द्र रोहिण्यामवसच्चिरम्। ततस्ताः कुपिताः सर्वा नक्षत्राख्या महात्मनः॥४६॥ ता गत्वा पितरं प्राहुः प्रजापतिमतन्द्रिताः। सोमो वसति नास्मासु रोहिणीं भजते सदा॥ ४७॥ ता वयं सहिताः सर्वास्त्वत्सकाशे प्रजेश्वर। वत्स्यामो नियताहारास्तपश्चरणतत्पराः॥ ४८॥ श्रुत्वा तासान्तु वचनं दक्षः सोममथाब्रवीत्। समं वर्त्तस्व भार्य्यासु मा त्वधर्मो महान् स्पृशेत्॥ ४९॥ ताश्च सर्वाब्रवीद्दक्षो गच्छध्वं शशिनोऽन्तिकम्। समं वर्त्स्यति सर्वासु चन्द्रमा मम शासनात्॥५०॥ विसृष्टास्तास्तथा जग्मुः शीतांशुभवनं तदा। तथापि सोमो भगवान् पुनरेव महीपते। रोहिणीं निवसत्येव प्रीयमाणो मुहु-

मुहुः ॥ ५१ ॥ ततस्ताः सहिता सर्वा भूयः पितरमब्रुवन् । तव शुश्रूषणे युक्ता वत्स्यामो हि तवाश्रमे । सोमो वसति नास्मासु नाकरोद्वचनं तव ॥ ५२ ॥ तासां तद्वचनं श्रुत्वा दक्षः सोममथाब्रवीत् । समं वर्त्तस्व भार्य्यासु मा त्वां शप्स्ये विरोचन ॥ ५३ ॥ अनादृत्य तु तद्वाक्यं दक्षस्य भगवान् शशी । रोहिण्या सार्द्धमवसत्ततस्ताः कुपिताः पुनः ॥ ५४ ॥ गत्वा च पितरं प्राहुः प्रणम्य शिरसा तदा । सोमो वसति नास्मासु तस्मान्नः शरणं भव ॥ ५५ ॥ रोहिन्यामेव भगवन् सदा वसति चन्द्रमाः । न त्वद्वचो गणयति नास्मासु स्नेहमिच्छति । तस्मान्नस्त्राहि सर्व्वा वै यथा नः सोम आविशेत् ॥ ५६ ॥ तच्छ्रुत्वा भगवान् क्रुद्धो यक्ष्माणं पृथिवीपते । ससर्ज्ज रोषात् सोमाय स चोडुपतिमाविशत् ॥ ५७ ॥ स यक्ष्मणाभिभूतात्मा क्षीयताहरहः शशी । यत्नञ्चाप्यकरोद्राजन् मोक्षार्थं तस्य यक्ष्मणः ॥ ५८ ॥ इष्टेष्टिभिर्म्महाराज विविधाभिर्निशाकरः । न चामुच्यत शापाद्वै क्षयञ्चैवाभ्यगच्छत ॥ ५९ ॥ क्षीयमाणे ततः सोमे ओषध्यो न प्रजज्ञिरे । निरास्वादरसाः सर्व्वा हतवीर्य्याश्च सर्व्वतः ॥ ६० ॥ ओषधीनां क्षये जाते प्राणिनामपि सङ्क्षयः । कृशाश्चासन् प्रजाः सर्व्वाः क्षीयमाणे निशाकरे ॥ ६१ ॥ ततो देवाः समागम्य सोममूचुर्म्महीपते । किमिदं भवतो रूपमीदृशं न प्रकाशते । कारणं ब्रूहि नः सर्व्वं येनेदं ते महद्भयम् ॥ ६२ ॥ श्रुत्वा च वचनं त्वत्तो विधास्यामस्ततोऽभयम् । एवमुक्तः प्रत्युवाच सर्व्वांस्तान् शशलक्षणः । शापस्य कारणञ्चैव यक्ष्माणञ्च तथात्मनः ॥ ६३ ॥ देवास्तथा वचः श्रुत्वा गत्वा दक्षमथाब्रुवन् । प्रसीद भगवन् सोमे शापोऽयं विनिवर्त्तताम् ॥ ६४ ॥ असौ हि चन्द्रमाः क्षीणः किञ्चिच्छेषो हि लक्ष्यते । क्षयाच्चैवास्य देवेश प्रजाश्चापि गताः क्षयम् । वीरुधौषधयश्चैव वीजानि विविधानि च ॥ ६५ ॥ तेषां क्षये क्षयोऽस्माकं विनास्माभिर्ज्जगच्च किम् । इति ज्ञात्वा

लोकगुरो प्रसादं कर्त्तुमर्हसि ॥ ६६ ॥ एवमुक्तस्ततो देवान् प्राह वाक्यं प्रजापतिः । नैतच्छक्यं मम वचो व्यावर्त्तयितुमन्यथा ॥६७॥ हेतुना तु महाभागा निवर्त्तिष्यति केनचित् । समं वर्त्ततु सर्वासु शशी भार्य्यासु नित्यशः ॥ ६८ ॥ सरस्वत्या वरे तीर्थे उन्मज्जन् शशलक्षणः । पुनर्वर्द्धिष्यते देवास्तद्वै सत्यं वचो मम ॥ ६९ ॥ मासार्द्धञ्च क्षयं सोमो नित्यमेव गमिष्यति । मासार्द्धन्तु सदा वृद्धिं सत्यमेतद्वचो मम ॥ ७० ॥ समुद्रं पश्चिमं गत्वा सरस्वत्यब्धिसङ्गमम् । आराधयतु देवेशं ततः कान्तिमवाप्स्यति ॥ ७१ ॥ सरस्वतीं ततः सोमः स जगामर्षिशासनात् । प्रभासं प्रथमं तीर्थं सरस्वत्या जगाम ह ॥ ७२ ॥ अमावस्यां महातेजास्तत्रोन्मज्जन् महाद्युतिः । लोकान् प्रभासयामास शीतांशुत्वमवाप च ॥ ७३ ॥ देवास्तु सर्वे राजेन्द्र प्रभासं प्राप्य पुष्कलम् । सोमेन सहिता भूत्वा दक्षस्य प्रमुखेऽभवन् ॥ ७४ ॥ ततः प्रजापतिः सर्वा विससर्ज्जाथ देवताः । सोमं च भगवान् प्रीतो भूयो वचनमब्रवीत् ॥ ७५ ॥ मावमंस्थाः स्त्रियः पुत्र मा च विप्रान् कदाचन । गच्छ युक्तः सदा भूत्वा कुरु वै शासनं मम ॥ ७६ ॥ स विसृष्टो महाराज जगामाथ स्वमालयम् । प्रजाश्च मुदिता भूत्वा पुनस्तस्थुर्यथा पुरा ॥ ७७ ॥ एवं ते सर्वमाख्यातं यथा शप्तो निशाकरः । प्रभासञ्च यथा तीर्थं तीर्थानां प्रवरं ह्यभूत् ॥ ७८ ॥ अमावास्यां महाराज नित्यशः शशलक्षणः । स्नात्वा ह्याप्यायते श्रीमान् प्रभासे तीर्थ उत्तमे ॥ ७९ ॥ अतश्चैनं प्रजानन्ति प्रभासमिति भूमिप । प्रभां हि परमां लेभे तस्मिन्नुन्मज्ज्य चन्द्रमाः ॥ ८० ॥ ततस्तु चमसोद्भेदमच्युतस्त्वगमद्बली । चमसोद्भेद इत्येवं यं जनाः कथयन्त्युत ॥ ८१ ॥ तत्र दत्त्वा च दानानि विशिष्टानि हलायुधः । उषित्वा रजनीमेकां स्नात्वा च विधिवत्तदा ॥ ८२ ॥ उदपानमथागच्छत् त्वरावान् केशवाग्रजः । आद्यं स्वस्त्ययनञ्चैव यत्रावाप्य महत्

फलम् ॥ ८३ ॥ स्निग्धत्वादोषधीनाञ्च भूमेश्च जनमेजय । जानन्ति स्विद्धा राजेन्द्र नष्टामपि सरस्वतीम् ॥ ८४ ॥

इति शल्यपर्वणि गदायुद्धपर्वणि बलदेवतीर्थयात्रायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

वैशम्पायन उवाच । तस्मान्नदीगतञ्चापि उदपानं यशस्विनः । त्रितस्य च महाराज जगामाथ हलायुधः ॥ १ ॥ तत्र दत्त्वा बहु द्रव्यं पूजयित्वा तथा द्विजान् । उपस्पृश्य च तत्रैव प्रहृष्टो मुषलायुधः ॥ २ ॥ तत्र धर्मपरो ह्यासीत्त्रितः स सुमहातपाः । कूपे च वसता तेन सोमः पीतो महात्मना ॥ ३ ॥ तत्र चैनं समुत्सृज्य भ्रातरौ जग्मतुर्गृहान् । ततस्तौ वै शशापाथ त्रितो ब्राह्मणसत्तमः ॥ ४ ॥

जनमेजय उवाच । उदपानं कथं ब्रह्मन् कथञ्च सुमहातपाः । पतितः किञ्च स त्यक्तो भ्रातृभ्यां द्विजसत्तमः ॥ ५ ॥ कूपे कथञ्च हित्वैनं भ्रातरौ जग्मतुर्गृहान् । कथञ्च याजयामास पपौ सोमञ्च वै कथम् । एतदाचक्ष्व मे ब्रह्मन् श्रोतव्यं यदि मन्यसे ॥ ६ ॥

वैशम्पायन उवाच । आसन् पूर्वयुगे राजन् मुनयो भ्रातरस्त्रयः । एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः ॥ ७ ॥ सर्व्वे प्रजापतिसमाः प्रजावन्तस्तथैव च । ब्रह्मलोकजितः सर्व्वे तपसा ब्रह्मवादिनः ॥ ८ ॥ तेषान्तु तपसा प्रीतो नियमेन दमेन च । अभवद्गौतमो नित्यं पिता धर्मरतः सदा ॥ ९ ॥ स तु दीर्घेण कालेन तेषां प्रीतिमवाप्य च । जगाम भगवान् स्थानमनुरूपमिवात्मनः ॥ १० ॥ राजानस्तस्य ये ह्यासन् याज्या राजन्महात्मनः । ते सर्व्वे स्वर्गते तस्मिंस्तस्य पुत्रानपूजयन् ॥ ११ ॥ तेषान्तु कर्म्मणा राजंस्तथा चाध्ययनेन च । त्रितः स श्रेष्ठतां प्राप यथैवास्य पिता

तथा॥ १२ ॥ तथा सर्वे महाभागा मुनयः पुण्यलक्षणाः। अपूजयन्महाभागं यथास्य पितरं पुरा॥ १३ ॥ कदाचिद्धि ततो राजन् भ्रातरावेकतद्वितौ। यज्ञार्थं चक्रतुश्चिन्तां तथा वित्तार्थमेव च॥ १४ ॥ तयोर्बुद्धिः समभवत् त्रितं गृह्य परन्तप। याज्यान् सर्वानुपादाय प्रतिगृह्य पशूंस्ततः॥ १५ ॥ सोमं पास्यामहे हृष्टाः प्राप्य यज्ञं महाफलम्। चक्रुश्चैव तथा राजन् भ्रातरस्त्रय एव च॥ १६ ॥ तथा तु ते परिक्रम्य याज्यान् सर्वान् पशून् प्रति। याजयित्वा ततो याज्यान् लब्ध्वा तु सुबहून् पशून् ॥१७॥ याज्येन कर्मणा तेन प्रतिगृह्य विधानतः। प्राचीं दिशं महात्मान आजग्मुस्ते महर्षयः॥ १८ ॥ त्रितस्तेषां महाराज पुरस्ताद्याति हृष्टवत्। एकतश्च द्वितश्चैव पृष्ठतः कालयन् पशून्॥ १९ ॥ तयोश्चिन्ता समभवद्दृष्ट्वा पशुगणं महत्। कथं नु स्युरिमा गाव आवाभ्यां हि विना त्रितम्॥ २० ॥ तावन्योऽन्यं समाभाष्य एकतश्च द्वितश्च ह। यदूचतुर्मिथः पापौ तन्निबोध जनेश्वर॥ २१ ॥ त्रितो यज्ञेषु कुशलस्त्रितो वेदेषु निष्ठितः। अन्यास्तु बहुला गावस्त्रितः समुपलप्स्यते॥ २२ ॥ तदावां सहितौ भूत्वा गाः प्रकाल्य व्रजावहे। त्रितोऽपि गच्छतां काममावाभ्यां वै विनाकृतः॥ २३ ॥ तेषामागच्छतां रात्रौ पथि स्थाने वृकोऽभवत्। तत्र कूपोऽविदूरेऽभूत् सरस्वत्यास्तटे महान्॥ २४ ॥ अथ त्रितो वृकं दृष्ट्वा पथि तिष्ठन्तमग्रतः। तद्भयादपसर्पन् वै तस्मिन् कूपे पपात ह॥ २५ ॥ अगाधे सुमहाघोरे सर्वभूतभयङ्करे। त्रितस्ततो महाराज कूपस्थो मुनिसत्तमः। आर्त्तनादं ततश्चक्रे तौ तु शुश्रुवतुर्मुनी॥ २६ ॥ तं ज्ञात्वा पतितं कूपे भ्रातरावेकतद्वितौ। वृकत्रासाच्च लोभाच्च समुत्सृज्य प्रजग्मतुः॥ २७ ॥ भ्रातृभ्यां पशुलुब्धाभ्यामुत्सृष्टः स महातपाः। उदपाने तदा राजन् निर्जने पांशुसंवृते॥ २८ ॥ त्रित आत्मानमालक्ष्य कूपे वीरुत्तृणावृते। निमग्नं भरतश्रेष्ठ

नरके दुष्कृती यथा ॥ २९ ॥ स बुद्ध्यागणयत् प्राज्ञो मृत्योर्भीतो
ह्यशोपमः। सोमः कथं नु पातव्य इतस्थेन मया भवेत् ॥ ३० ॥
स एवमभिनिश्चित्य तस्मिन् कूपे महातपाः। ददर्श वीरुधं तत्र
लम्बमानां यदृच्छया ॥ ३१ ॥ पांशुग्रस्ते ततः कूपे विचिन्त्य सलिलं
मुनिः। अग्नीन् सङ्कल्पयामास होत्रे चात्मानमेव च ॥ ३२ ॥
ततस्तां वीरुधं सोमं सङ्कल्प्य सुमहातपाः। ऋचो यजूंषि सामानि
मनसाचिन्तयन्मुनिः ॥ ३३ ॥ ग्रावाणः शर्क्कराः कृत्वा प्रचक्रेऽभिषवं
नृप। आज्यञ्च सलिलञ्चक्रे भागांश्च त्रिदिवौकसाम् ॥ ३४ ॥ सोम-
स्याभिषवं कृत्वा चकार तुमुलं ध्वनिम्। स चाविशद्दिवं राजन्
स्वनः शैक्षितस्य वै। समवाप च तं यज्ञं यथोक्तं ब्रह्मवादिभिः
॥ ३५ ॥ वर्त्तमाने तथा यज्ञे त्रितस्य सुमहात्मनः। आविग्नं
त्रिदिवं सर्वं कारणञ्च न बुध्यते। ततः सुतुमुलं शब्दं शुश्रावाथ
बृहस्पतिः ॥ ३६ ॥ श्रुत्वा चैवाब्रवीत् सर्वान् देवान् देवपुरोहितः।
त्रितस्य वर्त्तते यज्ञस्तत्र गच्छामहे सुराः ॥ ३७ ॥ स हि क्रुद्धः
सृजेदन्यान् देवानपि महातपाः ॥ ३८ ॥ तच्छ्रुत्वा वचनं तस्य
सहिताः सर्वदेवताः। प्रययुस्तत्र यत्रासौ त्रितयज्ञः प्रवर्त्तते ॥३९॥
ते तत्र गत्वा विबुधास्तं कूपं यत्र स त्रितः। ददृशुस्तं महात्मानं
दीक्षितं यज्ञकर्मसु ॥ ४० ॥ दृष्ट्वा चैनं महात्मानं श्रिया परमया
युतम्। ऊचुश्चाथ महाभागं प्राप्ता भागार्थिनो वयम् ॥ ४१ ॥
अथाब्रवीदृषिर्द्देवान् पश्यध्वं मां दिवौकसः। अस्मिन् प्रतिभये
कूपे निमग्नं नष्टचेतसम् ॥ ४२ ॥ ततस्त्रितो महाराज भागांस्तेषां
यथाविधि। मन्त्रयुक्तान् समददत्ते च प्रीतास्तदाभवन् ॥ ४३ ॥
ततो यथाविधि प्राप्तान् भागान् प्राप्य दिवौकसः। प्रीतात्मानो
ददुस्तस्मै वरान् यान् मनसेच्छसि ॥ ४४ ॥ स तु वव्रे वरं देवां-
स्त्रातुमर्हत मामितः ॥ ४५ ॥ यश्चेहोपस्पृशेत् कूपे स सोमपगतिं
लभेत् ॥ ४६ ॥ ततश्चोर्म्मिमती राजन्नुत्पपात सरस्वती। तया

क्षिप्तः समुत्तस्थौ पूजयंस्त्रिदिवौकसः ॥ ४७ ॥ तथेति चोक्त्वा विबुधा जग्मू राजन् यथागताः । त्रितश्चाप्यगमत् प्रीतः स्वमेव निलयं तदा ॥४८॥ क्रुद्धः स तु समासाद्य तावृषी भ्रातरौ तदा । उवाच परुषं वाक्यं शशाप च महातपाः ॥ ४९ ॥ पशुलुब्धौ युवां यस्मान्मामुत्सृज्य प्रधावितौ । तस्माद्वृकाकृती रौद्रौ दंष्ट्रिणावभितश्चरौ । भवितारौ मया शप्तौ पापेनानेन कर्मणा ॥ ५० ॥ प्रसवश्चैव युवयोर्गोलाङ्गूलर्क्षवानराः । इत्युक्ते तु तदा तेन क्षणादेव विशाम्पते । तथाभूतावदृश्येतां वचनात् सत्यवादिनः ॥ ५१ ॥ तत्राप्यमितविक्रान्तः स्पृष्ट्वा तोयं हलायुधः । दत्त्वा च विविधान् दायान् पूजयित्वा च वै द्विजान् ॥५२॥ उदपानञ्च तं वीक्ष्य प्रशस्य च पुनः पुनः । नदीगतमदीनात्मा प्राप्तो विनशनं तदा ॥ ५३ ॥

इति शल्यपर्वणि गदायुद्धपर्वणि बलदेवतीर्थयात्रायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

वैशम्पायन उवाच । ततो विनशनं राजन् जगामाथ हलायुधः । शूद्राभीरान् प्रति द्वेषाद्यत्र नष्टा सरस्वती ॥ १ ॥ यस्मात् सा भरतश्रेष्ठ द्वेषान्नष्टा सरस्वती । तस्मात्तदृषयो नित्यं प्राहुर्विनशनेति ह ॥ २ ॥ तत्राप्युपस्पृश्य बलः सरस्वत्यां महाबलः । सुभूमिकं ततोऽगच्छत् सरस्वत्यास्तटे वरे ॥ ३ ॥ तत्र चाप्सरसः शुभ्रा नित्यकालमतन्द्रिताः । क्रीड़ाभिर्विमलाभिश्च क्रीड़न्ति विमलाननाः ॥ ४ ॥ तत्र देवाः सगन्धर्वा मासि मासि जनेश्वर । अभिगच्छन्ति तत्तीर्थं पुण्यं ब्राह्मणसेवितम् ॥ ५ ॥ तत्रादृश्यन्त गन्धर्वास्तथैवाप्सरसांगणाः । समेत्य सहिता राजन् यथाप्राप्तं यथासुखम् ॥ ६ ॥ तत्र मोदन्ति देवाश्च पितरश्च सवीरुधः । पुण्यैः पुष्पैः सदा दिव्यैः कीर्य्यमाणाः पुनः पुनः ॥ ७ ॥ आक्रीड़-

भूमिः स्मा राजन् तासामप्सरसां शुभा। सुभूमिकेति विख्याता सरस्वत्यास्तटे वरे॥ ८॥ तत्र स्नात्वा च दत्त्वा च वसु विप्राय माधवः। श्रुत्वा गीतञ्च तद्दिव्यं वादित्राणाञ्च निस्वनम्॥ ९॥ छायाश्च विपुला दृष्ट्वा देवगन्धर्वरक्षसाम्। गन्धर्वाणां ततस्तीर्थमगच्छद्रोहिणीसुतः॥ १०॥ विश्वावसुमुखास्तत्र गन्धर्वास्तपसान्विताः। नृत्यवादित्रगीतञ्च कुर्वन्ति सुमनोरमम्॥ ११॥ तत्र दत्त्वा हलधरो विप्रेभ्यो विविधं वसु। अजाविकं गोखरोष्ट्रं सुवर्णं रजतं तथा॥ १२॥ भोजयित्वा द्विजान् कामैः सन्तर्प्य च महाधनैः। प्रययौ सहितो विप्रैस्तूयमानश्च माधवः॥ १३॥ तस्माद्गन्धर्वतीर्थाच्च महाबाहुररिन्दमः। गर्गस्रोतो महातीर्थमाजगामैककुण्डली॥ १४॥ तत्र गर्गेण वृद्धेन तपसा भावितात्मना। कालज्ञानगतिश्चैव ज्योतिषाञ्च व्यतिक्रमः॥ १५॥ उत्पाता दारुणाश्चैव शुभाश्च जनमेजय। सरस्वत्याः शुभे तीर्थे विदिता वै महात्मना॥ १६॥ तस्य नाम्ना च तत्तीर्थं गर्गस्रोत इति स्मृतम्। तत्र गर्गं महाभागमृषयः सुव्रता नृप। उपासाञ्चक्रिरे नित्यं कालज्ञानं प्रति प्रभो॥ १७॥ तत्र गत्वा महाराज बलः श्वेतानुलेपनः। विधिवद्धि धनं दत्त्वा मुनीनां भावितात्मनाम्॥ १८॥ उच्चावचांस्तथा भक्ष्यान् विप्रेभ्यो विप्रदाय सः। नीलवासास्ततोऽगच्छच्छङ्खतीर्थं महायशाः॥ १९॥ तत्रापश्यन्महाशङ्खं महामेरुमिवोच्छ्रितम्। श्वेतपर्वतसङ्काशमृषिसङ्घैर्निषेवितम्। सरस्वत्यास्तटे जातं नगं तालध्वजो बली॥ २०॥ यक्षा विद्याधराश्चैव राक्षसाश्चामितौजसः। पिशाचाश्चामितबला यत्र सिद्धाः सहस्रशः॥ २१॥ ते सर्वे ह्यशनं त्यक्त्वा फलं तस्य वनस्पतेः। व्रतैश्च नियमैश्चैव काले काले स्म भुञ्जते॥ २२॥ प्राप्तैश्च नियमैस्तैस्तैर्विचरन्तः पृथक् पृथक्। अदृश्यमाना मनुजैर्व्यचरन् पुरुषर्षभ। एवं ख्यातो नरपते लोकेऽस्मिन स वनस्पतिः

॥ २३ ॥ ततस्तीर्थं सरस्वत्याः पावनं लोकविश्रुतम् । तस्मिंश्च यदुशार्दूलो दत्त्वा तीर्थे पयस्विनीः । ताम्रायसानि भाण्डानि वस्त्राणि विविधानि च ॥ २४ ॥ पूजयित्वा द्विजांश्चैव पूजितश्च तपोधनैः । पुण्यं द्वैतवनं राजन्नाजगाम हलायुधः ॥ २५ ॥ तत्र गत्वा मुनीन् दृष्ट्वा नानावेशधरान् बलः । आप्लुत्य सलिले चापि पूजयामास वै द्विजान् ॥ २६ ॥ तथैव दत्त्वा विप्रेभ्यः परिभोगान् सुपुष्कलान् । ततः प्रायाद्बलो राजन् दक्षिणेन सरस्वतीम् ॥२७॥ गत्वा चैव महाबाहुर्नातिदूरं महायशाः । धर्मात्मा नागधन्वानं तीर्थमागमदच्युतः ॥ २८ ॥ यत्र पन्नगराजस्य वासुकेः सन्निवेशनम् । महाद्युतेर्महाराज बहुभिः पन्नगैर्वृतम् । ऋषीणां हि सहस्राणि तत्र नित्यं चतुर्दश ॥ २९ ॥ तत्र देवाः समागम्य वासुकिं पन्नगोत्तमम् । सर्वपन्नगराजानमभ्यषिञ्चन् यथाविधि । पन्नगेभ्यो भयं तत्र विद्यते न स्म कौरव ॥ ३० ॥ तत्रापि विधिवद्दत्त्वा विप्रेभ्यो रत्नसञ्चयान् । प्रायात् प्राचीं दिशं तत्र तथा तीर्थान्यनेकशः । सहस्रशतसङ्ख्यानि प्रथितानि पदे पदे ॥ ३१ ॥ आप्लुत्य तेषु तीर्थेषु यथोक्तं तत्र चर्षिभिः । कृत्वोपवासनियमं दत्त्वा दानानि भूरिशः ॥ ३२ ॥ अभिवाद्य मुनींस्तांस्तु तत्र तीर्थनिवासिनः । उद्दिष्टमार्गः प्रययौ यत्र भूयः सरस्वती ॥ ३३ ॥ प्राङ्मुखी वै निवृत्ते वृष्टिर्वातहता यथा । ऋषीणां नैमिषेयाणामवेक्षार्थं महात्मनाम् ॥३४॥ निवृत्तान्तां सरित्श्रेष्ठां तत्र दृष्ट्वा तु लाङ्गली । बभूव विस्मितो राजन् बलः श्वेतानुलेपनः ॥ ३५ ॥

जनमेजय उवाच । कस्मात् सरस्वती ब्रह्मन् निवृत्ता प्राङ्मुखी ततः । व्याख्यातुमेतदिच्छामि सर्वमध्वर्युसत्तम ॥ ३६ ॥ कस्मिंश्चित् कारणे तत्र विस्मितो यदुनन्दनः । निवृत्ता हेतुना केन कथमेव सरिद्वरा ॥ ३७ ॥

वैशम्पायन उवाच । पूर्वं कृतयुगे राजन् नैमिषेयास्तपस्विनः ।

वर्त्तमाने सुविपुले सत्रे द्वादश वार्षिके ॥ ३८ ॥ ऋषयो बहवो राजंस्तत् सत्रमभिपेदिरे। उषित्वा च महाभागास्तस्मिन् सत्रे यथाविधि ॥ ३९ ॥ निवृत्ते नैमिषीये वै सत्रे द्वादशवार्षिके। आजग्मुरृषयस्तत्र बहवस्तीर्थकारणात् ॥ ४० ॥ ऋषीणां बहुलत्वात्तु सरस्वत्या विशाम्पते। तीर्थानि नगरायन्ते कूले वै दक्षिणे तदा ॥ ४१ ॥ समन्तपञ्चकं यावत्तावत्ते द्विजसत्तमाः। तीर्थलोभान्नरव्याघ्र नद्यास्तीरं समाश्रिताः ॥ ४२ ॥ जुह्वतां तत्र तेषान्तु मुनीनां भावितात्मनाम्। स्वाध्यायेनातिमहता बभूवुः पूरिता दिशः ॥ ४३ ॥ अग्निहोत्रैस्ततस्तेषां हूयमानैर्महात्मनाम्। अशोभत सरित्श्रेष्ठा दीप्यमानैः समन्ततः ॥ ४४ ॥ वालिखिल्या महाराज अश्मकुट्टाश्च तापसाः। दन्तोलूखलिनश्चान्ये संप्रख्यानास्तथापरे ॥ ४५ ॥ वायुभक्ष्या जलाहाराः पर्णभक्ष्याश्च तापसाः। नानानियमयुक्ताश्च तथा स्थण्डिलशायिनः ॥ ४६ ॥ आसन् वै मुनयस्तत्र सरस्वत्याः समीपतः। शोभयन्तः सरिच्छ्रेष्ठां गङ्गामिव दिवौकसः ॥ ४७ ॥ शतशश्च समापेतुरृषयस्तत्र याजिनः। तेऽवकाशं न ददृशुः सरस्वत्या महाव्रताः ॥ ४८ ॥ ततो यज्ञोपवीतैस्ते तत्तीर्थं निर्म्मिमाय वै। जुहुवुश्चाग्निहोत्रांश्च चक्रुश्च विविधाः क्रियाः ॥ ४९ ॥ ततस्तमृषिसङ्घातं निराशं चिन्तयान्वितम्। दर्शयामास राजेन्द्र तेषामर्थे सरस्वती ॥ ५० ॥ ततः कुञ्जान् बहून् कृत्वा सन्निवृत्ता सरिद्वरा। ऋषीणां पुण्यतपसां कारुण्याज्जनमेजय ॥ ५१ ॥ ततो निवृत्य राजेन्द्र तेषामर्थे सरस्वती। भूय प्रतीच्याभिमुखी प्रसुस्राव सरिद्वरा ॥ ५२ ॥ अमोघागमनं कृत्वा तेषां भूयो व्रजाम्यहम्। इत्यद्भुतं महच्चक्रे तदा राजन्महानदी ॥ ५३ ॥ एवं स कुञ्जो राजन् वै नैमिषीय इति श्रुतः। कुरुक्षेत्रे कुरुश्रेष्ठ कुरुष्व महतीं क्रियाम् ॥ ५४ ॥ तत्र कुञ्जान् बहून् दृष्ट्वा निवृत्ताञ्च सरिद्वराम्। बभूव विस्मयस्तत्र

रामस्याथ महात्मनः ॥ ५५ ॥ उपस्पृश्य तु तत्रापि विधिवद्यदुनन्दनः। दत्त्वा दायान् द्विजातिभ्यो भाण्डानि विविधानि च ॥ ५६ ॥ भक्ष्यं भोज्यञ्च विविधं ब्राह्मणेभ्यः प्रदाय च। ततः प्रायाद्बलो राजन् पूज्यमानो द्विजातिभिः ॥ ५७ ॥ सरस्वतीतीर्थवरं नानाद्विजगणायुतम्। बदरेङ्गुदकाश्मर्य्यप्लक्षाश्वत्थविभीतकैः ॥ ५८ ॥ कक्कोलैश्च पलाशैश्च करीरैः पीलुभिस्तथा। सरस्वतीतीररुहैस्तरुभिर्विविधैस्तथा ॥ ५९ ॥ करूषकवनैश्चैव बिल्वैराम्रातकैस्तथा। अतिमुक्तकषण्डैश्च पारिजातैश्च शोभितम् ॥ ६० ॥ कदलीवनभूयिष्ठं दृष्टिकान्तं मनोहरम्। वाय्वम्बुफलपर्णादैर्दन्तोलूखलिकैरपि ॥ ६१ ॥ तथाश्मकुट्टैर्वानेयैर्मुनिभिर्बहुभिर्वृतम्। स्वाध्यायघोषसंघुष्टं मृगयूथशताकुलम् ॥ ६२ ॥ अहिंस्रैर्धर्म्मपरमैर्नृभिरत्यर्थसेवितम्। सप्तसारस्वतं तीर्थमाजगाम हलायुधः। यत्र मङ्कणकः सिद्धस्तपस्तेपे महामुनिः ॥ ६३ ॥

इति शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वततीर्थोपाख्याने सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

जनमेजय उवाच। सप्तसारस्वतं कस्मात् कश्च मङ्कणको मुनिः। कथं स सिद्धो भगवान् कश्चास्य नियमोऽभवत् ॥ १ ॥ कस्य वंशे समुत्पन्नः किञ्चाधीतं द्विजोत्तमः। एतदिच्छाम्यहं श्रोतुं विधिवद्द्विजसत्तम ॥ २ ॥

वैशम्पायन उवाच। राजन् सप्त सरस्वत्यो याभिर्व्याप्तमिदं जगत्। आहूता बलवद्भिर्हि तत्र तत्र सरस्वती ॥ ३ ॥ सुप्रभा काञ्चनाक्षी च विशाला च मनोरमा। सरस्वती चौघवती सुरेणुर्विमलोदका ॥ ४ ॥ पितामहस्य महतो वर्त्तमाने महामखे। वितते यज्ञवाटे वै संसिद्धेषु द्विजातिषु ॥ ५ ॥ पुण्याहघोषैर्विमलै-

र्व्वेदानां निनदैस्तथा। देवेषु चैव व्यग्रेषु तस्मिन् यज्ञविधौ तदा ॥ ६ ॥ तत्र चैव महाराज दीक्षिते प्रपितामहे। यजतस्तस्य सत्रेण सर्व्वकामसमृद्धिना ॥ ७ ॥ मनसा चिन्तिता ह्यर्था धर्म्मार्थ-कुशलैस्तदा। उपतिष्ठन्ति राजेन्द्र द्विजातींस्तत्र तत्र ह ॥ ८ ॥ जगुश्च तत्र गन्धर्व्वा ननृतुश्चाप्सरोगणाः। वादित्राणि च दिव्यानि वादयामासुरञ्जसा ॥ ९ ॥ तस्य यज्ञस्य सम्पत्त्या तुतुषुर्द्देवता अपि। विस्मयं परमं जग्मुः किमु मानुषयोनयः ॥ १० ॥ वर्त्तमाने तथा यज्ञे पुष्करस्थे पितामहे। अब्रुवन्नृषयो राजन्नायं यज्ञो महागुणः ॥ ११ ॥ न दृश्यते सरित्श्रेष्ठा यस्मादिह सरस्वती। तच्छ्रुत्वा भगवान् प्रीतः सस्माराथ सरस्वतीम् ॥ १२ ॥ पितामहेन यजता आहूता पुष्करेषु वै। सुप्रभा नाम राजेन्द्र नाम्ना तत्र सरस्वती ॥ १३ ॥ तां दृष्ट्वा मुनयस्तुष्टास्त्वरायुक्तां सरस्वतीम्। पितामहं मानयन्तीं क्रतुन्ते बहु मेनिरे ॥ १४ ॥ एवमेषा सरित्-श्रेष्ठा पुष्करेषु सरस्वती। पितामहार्थं सम्भूता तुष्ट्यर्थञ्च मनी-षिणाम् ॥ १५ ॥ नैमिषे मुनयो राजन् समागम्य समासते। तत्र चित्राः कथा ह्यासन् वेदं प्रति जनेश्वर ॥ १६ ॥ यत्र ते मुनयो ह्यासन् नानास्वाध्यायवेदिनः। ते समागम्य मुनयः सस्मरुर्वै सर-स्वतीम् ॥ १७ ॥ सा तु ध्याता महाराज ऋषिभिः सत्रयाजिभिः। समागतानां राजेन्द्र सहायार्थं महात्मनाम् ॥ १८ ॥ आजगाम महाभागा तत्र पुण्या सरस्वती। नैमिषे काञ्चनाक्षी तु मुनीनां सत्रयाजिनाम् ॥१९॥ आगता सरितां श्रेष्ठा तत्र भारत पूजिता। गयस्य यजमानस्य गयेष्वेव महाक्रतुम् ॥ २० ॥ आहूता सरितां श्रेष्ठा गययज्ञे सरस्वती। विशालां तां गयेष्वाहुर्ऋषयः संशित-व्रताः ॥ २१ ॥ सरित् सा हिमवत्पार्श्वात् प्रस्रुता शीघ्रगामिनी। औद्दालके तथा यज्ञे यजतस्तस्य भारत ॥ २२ ॥ समेते सर्व्वतः स्फीते मुनीनां मण्डले तदा। उत्तरे कोशलाभागे पुण्ये राज-

महात्मनः ॥ २३ ॥ उद्दालकेन यजता पूर्वं ध्याता सरस्वती। आजगाम सरित्श्रेष्ठा तं देशमृषिकारणात् ॥ २४ ॥ पूज्यमाना मुनिगणैर्वल्कलाजिनसंवृतैः। मनोरमेति विख्याता सा हि तैर्मनसा कृता ॥ २५ ॥ सुरेणुर्ऋषभे द्वीपे पुण्ये राजर्षिसेविते ॥ २६ ॥ कुरोश्च यजमानस्य कुरुक्षेत्रे महात्मनः। आजगाम महाभागा सरित्श्रेष्ठा सरस्वती ॥ २७ ॥ ओघवत्यपि राजेन्द्र वशिष्ठेन महात्मना। समाहूता कुरुक्षेत्रे दिव्यतोया सरस्वती ॥ २८ ॥ दक्षेण यजता चापि गङ्गाद्वारे सरस्वती। सुरेणुरिति विख्याता प्रसृता शीघ्रगामिनी ॥ २९ ॥ विमलोदा भगवती ब्रह्मणा यजता पुनः। समाहूता ययौ तत्र पुण्ये हैमवते गिरौ ॥ ३० ॥ एकीभूतास्ततस्तास्तु तस्मिंस्तीर्थे समागताः। सप्तसारस्वतं तीर्थं ततस्तत् प्रथितं भुवि ॥ ३१ ॥ इति सप्त सरस्वत्यो नामतः परिकीर्त्तिताः। सप्तसारस्वतञ्चैव तीर्थं पुण्यं तथा स्मृतम् ॥ ३२ ॥ शृणु मङ्कणकस्यापि कौमारब्रह्मचारिणः। आपगामवगाढ़स्य राजन् प्रक्रीड़ितं महत् ॥ ३३ ॥ दृष्ट्वा यदृच्छया तत्र स्त्रियमम्भसि भारत। स्नायन्तीं रुचिरापाङ्गीं दिग्वाससमनिन्दिताम्। सरस्वत्यां महाराज चस्कन्दे वीजमम्भसि ॥ ३४ ॥ तद्रेतः स तु जग्राह कलसे वै महातपाः। सप्तधा प्रविभागन्तु कलसस्थं जगाम ह ॥ ३५ ॥ तत्रर्षयः सप्त जाता जज्ञिरे मरुतां गणाः। वायुवेगो वायुबलो वायुहा वायुमण्डलः ॥३६॥ वायुज्वालो वायुरेता वायुचक्रश्च वीर्य्यवान्। एवमेते समुत्पन्ना मरुतां जनयिष्णवः ॥ ३७ ॥ इदमत्यद्भुतं राजन् शृण्वाश्चर्य्यतरं भुवि। महर्षेश्चरितं यादृक् त्रिषु लोकेषु विश्रुतम् ॥ ३८ ॥ पुरा मङ्कणकः सिद्धः कुशाग्रेणेति विश्रुतम। क्षतः किल करे राजंस्तस्य शाकरसोऽस्रवत् ॥ ३९ ॥ स वै शाकरसं दृष्ट्वा हर्षाविष्टः प्रनृत्तवान्। ततस्तस्मिन् प्रनृत्ते वै स्थावरं जङ्गमञ्च यत्। प्रनृत्तमुभयं वीरं

तेजसा तस्य मोहितम् ॥ ४० ॥ ब्रह्मादिभिः सुरै राजन्नृषिभिश्च तपोधनैः । विज्ञप्तो वै महादेव ऋषेरर्थे नराधिप । नायं नृत्येद्यथा देव तथा त्वं कर्त्तुमर्हसि ॥ ४१ ॥ ततो देवो मुनिं दृष्ट्वा हर्षाविष्टमतीव ह । सुराणां हितकामार्थं महादेवोऽभ्यभाषत ॥ ४२ ॥ हंहो ब्राह्मण धर्मज्ञ किमर्थं नृत्यते भवान् । हर्षस्थानं किमर्थञ्च तवेदमधिकं मुने । तपस्विनो धर्मपथे स्थितस्य द्विजसत्तम ॥ ४३ ॥

ऋषिरुवाच । किन्न पश्यसि मे ब्रह्मन् कराच्छाकरसं स्रुतम् । यं दृष्ट्वाहं प्रनृत्तो वै हर्षेण महता विभो ॥ ४४ ॥ तं प्रहस्याब्रवीद्देवो मुनिं रागेण मोहितम् । अहं न विस्मयं विप्र गच्छामीति प्रपश्य माम् ॥ ४५ ॥ एवमुक्त्वा मुनिश्रेष्ठं महादेवेन धीमता । अङ्गुल्यग्रेण राजेन्द्र स्वाङ्गुष्ठस्ताड़ितोऽभवत् ॥ ४६ ॥ ततो भस्म क्षताद्राजन्निर्गतं हिमसन्निभम् । तद्दृष्ट्वा व्रीड़ितो राजन् स मुनिः पादयोर्गतः ॥४७॥ मेने देवं महादेवमिदञ्चोवाच विस्मितः । नान्यं देवादहं मन्ये रुद्रात् परतरं महत् ॥ ४८ ॥ सुरासुरस्य जगतो गतिस्त्वमसि शूलधृक् । त्वया सृष्टमिदं विश्वं वदन्तीह मनीषिणः ॥ ४९ ॥ त्वामेव सर्वं विशति पुनरेव युगक्षये । देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया ॥ ५० ॥ त्वयि सर्व्वे स्म दृश्यन्ते भावा ये जगति स्थिताः । त्वामुपासन्त वरदं देवा ब्रह्मादयोऽनघ ॥ ५१ ॥ सर्वस्त्वमसि देवानां कर्त्ता कारयिता च ह । त्वत्प्रसादात् सुराः सर्व्वे मोदन्तीहाकुतोभयाः । एवं स्तुत्वा महादेवं स ऋषिः प्रणतोऽभवत् ॥ ५२ ॥ यदिदञ्चापलं देव कृतमेतत् स्मयादिकम् । अतः प्रसादयामि त्वां तपो मे न क्षरेदिति ॥५३॥ ततो देवः प्रीतमनास्तमृषिं पुनरब्रवीत् । तपस्ते वर्द्धतां विप्र मत्प्रसादात् सहस्रधा । आश्रमे चेह वत्स्यामि त्वया सार्द्धमहं सदा ॥ ५४ ॥ सप्तसारस्वते चास्मिन् यो मामर्च्चिष्यते नरः । न

तस्य दुर्लभं किञ्चिद्भवितेह परत्र वा। सारस्वतञ्च ते लोकं गमिष्यन्ति न संशयः॥ ५५॥ एतन्मङ्कणकस्यापि चरितं भूरितेजसः। स हि पुत्रः सुकन्यायामुत्पन्नो मातरिश्वना॥ ५६॥

इति शल्यपर्वणि गदायुद्धपर्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने अष्टत्रिंशोऽध्यायः॥ ३८॥

---

वैशम्पायन उवाच। उषित्वा तत्र रामस्तु संपूज्याश्रमवासिनः। तथा मङ्कणके प्रीतिं शुभाञ्चक्रे हलायुधः॥ १॥ दत्त्वा दानं द्विजातिभ्यो रजनीं तामुपोष्य च। पूजितो मुनिसङ्घैश्च प्रातरुत्थाय लाङ्गली॥ २॥ अनुज्ञाप्य मुनीन् सर्वान् स्पृष्ट्वा तोयञ्च भारत। प्रययौ त्वरितो रामस्तीर्थहेतोर्महाबलः॥ ३॥ तत औशनसं तीर्थमाजगाम हलायुधः। कपालमोचनं नाम यत्र मुक्तो महामुनिः॥ ४॥ महता शिरसा राजन् ग्रस्तजङ्घो महोदरः। राक्षसस्य महाराज रामक्षिप्तस्य वै पुरा। तत्र पूर्वं तपस्तप्तं काव्येन सुमहात्मना॥ ५॥ यत्रास्य नीतिरखिला प्रादुर्भूता महात्मनः। यत्रस्थश्चिन्तयामास दैत्यदानवविग्रहम्॥ ६॥ तत् प्राप्य च बलो राजंस्तीर्थप्रवरमुत्तमम्। विधिवद्वै ददौ वित्तं ब्राह्मणानां महात्मनाम्॥ ७॥

जनमेजय उवाच। कपालमोचनं ब्रह्मन् कथं यत्र महामुनिः। मुक्तः कथञ्चास्य शिरो लग्नं केन च हेतुना॥ ८॥

वैशम्पायन उवाच। पुरा वै दण्डकारण्ये राघवेन महात्मना। वसता राजशार्दूल राक्षसान् शमयिष्यता॥ ९॥ जनस्थाने शिरश्छिन्नं राक्षसस्य दुरात्मनः। क्षुरेण शितधारेण तत् पपात महावने॥ १०॥ महोदरस्य तल्लग्नं जङ्घायां वै यदृच्छया। वने विचरतो राजन्नस्थि भित्त्वास्फुरत्तदा॥ ११॥ स

तेन लग्नेन तदा द्विजातिर्न शशाक ह । अभिगन्तुं महाप्राज्ञ-
स्तीर्थान्यायतनानि च ॥ १२ ॥ स पूतिना विस्रवता वेदनार्त्तो
महामुनिः । जगाम सर्व्वतीर्थानि पृथिव्याश्चेति नः श्रुतम् ॥ १३ ॥
स गत्वा सरितः सर्व्वाः समुद्रांश्च महातपाः । कथयामास तत् सर्व्व-
मृषीणां भावितात्मनाम् ॥ १४ ॥ आप्लुतः सर्व्वतीर्थेषु न च मोक्ष-
मवाप्तवान् । स तु शुश्राव विप्रेन्द्रो मुनीनां वचनं महत् ॥ १५ ॥
सरस्वत्यास्तीर्थवरं ख्यातमौशनसं तदा । सर्व्वपापप्रशमनं सिद्ध-
क्षेत्रमनुत्तमम् ॥ १६ ॥ स तु गत्वा ततस्तत्र तीर्थमौशनसं द्विजः ।
तत औशनसे तीर्थे तस्योपस्पृशतस्तदा । तच्छिरश्चरणं मुक्ता
पपातान्तर्जले तदा ॥ १७ ॥ विमुक्तस्तेन शिरसा परं सुखमवाप
ह । स चाप्यन्तर्जले मूर्द्धा जगामादर्शनं तदा ॥ १८ ॥ ततः स
विशिरा राजन् पूतात्मा वीतकल्मषः । आजगामाश्रमं प्रीतः कृत-
कृत्यो महोदरः ॥ १९ ॥ सोऽथ गत्वाश्रमं पुण्यं विप्रमुक्तो महा-
तपाः । कथयामास तत्सर्व्वमृषीणां भावितात्मनाम् ॥ २० ॥ ते
श्रुत्वा वचनं तस्य ततस्तीर्थस्य मानद । कपालमोचनमिति नाम
चक्रुः समागताः ॥ २१ ॥ स चापि तीर्थप्रवरं पुनर्गत्वा महा-
नृषिः । पीत्वा पयः सुविपुलं सिद्धिमायात्तदा मुनिः ॥ २२ ॥
तत्र दत्त्वा बहून् दायान् विप्रान् संपूज्य माधवः । जगाम वृष्णि-
प्रवरो रुषङ्गोराश्रमन्तदा ॥ २३ ॥ यत्र तप्तं तपो घोरमार्ष्टिषेणेन
भारत । ब्राह्मण्यं लब्धवांस्तत्र विश्वामित्रो महामुनिः ॥ २४ ॥
सर्व्वकामसमृद्धं वै तत्राश्रमपदं महत् । मुनिभिर्ब्राह्मणैश्चैव सेवितं
सर्व्वदा विभो ॥ २५ ॥ ततो हलधरः श्रीमान् ब्राह्मणैः परि-
वारितः । जगाम यत्र राजेन्द्र रुषङ्गुस्तनुमत्यजत् ॥ २५ ॥ रुष-
ङ्गुर्ब्राह्मणो वृद्धस्तपोनित्यश्च भारत । देहन्यासे कृतमना विचिन्त्य
बहुधा तदा ॥ २७ ॥ तत सर्व्वानुपादाय तनयान् वै महातपाः ।
रुषङ्गुरब्रवीत्तत्र नयध्वं मां पृथूदकम् ॥ २८ ॥ विज्ञायातीत

वयसं सुषड्‌ तु ते तपोधनाः। तं वै तीर्थमुपानिन्युः सरस्वत्यास्तपोधनम्॥ २९॥ स तैः पुत्रैस्तदा धीमानानीतो वै सरस्वतीम्। पुण्यां तीर्थवतोपेतां विप्रसङ्घैर्निषेविताम्॥ ३०॥ स तत्र विधिना राजन्नाप्लुत्य सुमहातपाः। ज्ञात्वा तीर्थगुणांश्चैव प्राहेदमृषिसत्तमः। सुप्रीतः पुरुषव्याघ्र सर्वान् पुत्रानुपासतः॥ ३१॥ सरस्वत्युत्तरे तीर्थे यस्त्यजेदात्मनस्तनुम्। पृथूदके जप्यपरो नैनं श्वो मरणं तपेत्॥ ३२॥ तत्राप्लुत्य स धर्मात्मा उपस्पृश्य हलायुधः। दत्त्वा चैव बहून् दायान् विप्राणां विप्रवत्सलः॥ ३३॥ ससर्ज यत्र भगवांल्लोकांल्लोकपितामहः। यत्रार्ष्टिषेणः कौरव्य ब्राह्मण्यं संशितव्रतः। तपसा महता राजन् प्राप्तवानृषिसत्तमः॥ ३४॥ सिन्धुद्वीपश्च राजर्षिर्देवापिश्च महातपाः। ब्राह्मण्यं लब्धवान् यत्र विश्वामित्रस्तथा मुनिः। महातपस्वी भगवानुग्रतेजा महायशाः॥ ३५॥ तत्राजगाम बलवान् बलभद्रः प्रतापवान्॥ ३६॥

इति शल्यपर्वणि गदायुद्धपर्वणि सारस्वतोपाख्याने
एकोनचत्वारिंशोऽध्यायः॥ ३९॥

---

जनमेजय उवाच। कथमार्ष्टिषेणो भगवान् विपुलं तप्तवांस्तपः। सिन्धुद्वीपः कथञ्चापि ब्राह्मण्यं लब्धवांस्तदा॥ १॥ देवापिश्च कथं ब्रह्मन् विश्वामित्रश्च सत्तम। तन्ममाचक्ष्व भगवन् परं कौतूहलं हि मे॥ २॥

वैशम्पायन उवाच। पुरा कृतयुगे राजन्नार्ष्टिषेणो द्विजोत्तमः। वसन् गुरुकुले नित्यं नित्यमध्ययने रतः॥ ३॥ तस्य राजन् गुरुकुले वसतो नित्यमेव ह। समाप्तिं नागमद्विद्या नापि वेदा विशाम्पते॥ ४॥ स निर्विण्णस्ततो राजंस्तपस्तेपे

महातपाः। ततो वै तपसा तेन प्राप वेदाननुत्तमान् ॥ ५ ॥ स विद्वान् वेदयुक्तश्च सिद्धश्चाप्यृषिसत्तमः। तत्र तीर्थे वरान् प्रादा-त्त्रीनेव सुमहातपाः ॥ ६ ॥ अस्मिंस्तीर्थे महानद्या अद्य प्रभृति मानवः। आप्लुतो वाजिमेधस्य फलं प्राप्स्यति पुष्कलम् ॥ ७ ॥ अद्यप्रभृति नैवात्र भयं व्यालाद्भविष्यति। अपि चाल्पेन यत्नेन फलं प्राप्स्यति पुष्कलम् ॥ ८ ॥ एवमुक्त्वा महातेजा जगाम त्रि-दिवं मुनिः। एवं सिद्धः स भगवानार्ष्टिषेणः प्रतापवान् ॥ ९ ॥ तस्मिन्नेव तदा तीर्थे सिन्धुद्वीपः प्रतापवान्। देवापिश्च महाराज ब्राह्मण्यं प्रापतुर्म्महत् ॥ १० ॥ तथा च कौशिकस्तात तपोनित्यो जितेन्द्रियः। तपसा वै सुतप्तेन ब्राह्मणत्वमवाप्तवान् ॥ ११ ॥ गाधिर्नाम महानासीत् क्षत्रियः प्रथितो भुवि। तस्य पुत्त्रोऽभव-द्राजन् विश्वामित्त्रः प्रतापवान् ॥ १२ ॥ स राजा कौशिकस्तात महायोग्यभवत् किल। स पुत्त्रमभिषिच्याथ विश्वामित्त्रं महा-तपाः ॥ १३ ॥ देहन्यासे मनश्चक्रे तमूचुः प्रणताः प्रजाः। न गन्तव्यं महाप्राज्ञ त्राहि चास्मान्महाभयात् ॥ १४ ॥ एवमुक्तः प्रत्युवाच ततो गाधिः प्रजास्ततः। विश्वस्य जगतो गोप्ता भवि-ष्यति सुतो मम ॥ १५ ॥ इत्युक्त्वा तु ततो गाधिर्विश्वामित्त्रं निवेश्य च। जगाम त्रिदिवं राजन् विश्वामित्त्रोऽभवन्नृपः। न स शक्नोति पृथिवीं यत्नवानपि रक्षितुम् ॥ १६ ॥ ततः शुश्राव राजा स राक्षसेभ्यो महाभयम्। निर्ययौ नगराच्चापि चतुरङ्गबला-न्वितः ॥ १७ ॥ स यात्वा दूरमध्वानं वशिष्ठाश्रममभ्ययात्। तस्य ते सैनिका राजंश्चक्रुस्तत्रानयान् बहून् ॥ १८ ॥ ततस्तु भगवान् विप्रो वशिष्ठाश्रममभ्ययात्। ददृशेऽथ ततः सर्वं भज्यमानं महा-वनम् ॥ १९ ॥ तस्य क्रुद्धो महाराज वशिष्ठो मुनिसत्तमः। सृजस्व शवरान् घोरानिति स्वां गामुवाच ह ॥ २० ॥ तयोक्ता साऽसृज-द्धेनुः पुरुषान् घोरदर्शनान्। ते च तद्बलमासाद्य बभञ्जुः सर्वतो-

दिशम् ॥ २१ ॥ तच्छ्रुत्वा विद्रुतं सैन्यं विश्वामित्रस्तु गाधिजः ।
तपः परं मन्यमानस्तपस्येव मनो दधे ॥ २२ ॥ सोऽस्मिंस्तीर्थवरे
राजन् सरस्वत्याः समाहितः । नियमैश्चोपवासैश्च कर्षयन्देहमा-
त्मनः ॥ २३ ॥ जलाहारो वायुभक्ष्यः पर्णाहारश्च सोऽभवत् ।
तथा स्थण्डिलशायी च ये चान्ये नियमाः पृथक् ॥ २४ ॥ असकृ-
त्तस्य देवास्तु व्रतविघ्नं प्रचक्रिरे । न चास्य नियमाद्बुद्धिरप-
याति कदाचन ॥ २५ ॥ ततः परेण यत्नेन तप्त्वा बहुविधं तपः ।
तेजसा भास्कराकारो गाधिजः समपद्यत ॥ २६ ॥ तपसा तु तथा
युक्तं विश्वामित्रं पितामहः । अमन्यत महातेजा वरदो वरमस्य
तत् ॥ २७ ॥ स तु वव्रे वरं राजन् स्यामहं ब्राह्मणस्त्विति ।
तथेति चाब्रवीद्ब्रह्मा सर्वलोकपितामहः ॥ २८ ॥ स लब्ध्वा तपसो-
ग्रेण ब्राह्मणत्वं महायशाः । विचचार महीं कृत्स्नां कृतकामः-
सुरोपमः ॥ २९ ॥ तस्मिंस्तीर्थवरे रामः प्रदाय विविधं वसु ।
पयस्विनीस्तथा धेनुर्यानानि शयनानि च ॥ ३० ॥ अथ वस्त्राण्य-
लङ्कारं भक्ष्यं पेयञ्च शोभनम् । अददन्मुदितो राजन् पूजयित्वा
द्विजोत्तमान् ॥ ३१ ॥ ययौ राजंस्ततो रामो वकस्याश्रममन्ति-
कात् । यत्र तेपे तपस्तीव्रं दाल्भ्यो वक इति श्रुतः ॥ ३२ ॥

इति शल्यपर्वणि गदायुद्धपर्वणि सारस्वततीर्थोपाख्याने
चत्वारिंशोऽध्यायः ॥ ४० ॥

---

वैशम्पायन उवाच । ब्रह्मघोषैरवाकीर्णं जगाम यदुनन्दनः ।
यत्र दाल्भ्यो वको राजन्नाश्रमस्थो महातपाः ॥ १ ॥ जुहाव
धृतराष्ट्रस्य राष्ट्रं वैचित्रवीर्य्यिणः । तपसा घोररूपेण कर्षयन्
देहमात्मनः । क्रोधेन महताविष्टो धर्म्मात्मा वै प्रतापवान् ॥ २ ॥
पुरा हि नैमिषीयाणां सत्रे द्वादशवार्षिके । वृत्ते विश्वजितोऽन्ते

वै पाञ्चालानृषयोऽगमन् ॥ ३ ॥ तत्रेश्वरमयाचन्त दक्षिणार्थं मनीषिणः। बलान्वितान् वत्सतरान्निर्व्याधीनेकविंशतिम् ॥ ४ ॥ तानब्रवीद्बको दाल्भ्यो विभजध्वं पशूनिति। पशूनेतानहं त्यक्त्वा भिक्षिष्ये राजसत्तमम् ॥ ५ ॥ एवमुक्त्वा ततो राजन्नृषीन् सर्वान् प्रतापवान्। जगाम धृतराष्ट्रस्य भवनं ब्राह्मणोत्तम ॥ ६ ॥ स समीपगतो भूत्वा धृतराष्ट्रं जनेश्वरम्। अयाचत पशून् दाल्भ्यः स चैनं रुषितोऽब्रवीत् ॥ ७ ॥ यदृच्छया मृतान् दृष्ट्वा गास्तदा नृपसत्तमः। एतान् पशून्नय क्षिप्रं ब्रह्मबन्धो यदीच्छसि ॥ ८ ॥ ऋषिस्त्वथ वचः श्रुत्वा चिन्तयामास धर्म्मवित्। अहो बत नृशंसं वै वाक्यमुक्तोऽस्मि संसदि ॥ ९ ॥ चिन्तयित्वा मुहूर्त्तन्तु रोषाविष्टो द्विजोत्तमः। मतिञ्चक्रे विनाशाय धृतराष्ट्रस्य भूपतेः ॥१०॥ स तूत्कृत्य मृतानां वै मांसानि मुनिसत्तमः। जुहाव धृतराष्ट्रस्य राष्ट्रं नरपतेः पुरा। अवकीर्णे सरस्वत्यास्तीर्थे प्रज्वाल्य पावकम् ॥ ११ ॥ बको दाल्भ्यो महाराज नियमं परमास्थितः। स तैरेव जुहावास्य राष्ट्रं मांसैर्महातपाः ॥ १२ ॥ तस्मिंस्तु विधिवत् सत्रे संप्रवृत्ते सुदारुणे। अक्षीयत ततो राष्ट्रं धृतराष्ट्रस्य पार्थिव ॥ १३ ॥ ततः प्रक्षीयमाणन्तद्राष्ट्रन्तस्य महीपतेः। छिद्यमानं यथानन्तं वनं परशुना विभो। बभूवापद्गतं तच्च व्यपकीर्णमचेतनम् ॥ १४ ॥ दृष्ट्वा तथावकीर्णन्तु राष्ट्रं स मनुजाधिपः। बभूव दुर्म्मना राजंश्चिन्तयामास च प्रभुः ॥ १५ ॥ मोक्षार्थमकरोद्यत्नं ब्राह्मणैः सहितः पुरा। न च श्रेयोऽध्यगच्छत् स क्षीयते राष्ट्रमेव च ॥ १६ ॥ यदा स पार्थिवः खिन्नस्ते च विप्रास्तदानघ। यदा चापि न शक्नोति राष्ट्रं मोक्षयितुं नृपः ॥ १७ ॥ अथ वै प्राश्निकांस्तत्र पप्रच्छ जनमेजय। ततो वै प्राश्निकाः प्राहुः पशुविप्रकृतस्त्वया ॥ १८ ॥ मांसैरभिजुहोतीति तव राष्ट्रं मुनिर्बकः। तेन ते हूयमानस्य राष्ट्रस्यास्य क्षयो

महान् ॥ १९ ॥ तस्यैतत्तपसः कर्म्म येन ते ह्यनघो महान्। अपां कुञ्जे सरस्वत्यास्तं प्रसादय पार्थिव ॥ २० ॥ सरस्वतीं ततो गत्वा स राजा वक्रमब्रवीत्। निपत्य शिरसा भूमौ प्राञ्जलिर्भरतर्षभ। प्रसादये त्वां भगवन्नपराधं क्षमस्व मे ॥२१॥ मम दीनस्य लुब्धस्य मौर्ख्येण हतचेतसः। त्वं गतिस्त्वञ्च मे नाथः प्रसादं कर्त्तुमर्हसि ॥ २२ ॥ तन्तथाविलपन्तन्तु शोकोपहतचेतसम्। दृष्ट्वा तस्य कृपा जज्ञे राष्ट्रं तच्च व्यमोचयत् ॥ २३ ॥ ऋषिः प्रसन्नस्तस्याभूत् संरम्भञ्च विहाय सः। मोक्षार्थं तस्य राष्ट्रस्य जुहाव पुनराहुतिम् ॥ २४ ॥ मोक्षयित्वा ततो राष्ट्रं प्रतिगृह्य पशून् बहून्। हृष्टात्मा नैमिषारण्यं जगाम पुनरेव च ॥ २५ ॥ धृतराष्ट्रोऽपि धर्म्मात्मा सुस्थचेता महामनाः। स्वमेव नगरं राजा प्रतिपेदे महर्द्धिमत् ॥ २६ ॥ तत्र तीर्थे महाराज बृहस्पतिरुदारधीः। असुराणामभावाय भवाय च दिवौकसाम् ॥ २७ ॥ मांसैरभिजुहावेष्टिमक्षीयन्त ततोऽसुराः। दैवतैरपि संभग्ना जितकाशिभिराहवे ॥ २८ ॥ तत्रापि विधिवद्दत्त्वा ब्राह्मणेभ्यो महायशाः। वाजिनः कुञ्जरांश्चैव रथांश्चाश्वतरीयुतान् ॥ २९ ॥ रत्नानि च महार्हाणि धनं धान्यञ्च पुष्कलम्। ययौ तीर्थं महाबाहुर्यायातं पृथिवीपते ॥३०॥ यत्र यज्ञे ययातेस्तु महाराज सरस्वती। सर्पिः पयश्च सुस्राव नाहुषस्य महात्मनः ॥ ३१ ॥ तत्रेष्ट्वा पुरुषव्याघ्रो ययातिः पृथिवीपतिः। आक्रामदूर्द्ध्वं मुदितो लेभे लोकांश्च पुष्कलान् ॥ ३२ ॥ पुनस्तत्र च राज्ञस्तु ययातेर्यजतः प्रभो। औदार्य्यं परमं दृष्ट्वा भक्तिञ्चात्मनि शाश्वतीम्। ददौ कामान् ब्राह्मणेभ्यो यान् यान् यो मनसेच्छति ॥ ३३ ॥ यो यत्र स्थित एवेह आहूतो यज्ञसंस्तरे। तस्य तस्य सरिच्छ्रेष्ठा गृहादिशयनादिकम्। षड्रसं भोजनञ्चैव दानं नानाविधं तथा ॥ ३४ ॥ ते मन्यमाना राज्ञस्तु सम्प्रदानमनुत्तमम्। राजानं तुष्टुवुः प्रीता ददुश्चैवाशिषः शुभाः ॥ ३५ ॥

तत्र देवाः सगन्धर्वाः प्रीता यज्ञस्य सम्पदा। विस्मिता मानुषा-
श्चासन् दृष्ट्वा तां यज्ञसम्पदम् ॥ ३६ ॥ ततस्तालकेतुर्महाधर्मकेतु-
र्महात्मा कृतात्मा महादाननित्यः। वशिष्ठापवाहं महाभीमवेगं
धृतात्मा जितात्मा समभ्याजगाम ॥ ३७ ॥

इति शल्यपर्वणि गदायुद्धपर्वणि सारस्वतोपाख्याने
एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

जनमेजय उवाच। वशिष्ठस्यापवाहोऽसौ भीमवेगः कथं नु
सः। किमर्थञ्च सरिच्छ्रेष्ठा तमृषिं प्रत्यवाहयत् ॥ १ ॥ कथ-
मस्याभवद्वैरं कारणं किञ्च तत् प्रभो। शंस पृष्टो महाप्राज्ञ न
हि तृप्यामि कथ्यति ॥ २ ॥

वैशम्पायन उवाच। विश्वामित्रस्य चैवर्षेर्वशिष्ठस्य च भारत।
भृशं वैरमभूद्राजं स्तपस्स्पर्द्धाकृतं महत् ॥ ३ ॥ आश्रमो वै वशि-
ष्ठस्य स्थाणुतीर्थेऽभवन्महान्। पूर्वतः पार्श्वतस्त्वासीद्विश्वामित्रस्य
धीमतः ॥ ४ ॥ यत्र स्थाणु र्महाराज तप्तवान् सुमहत्तपः।
यत्रास्य कर्म तद्घोरं प्रवदन्ति मनीषिणः ॥ ५ ॥ यत्रेष्ट्वा भगवान्
स्थाणुः पूजयित्वा सरस्वतीम्। स्थापयामास तत्तीर्थं स्थाणुतीर्थ-
मिति प्रभो ॥ ६ ॥ तत्र तीर्थे सुराः स्कन्दमभ्यषिञ्चन्नराधिप।
सैनापत्येन महता सुरारिविनिवर्हणम् ॥ ७ ॥ तस्मिन् सार-
स्वते तीर्थे विश्वामित्रो महामुनिः। वशिष्ठञ्चालयामास तपसो-
ग्रेण तच्छृणु ॥ ८ ॥ विश्वामित्रवशिष्ठौ तावहन्यहनि भारत।
स्पर्द्धान्तपःकृतां तीव्रां चक्रतुस्तौ तपोधनौ ॥ ९ ॥ तत्राप्यधिक-
सन्तप्तो विश्वामित्रो महामुनिः। दृष्ट्वा तेजो वशिष्ठस्य चिन्ता-
मभिजगाम ह ॥ १० ॥ तस्य बुद्धिरियं ह्यासीद्धर्मनित्यस्य भारत।
इयं सरस्वती तूर्णं मत्समीपं तपोधनम् ॥ ११ ॥ आनयिष्यति

वेगेन वशिष्ठं जपतां वरम्। इहागतं द्विजश्रेष्ठं हनिष्यामि न संशयः॥ १२॥ एवं निश्चित्य भगवान् विश्वामित्रो महामुनिः। सस्मार सरितां श्रेष्ठां क्रोधसंरक्तलोचनः॥ १३॥ सा ध्याता मुनिना तेन व्याकुलत्वं जगामह। जज्ञे चैनं महावीर्य्यं महाकोपञ्च भाविनी॥ १४॥ तत एनं वेपमाना विवर्णा प्राञ्जलिस्तदा। उपतस्थे मुनिवरं विश्वामित्रं सरस्वती॥ १५॥ हतवीरा यथा नारी साभवद्दुःखिता भृशम्। ब्रूहि किं करवानीति प्रोवाच मुनिसत्तमः॥ १६॥ तामुवाच मुनिः क्रुद्धो वशिष्ठं शीघ्रमानय। यावदेनं निहन्म्यद्य तच्छ्रुत्वा व्यथिता नदी॥ १७॥ साञ्जलिन्तु ततः कृत्वा पुण्डरीकनिभेक्षणा। प्राकम्पत भृशं भीता वायुनेवाहता लता॥ १८॥ तथा रूपान्तु तां दृष्ट्वा मुनिराह महानदीम्। अविचारं वशिष्ठन्त्वमानयस्वान्तिकं मम॥१९॥ सा तस्य वचनं श्रुत्वा ज्ञात्वा पापं चिकीर्षितम्। वशिष्ठस्य प्रभावञ्च जानन्त्यप्रतिमं भुवि॥ २०॥ साभिगम्य वशिष्ठन्तमिममर्थमचोदयत्। यदुक्ता सरितां श्रेष्ठा विश्वामित्रेण धीमता॥ २१॥ उभयोः शापयोर्भीता वेपमाना पुनः पुनः। चिन्तयित्वा महाशापमृषिवित्रासिता भृशम्॥ २२॥ तां कृशाञ्च विवर्णाञ्च दृष्ट्वा चिन्तासमन्विताम्। उवाच राजन् धर्मात्मा वशिष्ठो द्विपदाम्वरः॥ २३॥

वशिष्ठ उवाच। पाह्यात्मानं सरिच्छ्रेष्ठे वह मां शीघ्रगामिनी। विश्वामित्रः शपेद्धि त्वां मा कृथास्त्वं विचारणाम्॥२४॥ तस्य तद्वचनं श्रुत्वा कृपाशीलस्य सा सरित्। चिन्तयामास कौरव्य किं कृत्वा सुकृतं भवेत्॥ २५॥ तस्याश्चिन्ता समुत्पन्ना वशिष्ठो मय्यतीव हि। कृतवान् हि दयां नित्यं तस्य कार्य्यं हितं मया॥ २६॥ अथ कूले स्वके राजन् जपन्तमृषिसत्तमं। जुह्वानं कौशिकं प्रेक्ष्य सरस्वत्यभ्यचिन्तयत्॥ २७॥ इदमन्तरमित्येव

ततः सा सरिताम्वरा । कूलापहारमकरोत् स्वेन वेगेन सा सरित् ॥ २८ ॥ तेन कूलापहारेण मैत्रावरुणिरौह्यत । उह्यमानः स तुष्टाव तदा राजन् सरस्वतीम् ॥ २९ ॥ पितामहस्य सरसः प्रवृत्तासि सरस्वती । व्याप्तञ्चेदं जगत् सर्वं त्वदैवाम्भोभिरुत्तमैः ॥ ३० ॥ त्वमेवाकाशगा देवी मेघेषुत्सृजसे पयः । सर्वास्वापस्त्वमेवेति त्वत्तो वयमधीमहि ॥ ३१ ॥ पुष्टिर्द्युतिस्तथा कीर्त्तिः सिद्धिर्बुद्धिरुमा तथा । त्वमेव वाणी स्वाहा त्वं तवायत्तमिदं जगत् । त्वमेव सर्वभूतेषु वससीह चतुर्विधा ॥ ३२ ॥ एवं सरस्वती राजंस्तूयमाना महर्षिणा । वेगेनोवाह तं विप्रं विश्वामित्राश्रमं प्रति । न्यवेदयत चाभीक्ष्णं विश्वामित्राय तं मुनिम् ॥ ३३ ॥ तथानीतं सरस्वत्या दृष्ट्वा कोपसमन्वितः । अथान्वैषत् प्रहरणं वशिष्ठान्तकरं तदा ॥ ३४ ॥ तन्तु क्रुद्धमभिप्रेक्ष्य ब्रह्मवध्याभयान्नदी । अपोवाह वशिष्ठं तं प्राचीं दिशमतन्द्रिता । उभयोः कुर्वती वाक्यं वञ्चयित्वा तु गाधिजम् ॥ ३५ ॥ ततोऽपवाहितं दृष्ट्वा वशिष्ठमृषिसत्तमम् । अब्रवीत्त्वथ संक्रुद्धो विश्वामित्रो ह्यमर्षणः ॥ ३६ ॥ यस्मान्मां त्वं सरिच्छ्रेष्ठे वञ्चयित्वा पुनर्गता । शोणितं वह कल्याणि रक्षोग्रामस्य सम्मतम् ॥ ३७ ॥ ततः सरस्वती शप्ता विश्वामित्रेण धीमता । अवहच्छोणितोन्मिश्रं तोयं संवत्सरं तदा ॥ ३८ ॥ अथर्षयश्च देवाश्च गन्धर्वाप्सरसस्तथा । सरस्वतीं तथा दृष्ट्वा बभूवुर्भृशदुःखिताः ॥ ३९ ॥ एवं वशिष्ठापवाहो लोके ख्यातो जनाधिप । आगच्छच्च पुनर्मार्गं स्वमेव सरितां वरा ॥ ४० ॥

इति शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

वैशम्पायन उवाच। सा शप्ता तेन क्रुद्धेन विश्वामित्रेण धीमता। तस्मिंस्तीर्थवरे शुभ्रे शोणितं समुपावहत्॥ १॥ अथाजग्मुस्ततो राजन्राक्षसास्तत्र भारत। तत्र ते शोणितं सर्वे पिबन्तः सुखमासते॥ २॥ तृप्ताश्च सुभृशं तेन सुखिता विगतज्वराः। नृत्यन्तश्च हसन्तश्च यथा स्वर्गजितस्तथा॥ ३॥ कस्यचित्त्वथ कालस्य ऋषयः सुतपोधनाः। तीर्थयात्रां समाजग्मुः सरस्वत्यां महीपते॥ ४॥ तेषु सर्वेषु तीर्थेषु त्वाप्लुत्य मुनिपुङ्गवाः। प्राप्य प्रीतिं परां चापि तपोलुब्धा विशारदाः॥ ५॥ प्रययुर्हि ततो राजन् येन तीर्थमसृग्वहम्। अथागम्य महाभागास्तत्तीर्थं दारुणं तदा॥ ६॥ दृष्ट्वा तोयं सरस्वत्याः शोणितेन परिप्लुतम्। पीयमानञ्च रक्षोभिर्बहुभिर्नृपसत्तम॥ ७॥ तान् दृष्ट्वा राक्षसान् राजन् मुनयः संशितव्रताः। परित्राणे सरस्वत्याः परं यत्नं प्रचक्रिरे॥ ८॥ ते तु सर्वे महाभागाः समागम्य महाव्रताः। आहूय सरितां श्रेष्ठामिदं वचनमब्रुवन्॥ ९॥ कारणं ब्रूहि कल्याणि किमर्थं ते ह्रदो ह्ययम्। एवमाकुलतां यातः श्रुत्वा ध्यास्यामहे वयम्॥ १०॥ ततः सा सर्वमाचष्ट यथावृत्तं प्रवेपती। दुःखितामथ तां दृष्ट्वा ऊचुस्ते वै तपोधनाः॥ ११॥ कारणं श्रुतमस्माभिः शापश्चैव श्रुतोऽनघे। करिष्यामो वयं यत्नं सर्व एव तपोधनाः॥ १२॥ एवमुक्त्वा सरिच्छ्रेष्ठामूचुस्तेऽथ परस्परम्। विमोचयामहे सर्वे शापादेतां सरस्वतीम्॥ १३॥ ते सर्वे ब्राह्मणा राजंस्तपोभिर्नियमैस्तथा। उपवासैश्च विविधैर्यमैः कष्टव्रतैस्तथा॥ १४॥ आराध्य पशुभर्त्तारं महादेवं जगत्पतिम्। अमोचयन्त तां देवीं सरिच्छ्रेष्ठां सरस्वतीम्॥ १५॥ तेषान्तु सा प्रभावेन प्रकृतिस्था सरस्वती। प्रसन्नसलिला जज्ञे यथापूर्वं तथैव ह। विमुक्ता च सरिच्छ्रेष्ठा विबभौ सा यथा पुरा॥ १६॥ दृष्ट्वा तोयं सरस्वत्या मुनिभिस्तैस्तथाकृतम्। तानेव शरणं जग्मू राक्षसाः

क्षुधितास्तदा ॥ १७ ॥ बद्ध्वाञ्जलिं ततो राजन्राक्षसाः क्षुधयार्द्दिताः। ऊचुस्तान् वै मुनीन सर्व्वान् कृपायुक्तान् पुनः पुनः ॥१८॥ वयं हि क्षुधिताश्चैव धर्म्महीनाश्च शाश्वतात्। न च नः कामकारोऽयं यद्वयं पापकारिणः ॥ १९ ॥ युष्माकञ्चाप्रसादेन दुष्कृतेन च कर्म्मणा। यत् पापं वर्द्धतेऽस्माकं यतः स्मो ब्रह्मराक्षसाः ॥ २० ॥ योषिताञ्चैव पापेन योनिदोषकृतेन च। एवं हि वैश्यशूद्राणां क्षत्रियाणां तथैव च। ये ब्राह्मणान् प्रद्विषन्ति ते भवन्तीह राक्षसाः ॥ २१ ॥ आचार्य्यमृत्विजञ्चैव गुरुं वृद्धजनं तथा। प्राणिनो येऽवमन्यन्ते ते भवन्तीह राक्षसाः ॥ २२ ॥ तत् कुरुध्वमिहास्माकं तारणं द्विजसत्तमाः। शक्ता भवन्तः सर्व्वेषां लोकानामपि तारणे ॥ २३ ॥ तेषान्तु मुनयः श्रुत्वा तुष्टुवुस्तां महानदीम्। मोक्षार्थं रक्षसां तेषामूचुः प्रयतमानसाः ॥ २४ ॥ क्षुतं कीटावपन्नञ्च यच्चोच्छिष्टान्वितं भवेत्। सकेशमवधूतञ्च रुदितोपहतञ्च यत्। एभिः संसृष्टमन्नञ्च भागोऽसौ रक्षसामिह ॥ २५ ॥ तस्माज्ज्ञात्वा सदा विद्वानेतान् यत्नाद्विवर्ज्जयेत्। राक्षसान्नमसौ भुङ्क्ते यो भुङ्क्ते ह्यन्नमीदृशम् ॥ २६ ॥ शोधयित्वा ततस्तीर्थमृषयस्ते तपोधनाः। मोक्षार्थं राक्षसानाञ्च नदीं तां प्रत्यचोदयन् ॥ २७ ॥ महर्षीणां मतं ज्ञात्वा ततः सा सरितां वरा। अरुणामानयामास स्वां तनुं पुरुषर्षभ ॥ २८ ॥ तस्यां ते राक्षसाः स्नात्वा तनूस्त्यक्त्वा दिवं गताः। अरुणायां महाराज ब्रह्मवध्यापहा हि सा ॥ २९ ॥ एतमर्थमभिज्ञाय देवराजः शतक्रतुः। तस्मिंस्तीर्थवरे स्नात्वा विमुक्तः पाप्मना किल ॥ ३० ॥

जनमेजय उवाच। किमर्थं भगवान् शक्रो ब्रह्मवध्यामवाप्तवान्। कथमस्मिंश्च तीर्थे वै आप्लुत्याकल्मषोऽभवत् ॥ ३१ ॥

वैशम्पायन उवाच। शृणुष्वैतदुपाख्यानं यथावृत्तं जनेश्वर। यथा बिभेद समयं नमुचेर्वासवः पुरा ॥ ३२ ॥ नमुचिर्वासवाद्भीतः

सूर्य्यरश्मिं समाविशत् । तेनेन्द्रः सख्यमकरोत् समयञ्चेदमब्रवीत् ॥ ३३ ॥ न चार्द्रेण न शुष्केण न रात्रौ नापि चाहनि । वधि-ष्याम्यसुरश्रेष्ठ सखे सत्येन ते शपे ॥ ३४ ॥ एवं स समयं कृत्वा दृष्ट्वा नीहारमीश्वरः । चिच्छेदास्य शिरो राजन्नपां फेणेन वासवः ॥ ३५ ॥ तच्छिरो नमुचेश्छिन्नं पृष्ठतः शक्रमन्वयात् । भो मित्रहन् पापेति ब्रुवाणं शक्रमन्तिकात् ॥ ३६ ॥ एवं स शिरसा तेन चोद्यमानः पुनः पुनः । पितामहाय सन्तप्त एतमर्थं न्यवेदयत् ॥ ३७ ॥ तमब्रवील्लोकगुरुररुणायां यथाविधि । इष्ट्वोपस्पृश देवेन्द्र तीर्थे पापभयापहे ॥ ३८ ॥ एषा पुण्यजला शक्र कृता मुनिभिरेव च । निगूढमस्यागमनमिहासीत् पूर्वमेव तु ॥ ३९ ॥ ततोऽभ्येत्यारुणां देवीं प्लावयामास वारिणा । सरस्वत्यारुणायाश्च पुण्योऽयं सङ्गमो महान् ॥ ४० ॥ इह तं यज देवेन्द्र दद दाना-न्यनेकशः । अत्राप्लुत्य सुघोरात्त्वं पातकाद्विप्रमोच्यसे ॥ ४१ ॥ इत्युक्तः स सरस्वत्याः कुञ्जे वै जनमेजय । ब्रह्मणो वचना-च्छक्रो यजद्दयज्ञैरनेकशः ॥ ४२ ॥ दत्त्वा दानान्यनेकानि स्नात्वा तीर्थे शतक्रतुः । इष्ट्वा यथावद्बलभिदरुणायामुपास्पृशत् ॥ ४३ ॥ स मुक्तः पाप्मना तेन ब्रह्मवध्याकृतेन ह । जगाम संहृष्टमना-स्त्रिदिवं त्रिदिवेश्वरः ॥ ४४ ॥ शिरस्तच्चापि नमुचेस्तत्रैवाप्लुत्य भारत । लोकान् कामदुधान् प्राप्तमक्षयान्राजसत्तम ॥ ४५ ॥

वैशम्पायन उवाच । तत्राप्युपस्पृश्य बलो महात्मा दत्त्वा च दानानि पृथग्विधानि । अवाप्य धर्मं परमार्य्यकर्मा जगाम सोमस्य महत् सुतीर्थम् ॥ ४६ ॥ यत्रायजद्राजसूयेन सोमः साक्षात् पुरा विधिवत् पार्थिवेन्द्र । अत्रिर्धीमान् विप्रमुख्यो बभूव होता यस्मिन् क्रतुमुख्ये महात्मा ॥ ४७ ॥ यस्यान्तेऽभूत् सुमहादान-वानां दैतेयानां राक्षसानाञ्च देवैः । यस्मिन् युद्धं तारकाख्यं सुतीव्रं यत्र स्कन्दस्तारकं वै जघान ॥ ४८ ॥ सैनापत्यं लब्ध-

वान् देवतानां महासेनो यत्र दैत्यान्तकर्त्ता। साक्षाच्चापि न्यवसत् कार्त्तिकेयः सदा कुमारो यत्र स प्लक्षराज॥ ४९॥

इति शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां त्रिचत्वारिंशत्तमोऽध्यायः॥ ४३॥

---

जनमेजय उवाच। सरस्वत्याः प्रभावोऽयमुक्तस्ते द्विजसत्तम। कुमारस्याभिषेकन्तु ब्रह्मन् व्याख्यातुमर्हसि॥ १॥ यस्मिन् काले च देशे च यथा च वदतां वर। यैश्चाभिषिक्तो भगवान् विधिना येन च प्रभुः॥ २॥ स्कन्दो यथा च दैत्यानामकरोत् कदनं महत्। तथा मे सर्व्वमाचक्ष्व परं कौतूहलं हि मे॥ ३॥

वैशम्पायन उवाच। कुरुवंशस्य सदृशं कौतूहलमिदं तव। हर्षमुत्पादयत्येव वचो मे जनमेजय॥ ४॥ हन्त ते कथयिष्यामि शृण्वानस्य जनाधिप। अभिषेकं कुमारस्य प्रभावञ्च महात्मनः॥ ५॥ तेजो माहेश्वरं स्कन्नमग्नौ प्रपतितं पुरा। तत् सर्व्वभक्षो भगवान्नाशकद्दग्धुमक्षयम्॥ ६॥ तेनासीदतितेजस्वी दीप्तिमान् हव्यवाहनः। न चैव धारयामास गर्भं तेजोमयं तदा॥ ७॥ स गङ्गामभिसङ्गस्य नियोगाद्ब्रह्मणः प्रभुः। गर्भमाहितवान् दिव्यं भास्करोपमतेजसम्॥ ८॥ अथ गङ्गापि तं गर्भमसहन्ती विधारणे। उत्ससर्ज्ज गिरौ रम्ये हिमवत्यमरार्च्चिते॥ ९॥ स तत्र ववृधे लोकानावृत्य ज्वलनात्मजः। ददृशुर्ज्वलनाकारं तं गर्भमथ कृत्तिकाः॥ १०॥ शरस्तम्बे महात्मानमनलात्मजमीश्वरम्। ममायमिति ताः सर्व्वाः पुत्रार्थिन्योऽभिचक्रमुः॥ ११॥ तासां विदित्वा भावं तं मातॄणां भगवान् प्रभुः। प्रस्नुतानां पयः षड्भिर्व्वदनैरपिवत्तदा॥ १२॥ तं प्रभावं समालक्ष्य तस्य बालस्य कृत्तिकाः। परं विस्मयमापन्ना देव्यो दिव्यवपुर्द्धराः॥ १३॥

यत्रोत्सृष्टः स भगवान् गङ्गायां गिरिमूर्द्धनि। स शैलः काञ्चनः सर्व्वः संबभौ कुरुनन्दन॥ १४॥ वर्द्धता चैव गर्भेण पृथिवी तेन रञ्जिता। अतश्च सर्व्वे संवृत्ता गिरयः काञ्चनाकराः॥१५॥ कुमारः सुमहावीर्य्यः कार्त्तिकेय इति स्मृतः। गाङ्गेयः पूर्व्वमभवन्महायोगबलान्वितः॥ १६॥ शमेन तपसा चैव वीर्य्येण स समन्वितः। ववृधेऽतीव राजेन्द्र चन्द्रवत् प्रियदर्शनः॥ १७॥ स तस्मिन् काञ्चने दिव्ये शरस्तम्बे श्रिया वृतः। स्तूयमानः सदा शेते गन्धर्व्वैर्मुनिभिस्तथा॥ १८॥ तथैनमन्वनृत्यन्त देवकन्याः सहस्रशः। दिव्यवादित्रनृत्यज्ञाः स्तुवन्त्यश्चारुदर्शनाः॥ १९॥ अन्वास्ते च नदी देवं गङ्गा वै सरितांवरा। दधार पृथिवी चैनं बिभ्रती रूपमुत्तमम्॥ २०॥ जातकर्म्मादिकास्तत्र क्रियाश्चक्रे बृहस्पतिः। वेदश्चैनञ्चतुर्मूर्त्तिरुपतस्थे कृताञ्जलिः॥ २१॥ धनुर्व्वेदश्चतुष्पादः शस्त्रग्रामः ससंग्रहः। तत्रैनं समुपातिष्ठत् साक्षाद्वाणी च केवला॥ २२॥ स ददर्श महावीर्य्यो देवदेवमुमापतिम्। शैलपुत्र्या सहासीनं भूतसंघशतैर्वृतम्॥ २३॥ निकाया भूतसंघानां परमाद्भुतदर्शनाः। विकृता विकृताकारा विकृताभरणध्वजाः॥ २४॥ व्याघ्रसिंहर्क्षवदना विडालमकराननाः। वृषदंशमुखाश्चान्ये गजोष्ट्रवदनास्तथा उलूकवदनाः केचित् गृध्रगोमायुदर्शना॥ २५॥ क्रौञ्चपारावतनिभैर्व्वदनै राङ्कवैरपि। श्वाविच्छल्लकगोधानामजैडकगवान्तथा। सदृशानि वपूंष्यन्ये तत्र तत्र व्यधारयन्॥ २६॥ केचिच्छैलाम्बुदप्रख्याश्चक्रोद्यतगदायुधाः। केचिदञ्जनपुञ्जाभाः केचिच्छ्वेताचलप्रभाः। सप्त मातृगणाश्चैव समाजग्मुर्विशाम्पते॥ २७॥ साध्या विश्वेऽथ मरुतो वसवः पितरस्तथा। रुद्रादित्यास्तथा सिद्धा भुजगा दानवा खगाः॥ २८॥ ब्रह्मा स्वयम्भूर्भगवान् सपुत्रः सह विष्णुना। शक्रस्तथाभ्ययाद्द्रष्टुं कुमारवरमच्युतम्॥ २९॥ नारदप्रमुखाश्चापि देवगन्धर्व्वसत्तमाः। देवर्षयश्च

श्चिन्द्राश्च वृहस्पतिपुरोगमाः ॥ ३० ॥ पितरो जगतः श्रेष्ठा देवानामपि देवताः। तेऽपि तत्र समाजग्मुर्यामा धामाश्च सर्व्वशः ॥ ३१ ॥ स तु बालोऽपि बलवान् महायोगबलान्वितः। अभ्याजगाम देवेशं शूलहस्तं पिनाकिनम् ॥ ३२ ॥ तमाव्रजन्तमालक्ष्य शिवस्यासीन्मनोगतम्। युगपच्छैलपुत्राश्च गङ्गाया पावकस्य च ॥ ३३ ॥ कं नु पूर्व्वमयं बालो गौरवादभ्युपैष्यति। अपि मामिति सर्व्वेषां तेषामासीन्मनोगतम् ॥ ३४ ॥ तेषामेतदभिप्रायं चतुर्णामुपलक्ष्य सः। युगपद्योगमास्थाय ससर्ज्ज विविधास्तनुः ॥ ३५ ॥ ततोऽभवच्चतुर्मूर्त्तिः क्षणेन भगवान् प्रभुः। तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठतः ॥ ३६ ॥ एवं स कृत्वा ह्यात्मानं चतुर्धा भगवान् प्रभुः। यतो रुद्रस्ततः स्कन्दो जगामाद्भुतदर्शनः ॥ ३७ ॥ विशाखस्तु ययौ येन देवी गिरिवरात्मजा। शाखो ययौ च भगवान् वायुमूर्त्तिर्विभावसुम्। नैगमेयोऽगमद्गङ्गां कुमारः पावकप्रभः ॥ ३८ ॥ सर्व्वे भास्वरदेहास्ते चत्वारः समरूपिणः। तान् समभ्ययुरव्यग्रास्तदद्भुतमिवाभवत् ॥ ३९ ॥ हाहाकारो महानासीद्देवदानवरक्षसाम्। तद्दृष्ट्वा महदाश्चर्य्यमद्भुतं लोमहर्षणम् ॥ ४० ॥ ततो रुद्रश्च देवी च पावकश्च पितामहम्। गङ्गया सहिताः सर्व्वे प्रणिपेतुर्ज्जगत्पतिम् ॥ ४१ ॥ प्रणिपत्य ततस्ते तु विधिवद्राजपुङ्गव। इदमूचुर्व्वचो राजन् कार्त्तिकेयप्रियेप्सया ॥ ४२ अस्य बालस्य भगवन्नाधिपत्यं यथेप्सितम्। अस्मत् प्रियार्थं देवेश सदृशं दातुमर्हसि ॥ ४३ ॥ ततः स भगवान् धीमान् सर्व्वलोकपितामहः। मनसा चिन्तयामास किमयं लभतामिति ॥ ४४ ॥ ऐश्वर्य्याणि हि सर्व्वाणि देवगन्धर्व्वरक्षसाम्। भूतयक्षविहङ्गानां पन्नगानाञ्च सर्व्वशः ॥ ४५ ॥ पूर्व्वमेवादिदेशासौ निकायेषु महात्मनाम्। समर्थञ्च तमैश्वर्य्ये महामतिरमन्यत ॥ ४६ ॥ ततो मुहूर्त्तं स ध्यात्वा देवानां श्रेयसि स्थितः। सैनापत्यं ददौ तस्मै

सर्वभूतेषु भारत ॥ ४७ ॥ सर्वदेवनिकायानां ये राजानः परि-
श्रुताः। तान् सर्वान् व्यादिदेशास्मै सर्वभूतपितामहः ॥ ४८ ॥
ततः कुमारमादाय देवा ब्रह्मपुरोगमाः। अभिषेकार्थमाजग्मुः
सशैलेन्द्रं सहितास्ततः ॥ ४९ ॥ पुण्यां हैमवतीं देवीं सरिच्छ्रेष्ठां
सरस्वतीम्। समन्तपञ्चके या वै त्रिषु लोकेषु विश्रुता ॥ ५० ॥
तत्र तीरे सरस्वत्याः पुण्ये सर्वगुणान्विते। निषेदुर्देवगन्धर्वाः
सर्वे सम्पूर्णमानसाः ॥ ५१ ॥

इति शल्यपर्वणि गदायुद्धपर्वणि युधिष्ठिरदुर्य्योधनसंवादे
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

वैशम्पायन उवाच। ततोऽभिषेकसम्भारान् सर्वान् संभृत्य
शास्त्रतः। बृहस्पतिः समिद्धेऽग्नौ जुहावाग्निं यथाविधि ॥ १ ॥
ततो हिमवता दत्ते मणिप्रवरशोभिते। दिव्यरत्नाचिते पुण्ये
निषण्णं परमासने ॥ २ ॥ सर्वमङ्गलसम्भारैर्विधिमन्त्रपुरस्कृतम्।
आभिषेचनिकं द्रव्यं गृहीत्वा देवतागणाः ॥ ३ ॥ इन्द्रविष्णू महा-
वीर्य्यौ सूर्य्याचन्द्रमसौ तथा। धाता चैव विधाता च तथा चैवा-
निलानिलौ ॥ ४ ॥ पूष्णा भगेनार्य्यम्णा च अंशेन च विवस्वता।
रुद्रश्च सहितो धीमान् मित्रेण वरुणेन च ॥ ५ ॥ रुद्रैर्वसुभि-
रादित्यैरश्विभ्याञ्च वृतः प्रभुः। विश्वैर्देवैर्मरुद्भिश्च साध्यैश्च
पितृभिः सह ॥ ६ ॥ गन्धर्वैरप्सरोभिश्च यक्षराक्षसपन्नगैः।
देवर्षिभिरसङ्ख्येयैस्तथा ब्रह्मर्षिभिर्वरैः ॥ ७ ॥ वैखानसैर्वालि-
खिल्यैर्वाय्वाहारैर्मरीचिपैः। भृगुभिश्चाङ्गिरोभिश्च यतिभिश्च महा-
त्मभिः ॥ ८ ॥ सर्वैर्विद्याधरैः पुण्यैर्योगसिद्धैस्तथा वृतः। पिता-
महः पुलस्त्यश्च पुलहश्च महातपाः ॥ ९ ॥ अङ्गिराः कश्यपोऽत्रिश्च
मरीचिर्भृगुरेव च। क्रतुर्हरः प्रचेताश्च मनुर्दक्षस्तथैव च ॥ १० ॥

ऋतवश्च ग्रहाश्चैव ज्योतींषि च विशाम्पते। मूर्त्तिमत्यश्च सरितो
वेदाश्चैव सनातनाः॥ ११॥ समुद्राश्च ह्रदाश्चैव तीर्थानि विवि-
धानि च। पृथिवी द्यौर्द्दिशश्चैव पादपाश्च जनाधिप॥ १२॥
अदितिर्द्देवमाता च ह्रीः श्रीः स्वाहा सरस्वती। उमा शची
सिनीवाली तथा चानुमतिः कुहूः॥ १३॥ राका च धिषणा चैव
पत्न्यश्चान्या दिवौकसाम्। हिमवांश्चैव विन्ध्यश्च मेरुश्चानेकशृङ्ग-
वान्॥ १४॥ ऐरावतः सानुचरः कलाः काष्ठास्तथैव च। मासार्द्ध-
मासा ऋतवस्तथा रात्र्यहनी नृप॥ १५॥ उच्चैःश्रवा हयश्रेष्ठो
नागराजश्च वासुकिः। अरुणो गरुड़श्चैव वृक्षाश्चौषधिभिः सह
॥ १६॥ धर्म्मश्च भगवान् देवः समाजग्मुर्हि सङ्गताः। कालो
यमश्च मृत्युश्च यमस्यानुचराश्च ये॥ १७॥ बहुलत्वाच्च नोक्ता ये
विविधा देवतागणाः। ते कुमाराभिषेकार्थं समाजग्मुस्ततस्ततः
॥ १८॥ जगृहुस्ते तदा राजन् सर्व्व एव दिवौकसः। आभि-
षेचनिकं भाण्डं मङ्गलानि च सर्व्वशः॥ १९॥ दिव्यसम्भारसंयुक्तैः
कलसैः काञ्चनैर्नृप। सरस्वतीभिः पुण्याभिर्द्दिव्यतोयाभिरेव च
॥ २०॥ अभ्यषिञ्चन् कुमारं वै संप्रहृष्टा दिवौकसः। सेनापतिं
महात्मानमसुराणां भयङ्करम्॥ २१॥ पुरा यथा महाराज
वरुणं वै जलेश्वरम्। तथाभ्यषिञ्चद्भगवान् ब्रह्मा लोकपितामहः।
कश्यपश्च महातेजा ये चान्ये नानुकीर्त्तिताः॥ २२॥ तस्मै ब्रह्मा
ददौ प्रीतो बलिनो वातरंहसः। कामवीर्य्यधरान् सिद्धान् महा-
पारिषदान् प्रभुः॥ २३॥ नन्दिसेनं लोहिताक्षं घण्टाकर्णञ्च
सम्मतम्। चतुर्थमस्यानुचरं ख्यातं कुमुदमालिनम्॥ २४॥ ततः
स्थाणुर्म्महावेगं महापारिषदं प्रभुः। मायाशतधरं कामं काम-
वीर्य्यबलान्वितम्। ददौ स्कन्दाय राजेन्द्र सुरारिविनिवर्हणम्
॥ २५॥ स हि देवासुरे युद्धे दैत्यानां भीमकर्म्मणाम्। जघान
दोर्भ्यां संक्रुद्धः प्रयुतानि चतुर्द्दश॥ २६॥ तथा देवा ददुस्तस्मै

सेनां नैऋतसङ्कुलाम्। देवशत्रुक्षयकरीमजय्यां विष्णुरूपिणीम् ॥ २७ ॥ जयशब्दं तथा चक्रुर्देवाः सर्वे सवासवाः। गन्धर्वयक्ष-रक्षांसि मुनयः पितरस्तथा ॥ २८ ॥ ततः प्रादादनुचरौ यमः कालोपमावुभौ। उन्माथञ्च प्रमाथञ्च महावीर्यौ महाद्युती ॥२९॥ सुभ्राजो भास्वरश्चैव यौ तौ सूर्य्यानुयायिनौ। तौ सूर्य्यः कार्त्ति-केयाय ददौ प्रीतः प्रतापवान् ॥ ३० ॥ कैलासशृङ्गसङ्काशौ श्वेतमाल्यानुलेपनौ। सोमोऽप्यनुचरौ प्रादान्मणिं सुमणिमेव च ॥ ३१ ॥ ज्वालाजिह्वं तथा ज्योतिरात्मजाय हुताशनः। ददा-वनुचरौ शूरौ परसैन्यप्रमाथिनौ ॥ ३२ ॥ परिघञ्च वटञ्चैव भीमञ्च सुमहाबलम्। दहतिं दहनञ्चैव प्रचण्डौ वीर्य्यसम्मतौ। अंशोऽ-प्यनुचरान् पञ्च ददौ स्कन्दाय धीमते ॥ ३३ ॥ उत्क्रोशं पङ्कज-ञ्चैव वज्रदण्डधरावुभौ। ददावनलपुत्राय वासवः परवीरहा। तौ हि शत्रून्महेन्द्रस्य जघ्नतुः समरे बहून् ॥ ३४ ॥ चक्रञ्च विक्रम-ञ्चैव संक्रमञ्च महाबलम्। स्कन्दाय त्रीननुचरान् ददौ विष्णु-र्महायशा ॥३५॥ बर्द्धनं नन्दनञ्चैव सर्वविद्याविशारदौ। स्कन्दाय ददतुः प्रीतावश्विनौ भरतर्षभ ॥ ३६ ॥ कुन्दञ्च कुसुमञ्चैव कुमु-दञ्च महायशाः। डम्बराडम्बरौ चैव ददौ धाता महात्मने ॥३७॥ चक्रानुचक्रौ बलिनौ मेषचक्रौ बलोत्कटौ। ददौ त्वष्टा महामायौ स्कन्दायानुचरावुभौ ॥ ३८ ॥ सुव्रतं सत्यसन्धञ्च ददौ मित्रो महा-त्मने। कुमाराय महात्मानौ तपोविद्याधरौ प्रभुः। सुदर्शनीयौ वरदौ त्रिषु लोकेषु विश्रुतौ ॥ ३९ ॥ सुप्रभञ्च महात्मानं शुभ-कर्माणमेव च। कार्त्तिकेयाय संप्रादाद्विधाता लोकविश्रुतौ ॥४०॥ पाणित्रकं कालिकञ्च महामायाविनावुभौ। पूषा च पार्षदौ प्रादात् कार्त्तिकेयाय भारत ॥ ४१ ॥ बलञ्चातिबलञ्चैव महावक्त्रौ महाबलौ। प्रददौ कार्त्तिकेयाय वायुर्भरतसत्तम ॥ ४२ ॥ घस-श्चातिघसश्चैव तिमिवक्त्रौ महाबलौ। प्रददौ कार्त्तिकेयाय वरुणः

सत्यसङ्गरः ॥ ४३ ॥ सुवर्च्चसं महात्मानं तथैवाप्यतिवर्च्चसम्।
हिमवान् प्रददौ राजन् हुताशनसुताय वै॥ ४४ ॥ काञ्चनञ्च
महात्मानं मेघमालिनमेव च। ददावनुचरौ मेरुरग्निपुत्राय भारत
॥ ४५ ॥ स्थिरञ्चातिस्थिरञ्चैव मेरुरेवापरौ ददौ। महात्मने-
ऽग्निपुत्राय महाबलपराक्रमौ ॥ ४६ ॥ उच्छ्रितञ्चाग्निशृङ्गञ्च महा-
पाषाणयोधिनौ। प्रददावग्निपुत्राय विन्ध्यः पारिषदावुभौ ॥४७॥
संग्रहं विग्रहञ्चैव समुद्रोऽपि गदाधरौ। प्रददावग्निपुत्राय महा-
पारिषदावुभौ ॥ ४८ ॥ उन्मादं पुष्पदन्तञ्च शङ्कुकर्णं तथैव च।
प्रददावग्निपुत्राय पार्वती शुभदर्शना ॥ ४९ ॥ जयं महाजयञ्चैव
नागौ ज्वलनसूनवे। प्रददौ पुरुषव्याघ्र वासुकिः पन्नगेश्वरः ॥५०
एवं साध्याश्च रुद्राश्च वसवः पितरस्तथा। सागराः सरितश्चैव
गिरयश्च महाबलाः ॥ ५१ ॥ ददुः सेनागणाध्यक्षान् शूलपट्टिश-
धारिणः। दिव्यप्रहरणोपेतान्नानावेशविभूषितान् ॥ ५२ ॥ शृणु
नामानि चाप्येषां येऽन्ये स्कन्दस्य सैनिकाः। विविधायुधसम्पन्ना-
श्चित्राभरणवर्म्मिणः ॥ ५३ ॥ शङ्कुकर्णो निकुम्भश्च पद्मः कमुद एव
च। अनन्तो द्वादशभुजस्तथा कृष्णोपकृष्णकौ ॥ ५४ ॥ घ्राण-
श्रवाः कपिस्कन्धः काञ्चनाक्षो जलन्धमः। अक्षसन्तर्ज्जनो राजन्
कुनदीकस्तमोऽभ्रकृत् ॥ ५५ ॥ एकाक्षो द्वादशाक्षश्च तथैवेकजटः
प्रभुः। सहस्रबाहुर्विकटो व्याघ्राक्षः क्षितिकम्पनः ॥ ५६ ॥ पुण्य-
नामा सुनामा च सुवक्त्रः प्रियदर्शनः। परिश्रुतः कोकनदः प्रिय-
माल्यानुलेपनः ॥ ५७ ॥ अजोदरो गजशिराः स्कन्धाक्षः शत-
लोचनः। ज्वालाजिह्वः करालश्च शितकेशो जटी हरिः ॥ ५८ ॥
परिश्रुतः कोकनदः कृष्णकेशो जटाधरः। चतुर्दंष्ट्रोऽष्टजिह्वश्च
मेघनादः पृथुश्रवाः ॥ ५९ ॥ विद्युताक्षो धनुर्वक्त्रो जाठरो मरुता-
शनः। उदराक्षो रथाक्षश्च वज्रनाभो वसुप्रभः ॥ ६० ॥ समुद्र-
वेगो राजेन्द्र शैलकम्पी तथैव च। वृषमेषप्रवाहश्च तथा नन्दोप-

नन्दकौ ॥ ६१ ॥ धर्म्मः श्वेतः कलिङ्गश्च सिद्धार्थों वरदस्तथा। प्रियकश्चैव नन्दश्च गोनन्दश्च प्रतापवान् ॥ ६२ ॥ आनन्दश्च प्रमोदश्च स्वस्तिको ध्रुवकस्तथा। क्षेमवाहः सुवाहश्च सिद्धपात्रश्च भारत ॥ ६३ ॥ गोव्रजः कनकापीड़ो महापारिषदेश्वरः। गायनो हसनश्चैव बाणः खड्‌गश्च वीर्य्यवान् ॥ ६४ ॥ वैताली चातिताली च तथा कथकवातिकौ। हंसजः पङ्कदिग्धाङ्गः समुद्रोन्मादनश्च ह ॥ ६५ ॥ रणोत्कटः प्रहासश्च श्वेतसिद्धश्च नन्दकः। कालकण्ठः प्रभासश्च तथा कुम्भाण्डकोऽपरः ॥ ६६ ॥ कालकाक्षः सितश्चैव भूतलोन्मथनस्तथा। यज्ञवाहः प्रवाहश्च देवयाजी च सोमपः ॥ ६७ मज्जालश्च महातेजाः क्रथक्राथौ च भारत। तुहरश्च तुहारश्च चित्रदेवश्च वीर्य्यवान् ॥ ६८ ॥ मधुरः सुप्रसादश्च किरीटी च महाबलः। वत्सलो मधुवर्णश्च कलसोदर एव च ॥ ६९ ॥ धर्मदो मन्मथकरः सूचीवक्त्रश्च वीर्य्यवान्। श्वेतवक्त्रः सुवक्त्रश्च चारुवक्त्रश्च पाण्डुरः ॥ ७० ॥ दण्डबाहुः सुबाहुश्च रजः कोकिलकस्तथा। अचलः कनकाक्षश्च बालानामपि यः प्रभुः ॥ ७१ ॥ सञ्चारकः कोकनदो गृध्रपत्रश्च जम्बुकः। लोहाजवक्त्रो जवनः कुम्भवक्त्रश्च कुम्भकः ॥ ७२ ॥ मुण्डग्रीवश्च कृष्णौजा हंसवक्त्रश्च चन्द्रभः। पाणिकूर्चा च शम्बुकः पञ्चवक्त्रश्च शिक्षकः। चाषवक्त्रश्च जाम्बूकः खरवक्त्रश्च कुञ्चकः ॥ ७३ ॥ योगयुक्ता महात्मानः सततं ब्राह्मणप्रियाः। पैतामहा महात्मानो महापारिषदाश्च ह ॥ ७४ ॥ यौवनस्थाश्च वृद्धाश्च बालाश्च जनमेजय। सहस्रशः पारिषदाः कुमारमवतस्थिरे ॥ ७५ ॥ वक्त्रैर्नानाविधैर्यै तु शृणु तान् जनमेजय। कूर्मकुक्कटवक्त्राश्च दीर्घवक्त्राश्च भारत ॥ ७६ ॥ खरगोमायुमुखाश्चैव शशोलूकमुखास्तथा। खरोष्ट्रवदनाश्चान्ये वराहवदनास्तथा ॥ ७७ ॥ मनुष्यमेकवक्त्राश्च शृगालवदनास्तथा। भीमा मकरवक्त्राश्च शिशुमारमुखास्तथा ॥ ७८ ॥ मार्ज्जारदंशवक्त्राश्च

दीर्घवक्त्राश्च भारत । नकुलोलूकवक्त्राश्च काकवक्त्रास्तथापरे ॥७९॥ आखुवभ्रुकवक्त्राश्च मयूरवदनास्तथा । मत्स्यमेषाननाश्चान्ये अजाविमहिषानना ॥ ८० ॥ ऋच्चशार्दूलवक्त्राश्च द्वीपिसिंहानना-स्तथा । भीमा गजाननाश्चैव तथा नक्रमुखास्तथा ॥ ८१ ॥ गरुड़ा-ननाः खड्गिमुखा वृककाकमुखास्तथा । गोखरोष्ट्रमुखाश्चान्ये वृषदंशमुखास्तथा ॥ ८२ ॥ महाजठरपादाङ्गास्तारकाचाश्च भारत । पारावतमुखाश्चान्ये तथा वृषमुखाः परे ॥ ८३ ॥ कोकि-लाभाननाश्चान्ये श्येनतित्तिरिकाननाः । कृकलासमुखाश्चैव विरजो-ऽम्बरधारिणः ॥ ८४ ॥ व्यालवक्त्राः शूलिमुखाश्चण्डवक्त्राः शुभा-ननाः । आशीविषाश्चीरधरा गोनासावदनास्तथा ॥ ८५ ॥ स्थूलो-दराः कृशाङ्गाश्च स्थूलाङ्गाश्च कृशोदराः । ह्रस्वग्रीवा महाकर्णा नानाव्यालविभूषिताः ॥ ८६ ॥ गजेन्द्रचर्मवसनास्तथा कृष्णाजिना-म्बराः । स्कन्धेमुखा महाराज तथा ह्युदरतोमुखाः ॥ ८७ ॥ पृष्ठेमुखा हनुमुखास्तथा जङ्घामुखा अपि । पार्श्वाननाश्च बहवो नानादेशमुखास्तथा ॥ ८८ ॥ तथा कीटपतङ्गानां सदृशास्या गणे-श्वराः । नानाव्यालमुखाश्चान्ये बहुबाहुशिरोधराः ॥ ८९ ॥ नानावृक्षभुजाः केचित् कटीशीर्षास्तथापरे । भुजङ्गभोगवदना नानागुल्मनिवासिनः ॥९०॥ चीरसंवृतगात्राश्च नानाफलकवाससः । नानावेशधराश्चान्ये नानामाल्यानुलेपनाः ॥ ९१ ॥ नानावस्त्रधरा-श्चैव चर्मवासस एव च । उष्णीषिणो मुकुटिनः कम्बुग्रीवाः सुवर्च्चसः ॥ ९२ ॥ किरीटिनः पञ्चशिखास्तथा कठिनमूर्द्धजाः । त्रिशिखा द्विशिखाश्चैव तथा सप्तशिखाः परे ॥ ९३ ॥ शिखण्डिनो मुकुटिनो मुण्डाश्च जटिलास्तथा । चित्रमालाधराः केचित् केचि-द्रोमाननास्तथा ॥ ९४ ॥ विग्रहैकरसा नित्यमजेयाः सुरसत्तमैः । दिव्यनानाम्बरधराः सततं विग्रहप्रियाः ॥ ९५ ॥ कृष्णा निर्मांस-वक्त्राश्च दीर्घपृष्ठा निरूदराः । स्थूलपृष्ठाः ह्रस्वपृष्ठाः प्रलम्बोदर-

मेहनाः ॥ ९६ ॥ महाभुजा ह्रस्वभुजा ह्रस्वगात्राश्च वामनाः । कुब्जाश्च ह्रस्वजङ्घाश्च हस्तिकर्णशिरोधराः ॥ ९७ ॥ हस्तिनासाः कूर्मनासा वृकनासास्तथापरे । दीर्घौष्ठा दीर्घजङ्घाश्च विकराला ह्यधोमुखाः ॥ ९८ ॥ महादंष्ट्रा ह्रस्वदंष्ट्राश्चतुर्दंष्ट्रास्तथापरे । वारणेन्द्रनिभाश्चान्ये भीमा राजन् सहस्रशः ॥ ९९ ॥ सुविभक्तशरीराश्च दीप्तिमन्तः स्वलङ्कृताः । पिङ्गाक्षाः शङ्कुकर्णाश्च नक्रनासाश्च भारत ॥ १०० ॥ पृथुदंष्ट्रा महादंष्ट्रा स्थूलौष्ठा हरिमूर्द्धजाः । नानापादौष्ठदंष्ट्राश्च नानाहस्तशिरोधराः ॥ १०१ ॥ नानाचर्मभिराच्छन्ना नानाभाषाश्च भारत । कुशला देशभाषासु जल्पन्तोऽन्योऽन्यमीश्वराः ॥ १०२ ॥ हृष्टाः परिपतन्ति स्म महापारिषदास्तथा । दीर्घग्रीवाः दीर्घनखा दीर्घपादशिरोभुजाः ॥ १०३ ॥ पिङ्गाक्षा नीलकण्ठाश्च लम्बकर्णाश्च भारत । वृकोदरनिभाश्चैव केचिदञ्जनसन्निभाः ॥ १०४ ॥ श्वेताक्षा लोहितग्रीवाः पिङ्गाक्षाश्च तथापरे । कल्माषा बहवो राजंश्चित्रवर्णाश्च भारत ॥ १०५ ॥ चामरापीड़कनिभाः श्वेतलोहितराजयः । नानावर्णाः सुवर्णाश्च मयूरसदृशप्रभाः ॥ १०६ ॥ पुनः प्रहरणान्येषां कीर्त्त्यमानानि मे शृणु । शेषैः कृतः पारिषदैरायुधानां परिग्रहः ॥१०७॥ पाशोद्यतकराः केचित् व्यादितास्याः खराननाः । पृष्ठाक्षा नीलकण्ठाश्च तथा परिघवाहवः ॥ १०८ ॥ शतघ्नीचक्रहस्ताश्च तथा मुषलपाणयः । असिमुद्गरहस्ताश्च दण्डहस्ताश्च भारत ॥ १०९ ॥ शूलासिहस्ताश्च तथा महाकाया महाबलाः । गदाभुशण्डिहस्ताश्च तथा तोमरपाणयः ॥ ११० ॥ आयुधैर्विविधैर्घोरैर्महात्मानो महाजवाः । महाबला महावेगा महापारिषदास्तथा ॥ १११ ॥ अभिषेकं कुमारस्य दृष्ट्वा हृष्टा रणप्रियाः । घण्टाजालपिनद्धाङ्गा ननृतुस्ते महौजसः ॥ ११२ ॥ एते चान्ये च बहवो महापारिषदा नृप । उपतस्थुर्महात्मानं कार्त्तिकेयं यशस्विनम् ॥ ११३ ॥ दिव्या-

शाप्यन्तरीचाश्च पार्थिवाश्चानिलोपमाः। व्यादिष्टा दैवतैः शूराः
स्कन्दस्यानुचराभवन्॥ ११४॥ तादृशानां सहस्राणि प्रयुता-
न्यर्व्वुदानि च। अभिषिक्तं महात्मानं परिवार्य्योपतस्थिरे॥ ११५॥

इति शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां
स्कन्दाभिषेके पञ्चचत्वारिंशोऽध्यायः॥ ४५॥

---

वैशम्पायन उवाच। शृणु मातृगणान्राजन् कुमारानुचरा-
निमान्। कीर्त्त्यमानान्मया वीर सपत्नगणसूदनान्॥ १॥ यश-
स्विनीनां मातृणां शृणु नामानि भारत। याभिर्व्याप्तास्त्रयो
लोकाः कल्याणीभिश्चराचराः॥२॥ प्रभावती विशालाक्षी पलिता
गोनसी तथा। श्रीमती बहुला चैव तथैव बहुपुत्रिका॥ ३॥
अप्सुजाता च गोपाली बृहदम्बालिका तथा। जयावती माल-
तिका ध्रुवरत्ना भयङ्करी॥ ४॥ वसुदामा सुदामा च विशोका
नन्दिनी तथा। एकचूड़ा महाचूड़ा चक्रनेमिश्च भारत॥ ५॥
उत्तेजना जयत्सेना कमलाक्ष्यथ शोभना। शत्रुञ्जया तथा चैव
क्रोधना शलभी खरी॥ ६॥ माधवी शुभवक्त्रा च तीर्थसेनिश्च
भारत। गीतप्रिया च कल्याणी कद्रुरोमामिताशना॥ ७॥ मेघ-
स्वना भोगवती सुभ्रूश्च कनकावती। अलाताक्षी वीर्य्यवती विद्यु-
ज्जिह्वा च भारत॥ ८॥ पद्मावती सुनक्षत्रा कन्दरा बहुयोजना।
सन्तानिका च कौरव्य कमला च महावला॥ ९॥ सुदामा बहु-
दामा च सुप्रभा च यशस्विनी। नृत्यप्रिया च राजेन्द्र शतोलूखल-
मेखला॥ १०॥ शतघण्टा शतानन्दा भगनन्दा च भाविनी।
वपुष्मती चन्द्रशीता भद्रकाली च भारत॥ ११॥ झङ्कारिका
निष्कुटिका वामा चत्वरवासिनी। सुमङ्गला स्वस्तिमती वृद्धिकामा
जयप्रिया॥ १२॥ धनदा सुप्रसादा च भवदा च जनेश्वरी।

एडी भेडी समेडी च वेतालजननी तथा ॥ १३ ॥ कण्डूतिः कालिका चैव देवमित्रा च भारत। लम्बसी केतकी चैव चित्रसेना तथाचला ॥ १४ ॥ कुक्कुटिका शङ्खलिका तथा शकुनिका नृप। कुण्डरिका कोकिलिका कुम्भिकाथ शतोदरी ॥ १५ ॥ उत्क्राथिनी जलेला च महावेगाथ कङ्कणा। मनोजवा कण्टकिनी पनसा पूतना तथा ॥ १६ ॥ केशयान्तर्धटिर्वामा क्रोशनाथ तड़ित्प्रभा। मन्दोदरी तुण्डी च कोटरा मेघवाहिनी ॥ १७ ॥ सुभगा लम्बिनी लम्बा वसुचूड़ा विकत्थिनी। ऊर्द्धवेणीधरा चैव पिङ्गाक्षी लोहमेखला ॥ १८ ॥ पृथुवक्त्रा मधुलिका मधुकुम्भा तथैव च। यक्षालिका मत्सुनिका जरायुर्ज्जर्जरानना ॥ १९ ॥ ख्याता दहदहा चैव तथा धमधमा नृप। खण्डखण्डा च राजेन्द्र पूषणा मणिकुट्टिका ॥ २० ॥ अमोघा चैव कौरव्य तथा लम्बपयोधरा। वेणुवीणाधरा चैव पिङ्गाक्षी लोहमेखला ॥ २१ ॥ शशोलूकमुखी कृष्णा खरजङ्घा महाजवा। शिशुमारमुखी श्वेता लोहिताक्षी विभीषणा ॥ २२ ॥ जटालिका कामचरी दीर्घजिह्वा बलोत्कटा। कालेहिका वामनिका मुकुटा चैव भारत ॥२३॥ लोहिताक्षी महाकाया हरिपिण्डा च भूमिप। एकत्वचा सुकुसुमा कृष्णकर्णी च भारत ॥ २४ ॥ क्षुरकर्णी चतुष्कर्णी कर्णप्रावरणा तथा। चतुष्पथनिकेता च गोकर्णी महिषानना ॥ २५ ॥ खरकर्णी महाकर्णी भेरीस्वनमहास्वना। शङ्खकुम्भश्रवाश्चैव भगदा च महाबला ॥ २६ ॥ गणा च सुगणा चैव तथा भीन्यथ कामदा। चतुष्पथरता चैव भूतितीर्थान्यगोचरा ॥ २७ ॥ पशुदा वित्तदा चैव सुखदा च महायशाः। पयोदा गोमहिषदा सुविशाला च भारत ॥ २८ ॥ प्रतिष्ठा सुप्रतिष्ठा च रोचमाना सुरोचना। नौकर्णी मुखकर्णी च वशिरा मन्थिनी तथा। एकवक्त्रा मेघरवा मेघमाला विरोचना ॥ २९ ॥ एताश्चान्याश्च बहवो मातरो भरत-

र्षभ। कार्त्तिकेयानुयायिन्यो नानारूपाः सहस्रशः ॥ ३१ ॥ दीर्घ-
नख्यो दीर्घदन्त्यो दीर्घतुण्ड्यश्च भारत। सरला मधुराश्चैव यौव-
नस्थाः स्वलङ्कृताः ॥ ३१ ॥ माहात्म्येन च संयुक्ताः कामरूपधरा-
स्तथा। निर्मांसगात्राः श्वेताश्च तथा काञ्चनसन्निभाः ॥ ३२ ॥
कृष्णा मेघनिभाश्चान्या धूम्राश्च भरतर्षभ। अरुणाभा महाभागा
दीर्घकेश्यः सिताम्बराः ॥ ३३ ॥ ऊर्द्ध्ववेणीधराश्चैव पिङ्गाक्ष्यो
लम्बमेखलाः। लम्बोदर्य्यो लम्बकर्णास्तथा लम्बपयोधराः ॥ ३४ ॥
ताम्राक्ष्यस्ताम्रवर्णाश्च हर्य्यक्ष्यश्च तथापराः। वरदाः कामचारिण्यो
नित्यं प्रमुदितास्तथा ॥ ३५ ॥ याम्या रौद्रास्तथा सौम्याः कौबे-
र्य्योऽथ महाबला। वारुण्योऽथ च माहेन्द्र्यस्तथाग्नेय्यः परन्तप
॥ ३६ ॥ वायव्यश्चाथ कौमार्य्यो ब्राह्म्यश्च भरतर्षभ। वैष्णव्यश्च
तथा सौर्य्यो वाराह्यश्च महाबलाः ३७ ॥ रूपेणाप्सरसां तुल्या
मनोहार्य्यो मनोरमाः। परपुष्टोपमा वाक्ये तथर्द्ध्या धनदोपमाः
॥ ३८ ॥ शक्रवीर्य्योपमा युद्धे दीप्त्या वह्निसमास्तथा। शत्रूणां
विग्रहे नित्यं भयदास्ता भवन्त्युत ॥ ३९ ॥ कामरूपधराश्चैव जवे-
वायुसमास्तथा। अचिन्त्यबलवीर्य्याश्च तथाचिन्त्यपराक्रमाः ॥४०॥
वृक्षचत्वरवासिन्यश्चतुष्पथनिकेतनाः। गुहाश्मशानवासिन्यः शैल-
प्रस्रवणालयाः ॥ ४१ ॥ नानाभरणधारिण्यो नानामाल्याम्बरा-
स्तथा। नानाविचित्रवेशाश्च नानाभाषास्तथैव च ॥ ४२ ॥ एते
चान्ये च बहवो गणाः शत्रुभयङ्कराः। अनुजग्मुर्महात्मानं त्रिद-
शेन्द्रस्य सम्मते ॥ ४३ ॥ ततः शक्त्यस्त्रमदद्भगवान् पाकशासनः।
गुहाय राजशार्दूल विनाशाय सुरद्विषाम् ॥ ४४ ॥ महास्वनां
महाघण्टां द्योतमानां सितप्रभाम्। तरुणादित्यवर्णाञ्च पताकां
भरतर्षभ ॥ ४५ ॥ ददौ पशुपतिस्तस्मै सर्व्वभूतमहाचमूम्। उग्रां
नानाप्रहरणां तपोवीर्य्यबलान्विताम् ॥ ४६ ॥ अजेयां स्वगुणै-
र्युक्तां नाम्ना सेनां धनञ्जयाम्। रुद्रतुल्यबलैर्गुप्तां योधानामयुतै-

स्त्रिभिः । न सा विजानाति रणात् कदाचिद्विनिवर्त्तितुम् ॥ ४७ ॥ विष्णुर्ददौ वैजयन्तीं मालां बलविवर्द्धिनीम् । उमा ददौ विरजसी वाससी सूर्य्यसन्निभे ॥ ४८ ॥ गङ्गा कमण्डलुं दिव्यममृतोद्भवमुत्तमम् । ददौ प्रीत्या कुमाराय दण्डञ्चैव बृहस्पतिः ॥ ४९ ॥ गरुड़ो दयितं पुत्रं मयूरं चित्रबर्हिणम् ॥ ५० ॥ अरुणस्ताम्रचूड़ञ्च प्रददौ चरणायुधम् । नागन्तु वरुणो राजा बलवीर्य्यसमन्वितम् ॥ ५१ ॥ कृष्णाजिनं ततो ब्रह्मा ब्रह्मण्याय ददौ प्रभुः । समरेषु जयञ्चैव प्रददौ लोकभावनः ॥ ५२ ॥ सैनापत्यमनुप्राप्य स्कन्दो देवगणस्य ह । शुशुभे ज्वलितोऽर्च्चिष्मान् द्वितीय इव पावकः ॥ ५३ ॥ ततः पारिषदैश्चैव मातृभिश्च समन्वितः । ययौ दैत्यविनाशाय ह्लादयन् सुरपुङ्गवान् ॥ ५४ ॥ सा सेना नैर्ऋती भीमा सघण्टोच्छ्रितकेतना । सभेरीशङ्खमुरजा सायुधा सपताकिनी । शारदी द्यौरिवाभाति ज्योतिर्भिरिव शोभिता ॥ ५५ ॥ ततो देवनिकायास्ते नानाभूतगणास्तथा । वादयामासुरव्यग्रा भेरी शङ्खांश्च पुष्कलान् ॥ ५६ ॥ पटहान् झर्झरांश्चैव क्रकचान् गोविषाणिकान् । आड़म्बरान् गोमुखांश्च डिण्डिमांश्च महास्वनान् ॥ ५७ ॥ तुष्टुवुस्ते कुमारन्तु सर्व्वे देवाः सवासवाः । जगुश्च देवगन्धर्वा ननृतुश्चाप्सरोगणाः ॥ ५८ ॥ ततः प्रीतो महासेनस्त्रिदशेभ्यो वरं ददौ । रिपून् हन्तास्मि समरे ये वो वधचिकीर्षवः ॥ ५९ ॥ प्रतिगृह्य वरं देवास्तस्माद्विबुधसत्तमात् । प्रीतात्मानो महात्मानो मेनिरे निहतान् रिपून् ॥ ६० ॥ सर्व्वेषां भूतसङ्घानां हर्षान्नादः समुत्थितः । अपूरयत लोकांस्त्रीन् वरे दत्ते महात्मना ॥ ६१ ॥ स निर्ययौ महासेनो महत्या सेनया वृतः । वधाय युधि दैत्यानां रक्षार्थञ्च दिवौकसाम् ॥ ६२ ॥ व्यवसायो जयो धर्म्मः सिद्धिर्लक्ष्मीर्धृतिः स्मृतिः । महासेनस्य सैन्यानामग्रे जग्मुर्नराधिप ॥ ६३ ॥ स तया भीमया देवः शूलमुद्गरहस्तया ।

ज्वलितालातधारिण्या चित्राभरणवर्मया ॥ ६४ ॥ गदामुषल नाराचशक्तितोमरहस्तया । दृप्तसिंहनिनादिन्या विनद्य प्रययौ गुहः ॥ ६५ ॥ तं दृष्ट्वा सर्वदैतेया राक्षसा दानवास्तथा । व्यद्रवन्त दिशः सर्वा भयोद्विग्नाः समन्ततः ॥ ६६ ॥ अभ्यद्रवन्त देवास्तान् विविधायुधपाणयः । दृष्ट्वा च स ततः क्रुद्धः स्कन्दस्तेजोबलान्वितः ॥ ६७ ॥ शक्त्यस्त्रं भगवान् भीमं पुनः पुनरवासृजत् । आदधच्चात्मनस्तेजो हविषेद्ध इवानलः ॥६८॥ अभ्यस्यमाने शक्त्यस्त्रे स्कन्देनामिततेजसा । उल्काज्वाला महाराज पपात वसुधातले ॥ ६९ ॥ संह्रादयन्तश्च तथा निर्घाताश्चापतत् क्षितौ । यथान्तकालसमये सुघोराः स्युस्तथा नृप ॥ ७० ॥ क्षिप्ता ह्येका यदा शक्तिः सुघोरानलसूनुना । ततः कोट्यो विनिष्पेतुः शक्तीनां भरतर्षभ ॥ ७१ ॥ ततः प्रीतो महासेनो जघान भगवान् प्रभुः । दैत्येन्द्रं तारकं नाम महाबलपराक्रमम् । वृतं दैत्यायुतैर्वीरैर्बलिभिर्दशभिर्नृप ॥ ७२ ॥ महिषञ्चाष्टभिः पद्मैर्वृतं संख्ये निजघ्निवान् । त्रिपादञ्चायुधशतैर्जघान दशभिर्वृतम् ॥ ७३ ॥ ह्रदोदरं निखर्वैश्च वृतं दशभिरीश्वरः । जघानानुचरैः सार्द्धं विविधायुधपाणिभिः ॥ ७४ ॥ तत्राकुर्वन्त विपुलं नादं वध्यत्सु शत्रुषु । कुमारानुचरा राजन् पूरयन्तो दिशो दश । ननृतुश्च ववल्गुश्च जहसुश्च मुदान्विताः ॥ ७५ ॥ शक्त्यस्त्रस्य तु राजेन्द्र ततोऽर्च्चिर्भिः समन्ततः । दग्धाः सहस्रशो दैत्या नादैः स्कन्दस्य चापरे ॥७६॥ त्रैलोक्यं त्रासितं सर्वं जृम्भमाणमिवैव च । दग्धा महार्च्चिषोऽर्च्चिर्भिः सेनानादैर्हताः परे ॥ ७७ ॥ पताकयावधूताश्च हताः केचित् सुरद्विषः । केचिद्घण्टारवत्रस्ता निषेदुर्वसुधातले । केचित् प्रहरणैश्छिन्ना विनिपेतुर्गतायुषः ॥ ७८ ॥ एवं सुरद्विषोऽनेकान् बलवानाततायिनः । जघान समरे वीरः कार्त्तिकेयो महाबलः ॥ ७९ ॥ बाणो नामाथ दैतेयो बलेः पुत्रो महाबलः । क्रौञ्च-

पर्वतमाश्रित्य देवशत्रूनधावत ॥ ८० ॥ तमभ्ययान्महासेनः सुर-शत्रुमुदारधीः । स कार्त्तिकेयस्य भयात् क्रौञ्चं शरणमीयिवान् ॥ ८१ ॥ ततः क्रौञ्चं महामन्युः क्रौञ्चनादनिनादितम् । शक्त्या बिभेद भगवान् कार्त्तिकेयोऽग्निदत्तया ॥ ८२ ॥ स शालस्कन्ध-शबलं त्रस्तवानरवारणम् । प्रोड्डीनोद्भ्रान्तविहगं विनिष्पतित-पन्नगम् ॥ ८३ ॥ गोलाङ्गूलर्क्षसङ्घैश्च द्रवद्भिरनुनादितम् । कुरङ्ग-शतनिर्घोषनिनादितवनान्तरम् ॥८४॥ विनिष्पतद्भिः शरभैः सिंहैश्च सहसा द्रुतैः । शोच्यामपि दशां प्राप्तो रराजैव स पर्वत ॥ ८५ ॥ विद्याधराः समुत्पेतुस्तस्य शृङ्गनिवासिनः । किन्नराश्च समु-द्विग्नाः शक्तिपातरवोद्धताः ॥ ८६ ॥ ततो दैत्या विनिष्पेतुः शत-शोऽथ सहस्रशः । प्रदीप्तात् पर्वतश्रेष्ठाद्विचित्राभरणस्रजः । तान्निजघ्नुरतिक्रम्य कुमारानुचरा मृधे ॥ ८७ ॥ स चैव भगवान् क्रुद्धो दैत्येन्द्रस्य सुतं तदा । सहानुजं जघानाशु वृत्रं देवपति-र्यथा ॥ ८८ ॥ बिभेद शक्त्या क्रौञ्चञ्च पावकिः परवीरहा । बहुधा चैकधा चैव कृतात्मानं महाबलः ॥ ८९ ॥ शक्तिः क्षिप्ता रणे तस्य पाणिमेति पुनः पुनः । एवं प्रभावो भगवांस्ततो भूयश्च पावकिः ॥ ९० ॥ शौर्य्याद्द्विगुणयोगेन तेजसा यशसा श्रिया । क्रौञ्चस्तेन विनिर्भिन्नो दैत्याश्च शतशो हताः ॥ ९१ ॥ तत स भगवान् देवो निहत्य विबुधद्विषः । सभाज्यमानो विबुधैः परं हर्षमवाप ह ॥ ९२ ॥ भिन्ने क्रौञ्चे गिरिवरे चण्डपुत्रे च पातिते । ततो दुन्दुभयो राजन् नेदुः शङ्खाश्च भारत ॥ ९३ ॥ मुमुचुर्द्देव-योषाश्च पुष्पवर्षमनुत्तमम् । योगिनामीश्वरं देवं शतशोऽथ सह-स्रशः ॥ ९४ ॥ दिव्यं गन्धमुपादाय ववौ पुण्यश्च मारुतः । गन्धर्वा-स्तुष्टुवुश्चैनं यज्वानश्च महर्षयः ॥ ९५ ॥ केचिदेनं व्यवस्यन्ति पितामहसुतं प्रभुम् । सनत्कुमारं सर्वेषां ब्रह्मयोनिं तमग्रजम् ॥ ९६ ॥ केचिन्महेश्वरसुतं केचित् पुत्रं विभावसोः । उमायाः

कृत्तिकानाञ्च गङ्गायाश्च वदन्त्युत ॥ ९७ ॥ एकधा च द्विधा चैव चतुर्द्धा च महाबलम्। योगीनामीश्वरं देवं शतशोऽथ सहस्रशः ॥ ९८ ॥ एतत्ते कथितं राजन् कार्त्तिकेयाभिषेचनम्। शृणु चैव सरस्वत्यास्तीर्थवर्य्यस्य पुण्यताम् ॥ ९९ ॥ बभूव तीर्थप्रवरं हतेषु सुरशत्रुषु। कुमारेण महाराज त्रिपिष्टपमिवापरम् ॥१००॥ ऐश्वर्य्याणि च तत्रस्थो ददावीशः पृथक् पृथक्। तदा नैरृत-मुख्येभ्यस्त्रैलोक्यं पावकात्मजः ॥ १०१ ॥ एवं स भगवांस्तस्मिं-स्तीर्थे दैत्यकुलान्तकः। अभिषिक्तो महाराज देवसेनापतिः सुरैः ॥ १०२ ॥ तैजसं नाम तत्तीर्थं यत्र पूर्वमपाम्पतिः। अभिषिक्तः सुरगणैर्वरुणो भरतर्षभ ॥ १०३ ॥ तस्मिंस्तीर्थवरे स्नात्वा स्कन्द-ञ्चाभ्यर्च्य लाङ्गली। ब्राह्मणेभ्यो ददौ रुक्मं वासांस्याभरणानि च ॥ १०४ ॥ उषित्वा रजनीं तत्र माधवः परवीरहा। पूज्य तीर्थवरं तच्च स्पृष्ट्वा तोयञ्च लाङ्गली। हृष्टः प्रीतमनाश्चैव ह्यभव-न्माधवोत्तमः ॥१०५॥ एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि। यथाभिषिक्तो भगवान् स्कन्दो देवैः समागतैः ॥ १०६ ॥

इति शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां
सारस्वतोपाख्याने षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

जनमेजय उवाच। अत्यद्भुतमिदं ब्रह्मन् श्रुतवानस्मि तत्त्वतः। अभिषेकं कुमारस्य विस्तरेण यथाविधि ॥ १ ॥ यच्छ्रुत्वा पूत-मात्मानं विजानामि तपोधन। प्रहृष्टानि च रोमाणि प्रसन्नञ्च मनो मम ॥ २ ॥ अभिषेकं कुमारस्य दैत्यानाञ्च वधन्तथा। श्रुत्वा मे परमा प्रीतिर्भूयः कौतूहलं हि मे ॥ ३ ॥ अपाम्पतिः कथं ह्यस्मिन्नभिषिक्तः पुरा सुरैः। तन्मे ब्रूहि महाप्राज्ञः कुशलो ह्यसि सत्तमः ॥ ४ ॥

वैशम्पायन उवाच। शृणु राजन्निदं चित्रं पूर्वकल्पे यथा-तथम्। आदौ कृतयुगे राजन् वर्त्तमाने यथाविधि। वरुणं देवताः सर्वाः समेत्येदमथाब्रुवन् ॥ ५ ॥ यथास्मान् सुरराट् शक्रो भयेभ्यः पाति सर्वदा। तथा त्वमपि सर्वासां सरितां वै पतिर्भव ॥ ६ ॥ वासश्च ते सदा देव सागरे मकरालये। समुद्रोऽयं तव वशे भविष्यति नदीपतिः ॥ ७ ॥ सोमेन सार्द्धञ्च तव हानिवृद्धी भविष्यतः। एवमस्त्विति तान् देवान् वरुणो वाक्यमब्रवीत् ॥८॥ समागम्य ततः सर्व्वे वरुणं सागरालयम्। अपांपतिं प्रचक्रुर्हि विधिदृष्टेन कर्म्मणा ॥ ९ ॥ अभिषिच्य ततो देवा वरुणं यादसां पतिम्। जग्मुः स्वान्येव स्थानानि पूजयित्वा जलेश्वरम् ॥१०॥ अभिषिक्तस्ततो देवैर्वरुणोऽपि महायशाः। सरितः सागरांश्चैव नदांश्चापि सरांसि च। पालयामास विधिना यथा देवान् शत-क्रतुः ॥ ११ ॥ ततस्तत्राप्युपस्पृश्य दत्त्वा च विविधं वसु। अग्नि-तीर्थं महाप्राज्ञो जगामाथ प्रलम्बहा। नष्टो न दृश्यते यत्र शमी-गर्भे हुताशनः ॥ १२ ॥ लोकालोकविनाशे च प्रादुर्भूते तदानघ। उपतस्थुः सुरा यत्र सर्व्वलोकपितामहम् ॥ १३ ॥ अग्निः प्रनष्टो भगवान् कारणञ्च न विद्महे। सर्व्वभूतक्षयो मा भूत् सम्पादय विभोऽनलम् ॥ १४ ॥

जनमेजय उवाच। किमर्थं भगवानग्निः प्रनष्टो लोकभावनः। विज्ञातश्च कथं देवैस्तन्ममाचक्ष्व तत्त्वतः ॥ १५ ॥

वैशम्पायन उवाच। भृगोः शापाद्भृशं भीतो जातवेदाः प्रताप-वान्। शमीगर्भमथासाद्य ननाश भगवांस्ततः ॥ १६ ॥ प्रनष्टे तु तदा वह्नौ देवाः सर्व्वे सवासवाः। अन्वैषन्त तदा नष्टं ज्वलनं भृशदुःखिताः ॥ १७ ॥ ततोऽग्नितीर्थमासाद्य शमीगर्भस्थमेव हि। ददृशुर्ज्वलनं तत्र वसमानं यथाविधि ॥ १८ ॥ देवाः सर्व्वे नर-व्याघ्र बृहस्पतिपुरोगमाः। ज्वलनं तं समासाद्य प्रीताभूवन्

सवासवाः ॥ १९ ॥ पुनर्यथागतं जग्मुः सर्व्वभच्यश्च सोऽभवत् ।
भृगोः शापान्महीपाल यदुक्तं ब्रह्मवादिना ॥ २० ॥ तथाप्याप्लुत्य
मतिमान् ब्रह्मयोनिं जगाम ह । ससर्ज्ज भगवान् यत्र सर्व्वलोक-
पितामहः ॥ २१ ॥ तत्राप्लुत्य ततो ब्रह्मा सह देवैः प्रभुः पुरा ।
ससर्ज्ज तीर्थानि तथा देवतानां यथाविधि ॥ २२ ॥ तत्र स्नात्वा
च दत्त्वा च वसूनि विविधानि च । कौवेरं प्रययौ तीर्थं यत्र तप्त्वा
महत्तपः । धनाधिपत्यं संप्राप्तो राजन्नैलविलः प्रभुः ॥ २३ ॥
तत्रस्थमेव तं राजन् धनानि निधयस्तथा । उपतस्थुर्नरश्रेष्ठ तत्तीर्थं
लाङ्गली ततः । गत्वा स्नात्वा च विधिवद्‌ब्राह्मणेभ्यो धनं ददौ
॥ २४ ॥ ददृशे तत्र तत् स्थानं कौवेरे काननोत्तमे । पुरा यत्र
तपस्तप्तं विपुलं सुमहात्मना । यत्रराज्ञा कुवेरेण वरा लब्धाश्च
पुष्कलाः ॥ २५ ॥ धनाधिपत्यं सख्यञ्च रुद्रेणामिततेजसा । सुरत्वं
लोकपालत्वं पुत्रञ्च नलकूवरम् । यत्र लेभे महाबाहो धनाधि-
पतिरञ्जसा ॥ २६ ॥ अभिषिक्तश्च तत्रैव समागम्य मरुद्‌गणैः ।
वाहनञ्चास्य तद्दत्तं सुसंयुक्तं मनोजवम् । विमानं पुष्पकं दिव्यं
नैर्ऋतैश्वर्य्यमेव च ॥ २७ ॥ तत्राप्लुत्य बलो राजन् दत्त्वा दायांश्च
पुष्कलान् । जगाम त्वरितो रामस्तीर्थं श्वेतानुलेपनः ॥ २८ ॥
निषेवितं सर्व्वसत्त्वैर्नाम्ना वदरपाचनम् । नानर्त्तुकफलोपेतं सदा
पुष्पफलं शुभम् ॥ २९ ॥

इति शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

वैशम्पायन उवाच । ततस्तीर्थवरं रामो ययौ वदरपाचनम् ।
तपस्विसिद्धचरितं यत्र कन्या धृतव्रता ॥ १ ॥ भारद्वाजस्य दुहिता
रूपेणाप्रतिमा भुवि । श्रुवावती नाम विभो कुमारी ब्रह्मचारिणी

॥ २ ॥ ततश्चचार साध्युग्रं नियमैर्बहुभिर्हृता । भर्त्ता मे देव-राजः स्यादिति निश्चित्य भाविनी ॥ ३ ॥ समास्तस्या व्यतिक्रान्ता बह्वयः कुरुकुलोद्वह । चरन्त्या नियमांस्तांस्तान् स्त्रीभिस्तीव्रान् सुदुश्चरान् ॥ ४ ॥ तस्यास्तु तेन वृत्तेन तपसा च विशाम्पते । भक्त्या च भगवान् प्रीतः परया पाकशासनः ॥ ५ ॥ आजगामाश्रमं तस्यास्त्रिदशाधिपतिः प्रभुः । आस्थाय रूपं विप्रर्षेर्वशिष्ठस्य महात्मनः ॥ ६ ॥ सा तं दृष्ट्वोग्रतपसं वशिष्ठं तपतां वरम् । आचारैर्मुनिभिर्दृष्टैः पूजयामास भारत ॥ ७ ॥ उवाच नियमज्ञा च कल्याणी सा प्रियम्वदा । भगवन्मुनिशार्दूल किमाज्ञापयसि प्रभो ॥ ८ ॥ सर्वमद्य यथाशक्ति तव दास्यामि सुव्रत । शक्रभक्त्या च ते पाणिं न दास्यामि कथञ्चन ॥ ९ ॥ व्रतैश्च नियमैश्चैव तपसा च तपोधन । शक्रस्तोषयितव्यो वै मया त्रिभुवनेश्वरः ॥ १० ॥ इत्युक्तो भगवान् देवः स्मयन्निव निरीक्ष्य ताम् । उवाच नियमं ज्ञात्वा सान्त्वयन्निव भारत ॥ ११ ॥ उग्रं तपश्चरसि वै विदिता मेऽसि सुव्रते । यदर्थमयमारम्भस्तव कल्याणि हृद्गतः ॥ १२ ॥ तच्च सर्वं यथाभूतं भविष्यति वरानने । तपसा लभ्यते सर्वं सर्वं तपसि तिष्ठति ॥ १३ ॥ यानि स्थानानि दिव्यानि विबुधानां शुभानने । तपसा तानि प्राप्याणि तपोमूलं महत् सुखम् ॥ १४ ॥ इह कृत्वा तपो घोरं देहं संन्यस्य मानवाः । देवत्वं यान्ति कल्याणि शृणु चेदं वचो मम ॥ १५ ॥ पच चैतानि शुभगे वदराणि शुभव्रते । पचेत्युक्त्वा तु भगवान् जगाम बलसूदनः । आमन्त्र्य तान्तु कल्याणीं ततो जप्यं जजाप सः ॥ १६ ॥ अविदूरे ततस्तस्मादाश्रमात्तीर्थमुत्तमम् । इन्द्रतीर्थेति विख्यातं त्रिषु लोकेषु मानद ॥ १७ ॥ तस्य जिज्ञासनार्थं स भगवान् पाकशासनः । वदराणामपचनं चकार विबुधाधिपः ॥ १८ ॥ ततः प्रतप्ता सा राजन् वाग्यता विगतक्लमा । तत्परा शुचिसम्वीता पावके समधिश्रयत् ॥ १९ ॥

अपचद्राजशार्दूल बदराणि महाव्रता । तस्याः पचन्त्याः सुमहान् कालोऽगात् पुरुषर्षभ ! न च स्म तान्यपच्यन्त दिनञ्च क्षयमभ्यगात् ॥ २० ॥ हुताशनेन दग्धश्च यस्तस्याः काष्ठसञ्चयः । अकाष्ठमग्निं सा दृष्ट्वा स्वशरीरमथादहत् ॥ २१ ॥ पादौ प्रक्षिप्य सा पूर्वं पावके चारुदर्शना । दग्धौ दग्धौ पुनः पादावुपावर्त्तयतानघा ॥ २२ ॥ चरणौ दह्यमानौ च नाचिन्तयदनिन्दिता । कुर्वाणा दुष्करं कर्म महर्षिप्रियकाम्यया ॥ २३ ॥ न वैमनस्यं तस्यास्तु मुखभेदोऽथवाभवत् । शरीरमग्निनादीप्य जलमध्येव हर्षिता ॥२४॥ तच्चास्या वचनं नित्यमवर्त्तद्धृदि भारत ! सर्वथा बदराण्येव पक्तव्यानीति कन्यका ॥ २५ ॥ सा तन्मनसि कृत्वा वै महर्षेर्वचनं शुभा । अपचद्बदराण्येव न चापच्यन्त भारत ॥ २६ ॥ तस्यास्तु चरणौ वह्निर्ददाह भगवान् स्वयम् । न च तस्या मनो दुःखं स्वल्पमप्यभवत्तदा ॥ २७ ॥ अथ तत् कर्म दृष्ट्वास्याः प्रीतस्त्रिभुवनेश्वरः । ततः सन्दर्शयामास कन्यायै रूपमात्मनः ॥ २८ ॥ उवाच च सुरश्रेष्ठस्तां कन्यां सुदृढव्रताम् । प्रीतोऽस्मि ते शुभे भक्त्या तपसा नियमेन च ॥ २९ ॥ तस्माद्योऽभिमतः कामः स ते सम्पत्स्यते शुभे । देहं त्यक्त्वा महाभागे त्रिदिवे मयि वत्स्यसि ॥ ३० ॥ इदञ्च ते तीर्थवरं स्थिरं लोके भविष्यति । सर्वपापापहं सुभ्रु नाम्ना बदरपाचनम् । विख्यातं त्रिषु लोकेषु ब्रह्मर्षिभिरभिष्टुतम् ॥ ३१ ॥ अस्मिन् खलु महाभागे शुभे तीर्थवरेऽनघे । त्यक्त्वा सप्तर्षयो जग्मुर्हिमवन्तमरुन्धतीम् ॥ ३२ ॥ ततस्ते वै महाभागा गत्वा तत्र सुसंशिताः । वृत्त्यर्थं फलमूलानि समाहर्त्तुं ययुः किल ॥ ३३ ॥ तेषां वृत्त्यर्थिनां तत्र वसतां हिमवद्वने । अनावृष्टिरनुप्राप्ता तदा द्वादशवार्षिकी ॥ ३४ ॥ ते कृत्वा चाश्रमं तत्र न्यवसन्त तपस्विनः । अरुन्धत्यपि कल्याणी तपोनित्याभवत्तदा ॥ ३५ ॥ अरुन्धतीं ततो दृष्ट्वा तीव्रं नियममास्थि-

ताम्। अथागमत्त्रिनयनः सुप्रीतो वरदस्तदा॥३६॥ ब्राह्मं रूपं ततः कृत्वा महादेवो महायशाः। तामभ्येत्याब्रवीद्देवो भिक्षामिच्छाम्यहं शुभे॥३७॥ प्रत्युवाच ततः सा तं ब्राह्मणं चारुदर्शना। क्षीणोऽन्नसञ्चयो विप्र बदराणीह भक्षय॥३८॥ ततोऽब्रवीन्महादेवः पचस्वैतानि सुव्रते। इत्युक्ता सापचत्तानि ब्राह्मणप्रियकाम्यया॥३९॥ अधिश्रित्य समिद्धेऽग्नौ बदराणि यशस्विनी। दिव्या मनोरमाः पुण्याः कथाः शुश्राव सा तदा। अतीता सा त्वनावृष्टिर्घोरा द्वादशवार्षिकी॥४०॥ अनश्नन्त्याः पचन्त्याश्च शृण्वन्त्याश्च कथाः शुभाः। दिनोपमः स तस्याश्च कालोऽतीतः सुदारुणः॥४१॥ ततस्ते मुनयः प्राप्ताः फलान्यादाय पर्वतात्। ततः स भगवान् प्रीतः प्रोवाचारुन्धतीं तदा॥४२॥ उपसर्पस्व धर्मज्ञे यथापूर्वमिमानृषीन्। प्रीतोऽस्मि तव धर्मज्ञे तपसा नियमेन च॥४३॥ ततः सन्दर्शयामास स्वं रूपं भगवान् हरः। प्रीतोऽब्रवीत्तदा तेभ्यस्तस्याश्च चरितं महत्॥४४॥ भवद्भिर्हिमवत्पृष्ठे यत्तपः समुपार्ज्जितम्। अस्याश्च यत्तपो विप्रा न समं तन्मतं मम॥४५॥ अनया हि तपस्विन्या तपस्तप्तं सुदुश्चरम्। अनश्नन्त्या पचन्त्या च समा द्वादश पारिताः॥४६॥ ततः प्रोवाच भगवांस्तामेवारुन्धतीं पुनः। वरं वृणीष्व कल्याणि यत्तेऽभिलषितं हृदि॥४७॥ साब्रवीत् पृथुताम्राक्षी देवं सप्तर्षिसंसदि। भगवन् यदि मे प्रीतस्तीर्थं स्यादिदमुत्तमम्। सिद्धदेवर्षिदयितं नाम्ना बदरपाचनम्॥४८॥ तथास्मिन्देवदेवेश त्रिरात्रमुषितः शुचिः। प्राप्नुयादुपवासेन फलं द्वादशवार्षिकम्॥४९॥ एवमस्त्विति तां देवः प्रत्युवाच तपस्विनीम्। सप्तर्षिभिस्तुतो देवस्ततो नाकं ययौ तदा॥५०॥ ऋषयो विस्मयं जग्मुस्तं दृष्ट्वा चाप्यरुन्धतीम्। अश्रान्तां चाविवर्णाञ्च क्षुत्पिपासासहां सतीम्॥५१॥ एवं सिद्धिः परा प्राप्ता अरुन्धत्या विशुद्धया।

यथा त्वया महाभागे मदर्थं शंसितव्रते ॥ ५२ ॥ विशेषो हि त्वया भद्रे व्रते ह्यस्मिन् समर्पितः। तथा चेदं ददाम्यद्य नियमेन सुतोषितः। विशेषं तव कल्याणि प्रयच्छामि वरं वरे ॥ ५३ ॥ अरुन्धत्या वरस्तस्या यो दत्तो वै महात्मना। तस्य चाहं प्रभावेन तव कल्याणि तेजसा। प्रवच्याम्यपरं भूयो वरमत्र यथाविधि ॥ ५४ ॥ यस्त्वेकां रजनीं तीर्थे वत्स्यते सुसमाहितः। स स्नात्वा प्राप्स्यते लोकान् देहन्यासात् सुदुर्लभान् ॥ ५५ ॥ इत्युक्त्वा भगवान् देवः सहस्राक्षः प्रतापवान्। श्रुवावतीं ततः पुण्यां जगाम त्रिदिवं पुनः ॥ ५६ ॥ गते वज्रधरे राजंस्तत्र वर्षं पपात ह। पुष्पाणां भरतश्रेष्ठ दिव्यानां पुण्यगन्धिनाम् ॥ ५७ ॥ देवदुन्दुभयश्चापि नेदुस्तत्र महास्वनाः। मारुतश्च ववौ पुण्यः पुण्यगन्धो विशाम्पते ॥५८॥ उत्सृज्य तु शुभा देहं जगामेन्द्रस्य भार्य्यताम्। तपसोग्रेण तं लब्ध्वा तेन रेमे सहाच्युता ॥ ५९ ॥

जनमेजय उवाच। का तस्या भगवन्माता क्व संवृद्धा च शोभना। श्रोतुमिच्छाम्यहं विप्र परं कौतूहलं हि मे ॥ ६० ॥

वैशम्पायन उवाच। भरद्वाजस्य विप्रर्षेः स्कन्नं रेतो महात्मनः। दृष्ट्वाप्सरसमायान्तीं घृताचीं पृथुलोचनाम ॥ ६१ ॥ स तु जग्राह तद्रेतः करेण जपतां वर। तदापतत् पर्णपुटे तत्र सा त्वभवत् सुता ॥ ६२ ॥ तस्यास्तु जातकर्मादि कृत्वा सर्वं तपोधनः। नाम चास्याः स कृतवान् भरद्वाजो महामुनिः॥६३॥ श्रुवावतीति धर्मात्मा देवर्षिगणसंसदि। स्वे च तामाश्रमे न्यस्य जगाम हिमवद्वनम् ॥६४॥ तत्राप्युपस्पृश्य महानुभावो वसूनि दत्त्वा च महाद्विजेभ्यः। जगाम तीर्थं सुसमाहितात्मा शक्रस्य वृष्णिप्रवरस्तदानीम् ॥ ६५ ॥

इति शल्यपर्वणि गदायुद्धपर्वणि बलदेवतीर्थयात्रायां सारस्वततीर्थोपाख्याने अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

वैशम्पायन उवाच । इन्द्रतीर्थं ततो गत्वा यदूनां प्रवरो बली । विप्रेभ्यो धनरत्नानि ददौ स्नात्वा यथाविधि ॥ १ ॥ तत्र ह्यमरराजोऽसावीजे क्रतुशतेन च । बृहस्पतेश्च देवेशः प्रददौ विपुलं धनम् ॥ २ ॥ निरर्गलान् सर्वरथ्यान् सर्वान् विविधदक्षिणान् । आजहार क्रतूंस्तत्र यथोक्तान् वेदपारगैः ॥ ३ ॥ तान् क्रतून् भरतश्रेष्ठ शतकृत्वो महाद्युतिः । पूरयामास विधिवत्ततः ख्यातः शतक्रतुः ॥ ४ ॥ तस्य नाम्ना च तत्तीर्थं शिवं पुण्यं सनातनम् । इन्द्रतीर्थमिति ख्यातं सर्वपापप्रमोचनम् ॥ ५ ॥ उपस्पृश्य च तत्रापि विधिवन्मुषलायुधः । ब्राह्मणान् पूजयित्वा च सदाच्छादनभोजनैः । शुभं तीर्थवरं तस्माद्रामतीर्थं जगाम ह ॥ ६ ॥ यत्र रामो महाभागो भार्गवः सुमहातपाः । असकृत् पृथिवीं जित्वा हतक्षत्रियपुङ्गवाम् ॥ ७ ॥ उपाध्यायं पुरस्कृत्य कश्यपं मुनिसत्तमम् । अयजद्वाजपेयेन सोऽश्वमेधशतेन च । प्रददौ दक्षिणाञ्चैव पृथिवीं वै ससागराम् ॥ ८ ॥ रामो दत्त्वा धनं तत्र द्विजेभ्यो जनमेजय । उपस्पृश्य यथान्यायं पूजयित्वा तथा द्विजान् ॥ ९ ॥ दत्त्वा च दानं विविधं नानारत्नसमन्वितम् । सगोहस्तिकदासीकं साजावि गतवान् वनम् ॥ १० ॥ पुण्ये तीर्थवरे तत्र देवब्रह्मर्षिसेविते । मुनींश्चैवाभिवाद्याथ यमुनातीर्थमागमत् ॥ ११ ॥ यत्रानयामास तदा राजसूयं महीपते । पुत्रोऽदितेर्महाभागो वरुणो वै सितप्रभः ॥ १२ ॥ अत्र निर्ज्जित्य संग्रामे मानुषान् दैवतास्तथा । गन्धर्वान् राक्षसांश्चैव वरुणः पृथिवीपते ॥ १३ ॥ वरं क्रतुं समाजह्रे वरुणः परवीरहा । तस्मिन् क्रतुवरे वृत्ते संग्रामः समजायत । देवानां दानवानाञ्च त्रैलोक्यस्य भयावहः ॥ १४ ॥ राजसूये क्रतुश्रेष्ठे निवृत्ते जनमेजय । जायते सुमहाघोरः संग्रामः क्षत्रियान् प्रति ॥ १५ ॥ तत्रापि लाङ्गली देव ऋषीनभ्यर्च्य पूजया । इतरेभ्योऽप्यदाद्दानमर्थिभ्यः कामदो विभुः ॥ १६ ॥ वनमाली

ततो हृष्टः स्तूयमानो महर्षिभिः। तस्मादादित्यतीर्थञ्च जगाम कमलेक्षणः॥१७॥ यत्रेष्ट्वा भगवान् ज्योतिर्भास्करो राजसत्तम। ज्योतिषामाधिपत्यञ्च प्रभावञ्चाभ्यपद्यत॥१८॥ तस्या नद्यास्तु तीरे वै सर्व्वे देवाः सवासवाः। विश्वे देवाः समरुतो गन्धर्वाप्सरसश्च ह॥१९॥ द्वैपायनः शुकश्चैव कृष्णश्च मधुसूदनः। यक्षाश्च राक्षसाश्चैव पिशाचाश्च विशाम्पते॥२०॥ एते चान्ये च बहवो योगसिद्धाः सहस्रशः। तस्मिंस्तीर्थे सरस्वत्याः शिवे पुण्ये परन्तप॥२१॥ तत्र हत्वा पुरा विष्णुरसुरौ मधुकैटभौ। आप्लुत्य भरतश्रेष्ठ तीर्थप्रवर उत्तमे॥२२॥ द्वैपायनश्च धर्म्मात्मा तत्रैवाप्लुत्य भारत। संप्राप्य परमं योगं सिद्धिञ्च परमां गताः॥२३॥ असितो देवलश्चैव तस्मिन्नेव महातपाः। परमं योगमास्थाय ऋषिर्योगमवाप्तवान्॥२४॥

इति शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने एकोनपञ्चाशोऽध्यायः॥४९॥

---

वैशम्पायन उवाच। तस्मिन्नेव तु धर्म्मात्मा वसति स्म तपोधनः। गार्हस्थ्यं धर्म्ममास्थाय ह्यसितो देवलः पुरा॥१॥ धर्म्मनित्यः शुचिर्द्दान्तो न्यस्तदण्डो महातपाः। कर्म्मणा मनसा वाचा समः सर्व्वेषु जन्तुषु॥२॥ अक्रोधनो महाराज तुल्यनिन्दात्मसंस्तुतिः। प्रियाप्रिये तुल्यवृत्तिर्यमवत् समदर्शनः॥३॥ काञ्चने लोष्ट्रभावे च समदर्शी महातपाः। देवानपूजयन्नित्यमतिथींश्च द्विजैः सह। ब्रह्मचर्य्यरतो नित्यं सदा धर्म्मपरायणः॥४॥ ततोऽभ्येत्य महाराज योगमास्थाय भिक्षुकः। जैगीषव्यो मुनिर्धीमांस्तस्मिंस्तीर्थे समाहितः॥५॥ देवलस्याश्रमे राजन् प्रवसन् स महाद्युतिः। योगनित्यो महाराज सिद्धिं प्राप्तो महातपाः॥६॥

तं तत्र वसमानन्तु जैगीषव्यं महामुनिम्। देवलो दर्शयन्नेव नैवायुञ्जत धर्मतः॥ ७॥ एवं तयोर्महाराज दीर्घकालोऽभ्यगात् पुरा। जैगीषव्यं मुनिवरं न ददर्शाथ देवलः॥ ८॥ आहार-काले मतिमान् परिव्राड्जनमेजय। उपातिष्ठत धर्मज्ञो भैक्ष्य-काले स देवलम्॥ ९॥ स दृष्ट्वा भिक्षुरूपेण प्राप्तं तत्र महा-मुनिम्। गौरवं परमं चक्रे प्रीतिञ्च विपुलान्तथा॥ १०॥ देव-लस्तु यथाशक्ति पूजयामास भारत। ऋषिदृष्टेन विधिना समा बह्वीः समाहितः॥ ११॥ कदाचित्तस्य नृपते देवलस्य महा-त्मनः। चिन्ता सुमहती जाता मुनिं दृष्ट्वा महाद्युतिम्॥ १२॥ समास्तु समतिक्रान्ता बह्वयः पूजयतो मम। न चायमलसो भिक्षु-रभ्यभाषत किञ्चन॥ १३॥ एवं विगणयन्नेव स जगाम महो-दधिम्। अन्तरीक्षचरः श्रीमान् कलसं गृह्य देवलः॥ १४॥ गच्छन्नेव स धर्मात्मा समुद्रं सरितास्पतिम्। जैगीषव्यं ततो-ऽपश्यद्गतं प्रागेव भारत॥ १५॥ ततः स विस्मयश्चिन्तां जगामाथा-सितः प्रभुः। कथं भिक्षुरयं प्राप्तः समुद्रे स्नात एव च॥ १६॥ इत्येवं चिन्तयामास महर्षिरसितस्तदा। स्नात्वा समुद्रे विधि-वत् शुचिर्जप्यं जजाप ह॥ १७॥ कृतजप्याह्निकः श्रीमानाश्रमञ्च जगाम ह। कलसं जलपूर्णं वै गृहीत्वा जनमेजय॥ १८॥ ततः स प्रविशन्नेव स्वमाश्रमपदं मुनिः। आसीनमाश्रमे तत्र जैगीषव्य-मपश्यत॥ १९॥ न व्याहरति चैवैनं जैगीषव्यः कथञ्चन। काष्ठ-भूतोऽश्रमपदे वसति स्म महातपाः॥ २०॥ तं दृष्ट्वा चाप्लुतं तोये सागरे सागरोपमम्। प्रविष्टमाश्रमञ्चापि पूर्वमेव ददर्श सः॥ २१॥ असितो देवलो राजंश्चिन्तयामास बुद्धिमान्। दृष्ट्वा प्रभावन्तपसो जैगीषव्यस्य योगजम्॥ २२॥ चिन्तयामास राजेन्द्र तदा स मुनिसत्तमः। मया दृष्टः समुद्रे च आश्रमे च कथं त्वयम्॥ २३॥ एवं विगणयन्नेव स मुनिर्मन्त्रपारगः। उत्पपाताश्रमात्तस्मादन्त-

शीर्षं विशाम्पते। जिज्ञासार्थं तदा भिक्षोर्जैगीषव्यस्य देवलः
॥ २४ ॥ सोऽन्तरीक्षचरान् सिद्धान् समपश्यत् समाहितान्।
जैगीषव्यञ्च तैः सिद्धैः पूज्यमानमपश्यत ॥ २५ ॥ ततोऽसितः
सुसंरब्धो व्यवसायी दृढ़व्रतः। अपश्यद्वै दिवं यान्तं जैगीषव्यं
स देवलः ॥ २६ ॥ तस्माच्च पितृलोकं तं व्रजन्तं सोऽन्वपश्यत।
पितृलोकाच्च तं यान्तं याम्यं लोकमपश्यत ॥ २७ ॥ तस्मादपि
समुत्पत्य सोमलोकमभिप्लुतम्। व्रजन्तमन्वपश्यत् स जैगीषव्यं
महामुनिम्। लोकान् समुत्पतन्तन्तु शुभानेकान्तयाजिनाम् ॥२८॥
ततोऽग्निहोत्रिणां लोकांस्ततश्चाप्युत्पपात ह। दर्शञ्च पौर्ण-
मासञ्च ये यजन्ति तपोधनाः ॥ २९ ॥ तेभ्यः संप्रद्रे धीमान्
लोकेभ्यः पशुयाजिनाम्। व्रजन्तं लोकममलमपश्यद्देवपूजितम्।
॥ ३० ॥ चातुर्म्मास्यैर्बहुविधैर्यजन्ते ये तपोधनाः। तेषां स्थानं
ततो यान्तं तथाग्निष्टोमयाजिनाम् ॥ ३१ ॥ अग्निष्टुतेन च तथा
ये यजन्ति तपोधनाः। तत्स्थानमनुसंप्राप्तमन्वपश्यत देवलः ॥३२॥
वाजपेयं क्रतुवरं तथा बहुसुवर्णकम्। आहरन्ति महाप्रज्ञा-
स्तेषां लोकेष्वपश्यत ॥ ३३ ॥ यजन्ते राजसूयेन पुण्डरीकेण चैव
ये। तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ॥ ३४ ॥ अश्वमेधं
क्रतुवरं नरमेधं तथैव ये। आहरन्ति नरश्रेष्ठास्तेषां लोकेष्वप-
श्यत ॥ ३५ ॥ सर्वमेधञ्च दुष्प्रापं तथा सौत्रामणिञ्च ये। तेषां
लोकेष्वपश्यच्च जैगीषव्यं स देवलः ॥ ३६ ॥ द्वादशाहैश्च सत्रैर्ये
यजन्ते विविधैर्नृप। तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ॥३७
मित्रावरुणयोर्लोके चादित्यानां तथैव च। सलोकतामनुप्राप्त-
मपश्यत ततोऽसितः ॥ ३८ ॥ रुद्राणाञ्च वसूनाञ्च स्थानं यच्च
बृहस्पतेः। तानि सर्वाण्यतीतानि समपश्यत्ततोऽसितः ॥ ३९ ॥
आरुह्य च गवां लोकं प्रयातो ब्रह्मसत्रिणाम्। लोकानपश्यद्गच्छन्तं
जैगीषव्यं ततोऽसितः ॥ ४० ॥ त्रींल्लोकानपरान् विप्रमुत्पतन्तं

स्वतेजसा। पतिव्रतानां लोकांश्च व्रजन्तं सोऽन्वपश्यत ॥ ४१ ॥ ततो मुनिवरं भूयो जैगीषव्यमथासितः। नान्वपश्यत योगस्थमन्तर्हितमरिन्दम ॥ ४२ ॥ सोऽचिन्तयन्महाभागो जैगीषव्यस्य देवलः। प्रभावं सुव्रतत्वञ्च सिद्धिं योगस्य चातुलाम् ॥ ४३ ॥ असितोऽपृच्छत तदा सिद्धान् लोकेषु सत्तमान्। प्रयतः प्राञ्जलिर्भूत्वा धीरस्तान् ब्रह्मसत्रिणः ॥ ४४ ॥ जैगीषव्यं न पश्यामि तं शंसध्वं महौजसम्। एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ ४५ ॥

सिद्धा ऊचुः। शृणु देवल भूतार्थं शंसतां नो दृढ़व्रत। जैगीषव्यः स वै लोकं शाश्वतं ब्रह्मणो गतः ॥ ४६ ॥

वैशम्पायन उवाच। स श्रुत्वा वचनं तेषां सिद्धानां ब्रह्मसत्रिणाम्। असितो देवलस्तूर्णमुत्पपात पपात च ॥ ४७ ॥ ततः सिद्धास्तमूचुर्हि देवलं पुनरेव ह। न देवल गतिस्तत्र तव गन्तुं तपोधन। ब्रह्मणः सदनं विप्र जैगीषव्यो यदाप्तवान् ॥ ४८ ॥

वैशम्पायन उवाच। तेषां तद्वचनं श्रुत्वा सिद्धानां देवलः पुनः। आनुपूर्व्येण लोकांस्तान् सर्वानवततार ह ॥ ४९ ॥ स्वमाश्रमपदं पुण्यमाजगाम पतङ्गवत्। प्रविशन्नेव चापश्यज्जैगीषव्यं स देवलः ॥ ५० ॥ ततो बुद्ध्या व्यगणयद्देवलो धर्मयुक्तया। दृष्ट्वा प्रभावं तपसो जैगीषव्यस्य योगजम् ॥ ५१ ॥ ततोऽब्रवीन्महात्मानं जैगीषव्यं स देवलः। विनयावनतो राजन्नुपसर्प्य महामुनिम् ॥ मोक्षधर्मं समास्थातुमिच्छेयं भगवन्नहम् ॥ ५२ ॥ तस्य तद्वचनं श्रुत्वा उपदेशं चकार सः। विधिञ्च योगस्य परं कार्य्याकार्य्यञ्च शास्त्रतः ॥ ५३ ॥ सन्न्यासकृतबुद्धिन्तं ततो दृष्ट्वा महातपाः। सर्वाश्चास्य क्रियाश्चक्रे विधिदृष्टेन कर्मणा ॥ ५४ ॥ सन्न्यासकृतबुद्धिं तं भूतानि पितृभिः सह। ततो दृष्ट्वा प्ररुरुदुः कोऽस्मान् संविभजिष्यति ॥ ५५ ॥ देवलस्तु वचः श्रुत्वा भूतानां करुणं तथा।

द्विषो इव व्याहरतां मोक्षं त्यक्तुं मनो दधे ॥ ५६ ॥ ततस्तु फल-मूलानि पवित्राणि च भारत। पुष्पाण्योषधयश्चैव रोरूयन्ते सहस्रशः ॥ ५७ ॥ पुनर्नो देवलः क्षुद्रो नूनं छेत्स्यति दुर्मतिः। अभयं सर्वभूतेभ्यो यो दत्त्वा नावबुध्यते ॥ ५८ ॥ ततो भूयो व्यगणयत् स्वबुद्ध्या मुनिसत्तमः। मोक्षे गार्हस्थ्यधर्मे वा किन्नु श्रेयस्करं भवेत् ॥ ५९ ॥ इति निश्चित्य मनसा देवलो राज-सत्तम। त्यक्त्वा गार्हस्थ्यधर्मं स मोक्षधर्ममरोचयत् ॥ ६० ॥ एव-मादीनि सञ्चिन्त्य देवलो निश्चयात्ततः। प्राप्तवान् परमां सिद्धिं परं योगञ्च भारत ॥ ६१ ॥ ततो देवाः समागम्य बृहस्पतिपुरो-गमाः। जैगीषव्यं तपश्चास्य प्रशंसन्ति तपस्विनः ॥ ६२ ॥ अथा-ब्रवीदृषिवरो देवान् वै नारदस्तथा। जैगीषव्ये तपो नास्ति विस्मापयति योऽसितम् ॥ ६३ ॥ तमेवं वादिनं धीरं प्रत्यूचुस्ते दिवौकसः। मैवमित्येव शंसन्तो जैगीषव्यं महामुनिम् ॥ ६४ ॥ नातः परतरं किञ्चित्तुल्यमस्ति प्रभावतः। तेजसस्तपसश्चास्य योगस्य च महात्मनः ॥ ६५ ॥ एवं प्रभावो धर्मात्मा जैगीषव्यस्तथासितः। तयोरिदं स्थानवरं तीर्थञ्चैव महात्मनोः ॥ ६६ ॥ तत्राप्युपस्पृश्य ततो महात्मा दत्त्वा च वित्तं हलभृद् द्विजेभ्यः। अवाप्य धर्मं पर-मार्य्यकर्मा जगाम सोमस्य महत् सुतीर्थम् ॥ ६७ ॥

इति शल्यपर्व्वणि गदायुद्धपर्व्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

वैशम्पायन उवाच। यत्रेजिवानुडुपती राजसूयेन भारत। तस्मिंस्तीर्थे महानासीत् संग्रामस्तारकामयः ॥ १ ॥ तत्राप्युपस्पृश्य बलो दत्त्वा दानानि चात्मवान्। सारस्वतस्य धर्मात्मा मुनेस्तीर्थं

जगाम ह ॥ २ ॥ तत्र द्वादशवार्षिक्यामनावृष्ट्यां द्विजोत्तमान्।
वेदानध्यापयामास पुरा सारस्वतो मुनिः ॥ ३ ॥

जनमेजय उवाच। कथं द्वादशवार्षिक्यामनावृष्ट्यां तपोधन।
ऋषीनध्यापयामास पुरा सारस्वतो मुनिः ॥ ४ ॥

वैशम्पायन उवाच। आसीत् पूर्वं महाराज मुनिर्धीमान्महातपाः। दधीच इति विख्यातो ब्रह्मचारी जितेन्द्रियः ॥ ५ ॥ तस्यातितपसः शक्रो बिभेति सततं विभो। न स लोभयितुं शक्यः फलैर्बहुविधैरपि ॥ ६ ॥ प्रलोभनार्थं तस्याथ प्राहिणोत् पाकशासनः। दिव्यामप्सरसां पुण्यां दर्शनीयामलम्बुषाम् ॥ ७ ॥ तस्य तर्पयतो देवान् सरस्वत्यां महात्मनः। समीपतो महाराज सोपातिष्ठत भाविनी ॥ ८ ॥ तान्दिव्यवपुषं दृष्ट्वा तस्यर्षेर्भावितात्मनः। रेतःस्कन्नं सरस्वत्यां तत् सा जग्राह निम्नगा ॥ ९ ॥ कुक्षौ चाप्यदधद्दृष्ट्वा तद्रेतः पुरुषर्षभ। सा दधार च तं गर्भं पुत्रहेतोर्महानदी ॥ १० ॥ सुषुवे चापि समये पुत्रं सा सरितां वरा। जगाम पुत्रमादाय तमृषिं प्रति च प्रभो ॥ ११ ॥ ऋषिं संसदि तं दृष्ट्वा सा नदी मुनिसत्तमम्। ततः प्रोवाच राजेन्द्र ददती पुत्रमस्य तम् ॥ १२ ॥ ब्रह्मर्षे तव पुत्रोऽयं त्वद्भक्त्या धारितो मया। दृष्ट्वा तेऽप्सरसं रेतो यत् स्कन्नं प्रागलम्बुषाम् ॥ १३ ॥ तत् कुक्षिणा वै ब्रह्मर्षे त्वद्भक्त्या धृतवत्यहम्। न विनाशमिदं गच्छेत्त्वत्तेज इति निश्चयात् ॥ १४ ॥ प्रतिगृह्णीष्व पुत्रं स्वं मया दत्तमनिन्दितम्। इत्युक्तः प्रतिजग्राह प्रीतिञ्चावाप पुष्कलाम् ॥ १५ ॥ स्वसुतञ्चाप्यजिघ्रत्तं मूर्द्धि प्रेम्णा द्विजोत्तमः। परिष्वज्य चिरं कालं तदा भरतसत्तम ॥ १६ ॥ सरस्वत्यै वरं प्रादात् प्रीयमाणो महामुनिः। विश्वे देवाः सपितरो गन्धर्वाप्सरसां गणाः। तृप्तिं यास्यन्ति सुभगे तर्प्यमाणास्तवाम्भसा ॥ १७ ॥ इत्युक्त्वा स तु तुष्टाव वचोभिर्वै महानदीम्। प्रीतः परमहृष्टात्मा यथावत्

शृणु पार्थिव ॥ १८ ॥ प्रसुतासि महाभागे सरसो ब्रह्मणः पुरा । जानन्ति त्वां सरिच्छ्रेष्ठे मुनयः संशितव्रताः ॥ १९ ॥ मम प्रियकरी चापि सततं प्रियदर्शने । तस्मात् सारस्वतः पुत्रो महांस्ते वरवर्णिनि ॥ २० ॥ तवैव नाम्ना प्रथितः पुत्रस्ते लोकभावनः । सारस्वत इति ख्यातो भविष्यति महातपाः ॥ २१ ॥ एष द्वादशवार्षिक्यामनावृष्ट्यां द्विजर्षभान् । सारस्वतो महाभागे वेदानध्यापयिष्यति ॥ २२ ॥ पुण्याभ्यश्च परिब्रह्मस्त्वं सदा पुण्यतमा शुभे । भविष्यसि महाभागे मत्प्रसादात् सरस्वति ॥ २३ ॥ एवं सा संस्तुता तेन वरं लब्ध्वा महानदी । पुत्रमादाय मुदिता जगाम भरतर्षभ ॥ २४ ॥ एतस्मिन्नेव काले तु विरोधे देवदानवैः । शक्रः प्रहरणान्वेषी लोकांस्त्रीन् विचचार ह ॥ २५ ॥ न चोपलेभे भगवान् शक्रः प्रहरणं तदा । यद्वै तेषां भवेद्योग्यं वधाय विबुधद्विषाम् ॥ २६ ॥ ततोऽब्रवीत् सुरान् शक्रो न मे शक्या महासुराः । ऋतेऽस्थिभिर्दधीचस्य निहन्तुं त्रिदशद्विषः ॥ २७ ॥ तस्माद्गत्वा ऋषिश्रेष्ठो याच्यतां सुरसत्तमाः । दधीचास्थीनि देहीति तैर्वधिष्यामहे रिपून् ॥ २८ ॥ स च तैर्याचितोऽस्थीनि यत्नादृषिवरस्तदा । प्राणत्यागं कुरुश्रेष्ठ चकारैवाविचारयन् । स लोकानक्षयान् प्राप्तो देवप्रियकरस्तदा ॥ २९ ॥ तस्यास्थिभिरथो शक्रः संप्रहृष्टमनास्तदा । कारयामास दिव्यानि नानाप्रहरणान्युत । वज्राणि चक्राणि गदा गुरून् दण्डांश्च पुष्कलान् ॥३०॥ स हि तीव्रेण तपसा संभृतः परमर्षिणा । प्रजापतिसुतेनाथ भृगुणा लोकभावनः ॥ ३१ ॥ अतिकायः स तेजस्वी लोकसारो विनिर्मितः । जज्ञे शैलगुरुः प्रांशुर्महिम्ना प्रथितः प्रभुः । नित्यमुद्विजते चास्य तेजसः पाकशासनः ॥ ३२ ॥ तेन वज्रेण भगवान्मन्त्रयुक्तेन भारत । विसृज्य क्रोधविसृष्टेन ब्रह्मतेजोभवेन च । दैत्यदानववीराणां जघान नवतीर्नव ॥ ३३ ॥ अथ काले व्यति-

क्रान्ते महत्यतिभयङ्करे । अनावृष्टिरनुप्राप्ता राजन् द्वादशवार्षिकी ॥ ३४ ॥ तस्यां द्वादशवार्षिक्यामनावृष्ट्यां महर्षयः । वृत्त्यर्थं प्राद्रवन्राजन् क्षुधार्त्ताः सर्वतो दिशम् ॥ ३५ ॥ दिग्भ्यस्तान् प्रद्रुतान् दृष्ट्वा मुनिः सारस्वतस्तदा । गमनाय मतिञ्चक्रे तं प्रोवाच सरस्वती ॥ ३६ ॥ न गन्तव्यमितः पुत्र तवाहारमहं सदा । दास्यामि मत्स्यप्रवरानुष्यतामिह भारत ॥ ३७ ॥ इत्युक्तस्तर्पयामास स पितॄन् देवतास्तथा । आहारमकरोन्नित्यं प्राणान् देवांश्च धारयन् ॥ ३८ ॥ अथ तस्यामनावृष्ट्यामतीतायां महर्षयः । अन्योऽन्यं परिप्रपच्छुः पुनः स्वाध्यायकारणात् ॥ ३९ ॥ तेषां क्षुधापरीतानां नष्टा वेदाभिधावताम् । सर्वेषामेव राजेन्द्र न कश्चित् प्रतिभानवान् ॥ ४० ॥ अथ कश्चिदृषिस्तेषां सारस्वतमुपेयिवान् । कुर्वाणं संयतात्मानं स्वाध्यायमृषिसत्तमम् ॥ ४१ ॥ स गत्वाचष्ट तेभ्यश्च सारस्वतमतिप्रभम् । स्वाध्यायममरप्रख्यं कुर्वाणं विजने वने ॥ ४२ ॥ ततः सर्वे समाजग्मुस्तत्र राजन्महर्षयः । सारस्वतं मुनिश्रेष्ठमिदमूचुः समागताः ॥ ४३ ॥ अस्मानध्यापयस्वेति तानुवाच ततो मुनिः । शिष्यत्वमुपगच्छध्वं विधिवद्धि ममेत्युत ॥ ४४ ॥ तत्राब्रुवन्मुनिगणा बालस्त्वमसि पुत्रक । स तानाह न मे धर्मो नश्येदिति पुनर्मुनीन् ॥ ४५ ॥ यो ह्यधर्मेण वै ब्रूयाद्गृह्णीयाद्वाप्यधर्मतः । हीयेतां तावुभौ क्षिप्रं स्यातां वा वैरिणावुभौ ॥ ४६ ॥ न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः । ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ ४७ ॥ एतत् श्रुत्वा वचस्तस्य मुनयस्ते विधानतः । तस्माद्वेदाननुप्राप्य पुनर्धर्मं प्रचक्रिरे ॥ ४८ ॥ षष्टिर्मुनिसहस्राणि शिष्यत्वं प्रतिपेदिरे । सारस्वतस्य विप्रर्षेर्वेदस्वाध्यायकारणात ॥ ४९ ॥ मुष्टिं मुष्टिं ततः सर्वे दर्भाणां ते ह्युपाहरन् । तस्यासनार्थं विप्रर्षेर्बालस्यापि वशे स्थिताः ॥ ५० ॥ तत्रापि दत्त्वा वसु रौहिणेयो महाबल केशव-

पुत्रैजोऽथ। जगाम तीर्थं मुदितः क्रमेण ख्यातं महद्वृद्धकन्या स्म यत्र ॥ ५१ ॥

इति शल्यपर्वणि गदायुद्धपर्वणि बलदेवतीर्थयात्रायां
सारस्वतोपाख्याने एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

जनमेजय उवाच। कथं कुमारी भगवंस्तपोयुक्ता ह्यभूत् पुरा। किमर्थञ्च तपस्तेपे को वास्या नियमोऽभवत् ॥ १ ॥ सुदुष्करमिदं ब्रह्मंस्त्वत्त श्रुतमनुत्तमम्। आख्याहि तत्त्वमखिलं यथा तपसि सा स्थिता ॥ २ ॥

वैशम्पायन उवाच। ऋषिरासीन्महावीर्य्यः कुणिर्गर्गो महायशाः। स तप्त्वा विपुलं राजंस्तपो वै तपसां वरः ॥ ३ ॥ मनसाथ सुतां सुभ्रूं समुत्पादितवान् विभुः। ताञ्च दृष्ट्वा मुनिः प्रीतः कुणिर्गर्गो महायशाः। जगाम त्रिदिवं राजन् सन्त्यज्येह कलेवरम् ॥ ४ ॥ सुभ्रूः सा ह्यथ कल्याणी पुण्डरीकनिभेक्षणा। महता तपसोग्रेण कृत्वा श्रममनिन्दिता। उपवासैः पूजयन्ती पितॄन्देवांश्च सा पुरा ॥ ५ ॥ तस्यास्तु तपसोग्रेण महान् कालोऽत्यगान्नृप। सा पित्रा दीयमानापि तत्र नैच्छदनिन्दिता। आत्मनः सदृशं सा तु भर्त्तारं नान्वपश्यत ॥ ६ ॥ ततः सा तपसोग्रेण पीड़यित्वात्मनस्तनुम्। पितृदेवार्च्चनरता बभूव विजने वने ॥ ७ ॥ आत्मानं मन्यमानापि कृतकृत्यं श्रमान्विता। वार्द्धक्येन च राजेन्द्र तपसा चैव कर्षिता ॥ ८ ॥ सा नाशकद्यदा गन्तुं पदात् पदमपि स्वयम्। चकार गमने बुद्धिं परलोकाय वै तदा ॥ ९ ॥ मोक्तुकामान्तु तां दृष्ट्वा शरीरं नारदोऽब्रवीत्। असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे ॥ १० ॥ एवन्तु श्रुतमस्माभिर्द्देवलोके महाव्रते। तपः परमकं प्राप्तं न तु लोकास्त्वया जिता ॥११॥

तन्नारदवचः श्रुत्वा साब्रवीदृषिसंसदि । तपसोऽर्द्धं प्रयच्छामि पाणिग्राहस्य सत्तम ॥ १२ ॥ इत्युक्ते चास्या जग्राह पाणिं गालवसम्भवः । ऋषि प्राक्श्रृङ्गवान्नाम समयञ्चेदमब्रवीत् ॥ १३ ॥ समयेन तवाद्याहं पाणिं स्प्रक्ष्यामि शोभने । यद्येकरात्रं वस्तव्यं त्वया सह मयेति वै । तथेति सा प्रतिश्रुत्य तस्मै पाणिं ददौ तदा ॥ १४ ॥ यथादृष्टेन विधिना हुत्वा चाग्निं विधानतः । चक्रे च पाणिग्रहणं तस्योद्वाहञ्च गालविः ॥ १५ ॥ सा रात्रावभवद्राजं-स्तरुणी वरवर्णिनी । दिव्याभरणवस्त्रा च दिव्यस्रगनुलेपना ॥१६॥ तां दृष्ट्वा गालविः प्रीतो दीपयन्तीमिव श्रिया । उवास च क्षपा-मेकां प्रभाते साब्रवीच्च तम् ॥ १७ ॥ यस्त्वया समयो विप्र कृतो मे तपतांवर । तेनोषितास्मि भद्रन्ते स्वस्ति तेऽस्तु व्रजाम्यहम् ॥१८॥ सानुज्ञाताब्रवीद्भूयो योऽस्मिंस्तीर्थे समाहितः । वत्स्यते रजनी-मेकां तर्पयित्वा दिवौकसः ॥ १९ ॥ चत्वारिंशतमष्टौ च द्वौ चाष्टौ सम्यगाचरेत् । यो ब्रह्मचर्य्यं वर्षाणि फलं तस्य लभते सः ॥२०॥ एवमुक्त्वा ततः साध्वी देहं त्यक्त्वा दिवं गता । ऋषिरप्यभवद्दीन-स्तस्या रूपं विचिन्तयन् ॥ २१ ॥ समयेन तपोऽर्द्धञ्च कृच्छ्रात् प्रति-गृहीतवान् । साधयित्वा तदात्मानं तस्याः स गतिमन्वियात् । दुःखितो भरतश्रेष्ठ तस्या रूपबलात्कृतः॥२२॥ एतत्ते वृद्धकन्याया व्याख्यातञ्चरितं महत् । तथैव ब्रह्मचर्य्यञ्च स्वर्गस्य च गतिः शुभा ॥ २३ ॥ तत्रस्थश्चापि शुश्राव हतं शल्यं हलायुधः । तत्रापि दत्त्वा दानानि द्विजातिभ्यः परन्तप । शुशोच शल्यं संग्रामे निहतं पाण्डवैस्तदा ॥ २४ ॥ समन्तपञ्चकद्वारात्ततो निष्क्रम्य माधवः । पप्रच्छर्षि-गणान्रामः कुरुक्षेत्रस्य यत् फलम् ॥२५॥ ते पृष्टा यदुसिंहेन कुरु-क्षेत्रफलं विभो । समाचख्युर्महात्मानस्तस्मै सर्वं यथातथम् ॥ २६ ॥

इति शल्यपर्वणि गदायुद्धपर्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

ऋषय ऊचुः। प्रजापतेरुत्तरवेदिरुच्यते सनातनी राम समन्तपञ्चकम्। समीजिरे यत्र पुरा दिवौकसो वरेण सत्रेण महावरप्रदाः॥ १॥ पुरा च राजर्षिवरेण धीमता बहूनि वर्षाण्यमितेन तेजसा। प्रकृष्टमेतत् कुरुणा महात्मना ततः कुरुक्षेत्रमितीह पप्रथे॥ २॥

राम उवाच। किमर्थं कुरुणा कृष्टं क्षेत्रमेतन्महात्मना। एतदिच्छाम्यहं श्रोतुं कथ्यमानं तपोधनाः॥ ३॥

ऋषय ऊचुः। पुरा किल कुरुं राम कर्षन्तं सततोत्थितम्। अभ्येत्य शक्रस्त्रिदिवात् पर्य्यपृच्छत कारणम्॥ ४॥

इन्द्र उवाच। किमिदं वर्त्तते राजन् प्रयत्नेन परेण च। राजर्षे किमभिप्रेतं येनेयं कृष्यते क्षितिः॥ ५॥

कुरुरुवाच। इह ये पुरुषाः क्षेत्रे मरिष्यन्ति शतक्रतो। ते गमिष्यन्ति सुकृतान् लोकान् पापविवर्ज्जितान्॥ ६॥ अवहस्य ततः शक्रो जगाम त्रिदिवं प्रभुः। राजर्षिरप्यनिर्विण्णः कर्षत्येव वसुन्धराम्॥ ७॥ आगम्यागम्य चैवेनं भूयो भूयोऽवहस्य च। शतक्रतुरनिर्विण्णं पृष्ट्वा पृष्ट्वा जगाम ह॥ ८॥ यदा तु तपसोग्रेण चकर्ष वसुधां नृपः। ततः शक्रोऽब्रवीद्देवान्राजर्षेर्यच्चिकीर्षितम्॥९॥ एतत् श्रुत्वाब्रुवन्देवाः सहस्राक्षमिदं वचः। वरेण छन्द्यतां शक्र राजर्षिर्यदि शक्यते॥ १०॥ यदि ह्यत्र प्रमीता वै स्वर्गं गच्छन्ति मानवाः। अस्माननिष्ट्वा क्रतुभिर्भागो नो न भविष्यति॥ ११॥ आगम्य च ततः शक्रस्तदा राजर्षिमब्रवीत्। अलं खेदेन भवतः क्रियतां वचनं मम॥ १२॥ मानवा ये निराहारा देहन्त्यक्ष्यन्त्यतन्द्रिताः। युधि वा निहताः सम्यगपि तिर्य्यग्गता नृप॥ १३॥ ते स्वर्गभाजो राजेन्द्र भविष्यन्ति महामते। तथास्त्विति ततो राजा कुरुः शक्रमुवाच ह॥ १४॥ ततस्तमभ्यनुज्ञाप्य प्रहृष्टेनान्तरात्मना। जगाम त्रिदिवं भूयः क्षिप्रं बलनिसूदनः॥ १५॥ एव-

मेतद्यदुग्रेष्ठ कृष्टं राजर्षिणा पुरा। शक्रेण चाभ्यनुज्ञातं पुण्यं प्राणान् विसुञ्चताम् ॥ १६ ॥ ब्रह्माद्यैश्च सुरश्रेष्ठैः पुण्यै राजर्षिभिस्तथा। नातः परतरं पुण्यं भूमेः स्थानं भविष्यति ॥ १७ ॥ इह तपस्यन्ति ये केचित्तपः परमकं नराः। देहत्यागेन ते सर्वे यास्यन्ति ब्रह्मणः चयम् ॥ १८ ॥ ये पुनः पुण्यभाजो वै दानं दास्यन्ति मानवाः। तेषां सहस्रगुणितं भविष्यत्यचिरेण वै ॥१९॥ ये चेह नित्यं मनुजा निवत्स्यन्ति शुभेक्षिणः। यमस्य विषयं ते तु न द्रक्ष्यन्ति कदाचन ॥ २० ॥ यक्ष्यन्ति ये च क्रतुभिर्महद्भिर्मनुजेश्वराः। तेषां त्रिपिष्टपे वासो यावद्भूमिर्द्धरिष्यति ॥ २१ ॥ अपि चात्र स्वयं शक्रो जगौ गाथां सुराधिपः। कुरुक्षेत्रे निबद्धां वै तां शृणुष्व हलायुध ॥ २२ ॥ पांशवोऽपि कुरुक्षेत्राद्वायुना समुदीरिताः। अपि दुष्कृतकर्म्माणं नयन्ति परमां गतिम् ॥ २३ ॥ सुरर्षभा ब्राह्मणसत्तमाश्च तथा नृगाद्या नरदेवमुख्याः। इष्ट्वा महार्हैः क्रतुभिर्नृसिंहाः सन्त्यज्य देहान् सुगतिं प्रपन्नाः ॥ २४ ॥ तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानाञ्च मचक्रुकस्य च। एतत् कुरुक्षेत्रसमन्तपञ्चकं प्रजापतेरुत्तरवेदिरुच्यते ॥ २५ ॥ शिवं महत् पुण्यमिदं दिवौकसां सुसम्मतं सर्वगुणैः समन्वितम्। अतश्च सर्वेऽत्र नृपा हता रणे यास्यन्ति पुण्यां गतिमक्षयां सदा ॥ २६ ॥ इत्युवाच स्वयं शक्रः कुरुक्षेत्रमहोदयम्। तच्चानुमोदितं सर्वं ब्रह्मविष्णुमहेश्वरैः ॥ २७ ॥

इति शल्यपर्वणि गदायुद्धपर्वणि सारस्वतोपाख्याने विपञ्चाशोऽध्यायः ॥ ४१ ॥

---

वैशम्पायन उवाच। कुरुक्षेत्रं ततो दृष्ट्वा दत्त्वा दायांश्च सात्वतः। आश्रमं सुमहद्दिव्यमगमज्जनमेजय ॥ १ ॥ मधुकाम्र-

वणोपेतं प्लक्षन्यग्रोधसङ्कुलम् । चिरविल्वयुतं पुण्यं पनसार्जुन-
सङ्कुलम् ॥ २ ॥ तं दृष्ट्वा यादवश्रेष्ठः प्रवरं पुण्यलक्षणम् । पप्रच्छ
तानृषीन् सर्वान् कस्याश्रमवरस्त्वयम् ॥ ३ ॥ ते तु सर्वे महात्मान
ऊचू राजन् हलायुधम् । शृणु विस्तरशो राम यस्यायं पूर्व
आश्रमः ॥ ४ ॥ अत्र विष्णुः पुरा देवस्तप्तवांस्तप उत्तमम् । अत्रास्य
विधिवद्यज्ञाः सर्वे वृत्ताः सनातनाः ॥ ५ ॥ अत्रैव ब्राह्मणी सिद्धा
कौमारब्रह्मचारिणी । योगयुक्ता दिवं याता तपःसिद्धा तप-
स्विनी ॥ ६ ॥ बभूव श्रीमती राजन् शाण्डिलस्य महात्मनः ।
सुता धृतव्रता साध्वी नियता ब्रह्मचारिणी ॥ ७ ॥ सा तु तप्त्वा
तपो घोरं दुश्चरं स्त्रीजनेन ह । गता स्वर्गं महाभागा देवब्राह्मण-
पूजिता । श्रुत्वा ऋषीणां वचनमाश्रमं तं जगाम ह ॥ ८ ॥
ऋषींस्तानभिवाद्याथ पार्श्वे हिमवतोऽच्युतः । सन्ध्याकार्याणि
सर्वाणि निर्वर्त्यारुरुहेऽचलम् ॥ ९ ॥ नातिदूरं ततो गत्वा नगं
तालध्वजो बली । पुण्यं तीर्थवरं दृष्ट्वा विस्मयं परमं गतः ॥ १० ॥
प्रभावञ्च सरस्वत्याः प्लक्षप्रस्रवणं बलः । संप्राप्तः कारवपनं प्रवरं
तीर्थमुत्तमम् ॥ ११ ॥ हलायुधस्तत्र चापि दत्त्वा दानं महा-
बलः । आप्लुतः सलिले पुण्ये सुशीते विमले शुचौ । अन्तर्पया-
मास पितॄन् देवांश्च रणदुर्मदः ॥ १२ ॥ तत्रोष्यैकान्तु रजनीं
यतिभिर्ब्राह्मणैः सह । मित्रावरुणयोः पुण्यं जगामाश्रममच्युतः
॥ १३ ॥ इन्द्रोऽग्निरर्य्यमा चैव यत्र प्राक् प्रीतिमाप्नुवन् । तं देशं
कारवपनाद्यमुनायां जगाम ह ॥ १४ ॥ स्नात्वा तत्रापि धर्मात्मा
परां प्रीतिमवाप्य च । ऋषिभिश्चैव सिद्धैश्च सहितो वै महा-
बलः । उपविष्टः कथाः शुभ्राः शुश्राव यदुपुङ्गवः ॥ १५ ॥ तथा
तु तिष्ठतां तेषां नारदो भगवानृषिः । आजगामाथ तं देशं यत्र
रामो व्यवस्थितः ॥ १६ ॥ जटामण्डलसंवीतः स्वर्णचीरो महा-
तपाः । हेमदण्डधरो राजन् कमण्डलुधरस्तथा ॥ १७ ॥ कच्छपीं

सुखशब्दान्तां गृह्य वीणां मनोरमाम्। नृत्ये गीते च कुशलो देवब्राह्मणपूजितः॥ १८॥ प्रकर्त्ता कलहानाञ्च नित्यञ्च कलहप्रियः। तं देशमगमद्यत्र श्रीमान्रामो व्यवस्थितः॥ १९॥ प्रत्युत्थाय तु तं सम्यक् पूजयित्वा यतव्रतम्। देवर्षिं पर्य्यपृच्छत् स यथावृत्तं कुरून् प्रति॥ २०॥ ततोऽस्याकथयद्राजन्नारदः सर्वधर्मवित्। सर्वमेतद्यथावृत्तमतीव कुरुसङ्क्षयम्॥ २१॥ ततोऽब्रवीद्रौहिणेयो नारदं दीनया गिरा। किमवस्थन्तु तत्क्षेत्रं ये च तत्राभवन्नृपाः॥ २२॥ श्रुतमेतन्मया पूर्वं सर्वमेव तपोधन। विस्तरश्रवणे जातं कौतूहलमतीव मे॥ २३॥

नारद उवाच। पूर्वमेव हतो भीष्मो द्रोणः सिन्धुपतिस्तथा। हतो वैकर्त्तनः कर्णः पुत्राश्चास्य महारथाः॥ २४॥ भूरिश्रवा रौहिणेय मद्रराजश्च वीर्य्यवान्। एते चान्ये च बहवस्तत्र तत्र महाबलाः॥ २५॥ प्रियान् प्राणान् परित्यज्य जयार्थं कौरवस्य वै। राजानो राजपुत्राश्च समरेष्वनिवर्त्तिनः॥ २६॥ अहतांश्च महाबाहो शृणु मे तत्र माधव। धार्त्तराष्ट्रबले शेषास्त्रयः समितिमर्द्दनाः॥ २७॥ कृपश्च कृतवर्मा च द्रोणपुत्रश्च वीर्य्यवान्। तेऽपि वै विद्रुता राम दिशो दश भयात्तदा॥ २८॥ दुर्य्योधनो हते शल्ये प्रद्रुतेषु कृपादिषु। ह्रदं द्वैपायनं नाम विवेश भृशदुःखितः॥ २९॥ शयानं धार्त्तराष्ट्रन्तु स्तम्भिते सलिले तदा। पाण्डवाः सह कृष्णेन वाग्भिरुग्राभिरार्द्दयन्॥ ३०॥ स तुद्यमानो बलवान् वाग्भी राम समन्ततः। उत्थितः स ह्रदाद्वीरः प्रगृह्य महतीं गदाम्॥ ३१॥ स चाप्युपगतो योद्धुं भीमेन सह साम्प्रतम्। भविष्यति तयोरद्य युद्धं राम सुदारुणम्॥ ३२॥ यदि कौतूहलं तेऽस्ति व्रज माधव मा चिरम्। पश्य युद्धं महाघोरं शिष्ययोर्यदि मन्यसे॥ ३३॥

वैशम्पायन उवाच। नारदस्य वचः श्रुत्वा तानभ्यर्च्य द्विज-

र्षभान्। सर्वान् विसर्ज्जयामास ये तेनाभ्यागताः सह ॥ ३४ ॥ गम्यतां द्वारका चेति सोऽन्वयादनुयायिनः। सोऽवतीर्य्याचलश्रेष्ठात् प्लक्षप्रस्रवणात् शुभात् ॥ ३५ ॥ ततः प्रीतमना रामः श्रुत्वा तीर्थफलं महत्। विप्राणां सन्निधौ श्लोकमगायदिममच्युतः ॥३६॥ सरस्वतीवाससमा कुतो रतिः सरस्वतीवाससमाः कुतो गुणाः। सरस्वतीं प्राप्य दिवं गता जनाः सदा स्मरिष्यन्ति नदीं सरस्वतीम् ॥ ३७ ॥ सरस्वती सर्वनदीषु पुण्या सरस्वती लोकसुखावहा सदा। सरस्वतीं प्राप्य जनाः सुदुष्कृतं सदा न शोचन्ति परत्र चेह च ॥ ३८ ॥ ततो मुहुर्मुहुः प्रीत्या प्रेक्षमाणः सरस्वतीम्। हयैर्युक्तं रथं शुभ्रमातिष्ठत परन्तपः ॥ ३९ ॥ स शीघ्रगामिना तेन रथेन यदुपुङ्गवः। दिदृक्षुरभिसंप्राप्तः शिष्ययुद्धमुपस्थितम् ॥४०॥

इति शल्यपर्वणि गदायुद्धपर्वणि बलदेवतीर्थयात्रायां सारस्वतोपाख्याने चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

---

वैशम्पायन उवाच। एवं तदभवद्युद्धं तुमुलं जनमेजय। यत्र दुःखान्वितो राजा धृतराष्ट्रोऽब्रवीदिदम् ॥ १ ॥

धृतराष्ट्र उवाच। रामं सन्निहितं दृष्ट्वा गदायुद्ध उपस्थिते। मम पुत्रः कथं भीमं प्रत्ययुध्यत सञ्जय ॥ २ ॥

सञ्जय उवाच। रामसान्निध्यमासाद्य पुत्रो दुर्य्योधनस्तव। युद्धकामो महाबाहुः समहृष्यत वीर्य्यवान् ॥ ३ ॥ दृष्ट्वा लाङ्गलिनं राजा प्रत्युत्थाय च भारत। प्रीत्या परमया युक्तः समभ्यर्च्य यथाविधि। आसनञ्च ददौ तस्मै पर्य्यपृच्छदनामयम् ॥ ४ ॥ ततो युधिष्ठिरं रामो वाक्यमेतदुवाच ह। मधुरं धर्मसंयुक्तं शूराणां हितमेव च ॥ ५ ॥ मया श्रुतं कथयतामृषीणां राजसत्तम। कुरुक्षेत्रं परं पुण्यं पावनं स्वर्ग्यमेव च। दैवतैर्ऋषिभिर्जुष्टं

ब्राह्मणैश्च महात्मभिः ॥ ६ ॥ तत्र वै योत्स्यमाना ये देहं त्यक्ष्यन्ति मानवाः । तेषां स्वर्गो ध्रुवो वासः शक्रेण सह मारिष ॥ ७ ॥ तस्मात् समन्तपञ्चकमितो याम द्रुतं नृप । प्रथितोत्तरवेदी सा देवलोके प्रजापतेः ॥ ८ ॥ तस्मिन्महापुण्यतमे त्रैलोक्यस्य सनातने । संग्रामे निधनं प्राप्य ध्रुवं स्वर्गो भविष्यति ॥ ९ ॥ तथेत्युक्त्वा महाराज कुन्तीपुत्रो युधिष्ठिरः । समन्तपञ्चकं वीरः प्रायादभिमुखः प्रभुः ॥ १० ॥ ततो दुर्य्योधनो राजा प्रगृह्य महतीं गदाम् । पद्भ्याममर्षाद्द्युतिमानगच्छत् पाण्डवैः सह ॥ ११ ॥ तथा यान्तं गदाहस्तं वर्मणा चापि दंशितम् । अन्तरीक्षगता देवाः साधु साध्वित्यपूजयन् । वार्त्तिकाश्चारणा ये तु दृष्ट्वा ते हर्षमागताः ॥१२ स पाण्डवैः परिवृतः कुरुराजस्तवात्मजः । मत्तस्येव गजेन्द्रस्य गतिमास्थाय सोऽव्रजत् ॥ १३ ॥ ततः शङ्खनिनादेन भेरीणाञ्च महास्वनैः । सिंहनादैश्च शूराणां दिशः सर्वाः प्रपूरिताः ॥ १४ ॥ प्रतीच्यभिमुखं देशं यथोद्दिष्टं सुतेन ते । गत्वा तु तैः परिक्षिप्तः समन्तात् सर्वतो दिशः ॥ १५ ॥ दक्षिणेन सरस्वत्याश्चापरं तीर्थमुत्तमम् । तस्मिन् देशे त्वनिरिणे ते तु युद्धमरोचयन् ॥ १६ ॥ ततो भीमो महाकोटीं गदां गृह्याथ वर्मभृत् । विभ्रद्रूपं महाराज सदृशं हि गरुत्मतः ॥१७॥ अवबद्धशिरस्त्राणः सङ्ख्ये काञ्चनवर्मभृत् । रराज राजन् पुत्रस्ते काञ्चनः शैलराडिव । सृक्कणी संलिहन्राजन् क्रोधरक्तेक्षणः श्वसन् ॥ १८ ॥ ततो दुर्य्योधनो राजा गदामादाय वीर्य्यवान् । भीमसेनमभिप्रेक्ष्य गजोगजमिवाह्वयत् ॥ १९ ॥ अद्रिसारमयीं भीमस्तथैवादाय वीर्य्यवान् । आह्वयामास नृपतिं सिंहः सिंहं यथा वने ॥ २० ॥ तावुद्यतगदापाणी दुर्य्योधनवृकोदरौ । संयुगे प्रचकाशेते गिरी सशिखराविव ॥ २१ ॥ तावुभौ समतिक्रुद्धावुभौ भीमपराक्रमौ । उभौ शिष्यौ गदायुद्धे रौहिणेयस्य धीमतः ॥ २२ ॥ उभौ सदृशकर्माणौ

मयवासवयोरिव। तथा सदृशकर्म्माणौ वरुणस्य महाबलौ ॥ २३ ॥
वासुदेवस्य रामस्य तथा वैश्रवणस्य च। सदृशौ तौ महाराज
मधुकैटभयोर्युधि ॥ २४ ॥ उभौ सदृशकर्म्माणौ तथा सुन्दोप-
सुन्दयोः। रामरावणयोश्चैव बालिसुग्रीवयोस्तथा ॥ २५ ॥ तथैव
कालस्य समौ मृत्योश्चैव परन्तपौ। अन्योऽन्यमभिधावन्तौ मत्ता-
विव महाद्विपौ ॥ २६ ॥ वासितासङ्गमे दृप्तौ शरदीव मदोत्कटौ।
उभौ क्रोधविषं दीप्तं वमन्तावुरगाविव ॥ २७ ॥ अन्योऽन्यमभि-
संरब्धौ प्रेक्षमाणावरिन्दमौ। उभौ भरतशार्दूलौ विक्रमेण सम-
न्वितौ ॥ २८ ॥ सिंहाविव दुराधर्षौ गदायुद्धे परन्तपौ। मत्ता-
विव जिगीषन्तौ मातङ्गौ भरतर्षभ ॥ २९ ॥ नखदंष्ट्रायुधौ वीरौ
व्याघ्राविव दुरुत्सहौ। प्रजासंहरणे क्षुब्धौ समुद्राविव दुस्तरौ
॥ ३० ॥ लोहिताङ्गाविव क्रुद्धौ प्रतपन्तौ महारथौ। पूर्व्वपश्चि-
मजौ मेघौ वायुना क्षुभितौ यथा ॥ ३१ ॥ गर्ज्जमानौ सुविषमं
क्षरन्तौ प्रावृषीव हि। रश्मियुक्तौ महात्मानौ दीप्तिमन्तौ महा-
बलौ ॥ ३२ ॥ ददृशाते कुरुश्रेष्ठौ कालसूर्य्याविवोदितौ। व्याघ्रा-
विव सुसंरब्धौ गर्ज्जन्ताविव तोयदौ ॥ ३३ ॥ जहृषाते महाबाहू
सिंहौ केशरिणाविव। गजाविव सुसंरब्धौ ज्वलिताविव पावकौ
॥ ३४ ॥ ददृशाते महात्मानौ सशृङ्गाविव पर्व्वतौ। रोषात् प्रस्फुर-
माणोष्ठौ निरीक्षन्तौ परस्परम् ॥ ३५ ॥ तौ समेतौ महात्मानौ
गदाहस्तौ नरोत्तमौ। उभौ परमसंहृष्टावुभौ परमसम्मतौ ॥३६॥
सदश्वाविव ह्रेषन्तौ बृंहन्ताविव कुञ्जरौ। वृषभाविव गर्ज्जन्तौ
दुर्य्योधनवृकोदरौ ॥ ३७ ॥ दैत्याविव बलोन्मत्तौ रेजतुस्तौ नरो-
त्तमौ। ततो दुर्य्योधनो राजन्निदमाह युधिष्ठिरम् ॥ ३८ ॥
भ्रातृभिः सहितञ्चैव कृष्णेन च महात्मना। रामेणामितवीर्य्येण
वाक्यं शौटीर्य्यसम्मतम् ॥ ३९ ॥ कैकेयैः सृञ्जयैर्गुप्तं पाञ्चालैश्च
महात्मभिः। इदं व्यवसितं युद्धं मम भीमस्य चोभयोः ॥ ४० ॥

उपोपविष्टाः पश्यध्वं सहैभिर्नृपपुङ्गवैः। श्रुत्वा दुर्य्योधनवचः प्रत्यपद्यन्त तत्तथा ॥४१॥ ततः समुपविष्टन्तत् सुमहद्राजमण्डलम्। विराजमानं ददृशे दिवीवादित्यमण्डलम् ॥ ४२ ॥ तेषां मध्ये महाबाहुः श्रीमान् केशवपूर्व्वजः। उपविष्टो महाराज पूज्यमानः समन्ततः ॥ ४३ ॥ कैशुभे राजमध्यस्थो नीलवासाः सितप्रभः। नक्षत्रैरिव सम्पूर्णो वृतो निशि निशाकरः ॥ ४४ ॥ तौ तथा तु महाराज गदाहस्तौ सुदुःसहौ। अन्योऽन्यं वाग्भिरुग्राभिस्तक्षमाणौ व्यवस्थितौ ॥ ४५ ॥ अप्रियाणि ततोऽन्योऽन्यमुक्त्वा तौ कुरुसत्तमौ। उदीक्षन्तौ स्थितौ वीरौ वृत्रशक्रौ यथाहवे ॥ ४६ ॥

इति शल्यपर्व्वणि गदायुद्धपर्व्वणि गदायुद्धे
पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

वैशम्पायन उवाच। ततो वाग्युद्धमभवत्तुमुलं जनमेजय। यत्र दुःखान्वितो राजा धृतराष्ट्रोऽब्रवीदिदम् ॥ १ ॥ धिगस्तु खलु मानुष्यं यस्य निष्ठेयमीदृशी। एकादशचमूभर्त्ता यत्र पुत्रो ममानघ ॥ २ ॥ आज्ञाप्य सर्व्वान्नृपतीन् भुक्त्वा चेमां वसुन्धराम्। गदामादाय वेगेन पदातिः प्रस्थितो रणे ॥ ३ ॥ भूत्वा हि जगतो नाथो ह्यनाथ इव मे सुतः। गदामुद्यम्य यो याति किमन्यद्भागधेयतः ॥ ४ ॥ अहो दुःखं महत् प्राप्तं पुत्रेण मम सञ्जय। एवमुक्त्वा सुदुःखार्त्तो विरराम जनाधिपः ॥ ५ ॥

सञ्जय उवाच। स मेघनिनदो हर्षान्निनदन्निव गोवृषः। आजुहाव तदा पार्थं युद्धाय युधि वीर्य्यवान् ॥ ६ ॥ भीममाह्वयमाने तु कुरुराजे महात्मनि। प्रादुरासन् सुघोराणि रूपाणि पविशान्युत ॥ ७ ॥ ववुर्वाताः सुनिर्घाताः पांशुवर्षं पपात च। बभूवुश्च दिशः सर्व्वास्तिमिरेण समावृताः ॥ ८ ॥ महास्वनाः सनि-

र्घातास्तुमुला लोमहर्षणाः । पेतुस्तथोल्काः शतशः स्फोटयन्त्यो नभस्तलात् ॥ ९ ॥ राहुश्चाग्रसदादित्यमपर्वणि विशाम्पते । चकम्पे च महाकम्पं पृथिवी सवनद्रुमा ॥ १० ॥ दीप्ताश्च वाताः प्रववुर्नीचैः शर्करवर्षिणः । गिरीणां शिखराण्येव न्यपतन्त महीतले ॥ ११ ॥ मृगा बहुविधाकाराः संपतन्ति दिशो दश । दीप्ताः शिवाश्चाप्यनदन् घोररूपाः सुदारुणाः ॥ १२ ॥ निर्घाताश्च महाघोरा बभूवुर्लोमहर्षणाः । दीप्तायां दिशि राजेन्द्र मृगाश्चाशुभवेदिनः ॥ १३ ॥ उदपानगताश्चापो व्यवर्द्धन्त समन्ततः । अशरीरा महानादाः श्रूयन्ते स्म तदा नृप ॥ १४ ॥ एवमादीनि दृष्ट्वाथ निमित्तानि वृकोदरः । उवाच भ्रातरं ज्येष्ठं धर्मराजं युधिष्ठिरम् ॥ १५ ॥ नैष शक्तो रणे जेतुं मन्दात्मा मां सुयोधनः । अद्य क्रोधं विमोक्ष्यामि निगूढं हृदये चिरम् ॥ १६ ॥ सुयोधने कौरवेन्द्रे खाण्डवे पावको यथा । शल्यमद्योद्धरिष्यामि तव पाण्डव हृच्छयम् ॥१७॥ निहत्य गदया पापमिमं कुरुकुलाधमम् । अद्य कीर्त्तिमयीं मालां प्रतिमोक्ष्याम्यहं त्वयि ॥ १८ ॥ हत्वेमं पापकर्माणं गदया रणमूर्द्धनि । अद्यास्य शतधा देहं भिनद्मि गदयानया ॥ १९ ॥ नायं प्रवेष्टा नगरं पुनर्वारणसाह्वयम् ॥ २० ॥ सर्पोत्सर्गस्य शयने विषदानस्य भोजने । प्रमाणकोट्यां पातस्य दाहस्य जतुवेश्मनि ॥ २१ ॥ सभायामवहासस्य सर्वस्वहरणस्य च । वर्षमज्ञातवासस्य वनवासस्य चानघ ॥ २२ ॥ अद्यान्तमेषां दुःखानां गन्ताहं भरतर्षभ । एकाह्ना विनिहत्येमं भविष्याम्यात्मनोऽनृणः ॥ २३ ॥ अद्यायुर्धार्त्तराष्ट्रस्य दुर्मतेरकृतात्मनः । समाप्तं भरतश्रेष्ठ मातापित्रोश्च दर्शनम् ॥ २४ ॥ अद्य सौख्यन्तु राजेन्द्र कुरुराजस्य दुर्मतेः । समाप्तञ्च महाराज नारीणां दर्शनं पुनः ॥ २५ ॥ अद्यायं कुरुराजस्य शान्तनोः कुलदूषणः । प्राणान् श्रियञ्च राज्यञ्च त्यक्त्वा शेष्यति भूतले ॥ २६ ॥ राजा च धृतराष्ट्रोऽद्य श्रुत्वा पुत्रं निपा-

तितम् । स्मरिष्यस्यशुभं कर्म यत्तच्छकुनिबुद्धिजम् ॥ २७ ॥ इत्युक्का राजशार्दूल गदामादाय वीर्यवान् । अवातिष्ठत युद्धाय शक्रो वृत्रमिवाह्वयन् ॥ २८ ॥ तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम् । भीमसेनः पुनः क्रुद्धो दुर्य्योधनमुवाच ह ॥ २९ ॥ राज्ञश्च धृतराष्ट्रस्य तथा त्वमपि चात्मनः । स्मर तद्दुष्कृतं कर्म यद्वृत्तं वारणावते ॥ ३० ॥ द्रौपदी च परिक्लिष्टा सभामध्ये रजस्वला । द्यूतेन वञ्चितो राजा यत्त्वया सौबलेन च ॥ ३१ ॥ वने दुःखञ्च यत् प्राप्तमस्माभिस्त्वत्कृतं महत् । विराटनगरे चैव योन्यन्तरगतैरिव । तत् सर्वं यातयाम्यद्य दिष्ट्या दृष्टोऽसि दुर्मते ॥ ३२ ॥ त्वत्कृतेऽसौ हतः शेते शरतल्पे प्रतापवान् । गाङ्गेयो रथिनां श्रेष्ठो निहतो याज्ञसेनिना ॥ ३३ ॥ हतो द्रोणश्च कर्णश्च तथा शल्यः प्रतापवान् । वैराग्नेरादिकर्त्तासौ शकुनिः सौबलो हतः ॥३४ प्रातिकामी तथा पापो द्रौपद्याः क्लेशकृद्धत । भ्रातरस्ते हताः सर्वे शूरा विक्रान्तयोधिनः ॥ ३५ ॥ एते चान्ये च बहवो निहतास्त्वत्कृते नृपाः । त्वामद्य निहनिष्यामि गदया नात्र संशयः ॥ ३६ ॥ इत्येवमुच्चै राजेन्द्र भाषमाणं वृकोदरम् । उवाच वीतभी राजन् पुत्रस्ते सत्यविक्रमः ॥ ३७ ॥ किं कथितेन बहुना युध्यस्व त्वं वृकोदर । अद्य तेऽहं विनेष्यामि युद्धश्रद्धां कुलाधम ॥ ३८ ॥ नैव दुर्य्योधनः क्षुद्र केनचित्त्वद्विधेन वै । शक्यस्त्रासयितुं वाचा यथान्यः प्राकृतो नरः ॥ ३९ ॥ चिरकालेप्सितं दिष्ट्या हृदयस्थमिदं मम । त्वया सह गदायुद्धं त्रिदशैरुपपादितम् ॥ ४० ॥ किं वाचा बहुनोक्तेन कथितेन च दुर्मते । वाणी सम्पाद्यतामेषा कर्मणा मा चिरं कृथाः ॥ ४१ ॥ तस्य तद्वचनं श्रुत्वा सर्वे एवाभ्यपूजयन् । राजानः सोमकाश्चैव ये तत्रासन् समागताः ॥ ४२ ॥ ततः सम्पूजितः सर्वैः संप्रहृष्टतनूरुहः । भूयो धीरां मतिञ्चक्रे युद्धाय कुरुनन्दन ॥ ४३ ॥ तं मत्तमिव मातङ्गं तलशब्दैर्नरा-

धिपाः। भूयः संहर्षयाञ्चक्रुर्दुर्य्योधनममर्षणम्॥ ४४॥ तं महात्मा महात्मानं गदामुद्यम्य पाण्डवः। अभिदुद्राव वेगेन धार्त्तराष्ट्रं वृकोदरः॥ ४५॥ बृंहन्ति कुञ्जरास्तत्र हया ह्रेषन्ति चासकृत्। अस्त्राणि चाप्यदीप्यन्त पाण्डवानां जयैषिणाम्॥ ४६॥

इति शल्यपर्व्वणि गदायुद्धपर्व्वणि गदायुद्धे
षट्पञ्चाशोऽध्यायः॥ ५६॥

---

सञ्जय उवाच। ततो दुर्य्योधनो दृष्ट्वा भीमसेनं तथागतम्। प्रत्युद्ययावदीनात्मा वेगेन महता नदन्॥ १॥ समापेततुरन्योऽन्यं शृङ्गिणौ गोवृषाविव। महानिर्घातघोषश्च प्रहाराणामजायत॥२॥ अभवच्च तयोर्युद्धं तुमुलं लोमहर्षणम्। जिगीषतोर्युधान्योऽन्यमिन्द्रप्रह्लादयोरिव॥ ३॥ रुधिरोक्षितसर्वाङ्गौ गदाहस्तौ मनस्विनौ। ददृशाते महात्मानौ पुष्पिताविव किंशुकौ॥ ४॥ तथा तस्मिन्महायुद्धे वर्त्तमाने सुदारुणे। खद्योतसङ्घैरिव खं दर्शनीयं व्यरोचत॥ ५॥ तथा तस्मिन् वर्त्तमाने संकुले तुमुले भृशम्। उभावपि परिश्रान्तौ युध्यमानावरिन्दमौ॥ ६॥ तौ मुहूर्त्तं समाश्वस्य पुनरेव परन्तपौ। अभ्यहारयतान्योऽन्यं संप्रगृह्य गदे शुभे॥ ७॥ तौ तु दृष्ट्वा महावीर्य्यौ समाश्वस्तौ नरर्षभौ। बलिनौ वारणौ यद्वद्वासितार्थे मदोत्कटौ॥ ८॥ समानवीर्य्यौ संप्रेक्ष्य प्रगृहीतगदावुभौ। विस्मयं परमं जग्मुर्देवगन्धर्वमानवाः॥ ९॥ प्रगृहीतगदौ दृष्ट्वा दुर्य्योधनवृकोदरौ। संशयः सर्वभूतानां विजये समपद्यत॥ १०॥ समागम्य ततो भूयो भ्रातरौ बलिनाम्वरौ। अन्योऽन्यस्यान्तरं प्रेप्सू प्रचक्राते‌ऽन्तरं प्रति॥११॥ यमदण्डोपमां गुर्वीमिन्द्राशनिमिवोद्यताम्। ददृशुः प्रेक्षका राजन् रौद्रीं विशसनीं गदाम्॥ १२॥ आविध्यतो गदां तस्य भीम-

सेनस्य संयुगे। शब्दः सुतुमुलो घोरो मुहूर्त्तं समपद्यत ॥ १३ ॥
आविध्यन्तमरिं प्रेक्ष्य धार्त्तराष्ट्रोऽथ पाण्डवम्। गदामतुलवेगां
तां विस्मितः संबभूव ह ॥ १४ ॥ चरंश्च विविधान्मार्गान्मण्डलानि
च भारत। अशोभत तदा वीरो भूय एव वृकोदरः ॥ १५ ॥ तौ
परस्परमासाद्य यत्तावन्योऽन्यरक्षणे। मार्जाराविव भक्षार्थे तत-
क्षाते मुहुर्मुहुः ॥ १६ ॥ अचरद्भीमसेनस्तु मार्गान् बहुविधांस्तथा।
मण्डलानि विचित्राणि गतप्रत्यागतानि च ॥ १७ ॥ अस्त्रयन्त्राणि
चित्राणि स्थानानि विविधानि च। परिमोक्षं प्रहाराणां वर्जनं
परिधारणम् ॥ १८ ॥ अभिद्रवणमाक्षेपमवस्थानं सविग्रहम्।
परावर्त्तनसंवर्त्तमवप्लुतमुपप्लुतम् ॥ १९ ॥ उपन्यस्तमपन्यस्तं गदा-
युद्धविशारदौ। एवं तौ विचरन्तौ तु न्यघ्नतां वै परस्परम् ॥ २० ॥
वञ्चयानौ पुनश्चैव चेरतुः कुरुसत्तमौ। विक्रीड़न्तौ सुबलिनौ
मण्डलानि विचेरतुः ॥ २१ ॥ तौ दर्शयन्तौ समरे युद्धक्रीड़ां
समन्ततः। गदाभ्यां सहसान्योऽन्यमाजघ्नतुररिन्दमौ ॥ २२ ॥ तौ
परस्परमासाद्य दंष्ट्राभ्यां द्विरदौ यथा। अशोभेतां महाराज
शोणितेन परिप्लुतौ ॥ २३ ॥ एवं तदभवद्युद्धं घोररूपमसंवृतम्।
परिवृत्तेऽहनि क्रूरं वृत्रवासवयोरिव। गदाहस्तौ ततस्तौ तु
मण्डलावस्थितौ बली ॥ २४ ॥ दक्षिणं मण्डलं राजन् धार्त्त-
राष्ट्रोऽभ्यवर्त्तत। सव्यन्तु मण्डलं तत्र भीमसेनोऽभ्यवर्त्तत ॥ २५ ॥
तथा तु चरतस्तस्य भीमस्य रणमूर्द्धनि। दुर्य्योधनो महाराज
पार्श्वदेशेऽभ्यताड़यत् ॥ २६ ॥ आहतस्तु तदा भीमः पुत्रेण तव
मारिष। आविध्यत गदां गुर्वीं प्रहारन्तमचिन्तयन् ॥ २७ ॥
इन्द्राशनिसमां घोरां यमदण्डमिवोद्यताम्। ददृशुस्ते महाराज
भीमसेनस्य तां गदाम् ॥ २८ ॥ आविध्यन्तं गदां दृष्ट्वा भीमसेनं
तवात्मजः। समुद्यम्य गदां घोरां प्रत्यविध्यत् परन्तपः ॥ २९ ॥
गदामारुतवेगेन तव पुत्रस्य भारत। शब्द आसीत् सुतुमुलस्तेजश्च

समजायत ॥ ३० ॥ स चरन् विविधान्मार्गान् मण्डलानि च भागशः। समशोभत तेजस्वी भूयो भीमात् सुयोधनः ॥ ३१ ॥ आविद्धा सर्व्ववेगेन भीमेन महती गदा। सधूमं सार्च्चिषं साग्निं मुमोचाग्रग्रा महास्वना ॥ ३२ ॥ आधूतां भीमसेनेन गदां दृष्ट्वा सुयोधनः। अद्रिसारमयीं गुर्व्वीमाविध्य बह्वशोभत ॥ ३३ ॥ गदामारुतवेगं हि दृष्ट्वा तस्य महात्मनः। भयं विवेश पाण्डूंस्तु सर्व्वानेव ससोमकान् ॥ ३४ ॥ तौ दर्शयन्तौ समरे युद्धक्रीड़ां समन्ततः। गदाभ्यां सहसान्योऽन्यमाजघ्नतुररिन्दमौ ॥ ३५ ॥ तौ परस्परमासाद्य दंष्ट्राभ्यां द्विरदौ यथा। अशोभेतां महाराज शोणितेन परिप्लुतौ ॥ ३६ ॥ एवं तदभवद्युद्धं घोररूपमसंवृतम्। परिवृत्तेऽहनि क्रूरं वृत्रवासवयोरिव ॥ ३७ ॥ दृष्ट्वा व्यवस्थितं भीमं तव पुत्रो महाबलः। चरंश्चित्रतरान्मार्गान् कौन्तेयमभिदुद्रुवे ॥ ३८ ॥ तस्य भीमो महावेगां जाम्बूनदपरिष्कृताम्। अभिक्रुद्धस्य क्रुद्धस्तु ताड़यामास तां गदाम् ॥३९॥ सविस्फुलिङ्गो निर्ह्रादस्तयोस्तत्राभिघातजः। प्रादुरासीन्महाराज सृष्टयोर्वज्रयोरिव ॥ ४० ॥ वेगवत्या तया तत्र भीमसेनेन मुक्तया। निपतन्त्या महाराज पृथिवी समकम्पत ॥ ४१ ॥ तान्नामृष्यत कौरव्यो गदां प्रतिहतां रणे। मत्तो द्विप इव क्रुद्धः प्रतिकुञ्जरदर्शनात् ॥ ४२ ॥ स सव्यं मण्डलं राजन्नुद्भ्राम्य कृतनिश्चयः। आजघ्ने मूर्द्धि कौन्तेयं गदया भीमवेगया ॥ ४३ ॥ तया त्वभिहतो भीमः पुत्रेण तव पाण्डवः। नाकम्पत महाराज तदद्भुतमिवाभवत् ॥ ४४ ॥ आश्चर्य्यञ्चापि तद्राजन् सर्व्वसैन्यान्यपूजन्। यद्गदाभिहतो भीमो नाकम्पत पदात् पदम् ॥ ४५ ॥ ततो गुरुतरीं दीप्तां गदां हेमपरिष्कृताम्। दुर्य्योधनाय व्यसृजत् भीमो भीमपराक्रमः ॥ ४६ ॥ तं प्रहारमसंभ्रान्तो लाघवेन महाबलः। मोघं दुर्य्योधनश्चक्रे तत्राभूद्विस्मयो महान् ॥ ४७ ॥ सा तु मोघा गदा राजन् पतन्ती भीमचोदिता।

चालयामास पृथिवीं महानिर्घातनिस्वना ॥ ४८ ॥ आस्थाय कौशिकान्मार्गानुत्पतन् स पुनः पुनः। गदानिपातं प्रज्ञाय भीमसेनञ्च वञ्चितम् ॥ ४९ ॥ वञ्चयित्वा तथा भीमं गदया कुरुसत्तमः। ताड़यामास संक्रुद्धो वक्षोदेशे महाबलः ॥ ५० ॥ गदया निहतो भीमो मुह्यमानो महारणे। नाभ्यमन्यत कर्त्तव्यं पुत्रेणाभ्याहतस्तव ॥ ५१ ॥ तस्मिंस्तथा वर्त्तमाने राजन् सोमकपाण्डवाः। भृशोपहतसङ्कल्पा न हृष्टमनसोऽभवन् ॥ ५२ ॥ स तु तेन प्रहारेण मातङ्ग इव रोषितः। हस्तिवद्धस्तिसङ्काशमभिदुद्राव ते सुतम् ॥ ५३ ॥ ततस्तु तरसा भीमो गदया तनयं तव। अभिदुद्राव वेगेन सिंहो वनगजं यथा ॥ ५४ ॥ उपसृत्य तु राजानं गदामोक्षविशारदः। आविध्यत गदां राजन् समुद्दिश्य सुतं तव ॥५५॥ अताड़यद्भीमसेनः पार्श्वे दुर्य्योधनं तदा। स विह्वलः प्रहारेण जानुभ्यामगमन्महीम् ॥५६॥ तस्मिन् कुरुकुलश्रेष्ठे जानुभ्यामवनीं गते। उदतिष्ठत्ततो नादः सृञ्जयानां जगत्पते ॥ ५७ ॥ तेषान्तु निनदं श्रुत्वा सृञ्जयानां नरर्षभ। अमर्षाद्भरतश्रेष्ठ पुत्रस्ते समकुप्यत ॥ ५८ ॥ उत्थाय तु महाबाहुर्म्महानाग इव श्वसन्। दिधक्षन्निव नेत्राभ्यां भीमसेनमवैक्षत ॥ ५९ ॥ ततः स भरतश्रेष्ठो गदापाणिरथाद्रवत्। प्रमथिष्यन्निव शिरो भीमसेनस्य संयुगे ॥६०॥ स महात्मा महात्मानं भीमं भीमपराक्रमः। अताड़यत् शङ्खदेशे न चचालाचलोपमः ॥ ६१ ॥ स भूयः शुशुभे पार्थस्ताड़ितो गदया रणे। उद्भिन्नरुधिरो राजन् प्रभिन्न इव कुञ्जरः ॥ ६२ ॥ ततो गदां वीरहणीमयोमयीं प्रगृह्य वज्राशनितुल्यनिस्वनाम्। अताड़यच्छत्रुममित्रकर्षणो बलेन विक्रम्य धनञ्जयाग्रजः ॥ ६३ ॥ स भीमसेनाभिहतस्तवात्मजः पपात सङ्कम्पितदेहबन्धनः। सुपुष्पितो मारुतवेगताड़ितो वने महाशाल इवावघूर्णितः ॥ ६४ ॥ ततः प्रणेदुर्जहृषुश्च पाण्डवाः समीक्ष्य पुत्रं पतितं क्षितौ तव। ततः

सुतस्ते प्रतिलभ्य चेतनां समुत्पपात द्विरदो यथा ह्रदात् ॥ ६५ ॥ स पार्थिवो नित्यममर्षितस्तदा महारथः शिक्षितवत् परिभ्रमन्। अताड़यत् पाण्डवमग्रतः स्थितं स विह्वलाङ्गो जगतीमुपास्पृशत् ॥ ६६ ॥ स सिंहनादं विननाद कौरवो निपात्य भूमौ युधि भीममोजसा। बिभेद चैवाशनितुल्यतेजसा गदानिपातेन शरीररक्षणम् ॥ ६७ ॥ ततोऽन्तरीक्षे निनदो महानभूद्दिवौकसामप्सरसाञ्च नेदुषाम्। पपात चोच्चैरमरप्रवेरितं विचित्रपुष्पोत्करवर्षमुत्तमम् ॥ ६८ ॥ ततः परानाविशदुत्तमं भयं समीक्ष्य भूमौ पतितं नरोत्तमम्। अहीयमानञ्च बलेन कौरवं निशम्य भेदं सुदृढ़स्य वर्म्मणः ॥ ६९ ॥ ततो मुहूर्त्तादुपलभ्य चेतनां प्रमृज्य वक्त्रं रुधिरार्द्रमात्मनः। धृतिं समालम्ब्य विवृत्तलोचनो बलेन संस्तभ्य वृकोदरः स्थितः ॥ ७० ॥

इति शल्यपर्व्वणि गदायुद्धपर्व्वणि गदायुद्धे
सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

सञ्जय उवाच। समुदीर्णं ततो दृष्ट्वा संग्रामं कुरुमुख्ययोः। अथाब्रवीदर्जुनस्तु वासुदेवं यशस्विनम् ॥ १ ॥ अनयोर्वीरयोर्युद्धे को ज्यायान् भवतो मतः। कस्य वा को गुणो भूयानेतद्वद जनार्द्दन ॥ २ ॥

वासुदेव उवाच। उपदेशोऽनयोस्तुल्यो भीमस्तु बलवत्तरः। कृती यत्नपरस्त्वेष धार्त्तराष्ट्रो वृकोदरात् ॥ ३ ॥ भीमसेनस्तु धर्म्मेण युध्यमानो न जेष्यति। अन्यायेन तु युध्यन् वै हन्यादेव सुयोधनम् ॥ ४ ॥ मायया निर्ज्जिता देवैरसुरा इति नः श्रुतम्। विरोचनस्तु शक्रेण मायया निर्ज्जितः स वै ॥ ५ ॥ मायया चाक्षिपत्तेजो वृत्रस्य बलसूदनः। तस्मान्मायामयं भीम आतिष्ठतु

पराक्रमम् ॥ ६ ॥ प्रतिज्ञातन्तु भीमेन द्यूतकाले धनञ्जय । ऊरू भेत्स्यामि ते सङ्ख्ये गदयेति सुयोधन ॥ ७ ॥ सोऽयं प्रतिज्ञां ताञ्चापि पालयत्वरिकर्षणः । मायाविनञ्च राजानं माययैव निकृन्ततु ॥ ८ ॥ यद्येष बलमास्थाय न्यायेन प्रहरिष्यति । विषमस्थस्ततो राजा भविष्यति युधिष्ठिरः ॥ ९ ॥ पुनरेव तु वक्ष्यामि पाण्डवेय निबोध मे । धर्मराजापराधेन भयं नः पुनरागतम् ॥१० कृत्वा हि सुमहत् कर्म हत्वा भीष्ममुखान् कुरून् । जयः प्राप्तो यशश्चाग्र्यं वैरञ्च प्रतियातितम् ॥ ११ ॥ तदेवं विजयः प्राप्तः पुनः संशयितः कृतः । अबुद्धिरेषा महती धर्मराजस्य पाण्डव ॥ १२ ॥ यदेकविजये युद्धं पणितं घोरमीदृशम् । सुयोधनः कृती वीर एकायनगतस्तथा ॥ १३ ॥ अपि चोशनसा गीतः श्रूयतेऽयं पुरातनः । श्लोकस्तत्त्वार्थसहितस्तन्मे निगदतः शृणु ॥ १४ ॥ पुनरावर्त्तमानानां भग्नानां जीवितैषिणाम् । भेतव्यमरिशेषाणामेकायनगता हि ते ॥ १५ ॥ सहसोत्पतितानाञ्च निराशानाञ्च जीविते । न शक्यमग्रतः स्थातुं शक्रेणापि धनञ्जय ॥ १६ ॥ सुयोधनमिमं भग्नं हतसैन्यं ह्रदं गतम् । पराजितं वनप्रेप्सुं निराशं राज्यलम्भने । कोऽन्वेष संयुगे प्राज्ञः पुनर्द्वन्द्वे समाह्वयेत् ॥ १७ ॥ अपि नो निर्ज्जितं राज्यं न हरेत सुयोधनः । यस्त्रयोदशवर्षाणि गदया कृतनिश्चयः । चरत्यूर्द्ध्वञ्च तिर्य्यक् च भीमसेनजिघांसया ॥ १८ ॥ एनञ्चेन्न महाबाहुरन्यायेन हनिष्यति । एष वः कौरवो राजा धार्त्तराष्ट्रो भविष्यति ॥ १९ ॥ धनञ्जयस्तु श्रुत्वैतत् केशवस्य महात्मनः । प्रेक्षतो भीमसेनस्य सव्यमूरुमताड़यत् ॥ २० ॥ गृह्य संज्ञां ततो भीमो गदया व्यचरद्रणे । मण्डलानि विचित्राणि यमकानीतराणि च ॥ २१ ॥ दक्षिणं मण्डलं सव्यं गोमूत्रकमथापि च । व्यचरत् पाण्डवो राजन्नरिं सम्मोहयन्निव ॥ २२ ॥ तथैव तव पुत्रोऽपि गदामार्गविशारदः । व्यचरल्लघु चित्रञ्च भीम-

नेनजिघांसया ॥ २३ ॥ आधुन्वन्तौ गदे घोरे चन्दनागुरुरूषिते ।
वैरस्यान्तं परीप्सन्तौ रणे क्रुद्धाविवान्तकौ ॥ २४ ॥ अन्योऽन्यं
तौ जिघांसन्तौ प्रवीरौ पुरुषर्षभौ । युयुधाते गरुत्मन्तौ यथा
नागमिषैषिणौ ॥२५॥ मण्डलानि विचित्राणि चरतोर्नृपभीमयोः ।
गदासम्पातजास्तत्र प्रजज्ञुः पावकार्च्चिषः ॥ २६ ॥ समं प्रहरतो-
स्तत्र शूरयोर्बलिनोर्म्मृधे । क्षुब्धयोर्वायुना राजन् द्वयोरिव समु-
द्रयोः ॥ २७ ॥ तयोः प्रहरतोस्तुल्यं मत्तकुञ्जरयोरिव । गदा-
निर्घातसंह्रादः प्रहारात् समजायत ॥ २८ ॥ तस्मिंस्तदा संप्रहारे
दारुणे सङ्कुले भृशम् । उभावपि परिश्रान्तौ युध्यमानावरिन्दमौ
॥ २९ ॥ तौ मुहूर्त्तं समाश्वस्य पुनरेव परन्तपौ । अभ्यहारयतां
क्रुद्धौ प्रगृह्य महतीं गदाम् ॥ ३० ॥ तयोः समभवद्युद्धं घोर-
रूपमसंवृतम् । गदानिपातै राजेन्द्र तक्षतोर्वै परस्परम् ॥ ३१ ॥
समरे प्रद्रुतौ तौ तु वृषभाक्षौ तरस्विनौ । अन्योऽन्यं जघ्नतुर्वीरौ
पङ्कस्थौ महिषाविव ॥ ३२ ॥ जर्ज्जरीकृतसर्वाङ्गौ रुधिरेणाभि-
संप्लुतौ । ददृशाते हिमवति पुष्पिताविव किंशुकौ ॥ ३३ ॥ दुर्य्यो-
धनस्तु पार्थेन विवरे संप्रदर्शिते । ईषदुत्स्मयमानस्तु सहसा
प्रससार ह ॥ ३४ ॥ तमभ्यासगतं प्राज्ञो रणे प्रेक्ष्य वृकोदरः ।
अवाक्षिपद्गदां तस्मै वेगेन महता बली ॥ ३५ ॥ अवाक्षिप्तान्तु तां
दृष्ट्वा पुत्रस्तव विशाम्पते । अवासर्पत्ततः स्थानात् सा मोघा न्यपत-
द्भुवि ॥ ३६ ॥ मोक्षयित्वा प्रहारं तं सुतस्तवससम्भ्रमात् । भीम-
सेनञ्च गदया प्राहरत् कुरुसत्तमः ॥ ३७ ॥ तस्य विस्यन्दमानेन
रुधिरेणामितौजसः । प्रहारगुरुपाताच्च मूर्च्छेव समजायत ॥३८॥
दुर्य्योधनो न तं वेद पीड़ितं पाण्डवं रणे । धारयामास भीमोऽपि
शरीरमतिपीड़ितम् ॥ ३९ ॥ अमन्यत स्थितं ह्येनं प्रहरिष्यन्त-
माहवे । ततो न प्राहरत्तस्मै पुनरेव तवात्मजः ॥ ४० ॥ ततो
मुहूर्त्तमाश्वस्य दुर्य्योधनमुपस्थितम् । वेगेनाभ्यपतद्राजन् भीम-

सेनः प्रतापवान्॥ ४१॥ तमापतन्तं संप्रेक्ष्य संरब्धममितौजसम्
मोघमस्य प्रहारं तं चिकीर्षुर्भरतर्षभ॥ ४२॥ अवस्थाने मति
कृत्वा पुत्रस्तव महामनाः। इयेषोत्पतितुं राजंश्छलयिष्यन् वृको
दरम॥ ४३॥ अबुध्यद्भीमसेनस्तद्राज्ञस्तस्य चिकीर्षितम्। अथास्य
समभिद्रुत्य समुत्क्रम्य च सिंहवत्॥ ४४॥ सृत्यं वञ्चयतो राजन्
पुनरेवोत्पतिष्यतः। ऊरुभ्यां प्राहिणोद्राजन् गदां वेगेन पाण्डवः
॥ ४५॥ सा वज्रनिष्पेषसमा प्रहिता भीमकर्म्मणा। ऊरू दुर्य्यो
धनस्याथ बभञ्ज प्रियदर्शनौ॥ ४६॥ स पपात नरव्याघ्रो वसुधा
मनुनादयन्। भग्नोरुर्भीमसेनेन पुत्रस्तव महीपते॥ ४७॥ ववु
र्वाताः सनिर्घाताः पांशुवर्षं पपात च। चचाल पृथिवी चापि
सवृक्षक्षुपपर्वता॥ ४८॥ तस्मिन्निपतिते वीरे पत्यौ सर्वमही
क्षिताम्। महास्वना पुनर्दीप्ता सनिर्घाता भयङ्करी। पपात
चोल्का महती पतिते पृथिवीपतौ॥ ४९॥ तथा शोणितवर्षञ्च
पांशुवर्षञ्च भारत। ववर्ष मघवांस्तत्र तव पुत्रे निपातिते॥ ५०॥
यक्षाणां राक्षसानाञ्च पिशाचानां तथैव च। अन्तरीक्षे महान्नादः
श्रूयते भरतर्षभ॥ ५१॥ तेन शब्देन घोरेण मृगाणामथ पक्षि
णाम्। जज्ञे घोरतरः शब्दो बहूनां सर्वतो दिशम्॥ ५२॥ ये
तत्र वाजिनः शेषा गजाश्च मनुजैः सह। मुमुचुस्ते महानादं तव
पुत्रे निपातिते। भेरीशङ्खमृदङ्गानामभवच्च स्वनो महान्॥ ५३॥
अन्तर्भूमिगतैश्चैव तव पुत्रे निपातिते। बहुपादैर्बहुभुजैः कबन्धैः
घोरदर्शनैः। नृत्यद्भिर्भयदैर्व्याप्ता दिशस्तत्राभवन्नृप॥ ५४॥
ध्वजवन्तोऽस्त्रवन्तश्च शस्त्रवन्तस्तथैव च। प्राकम्पन्त ततो राजं
स्तव पुत्रे निपातिते॥ ५५॥ ह्रदाः कूपाश्च रुधिरमुद्वेमुर्नृपसत्तम।
नद्यश्च सुमहावेगाः प्रतिस्रोतोवहाभवन्॥ ५६॥ पुंलिङ्गा इव
नार्य्यस्तु स्त्रीलिङ्गाः पुरुषाभवन्। दुर्य्योधने तदा राजन् पतिते
तनये तव॥ ५७॥ दृष्ट्वा तानद्भुतोत्पातान् पाञ्चालाः पाण्डवैः

ह। आविग्नमनसः सर्व्वे बभूवुर्भरतर्षभ ॥ ५८ ॥ ययुर्देवा
यथाकामं गन्धर्वाप्सरसस्तथा। कथयन्तोऽद्भुतं युद्धं सुतयोस्तव
ारत ॥ ५९ ॥ तथैव सिद्धा राजेन्द्र तथा वातिकचारणाः।
रसिंहौ प्रशंसन्तौ विप्रजग्मुर्यथागतम् ॥ ६० ॥

इति शल्यपर्व्वणि गदायुद्धपर्व्वणि दुर्य्योधनोरुभङ्गे
अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

सञ्जय उवाच। तं पातितं ततो दृष्ट्वा महाशालमिवोद्गतम्।
ाहृष्टमनसः सर्व्वे दहृशुस्तत्र पाण्डवाः ॥ १ ॥ तं मत्तमिव मातङ्गं
ंहेन विनिपातितम्। दहृशुर्हृष्टरोमाणः सर्व्वे ते चापि सोमकाः
२ ॥ ततो दुर्य्योधनं हत्वा भीमसेनः प्रतापवान्। पतितं
ौरवेन्द्रं तमुपागम्येदमब्रवीत् ॥ ३ ॥ गौर्गौरिति पुरा मन्द
ौपदीमेकवाससम्। यत् सभायां हसन्नस्मांस्तदा वदसि दुर्मते
४ ॥ तस्यावहासस्य फलमद्य त्वं समवाप्नुहि। एवमुक्त्वा स
ामेन पदा मौलिमुपास्पृशत्। शिरश्च राजसिंहस्य पादेन सम-
ोड़यत् ॥ ५ ॥ तत्रैव क्रोधसंरक्तो भीमः परबलार्द्दनः। पुन-
ेवाब्रवीद्वाक्यं यत्तत् शृणु नराधिप ॥ ६ ॥ येऽस्मान् पुरा प्रनृ-
यन्ति मूढा गौरिति गौरिति। तान् वयं प्रतिनृत्यामः पुनर्गौ-
रिति गौरिति ॥ ७ ॥ नास्माकं निकृतिर्वह्निर्नाक्षद्यूते न वञ्चना।
वबाहुबलमाश्रित्य प्रबाधामो वयं रिपून् ॥ ८ ॥ सोऽवाप्य वैरस्य
रस्य पारं वृकोदरः प्राह शनैः प्रहस्य। युधिष्ठिरं केशव-
ृञ्जयांश्च धनञ्जयं माद्रवतीसुतौ च ॥ ९ ॥ रजस्वलां द्रौपदी-
ानयन् ये ये चाप्यकुर्व्वन्त सदस्यवस्त्राम्। तान् पश्यध्वं पाण्डवै-
ार्त्तराष्ट्रान्रणे हतांस्तपसा याज्ञसेन्याः ॥ १० ॥ ये नः पुरा
ण्डतिलानवोचन् क्रूरा राज्ञो धृतराष्ट्रस्य पुत्राः। ते नो हताः

सगणाः सानुबन्धाः कामं स्वर्गं नरकं वा पतामः ॥ ११ ॥ पुनश्च
राज्ञः पतितस्य भूमौ स तां गदां स्कन्धगतां प्रगृह्य। वामेन
पादेन शिरः प्रमृद्य दुर्य्योधनं नैकृतिकं न्यवोचत् ॥ १२ ॥ हृष्टेन
राजन् कुरुसत्तमस्य चुद्रात्मना भीमसेनेन पादम्। दृष्ट्वा कृतं
मूर्द्धनि नाभ्यनन्दन् धर्मात्मानः सोमकानां प्रवर्हाः ॥ १३ ॥ तव
पुत्रं तथा हत्वा कत्थमानं वृकोदरम्। नृत्यमानञ्च बहुशो धर्म-
राजोऽब्रवीदिदम् ॥ १४ ॥ गतोऽसि वैरस्यानृण्यं प्रतिज्ञा पूरिता
त्वया। शुभेनैवाशुभेनाथ कर्मणा विरमाधुना ॥ १५ ॥ मा
शिरोऽस्य पदा मर्द्दीर्मा धर्मस्तेऽतिगो भवेत्। राजा ज्ञातिर्हत-
श्चायं नैतन्न्याय्यं तवानघ ॥ १६ ॥ एकादशचमूनाथं कुरूणामधिपं
तथा। मा स्प्राक्षीर्भीम पादेन राजानं ज्ञातिमेव च ॥ १७ ॥
हतबन्धुर्हतामात्यो भ्रष्टसैन्यो हतो मृधे। सर्वाकारेण शोच्योऽयं
नावहास्योऽयमीश्वरः ॥ १८ ॥ विध्वस्तोऽयं हतामात्यो हत-
भ्राता हतप्रजः। उत्सन्नपिण्डो भ्राता च नैतन्न्याय्यं कृतं त्वया
॥ १९ ॥ धार्म्मिको भीमसेनोऽसावित्याहुस्त्वां पुरा जनाः। स
कस्माद्भीमसेन त्वं राजानमधितिष्ठसि ॥ २० ॥ इत्युक्त्वा भीम-
सेनन्तु साश्रुकण्ठो युधिष्ठिरः। उपसृत्याब्रवीद्दीनो दुर्य्योधन-
मरिन्दमम् ॥ २१ ॥ तात मन्युर्न ते कार्य्यो नात्मा शोच्यस्त्वया
तथा। नूनं पूर्व्वकृतं कर्म्म सुघोरमनुभूयते ॥ २२ ॥ धात्रोप-
दिष्टं विषमं नूनं फलमसंस्कृतम्। यद्वयं त्वां जिघांसामस्त्वञ्चा-
स्मान् कुरुसत्तम ॥ २३ ॥ आत्मनो ह्यपराधेन महद्व्यसनमीदृशम्
प्राप्तवानसि यल्लोभान्मदाद्बाल्याच्च भारत ॥ २४ ॥ घातयित्वा वय-
स्यांश्च भ्रातॄनथ पितॄंस्तथा। पुत्रान् पौत्रांस्तथा चान्यांस्ततोऽसि
निधनं गतः ॥ २५ ॥ तवापराधादस्माभिर्भ्रातरस्ते महारथाः
निहता ज्ञातयश्चान्ये दिष्टं मन्ये दुरत्ययम् ॥ २६ ॥ नात्मानु-
शोचनीयस्ते श्लाघ्यो मृत्युस्तवानघ। वयमेवाधुना शोच्याः सर्व्वां

वस्यासु कौरव। कृपणं वर्त्तयिष्यामस्त्वैर्हीना बन्धुभिः प्रियैः ॥२७॥
भ्रातॄणाञ्चैव पुत्राणां नप्तॄणां शोकविह्वलाः। कथं द्रच्यामि विधवा
वधूः शोकपरिप्लुताः॥२८॥ त्वमेकः प्रस्थितो राजन् स्वर्गे ते निलयो
ध्रुवः। वयं नारकिसंज्ञा वै दुःखं भोच्याम दारुणम्॥ २९॥
स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य विह्वलाः। गर्हयिष्यन्ति नो नूनं
विधवाः शोककर्षिताः॥ ३०॥ एवमुक्त्वा सुदुःखार्त्तो निशश्वास स
पार्थिवः। विललाप चिरञ्चापि धर्मपुत्रो युधिष्ठिरः॥ ३१॥

इति शल्यपर्वणि गदायुद्धपर्वणि युधिष्ठिरविलापे
एकोनषष्टितमोऽध्यायः॥ ५९॥

---

धृतराष्ट्र उवाच। अधर्मेण हतं दृष्ट्वा राजानं माधवोत्तमः।
किमब्रवीत्तदा सूत बलदेवो महाबलः॥ १॥ गदायुद्धविशेषज्ञो
गदायुद्धविशारदः। कृतवान्रौहिणेयो यत्तन्ममाचक्ष्व सञ्जय॥ २॥
सञ्जय उवाच। ऊर्वोरभिहतं दृष्ट्वा भीमसेनेन ते सुतम्।
रामः प्रहरतां श्रेष्ठश्चुक्रोध बलवद्बली॥ ३॥ ततो मध्ये नरे-
न्द्राणामूर्द्ध्वबाहुर्हलायुधः। कुर्व्वन्नार्त्तस्वरं घोरं धिग्धिग्भीमेत्यु-
वाच ह॥ ४॥ अहो धिग्यदधो नाभेः प्रहृतं धर्मविग्रहे। नैत-
दृष्टं गदायुद्धे कृतवान् यद्वृकोदरः॥ ५॥ अधो नाभ्या न हन्तव्य-
मिति शास्त्रस्य निश्चयः। अयं त्वशास्त्रविन्मूढः स्वच्छन्दात् संप्र-
वर्त्तते॥ ६॥ तस्य तत्तद्ब्रुवाणस्य रोषः समभवन्महान्। ततो
लाङ्गलमुद्यम्य भीममभ्यद्रवद्बली॥ ७॥ तस्योर्द्ध्वबाहोः सदृशं
रूपमासीन्महात्मनः। बहुधातुविचित्रस्य श्वेतस्येव महागिरेः
॥ ८॥ तमुत्पतन्तं जग्राह केशवो विनयानतः। बाहुभ्यां पीन-
वृत्ताभ्यां प्रयत्नाद्बलवद्बली॥ ९॥ सितासितौ यदुवरौ शुशुभाते-
ऽधिकं तदा। नभोगतौ यथा राजंश्चन्द्रसूर्य्यौ दिनक्षये॥ १०॥

उवाच चैनं संरब्धं शमयन्निव केशवः । आत्मवृद्धिर्मित्रवृद्धिर्मित्र-मित्रोदयस्तथा । विपरीतं द्विषत्स्वेतत् षड्विधा वृद्धिरात्मनः ॥ ११ ॥ आत्मन्यपि च मित्रेषु विपरीतं यदा भवेत् । तदा विद्यात्मनो ग्लानिमाशु शान्तिकरो भवेत् ॥ १२ ॥ अस्माकं सहजं मित्रं पाण्डवाः शुद्धपौरुषाः । स्वकाः पितृष्वसुः पुत्रास्ते परैर्निकृता भृशम् ॥ १३ ॥ प्रतिज्ञापालनं धर्मः क्षत्रियस्येति वेत्थ च । सुयो-धनस्य गदया भङ्क्तास्मूरू महाहवे । इति पूर्वं प्रतिज्ञातं भीमेन हि सभातले ॥ १४ ॥ मैत्रेयेणाभिशप्तश्च पूर्वमेव महर्षिणा । ऊरू भेत्स्यति ते भीमो गदयेति परन्तप ॥ १५ ॥ अतो दोषं न पश्यामि मा क्रुधस्त्वं प्रलम्बहन् । यौनैस्तैः सुखहार्दैश्च सम्बन्धः सह पाण्डवैः ॥ १६ ॥ तेषां वृद्ध्या हि नो वृद्धिर्मा क्रुधः पुरुष-र्षभ । वासुदेववचः श्रुत्वा सीरभृत् प्राह धर्मवित् ॥ १७ ॥ धर्मः सुचरितः सद्भिः स च द्वाभ्यां नियच्छति । अर्थश्चात्यर्थलुब्धस्य कामश्चातिप्रसङ्गिनः ॥ १८ ॥ धर्मार्थौ धर्मकामौ च कामार्थौ चाप्य-पीड़यन् । धर्मार्थकामान् योऽभ्येति सोऽत्यन्तं सुखमश्नुते ॥१९॥ तदिदं व्याकुलं सर्वं कृतं धर्मस्य पीड़नात् । भीमसेनेन गोविन्द कामं त्वन्तु यथात्थ माम् ॥ २० ॥

कृष्ण उवाच । अरोषणो हि धर्मात्मा सततं धर्मवत्सलः । भवान् प्रख्यायते लोके तस्मात् संशाम्य मा क्रुधः ॥ २१ ॥ प्राप्तं कलियुगं विद्धि प्रतिज्ञां पाण्डवस्य च । आनृण्यं यातु वैरस्य प्रतिज्ञायाश्च पाण्डवः ॥ २२ ॥

सञ्जय उवाच । धर्मच्छलमपि श्रुत्वा केशवात् स विशाम्पते । नैव प्रीतमना रामो वचनं प्राह संसदि ॥ २३ ॥ हत्वाधर्मेण राजानं धर्मात्मानं सुयोधनम् । जिह्मयोधीति लोकेऽस्मिन् ख्यातं यास्यति पाण्डवः ॥ २४ ॥ दुर्य्योधनोऽपि धर्मात्मा गतिं यास्यति शाश्वतीम् । ऋजुयोधी हतो राजा धार्त्तराष्ट्रो नराधिपः ॥ २५ ॥

युद्धदीक्षां प्रविश्याजौ रणयज्ञं वितत्य च । हुत्वात्मानममित्राग्नौ प्राप चावभृथं यशः ॥ २६ ॥ इत्युक्त्वा रथमास्थाय रौहिणेयः प्रतापवान् । श्वेताभ्रशिखराकारः प्रययौ द्वारकां प्रति ॥ २७ ॥ पाञ्चालास्तु सवार्ष्णेयाः पाण्डवाश्च विशाम्पते । रामे द्वारवतीं याते नातिप्रमनसोऽभवन् ॥ २८ ॥ ततो युधिष्ठिरं दीनं चिन्तापरमधोमुखम् । शोकोपहतसङ्कल्पं वासुदेवोऽब्रवीदिदम् ॥ २९ ॥

वासुदेव उवाच । धर्मराज किमर्थं त्वमधर्ममनुमन्यसे । हतबन्धोर्यदेतस्य पतितस्य विचेतसः ॥३०॥ दुर्य्योधनस्य भीमेन मृद्यमानं शिरः पदा । उपप्रेक्षसि कस्मात्त्वं धर्मज्ञः सन्नराधिप ॥३१॥

युधिष्ठिर उवाच । न ममैतत् प्रियं कृष्ण यद्राजानं वृकोदरः । पदा मूर्द्ध्न्यस्पृशत् क्रोधात् न च हृष्ये कुलक्षये ॥ ३२ ॥ निकृत्या निकृता नित्यं धृतराष्ट्रसुतैर्वयम् । बहूनि परुषाण्युक्त्वा वनं प्रस्थापिता स्म ह ॥ ३३ ॥ भीमसेनस्य तद्दुःखमतीव हृदि वर्त्तते । इति सञ्चिन्त्य वार्ष्णेय मयैतत् समुपेक्षितम् ॥ ३४ ॥ तस्माद्धत्वा कृतप्रज्ञं लुब्धं कामवशानुगम् । लभतां पाण्डवः कामं धर्मेऽधर्मेऽपि वा कृते ॥ ३५ ॥

सञ्जय उवाच । इत्युक्ते धर्मराजेन वासुदेवोऽब्रवीदिदम् । काममस्त्वेतदिति वै कृच्छ्राद्यदुकुलोद्वहः ॥ ३६ ॥ इत्युक्तो वासुदेवेन भीमप्रियहितैषिणा । अन्वमोदत तत् सर्वं यद्भीमेन कृतं युधि ॥ ३७ ॥ भीमसेनोऽपि हत्वाजौ तव पुत्रममर्षणः । अभिवाद्याग्रतः स्थित्वा संहृष्टः स कृताञ्जलिः ॥ ३८ ॥ प्रोवाच सुमहातेजा धर्मराजं युधिष्ठिरम् । हर्षादुत्फुल्लनयनो जितकाशी विशाम्पते ॥ ३९ ॥ तवाद्य पृथिवी राजन् क्षेमा निहतकण्टका । तां प्रशाधि महाराज स्वधर्ममनुपालय ॥ ४० ॥ यस्तु कर्त्तास्य वैरस्य निकृत्या निकृतिप्रियः । सोऽयं वै निहतः शेते पृथिव्यां पृथिवीपते ॥ ४१ ॥ दुःशासनप्रभृतयः सर्व्वे ते चोग्रवादिनः । राधेयः

शकुनिश्चापि निहतास्तव शत्रवः ॥ ४२ ॥ सेयं रत्नसमाकीर्णा मही सवनपर्वता । उपावृत्ता महाराज त्वामद्य निहतद्विषम् ॥ ४३ ॥

युधिष्ठिर उवाच । गतो वैरस्य निधनं हतो राजा सुयोधनः । कृष्णस्य मतमास्थाय विजितेयं वसुन्धरा ॥ ४४ ॥ दिष्ट्या गतस्त्वमानृण्यं मातुः कोपस्य चोभयोः । दिष्ट्या जयसि दुर्द्धर्ष दिष्ट्या शत्रुर्निपातितः ॥ ४५ ॥

इति शल्यपर्वणि गदायुद्धपर्वणि बलदेवसान्त्वनायां
षष्टितमोऽध्यायः ॥ ६० ॥

---

धृतराष्ट्र उवाच । हतं दुर्य्योधनं दृष्ट्वा भीमसेनेन संयुगे । पाण्डवाः सृञ्जयाश्चैव किमकुर्वत सञ्जय ॥ १ ॥

सञ्जय उवाच । हतं दुर्य्योधनं दृष्ट्वा भीमसेनेन संयुगे । सिंहेनेव महाराज मत्तं वनगजं यथा ॥ २ ॥ प्रहृष्टमनसस्तत्र कृष्णेन सह पाण्डवाः । पाञ्चालाः सृञ्जयाश्चैव निहते कुरुनन्दने ॥ ३ ॥ आविध्यन्नुत्तरीयाणि सिंहनादांश्च नेदिरे । नैतान् हर्षसमाविष्टानियं सेहे वसुन्धरा ॥ ४ ॥ धनूंष्यन्ये व्याक्षिपन्त ज्याश्चाप्यन्ये तथाक्षिपन् । दध्मुरन्ये महाशङ्खानन्ये जघ्नुश्च दुन्दुभीः ॥५॥ चिक्रीडुश्च तथैवान्ये जहसुश्च तवाहिताः । अब्रुवंश्चासकृद्वीरा भीमसेनमिदं वचः ॥ ६ ॥ दुष्करं भवता कर्म रणेऽद्य सुमहत् कृतम् । कौरवेन्द्रं रणे हत्वा गदयातिकृतश्रमम् ॥ ७ ॥ इन्द्रेणेव हि वृत्रस्य वधं परमसंयुगे । त्वया कृतममन्यन्त शत्रोर्वधमिमं जनाः ॥ ८ ॥ चरन्तं विविधान्मार्गान् मण्डलानि च सर्वशः । दुर्य्योधनमिमं शूरं कोऽन्यो हन्याद्वृकोदरात् ॥ ९ ॥ वैरस्य च गतः पारं त्वमिहान्यैः सुदुर्गमम् । अशक्यमेतदन्येन सम्पादयितुमीदृशम् ॥ १० ॥ कुञ्जरेणेव मत्तेन वीर संग्राममूर्द्धनि । दुर्य्यों

शनशिरो दिष्ट्या पादेन मृदितं त्वया ॥ ११ ॥ सिंहेन महिषस्येव
कृत्वा सङ्गरमद्भुतम्। दुःशासनस्य रुधिरं दिष्ट्या पीतं त्वयानघ
॥ १२ ॥ ये विप्रचक्रू राजानं धर्मात्मानं युधिष्ठिरम्। मूर्द्ध्नि
तेषां कृतः पादो दिष्ट्या ते स्वेन कर्म्मणा ॥ १३ ॥ अमित्राणा-
मधिष्ठानाद्वधाद्दुर्य्योधनस्य च। भीम दिष्ट्या पृथिव्यान्ते प्रथितं
सुमहद्यशः ॥ १४ ॥ एवं नूनं हते वृत्रे शक्रं नन्दन्ति वन्दिनः।
यथा त्वां निहतामित्रं वयं नन्दाम भारत ॥ १५ ॥ दुर्य्योधनवधे
यानि रोमाणि हृषितानि नः। अद्यापि न विहृष्यन्ति तानि
तद्विद्धि भारत। इत्यब्रुवन् भीमसेनं वार्त्तिकास्तत्र सङ्गताः ॥१६॥
तान् हृष्टान् पुरुषव्याघ्रान् पाञ्चालान् पाण्डवैः सह। ब्रुवतो-
ऽसदृशं तत्र प्रोवाच मधुसूदनः ॥ १७ ॥ न न्याय्यं निहतं शत्रुं
भूयो हन्तुं नराधिपाः। असकृद्वाग्भिरुग्राभिर्निहतो ह्येष मन्दधीः
॥ १८ ॥ तदैवैष हतः पापो यदैव निरपत्रपः। लुब्धः पाप-
सहायश्च सुहृदां शासनातिगः ॥ १९ ॥ बहुशो विदुरद्रोणकृप-
गाङ्गेयसृञ्जयैः। पाण्डुभ्यः प्रार्थ्यमानोऽपि पित्र्यमंशं न दत्तवान्
॥ २० ॥ नैष योग्योऽद्य मित्रं वा शत्रुर्वा पुरुषाधमः। किमने-
नातितुन्नेन वाग्भिः काष्ठसधर्म्मणा ॥ २१ ॥ रथेष्वारोहत क्षिप्रं
गच्छामो वसुधाधिपाः। दिष्ट्या हतोऽयं पापात्मा सामात्यज्ञाति-
बान्धवः ॥ २२ ॥ इति श्रुत्वा त्वधिक्षेपं कृष्णाद्दुर्य्योधनो नृपः।
अमर्षवशमापन्न उदतिष्ठद्विशाम्पते ॥ २३ ॥ स्फिग्देशेनोपविष्टः स
दोर्भ्यां विष्टभ्य मेदिनीम्। दृष्टिं भ्रुसङ्कटीं कृत्वा वासुदेवे न्यपा-
तयत् ॥२४॥ अर्द्धोन्नतशरीरस्य रूपमासीन्नृपस्य तु। क्रुद्धस्याशी-
विषस्येव छिन्नपुच्छस्य भारत ॥ २५ ॥ प्राणान्तकरणीं घोरां
वेदनामप्यचिन्तयन्। दुर्य्योधनो वासुदेवं वाग्भिरुग्राभिरार्द्दयत्
॥ २६ ॥ कंसदासस्य दायाद न ते लज्जास्त्यनेन वै। अधर्म्मेण
गदायुद्धे यदहं विनिपातितः। ऊरू भिन्धीति भीमस्य स्मृतिं

मिथ्याप्रयच्छता॥ २७॥ किन्न विज्ञातमेतन्मे यदर्जुनमवोधिथाः ॥ २८॥ घातयित्वा महीपालानृजुयुद्धान् सहस्रशः। जिह्मै-रुपायैर्बहुभिर्न ते लज्जा न ते घृणा॥ २९॥ अहन्यहनि शूराणां कुर्वाणः कदनं महत्। शिखण्डिनं पुरस्कृत्य घातितस्ते पितामहः ॥ ३०॥ अश्वत्थाम्नः सनामानं हत्वा नागं सुदुर्मते। आचार्य्यो न्याशित शस्त्रं तत् किं न विदितं मम॥ ३१॥ स चानेन नृशंसेन धृष्टद्युम्नेन वीर्य्यवान्। पात्यमानस्त्वया दृष्टो न चैनं त्वमवारयः ॥ ३२॥ बधार्थं पाण्डुपुत्रस्य याचितां शक्तिमेव च। घटोत्कचे व्यंसयतः कस्त्वत्तः पापकृत्तमः॥ ३३॥ छिन्नहस्तः प्रायगतस्तथा भूरिश्रवा बली। त्वया निसृष्टेन हतः शैनेयेन महात्मना॥ ३४॥ कुर्वाणश्चोत्तमं कर्म कर्णः पार्थजिगीषया। व्यंसनेनाश्वसेनस्य पन्नगेन्द्रसुतस्य वै॥ ३५॥ पुनश्च पतिते चक्रे व्यसनार्त्तः परा-जितः। पातितः समरे कर्णश्चक्रव्यग्रोऽग्रणीर्नृणाम्॥ ३६॥ यदि मां चापि कर्णञ्च भीष्मद्रोणौ च संयुगे। ऋजुना प्रतियुध्येथा न ते स्याद्विजयो ध्रुवम्॥ ३७॥ त्वया पुनरनार्य्येण जिह्ममार्गेण पार्थिवाः। स्वधर्ममनुतिष्ठन्तो वयञ्चान्ये च घातिताः॥ ३८॥

वासुदेव उवाच। हतस्त्वमसि गान्धारे सभ्रातृसुतबान्धवः। सगणः ससुहृच्चैव पापमार्गमनुष्ठितः॥ ३९॥ तवैव दुष्कृतैर्वीरौ भीष्मद्रोणौ निपातितौ। कर्णश्च निहत सङ्ख्ये तव शीलानुवर्त्तकः ॥ ४०॥ याच्यमानो मया मूढ़ पित्र्यमंशं न दित्ससि। पाण्डवेभ्यः स्वराज्यञ्च लोभाच्छकुनिनिश्चयात्॥ ४१॥ विषं ते भीमसेनाय दत्तं सर्वे च पाण्डवाः। प्रदीपिता जतुगृहे मात्रा सह सुदुर्मते ॥ ४२॥ सभायां याज्ञसेनी च क्लिष्टा द्यूते रजस्वला। तदैव तावद्दुष्टात्मन् वध्यस्त्वं निरपत्रपः॥ ४३॥ अनक्षज्ञञ्च धर्मज्ञं सौब-लेनाक्षवेदिना। निकृत्या यत् पराजैषीस्तस्मादसि हतो रणे ॥ ४४॥ जयद्रथेन पापेन यत् कृष्णा क्लेशिता वने। यातेषु

मृगयाश्चैव तृणविन्दोरथाश्रमम् ॥ ४५ ॥ अभिमन्युश्च यद्बाल एको बहुभिराहवे । त्वद्दोषैर्निहतः पापस्तस्मादसि हतो रणे ॥ ४६ ॥ यान्यकार्य्याणि चास्माकं कृतानीति प्रभाषसे । वैगुण्येन तवात्यर्थं सर्वं हि तदनुष्ठितम् ॥ ४७ ॥ वृहस्पतेरुशनसो नोपदेशः श्रुतस्त्वया । वृद्धा नोपासिताश्चैव हितं वाक्यं न ते श्रुतम् ॥ ४८ ॥ लोभेनातिबलेन त्वं तृष्णया च वशीकृतः । कृतवानस्यकार्य्याणि विपाकस्तेषु भुज्यताम् ॥ ४९ ॥

दुर्य्योधन उवाच । अधीतं विधिवद्दत्तं भूः प्रशास्ता ससागरा । मूर्द्धिस्थितममित्राणां कोऽनुस्वन्ततरो मया ॥ ५० ॥ यदिष्टं क्षत्रबन्धूनां स्वधर्ममनुपश्यताम् । तदिदं निधनं प्राप्तं कोऽनुस्वन्ततरो मया ॥ ५१ ॥ देवार्हा मानुषा भोगाः प्राप्ता असुलभा नृपैः । ऐश्वर्य्यञ्चोत्तमं प्राप्तं कोऽनुस्वन्ततरो मया ॥५२॥ ससुहृत् सानुजश्चैव स्वर्गं गन्ताहमच्युत । यूयं विहतसङ्कल्पाः शोचन्तो वर्त्तयिष्यथ ॥ ५३ ॥

सञ्जय उवाच । अस्य वाक्यस्य निधने कुरुराजस्य धीमतः । अपतत् सुमहद्वर्षं पुष्पाणां पुण्यगन्धिनाम् ॥ ५४ ॥ अवादयन्त गन्धर्वा वादित्रं सुमनोहरम् । जगुश्चाप्सरसो राज्ञो यशः सम्बद्धमेव च ॥ ५५ ॥ सिद्धाश्च मुमुचुर्वाचः साधु साध्विति पार्थिव। ववौ च सुरभिर्वायुः पुण्यगन्धो मृदुः सुखः । व्यराजंश्च दिशः सर्वा नभो वैदूर्य्यसन्निभम् ॥ ५६ ॥ अत्यद्भुतानि ते दृष्ट्वा वासुदेवपुरोगमाः । दुर्य्योधनस्य पूजान्तु दृष्ट्वा व्रीड़ामुपागमन् ॥ ५७ ॥ हतांश्चाधर्मतः श्रुत्वा शोकार्त्ताः शुशुचुर्हि ते । भीष्मं द्रोणं तथा कर्णं भूरिश्रवसमेव च ॥ ५८ ॥ तांस्तु चिन्तापरान् दृष्ट्वा पाण्डवान् दीनचेतसः । प्रोवाचेदं वचः कृष्णो मेघदुन्दुभिनिस्वनः ॥५९॥ नैष शक्योऽतिशीघ्रास्त्रस्ते च सर्वे महारथाः । ऋजुयुद्धेन विक्रान्ता हन्तुं युष्माभिराहवे ॥ ६० ॥ नैष शक्यः कदाचित्तु हन्तुं धर्मेण

पार्थिवः। ते वा भीष्ममुखाः सर्वे महेष्वासा महारथाः ॥ ६१ ॥ मयानेकैरुपायैस्तु मायायोगेन चासकृत्। हतास्ते सर्व एवाजौ भवतां हितमिच्छता ॥ ६२ ॥ यदि नैवं विधं जातु कुर्य्यां जिह्म-महं रणे। कुतो वो विजयो भूयः कुतो राज्यं कुतो धनम् ॥६३॥ ते हि सर्वे महात्मानश्चत्वारोऽतिरथा भुवि। न शक्या धर्मतो हन्तुं लोकपालैरपि स्वयम् ॥ ६४ ॥ तथैवायं गदापाणिर्धार्त्तराष्ट्रो गतक्लमः। न शक्यो धर्मतो हन्तुं कालेनापीह दण्डिना ॥ ६५ ॥ न च वो हृदि कर्त्तव्यं यदयं घातितो रिपुः। मिथ्या वध्यास्तथो-पायैर्बहवः शत्रवोऽधिकाः ॥ ६६ ॥ पूर्वैरनुगतो मार्गो देवैरसुर-घातिभिः। सद्भिश्चानुगतः पन्थाः स सर्वैरनुगम्यते ॥ ५७ ॥ कृत-कृत्याः स्म सायाह्ने निवासे रोचयामहे। साश्वनागरथाः सर्वे विश्रमामो नराधिपाः ॥ ६८ ॥ वासुदेववचः श्रुत्वा तदानीं पाण्डवैः सह। पाञ्चाला भृशसंहृष्टा विनेदुः सिंहसङ्घवत् ॥ ६९ ॥ ततः प्रध्मापयन् शङ्खान् पाञ्चजन्यञ्च माधवः। हृष्टा दुर्य्योधनं दृष्ट्वा निहतं पुरुषर्षभ ॥ ७० ॥

इति शल्यपर्वणि गदायुद्धपर्वणि कृष्णपाण्डवसंवादे
एकषष्ठोऽध्यायः ॥ ६१ ॥

---

सञ्जय उवाच। ततस्ते प्रययुः सर्वे निवासाय महीक्षितः। शङ्खान् प्रध्मापयन्तो वै हृष्टाः परिघबाहवः ॥ १ ॥ पाण्डवान् गच्छतश्चापि शिबिरं नो विशाम्पते। महेष्वासोऽन्वगात् पश्चात् युयुत्सुः सात्यकिस्तथा ॥ २ ॥ धृष्टद्युम्नः शिखण्डी च द्रौपदेयाश्च सर्वशः। सर्वे चान्ये महेष्वासाः प्रययु शिबिराण्युत ॥ ३ ॥ ततस्ते प्राविशन् पार्था हतत्विट्कं हतेश्वरम्। दुर्य्योधनस्य शिबिरं रङ्गवद्विसृते जने ॥ ४ ॥ गतोत्सवं पुरमिव हृतनागमिव ह्रदम्।

स्त्रीवर्षवरभूयिष्ठं वृद्धामात्यैरधिष्ठितम् ॥ ५ ॥ तत्रैतान् पर्य्युपातिष्ठन् दुर्य्योधनपुरःसराः । कृताञ्जलिपुटा राजन् काषायमलिनाम्बराः ॥ ६ ॥ शिविरं समनुप्राप्य कुरुराजस्य पाण्डवाः । अवतेरुर्महाराज रथेभ्यो रथसत्तमाः ॥ ७ ॥ ततो गाण्डीवधन्वानमभ्यभाषत केशवः । स्थितः प्रियहिते नित्यमतीव भरतर्षभ ॥८॥ अवरोपय गाण्डीवमक्षय्यौ च महेषुधी । अथाहमवरोच्यामि पश्चाद्भरतसत्तम ॥ ९ ॥ स्वयञ्चैवावरोह त्वमेतत् श्रेयस्तवानघ । तच्चाकरोत्तथा वीरः पाण्डुपुत्रो धनञ्जयः ॥ १० ॥ अथ पश्चात्ततः कृष्णो रश्मीनुत्सृज्य वाजिनाम् । अवारोहत मेधावी रथाद्गाण्डीवधन्वनः ॥ ११ ॥ तथावतीर्णे भूतानामीश्वरे सुमहात्मनि । कपिरन्तर्दधे दिव्यो ध्वजो गाण्डीवधन्वनः ॥ १२ ॥ स दग्धो द्रोणकर्णाभ्यां दिव्यैरस्त्रैर्महारथः । अनादीप्ताग्निना ह्याशु प्रजज्वाल महीपते ॥१३॥ सोपासङ्गः सरश्मिश्च साश्वः सयुगबन्धुरः । भस्मीभूतोऽपतद्भूमौ रथो गाण्डीवधन्वनः ॥ १४ ॥ तं तथाभस्मभूतन्तु दृष्ट्वा पाण्डुसुताः प्रभो । अभवन् विस्मिता राजन्नर्जुनश्चेदमब्रवीत् ॥ १५ ॥ कृताञ्जलिः सप्रणयं प्रणिपत्याभिवाद्य च । गोविन्द कस्माद्भगवन्रथो दग्धोऽयमग्निना ॥ १६ ॥ किमेतन्महदाश्चर्य्यमभवद्यदुनन्दन । तन्मे ब्रूहि महाबाहो श्रोतव्यं यदि मन्यसे ॥ १७ ॥

वासुदेव उवाच । अस्त्रैर्बहुविधैर्दग्धः पूर्वमेवायमर्जुन । मदधिष्ठितत्वात् समरे न विशीर्णः परन्तप ॥ १८ ॥ इदानीन्तु विशीर्णोऽयं दग्धो ब्रह्मास्त्रतेजसा । मया विमुक्तः कौन्तेय त्वय्यद्य कृतकर्मणि ॥ १९ ॥ ईषदुत्स्मयमानश्च भगवान् केशवोऽरिहा । परिष्वज्य च राजानं युधिष्ठिरमभाषत ॥ २० ॥ दिष्ट्या जयसि कौन्तेय दिष्ट्या ते शत्रवो जिताः । दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः ॥ २१ ॥ त्वञ्चापि कुशली राजन् माद्रीपुत्रौ च

पाण्डवौ। मुक्ता वीरक्षयादस्मात् संग्रामान्निहतद्विषः ॥ २३ ॥
चिप्रमुत्तरकालानि कुरु कार्य्याणि भारत ॥ २३ ॥ उपयातमुप-
प्लव्यं सह गाण्डीवधन्वना। आनीय मधुपर्कं मां यत् पुरा त्वम-
वोचिथाः ॥ २४ ॥ एष भ्राता सखा चैव तव कृष्ण धनञ्जयः।
रक्षितव्यो महाबाहो सर्वास्वापत्स्विति प्रभो ॥ २५ ॥ तव चैवं
ब्रुवाणस्य तथेत्येवाहमब्रुवम्। स सव्यसाची गुप्तस्ते विजयी च
जनेश्वर ॥ २६ ॥ भ्रातृभिः सह राजेन्द्र शूरः सत्यपराक्रमः।
मुक्तो वीरक्षयादस्मात् संग्रामाल्लोमहर्षणात् ॥ २७ ॥ एवमुक्तस्तु
कृष्णेन धर्मराजो युधिष्ठिरः। हृष्टरोमा महाराज प्रत्युवाच
जनार्द्दनम् ॥ २८ ॥

युधिष्ठिर उवाच। प्रमुक्तं द्रोणकर्णाभ्यां ब्रह्मास्त्रमरिमर्द्दन।
कस्त्वदन्य सहेत् साक्षादपि वज्री पुरन्दरः ॥ २९ ॥ भवतस्तु
प्रसादेन संशप्तकगणा जिताः। महारणगतः पार्थो यच्च नासीत्
पराङ्मुखः ॥ ३० ॥ तथैव च महाबाहो पर्य्यायैर्बहुभिर्मया।
कर्मणामनुसन्तानं तेजसश्च गतिं शुभाम् ॥ ३१ ॥ उपप्लव्ये महर्षिर्मे
कृष्णो द्वैपायनोऽब्रवीत्। यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो
जयः ॥ ३२ ॥ इत्येवमुक्ते ते वीराः शिविरं तव भारत। प्रविश्य
प्रत्यपद्यन्त कोषरत्नर्द्धिसञ्चयान् ॥ ३३ ॥ रजतं जातरूपञ्च मणी-
नथ च मौक्तिकान्। भूषणान्यथ मुख्यानि कम्बलान्यजिनानि च
॥ ३४ ॥ दासीदासमसङ्ख्येयं राज्योपकरणानि च। ते प्राप्य धन-
मक्षय्यं त्वदीयं भरतर्षभ। उदक्रोशन्महाभागा नरेन्द्र विजिता-
रयः ॥ ३५ ॥ ते तु वीराः समाश्वस्य वाहनान्यवमुच्य च। अति-
ष्ठन्त मुहुः सर्वे पाण्डवाः सात्यकिस्तथा ॥ ३६ ॥ अथाब्रवीन्महा-
राज वासुदेवो महायशाः। अस्माभिर्मङ्गलार्थाय वस्तव्यं शिवि-
राद्बहिः ॥ ३७ ॥ तथेत्युक्ता हि ते सर्वे पाण्डवाः सात्यकिस्तथा।
वासुदेवेन सहिता मङ्गलार्थं बहिर्ययुः ॥ ३८ ॥ ते समासाद्य

सरितं पुण्यामोघवतीं नृप। न्यवसन्नथ तां रात्रिं पाण्डवा हत-
शत्रवः ॥ ३९ ॥ ततः संप्रेषयामासुर्यादवं नागसाह्वयम्। स च
प्रायाज्जवेनाशु वासुदेवः प्रतापवान्। दारुकं रथमारोप्य येन
राजाम्बिकासुतः ॥ ४० ॥ तमूचुः संप्रयास्यन्तं शैव्यसुग्रीववाहनम्।
प्रत्याश्वासय गान्धारीं हतपुत्रां तपस्विनीम् ॥ ४१ ॥ स प्रायात्
पाण्डवैरुक्तस्तत्पुरं सात्त्वतां वरः। आससाद ततः क्षिप्रं गान्धारीं
निहतात्मजाम् ॥ ४२ ॥

इति शल्यपर्वणि गदायुद्धपर्वणि कृष्णस्य हस्तिनापुरगमने
द्विषष्टोऽध्यायः ॥ ६२ ॥

---

जनमेजय उवाच। किमर्थं राजशार्दूल धर्मराजो युधिष्ठिरः।
गान्धार्य्याः प्रेषयामास वासुदेवं परन्तपम् ॥ १ ॥ यदा पूर्वं गतः
कृष्णः शमार्थं कौरवान् प्रति। न च तं लब्धवान् कामं ततो युद्ध-
मभूदिदम् ॥ २ ॥ निहतेषु च योधेषु हते दुर्य्योधने तदा।
पृथिव्यां पाण्डवेयस्य निःसपत्ने कृते युधि ॥ ३ ॥ विद्रुते शिविरे
शून्ये प्राप्ते यशसि चोत्तमे। किन्नु तत् कारणं ब्रह्मन् येन कृष्णो
गतः पुनः ॥ ४ ॥ न चैतत् कारणं ब्रह्मन्नल्पं वै प्रतिभाति मे।
यत्रागमदमेयात्मा स्वयमेव जनार्द्दनः ॥ ५ ॥ तत्त्वतो वै समाचक्ष्व
सर्वमध्वर्य्युसत्तम। यच्चात्र कारणं ब्रह्मन् कार्य्यस्यास्य विनिश्चये ॥६
वैशम्पायन उवाच। त्वदुक्तोऽयमनुप्रश्नो यन्मां पृच्छसि
पार्थिव। तत्तेऽहं संप्रवक्ष्यामि यथावद्भरतर्षभ ॥ ७ ॥ हतं दुर्य्यो-
धनं दृष्ट्वा भीमसेनेन संयुगे। व्युत्क्रम्य समयं राजन् धार्त्तराष्ट्रं
महाबलम् ॥ ८ ॥ अन्यायेन हतं दृष्ट्वा गदायुद्धेन भारत। युधि-
ष्ठिरं महाराज महद्भयमथाविशत् ॥ ९ ॥ चिन्तयानं महाभागां
गान्धारीं तपसान्विताम्। घोरेण तपसा युक्ता त्रैलोक्यमपि सा

दहेत् ॥१०॥ तस्य चिन्तयमानस्य बुद्धिः समभवत्तदा। गान्धार्य्याः क्रोधदीप्तायाः पूर्वं प्रशमनं भवेत् ॥ ११ ॥ सा हि पुत्रवधं श्रुत्वा कृतमस्माभिरीदृशम्। मानसेनाग्निना क्रुद्धा भस्मसान्नः करिष्यति ॥ १२ ॥ कथं दुःखमिदं तीव्रं गान्धारी संप्रशच्यति। श्रुत्वा विनिहतं पुत्रं छलेनाजिह्मयोधिनम् ॥ १३ ॥ एवं विचिन्त्य बहुधा भयशोकसमन्वितः। वासुदेवमिदं वाक्यं धर्मराजोऽभ्यभाषत ॥१४॥ तव प्रसादाद्गोविन्द राज्यं निहतकण्टकम्। अप्राप्यं मनसापीदं प्राप्तमस्माभिरच्युत ॥ १५ ॥ प्रत्यक्षं मे महाबाहो संग्रामे लोमहर्षणे। विमर्द्दः सुमहान् प्राप्तस्त्वया यादवनन्दन ॥ १६ ॥ त्वया देवासुरे युद्धे बधार्थममरद्विषाम्। यथा सह्यं पुरा दत्तं हताश्च विबुधद्विषः ॥ १७ ॥ सह्यं तथा महाबाहो दत्तमस्माकमच्युत। सारथ्येन च वार्ष्णेय भवता हि वृता वयम् ॥ १८ ॥ यदि न त्वं भवेन्नाथः फाल्गुनस्य महारणे। कथं शक्यो रणे जेतुं भवेदेष बलार्णवः ॥ १९ ॥ गदाप्रहारा विपुलाः परिघैश्चापि ताड़नम्। शक्तिभिर्भिन्दिपालैश्च तोमरैः सपरश्वधैः ॥ २० ॥ अस्मत्कृते त्वया कृष्ण वाचः सुपरुषाः श्रुताः। शस्त्राणाञ्च निपाता वै वज्रस्पर्शोपमा रणे ॥ २१ ॥ ते च ते सफला याता हते दुर्य्योधनेऽच्युत। तत् सर्वं न यथा नश्येत् पुनः कृष्ण तथा कुरु ॥ २२ ॥ सन्देहदोलां प्राप्तं नश्चेतः कृष्ण जये सति। गान्धार्य्या हि महाबाहो क्रोधं बुध्यस्व माधव ॥ २३ ॥ सा हि नित्यं महाभागा तपसोग्रेण कर्षिता। पुत्रपौत्रवधं श्रुत्वा ध्रुवं नः संप्रधच्यति। तस्याः प्रसादनं वीर प्राप्तकालं मतं मम ॥ २४ ॥ कश्च तां क्रोधताम्राक्षीं पुत्रव्यसनकर्षिताम्। वीक्षितुं पुरुषः शक्तस्त्वामृते पुरुषोत्तम ॥ २५ ॥ तत्र मे गमनं प्राप्तं रोचते तव माधव। गान्धार्य्याः क्रोधदीप्तायाः प्रशमार्थमरिन्दम। त्वं हि कर्त्ता विकर्त्ता च लोकानां प्रभवाप्ययः ॥ २६ ॥ हेतुकारणसंयुक्तैर्वाक्यैः काल-

समीरितैः । क्षिप्रमेव महाप्राज्ञ गान्धारीं शमयिष्यति ॥ २७ ॥
पितामहश्च भगवान् कृष्णस्तत्र भविष्यति । सर्वथा ते महाबाहो
गान्धार्य्याः क्रोधनाशनम् । कर्त्तव्यं सात्वतां श्रेष्ठ पाण्डवानां
हितार्थिना ॥ २८ ॥ धर्मराजस्य वचनं श्रुत्वा यदुकुलोद्वहः ।
आमन्त्र्य दारुकं प्राह रथः सज्जो विधीयताम् ॥ २९ ॥ केशवस्य
वचः श्रुत्वा त्वरमाणोऽथ दारुकः । न्यवेदयद्रथं सज्जं केशवाय
महात्मने ॥ ३० ॥ तं रथं यादवश्रेष्ठः समारुह्य परन्तपः । जगाम
हास्तिनपुरं त्वरितः केशवो विभुः ॥ ३१ ॥ ततः प्रायान्महाराज
माधवो भगवान्रथी । नागसाह्वयमासाद्य प्रविवेश च वीर्य्यवान्
॥ ३२ ॥ प्रविश्य नगरीं वीरो रथघोषेण नादयन् । विदितो
धृतराष्ट्रस्य सोऽवतीर्य्य रथोत्तमात् । अभ्यगच्छददीनात्मा धृत-
राष्ट्रनिवेशनम् ॥ ३३ ॥ पूर्व्वञ्चाभिगतं तत्र सोऽपश्यदृषिसत्तमम् ।
पादौ प्रपीड्य कृष्णस्य राज्ञश्चापि जनार्द्दनः ॥ ३४ ॥ अभ्यवादय-
दव्यग्रो गान्धारीञ्चापि केशवः । ततस्तु यादवश्रेष्ठो धृतराष्ट्र-
मधोक्षजः ॥ ३५ ॥ पाणिमालम्ब्य राजेन्द्र सुस्वरं प्ररुरोद ह ।
स मुहूर्त्तादिवोत्सृज्य वास्पं शोकसमुद्भवम् ॥ ३६ ॥ प्रक्षाल्य
वारिणा नेत्रे ह्याचम्य च यथाविधि । उवाच प्रश्रितं वाक्यं धृत-
राष्ट्रमरिन्दमः ॥ ३७ ॥ न तेऽस्त्यविदितं किञ्चिद्भूतभव्यस्य भारत ।
कालस्य च यथावृत्तं तत्ते सुविदितं प्रभो ॥ ३८ ॥ यतितं पाण्डवैः
सर्व्वैस्तव चित्तानुरोधिभिः । कथं कुलक्षयो न स्यात्तथा क्षत्रस्य
भारत ॥ ३९ ॥ भ्रातृभिः समयं कृत्वा क्षान्तवान् धर्म्मवत्सलः ।
द्यूतच्छलजितैः शुद्धैर्वनवासोऽभ्युपागतः ॥ ४० ॥ अज्ञातवासचर्य्या
च नानावेशसमावृतैः । अन्ये च बहवः क्लेशास्त्वशक्तैरिव नित्यदा
॥ ४१ ॥ मया च स्वयमागम्य युद्धकाल उपस्थिते । सर्व्वलोकस्य
सान्निध्ये ग्रामांस्त्वं पञ्च याचितः ॥४२॥ त्वया कालोपसृष्टेन लोभतो
नापवर्जिताः । तवापराधान्नृपते सर्व्वं क्षत्रं क्षयं गतम् ॥ ४३ ॥

भीष्मेण सोमदत्तेन वाह्लीकेन कृपेण च। द्रोणेन च सपुत्रेण विदुरेण च धीमता। याचितस्त्वं शमं नित्यं न च तत् कृतवानसि ॥ ४४ ॥ कालोपहतचित्तो हि सर्वो मुह्यति भारत। यथा मूढ़ो भवान् पूर्वमस्मिन्नर्थे समुद्यत ॥ ४५ ॥ किमन्यत् कालयोगाद्धि दिष्टमेव परायणम्। मा च दोषान्महाप्राज्ञ पाण्डवेषु निवेशय ॥ ४६ ॥ अल्पोऽप्यतिक्रमो नास्ति पाण्डवानां महात्मनाम्। धर्मतो न्यायतश्चैव स्नेहतश्च परन्तप ॥ ४७ ॥ एतत् सर्वन्तु विज्ञाय ह्यात्मदोषकृतं फलम्। असूयां पाण्डुपुत्रेषु न भवान् कर्त्तुमर्हति ॥ ४८ ॥ कुलं वंशश्च पिण्डश्च यच्च पुत्रकृतं फलम्। गान्धार्य्यास्तव चैवाथ पाण्डवेषु प्रतिष्ठितम् ॥ ४९ ॥ त्वञ्चैव कुरुशार्दूल गान्धारी च यशस्विनी। मा शुचो नरशार्दूल पाण्डवान् प्रति किल्बिषम् ॥ ५० ॥ एतत् सर्वमनुध्यात्वा आत्मनश्च व्यतिक्रमम्। शिवेन पाण्डवान् ध्याहि नमस्ते भरतर्षभ ॥ ५१ ॥ जानासि च महावाहो धर्मराजस्य या त्वयि। भक्तिर्भरतशार्दूल स्नेहश्चापि स्वभावतः ॥ ५२ ॥ एतच्च कदनं कृत्वा शत्रूणामपकारिणाम्। दह्यते स दिवारात्रौ न च शर्माधिगच्छति ॥ ५३ ॥ त्वाञ्चैव नरशार्दूल गान्धारीञ्च यशस्विनीम्। स शोचन् नरशार्दूलो न शान्तिमधिगच्छति ॥ ५४ ॥ ह्रिया परमयाविष्टो भवन्तं नाधिगच्छति। पुत्रशोकाभिसन्तप्तं बुद्धिव्याकुलितेन्द्रियम् ॥ ५५ ॥ एवमुक्त्वा महाराज धृतराष्ट्रं यदूत्तमः। उवाच परमं वाक्यं गान्धारीं शोककर्षिताम् ॥ ५६ ॥ सौबलेयि निबोध त्वं यत्त्वां वक्ष्यामि सुव्रते। त्वत्समा नास्ति लोकेऽस्मिन्नद्य सीमन्तिनी शुभे ॥ ५७ ॥ जानासि च यथा राज्ञि सभायां मम सन्निधौ। धर्मार्थसहितं वाक्यमुभयोः पक्षयोर्हितम् ॥ ५८ ॥ उक्तवत्यसि कल्याणि न च ते तनयैः कृतम् ॥ ५९ ॥ दुर्य्योधनस्त्वया चोक्तो जयार्थी परुषं वचः। शृणु मूढ़ वचो मह्यं यतो धर्मस्ततो जयः ॥ ६० ॥ तदिदं

समनुप्राप्तं तव वाक्यं नृपात्मजे । एवं विदित्वा कल्याणि मा स्म
शोके मनः कृथाः ॥६१॥ पाण्डवानां विनाशाय मा ते बुद्धिः कदा-
चन । शक्ता चासि महाभागे पृथिवीं सचराचरम् । चक्षुषा क्रोध-
दीप्तेन निर्द्दग्धुं तपसो बलात् ॥ ६२ ॥ वासुदेववचः श्रुत्वा गान्धारी
वाक्यमब्रवीत् । एवमेतन्महाबाहो यथा वदसि केशव ॥ ६३ ॥
आधिभिर्द्दह्यमानाया मतिः सञ्चलिता मम । सा मे व्यवस्थिता श्रुत्वा
तव वाक्यं जनार्द्दन ॥६४॥ राज्ञस्त्वन्धस्य वृद्धस्य हतपुत्रस्य केशव ।
त्वं गतिः सहितैर्व्वीरैः पाण्डवैर्द्विपदांवर ॥ ६५ ॥ एतावदुक्त्वा वचनं
मुखं प्रच्छाद्य वाससा । पुत्रशोकाभिसन्तप्ता गान्धारी प्ररुरोद ह
॥ ६६ ॥ तत एनां महाबाहुः केशवः शोककर्षिताम् । हेतुकारण-
संयुक्तैर्वाक्यैराश्वासयत् प्रभुः ॥ ६७ ॥ समाश्वास्य च गान्धारीं
धृतराष्ट्रञ्च माधवः । द्रौणिसङ्कल्पितं भावमनुबुध्यत केशवः ॥ ६८ ॥
ततस्त्वरित उत्थाय पादौ मूर्द्ध्ना प्रणम्य च । द्वैपायनस्य राजेन्द्र
ततः कौरवमब्रवीत् ॥ ६९ ॥ आपृच्छे त्वां कुरुश्रेष्ठ मा च शोके
मनः कृथाः । द्रौणेः पापोऽस्त्यभिप्रायस्तेनास्मि सहसोत्थितः ॥७०॥
पाण्डवानां वधे रात्रौ बुद्धिस्तेन प्रदर्शिता । एतत् श्रुत्वा तु वचनं
गान्धार्य्या सहितोऽब्रवीत् ॥ ७१ ॥ धृतराष्ट्रो महाबाहुः केशवं
केशिसूदनम् । शीघ्रं गच्छ महाबाहो पाण्डवान् परिपालय ॥७२
भूयस्त्वया समेष्यामि क्षिप्रमेव जनार्द्दन । प्रायात्ततस्तु त्वरितो
दारुकेण सहाच्युतः ॥ ७३ ॥ वासुदेवे गते राजन् धृतराष्ट्रं जने-
श्वरम् । आश्वासयदमेयात्मा व्यासो लोकनमस्कृतः ॥ ७४ ॥ वासु-
देवोऽपि धर्म्मात्मा कृतकृत्यो जगाम ह । शिविरं हास्तिनपुरा-
द्दिदृक्षुः पाण्डवान्नृप ॥ ७५ ॥ आगम्य शिविरं रात्रौ सोऽभ्यगच्छत
पाण्डवान् । तच्च तेभ्यः समाख्याय सहितस्तैः समाहितः ॥ ७६ ॥

इति श्रीशल्यपर्व्वणि गदायुद्धपर्व्वणि धृतराष्ट्रगान्धारीप्रबोधने
त्रिषष्टोऽध्यायः ॥ ६३ ॥

धृतराष्ट्र उवाच। अधिष्ठितः पदा मूर्द्ध्नि भग्नसक्थो महीङ्गतः। शौटीर्य्यमानी पुत्रो मे किमभाषत सञ्जय॥ १॥ अत्यर्थं कोपनो राजा जातवैरश्च पाण्डुषु। व्यसनं परमं प्राप्तः किमाह परमाहवे॥ २॥

सञ्जय उवाच। शृणु राजन् प्रवक्ष्यामि यथावृत्तं नराधिप। राज्ञा यदुक्तं भग्नेन तस्मिन् व्यसन आगते॥ ३॥ भग्नसक्थो नृपो राजन् पांशुना सोऽवगुण्ठितः। यमयन् मूर्द्धजांस्तत्र वीक्ष्य चैव दिशो दश॥ ४॥ केशान्नियम्य यत्नेन निश्वसन्नुरगो यथा। संरम्भाश्रुपरीताभ्यां नेत्राभ्यामभिवीक्ष्य माम्। बाहू धरण्यां निष्पिष्य मुहुर्मत्त इव द्विपः॥ ५॥ प्रकीर्णान् मूर्द्धजान् धुन्वदन्तैर्दन्तानुपस्पृशन्। गर्हयन् पाण्डवं ज्येष्ठं निश्वस्येदमथाब्रवीत्॥६॥ भीष्मे शान्तनवे नाथे कर्णे चास्त्रभृताम्वरे। गौतमे शकुनौ चापि द्रोणे चास्त्रभृताम्वरे॥ ७॥ अश्वत्थाम्नि तथा शल्ये शूरे च कृतवर्म्मणि। इमामवस्थां प्राप्तोऽस्मि कालो वै दुरतिक्रमः॥ ८॥ एकादशचमूभर्त्ता सोऽहमेतां दशाङ्गतः। कालं प्राप्य महाबाहो न कश्चिदतिवर्त्तते॥ ९॥ आख्यातव्यं मदीयानां येऽस्मिन् जीवन्ति संयुगे। यथाहं भीमसेनेन व्युत्क्रम्य समयं हतः॥ १०॥ बहूनि सुनृशंसानि कृतानि खलु पाण्डवैः। भूरिश्रवसि कर्णे च भीष्मे द्रोणे च श्रीमति॥ ११॥ इदञ्चाकीर्त्तिजं कर्म नृशंसैः पाण्डवैः कृतम्। येन ते सत्सु निर्वेदं गमिष्यन्ति हि मे मतिः॥ १२॥ का प्रीतिः सत्त्वयुक्तस्य कृत्वोपाधिकृतं जयम्। को वा समयभेत्तारं बुधः सम्मन्तुमर्हति॥ १३॥ अधर्म्मेण जयं लब्ध्वा कोनु हृष्येत पण्डितः। यथा संहृष्यते पापः पाण्डुपुत्रो वृकोदरः॥१४॥ किन्नु चित्रमतस्त्वद्य भग्नसक्थस्य यन्मम। क्रुद्धेन भीमसेनेन पादेन मृदितं शिरः॥ १५॥ प्रतपन्तं श्रिया जुष्टं वर्त्तमानञ्च बन्धुषु। एवं कुर्य्यान्नरो यो हि स वै सञ्जय पूजितः॥ १६॥

अभिज्ञौ युद्धधर्म्मस्य मम माता पिता च मे। तौ हि सञ्जय दुःखार्त्तौ विज्ञाप्यौ वचनान्मम ॥ १७ ॥ इष्टं भृत्या भृताः सम्यग्-भूः प्रशास्ता ससागरा। मूर्द्धि स्थितममित्राणां जीवतामेव सञ्जय ॥ १८ ॥ दत्ता दाया यथाशक्ति मित्राणाञ्च प्रियं कृतम्। अमित्रा वाधिताः सर्व्वे कोऽनु स्वन्ततरो मया ॥ १९ ॥ यातानि पर राष्ट्राणि नृपा भुक्ताश्च दासवत्। प्रियेभ्यः प्रकृतं साधु कोऽनु स्वन्ततरो मया ॥ २० ॥ मानिता बान्धवाः सर्व्वे वश्यः सम्पूजितो जनः। त्रितयं सेवितं सर्व्वं कोऽनु स्वन्ततरो मया ॥ २१ ॥ आज्ञप्तं नृप-मुख्येषु मानः प्राप्तः सुदुर्लभ। आजानेयैस्तथा यातं कोऽनु स्वन्ततरो मया ॥ २२ ॥ अधीतं विधिवद्दत्तं प्राप्तमायुर्निरामयम्। स्वधर्म्मेण जिता लोकाः कोऽनु स्वन्ततरो मया ॥ २३ ॥ दिष्ट्या नाहं जितः सङ्ख्ये परान् प्रेष्यवदाश्रितः। दिष्ट्या मे विपुला लक्ष्मीर्मृते त्वन्यं गता विभो ॥ २४ ॥ यदिष्टं क्षत्रबन्धूनां स्वधर्म-मनुतिष्ठताम्। निधनं तन्मया प्राप्तं कोऽनु स्वन्ततरो मया ॥ २५ ॥ दिष्ट्या नाहं परावृत्तो वैरात् प्राकृतवर्ज्जितः। दिष्ट्या नाविमतिं काञ्चिद्भजित्वा तु पराजितः ॥ २६ ॥ सुप्तं वाथ प्रमत्तं वा यथा हन्याद्विषेण वा। एवं व्युत्क्रान्तधर्म्मेण व्युत्क्रम्य समयं हतः ॥ २७ ॥ अश्वत्थामा महाभागः कृतवर्म्मा च सात्त्वतः। कृपः शारद्वतश्चैव वक्तव्या वचनान्मम ॥ २८ ॥ अधर्म्मेण प्रवृत्तानां पाण्ड-वानामनेकशः। विश्वासं समयघ्नानां यूयं न गन्तुमर्हथ ॥ २९ ॥ वातिकांश्चाब्रवीद्राजा पुत्रस्ते सत्यविक्रमः। अधर्म्माद्भीमसेनेन निहतोऽहं यथा रणे ॥ ३० ॥ सोऽहं द्रोणं स्वर्गगतं कर्णशल्या-वुभौ तथा। वृषसेनं महावीर्य्यं शकुनिञ्चापि सौवलम् ॥ ३१ ॥ जलसन्धं महावीर्य्यं भगदत्तञ्च पार्थिवम्। सौमदत्तिं महेष्वासं सैन्धवञ्च जयद्रथम् ॥ ३२ ॥ दुःशासनपुरोगांश्च भ्रातॄनात्मसमां-स्तथा। दौःशासनिञ्च विक्रान्तं लक्ष्मणञ्चात्मजावुभौ ॥ ३३ ॥

एतांश्चान्यांश्च सुबहून् मदीयांश्च सहस्रशः। पृष्ठतोऽनुगमिष्यामि सार्थहीन इवाध्वगः॥ ३४॥ कथं भ्रातॄन् हतान् श्रुत्वा भर्त्तारञ्च स्वसा मम। रोरूयमाणा दुःखार्त्ता दुःशला सा भविष्यति॥३५॥ स्नुषाभिः प्रस्नुषाभिश्च वृद्धो राजा पिता मम। गान्धारीसहितश्चैव कां गतिं प्रतिपत्स्यते॥ ३६॥ नूनं लक्ष्मणमातापि हतपुत्रा हतेश्वरा। विनाशं यास्यति क्षिप्रं कल्याणी पृथुलोचना॥३७॥ यदि जानाति चार्वाकः परिव्राड्वाग्विशारदः। करिष्यति महाभागो ध्रुवं सोऽपचितिं मम॥ ३८॥ समन्तपञ्चके पुण्ये त्रिषु लोकेषु विश्रुते। अहं निधनमासाद्य लोकान् प्राप्स्यामि शाश्वतान्॥ ३९॥ ततो जनसहस्राणि वास्पपूर्णानि मारिष। प्रलापं नृपतेः श्रुत्वा व्यद्रवन्त दिशो दश॥ ४०॥ ससागरवना घोरा पृथिवी सचराचरा। चचालाथ सनिर्ह्रादा दिशश्चैवाविलाभवन्॥ ४१॥ ते द्रोणपुत्रमासाद्य यथावृत्तं न्यवेदयन्। व्यवहारं गदायुद्धे पार्थिवस्य च पातनम्॥ ४२॥ तदाख्याय ततः सर्वे द्रोणपुत्रस्य भारत। ध्यात्वा च सुचिरं कालं जग्मुरार्त्ता यथागतम्॥ ४३॥

इति शल्यपर्वणि गदायुद्धपर्वणि दुर्य्योधनविलापे चतुःषष्टोऽध्यायः॥ ६४॥

---

सञ्जय उवाच। वार्त्तिकानां सकाशात्तु श्रुत्वा दुर्य्योधनं हतम्। हतशिष्टास्ततो राजन् कौरवाणां महारथाः॥ १॥ विनिर्भिन्नाः शितैर्वाणैर्गदातोमरशक्तिभिः। अश्वत्थामा कृपश्चैव कृतवर्म्मा च सात्वतः॥ २॥ त्वरिता जवनैरश्वैरायोधनमुपागमन्। तत्रापश्यन्महात्मानं धार्त्तराष्ट्रं निपातितम्॥ ३॥ प्रभग्नं वायुवेगेन महाशालं यथा वने। भूमौ विचेष्टमानं तं रुधिरेण समुक्षितम्॥४

महागजमिवारण्ये व्याधेन विनिपातितम्। विवर्त्तमानं बहुशो रुधिरौघपरिप्लुतम्॥ ५॥ यदृच्छया निपतितं चक्रमादित्यगोचरम्। महावातसमुत्थेन संशुष्कमिव सागरम्॥ ६॥ पूर्णचन्द्रमिव व्योम्नि तुषारावृतमण्डलम्। रेणुध्वस्तं दीर्घभुजं मातङ्गसमविक्रमम्॥ ७॥ वृतं भूतगणैर्घोरैः क्रव्यादैश्च समन्ततः। यथा धनं लिप्समानैर्भृत्यैर्नृपतिसत्तमम्॥८॥ भ्रुकुटीकृतवक्त्रान्तं क्रोधादुद्वृत्तचक्षुषम्। सामर्षं तं नरव्याघ्रं व्याघ्रं निपतितं यथा॥ ९॥ ते तं दृष्ट्वा महेष्वासा भूतले पतितं नृपम्। मोहमभ्यागमन् सर्व्वे कृपप्रभृतयो रथाः॥ १०॥ अवतीर्य्य रथेभ्यश्च प्राद्रवन्राजसन्निधौ। दुर्य्योधनञ्च संप्रेक्ष्य सर्व्वे भूमावुपाविशन्॥ ११॥ ततो द्रौणिर्महाराज वाष्पपूर्णेक्षणः श्वसन्। उवाच भरतश्रेष्ठं सर्व्वलोकेश्वरेश्वरम्॥ १२॥ न नूनं विद्यते सत्यं मानुषे किञ्चिदेव हि। यत्र त्वं पुरुषव्याघ्र शेषे पांशुषु रूषितः॥ १३॥ भूत्वा हि नृपतिः पूर्व्वं समाज्ञाप्य च मेदिनीम्। कथमेकोऽद्य राजेन्द्र तिष्ठसे निर्जने वने॥ १४॥ दुःशासनं न पश्यामि नापि कर्णं महारथम्। नापि तान् सुहृदः सर्वान् किमिदं पुरुषर्षभ॥ १५॥ दुःखं नूनं कृतान्तस्य गतिं ज्ञातुं कथञ्चन। लोकानाञ्च भवान् यत्र शेते पांशुषु रूषितः॥ १६॥ एष मूर्द्धाभिषिक्तानामग्रे गत्वा परन्तपः। स भृशं ग्रसते पांशुं पश्य कालविपर्य्ययम्॥ १७॥ क्व ते तदमलं छत्रं व्यजनं क्व च पार्थिव। सा च ते महती सेना क्व गता पार्थिवोत्तम॥ १८॥ दुर्विज्ञेया गतिर्नूनं कार्य्याणां कारणान्तरे। यद्वै लोकगुरुर्भूत्वा भवानेतां दशां गतः॥ १९॥ अध्रुवा सर्व्वमर्त्येषु ध्रुवं श्रीरुपलक्ष्यते। भवतो व्यसनं दृष्ट्वा शक्रविस्पर्द्धिनो भृशम्॥ २०॥ तस्य तद्वचनं श्रुत्वा दुःखितस्य विशेषतः। उवाच राजन् पुत्रस्ते प्राप्तकालमिदं वचः॥ २२॥ विमृज्य नेत्रे पाणिभ्यां शोकजं वाष्पमुत्सृजन्। कृपादीन् स तदा वीरान्

सर्वानेव नराधिपः ॥ २२ ॥ ईदृशो मर्त्यधर्मोऽयं धात्रा निर्द्दिष्ट उच्यते। विनाशः सर्वभूतानां कालपर्य्यायमागतः ॥ २३ ॥ सोऽयं मां समनुप्राप्तः प्रत्यक्षं भवतां हि यः। पृथिवीं पालयित्वाहमेतां निष्ठामुपागतः ॥ २४ ॥ दिष्ट्या नाहं परावृत्तो युद्धे कस्याञ्चिदापदि। दिष्ट्याहं निहतः पापैश्छलेनैव विशेषतः ॥ २५ ॥ उत्साहश्च कृतो नित्यं मया दिष्ट्या युयुत्सता। दिष्ट्या चास्मि हतो युद्धे निहतज्ञातिबान्धवः ॥ २६ ॥ दिष्ट्या च वोऽहं पश्यामि मुक्तानस्माज्जनक्षयात्। स्वस्तियुक्तांश्च कल्यांश्च तन्मे प्रियमनुत्तमम् ॥ २७ ॥ मा भवन्तोऽनुतप्यन्तां सौहृदान्निधनेन मे। यदि वेदाः प्रमाणं वो जिता लोका मयाक्षयाः ॥ २८ ॥ मन्यमानः प्रभावञ्च कृष्णस्यामिततेजसः। तेन न च्यावितश्चाहं क्षत्रधर्मात् स्वनुष्ठितात् ॥ २९ ॥ स मया समनुप्राप्तो नास्मि शोच्यः कथञ्चन। कृतं भवद्भिः सदृशमनुरूपमिवात्मनः। यतितं विजये नित्यं दैवन्तु दुरतिक्रमम् ॥ ३० ॥ एतावदुक्त्वा वचनं वाष्पव्याकुललोचनः। तूष्णीं बभूव राजेन्द्र रुजासौ विह्वलो भृशम् ॥ ३१ ॥ तथा तु दृष्ट्वा राजानं वाष्पशोकसमन्वितः। द्रौणिः क्रोधेन जज्वाल यथा वह्निर्जगत्क्षये ॥ ३२ ॥ स तु क्रोधसमाविष्टः पाणौ पाणिं प्रपीड्य ह। वाष्पविह्वलया वाचा राजानमिदमब्रवीत् ॥ ३३ ॥ पिता मे निहतः क्षुद्रैः सुनृशंसेन कर्मणा। न तथा तेन तप्यामि यथा राजंस्त्वयाद्य वै ॥ ३४ ॥ शृणु चेदं वचो मह्यं सत्येन वदतः प्रभो। इष्टापूर्त्तेन दानेन धर्मेण सुकृतेन च ॥ ३५ ॥ अद्याहं सर्वपाञ्चालान् वासुदेवस्य पश्यतः। सर्वोपायैर्हि नेष्यामि प्रेतराजनिवेशनम्। अनुज्ञान्तु महाराज भवान्मे दातुमर्हति ॥३५॥ इति श्रुत्वा तु वचनं द्रोणपुत्रस्य कौरवः। मनसः प्रीतिजननं कृपं वचनमब्रवीत्। आचार्य्य शीघ्रं कलसं जलपूर्णं समानय ॥ ३६ ॥ स तद्वचनमाज्ञाय राज्ञो ब्राह्मणसत्तमः। कलसं पूर्णमादाय

राज्ञोऽन्तिकमुपागमत् ॥ ३७ ॥ तमब्रवीन्महाराज पुत्रस्तव विशा-
म्पते । ममाज्ञया द्विजश्रेष्ठ द्रोणपुत्रोऽभिषिच्यताम् । सैन्या-
पत्येन भद्रन्ते मम चेदिच्छसि प्रियम् ॥ ३८ ॥ राज्ञो नियोगा-
द्योद्धव्यं ब्राह्मणेन विशेषतः । वर्त्तता क्षत्रधर्मेण ह्येवं धर्म्मविदो
विदुः ॥ ३९ ॥ राज्ञस्तु वचनं श्रुत्वा कृपः शारद्वतस्ततः । द्रौणिं
राज्ञो नियोगेन सैनापत्येऽभ्यषिचयत् ॥ ४० ॥ सोऽभिषिक्तो महा-
राज परिष्वज्य नृपोत्तमम् । प्रययौ सिंहनादेन दिशः सर्वा
निनादयन् ॥ ४१ ॥ दुर्य्योधनोऽपि राजेन्द्र शोणितौघपरिप्लुतः ।
तां निशां प्रतिपेदेऽथ सर्वभूतभयावहाम् ॥४२॥ अपक्रम्य तु ते तूर्णं
तस्मादायोधनान्नृप । शोकसंविग्नमनसश्चिन्ताध्यानपराभवन् ॥४३॥

इति शल्यपर्वणि गदायुद्धपर्वणि अश्वत्थामसैनापत्याभिषेके
पञ्चषष्टोऽध्यायः ॥ ६५ ॥

---

समाप्तं गदायुद्धपर्व । समाप्तञ्च शल्यपर्व ।

---

# MAHABHARATAM

## CALYA PARVA

TEXT

PUBLISHED AND DISTRIBUTED GRATIS

BY

PRATAP CHANDRA ROY, C. I. E.

# श्रीमहाभारतम्।

श्रीमन्महर्षिवेदव्यासविरचितम्।

शल्यपर्व्व।

सि, आइ, इ, उपाधिधारिणा

रायश्रीप्रतापचन्द्रेण

प्रकाशितम्

मूल्यं विना वितीर्णञ्च।

"स्वतपादादिरूपम्मा यूय किमवबोदथ"

---

तृतीयसंस्करणम्।


कलिकाता बीडन् ष्ट्रीटान्तर्गत

१ नं राजा गुरुदास ष्ट्रीट् भारतयन्त्रे

श्रीकालिदास सेनेन मुद्रितम्।

शकाब्दाः १८११।


Title page of pt. 1

Sakabda

Saka 1811 = A.D. 1889
era

# श्रीमहाभारतम्।

सौप्तिकपर्व्व।



नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥

सञ्जय उवाच। ततस्ते सहिता वीरा प्रयाता दक्षिणामुखा। उपास्तमनवेलायां शिविराभ्याशमागताः॥ १॥ विमुच्य वाहांस्त्वरिता भीता समभवस्तदा। गहनं देशमासाद्य प्रच्छन्ना न्यविशन्त ते॥ २॥ सेनानिवेशमभितो नातिदूरमवस्थिताः। निकृत्ता निशितैः शस्त्रैः समन्तात् क्षतविक्षताः। दीर्घमुष्णञ्च निश्वस्य पाण्डवानन्वचिन्तयन्॥ ३॥ श्रुत्वा च निनदं घोरं पाण्डवानां जयैषिणाम्। अनुसारभयाद्भीताः प्राङ्मुखाः प्राद्रवन् पुनः॥ ४॥ ते मुहूर्त्तं ततो गत्वा श्रान्तवाहाः पिपासिताः। नामृष्यन्त महेष्वासाः क्रोधामर्षवशङ्गताः। राज्ञो वधेन सन्तप्ता मुहूर्त्तं समवस्थिताः॥ ५॥

धृतराष्ट्र उवाच। अश्रद्धेयमिदं कर्म्म कृतं भीमेन सञ्जय। यत् स नागायुतप्राणः पुत्रो मम निपातितः॥ ६॥ अवध्यः सर्व्वभूतानां वज्रसंहननो युवा। पाण्डवैः समरे पुत्रो निहतो मम सञ्जय॥ ७॥ न दिष्टमभ्यतिक्रान्तुं शक्यं गावल्गणे नरैः। यत् समेत्य रणे पार्थैः पुत्रो मम निपातितः॥ ८॥ अद्रिसारमयं नूनं हृदयं मम सञ्जय। हतं पुत्रशतं श्रुत्वा यन्न दीर्णं सहस्रधा॥९॥

कथं हि वृद्धमिथुनं हतपुत्रं भविष्यति । न ह्यहं पाण्डवेयस्य विषये वस्तुमुत्सहे ॥ १० ॥ कथं राज्ञः पिता भूत्वा स्वयं राजा च सञ्जय । प्रेष्यभूतः प्रवर्त्तेयं पाण्डवेयस्य शासनात् ॥ ११ ॥ आज्ञाप्य पृथिवीं सर्वां स्थित्वा मूर्द्धनि सञ्जय । कथमद्य भविष्यामि प्रेष्यभूतो दुरन्तकृत् ॥ १२ ॥ कथं भीमस्य वाक्यानि श्रोतुं शक्ष्यामि सञ्जय । येन पुत्रशतं पूर्णमेकेन निहतं मम ॥ १३ ॥ कृतं सत्यं वचस्तस्य विदुरस्य महात्मनः । अकुर्वता वचस्तेन मम पुत्रेण सञ्जय ॥ अधर्मेण हते तात पुत्रे दुर्य्योधने मम । कृतवर्मा कृपो द्रौणिः किमकुर्वत सञ्जय ॥ १५ ॥

सञ्जय उवाच । गत्वा तु तावका राजन्नातिदूरमवस्थिताः । अपश्यन्त वनं घोरं नानाद्रुमलतावृतम् ॥ १६ ॥ ते मुहूर्त्तन्तु विश्रम्य लब्धतोयैर्हयोत्तमैः । सूर्य्यास्तमनवेलायां समासेदुर्महद्वनम् ॥ १७ ॥ नानामृगगणैर्जुष्टं नानापक्षिगणावृतम् । नानाद्रुमलताच्छन्नं नानाव्यालनिषेवितम् ॥ १८ ॥ नानातोयैः समाकीर्णं नानापुष्पोपशोभितम् । पद्मिनीशतसंछन्नं नीलोत्पलसमायुतम् ॥ १९ ॥ प्रविश्य तद्वनं घोरं वीक्षमाणाः समन्ततः । शाखासहस्रसंछन्नं न्यग्रोधं ददृशुस्ततः ॥ २० ॥ उपेत्य तु तदा राजन् न्यग्रोधं ते महारथाः । ददृशुर्द्विपदां श्रेष्ठा श्रेष्ठं तं वै वनस्पतिम् ॥ २१ ॥ तेऽवतीर्य्य रथेभ्यश्च विप्रमुच्य च वाजिनः । उपस्पृश्य यथान्यायं सन्ध्यामन्वासत प्रभो ॥ २२ ॥ ततोऽस्तं पर्वतश्रेष्ठमनुप्राप्ते दिवाकरे । सर्वस्य जगतो धात्री शर्वरी समपद्यत ॥ २३ ॥ ग्रहनक्षत्रताराभिः प्रकीर्णाभिरलङ्कृतम् । नभोंऽशुकमिवाभाति प्रेक्षणीयं समन्ततः ॥ २४ ॥ इच्छया ते प्रवल्गन्ति ये सत्त्वा रात्रिचारिणः । दिवाचराश्च ये सत्त्वास्ते निद्रावशमागताः ॥ २५ ॥ रात्रिञ्चराणां सत्त्वानां निर्घोषोऽभूत् सुदारुणः । क्रव्यादाश्च प्रमुदिता घोराः प्राप्ता च शर्वरी ॥ २६ ॥ तस्मिन्रात्रिमुखे

घोरे दुःखशोकसमन्विताः। कृतवर्म्मा कृपो द्रौणिरुपोपविविशुः समम् ॥ २७ ॥ तत्रोपविष्टाः शोचन्तो न्यग्रोधस्य समीपतः। तमेवार्थमतिक्रान्तं कुरुपाण्डवयोः क्षयम् ॥ २८ ॥ निद्रया च परीताङ्गा निषेदुर्धरणीतले। श्रमेण सुदृढ़ं युक्ता विक्षता विविधैः शरैः ॥ २९ ॥ ततो निद्रावशं प्राप्तौ कृपभोजौ महारथौ। सुखोचितावदुःखार्हौ निषण्णौ धरणीतले ॥ ३० ॥ तौ तु सुप्तौ महाराज श्रमशोकसमन्वितौ। महार्हशयनोपेतौ भूमावेव ह्यनाथवत् ॥ ३१ ॥ क्रोधामर्षवशं प्राप्तो द्रोणपुत्रस्तु भारत। नैव स्म स जगामाथ निद्रां सर्प इव श्वसन् ॥ ३२ ॥ न लेभे स तु निद्रां वै दह्यमानो हि मन्युना। वीक्षाञ्चक्रे महाबाहुस्तद्वनं घोरदर्शनम् ॥ ३३ ॥ वीक्षमाणो वनोद्देशं नानासत्त्वैर्निषेवितम्। अपश्यत महाबाहुर्न्यग्रोधं वायसैर्वृतम् ॥ ३४ ॥ तत्र काकसहस्राणि तां निशां पर्य्यनाययन्। सुखं स्वपन्ति कौरव्य पृथक् पृथगपाश्रयाः ॥ ३५ ॥ सुप्तेषु तेषु काकेषु विस्रब्धेषु समन्ततः। सोऽपश्यत् सहसायान्तमुलूकं घोरदर्शनम् ॥ ३६ ॥ महास्वनं महाकायं हर्य्यक्षं बभ्रुपिङ्गलम्। सुदीर्घघोणानखरं सुपर्णमिव वेगितम् ॥ ३७ ॥ सोऽथ शब्दं मृदुं कृत्वा लीयमान इवाण्डजः। न्यग्रोधस्य ततः शाखां प्रार्थयामास भारत ॥ ३८ ॥ सन्निपत्य तु शाखायां न्यग्रोधस्य विहङ्गमः। सुप्तान् जघान सुबहून् वायसान् वायसान्तकः ॥ ३९ ॥ केषाञ्चिदच्छिनत् पक्षान् शिरांसि च चकर्त्त ह। चरणांश्चैव केषाञ्चिदभनक् चरणायुधः। क्षणेनाहन्य बलवान् येऽस्य दृष्टिपथे स्थिता ॥ ४० ॥ तेषां शरीरावयवैः शरीरैश्च विशाम्पते। न्यग्रोधमण्डलं सर्व्वं सञ्छन्नं सर्व्वतोऽभवत् ॥ ४१ ॥ तांस्तु हत्वा ततः काकान् कौशिको मुदितोऽभवत्। प्रतिकृत्य यथाकामं शत्रूणां शत्रुसूदनः ॥ ४२ ॥ तद्दृष्ट्वा सोपधं कर्म कौशिकेन कृतं निशि। तद्भावे कृतसङ्कल्पो द्रौणिरेकोऽन्वचिन्तयत् ॥४३॥

उपदेशः कृतोऽनेन पक्षिणा मम संयुगे। शत्रूणां चयणे युक्तः प्राप्तकालश्च मे मतः॥ ४४॥ नाद्य शक्या मया हन्तुं पाण्डवा जितकाशिनः। बलवन्तः कृतोत्साहा लब्धलक्ष्याः प्रहारिणः॥४५॥ राज्ञः सकाशात्तेषान्तु प्रतिज्ञातो बधो मया। पतङ्गाग्निसमां वृत्तिमास्थायात्मविनाशिनीम्॥ ४६॥ न्यायतो युध्यमानस्य प्राण-त्यागो न संशयः। छद्मना तु भवेत् सिद्धिः शत्रूणाञ्च चयो महान् ॥ ४७॥ तत्र संशयितादर्थाद्योऽर्थो निःसंशयो भवेत्। तं जना बहुमन्यन्ते ये च शास्त्रविशारदाः॥ ४८॥ यच्चाप्यत्र भवेद्वाच्यं गर्हितं लोकनिन्दितम्। कर्त्तव्यं तन्मनुष्येण क्षत्रधर्म्मेण वर्त्तता ॥ ४९॥ निन्दितानि च सर्वाणि कुत्सितानि पदे पदे। सोपधानि कृतान्येन पाण्डवैरकृतात्मभिः॥ ५०॥ अस्मिन्नर्थे पुरा गीता श्रूयन्ते धर्मचिन्तकैः। श्लोका न्यायमवेक्षद्भिस्तत्त्वार्थांस्तत्त्व-दर्शिभिः॥ ५१॥ परिश्रान्ते विदीर्णे वा भुञ्जाने वापि शत्रुभिः। प्रस्थाने वा प्रवेशे वा प्रहर्त्तव्यं रिपोर्बलम्॥ ५२॥ निद्रार्त्तमर्द्ध-रात्रे च तथा नष्टप्रणायकम्। भिन्नयोधं बलं यच्च द्विधायुक्तञ्च यद्भवेत्॥ ५३॥ इत्येव निश्चयं चक्रे सुप्तानां निशि मारणे। पाण्डूनां सह पाञ्चालैर्द्रोणपुत्रः प्रतापवान्॥ ५४॥ स क्रूरां मतिमास्थाय विनिश्चित्य मुहुर्मुहुः। सुप्तौ प्राबोधयत्तौ तु मातुलं भोजमेव च॥ ५५॥ तौ प्रबुद्धौ महात्मानौ कृपभोजौ महाबलौ। नोत्तरं प्रतिपद्येतां तत्र युक्तं ह्रिया वृतौ॥ ५६॥ स मुहूर्त्तमिव ध्यात्वा बाष्पविह्वलमब्रवीत्। हतो दुर्य्योधनो राजा एकवीरो महाबलः। यस्यार्थे वैरमस्माभिरासक्तं पाण्डवैः सह॥ ५७॥ एकाकी बहुभिः क्षुद्रैराहवे शुद्धविक्रमः। पातितो भीमसेनेन एकादशचमूपतिः॥ ५८॥ वृकोदरेण क्षुद्रेण सुनृशंसमिदं कृतम्। मूर्द्धाभिषिक्तस्य शिरः पादेन परिमृद्नता॥ ५९॥ विनर्द्दन्ति च पाञ्चालाः क्ष्वेड़न्ति च हसन्ति च। धमन्ति शङ्खान् शतशो हृष्टा

घ्नन्ति च दुन्दुभीन् ॥ ६० ॥ वादित्रघोषस्तुमुलो विमिश्रः शङ्ख-
निस्वनैः। अनिलेनेरितो घोरो दिशः पूरयतीव ह ॥ ६१ ॥
अश्वानां ह्रेषमाणानां गजानाञ्चैव वृंहताम्। सिंहनादश्च शूराणां
श्रूयते सुमहानयम् ॥ ६२ ॥ दिशं प्राचीं समाश्रित्य हृष्टानां
गच्छतां भृशम्। रथनेमिस्वनाश्चैव श्रूयन्ते लोमहर्षणाः ॥ ६३ ॥
पाण्डवैर्धार्त्तराष्ट्राणां यदिदं कदनं कृतम्। वयमेव त्रयः शिष्टा
अस्मिन्महति वैशसे ॥ ६४ ॥ केचिन्नागशतप्राणाः केचित् सर्वास्त्र-
कोविदाः। निहताः पाण्डवेयैस्ते मन्ये कालस्य पर्य्ययम् ॥ ६५ ॥
एवमेतेन भाव्यं हि नूनं कार्य्येण तत्त्वतः। यथा ह्यस्येदृशी निष्ठा
कृते कार्य्येऽपि दुष्करे ॥ ६६ ॥ भवतोस्तु यदि प्रज्ञा न मोहा-
दपनीयते। व्यापन्नेऽस्मिन्महत्यर्थे यन्नः श्रेयस्तदुच्यताम् ॥ ६७ ॥

इति सौप्तिकपर्व्वणि द्रौणिमन्त्रणायां प्रथमोऽध्यायः ॥ १ ॥

---

कृप उवाच। श्रुतन्ते वचनं सर्वं यद्यदुक्तं त्वया विभो।
ममापि तु वचः किञ्चिच्छृणुष्वाद्य महाभुज ॥ १ ॥ आवन्धान्मानुषाः
सर्व्वे निबद्धाः कर्म्मणोर्द्वयोः। दैवे पुरुषकारे च परं ताभ्यां न
विद्यते ॥ २ ॥ न हि दैवेन सिध्यन्ति कार्य्याण्येकेन सत्तम। न
चापि कर्म्मणैकेन द्वाभ्यां सिद्धिस्तु योगतः ॥ ३ ॥ ताभ्यामुभाभ्यां
सर्व्वार्थां निवद्धा ह्यधमोत्तमाः। प्रवृत्ताश्चैव दृश्यन्त निवृत्ताश्चैव
सर्व्वशः ॥ ४ ॥ पर्ज्जन्यः पर्व्वते वर्षन् किन्नु साधयते फलम्। कृष्टे
क्षेत्रे तथा वर्षन् किं न साधयते फलम् ॥ ५ ॥ उत्थानञ्चाप्यदैवस्य
ह्यनुत्थानञ्च दैवतम्। व्यर्थं भवति सर्व्वत्र पूर्व्वकस्तत्र निश्चयः ॥ ६ ॥
सुवृष्टे तु यथा देवे सम्यक् क्षेत्रे च कर्षिते। वीजं महागुणं
भूयात्तथा सिद्धिर्हि मानुषी ॥ ७ ॥ तयोर्द्दैवं विनिश्चित्य स्वयं
नैव प्रवर्त्तते। प्राज्ञाः पुरुषकारे तु वर्त्तन्ते दाक्ष्यमास्थिता ॥ ८ ॥

ताभ्यां सर्वं हि कार्य्यार्था मनुष्याणां नरर्षभ। विचेष्टन्तः स्म दृश्यन्ते निवृत्तास्तु तथैव च॥ ९॥ कृतः पुरुषकारस्तु सोऽपि दैवेन सिध्यति। तथास्य कर्मणः कर्त्तुरभिनिर्वर्त्तते फलम्॥ १०॥ उत्थानन्तु मनुष्याणां दक्षाणां दैववर्ज्जितम्। अफलं दृश्यते लोके सम्यगप्युपपादितम्॥ ११॥ तत्रालसा मनुष्याणां ये भवन्त्यमनस्विनः। उत्थानन्ते विगर्हन्ति प्राज्ञानांस्तन्न रोचते॥ १२॥ प्रायशो हि कृतं कर्म नाफलं दृश्यते भुवि। अकृत्वा च पुनर्दुःखं कर्म दृश्येन्महाफलम्॥ १३॥ चेष्टामकुर्वंल्लभते यदि किञ्चिद्यदृच्छया। यो वा न लभते कृत्वा दुर्दशौ तावुभावपि॥ १४॥ शक्नोति जीवितुं दक्षो नालसः सुखमेधते। दृश्यन्ते जीवलोकेऽस्मिन् दक्षाः प्रायो हितैषिणः॥ १५॥ यदि दक्षः समारम्भात् कर्मणो नाश्नुते फलम्। नास्य वाच्यं भवेत् किञ्चिल्लब्धव्यं वाधिगच्छति॥ १६॥ अकृत्वा कर्म यो लोके फलं विन्दति धिष्ठितः। स तु वक्तव्यतां याति द्वेष्यो भवति प्रायशः॥ १७॥ एवमेतदनादृत्य वर्त्तते यस्त्वतोऽन्यथा। स करोत्यात्मनोऽनर्थानेष बुद्धिमतां नयः॥ १८॥ हीनं पुरुषकारेण यदि दैवेन वा पुनः। कारणाभ्यामथैताभ्यामुत्थानमफलं भवेत्॥ १९॥ हीनं पुरुषकारेण कर्म त्विह न सिध्यति। दैवतेभ्यो नमस्कृत्य यस्त्वर्थान् सम्यगीहते। दक्षो दाक्षिण्यसम्पन्नो न स मोघं विहन्यते॥ २०॥ सम्यगीहा पुनरियं यो वृद्धानुपसेवते। आपृच्छति च यः श्रेयः करोति च हितं वचः॥ २१॥ उत्थयोत्थाय हि सदा प्रष्टव्या वृद्धसम्मताः। ते स्म योगे परं मूलं तन्मूला सिद्धिरुच्यते॥ २२॥ वृद्धानां वचनं श्रुत्वा योऽभ्युत्थानं प्रयोजयेत्। उत्थानस्य फलं सम्यक् तदा स लभतेऽचिरात्॥ २३॥ रागात् क्रोधाद्भयाल्लोभात् योऽर्थानीहेत मानवः। अनीशश्चावमानी च स शीघ्रं भ्रश्यते श्रियः॥ २४॥ सोऽयं दुर्य्योधनेनार्थो लुब्धेनादीर्घदर्शिना। असं-

मन्त्र समारब्धो मूढ़त्वादविचिन्तितः॥ २५॥ हितबुद्धीननादृत्य संमन्त्र्यासाधुभिः सह। वार्य्यमाणोऽकरोद्वैरं पाण्डवैर्गुणवत्तरैः॥ २६॥ पूर्व्वमप्यतिदुःशीलो न धैर्य्यं कर्त्तुमर्हति। तपत्यर्थे विपन्ने हि मित्राणां न कृतं वचः॥ २७॥ अनुवर्त्तामहे यत्तु वयं तं पापपूरुषम्। अस्मानप्यनयस्तस्मात्प्राप्तोऽयं दारुणो महान्॥ २८॥ अनेन तु ममाद्यापि व्यसनेनोपतापिता। बुद्धिश्चिन्तयतः किञ्चित् स्वं श्रेयो नावबुध्यते॥ २९॥ मुह्यता तु मनुष्येण प्रष्टव्याः सुहृदो जनाः। तत्रास्य बुद्धिर्विनयस्तत्र श्रेयश्च पश्यति॥ ३०॥ ततोऽस्य मूलं कार्य्याणां बुद्ध्या निश्चित्य वै बुधाः। तेऽत्र पृष्टा यथा ब्रूयुस्तत् कर्त्तव्यं तथा भवेत्॥ ३१॥ ते वयं धृतराष्ट्रञ्च गान्धारीञ्च समेत्य ह। उपपृच्छामहे गत्वा विदुरञ्च महामतिम्॥ ३२॥ ते पृष्टास्तु वदेयुर्यत् श्रेयो नः समनन्तरम्। तदस्माभिः पुनः कार्य्यमिति मे नैष्ठिकी मतिः। अनारम्भात्तु कार्य्याणां नार्थः सम्पद्यते क्वचित्॥ ३३॥ कृते पुरुषकारे च येषां कार्य्यं न सिध्यति। दैवेनोपहतास्ते तु नात्र कार्य्या विचारणा॥ ३४॥

इति सौप्तिकपर्व्वणि द्रौणिकृपसंवादे द्वितीयोऽध्यायः॥ २॥

---

सञ्जय उवाच। कृपस्य वचनं श्रुत्वा धर्मार्थसहितं शुभम्। अश्वत्थामा महाराज दुःखशोकसमन्वितः॥ १॥ दह्यमानस्तु शोकेन प्रदीप्तेनाग्निना यथा। क्रूरं मनस्ततः कृत्वा तावुभौ प्रत्यभाषत॥ २॥ पुरुषे पुरुषे बुद्धिर्या या भवति शोभना। तुष्यति च पृथक् सर्व्वं प्रज्ञया ते स्वया स्वयां॥ ३॥ सर्व्वो हि मन्यते लोक आत्मानं बुद्धिमत्तरम्। सर्व्वस्यात्मा बहुमतः सर्व्वात्मानं प्रशंसति॥ ४॥ सर्व्वस्य हि स्वका प्रज्ञा साधुवादे प्रतिष्ठिता। परबुद्धिञ्च निन्दन्ति स्वां प्रशंसन्ति चासकृत्॥ ५॥ कारणान्तर-

येगेन येगे येषां समा मतिः। अन्योऽन्येन च तुष्यन्ति बह्व
मन्यन्ति चासकृत्॥ ६॥ तस्यैव तु मनुष्यस्य सा सा बुद्धिस्तदा
तदा। कालयोगे विपर्य्यासं प्राप्यान्योऽन्यं विपद्यते॥ ७॥
विचित्रत्वात्त् चित्तानां मनुष्याणां विशेषतः। चित्तवैक्लव्यमासाद्य
सा सा बुद्धिः प्रजायते॥ ८॥ यथा हि वैद्य. कुशलो ज्ञात्वा
व्याधिं यथाविधि। भैषज्यं कुरुते योगात् प्रशमार्थमिति प्रभो
॥ ९॥ एवं कार्य्यस्य योगार्थं बुद्धिं कुर्वन्ति मानवाः। प्रज्ञया
हि स्वया युक्तास्ताञ्च निन्दन्ति मानवाः॥ १०॥ अन्यया यौवने
मर्त्त्यो बुद्ध्या भवति मोहितः। मध्येऽन्यया जरायान्तु सोऽन्यां
रोचयते मतिम्॥ ११॥ व्यसनं वा महाघोरं समृद्धिं वापि
तादृशीम्। अवाप्य पुरुषो भोज कुरुते बुद्धिवैकृतिम्॥ १२॥
एकस्मिन्नेव पुरुषे सा सा बुद्धिस्तदा तदा। भवत्यकृतप्रज्ञत्वात्
सा तस्यैव न रोचते॥ १३॥ निश्चित्य तु यथाप्रज्ञं यां मतिं साधु
पश्यति। तया प्रकुरुते भावं सा तस्योद्योगकारिका॥ १४॥
सर्वो हि पुरुषो भोज साध्वेतदिति निश्चितः। कर्त्तुमारभते प्रीतो
मारणादिषु कर्मसु॥ १५॥ सर्वे हि युक्तिमास्थाय प्रज्ञाञ्चापि
स्वकां नराः। चेष्टन्ते विविधां चेष्टां हितमित्येव जानते॥ १६॥
उपजाता व्यसनजा येयमद्य मतिर्मम। युवयोस्तां प्रवच्यामि
मम शोकविनाशिनीम्॥ १७॥ प्रजापतिः प्रजाः सृष्ट्वा कर्म तासु
विधाय च। वर्णे वर्णे समाधत्त ह्येकैकं गुणभाग्गुणम्॥ १८॥
ब्राह्मणे वेदमग्र्यन्तु क्षत्रिये तेज उत्तमम्। दाक्ष्यं वैश्ये च शूद्रे
च सर्ववर्णानुकूलताम्॥ १९॥ अदान्तो ब्राह्मणोऽसाधुर्निस्तेजाः
क्षत्रियोऽधमः। अदक्षो निन्द्यते वैश्यः शूद्रश्च प्रतिकूलवान्॥२०॥
सोऽस्मि जातः कुलश्रेष्ठे ब्राह्मणानां सुपूजिते। मन्दभाग्यतया-
स्मेतं क्षत्रधर्ममनुष्ठितः॥२१॥ क्षत्रधर्मं विदित्वाहं यदि ब्राह्मण्य-
संश्रितः। प्रकुर्य्यां सुमहत् कर्म न मे तत् साधुसम्मतम्॥ २२॥

धारयंश्च धनुर्द्दिव्यं दिव्यान्यस्त्राणि चाहवे। पितरं निहतं दृष्ट्वा किं नु वच्यामि संसदि ॥ २३ ॥ सोऽहमद्य यथाकामं चत्रधर्म्ममुपास्य तम्। गन्तास्मि पदवीं राज्ञः पितुश्चापि महात्मनः ॥ २४ ॥ अद्य स्वप्स्यन्ति पाञ्चाला विश्वस्ता जितकाशिनः। विमुक्तयुग्यकवचा हर्षेण च समन्विताः। जय मत्वात्मनश्चैव श्रान्ता व्यायामकर्षिता ॥ २५ ॥ तेषां निशि प्रसुप्तानां सुस्थानां शिविरे स्वके। अवस्कन्दं करिष्यामि शिविरस्याद्य दुष्करम् ॥ २६ ॥ तानवस्कन्द्य शिविरे प्रेतभूतान् विचेतसः। सूदयिष्यामि विक्रम्य मघवानिव दानवान् ॥ २७ ॥ अद्य तान् सहितान् सर्वान् धृष्टद्युम्नपुरोगमान्। सूदयिष्यामि विक्रम्य कच्चं दीप्त इवानलः। निहत्य चैव पाञ्चालान् शान्तिं लब्धास्मि सत्तम॥ २८ ॥ पाञ्चालेषु चरिष्यामि सूदयन्नद्य संयुगे। पिनाकपाणिः संक्रुद्धः स्वयं रुद्रः पशुष्विव ॥२९ अद्याहं सर्वपाञ्चालान्निकृत्य च निहत्य च। अर्द्दयिष्यामि संहृष्टो रणे पाण्डुसुतांस्तथा ॥ ३० ॥ अद्याहं सर्वपाञ्चालैः कृत्वा भूमिं शरीरिणीम्। प्रहृत्यैकैकशस्तेषु भविष्याम्यनृणः पितुः ॥ ३१ ॥ दुर्य्योधनस्य कर्णस्य भीष्मसैन्धवयोरपि। गमयिष्यामि पाञ्चालान् पदवीमद्य दुर्गमाम् ॥ ३२ ॥ अद्य पाञ्चालराजस्य धृष्टद्युम्नस्य वै निशि। नचिरात् प्रमथिष्यामि पशोरिव शिरो बलात् ॥ ३३ ॥ अद्य पाञ्चालपाण्डूनां शयितानात्मजान्निशि। खड्गेन निशितेनाजौ प्रमथिष्यामि गौतम ॥ ३४ ॥ अद्य पाञ्चालसेनां तां निहत्य निशि सौप्तिके। कृतकृत्य सुखी चैव भविष्यामि महामते ॥ ३५ ॥

इति सौप्तिकपर्व्वणि द्रौणिमन्त्रणायां तृतीयोऽध्यायः ॥ ३ ॥

---

कृप उवाच। दिष्ट्या ते प्रतिकर्त्तव्ये मतिर्य्यातेयमच्युत। न त्वां वारयितुं शक्तो वज्रपाणिरपि स्वयम् ॥ १ ॥ अनुयास्यावहे

तान्तु प्रभाते सहितावुभौ। अद्य रात्रौ विश्रमस्व विमुक्तकवच-ध्वजः॥ २॥ अहं त्वामनुयास्यामि कृतवर्मा च सात्वतः। परा-नभिमुखं यान्तं रथावास्थाय दंशितौ॥ ३॥ आवाभ्यां सहितः शत्रून् श्वो निहन्ता समागमे। विक्रम्य रथिनां श्रेष्ठ पाञ्चालान् सपदानुगान्॥ ४॥ शक्तस्त्वमसि विक्रम्य विश्रमस्व निशामिमाम्। चिरं ते जाग्रतस्तात स्वप तावन्निशामिमाम्॥ ५॥ विश्रान्तस्य विनिद्रस्य स्वस्थचित्तस्य मानद। समेत्य समरे शत्रून् वधिष्यसि न संशयः॥ ६॥ न हि त्वां रथिनां श्रेष्ठं प्रगृहीतवरायुधम्। जेतुमुत्सहते कश्चिदपि देवेषु वासवः॥ ७॥ कृपेण सहितं यान्तं गुप्तञ्च कृतवर्मणा। को द्रौणिं युधि संरब्धं योधयेदपि देवराट् ॥ ८॥ ते वयं निशि विश्रान्ता विनिद्रा विगतज्वराः। प्रभातायां रजन्यां वै निहनिष्याम शात्रवान्॥ ९॥ तव ह्यस्त्राणि दिव्यानि मम चैव न संशयः। सात्वतोऽपि महेष्वासो नित्यं युद्धेषु कोविदः॥ १०॥ ते वयं सहितास्तात सर्वान् शत्रून् समागतान्। प्रसह्य समरे हत्वा प्रीतिं प्राप्स्याम पुष्कलाम्। विश्रमस्व त्वमव्यग्रः स्वप चेमां निशां सुखम्॥ ११॥ अहञ्च कृतवर्मा च त्वां प्रयान्तं नरो-त्तमम्। अनुयास्याव सहितौ धन्विनौ परतापनौ। रथिनं त्वरया यान्तं रथमास्थाय दंशितौ॥ १२॥ स गत्वा शिविरं तेषां नाम विश्राव्य चाहवे। ततः कर्त्तासि शत्रूणां युध्यतां कदनं महत्॥१३॥ कृत्वा च कदनं तेषां प्रभाते विमलेऽहनि। विहरस्व यथा शक्रः सूदयित्वा महासुरान्॥ १४॥ त्वं हि शक्तो रणे जेतुं पाञ्चा-लानां वरूथिनीम्। दैत्यसेनामिव क्रुद्धः सर्वदानवसूदनः॥१५॥ मया त्वां सहितं संख्ये गुप्तञ्च कृतवर्मणा। न सहेत विभुः साक्षा-द्वज्रपाणिरपि स्वयम्॥ १६॥ न चाहं समरे तात कृतवर्मा न चैव ह। अनिर्ज्जित्य रणे पाण्डून् व्यपयास्याव कर्हिचित्॥ १७॥ हत्वा च समरे क्रुद्धान् पाञ्चालान् पाण्डुभिः सह। निर्वर्त्तिष्यामहे

सर्वे हता वा स्वर्गगा वयम् ॥ १८ ॥ सर्वोपायैः सहायास्ते प्रभाते वयमाहवे । सत्यमेतन्महाबाहो प्रब्रवीमि तवानघ ॥ १९ ॥ एवमुक्तस्ततो द्रौणिर्मातुलेन हितं वचः । अब्रवीन्मातुलं राजन् क्रोधसंरक्तलोचनः ॥ २० ॥ आतुरस्य कुतो निद्रा नरस्यामर्षितस्य च । अर्थांश्चिन्तयतश्चापि कामयानस्य वा पुनः ॥ २१ ॥ तदिदं समनुप्राप्तं पश्य मेऽद्य चतुष्टयम् । यस्य भागश्चतुर्थो मे स्वप्नमह्नाय नाशयेत् ॥ २२ ॥ किं नाम दुःखं लोकेऽस्मिन् पितुर्वधमनुस्मरन् । हृदयं निर्दहन्मेऽद्य रात्र्यहानि न शाम्यति ॥ २३ ॥ यथा च निहतः पापैः पिता मम विशेषतः । प्रत्यक्षमपि ते सर्वं तन्मे मर्माणि कृन्तति ॥ २४ ॥ कथं हि मादृशो लोके मुहूर्त्तमपि जीवति । द्रोणो हतेति यद्वाचः पाञ्चालानां शृणोम्यहम् ॥२५॥ धृष्टद्युम्नमहत्वाजौ नाहं जीवितुमुत्सहे । स मे पितुर्वधाद्वध्यो पाञ्चाला ये च सङ्गताः ॥ २६ ॥ विलापो भग्नसक्थस्य यस्तु राज्ञो मया श्रुतः । स पुनर्हृदयं कस्य क्रूरस्यापि न निर्दहेत् ॥ २७ ॥ कस्य ह्यकरुणस्यापि नेत्राभ्यामश्रु नाव्रजेत् । नृपतेर्भग्नसक्थस्य श्रुत्वा तादृग्वचः पुनः ॥ २८ ॥ यश्चायं मित्रपक्षो मे मयि जीवति निर्ज्जितः । शोकं मे वर्द्धयत्येष वारिवेग इवार्णवम् । एकाग्रमनसो मेऽद्य कुतो निद्रा कुतः सुखम् ॥ २९ ॥ वासुदेवार्जुनाभ्यां हि तानहं परिरक्षितान् । अविषह्यतमान्मन्ये महेन्द्रेणापि मातुल ॥ ३० ॥ न चास्मि शक्तः संयन्तुं कोपमेतं समुत्थितम् । न तं पश्यामि लोकेऽस्मिन् यो मां कोपान्निवर्त्तयेत् । इति मे निश्चिता बुद्धिरेषा साधुमता च मे ॥ ३१ ॥ वार्त्तिकैः कथ्यमानस्तु मित्राणां मे पराभवः । पाण्डवानाञ्च विजयो हृदयं दहतीव मे ॥ ३२ ॥ अहन्तु कदनं कृत्वा शत्रूणामद्य सौप्तिके । ततो विश्रमिता चैव स्वप्ता च विगतज्वरः ॥ ३३ ॥

इति सौप्तिकपर्वणि द्रौणिमन्त्रणायां चतुर्थोऽध्यायः ॥ ४ ॥

न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ ३४ ॥ तं तथैव हनिष्यामि न्यस्तवर्माणमद्य वै । पुत्रं पाञ्चालराजस्य पापं पापेन कर्मणा ॥ ३५ ॥ कथञ्च निहतः पापः पाञ्चाल्यः पशुवन्मया । शस्त्रेण विजितांल्लोकान्नाप्नुयादिति मे मतिः ॥ ३६ ॥ क्षिप्रं सन्नद्धकवचौ सखड्‌गावात्तकार्मुकौ । मामास्थाय प्रतीक्षेतां रथवर्यौ परन्तपौ ॥ ३७ ॥ इत्युक्त्वा रथमास्थाय प्रायादभिमुखः परान् । तमन्वगात् कृपो राजन् कृतवर्मा च सात्वतः ॥ ३८ ॥ ते प्रयाता व्यरोचन्त परानभिमुखास्त्रयः । हूयमाना यथा यज्ञे समिद्धा हव्यवाहनाः ॥ ३९ ॥ ययुश्च शिविरं तेषां संप्रसुप्तजनं विभो । द्वारदेशन्तु संप्राप्य द्रौणिस्तस्थौ महारथः ॥ ४० ॥

इति सौप्तिकपर्वणि द्रौणिपाण्डवशिविरगमने
पञ्चमोऽध्यायः ॥ ५ ॥

---

धृतराष्ट्र उवाच । द्वारदेशे ततो द्रौणिमवस्थितमवेक्ष्य तौ । अकुर्वतां भोजकृपौ किं सञ्जय वदस्व मे ॥ १ ॥

सञ्जय उवाच । कृतवर्माणमामन्त्र्य कृपञ्च स महारथः । द्रौणिर्मन्युपरीतात्मा शिविरद्वारमासदत् ॥ २ ॥ तत्र भूतं महाकायं चन्द्रार्कसदृशद्युतिम् । सोऽपश्यत् द्वारमाश्रित्य तिष्ठन्तं लोमहर्षणम् ॥ ३ ॥ वसानञ्चर्म वैयाघ्रं महारुधिरविस्रवम् । कृष्णाजिनोत्तरासङ्गं नागयज्ञोपवीतिनम् ॥ ४ ॥ बाहुभिः स्वायतैः पीनैर्नानाप्रहरणोद्यतैः । बद्धाङ्गदमहासर्पं ज्वालामालाकुलाननम् ॥ ५ ॥ दंष्ट्राकरालवदनं व्यादितास्यं भयानकम् । नयनानां सहस्रैश्च विचित्रैरभिभूषितम् ॥ ६ ॥ नैव तस्य वपुः शक्यं प्रवक्तुं वेश एव च । सर्वथा तु तदालक्ष्य स्फुटेयुरपि पर्वताः ॥ ७ ॥ तस्यास्यनासिकाभ्यान्तु श्रवणाभ्याञ्च सर्वशः । तेभ्यश्चाक्षिसहस्रेभ्यः

प्रादुरासन्महार्च्चिषः ॥ ८ ॥ तथा तेजोमरीचिभ्यः शङ्खचक्रगदाधराः । प्रादुरासन् हृषीकेशाः शतशोऽथ सहस्रशः ॥ ९ ॥ तदत्यद्भुतमालोक्य भूतं लोकभयङ्करम् । द्रौणिरव्यथितो दिव्यैरस्त्रवर्षैरवाकिरत् । द्रौणिमुक्ताञ्छरांस्तांस्तु तद्भूतं महदग्रसत् ॥१०॥ उदधेरिव वार्य्योघान् पावको वड़वामुखः । अग्रसत्तांस्तदा भूतं द्रौणिना प्रहिताञ्छरान् ॥ ११ ॥ अश्वत्थामा तु संप्रेक्ष्य शरौघांस्तान्निरर्थकान् । रथशक्तिं मुमोचास्मै दीप्तामग्निशिखामिव ॥१२॥ सा तमाहत्य दीप्ताग्रा रथशक्तिरदीर्य्यत । युगान्ते सूर्य्यमाहत्य महोल्केव दिवश्च्युता ॥ १३ ॥ अथ हेमत्सरुं दिव्यं खड्गमाकाशवर्च्चसम् । कोषात् समुद्बवर्हाशु बिलाद्दीप्तमिवोरगम् ॥१४॥ ततः खड्गवरं धीमान् भूताय प्राहिणोत्तदा । स तदासाद्य भूतं वै विलं नकुलवद्ययौ ॥ १५ ॥ ततः स कुपितो द्रौणिरिन्द्रकेतुनिभां गदाम् । ज्वलन्तीं प्राहिणोत्तस्मै भूतं तामपि चाग्रसत् ॥ १६ ॥ ततः सर्व्वायुधाभावे वीक्षमाणस्ततस्ततः । अपश्यत् कृतमाकाशमनाकाशं जनार्द्दनैः ॥ १७ ॥ तदद्भुततमं दृष्ट्वा द्रोणपुत्रो निरायुधः । अब्रवीदतिसन्तप्तः कृपवाक्यमनुस्मरन् ॥ १८ ॥ ब्रुवतामप्रियं पथ्यं सुहृदां न शृणोति यः । स शोचत्यापदं प्राप्य यथाहमतिवर्त्त्य तौ ॥ १९ ॥ शास्त्रदृष्टानविद्वान् यः समतीत्य जिघांसति । स पथः प्रच्युतो धर्मात् कुपथे प्रतिहन्यते ॥ २० ॥ गोब्राह्मणनृपस्त्रीषु सख्युर्मातुर्गुरोस्तथा । हीनप्राणजड़ान्धेषु सुप्तभीतोत्थितेषु च ॥ २१ ॥ मत्तोन्मत्तप्रमत्तेषु न शस्त्राणि निपातयेत् । इत्येवं गुरुभिः पूर्व्वमुपदिष्टं नृणां सदा ॥ २२ ॥ सोऽहमुत्क्रम्य पन्थानं शास्त्रदृष्टं सनातनम् । अमार्गेणैवमारभ्य घोरामापदमागतः ॥ २३ ॥ ताञ्चापदं घोरतरां प्रवदन्ति मनीषिणः । यदुद्यम्य महत् कृत्यं भयादपि निवर्त्तते ॥ २४ ॥ अशक्यञ्चैव तत् कर्त्तुं कर्म शक्तिबलादिह । न हि दैवाद्गरीयो वै मानुषं कर्म कथ्यते ॥२५॥

मानुष्यं कुर्वतः कर्म यदि दैवान्न सिध्यति। स पथ प्रच्युतो धर्माद्विपथं प्रतिपद्यते ॥ २६ ॥ प्रतिघातं ह्यविज्ञानं प्रवदन्ति मनीषिणः। यदारभ्य क्रियां काञ्चिद्भयादिह निवर्त्तते ॥ २७ ॥ तदिदं दुष्प्रणीतेन भयं मां समुपस्थितम्। न हि द्रोणसुतः संख्ये निवर्त्तेत कथञ्चन ॥ २८ ॥ इदञ्च सुमहद्भूतं दैवदण्डमिवोद्यतम्। न चैतदभिजानामि चिन्तयन्नपि सर्वथा ॥ २९ ॥ ध्रुव येयमधर्मेण प्रवृत्ता कलुषा मतिः। तस्याः फलमिदं घोरं प्रतिघाताय दृश्यते। ॥ ३० ॥ तदिदं दैवविहितं मम संख्ये निवर्त्तनम्। नान्यत्र दैवादुद्यन्तुमिह शक्यं कथञ्चन ॥ ३१ ॥ सोऽहमद्य महादेवं प्रपद्ये शरणं प्रभुम्। दैवदण्डमिदं घोरं स हि मे नाशयिष्यति ॥ ३२ ॥ कपर्द्दिनं देवदेवमुमापतिमनामयम्। कपालमालिनं रुद्रं भगनेत्रहरं हरम् ॥ ३३ ॥ स हि देवोऽत्यगाद्देवांस्तपसा विक्रमेण च। तस्माच्छरणमभ्येमि गिरिशं शूलपाणिनम् ॥ ३४ ॥

इति सौप्तिकपर्वणि महाभूतदर्शने द्रौणिचिन्तायां षष्ठोऽध्यायः ॥ ६ ॥

---

सञ्जय उवाच। एवं स चिन्तयित्वा तु द्रोणपुत्रो विशाम्पते। अवतीर्य्य रथोपस्थाद्दध्यौ प्रणतः स्थितः ॥ १ ॥

द्रौणिरुवाच। उग्रं स्थाणुं शिवं रुद्रं सर्वमीशानमीश्वरम्। गिरिशं वरदं देवं भवभावनमीश्वरम् ॥ २ ॥ शितिकण्ठमजं शक्रं दक्षक्रतुहरं हरम्। विश्वरूपं विरूपाक्षं बहुरूपमुमापतिम् ॥ ३ ॥ श्मशानवासिनं दृप्तं महागणपतिं विभुम्। खट्वाङ्गधारिणं रुद्रं जटिलं ब्रह्मचारिणम् ॥ ४ ॥ मनसा सुविशुद्धेन दुष्करेणाल्पतेजसा। सोऽहमात्मोपहारेण यक्ष्ये त्रिपुरघातिनम् ॥ ५ ॥ स्तुतं स्तुत्यं स्तूयमानममोघं कृत्तिवाससम्। विलोहितं

नीलकण्ठमसह्यं दुर्निवारणम् ॥ ६ ॥ शुभ्रं ब्रह्मसृजं ब्रह्म ब्रह्म-
चारिणमेव च । व्रतवन्तं तपोनिष्ठमनन्तं तपतां गतिम् ॥ ७ ॥
बहुरूपं गणाध्यक्षं त्र्यक्षं पारिषदप्रियम् । धनाध्यक्षेक्षितमुखं
गौरीहृदयवल्लभम् ॥ ८ ॥ कुमारपितरं पिङ्गं गोवृषोत्तमवाहनम् ।
तनुवाससमत्युग्रमुमाभूषणतत्परम् ॥ ९ ॥ परं परेभ्यः परमं परं
यस्मान्न विद्यते । इष्वस्त्रोत्तमभर्त्तारं दिगन्तं देशरक्षिणम ॥१०॥
हिरण्यकवचं देवं चन्द्रमौलिविभूषणम् । प्रपद्ये शरणं देव
परमेण समाधिना ॥ ११ ॥ इमाञ्चेदापदं घोरां तरामाद्य सुदु-
स्तराम् । सर्व्वभूतोपहारेण यक्ष्येऽहं शुचिना शुचिम् ॥ १२ ॥
इति तस्य व्यवसितं ज्ञात्वोद्योगात् स्वकर्म्मणः । पुरस्तात् काञ्चनी
वेदी प्रादुरासीन्महात्मनः ॥ १३ ॥ तस्यां वेद्यां तदा राजंश्चित्र-
भानुरजायत । स दिशो विदिशः खञ्च ज्वालाभिरभिपूरयन् ॥१४॥
दीप्तास्यनयनाश्चात्र नैकपादशिरोभुजाः । रत्नचित्राङ्गदधराः समु-
द्यतकरास्तथा ॥ १५ ॥ द्विपशैलप्रतीकाशाः प्रादुरासन्महागणाः ।
श्वराहोष्ट्रवक्त्राश्च हयगोमायुगोमुखाः ॥ १६ ॥ ऋक्षमार्ज्जार-
वदना व्याघ्रद्वीपिमुखास्तथा । काकवक्त्राः प्लवमुखाः शुकवक्त्रा-
स्तथैव च ॥ १७ ॥ महाजगरवक्त्राश्च हंसवक्त्राः सितप्रभाः ।
दार्व्वाघाटमुखाश्चापि चाषवक्त्राश्च भारत ॥ १८ ॥ कूर्म्मनक्रमुखा-
श्चैव शिशुमारमुखास्तथा । महामकरवक्त्राश्च तिमिवक्त्रास्तथैव च
॥ १९ ॥ हरिवक्त्राः क्रौञ्चमुखाः कपोतेभमुखास्तथा । पारावत-
मुखाश्चैव मद्गुवक्त्रास्तथैव च ॥ २० ॥ पाणिकर्णाः सहस्राक्षा-
स्तथैव च महोदराः । निर्म्मांसाः काकवक्त्राश्च श्येनवक्त्राश्च भारत
॥ २१ ॥ तथैवाशिरसो राजन्नृक्षवक्त्राश्च भारत । प्रदीप्तनेत्र-
जिह्वाश्च ज्वालावर्णास्तथैव च ॥ २२ ॥ ज्वालाकेशाश्च राजेन्द्र
ज्वलद्रोमचतुर्भुजाः । मेषवक्त्रास्तथैवान्ये तथा छागमुखा नृप
॥ २३ ॥ शङ्खाभाः शङ्खवक्त्राश्च शङ्खकर्णास्तथैव च । शङ्खमाला-

परिकराः शङ्खध्वनिसमस्वनाः ॥ २४ ॥ जटाधराः पञ्चशिखास्तथा मुण्डाः कृशोदराः । चतुर्दंष्ट्राश्चतुर्जिह्वाः शङ्कुकर्णा किरीटिनः ॥ २५ ॥ मौञ्जीधराश्च राजेन्द्र तथा कुञ्चितमूर्द्धजाः । उष्णीषिणो मुकुटिनश्चारुवक्त्राः स्वलङ्कृताः ॥ २६ ॥ पद्मोत्पलापीड़धरास्तथा कुमुदधारिणः । माहात्म्येन च संयुक्ताः शतशोऽथ सहस्रशः ॥२७॥ शतघ्नीवज्रहस्ताश्च तथा मुषलपाणयः । भूषण्डीपाशहस्ताश्च गदाहस्ताश्च भारत ॥ २८ ॥ पृष्ठेषु बद्धेषुधयश्चित्रवाणा रणोत्कटाः । सध्वजाः सपताकाश्च सघण्ठा सपरश्वधाः ॥ २९ ॥ महापाशोद्यतकरास्तथा लगुड़पाणयः । स्थूणाहस्ताः खड़्गहस्ताः सर्पोच्छ्रितकिरीटिनः ॥ ३० ॥ महासर्पाङ्गदधराश्चित्राभरणधारिणः । रजोध्वस्ताः पङ्कदिग्धाः सर्वे शुक्लाम्बरस्रजः । नीलाङ्गाः कपिलाङ्गाश्च मुण्डवक्त्रास्तथैव च ॥ ३१ ॥ भेरीशङ्खमृदङ्गांस्ते झर्झरानकगोमुखान् । अवादयन् पारिषदाः प्रहृष्टाः कनकप्रभाः ॥३२॥ गायमानास्तथैवान्ये नृत्यमानास्तथापरे । लङ्घयन्तः प्लवन्तश्च वल्गन्तश्च महारवाः ॥ ३३ ॥ धावन्तो जवनाश्चण्डाः पवनोद्धूतमूर्द्धजाः । मत्ता इव महानागा विनदन्तो मुहुर्मुहुः ॥ ३४ ॥ सुभीमा घोररूपाश्च शूलपट्टिशपाणयः । नानाविरागवसनाश्चित्रमाल्यानुलेपनाः ॥ ३५ ॥ रत्नचित्राङ्गदधराः समुद्यतकरास्तथा । हन्तारो द्विषतां शूराः प्रसह्यासह्यविक्रमाः ॥ ३६ ॥ पातारोऽसृग्वसाद्यानां मांसान्त्रकृतभोजनाः । चूड़ालाः कर्णिकाराश्च प्रहृष्टाः पिठरोदराः ॥ ३७ ॥ अतिह्रस्वातिदीर्घाश्च प्रलम्बाश्चातिभैरवाः । विकटाः काललम्बौष्ठा वृहच्छेफाण्डपिण्डकाः ॥ ३८ ॥ महार्हनानामुकुटा मुण्डाश्च जटिलाः परे । सार्केन्दुग्रहनक्षत्रां द्यां कर्य्युस्ते महीतले ॥ ३९ ॥ उत्सहेरंस्त ये हन्तुं भूतग्रामं चतुर्विधम् । ये च वीतभया नित्यं हरस्य भ्रुकुटीसहाः ॥ ४० ॥ कामकारकरा नित्यं त्रैलोक्यस्येश्वरेश्वराः । नित्यानन्दप्रमुदिता

वागीश्मा वीतमत्सराः ॥ ४१ ॥ प्राप्याष्टगुणमैश्वर्य्यं ये न यान्ति च
विस्मयम् । तेषां विस्मयते नित्यं भगवान् कर्मभिर्हरः ॥ ४२ ॥
मनोवाक्कर्मभिर्भक्तैर्नित्यमाराधितश्च यैः । मनोवाक्कर्मभिर्भक्तान्
पाति पुत्रानिवौरसान् ॥ ४३ ॥ पिबन्तोऽसृग्वसाश्चान्ये क्रुद्धा ब्रह्म
द्विषां सदा । चतुर्विधात्मकं सोमं ये पिबन्ति च सर्वदा ॥ ४४ ॥
श्रुतेन ब्रह्मचर्य्येण तपसा च दमेन च । ये समाराध्य शूलाङ्कं
भवसायुज्यमागताः ॥ ४५ ॥ यैरात्मभूतैर्भगवान् पार्वत्या च महे-
श्वरः । महाभूतगणैर्भुङ्क्ते भूतभव्यभवत्प्रभु ॥ ४६ ॥ नाना-
वादित्रहसितक्ष्वेड़ितोत्क्रुष्टगर्ज्जितैः । सन्नादयन्तस्ते विश्वमश्व-
त्थामानमभ्ययुः ॥ ४७ ॥ संस्तुवन्तो महादेवं भाः कुर्वाणाः सुव-
र्चसः । विवर्द्धयिषवो द्रौणेर्म्महिमानं महात्मनः । जिज्ञासमानां-
स्तत्तेजः सौप्तिकञ्च दिदृक्षवः ॥ ४८ ॥ भीमोग्रपरिघालातशूल-
पट्टिशपाणयः । घोररूपाः समाजग्मुर्भूतसङ्घा समन्ततः ॥ ४९ ॥
जनयेयुर्भयं ये स्म त्रैलोक्यस्यापि दर्शनात् । तान् प्रेक्षमाणोऽपि
व्यथां न चकार महाबलः ॥ ५० ॥ अथ द्रौणिर्धनुष्पाणिर्बद्धगोधा-
ङ्गुलित्रवान् । स्वयमेवात्मनात्मानमुपहारमुपाहरत् ॥ ५१ ॥ धनूंषि
समिधस्तत्र पवित्राणि शिताः शराः । हविरात्मवतश्चात्मा तस्मिन्
भारत कर्मणि ॥ ५२ ॥ ततः सौम्येन मन्त्रेण द्रोणपुत्रः प्रताप-
वान् । उपहारं महामन्युरथात्मानमुपाहरत् ॥ ५३ ॥ तं रुद्रं
रौद्रकर्माणं रौद्रैः कर्मभिरच्युतः । अभिष्टुत्य महात्मानमित्युवाच
कृताञ्जलिः ॥ ५४ ॥

द्रौणिरुवाच । इममात्मानमद्याहं जातमाङ्गिरसे कुले । अग्नौ
जुहोमि भगवन् प्रतिगृह्णीष्व मां बलिम् ॥ ५५ ॥ तव भक्त्या
महादेव परमेण समाधिना । अस्यामापदि विश्वात्मन्नुपाकुर्म्मि
तवाग्रतः ॥ ५६ ॥ त्वयि सर्वाणि भूतानि सर्वभूतेषु चासि वै ।
गुणानां हि प्रधानानामेकत्वं त्वयि तिष्ठति ॥ ५७ ॥ सर्वभूताश्रय

विभो हविर्भूतमवस्थितम् । प्रतिगृहाण मां देव यद्यशक्याः परे मया ॥ ५८ ॥ इत्युक्त्वा द्रौणिरास्थाय तां वेदीं दीप्तपावकाम् । संत्यज्यात्मानमारुह्य कृष्णवर्त्मन्युपाविशत् ॥ ५९ ॥ तमूर्द्ध्वबाहुं निश्चेष्टं दृष्ट्वा हविरुपस्थितम् । अब्रवीद्भगवान् साक्षान्महादेवो हसन्निव ॥ ६० ॥ सत्यशौचार्जवत्यागैस्तपसा नियमेन च । क्षान्त्या भक्त्या च धृत्या च बुद्ध्या च वचसा तथा ॥ ६१ ॥ यथावदहमाराद्धः कृष्णेनाक्लिष्टकर्म्मणा । तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ॥ ६२ ॥ कुर्वता तस्य सम्मानं त्वाञ्च जिज्ञासता मया । पाञ्चालाः सहसा गुप्ता मायाश्च बहुशः कृताः ॥ ६३ ॥ कृतस्तस्यैव सम्मानः पाञ्चालान्रक्षता मया । अभिभूतास्तु कालेन नैषामद्यास्ति जीवितम् ॥ ६४ ॥ एवमुक्त्वा महात्मानं भगवानात्मनस्तनुम् । आविवेश ददौ चास्मै विमलं खड्गमुत्तमम् ॥ ६५ ॥ अथाविष्टो भगवता भूयो जज्वाल तेजसा । बलवांश्चाभवद्युद्धे देवसृष्टेन तेजसा ॥ ६६ ॥ तमदृश्यानि भूतानि रक्षांसि च समाद्रवन् । अभितः शत्रुशिविरं यान्तं साक्षादिवेश्वरम् ॥ ६७ ॥

इति सौप्तिकपर्वणि द्रौणिशिविरप्रवेशे सप्तमोऽध्यायः ॥ ७ ॥

---

धृतराष्ट्र उवाच । तथा प्रयाते शिविरं द्रोणपुत्रे महारथे । कच्चित् कृपश्च भोजश्च भयार्त्तौ न न्यवर्त्तताम् ॥ १ ॥ कच्चिन्न वारितौ क्षुद्रै रक्षिभिर्नोपलक्षितौ । असह्यमिति मन्वानौ न निवृत्तौ महारथौ ॥ २ ॥ कच्चिदुन्मथ्य शिविरं हत्वा सोमकपाण्डवान् । दुर्य्योधनस्य पदवीं गतौ परमिकां रणे ॥ ३ ॥ पाञ्चालैर्निहतौ वीरौ कच्चिन्न स्वपतां क्षितौ । कच्चित्ताभ्यां कृतं कर्म्म तन्ममाचक्ष्व सञ्जय ॥ ४ ॥

सञ्जय उवाच । तस्मिन् प्रयाते शिविरं द्रोणपुत्रे महात्मनि ।

कृपश्च कृतवर्मा च शिविरद्वार्य्यतिष्ठताम् ॥ ५ ॥ अश्वत्थामा तु तौ दृष्ट्वा यत्नवन्तौ महारथौ । प्रहृष्टः शनकै राजन्निदं वचनमब्रवीत् ॥ ६ ॥ यत्तौ भवन्तौ पर्य्याप्तौ सर्व्वचत्रस्य नाशने । किं पुनर्योधशेषस्य प्रसुप्तस्य विशेषतः ॥ ७ ॥ अहं प्रवेच्ये शिविरं चरिष्यामि च कालवत् । यथा न कश्चिदपि वां जीवन्मुच्येत मानव । तथा भवद्भ्यां कार्य्यं स्यादिति मे निश्चिता मतिः ॥ ८ ॥ इत्युक्त्वा प्राविशत् द्रौणिः पार्थानां शिविरं महत् । अद्वारेणाभ्यवस्कन्द्य विहाय भयमात्मनः ॥ ९ ॥ स प्रविश्य महावाहुरुद्देशज्ञश्च तस्य ह । धृष्टद्युम्नस्य निलयं शनकैरभ्युपागमत् ॥ १० ॥ ते तु कृत्वा महत् कर्म्म श्रान्ताश्च बलवद्रणे । प्रसुप्ताश्चैव विश्वस्ताः स्वसैन्य परिवारिताः ॥११॥ अथ प्रविश्य तद्वेश्म धृष्टद्युम्नस्य भारत । पाञ्चाल्यं शयने द्रौणिरपश्यत् सुप्तमन्तिकात् ॥ १२ ॥ चौमावदाते महति स्पर्द्ध्यास्तरणसंवृते । माल्यप्रवरसंयुक्ते धूपैश्चूर्णैश्च वासिते ॥ १३ ॥ तं शयानं महात्मानं विस्रब्धमकुतोभयम् । प्राबोधयत पादेन शयनस्थं महीपते ॥ १४ ॥ संबुध्य चरणस्पर्शमुत्थाय रणदुर्म्मदः । अभ्यजानदमेयात्मा द्रोणपुत्रं महारथम् ॥ १५ ॥ तमुत्पतन्तं शयनादश्वत्थामा महाबलः । केशेष्वालम्ब्य पाणिभ्यां निष्पिपेष महीतले ॥ १६ ॥ स बलात्तेन निष्पिष्टः साध्वसेन च भारत । निद्रया चैव पाञ्चाल्यो नाशकच्चेष्टितुं तदा ॥ १७ ॥ तमाक्रम्य पदा राजन् कण्ठे चोरसि चोभयोः । नदन्तं विस्फुरन्तञ्च पशुमारममारयत् ॥ १८ ॥ तुदन्नखैस्तु स द्रौणिं नातिव्यक्तमुदाहरत् । आचार्य्यपुत्र शस्त्रेण जहि मां मा चिरं कृथा । त्वत्कृते सुकृतांल्लोकान् गच्छेयं द्विपदाम्वर ॥ १९ ॥ एवमुक्त्वा तु वचनं विरराम परन्तपः । सुतः पाञ्चालराजस्य आक्रान्तो बलिना भृशम् ॥२०॥ तस्याव्यक्तान्तु तां वाचं संश्रुत्य द्रौणिरब्रवीत् । आचार्य्यघातिनां लोका न सन्ति कुलपांसन । तस्माच्छस्त्रेण निधनं न त्वमर्हसि

दुर्म्मते ॥ २१ ॥ एवं ब्रुवाणस्तं वीरं सिंहो मत्तमिव द्विपम्। मर्मस्वभ्यवधीत् क्रुद्धः पादाष्ठीलैः सुदारुणैः ॥ २२ ॥ तस्य वीरस्य शब्देन मार्य्यमाणस्य वेश्मनि। अबुध्यन्त महाराज स्त्रियो ये चास्य रक्षिणः ॥ २३ ॥ ते दृष्ट्वा धर्षयन्तन्तमतिमानुषविक्रमम्। भूतमेवाध्यवस्यन्तो न स्म प्रव्याहरन् भयात् ॥ २४ ॥ तन्तु तेनाभ्युपायेन गमयित्वा यमक्षयम्ः अध्यतिष्ठत तेजस्वी रथं प्राप्य सुदर्शनम् ॥ २५ ॥ स तस्य भवनाद्राजन् निष्क्रम्य नादयन्दिशः। रथेन शिविरं प्रायाज्जिघांसुर्द्दर्पितो बली ॥ २६ ॥ अपक्रान्ते ततस्तस्मिन् द्रोणपुत्रे महारथे। सहितै रक्षिभिः सर्व्वैः प्रणेदुर्योषितस्तदा ॥ २७ ॥ राजानं निहतं दृष्ट्वा भृशं शोकपरायणाः। व्याक्रोशन् क्षत्रियाः सर्व्वा धृष्टद्युम्नस्य भारत ॥ २८ ॥ तासान्तु तेन शब्देन समीपे क्षत्रियर्षभाः। क्षिप्रञ्च समनह्यन्त किमेतदिति चाब्रुवन् ॥ २९ ॥ स्त्रियस्तु राजन् वित्रस्ता भारद्वाजं निरीक्ष्य ताः। अब्रुवन् दीनकण्ठेन क्षिप्रमाद्रवतेति वै ॥ ३० ॥ राक्षसो वा मनुष्यो वा नैनं जानीमहे वयम्। हत्वा पाञ्चालराजानं रथमारुह्य तिष्ठति ॥ ३१ ॥ ततस्ते योधमुख्याश्च सहसा पर्य्यवारयन्। स तानापततः सर्व्वान् रुद्रास्त्रेण व्यपोथयत् ॥ ३२ ॥ धृष्टद्युम्नञ्च हत्वा स तांश्चैवास्य पदानुगान्। अपश्यच्छयने सुप्तमुत्तमौजसमन्तिके ॥ ३३ ॥ तमप्याक्रम्य पादेन कण्ठे चोरसि तेजसा। तथैव मारयामास विनर्द्दन्तमरिन्दमम् ॥ ३४ ॥ युधामन्युश्च संप्राप्तो मत्वा तं रक्षसा हतम्। गदामुद्यम्य वेगेन हृदि द्रौणिमताड़यत् ॥ ३५ ॥ तमभिद्रुत्य जग्राह क्षितौ चैनमताड़यत्। विस्फुरन्तञ्च पशुवत्तथैवैनममारयत् ॥ ३६ ॥ तथा स वीरो हत्वा तं ततोऽन्यान् समुपाद्रवत्। संसुप्तानेव राजेन्द्र तत्र तत्र महारथान् ॥ ३७ ॥ स्फुरतो वेपमानांश्च शमितेव पशूनमखे। ततो निस्त्रिंशमादाय जघानान्यान् पृथग्जनान् ॥ ३८ ॥ भागशो विचरन्मार्गानसियुद्ध-

विशारदः। तथैव गुल्मे संप्रेच्य शयानान्मध्यगौल्मिकान्। श्रान्ता-न्नरस्तायुधान् सर्वान् चणेनैव व्यपोथयत् ॥ ३९ ॥ योधानश्वान् द्विपांश्चैव प्राच्छिनत् स वरासिना। रुधिरोचितसर्वाङ्गः कालसृष्ट इवान्तकः ॥ ४० ॥ विस्फुरद्भिश्च तैर्द्रौणिर्निस्त्रिंशस्योद्यमेन च। आचेपणेन चैवासेस्त्रिधा रक्तोचितोऽभवत् ॥ ४१ ॥ तस्य लोहित सिक्तस्य दीप्तखड्गस्य युध्यतः। अमानुष इवाकारोबभौ परम-भीषणः ॥ ४२ ॥ ये त्वजाग्रत कौरव्य तेऽपि शब्देन मोहिताः। निरीच्यमाणा अन्योऽन्यं द्रौणिं दृष्ट्वा प्रविव्यथुः ॥ ४३ ॥ तद्रूपं तस्य ते दृष्ट्वा चत्रियाः शत्रुकर्षिणः। राचसं मन्यमानास्तं नय-नानि न्यमीलयन् ॥ ४४ ॥ स घोररूपो व्यचरत् कालवच्छिविरे ततः। अपश्यद्द्रौपदीपुत्रानवशिष्टांश्च सोमकान् ॥ ४५ ॥ तेन शब्देन वित्रस्ता धनुर्हस्ता महारथाः। धृष्टद्युम्नं हतं श्रुत्वा द्रौप-देया विशाम्पते। अवाकिरञ्छरव्रातैर्भारद्वाजमभीतवत् ॥ ४६ ॥ ततस्तेन निनादेन संप्रबुद्धाः प्रभद्रकाः। शिलीमुखैः शिखण्डी च द्रोणपुत्रं समार्द्दयन् ॥ ४७ ॥ भारद्वाजः स तान् दृष्ट्वा शरवर्षाणि वर्षतः। ननाद बलवन्नादं जिघांसुस्तान्महारथान् ॥ ४८ ॥ ततः परमसंक्रुद्धः पितुर्बधमनुस्मरन्। अवरुह्य रथोपस्थात्त्वरमाणो-ऽभिदुद्रुवे ॥ ४९ ॥ सहस्रचन्द्रं विमलं गृहीत्वा चर्म्म संयुगे। खड्गञ्च विपुलं दिव्यं जातरूपपरिष्कृतम्। द्रौपदेयानभिद्रुत्य खड्गेन व्यधमद्बली ॥ ५० ॥ ततः स नरशार्दूल प्रतिविन्ध्यं महाहवे। कुचिदेशेऽवधीद्राजन् स हतो न्यपतद्भुवि ॥ ५१ ॥ प्रासेन विद्ध्वा द्रौणिन्तु सुतसोमः प्रतापवान्। पुनश्चासिं समुद्यम्य द्रोणपुत्रमुपाद्रवत् ॥ ५२ ॥ सुतसोमस्य सासिं तं बाहुं छित्त्वा नरर्षभ। पुनरप्याहनत् पार्श्वे स भिन्नहृदयोऽपतत् ॥ ५३ ॥ नाकुलिस्तु शतानीको रथचक्रेण वीर्य्यवान्। दोर्भ्यामुत्चिप्य वेगेन वचस्येनमताड़यत् ॥ ५४ ॥ अताड़यच्छतानीकं मुक्तचक्रं

द्विजस्तु सः । स विह्वलो ययौ भूमिं ततोऽस्यापाहरच्छिरः ॥५५॥
श्रुतकर्मा तु परिघं गृहीत्वा समताड़यत् । अभिद्रुत्य ययौ द्रौणिं
सव्ये सफलके भृशम ॥ ५६ ॥ स तु तं श्रुतकर्माणमास्ये जघ्ने वरा-
सिना । स हतो न्यपतद्भूमौ विमूढ़ो विकृताननः ॥ ५७ ॥ तेन
शब्देन वीरस्तु श्रुतकीर्त्तिर्महारथः । अश्वत्थामानमासाद्य शर-
वर्षैरवाकिरत् ॥ ५८ ॥ तस्यापि शरवर्षाणि चर्मणा प्रतिवार्य्य सः ।
सकुण्डलं शिरः कायाद्भ्राजमानमपाहरत् ॥ ५९ ॥ ततो भीष्म-
निहन्तारं सह सर्वैः प्रभद्रकैः । अहनत् सर्वतो वीरं नानाप्रह-
रणैर्बली । शिलीमुखेन चाप्येनं भ्रुवोर्मध्ये समार्पयत् ॥ ६० ॥
स तु क्रोधसमाविष्टो द्रोणपुत्रो महाबलः । शिखण्डिनं समासाद्य
द्विधा चिच्छेद सोऽसिना ॥ ६१ ॥ शिखण्डिनं ततो हत्वा क्रोधा-
विष्टः परन्तपः । प्रभद्रकगणान् सर्वानभिदुद्राव वेगवान् । यच्च
शिष्टं विराटस्य बलन्तु भृशमाद्रवत् ॥ ६२ ॥ द्रुपदस्य च पुत्राणां
पौत्राणां सुहृदामपि । चकार कदनं घोरं दृष्ट्वा दृष्ट्वा महाबलः
॥ ६३ ॥ अन्यानन्यांश्च पुरुषानभिसृत्याभिसृत्य च । न्यकृन्तदसिना
द्रौणिरसिमार्गविशारद ॥ ६४ ॥ कालीं रक्तास्यनयनां रक्त-
माल्यानुलेपनाम् । रक्ताम्बरधरामेकां पाशहस्तां कुटुम्बिनीम्
॥ ६५ ॥ ददृशुः कालरात्रिन्ते गायमानामवस्थिताम् । नराश्व-
कुञ्जरान् पाशैर्बद्धा घोरैः प्रतस्थुषीम् ॥ ६६ ॥ हरन्तीं विविधान्
प्रेतान् पाशबद्धान् विमूर्द्धजान् । तथैव च सदा राजन्नयस्तशस्त्रान्
महारथान् ॥ ६७ ॥ स्वप्ने सुप्तान्नयन्तीं तां रात्रिष्वन्यासु मारिष ।
ददृशुर्योधमुख्यास्ते घ्नन्तं द्रौणिञ्च सर्वदा ॥ ६८ ॥ यतः प्रभृति
संग्रामः कुरुपाण्डवसेनयोः । ततः प्रभृति तां कन्यामपश्यन् द्रौणि-
मेव च ॥ ६९ ॥ तांस्तु दैवहतान् पूर्वं पश्चाद्द्रौणिर्न्यपातयत् ।
त्रासयन् सर्वभूतानि विनदन् भैरवान्नरान् ॥ ७० ॥ तदनुस्मृत्य ते
वीरा दर्शनं पूर्वकालिकम् । इदं तदित्यमन्यन्त दैवेनोपनिपी-

ड़िताः ॥ ७१ ॥ ततस्तेन निनादेन प्रत्यबुध्यन्त धन्विनः। शिविरे पाण्डवेयानां शतशोऽथ सहस्रशः ॥ ७२ ॥ सोऽच्छिनत् कस्यचित् पादौ जघनञ्चैव कस्यचित्। कांश्चिद्बिभेद पार्श्वेषु कालसृष्ट इवान्तकः ॥ ७३ ॥ अत्युग्रप्रतिपिष्टैश्च नदद्भिश्च भृशातुरैः। गजाश्वमथितैश्चान्यैर्मही कीर्णाभवत् प्रभो ॥ ७४ ॥ क्रोशतां किमिदं कोऽयं कः शब्दः किन्नु किं कृतम्। एवं तेषां तदा द्रौणिरन्तकः समपद्यत ॥ ७५ ॥ अपेतशस्त्रसन्नाहान् सन्नद्धान् पाण्डुसृञ्जयान्। प्राहिणोन्मृत्युलोकाय द्रौणिः प्रहरतांवरः ॥ ७६ ॥ ततस्तच्छब्दवित्रस्ता उत्पतन्तो भयातुराः। निद्रान्धा नष्टसंज्ञाश्च तत्र तत्र निलिल्यिरे ॥ ७७ ॥ ऊरुस्तम्भगृहीताश्च कश्मलाभिहतौजसः। विनदन्तो भृशं त्रस्ताः समासीदन् परस्परम् ॥ ७८ ॥ ततो रथं पुनर्द्रौणिरास्थितो भीमनिस्वनम्। धनुष्पाणिः शरैरन्यान् प्रेषयद्वै यमक्षयम् ॥ ७९ ॥ पुनरुत्पततश्चापि दूरादपि नरोत्तमान्। शूरान् संपततश्चान्यान् कालरात्रै न्यवेदयत् ॥ ८ ॥ तथैव स्यन्दनाग्रेण प्रमथन् स विधावति। शरवर्षैश्च विविधैरवर्षच्छात्रवांस्तत ॥ ८१ ॥ पुनश्च सुविचित्रेण शतचन्द्रेण चर्मणा। तेन चाकाशवर्णेन तदाचरत सोऽसिना ॥ ८२ ॥ तथा स शिविरं तेषां द्रौणिराहवदुर्मदः। व्यक्षोभयत राजेन्द्र महाह्रदमिव द्विपः ॥ ८३ ॥ उत्पेतुस्तेन शब्देन योधा राजन् विचेतसः। निद्रार्त्ताश्च भयार्त्ताश्च व्यधावन्त ततस्ततः ॥ ८४ ॥ विस्वरं चुक्रुशुश्चान्ये बह्वबद्धं तथावदन्। न च स्म प्रत्यपद्यन्त शस्त्राणि वसनानि च ॥ ८५ ॥ विमुक्तकेशाश्चाप्यन्ये नाभ्यजानन् परस्परम्। उत्पतन्तोऽपतञ्छ्रान्ताः केचित्तत्राभ्रमंस्तथा ॥ ८६ ॥ पुरीषमसृजन् केचित् केचिन्मूत्रं प्रसुस्रुवुः। बन्धनानि च राजेन्द्र सञ्छिद्य तुरगा द्विपाः ॥ ८७ ॥ समं पर्य्यपतंश्चान्ये कुर्वन्तो महदाकुलम्। तत्र केचिन्नरा भीता व्यलीयन्त महीतले। तथैव

तान्निपतितानपिंषन् गजवाजिनः ॥ ८८ ॥ तस्मिंस्तथा वर्त्तमाने रक्षांसि पुरुषर्षभ । हृष्टानि व्यनदन्नुच्चैर्मुदा भरतसत्तम ॥८९॥ स शब्दः पूरितो राजन् भूतसंघैर्मुदायुतैः । अपूरयद्दिशः सर्वा दिवञ्चातिमहास्वनः ॥ ९० ॥ तेषामार्त्तस्वरं श्रुत्वा वित्रस्ता गजवाजिनः । मुक्ताः पर्य्यपतन्राजन् मृद्नन्त शिविरे जनान् ॥ ९१ ॥ तैस्तत्र परिधावद्भिश्चरणोदीरितं रजः । अकरोच्छिविरे तेषां रजन्यां द्विगुणं तमः ॥ ९२ ॥ तस्मिंस्तमसि सञ्जाते प्रमूढ़ाः शिविरे जनाः । नाजानन् पितरः पुत्रान् भ्रातॄन् भ्रातर एव च ॥ ९३ ॥ गजा गजानतिक्रम्य निर्मनुष्यान् हया हयान् । अताड़यं स्तथाभञ्जंस्तथामृद्नंश्च भारत ॥ ९४ ॥ ते भग्नाः प्रपतन्ति स्म निघ्नन्तश्च परस्परम् । न्यपातयंस्तथा चान्यान् पातयित्वा तदापिषन् ॥ ९५ ॥ विचेतसः सनिद्राश्च तमसा चावृता नराः । जघ्नुः स्वानेव तत्राथ कालेनाभिप्रचोदिताः ॥ ९६ ॥ त्यक्त्वा द्वाराणि च द्वास्थास्तथा गुल्मानि गौल्मिकाः । प्राद्रवन्त यथाशक्ति कान्दिशीका विचेतसः ॥ ९७ ॥ विप्रनष्टाश्च तेऽन्योन्यं नाजानन्तो तया विभो । क्रोशन्तस्तात पुत्रेति दैवोपहतचेतसः ॥ ९८ ॥ पलायतां दिशस्तेषां तानप्युत्सृज्य बान्धवान् । गोत्रनामभिरन्योन्यमाक्रन्दन्त ततो जनाः ॥ ९९ ॥ हाहाकारञ्च कुर्वाणाः पृथिव्यां शेरते परे । तान् वुद्ध्वा रणमध्येऽसौ द्रोणपुत्रो न्यपातयत् ॥१००॥ तत्रापरे वध्यमाना मुहुर्मुहुरचेतसः । शिविरान्निष्पतन्ति स्म क्षत्रिया भयपीड़िताः ॥ १०१ ॥ तांश्च निष्पततस्तस्ताच्छिविराज्जीवितैषिणः । कृतवर्म्मा कृपश्चैव द्वारदेशे निजघ्नतुः ॥१०२॥ विशस्त्रयन्त्रकवचान्मुक्तकेशान् कृताञ्जलीन् । वेपमानान् क्षितौ भीतान्नैव कांश्चिदमुञ्चताम् ॥ १०३ ॥ नामुच्यत तयोः कश्चिन्निष्क्रान्तः शिविराद्बहिः । कृपस्य च महाराज हार्द्दिक्यस्य च दुर्मतेः ॥ १०४ ॥ भूयश्चैव चिकीर्षन्तौ द्रोणपुत्रस्य तौ प्रियम् ।

त्रिषु देशेषु ददृशुः शिबिरस्य कृतागनम् ॥ १०५ ॥ ततः प्रकाशे शिबिरे खड़्गेन पितृनन्दनः। अश्वत्थामा महाराज व्यचरत् कृतहस्तवत् ॥ १०६ ॥ कांश्चिदापततो वीरानपरांश्चैव धावतः। व्ययोजयत खड़्गेन प्राणैर्द्विजवरोत्तमः ॥ १०७ ॥ कांश्चिद्योधान् स खड़्गेन मध्ये संछिद्य वीर्य्यवान्। अपातयद्द्रोणपुत्रः संरब्धस्तिलकाण्डवत् ॥ १०८ ॥ विनदद्भिर्भृशायस्तैर्नराश्वद्विरदोत्तमैः। पतितैरभवत् कीर्णा मेदिनी भरतर्षभ ॥ १०९ ॥ मानुषाणां सहस्रेषु हतेषु पतितेषु। उदतिष्ठन् कवन्धानि बहून्युत्थाय चापतन् ॥ ११० ॥ सायुधान् साङ्गदान् बाहून्विचकर्त्त शिरांसि च। हस्तिहस्तोपमानूरून् हस्तान् पादांश्च भारत ॥ १११ ॥ पृष्ठछिन्नान् शिरश्छिन्नान् पार्श्वच्छिन्नांस्तथापरान्। स महात्माकरोद्द्रौणिः कांश्चिच्चापि पराङ्मुखान् ॥ ११२ ॥ मध्यदेशे नरानन्यांश्चिच्छेदान्यांश्च कर्णतः। अंसदेशे निहत्यान्यान् काये प्रावेशयच्छिरः ॥ ११३ ॥ एवं विचरतस्तस्य निघ्नतः सुबहून्नरान्। तमसा रजनी घोरा बभौ दारुणदर्शना ॥ ११४ ॥ किञ्चित् प्राणैश्च पुरुषैर्हतैश्चान्यैः सहस्रशः। बहुना च गजाश्वेन भूरभूद्भीमदर्शना ॥ ११५ ॥ यक्षरक्षःसमाकीर्णे रथाश्वद्विपदारुणे। क्रुद्धेन द्रोणपुत्रेण संच्छिन्नाः प्रापतन् भुवि ॥ ११६ ॥ भ्रातॄनन्ये पितॄनन्ये पुत्रानन्ये विचुक्रुशुः। केचिदूचुर्न तत् क्रुद्धैर्धार्त्तराष्ट्रैः कृतं रणे ॥ ११७ ॥ यत् कृतं नः प्रसुप्तानां रक्षोभिः क्रूरकर्मभिः। असान्निध्याद्धि पार्थानामिदं नः कदनं कृतम् ॥ ११८ ॥ न देवासुरगन्धर्वैर्न यक्षैर्न च राक्षसैः। शक्यो विजेतुं कौन्तेयो गोप्ता यस्य जनार्द्दनः ॥ १०९ ॥ ब्रह्मण्यः सत्यवाग्दान्तः सर्वभूतानुकम्पकः। न स सुप्तं प्रमत्तं वा न्यस्तशस्त्रं कृताञ्जलिम्। धावन्तं मुक्तकेशम्वा हन्ति पार्थो धनञ्जयः ॥ १२० ॥ तदिदं नः कृतं घोरं रक्षोभिः क्रूरकर्मभिः। इति लालप्यमानाः स्म शेरते

बहवो जनाः ॥ १२१ ॥ स्तनताञ्च मनुष्याणामपरेषाञ्च कूजताम् । ततो मुहूर्त्तात् प्राशाम्यत् स शब्दस्तुमुलो महान् ॥१२२॥ शोणित-व्यतिषित्तायां वसुधायाञ्च भूमिप। तद्रजस्तुमुलं घोरं चणेना-न्तरधीयत ॥ १२३ ॥ सञ्चेष्टमानानुद्दिग्नान्निरुत्साहान् सहस्रशः । न्यपातयन्नरान् क्रुद्धः पशून् पशुपतिर्यथा ॥ १२४ ॥ अन्योन्यं संपरिष्वज्य शयानान् द्रवतोऽपरान् । संलीनान् युध्यमानांश्च सर्वान् द्रौणिरपोथयत् ॥ १२५ ॥ दह्यमानान् हुताशेन बध्य-मानांश्च तेन ते। परस्परं तदा योधाननयद्यमसादनम् ॥ २६ ॥ तस्या रजन्यास्त्वर्द्धेन पाण्डवानां महद्बलम् । गमयामास राजेन्द्र द्रौणिर्यमनिवेशनम् ॥ १२७ ॥ निशाचराणां सत्त्वानां रात्रिः सा हर्षवर्द्धनी। आसीन्नरगजाश्वानां रौद्री चयकरी भृशम् ॥ १२८ ॥ तत्रादृश्यन्त रचांसि पिशाचाश्च पृथग्विधाः। खादन्तो नरमांसानि पिबन्तः शोणितानि च ॥ १२९ ॥ करालाः पिङ्गला रौद्राः शैलदन्ता रजस्वलाः । जटिला दीर्घसक्थाश्च पञ्चपादा महोदराः ॥ १३० ॥ पश्चादङ्गुलयो रूचा विरूपा भैरवस्वनाः । घण्टाजालावबद्धाश्च नीलकण्ठा विभीषणाः ॥ १३१ ॥ सपुत्रदाराः सुक्रूराः सुदुर्दृशा सुनिर्घृणाः । विविधानि च रूपाणि तत्रा-दृश्यन्त रचसाम् ॥ १३२ ॥ पीत्वा च शोणितं हृष्टाः प्रानृत्यन्-गणशः परे। इदं परमिदं मेध्यमिदं स्वाद्विति चाब्रुवन् ॥ १३३ ॥ मेदोमज्जास्थिरक्तानां वसानाञ्च भृशाशिताः । परमांसानि खादन्तः क्रव्यादा मांसजीविनः ॥ १३४ ॥ वसाश्चैवापरे पीत्वा पर्य्यधावन् विकुचिकाः। नानावक्त्रास्तथा रौद्राः क्रव्यादाः पिशि-ताशिनः ॥ १३५ ॥ अयुतानि च तत्रासन् प्रयुतान्यर्वुदानि च। रचसां घोररूपाणां महतां क्रूरकर्मणाम् ॥ १३६ ॥ मुदितानां वितृप्तानां तस्मिन्महति वैशसे। समेतानि बहून्यासन् भूतानि च जनाधिप ॥ १३७ ॥ प्रत्यूषकाले शिबिरात् प्रतिगन्तुमियेष सः

॥ १३८ ॥ नृणोणितावसिक्तस्य द्रौणेरासीदसित्सरुः । पाणिना सह संश्लिष्ट एकीभूत इव प्रभो ॥ १३९ ॥ दुर्गमां पदवीं गत्वा विरराज जनक्षये । युगान्ते सर्वभूतानि भस्म कृत्वेव पावकः ॥ १४० ॥ यथाप्रतिज्ञं तत् कर्म कृत्वा द्रौणायनिः प्रभो । दुर्गमां पदवीं गच्छन् पितुरासीद्गतज्वरः ॥ १४१ ॥ यथैव संसुप्तजने शिबिरे प्राविशन्निशि । तथैव हत्वा निःशब्दे निश्चक्राम नरर्षभ ॥ १४२ ॥ निष्क्रम्य शिबिरात्तस्मात्ताभ्यां सङ्गम्य वीर्य्यवान् । आचख्यौ कर्म तत् सर्वं हृष्टः संहर्षयन् विभो ॥ १४३ ॥ तावप्याचख्यतुस्तस्मै प्रियं प्रियकरौ तदा । पाञ्चालान् सृञ्जयांश्चैव विनिकृत्तान् सहस्रशः । प्रीत्या चोच्चैरुदक्रोशंस्तथैवास्फोटयंस्तलान् ॥ १४४ ॥ एवं विधा हि सा रात्रि सोमकानां जनक्षये । प्रसुप्तानां प्रमत्तानामासीत् सुभृशदारुणा ॥ १४५ ॥ असंशयं हि कालस्य पर्य्यायो दुरतिक्रमः । तादृशा निहता यत्र कृत्वास्माकं जनक्षयम् ॥ १४६ ॥

धृतराष्ट्र उवाच । प्रागेव सुमहत् कर्म द्रौणिरेतन्महारथः । नाकरोदीदृशं कस्मान्मत्पुत्रविजये धृतः ॥ १४७ ॥ अथ कस्माद्धते क्षुद्रे कर्मेदं कृतवानसौ । द्रोणपुत्रो महेष्वासस्तन्मे संशितुमर्हसि ॥ १४८ ॥

सञ्जय उवाच । तेषां नूनं भयान्नासौ कृतवान् कुरुनन्दन । असान्निध्याद्धि पार्थानां केशवस्य च धीमतः । सात्यकेश्चापि कर्मेदं द्रोणपुत्रेण साधितम् ॥ १४९ ॥ को हि तेषां समक्षं तान् हन्यादपि मरुत्पतिः । एतदीदृशकं वृत्तं राजन् सुप्तजने विभो ॥१५०॥ ततो जनक्षयं कृत्वा पाण्डवानां महात्ययम् । दिष्ट्या दिष्ट्येति चान्योन्यं समेत्योचुर्महारथाः ॥ १५१ ॥ पर्य्यष्वजत तौ द्रौणिस्ताभ्यां संप्रतिनन्दितः । इदं हर्षात्तु सुमहदाददे वाक्यमुत्तमम् ॥ १५२ ॥ पाञ्चाला निहताः सर्वे द्रौपदेयाश्च सर्वशः । सोमका

मत्स्यशेषाश्च सर्वे विनिहता मया ॥ १५३ ॥ इदानीं कृतकृत्याः स्म याम तत्रैव मा चिरम्। यदि जीवति नो राजा तस्मै संशामहे प्रियम् ॥ १५४ ॥

इति सौप्तिकपर्वणि पाञ्चालादिवधेऽष्टमोऽध्यायः ॥ ८ ॥

---

सञ्जय उवाच। ते हत्वा सर्वपाञ्चालान् द्रौपदेयांश्च सर्वशः। आगच्छन् सहितास्तत्र यत्र दुर्य्योधनो हतः ॥ १ ॥ गत्वा चैनमपश्यन्त किञ्चित्प्राणं जनाधिपम्। ततो रथेभ्यः प्रस्कन्द्य परिवव्रुस्तवात्मजम् ॥ २ ॥ तं भग्नसक्थं राजेन्द्र कृच्छ्रप्राणमचेतनम्। वमन्तं रुधिरं वक्त्रादपश्यन् वसुधातले ॥ ३ ॥ वृतं समन्ताद्बहुभिः श्वापदैर्घोरदर्शनैः। शालावृकगणैश्चैव भक्षयिष्यद्भिरन्तिकात् ॥ ४ ॥ निवारयन्तं कृच्छ्रात्तान् श्वापदांश्च चिखादिषून्। विचेष्टमानं मह्याञ्च सुभृशं गाढ़वेदनम् ॥ ५ ॥ तं शयानं तथा दृष्ट्वा भूमौ स्वरुधिरोक्षितम्। हतशिष्टास्त्रयो वीराः शोकार्त्ताः पर्य्यवारयन्। अश्वत्थामा कृपश्चैव कृतवर्मा च सात्त्वतः ॥ ६ ॥ तैस्त्रिभिः शोणितादिग्धैर्निश्वसद्भिर्महारथैः। शुशुभे संवृतो राजा वेदी त्रिभिरिवाग्निभिः ॥७॥ ते तं शयानं संप्रेक्ष्य राजानमतथोचितम्। अविषह्येन दुःखेन ततस्ते रुरुदुस्त्रयः ॥ ८ ॥ ततस्तु रुधिरं हस्तैर्मुखान्निर्मृज्य तस्य हि। रणे राज्ञः शयानस्य कृपणं पर्य्यदेवयन् ॥ ९ ॥

कृप उवाच। न दैवस्यातिभारोऽस्ति यदयं रुधिरोक्षितः। एकादशचमूभर्त्ता शेते दुर्य्योधनो हतः ॥ १० ॥ पश्य चामीकराभस्य चामीकरविभूषिताम्। गदाङ्गदाप्रियस्येमां समीपे पतितां भुवि ॥ ११ ॥ इयमेनं गदा शूरं न जहाति रणे रणे। स्वर्गायापि व्रजन्तं हि न जहाति यशस्विनम् ॥ १२ ॥ पश्येमां सह

वीरेण जाम्बूनदविभूषिताम् । शयानां शयने हर्म्ये भार्य्यां प्रीतिमतीमिव ॥ १३ ॥ योऽयं मूर्द्धाभिषिक्तानामग्रे यातः परन्तपः । स हतो ग्रसते पांशून् पश्य कालस्य पर्य्ययम् ॥ १४ ॥ येनाजौ निहतो भूमावशेरत हतद्विषः । स भूमौ निहतः शेते कुरुराज परैरयम् ॥ १५ ॥ भयान्नमन्ति राजानो यस्य स्म शतसंघशः । स वीरशयने शेते क्रव्याद्भिः परिवारितः ॥ १६ ॥ उपासन्त द्विजाः पूर्वमर्थहेतोर्यमीश्वरम् । उपासते च तं ह्यद्य क्रव्यादा मांसहेतवः ॥ १७ ॥

सञ्जय उवाच । तं शयानं कुरुश्रेष्ठं ततो भरतसत्तम । अश्वत्थामा समालोक्य करुणं पर्य्यदेवयत् ॥ १८ ॥ आहुस्त्वां राजशार्द्दूल मुख्यं सर्वधनुष्मताम् । धनाध्यक्षोपमं युद्धे शिष्यं सङ्कर्षणस्य च ॥ १९ ॥ कथं विवरमद्राक्षीद्भीमसेनस्तवानघ । बलिनं कृतिनं नित्यं स च पापात्मवान्नृप ॥ २० ॥ कालो नूनं महाराज लोकेऽस्मिन् बलवत्तरः । पश्यामो निहतं त्वाञ्च भीमसेनेन संयुगे ॥ २१ ॥ कथं त्वां सर्वधर्मज्ञं क्षुद्रः पापो वृकोदरः । निकृत्या हतवान् मन्दो नूनं कालो दुरत्ययः ॥ २२ ॥ धर्म्मयुद्धे ह्यधर्म्मेण समाहूयौजसा मृधे । गदया भीमसेनेन निर्भग्ने सक्थिनी तव ॥ २३ ॥ अधर्म्मेण हतस्याजौ मृद्यमानं पदा शिरः । य उपेक्षितवान् क्षुद्रं धिक्तमस्तु युधिष्ठिरम् ॥ २४ ॥ युद्धेष्वपवदिष्यन्ति योधा नूनं वृकोदरम् । यावत् स्थास्यन्ति भूतानि निकृत्या ह्यसि पातितः ॥ २५ ॥ ननु रामोऽब्रवीद्राजंस्त्वां सदा यदुनन्दनः । दुर्य्योधनसमो नास्ति गदया इति वीर्य्यवान् ॥ २६ ॥ श्लाघते त्वां हि वार्ष्णेयो राजन् संसत्सु भारत । सुशिष्यो मम कौरव्यो गदायुद्ध इति प्रभो ॥ २७ ॥ यां गतिं क्षत्रियस्याहुः प्रशस्तां परमर्षयः । हतस्याभिमुखस्याजौ प्राप्तस्त्वमसि तां गतिम् ॥ २८ ॥ दुर्य्योधन न शोचामि त्वामहं पुरुषर्षभ । हतपुत्रौ तु

शोचामि गान्धारीं पितरञ्च ते॥ २९॥ भिक्षुकौ विचरिष्येते शोचन्तौ पृथिवीमिमाम्। धिगस्तु कृष्णं वार्ष्णेयमर्जुनञ्चापि दुर्म्मतिम्॥ ३०॥ धर्मज्ञमानिनौ यौ त्वां वध्यमानमुपेक्षताम्। पाण्डवाश्चापि ते सर्व्वे किं वक्ष्यन्ति नराधिप। कथं दुर्य्योधनोऽस्माभिर्हत इत्यनपत्रपाः॥ ३१॥ धन्यस्त्वमसि गान्धारे यस्त्वमायोधने हतः। प्रयातोऽभिमुखः शत्रून् धर्म्मेण पुरुषर्षभ॥ ३२॥ हतपुत्रा हि गान्धारी निहतज्ञातिबान्धवा। प्रज्ञाचक्षुश्च दुर्द्धर्षः कां गतिं प्रतिपत्स्यते॥ ३३॥ धिगस्तु कृतवर्म्माणं मां कृपञ्च महारथम्। ये वयं न गताः स्वर्गं त्वां पुरस्कृत्य पार्थिवम्॥३४॥ दातारं सर्व्वकामानां रक्षितारं प्रजाहितम्। यद्वयं नानुगच्छामस्त्वां धिगस्मान्नराधमान्॥ ३५॥ कृपस्य तव वीर्य्येण मम चैव पितुश्च मे। सभृत्यानां नरव्याघ्र रत्नवन्ति गृहाणि च॥ ३६॥ भवत्प्रसादादस्माभिः समित्रैः सह बान्धवैः। अवाप्ता क्रतवो मुख्या बहवो भूरिदक्षिणाः॥ ३७॥ कुतश्चापीदृशं पापः प्रवर्त्तिष्यामहे वयम्। यादृशेन पुरस्कृत्य त्वं गतः सर्व्वपार्थिवान्॥ ३८॥ वयमेव त्रयो राजन् गच्छन्तं परमां गतिम्। यद्वै त्वां नानुगच्छामस्तेन तप्स्यामहे वयम्॥ ३९॥ त्वत्सङ्गहीना हीनार्थाः स्मरन्तः सुकृतस्य ते। किन्नाम तद्भवेत् कर्म्म येन त्वां न व्रजाम वै॥ ४०॥ दुःखं नूनं कुरुश्रेष्ठ चरिष्याम महीमिमाम्। हीनानां नस्त्वया राजन् कुतः शान्तिः कुतः सुखम्॥ ४१॥ गत्वैतस्तु महाराज समेत्य च महारथान्। यथाश्रेष्ठं यथाज्येष्ठं पूजयेर्व्वचनान्मम॥ ४२॥ आचार्य्यं पूजयित्वा च केतुं सर्व्वधनुष्मताम्। हतं मयाद्य शंसेथा धृष्टद्युम्नं नराधिप॥ ४३॥ परिष्वजेथा राजानं वाह्लीकं सुमहारथम्। सैन्धवं सोमदत्तञ्च भूरिश्रवसमेव च॥४४॥ तथा पूर्व्वगतानन्यान् स्वर्गे पार्थिवसत्तमान्। अस्मद्वाक्यात् परिष्वज्य पृच्छेथास्त्वमनामयम्॥ ४५॥

सञ्जय उवाच। इत्येवमुक्त्वा राजानं भग्नसक्थमचेतनम्। अश्वत्थामा समुद्वीक्ष्य पुनर्वचनमब्रवीत् ॥ ४६ ॥ दुर्योधन जीवसि त्वं वाक्यं श्रोत्रसुखं शृणु। सप्त पाण्डवतः शेषा धार्त्तराष्ट्रास्त्रयो वयम् ॥ ४७ ॥ ते चैव भ्रातरः पञ्च वासुदेवोथ सात्यकिः। अहञ्च कृतवर्म्मा च कृपः शारद्वतस्तथा ॥ ४८ ॥ द्रौपदेया हताः सर्व्वे धृष्टद्युम्नस्य चात्मजाः। पाञ्चाला निहताः सर्व्वे मत्स्यशेषश्च भारत ॥ ४९ ॥ कृते प्रतिकृतं पश्य हतपुत्रा हि पाण्डवाः। सौप्तिके शिविरं तेषां हतं सनरवाहनम् ॥ ५० ॥ मया च पापकर्म्मासौ धृष्टद्युम्नो महीपते। प्रविश्य शिविरं रात्रौ पशुमारेण मारितः ॥ ५१ ॥ दुर्योधनस्तु तां वाचं निशम्य मनसः प्रियाम्। प्रतिलभ्य पुनश्चेत इदं वचनमब्रवीत् ॥ ५२ ॥ न मेऽकरोत्तद्गाङ्गेयो न कर्णो न च ते पिता। यत्त्वया कृपभोजाभ्यां सहितेनाद्य मे कृतम् ॥ ५३ ॥ स च सेनापतिः क्षुद्रो हतः सार्द्धं शिखण्डिना। तेन मन्ये मघवता सममात्मानमद्य वै ॥ ५४ ॥ स्वस्ति प्राप्नुत भद्रं वः स्वर्गे नः सङ्गमः पुनः। इत्येवमुक्त्वा तूष्णीं स कुरुराजो महामनाः ॥ ५५ ॥ प्राणानुदसृजद्वीरः सुहृदां दुःखमुत्सृजन्। आक्रामत दिवं पुण्यां शरीरं क्षितिमाविशत् ॥ ५६ ॥ एवं ते निधनं यातः पुत्रो दुर्योधनो नृप। अग्रे यात्वा रणे शूरः पश्चाद्विनिहतः परैः ॥ ५७ ॥ तथैव ते परिष्वक्ताः परिष्वज्य च ते नृपम्। पुनः पुनः प्रेक्षमाणाः स्वकानारुरुहू रथान् ॥५८॥ इत्यहं द्रोणपुत्रस्य निशम्य करुणां गिरम्। प्रत्यूषकाले शोकार्त्तः प्राद्रवन्नगरं प्रति ॥ ५९ ॥ एवमेष क्षयो वृत्तः कुरुपाण्डवसेनयोः। घोरो विशसनो रौद्रो राजन् दुर्म्मन्त्रिते तव ॥ ६० ॥ तव पुत्रे गते स्वर्गं शोकार्त्तस्य ममानघ। ऋषिदत्तं प्रनष्टं तद्दिव्यदर्शित्वमद्य वै ॥ ६१ ॥

वैशम्पायन उवाच। इति श्रुत्वा स नृपतिः पुत्रस्य निधनं तदा। निश्वस्य दीर्घमुष्णञ्च ततश्चिन्तापरोऽभवत् ॥ ६२ ॥

इति सौप्तिकपर्व्वणि दुर्य्योधनप्राणत्यागे नवमोऽध्यायः ॥ ९ ॥

---

## अथ ऐषिकपर्व्वारम्भः।

वैशम्पायन उवाच। तस्यां रात्र्यां व्यतीतायां धृष्टद्युम्नस्य सारथिः। शशंस धर्म्मराजाय सौप्तिके कदनं कृतम् ॥ १ ॥

सूत उवाच। द्रौपदेया हता राजन् द्रुपदस्यात्मजैः सह। प्रमत्ता निशि विश्वस्ताः स्वपन्तः शिविरे स्वके ॥ २ ॥ कृतवर्म्मणा नृशंसेन गौतमेन कृपेण च। अश्वत्थाम्ना च पापेन हतं वः शिविरं निशि ॥ ३ ॥ एतैर्नरगजाश्वानां प्रासशक्तिपरश्वधैः। सहस्राणि निकृन्तद्भिर्निःशेषं ते बलं कृतम् ॥ ४ ॥ छिद्यमानस्य महतो वनस्येव परश्वधैः। शुश्रुवे स महान् शब्दो बलस्य तव भारत ॥ ५ ॥ अहमेकोऽवशिष्टस्तु तस्मात् सैन्यान्महीपते। मुक्तः कथञ्चिद्धर्म्मात्मन् व्यग्रस्य कृतवर्म्मणः ॥ ६ ॥ तच्छ्रुत्वा वाक्यमशिवं कुन्तीपुत्रो युधिष्ठिरः। पपात मह्यां दुर्द्धर्षः पुत्रशोकसमन्वितः ॥ ७ ॥ तं पतन्तमभिक्रम्य परिजग्राह सात्यकिः। भीमसेनोऽर्जुनश्चैव माद्रीपुत्रौ च पाण्डवौ ॥ ८ ॥ लब्धचेतास्तु कौन्तेयः शोकविह्वलया गिरा। जित्वा शत्रून् जितः पश्चात् पर्य्यदेवयदार्त्तवत् ॥ ९ ॥ दुर्व्विदा गतिरर्थानामपि ये दिव्यचक्षुषः। जीयमाना जयन्त्यन्ये जयमाना वयं जिताः ॥ १० ॥ हत्वा भ्रातॄन् वयस्यांश्च पितॄन् पुत्रान् सुहृद्गणान्। बन्धूनमात्यान् पौत्रांश्च जित्वा सर्व्वान् जिता वयम् ॥११॥ अनर्थो ह्यर्थसङ्काशस्तथानर्थोऽर्थदर्शनः। जयोऽयमजयाकारो जयस्तस्मात् पराजयः ॥ १२ ॥ यज्जित्वा तप्यते पश्चादापन्न इव दुर्म्मतिः। कथं मन्येत विजयं ततो जिततरः

परैः ॥ १३ ॥ येषामर्थाय पापं स्याद्विजयस्य सुहृद्वशैः । निर्जितैरप्रमत्तैर्हि विजिता जितकाशिनः ॥ १४ ॥ कर्णिमालीकदंष्ट्रस्य खड्गजिह्वस्य संयुगे । चापव्यात्तास्यरौद्रस्य ज्यातलस्वननादिनः ॥ १५ ॥ क्रुद्धस्य नरसिंहस्य संग्रामेष्वपलायिनः । ये व्यमुच्यन्त कर्णस्य प्रमादात्त इमे हताः ॥ १६ रथह्रदं शरवर्षोर्म्मिमन्तं रत्नाचितं वाहनवाजियुक्तम् । शक्त्यृष्टिमीनध्वजनागनक्रं शरासनावर्त्तमहेषुफेनम् ॥ १७ ॥ संग्रामचन्द्रोदयवेगवेलं द्रोणार्णवं ज्यातलनेमिघोषम् । ये तेरुरुच्चावचशस्त्रनौभिस्ते राजपुत्रा निहताः प्रमादात् ॥ १८ ॥ न हि प्रमादात् परमोऽस्ति कश्चिद्वधो नराणामिह जीवलोके । प्रमत्तमर्था हि नरं समन्तात् त्यजन्त्यनर्थाश्च समाविशन्ति ॥ १९ ॥ ध्वजोत्तमाग्रोच्छ्रितधूमकेतुं शरार्च्चिषं कोपमहासमीरम् । महाधनुर्ज्यातलनेमिघोषं तनुत्रनानाविधशस्त्रहोमम् ॥ २० ॥ महाचमूकक्षवराभिपन्नं महाहवे भीष्ममयाग्निदाहम् । ये सेहुरात्तायुधतीक्ष्णवेगं ते राजपुत्रा निहताः प्रमादात् ॥ २१ ॥ न हि प्रमत्तेन नरेण शक्यं विद्या तपः श्रीर्विपुलं यशो वा । पश्याप्रमादेन निहत्य शत्रून् सर्वान्महेन्द्रं सुखमेधमानम् ॥ २२ ॥ इन्द्रोपमान् पार्थिवपुत्रपौत्रान् पश्याविशेषेण हतान् प्रमादात् । तीर्त्वा समुद्रं वणिजः समृद्धाः सन्नाः कुनद्यामिव हेलमानाः ॥ २३ ॥ अमर्षितैर्ये निहताः शयाना निःसंशयं तेऽपि दिवं प्रपन्नाः । कृष्णान्तु शोचामि कथं नु साध्वी शोकार्णवं साद्य विनश्यतीति ॥ २४ ॥ भ्रातॄंश्च पुत्रांश्च हतान्निशम्य पञ्चालराजं पितरञ्च वृद्धम् । ध्रुवं विसंज्ञा पतिता पृथिव्यां सा शेष्यते शोककृशाङ्गयष्टिः ॥ २५ ॥ तच्छोकजं दुःखमपारयन्ती कथं भविष्यत्युचिता सुखानाम् । पुत्रक्षयभ्रातृवधप्रणुन्ना प्रदह्यमानेव हुताशनेन ॥२६॥ इत्येवमार्त्तः परिदेवयन् स राजा कुरूणां नकुलं बभाषे । गच्छानयैनामिह मन्दभाग्यां समातपक्षामिति

राजपुत्रीम् ॥ २७ ॥ माद्रीसुतस्तत् परिमृश्य वाक्यं धर्मेण धर्मं प्रतिमस्य राज्ञः । ययौ रथेनालयमाशु देव्याः पाञ्चालराजस्य च यत्र दाराः ॥ २८ ॥ प्रस्थाप्य माद्रीसुतमाजमीढ़ः शोकार्दितस्तैः सहितः सुहृद्भिः । रोरूयमाणः प्रययौ सुतानामायोधनं भूतगणानुकीर्णम् ॥ २९ ॥ स तत् प्रविश्याशिवमुग्ररूपं ददर्श पुत्रान् सुहृदः सखींश्च । भूमौ शयानान् रुधिरार्द्रगात्रान् विभिन्नदेहान् प्रहृतोत्तमाङ्गान् ॥ ३० ॥ स तांस्तु दृष्ट्वा भृशमार्त्तरूपो युधिष्ठिरो धर्मभृतां वरिष्ठः । उच्चैः प्रचुक्रोश च कौरवाग्र्यः पपात चोर्व्यां सगणो विसंज्ञः ॥ ३१ ॥

इति सौप्तिकपर्वणि ऐषिकपर्वणि युधिष्ठिरानुतापे दशमोऽध्यायः ॥ १० ॥

---

वैशम्पायन उवाच । स दृष्ट्वा निहतान् संख्ये पुत्रान् पौत्रान् सखींस्तथा । महादुःखपरीतात्मा बभूव जनमेजय ॥ १ ॥ ततस्तस्य महान् शोकः प्रादुरासीन्महात्मनः । स्मरतः पुत्रपौत्राणां भ्रातॄणां स्वजनस्य च ॥२०॥ तमश्रुपरिपूर्णाक्षं वेपमानमचेतनम् । सुहृदो भृशसंविग्नाः सान्त्वयाञ्चक्रिरे तदा ॥ ३ ॥ ततस्तस्मिन् क्षणे काल्ये रथेनादित्यवर्चसा । नकुलः कृष्णयासार्द्धमुपायात् परमार्त्तया ॥ ४ ॥ उपप्लव्यं गता सा तु श्रुत्वा सुमहदप्रियम् । तदा विनाशं पुत्राणां सर्वेषां व्यथिताभवत् ॥५॥ कम्पमानेव कदली वातेनाभिसमीरिता । कृष्णा राजानमासाद्य शोकार्त्ता न्यपतद्भुवि ॥ ६ ॥ बभूव वदनं तस्याः सहसा शोककर्षितम् । फुल्लपद्मप्रकाशाक्ष्यास्तमोग्रस्त इवांशुमान् ॥ ७ ॥ ततस्तां पतितां दृष्ट्वा संरब्धो सत्यविक्रमः । बाहुभ्यां परिजग्राह समुत्पत्य वृकोदरः ॥ ८ ॥ सा समाश्वासिता तेन भीमसेनेन भाविनी । रुदती

पाण्डवं कृष्णा सहभ्रातरमब्रवीत् ॥ ९ ॥ दिष्ट्या राजन्नवाप्येमामखिलां भोक्ष्यसे महीम् । आत्मजान् क्षत्रधर्म्मेण श्रुत्वा शूरान्निपातितान् ॥ १० ॥ दिष्ट्या त्वं पार्थ कुशली मत्तमातङ्गगामिनम् । अवाप्य पृथिवीं कृत्स्नां सौभद्रं न स्मरिष्यसि ॥ १० ॥ आत्मजान् क्षत्रधर्म्मेण श्रुत्वा शूरान्निपातितान् । उपप्लव्ये मया सार्द्धं दिष्ट्या त्वं न स्मरिष्यसि ॥ १२ ॥ प्रसुप्तानां वधं श्रुत्वा द्रौणिना पापकर्म्मणा । शोकस्तपति मां पार्थ हुताशन इवाश्रयम् ॥ १३ ॥ तस्य पापकृतो द्रौणेर्न चेदद्य त्वया मृधे । ह्रियते सानुबन्धस्य युधि विक्रम्य जीवितम् ॥१४॥ इहैव प्रायमासिष्ये तन्निबोधत पाण्डवाः । न चेत् फलमवाप्नोति द्रौणि पापस्य कर्म्मणः ॥ १५ ॥ एवमुक्त्वा ततः कृष्णा पाण्डवं प्रत्युपाविशत् । युधिष्ठिरं याज्ञसेनी धर्म्मराजं तपस्विनी ॥१६॥ दृष्ट्वोपविष्टां राजर्षिः पाण्डवो महिषीं प्रियाम् । प्रत्युवाच स धर्म्मात्मा द्रौपदीं चारुदर्शनाम् ॥ १७ ॥ धर्म्म्यं धर्म्मेण धर्म्मज्ञे प्राप्तास्ते निधनं शुभे । पुत्रास्ते भ्रातरश्चैव तान्न शोचितुमर्हसि ॥ १८ ॥ स कल्याणि वनं दुर्गं दूरं द्रौणिरितो गतः । तस्य त्वं पातनं संख्ये कथं ज्ञास्यसि शोभने ॥ १९ ॥

द्रौपद्युवाच । द्रोणपुत्रस्य सहजो मणिः शिरसि मे श्रुतः । निहत्य संख्ये तं पापं पश्येयं मणिमाहृतम् । राजन् शिरसि ते कृत्वा जीवेयमिति मे मतिः ॥२०॥ इत्युक्त्वा पाण्डवं कृष्णा राजानं चारुदर्शना । भीमसेनमथाभ्येत्य परमं वाक्यमब्रवीत् ॥ २१ ॥ त्रातुमर्हसि मां भीम क्षत्रधर्म्ममनुस्मरन् । जहि तं पापकर्म्माणं शम्बरं मघवानिव ॥ २२ ॥ न हि ते विक्रमे तुल्यः पुमानस्तीह कश्चन । श्रुतं तत् सर्व्वलोकेषु परमव्यसने यथा ॥ २३ ॥ द्वीपोऽभूस्त्वं हि पार्थानां नगरे वारणावते । हिडिम्बदर्शने चैव तथा त्वमभवो गतिः ॥ २४ ॥ तथा विराटनगरे कीचकेन भृशार्द्दिताम् । मामप्युद्धृतवान् कृच्छ्रात् पौलोमीं मघवानिव ॥ २५ ॥ यथैतान्य-

कृथाः पार्थ महाकर्माणि वै पुरा। तथा द्रौणिममित्रघ्न विनिहत्य सुखी भव॥ २६॥ तस्या बहुविधं दुःखं निशम्य परिदेवितम्। न चामर्षत कौन्तेयो भीमसेनो महाबलः॥२७॥ स काञ्चनविचित्राङ्गमारुरोह महारथम्। आदाय रुचिरं चित्रं समार्गणगुणं धनुः॥ २८॥ नकुलं सारथिं कृत्वा द्रोणपुत्रवधे धृतः। विस्फार्य्य सशरञ्चापं तूर्णमश्वानचोदयत्॥ २९॥ ते हयाः पुरुषव्याघ्र चोदिता वातरंहसः। वेगेन त्वरिता जग्मुर्हरयः शीघ्रगामिनः॥ ३०॥ शिविरात् स्वाद्गृहीत्वा स रथस्य पदमच्युतः। द्रोणपुत्ररथस्याशु ययौ वेगेन वीर्य्यवान्॥ ३१॥

इति सौप्तिकपर्वणि ऐषिकपर्वणि द्रौणिवधार्थं भीमगमने एकादशोऽध्यायः॥ ११॥

---

वैशम्पायन उवाच। तस्मिन् प्रयाते दुर्द्धर्षे यदूनामृषभस्ततः। अब्रवीत् पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरम्॥ १॥ एष पाण्डव ते भ्राता पुत्रशोकपरायणः। जिघांसुर्द्रौणिमाक्रन्दे एक एवाभिधावति॥ २॥ भीमः प्रियस्ते सर्व्वेभ्यो भ्रातृभ्यो भरतर्षभ। तं कृच्छ्रगतमद्य त्वं कस्मान्नाभ्युपपद्यसे॥ ३॥ यत्तदाचष्ट पुत्राय द्रोणः परपुरञ्जयः। अस्त्रं ब्रह्मशिरो नाम दहेत पृथिवीमपि॥ ४॥ तन्महात्मा महाभागः केतुः सर्व्वधनुष्मताम्। प्रत्यपादयदाचार्य्यः प्रीयमाणो धनञ्जयम्॥ ५॥ तं पुत्रोऽप्येक एवैनमन्वयाचदमर्षणः। ततः प्रोवाच पुत्राय नातिहृष्टमना इव॥ ६॥ विदितं चापलं ह्यासीदात्मजस्य महात्मनः। सर्व्वधर्म्मविदाचार्य्यः सोऽन्वशात् स्वसुतं ततः॥ ७॥ परमापद्गतेनापि न स्म तात त्वया रणे। इदमस्त्रं प्रयोक्तव्यं मानुषेषु विशेषतः॥ ८॥ इत्युक्तवान् गुरुः पुत्रं द्रोणः पश्चादथोक्तवान्। न त्वं जातु सतां मार्गे स्थातेति

पुरुषर्षभ ॥९॥ स तदाज्ञाय दुष्टात्मा पितुर्वचनमप्रियम् । निराशः सर्वकल्याणैः शोकात् पर्य्यचरन्महीम् ॥ १० ॥ ततस्तदा कुरुश्रेष्ठ वनस्थे त्वयि भारत । अवसद्द्वारकामेत्य वृष्णिभिः परमार्च्चितः ॥ ११ ॥ स कदाचित् समुद्रान्ते वसन् द्वारवतीमनु । एक एकं समागम्य मामुवाच हसन्निव ॥ १२ ॥ यत्तदुग्रं तपः कृष्ण चरन् सत्यपराक्रमः । अगस्त्याद्भारताचार्य्यः प्रत्यपद्यत मे पिता ॥ १३ ॥ अस्त्रं ब्रह्मशिरो नाम देवगन्धर्वपूजितम् । तदद्य मयि दाशार्ह यथा पितरि मे तथा ॥ १४ ॥ अस्मत्तस्तदुपादाय दिव्यमस्त्रं यदूत्तम । स चाप्यस्त्रं प्रयच्छ त्वं चक्रं रिपुहणं रणे ॥ १५ ॥ स राजन् प्रीयमाणेन मयाप्युक्तः कृताञ्जलिः । याचमानः प्रयत्नेन मत्तोऽस्त्रं भरतर्षभ ॥ १६ ॥ देवदानवगन्धर्वमनुष्यपतगोरगाः । न समा मम वीर्य्यस्य शतांशेनापि पिण्डिताः ॥ १७ ॥ इदं धनुरियं शक्तिरिदं चक्रमियं गदा । यद्यदिच्छसि चेदस्त्रं मत्तस्तत्तद्ददानि ते ॥ १८ ॥ यच्छक्नोषि समुद्यन्तुं प्रयोक्तुमपि वा रणे तद्गृहाण विनास्त्रेण यन्मे दातुमभीप्ससि ॥ १९ ॥ स सुनाभं सहस्रारं वज्रनाभमयस्मयम् । वव्रे चक्रं महाभागो मत्तः स्पर्द्धया सह ॥ २० ॥ गृहाण चक्रमित्युक्तो मया तु तदनन्तरम । जग्राहोत्पत्य सहसा चक्रं सव्येन पाणिना ॥ २१ ॥ नचैनमशकत् स्थानात् सञ्चालयितुमच्युत । अथैनं दक्षिणेनापि ग्रहीतुमुपचक्रमे ॥ २२ ॥ सर्वयत्नेन तेनापि गृह्णन्नेवमिदं ततः । ततः सर्वबलेनापि यदैनं न शशाक ह ॥ २३ ॥ उद्यन्तुं वा चालयितुं द्रौणिः परमदुर्म्मनाः । कृत्वा यत्नं परिश्रान्तः संन्यवर्त्तत भारत ॥ २४ ॥ निवृत्तमनसं तस्मादभिप्रायाद्विचेतसम् । अहमामन्त्र्य सम्विग्नमश्वत्थामानमब्रुवम् ॥ २५ ॥ यः सदेवमनुष्येषु प्रमाणं परमं गतः । गाण्डीवधन्वा श्वेताश्वः कपिप्रवरकेतनः ॥ २६ ॥ यः साक्षाद्देवदेवेशं शितिकण्ठमुमापतिम् । द्वन्द्वयुद्धे पराजिष्णु-

स्तोषयामास शङ्करम् ॥ २७ ॥ यस्मात् प्रियतरो नास्ति ममान्यः पुरुषो भुवि। नादेयं यस्य मे किञ्चिदपि दाराः सुतास्तथा ॥२८॥ तेनापि सुहृदा ब्रह्मन् पार्थेनाक्लिष्टकर्मणा। नोक्तपूर्वमिदं वाक्यं यत्त्वं मामभिभाषसे ॥ २९ ॥ ब्रह्मचर्य्यं महद्घोरं चीर्त्वा द्वादशवार्षिकम्। हिमवत्पार्श्वमभ्येत्य यो मया तपसार्जितः ॥ ३० ॥ समानव्रतचारिण्यां रुक्मिण्यां योऽन्वजायत। सनत्कुमारस्तेजस्वी प्रद्युम्नो नाम मे सुतः ॥ ३१ ॥ तेनाप्येतन्महद्दिव्यं चक्रमप्रतिमं मम। नप्रार्थितमभून्मूढ यदिदं प्रार्थितं त्वया ॥ ३२ ॥ रामेणातिबलेनैतन्नोक्तपूर्वं कदाचन। न गदेन न शाम्बेन यदिदं प्रार्थितं त्वया ॥ ३३ ॥ द्वारकावासिभिश्चान्यैर्वृष्ण्यन्धकमहारथैः। नोक्तपूर्वमिदं जातु यदिदं पार्थितं त्वया ॥ ३४ ॥ भारताचार्य्यपुत्रस्त्वं मानितः सर्वयादवैः। चक्रेण रथिनां श्रेष्ठ कन्नु तात युयुत्ससे ॥ ३५ ॥ एवमुक्तो मया द्रौणिर्मामिदं प्रत्युवाच ह। प्रयुज्य भवते पूजां योत्स्ये कृष्ण त्वयेत्युत ॥ ३६ ॥ प्रार्थितं ते मया चक्रं देवदानवपूजितम्। अजेयः स्यामिति विभो सत्यमेतद्ब्रवीमि ते ॥ ३७ ॥ त्वत्तोऽहं दुर्लभं काममनवाप्यैव केशव। प्रतियास्यामि गोविन्द शिवेनाभिवदस्व माम् ॥ ३८ ॥ एतत् सुभीमं भीमानामृषभेण त्वया धृतम्। चक्रमप्रतिचक्रेण भुवि नान्योऽभिपद्यते ॥३९ एतावदुक्त्वा द्रौणिर्मां युग्यानश्वान् धनानि च। आदायोपययौ काले रत्नानि विविधानि च ॥ ४० ॥ स संरम्भी दुरात्मा च चपलः क्रूर एव च। वेद चास्त्रं ब्रह्मशिरस्तस्माद्रक्ष्यो वृकोदरः ॥ ४१ ॥

इति सौप्तिकपर्वणि ऐषिकपर्वणि कृष्णयुधिष्ठिरसंवादे
द्वादशोऽध्यायः ॥ १२ ॥

---

वैशम्पायन उवाच । एवमुक्त्वा युधां श्रेष्ठः सर्वयादवनन्दनः ।
सर्वायुधवरोपेतमारुरोह रथोत्तमम् ॥ १ ॥ युक्तं परमकाम्बो-
जैस्तुरगैर्हेममालिभिः । आदित्योदयवर्णस्य धुरं रथवरस्य तु
॥ २ ॥ दक्षिणामवहच्छैव्यः सुग्रीवः सव्यतोऽभवत् । पार्ष्णि-
वाहौ तु तस्यास्तां मेघपुष्पबलाहकौ ॥ ३ ॥ विश्वकर्मकृता दिव्या
रत्नधातुविभूषिता । उच्छ्रितेव रथे माया ध्वजयष्टिरदृश्यत ॥ ४ ॥
वैनतेयः स्थितस्तस्यां प्रभामण्डलरश्मिवान् । तस्य सत्यवतः केतु-
र्भुजगारिरदृश्यत ॥ ५ ॥ अन्वारोहद्धृषीकेशः केतुः सर्वधनुष्म-
ताम् । अर्जुनः सत्यकर्मा च कुरुराजो युधिष्ठिरः ॥ ६ ॥ अशो-
भेतां महात्मानौ दाशार्हमभितः स्थितौ । रथस्थं शार्ङ्गधन्वा-
नमश्विनाविव वासवम् ॥ ७ ॥ तावुपारोप्य दाशार्हः स्यन्दनं
लोकपूजितम् । प्रतोदेन जवोपेतान् परमाश्वानचोदयत् ॥ ८ ॥
ते हयाः सहसोत्पेतुर्गृहीत्वा स्यन्दनोत्तमम् । आस्थितं पाण्ड-
वेयाभ्यां यदूनामृषभेण च ॥ ९ ॥ वहतां शार्ङ्गधन्वानमश्वानां
शीघ्रगामिनाम् । प्रादुरासीन्महान् शब्दः पक्षिणां पततामिव
॥ १० ॥ ते समार्च्छन्नरव्याघ्राः क्षणेन भरतर्षभ । भीमसेनं महे-
ष्वासं समनुद्रुत्य वेगिताः ॥ ११ ॥ क्रोधदीप्तन्तु कौन्तेयं द्विषदर्थे
समुद्यतम् । नाशक्नुवन् वारयितुं समेत्यापि महारथाः ॥ १२ ॥
स तेषां प्रेक्षतामेव श्रीमतां दृढधन्विनाम् । ययौ भागीरथीकच्छं
हरिभिर्भृशवेगितः । यत्र स्म श्रूयते द्रौणिः पुत्रहन्ता महात्म-
नाम् ॥ १३ ॥ स ददर्श महात्मानमुदकान्ते यशस्विनम् । कृष्ण-
द्वैपायनं व्यासमासीनमृषिभिः सह ॥ १४ ॥ तञ्चैव क्रूरकर्म्माणं
घृताक्तं कुशचीरिणम् । रजसा ध्वस्तमासीनं ददर्श द्रौणिमन्तिके
॥ १५ ॥ तमभ्यधावत् कौन्तेयः प्रगृह्य सशरं धनुः । भीमसेनो
महाबाहुस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ १६ ॥ स दृष्ट्वा भीमधन्वानं
प्रगृहीतशरासनम् । भ्रातरौ पृष्ठतश्चास्य जनार्द्दनरथे स्थितौ ॥ १७

व्यथितात्माभवद्द्रौणिः प्राप्तञ्चेदममन्यत । स तद्दिव्यमदीनात्मा परमास्त्रमचिन्तयत् ॥ १८ ॥ जग्राह च स चैषीकां द्रौणिः सव्येन पाणिना । स तामापद्मासाद्य दिव्यमस्त्रमुदैरयत् ॥ १९ ॥ अमृष्य माणस्ताञ्छूरान् दिव्यायुधधरान् स्थितान् । अपाण्डवायेति रुषा व्यसृजद्दारुणं वचः ॥ २० ॥ इत्युक्त्वा राजशार्दूल द्रोणपुत्रः प्रतापवान् । सर्वलोकप्रमोहार्थं तदस्त्रं प्रमुमोच ह ॥ २१ ॥ ततस्तस्यामिषीकायां पावकः समजायत । प्रधक्ष्यन्निव लोकांस्त्रीन् कालान्तकयमोपमः ॥ २२ ॥

इति सौप्तिकपर्वणि ऐषिकपर्वणि ब्रह्मशिरोऽस्त्रत्यागे त्रयोदशोऽध्यायः ॥ १३ ॥

---

वैशम्पायन उवाच । इङ्गितेनैव दाशार्हस्तमभिप्रायमादितः । द्रौणेर्बुद्ध्वा महाबाहुरर्जुनं प्रत्यभाषत ॥ १ ॥ अर्जुनार्जुन यद्दिव्यमस्त्रं ते हृदि वर्त्तते । द्रोणोपदिष्टं तस्यायं कालः संप्रति पाण्डव ॥ २ ॥ भ्रातॄणामात्मनश्चैव परित्राणाय भारत । विसृजैतत्त्वमप्याजावस्त्रमस्त्रनिवारणम् ॥ ३ ॥ केशवेनैवमुक्तस्तु पाण्डवः परवीरहा । अवातरद्रथात्तूर्णं प्रगृह्य सशरं धनुः ॥ ४ ॥ पूर्वमाचार्य्यपुत्राय ततोऽनन्तरमात्मने । भ्रातृभ्यश्चैव सर्वेभ्यः स्वस्तीत्युक्त्वा परन्तपः ॥ ५ ॥ देवताभ्यो नमस्कृत्य गुरुभ्यश्चैव सर्वशः । उत्ससर्ज शिवं ध्यायन्नस्त्रमस्त्रेण शाम्यताम् ॥ ६ ॥ ततस्तदस्त्रं सहसा सृष्टं गाण्डीवधन्वना । प्रजज्वाल महार्च्चिष्मद्युगान्तानलसन्निभम् ॥ ७ ॥ तथैव द्रोणपुत्रस्य तदस्त्रं तिग्मतेजसः । प्रजज्वाल महाज्वालं तेजोमण्डलसंवृतम् ॥ ८ ॥ निर्घाता बहवश्चासन् पेतुरुल्काः सहस्रशः । महद्भयञ्च भूतानां सर्वेषां समजायत ॥ ९ ॥ सशब्दमभवद्व्योम ज्वालामालाकुलं भृशम् । चचाल च मही

कृत्स्ना सपर्वतवनद्रुमा ॥ १० ॥ ते त्वस्त्रतेजसी लोकांस्तापयन्ती व्यवस्थिते। महर्षी सहितौ तत्र दर्शयामासतुस्तदा ॥ ११ ॥ नारदः सर्व्वभूतात्मा भारतानां पितामहः। उभौ शमयितुं वीरौ भारद्वाजधनञ्जयौ ॥ १२ ॥ तौ मुनी सर्व्वधर्म्मज्ञौ सर्व्वभूतहितैषिणौ। दीप्तयोरस्त्रयोर्मध्ये स्थितौ परमतेजसौ ॥ १३ ॥ तदन्तरमथाधृष्यावुपागम्य यशस्विनौ। आस्तामृषिवरौ तत्र ज्वलिताविव पावकौ ॥ १४ ॥ प्राणभृद्भिरनाधृष्यौ देवदानवसम्मतौ। अस्त्रतेजः शमयितुं लोकानां हितकाम्यया ॥ १५ ॥

ऋषी ऊचतुः। नानाशस्त्रविदः पूर्व्वे येऽप्यतीता महारथाः। नैतदस्त्रं मनुष्येषु तैः प्रयुक्तं कथञ्चन। किमिदं साहसं वीरौ कृतवन्तौ महात्ययम् ॥ १६ ॥

इति सौप्तिकपर्व्वणि ऐषिकपर्व्वणि अर्ज्जुनास्त्रत्यागे चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

वैशम्पायन उवाच। दृष्ट्वैव नरशार्दूल तावग्निसमतेजसौ। संजहार शरं दिव्यं त्वरमाणो धनञ्जयः ॥ १ ॥ उवाच भरतश्रेष्ठ स्तावृषी प्राञ्जलिस्तदा। प्रयुक्तमस्त्रमस्त्रेण शाम्यतामिति वै मया ॥ २ ॥ संहृते परमास्त्रेऽस्मिन् सर्व्वानस्मानशेषतः। पापकर्म्मा ध्रुवं द्रौणिः प्रधक्ष्यत्यस्त्रतेजसा ॥ ३ ॥ यदत्र हितमस्माकं लोकानाञ्चैव सर्व्वथा। भवन्तौ देवसङ्काशौ तथा सम्मन्तुमर्हथः ॥ ४ ॥ इत्युक्त्वा संजहारास्त्रं पुनरेव धनञ्जयः। संहारो दुष्करस्तस्य देवैरपि हि संयुगे ॥५॥ विसृष्टस्य रणे तस्य परमास्त्रस्य संग्रहे। अशक्तः पाण्डवादन्यः साक्षादपि शतक्रतुः ॥ ६ ॥ ब्रह्मतेजोद्भवं तद्धि विसृष्टमकृतात्मना। न शक्यमावर्त्तयितुं ब्रह्मचारिव्रताद‍ृते ॥ ७ ॥ अचीर्णब्रह्मचर्य्यो यः सृष्ट्वावर्त्तयते पुनः। तदस्त्रं सानु-

नस्य मूर्द्धानं तस्य कृन्तति ॥ ८ ॥ ब्रह्मचारी व्रती चापि दुरा-
चारमवाप्य तत् । परमव्यसनार्त्तोऽपि नार्जुनोऽस्त्रं व्यमुञ्चत ॥ ९ ॥
सत्यव्रतधरः शूरो ब्रह्मचारी च पाण्डवः । गुरुवर्त्ती च तेनास्त्रं
संजहारार्जुनः पुनः ॥ १० ॥ द्रौणिरप्यथ संप्रेच्य तावृषी पुरतः
स्थितौ । न शशाक पुनर्घोरमस्त्रं संहर्त्तुमोजसा ॥ ११ ॥ अशक्तः
प्रतिसंहारे परमास्त्रस्य संयुगे । द्रौणिर्दीनमना राजन् द्वैपायन-
मभाषत ॥ १२ ॥ उत्तमव्यसनार्त्तेन प्राणत्राणमभीप्सुना । मयैत-
दस्त्रमुत्सृष्टं भीमसेनभयान्मुने ॥ १३ ॥ अधर्मश्च कृतोऽनेन धार्त्त-
राष्ट्रं जिघांसता । मिथ्याचारेण भगवन् भीमसेनेन संयुगे ॥१४॥
अतः सृष्टमिदं ब्रह्मन् मयास्त्रमकृतात्मना । तस्य भूयोऽद्य संहारे
कर्त्तुं नाहमिहोत्सहे ॥ १५ ॥ विसृष्टं हि मया दिव्यमेतदस्त्रं
दुरासदम् । अपाण्डवायेति मुने वह्नितेजोऽनुमन्त्र्य वै ॥ १६ ॥
तदिदं पाण्डवेयानामन्तकायाभिसंहितम् । अद्य पाण्डुसुतान् सर्वान्
जीविताद्भ्रंशयिष्यति ॥ १७ ॥ कृतं पापमिदं ब्रह्मन्रोषाविष्टेन
चेतसा । वधमाशास्य पार्थानां मयास्त्रं सृजता रणे ॥ १८ ॥

व्यास उवाच । अस्त्रं ब्रह्मशिरस्तात विद्वान् पार्थो धनञ्जयः ।
उत्सृष्टवान्न रोषेण न नाशाय तवाहवे ॥ १९ ॥ अस्त्रमस्त्रेण तु
रणे तव संशमयिष्यता । विसृष्टमर्जुनेनेदं पुनश्च प्रतिसंहृतम् ॥२०॥
ब्रह्मास्त्रमप्यवाप्यैतदुपदेशात् पितुस्तव । क्षत्रधर्मान्महाबाहुर्नाक-
म्पत धनञ्जयः ॥ २१ ॥ एवं धृतिमतः साधोः सर्वास्त्रविदुषः सतः ।
सभ्रातृबन्धोः कस्मात्त्वं वधमस्य चिकीर्षसि ॥ २२ ॥ अस्त्रं ब्रह्म-
शिरो यत्र परमास्त्रेण वध्यते । समा द्वादश पर्जन्यस्तद्राष्ट्रं
नाभिवर्षति ॥ २३ ॥ एतदर्थं महाबाहुः शक्तिमानपि पाण्डवः ।
न विहन्यात्तदस्त्रन्तु प्रजाहितचिकीर्षया ॥ २४ ॥ पाण्डवास्त्वञ्च
राष्ट्रञ्च सदा संरक्ष्यमेव हि । तस्मात् संहर दिव्यं त्वमस्त्रमेत-
न्महाभुज ॥ २५ ॥ अरोषस्तव चैवास्तु पार्थाः सन्तु निरामयाः

न ह्यधर्मेण राजर्षिः पाण्डवो जेतुमिच्छति ॥ २६ ॥ मणिञ्चैव प्रयच्छैभ्यो यस्ते शिरसि तिष्ठति । एतमादाय ते प्राणान् प्रतिदास्यन्ति पाण्डवाः ॥ २७ ॥

द्रौणिरुवाच । पाण्डवैर्यानि रत्नानि यच्चान्यत् कौरवैर्धनम् । अवाप्तमिह तेभ्योऽयं मणिर्मम विशिष्यते ॥ २८ ॥ यमाबध्य भयं नास्ति शस्त्रव्याधिक्षुधाश्रयम् । देवेभ्यो दानवेभ्यो वा नागेभ्यो वा कथञ्चन ॥ २९ ॥ न च रक्षोगणभयं न तस्करभयस्तथा । एवं वीर्य्यो मणिरयं न मे त्याज्यः कथञ्चन ॥ ३० ॥ यत्तु मे भगवानाह तन्मे कार्य्यमनन्तरम् । अयं मणिरयञ्चाहमीषिका तु पतिष्यति ॥ ३१ ॥ गर्भेषु पाण्डवेयानाममोघं चैतदुद्यतम् । न च शक्तोऽस्मि भगवन् संहर्त्तुं पुनरुद्यतम् ॥ ३२ ॥ एतदस्त्रमतश्चैव गर्भेषु विसृजाम्यहम् । न च वाक्यं भगवतो न करिष्ये महामुने ॥ ३३ ॥

व्यास उवाच । एवं कुरु न चान्या तु बुद्धिः कार्य्या त्वयानघ । गर्भेषु पाण्डवेयानां विसृज्यैतदुपारम ॥ ३४ ॥

वैशम्पायन उवाच । ततः परममस्त्रन्तु द्रौणिरुद्यतमाहवे । द्वैपायनवचः श्रुत्वा गर्भेषु प्रमुमोच ह ॥ ३५ ॥

इति सौप्तिकपर्वणि ऐषिकपर्वणि ब्रह्मशिरोऽस्त्रस्य पाण्डवगर्भप्रवेशे पञ्चदशोऽध्यायः ॥ १५ ॥

---

वैशम्पायन उवाच । तदाज्ञाय हृषीकेशो विसृष्टं पापकर्मणा । हृष्यमाण इदं वाक्यं द्रौणिं प्रत्यब्रवीत्तदा ॥ १ ॥ विराटस्य सुतां पूर्वं स्नुषां गाण्डीवधन्वनः । उपप्लव्यगतां दृष्ट्वा व्रतवान् ब्राह्मणोऽब्रवीत् ॥ २ ॥ परिक्षीणेषु कुरुषु पुत्रस्तव भविष्यति । एतदस्य परिक्षित्त्वं गर्भस्थस्य भविष्यति ॥ ३ ॥ तस्य तद्वचनं साधोः सत्यमेतद्भविष्यति । परिक्षिद्भविता ह्येषां पुनर्वंशकरः सुतः ॥ ४ ॥

एवं ब्रुवाणं गोविन्दं सात्वतां प्रवरं तदा। द्रौणिः परमसंरब्धः प्रत्युवाचेदमुत्तरम् ॥ ५ ॥ नैतदेवं यथात्थ त्वं पक्षपातेन केशव। वचनं पुण्डरीकाक्ष न च मद्वाक्यमन्यथा ॥ ६ ॥ पतिष्यति तदस्त्रं हि गर्भे तस्या मयोद्यतम्। विराटदुहितुः कृष्ण यं त्वं रक्षितुमिच्छसि ॥ ७ ॥

भगवानुवाच। अमोघः परमास्त्रस्य पातस्तस्य भविष्यति। स तु गर्भो मृतो जातो दीर्घमायुरवाप्स्यति ॥ ८ ॥ त्वान्तु कापुरुषं पापं विदुः सर्वे मनीषिणः। असकृत्पापकर्माणं बालजीवितघातकम्। तस्मात्त्वमस्य पापस्य कर्मणः फलमाप्नुहि ॥९॥ त्रीणि वर्षसहस्राणि चरिष्यसि महीमिमाम्। अप्राप्नुवन् क्वचित् काञ्चित् सम्विदं जातु केनचित् ॥ १० ॥ निर्जनानसहायस्त्वं देशान् प्रविचरिष्यसि। भवित्री न हि ते क्षुद्र जनमध्येषु संस्थितिः ॥ ११ ॥ पूयशोणितगन्धी च दुर्गकान्तारसंश्रयः। विचरिष्यसि पापात्मन् सर्वव्याधिसमन्वितः ॥ १२ ॥ वयः प्राप्य परीक्षित्तु वेदव्रतमवाप्य च। कृपाच्छारद्वताच्छूरः सर्वास्त्राण्युपलप्स्यते ॥ १३ ॥ विदित्वा परमास्त्राणि क्षत्रधर्मव्रते स्थितः। षष्टिं वर्षाणि धर्मात्मा वसुधां पालयिष्यति ॥ १४ ॥ इतश्चोर्द्ध्वं महाबाहुः कुरुराजो भविष्यति। परिक्षिन्नाम नृपतिर्मिषतस्ते सुदुर्मते ॥ १५ ॥ अहं तं जीवयिष्यामि दग्धं शस्त्राग्नितेजसा। पश्य मे तपसो वीर्य्यं सत्यस्य च नराधम ॥ १६ ॥

व्यास उवाच। यस्मादनादृत्य कृतं त्वयास्मान् कर्म दारुणम्। ब्राह्मणस्य सतश्चैव यस्मात्ते वृत्तमीदृशम् ॥ १७ ॥ तस्माद्यद्देवकीपुत्र उक्तवानुत्तमं वचः। असंशयन्ते तद्भावि क्षत्रधर्मस्त्वयाश्रितः ॥ १८ ॥

अश्वत्थामोवाच। सहैव भवता ब्रह्मन् स्थास्यामि पुरुषेष्विह। सत्यवागस्तु भगवानयञ्च पुरुषोत्तमः ॥ १९ ॥

वैशम्पायन उवाच । प्रदायाथ मणिं द्रौणिः पाण्डवानां महात्मनाम् । जगाम विमनास्तेषां सर्व्वेषां पश्यतां वनम् ॥ २० ॥ पाण्डवाश्चापि गोविन्दं पुरस्कृत्य हतद्विषः । कृष्णं द्वैपायनञ्चैव नारदञ्च महामुनिम् ॥ २१ ॥ द्रोणपुत्रस्य सहजं मणिमादाय सत्वराः । द्रौपदीमभ्यधावन्त प्रायोपेतां मनस्विनीम् ॥ २२ ॥

वैशम्पायन उवाच । ततस्ते पुरुषव्याघ्राः सदश्वैरनिलोपमैः । अभ्ययुः सहदाशार्हैः शिविरं पुनरेव हि ॥ २३ ॥ अवतीर्य्य रथाभ्यान्तु त्वरमाणा महारथाः । ददृशुर्द्रौपदीं कृष्णामार्त्तामार्त्ततराः स्वयम् ॥ २४ ॥ तामुपेत्य निरानन्दां दुःखशोकसमन्विताम् । परिवार्य्य व्यतिष्ठन्त पाण्डवाः सहकेशवाः ॥ २५ ॥ ततो राज्ञाभ्यनुज्ञातो भीमसेनो महाबलः । प्रददौ तं मणिं दिव्यं वचनञ्चेदमब्रवीत् ॥ २६ ॥ अयं भद्रे तव मणिः पुत्रहन्ता जितः स ते । उत्तिष्ठ शोकमुत्सृज्य क्षत्रधर्ममनुस्मर ॥ २७ ॥ प्रयाणे वासुदेवस्य शमार्थमसितेक्षणे । यान्युक्तानि त्वया भीरु वाक्यानि मधुघातिनि ॥ २८ ॥ नैव मे पतयः सन्ति न पुत्रा भ्रातरो न च । नैव त्वमिति गोविन्द शममिच्छति राजनि ॥ २९ ॥ उक्तवत्यसि तीव्राणि वाक्यानि पुरुषोत्तमम् । क्षत्रधर्मानुरूपाणि तानि त्वं स्मर्त्तुमर्हसि ॥ ३० ॥ हतो दुर्य्योधनः पापो राज्यस्य परिपन्थिकः । दुःशासनस्य रुधिरं पीतं विस्फुरतो मया ॥ ३१ ॥ वैरस्य गतमानृण्यं न स्म वाच्या विवक्षताम् । जित्वा मुक्तो द्रोणपुत्रो ब्राह्मण्याद्गौरवेण च ॥ ३२ ॥ यशोऽस्य पातितं देवि शरीरन्त्ववशेषितम् । वियोजितश्च मणिना भ्रंशितश्चायुधं भुवि ॥ ३३ ॥

द्रौपद्युवाच । केवलानृण्यमाप्तास्मि गुरुपुत्रो गुरुर्मम । शिरस्येतं मणिं राजा प्रतिबध्नातु भारत ॥ ३४ ॥ तं गृहीत्वा ततो राजा शिरस्येवाकरोत्तदा । गुरोरुच्छिष्टमित्येव द्रौपद्या वचनादपि ॥ ३५ ॥ ततो दिव्यं मणिवरं शिरसा धारयन् प्रभुः ।

शुशुभे स तदा राजा सचन्द्र इव पर्वतः ॥ ३६ ॥ उत्तस्थौ पुत्र-शोकार्त्ता ततः कृष्णा मनस्विनी । कृष्णञ्चापि महाबाहुं परिपप्रच्छ धर्मराट् ॥ ३७ ॥

इति सौप्तिकपर्वणि ऐषिकपर्वणि द्रौपदी सान्त्वने षोड़शोऽध्यायः ॥ १६ ॥

---

वैशम्पायन उवाच । हतेषु सर्वसैन्येषु सौप्तिके तै रथैस्त्रिभिः । शोचन् युधिष्ठिरो राजा दाशार्हमिदमब्रवीत् ॥ १ ॥ कथं नु कृष्ण पापेन क्षुद्रेणाकृतकर्मणा । द्रौणिना निहताः सर्वे मम पुत्राः महारथाः ॥ २ ॥ तथा कृतास्त्रा विक्रान्ताः सहस्रशतयोधिनः । द्रुपदस्यात्मजाश्चैव द्रोणपुत्रेण पातिताः ॥ ३ ॥ यस्य द्रोणो महेष्वासो न प्रादादाहवे मुखम् । निजघ्ने रथिनां श्रेष्ठं धृष्टद्युम्नं कथं नु सः ॥ ४ ॥ किं नु तेन कृतं कर्म तथायुक्तं नरर्षभ । यदेकः समरे सर्वानवधीन्नो गुरोः सुतः ॥ ५ ॥

भगवानुवाच । नूनं स देवदेवानामीश्वरेश्वरमव्ययम् । जगाम शरणं द्रौणिरेकस्तेनावधीद्बहून् ॥ ६ ॥ प्रसन्नो हि महादेवो दद्यादमरतामपि । वीर्य्यञ्च गिरिशो दद्याद्येनेन्द्रमपि शातयेत् ॥ ७ ॥ वेदाहं हि महादेवं तत्त्वेन भरतर्षभ । यानि चास्य पुराणानि कर्माणि विविधानि च ॥ ८ ॥ आदिरेष हि भूतानां मध्यमन्तश्च भारत । विचेष्टते जगच्चेदं सर्वमस्यैव कर्मणा ॥ ९ ॥ एवं सिसृक्षुर्भूतानि ददर्श प्रथमं विभुः । पितामहो ब्रवीच्चैनं भूतानि सृज मा चिरम् ॥ १० ॥ हरिकेशस्तथेत्युक्त्वा भूतानां दोषदर्शिवान् । दीर्घकालं तपस्तेपे मग्नोऽम्भसि महातपाः ॥ ११ ॥ सुमहान्तं ततः कालं प्रतीक्ष्यैनं पितामहः । स्रष्टारं सर्वभूतानां ससर्ज मनसापरम् ॥ १२ ॥ सोऽब्रवीत् पितरं दृष्ट्वा गिरिशं सुप्त-

सम्भसि। यदि मे नाग्रजोऽस्त्यन्यस्ततः स्रक्ष्याम्यहं प्रजाः ॥ १३ ॥
तमब्रवीत् पिता नास्ति त्वदन्यः पुरुषोऽग्रजः। स्थाणुरेष जले
मग्नो विस्रब्धः कुरु वैकृतम् ॥ १४ ॥ स भूतान्यसृजत् सप्त दक्षा-
दींश्च प्रजापतीन्। यैरिमं व्यकरोत् सर्वं भूतग्रामं चतुर्विधम्
॥ १५ ॥ ताः सृष्टमात्राः क्षुधिताः प्रजाः सर्वाः प्रजापतिम्। विभक्ष-
यिषवो राजन् सहसा प्राद्रवंस्तदा ॥ १६ ॥ स भक्ष्यमाणस्त्रा-
णार्थी पितामहमुपाद्रवत्। आभ्यो मां भगवांस्त्रातु वृत्तिरासां
विधीयताम् ॥ १७ ॥ ततस्ताभ्यो ददावन्नमोषधीः स्थावराणि च
जङ्गमानि च भूतानि दुर्व्वलानि बलीयसाम् ॥ १८ ॥ विहितान्नाः
प्रजास्तास्तु जग्मुः सृष्टा यथागतम्। ततो ववृधिरे राजन् प्रीति-
मत्यः स्वयोनिषु ॥ १९ ॥ भूतग्रामे विवृद्धे तु तुष्टे लोकगुरा-
वपि। उदतिष्ठज्जलाज्ज्येष्ठः प्रजाश्चेमा ददर्श सः ॥ २० ॥ बहु-
रूपाः प्रजाः सृष्टा विवृद्धाश्च स्वतेजसा। चुक्रोध भगवान् रुद्रो लिङ्गं
स्वस्याप्यविध्यत ॥ २१ ॥ तत् प्रविद्धं तथा भूमौ तथैव प्रत्यतिष्ठत।
तमुवाचाव्ययो ब्रह्मा वचोभिः शमयन्निव ॥ २२ ॥ किं कृतं सलिले
सर्व्व चिरकालस्थितेन ते। किमर्थञ्चेदमुत्पाद्य लिङ्गं भूमौ प्रवे-
रितम् ॥ २७ ॥ सोऽब्रवीत् जातसंरम्भस्तथा लोकगुरुर्गुरुम्।
प्रजाः सृष्टाः परेणेमाः किङ्करिष्याम्यनेन वै ॥ २४ ॥ तपसाधिगतं
चान्नं प्रजार्थं मे पितामह। ओषध्यः परिवर्त्तेरन् यथैव सततं
प्रजाः ॥ २५ ॥ एवमुक्त्वा स सक्रोधो जगाम विमना भवः। गिरे-
र्मुञ्जवतः पादं तपस्तप्तुं महातपाः ॥ २६ ॥

इति सौप्तिकपर्वणि ऐषिकपर्वणि कृष्णयुधिष्ठिर संवादे
सप्तदशोऽध्यायः ॥ १७ ॥

---

भगवानुवाच। ततो देवयुगेऽतीते देवा वै समकल्पयन्।
यज्ञं वेदप्रमाणेन विधिवद्यष्टुमप्सवः ॥ १ ॥ कल्पयामासुरव्य
ते साधनानि हवींषि च। भागार्हा देवताश्चैव यज्ञियं द्रव्यमेव
च ॥ २ ॥ ता वै रुद्रमजानन्त्यो याथातथ्येन देवताः। नाकल्प-
यन्त देवस्य स्थाणोर्भागं नराधिप ॥ ३ ॥ सोऽकल्प्यमाने भागे
तु कृत्तिवासा मखेऽमरैः। ततः साधनमन्विच्छन् धनुरादौ सस-
र्जह ॥ ४ ॥ लोकयज्ञ क्रियायज्ञो गृह्ययज्ञ सनातनः। पञ्च-
भूतमयोयज्ञो नृयज्ञश्चैव पञ्चमः ॥ ५ ॥ लोकयज्ञैर्नृयज्ञैश्च कपर्द्दी
विदधे धनुः। धनुः सृष्टमभूत्तस्य पञ्चकिष्कुप्रमाणतः ॥ ६ ॥ वषट्-
कारोऽभवज्ज्या तु धनुषस्तस्य भारत। यज्ञाङ्गानि च चत्वारि
तस्य सन्नहनेऽभवन् ॥ ७ ॥ ततः क्रुद्धो महादेवस्तदुपादाय कार्मु-
कम्। आजगामाथ तत्रैव यत्र देवाः समीजिरे ॥ ८ ॥ मता-
त्तकार्मुकं दृष्ट्वा ब्रह्मचारिणमव्ययम्। विव्यथे पृथिवी देवी पर्व-
ताश्च चकम्पिरे ॥ ९ ॥ न ववौ पवनश्चैव नाग्निर्जज्वाल चैधितः।
व्यभ्रमच्चापि संविग्नं दिवि नक्षत्रमण्डलम् ॥ १० ॥ न बभौ भास्कर-
श्चापि सोमः श्रीमुक्तमण्डलः। तिमिरे नाकुलं सर्वमाकाशञ्चा-
भवद्वृतम् ॥ ११ ॥ अभिभूतास्ततो देवा विषयान्न प्रजज्ञिरे।
न प्रत्यभाच्च यज्ञः स देवतास्त्रेसिरे तदा ॥ १२ ॥ ततः स यज्ञं
विव्याध रौद्रेण हृदि पत्रिणा। अपक्रान्तस्ततो यज्ञो मृगो भूत्वा
सपावकः ॥ १३ ॥ स तु तेनैव रूपेण दिवं प्राप्य व्यराजत।
अन्वीयमानो रुद्रेण युधिष्ठिर नभस्तले ॥ १४ ॥ अपक्रान्ते ततो
यज्ञे संज्ञा न प्रत्यभात् सुरान्। नष्टसंज्ञेषु देवेषु न प्राज्ञायत
किञ्चन ॥ १५ ॥ त्र्यम्बकः सवितुर्बाहू भगस्य नयने तथा। पूष्णश्च
दशनान् क्रुद्धो धनुष्कोट्या व्यशातयत् ॥ १६ ॥ प्राद्रवन्त ततो देवा
यज्ञाङ्गानि च सर्वशः। केचित्तत्रैव घूर्णन्तो गतासव इवाभवन्
॥ १७ ॥ स तु विद्राव्य तत्सर्वं शितिकण्ठोऽवहस्य च। अवष्टभ्य

धनुष्कोटिं रुरोध विबुधांस्ततः ॥ १८ ॥ ततो वागमरैरुक्ता ज्यां तस्य धनुषोऽच्छिनत् । अथ तत् सहसा राजन् छिन्नज्यं व्यस्फु-रद्धनुः ॥ १९ ॥ ततो विधनुषं देवा देवश्रेष्ठमुपागमन् । शरणं सह यज्ञेन प्रसादञ्चाकरोत् प्रभुः ॥ २० ॥ ततः प्रसन्नो भगवान् स्थाप्य कोपं जलाशये । स जलंपावको भूत्वा शोषयत्यनिशं प्रभो ॥ २१ ॥ भगस्य नयने चैव बाहू च सवितुस्तथा । प्रादात् पूष्णश्च दशनान् पुनर्यज्ञांश्च पाण्डव ॥ २२ ॥ ततः सुस्थमिदं सर्वं बभूव पुनरेव हि । सर्वाणि च हवींष्यस्य देवा भागमकल्पयन् ॥ २३ ॥ तस्मिन् क्रुद्धेऽभवत् सर्वमस्वस्थं भुवनं प्रभो । प्रसन्ने च पुनः स्वस्थं प्रसन्नोऽस्य च वीर्य्यवान ॥ २४ ॥ ततस्ते निहताः सर्वे तव पुत्रा महारथाः । अन्ये च बहवः शूराः पाञ्चालाः सपदानुगाः ॥२५॥ न तन्मनसि कर्त्तव्यं न च तद्द्रौणिना कृतम् । महादेवप्रसादः स कुरु कार्य्यमनन्तरम् ॥ १६ ॥

इति सौप्तिकपर्वणि ऐषिकपर्वणि कृष्णयुधिष्ठिर संवादे अष्टादशोऽध्यायः ॥ १८ ॥

समाप्तञ्च सौप्तिकपर्व ।

---

# श्रीमहाभारतम्।

---

## अथ स्त्रीपर्व। Stripaparva (11)



### अथ जलप्रादानिकपर्व।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥

जनमेजय उवाच। हते दुर्य्योधने चैव हते सैन्ये च सर्वशः।
धृतराष्ट्रो महाराजः श्रुत्वा किमकरोन्मुने॥ १॥ तथैव कौरवो
राजा धर्मपुत्रो महामनाः। कृपप्रभृतयश्चैव किमकुर्वत ते त्रयः
॥ २॥ अश्वत्थाम्नः श्रुतं कर्म शापादन्योन्यकारितात्। वृत्तान्त-
मुत्तरं ब्रूहि यदभाषत सञ्जयः॥ ३॥

वैशम्पायन उवाच। हते पुत्रशते दीनं छिन्नशाखमिव द्रुमम्
पुत्रशोकाभिसन्तप्तं धृतराष्ट्रं महीपतिम्। ध्यानमूकत्वमापन्नं
चिन्तया समभिप्लुतम्॥ ४॥ अभिगम्य महाप्राज्ञः सञ्जयो वाक्य-
मब्रवीत्। किं शोचसि महाराज नास्ति शोके सहायता॥ ५॥
अक्षौहिण्यो हताश्चाष्टौ दश चैव विशाम्पते। निर्ज्जनेयं वसुमती
शून्या संप्रति केवला॥ ६॥ नानादिग्भ्यः समागम्य नानादेश्या
नराधिपाः। सहितास्तव पुत्रेण सर्व्वे वै निधनं गताः॥ ७॥
पितॄणां पुत्रपौत्राणां ज्ञातीनां सुहृदान्तथा। गुरूणाञ्चानुपूर्व्वेण
प्रेतकार्य्याणि कारय॥ ८॥

वैशम्पायन उवाच । हतपुत्रो हतामात्यो हतसर्व्वसुहृज्जनः । पपात भुवि दुर्द्धर्षो वाताहत इव द्रुमः ॥ ९ ॥

धृतराष्ट्र उवाच । हतपुत्रो हतामात्यो हतसर्व्वसुहृज्जनः । दुःखी नूनं भविष्यामि विचरन् पृथिवीमिमाम् ॥ १० ॥ किन्नु बन्धुविहीनस्य जीवितेन ममाद्य वै । लूनपक्षस्य इव मे जराजीर्णस्य पक्षिणः ॥ ११ ॥ हृतराज्यो हतबन्धुर्हतचक्षुश्च वै तदा । न भ्राजिष्ये महाप्राज्ञ क्षीणरश्मिरिवांशुमान् ॥ १२ ॥ न कृतं सुहृदां वाक्यं जामदग्न्यस्य जल्पतः । नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ॥ १३ ॥ सभामध्ये च कृष्णेन यत् श्रेयोऽभिहितं मम । अलं वैरेण ते राजन् पुत्रः संगृह्यतामिति ॥ १४ ॥ तच्च वाक्यमकृत्वाहं भृशं तप्यामि दुर्मतिः ॥ १४ ॥ न हि श्रोतास्मि भीष्मस्य धर्मयुक्तं प्रभाषितम् । दुर्योधनस्य च तथा वृषभस्येव नर्द्दतः ॥ १५ ॥ दुःशासनवधं श्रुत्वा कर्णस्य च विपर्य्ययम् । द्रोणसूर्य्योपरागञ्च हृदयं मे विदीर्य्यते ॥ १६ ॥ न स्मराम्यात्मनः किञ्चित् पुरा सञ्जय दुष्कृतम् । यस्येदं फलमद्येह मया मूढ़ेन भुज्यते ॥ १७ ॥ नूनं व्यपकृतं किञ्चिन्मया पूर्व्वेषु जन्मसु । येन मां दुःखभागेषु धाता कर्मसु युक्तवान् ॥ १८ ॥ परिणामश्च वयसः सर्व्वबन्धुक्षयश्च मे । सुहृन्मित्रविनाशश्च दैवयोगादुपागतः । को न्वस्ति दुःखिततरो मत्तोऽन्यो हि पुमान् भुवि ॥ १९ ॥ तन्मामद्यैव पश्यन्तु पाण्डवाः संशितव्रतम् । विवृतं ब्रह्मलोकस्य दीर्घमध्वानमास्थितम् ॥ २० ॥

वैशम्पायन उवाच । तस्य लालप्यमानस्य बहुशोकं वितन्वतः । शोकापहं नरेन्द्रस्य सञ्जयो वाक्यमब्रवीत् ॥ २१ ॥ शोकं राजन् व्यपनुद श्रुतास्ते वेदनिश्चयाः । शास्त्रागमाश्च विविधा वृद्धेभ्यो नृपसत्तम । सृञ्जये पुत्रशोकार्त्ते यदूचुर्म्मुनयः पुरा ॥ २२ ॥ यथा यौवनजं दर्पमास्थिते ते सुते नृप । न त्वया सुहृदां वाक्यं ब्रुव-

तामवधारितम् । स्वार्थश्च न कृतः कश्चित्लुब्धेन फलगृद्धिना ॥२३॥ असिनेवैकधारेण स्वबुद्ध्या तु विचेष्टितम् । प्रायशोऽवृत्तसम्पन्नाः सततं पर्य्युपासिताः ॥ २४ ॥ यस्य दुःशासनो मन्त्री राधेयश्च दुरात्मवान् । शकुनिश्चैव दुष्टात्मा चित्रसेनश्च दुर्मतिः । शल्यश्च येन वै सर्वं शल्यभूतं कृतं जगत् ॥ २५ ॥ कुरुवृद्धस्य भीष्मस्य गान्धार्य्या विदुरस्य च । द्रोणस्य च महाराज कृपस्य च शरद्वतः ॥ २६ ॥ कृष्णस्य च महाबाहो नारदस्य च धीमतः । ऋषीणाञ्च तथान्येषां व्यासस्यामिततेजसः । न कृत तेन वचनं तव पुत्रेण भारत ॥ २७ ॥ अल्पबुद्धिरहंकारी नित्यं युद्धमिति ब्रुवन् । क्रूरो दुर्मर्षणो नित्यमसन्तुष्टश्च वीर्य्यवान् ॥ २८ ॥ श्रुतवानसि मेधावी सत्यवांश्चैव नित्यदा । न मुह्यन्तीदृशा सन्तो बुद्धिमन्तो भवादृशाः ॥ २९ ॥ न धर्मः सत्कृतः कश्चिन्नित्यं युद्धमिति ब्रुवन् । क्षपिताः क्षत्रियाः सर्वे शत्रूणां वर्द्धितं यशः ॥ ३० ॥ मध्यस्थो हि त्वमप्यासीर्न क्षमं किञ्चिदुक्तवान् । दुर्द्धरेण त्वया भारस्तुलया न समं धृतः ॥ ३१ ॥ आदावेव मनुष्येण वर्त्तितव्यं यथाक्षमम् । यथा नातीतमर्थं वै पश्चात्तापेन युज्यते ॥ ३२ ॥ पुत्रगृद्ध्या त्वया राजन् प्रियं तस्य चिकीर्षितम् । पश्चात्तापमिमं प्राप्तो न त्वं शोचितुमर्हसि ॥ ३ ॥ मधु यः केवलं दृष्ट्वा प्रपातं नानुपश्यति । स भ्रष्टो मधुलोभेन शोचत्येवं यथा भवान् ॥ ३४ ॥ अर्थान्न शोचन् प्राप्नोति न शोचन् विन्दते फलम् । न शोचन् श्रियमाप्नोति न शोचन् विन्दते परम् ॥ ३५ ॥ स्वयमुत्पादयित्वाग्निं वस्त्रेण परिवेष्टयन् । दह्यमानो मनस्तापं भजते न स पण्डितः ॥ ३६ ॥ त्वयैव ससुतेनायं वाक्यवायुसमीरितः । लोभाज्येन च संसिक्तो ज्वलितः पार्थपावकः ॥ ३७ ॥ तस्मिन् समिद्धे पतिताः शलभा इव ते सुताः । तान् वै शराग्निनिर्द्दग्धान्न त्वं शोचितुमर्हसि ॥ ३८ ॥ यच्चाश्रुपातात् कलिलं वदनं वहसे नृप । अशास्त्रदृष्टमेतद्धि न प्रशं-

यन्ति पण्डिताः ॥ ३९ ॥ विस्फुलिङ्गा इव ह्येतान् दहन्ति किल मानवान् । जहीहि मन्युं बुद्ध्या वै धारयात्मानमात्मना ॥ ४० ॥ एवमाश्वासितस्तेन सञ्जयेन महात्मना । विदुरो भूय एवाह बुद्धिपूर्वं परन्तप ॥ ४१ ॥

इति स्त्रीपर्वणि जलप्रादानिकपर्वणि धृतराष्ट्राश्वासने प्रथमोऽध्यायः ॥ १ ॥

---

वैशम्पायन उवाच । ततोऽमृतसमैर्वाक्यैर्ह्लादयन् पुरुषर्षभम् । वैचित्रवीर्य्यं विदुरो यदुवाच निबोध तत् ॥ १ ॥

विदुर उवाच । उत्तिष्ठ राजन् किं शेषे धारयात्मानमात्मना । एषा वै सर्वसत्त्वानां लोकेश्वर परा गतिः ॥ २ ॥ सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तञ्च जीवितम् ॥ ३ ॥ यदा शूरञ्च भीरुञ्च यमः कर्षति भारत । तत् किं न योत्स्यन्ति हि ते क्षत्रियाः क्षत्रियर्षभ ॥ ४ ॥ अयुध्यमानो म्रियते युध्यमानश्च जीवति । कालं प्राप्य महाराज न कश्चिदातवर्त्तते ॥ ५ ॥ अभावादीनि भूतानि भावमध्यानि भारत । अभावनिधनान्येव तत्र का परिदेवना ॥ ६ ॥ न शोचन्मृतमन्वेति न शोचन् म्रियते नरः । एवं सांसिद्धिके लोके किमर्थमनुशोचसि ॥ ७ ॥ कालः कर्षति भूतानि सर्वाणि विविधान्युत । न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ॥ ८ ॥ यथा वायुस्तृणाग्राणि संवर्त्तयति सर्वशः । तथा कालवशं यान्ति भूतानि भरतर्षभ ॥९॥ एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम् । यस्य कालः प्रयात्यग्रे तत्र का परिदेवना ॥ १० ॥ न चाप्येतान् हतान् युद्धे राजन् शोचितुमर्हसि । प्रमाणं यदि शास्त्राणि गतास्ते परमां गतिम् ॥ ११ ॥ सर्वे स्वाध्यायवन्तो हि सर्वे च चरितव्रताः । सर्वे

चाभिमुखाः चीणास्तत्र का परिदेवना ॥ १२ ॥ अदर्शनादापतिताः पुनश्चादर्शनं गताः। न ते तव न तेषां त्वं तत्र का परिदेवना ॥ १३ ॥ हतोऽपि लभते स्वर्गं हत्वा च लभते यशः। उभयं नो बहुगुणं नास्ति निष्फलता रणे ॥ १४ ॥ तेषां कामदुघाल्लोंकानिन्द्र सङ्कल्पयिष्यति। इन्द्रस्यातिथयो ह्येते भवन्ति पुरुषर्षभ ॥ १५ ॥ न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया। स्वर्गं यान्ति तथा मर्त्या यथा शूरा रणे हता ॥ १६ ॥ शरीराग्निषु शूराणां जुहुवुस्ते शराहुतीः। हूयमानाञ्छरांश्चैव सेहुस्तेजस्विनो मिथः ॥ १७ ॥ एवं राजंस्तवाचच्चे स्वर्गपन्थानमुत्तमम्। न युद्धादधिकं किञ्चित् चत्रियस्येह विद्यते ॥ १८ ॥ चत्रियास्ते महात्मानः शूराः समितिशोभनाः। आशिषं परमां प्राप्ता न शोच्याः सर्व्व एव हि ॥ १९ ॥ आत्मानमात्मनाश्वास्य मा शुचः पुरुषर्षभ। नाद्य शोकाभिभूतस्त्वं कार्य्यमुत्स्रष्टुमर्हसि ॥ २० ॥ माता पितृसहस्राणि पुत्रदारशतानि च। संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् ॥२१॥ शोकस्थानसहस्राणि भयस्थानशतानि च। दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ २२ ॥ न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम। न मध्यस्थः क्वचित् कालः सर्व्वं कालः प्रकर्षति ॥ २३ ॥ कालः पचति भूतानि कालः संहरते प्रजाः। कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रमः ॥ २४ ॥ अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः। आरोग्यं प्रियसंवासो गृध्येदेषु न पण्डितः ॥ २५ ॥ न जानपदिकं दुःखमेकः शोचितुमर्हसि। अप्यभावेन युज्येत तच्चास्य न निवर्त्तते ॥ २६ ॥ अशोचन् प्रतिकुर्वीत यदि पश्येत् पराक्रमम्। भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ॥ २७ ॥ चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्द्धते। अनिष्टसंप्रयोगाच्च विप्रयोगात् प्रियस्य च ॥ २८ ॥ मनुष्या मानसैर्दुःखैर्युज्यन्ते येऽल्पबुद्धयः। नार्थो न धर्मो न सुखं यदेतदनु-

शोचसि ॥ २९ ॥ न च नापैति कार्य्यार्थात् त्रिवर्गाच्चैव हीयते । अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः ॥ ३० ॥ असन्तुष्टाः प्रमुह्यन्ति सन्तोषं यान्ति पण्डिताः । प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः । एतज्ज्ञानस्य सामर्थ्यं न वालैः समतामियात् ॥ ३१ ॥ शयानञ्चानुशेते हि तिष्ठन्तं चानुतिष्ठति । अनुधावति धावन्तं कर्म पूर्वकृतं नरम् ॥ ३२ ॥ यस्यां यस्यामवस्थायां यत् करोति शुभाशुभम् । तस्यां तस्यामवस्थायां तत् फलं समुपाश्नुते ॥ ३३ ॥ येन येन शरीरेण यद्यत् कर्म करोति यः । तेन तेन शरीरेण तत्तत् फलमुपाश्नुते ॥ ३४ ॥ आत्मैव ह्यात्मनो मित्रमात्मैव रिपुरात्मनः । आत्मैव ह्यात्मनः साक्षी कृतस्यापकृतस्य च ॥ ३५ ॥ शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा । कृतं लभति सर्वत्र नाकृतं भुज्यते क्वचित् ॥ ३६ ॥ न हि ज्ञानविरुद्धेषु बहुपापेषु कर्मसु । मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥३७॥

इति स्त्रीपर्वनि जलप्रादानिकपर्वणि धृतराष्ट्राश्वासने द्वितीयोऽध्यायः ॥ २ ॥

---

धृतराष्ट्र उवाच । सुभाषितैर्महाप्राज्ञ शोकोऽयं विगतो मम । भूय एव तु वाक्यानि श्रोतुमिच्छामि तत्त्वतः ॥ १ ॥ अनिष्टानाञ्च संसर्गादिष्टानाञ्च विवर्ज्जनात् । कथं हि मानसैर्दुःखैः प्रमुच्यन्ते तु पण्डिताः ॥ २ ॥

विदुर उवाच । यतो यतो मनो दुःखात् सुखाद्वा विप्रमुच्यते । ततस्ततो नियम्यैतच्छान्तिं विन्देत वै बुधः ॥ ३ ॥ अशाश्वतमिदं सर्वं चिन्त्यमानं नरर्षभ । कदलीसन्निभो लोकः सारो ह्यस्य न विद्यते ॥ ४ ॥ यदा प्राज्ञाश्च मूढाश्च धनवन्तोऽथ निर्धनाः । सर्वे पितृवनं प्राप्य स्वपन्ति विगतज्वराः । निर्मांसैरस्थिभूयिष्ठैर्गात्रैः

स्नायुनिबन्धनैः ॥ ५ ॥ कं विशेषं प्रपश्यन्ति तत्र तेषां परे जनाः । येन प्रत्यवगच्छेयुः कुलरूपविशेषणम् । कस्मादन्योन्यमिच्छन्ति विप्रलब्धधियो नराः ॥ ६ ॥ गृहाणीव हि मर्त्यानामाहुर्देहानि पण्डिताः । कालेन विनियुज्यन्ते सत्त्वमेकन्तु शाश्वतम् ॥ ७ ॥ यथाजीर्णमजीर्णं वा वस्त्रं त्यक्त्वा तु पूरुषः । अन्यद्रोचयते वस्त्रमेवं देहाः शरीरिणाम् ॥ ८ ॥ वैचित्रवीर्य्य शाश्वं हि दुःखं वा यदि वा सुखम् । प्राप्नुवन्तीह भूतानि स्वकृतेनैव कर्मणा ॥ ९ ॥ कर्मणा प्राप्यते स्वर्गः सुखं दुःखञ्च भारत । ततो वहति तं भारमवशः स्ववशोऽपि वा ॥ १० ॥ यथा च मृण्मयं भाण्डं चक्रारूढं विपद्यते । किञ्चित् प्रक्रियमाणं वा कृतमात्रमथापि वा ॥ ११ ॥ छिन्नं वाप्यवरोप्यन्तमवतीर्णमथापि वा । आर्द्रं वाप्यथ वा शुष्कं पच्यमानमथापि वा ॥ १२ ॥ अवतार्य्यमाणमापाकादुद्धृतञ्चापि भारत । अथवा परिभुज्यन्तमेवं देहाः शरीरिणाम् ॥ १३ ॥ गर्भस्थो वा प्रसूतो वा प्यथ वा दिवसान्तरः । अर्द्धमासगतो वापि मासमात्रगतोऽपि वा ॥ १४ ॥ संवत्सरगतो वापि द्विसं वत्सर एव वा । यौवनस्थोऽथ मध्यस्थो वृद्धो वापि विपद्यते ॥ १५ ॥ प्राक्कर्मभिस्तु भूतानि भवन्ति न भवन्ति च । एवं सांसिद्धिके लोके किमर्थमनुतप्यसे ॥ १६ ॥ यथा तु सलिले राजन् क्रीड़ार्थमनुसन्तरन् । उन्मज्जेच्च निमज्जेच्च किञ्चित् सत्त्वं नराधिप ॥ १७ ॥ एवं संसारगहने उन्मज्जननिमज्जने । कर्मभोगेन बध्यन्ते क्लिश्यन्ते येऽल्पबुद्धयः ॥ १८ ॥ ये तु प्राज्ञाः स्थिताः सत्त्वे संसारानुगतैषिणः । समागमज्ञा भूतानां ते यान्ति परमां गतिम् ॥ १९ ॥

इति स्त्रीपर्वणि जलप्रादानिकपर्वणि धृतराष्ट्रशोकापनोदने तृतीयोऽध्यायः ॥ ३ ॥

———

धृतराष्ट्र उवाच। कथं संसारगहनं विज्ञेयं वदतां वर। एतदिच्छाम्यहं श्रोतुं तत्त्वमाख्याहि पृच्छतः॥ १॥

विदुर उवाच। जन्मप्रभृति भूतानां क्रिया सर्वोपलक्ष्यते। पूर्वमेवेह कलले वसते किञ्चिदन्तरम्। ततः स पञ्चमेऽतीते मासि वा समकल्पयत्॥ २॥ ततः सर्वाङ्गसंपूर्णो गर्भो वै स तु जायते। अमेध्यमध्ये वसति मांसशोणितलेपने॥ ३॥ ततस्तु वायुवेगेन ऊर्द्धपादो ह्यधःशिराः। योनिद्वारमुपागम्य बहून् क्लेशान् समृच्छति॥ ४॥ योनिसंपीड़नाच्चैव पूर्वकर्मभिरन्वितः। तस्मान्मुक्तः स संसारादन्यान् पश्यत्युपद्रवान्। ग्रहास्तमुपगच्छन्ति सारमेया इवामिषम्॥ ५॥ ततः प्राप्तोत्तरे काले व्याधयश्चापि तं तथा। उपसर्पन्ति जीवन्तं वध्यमानं स्वकर्मभिः॥ ६॥ तं बद्धमिन्द्रियैः पाशैः सङ्गस्वादुभिरावृतम्। व्यसनान्यपि वर्त्तन्ते विविधानि नराधिप॥ ७॥ बाध्यमानश्च तैर्भूयो नैव तृप्तिमुपैति सः। तदा नावैति चैवायं प्रकुर्वन् साध्वसाधु वा। तथैव परिरक्षन्ति ये ध्यानपरिनिष्ठिताः॥ ८॥ अयं न बुध्यते तावद्यमलोकमथागतम् यमदूतैर्विकृष्यंश्च मृत्युं कालेन गच्छति॥ ९॥ वाग्घीनस्य च यन्मात्रमिष्टानिष्टं कृतं मुखे। भूय एवात्मनात्मानं वध्यमानमुपेक्षते॥ १०॥ अहो विनिकृतो लोको लोभेन च वशीकृतः। लोभक्रोधभयोन्मत्तो नात्मानमवबुध्यते॥ ११॥ कुलीनत्वे च रमते दुष्कुलीनान् विकुत्सयन्। धनदर्पेण दृप्तश्च दरिद्रान् परिकुत्सयन्॥ १२॥ मूर्खानिति परानाह नात्मानं समवेक्षते। दोषान् क्षिपति चान्येषां नात्मानं शास्तुमिच्छति॥ १३॥ यदा प्राज्ञाश्च मूर्खाश्च धनवन्तोऽथ निर्द्धनाः। कुलीनाश्चाकुलीनाश्च मानिनोऽथाप्यमानिनः॥ १४॥ सर्वे पितृवनं प्राप्ताः स्वपन्ति विगतज्वराः। निर्म्मांसैरस्थिभूयिष्ठैर्गात्रैःस्नायुनिबन्धनैः॥ १५॥ कं विशेषं प्रपश्यन्ति तत्र तेषां परे जना। येन प्रत्यवगच्छेयुः कुलरूपविशे-

षणाम ॥ १६ ॥ यदा सर्वसमं न्यस्ताः स्वपन्ति धरणीतले। कस्मा-
दन्योन्यमिच्छन्ति प्रलब्धमिह दुर्बुधाः ॥ १७ ॥ प्रत्यक्षञ्च परोक्षञ्च
यो निशम्य श्रुतिं त्विमाम्। अध्रुवे जीवलोकेऽस्मिन् यो धर्ममनु-
पालयन्। जन्मप्रभृति वर्त्तेत प्राप्नुयात् परमां गतिम् ॥ १८ ॥ एवं
सर्वं विदित्वा वै यस्तत्त्वमनुवर्त्तते। स प्रमोक्षयते सर्वान् पन्थानो
मनुजाधिप ॥ १९ ॥

इति स्त्रीपर्वणि जलप्रादानिकपर्वणि धृतराष्ट्रशोकोपनोदने
चतुर्थोऽध्यायः ॥ ४ ॥

---

धृतराष्ट्र उवाच। यदिदं धर्मगहनं बुद्ध्या समनुगम्यते।
एतद्विस्तरशः सर्वं बुद्धिमार्गं प्रशंस मे ॥ १ ॥

विदुर उवाच। अत्र ते वर्त्तयिष्यामि नमस्कृत्वा स्वयम्भुवे।
यथा संसारगहनं वदन्ति परमर्षयः ॥ २ ॥ कश्चिन्महति संसारे
वर्त्तमानो द्विजः किलः। वनं दुर्गमनुप्राप्तो महत्क्रव्यादसंकुलम्
॥ ३ ॥ सिंहव्याघ्रगजाकारैरतिघोरं महाशनैः। समन्तात् संप-
रिक्षिप्तं यत् स दृष्ट्वा त्रसेद्यमः ॥ ४ ॥ तदस्य दृष्ट्वा हृदयमुद्वेग-
मगमत् परम्। अत्युच्छ्रयश्च रोम्णां वै विक्रियाश्च परन्तप ॥ ५ ॥
स तद्वनं व्यनुसरन् संप्रधावन्नितस्ततः। वीक्षमाणो दिशः सर्वाः
शरणं क्व भवेदिति ॥ ६ ॥ स तेषां छिद्रमन्विच्छन् प्रद्रुतो भय-
पीड़ितः। न च निर्याति वै दूरं न च तैर्विप्रयुज्यते ॥ ७ ॥ अथा-
पश्यद्वनं घोरं समन्ताद्वागुरावृतम्। वाहुभ्यां संपरिक्षिप्तं स्त्रिया
परमघोरया ॥ ८ ॥ पञ्चशीर्षधरैर्नागैः शैलैरिव समुन्नतैः। नभ-
स्पृशैर्महाघोरैः परिक्षिप्तं महावनम् ॥ ९ ॥ वनमध्ये च तत्राभू-
दुदपानः समावृतः। वल्लीभिस्तृणछन्नाभिर्दृढ़ाभिरभिसंवृतः ॥१०॥
पपात स द्विजस्तत्र निगूढ़े सलिलाशये। विलग्नश्चाभवत्तस्मिन्

लतासन्तानसंकुले ॥ ११ ॥ पनसस्य यथा जातं वृन्तबद्धं महाफलम् । स तथा लम्बते तत्र ह्यूर्द्धपादो ह्यधःशिराः ॥ १२ ॥ अथ तत्रापि चान्योऽस्य भूयो जात उपद्रवः । कूपमध्ये महानागमपश्यत महाबलम् । कूपवीनाहवेलायामपश्यतमहागजम् ॥ १३ ॥ षड्वक्त्रं कृष्णवर्णञ्च द्विषट्कपदचारिणम् । क्रमेण परिसर्पन्तं वल्लीवृक्षसमावृतम ॥ १४ ॥ तस्य चापि प्रशाखासु वृक्षशाखावलम्बितः । नानारूपा मधुकरा घोररूपा भयावहाः । आसते मधु संवृत्य पूर्वमेव निकेतजाः ॥ १५ ॥ भूयो भूयः समीहन्ते मधूनि भरतर्षभ । स्वादनीयानि भूतानां यैर्बालो विप्रकृष्यते ॥ १६ ॥ तेषां मधूनां बहुधा धाराः प्रस्रवतांतदा । आलम्बमानः स पुमान् धारां पिबति सर्वदा ॥ १७ ॥ न चास्य तृष्णा विरता पिबमानस्य सङ्कटे । अभीप्सति तदा नित्यमतृप्तः स पुनः पुनः ॥ १८ ॥ न चास्य जीविते राजन् निर्वेदः समजायत । तत्रैव च मनुष्यस्य जीविताशाः प्रतिष्ठिताः । कृष्णाः श्वेताश्च तं वृक्षं कुट्टयन्ति च मूषिकाः ॥ १९ ॥ व्यालैश्च वनदुर्गान्तेस्त्रिया च परमोग्रया । कूपाधस्ताच्च नागेन वीनाहे कुञ्जरेण च ॥ २० ॥ वृक्षप्रतताच्च भयं मूषिकेभ्यश्च पञ्चमम् । मधुलोभान्मधुकरैः षष्ठमाहुर्महद्भयम् ॥२१॥ एवं स वसते तत्र क्षिप्तः संसारसागरे । न चैव जीविताशायां निर्वेदमुपगच्छति ॥ २२ ॥

इति स्त्रीपर्वणि जलप्रादानिकपर्वणि धृतराष्ट्रशोकापनोदने पञ्चमोऽध्यायः ॥ ५ ॥

---

धृतराष्ट्र उवाच । अहो खलु महद्दुःखं कृच्छ्रवासश्च तस्य ह । कथं तस्य रतिस्तत्र तुष्टिर्वा वदताम्वर ॥ १ ॥ स देशः क्व नु यत्रासौ वसते धर्मसङ्कटे । कथं वा स विमुच्येत नरस्तस्मा-

न्महाभयात् ॥ २ ॥ एतन्मे सर्वमाचक्ष्व साधु चेष्टामहे तदा। कृपा मे महती जाता तस्याभ्युद्धरणेन हि ॥ ३ ॥

विदुर उवाच। उपमानमिदं राजन् मोक्षविद्भिरुदाहृतम्। सुगतं विन्दते येन परलोकेषु मानवः ॥ ४ ॥ उच्यते यत्तु कान्तारं महासंसार एव सः। वनं दुर्गं हि यदेतत् संसारगहनं हि तत् ॥ ५ ॥ ये च ते कथिता व्याला व्याधयस्ते प्रकीर्त्तिताः। या सा नारी बृहत्काया अधितिष्ठति तत्र वै ॥ ६ ॥ तामाहुस्तु जरां प्राज्ञा वर्णरूपविनाशिनीम्। यस्तत्र कूपो नृपते स तु देहः शरीरिणाम् ॥ ७ ॥ यस्तत्र वसतेऽधस्तान्महाहिः काल एव सः। अन्तकः सर्वभूतानां देहिनां सर्वहार्य्यसौ ॥ ८ ॥ कूपमध्ये तु या जाता बल्ली यत्र स मानवः। प्रताने लम्बते लग्नो जीविताशा शरीरिणाम् ॥ ९ ॥ स यस्तु कूपवीनाहे तं वृक्षं परिसर्पति। षड्वक्त्रः कुञ्जरो राजन् स तु संवत्सरः स्मृतः। षण्मुखा ऋतवो मासाः पादा द्वादश कीर्त्तिताः ॥ १० ॥ ये तु वृक्षं निकृन्तन्ति मूषिकाः पन्नगास्तथा। रात्र्यहानि तु तान्याहुर्भूतानां परिचिन्तकाः। ये ते मधुकरास्तत्र कामास्ते परिकीर्त्तिताः ११ ॥ यास्तु ता बहुशो धाराः स्रवन्ति मधुनिस्रवम्। तांस्तु कामरसान् विद्याद्यत्र मज्जन्ति मानवाः ॥ १२ ॥ एवं संसारचक्रस्य परिवृत्तं विदुर्बुधाः। येन संसारचक्रस्य पाशांश्छिन्दन्ति वै बुधाः ॥ १३ ॥

इति स्त्रीपर्ब्बणि जलप्रादानिकपर्ब्बणि धृतराष्ट्रशोकापनोदने षष्ठोऽध्यायः ॥ ६ ॥

---

धृतराष्ट्र उवाच। अहोऽभिहितमाख्यानं भवता तत्त्वदर्शिना। भूय एव तु मे हर्षः श्रुत्वा वागमृतं तव ॥ १ ॥

विदुर उवाच। शृणु भूयः प्रवक्ष्यामि मार्गस्यैतस्य विस्तरम्।

यच्छ्रुत्वा विप्रमुच्यन्ते संसारेभ्यो विचक्षणाः ॥ २ ॥ यथा तु पुरुषो राजन् दीर्घमध्वानमाश्रितः। क्वचित् क्वचिच्छ्रमाच्छ्रान्तः कुरुते वासमेव च ॥ ३ ॥ एवं संसारपर्य्याये गर्भवासेषु भारत। कुर्वन्ति दुर्बुधा वासं मुच्यन्ते तत्र पण्डिताः ॥ ४ ॥ तस्मादध्वानमेवैतमाहुः शास्त्रविदो जनाः। तत्तत् संसारगहनं वनमाहुर्मनीषिणः ॥ ५ ॥ सोऽयं लोके समावर्त्तो मर्त्यानां भरतर्षभ। चराणां स्थावराणाञ्च न गृध्येत्तत्र पण्डितः ॥ ६ ॥ शारीरा मानसाश्चैव मर्त्यानां ये तु व्याधयः। प्रत्यक्षाश्च परोक्षाश्च ते व्यालाः कथिता बुधैः ॥ ७ ॥ क्लिश्यमानाश्च तैर्नित्यं वार्य्यमाणाश्च भारत। स्वकर्मभिर्महाव्यालैर्नोद्विजन्त्यल्पबुद्धयः ॥ ८ ॥ तथापि तैर्विमुच्येत व्याधिभिः पुरुषो नृप। आवृणोत्येव तं पश्चाज्जरा रूपविनाशिनी ॥ ९ ॥ शब्दरूपरसस्पर्शैर्गन्धैश्च विविधैरपि। मज्जमानं महापङ्के निरालम्बे समन्ततः ॥ १० ॥ संवत्सरर्त्तवो मासाः पक्षाहोरात्रपङ्क्तयः। क्रमेणास्योपयुञ्जन्ति रूपमायुस्तथैव च ॥ ११ ॥ एते कालस्य निधयो नैतान् जानन्ति दुर्बुधाः। धात्राभिलिखितान्याहुः सर्वं भूतानि कर्मणा ॥ १२ ॥ रथः शरीरं भूतानां सत्त्वमाहुस्तु सारथिम्। इन्द्रियाणि हयानाहुः कर्म बुद्धिश्च रश्मयः ॥ १३ ॥ तेषां हयानां यो वेगं धावतामनुधावति। स तु संसारचक्रेऽस्मिन् चक्रवत् परिवर्त्तते ॥ १४ ॥ यस्तान् संयमते बुद्ध्या संयतो न निवर्त्तते। स तु संसारचक्रेऽस्मिन् चक्रवत् परिवर्त्तते ॥ १५ ॥ ये तु संसारचक्रेऽस्मिन् चक्रवत् परिवर्त्तिते। भ्रममाणा न मुह्यन्ति संसारे न भ्रमन्ति ते। संसारे भ्रमतां राजन् दुःखमेतद्धि जायते ॥ १६ ॥ तस्मादस्य निवृत्त्यर्थं यत्नमेव चरेद्बुधः। उपेक्षा नात्र कर्त्तव्या शतशाखः प्रवर्त्तते ॥ १७ ॥ यतेन्द्रियो नरो राजन् क्रोधलोभनिराकृतः। सन्तुष्टः सत्यवादी यः स शान्तिमधिगच्छति ॥ १८ ॥ याम्यमाहू रथं ह्येनं मुह्यन्ते येन दुर्बुधाः। स चैतत्

प्राप्नुयाद्राजन् यत्त्वं प्राप्तो नराधिप ॥ १९ ॥ राज्यनाशं सुहृन्नाशं सुतनाशञ्च भारत। अनुतप्तं लमेवैतद्दुःखं भवति भारत ॥ २० ॥ साधुः परमदुःखानां बुद्धिभैषज्यमाचरेत्। ज्ञानौषधमवाप्येह दूरपारं महौषधम्। न्द्याद्दुःखमहाव्याधिं नरः संयतमानसः ॥ २१ ॥ न विक्रमो न चाप्यर्थो न मित्रं न सुहृज्जनः। तथोन्मोचयते दुःखाद्यथात्मा स्थिरसंयमः। तस्मान्मैत्रं महास्थाय शीलमापद्य भारत ॥ २२ ॥ दमस्त्यागोऽप्रमादश्च ते त्रयो ब्रह्मणो हयाः। शीलरश्मिसमायुक्तः स्थितो यो मानसे रथे। त्यक्त्वा मृत्युभयं राजन् ब्रह्मलोकं स गच्छति ॥ २३ ॥ अभयं सर्वभूतेभ्यो यो ददाति महीपते। स गच्छति परं स्थानं विष्णोः पदमनामयम् ॥ २४ ॥ न तत् क्रतुसहस्रेण नोपवासैश्च नित्यशः। अभयस्य हि दानेन यत् फलं प्राप्नुयान्नरः ॥ २५ ॥ नह्यात्मनः प्रियतरं किञ्चित् भूतेषु निश्चितम्। अनिष्टं सर्वभूतानां मरणं नाम भारत। तस्मात् सर्वेषु भूतेषु दया कार्य्या विपश्चिता ॥ २६ ॥ नानामोहसमायुक्ता बुद्धिजालेन संवृताः। असूक्ष्मदृष्टयो मन्दा भ्राम्यन्ते तत्र तत्र ह। सुसूक्ष्मदृष्टयो धीरा व्रजन्ति ब्रह्मसात्मताम् ॥ २७ ॥

इति स्त्रीपर्वणि जलप्रादानिकपर्वणि धृतराष्ट्रशोकापनोदने सप्तमोऽध्यायः ॥ ७ ॥

---

वैशम्पायन उवाच। विदुरस्य तु तद्वाक्यं निशम्य कुरुसत्तमः। पुत्रशोकाभिसन्तप्तः पपात भुवि मूर्च्छितः ॥ १ ॥ तं तथापतितं भूमौ निःसंज्ञं प्रेक्ष्य बान्धवाः। कृष्णद्वैपायनश्चैव क्षत्ता च विदुरस्तथा। सञ्जयः सुहृदश्चान्ये द्वाःस्था ये चास्य सम्मताः ॥ २ ॥ जलेन सुखशीतेन तालवृन्तैश्च भारत। पस्पृशुश्च करैर्गात्रं वीज्यमानाश्च यत्नतः। आश्वास्य तु चिरं कालं धृतराष्ट्रं तथागतम्

॥ ३ ॥ अथ दीर्घस्य कालस्य लब्धसंज्ञो महीपतिः। विललाप चिरं कालं पुत्राधिभिरभिप्लुतः ॥ ४ ॥ धिगस्तु खलु मानुष्यं मानुष्ये च परिग्रहम्। यतो मूलानि दुःखानि संभवन्ति मुहुर्मुहुः ॥ ५ ॥ पुत्रनाशेऽर्थनाशे च ज्ञातिसम्बन्धिनामथ। प्राप्यते सुमहद्दुःखं विषाग्निप्रतिमं विभो ॥ ६ ॥ येन दह्यन्ति गात्राणि येन प्रज्ञा विनश्यति। येनाभिभूतः पुरुषो मरणं बहु मन्यते ॥ ७ ॥ तदिदं व्यसनं प्राप्तं मया भाग्यविपर्य्ययात्। यस्यान्तं नाधिगच्छामि ऋते प्राणविपर्य्ययात्। तच्चैवाहं करिष्यामि अद्यैव द्विजसत्तम ॥ ८ ॥ इत्युक्त्वा तु महात्मानं पितरं ब्रह्मवित्तमम्। धृतराष्ट्रोऽभवन्मूढ़ः शोकञ्च परमं गतः। अभूच्च तूष्णीं राजासौ ध्यायमानो महीपते ॥ ९ ॥ तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनः प्रभुः। पुत्रशोकाभिसन्तप्तं पुत्रं वचनमब्रवीत् ॥ १० ॥

व्यास उवाच। धृतराष्ट्र महाबाहो यत्त्वां वक्ष्यामि तत् शृणु। श्रुतवानसि मेधावी धर्मार्थकुशलः प्रभो ॥ ११ ॥ न तेऽस्त्यविदितं किञ्चिद्वेदितव्यं परन्तप। अनित्यतां हि मर्त्त्यानां विजानासि न संशयः ॥ १२ ॥ अध्रुवे जीवलोके च स्थाने चाशाश्वते सति। जीविते मरणान्ते च कस्माच्छोचसि भारत ॥ १३ ॥ प्रत्यक्षं तव राजेन्द्र वैरस्यास्य समुद्भवः। पुत्रं ते कारणं कृत्वा कालयोगेन कारितः ॥ १४ ॥ अवश्यं भवितव्ये च कुरूणां वैशसे नृप। कस्मात् शोचसि तान् शूरान् गतान् परमिकां गतिम् ॥१५॥ जानता च महाबाहो विदुरेण महात्मना। यतितं सर्वयत्नेन शमं प्रति जनेश्वर ॥ १६ ॥ न च दैवकृतो मार्गः शक्यो भूतेन केनचित्। घटतापि चिरं कालं नियन्तुमिति मे मतिः ॥ १७ ॥ देवतानां हि यत् कार्य्यं मया प्रत्यक्षतः श्रुतम्। तत्तेऽहं संप्रवक्ष्यामि कथं स्थैर्य्यं भवेत्तव ॥ १८ ॥ पुराहं त्वरितो यातः सभामैन्द्रीं जितक्लमः। अपश्यं तत्र च तदा समवेतान् दिवौकसः ॥१९॥

नारदप्रमुखाश्चापि सर्व्वे देवर्षयोऽनघ। तत्र चापि मया दृष्टा पृथिवी पृथिवीपते ॥ २० ॥ कार्य्यार्थमुपसंप्राप्ता देवतानां समीपतः। उपगम्य तदा धात्री देवानाह समागतान् ॥ २१ ॥ यत् कार्य्यं मम युष्माभिर्ब्रह्मणः सदने तदा। प्रतिज्ञातं महाभागास्तच्छीघ्रं संविधीयताम् ॥ २२ ॥ तस्यास्तद्वचनं श्रुत्वा विष्णुर्लोकनमस्कृतः। उवाच वाक्यं प्रहसन् पृथिवीं देवसंसदि ॥ २३ ॥ धृतराष्ट्रस्य पुत्राणां यस्तु ज्येष्ठः शतस्य वै। दुर्य्योधन इतिख्यातः स ते कार्य्यं करिष्यति। तञ्च प्राप्य महीपालं कृतकृत्या भविष्यसि ॥ २४ ॥ तस्यार्थे पृथिवीपालाः कुरुक्षेत्रे समागताः। अन्योन्यं घातयिष्यन्ति दृढैः शस्त्रैः प्रहारिणः ॥ २५ ॥ ततस्ते विदितं देवि भारस्य युधि नाशनम्। गच्छ शीघ्रं स्वकं स्थानं लोकं धारय शोभने ॥ २६ ॥ य एष ते सुतो राजन् लोकसंहारकारणात्। कलेरंशः समुत्पन्नो गान्धार्य्या जठरे नृप ॥ २७ ॥ अमर्षी चपलश्चापि क्रोधनो दुष्प्रसादनः। दैवयोगात् समुत्पन्ना भ्रातरश्चास्य तादृशाः ॥ २८ ॥ शकुनिर्म्मातुलश्चैव कर्णश्च परमः सखा। समुत्पन्ना विनाशार्थं पृथिव्यां सहिता नृपाः ॥ २९ ॥ यादृशो जायते राजा तादृशोऽस्य जनो भवेत्। अधर्मो धर्म्मतां याति स्वामी चेद्धार्म्मिको भवेत् ॥ ३० ॥ स्वामिनो गुणदोषाभ्यां भृत्याः स्युर्नात्र संशयः। दुष्टं राजानमासाद्य गतास्ते तनया नृप ॥ ३१ ॥ एतमर्थं महाबाहो नारदो वेद तत्त्ववित्। आत्मापराधात् पुत्रास्ते विनष्टाः पृथिवीपते। मा तान् शोचस्व राजेन्द्र न हि शोकेऽस्ति कारणम् ॥ ३२ ॥ न हि ते पाण्डवाः स्वल्पमपराध्यन्ति भारत। पुत्रास्तव दुरात्मानो यैरियं घातिता मही ॥ ३३ ॥ नारदेन च भद्रन्ते पूर्व्वमेव न संशयः। युधिष्ठिरस्य समितौ राजसूये निवेदितम् ॥ ३४ ॥ पाण्डवाः कौरवाश्चैव समासाद्य परस्परम्। न भविष्यन्ति कौन्तेय यत्ते कृत्यं तदाचर ॥ ३५ ॥ नारदस्य वचः

श्रुत्वा तदाशोचन्त पाण्डवाः। एवं ते सर्वमाख्यातं देवगुह्यं सनातनम् ॥ ३६ ॥ कथं ते शोकनाशः स्यात् प्राणेषु च दया प्रभो। स्नेहश्च पाण्डुपुत्रेषु ज्ञात्वा दैवकृतं विधिम् ॥ ३७ ॥ एष चार्थो महाबाहो पूर्वमेव मया श्रुतः। कथितो धर्मराजस्य राजसूये क्रतूत्तमे ॥ ३८ ॥ यतितं धर्म्मपुत्रेण मया गुह्ये निवेदिते। अविग्रहे कौरवाणां दैवन्तु बलवत्तरम् ॥ ३९ ॥ अनतिक्रमणीयो हि विधी राजन् कथञ्चन। कृतान्तस्य तु भूतेन स्थावरेण त्रसेन च ॥ ४० ॥ भवान् धर्म्मपरो यत्र बुद्धिश्रेष्ठश्च भारत। मुह्यते प्राणिनां ज्ञात्वा गतिश्चागतिमेव च ॥ ४१ ॥ त्वान्तु शोकेन सन्तप्तं मुह्यमानं मुहुर्मुहुः। ज्ञात्वा युधिष्ठिरो राजा प्राणानपि परित्यजेत् ॥४२॥ कृपालुर्नित्यशो धीरस्तिर्य्यग्योनिगतेष्वपि। स कथं त्वयि राजेन्द्र कृपां वै न करिष्यति ॥ ४३ ॥ मम चैव नियोगेन विधेश्चाप्यनिवर्त्तनात्। पाण्डवानाञ्च कारुण्यात् प्राणान्धारय भारत ॥ ४४ ॥ एवं ते वर्त्तमानस्य लोके कीर्त्तिर्भविष्यति। धर्मार्थः सुमहांस्तात तप्तं स्याच्च तपश्चिरात् ॥ ४५ ॥ पुत्रशोकं समुत्पन्नं हुताशं ज्वलितं यथा। प्रज्ञाम्भसा महाराज निर्वापय सदा सदा ॥ ४६ ॥

वैशम्पायन उवाच। तत् श्रुत्वा तस्य वचनं व्यासस्यामिततेजसः। मुहूर्त्तं समनुध्याय धृतराष्ट्रोऽभ्यभाषत ॥ ४७ ॥ महता शोकजालेन प्रणुन्नोऽस्मि द्विजोत्तम। नात्मानमवबुध्यामि मुह्यमानो मुहुर्मुहुः ॥ ४८ ॥ इदन्तु वचनं श्रुत्वा तव दैवनियोगजम्। धारयिष्याम्यहं प्राणान् घटिष्ये न तु शोचितुम् ॥ ४९ ॥ एतत् श्रुत्वा च वचनं व्यासः सत्यवतीसुतः। धृतराष्ट्रस्य राजेन्द्र तत्रैवान्तरधीयत ॥ ५० ॥

इति स्त्रीपर्वणि जलप्रादानिकपर्वणि धृतराष्ट्रशोकापनोदने
अष्टमोऽध्यायः ॥ ८ ॥

---

जनमेजय उवाच। गते भगवति व्यासे धृतराष्ट्रो महीपतिः। किमचेष्टत विप्रर्षे तन्मे व्याख्यातुमर्हसि ॥१॥ तथैव कौरवो राजा धर्म्मपुत्रो महामनाः। कृपप्रभृतयश्चैव किमकुर्वत ते त्रयः॥ २॥ अश्वत्थाम्नः श्रुतं कर्म्म शापश्चान्योन्यकारितः। वृत्तान्तमुत्तरं ब्रूहि यदभाषत सञ्जयः॥ ३॥

वैशम्पायन उवाच। हते दुर्य्योधने चैव हते सैन्ये च सर्व्वशः। सञ्जयो विगतप्रज्ञो धृतराष्ट्रमुपस्थितः॥ ४॥

सञ्जय उवाच। आगम्य नानादेशेभ्यो नानाजनपदेश्वराः। पितृलोकं गता राजन् सर्व्वे तव सुतैः सह ॥ ५॥ याच्यमानेन सततं तव पुत्रेण भारत। घातिता पृथिवी सर्व्वा वैरस्यान्तं विधित्सता ॥ ६॥ पुत्राणामथ पौत्राणां पितॄणाञ्च महीपते। आनुपुर्व्व्येण सर्व्वेषां प्रेतकार्य्याणि कारय ॥ ७॥

वैशम्पायन उवाच। तच्छ्रुत्वा वचनं घोरं सञ्जयस्य महीपतिः। गतासुरिव निश्चेष्टो न्यपतत् पृथिवीतले ॥ ८॥ तं शयानमुपागम्य पृथिव्यां पृथिवीपतिम्। विदुरः सर्व्वधर्मज्ञ इदं वचनमब्रवीत् ॥ ९॥ उत्तिष्ठ राजन् किं शेषे मा शुचो भरतर्षभ। एषा वै सर्व्वसत्त्वानां लोकेश्वर परा गतिः॥ १०॥ अभावादीनि भूतानि भावमध्यानि भारत। अभावनिधनान्येव तत्र का परिदेवना ॥ ११॥ न शोचन्मृतमन्वेति न शोचन्म्रियते नरः। एवं सांसिद्धिके लोके किमर्थमनुशोचसि ॥ १२॥ अयुध्यमानो म्रियते युध्यमानश्च जीवति। कालं प्राप्य महाराज न कश्चिदतिवर्त्तते ॥१३॥ कालः कर्षति भूतानि सर्व्वाणि विविधान्युत। न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ॥ १४॥ यथा वायुस्तृणाग्राणि सम्वर्त्तयति सर्व्वशः। तथा कालवशं यान्ति भूतानि भरतर्षभ ॥१५॥ एकसार्थप्रयातानां सर्व्वेषां तत्र गामिनाम्। यस्य कालः प्रयात्यग्रे तत्र का परिदेवना ॥ १६॥ यांश्चापि निहतान् युद्धे राजंस्त्वमनु-

शोचसि शशोच्यास्ते महात्मानः सर्वे ते त्रिदिवं गताः॥ १७॥ न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया। तथा स्वर्गमुपायान्ति यथा शूरास्तनुत्यजः॥ १८॥ सर्वे वेदविदः शूराः सर्वे च चरितव्रताः। सर्वे चाभिमुखाः क्षीणास्तत्र का परिदेवना॥ १९॥ शरीराग्निषु शूराणां जुहुवुस्ते शराहुतीः। हूयमानाञ्छरांश्चैव सेहुरुत्तमपूरुषाः॥२०॥ एवं राजंस्तवाचक्षे स्वर्ग्यं पन्थानमुत्तमम्। न युद्धादधिकं किञ्चित् क्षत्रियस्येह विद्यते॥ २१॥ क्षत्रियास्ते महात्मानः शूराः समितिशोभनाः। आशिषं परमां प्राप्ता न शोच्याः सर्व एव हि॥ २२॥ आत्मनात्मानमाश्वास्य मा शुचः पुरुषर्षभ। नाद्य शोकाभिभूतस्त्वं कार्य्यमुत्स्रष्टुमर्हसि॥ २३॥

इति स्त्रीपर्वणि जलप्रादानिकपर्वणि धृतराष्ट्रशोकापनोदने नवमोऽध्यायः॥ ९॥

---

वैशम्पायन उवाच। विदुरस्य तु तद्वाक्यं श्रुत्वा तु भरतर्षभः। युज्यतां यानमित्युक्त्वा पुनर्वचनमब्रवीत्॥१॥ क्षिप्रमानय गान्धारीं सर्वाश्च भरतस्त्रियः। वधूं कुन्तीमुपादाय याश्चान्यास्तत्र योषितः॥ २॥ एवमुक्त्वा स धर्मात्मा विदुरं धर्मवित्तमम्। शोकविप्रहतज्ञानो यानमेवान्वपद्यत॥ ३॥ गान्धारी पुत्रशोकार्त्ता भर्त्तुर्वचनचोदिता। सह कुन्त्या यतो राजा सह स्त्रीभिरुपाद्रवत्॥४॥ ताः समासाद्य राजानं भृशं शोकसमन्विताः। आमन्त्र्यान्योऽन्यमीयुः स्म भृशमुच्चुक्रुशुस्ततः॥ ५॥ ताः समाश्वासयत् क्षत्ता ताभ्यश्चार्त्ततरः स्वयम्। अश्रुकण्ठीः समारोप्य ततोऽसौ निर्ययौ पुरात्॥ ६॥ ततः प्रणादः संजज्ञे सर्वेषु कुरुवेश्मसु। आकुमारं पुरं सर्वमभवच्छोककर्षितम्॥ ७॥ अदृष्टपूर्वा या नार्य्यः पुरा देवगणैरपि। पृथग्जनेन दृश्यन्ते तास्तदा निहतेश्वराः॥ ८॥

प्रकीर्य्य केशान् सुशुभान् भूषणान्यवमुच्य च। एकवस्त्रधरा नार्य्यः
परिपेतुरनाथवत् ॥९॥ श्वेतपर्वतरूपेभ्यो गृहेभ्यस्तास्त्वपाक्रमन्।
गुहाभ्य इव शैलानां पृषत्यो हतयूथपाः ॥ १० ॥ तान्युदीर्णानि
नारीणां तदा वृन्दान्यनेकशः। शोकार्त्तान्यद्रवन्राजन् किशोरीणा-
मिवाङ्गने ॥ ११ ॥ प्रगृह्य बाहून् क्रोशन्त्यः पुत्रान् भ्रातॄन् पितॄ-
नपि। दर्शयन्तीव ता ह स्म युगान्ते लोकसंक्षयम् ॥ १२ ॥
विलपन्त्यो रुदन्त्यश्च धावमानास्ततस्ततः। शोकेनाभ्याहतज्ञानाः
कर्त्तव्यं न प्रजज्ञिरे ॥ १३ ॥ व्रीड़ां जग्मुः पुरा याः स्म सखी-
नामपि योषितः। एकवस्त्राश्च निर्लज्जाः श्वश्रूणां पुरतोऽभवन्
॥ १४ ॥ परस्परं सुसूक्ष्मेषु शोकेष्वाश्वासयंस्तदा। ताः शोक-
विह्वला राजन्नवैक्षन्त परस्परम् ॥ १५ ॥ ताभिः परिवृतो राजा
रुदतीभिः सहस्रशः। निर्ययौ नगराद्दीनस्तूर्णमायोधनं प्रति ॥१६
शिल्पिनो वणिजो वैश्याः सर्वे कर्मोपजीविनः। ते पार्थिवं पुर-
स्कृत्य निर्ययुर्नगराद्बहिः ॥ १७ ॥ तासां विक्रोशमानानामार्त्तानां
कुरुसंक्षये। प्रादुरासीन्महान् शब्दो व्यथयन् भुवनान्युत ॥ १८ ॥
युगान्तकाले संप्राप्ते भूतानां दह्यतामिव। अभावः स्यादयं प्राप्त
इति भूतानि मेनिरे ॥१९॥ भृशमुद्विग्नमनसस्ते पौराः कुरुसंक्षये।
प्राक्रोशन्त महाराज स्वनुरक्तास्तदा भृशम् ॥ २० ॥

इति स्त्रीपर्वणि जलप्रादानिकपर्वणि सस्त्रीकधृतराष्ट्रस्य
पुरान्निर्याणे दशमोऽध्यायः ॥ १० ॥

---

वैशम्पायन उवाच। क्रोशमात्रं ततो गत्वा ददृशुस्तान्महा-
रथान्। शारद्वतं कृपं द्रौणिं कृतवर्माणमेव च ॥ १ ॥ ते तु
दृष्ट्वैव राजानं प्रज्ञाचक्षुषमीश्वरम्। अश्रुकण्ठा विनिश्वस्य रुदन्त-
मिदमब्रुवन् ॥ २ ॥ सुतस्तव महाराज कृत्वा कर्म सुदुष्करम्।

गत सानुचरो राजञ्छक्रलोकं महीपतिः ॥ ३ ॥ दुर्य्योधनबला-न्मुक्ता वयमेव त्रयो रथाः । सर्वमन्यत परिक्षीणं सैन्यं ते भरत-र्षभ ॥ ४ ॥ इत्येवमुक्त्वा राजानं कृपः शारद्वतस्ततः । गान्धारीं पुत्रशोकार्त्तामिदं वचनमब्रवीत् ॥ ५ ॥ अभीता युध्यमानास्ते घ्नन्तः शत्रुगणान् बहून् । वीरकर्माणि कुर्वाणाः पुत्रास्ते निधनं गताः ॥ ६ ॥ ध्रुवं संप्राप्य लोकांस्ते निर्मलान् शस्त्रनिर्ज्जितान् । भास्वरं देहमास्थाय विचरन्त्यमरा इव ॥ ७ ॥ न हि कश्चिद्धि शूराणां युध्यमानः पराङ्मुखः । शस्त्रेण निधनं प्राप्तो न च कश्चित् कृता-ञ्जलिः ॥ ८ ॥ एतां तां क्षत्रियस्याहुः पुराणाः परमां गतिम् । शस्त्रेण निधनं संख्ये तन्न शोचितुमर्हसि ॥ ९ ॥ न चापि शत्रव-स्तेषामृध्यन्ते राज्ञि पाण्डवाः । शृणु यत् कृतमस्माभिरश्वत्थाम-पुरोगमैः ॥ १० ॥ अधर्म्मेण हतं श्रुत्वा भीमसेनेन ते सुतम् । सुप्तं शिबिरमाविश्य पाण्डूनां कदनं कृतम् ॥ ११ ॥ पाञ्चाला निहताः सर्व्वे धृष्टद्युम्नपुरोगमाः । द्रुपदस्यात्मजाश्चैव द्रौपद्याश्च पातिताः ॥ १२ ॥ तथा विशसनं कृत्वा पुत्रशत्रुगणस्य ते । प्राद्रवाम रणे स्थातुं न हि शक्यामहे वयः ॥ १३ ॥ ते हि शूरा महेष्वासाः क्षिप्रमेष्यन्ति पाण्डवाः । अमर्षवशमापन्ना वैरं प्रतिजिहीर्षवः ॥ १४ ॥ ते हतानात्मजान् श्रुत्वा प्रमत्ताः पुरुषर्षभाः । निनीषन्तः पदं शूराः क्षिप्रमेव यशस्विनि ॥ १५ ॥ तेषान्तु कदनं कृत्वा संस्थातुं नोत्सहामहे । अनुजानीहि नो राज्ञि मा च शोके मनः कृथाः ॥ १६ ॥ राजंस्त्वमनुजानीहि धैर्य्यमातिष्ठ चोत्तमम् । निष्ठान्तं पश्य चापि त्वं क्षात्रं धर्मञ्च केवलम् ॥ १७ ॥ इत्येवमुक्त्वा राजानं कृत्वा चाभिप्रदक्षिणम् । कृपश्च कृतवर्मा च द्रोणपुत्रश्च भारत ॥ १८ ॥ अवेक्षमाणा राजानं धृतराष्ट्रं मनीषिणम् । गङ्गामनु महात्मानस्तूर्णमश्वानचोदयन् ॥ १९ ॥ अपक्रम्य तु ते राजन् सर्व्व एव महारथाः । आमन्त्र्यान्योऽन्यमुद्विग्नास्त्रिधा ते

प्रययुस्तदा ॥ २० ॥ जगाम हास्तिनपुरं कृपः शारद्वतस्तदा । स्वमेव राष्ट्रं हार्द्दिक्यो द्रौणिर्व्यासाश्रमं ययौ ॥ २१ ॥ एवं ते प्रययुर्वीरा वीक्षमाणाः परस्परम् । भयार्त्ताः पाण्डुपुत्राणामागस्कृत्वा महात्मनाम् ॥ २२ ॥ समेत्य वीरा राजानं तदात्वनुदिते रवौ । विप्रजग्मुर्महाराज यथेच्छमरिन्दमाः ॥ २३ ॥ समासाद्याथ वै द्रौणिं पाण्डुपुत्रा महारथाः । व्यजयन्त रणे राजन् विक्रम्य तदनन्तरम् ॥ २४ ॥

इति स्त्रीपर्व्वणि जलप्रादानिकपर्व्वणि
एकादशोऽध्यायः ॥ ११ ॥

---

वैशम्पायन उवाच । हतेषु तेषु सैन्येषु धर्मराजो युधिष्ठिरः । शुश्रुवे पितरं वृद्धं निर्यान्तं नागसाह्वयात् ॥ १ ॥ सोऽभ्ययात् पुत्रशोकार्त्तः पुत्रशोकपरिप्लुतम् । शोचमानं महाराज भ्रातृभिः सहितस्तदा ॥ २ ॥ अन्वीयमानो वीरेण दाशार्हेण महात्मना । युयुधानेन च तथा तथा चैव युयुत्सुना ॥ ३ ॥ तमन्वयात् सुदुःखार्त्ता द्रौपदी शोककर्षिता । सह पाञ्चालयोषिद्भिर्यास्तत्रासन् समागताः ॥ ४ ॥ स गङ्गामनुवृन्दानि स्त्रीणां भरतसत्तम । कुररीणामिवार्त्तानां क्रोशन्तीनां ददर्श च ॥ ५ ॥ ताभिः परिवृतो राजा क्रोशन्तीभिः सहस्रशः । ऊर्द्ध्वबाहुभिरार्त्ताभी रुदतीभिः प्रियाप्रियैः ॥ ६ ॥ क्व नु धर्मज्ञता राज्ञः क्व नु सत्यानृशंसता । यदावधीत् पितॄन् भ्रातॄन् गुरून् पुत्रान् सखींमपि ॥७॥ घातयित्वा कथं द्रोणं भीष्मञ्चापि पितामहम् । मनस्तेऽभून्महाबाहो हत्वा चापि जयद्रथम् ॥ ८ ॥ किं नु राज्येन ते कार्य्यं पितॄन् भ्रातॄन पश्यतः । अभिमन्युञ्च दुर्द्धर्षं द्रौपदेयांश्च भारत ॥ ९ ॥ अतीत्य ता महाबाहुः क्रोशन्तीः कुररीरिव । ववन्दे पितरं ज्येष्ठं धर्म-

राजो युधिष्ठिर ॥१०॥ ततोऽभिवाद्य पितरं धर्मेणामित्रकर्षणाः । न्यवेदयन्त नामानि पाण्डवास्तेऽपि सर्वशः ॥ ११ ॥ तदात्मजान्तकरणं पिता पुत्रवधार्द्दितः । अप्रीयमाणः शोकार्त्तः पाण्डवं परिषस्वजे ॥ १२ ॥ धर्मराजं परिष्वज्य सान्त्वयित्वा च भारत । दुष्टात्मा भीममन्विच्छन् दिधक्षुरिव पावकः ॥ १३ ॥ स कोपपावकस्तस्य शोकवायुसमीरितः । भीमसेनमयं दावं दिधक्षुरिव दृश्यते ॥ १४ ॥ तस्य संकल्पमाज्ञाय भीमं प्रत्यशुभं हरिः । भीममाक्षिप्य पाणिभ्यां प्रददौ भीममायसम् ॥ १५ ॥ प्रागेव तु महाबुद्धिर्बुद्ध्वा तस्येङ्गितं हरिः । संविधानं महाप्राज्ञस्तत्र चक्रे जनार्द्दनः ॥ १६ ॥ तं गृहीत्वैव पाणिभ्यां भीमसेनमयस्मयम् । बभञ्ज बलवान्राजा मन्यमानो वृकोदरम् ॥ १७ ॥ नागायुतबलप्राणः स राजा भीममायसम् । भङ्क्त्वा विमथितोरस्कः सुस्राव रुधिरं मुखात् ॥ १८ ॥ ततः पपात मेदिन्यां तथैव रुधिरोक्षितः । प्रपुष्पिताग्रशिखरः पारिजात इव द्रुमः ॥ १९ ॥ प्रत्यगृह्णाच्च तं विद्वान् सूतो गावल्गणिस्तदा । मैवमित्यब्रवीच्चैनं शमयन् सान्त्वयन्निव ॥ २० ॥ स तु कोपं समुत्सृज्य गतमन्युर्महामनाः । हा हा भीमेति चुक्रोश नृपः शोकसमन्वितः ॥ २१ ॥ तं विदित्वा गतक्रोधं भीमसेनवधार्द्दितम् । वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ॥ २२ ॥ मा शुचो धृतराष्ट्र त्वं नैष भीमस्त्वया हतः । आयसी प्रतिमा ह्येषा त्वया राजन्निपातिता ॥ २३ ॥ त्वां क्रोधवशमापन्नं विदित्वा भरतर्षभ । मयापकृष्टः कौन्तेयो मृत्योर्दंष्ट्रान्तरं गतः ॥ २४ ॥ न हि ते राजशार्दूल बले तुल्योऽस्ति कश्चन । कः सहेत महाबाहो बाह्वोर्विग्रहणं नरः ॥ २५ ॥ यथान्तकमनुप्राप्य जीवन् कश्चिन्न मुच्यते । एवं बाह्वन्तरं प्राप्य तव जीवेन्न कश्चन ॥ २६ ॥ तस्मात् पुत्रेण या तेऽसौ प्रतिमा कारितायसी । भीमस्य सेयं कौरव्य तवैवोपहृता मया ॥ २७ ॥ पुत्रशोकाभि-

सन्तापाद्धर्म्मादपहृतं मनः । तदा राजेन्द्र तेन त्वं भीमसेनं जिघांससि ॥ २८ ॥ न त्वेतत्ते क्षमं राजन् हन्यास्त्वं यद्वृकोदरम् । न हि पुत्रा महाराज जीवेयुस्ते कथञ्चन ॥ २९ ॥ तस्माद्यत् कृतमस्माभिर्मन्यमानैः शमं प्रति । अनुमन्यस्व तत् सर्व्वं मा च शोके मनः कृथाः ॥ ३० ॥

इति स्त्रीपर्व्वणि जलप्रादानिकपर्व्वणि आयसभीमभङ्गे
द्वादशोऽध्यायः ॥ १२ ॥

---

वैशम्पायन उवाच । तत एनमुपातिष्ठन् शौचार्थं परिचारिकाः । कृतशौचं पुनश्चैनं प्रोवाच मधुसूदनः ॥ १ ॥ राजन्नधीता वेदास्ते शास्त्राणि विविधानि च । श्रुतानि च पुराणानि राजधर्म्माश्च केवलाः ॥ २ ॥ एवं विद्वान् महाप्राज्ञः समर्थः सन् बलाबले । आत्मापराधात् कस्मात्त्वं कुरुषे कोपमीदृशम् ॥ ३ ॥ उक्तवांस्त्वां तदैवाहं भीष्मद्रोणौ च भारत । विदुरः सञ्जयश्चैव त्वन्तु राजन्न तत् कृथाः ॥ ४ ॥ स वार्य्यमाणो नास्माकमकार्षीर्व्वचनं तदा । पाण्डवानधिकं जानन् बले शौर्य्ये च कौरव ॥ ५ ॥ राजा हि यः स्थिरप्रज्ञः स्वयं दोषानवेक्षते । देशकालविभागञ्च परं श्रेयः स विन्दति ॥ ६ ॥ उच्यमानस्तु यः श्रेयो गृह्णीते न हिताहिते । आपदः समनुप्राप्य स शोचत्यनये स्थितः ॥ ७ ॥ ततोऽन्यवृत्तमात्मानं समवेक्षस्व भारत । राजंस्त्वं ह्यविधेयात्मा दुर्य्योधनवशे स्थितः ॥ ८ ॥ आत्मापराधादापन्नस्तत् किं भीमं जिघांससि । तस्मात् संयच्छ कोपं त्वं स्वमनुस्मृत्य दुष्कृतम् ॥ ९ ॥ यस्तु तां स्पर्द्धया क्षुद्रः पाञ्चालीमानयत् सभाम् । स हतो भीमसेनेन वैरं प्रतिजिहीर्षता ॥१०॥ आत्मनोऽतिक्रमं पश्य पुत्रस्य च दुरात्मनः । यदनागसि पाण्डूनां परित्यागः परन्तप ॥ ११ ॥

वैशम्पायन उवाच। एवमुक्तः स कृष्णेन सर्वं सत्यं जनाधिप। उवाच देवकीपुत्रं धृतराष्ट्रो महीपतिः॥ १२॥ एवमेतन्महाबाहो यथा वदसि माधव। पुत्रस्नेहश्च धर्मात्मन् धैर्य्यान्मां समचालयत्॥ १३॥ दिष्ट्या तु पुरुषव्याघ्रो बलवान् सत्यविक्रमः। त्वद्गुप्तो नागमत् कृष्ण भीमो बाह्वन्तरं मम॥ १४॥ इदानीन्त्वहमेकाग्रो गतमन्युर्गतज्वरः। मध्यमं पाण्डवं वीरं स्प्रष्टुमिच्छामि माधव॥ १५॥ हतेषु पार्थिवेन्द्रेषु पुत्रेषु निहतेषु वै। पाण्डुपुत्रेषु वै शर्म्म प्रीतिश्चाप्यवतिष्ठते॥ १६॥ ततः स भीमञ्च धनञ्जयञ्च माद्र्याश्च पुत्रौ पुरुषप्रवीरौ। पस्पर्श गात्रैः प्ररुदन् सुगात्रानाश्वास्य कल्याणमुवाच चैनान्॥ १७॥

इति स्त्रीपर्वणि जलप्रादानिकपर्वणि धृतराष्ट्रकोपविमोचने त्रयोदशोऽध्यायः॥ १३॥

---

वैशम्पायन उवाच। धृतराष्ट्राभ्यनुज्ञातास्ततस्ते कुरुपुङ्गवाः। अभ्ययुर्भ्रातरः सर्वे गान्धारीं सहकेशवाः॥ १॥ ततो ज्ञात्वा हतामित्रं धर्मराजं युधिष्ठिरम्। गान्धारी पुत्रशोकार्त्ता शप्तुमच्छदनिन्दिता॥ २॥ तस्याः पापमभिप्रायं विदित्वा पाण्डवान् प्रति। ऋषिः सत्यवतीपुत्रः प्रागेव समबुध्यत॥ ३॥ स गङ्गायामुपस्पृश्य पुण्यगन्धि पयः शुचि। तं देशमुपसंपेदे परमर्षिर्मनोजवः॥ ४॥ दिव्येन चक्षुषा पश्यन् मनसानुक्रतेन च। सर्वप्राणभृतां भावं स तत्र समबुध्यत॥ ५॥ स स्नुषामब्रवीत् काले कल्यवादी महातपाः। शापकालमवाक्षिप्य शमाकालमुदीरयन्॥ ६॥ न कोपः पाण्डवे कार्य्यो गान्धारि प्रशममाप्नुहि। वचो निगृह्यतामेतत् शृणु चेदं वचो मम॥ ७॥ उक्तास्यष्टादशाहानि पुत्रेण जयमिच्छता। शिवमाशंस मे मातर्युध्यमानस्य शत्रुभिः

॥ ८ ॥ सा तथा वाच्यमाना त्वं काले काले जयैषिणा। उक्त-
वत्यसि गान्धारि यतो धर्म्मस्ततो जयः ॥ ९ ॥ चाप्यतीतां
गान्धारि वाचं ते वितथामहम्। स्मरामि भाषमाणायास्तथा
प्राणिहिता ह्यसि ॥ १० ॥ विग्रहे तुमुले राज्यं गत्वा परम-
संशयम्। जितं पाण्डुसुतैर्युद्धे नूनं धर्म्मस्ततोऽधिकः ॥ ११ ॥
क्षमाशीला पुरा भूत्वा साद्य न क्षमसे कथम्। अधर्मं जहि
धर्म्मज्ञे यतो धर्म्मस्ततो जयः ॥ १२ ॥ स्वञ्च धर्मं परिस्मृत्य वाच-
ञ्चोक्तां मनस्विनि। कोपं संयच्छ गान्धारि मैवं भूः सत्यवादिनि ॥१३

गान्धार्य्युवाच। भगवन्नाभ्यसूयामि नैतानिच्छामि नश्यतः।
पुत्रशोकेन तु बलान्मनो विह्वलतीव मे ॥ १४ ॥ यथैव कुन्त्या
कौन्तेया रक्षितव्यास्तथा मया। तथैव धृतराष्ट्रेण रक्षितव्या
यथा मया ॥ १५ ॥ दुर्य्योधनापराधेन शकुनेः सौवलस्य च।
कर्णदुःशासनाभ्याञ्च वृत्तोऽयं कुरुसंक्षयः ॥ १६ ॥ नापराध्यति
वीभत्सुर्न च पार्थो वृकोदरः। नकुलः सहदेवो वा नैव जातु
युधिष्ठिरः ॥ १७ ॥ युध्यमाना हि कौरव्याः कृतमानाः परस्परम्।
निहताः सहितास्चान्यैस्तत्र नास्त्यप्रियं मम ॥ १८ ॥ किन्तु कर्म्मा-
करोद्भीमो वासुदेवस्य पश्यतः। दुर्य्योधनं समाहूय गदायुद्धे
महामनाः ॥ १९ ॥ शिक्षयाभ्यधिकं ज्ञात्वा चरन्तं बहुधा रणे।
अधो नाभ्याः प्रहृतवान् तन्मे कोपमवर्द्धयत् ॥ २० ॥ कथं नु धर्मं
धर्म्मज्ञैः समुद्दिष्टं महात्मभिः। त्यजेयुराहवे शूराः प्राणहेतोः
कथञ्चन ॥ २१ ॥

इति स्त्रीपर्व्वणि जलप्रदानिकपर्व्वणि गान्धारीसान्त्वनायां
चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

वैशम्पायन उवाच। तच्छ्रुत्वा वचनं तस्या भीमसेनोऽथ भीतवत्। गान्धारीं प्रत्युवाचेदं वचः सानुनयं तदा ॥ १ ॥ अधर्मो यदि वा धर्मस्त्रासात्तत्र मया कृतः। आत्मानं त्रातुकामेन तन्मे त्वं क्षन्तुमर्हसि ॥ २ ॥ न हि धर्मेण पुत्रस्ते पातितोऽसौ महाबलः। न शक्यः केनचिद्धन्तुमतो विषममाचरम् ॥ ३ ॥ अधर्मेण जितः पूर्वं तेन चापि युधिष्ठिरः। निकृताश्च सदैव स्म ततो विषममाचरम् ॥ ४ ॥ सैन्यस्यैकोऽवशिष्टोऽयं गदायुद्धेन वीर्य्यवान्। मां हत्वा न हरेद्राज्यमिति वै तत् कृतं मया ॥ ५ ॥ राजपुत्रीञ्च पाञ्चालीमेकवस्त्रां रजस्वलाम्। भवत्या विदितं सर्वमुक्तवान् यत् सुतस्तव ॥ ६ ॥ दुर्य्योधनमसंगृह्य न शक्या भूःससागरा। केवला भोक्तुमस्माभिरतश्चैतत् कृतं मया ॥ ७ ॥ तथाप्यप्रियमस्माकं पुत्रस्ते समुदाचरत्। द्रौपद्या यत् सभामध्ये सव्यमूरुमदर्शयत् ॥ ८ ॥ तदैव बध्यः सोऽस्माकं दुराचारोऽम्ब ते सुतः। धर्मराजाज्ञया चैव स्थिताः स्म समये तदा ॥ ९ ॥ वैरमुद्दीपितं राज्ञि पुत्रेण तव तन्महत्। क्लेशिताश्च वने नित्यं तत एतत् कृतं मया ॥ १० ॥ वैरस्यास्य गतः पारं हत्वा दुर्य्योधनं रणे। राज्यं युधिष्ठिरः प्राप्तो वयञ्च गतमन्यवः ॥ ११ ॥

गान्धार्य्युवाच। न तस्यैष बधस्तात यत् प्रशंससि मे सुतम्। कृतवांश्चापि तत् सर्वं यदिदं भाषसे मयि ॥ १२ ॥ हताश्वे नकुले यत्तद्वृषसेनेन भारत। अपिबः शोणितं सङ्ख्ये दुःशासनशरीरजम् ॥ १३ ॥ सद्भिर्विगर्हितं घोरमनार्य्यजनसेवितम्। क्रूरं कर्माकरोस्तस्मात्तदयुक्तं वृकोदर ॥ १४ ॥

भीम उवाच। अन्यस्यापि न पातव्यं रुधिरं किं पुनः स्वकम्। यथैवात्मा तथा भ्राता विशेषो नास्ति कश्चन ॥ १५ ॥ रुधिरं न व्यतिक्रामद्दन्तोष्ठादम्ब मा शुचः। वैवस्वतस्तु तद्वेद हस्तौ मे रुधिरोक्षितौ ॥ १६ ॥ हताश्वं नकुलं दृष्ट्वा वृषसेनेन संयुगे।

भ्रातृणां संप्रहृष्टानां त्रासः संजनितो मया ॥ १७॥ केशपक्षपरामर्शे द्रौपद्या द्यूतकारिते। क्रोधाद्यदब्रुवञ्चाहं तच्च मे हृदि वर्त्तते ॥ १८ ॥ क्षत्रधर्मच्युता राज्ञि भवेयं शाश्वतीः समाः। प्रतिज्ञान्तामनिस्तीर्य्य ततस्तत् कृतवानहम् ॥ १९ ॥ न मामर्हसि गान्धारि दोषेण परिशङ्कितुम्। अनिगृह्य पुरा पुत्रानस्मास्वनपराधिषु। अधुना किं नु दोषेण परिशङ्कितुमर्हसि ॥ २० ॥

गान्धार्य्युवाच। वृद्धस्यास्य शतं पुत्रान्निघ्नं स्त्वमपराजितः। कस्मान्न शेषयीः कञ्चिद्येनाल्पमपराधितम्। सन्तानमावयोस्तात वृद्धयोर्हृतराज्ययोः ॥ २१ ॥ कथमन्धद्वयस्यास्य यष्टिरेका न वर्ज्जिता ॥ २२ ॥ शेषे ह्यवस्थिते तात पुत्राणामन्तके त्वयि। न मे दुःखं भवेदेतत् यदि त्वं धर्ममाचरेः ॥ २७ ॥

वैशम्पायन उवाच। एवमुक्त्वा तु गान्धारी युधिष्ठिरमपृच्छत। क्व स राजेति सक्रोधा पुत्रपौत्रवधार्द्दिता ॥ २४ ॥ तामभ्यगच्छद्राजेन्द्रो वेपमानः कृताञ्जलिः। युधिष्ठिर इदञ्चैनां मधुरं वाक्यमब्रवीत् ॥ २५ ॥ पुत्रहन्ता नृशंसोऽहं तव देवि युधिष्ठिरः। शापार्हः पृथिवीनाशे हेतुभूतः शपस्व माम् ॥ २६ ॥ न हि मे जीवितेनार्थो न राज्येन धनेन वा। तादृशान् सुहृदो हत्वा मूढ़स्यास्य सुहृद्द्रुहः ॥ २७ ॥ तमेवं वादिनं भीत सन्निकर्षगतं तदा। नोवाच किञ्चिद्गान्धारी निश्वासपरमा भृशम् ॥ २८ ॥ तस्यावनतदेहस्य पादयोर्विपतिष्यतः। युधिष्ठिरस्य नृपतेर्धर्मज्ञा दीर्घदर्शिनी ॥ २९ ॥ अङ्गुल्यग्राणि ददृशे देवी पट्टान्तरेण सा। ततः स कुनखी भूतो दर्शनीयनखो नृपः ॥३०॥ तद्दृष्ट्वा चार्ज्जुनोऽगच्छद्वासुदेवस्य पृष्ठतः। एवं सञ्चेष्टमानांस्तानितश्चेतश्च भारत। गान्धारी विगतक्रोधा सान्त्वयामास मातृवत् ॥ ३१ ॥ तया ते समनुज्ञाता मातरं वीरमातरम्। अभ्यगच्छन्त सहिताः पृथां पृथुलवक्षसः ॥३२॥ चिरस्य दृष्ट्वा सा पुत्रान् पुत्राधिभिरभिप्लुता।

वासमाहारयद्देवी वस्त्रेणावृत्य वै मुखम् ॥ ३३ ॥ ततो वासं समुत्सृज्य सह पुत्रेण वै पृथा। अपश्यदेतान् शस्त्रौघैर्बहुधा परिविक्षतान् ॥ ३४ ॥ सा तानेकैकशः पुत्रान् संस्पृशन्ती पुनः पुनः। अन्वशोचत दुःखार्त्ता द्रौपदीञ्च हतात्मजाम्। रुदन्तीमथ पाञ्चालीं ददर्श पतितां भुवि ॥ ३५ ॥

द्रौपद्युवाच। आर्य्ये पौत्राः क्व ते सर्वे सौभद्रसहिता गताः। न त्वां तेऽद्याभिगच्छन्ति चिरं दृष्ट्वा तपस्विनीम्। किन्नु राज्येन वै कार्य्यं विहीनायाः सुतैर्मम ॥ ३६ ॥ तां समाश्वासयामास पृथा पृथुललोचनाम्। उत्थाय याज्ञसेनीन्तु रुदतीं शोककर्षिताम् ॥ ३७ ॥ तयैव सहिता चापि पुत्रैरनुगता नृप। अभ्यगच्छत गान्धारीमार्त्तामार्त्ततरा स्वयम् ॥ ३८ ॥ तामुवाचाथ गान्धारी सह वध्वा यशस्विनीम्। मैवं पुत्रीति दुःखार्त्ता पश्य मामपि दुःखिताम् ॥३९॥ मन्ये लोकविनाशोऽयं कालपर्य्यायचोदितः। अवश्यभावी संप्राप्तः स्वभावाल्लोमहर्षणः ॥ ४० ॥ इदं तत् समनुप्राप्तं विदुरस्य वचो महत्। असिद्धानुनये कृष्णे यदुवाच महामतिः ॥ ४१ ॥ तस्मिन्नपरिहार्य्येऽर्थे व्यतीते च विशेषतः। मा शुचो न हि शोच्यास्ते संग्रामे निधनं गताः ॥ ४२ ॥ यथैव त्वं तथैवाहं को वामाश्वासयिष्यति। ममैव ह्यपराधेन कुलमग्र्यं विनाशितम् ॥४३॥

इति स्त्रीपर्वणि जलप्रादानिकपर्वणि पृथापुत्रदर्शने
पञ्चदशोऽध्यायः ॥ १५ ॥
समाप्तञ्च जलप्रादानिकपर्व।

---

अथ स्त्रीविलापपर्व।

वैशम्पायन उवाच। एवमुक्त्वा तु गान्धारी कुरूणामवकर्त्तनम्। अपश्यत्तत्र तिष्ठन्तीदूराद्दिव्येन चक्षुषा ॥ १ ॥ पतिव्रता

महाभागा समानव्रतचारिणी। उग्रेण तपसा युक्ता सततं सत्य-
वादिनी ॥ २ ॥ वरदानेन कृष्णस्य महर्षेः पुण्यकर्म्मणः। दिव्य-
ज्ञानबलोपेता विविधं पर्य्यदेवयत् ॥ ३ ॥ ददर्श सा बुद्धिमती
दूरादेव यथान्तिके। रणाजिरं नृवीराणामद्भुतं लोमहर्षणम् ॥४
अस्थिकेशपरिस्तीर्णं शोणितौघपरिप्लुतम्। शरीरैर्बहुसाहस्रै-
र्विनिकीर्णं समन्ततः ॥ ५ ॥ गजाश्वरथयोधानामावृतं रुधिरा-
विलैः। शरीरैरशिरस्कैश्च विदेहैश्च शिरोगणैः ॥ ६ ॥ गजाश्व-
नरनारीणां निस्वनैरभिसंवृतम्। शृगालवककाकोलकङ्ककाक-
निषेवितम् ॥ ७ ॥ रक्षसां पुरुषादानां मोदनं कुररकुलम्।
अशिवाभिः शिवाभिश्च नादितं गृध्रसेवितम् ॥ ८ ॥ ततो व्यासा-
भ्यनुज्ञातो धृतराष्ट्रो महीपतिः। पाण्डुपुत्राश्च ते सर्व्वे युधिष्ठिर-
पुरोगमाः ॥ ९ ॥ वासुदेवं पुरस्कृत्य हतबन्धुञ्च पार्थिवम्। कुरु-
स्त्रियः समासाद्य जग्मुरायोधनं प्रति ॥ १० ॥ समासाद्य कुरुक्षेत्रं
ताः स्त्रियो निहतेश्वराः। अपश्यन्त हतांस्तत्र भ्रातॄन् पुत्रान्
पितॄन् पतीन् ॥ ११ ॥ क्रव्याद्भिर्भक्ष्यमाणान् वै गोमायुबलवायसैः।
भूतैः पिशाचै रक्षोभिर्व्विविधैश्च निशाचरैः ॥ १२ ॥ रुद्राक्रीड़निभं
दृष्ट्वा तदा विशसनं स्त्रियः। महार्हेभ्योऽथ यानेभ्यो विक्रोशन्त्यो
निपेतिरे ॥ १३ ॥ अदृष्टपूर्व्वं पश्यन्त्यो दुःखार्त्ता भरतस्त्रियः।
शरीरेष्वस्खलन्नन्या न्यपतंश्चापरा भुवि ॥ १४ ॥ श्रान्तानाञ्चाप्यथा-
न्यासां नासीत् काचन चेतना। पाञ्चालकुरुयोषाणां कृपणं तद-
भून्महत् ॥ १५ ॥ दुःखोपहतचित्ताभिः समन्तादनुनादितम्।
दृष्ट्वायोधनमत्युग्रं धर्म्मज्ञा सुबलात्मजा ॥ १६ ॥ ततः सा पुण्ड-
रीकाक्षमामन्त्र्य पुरुषोत्तमम्। कुरूणां वैशसं दृष्ट्वा दुःखादिदम-
मब्रवीत् ॥ १७ ॥ पश्यैताः पुण्डरीकाक्ष स्नुषा मे निहतेश्वराः।
प्रकीर्णकेश्यः क्रोशन्त्यः कुररय्य इव माधव ॥ १८ ॥ अमूस्त्वभि-
समागम्य स्मरन्त्यो भर्त्तृषभान्। पृथगेवाभ्यधावन्त पुत्रान्

भ्रातॄन् पितॄन् पतीन् ॥ १९ ॥ वीरसूभिर्महाबाहो हतपुत्राभि-
रावृतम् । क्वचिच्च वीरपत्नीभिर्हतवीराभिरावृतम् ॥२०॥ शोभितं
पुरुषव्याघ्रैर्भीष्मकर्णाभिमन्युभिः । द्रोणद्रुपदशल्यैश्च ज्वलद्भिरिव
पावकैः ॥ २१ ॥ काञ्चनैः कवचैर्दिव्यैर्मणिभिश्च महात्मनाम् ।
अङ्गदैर्हस्तकेयूरैः स्रग्भिश्च समलङ्कृतम् ॥ २२ ॥ वीरबाहुनिसृ-
ष्टाभिः शक्तिभिः परिघैरपि । खड्गैश्च विविधैस्तीक्ष्णैः सशरैश्च
शरासनैः ॥ २३ ॥ क्रव्यादसङ्घैः सहितैस्तिष्ठद्भिर्विविधैः क्वचित् ।
क्वचिदाक्रीड़मानैश्च शयानैरपरैः क्वचित् ॥ २४ ॥ एतदेवम्विधं
वीर संपश्यायोधनं विभो । पश्यमाना हि दह्यामि शोकेनाहं
जनार्द्दन ॥ २५ ॥ पाञ्चालानां कुरूणाञ्च विनाशे मधुसूदन ।
पञ्चानामिव भूतानामहं वधमचिन्तयम् ॥ २६ ॥ तान् सुपर्णाश्च
गृध्राश्च विकर्षन्त्यसृगुक्षितान् । निगृह्य कवचेषूग्रा भक्षयन्ति सह-
स्रशः ॥ २७ ॥ जयद्रथस्य कर्णस्य तथैव द्रोणभीष्मयोः । अभि-
मन्योर्विनाशञ्च कश्चिन्तयितुमर्हति ॥ २८ ॥ अवध्यकल्पान्निहतान्
दृष्ट्वाहं मधुसूदन । गृध्रकङ्कवलश्येनश्वशृगालादनीकृतान् ॥ २९ ॥
अमर्षवशमापन्नान् दुर्य्योधनवशे स्थितान् । पश्यैतान् पुरुषव्याघ्रान्
संशान्तान् पावकानिव ॥ ३० ॥ शयनान्युचिताः सर्व्वे मृदूनि विम-
लानि च । विपन्नास्तेऽद्य वसुधां विवृतामधिशेरते ॥ ३१ ॥
वन्दिभिः सततं काले स्तुवद्भिरभिनन्दिताः । शिवानामशिवा घोराः
शृण्वन्ति विविधा गिरः ॥ ३२ ॥ ये पुरा शेरते वीराः शयनेषु
यशस्विनः । चन्दनागुरुदिग्धाङ्गास्तेऽद्य पांशुषु शेरते ॥ ३३ ॥ तेषा-
माभरणान्येते गृध्रगोमायुवायसाः । आक्षिपन्त्यशिवा घोरा विन-
दन्त पुनः पुनः ॥ ३४ ॥ वाणान् विनिशितान् पीतान्निस्त्रिंशान्
विमला गदाः । युद्धाभिमानिनः प्रीता जीवन्त इव बिभ्रति ॥३५॥
सुरूपवर्णा बहवः क्रव्यादैरभिघट्टिताः । ऋषभप्रतिरूपाश्च शेरते
हरितस्रजः ॥ ३६ ॥ अपरे पुनरालिङ्ग्य गदाः परिघबाहवः ।

शेरते विमुखाः शूरा दयिता इव योषितः ॥ ३७ ॥ बिभ्रतः कवचान्य्न्ये विमलान्यायुधानि च । न धर्षयन्ति क्रव्यादा जीवन्तीति जनार्द्दन ॥ ३८ ॥ क्रव्यादैः कृष्यमाणानामपरेषां महात्मनाम् । शातकौम्भ्यः स्रजश्चित्रा विप्रकीर्णाः समन्ततः ॥ ३९ ॥ एते गोमायवो भीमा निहतानां महात्मनाम् । कण्ठान्तरगतान् हारानाक्षिपन्ति सहस्रशः ॥ ४० ॥ सर्व्वेष्वपररात्रेषु याननन्दन्त वन्दिनः । स्तुतिभिश्च परार्द्ध्याभिरुपचारैश्च शिक्षिताः ॥ ४१ ॥ तानिमाः परिदेवन्ति दुःखार्त्ताः परमाङ्गनाः । कृपणं वृष्णिशार्दूल दुःखशोकार्द्दिता भृशम् ॥४२॥ रक्तोत्पलवनानीव विभान्ति रुचिराणि वै । मुखानि परमस्त्रीणां परिशुष्काणि केशव ॥ ४३ ॥ रुदितोपरता ह्येता ध्यायन्त्य संपरिप्लुताः । कुरुस्त्रियोऽभिगच्छन्ति तेन तेनैव दुःखिताः ॥ ४४ ॥ एतान्यादित्यवर्णानि तपनीयनिभानि च । रोषरोदनताम्राणि वक्त्राणि कुरुयोषिताम् ॥४५॥ आसामपरिपूर्णार्थं निशम्य परिदेवितम् । इतरेतरसंक्रन्दान्न विजानन्ति योषितः ॥ ४६ ॥ एता दीर्घं विनिश्वस्य विलप्य च पुनः पुनः । विस्पन्दमाना दुःखेन योषा जहति जीवितम् ॥ ४७ ॥ बह्व्यो दृष्ट्वा शरीराणि क्रोशन्ति विलपन्ति च । पाणिभिश्चापरा घ्नन्ति शिरांसि मृदुपाणयः ॥ ४८ ॥ शिरोभिः पतितैर्हस्तैः सर्व्वाङ्गैर्यूथशः कृतैः । इतरेतरसंपृक्तैराकीर्णा भाति मेदिनी ॥ ४९ ॥ विशिरस्कानथो कायान् दृष्ट्वा घोराभिनन्दिनः । मुह्यन्ति सुचिरं नार्य्यो विदेहानि शिरांसि च ॥ ५० ॥ शिरः कायेन सन्धाय प्रेक्षमाणा विचेतसः । अपश्यन्त्योऽपरं तत्र नेदमस्येति दुःखिताः ॥ ५१ ॥ बाहूरुचरणानन्यान् विशिखोन्मथितान् पृथक् । सन्दधत्योऽसुखाविष्टा मूर्च्छन्त्येताः पुनः पुनः ॥ ५२ ॥ उत्कृत्य शिरसश्चान्यान्विजग्धान् मृगपक्षिभिः । दृष्ट्वा काश्चिन्न जानन्ति भर्त्तॄन् भरतयोषितः ॥ ५३ ॥ पाणिभिश्चापरा घ्नन्ति शिरांसि मधुसूदन ।

प्रेक्ष्य भ्रातॄन् पितॄन् पुत्रान् पतींश्च निहतान् परैः॥ ५४॥ बाहु-भिश्च सखड्गैर्हि शिरोभिश्च सकुण्डलैः। अगम्यकल्पा पृथिवी मांसशोणितकर्द्दमा॥ ५५॥ न दुःखेषूचिताः पूर्वं दुःखं गाहन्त्य-निन्दिताः। भ्रातृभिः पितृभिः पुत्रैरुपकीर्णां वसुन्धराम्॥ ५६॥ यूथानीव किशोरीणां सुकेशीनां जनार्द्दन। स्नुषाणां धृतराष्ट्रस्य पश्य वृन्दान्यनेकशः॥ ५७॥ इति दुःखतरं किं नु केशव प्रति-भाति मे। यदिमाः कुर्वते सर्वा रूपमुच्चावचं स्त्रियः॥ ५८॥ नूनमाचरितं पापं मया पूर्वेषु जन्मसु। या पश्यामि हतान् पुत्रान् पौत्रान् भ्रातॄंश्च केशव। एवमार्त्ता विलपती ददर्श निहतं सुतम्॥ ५९॥

इति स्त्रीपर्वणि स्त्रीविलापपर्वणि स्त्रीणां युद्धभूमिदर्शने षोड़शोऽध्यायः॥ १६॥

---

वैशम्पायन उवाच। ततो दुर्य्योधनं दृष्ट्वा गान्धारी शोक-मूर्च्छिता। सहसा न्यपतद्भूमौ छिन्नेव कदली वने॥ १॥ सा तु लब्ध्वा पुनः संज्ञां विक्रुश्य च पुनः पुनः। दुर्य्योधनमभिप्रेक्ष्य शयानं रुधिरोक्षितम्॥ २॥ परिष्वज्य च गान्धारी कृपणं पर्य्यदेवयत्। हा हा पुत्रेति शोकार्त्ता विललापाकुलेन्द्रिया॥ ३॥ सुगूढ़जत्रुविपुलं हारनिष्कनिषेवितम्। वारिणा नेत्रजेनोरः सिञ्चन्ती शोकतापिता। समीपस्थं हृषीकेशमिदं वचनमब्रवीत्॥४ उपस्थितेऽस्मिन् संग्रामे ज्ञातीनां सङ्क्षये विभो। मामयं प्राह वार्ष्णेय प्राञ्जलिर्नृपसत्तमः॥ ५॥ अस्मिन् ज्ञातिसमुद्धर्षे जय-मम्बा ब्रवीतु मे। इत्युक्ते जानती सर्वमहं स्वव्यसनागमम्। अब्रुवं पुरुषव्याघ्र यतो धर्मस्ततो जयः॥ ६॥ यथा च युध्यमान-स्त्वं न प्रमुह्यसि पुत्रक। ध्रुवं शस्त्रजितान् लोकान् प्राप्स्यस्यमर-

वत् प्रभो ॥ ७ ॥ इत्येवमब्रुवं नैनं पूर्वं शोचाम्यहं सुतम् । धृतराष्ट्रन्तु शोचामि कृपणं हतबान्धवम् ॥ ८ ॥ अमर्षणं युधां श्रेष्ठं कृतास्त्रं युद्धदुर्म्मदम् । शयानं वीरशयने पश्य माधव मे सुतम् ॥ ९ ॥ योऽयं मूर्द्धाभिषिक्तानामग्रे याति परन्तपः । सोऽयं पांशुषु शेतेऽद्य पश्य कालस्य पर्य्ययम् ॥ १० ॥ ध्रुवं दुर्य्योधनो वीरो गतिं न सुलभां गतः । तथा ह्यभिमुखः शेते शयने वीरसेविते ॥ ११ ॥ यं पुरा पर्य्युपासीना रमयन्ति वरस्त्रियः । तं वीरशयने सुप्तं रमयन्त्यशिवाः शिवाः ॥ १२ ॥ यं पुरा पर्य्युपासीनां रमयन्ति मनीषिणः । महीतलस्थं निहतं गृध्रास्तं पर्य्युपासते ॥ १३ ॥ यं पुरा व्यजनैरग्र्यैरुपजीवन्ति योषितः । तमद्य पक्षव्यजनैरुपवीजन्ति पक्षिणः ॥ १४ ॥ एष शेते महाबाहुर्बलवान् सत्यविक्रमः । सिंहेनेव द्विपः संख्ये भीमसेनेन पातितः ॥ १५ ॥ पश्य दुर्य्योधनं कृष्ण शयानं रुधिरोक्षितम् । निहतं भीमसेनेन गदां संमृज्य भारतः ॥ १६ ॥ अक्षौहिणीर्म्महाबाहुर्दश चैकाञ्च केशव । आनयद्यः पुरा संख्ये सोऽनयान्निधनं गतः ॥ १७ ॥ एष दुर्य्योधनः शेते महेष्वासो महारथः । शार्द्दूल इव सिंहेन भीमसेनेन पातितः ॥ १८ ॥ विदुरं ह्यवमन्यैष पितरञ्चैव मन्दभाक् । बालो वृद्धावमानेन मन्दो मृत्युवशं गतः ॥ १९ ॥ निःसपत्ना मही यस्य त्रयोदश समाः स्थिताः । स शेते निहतो भूमौ सुतो मे पृथिवीपतिः ॥ २० ॥ अपश्यं कृष्ण पृथिवीं धार्त्तराष्ट्रानुशासिताम् । पूर्णां हस्तिगवाश्वैश्च वार्ष्णेय न तु तच्चिरम् ॥२१॥ तामेवाद्य महाबाहो पश्याम्यन्यानुशासनाम् । हीनां हस्तिगवाश्वेन किं नु जीवामि माधव ॥२२॥ इदं कृच्छ्रतरं पश्य पुत्रस्यापि वधान्मम । यदिमाः पर्य्युपासन्ते हतान् शूरान् रणे स्त्रियः ॥२३॥ प्रकीर्णकेशीं सुश्रोणीं दुर्य्योधन शुभाङ्कगाम् । रुक्मवेदीनिभां पश्य कृष्ण लक्ष्मणमातरम् ॥ २४ ॥ नूनमेषा पुरा बाला जीव-

माने महाभुजे। भुजावाश्रित्य रमते सुभुजस्य मनस्विनी ॥ २५ ॥ कथं नु शतधा नेदं हृदयं मम दीर्य्यते। पश्यन्त्या निहतं पुत्रं पुत्रेण सहितं रणे ॥२६॥ पुत्रं रुधिरसंसिक्तमुपजिघ्रत्यनिन्दिता। दुर्य्योधनन्तु वामोरूः पाणिना परिमार्जति ॥ २७ ॥ किं नु शोचति भर्त्तारं पुत्रं वैषा मनस्विनी। तथा ह्यवस्थिता भाति पुत्रं वाप्यभिवीक्ष्य सा ॥ २८ ॥ स्वशिरः पञ्चशाखाभ्यामभिहत्यायतेक्षणा। पतत्युरसि वीरस्य कुरुराजस्य माधव ॥ २९ ॥ पुण्डरीकमिवाभाति पुण्डरीकान्तरप्रभा। मुखं प्रमृज्य पुत्रस्य भर्त्तुश्चैव तपस्विनी ॥ ३० ॥ यदि चाप्यगमाः सन्ति यदि वा श्रुतयस्तदा। ध्रुवं लोकानवाप्तोऽयं नृपो बाहुबलार्जितान् ॥ ३१ ॥

इति स्त्रीपर्वणि स्त्रीविलापपर्वणि गान्धार्य्या दुर्य्योधनदर्शने सप्तदशोऽध्यायः ॥ १७ ॥

---

गान्धार्य्युवाच। पश्य माधव पुत्रान्मे शतसंख्यान् जितक्लमान्। गदया भीमसेनेन भूयिष्ठं निहतान्रणे ॥ १ ॥ इदं दुःखतरं मेऽद्य यदिमा मुक्तमूर्द्धजाः। हतपुत्रा रणे बालाः परिधावन्ति मे स्नुषाः ॥ २ ॥ प्रासादतलचारिण्यश्चरणैर्भूषणान्वितैः। आपन्ना यत् स्पृशन्तीमा रुधिरार्द्रां वसुन्धराम् ॥ ३ ॥ गृध्रानुत्सारयन्त्यश्च तथा गोमायुवायसान्। शोकेनार्त्ता विघूर्णन्त्यो मत्ता इव चरन्त्युत ॥ ४ ॥ एषा वै ह्यनवद्याङ्गी करसम्मितमध्यमा। घोरं तद्वैशसं दृष्ट्वा निपतत्यतिदुःखिता ॥ ५ ॥ दृष्ट्वा मे पार्थिवसुतामेतां लक्ष्मणमातरम्। राजपुत्रीं महाबाहो मनो न ह्युपशाम्यति ॥६॥ भ्रातॄंश्चान्याः पतींश्चान्याः पुत्रांश्च निहतान् भुवि। दृष्ट्वा परिपतन्त्येताः प्रगृह्य सुभुजा भुजान् ॥ ७ ॥ मध्यमानान्तु नारीणां वृद्धानाञ्चापराजित। आक्रन्दं हतबन्धूनां दारुणे वैशसे शृणु ॥८॥

रथनीड़ानि देहांश्च हतानां गजवाजिनाम् । आश्रिताः श्रममोहार्त्ताः स्थिताः पश्य महाबल ॥ ९ ॥ अन्याचापहृतं कायाच्चारुकुण्डलमुन्नसं । स्वस्य बन्धोः शिरः कृष्ण गृहीत्वा पश्य तिष्ठतीम् ॥ १० ॥ पूर्व्वजातिकृतं पापं मन्ये नाल्पमिवानघ । एताभिरनवद्याभिर्म्मया चैवाल्पमेधया ॥ ११ ॥ यदिदं धर्म्मराजेन पातितं नो जनार्द्दन । न हि नाशोऽस्ति वार्ष्णेय कर्म्मणोः शुभपापयोः ॥ १२ ॥ प्रत्यग्रवयसश्चैव दर्शनीयकुचोदराः । कुलेषु जाता ह्रीमत्यः कृष्णपक्ष्माक्षिमूर्द्धजाः ॥ १३ ॥ हंसगद्गदभाषिण्यो दुःखशोकप्रमोहिताः । सारस्य इव राशन्त्यः पतिताः पश्य माधव ॥१४॥ फुल्लपद्मप्रकाशानि पुण्डरीकाक्ष योषिताम् । अनवद्यानि वक्त्राणि तापयत्येव रश्मिवान् ॥ १५ ॥ ईर्षूणां मम पुत्त्राणां वासुदेवावरोधनम् । मत्तमातङ्गदर्पाणां पश्यन्त्यद्य पृथग्जनाः ॥ १६ ॥ शतचन्द्राणि चर्म्माणि ध्वजांश्चादित्यसन्निभान् । रौक्मानि चैव वर्म्माणि निष्कानपि च काञ्चनान् ॥ १७ ॥ शीर्षत्राणानि चैतानि पुत्त्राणां मे महीतले । पश्य दीप्तानि गोविन्द पावकान् सुहुतानिव ॥१८॥ एष दुःशासनः शेते शूरेणामित्रघातिना । पीतशोणितसर्व्वाङ्गो भीमसेन युधि पातितः ॥ १९ ॥ गदया भीमसेनेन पश्य माधव मे सुतम् । द्यूतक्लेशाननुस्मृत्य द्रौपद्या चोदितेन च ॥ २० ॥ उक्ता ह्यनेन पाञ्चाली सभायां द्यूतनिर्जिता । प्रियं चिकीर्षता भ्रातुः कर्णस्य च जनार्द्दन ॥ २१ ॥ सहैव सहदेवेन नकुलेनार्जुनेन च दासभार्य्यासि पाञ्चालि क्षिप्रं प्रविश नो गृहम् ॥ २२ ॥ ततोऽहमब्रुवं कृष्ण तदा दुर्य्योधनं नृपम् । मृत्युपाशपरिक्षिप्तं शकुनिं पुत्त्र वर्जय ॥ २३ ॥ निबोधैनंसुदुर्बुद्धिं मातुलं कलहप्रियम् । क्षिप्रमेनं परित्यज्य पुत्त्र शाम्यस्व पाण्डवैः ॥ २४ ॥ न बुध्यसे त्वं दुर्बुद्धे भीमसेनममर्षणम् । वाङ्नाराचैस्तुदं स्तीक्ष्णैरुल्काभिरिव कुञ्जरम् ॥ २५ ॥ तानेवं रहसि क्रुद्धान् वाक्शल्यानवधा-

रयन् । उत्सृजन्ति विषं तेषु सर्पा गोवृषभेष्विव ॥ २६ ॥ एष दुःशासनः शेते विक्षिप्य विपुलौ भुजौ । निहतो भीमसेनेन सिंहेनेव महागजः ॥ २७ ॥ अत्यर्थमकरोद्रौद्रं भीमसेनोऽत्यमर्षणः । दुःशासनस्य यत् क्रुद्धोऽपिवच्छोणितमाहवे ॥ २८ ॥

इति स्त्रीपर्वनि स्त्रीविलापपर्वणि गान्धारीविलापे अष्टादशोऽध्यायः ॥ १८ ॥

---

गान्धार्युवाच । एष माधव पुत्रो मे विकर्णः प्राज्ञसम्मतः । भूमौ विनिहतः शेते भीमेन शतधा कृतः ॥ १ ॥ गजमध्ये हतः शेते विकर्णो मधुसूदन । नीलमेघ परिक्षिप्तः शरदीव निशाकरः ॥ २ ॥ अस्य चापग्रहेणैष पाणिः कृतकिणो महान् । कथञ्चिच्छिद्यते गृध्रैरत्तुकामैस्तलत्रवान् ॥ ३ ॥ अस्य भार्य्यामिषप्रेप्सून् गृध्रानेतांस्तपस्विनी । वारयत्यनिशं बाला न च शक्नोति माधव ॥ ४ ॥ युवा वृन्दारकः शूरो विकर्णः पुरुषर्षभ । सुखोषितः सुखार्हश्च शेते पांशुषु माधव ॥ ५ ॥ कर्णिनालीकनाराचैर्भिन्नमर्माणमाहवे । अद्यापि न जहात्येनं लक्ष्मीर्भरतसत्तमम् ॥ ६ ॥ एष संग्रामशूरेण प्रतिज्ञां पालयिष्यता । दुर्मुखोऽभिमुखः शेते हतोऽरिगणहा रणे ॥ ७ ॥ अस्यैतद्वदनं कृष्ण श्वापदैरर्द्धभक्षितम् । विभात्यभ्यधिकं तात सप्तम्यामिव चन्द्रमाः ॥ ८ ॥ शूरस्य हि रणे कृष्ण पश्याननमथेदृशम् । स कथं निहतोऽमित्रैः पांशून् ग्रसति मे सुतः ॥ ९ ॥ यस्याहवमुखे सौम्य स्थाता नैवोपपद्यते । स कथं दुर्मुखोऽमित्रैर्हतो विबुधलोकजित् ॥ १० ॥ चित्रसेनं हतं भूमौ शयानं मधुसूदन । धार्त्तराष्ट्रमिमं पश्य प्रतिमानं धनुष्मताम् ॥ ११ ॥ तञ्चित्रमाल्याभरणं युवत्यः शोककर्षिताः । क्रव्यादसंघैः सहिता रुदत्यः पर्य्युपासते ॥ १२ ॥ स्त्रीणां रुदितनिर्घोषः

श्वापदानाञ्च गर्ज्जितम् । चित्ररूपमिदं कृष्ण विचित्रं प्रतिभाति मे ॥ १३ ॥ युवा वृन्दारको नित्यं प्रवरस्त्रीनिषेवितः । विविंशतिरसौ शेते ध्वस्तः पांशुषु माधव ॥ १४ ॥ शरसंकृत्तवर्माणं वीरं विशसने हतम् । परिवार्य्यासते गृध्राः परिविंशद्विविंशतिम् ॥ १५ ॥ प्रविश्य समरे वीरः पाण्डवानामनीकिनीम् । स वीरशयने शेते पुनः सत्-पुरुषोचिते ॥ १६ ॥ स्मितोपपन्नं सुनसं सुभ्रु ताराधिपोपमम् । अतीव शुभ्रं वदनं पश्य कृष्ण विविंशतेः ॥ १७ ॥ यं स्म तं पर्य्यु-पासन्ते वसुवासवयोषितः । क्रीड़न्तमिव गन्धर्वं देवकन्याः सहस्रशः ॥ १८ ॥ हन्तारं वीरसेनानां शूरं समितिशोभनम् । निवर्हणा-ममित्राणां दुःसहं विषहेत कः ॥१९॥ दुःसहस्यैतदाभाति शरीरं संवृतं शरैः । गिरिरात्मरुहैः फुल्लैः कर्णिकारैरिवावृतः ॥ २० ॥ शातकौम्भ्या स्रजा भाति कवचेन च भास्वता । अग्निनेव गिरिः श्वेतो गतासुरपि दुःसहः ॥ २१ ॥

इति स्त्रीपर्वणि स्त्रीविलापपर्वणि गान्धारीविलापे
एकोनविंशोऽध्यायः ॥ १९ ॥

---

गान्धार्य्युवाच । अध्यर्द्धगुणमाहुर्यं बले शौर्य्ये च केशव । पित्रा त्वया च दाशार्ह दृप्तं सिंहमिवोत्कटम् ॥ १ ॥ यो बिभेद चमूमेको मम पुत्रस्य दुर्भिदाम् । स भूत्वा मृत्युरन्येषामयं मृत्युवशं गतः ॥२॥ तस्योपलक्षये कृष्ण कार्ष्णेरमिततेजसः । अभिमन्योर्हतस्यापि प्रभा नैवोपशाम्यति ॥ ३ ॥ एषा विराटदुहिता स्नुषा गाण्डीवधन्वनः । आर्त्ता बाला पतिं वीरं दृष्ट्वा शोचत्यनिन्दिता ॥ ४ ॥ तमेषा हि समासाद्य भार्य्या भर्त्तारमन्तिके । विराटदुहिता कृष्ण पाणिना परिमार्ज्जति ॥ ५ ॥ तस्य वक्त्रमुपाघ्राय सौभद्रस्य मनस्विनी । विबुद्धकमलाकारं कम्बुवृत्तशिरोधरम् ॥ ६ ॥ काम्यरूपवती चैषा परिष्वजति भाविनी । लज्जमाना पुरा चैनं माध्वीकमदमूर्च्छितम्

॥ ७ ॥ तस्य स्रुतजसन्दिग्धं जातरूपपरिष्कृतम्। विमुच्य कवचं वीर शरीरमभिवीक्षते ॥८॥ अवेक्षमाणा तं बाला कृष्णा त्वामभिभाषते। अयं ते पुण्डरीकाक्ष सदृशाक्षो निपातितः ॥ ९ ॥ बले वीर्य्ये च सदृशस्तेजसा चैव तेऽनघ। रूपेण च तथात्यर्थं शेते भुवि निपातितः ॥ १० ॥ अत्यन्तसुकुमारस्य राङ्कवाजिनशायिनः। कच्चिदद्य शरीरं ते भूमौ न परितप्यते ॥ ११ ॥ मातङ्गभुजवर्म्माणौ ज्याक्षेपकठिनत्वचौ। काञ्चनाङ्गदिनौ शेषे निक्षिप्य विपुलौ भुजौ ॥ १२ ॥ व्यायम्य बहुधा नूनं सुखसुप्तः श्रमादिव। एवं विलपतीमार्त्तां न हि मामभिभाषसे ॥ १३ ॥ न स्मराम्यपराद्धं ते किं मां न प्रतिभाषसे। ननु मां त्वं पुरा दूरादभिवीक्ष्याभिभाषसे ॥ १४ ॥ आर्य्यामार्य्ये सुभद्रां त्वमिमांश्च त्रिदशोपमान्। पितॄंश्चैव दुःखार्त्तां विहाय क्व गमिष्यसि ॥ १५ ॥ तस्य शोणितदिग्धान् वै केशानुद्यम्य पाणिना। उत्सङ्गे वक्त्रमाधाय जीवन्तमिव पृच्छति ॥ १६ ॥ स्वस्रीयं वासुदेवस्य पुत्रं गाण्डीवधन्वनः। कथं त्वां रणमध्यस्थं जघ्नुरेते महारथाः ॥ १७ ॥ धिगस्तु क्रूरकर्त्तॄंस्तान् कृपकर्णजयद्रथान्। द्रोणद्रौणायनी चोभौ यैरसि व्यसनीकृतः ॥ १८ ॥ रथर्षभाणां सर्व्वेषां कथमासीत्तदा मनः। बालं त्वां परिवार्य्यैकं मम दुःखाय जघ्नुषाम् ॥ १९ ॥ कथं नु पाण्डवानाञ्च पाञ्चालानाञ्च पश्यताम्। त्वं वीर निधनं प्राप्तो नाथवान् सन्ननाथवत् ॥ २० ॥ दृष्ट्वा त्वां बहुभि सङ्ख्ये हतं वीर पिता स हि। वीरः पुरुषशार्दूलः कथं जीवति पाण्डवः ॥ २१ ॥ न राज्यलाभो विपुलः शत्रूणां वा पराभवः। प्रीतिं धास्यति पार्थानां त्वामृते पुष्करेक्षण ॥२२॥ तव शस्त्रजितांल्लोकान् धर्म्मेण च दमेन च। क्षिप्रमन्वागमिष्यामि तत्र मां परिपालय ॥ २३ ॥ दुर्म्मरं पुनरप्राप्ते काले भवति केनचित्। यदहं त्वां रणे दृष्ट्वा हतं जीवामि दुर्भगा ॥ २४ ॥ कामिदानीं नरव्याघ्र श्लक्ष्णया

स्मितया गिरा। पितृलोके समेत्यान्यां मामिवामन्त्रयिष्यसि ॥२५॥
नूनमप्सरसां स्वर्गे मनांसि प्रमथिष्यसि। परमेण च रूपेण गिरा
च स्मितपूर्वया ॥ २६ ॥ प्राप्य पुण्यकृतांल्लोकानप्सरोभिः समेयि-
वान्। सौभद्र विहरन् काले स्मरेथाः सुकृतानि मे ॥ २७ ॥
एतावानिह संवासो विहितस्ते मया सह। षण्मासान् सप्तमे
मासि त्वं वीर निधनं गतः ॥ २८ ॥ इत्युक्तवचनामेतामपकर्षन्ति
दुःखिताम्। उत्तरां मोघसङ्कल्पां मत्स्यराजकुलस्त्रियः ॥ २९ ॥
उत्तरामपकृष्यैनामार्त्तामार्त्ततराः स्वयम्। विराटं निहतं दृष्ट्वा
क्रोशन्ति विलपन्ति च ॥ ३० ॥ द्रोणास्त्रशरसंकृत्तं शयान रुधि-
रोक्षितम्। विराटं विनदन्त्येते गृध्रगोमायुवायसाः ॥ ३१ ॥
विनद्यमानं विहगैर्विराटमसितेक्षणाः। न शक्नुवन्ति विवशा
विवर्त्तयितुमातुराः ॥ ३२ ॥ आसामातपतप्तानामायासेन च योषि-
ताम्। श्रमेण च विवर्णानां वक्त्राणां विप्लुतं वपुः ॥ ३३ ॥ उत्तर-
ञ्चाभिमन्युञ्च काम्बोजञ्च सुदक्षिणम्। शिशूनेतान् हतान् पश्य
लक्ष्मणञ्च सुदर्शनम्। आयोधनशिरोमध्ये शयानं पश्य माधव ॥३४॥

इति स्त्रीपर्वणि स्त्रीविलापपर्वणि गान्धारीवाक्ये
विंशोऽध्यायः ॥ २० ॥

---

गान्धार्य्युवाच। एष वैकर्त्तनः शेते महेष्वासो महाबलः।
ज्वलितानलवत् सङ्ख्ये संशान्तः पार्थतेजसा ॥ १ ॥ पश्य वैकर्त्तनं
कर्णं निहत्यातिरथान् बहून्। शोणितौघपरीताङ्गं शयानं पतितं
भुवि ॥ २ ॥ अमर्षी दीर्घरोषश्च महेष्वासो महारथः। रणे
विनिहतः शेते शूरो गाण्डीवधन्वना ॥ ३ ॥ यं स्म पाण्डवमन्त्रासा-
न्मम पुत्रा महारथाः। प्रायुध्यन्त पुरस्कृत्य मातङ्गा इव यूथपम्॥४॥
शार्दूलमिव सिंहेन समरे सव्यसाचिना। मातङ्गमिव मत्तेन मात-
ङ्गेन निपातितम् ॥ ५ ॥ समेताः पुरुषव्याघ्र निहतं शूरमाहवे।

प्रकीर्णमूर्द्धजाः पत्न्यो रुदत्यः पर्य्युपासते ॥६॥ उद्विग्नः सततं यस्मात् धर्म्मराजो युधिष्ठिरः । त्रयोदशसमा निद्रां चिन्तयन्नाध्यगच्छत ॥ ७ ॥ अनाधृष्यः परैर्युद्धे शत्रुभिर्म्मघवानिव । युगान्ताग्निरिवार्च्चिष्मान् हिमवानिव च स्थिरः ॥ ८ ॥ स भूत्वा शरणं वीरो धार्त्तराष्ट्रस्य माधव । भूमौ विनिहतः शेते वातरुग्न इव द्रुमः ॥ ९ ॥ पश्य कर्णस्य पत्नीं त्वं वृषसेनस्य मातरम् । लालप्यमानां करुणां रुदतीं पतितां भुवि ॥ १० ॥ आचार्य्यशापोऽनुगतो ध्रुवं त्वां यद्ग्रसच्चक्रमियं धरा ते । ततः शरेणापहृतं शिरस्ते धनञ्जयेनाहवशत्रुमध्ये ॥ ११ ॥ हा हा धिगेषा पतिता विसंज्ञा समीक्ष्य जाम्बूनदबद्धकक्षम् । कर्णं महाबाहुमदीनसत्त्वं सुषेणमाता रुदती भृशार्त्ता ॥ १२ ॥ अल्पावशेषोऽपि कृतो महात्मा शरीरभक्षैः परिभक्षयद्भिः । द्रष्टुं न नः प्रीतिकरः शशीव कृष्णस्य पक्षस्य चतुर्द्दशाहे ॥ १३ ॥ सा वर्त्तमाना पतिता पृथिव्यामुत्थाय दीना पुनरेव चैषा । कर्णस्य वक्त्रं परिजिघ्रमाणा रोरूयते पुत्रबधाभितप्ता ॥ १४ ॥

इति स्त्रीपर्बणि स्त्रीविलापपर्बणि गान्धारीवाक्ये
एकविंशोऽध्यायः ॥ २१ ॥

---

गान्धार्य्युवाच । आवन्त्यं भीमसेनेन भक्षयन्ति निपातितम् । गृध्रगोमायवः शूरं बहुबन्धुमबन्धुवत् ॥ १ ॥ तं पश्य कदनं कृत्वा शत्रूणां मधुसूदन । शयानं वीरशयने रुधिरेण समुक्षितम् ॥२॥ तं सृगालाश्च कङ्काश्च क्रव्यादाश्च पृथग्विधाः । तेन तेन विकर्षन्ति पश्य कालस्य पर्य्ययम् ॥ ३ ॥ शयानं वीरशयने वीरमाक्रन्दकारिणम् । आवन्त्यं सहिता नार्य्यो रुदन्त्यः पर्य्युपासते ॥ ४ ॥ प्रातिपेयं महेष्वासं हतं भल्लेन वाह्लिकम् । प्रसुप्तमिव शार्दूलं पश्य कृष्ण मनस्विनम् ॥५॥ अतीव मुखवर्णोऽस्य निहतस्यापि शोभते । सोमस्येवाभिपूर्णस्य पौर्णमास्यां समुद्यतः ॥ ६ ॥ पुत्रशोकाभितप्तेन

प्रतिज्ञां परिरक्षता । पाकशासनिना सङ्ख्ये वार्द्धक्षत्रिर्निपातितः ॥ ७ ॥ एकादशचमूर्भिरक्षा रक्ष्यमाणं महात्मना । सत्यं चिकीर्षता पश्य हतमेनं जयद्रथम् ॥ ८ ॥ सिन्धुसौवीरभर्त्तारं दर्पपूर्णं मनस्विनम् । भक्षयन्त्यशिवा गृध्रा जनार्द्दन जयद्रथम् ॥९॥ संरक्ष्यमाणं भार्य्याभिरनुरक्ताभिरच्युत । रसन्त्यो व्यपकर्षन्ति गहनं निम्नमन्तिकात् ॥ १० ॥ तमेताः पर्य्युपासन्ते रक्ष्यमाणं महाभुजम् । सिन्धुसौवीरभर्त्तारं काम्बोजयवनस्त्रियः ॥ ११ ॥ यदा कृष्णामुपादाय प्राद्रवत् केकयैः सह । तदैव बध्यः पाण्डूनां जनार्द्दन जयद्रथः ॥१२॥ दुःशलां मानयद्भिस्तु तदा मुक्तो जयद्रथः । कथमद्य न तां कृष्ण मानयन्ति स्म ते पुनः ॥ १३ ॥ सैषा मम सुता वाला विलपन्ती सुदुःखिता । प्रमापयति चात्मानमाक्रोशति च पाण्डवान् ॥ १४ ॥ किं नु दुःखतरं कृष्ण परं मम भविष्यति । यत् सुता विधवा वाला स्नुषाश्च निहतेश्वराः ॥ १५ ॥ हा हा धिग्दुःशलां पश्य वीतशोकभयामिव । शिरो भर्त्तुरनासाद्य धावमानामितस्ततः ॥ १६ ॥ वारयामास यः सर्वान् पाण्डवान् पुत्रगृद्धिनः । हत्वा स विपुलाः सेनाः स्वयं मृत्युवशं गतः ॥ १७ ॥ तं मत्तमिव मातङ्गं वीरं परमदुर्ज्जयम् । परिवार्य्य रुदन्त्येताः स्त्रियश्चन्द्रोपमाननाः ॥ १८ ॥

इति स्त्रीपर्वणि स्त्रीविलापपर्वणि गान्धारीवाक्ये
द्वाविंशोऽध्यायः ॥ २२ ॥

---

गान्धार्य्युवाच । एष शल्यो हतः शेते साक्षान्नकुलमातुलः । धर्मज्ञेन सता तात धर्मराजेन संयुगे ॥ १ ॥ यस्त्वया स्पर्द्धते नित्यं सर्वत्र पुरुषर्षभ । स एष निहतः शेते मद्रराजो महारथः ॥ २ ॥ येन संगृह्णता तात रथमाधिरथेर्युधि । जयार्थं पाण्डुपुत्राणां तथा तेजोबधः कृतः ॥३॥ हा हा धिक् पश्य शल्यस्य पूर्णचन्द्रसुदर्शनम् ।

मुखं पद्मपलाशाक्षं काकैरादष्टमव्रणम् ॥४॥ एषा चामीकराभस्य तप्तकाञ्चनसप्रभा । आस्याद्विनिःसृता जिह्वा भक्ष्यते कृष्ण पक्षिभिः ॥ ५ ॥ युधिष्ठिरेण निहतं शल्यं समितिशोभनम् । रुदन्त्यः पर्य्युपासन्ते मद्रराजकुलस्त्रियः ॥६॥ एताः सुसूक्ष्मवसना मद्रराजं नरर्षभम् । क्रोशन्त्योऽथ समासाद्य क्षत्रियाः क्षत्रियर्षभम् ॥ ७ ॥ शल्यं निपतितं शूरं परिवार्य्याभितः स्थिताः । वाशिता गृष्टयः पङ्के परिलग्नमिव द्विपम् ॥ ८ ॥ शल्यं शरणदं शूरं पश्यैनं रथसत्तमम् । शयानं वीरशयने शरैर्विशकलीकृतम् ॥ ९ ॥ एष शैलालयो राजा भगदत्तः प्रतापवान् । गजाङ्कुशधरः श्रेष्ठः शेते भुवि निपातितः ॥ १० ॥ यस्य रुक्ममयी माला शिरस्येषा विराजते । श्वापदैर्भक्ष्यमाणस्य शोभयन्तीव मूर्द्धजान् ॥ ११ ॥ एतेन किल पार्थस्य युद्धमासीत् सुदारुणम् । लोमहर्षणमत्यर्थं शक्रस्येवाह्निना यथा ॥१२॥ योधयित्वा महाबाहुरेष पार्थं धनञ्जयम् । संशयं गमयित्वा च कुन्तीपुत्रेण पातितः ॥१३॥ यस्य नास्ति समो लोके शौर्य्ये वीर्य्ये च कश्चन । स एष निहतः शेते भीष्मो भीष्मकृदाहवे ॥ १४ ॥ पश्य शान्तनवं कृष्ण शयानं सूर्य्यवर्च्चसम् । युगान्त इव कालेन पतितं सूर्य्यमम्बरात् ॥ १५ ॥ एष तप्त्वा रणे शत्रूञ्छस्त्रतापेन वीर्य्यवान् । नरसूर्य्योऽस्तमभ्येति सूर्य्योऽस्तमिव केशव ॥१६॥ शरतल्पगतं वीरं धर्म्मे देवापिना समम् । शयानं वीरशयने पश्य शूरनिषेविते ॥१७॥ कर्णिनालीकनाराचैरास्तीर्य्य शयनोत्तमम् । आविश्य शेते भगवान् स्कन्दः शरवनं यथा ॥ १८ ॥ अतूलपूर्णं गाङ्गेयस्त्रिभिर्बाणैः समन्वितम् । उपधायोपधानाग्र्यं दत्तं गाण्डीवधन्वना ॥ १९ ॥ पालयानः पितुः शास्त्रमूर्द्धरेता महायशाः । एष शान्तनवः शेते माधवाप्रतिमो युधि ॥ २० ॥ धर्म्मात्मा तत धर्म्मज्ञः पारावर्य्येण निर्णये । अमर्त्य इव मर्त्त्यः सन्नेष प्राणानधारयत् ॥२१॥ नास्तियुद्धे कृती कश्चिन्न विद्वान्न पराक्रमी । यत्र शान्तनवो भीष्मः शेतेऽद्य निहतः

शरैः ॥ २२ ॥ स्वयमेतेन शूरेण पृच्छ्यमानेन पाण्डवैः । धर्मज्ञो
नाह्नवे मृत्युराख्यातः सत्यवादिना ॥२३॥ प्रनष्टः कुरुवंशः स पुनर्येन
समुद्धृतः । स गतः कुरुभिः सार्द्धं महाबुद्धिः पराभवम् ॥ २४ ॥
धर्मेषु कुरवः कं नु परिप्रच्छन्ति माधव । गते देवव्रते स्वर्गं देवकल्पे
नरर्षभे ॥ २५ ॥ अर्जुनस्य विनेतारमाचार्य्यं सात्यकेस्तथा । तं पश्य
पतितं द्रोणं कुरूणां द्विजसत्तमम् ॥२६॥ अस्त्रं चतुर्विधं वेद यथैव
त्रिदशेश्वरः । भार्गवो वा महावीर्य्यस्तथा द्रोणोऽपि माधव ॥२७॥
यस्य प्रसादाद्बीभत्सुः पाण्डवः कर्म दुष्करम् । चकार स हतः शेते
नैनमस्त्राण्यपालयन् ॥२८॥ यं पुरोधाय कुरव आह्वयन्ते स्म पाण्ड-
वान् । सोऽयं शस्त्रभृतां श्रेष्ठो द्रोणः शस्त्रैः परिक्षतः ॥ २९ ॥ यस्य
निर्द्दहतः सेनां गतिरग्नेरिवाभवत् । स भूमौ निहतः शेते शान्तार्च्चि-
रिव पावकः ॥३०॥ धनुर्मुष्टिरशीर्णश्च हस्तावापश्च माधव । द्रोणस्य
निहतस्यापि दृश्यते जीवतो यथा ॥ ३१ ॥ वेदा यस्माच्च चत्वारः
सर्वास्त्राणि च केशव । अनपेतानि वै शूराद्यथैवादौ प्रजापतेः॥३२॥
वन्दनार्हाविमौ तस्य वन्दिभिर्वन्दितौ शुभौ । गोमायवो विकर्षन्ति
पादौ शिष्यगणार्च्चितौ ॥३३॥ द्रोणं द्रुपदपुत्रेण निहतं मधुसूदन ।
कृपी कृपणमन्वास्ते दुःखोपहतचेतना ॥३४॥ तां पश्य पतितामार्त्तां
मुक्तकेशीमधोमुखीम् । हतं पतिमुपासन्तीं द्रोणं शस्त्रभृताम्वरम्
॥३५॥ वाणैर्भिन्नतनुत्राणं धृष्टद्युम्नेन केशव । उपासते मृधे द्रोणं
जटिला ब्रह्मचारिणः ॥३६॥ प्रेतकृत्ये च यतते कृपी कृपणमातुरा ।
हतस्य समरे भर्त्तुः सुकुमारी यशस्विनी ॥ ३७ ॥ अग्निमाहृत्य
विधिवच्चितां प्रज्वाल्य सर्वशः । द्रोणमाधायगायन्तित्रीणिसामानि
सामगाः ॥ ३८ ॥ कुर्वन्ति च चितामेते जटिला ब्रह्मचारिणः ।
धनुर्भिः शक्तिभिश्चैव रथनीड़ैश्च माधव ॥ ३९ ॥ शस्त्रैश्च विविधै-
रन्यैर्धक्ष्यन्तो भूरितेजसम् । एते द्रोणं समाधाय शंसन्ति च रुदन्ति
च ॥४०॥ सामभिस्त्रिभिरन्तःस्थैरनुशंसन्ति चापरे । अग्नावग्निमिवा-

थाय द्रोणं हुत्वा हुताशने॥४१॥ गच्छन्त्यभिमुखा गङ्गां द्रोणशिष्या द्विजातयः। अपसव्यां चितिं कृत्वा पुरस्कृत्य कृपीं तदा॥ ४२॥

इति स्त्रीपर्वणि स्त्रीविलापपर्वणि गान्धारीवाक्ये त्रयोविंशोऽध्यायः॥ २३॥

---

गान्धार्य्युवाच। सोमदत्तसुतं पश्य युयुधानेन पातितम्। वितुद्यमानं विहगैर्बहुभिर्माधवान्तिके॥ १॥ पुत्रशोकाभिसन्तप्तः सोमदत्तो जनार्द्दन। युयुधानं महेष्वासं गर्हयन्निव दृश्यते॥२॥ असौ हि भूरिश्रवसो माता परमदुःखिता। आश्वासयति भर्त्तारं सोमदत्तमनिन्दिता॥ ३॥ दिष्ट्या नैनं महाराज दारुणं भरतक्षयम्। कुरुसंक्रन्दनं घोरं युगान्तमनुपश्यसि॥ ४॥ दिष्ट्या यूपध्वजं वीरं पुत्रं भूरिसहस्रदम्। अनेकक्रतुयज्वानं निहतं नाद्य पश्यसि॥५॥ दिष्ट्या स्नुषाणामाक्रन्दे घोरं विलपितं बहु। न शृणोषि महाराज सारसीनामिवार्णवे॥ ६॥ एकवस्त्रानुसम्वीताः प्रकीर्णासितमूर्द्धजाः। स्नुषास्ते परिधावन्ति हतापत्या हतेश्वराः॥ ७॥ श्वापदैर्भक्ष्यमाणं तमहो दिष्ट्या न पश्यसि। छिन्नबाहुं नरव्याघ्रमर्ज्जुनेन निपातितम्॥ ८॥ शलं विनिहतं संख्ये भूरिश्रवसमेव च। स्नुषाश्च विधवाः सर्वा दिष्ट्या नाद्येह पश्यसि॥ ९॥ दिष्ट्या तत् काञ्चनं छत्रं यूपकेतोर्महात्मनः। विनिकीर्णं रथोपस्थे सौमदत्तेर्न पश्यसि॥ १०॥ अमूस्तु भूरिश्रवसो भार्य्याः सात्यकिना हतम्। परिवार्य्यानुशोचन्ति भर्त्तारमसितेक्षणाः॥ ११॥ एता विलप्य बहुलं भर्त्तुः शोकेन कर्षिताः। पतन्त्यभिमुखा भूमौ कृपणं तव केशव॥ १२॥ बीभत्सुरतिबीभत्सं कर्म्मेदमकरोत् कथम्! प्रमत्तस्य यदच्छेत्सीद्बाहुं शूरस्य यज्वनः॥ १३॥ ततः पापतरं कर्म कृतवानपि सात्यकिः। यस्मात् प्रायोपविष्टस्य प्राहार्षीत् संशितात्मनः॥ १४॥ एको द्वाभ्यां हतः शेषे

त्वमधर्म्मेण धार्म्मिकः । इति यूपध्वजस्यैताः स्त्रियः क्रोशन्ति माधव
॥ १५ ॥ भार्य्या यूपध्वजस्यैषा करसम्मितमध्यमा । कृत्वोत्सङ्गे
भुजं भर्त्तुः कृपणं पर्य्यदेवयत् ॥ १६ ॥ अयं स रशनोत्कर्षी पीन-
स्तनविमर्द्दनः । नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ १७ ॥
अयं स हन्ता शत्रूणां मित्राणामभयप्रदः । प्रदाता गोसहस्राणां
क्षत्रियान्तकरः करः ॥ १८ ॥ वासुदेवस्य सान्निध्ये पार्थेनाक्लिष्ट-
कर्म्मणा । युध्यतः समरेऽन्येन प्रमत्तस्य निपातितः ॥ १९ ॥ किं नु
वक्ष्यसि संसत्सु कथासु च जनार्द्दन । अर्जुनस्य महत् कर्म स्वयं
वा स किरीटवान् ॥ २० ॥ इत्येवं गर्हयित्वैषा तूष्णीमास्ते वरा-
ङ्गना । तामेतामनुशोचन्ति सपत्न्यः स्वामिव स्नुषाम् ॥ २१ ॥
गान्धारराजः शकुनिर्बलवान् सत्यविक्रमः । निहतः सहदेवेन
भागिनेयेन मातुलः ॥ २२ ॥ यः पुरा हेमदण्डाभ्यां व्यजनाभ्यां स्म
वीज्यते । स एष पक्षिभिः पक्षैः शयान उपवीज्यते ॥ २३ ॥ यः
स्म रूपाणि कुरुते शतशोऽथ सहस्रशः । तस्य मायाविनो माया
दग्धाः पाण्डवतेजसा ॥ २४ ॥ मायया निकृतिप्रज्ञो जितवान् यो
युधिष्ठिरम् । सभायां विपुलं राज्यं स पुनर्जीवितं जितः ॥ २५ ॥
शकुनाः शकुनिं कृष्ण समन्तात् पर्य्युपासते । कैतवं मम पुत्राणां
विनाशायोपशिक्षितम् ॥ २६ ॥ एतेनैतन्महद्वैरं प्रसक्तं पाण्डवैः
सह । बधाय मम पुत्राणामात्मनः सगणस्य च ॥ २७ ॥ यथैव मम
पुत्राणां लोकाः शस्त्रजिता विभो । एवमस्यापि दुर्बुद्धेर्लोकाः
शस्त्रेण वै जिताः ॥ २८ ॥ कथञ्चनायं तत्रापि पुत्रान्मे भ्रातृभिः
सह । विरोधयेदृजुप्रज्ञाननृजुर्म्मधुसूदन ॥ २९ ॥

इति स्त्रीपर्वणि स्त्रीविलापपर्वणि गान्धारीवाक्ये
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

गान्धार्य्युवाच । काम्बोजं पश्य दुर्द्धर्षं काम्बोजास्तरणोचितम् ।

शयानमृषभस्कन्धं हतं पांशुषु माधव ॥ १ ॥ यस्य चतजसन्दिग्धौ बाहू चन्दनरूषितौ । अवेक्ष्य कृपणा भार्य्या विलपत्यतिदुःखिता ॥२॥ इमौ तौ परिघप्रख्यौ बाहू शुभतलाङ्गुलौ । ययोर्विवरमापन्नां न रतिमाँ पुराजहात् ॥ ३ ॥ कां गतिं नु गमिष्यामि त्वया हीना जनेश्वर । दूरबन्धुरनाथेव वेपन्ती मधुरस्वरा ॥ ४ ॥ आतपे क्लाम्यमानानां विबुधानामिव स्रजाम् । क्लान्तानामपि नारीणां न श्रीस्त्यजति वै तनुम् ॥ ५ ॥ शयानमभितः शूरं कालिङ्गं मधुसूदन । पश्य दीप्ताङ्गदयुगप्रतिबद्धमहाभुजम् ॥ ६ ॥ मागधानामधिपतिं जयत्सेनं जनार्द्दन । परिवार्य्य प्ररुदिता मागध्यः पश्य योषितः ॥ ७ ॥ आसामायतनेत्राणां सुस्वराणां जनार्द्दन । मनःश्रुतिहरो नादो मनो मोहयतीव मे ॥ ८ ॥ प्रकीर्णसर्वाभरणा रुदत्यः शोककर्षिताः । स्वास्तीर्णशयनोपेता मागध्यः शेरते भुवि ॥ ९ ॥ कोशलानामधिपतिं राजपुत्रं बृहद्बलम् । भर्त्तारं परिवार्य्यैताः पृथक् प्ररुदिताः स्त्रियः ॥१०॥ अस्य गात्रगतान् बाणान् कार्ष्णिबाहुबलार्पितान् । उद्धरन्त्यसुखाविष्टा मूर्च्छमानाः पुनः पुनः ॥ ११ ॥ आसां सर्वानवद्यानामातपेन परिश्रमात् । प्रम्लाननलिनाभानि भान्ति वक्त्राणि माधव ॥ १२ ॥ द्रोणेन निहताः शूरा शेरते रुचिराङ्गदाः । धृष्टद्युम्नसुताः सर्वे शिशवो हेममालिनः ॥ १३ ॥ रथाग्न्यगारं चापार्च्चिःशरशक्तिगदेन्धनम् । द्रोणमासाद्य निर्द्दग्धाः शलभा इव पावकम् ॥ १४ ॥ तथैव निहताः शूराः शेरते रुचिराङ्गदाः । द्रोणेनाभिमुखाः सर्वे भ्रातरः पञ्च केकयाः ॥ १५ ॥ तप्तकाञ्चनवर्माणस्तालध्वजरथस्रजः । भासयन्ति महीं भासा ज्वलिता इव पावकाः ॥ १६ ॥ द्रोणेन द्रुपदं सङ्ख्ये पश्य माधव पातितम् । महाद्विपमिवारण्ये सिंहेन महता हतम् ॥ १७ ॥ पाञ्चालराज्ञो विमलं पुण्डरीकाक्ष पाण्डरम् । आतपत्रं समाभाति शरदीव निशाकरः ॥ १८ ॥ एतास्तु द्रुपदं वृद्धं स्नुषा

भार्य्या सुदुःखिताः । दग्ध्वा गच्छन्ति पाञ्चाल्यं राजानमपसव्यतः ॥ १९ ॥ धृष्टकेतुं महेष्वासं चेदिपुङ्गवमङ्गनाः । द्रोणेन निहतं शूरं हरन्ति हृतचेतसः ॥ २० ॥ द्रोणास्त्रमभिहत्यैष विमर्द्दी मधुसूदन । महेष्वासो हतः शेते वातरुग्न इव द्रुमः ॥ २१ ॥ एष चेदिपतिः शूरो धृष्टकेतुर्महारथः । शेते विनिहतः संख्ये हत्वा शत्रून् सहस्रशः ॥ २२ ॥ विच्छिद्यमानं विहगैस्तं भार्य्याः प्रत्युपस्थिताः । चेदिराजं हृषीकेश सुकेशञ्चारुकुण्डलम् ॥२३॥ दाशार्हपुत्रजं वीरं शयानं सत्यविक्रमम् । आरोप्याङ्के रुदन्त्येताश्चेदिराजं वराङ्गनाः ॥ २४ ॥ अस्य पुत्रं हृषीकेश सुकेशञ्चारुकुण्डलम् । द्रोणेन समरे पश्य निकृत्तं बहुधा शरैः ॥ २५ ॥ पितरं नूनमाजिस्थं युध्यमानं परैः सह । नाजहात् पितरं वीरमद्यापि मधुसूदन ॥ २६ ॥ एवं ममापि पुत्रस्य पुत्रः पितरमन्वगात् । दुर्य्योधनं महाबाहो लक्ष्मणः परवीरहा ॥ २७ ॥ विन्दानुविन्दावावन्त्यौ पतितौ पश्य केशव । हिमान्ते पुष्पितौ शालौ मरुता गलिताविव ॥ २८ ॥ काञ्चनाङ्गदवर्म्माणौ रणे खड्गधनुर्द्धरौ । ऋषभप्रतिरूपाक्षौ शयानौ विमलस्रजौ ॥ २९ ॥ अवध्याः पाण्डवाः कृष्ण सर्व्व एव त्वया सह । ये मुक्ता द्रोणभीष्माभ्यां कर्णात् वैकर्त्तनात् कृपात् ॥ ३० ॥ दुर्य्योधनात् द्रोणसुतात् सैन्धवाच्च महारथात् । सोमदत्ताद्विकर्णाच्च शूराच्च कृतवर्म्मणः ॥ ३१ ॥ ये हन्युः शस्त्रवेगेन देवानपि नरर्षभाः । त इमे निहताः सर्व्वे पश्य कालस्य पर्य्ययम् ॥ ३२ ॥ नातिभारोऽस्ति दैवस्य ध्रुवं माधव कश्चन । यदिमे निहताः शूराः क्षत्रियैः क्षत्रियर्षभाः ॥ ३३ ॥ तदैव निहताः कृष्ण मम पुत्रास्तरस्विनः । यदैवाकृतकामस्त्वमुपप्लव्यं गतः पुनः ॥३४॥ शान्तनोश्चैव पुत्रेण प्राज्ञेन विदुरेण च । तदैवोक्तास्मि मा स्नेहं कुरुष्वात्मसुतेष्विति ॥ ३५ ॥ तयोर्न दर्शनं तात मिथ्या भवितुमर्हति । अचिरेणैव पुत्रा मे भस्मीभूता जनार्द्दन ॥ ३६ ॥

वैशम्पायन उवाच। इत्युक्त्वा न्यपतद्भूमौ गान्धारी शोक-मूर्च्छिता। दुःखोपहतविज्ञाना धैर्य्यमुत्सृज्य भारत ॥३७॥ ततः कोपपरीताङ्गी पुत्रशोकपरिप्लुता। जगाम शौरिं दोषेण गान्धारी व्यथितेन्द्रिया ॥ ३८ ॥

गान्धार्य्युवाच। पाण्डवा धार्त्तराष्ट्राश्च दग्धाः कृष्ण परस्परम्। उपेक्षिता विनश्यन्तस्त्वया कस्माज्जनार्द्दन ॥ ३९ ॥ शक्तेन बहुभृत्येन विपुले तिष्ठता बले। उभयत्र समर्थेन श्रुतवाक्येन चैव हि ॥ ४० ॥ इच्छतोपेक्षितो नाशः कुरूणां मधुसूदन। यस्मात्त्वया महाबाहो फलं तस्मादवाप्नुहि ॥ ४१ ॥ पतिशुश्रूषया यन्मे तपः किञ्चिदुपार्ज्जितम्। तेन त्वां दुरवापेन शप्स्ये चक्रगदाधरः ॥४२॥ यस्मात् परस्परं घ्नन्तो ज्ञातयः कुरुपाण्डवाः। उपेक्षितास्ते गोविन्द तस्माज्ज्ञातीन् बधिष्यसि ॥ ४३ ॥ त्वमप्युपस्थिते वर्षे षट्त्रिंशे मधुसूदन। हतज्ञातिर्हतामात्यो हतपुत्रो वनेचरः। कुत्सितेनाप्युपायेन निधनं समवाप्स्यसि ॥ ४४ ॥ तवाप्येवं हतसुता निहतज्ञातिबान्धवाः। स्त्रियः परितपिष्यन्ति यथैव भरतस्त्रियः ॥ ४५ ॥

वैशम्पायन उवाच। एतच्छ्रुत्वा तु वचनं वासुदेवो महामनाः। उवाच देवीं गान्धारीमीषदभ्युत्स्मयन्निव ॥ ४६ ॥ संहर्त्ता वृष्णिचक्रस्य मदन्यो नेह विद्यते। जानेऽहमेतदप्येवं चीर्णं चरसि सुव्रते ॥ ४७ ॥ अवध्यास्ते नरैरन्यैरपि वा देवदानवैः। परस्परकृतं नाशं यतः प्राप्स्यन्ति यादवाः ॥ ४८ ॥ इत्युक्तवति दाशार्हे पाण्डवास्त्रस्तचेतसः। बभूवुर्भृशसंविग्ना निराशाश्चापि जीविते ॥ ४९ ॥

इति स्त्रीपर्वणि स्त्रीविलापपर्वणि गान्धारीविलापे पञ्चविंशोऽध्यायः ॥ २५ ॥

समाप्तञ्च स्त्रीविलापपर्व ।

---

## अथ श्राद्धपर्व ।

भगवानुवाच । उत्तिष्ठोत्तिष्ठ गान्धारि मा च शोके मनः कृथाः ।
तवैव ह्यपराधेन बहवो निधनं गताः ॥ १ ॥ यत्त्वं पुत्रं दुरात्मान-
मीर्षुमत्यन्तमानिनम् । दुर्योधनं पुरस्कृत्य दुष्कृतं साधु मन्यसे ॥२॥
निष्ठुरं वैरपुरुषं वृद्धानां शासनातिगम् । कथमात्मकृतं दोषं मय्या-
धातुमिहेच्छसि ॥ ३ ॥ मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ ४ ॥ तपोऽर्थीयं ब्राह्मणी
धत्ते गर्भं गौर्वोढारं धावितारं तुरङ्गी । शूद्रा दासं पशुपालञ्च
वैश्या वधार्थीयं त्वद्विधा राजपुत्री ॥ ५ ॥

वैशम्पायन उवाच । तच्छ्रुत्वा वासुदेवस्य पुनरुक्तं वचो-
ऽप्रियम् । तूष्णीं बभूव गान्धारी शोकव्याकुलचेतना ॥ ६ ॥ धृत-
राष्ट्रस्तु राजर्षिर्निगृह्याबुद्धिजं तमः । पर्यपृच्छत धर्मात्मा धर्म-
राजं युधिष्ठिरम् ॥७॥ जीवतां परिमाणज्ञः सैन्यानामपि पाण्डव ।
हतानां यदि जानीषे परिमाणं वदस्व मे ॥ ८ ॥

युधिष्ठिर उवाच । दशायुतानामयुतं सहस्राणि च विंशतिः ।
कोटग्रः षष्टिश्च षट्चैव येऽस्मिन् राजन् मृधे हताः ॥ ९ ॥ अल-
क्ष्याणान्तु वीराणां सहस्राणि चतुर्दश । दश चान्यानि राजेन्द्र
शतं षष्टिश्च पञ्च च ॥ १० ॥

धृतराष्ट्र उवाच । युधिष्ठिर गतिं कान्ते गताः पुरुषसत्तमाः ।
आचक्ष्व मे महाबाहो सर्वज्ञो ह्यसि मे मतः ॥ ११ ॥

युधिष्ठिर उवाच । यैर्हुतानि शरीराणि हृष्टैः परमसंयुगे ।
देवराजसमांल्लोकान् गतास्ते सत्यविक्रमाः ॥ १२ ॥ ये त्वहृष्टेन
मनसा मर्त्तव्यमिति भारत । युध्यमाना हताः सङ्ग्रे ते गन्धर्वैः
समागताः ॥ १३ ॥ ये च संग्रामभूयिष्ठा याचमानाः पराङ्मुखाः ।
अस्त्रेण निधनं प्राप्ता गतास्ते गुह्यकान् प्रति ॥ १४ ॥ पीड्यमानाः
परैर्य तु ह्रीयमाना निरायुधाः । ह्रीनिषेवा महात्मानः परा-

नभिमुखा रणे ॥ १५ ॥ छिद्यमानाः शितैः शस्त्रैः चत्रधर्मपरायणाः । गतास्ते ब्रह्मसदनं हता वीराः सुवर्चसः ॥ १६ ॥ ये तत्र निहता राजन्नन्तरायोधनं प्रति । यथाकथञ्चित्ते राजन् संप्राप्तास्तूत्तरान् कुरून् ॥ १७ ॥

धृतराष्ट्र उवाच । केन ज्ञानबलेनैवं पुत्र पश्यसि सिद्धवत् । तन्मे वद महाबाहो श्रोतव्यं यदि मन्यसे ॥ १८ ॥

युधिष्ठिर उवाच । निदेशाद्भवतः पूर्वं वने विचरता मया । तीर्थयात्राप्रसङ्गेन संप्राप्तोऽयमनुग्रहः ॥ १९ ॥ देवर्षिर्लोमशो दृष्टस्ततः प्राप्तोऽस्म्यनुस्मृतिम् । दिव्यं चक्षुरनुप्राप्तं ज्ञानयोगेन वै पुरा ॥ २० ॥

धृतराष्ट्र उवाच । येऽत्रानाथा जनस्यास्य सनाथा ये च भारत । कच्चित्तेषां शरीराणि धच्यन्ति विधिपूर्वकम् ॥ २१ ॥ न येषां सन्ति कर्त्तारो न च येऽत्राहिताग्नयः । वयञ्च कस्य कुर्य्याम बहुत्वात्तात कर्मणः ॥ २२ ॥ यान् सुपर्णाश्च गृध्राश्च विकर्षन्ति ततस्ततः । तेषान्तु कर्मणा लोका भविष्यन्ति युधिष्ठिर ॥ २३ ॥

वैशम्पायन उवाच । एवमुक्तो महाप्राज्ञः कुन्तीपुत्रो युधिष्ठिरः । आदिदेश सुधर्माणं धौम्यं सूतञ्च सञ्जयम् ॥ २४ ॥ विदुरञ्च महाबुद्धिं युयुत्सुञ्चैव कौरवम् । इन्द्रसेनमुखांश्चैव भृत्यान् सूतांश्च सर्वशः ॥ २५ ॥ भवन्तः कारयन्त्वेषां प्रेतकार्य्याण्यनेकशः । यथा चानाथवत् किञ्चिच्छरीरं न विनश्यति ॥ २६ ॥ शासनाद्धर्मराजस्य क्षत्ता सूतश्च सञ्जयः । सुधर्मा धौम्यसहित इन्द्रसेनादयस्तथा ॥ २७ ॥ चन्दनागुरुकाष्ठानि तथा कालीयकान्युत । घृतं तैलञ्च गन्धांश्च क्षौमाणि वसनानि च ॥ २८ ॥ समाहृत्य महार्हाणि दारुणाञ्चैव सञ्चयान् । रथांश्च मृदितांस्तत्र नानाप्रहरणानि च ॥ २९ ॥ चिताः कृत्वा प्रयत्नेन यथामुख्यान्नराधिप । दाहयामासुरव्यग्रा विधिदृष्टेन कर्मणा ॥३०॥ दुर्य्योधनञ्च राजानं भ्रातॄंश्चास्य

शताधिकान् । शल्यं शलञ्च राजानं भूरिश्रवसमेव च ॥ ३१ ॥
जयद्रथञ्च राजानमभिमन्युञ्च भारत । दौःशासनिं लक्ष्मणञ्च धृष्ट-
केतुञ्च पार्थिवम् ॥ ३२ ॥ वृहन्तं सोमदत्तञ्च सृञ्जयांश्च शताधि-
कान् । राजानं क्षेमधन्वानं विराटद्रुपदौ तथा ॥३३॥ शिखण्डिनञ्च
पाञ्चाल्यं धृष्टद्युम्नञ्च पार्षतम् । युधामन्युञ्च विक्रान्तमुत्तमौजसमेव
च ॥ ३४ ॥ कौशल्यं द्रौपदेयांश्च शकुनिञ्चैव सौवलम् । अचलं
वृषकञ्चैव भगदत्तञ्च पार्थिवम् ॥ ३५ ॥ कर्णं वैकर्त्तनञ्चैव सहपुत्र-
ममर्षणम् । कैकयांश्च महेष्वासांस्त्रिगर्त्तांश्च महारथान् ॥ ३६ ॥
घटोत्कचं राक्षसेन्द्रं वकभ्रातरमेव च । अलम्वुषं राक्षसेन्द्रं जल-
सन्धञ्च पार्थिवम् ॥ ३७ ॥ अन्यांश्च पार्थिवान् राजन् शतशोऽथ
सहस्रशः । घृतधाराहुतैर्दीप्तैः पावकैः समदाहयन् ॥३८॥ पितृ-
मेधांश्च केषाञ्चिदवर्त्तन्त महात्मनाम् । सामभिश्चाप्यगायन्त तेऽन्व-
शोचन्त चापरैः ॥ ३९ ॥ साम्नामृचाञ्च नादेन स्त्रीणाञ्च रुदित-
स्वनैः । कश्मलं सर्वभूतानां निशायां समजायत ॥ ४० ॥ ते
विधूमाः प्रदीप्ताश्च दीप्यमानाश्च पावकाः । नभसीवान्वदृश्यन्त
ग्रहास्तन्वभ्रसंवृताः ॥ ४१ ॥ ये चाप्यनाथास्तत्रासन्नानादेशसमा-
गताः । तांश्च सर्वान् समानाय्य राशीन् कृत्वा सहस्रशः ॥ ४२ ॥
चित्वा दारुभिरव्यग्रैः प्रभूतैः स्नेहपाचितैः । दाहयामास विदुरो
धर्मराजस्य शासनात् ॥ ४३ ॥ कारयित्वा क्रियास्तेषां कुरुराजो
युधिष्ठिरः । धृतराष्ट्रं पुरस्कृत्य गङ्गामभिमुखोऽगमत् ॥ ४४ ॥

इति स्त्रीपर्वणि श्राद्धपर्वणि युद्धमृतानामौर्द्धदेहिके
षड्विंशोऽध्यायः ॥ २६ ॥

---

वैशम्पायन उवाच । ते समासाद्य गङ्गान्तु शिवां पुण्यजलो-
चिताम् । ह्रदिनीं वप्रसम्पन्नां महानूपां महावलाम् ॥ १ ॥

भूषणान्युत्तरीयाणि वेष्टनान्यवमुच्य च । ततः पितॄणां पौत्राणां भ्रातॄणां स्वजनस्य च ॥ २ ॥ पुत्राणामार्य्यकाणाञ्च पतीनाञ्च कुरु-स्त्रियः । उदकञ्चक्रिरे सर्वा रुदत्यो भृशदुःखिताः । सुहृदाञ्चापि धर्मज्ञाः प्रचक्रुः सलिलक्रियाः ॥ ३ ॥ उदके क्रियमाणे तु वीराणां वीरपत्निभिः । सूपतीर्थाभवद्गङ्गा भूयो वै प्रससार च ॥ ४ ॥ तन्महोदधिसङ्काशं निरानन्दमनुत्सवम् । वीरपत्नीभिराकीर्णं गङ्गा-तीरमशोभत ॥ ५ ॥ ततः कुन्ती महाराज सहसा शोककर्षिता । रुदती मन्दया वाचा पुत्रान् वचनमब्रवीत् ॥ ६ ॥ यः स शूरो महेष्वासो रथयूथपयूथप । अर्जुनेन हतः संख्ये वीरलक्षण-लक्षितः ॥ ७ ॥ यं सूतपुत्रं मन्यध्वं राधेयमिति पाण्डवाः । यो व्यराजच्चमूमध्ये दिवाकर इव प्रभुः ॥ ८ ॥ प्रत्ययुध्यत यः सर्वान् पुरा वः सपदानुगान् । दुर्य्योधनबलं सर्वं यः प्रकर्षन् व्यरोचत ॥ ९ ॥ यस्य नास्ति समो वीर्य्ये पृथिव्यामपि कश्चन । यो वृणीत यशः शूरः प्राणैरपि सदा भुवि ॥ १० ॥ सत्यसन्धस्य शूरस्य संग्रामेष्वपलायिनः । कुरुध्वमुदकं तस्य भ्रातुरक्लिष्टकर्मणः ॥ ११ ॥ स हि व पूर्वजो भ्राता भास्कराम्मय्यजायत । कुण्डली कवची शूरो दिवाकरसमप्रभः ॥ १२ ॥ श्रुत्वा तु पाण्डवाः सर्वे मातु-र्वचनमप्रियम् । कर्णमेवान्वशोचन्त भूयश्चार्त्ततराभवन् ॥ १३ ॥ ततः स पुरुषव्याघ्रः कुन्तीपुत्रो युधिष्ठिरः । उवाच मातरं वीरो निश्वसन्निव पन्नगः ॥ १४ ॥ यः शरोर्मिध्वजावर्त्तो महाभुजमहा-ग्रहः । तलशब्दानुनदितो महारथमहाह्रदः ॥ १५ ॥ यस्येषु-पातमासाद्य नान्यस्तिष्ठेद्धनञ्जयात् । भवत्या स कथं पुत्रो देवगर्भः पुराभवत् ॥ १६ ॥ यस्य बाहुप्रतापेन तापिताः सर्वतो वयम् । तमग्निमिव वस्त्रेण कथञ्छादितवत्यसि ॥ १७ ॥ यस्य बाहुबलं नित्यं धार्त्तराष्ट्रैरुपासितम् । उपासितं यथास्माभिर्बलं गाण्डीव-धन्वनः ॥ १८ ॥ भूमिपानाञ्च सर्वेषां बलं बलवतां वरः । नान्यः

कुन्तीसुतात् कर्णादस्त्रज्ञाद्रथिनां रथी ॥ १९ ॥ स नः प्रथमजो भ्राता सर्वशस्त्रभृतां वरः। असूत तं भवत्यग्रे कथमद्भुतविक्रमम् ॥ २० ॥ अहो भवत्या मन्त्रस्य गूहनेन वयं हताः। निधनेन हि कर्णस्य पीड़िताः स्म सबान्धवाः ॥ २१ ॥ अभिमन्योर्विनाशेन द्रौपदेयवधेन च। पाञ्चालानाञ्च नाशेन कुरूणां पतनेन च ॥ २२ ॥ ततः शतगुणं दुःखमिदं मामस्पृशद्भृशम्। कर्णमेवानुशोचन् हि सन्दह्येऽग्नाविवाहितः॥ २३ ॥ नेह स्म किञ्चिदप्राप्यं भवेदपि दिवि स्थितम्। न च स्म वैशसं घोरं कौरवान्तकरं भवेत् ॥२४॥ एवं विलप्य बहुलं धर्मराजो युधिष्ठिरः। विनदन् दुःखितो राजा चकारास्योदकं प्रभुः ॥२५॥ ततो विनेदुः सहसा स्त्रियस्ताः खलु सर्वशः। अभितो याः स्थितास्तत्र तस्मिन्नुदककर्मणि ॥ २६ ॥ तत आनाययामास कर्णस्य सपरिच्छदाः। स्त्रियः कुरुपतिर्धीमान भ्रातुः प्रेम्णा युधिष्ठिरः ॥ २७ ॥ स ताभिः सह धर्मात्मा प्रेतकृत्यमनन्तरम्। कृत्वोत्ततार गङ्गायाः सलिलादाकुलेन्द्रियः ॥ २८ ॥

इति स्त्रीपर्वणि श्राद्धपर्वणि कर्णस्य गूढ़पुत्रत्व-
कथने सप्तविंशोऽध्यायः ॥ २७ ॥

समाप्तं श्राद्धपर्व।

---

समाप्तञ्च स्त्रीपर्व।

---

# MAHABHARATAM

## CANTI PARVA

TEXT

PUBLISHED AND DISTRIBUTED GRATIS

BY

PRATAPA CHANDRA ROY, C. I. E.

Santiparva (12)

# श्रीमहाभारतम्।

श्रीमन्महर्षिवेदव्यासविरचितम्।

शान्तिपर्व्व।

सि, आइ, इ, उपाधिधारिणा

रायश्रीप्रतापचन्द्रेण

प्रकाशितम्

मूल्यं विना वितीर्णञ्च।

"हस्तपादादिसम्पन्ना यूयं किमवसीदथ'

---

तृतीयसंस्करणम्।

कलिकाता वीडन् ष्ट्रीटान्तर्गत
१ नं राजा गुरुदास ष्ट्रीट् भारतयन्त्रे
श्रीकालिदास सेनेन मुद्रितम्।

शकाब्दाः १८११।

# श्रीमहाभारतम्।

अथ शान्तिपर्व्व ।



नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥

वैशम्पायन उवाच । कृतोदकास्ते सुहृदां सर्व्वेषां पाण्डु-
नन्दनाः । विदुरो धृतराष्ट्रश्च सर्व्वाश्च भरतस्त्रियः ॥ १ ॥ तत्र ते
सुमहात्मानो न्यवसन् पाण्डुनन्दनाः । शौचं निर्व्वर्त्तयिष्यन्तो मास-
मात्रं बहिः पुरात् ॥ २ ॥ कृतोदकन्तु राजानं धर्म्मराजं युधि-
ष्ठिरम् । अभिजग्मुर्म्महात्मानः सिद्धा ब्रह्मर्षिसत्तमाः ॥ ३ ॥
द्वैपायनो नारदश्च देवलश्च महानृषिः । देवस्थानश्च कण्वश्च तेषां
शिष्याश्च सत्तमाः ॥ ४ ॥ अन्ये च वेदविद्वांसः कृतप्रज्ञा द्विजातयः ।
गृहस्थाः स्नातकाः सन्तो ददृशुः कुरुसत्तमम् ॥ ५ ॥ तेऽभिगम्य
महात्मानः पूजिताश्च यथाविधि । आसनेषु महार्हेषु विविशुस्ते
महर्षयः ॥ ६ ॥ प्रतिगृह्य ततः पूजां तत्कालसदृशीं तदा ।
पर्य्युपासन् यथान्यायं परिवार्य्य युधिष्ठिरम् ॥ ७ ॥ पुण्ये भागी-
रथीतीरे शोकव्याकुलचेतसम् । आश्वासयन्तो राजेन्द्रं विप्राः
शतसहस्रशः ॥ ८ ॥ नारदस्त्वब्रवीत् काले धर्म्मपुत्रं युधिष्ठिरम् ।
सम्भाष्य मुनिभिः सार्द्धं कृष्णद्वैपायनादिभिः ॥ ९ ॥ भवतो बाहु-
वीर्य्येण प्रसादान्माधवस्य च । जितेयमवनि कृत्स्ना धर्म्मेणैव

युधिष्ठिरः ॥ १० ॥ दिष्ट्या मुक्तस्तु संग्रामादस्माल्लोकभयङ्करात् । क्षत्रधर्मरतश्चापि कच्चिन्मोदसि पाण्डव ॥ ११ ॥ कच्चिच्च निहतामित्रः प्रीणासि सुहृदो नृप । कच्चित् श्रियमिमां प्राप्य न त्वां शोकः प्रबाधते ॥ १२ ॥

युधिष्ठिर उवाच । विजितेयं मही कृत्स्ना कृष्णबाहुबलाश्रयात् । ब्राह्मणानां प्रसादेन भीमार्ज्जुनबलेन च ॥ १३ ॥ इदन्तु मे महद्दुःखं वर्त्तते हृदि नित्यदा । कृत्वा ज्ञातिक्षयमिमं महान्तं लोभकारितम् ॥ १४ ॥ सौभद्रं द्रौपदेयांश्च पातयित्वा सुतान् प्रियान् । जयोऽयमजयाकारो भगवन् प्रतिभाति मे ॥ १५ ॥ किन्नु वक्ष्यति वार्ष्णेयी वधूर्मे मधुसूदनम् । द्वारकावासिनी कृष्णमितः प्रतिगतं हरिम् ॥ १६ ॥ द्रौपदी हतपुत्रेयं कृपणा हतबान्धवा । अस्मत्प्रियहिते युक्ता भूयः पीड़यतीव माम् ॥ १७ ॥ इदमन्यच्च भगवन् यत्त्वां वक्ष्यामि नारद । मन्त्रसम्वरणेनास्मि कुन्त्या दुःखेन योजितः ॥ १८ ॥ यः स नागायुतबलो लोकेऽप्रतिरथो रणे । सिंहदर्पगतिर्धीमान् घृणी दाता यतव्रतः ॥ १९ ॥ आश्रयो धार्त्तराष्ट्राणां मानी तीक्ष्णपराक्रमः । अमर्षी नित्यसंरम्भी क्षेप्तास्माकं रणे रणे ॥ २० ॥ शीघ्रास्त्रश्चित्रयोधी च कृती चाद्भुतविक्रमः । गूढ़ोत्पन्नः सुतः कुन्त्या भ्रातास्माकमसौ किल ॥ २१ ॥ तोयकर्मणि तं कुन्ती कथयामास सूर्य्यजम् । पुत्रं सर्वगुणोपेतमवकीर्णं जले पुरा ॥ २२ ॥ मञ्जूषायां समाधाय गङ्गास्रोतस्यमज्जयत् । यं सूतपुत्रं लोकोऽयं राधेयं चाप्यमन्यत ॥ २३ ॥ स ज्येष्ठपुत्रः कुन्त्या वै भ्रातास्माकञ्च मातृजः । अजानता मया भ्राता राज्यलुब्धेन घातितः । तन्मे दहति गात्राणि तूलराशिमिवानलः ॥ २४ ॥ न हि तं वेद पार्थोऽपि भ्रातरं श्वेतवाहनः । नाहं न भीमो न यमौ स त्वस्मान् वेद सुव्रतः ॥ २५ ॥ गता किल पृथा तस्य सकाशमिति नः श्रुतम् । अस्माकं शमकामा वै त्वञ्च पुत्रो

ममेत्यथ ॥ २६ ॥ पृथाया न कृतः कामस्तेन चापि महात्मना । अथ पश्चादिदं मातर्य्येवोचदिति नः श्रुतम् ॥ २७ ॥ न हि शक्ष्याम्यहं त्यक्तुं नृपं दुर्य्योधनं रणे । अनार्य्यत्वं नृशंसत्वं कृतघ्नत्वं हि मे भवेत् ॥ २८ ॥ युधिष्ठिरेण सन्धिं हि यदि कुर्य्यां मते तव । भीतो रणे श्वेतवाहादिति मां मंस्यते जनः ॥ २९ ॥ सोऽहं विजित्य समरे विजयं सहकेशवम् । सन्धास्ये धर्म्मपुत्रेण पश्चादिति च सोऽब्रवीत् ॥ ३० ॥ तमुवाच किल पृथा पुनः पृथुलवक्षसम् । चतुर्णामभयं देहि कामं युध्यस्व फाल्गुनम् ॥ ३१ ॥ सोऽब्रवीन्मातरं धीमान् वेपमानां कृताञ्जलिः । प्राप्तान् विषह्यांश्चतुरो न हनिष्यामि ते सुतान् ॥ ३२ ॥ पञ्चैव हि सुता देवि भविष्यन्ति तव ध्रुवाः । सार्ज्जुना वा हते कर्णे सकर्णा वा हतेऽर्ज्जुने ॥ ३३ ॥ तं पुत्रगृद्धिनी भूयो माता पुत्रमथाब्रवीत् । भ्रातॄणां स्वस्ति कुर्वीथा येषां स्वस्ति चिकीर्षसि ॥ ३४ ॥ एवमुक्त्वा किल पृथा विसृज्योपययौ गृहान् । सोऽर्जुनेन हतो वीरो भ्राता भ्रात्रा सहोदरः ॥ ३५ ॥ न चैव विवृतो मन्त्रः पृथायास्तस्य वा विभो । अथ शूरो महेष्वासः पार्थेनाजौ निपातितः ॥ ३६ ॥ अहन्त्वज्ञासिषं पश्चात् स्वसोदर्य्यं द्विजोत्तम । पूर्वजं भ्रातरं कर्णं पृथाया वचनात् प्रभो ॥ ३७ ॥ तेन मे दूयते तीव्रं हृदयं भ्रातृघातिनः । कर्णार्जुनसहायोऽहं जयेयमपि वासवम् ॥ ३८ ॥ सभायां क्लिश्यमानस्य धार्त्तराष्ट्रैर्दुरात्मभिः । सहसोत्पतितः क्रोधः कर्णं दृष्ट्वा स शाम्यति ॥ ३९ ॥ यदा ह्यस्य गिरो रूक्षाः शृणोमि कटुकोदयाः । सभायां गदतो द्युते दुर्य्योधनहितैषिणः ॥ ४० तदा नश्यति मे क्रोधः पादौ तस्य निरीक्ष्य ह । कुन्त्या हि सदृशौ पादौ कर्णस्येति मतिर्मम ॥ ४१ ॥ सादृश्यहेतुमन्विच्छन् पृथायास्तस्य चैव हि । कारणं नाधिगच्छामि कथञ्चिदपि चिन्तयन् ॥४२ कथन्नु तस्य संग्रामे पृथिवी चक्रमग्रसत् । कथन्नु शप्तो भ्राता मे

तन्मे त्वं वक्तुमर्हसि ॥ ४३ ॥ श्रोतुमिच्छामि भगवन् त्वत्तः सर्वं यथातथम्। भवान् हि सर्वविद्विप्रो लोके वेद कृताकृतम् ॥ ४४ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि कर्णाभिज्ञाने प्रथमोऽध्यायः ॥ १ ॥

---

वैशम्पायन उवाच। स एवमुक्तस्तु मुनिर्नारदो वदताम्वरः। कथयामास तत् सर्वं यथा शप्तः स सूतजः ॥ १ ॥

नारद उवाच। एवमेतन्महाबाहो यथा वदसि भारत। न कर्णार्जुनयोः किञ्चिदविषह्यं भवेद्रणे ॥ २ ॥ गुह्यमेतत्तु देवानां कथयिष्यामि तेऽनघ। तन्निबोध महाबाहो यथावृत्तमिदं पुरा ॥ ३ ॥ क्षत्रं स्वर्गं कथं गच्छेच्छस्त्रपूतमिति प्रभो। सङ्घर्षजननस्तस्मात् कन्यागर्भो विनिर्मितः ॥ ४ ॥ स बालस्तेजसा युक्तः सूतपुत्रत्वमागतः। चकाराङ्गिरसां श्रेष्ठाद्धनुर्वेदं गुरोस्तदा ॥ ५ ॥ स बलं भीमसेनस्य फाल्गुनस्य च लाघवम्। बुद्धिञ्च तव राजेन्द्र यमयोर्विनयन्तथा ॥ ६ ॥ सख्यञ्च वासुदेवेन बाल्ये गाण्डीवधन्वनः। प्रजानामनुरागञ्च चिन्तयानो व्यदह्यत ॥ ७ ॥ स सख्यमकरोद्बाल्ये राज्ञा दुर्य्योधनेन च। युष्माभिर्नित्यसंद्विष्टो दैवाच्चापि स्वभावतः ॥ ८ ॥ सर्वाधिकमथालक्ष्य धनुर्वेदे धनञ्जयम्। द्रोणं रहस्युपागम्य कर्णो वचनमब्रवीत् ॥ ९ ॥ ब्रह्मास्त्रं वेत्तुमिच्छामि सरहस्यनिवर्त्तनम्। अर्जुनेन समञ्चाहं युद्धे यमिति मे मतिः ॥ १० ॥ समः शिष्येषु च स्नेहः पुत्रे चैव तव ध्रुवम्। त्वत्प्रसादान्न मां ब्रूयुरकृतास्त्रं विचक्षणाः ॥ ११ ॥ द्रोणस्तथोक्तः कर्णेन सापेक्षः फाल्गुनं प्रति। दौरात्म्यञ्चैव कर्णस्य विदित्वा तमुवाच ह ॥ १२ ॥ ब्रह्मास्त्रं ब्राह्मणो विद्याद्यथावच्चरितव्रतः। क्षत्रियो वा तपस्वी यो नान्यो विद्यात् कथञ्चन ॥ १३ ॥ इत्युक्तो-

ऽङ्गिरसां श्रेष्ठमामन्त्र्य प्रतिपूज्य च । जगाम सहसा रामं महेन्द्रं पर्वतं प्रति ॥ १४ ॥ स तु राममुपागम्य शिरसाभिप्रणम्य च । ब्राह्मणो भार्गवोऽस्मीति गौरवेणाभ्यगच्छत ॥ १५ ॥ रामस्तं प्रतिजग्राह पृष्ट्वा गोत्रादि सर्व्वशः । स उक्तः स्वागतञ्चेति प्रीतमांश्चाभवद्भृशम् ॥ १६ ॥ तत्र कर्णस्य वसतो महेन्द्रे स्वर्गसन्निभे । गन्धर्वै राक्षसैर्यक्षैर्देवैश्चासीत् समागमः ॥ १७ ॥ स तत्रेष्वस्त्रमकरोद्भृगुश्रेष्ठाद्यथाविधि । प्रियश्चाभवदत्यर्थं देवदानवरक्षसाम् ॥ १८ ॥ स कदाचित् समुद्रान्ते विचचाराश्रमान्तिके । एकः खड्गधनुष्पाणिः परिचक्राम सूर्य्यजः ॥ १९ ॥ सोऽग्निहोत्रप्रसक्तस्य कस्यचिद्ब्रह्मवादिनः । जघानाज्ञानतः पार्थ होमधेनुं यदृच्छया ॥ २० ॥ तदज्ञानकृतं मत्वा ब्राह्मणाय न्यवेदयत् । कर्णः प्रसादयंश्चैवमिदमित्यब्रवीद्वचः ॥ २१ ॥ अबुद्धिपूर्वं भगवन् धेनुरेषा हता तव । मया तत्र प्रसादञ्च कुरुष्वेति पुनः पुनः ॥ २२ ॥ तं स विप्रोऽब्रवीत् क्रुद्धो वाचा विभर्त्सयन्निव । दुराचार वधार्हस्त्वं फलं प्राप्नुहि दुर्मते ॥ २३ ॥ येन विस्पर्द्धसे नित्यं यदर्थं घटसे भृशम् । युध्यतस्तेन ते पाप चक्रं भूमिर्ग्रसिष्यति ॥ २४ ॥ ततः श्चक्रे महीग्रस्ते मूर्द्धानं ते विचेतसः । पातयिष्यति विक्रम्य शत्रुर्गच्छ नराधम ॥ २५ ॥ यथेयं गौर्हता मूढ़ प्रमत्तेन त्वया मम । प्रमत्तस्य तथारातिः शिरस्ते पातयिष्यति ॥ २६ ॥ शप्तः प्रसादयामास ततस्तं द्विजसत्तमम् । गोभिर्धनैश्च रत्नैश्च स चैनं पुनरब्रवीत् ॥ २७ ॥ न हि मे व्याहृतं कुर्य्यात् सर्वलोकोऽपि वै मृषा । गच्छ वा तिष्ठ वा यद्वा कार्य्यन्तत्ते समाचर ॥ २८ ॥ इत्युक्तो ब्राह्मणेनाथ कर्णो दैन्यादधोमुखः । राममभ्यागमद्भीतस्तदेव मनसा स्मरन्॥२९

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि कर्णशापकथने द्वितीयोऽध्यायः ॥ २ ॥

---

नारद उवाच। कर्णस्य बाहुवीर्य्येण प्रणयेन दमेन च। तुतोष भृगुशार्दूलो गुरुशुश्रूषया तथा ॥ १ ॥ तस्मै स विधिवत् कृत्स्नं ब्रह्मास्त्रं सनिवर्त्तनम्। प्रोवाचाखिलमव्यग्रं तपस्वी तत्तपस्विने ॥ २ ॥ विदितास्त्रस्ततः कर्णो रममाणोऽश्रमे भृगोः। चकारैवं धनुर्वेदे यत्नमद्भुतविक्रमः ॥ ३ ॥ ततः कदाचिद्रामस्तु चरन्नाश्रममन्तिकात्। कर्णेन सहितो धीमानुपवासेन कर्षितः ॥ ४ ॥ सुष्वाप जामदग्न्यो वै विस्रम्भोत्पन्नसौहृदः। कर्णस्योत्सङ्ग आधाय शिरः क्लान्तमना गुरुः ॥ ५ ॥ अथ कृमिः श्लेष्ममेदोमांसशोणितभोजनः। दारुणो दारुणस्पर्शः कर्णस्याभ्याशमागतः ॥ ६ ॥ स तस्योरुमथासाद्य बिभेद रुधिराशनः। न चैनमशकत् क्षेप्तुं हन्तुं वापि गुरोर्भयात् ॥ ७ ॥ स दश्यमानस्तु तथा कृमिणा तेन भारत। गुरोः प्रबोधनाशङ्की तमुपैक्षत सूर्य्यजः ॥ ८ ॥ कर्णस्तु वेदनां धैर्य्यादसह्यां विनिगृह्य ताम्। अकम्पयन्नव्यथयन् धारयामास भार्गवम् ॥ ९ ॥ यदास्य रुधिरेणाङ्गं परिस्पृष्टं भृगूद्वहः। तदाबुध्यत तेजस्वी सन्त्रस्तश्चेदमब्रवीत् ॥ १० ॥ अहोऽस्म्यशुचितां प्राप्तः किमिदं क्रियते त्वया। कथयस्व भयं त्यक्त्वा याथातथ्यमिदं मम ॥ ११ ॥ तस्य कर्णस्तदाचष्ट कृमिणा परिभक्षणम्। ददर्श रामस्तञ्चापि कृमिं शूकरसन्निभम् ॥ १२ ॥ अष्टपादं तीक्ष्णदंष्ट्रं सूचीभिरिव संवृतम्। रोमभिः सन्निरुद्धाङ्गमलर्कं नाम नामतः ॥ १३ ॥ स दृष्टमात्रो रामेण कृमिः प्राणानवासृजत्। तस्मिन्नेवासृजि क्लिन्नस्तदद्भुतमिवाभवत् ॥ १४ ॥ ततोऽन्तरीक्षे ददृशे विश्वरूपः करालवान्। राक्षसो लोहितग्रीवः कृष्णाङ्गो मेघवाहनः ॥ १५ ॥ स रामं प्राञ्जलिर्भूत्वा बभाषे पूर्णमानसः। स्वस्ति ते भृगुशार्दूल गमिष्यामि यथागतम् ॥ १६ ॥ मोक्षितो नरकादस्माद्भवता मुनिसत्तम। भद्रञ्च तेऽस्तु वन्दे त्वां प्रियं मे भवता कृतम् ॥ १७ ॥ तमुवाच महाबाहुर्जामदग्न्यः प्रतापवान्। कस्त्वं

कस्माच्च नरकं प्रतिपन्नो ब्रवीहि तत् ॥ १८ ॥ सऽब्रवीदहमासं-
प्राक् दंशो नाम महासुरः । पुरा देवयुगे तात भृगोस्तुल्यवया
इव ॥ १९ ॥ सोऽहं भृगोः सुदयितां भार्य्यामपहरं बलात् ।
महर्षेरभिशापेन क्रमिभूतोऽपतं भुवि ॥ २० ॥ अब्रवीद्धि स मां
क्रोधात्तव पूर्वपितामहः । मूत्रश्लेष्माशनः पाप निरयं प्रतिपत्स्यसे
॥ २१ ॥ शापस्यान्तो भवेद्‌ब्रह्मन्नित्येवं तमथाब्रुवम् । भविता
भार्गवाद्रामादिति मामब्रवीद्भृगुः ॥ २२ ॥ सोऽहमेतां गतिं प्राप्तो
यथा ह्यकुशलस्तथा । त्वया साधो समागम्य विमुक्तः पाप-
योनितः ॥ २३ ॥ एवमुक्त्वा नमस्कृत्य ययौ रामं महासुरः । राम
कर्णञ्च सक्रोधमिदं वचनमब्रवीत् ॥ २४ ॥ अतिदुःखमिदं मूढ़ न
जातु ब्राह्मणः सहेत् । क्षत्रियस्येव ते धैर्य्यं कामया सत्यमुच्यताम्
॥ २५ ॥ तमुवाच ततः कर्णः शापभीतः प्रसादयन् । ब्रह्मक्षत्रा-
न्तरे जातं सूतं मां विद्धि भार्गव ॥ २६ ॥ राधेयः कर्ण इति मां
प्रवदन्ति जना भुवि । प्रसादं कुरु मे ब्रह्मन्नस्त्रलुब्धस्य भार्गव
॥ २७ ॥ पिता गुरुर्न सन्देहो वेदविद्याप्रदः प्रभुः । अतो भार्गव
इत्युक्तं मया गोत्रं तवान्तिके ॥ २८ ॥ तमुवाच भृगुश्रेष्ठः सरोषः
प्रहसन्निव । भूमौ निपतितं दीनं वेपमानं कृताञ्जलिम् ॥ २९ ॥
यस्मान्मिथ्योपचरितो ह्यस्त्रलोभादिह त्वया । तस्मादेतन्न ते मूढ़
ब्रह्मास्त्रं प्रतिभास्यति ॥ ३० ॥ अन्यत्र वधकालात्ते सदृशेन समे-
युषः । अब्राह्मणे न हि ब्रह्म ध्रुवं तिष्ठेत् कदाचन ॥ ३१ ॥
गच्छेदानीं न ते स्थानमनृतस्येह विद्यते । न त्वया सदृशो युद्धे
क्षत्रियो भविता युधि ॥ ३२ ॥ एवमुक्तः स रामेण न्यायेनोप-
जगाम ह । दुर्य्योधनमुपागम्य कृतास्त्रोऽस्मीति चाब्रवीत् ॥ ३३ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि कर्णास्त्रप्राप्ति-
कथने तृतीयोऽध्यायः ॥ ३ ॥

नारद उवाच। कर्णस्तु समवाप्यैवमस्त्रं भार्गवनन्दनात्। दुर्य्योधनेन सहितो मुमुदे भरतर्षभ ॥ १ ॥ ततः कदाचिद्राजानः समाजग्मुः स्वयम्वरे। कलिङ्गविषये राजन् राज्ञश्चित्राङ्गदस्य च ॥ २ ॥ श्रीमद्राजपुरं नाम नगरं तत्र भारत। राजानः शतशस्तत्र कन्यार्थं समुपागमन्॥ ३ ॥ श्रुत्वा दुर्य्योधनस्तत्र समेतान् सर्वपार्थिवान्। रथेन काञ्चनाङ्गेन कर्णेन सहितो ययौ ॥ ४ ॥ ततः स्वयम्वरे तस्मिन् संप्रवृत्ते महोत्सवे। समापेतुर्नृपतयः कन्यार्थं नृपसत्तम ॥ ५ ॥ शिशुपालो जरासन्धो भीष्मको वक्र एव च। कपोतरोमा नीलश्च रुक्मी च दृढ़विक्रमः ॥ ६ ॥ शृगालश्च महाराजः स्त्रीराज्याधिपतिश्च यः। अशोकः शतधन्वा च भोजो वीरश्च नामतः ॥७॥ एतेऽप्यन्ये च बहवो दक्षिणां दिशमाश्रिताः। म्लेच्छाचार्य्याश्च राजानः प्राच्योदीच्याश्च भारत ॥ ८ ॥ काञ्चनाङ्गदिनः सर्वे शुद्धजाम्बूनदप्रभाः। सर्वे भासुरदेहाश्च व्याघ्रा इव बलोत्कटाः ॥ ९ ॥ ततः समुपविष्टेषु तेषु राजसु भारत। विवेश रङ्गं सा कन्या धात्रीवर्षवरान्विता ॥ १० ॥ ततः संश्राव्यमाणेषु राज्ञां नामसु भारत। अत्यक्रामद्धार्त्तराष्ट्रं सा कन्या वरवर्णिनी ॥ ११ ॥ दुर्य्योधनस्तु कौरव्यो नामर्षयत लङ्घनम्। प्रत्यषेधच्च तां कन्यामसत्कृत्य नराधिपान् ॥ १२ ॥ स वीर्य्यमदमत्तत्वाद्भीष्मद्रोणावुपाश्रितः। रथमारोप्य तां कन्यामाजहार नराधिपः ॥१३॥ तमन्वयाद्रथी खड्गी बद्धगोधाङ्गुलित्रवान्। कर्णः शस्त्रभृतां श्रेष्ठः पृष्ठतः पुरुषर्षभ ॥ १४ ॥ ततो विमर्द्दः सुमहान् राज्ञामासीत् युयुत्सताम्। सन्नह्यतां तनुत्राणि रथान् योजयतामपि ॥ १५ ॥ तेऽभ्यधावन्त सक्रोधाः कर्णदुर्य्योधनावुभौ। शरवर्षाणि मुञ्चन्तो मेघाः पर्वतयोरिव ॥ १६ ॥ कर्णस्तेषामापततामेकैकेन शरेण ह। धनूंषि च शरांश्चान्यान् पातयामास भूतले ॥ १७ ॥ ततो विधनुषः कांश्चित् कांश्चिदुद्यतकार्मुकान्। कांश्चिदुद्वहतो

बाणान् रथशक्तिगदास्तथा ॥ १८ ॥ लाघवाद्राकुलीकृत्य कर्णः प्रहरताम्बरः । हतसूतांश्च भूयिष्ठान् स विजिग्ये नराधिपान् ॥१९॥ ते स्वयं वाहयन्तोऽश्वान् याहि याहीति वादिनः । व्यपेयुस्ते रणं हित्वा राजानो भग्नमानसाः ॥ २० ॥ दुर्य्योधनस्तु कर्णेन पाल्यमानोऽभ्ययात्तदा । हृष्टः कन्यामुपादाय नगरं नागसाह्वयम् ॥१२॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि दुर्य्योधनस्य
स्वयम्वरकन्याहरणे चतुर्थोऽध्यायः ॥ ४ ॥

---

नारद उवाच । आविष्कृतबलं कर्णं श्रुत्वा राजा स मागधः । आह्वयद्द्वैरथेनाजौ जरासन्धो महीपतिः ॥ १ ॥ तयोः समभवद्युद्धं दिव्यास्त्रविदुषोर्द्वयोः । युधि नानाप्रहरणैरन्योऽन्यमभिवर्षतोः ॥ २ ॥ क्षीणबाणौ विधनुषौ भग्नखड्गौ महीङ्गतौ । बाहुभिः समसज्जेतामुभावपि बलान्वितौ ॥ ३ ॥ बाहुकण्टकयुद्धेन तस्य कर्णोऽथ युध्यतः । बिभेद सन्धिं देहस्य जरयाश्लेषितस्य हि ॥ ४ ॥ स विकारं शरीरस्य दृष्ट्वा नृपतिरात्मनः ।
तस्य हि ॥ ४ ॥ स विकारं शरीरस्य दृष्ट्वा नृपतिरात्मनः ।
प्रीतोऽस्मीत्यब्रवीत् कर्णं वैरमुत्सृज्य भारत ॥ ५ ॥ प्रीत्या ददौ स कर्णाय मालिनीं नगरीमथ । अङ्गेषु नरशार्दूल स राजासीत् सपत्नजित् ॥ ६ ॥ पालयामास चम्पाञ्च कर्णः परबलार्द्दनः । दुर्य्योधनस्यानुमते तवापि विदितं तथा ॥ ७ ॥ एवं शस्त्रप्रतापेन प्रथितः सोऽभवत् क्षितौ । त्वद्धितार्थं सुरेन्द्रेण भिक्षिते वर्म्मकुण्डले ॥ ८ ॥ स दिव्ये सहजे प्रादात् कुण्डले परमार्च्चिते । सहजं कवचञ्चापि मोहितो देवमायया ॥ ९ ॥ विमुक्तः कुण्डलाभ्याञ्च सहजेन च वर्म्मणा । निहतो विजयेनाजौ वासुदेवस्य पश्यत ॥ १० ॥ ब्राह्मणस्यापि शापेन रामस्य च महात्मनः । कुन्त्याश्च वरदानेन मायया च शतक्रतोः ॥ ११ ॥ भीष्मावमानात् संख्यायां

रथस्यार्द्धानुकीर्त्तनात् । शल्यात्तेजोवधाच्चापि वासुदेवनयेन च ॥ १२ ॥ रुद्रस्य देवराजस्य यमस्य वरुणस्य च । कुवेरद्रोणयोश्चैव कृपस्य च महात्मनः ॥ १३ ॥ अस्त्राणि दिव्यान्यादाय युद्धे गाण्डीवधन्वना । हतो वैकर्त्तनः कर्णो दिवाकरसमद्युतिः ॥ १४ ॥ एवं शप्तस्तव भ्राता बहुभिश्चापि वञ्चितः । न शोच्यः स नरव्याघ्रो युद्धे हि निधनं गतः ॥ १५ ॥

इति शान्तिपर्वनि राजधर्मानुशासनपर्वणि कर्णवीर्य्यकथने पञ्चमोऽध्यायः ॥ ५ ॥

---

वैशम्पायन उवाच । एतावदुक्त्वा देवर्षिर्विरराम स नारदः । युधिष्ठिरस्तु राजर्षिर्दध्यौ शोकपरिप्लुतः ॥ १ ॥ तं दीनमनसं वीरं शोकोपहतमातुरम् । निश्वसन्तं यथा नागं पर्य्यश्रुनयनं तथा ॥ २ ॥ कुन्ती शोकपरीताङ्गी दुःखोपहतचेतना । अब्रवीन्मधुराभाषा काले वचनमर्थवत् ॥ ३ ॥ युधिष्ठिर महाबाहो नैनं शोचितुमर्हसि । जहि शोकं महाप्राज्ञ शृणुष्वेदं वचो मम ॥ ४ ॥ यतितः स मया पूर्वं भ्रात्रं ज्ञापयितुं तव । भास्करेण च देवेन पित्रा धर्मभृताम्वर ॥ ५ ॥ यद्वाच्यं हितकामेन सुहृदा हितमिच्छता । तथा दिवाकरेणोक्तः स्वप्नान्ते मम चाग्रतः ॥ ६ ॥ न चैनमशकन्नानुरहम्वा स्नेहकारणैः । पुरा प्रत्यनुनेतुम्वा गन्तुम्वाप्येकतां त्वया ॥ ७ ॥ ततः कालपरीतः स वैरस्योद्धरणे रतः । प्रतीपकारी युष्माकमिति चोपेक्षितो मया ॥ ८ ॥ इत्युक्तो धर्मराजस्तु मात्रा वाष्पाकुलेक्षणः । उवाच वाक्यं धर्मात्मा शोकव्याकुलचेतनः ॥ ९ ॥ भवत्या गूढमन्त्रत्वात् पीड़ितोऽस्मीत्युवाच ताम् । शशाप च महातेजाः सर्वलोकेषु योषितः । न गुह्यं धारयिष्यन्तीत्येवं दुःखसमन्वितः ॥ १० ॥ स राजा पुत्रपौत्राणां सम्बन्धिसुहृदां

तथा । स्मरन्नुद्विग्नहृदयो बभूवोद्विग्नचेतनः ॥ ११ ॥ ततः शोकपरीतात्मा सधूम इव पावकः । निर्वेदमगमद्धीमान् राजा सन्तापपीड़ितः ॥ १२ ॥

इति शान्तिपर्व्वणि राजधर्मानुशासनपर्व्वणि युधिष्ठिरानुतापे षष्ठोऽध्यायः ॥ ६ ॥

---

वैशम्पायन उवाच । युधिष्ठिरस्तु धर्मात्मा शोकव्याकुलचेतनः । शुशोच दुःखसन्तप्तः स्मृत्वा कर्णं महारथम् ॥ ११ ॥ आविष्टो दुःखशोकाभ्यां निश्वसंश्च पुनः पुनः । दृष्ट्वार्जुनमुवाचेदं वचनं शोककर्षितः ॥ २ ॥

युधिष्ठिर उवाच । यद्भैक्ष्यमाचरिष्यामो वृष्ण्यन्धकपुरे वयम् । ज्ञातीन्निष्पुरुषान् कृत्वा नेमां प्राप्स्याम दुर्गतिम् ॥ ३ ॥ अमित्रा नः समृद्धार्थाः वृत्तार्थाः कुरवः कृताः । आत्मानमात्मना हत्वा किं धर्मफलमाप्नुमः ॥ ४ ॥ धिगस्तु क्षात्रमाचारं धिगस्तु बलपौरुषम् । धिगस्त्वमर्षं येनेमामापदं गमिता वयम् ॥ ५ ॥ साधु क्षमा दमः शौचं सवैराग्यं ह्यमत्सरः । अहिंसा सत्यवचनं नित्यानि वनचारिणाम् ॥ ६ ॥ वयन्तु लोभान्मोहाच्च दम्भं मानञ्च संश्रिताः । इमामवस्थामापन्ना राज्यलेशबुभुत्सया ॥ ७ ॥ त्रैलोक्यस्यापि राज्येन नास्मान् कश्चित् प्रहर्षयेत् । बान्धवान् निहतान् दृष्ट्वा पृथिवीविजयैषिणः ॥ ८ ॥ ते वयं पृथिवीहेतोरवध्यान् पृथिवीश्वरान् । सम्परित्यज्य जीवामो हीनार्था हतबान्धवाः ॥ ९ ॥ आमिषे गृध्यमानानामशुभं नः शुनामिव । आमिषञ्चैव नो हीष्टमामिषस्य विवर्ज्जनम् ॥ १० ॥ न पृथिव्या सकलया न हिरण्यस्य राशिभिः । न गवाश्वेन सर्व्वेण ते त्याज्या य इमे हताः ॥ ११ ॥ काममन्युपरीतास्ते क्रोधहर्षसमन्विताः । मृत्युयानं समारुह्य गता

वैवस्वतक्षयम् ॥१२॥ बह्वकल्याणसंयुक्तानिच्छन्ति पितरः सुतान्। तपसा ब्रह्मचर्य्येण सत्येन च तितिक्षया॥ १३॥ उपवासैस्तथेज्याभिर्व्रतकौतुकमङ्गलैः। लभन्ते मातरो गर्भांस्तान्मासान् दश बिभ्रति॥ १४॥ यदि स्वस्ति प्रजायन्ते जाता जीवन्ति वा यदि। सम्भाविता जातबलास्ते दद्युर्यदि नः सुखम्। इह वामुत्र वा चेति कृपणाः फलहेतुकाः॥ १५॥ तासामयं समारम्भो निर्वृत्तः केवलोऽफलः। यदासां निहताः पुत्रा युवानो मृष्टकुण्डलाः॥१६॥ अभुक्त्वा पार्थिवान् भोगान् ऋणान्यनपहाय च। पितृभ्यो देवताभ्यश्च गता वैवस्वतक्षयम्॥ १७॥ यदैषामम्ब पितरौ जातकामावुभावपि। संजातबलरूपेषु तदैव निहता नृपाः॥ १८॥ संयुक्ताः काममन्युभ्यां क्रोधहर्षासमञ्जसः। न ते जन्मफलं किञ्चिद्भोक्तारो जातु कर्हिचित्॥ १९॥ पाञ्चालानां कुरूणाञ्च हता एव हि ये हताः। न चेत् सर्वानयं लोकान् पश्येत् स्वेनैव कर्मणा॥ २०॥ वयमेवास्य लोकस्य विनाशे कारणं स्मृताः। धृतराष्ट्रस्य पुत्रेषु तत् सर्वं प्रतिपत्स्यति॥ २१॥ सदैव निकृतिप्रज्ञो द्वेष्टा मायोपजीवनः। मिथ्याविनीतः सततमस्मास्वनपकारिषु॥ २२॥ न सकामा वयं ते च न चास्माभिर्न तैर्जितम्। न तैर्भुक्तेयमवनिर्न नार्य्यो गीतवादितम्॥ २३॥ नामात्यसुहृदां वाक्यं न च श्रुतवतां श्रुतम्। न रत्नानि परार्द्ध्यानि न भूर्न द्रविणागमः॥ २४॥ अस्मद्द्वेषेण सन्तप्तः सुखं स्वे हं न विन्दति। वृद्धिमस्मासु तां दृष्ट्वा विवर्णो हरिणः कृशः॥ २५॥ धृतराष्ट्रश्च नृपतिः सौबलेन निवेदितः। तं पिता पुत्रगृद्धित्वादनुमेनेऽनये स्थितम्॥ २६॥ अनवेक्ष्यैव विदुरं गाङ्गेयञ्च महामतिः। असंशयं क्षयं राजा यथैवाहं तथा गतः। अनियम्याशुचिं लुब्धं पुत्रं कामवशानुगम्॥२७॥ पतितो यशसो दीप्ताद्घातयित्वा सहोदरान्। इमौ हि वृद्धौ शोकाग्नौ प्रक्षिप्य स सुयोधनः॥ २८॥ अस्मत्प्रद्वेषसन्तप्तः पाप-

बुद्धिः सदैव हि। को हि बन्धुः कुलीनः संस्तथा ब्रूयात् सुहृज्जने। यथासावुक्तवान् वाक्यं युयुत्सुः कृष्णसन्निधौ ॥ २९ ॥ आत्मनो हि वयं दोषाद्विनष्टाः शाश्वतीः समाः। प्रदहन्तो दिशः सर्वा भास्करा इव तेजसा ॥ ३० ॥ सोऽस्माकं वैरपुरुषो दुर्मतिः प्रग्रहं गतः। दुर्य्योधनकृते ह्येतत् कुलं नो विनिपातितं ॥ ३१ ॥ अवध्यानां वधं कृत्वा लोके प्राप्ताः स्म वाच्यतां ॥ ३२ ॥ कुलस्यास्यान्तकरणं दुर्मतिं पापकारिणं। राजा राष्ट्रेश्वरं कृत्वा धृतराष्ट्रोऽद्य शोचति ॥ ३३ ॥ हताः शूराः कृतं पापं विषयः स्वो विनाशितः। हत्वा नो विगतो मन्युः शोको मां रुन्धयत्यसौ। धनञ्जय कृतं पापं कल्याणेनोपहन्यते ॥ ३४ ॥ ख्यापनेनानुतापेन दानेन तपसापि वा। निवृत्त्या तीर्थगमनात् श्रुतिस्मृतिजपेन वा। त्यागवांश्च पुनः पापं नालं कर्त्तुमिति श्रुतिः ॥ ३५ ॥ त्यागवान् जन्ममरणे नाप्नोतीति श्रुतिर्यदा। प्राप्तवर्त्मा कृतमतिर्ब्रह्म संपद्यते तदा ॥ ३६ ॥ स धनञ्जय निर्द्वन्द्वो मुनिर्ज्ञानसमन्वितः। वनमामन्त्र्य वः सर्वान् गमिष्यामि परन्तप ॥ ३७ ॥ न हि कृत्स्नतमो धर्मः शक्यः प्राप्तुमिति श्रुतिः। परिग्रहवता तन्मे प्रत्यक्षमरिसूदन ॥ ३८ ॥ मया सृष्टन्तु पापं हि परिग्रहमभीप्सता। जन्मक्षयनिमित्तञ्च शक्यं प्राप्तुमिति श्रुतिः ॥ ३९ ॥ स परिग्रहमुत्सृज्य कृत्स्नं राज्यं तथैव च। गमिष्यामि विनिर्मुक्तो विशोको निर्ममः क्वचित् ॥ ४० ॥ प्रशाधि त्वमिमामूर्वीं क्षेमां निहतकण्टकाम्। न ममार्थोऽस्ति राज्येन भोगैर्वा कुरुसत्तम ॥ ४१ ॥ इत्येवमुक्त्वा वचनं धर्मराजो युधिष्ठिरः। व्युपारमत तं पार्थः कनीयान् प्रत्यभाषत ॥ ४२ ॥

इति शान्तिपर्व्वणि राजधर्मानुशासनपर्व्वणि युधिष्ठिरपरिदेवने सप्तमोऽध्यायः ॥ ७ ॥

---

वैशम्पायन उवाच। अथार्जुन उवाचेदमधिक्षिप्त इवाक्षमी। अभिनीततरं वाक्यं दृढ़वाद्‌पराक्रमः॥ १॥ दर्शयन् स तदात्मानमुग्रमुग्रपराक्रमः। स्मयमानो महातेजाः सृक्कणी परिसंलिहन्॥ २॥

अर्जुन उवाच। अहो दुःखमहो कृच्छ्रमहो वैक्लव्यमुत्तमम्। यत्कृत्वामानुषं कर्म त्यजेथाः श्रियमुत्तमाम्॥ ३॥ शत्रून् हत्वा महीं लब्ध्वा स्वधर्मेणोपपादिताम्। एवं विधं कथं सर्वं त्यजेथा बुद्धिलाघवात्॥ ४॥ क्लीवस्येह कुतो राज्यं दीर्घसूत्रस्य वा पुनः। किमर्थञ्च महीपालानवधीः क्रोधमूर्च्छितः॥ ५॥ यो ह्याजिजीविषिद्भैक्ष्यं कर्मणा नैव केनचित्। समारम्भान् बुभूषित हतस्वस्तिरकिञ्चनः। सर्वलोकेषु विख्यातो न पुत्रपशुसंहितः॥ ६॥ कापालीं नृप पापिष्ठां वृत्तिमासाद्य जीवतः। संत्यज्य राज्यमृद्धन्ते लोकोऽयं किं वदिष्यति॥ ७॥ सर्वारम्भान् परित्यज्य हतस्वस्तिरकिञ्चनः। कस्मादाशंससे भैक्ष्यं कर्त्तुं प्राकृतवत् प्रभो॥ ८॥ अस्मिन्राजकुले जातो जित्वा कृत्स्नां वसुन्धराम्। धर्मार्थावखिलौ हित्वा वनं मौर्ख्यात् प्रतिष्ठसे॥ ९॥ यदिमानि हवींषीह विमथिष्यन्त्यसाधवः। भवता विप्रहीणानि प्राप्तं त्वामेव किल्बिषम्॥ १०॥ आकिञ्चन्यं मुनीनाञ्च इति वै नहुषोऽब्रवीत्। कृत्वा नृशंस्यं ह्यधने धिगस्त्वधनतामिह॥ ११॥ अश्वस्तनमृषीणां हि विद्यते वेद तद्भवान्। यन्त्विमं धर्ममित्याहुर्धनादेष प्रवर्त्तते॥ १२॥ धर्मं संहरते तस्य धनं हरति यस्य सः। ह्रियमाणे धने राजन् वयं कस्य क्षमेमहि॥ १३॥ अभिशस्तं प्रपश्यन्ति दरिद्रं पार्श्वतः स्थितम्। दारिद्र्यं पातकं लोके न तत् शंसितुमर्हति॥ १४॥ पतितः शोचते राजन् निर्धनश्चापि शोचते। विशेषं नाधिगच्छामि निर्धनस्यावरस्य च॥ १५॥ अर्थेभ्यो हि विवृद्धेभ्यः सम्भृतेभ्यस्ततस्ततः। क्रियाः सर्वाः प्रवर्त्तन्ते पर्वतेभ्य

इवापगाः ॥ १६ ॥ अर्थाद्धर्मश्च कामश्च स्वर्गश्चैव नराधिप । प्राण-यात्रापि लोकस्य विनार्थं न प्रसिध्यति ॥ १७ ॥ अर्थेनेह विहीनस्य पुरुषस्याल्पमेधसः । विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ १८ ॥ यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः । यस्यार्थाः स पुमान् लोके यस्यार्थाः स च पण्डितः ॥ १९ ॥ अधनेनार्थकामेन नार्थः शक्यो विधित्सता । अर्थैरर्थानि बध्यन्ते गजैरिव महागजाः ॥ २० ॥ धर्मः कामश्च हर्षश्च धृतिः क्रोधः श्रुतं मदः । अर्थादेतानि सर्वाणि प्रवर्त्तन्ते नराधिप ॥ २१ ॥ धनात् कुलं प्रभवति धनाद्धर्मः प्रवर्द्धते । नाधनस्यास्त्ययं लोको न परः पुरुषोत्तम ॥ २२ ॥ नाधनो धर्मकृत्यानि यथावदनुतिष्ठति । धनाद्धर्मः प्रभवति शैलादभि नदी यथा ॥२३॥ यः कृशाश्वः कृशगवः कृशभृत्यः कृशातिथिः । स वै राजन् कृशो नाम न शरीरकृशः कृशः ॥ २४ ॥ अवेचस्व यथान्यायं पश्य देवासुरं यथा । राजन् किमन्यज्ज्ञातीनां वधादृध्यन्ति देवताः ॥ २५ ॥ न चेद्धर्त्तव्यमन्यस्य कथं तद्धर्ममारभेत् । एतावानेव वेदेषु निश्चयः कविभिः कृतः ॥ २६ ॥ अध्येतव्या त्रयी नित्यं भवितव्यं विपश्चिता । सर्वथा धनमाहार्य्यं यष्टव्यञ्चापि यत्नतः ॥ २७ ॥ द्रोहाद्देवैरवाप्तानि दिवि स्थानानि सर्वशः । द्रोहात्किमन्यज्ज्ञातीनां गृध्यन्ते येन देवताः ॥ २८ ॥ इति देवा व्यवसिता वेदवादाश्च शाश्वताः । अधीयन्तेऽध्यापयन्ति यजन्ते याजयन्ति च ॥ २९ ॥ कृत्स्नं तदेव तच्छ्रेयो यदप्याददतेऽन्यतः । न पश्यामोऽनपकृतं धनं किञ्चित् क्वचिद्वयम् ॥ ३० ॥ एवमेव हि राजानो जयन्ति पृथिवीमिमाम् । जित्वा ममेयं ब्रुवते पुत्रा इव पितुर्द्धनम् । राजर्षयोऽपि ते स्वर्ग्या धर्मो ह्येषां निरुच्यते ॥ ३१ ॥ यथैव पूर्णादुदधेः स्यन्दन्त्यापो दिशो दश । एवं राजकुलाद्वित्तं पृथिवीं प्रति तिष्ठति ॥ ३२ ॥ आसीदियं दिलीपस्य नृपस्य नहु-

षस्य च । अम्बरीषस्य मान्धातुः पृथिवी सा त्वयि स्थिता ॥३३॥ स त्वां द्रव्यमयो यज्ञः संप्राप्तः सर्व्वदक्षिणः । तन्नेन्न यजसे राजन् प्राप्तस्त्वं राज्यकिल्विषम् ॥ ३४ ॥ येषां राजाश्वमेधेन यजते दक्षिणावता । उपेत्य तस्यावभृथं पूताः सर्व्वे भवन्ति ते ॥ ३५ ॥ विश्वरूपो महादेवः सर्व्वमेधे महामखे । जुहाव सर्व्वभूतानि तथैवात्मानमात्मना ॥ ३६ ॥ शाश्वतोऽयं भूतिपथो नास्यान्तमनुशुश्रुम । महान् दाशरथः पन्था मा राजन् कापथङ्गमः ॥ ३७ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि अर्जुनवाक्ये अष्टमोऽध्यायः ॥ ८ ॥

---

युधिष्ठिर उवाच । मुहूर्त्तं तावदेकाग्रो मनःश्रोत्रेऽन्तरात्मनि । धारयन्नपि तच्छ्रुत्वा रोचते वचनं मम ॥ १ ॥ साधुगम्यमहं मार्गं न जातु त्वत्कृते पुनः । गच्छेयं तद्गमिष्यामि हित्वा ग्राम्यसुखान्युत ॥ २ ॥ क्षेमश्चैकाकिना गम्यः पन्थाः कोऽस्तीति पृच्छ मां । अथ वा नेच्छसि प्रष्टुमपृच्छन्नपि मे शृणु ॥ ३ ॥ हित्वा ग्राम्यसुखाचारं तप्यमानो महत्तप । अरण्ये फलमूलाशी चरिष्यामि मृगैः सह ॥ ४ ॥ जुह्वानोऽग्निं यथाकालमुभौ कालावुपस्पृशन् । कृशः परिमिताहारश्चर्म्मचीरजटाधरः ॥ ५ ॥ शीतवातातपसहः क्षुत्पिपासाश्रमक्षमः । तपसा विधिदृष्टेन शरीरमुपशोषयन् ॥ ६ ॥ मनःकर्णसुखा नित्यं शृण्वन्नुच्चावचा गिरः । मुदितानामरण्येषु वसतां मृगपक्षिणाम् ॥७॥ आजिघ्रन् पेशलान् गन्धान् फुल्लानां वृक्षवीरुधाम् । नानारूपान् वने पश्यन् रमणीयान् वनौकसः ॥ ८ ॥ वानप्रस्थजनस्यापि दर्शनं कुलवासिनाम् । नाप्रियाण्याचरिष्यामि किं पुनर्ग्रामवासिनाम् ॥ ९ ॥ एकान्तशीली विमृशन् पक्वापक्वेन वर्त्तयन् । पितॄन्

देवांश्च वन्येन वाग्भिरद्भिश्च तर्पयन् ॥ १० ॥ एवमारण्यशास्त्राणा-
मुग्रमुग्रतरं विधिम् । सेवमानस्तितिच्छिष्ये देहस्यास्य समापनम्
॥ ११ ॥ अथवैकोऽहमेकाहमेकैकस्मिन् वनस्पतौ । चरन् भैक्ष्यं
मुनिर्मुण्डः चपयिष्ये कलेवरम् ॥ १२ ॥ पांशुभिः समभिच्छन्नः
शून्यागारप्रतिश्रयः । वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥१३॥
न शोचन्न प्रहृष्यंश्च तुल्यनिन्दात्मसंस्तुतिः । निराशीर्निर्ममो भूत्वा
निर्द्वन्द्वो निष्परिग्रहः ॥ १४ ॥ आत्मारामः प्रसन्नात्मा जड़ान्ध-
बधिराकृतिः । न कुर्वाणः परैः काञ्चित् सम्विदं जातु कैरपि ॥१५॥
जङ्गमाजङ्गमान् सर्वानविहिंसंश्चतुर्विधान् । प्रजाः सर्वाः स्वधर्मस्थाः
समः प्राणभृतः प्रति ॥ १६ ॥ न चाप्यवहसन् कञ्चित् न कुर्वन्
भ्रुकुटीः क्वचित् । प्रसन्नवदनो नित्यं सर्व्वेन्द्रियसुसंयतः ॥ १७ ॥
अपृच्छन् कस्यचिन्मार्गं प्रव्रजन्नेव केनचित् । न देशं न दिशं
काञ्चित् गन्तुमिच्छन् विशेषतः ॥ १८ ॥ गमने निरपेक्षश्च पश्चा-
दनवलोकयन् । ऋजुः प्रणिहितो गच्छन् स्वसस्थावरवर्ज्जकः ॥ १९ ॥
स्वभावस्तु व्रजत्यग्रे प्रभवन्त्यशनान्यपि । द्वन्द्वानि च विरुद्धानि
तानि सर्वाण्यचिन्तयन् ॥ २० ॥ अल्पम्वा स्वादुभोज्यम्वा पूर्वा-
लाभेन जातुचित् । अन्येष्वपि चरन् लाभमलाभे सप्त पूरयन् ॥२१॥
विधूमे न्यस्तमुषले व्यङ्गारे भुक्तवज्जने । अतीतपात्रसञ्चारे काले
विगतभिक्षुके ॥ २२ ॥ एककालं चरन् भैक्षं त्रीनथ द्वे च पञ्च वा ।
स्पृहापाशं विमुच्याहं चरिष्यामि महीमिमाम् ॥ २३ ॥ अलाभे
सति वा लाभे समदर्शी महातपाः । न जिजीविषुवत् किञ्चिन्न
मुमूर्षवदाचरन् ॥ २४ ॥ जीवितं मरणञ्चैव नाभिनन्दन्न च द्विषन् ।
वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः । नाकल्याणं न कल्याणं
चिन्तयन्नुभयोस्तयोः ॥ २५ ॥ याः काश्चिज्जीवता शक्याः कर्त्तु-
मभ्युदयक्रियाः । सर्वास्ताः समभित्यज्य निमेषादिव्यवस्थितः ॥२६
तेषु नित्यमसक्तश्च त्यक्तसर्वेन्द्रियक्रियः । सुपरित्यक्तसङ्कल्पः सुनि-

र्निर्धूतात्मकल्मषः॥ १७ ॥ विमुक्तः सर्वसङ्गेभ्यो व्यतीतः सर्व-वागुराः। न वशे कस्यचित्तिष्ठन् सधर्मा मातरिश्वनः॥ २८॥ वीतरागश्चरन्नेवं तुष्टिं प्राप्स्यामि शाश्वतीम्। तृष्णया हि महत् पापमज्ञानादस्मि कारितः॥ २९ ॥ कुशलाकुशलान्येके कृत्वा कर्माणि मानवाः। कार्य्यकारणसंश्लिष्टं स्वजनं नाम बिभ्रति॥३०॥ आयुषोऽन्ते प्रहायेदं क्षीणप्राणं कलेवरम्। प्रतिगृह्णाति तत् पापं कर्त्तुः कर्मफलं हि तत्॥ ३१॥ एवं संसारचक्रेऽस्मिन् व्याविद्धे रथचक्रवत्। समेति भूतग्रामोऽयं भूतग्रामेण कार्य्यवान्॥ ३२॥ जन्ममृत्युजराव्याधिवेदनाभिरभिद्रुतम्। अपारमिव चास्वस्थं संसारं त्यजतः सुखम्॥३३॥ दिवः पतत्सु देवेषु स्थानेभ्यश्च महर्षिषु को हि नाम भवेनार्थी भवेत् कारणतत्त्ववित्॥ ३४॥ कृत्वा हि विविधं कर्म तत्तद्विविधलक्षणम्। पार्थिवैर्नृपतिः स्वल्पैः कारणैरेव वध्यते॥ ३५॥ तस्मात् प्रज्ञामृतमिदं चिरान्मां प्रत्युपस्थितम्। तत् प्राप्य प्रार्थये स्थानमव्ययं शाश्वतं ध्रुवम्॥ ३६॥ एतया सततं धृत्या चरन्नेवं प्रकारया। जन्ममृत्यजराव्याधिवेदनाभिरभिद्रुतम्। देहं संस्थापयिष्यामि निर्भयं मार्गमास्थितः॥ ३७॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि युधिष्ठिरवाक्ये नवमोऽध्यायः॥ ९॥

---

भीमसेन उवाच। श्रोत्रियस्येव ते राजन् मन्दकस्याविपश्चितः। अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी॥१॥ आलस्ये कृतचित्तस्य राजधर्मानसूयतः। विनाशे धार्त्तराष्ट्राणां किं फलं भरतर्षभ॥२॥ क्षमानुकम्पा कारुण्यमानृशंस्यं न विद्यते। क्षात्रमाचरतो मार्गमपि बन्धोस्त्वदन्तरे॥ ३॥ यदीमां भवतो बुद्धिं विद्याम वयमीदृशम्। शस्त्रं नैवाग्रहीष्याम नावधिष्याम कञ्चन॥ ४॥ भैक्ष्य-

सेवाचरिष्याम शरीरस्याविमोक्षणात् । न चेदं दारुणं युद्धमभवि-
ष्यन्महीक्षिताम ॥ ५ ॥ प्राणस्यान्नमिदं सर्वमिति वै कवयो विदुः ।
स्थावरं जङ्गमञ्चैव सर्वं प्राणस्य भोजनम् ॥ ६ ॥ आददानस्य
चेद्राज्यं ये केचित् परिपन्थिनः । हन्तव्यास्त इति प्राज्ञाः क्षत्र-
धर्मविदो विदुः ॥ ७ ॥ ते सदोषा हतास्माभी राज्यस्य परि-
पन्थिनः । तान् हत्वा भुङ्क्ष्व धर्मेण युधिष्ठिर महीमिमाम् ॥ ८ ॥
यथा हि पुरुषः खात्वा कूपमप्राप्य चोदकम् । पङ्कदिग्धो निवर्त्तेत
कर्म्मेदं नस्तथोपमम् ॥ ९ ॥ यथारुह्य महावृक्षमपहृत्य ततो मधु ।
अप्राप्य निधनं गच्छेत कर्म्मेदं नस्तथोपमम् ॥ १० ॥ यथा महान्त-
मध्वानमाशया पुरुषः व्रजन् । स निराशो निवर्त्तेत कर्मैतन्नस्तथो-
पमम् ॥ ११ ॥ यथा शत्रून् घातयित्वा पुरुषः कुरुनन्दन । आत्मानं
घातयेत् पश्चात् कर्म्मेदं नस्तथाविधम् ॥ १२ ॥ यथान्नं क्षुधितो
लब्ध्वा न भुञ्जीयाद्यदृच्छया । कामी च कामिनीं लब्ध्वा कर्म्मेदं
नस्तथोपमम् ॥ १३ ॥ वयमेवात्र गर्ह्या हि यद्वयं मन्दचेतसम् ।
त्वां राजन्ननुगच्छामो ज्येष्ठोऽयमिति भारत ॥ १४ ॥ वयं हि
बाहुबलिनः कृतविद्या मनस्विनः । क्लीवस्य वाक्ये तिष्ठामो
यथैवाशक्तयस्तथा ॥ १५ ॥ अगतीकगतीनस्मान्नष्टार्थानर्थसिद्धये ।
कथं वै नानुपश्येयुर्जनाः पश्यत यादृशम् ॥ १६ ॥ आपत्काले हि
सन्न्यासः कर्त्तव्य इति शिष्यते । जरयाभिपरीतेन शत्रुभिर्व्यंसि-
तेन वा ॥ १७ ॥ तस्मादिह कृतप्रज्ञास्त्यागं न परिचक्षते । धर्म-
व्यतिक्रमञ्चैव मन्यन्ते सूक्ष्मदर्शिनः ॥ १८ ॥ कथं तस्मात् समुत्-
पन्नास्तन्निष्ठास्तदुपाश्रयाः । तदेव निन्दां भाषेयुर्धाता तत्र न
गर्ह्यते ॥ १९ ॥ श्रिया विहीनैरधनैर्नास्तिकैः संप्रवर्त्तितम् । वेद-
वादस्य विज्ञानं सत्याभासमिवानृतम् ॥ २० ॥ शक्यं पौरुष-
मास्थाय बिभ्रतात्मानमात्मना । धर्मच्छद्म समास्थाय च्यवितुं न
तु जीवितुम् ॥ २१ ॥ शक्यं पुनररण्येषु सुखमेकेन जीवितुम् ।

अविभजता पुत्रपौत्रान् देवर्षीनतिथीन् पितृन्॥ २२॥ नेमे मृगाः स्वर्गजितो न वराहा न पक्षिणः। तथान्येन प्रकारेण पुण्यनाहुर्न ते जनाः॥ २३॥ यदि सन्न्यासतः सिद्धिं राजन् कश्चिदवाप्नुयात्। पर्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयुः॥ २४॥ एते हि नित्य-सन्न्यासा दृश्यन्ते निरुपद्रवाः। अपरिग्रहवन्तश्च सततं ब्रह्म-चारिणः॥ २५॥ अथ चेदात्मभाग्येषु नान्येषां सिद्धिमाप्नुते। तस्मात् कर्मैव कर्त्तव्यं नास्ति सिद्धिरकर्मणः॥ २६॥ औदकाः सृष्टयश्चैव जन्तवः सिद्धिमाप्नुयुः। येषामात्मैव भर्त्तव्यो नान्यः कश्चन विद्यते॥ २७॥ अवेक्षस्व यथा स्वैः स्वैः कर्म्मभिर्व्यापृतं जगत्। तस्मात् कर्मैव कर्त्तव्यं नास्ति सिद्धिरकर्मणः॥ २८॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि भीमवाक्ये
दशमोऽध्यायः॥ १०॥

---

अर्जुन उवाच। अत्रैवोदाहरन्तीममितिहासं पुरातनम्। तापसैः सह सम्वादं शक्रस्य भरतर्षभ॥ १॥ केचिद्गृहान् परित्यज्य वनमभ्यागमन् द्विजाः। अजातश्मश्रवो मन्दाः कुले-जाताः प्रवव्रजुः॥ २॥ धर्मोऽयमिति मन्वानाः समृद्धा ब्रह्म-चारिणः। त्यक्त्वा भ्रातृन् पितृंश्चैव तानिन्द्रोऽन्वकृपायत॥ ३॥ तानावभाषे भगवान् पक्षी भूत्वा हिरण्मयः। सुदुष्करं मनुष्यैश्च यत् कृतं विघसाशिभिः॥ ४॥ पुण्यं भवति कर्मेदं प्रशस्तञ्चैव जीवितम्। सिद्धार्थास्ते गतिं मुख्यां प्राप्ता धर्मपरायणाः॥ ५॥

ऋषय ऊचुः। अहो वतायं शकुनिर्विघसाशान् प्रशंसति। अस्मान्नूनमयं शास्ति वयञ्च विघसाशिनः॥ ६॥

शकुनिरुवाच। नाहं युष्मान् प्रशंसामि पङ्कदिग्धान् रज-स्वलान्। उच्छिष्टभोजिनो मन्दान्न वै वो विघसाशिनः॥ ७॥

ऋषय ऊचुः। इदं श्रेयः परमिति वयमेवाप्युपास्महे। शकुने ब्रूहि यच्छ्रेयो भृशं श्रद्दधामहे॥ ८॥

शकुनिरुवाच। यदि मां नाभिशङ्कध्वं विभज्यात्मानमात्मना। ततोऽयं वः प्रवक्ष्यामि याथातथ्य हितं वचः॥ ९॥

ऋषय ऊचुः। शृणुमस्ते वचस्तात पन्थानो विदितास्तव। नियोगी चैव धर्मात्मन् स्थातुमिच्छामि शाधि नः॥ १०॥

शकुनिरुवाच। चतुष्पदां गौः प्रवरा लोहानां काञ्चनं वरम्। शब्दानां प्रवरो मन्त्रो ब्राह्मणो द्विपदाम्वरः॥ ११॥ मन्त्रोऽयं जातकर्मादिर्ब्राह्मणस्य विधीयते। जीवतोऽपि यथाकालं श्मशाननिधनादिभिः॥ १२॥ कर्माणि वैदिकान्यस्य स्वर्गः पन्थाः क्रतूत्तमः। कथं मे सर्वकर्माणि मन्त्रसिद्धानि चक्रिरे। आत्मानं दृढ़वादीति तथा सिद्धिरिहेष्यते॥ १३॥ मासार्द्धमासा ऋतव आदित्यशशितारकम्। ईहन्ते सर्वभूतानि तदिदं कर्मसञ्ज्ञितम्॥ १४॥ सिद्धिश्चैवमिदं पुण्यमयमेवाश्रमो महान्। अथ ये कर्म निन्दन्तो मनुष्याः कापथं गताः। मूढ़ानामर्थहीनानां तेषामेनस्तु विद्यते॥ १५॥ देववंशान् पितृवंशान् ब्रह्मवंशांश्च शाश्वतान्। सन्त्यज्य मूढ़ा वर्त्तन्ते ततो यान्त्यश्रुतीपथम्॥ १६॥ एतद्वोऽस्तु तपो युक्तं ददामीत्यृषिचोदितम्। तस्मात्तत्तद्व्यवस्थानं तपस्वितप उच्यते॥ १७॥ देववंशान् ब्रह्मवंशान् पितृवंशांश्च शाश्वतान्। सम्विभज्य गुरोश्चर्य्यां तद्वै दुष्करमुच्यते॥ १८॥ देवा वै दुष्करं कृत्वा विभूतिं परमां गताः। तस्माद्गार्हस्थ्यमुद्वोढुं दुष्करं प्रवदीमि वः॥ १९॥ तपः श्रेष्ठं प्रजानां वै मूलमेतन्न संशयः। कुटुम्बविधिनानेन यस्मिन् सर्वं प्रतिष्ठितम्॥ २०॥ एतद्विदुस्तपो विप्रा द्वन्द्वातीता विमत्सराः। तस्माद्व्रतं मध्यमन्तु लोकेषु तप उच्यते॥ २१॥ दुराधर्षपदञ्चैव गच्छन्ति विघसाशिनः। सायं प्रातर्विभज्यान्नं स्वकुटुम्बे यथाविधि॥ २२॥ दत्त्वातिथिभ्यो

देवेभ्यः पितृभ्यः स्वजनस्य च । अवशिष्टानि येऽश्नन्ति तानाहु-र्विघसाशिनः ॥२३॥ तस्मात् स्वधर्ममास्थाय सुव्रताः सत्यवादिनः । लोकस्य गुरवो भूत्वा ते भवन्त्यनुपस्कृताः ॥ २४ ॥ त्रिदिवं प्राप्य शक्रस्य स्वर्गलोके विमत्सराः । वसन्ति शाश्वतान् वर्षान् जना दुष्करकारिणः ॥ २५ ॥

अर्जुन उवाच । ततस्ते तद्वचः श्रुत्वा धर्मार्थसहितं हितम् । उत्सृज्य नास्तीति गता गार्हस्थ्यं समुपाश्रिताः ॥ २६ ॥ तस्मा-त्त्वमपि धर्मज्ञ धैर्य्यमालम्ब्य शाश्वतम् । प्रशाधि पृथिवीं कृत्स्नां हतामित्रां नराधिप ॥ २७ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि अर्जुनवाक्ये एकादशोऽध्यायः ॥ ११ ॥

---

वैशम्पायन उवाच । अर्जुनस्य वचः श्रुत्वा नकुलो वाक्यमब्र-वीत् । राजानमभिसंप्रेक्ष्य सर्वधर्मभृतांवरः ॥ १ ॥ अनुरुध्य-महाप्राज्ञो भ्रातुश्चित्तमरिन्दमः । व्यूढोरस्को महाबाहुस्ताम्रास्यो मितभाषिता ॥ २ ॥

नकुल उवाच । विशाखयूपे देवानां सर्वेषामग्नयश्चिताः । तस्माद्विद्धि महाराज देवाः कर्मफले स्थिताः ॥ ३ ॥ अनास्तिकानां भूतानां प्राणदाः पितरश्च ये । तेऽपि कर्मैव कुर्वन्ति विधिं संप्रेक्ष्य पार्थिव । वेदवादापविद्धांश्च तान् विद्धि भृशनास्तिकान् ॥ ४ ॥ न हि वेदोक्तमुत्सृज्य विप्रः सर्वेषु कर्मसु । देवयानेन नाकस्य पृष्ठमाप्नोति भारत । अत्याश्रमानयं सर्वानित्याहुर्वेदनिश्चयाः ॥५॥ ब्राह्मणाः श्रुतिसम्पन्नास्तान्निबोध जनाधिप । वित्तानि धर्म-लब्धानि क्रतुमुख्येष्ववासृजन् ॥ ६ ॥ कृतात्मा स महाराज स वै त्यागी स्मृतो नरः ॥ ७ ॥ अनवेक्ष्य सुखादानं तथैवोर्द्ध्वं प्रति-

ष्ठितः। आत्मत्यागी महाराज स त्यागी तामसः प्रभो ॥ ८॥
अनिकेतः परिपतन् वृक्षमूलाश्रयो मुनिः। अयाचकः सदा योगी
स त्यागी पार्थ भिक्षुकः ॥ ९ ॥ क्रोधहर्षावनादृत्य पैशुन्यञ्च विशे-
षतः। विप्रो वेदानधीते यः स त्यागी पार्थ भिक्षुकः ॥ १० ॥
आश्रमांस्तुलया सर्वान् धृतानाहुर्मनीषिणः। एकतश्च त्रयो
राजन् गृहस्थाश्रम एकतः ॥ ११ ॥ समीक्ष्य तुलया पार्थ कामं
स्वर्गञ्च भारत। अयं पन्था महर्षीणामियं लोकविदां गतिः ॥१२॥
इति यः कुरुते भावं स त्यागी भरतर्षभ। न यः परित्यज्य गृहान्
वनमेति विमूढ़वत् ॥ १३ ॥ यदा कामान् समीक्षेत धर्मवैतंसिको
नरः। अथैनं मृत्युपाशेन कण्ठे बध्नाति मृत्युराट् ॥ १४ ॥ अभि-
मानकृतं कर्म नैतत् फलवदुच्यते। त्यागयुक्तं महाराज सर्वमेव
महाफलम् ॥ १५ ॥ शमो दमस्तथा धैर्य्यं सत्यं शौचमथार्ज्जवम्।
यज्ञो धृतिश्च धर्मश्च नित्यमार्षो विधिः स्मृतः ॥ १६ ॥ पितृदेवा-
तिथिकृते समारम्भोऽत्र शस्यते। अत्रैव हि महाराज त्रिवर्गः
केवलं फलम् ॥ १७ ॥ एतस्मिन् वर्त्तमानस्य विधावप्रतिषेधिते।
त्यागिनः प्रसृतस्येह नोच्छित्तिर्विद्यते क्वचित् ॥ १८ ॥ असृजद्वै
प्रजा राजन् प्रजापतिरकल्मषः। मां यक्ष्यन्तीति धर्मात्मा यज्ञै-
र्विविधदक्षिणैः ॥ १९ ॥ वीरुधश्चैव वृक्षांश्च यज्ञार्थं वै तथौ-
षधीः। पशूंश्चैव तथा मेध्यान् यज्ञार्थानि हवींषि च ॥ २० ॥
गृहस्थाश्रमिणस्तच्च यज्ञकर्मविरोधकम्। तस्माद्गार्हस्थमेवेह
दुष्करं दुर्लभं तथा ॥ २१ ॥ तत् संप्राप्य गृहस्था ये पशुधान्य-
धनान्विताः। न यजन्ते महाराज शाश्वतं तेषु किल्विषम् ॥ २२ ॥
स्वाध्याययज्ञा ऋषयो ज्ञानयज्ञास्तथा परे। अथापरे महा-
यज्ञान् मनस्येव वितन्वते ॥ २३ ॥ एवं मनःसमाधानं मार्ग-
मातिष्ठतो नृप। द्विजातेर्ब्रह्मभूतस्य स्पृहयन्ति दिवौकसः ॥२४॥
रत्नानि विचित्राणि संहृतानि ततस्ततः। मखेष्वनभिसन्त्यज्य

नास्तिक्यमभिजल्पसि ॥ २५ ॥ कुटुम्बमास्थिते त्यागं न पश्यामि नराधिप। राजसूयाश्वमेधेषु सर्वमेधेषु वा पुनः ॥ २६ ॥ ये चान्ये क्रतवस्तात ब्राह्मणैरभिपूजिताः। तैर्यजस्व महीपाल शक्रो देवपतिर्यथा ॥ २७ ॥ राज्ञः प्रमाददोषेण दस्युभिः परिमुष्यताम्। अशरण्यः प्रजानां यः स राजा कलिरुच्यते ॥ २८ ॥ अश्वान् गाश्चैव दासीश्च करेणूश्च स्वलङ्कृताः। ग्रामान् जनपदांश्चैव क्षेत्राणि च गृहाणि च ॥ २९ ॥ अप्रदाय द्विजातिभ्यो मात्सर्याविष्टचेतसः। वयन्ते राजकलयो भविष्यामो विशाम्पते ॥ ३० ॥ अदातारोऽशरण्याश्च राजकिल्बिषभागिनः। दोषाणामेव भोक्तारो न सुखानां कदाचन ॥ ३१ ॥ अनिष्ट्वा च महायज्ञैरकृत्वा च पितृस्वधाम्। तीर्थेष्वनभिसंप्लुत्य प्रव्रजिष्यसि चेत् प्रभो ॥ ३२ ॥ छिन्नाभ्रमिव गन्तासि विलयं मारुतेरितम्। लोकयोरुभयोर्भ्रष्टो ह्यन्तराले व्यवस्थितः ॥ ३३ ॥ अन्तर्बहिश्च यत् किञ्चिन्मनो व्यासङ्गकारकम्। परित्यज्य भवेत्त्यागी न हित्वा प्रतितिष्ठति ॥ ३४ ॥ एतस्मिन् वर्त्तमानस्य बिधावप्रतिषेधिते। ब्राह्मणस्य महाराज नोच्छित्ति-र्विद्यते क्वचित् ॥ ३५ ॥ निहत्य शत्रूंस्तरसा समृद्धान् शक्रो यथा दैत्यबलानि संख्ये। कः पार्थ शोचेन्निरतः स्वधर्मे पूर्वैः स्मृते पार्थिव शिष्टजुष्टे ॥ ३६ ॥ क्षात्रेण धर्मेण पराक्रमेण जित्वा महीं मन्त्रविद्भ्यः प्रदाय। नाकस्य पृष्ठेऽपि नरेन्द्र गन्ता न शोचितव्यं भवताद्य पार्थ ॥ ३७ ॥

इति शान्तिपर्वनि राजधर्मानुशासनपर्वणि नकुलवाक्ये द्वादशोऽध्यायः ॥ १२ ॥

---

सहदेव उवाच। न वाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत। शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा ॥ १ ॥ वाह्य द्रव्य-

विमुक्तस्य शरीरेष्वनुरुध्यतः । यो धर्मो यत् सुखं वा स्याद्द्विष-
तान्तत्तथास्तु नः ॥ २ ॥ शारीरं द्रव्यमुत्सृज्य पृथिवीमनुशासतः ।
यो धर्मो यत् सुखम्वा स्यात् सुहृदां तत्तथास्तु नः ॥ ३ ॥ द्व्यक्ष-
रस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् । ममेति च भवेन्मृत्युर्न
ममेति च शाश्वतम् ॥ ४ ॥ ब्रह्ममृत्यू ततो राजन्नात्मन्येव समा-
श्रितौ । अदृश्यमानौ भूतानि योधयेतामसंशयम् ॥ ५ ॥ अवि-
नाशोऽस्य सत्त्वस्य नियतो यदि भारत । हत्वा शरीरं भूतानां
न हिंसा प्रतिपत्स्यते ॥ ६ ॥ अथापि च सहोत्पत्तिः सत्त्वस्य
प्रलयस्तथा । नष्टे शरीरे नष्टं स्याद्वृथा च स्यात् क्रियापथः ॥७॥
तस्मादेकान्तमुत्सृज्य पूर्वैः पूर्वतरैश्च यः । पन्था निषेवितः सद्भिः
स निषेव्यो विजानता ॥ ८ ॥ लब्ध्वापि पृथिवीं कृत्स्नां सह-
स्थावरजङ्गमाम् । न भुङ्क्ते यो नृपः सम्यङ्निष्फलं तस्य
जीवितम् ॥ ९ ॥ अथवा वसतो राजन् वने वन्येन जीवतः ।
द्रव्येषु यस्य ममता मृत्योरास्ये स वर्त्तते ॥ १० ॥ वाह्यान्तरञ्च
भूतानां स्वभावं पश्य भारत । ये तु पश्यन्ति तद्भूतं मुच्यन्ते ते
महाभयात् ॥ ११ ॥ भवान् पिता भवांस्त्राता भवान् भ्राता भवान्
गुरुः । दुःखप्रलापानार्त्तस्य तस्मान्मे क्षन्तुमर्हसि ॥ १२ ॥ तथ्यम्वा
यदि वातथ्यं यन्मयैतत् प्रभाषितम् । तद्विद्धि पृथिवीपाल भक्त्या
भरतसत्तम ॥ १३ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि सहदेववाक्ये
त्रयोदशोऽध्यायः ॥ १३ ॥

---

वैशम्पायन उवाच । अव्याहरति कौन्तेये धर्मराजे युधि-
ष्ठिरे । भ्रातॄणां ब्रुवतां तांस्तान् विविधान् वेदनिश्चयान् ॥ १ ॥
महाभिजनसम्पन्ना श्रीमत्यायतलोचना । अभ्यभाषत राजेन्द्र

द्रौपदी योषितांवरा ॥ २ ॥ आसीनमृषभं राज्ञां भ्रातृभिः परिवारितम् । सिंहशार्दूलसदृशैर्वारणैरिव यूथपम् ॥ ३ ॥ अभिमानवती नित्यं विशेषेण युधिष्ठिरे । लालिता सततं राज्ञा धर्मज्ञा धर्मदर्शिनी ॥ ४ ॥ आमन्त्र्य विपुलश्रोणी साम्ना परमवल्गुना । भर्त्तारमभिसंप्रेक्ष्य ततो वचनमब्रवीत् ॥ ५ ॥

द्रौपद्युवाच । इमे ते भ्रातरः पार्थ शुष्यन्ते स्तोकका इव । वावाश्यमानास्तिष्ठन्ति न चैनानभिनन्दसे ॥ ६ ॥ नन्दयैतान्महाराज मत्तानिव महाद्विपान् । उपपन्नेन वाक्येन सततं दुःखभागिनः ॥ ७ ॥ कथं द्वैतवने राजन् पूर्वमुक्त्वा तथा वचः । भ्रातॄनेतान् स्म सहितान् शीतवातातपार्द्दितान् ॥ ८ ॥ वयं दुर्य्योधनं हत्वा मृधे भोक्ष्याम मेदिनीम् । सम्पूर्णां सर्वकामानामाहवे विजयैषिणः ॥ ९ ॥ विरथांश्च रथान् कृत्वा निहत्य च महागजान् । संस्तीर्य्य च रथैर्भूमिं ससादिभिररिन्दमाः ॥१०॥ यजतां विविधैर्यज्ञैः समृद्धैराप्तदक्षिणैः । वनवासकृतं दुःखं भविष्यति सुखाय वः ॥ ११ ॥ इत्येतानेवमुक्त्वा त्वं स्वयं धर्मभृतांवर । कथमद्य पुनर्वीर विनिहंसि मनांसि नः ॥ १२ ॥ न क्लीवो वसुधां भुङ्क्ते न क्लीवो धनमश्नुते । न क्लीवस्य गृहे पुत्रा मत्स्याः पङ्क इवासते ॥ १३ ॥ नादण्डः क्षत्रियो भाति नादण्डो भूमिमश्नुते । नादण्डस्य प्रजा राज्ञः सुखं विन्दति भारत ॥ १४ ॥ मित्रता सर्वभूतेषु दानमध्ययनं तपः । ब्राह्मणस्यैव धर्मः स्यान्न राज्ञो राजसत्तम ॥ १५ ॥ असतां प्रतिषेधश्च सताञ्च परिपालनम् । एष राज्ञां परो धर्मः समरे चापलायनम् ॥ १६ ॥ यस्मिन् क्षमा च क्रोधश्च दानादाने भयाभये । निग्रहानुग्रहौ चोभौ स वै धर्मविदुच्यते ॥१७॥ न श्रुतेन न दानेन न सान्त्वेन न चेजयया । त्वयेयं पृथिवी लब्धा न सङ्कोचेन चाप्युत ॥ १८ ॥ यत्तद्बलममित्राणां तथा वीर समुद्यतम् । हस्त्यश्वरथसम्पन्नं त्रिभिरङ्गैरनुत्तमम् ॥१९

रक्षितं द्रोणकर्णाभ्यामश्वत्थाम्ना कृपेण च । तत्त्वया निहतं वीर तस्माद्भुङ्क्ष्व वसुन्धराम् ॥ २० ॥ जम्बुद्वीपो महाराज नानाजन-पदायुतः । त्वया पुरुषशार्दूल दण्डेन मृदितः प्रभो ॥ २१ ॥ जम्बुद्वीपेन सदृशः क्रौञ्चद्वीपो नराधिप । अपरेण महामेरो-र्द्दण्डेन मृदितस्त्वया ॥ २२ ॥ क्रौञ्चद्वीपेन सदृशः शाकद्वीपो नरा-धिप । पूर्व्वेण तु महामेरोर्द्दण्डेन मृदितस्त्वया ॥ २३ ॥ उत्तरेण महामेरो शाकद्वीपेन सम्मितः । भद्राश्वः पुरुषव्याघ्र दण्डेन मृदितस्त्वया ॥ २४ ॥ द्वीपाश्च सान्तरद्वीपा नानाजनपदाश्रयाः । विगाह्य सागरं वीर दण्डेन मृदितस्त्वया ॥ २५ ॥ एतान्यप्रति-मेयानि कृत्वा कर्म्माणि भारत । न प्रीयसे महाराज पूज्यमानो द्विजातिभिः ॥ २६ ॥ स त्वं भ्रातृनिमान् दृष्ट्वा प्रति नन्दस्व भारत । ऋषभानिव सम्मत्तान् गजेन्द्रानूर्ज्जितानिव ॥ २७ ॥ अमरप्रतिमाः सर्व्वे शत्रुसाहाः परन्तपाः । एकोऽपि हि सुखायैषां मम स्यादिति मे मतिः ॥ २८ ॥ किं पुनः पुरुषव्याघ्र पतयो मे नरर्षभाः । समस्तानीन्द्रियाणीव शरीरस्य विचेष्टने ॥ २९ ॥ अनृतं नाब्रवी-च्छ्वश्रूः सर्व्वज्ञा सर्व्वदर्शिनी । युधिष्ठिरस्त्वां पाञ्चालि सुखे धास्य-त्यनुत्तमे ॥ ३० ॥ हत्वा राजसहस्राणि बहून्याशुपराक्रमाः । तद्व्यर्थं संप्रपश्यामि मोहात्तव जनाधिप ॥ ३१ ॥ येषामुन्मत्तको ज्येष्ठः सर्व्वे तेऽप्यनुसारिणः । तवोन्मादान्महाराज सोन्मादाः सर्व्वपाण्डवाः ॥ ३२ ॥ यदि हि स्युरनुन्मत्ता भ्रातरस्ते नराधिपाः । बद्ध्वा त्वां नास्तिकैः सार्द्धं प्रशासेयुर्व्वसुन्धराम् । कुरुते मूढ एवं हि यः श्रेयो नाधिगच्छति ॥ ३३ ॥ धूपैरञ्जनयोगैश्च नस्यकर्म्मभि-रेव च । भेषजैः स चिकित्स्यः स्याद्य उन्मार्गेण गच्छति ॥ ३४ ॥ साहं सर्व्वाधमा लोके स्त्रीणां भरतसत्तम । तथा विनाकृता पुत्रै-र्याहमिच्छामि जीवितुम् ॥ ३५ ॥ एतेषां यतमानानां न मेऽद्य वचनं मृषा । त्वन्तु सर्व्वां महीं त्यक्त्वा कुरुषे स्वयमापदम् ॥ ३६ ॥

यथास्तां सम्मतौ राज्ञां पृथिव्यां राजसत्तमौ । मान्धाता चाम्बरीषश्च तथा राजन् विराजसे ॥ ३७ ॥ प्रशाधि पृथिवीं देवीं प्रजा धर्म्मेण पालयन् । सपर्व्वतवनद्वीपां मा राजन् विमना भव ॥ ३८ ॥ यजस्व विविधैर्यज्ञैर्युध्यस्वारीन् प्रयच्छ च । धनानि भोगान् वासांसि द्विजातिभ्यो नृपोत्तम ॥ ३९ ॥

इति शान्तिपर्व्वणि राजधर्मानुशासनपर्व्वणि द्रौपदीवाक्ये चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

वैशम्पायन उवाच । याज्ञसेन्या वचः श्रुत्वा पुनरेवार्ज्जुनोऽब्रवीत् । अनुमान्य महाबाहुं ज्येष्ठं भ्रातरमच्युतम् ॥ १ ॥

अर्ज्जुन उवाच । दण्डः शास्ति प्रजाः सर्व्वा दण्ड एवाभिरक्षति । दण्डः सुप्तेषु जागर्त्ति दण्डं धर्मं विदुर्बुधाः ॥ २ ॥ धर्मं संरक्षते दण्डस्तथैवार्थं जनाधिप । कामं संरक्षते दण्डस्त्रिवर्गो दण्ड उच्यते ॥ ३ ॥ दण्डेन रक्ष्यते धान्यं धनं दण्डेन रक्ष्यते । एवं विद्वन्नुपादत्स्व भावं पश्यस्व लौकिकम् ॥ ४ ॥ राजदण्डभयादेके पापाः पापं न कुर्व्वते । यमदण्डभयादेके परलोकभयादपि ॥ ५ ॥ परस्परभयादेके पापाः पापं न कुर्व्वते । एवं सांसिद्धिके लोके सर्व्वं दण्डे प्रतिष्ठितम् ॥ ६ ॥ दण्डस्यैव भयादेके न खादन्ति परस्परम् । अन्धे तमसि मज्जेयुर्यदि दण्डो न पालयेत् ॥ ७ ॥ यस्माददान्तान् दमयत्यशिष्टान् दण्डयत्यपि । दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥ ८ ॥ वाचा दण्डो ब्राह्मणानां क्षत्रियाणां भुजार्पणम् । दानदण्डाः स्मृता वैश्या निर्द्दण्डः शूद्र उच्यते ॥ ९ ॥ असम्मोहाय मर्त्त्यानामर्थसंरक्षणाय च । मर्य्यादा स्थापिता लोके दण्डसंज्ञा विशाम्पते ॥ १० ॥ यत्र श्यामो लोहिताक्षो दण्डश्चरति सूद्यतः । प्रजास्तत्र न मुह्यन्ते नेता चेत् साधु

पश्यति ॥ ११ ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः । दण्ड-स्यैव भयादेते मनुष्या वर्त्मनि स्थिताः ॥ १२ ॥ नाभीतो यजते राजन् नाभीतो दातुमिच्छति । नाभीतः पुरुषः कश्चित् समये स्थातुमिच्छति ॥ १३ ॥ नाच्छित्त्वा परमर्म्माणि नाकृत्वा कर्म्म-दुष्करम् । नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥१४॥ नाघ्नतः कीर्त्तिरस्तीह न वित्तं न पुनः प्रजाः । इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत ॥ १५ ॥ य एव देवा हन्तारस्तांल्लोकोऽर्च्चयते भृशम् । हन्ता रुद्रस्तथा स्कन्दः शक्रोऽग्निर्वरुणो यमः ॥ १६ ॥ हन्ता कालस्तथा मृत्युर्वायुर्वैश्रवणो रविः । वसवो मरुतः साध्या विश्वेदेवाश्च भारत ॥ १७ ॥ एतान् देवान्नमस्यन्ति प्रतापप्रणता जनाः । न ब्रह्माणं न धातारं न पूषाणं कथञ्चन ॥ १८ ॥ मध्य-स्थान् सर्व्वभूतेषु दान्तान् शमपरायणान् । यजन्ते मानवाः केचित् प्रशस्ताः सर्व्वकर्म्मसु ॥ १९ ॥ न हि पश्यामि जीवन्तं लोके कञ्चि-दहिंसया । सत्त्वैः सत्त्वा हि जीवन्ति दुर्ब्बलैर्ब्बलवत्तराः ॥ २० ॥ नकुलो मूषिकानत्ति विड़ालो नकुलोंस्तथा । विड़ालमत्ति श्वा राजन् श्वानं व्यालमृगस्तथा ॥ २१ ॥ तानत्ति पुरुषः सर्व्वान् पश्य कालो यथागतः । प्राणस्यान्नमिदं सर्व्वं जङ्गमं स्थावरञ्च यत् ॥२२॥ विधानं दैवविहितं तत्र विद्वान्न मुह्यति । यथा सृष्टोऽसि राजेन्द्र तथा भवितुमर्हसि ॥ २३ ॥ विनीतक्रोधहर्षा हि मन्दा वन-मुपाश्रिताः । विना वधं न कुर्व्वन्ति तापसाः प्राणयापनम् ॥२४॥ उदके बहवः प्राणाः पृथिव्याञ्च फलेषु च । न च कश्चिन्न तान् हन्ति किमन्यत् प्राणयापनात् ॥ २५ ॥ सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानिचित् । पक्ष्मणोऽपि निपातेन येषां स्यात् स्कन्ध-पर्य्ययः ॥ २६ ॥ ग्रामान्निष्क्रम्य मुनयो विगतक्रोधमत्सराः । वने कुटुम्बधर्म्माणो दृश्यन्ते परिमोहिताः ॥ २७ ॥ भूमिं भित्त्वौषधीं-श्छित्त्वा वृक्षादीनण्डजान् पशून् । मनुष्यास्तन्वते यज्ञांस्ते स्वर्गं

प्राप्नुवन्ति च ॥२८॥ दण्डनीत्यां प्रणीतायां सर्व्वे सिध्यन्त्युपक्रमाः । कौन्तेय सर्व्वभूतानां तत्र मे नास्ति संशयः ॥ २९ ॥ दण्डश्चेन्न भवेल्लोके विनश्येयुरिमाः प्रजाः । जले मत्स्यानिवाभक्ष्यन् दुर्व्वलान् वलवत्तराः ॥ ३० ॥ सत्यञ्चेदं ब्रह्मणा पूर्व्वमुक्तं दण्डः प्रजा रक्षति साधुनीतः । पश्यान्नयश्च प्रतिशाम्य भीताः सन्तर्ज्जिता दण्डभया-ज्ज्वलन्ति ॥ ३१ ॥ अन्धं तम इवेदं स्यान्न प्रज्ञायेत किञ्चन । दण्ड-श्चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥ ३२ ॥ येऽपि संभिन्न-मर्य्यादा नास्तिका वेदनिन्दकाः । तेऽपि भोगाय कल्पन्ते दण्डेनाशु निपीड़िताः ॥३३॥ सर्व्वो दण्डजितो लोके दुर्ल्लभो हि शुचिर्ज्जनः । दण्डस्य हि भयाद्भीतो भोगायैव प्रवर्त्तते ॥ ३४ ॥ चातुर्व्वर्ण्य-प्रमोदाय सुनीतनयनाय च । दण्डो विधात्रा विहितो धर्म्मार्था-वभिरक्षितुम् ॥ ३५ ॥ यदि दण्डान्न विभ्येयुर्व्वयांसि श्वापदानि च । अद्युः पशून् मनुष्यांश्च यज्ञार्थानि हवींषि च ॥ ३६ ॥ न ब्रह्म चाप्यधीयीत कल्याणीं न दुहेत गाम् । न कन्योद्वहनं गच्छे-द्यदि दण्डो न पालयेत् ॥ ३७ ॥ विश्वग्लोपः प्रवर्त्तेत भिद्येरन् सर्व्वसेतवः । ममत्वं न प्रजानीयुर्यदि दण्डो न पालयेत् ॥ ३८ ॥ न सम्वत्सरसत्राणि तिष्ठेयुरकुतोभयाः । विधिवद्दक्षिणावन्ति यदि दण्डो न पालयेत् ॥ ३९ ॥ चरेयुर्नाश्रमे धर्म्मं यथोक्तं विधि-माश्रिताः । न विद्यां प्राप्नुयात् कश्चित् यदि दण्डो न पालयेत् ॥४० न चोष्ट्रो न वलीवर्द्दा नाश्वाश्वतरगर्द्दभाः । युक्ता वहेयुर्यानानि यदि दण्डो न पालयेत् ॥ ४१ ॥ दण्डे स्थिता प्रजाः सर्व्वा दण्डे सर्व्वं विदुर्बुधाः । दण्डे स्वर्गो मनुष्याणां लोकोऽयञ्च प्रतिष्ठितः ॥४२ न तत्र कूटं पापस्वा वञ्चना वापि दृश्यते । यत्र दण्डः सुविहित-श्चरत्यरिविनाशनः ॥ ४३ ॥ हविः श्वापि लिहेद्दृष्ट्वा दण्डश्चेन्नोद्यतो भवेत् । हरेत् काकः पुरोडाशं यदि दण्डो न पालयत् ॥ ४४ ॥ यदिदं धर्म्मतो राज्यं विहितं यद्यधर्म्मतः । कार्य्यस्तत्र न शोको

व भुङ्क्ष्व भोगान् यजस्व च ॥ ४५ ॥ सुखेन धर्म्मं श्रीमन्तश्चरन्ति शुचिवाससः । संवसन्तः प्रियैर्द्दारैर्भुञ्जानाश्चान्नमुत्तमम् ॥ ४६ ॥ अर्थे सर्व्वे समारम्भाः समायत्ता न संशयः । स च दण्डे समायत्तः पश्य दण्डस्य गौरवम् ॥ ४७ ॥ लोकयात्रार्थमेवेह धर्मप्रवचनं कृतम् । अहिंसा साधुहिंसेति श्रेयान् धर्मपरिग्रहः ॥ ४८ ॥ नात्यन्तं गुणवत् किञ्चित् न चाप्यत्यन्तनिर्गुणम् । उभयं सर्व्वकार्य्येषु दृश्यते साध्वसाधु च ॥ ४९ ॥ पशूनां वृषणं छित्त्वा ततो भिन्दन्ति नस्तकम् । वहन्ति बहवो भारान् बध्नन्ति दमयन्ति च ॥ ५० ॥ एवं पर्य्याकुले लोके वितथे जर्ज्जरीकृते । तैस्तैर्न्यायैर्म्महाराज पुराणं धर्म्ममाचर ॥ ५१ ॥ यज देहि प्रजा रक्ष धर्मं समनुपालय । अमित्रान् जहि कौन्तेय मित्राणि परिपालय ॥ ५२ ॥ मा च ते निघ्नतः शत्रून् मन्युर्भवतु पार्थिव । न तत्र किल्बिषं किञ्चित् कर्त्तुर्भवति भारत ॥ ५३ ॥ आततायी हि यो हन्यादाततायिनमागतम् । न तेन भ्रूणहा स स्यान्मन्युस्तन्मन्युमृच्छति ॥ ५४ ॥ अवध्यः सर्व्वभूतानामन्तरात्मा न संशयः । अवध्ये चात्मनि कथं वध्यो भवति कस्यचित् ॥ ५५ ॥ यथा हि पुरुषः शालां पुनः संप्रविशेन्नवाम् । एवं जीवः शरीराणि तानि तानि प्रपद्यते ॥ ५६ ॥ देहान् पुराणानुत्सृज्य नवान् संप्रतिपद्यते । एवं मृत्युमुखान्याहुर्ज्जना ये तत्त्वदर्शिनः ॥ ५७ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि अर्जुनवाक्ये पञ्चदशोऽध्यायः ॥ १५ ॥

---

वैशम्पायन उवाच । अर्जुनस्य वचः श्रुत्वा भीमसेनोऽत्यमर्षणः । धैर्य्यमास्थाय तेजस्वी ज्येष्ठं भ्रातरमब्रवीत् ॥ १ ॥ राजन् विदितधर्मोऽसि न तेऽस्त्यविदितं क्वचित् । उपशिक्षाम ते वृत्तं सदैव न

च यत्नतः ॥ २ ॥ न वक्ष्यामि न वक्ष्यामीत्येवं मनसि मे स्थितम् । अतिदुःखात्तु वक्ष्यामि तन्निबोध जनाधिप ॥ ३ ॥ भवतः संप्रमोहेन सर्वं संशयितं कृतम् । विक्लवत्वञ्च नः प्राप्तमबलत्वन्तथैव च ॥ ४ ॥ कथं हि राजा लोकस्य सर्वशास्त्रविशारदः । मोहमापद्यसे दैन्याद्यथा कापुरुषस्तथा ॥ ५ ॥ अगतिश्च गतिश्चैव लोकस्य विदिता तव । आयत्याञ्च तदात्वे च न तेऽस्त्यविदितं प्रभो ॥ ६ ॥ एवं गते महाराज राज्यं प्रति जनाधिप । हेतुमत्र प्रवक्ष्यामि तमिहैकमनाः शृणु ॥ ७ ॥ द्विविधो जायते व्याधिः शारीरो मानसस्तथा । परस्परं तयोर्जन्म निर्द्वन्द्वं नोपलभ्यते ॥ ८ ॥ शारीराज्जायते व्याधिर्मानसो नात्र संशयः । मानसाज्जायते चापि शारीर इति निश्चयः ॥ ९ ॥ शारीरं मानसं दुःखं योऽतीतमनुशोचति । दुःखेन लभते दुःखं द्वावनर्थौ च विन्दति ॥ १० ॥ शीतोष्णे चैव वायुश्च त्रयः शारीरजा गुणाः । तेषां गुणानां साम्यं यत्तदाहुः स्वस्थलक्षणम् ॥ ११ ॥ तेषामन्यतमोद्रेके विधानमुपदिश्यते । उष्णेन बाध्यते शीतं शीतेनोष्णं प्रबाध्यते ॥ १२ ॥ सत्त्वं रजस्तम इति मानसाः स्युस्त्रयो गुणाः । तेषां गुणानां साम्यं यत्तदाहुः स्वस्थलक्षणम् । तेषामन्यतमोत्सेके विधानमुपदिश्यते । हर्षेण बाध्यते शोको हर्षः शोकेन बाध्यते ॥ १३ ॥ कश्चित् सुखे वर्त्तमानो दुःखस्य स्मर्त्तुमिच्छति । कश्चिद्दुःखे वर्त्तमानः सुखस्य स्मर्त्तुमिच्छति ॥ १४ ॥ स त्वं न दुःखी दुःखस्य न सुखी च सुखस्य वा । न दुःखी सुखजातस्य न सुखी दुःखजस्य वा ॥ १५ ॥ स्मर्त्तुमर्हसि कौरव्य दिष्टं हि बलवत्तरम् । अथवा ते स्वभावोऽयं येन पार्थिव क्लिश्यसे ॥ १६ ॥ दृष्ट्वा सभागतां कृष्णामेकवस्त्रां रजस्वलाम् । मिषतां पाण्डुपुत्राणां न तस्य स्मर्त्तुमर्हसि ॥ १७ ॥ प्रव्राजनञ्च नगरादजिनैश्च विवासनम् । महारण्यनिवासश्च न तस्य स्मर्त्तुमर्हसि ॥ १८ ॥ जटासुरात्

परिक्लेशं चित्रसेनेन चाहवम्। सैन्धवाच्च परिक्लेशं कथं विस्मृतवानसि ॥ १९ ॥ पुनरज्ञातचर्य्यायां कीचकेन पदा वधम्। द्रौपद्या राजपुत्राश्च कथं विस्मृतवानसि ॥ २० ॥ यच्च ते द्रोणभीष्माभ्यां युद्धमासीदरिन्दम। मनसैकेन योद्धव्यं तत्ते युद्धमुपस्थितम् ॥ २१ ॥ यत्र नास्ति शरैः कार्य्यं न मित्रैर्न च बन्धुभिः। आत्मनैकेन योद्धव्यं तत्ते युद्धमुपस्थितम् ॥ २२ ॥ तस्मिन्ननिर्ज्जिते युद्धे प्राणान् यदि विमोक्ष्यसे। अन्यं देहं समास्थाय ततस्तैरपि योत्स्यसे ॥२३॥ तस्मादद्यैव गन्तव्यं युद्धस्य भरतर्षभ। परमव्यक्तरूपस्य व्यक्तं त्यक्त्वा स्वकर्मभिः ॥ २४ ॥ तस्मिन्ननिर्ज्जिते युद्धे कामवस्थां गमिष्यसि। एतज्जित्वा महाराज कृतकृत्यो भविष्यसि ॥ २५ ॥ एतां बुद्धिं विनिश्चित्य भूतानामागतिं गतिम्। पितृपैतामहे वृत्ते शाधि राज्यं यथोचितम् ॥ २६ ॥ दिष्ट्या दुर्य्योधनः पापो निहतः सानुगो युधि। द्रौपद्याः केशपाशस्य दिष्ट्या त्वं पदवीं गतः ॥ २७ ॥ यजस्व वाजिमेधेन विधिवद्दक्षिणावता। वयं ते किङ्कराः पार्थ वासुदेवश्च वीर्य्यवान् ॥ २८ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि भीमवाक्ये षड़शोऽध्यायः ॥ १६ ॥

---

युधिष्ठिर उवाच। असन्तोषः प्रमादश्च मदो रागोऽप्रशान्तता। बलं मोहोऽभिमानश्चाप्युद्वेगश्चैव सर्व्वशः ॥ १ ॥ एभिः पाप्मभिराविष्टो राज्यं त्वमभिकाङ्क्षसे। निरामिषो विनिर्मुक्तः प्रशान्तः सुसुखी भव ॥ २ ॥ य इमामखिलां भूमिं शिष्यादेको महीपतिः। तस्याप्युदरमेकं वै किमिदं त्वं प्रशंससि ॥ ३ ॥ नाह्ना पूरयितुं शक्यां न मासैर्भरतर्षभ। अपूर्य्यां पूरयन्निच्छामायुषापि न शक्नुयात् ॥ ४ ॥ यथेद्धः प्रज्वलत्यग्निरसमिद्धः प्रशाम्यति। अल्पा-

ऽहारतया त्वम्भिं शमयोर्द्ध्यमुत्थितम् ॥ ५ ॥ आत्मोदरकृतेऽप्राज्ञः करोति विघसं बहु। जयोदरं पृथिव्या ते श्रेयो निर्ज्जितया जितम् ॥ ६ ॥ मानुषान् कामभोगांस्त्वमैश्वर्य्यञ्च प्रशंससि। अभोगिनोऽबलाश्चैव यान्ति स्थानमनुत्तमम् ॥ ७ ॥ योगः क्षेमश्च राष्ट्रस्य धर्माधर्मौ त्वयि स्थितौ। मुच्यस्व महतो भारात् त्यागमेवाभिसंश्रय ॥ ८ ॥ एकोदरकृते व्याघ्रः करोति विघसं बहु। तमन्येऽप्युपजीवन्ति मन्दा लोभवशा मृगाः ॥ ९ ॥ विषयान् प्रतिसंगृह्य सन्न्यासं कुर्व्वते यदि। न च तुष्यन्ति राजानः पश्य बुद्ध्यन्तरं यथा ॥ १० ॥ पत्राहारैरश्मकुट्टैर्दन्तोलूखलिकैस्तथा। अब्भक्षैर्वायुभक्षैश्च तैरयं नरको जितः ॥ ११ ॥ यश्चेमां वसुधां कृत्स्नां प्रशासेदखिलां नृपः। तुल्याश्मकाञ्चनो यश्च स कृतार्थो न पार्थिवः ॥ १२ ॥ सङ्कल्पेषु निरारम्भो निराशो निर्म्ममो भव। अशोकं स्थानमातिष्ठन् इह चामुत्र चाव्ययम् ॥ १३ ॥ निरामिषा न शोचन्ति शोचसि त्वं किलामिषम्। परित्यज्यामिषं सर्व्वं मृषावादात् प्रमोक्ष्यसे ॥ १४ ॥ पन्थानौ पितृयानश्च देवयानश्च विश्रुतौ। ईजानाः पितृयानेन देवयानेन मोक्षिणः ॥ १५ ॥ तपसा ब्रह्मचर्य्येण स्वाध्यायेन महर्षयः। विमुच्य देहांस्ते यान्ति मृत्योरविषयं गताः ॥ १६ ॥ आमिषं बन्धनं लोके कर्म्मेहोक्तं तथामिषम्। ताभ्यां विमुक्तः पापाभ्यां पदमाप्नोति तत् परम् ॥ १७ ॥ अपि गाथां पुरा गीतां जनकेन वदन्त्यत। निर्द्वन्द्वेन विमुक्तेन मोक्षं समनुपश्यता ॥ १८ ॥ अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन। मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन ॥ १९ ॥ प्रज्ञाप्रसादमारुह्य अशोच्यान् शोचतो जनान्। जगतीस्थानिवाद्रिस्थो मन्दबुद्धिर्न्न वेक्षते ॥ २० ॥ दृश्यं पश्यति यः पश्यन् स चक्षुष्मान् स बुद्धिमान्। अज्ञातानाञ्च विज्ञानात् सम्बोधाद्बुद्धिरुच्यते ॥ २१ ॥ यस्तु वाचं विजानाति बहुमानमियात् स वै। ब्रह्मभावप्रपन्नानां

वैद्यानां भावितात्मनाम् ॥ २२ ॥ यदा भूतपृथग्भावमेकस्थमनु-
पश्यति । तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥ २३ ॥ ते
जनास्तां गतिं यान्ति नाविद्वांसोऽल्पचेतनाः । नाबुद्धयो नातपसः
सर्वं बुद्धौ प्रतिष्ठितम् ॥ २४ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि युधिष्ठिरवाक्ये
सप्तदशोऽध्यायः ॥ १७ ॥

---

वैशम्पायन उवाच । तूष्णीम्भूतन्तु राजानं पुनरेवार्जुनोऽब्र-
वीत् । सन्तप्तः शोकदुःखाभ्यां राज्ञो वाक्शल्यपीड़ितः ॥ १ ॥

अर्जुन उवाच । कथयन्ति पुरावृत्तमितिहासमिमं जनाः ।
विदेहराज्ञः संवादं भार्य्यया सह भारत ॥ २ ॥ उत्सृज्य राज्यं
भैक्ष्यार्थं कृतबुद्धिं नरेश्वरम् । विदेहराजमहिषी दुःखिता
यदभाषत ॥ ३ ॥ धनान्यपत्यं दारांश्च रत्नानि विविधानि च ।
पन्थानं पावकं हित्वा जनको मौण्ड्यमास्थितः ॥ ४ ॥ तं ददर्श
प्रिया भार्य्या भैक्ष्यवृत्तिमकिञ्चनम् । धानामुष्टिमुपासीनं निरीहं
गतमत्सरम् ॥ ५ ॥ तमुवाच समागम्य भर्त्तारमकुतोभयम् । क्रुद्धा
मनस्विनी भार्य्या विविक्ते हेतुमद्वचः ॥ ६ ॥ कथमुत्सृज्य राज्यं
स्वं धनधान्यसमन्वितम् । कापालीं वृत्तिमास्थाय धानामुष्टिर्न
ते वरः ॥ ७ ॥ प्रतिज्ञा तेऽन्यथा राजन् विचेष्टा चान्यथा तव ।
यद्राज्यं महदुत्सृज्य स्वल्पे लुभ्यसि पार्थिव ॥ ८ ॥ नैते नाति-
थयो राजन् देवर्षिपितरस्तथा । अद्य शक्यास्त्वया भर्त्तुं मोघ-
स्तेऽयं परिश्रमः ॥ ९ ॥ देवतातिथिभिश्चैव पितृभिश्चैव पार्थिव ।
सर्व्वैरेतैः परित्यक्तः परिव्रजसि निष्क्रियः ॥ १० ॥ यस्त्वं त्रैविद्य-
वृद्धानां ब्राह्मणानां सहस्रशः । भर्त्ता भूत्वा च लोकस्य सोऽद्य
तैर्भृतिमिच्छसि ॥ ११ ॥ श्रियं हित्वा प्रदीप्तां त्वं श्ववत् संप्रति

वीक्ष्यसे। अपुत्रा जननी तेऽद्य कौशल्या चापतिस्त्वया ॥ १२ ॥
अमी च धर्मकामास्त्वां क्षत्रियाः पर्य्युपासते। त्वदाशामभिकाङ्क्षन्तः
कृपणाः फलहेतुकाः ॥ १३ ॥ तांश्च त्वं विफलान् कुर्वन् कन्नु
लोकं गमिष्यसि। राजन् संशयिते मोक्षे परतन्त्रेषु देहिषु ॥ १४ ॥
नैव तेऽस्ति परो लोको नापरः पापकर्मणः। धर्म्यान् दारान्
परित्यज्य यस्त्वमिच्छसि जीवितुम् ॥ १५ ॥ स्रजो गन्धानलङ्का-
रान् वासांसि विविधानि च। किमर्थमभिसंत्यज्य परिव्रजसि
निष्क्रियः ॥ १६ ॥ निपानं सर्वभूतानां भूत्वा त्वं पावनं महत्।
आढ्यो वनस्पतिर्भूत्वा सोऽन्यांस्त्वं पर्य्युपाससे ॥ १७ ॥ खादन्ति
हस्तिनं न्यासैः क्रव्यादा बहवोऽप्युत। बहवः क्रमयश्चैव किं
पुनस्त्वामनर्थकम् ॥ १८ ॥ य इमां कुण्डिकां भिन्द्यात्त्रिविष्टब्धञ्च
यो हरेत्। वासश्चापहरेत्तस्मिन् कथन्ते मानसं भवेत् ॥ १९ ॥
यस्त्वयं सर्वमुत्सृज्य धानामुष्टेरनुग्रहः। यदानेन समं सर्वं किमिदं
त्ववसीयसे ॥ २० ॥ धानामुष्टिरिहार्थश्चेत् प्रतिज्ञा ते विनश्यति।
का चाहं तव को मे त्वं कश्च ते मय्यनुग्रहः ॥ २१ ॥ प्रशाधि पृथिवीं
राजन् यदि तेऽनुग्रहो भवेत्। प्रसादं शयनं यानं वासांस्या-
भरणानि च ॥ २२ ॥ श्रिया विहीनैरधनैस्त्यक्तमित्रैरकिञ्चनैः।
सौखिकैः सम्भृतानर्थान् यः सन्त्यजति किन्नुतत् ॥ २३ ॥ योऽत्यन्तं
प्रतिगृह्णीयात् यश्च दद्यात् सदैव हि। तयोस्त्वमन्तरं विद्धि
श्रेयांस्ताभ्यां क उच्यते ॥ २४ ॥ सदैव याचमानेषु तथा दम्भा-
न्वितेषु च। एतेषु दक्षिणा दत्ता दावाग्नाविव दुर्हुतम् ॥ २५ ॥
जातवेदा यथा राजन्नादग्ध्वैवोपशाम्यति। सदैव याचमाने
हि तथा शाम्यति वै द्विजः ॥ २६ ॥ सतां वै ददतोऽन्नञ्च लोके-
ऽस्मिन् प्रकृतिर्ध्रुवा। न चेद्राजा भवेद्दाता कुतः स्युर्मोक्षका
ङ्क्षिणः ॥ २७ ॥ अन्नाद्गृहस्था लोकेऽस्मिन् भिक्षवस्तत एवच।
अन्नात् प्राणः प्रभवति अन्नदः प्राणदोभवेत् ॥ २८ ॥ गृहस्थेभ्यो

विनिर्मुक्ता गृहस्थानेव संश्रिताः। प्रभवञ्च प्रतिष्ठाञ्च दान्ता विन्दत आसते ॥ २९ ॥ त्यागान्न भिक्षुकं विद्यान्न मौण्ड्यान्न च याचनात् । ऋजुस्तु योऽर्थं त्यजति तं सुखं विद्धि भिक्षुकम् ॥ ३० ॥ असक्तः सक्तवद्गच्छन्निःसङ्गो मुक्तबन्धनः । समः शत्रौ च मित्रे च स वै मुक्तो महीपते ॥ ३१ ॥ परिव्रजन्ति दानार्थं मुण्डाः काषायवाससः । सिता बहुविधैः पाशैः सञ्चिन्वन्तो वृथामिषम् ॥ ३२ ॥ त्रयीञ्च नाम वार्त्ताञ्च त्यक्त्वा पुत्रान् व्रजन्ति ये । त्रिविष्टब्धञ्च वासश्च प्रतिगृह्णन्त्यबुद्धयः ॥ ३३ ॥ अनिष्कषाये काषायमीहार्थमिति विद्धि तम् । धर्म्मध्वजानां मुण्डानां कृतार्थमिति मे मतिः ॥ ३४ ॥ काषायैरजिनैश्चीरैर्नग्नान् मुण्डान् जटाधरान् । बिभ्रत् साधून् महाराज जय लोकान् जितेन्द्रियः ॥ ३५ ॥ अग्न्याधेयानि गुर्वर्थं क्रतून् सपशुदक्षिणान् । ददात्यहरहः पूर्वं को नु धर्म्मरतस्ततः ॥ ३६ ॥

अर्ज्जुन उवाच । तत्त्वज्ञो जनको राजा लोकेऽस्मिन्निति गीयते । सोऽप्यस्मिन्मोहसम्पन्नो मा मोहवशमन्वगाः ॥ ३७ ॥ एवं धर्म्ममनुक्रान्तं सदा दानपरैर्नरैः । आनृशंस्यगुणोपेताः कामक्रोधविवर्ज्जिताः ॥ ३८ ॥ प्रजानां पालने युक्ता दानमुत्तममास्थिताः । इष्टांल्लोकानवाप्स्यामो गुरुवृद्धोपचायिनः ॥ ३९ ॥ देवतातिथिभूतानां निर्वपन्तो यथाविधि । स्थानमिष्टमवाप्स्यामो ब्राह्मणाः सत्यवादिनः ॥ ४० ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि अर्ज्जुनवाक्ये अष्टादशोऽध्यायः ॥ १८ ॥

---

युधिष्ठिर उवाच । वेदाहं तात शास्त्राणि अपराणि पराणि च । उभयं वेद वचनं कुरु कर्म त्यजेति च ॥ १ ॥ आकुलानि

च शास्त्राणि हेतुभिश्चिन्तितानि च। निश्चयश्चैव यो मन्ते वेदाहं तं यथाविधि ॥ २ ॥ त्वन्तु केवलमस्त्रज्ञो वीरव्रतसमन्वितः। शास्त्रार्थं तत्त्वतो गन्तुमसमर्थः कथञ्चन ॥ ३ ॥ शास्त्रार्थसूक्ष्मदर्शी यो धर्मनिश्चयकोविदः। तेनाप्येवं न वाच्योऽहं यदि धर्मं प्रपश्यसि ॥ ४ ॥ भ्रातृसौहृदमास्थाय यदुक्तं वचनं त्वया। न्याय्यं युक्तञ्च कौन्तेय प्रीतोऽहं तेन तेऽर्जुन ॥ ५ ॥ युद्धधर्मेषु सर्वेषु क्रियाणां नैपुणेषु च। न त्वया सदृशः कश्चित् त्रिषु लोकेषु विद्यते ॥ ६ ॥ धर्मसूक्ष्मतरं वाच्यं तत्र दुष्प्रतरं त्वया। धनञ्जय न मे बुद्धिमभिशङ्कितुमर्हसि ॥ ७ ॥ युद्धशास्त्रविदेव त्वं न वृद्धाः सेवितास्त्वया। संक्षिप्तविस्तरविदां न तेषां वेत्सि निश्चयम् ॥ ८ ॥ तपस्त्यागोऽविधिरिति निश्चयस्त्वेष धीमताम्। परं परं ज्याय एषां येषां नैःश्रेयसी मतिः ॥ ९ ॥ यस्त्वेतन्मन्यसे पार्थ न ज्यायोऽस्ति धनादिति। तत्र ते वर्त्तयिष्यामि यथा नैतत् प्रधानतः ॥१०॥ तपःस्वाध्यायशीला हि दृश्यन्ते धार्मिका जनाः। ऋषयस्तपसा युक्ता येषां लोकाः सनातनाः ॥ ११ ॥ अजातशत्रवो धीरास्तथान्ये वनवासिनः। अरण्ये बहवश्चैव स्वाध्यायेन दिवं गताः ॥ १२ ॥ उत्तरेण तु पन्थानमार्य्या विषयनिग्रहात्। अबुद्धिजं तमस्त्यक्त्वा लोकांस्त्यागवतां गताः ॥ १३ ॥ दक्षिणेन तु पन्थानं यं भास्वन्तं प्रचक्षते। एते क्रियावतां लोका ये श्मशानानि भेजिरे ॥ १४ ॥ अनिर्द्देश्या गतिः सा तु यां प्रपश्यन्ति मोक्षिणः। तस्माद्योगः प्रधानेष्टः स तु दुःखं प्रवेदितुम् ॥ १५ ॥ अनुस्मृत्य तु शास्त्राणि कवयः समवस्थिताः। अपीह स्यादपीह स्यात् सारासारदिदृक्षया ॥१६॥ वेदवादानतिक्रम्य शास्त्राण्यारण्यकानि च। विपाट्य कदलीस्तम्भं सारं ददृशिरे न ते ॥ १७ ॥ अथैकान्तव्युदासेन शरीरे पाञ्चभौतिके। इच्छाद्वेषसमायुक्तमात्मनः प्राङ्गरिङ्गितैः ॥ १८ ॥ अग्राह्यं चक्षुषा सूक्ष्ममनिर्द्देश्यञ्च तद्गिरा। कर्महेतु-

पुरस्कारं भूतेषु परिवर्त्तते ॥ १९ ॥ कल्याणगोचरं कृत्वा मनस्तृष्णा निगृह्य च । कर्म्मसन्ततिमुत्सृज्य स्यान्निरालम्बनः सुखी ॥ २० ॥ अस्मिन्नेवं सूक्ष्मगम्ये मार्गे सद्भिर्निषेविते । कथमर्थमनर्थाढ्य-मर्जुन त्वं प्रशंससि ॥ २१ ॥ पूर्वशास्त्रविदोऽप्येवं जनाः पश्यन्ति भारत । क्रियासु निरता नित्यं दाने यज्ञे च कर्म्मणि ॥ २२ ॥ भवन्ति सुदुरावर्त्ता हेतुमन्तोऽपि पण्डिताः । दृढ़पूर्वं स्मृता मूढ़ा नैतदस्तीति वादिनः ॥ २३ ॥ अमृतस्यावमन्तारो वक्तारो जन-संसदि । चरन्ति वसुधां कृत्स्नां वावदूका बहुश्रुताः ॥ २४ ॥ पार्थ यान्न विजानीमः कस्तान् ज्ञातुमिहार्हति । एवं प्राज्ञान् सतश्चापि महतः शास्त्रवित्तमान् ॥ २५ ॥ तपसा महदाप्नोति बुद्ध्या वै विन्दते महत् । त्यागेन सुखमाप्नोति सदा कौन्तेय तत्त्ववित् ॥ २६ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि युधिष्ठिरवाक्ये एकोनविंशोऽध्यायः ॥ १९ ॥

---

वैशम्पायन उवाच । अस्मिन् वाक्यान्तरे वक्ता देवस्थानो महातपाः । अभिनीततरं वाक्यमित्युवाच युधिष्ठिरम् ॥ १ ॥

देवस्थान उवाच । यद्वचः फाल्गुणेनोक्तं न ज्यायोऽस्ति धनादिति । अत्र ते वर्त्तयिष्यामि तदेकाग्रमनाः शृणु ॥२॥ अजात-शत्रो धर्म्मेण कृत्स्ना च वसुधा जिता । ताञ्जित्वा च त्वया राजन् न परित्यक्तुमर्हसि ॥ ३ ॥ चतुष्पदी हि निःश्रेणी ब्रह्मण्येषा प्रति-ष्ठिता । तां क्रमेण महाबाहो यथावज्जय पार्थिव ॥ ४ ॥ तस्मात् पार्थ महायज्ञैर्यजस्व बहुदक्षिणैः । स्वाध्याययज्ञा ऋषयो ज्ञान-यज्ञास्तथापरे ॥ ५ ॥ कर्म्मनिष्ठांश्च बुध्येथास्तपोनिष्ठांश्च भारत । वैखानसानां कौन्तेय वचनं श्रूयते यथा ॥ ६ ॥ ईहेत धनहेतो-

र्यस्तस्यानीहा गरीयसी। भूयान् दोषो हि वर्द्धेत यस्तं धर्म-
मुपाश्रयेत्॥ ७॥ कृत्स्नञ्च द्रव्यसंहारं कुर्वन्ति विधिकारणात्।
आत्मानं दूषितो बुद्ध्या भ्रूणहत्यां न बुध्यते॥ ८॥ अनर्हते
यद्ददाति न ददाति यदर्हते। अर्हानर्हापरिज्ञानात् दानधर्मोऽपि
दुष्करः॥ ९॥ यज्ञाय सृष्टानि धनानि धात्रा यज्ञोद्दिष्टः पुरुषो
रक्षिता च। तस्मात् सर्वं यज्ञ एवोपयोज्यं धनं ततोऽनन्तर एव
कामः॥ १०॥ यज्ञैरिन्द्रो विविधैः रत्नवद्भिर्देवान् सर्वानत्ययाद्
भूरितेजाः। तेनेन्द्रत्वं प्राप्य विभ्राजतेऽसौ तस्माद्यज्ञे सर्वमेवोप-
योज्यम्॥ ११॥ महादेवः सर्वयज्ञे महात्मा हुत्वात्मानं देवदेवो
बभूव। विश्वांल्लोकान् व्याप्य विष्टभ्य कीर्त्त्या विराजते द्युतिमान्
कृत्तिवासाः॥ १२॥ आविक्षितः पार्थिवोऽसौ मरुत्त ऋद्ध्या शक्रं
योऽजयद्देवराजम्। यज्ञे यस्य श्रीः स्वयं सन्निविष्टा यस्मिन् भाण्डं
काञ्चनं सर्वमासीत्॥ १३॥ हरिश्चन्द्रः पार्थिवेन्द्रः श्रुतस्ते यज्ञै-
रिष्ट्वा पुण्यभाग्वीतशोकः। ऋद्ध्या शक्रं योऽजयन्मानुषः सन्स्तस्मा-
द्यज्ञे सर्वमेवोपयोज्यम्॥ १४॥

इति शान्तिपर्व्वणि राजधर्मानुशासनपर्व्वणि देवस्थानवाक्ये
विंशोऽध्यायः॥ २०॥

---

देवस्थान उवाच। अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
इन्द्रेण समये पृष्टो यदुवाच बृहस्पतिः॥ १॥ सन्तोषो वै स्वर्ग-
तमः सन्तोषः परमं सुखम्। तुष्टेर्न किञ्चित् परतः सा सम्यक्
प्रतितिष्ठति॥ २॥ यदा संहरते कामान् कूर्मोऽङ्गानीव सर्वशः।
तदात्मज्योतिरचिरात् स्वात्मन्येव प्रसीदति॥ ३॥ न बिभेति यदा
चायं यदा चास्मान्न बिभ्यति। कामद्वेषौ च जयति तदात्मानं
प्रपश्यति॥ ४॥ यदासौ सर्वभूतानां न द्रुह्यति न काङ्क्षति।

कर्म्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ ५ ॥ एवं कौन्तेय भूतानि तं तं धर्मं तथा तथा । तदात्मना प्रपश्यन्ति तस्माद्बुध्यस्व भारत ॥ ६ ॥ अन्ये शमं प्रशंसन्ति व्यायाममपरे जनाः । नैकं न चापरे केचिदुभयञ्च तथापरे ॥७॥ यज्ञमेके प्रशंसन्ति सन्न्यासमपरे जनाः । दानमेके प्रशंसन्ति केचिच्चैव प्रतिग्रहम् ॥ ८ ॥ केचित् सर्वं परित्यज्य तूष्णीं ध्यायन्त आसते । राज्यमेके प्रशंसन्ति प्रजानां परिपालनम् ॥ ९ ॥ हित्वा छित्त्वा च भित्त्वा च केचिदेकान्तशीलिनः । एतत् सर्वं समालोक्य बुधानामेष निश्चयः ॥ १० ॥ अद्रोहेणैव भूतानां यो धर्म्मः स सतां मतः । अद्रोहः सत्यवचनं संविभागो दया दमः ॥ ११ ॥ प्रजनं स्वेषु दारेषु मार्द्दवं ह्रीरचापलम् । एवं धर्मं प्रधानेष्टं मनुः स्वायम्भुवोऽब्रवीत् ॥ तस्मादेतत् प्रयत्नेन कौन्तेय परिपालय ॥ १२ ॥ यो हि राज्यस्थितः शश्वद्वशी तुल्यप्रियाप्रियः । क्षत्रियो यज्ञशिष्टाशी राजशास्त्रार्थतत्त्ववित् ॥ १३ ॥ असाधुनिग्रहरतः साधूनां प्रग्रहे रतः । धर्मवर्त्मनि संस्थाप्य प्रजा वर्त्तेत धर्मतः ॥ १४ ॥ पुत्रसंक्रामितश्रीश्च वने वन्येन वर्त्तयन् । विधिना श्रावणेनैव कुर्य्यात् कर्माण्यतन्द्रितः ॥ १५ ॥ य एवं वर्त्तते राजा राजधर्मविनिश्चितः । तस्यायञ्च परश्चैव लोकः स्यात् सफलोदयः । निर्वाणं हि सुदुष्प्राप्यं बहुविघ्नञ्च मे मतम् ॥ १६ ॥ एवं धर्ममनुक्रान्ताः सत्यदानतपःपराः । आनृशंस्यगुणैर्युक्ताः कामक्रोधविवर्ज्जिताः ॥ १७ ॥ प्रजानां पालने युक्ता धर्ममुत्तममास्थिताः । गोब्राह्मणार्थे युध्यन्तः प्राप्ता गतिमनुत्तमाम् ॥ १८ ॥ एवं रुद्राः सवसवस्तथादित्याः परन्तप । साध्या राजर्षिसङ्घाश्च धर्ममेतं समाश्रिताः । अप्रमत्तास्ततः स्वर्गं प्राप्ताः पुण्यैः स्वकर्मभिः ॥ १९ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि देवस्थानवाक्ये एकविंशोऽध्यायः ॥ २१ ॥

वैशम्पायन उवाच। अस्मिन्नेवान्तरे वाक्यं पुनरेवार्जुनोऽब्र-
वीत्। निर्विसमनसं ज्येष्ठमिदं भ्रातरमच्युतम् ॥ १ ॥ क्षत्रधर्म्मेण
धर्मज्ञ प्राप्य राज्यं सुदुर्लभम्। जित्वा चारीन्नरश्रेष्ठ तप्यते किं
भृशं भवान् ॥ २ ॥ क्षत्रियाणां महाराज संग्रामे निधनं मतम्।
विशिष्टं बहुभिर्यज्ञैः क्षत्रधर्मविधिः स्मृतः ॥ ३ ॥ ब्राह्मणानां तप-
स्त्यागः प्रेत्य धर्मविधिः स्मृतः। क्षत्रियाणाञ्च निधनं संग्रामे विहितं
प्रभो ॥ ४ ॥ क्षत्रधर्मो महारौद्रः शस्त्रनित्य इति स्मृतः। वधश्च
भरतश्रेष्ठ काले शस्त्रेण संयुगे ॥५॥ ब्राह्मणस्यापि चेद्राजन् क्षत्र-
धर्म्मेण वर्त्ततः। प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसम्भवम् ॥६॥
न त्यागो न पुनर्यज्ञो न तपो मनुजेश्वर। क्षत्रियस्य विधीयन्ते न
परस्वोपजीवनम् ॥ ७ ॥ स भवान् सर्वधर्मज्ञो धर्मात्मा भरतर्षभ।
राजा मनीषी निपुणो लोके दृष्टपरापरः ॥ ८ ॥ त्यक्त्वा सन्तापजं
शोकं दंशितो भव कर्मणि। क्षत्रियस्य विशेषेण हृदयं वज्रसन्नि-
भम् ॥ ९ ॥ जित्वारीन् क्षत्रधर्म्मेण प्राप्य राज्यमकण्टकम्। विजि-
तात्मा मनुष्येन्द्र यज्ञदानपरो भव ॥ १० ॥ इन्द्रो वै ब्रह्मणः पुत्रः
क्षत्रियः कर्मणाभवत्। ज्ञातीनां पापवृत्तानां जघान नवतीर्नव
॥ ११ ॥ तच्चास्य कर्म पूज्यञ्च प्रशंस्यञ्च विशाम्पते। तेनेन्द्रत्वं
समापेदे देवानामिति नः श्रुतम् ॥ १२ ॥ स त्वं यज्ञैर्महाराज
यजस्व बहुदक्षिणैः। यथैवेन्द्रो मनुष्येन्द्र चिराय विगतज्वरः
॥ १३ ॥ मा त्वमेवं गते किञ्चिच्छोचेथाः क्षत्रियर्षभ। गतास्ते क्षत्र-
धर्म्मेण शस्त्रपूताः परां गतिम् ॥ १४ ॥ भवितव्यं तथा तच्च यद्वृत्तं
भरतर्षभ। दिष्टं हि राजशार्दूल न शक्यमतिवर्त्तितुम ॥ १५ ॥

इति शान्तिपर्वनि राजधर्मानुशासनपर्वणि अर्जनवाक्ये
द्वाविंशोऽध्यायः ॥ २२ ॥

वैशम्पायन उवाच। एवमुक्तस्तु कौन्तेयो गुडाकेशेन पाण्डवः। नोवाच किञ्चित् कौरव्यस्ततो द्वैपायनोऽब्रवीत् ॥ १ ॥

व्यास उवाच। बीभत्सोर्वचनं सौम्य सत्यमेतद्युधिष्ठिर। शास्त्रदृष्टः परो धर्मः स्थितो गार्हस्थ्यमाश्रितः ॥ २ ॥ स्वधर्मञ्चर धर्मज्ञ यथाशास्त्रं यथाविधि। न हि गार्हस्थ्यमुत्सृज्य तवारण्यं विधीयते ॥ ३ ॥ गृहस्थं हि सदा देवाः पितरोऽतिथयस्तथा। भृत्याश्चैवोपजीवन्ति तान् भरस्व महीपते ॥ ४ ॥ वयांसि पशवश्चैव भूतानि च जनाधिप। गृहस्थैरेव धार्य्यन्ते तस्माच्छ्रेष्ठो गृहाश्रमी ॥ ५ ॥ सोऽयं चतुर्णामेतेषामाश्रमाणां दुराचरः। तञ्चराद्य विधिं पार्थ दुश्चरं दुर्बलेन्द्रियैः ॥ ६ ॥ वेदज्ञानञ्च ते कृत्स्नं तपश्चाचरितं महत्। पितृपैतामहं राज्यं धुर्य्यवद्वोढुमर्हसि ॥ ७ ॥ तपो यज्ञः क्षमा विद्या भैक्ष्यमिन्द्रियसंयमः। ध्यानमेकान्तशीलत्वं तुष्टिर्ज्ञानञ्च शक्तितः। ब्राह्मणानां महाराज चेष्टा संसिद्धिकारिका ॥८॥ क्षत्रियाणान्तु वक्ष्यामि तवापि विदितं पुनः। यज्ञो विद्या समुत्थानमसन्तोषः श्रियं प्रति। दण्डधारणमुग्रत्वं प्रजानां परिपालनम् ॥ ९ ॥ वेदज्ञानं तथा कृत्स्नं तपः सुचरितं तथा। द्रविणोपार्ज्जनं भूरि पात्रे च प्रतिपादनम् ॥ १० ॥ एतानि राज्ञां कर्माणि सुकृतानि विशाम्पते। इमं लोकममुञ्चैव साधयन्तीति नः श्रुतम् ॥ ११ ॥ एषां ज्यायस्तु कौन्तेय दण्डधारणमुच्यते। बलं हि क्षत्रिये नित्यं बले दण्डः समाहितः ॥ १२ ॥ एताश्चेष्टाः क्षत्रियाणां राजन् संसिद्धिकारिकाः। अपि गाथामिमाञ्चैव बृहस्पतिरगायत ॥ १३ ॥ भूमिरेतौ निगिरति सर्पो बिलशयानिव। राजानञ्चाविरोद्धारं ब्राह्मणञ्चाप्रवासिनम् ॥१४॥ सुद्युम्नस्यापि राजर्षेः श्रूयते दण्डधारणात्। प्राप्तवान् परमां सिद्धिं दक्षः प्राचेतसो यथा ॥ १५ ॥

युधिष्ठिर उवाच। भगवन् कर्म्मणा केन सुद्युम्नो वसुधाधिपः। संसिद्धिं परमां प्राप्तः श्रोतुमिच्छामि तं नृपम् ॥ १६ ॥

व्यास उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । शङ्खश्च लिखितश्चास्तां भ्रातरौ संशितव्रतौ॥१७॥ तयोरावसथावास्तां रमणीयौ पृथक् पृथक् । नित्य पुष्पफलैर्वृक्षैरुपेतौ बाहुदामनु ॥ १८ ॥ ततः कदाचिल्लिखितः शङ्खस्याश्रममागतः । यदृच्छयाथ शङ्खोऽपि निष्क्रान्तोऽभवदाश्रमात् ॥ १९ ॥ सोऽभिगम्याश्रमं भ्रातुः शङ्खस्य लिखितस्तदा । फलानि पातयामास सम्यक् परिणतान्युत ॥ २० ॥ अभ्युपादाय विस्रब्धो भक्षयामास स द्विजः । तस्मिंश्च भक्षयत्येव शङ्खोऽप्याश्रममागतः ॥२१॥ भक्षयन्तन्तु तं दृष्ट्वा शङ्खो भ्रातरमब्रवीत् । कुतः फलान्यवाप्तानि हेतुना केन खादसि ॥ २२ ॥ सोऽब्रवीत् भ्रातरं ज्येष्ठमुपस्पृत्याभिवाद्य च । इत एव गृहीतानि मयेति प्रहसन्निव ॥ २३ ॥ तमब्रवीत्तथा शङ्खस्तीव्ररोषसमन्वितः । स्तेयं त्वया कृतमिदं फलान्याददता स्वयम् ॥२४॥ गच्छ राजानमासाद्य स्वकर्म कथयस्व वै । अदत्तादानमेवं हि कृतं पार्थिवसत्तम ॥२५॥ स्तेनं मां त्वं विदित्वा च स्वधर्ममनुपालयन् । शीघ्रं धारय चौरस्य मम दण्डं नराधिप ॥ २६ ॥ इत्युक्तस्तस्य वचनात् सुद्युम्नं स नराधिपम् । अभ्यगच्छन्महाभागो लिखितः संशितव्रतः ॥ २७ ॥ सुद्युम्नस्त्वन्तपालेभ्यः श्रुत्वा लिखितमागतम् । अभ्यगच्छत् सहामात्यः पद्भ्यामेव जनेश्वरः ॥ २८ ॥ तमब्रवीत् समागम्य स राजा धर्मवित्तमम् । किमागमनमाचक्ष्व भगवन् कृतमेव तत् ॥ २९ ॥ एवमुक्तः स विप्रर्षिः सुद्युम्नमिदमब्रवीत् । प्रतिश्रुत्य करिष्येति श्रुत्वा तत् कर्त्तुमर्हसि ॥ ३० ॥ अनिसृष्टानि गुरुणा फलानि मनुजर्षभ । भक्षितानि महाराज तत्र मां शाधि मा चिरम् ॥ ३१ ॥

सुद्युम्न उवाच । प्रमाणञ्चेन्मतो राजा भवतो दण्डधारणे । अनुज्ञायामपि तथा हेतुः स्याद्ब्राह्मणर्षभ ॥ ३२ ॥ स भवानभ्यनुज्ञातः शुचिकर्मा महाव्रतः । ब्रूहि कामानतोऽन्यांस्त्वं करिष्यामि हि ते वचः ॥ ३३ ॥

व्यास उवाच । स छन्द्यमानो ब्रह्मर्षिः पार्थिवेन महात्मना । नान्यं स वरयामास तस्माद्दण्डादृते वरम् ॥ ३४ ॥ ततः स पृथिवीपालो लिखितस्य महात्मनः । करौ प्रच्छेदयामास धृतदण्डो जगाम सः ॥ ३५ ॥ स गत्वा भ्रातरं शङ्खमार्त्तरूपोऽब्रवीदिदम् । धृतदण्डस्य दुर्बुद्धेर्भवांस्तत् चन्तुमर्हसि ॥ ३६ ॥

शङ्ख उवाच । न कुप्ये तव धर्मज्ञ न त्वं दूषयसे मम । धर्मस्तु ते व्यतिक्रान्तस्ततस्ते निष्कृतिः कृता ॥ ३७ ॥ स गत्वा बाहुदां शीघ्रं तर्पयस्व यथाविधि । देवानृषीन् पितॄंश्चैव मा चाधर्मे मनः कृथाः ॥ ३८ ॥ तस्य तद्वचनं श्रुत्वा शङ्खस्य लिखितस्तदा । अवगाह्यापगां पुण्यामुदकार्थं प्रचक्रमे ॥ ३९ ॥ प्रादुरास्तां ततस्तस्य करौ जलजसन्निभौ । ततः त विस्मितो भ्रातुर्दर्शयामास तौ करौ ॥ ४० ॥ ततस्तमब्रवीत् शङ्खस्तपसेदं कृतं मया । मा च तत्र विशङ्काभूद्दैवमत्र विधीयते ॥ ४१ ॥

लिखित उवाच । किन्नु नाहं त्वया पूतः पूर्वमेव महाद्युते । यस्य ते तपसो वीर्य्यमीदृशं द्विजसत्तम ॥ ४२ ॥

शङ्ख उवाच । एवमेतन्मया कार्य्यं नाहं दण्डधरस्तव । स च पूतो नरपतिस्त्वञ्चापि पितृभिः सह ॥ ४३ ॥

व्यास उवाच । स राजा पाण्डवश्रेष्ठ श्रेयानेतेन कर्मणा । प्राप्तवान् परमां सिद्धिं दक्षः प्राचेतसो यथा ॥ ४४ ॥ एष धर्मः क्षत्रियाणां प्रजानां परिपालनम् । उत्पथोऽन्यो महाराज मास्म शोके मनः कृथाः ॥ ४५ ॥ भ्रातुरस्य हितं वाक्यं शृणु धर्मज्ञसत्तम । दण्ड एव हि राजेन्द्र क्षत्रधर्मो न मुण्डनम् ॥ ४६ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि शङ्खलिखितोपाख्याने त्रयोविंशोऽध्यायः ॥ २३ ॥

---

वैशम्पायन उवाच। पुनरेव महर्षिस्तं कृष्णद्वैपायनो मुनिः। अजातशत्रुं कौन्तेयमिदं वचनमब्रवीत्॥ १॥ अरण्ये वसतां तात भ्रातॄणां ते मनस्विनाम्। मनोरथा महाराज ये तत्रासन् युधिष्ठिर॥ २॥ तानिमे भरतश्रेष्ठ प्राप्नुवन्तु महारथाः। प्रशाधि पृथिवीं पार्थ ययातिरिव नाहुषः॥ ३॥ अरण्ये दुःखवसतिरनुभूता तपस्विभिः। दुःखस्यान्ते नरव्याघ्र सुखान्यनुभवन्तु वै॥४॥ धर्ममर्थञ्च कामञ्च भ्रातृभिः सह भारत। अनुभूयः ततः पश्चात् प्रस्थातासि विशाम्पते॥ ५॥ अर्थिनाञ्च पितॄणाञ्च देवतानाञ्च भारत। आनृण्यं गच्छ कौन्तेय तत् सर्वञ्च करिष्यसि॥ ६॥ सर्वमेधाश्वमेधाभ्यां यजस्व कुरुनन्दन। ततः पश्चान्महाराज गमिष्यसि परां गतिम्॥ ७॥ भ्रातॄंश्च सर्वान् क्रतुभिः संयोज्य बहुदक्षिणैः। संप्राप्तः कीर्त्तिमतुलां पाण्डवेय भविष्यसि॥ ८॥ विद्यते पुरुषव्याघ्र वचनं कुरुसत्तम। शृणुष्वैवं यथा कुर्वन् न धर्माच्च्यवसे नृप॥ ९॥ आददानस्य विजयं विग्रहञ्च युधिष्ठिर। समानधर्मकुशलाः स्थापयन्ति नरेश्वरम्॥ १०॥ देशकालप्रतीक्षी यो दस्यून् मर्षयते नृपः। शास्त्रजां बुद्धिमास्थाय युज्यते नैनसा हि सः॥ ११॥ आदाय बलिषड्भागं यो राष्ट्रं नाभिरक्षति। प्रतिगृह्णाति तत् पापं चतुर्थांशेन भूमिपः॥ १२॥ निबोध च यथा तिष्ठन् धर्माच्च्यवते नृपः। निग्रहाद्धर्मशास्त्राणामनुरुध्यन्नपेतभीः॥ १३॥ कामक्रोधावनादृत्य पितेव समदर्शनः। शास्त्रजां बुद्धिमास्थाय युज्यते नैनसा हि सः॥ १४॥ दैवेनाभ्याहतो राजा कर्मकाले महाद्युते। न साधयति यत् कर्म न तत्राहुरतिक्रमम्॥ १५॥ तरसा बुद्धिपूर्वं वा निग्राह्या एव शत्रवः। पापैः सह न सन्दध्याद्राष्ट्रं पुण्यञ्च कारयेत्॥ १६॥ शूराश्चार्याश्च सत्कार्या विद्वांसश्च युधिष्ठिर। गोमिनो धनिनश्चैव परिपाल्या विशेषतः॥ १७॥ व्यवहारेषु धर्मेषु योक्तव्याश्च बहुश्रुताः। गुणयुक्तोऽपि

नैकस्मिन् विश्वसेत विचक्षणः ॥ १८ ॥ अरक्षिता दुर्विनीतो मानी स्तब्धोऽभ्यसूयकः । एनसा युज्यते राजा दुर्द्दान्त इति चोच्यते ॥ १९ ॥ येऽरक्ष्यमाणा हीयन्ते दैवेनाभ्याहता नृप । तस्करैश्चापि हन्यन्ते सर्वं तद्राजकिल्बिषम् ॥ २० ॥ सुमन्त्रिते सुनीते न सर्वतश्चोपपादिते । पौरुषे कर्म्मणि कृते नास्त्यधर्मो युधिष्ठिर ॥ २१ ॥ विच्छिद्यन्ते समारम्भाः सिध्यन्ते चापि दैवतः । कृते पुरुषकारे तु नैनः स्पृशति पार्थिवम् ॥ २२ ॥ अत्र ते राजशार्दूल वर्त्तयिष्ये कथामिमाम् । यद्वृत्तं पूर्वराजर्षेर्हयग्रीवस्य पाण्डव ॥ २३ ॥ शत्रून् हत्वा हतस्याजौ शूरस्याक्लिष्टकर्म्मणः । असहायस्य संग्रामे निर्ज्जितस्य युधिष्ठिर ॥ २४ ॥ यत् कर्म वै निग्रहे शात्रवाणां योगश्चाग्र्यः पालने मानवानाम् । कृत्वा कर्म प्राप्य कीर्त्तिं स युद्धाद्वाजिग्रीवो मोदते स्वर्गलोके ॥ २५ ॥ सन्त्यक्तात्मा समरेष्वाततायी शस्त्रैश्छिन्नो दस्युभिर्वध्यमानः । अश्वग्रीवः कर्मशीलो महात्मा संसिद्धार्थो मोदते स्वर्गलोके ॥ ॥ २६ ॥ धनुर्यूपो रसना ज्या शरः स्रुक् स्रुवः खड्गो रुधिरं यत्र चाज्यम् । रथो वेदी कामजो युद्धमग्निश्चातुर्होत्रं चतुरो वाजिमुख्याः ॥ २७ ॥ हुत्वा तस्मिन् यज्ञवह्नावथारीन् पापान्मुक्तो राजसिंहस्तरस्वी । प्राणान् हुत्वा चावभृथे रणे स वाजिग्रीवो मोदते देवलोके ॥ २८ ॥ राष्ट्रं रक्षन् बुद्धिपूर्वं नयेन संत्यक्तात्मा यज्ञशीलो महात्मा । सर्वान् लोकान् व्याप्य कीर्त्त्या मनस्वी वाजिग्रीवो मोदते देवलोके ॥२९॥ दैवीं सिद्धिं मानुषीं दण्डनीतिं योगन्यासैः पालयित्वा महीञ्च । तस्माद्राजा धर्म्मशीलो महात्मा वाजिग्रीवो मोदते देवलोके ॥३०॥ विद्वांस्त्यागी श्रद्दधानः कृतज्ञस्त्यक्त्वा लोकं मानुषं कर्म कृत्वा । मेधाविनां विदुषां सम्मतानां तनुत्यजां लोकमाक्रम्य राजा ॥ ३१ ॥ सम्यग्वेदान् प्राप्य शास्त्राण्यधीत्य सम्यग्राज्यं पालयित्वा महात्मा । चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे वाजिग्रीवो मोदते देवलोके ॥ ३२ ॥

जित्वा संग्रामान् पालयित्वा प्रजाश्च सोमं पीत्वा तर्पयित्वा द्विजाग्र्यान्। युक्त्या दण्डं धारयित्वा प्रजानां युद्धे क्षीणो मोदते देवलोके ॥ ३३ ॥ वृत्तं यस्य श्लाघनीयं मनुष्याः सन्तो विद्वांसश्चार्हयन्त्यर्हणीयम्। स्वर्गं जित्वा वीरलोकानवाप्य सिद्धिं प्राप्तः पुण्यकीर्त्तिर्महात्मा ॥ ३४ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि व्यासवाक्ये चतुर्विंशोऽध्यायः ॥ २४ ॥

---

वैशम्पायन उवाच। द्वैपायनवचःश्रुत्वा कुपिते च धनञ्जये। व्यासमामन्त्र्य कौन्तेयः प्रत्युवाच युधिष्ठिरः ॥ १ ॥

युधिष्ठिर उवाच। न पार्थिवमिदं राज्यं न भोगाश्च पृथग्विधाः। प्रीणयन्ति मनो मेऽद्य शोको मां रुन्धयत्ययम् ॥ २ ॥ श्रुत्वा वीरविहीनानामपुत्राणाञ्च योषिताम्। परिदेवयमानानां शान्तिं नोपलभे मुने ॥ ३ ॥

वैशम्पायन उवाच। इत्युक्तः प्रत्यवाचेदं व्यासो योगविदाम्वरः। युधिष्ठिरं महाप्राज्ञो धर्मज्ञो वेदपारगः ॥ ४ ॥

व्यास उवाच। न कर्मणा लभ्यते चेज्यया वा नाप्यस्ति दाता पुरुषस्य कश्चित्। पर्य्याययोगाद्विहितं विधात्रा कालेन सर्वं लभते मनुष्यः ॥ ५ ॥ न बुद्धिशास्त्राध्ययनेन शक्यं प्राप्तुं विशेषं मनुजैरकाले। मूर्खोऽपि चाप्नोति कदाचिदर्थान् कालो हि कार्य्यं प्रति निर्विशेषः ॥ ६ ॥ नाभूतिकालेषु फलं ददन्ति शिल्पानि मन्त्राश्च तथौषधानि। तान्येव कालेन समाहितानि सिध्यन्ति वर्द्धन्ति च भूतिकाले ॥ ७ ॥ कालेन शीघ्राः प्रवहन्ति वाताः कालेन वृष्टिर्जलदानुपैति। कालेन पद्मोत्पलवज्जलञ्च कालेन पुष्यन्ति नगा वनेषु ॥ ८ ॥ कालेन कृष्णाश्च सिताश्च रात्रयः कालेन चन्द्रः प्रति-

पूर्णबिम्बः । नाकालतः पुष्पफलं द्रुमाणां नाकालवेगाः सरितो
वहन्ति ॥ ९ ॥ नाकालमत्ताः खगपन्नगाश्च मृगद्विपाः शैलमृगाश्च
लोके । नाकालतः स्त्रीषु भवन्ति गर्भा नायान्त्यकाले शिशिरोष्ण-
वर्षाः ॥ १० ॥ नाकालतो म्रियते जायते वा नाकालतो व्याहरते
च बालः । नाकालतो यौवनमभ्युपैति नाकालतो रोहति बीज-
मुप्तम् ॥ ११ ॥ नाकालतो भानुरुपैति योगं नाकालतोऽस्तं गिरि-
मभ्युपैति । नाकालतो क्षीयते वर्द्धते च चन्द्रः समुद्रोऽपि महोर्मि-
माली ॥ १२ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् । गीतं
राज्ञा सेनजिता दुःखार्त्तेन युधिष्ठिर ॥ १३ ॥ सर्वानेवैष पर्य्यायो
मर्त्त्यान् स्पृशति दुःसहः । कालेन परिपक्वा हि म्रियन्ते सर्व-
पार्थिवाः ॥ १४ ॥ घ्नन्ति चान्यान् नरान् राजंस्तानप्यन्ये तथा
नराः । संज्ञैषा लौकिकी राजन् न हिनस्ति न हन्यते ॥ १५ ॥
हन्तीति मन्यते कश्चिन्न हन्तीत्यपि चापरः । स्वभावतस्तु नियतौ
भूतानां प्रभवाप्ययौ ॥ १६ ॥ नष्टे धने वा दारे वा पुत्रे पितरि
वा मृते । अहो दुःखमिति ध्यायन् दुःखस्यापचितिञ्चरेत् ॥१७॥
स किं शोचसि मूढ़ः सन् शोच्यान् किमनुशोचसि । पश्य दुःखेषु
दुःखानि भयेषु च भयान्यपि ॥ १८ ॥ आत्मापि चायं न मम सर्वा
वा पृथिवी मम । यथा मम तथान्येषामिति पश्यन्न मुह्यति ॥१९ ॥
शोकस्थानसहस्राणि हर्षस्थानशतानि च । दिवसे दिवसे मूढ़-
माविशन्ति न पण्डितम् ॥ २० ॥ एवमेतानि कालेन प्रियद्वेष्याणि
भागशः । जीवेषु परिवर्त्तन्ते दुःखानि च सुखानि च ॥ २१ ॥
दुःखमेवास्ति न सुखं तस्मात्तदुपलभ्यते । तृष्णार्त्तिप्रभवं दुःखं
दुःखार्त्तिप्रभवं सुखम् ॥ २२ ॥ सुखस्यानन्तरं दुःखं दुःखस्या-
नन्तरं सुखम् । न नित्यं लभते दुःखं न नित्यं लभते सुखम् ॥२३॥
सुखमेव हि दुःखान्तं कदाचिद्दुःखतः सुखम् । तस्मादेतद्द्वयं
जह्याद्य इच्छेच्छाश्वतं सुखम् ॥ २४ ॥ यन्निमित्तं भवेच्छोक-

स्तापो वा दुःखमूर्च्छितः । आयासो वापि यन्मूलस्तदेकाङ्गमपि त्यजेत् ॥ २५ ॥ सुखम्वा यदि वा दुःखं प्रियम्वा यदि वाप्रियम् । प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः ॥ २६ ॥ ईषदप्यङ्ग दाराणां पुत्राणामचरन् प्रियम् । ततो ज्ञास्यसि कः कस्य केन वा कथमेव च ॥ २७ ॥ ये च मूढ़तमा लोके ये च बुद्धेः परङ्गताः । त एव सुखमेधन्ते मध्यमः क्लिश्यते जनः ॥ २८ ॥ इत्यब्रवीन्महाप्राज्ञो युधिष्ठिर स सेनजित् । परावरज्ञो लोकस्य धर्मवित् सुखदुःखवित् ॥ २९ ॥ परदुःखेन यो दुःखी न स जातु सुखी भवेत् । दुःखानां हि क्षयो नास्ति जायते ह्यपरात् परम् ॥ ३० ॥ सुखञ्च दुःखञ्च भवाभवौ च लाभालाभौ मरणं जीवितञ्च । पर्य्यायतः सर्वमवाप्नुवन्ति तस्माद्धीरो नैव हृष्येन्न शोचेत् ॥ ३१ ॥ दीक्षां राज्ञ संयुगे युद्धमाहुर्योगं राज्ये दण्डनीत्याञ्च सम्यक् । वित्तत्यागो दक्षिणानाञ्च यज्ञे सम्यग्ज्ञानं पावनानीति विद्यात् ॥३२॥ रक्षन् राष्ट्रं बुद्धिपूर्वं नयेन संत्यक्तात्मा यज्ञशीलो महात्मा । सर्वांल्लोकान् धर्मदृष्ट्या चरंश्चाप्यूर्द्ध्वं देहान्मोदते देवलोके ॥ ३३ ॥ जित्वा संग्रामान् पालयित्वा च राष्ट्रं सोमं पीत्वा वर्द्धयित्वा प्रजाश्च । युक्त्या दण्डं धारयित्वा प्रजानां युद्धे क्षीणो मोदते देवलोके ॥३४॥ सम्यग्वेदान् प्राप्य शास्त्राण्यधीत्य सम्यग्राज्यं पालयित्वा च राजा । चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे पूतात्मा वै मोदते देवलोके ॥ ३५ ॥ यस्य वृत्तं नमस्यन्ति स्वर्गस्थस्यापि मानवाः । पौरजानपदामात्याः स राजा राजसत्तम ॥ ३६ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि सेनजिदुपाख्याने पञ्चविंशोऽध्यायः ॥ २५ ॥

वैशम्पायन उवाच । अस्मिन्नेव प्रकरणे धनञ्जयमुदारधीः । अभिनीततरं वाक्यमित्युवाच युधिष्ठिरः ॥ १ ॥ यदेतन्मन्यसे पार्थ न ज्यायोऽस्ति धनादिति । न स्वर्गो न सुखं नार्थो निर्द्धनस्येति तन्मृषा ॥ २ ॥ स्वाध्याय यज्ञसंसिद्धा दृश्यन्ते बहवो जना । तपोरताश्च मुनयो येषां लोकाः सनातनाः ॥ ३ ॥ ऋषीणां समयं शश्वद्ये रक्षन्ति धनञ्जय । आश्रिताः सर्वधर्मज्ञा देवास्तान् ब्राह्मणान् विदुः ॥ ४ ॥ स्वाध्यायनिष्ठान् हि ऋषीन् ज्ञाननिष्ठांस्तथापरान् । बुध्येथाः सततञ्चापि धर्मनिष्ठान् धनञ्जय ॥ ५ ॥ ज्ञाननिष्ठेषु कार्य्याणि प्रतिष्ठाप्यानि पाण्डव । वैखानसानां वचनं यथा नो विदितं प्रभो ॥ ६ ॥ अजाश्च पृश्नयश्चैव सिकताश्चैव भारत । अरुणाः केतवश्चैव स्वाध्यायेन दिवं गताः ॥ ७ ॥ अवाप्यैतानि कर्माणि वेदोक्तानि धनञ्जय । दानमध्ययनं यज्ञो निग्रहश्चैव दुर्ग्रहः ॥ ८ ॥ दक्षिणेन च पन्थानमर्य्यम्णो ये दिवं गताः । एतान् क्रियावतां लोकानुक्तवान् पूर्वमप्यहम् ॥ ९ ॥ उत्तरेण तु पन्थानं नियमाद्यं प्रपश्यसि । एते योगवतां लोका भान्ति पार्थ सनातनाः ॥ १० ॥ तत्रोत्तरां गतिं पार्थ प्रशंसन्ति पुराविदः । सन्तोषात् स्वर्गमाप्नोति सन्तोषात् परमं सुखम् ॥ ११ ॥ तुष्टेर्न किञ्चित् परमं सा सम्यक् प्रतितिष्ठति । क्रोधहर्षविनीतस्य सततं सिद्धिरुत्तमा ॥ १२ ॥ अत्राप्युदाहरन्तीमा गाथा गीता ययातिना । याभिः प्रत्याहरेत् कामान् कूर्मोऽङ्गानीव सर्वशः ॥ १३ ॥ यदा चायं न बिभेति यदा चास्मान्न बिभ्यति । यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥ १४ ॥ यदा न भावं कुरुते सर्वभूतेषु पापकम् । कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ १५ ॥ विनीतमानमोहश्च बहुसङ्गविवर्ज्जितः । तदात्मज्योतिषः साधोर्निर्वाणमुपपद्यते ॥ १६ ॥ इदन्तु शृणु मे पार्थ ब्रुवतः संयतेन्द्रियः । धर्ममन्ये वित्तमन्ये धनमीहन्ति चापरे ॥१७॥ धनहेतोर्य ईहेत तस्यानीहा

गरीयसी । भूयान् दोषो हि वित्तस्य यश्च धर्मस्तदाश्रयः ॥१८॥ प्रत्यक्षमनुपश्यामस्त्वमपि द्रष्टुमर्हसि । वर्ज्जनं वर्ज्जनीयानामीहमानेन दुष्करम् ॥ १९ ॥ ये वित्तमभिपद्यन्ते सम्यक्त्वात्तेषु दुर्लभम् । द्रुह्यतः प्रैति तत् प्राहुः प्रतिकूलं यथातथम् ॥ २० ॥ यस्तु संभिन्नवृत्तः स्याद्वीतशोकभयो नरः । अल्पेन तर्षितो द्रुह्यन् भ्रूणहत्यां न बुध्यते ॥ २१ ॥ दुष्यन्त्याददतो भृत्या नित्यं दस्युभयादिव । दुर्लभञ्च धनं प्राप्य भृशं दत्त्वानुतप्यते ॥ २२ ॥ अधनः कस्य किं वाच्यो विमुक्तः सर्वशः सुखी । देवस्वमुपगृह्यैव धनेन न सुखी भवेत् ॥ २३ ॥ तत्र गाथां यज्ञगीतां कीर्त्तयन्ति पुराविदः । त्रयीमपाश्रितां लोके यज्ञसंस्तरकारिकाम् ॥ २४ ॥ यज्ञाय सृष्टानि धनानि धात्रा यज्ञाय सृष्टः पुरुषो रक्षिता च । तस्मात् सर्वं यज्ञ एवोपयोज्यं धनं न कामाय हितं प्रशस्तम ॥ २५ ॥ एतस्यार्थे च कौन्तेय धनं धनवताम्वर । धाता ददाति मर्त्त्येभ्यो यज्ञार्थमिति विद्धि तत् ॥ २६ ॥ तस्माद्बुध्यन्ति पुरुषा न हि तत् कस्यचिद्ध्रुवम् । श्रद्दधानस्ततो लोके दद्याच्चैवं यजेत च ॥ २७ ॥ लब्धस्य त्यागमेवाहुर्न भोगं न च सञ्चयम् । तस्य किं सञ्चयेनार्थः कार्य्यं ज्यायसि तिष्ठति ॥ २८ ॥ ये स्वधर्मादपेतेभ्यः प्रयच्छन्त्यल्पबुद्धयः । शतं वर्षाणि ते प्रेत्य पुरीषं भुञ्जते जनाः ॥ २९ ॥ अनर्हते यद्ददाति न ददाति यदर्हते । अर्हानर्हापरिज्ञानात् दानधर्मोऽपि दुष्करः ॥ ३० ॥ लब्धानामपि वित्तानां वोद्धव्यौ द्वावतिक्रमौ । अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ ३१ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि युधिष्ठिरवाक्ये षड्विंशोऽध्यायः ॥ २६ ॥

---

युधिष्ठिर उवाच । अभिमन्यौ हते बाले द्रौपद्यास्तनयेषु च ।

धृष्टद्युम्ने विराटे च द्रुपदे च महीपतौ ॥ १ ॥ वसुषेणे च धर्मज्ञे धृष्टकेतौ च पार्थिवे । तथान्येषु नरेन्द्रेषु नानादेश्येषु संयुगे ॥२॥ न च मुञ्चति मां शोको ज्ञातिघातिनमातुरम् । राज्यकामुकमत्यग्रं स्ववंशोच्छेदकारिणम् ॥ ३ ॥ यस्याङ्के क्रीड़मानेन मया वै परिवर्त्तितुम् । स मया राज्यलुब्धेन गाङ्गेयो युधि पातितः ॥ ४ ॥ यदा ह्येनं विघूर्णन्तमपश्यं पार्थसायकैः । कम्पमानं यथा वज्रैः प्रेक्ष्यमाणं शिखण्डिना । जीर्णं सिंहमिव प्रांशुं नरसिंहं पितामहम् । कीर्य्यमाणं शरैर्दीप्तैर्दृष्ट्वा मे व्यथितं मनः ॥ ६ ॥ प्राङ्मुखं सीदमानञ्च रथे पररथारुजम् । घूर्णमाणं यथा शैलं तदा मे कश्मलोऽभवत् ॥ ७ ॥ यः स बाणधनुष्पाणिर्योधयामास भार्गवम् । बहून्यहानि कौरव्यः कुरुक्षेत्रे महामृधे ॥ ८ ॥ समेतं पार्थिवं क्षत्रं वाराणस्यां नदीसुतः । कन्यार्थमाह्वयद्वीरो रथेनैकेन संयुगे ॥९॥ येन चोग्रायुधो राजा चक्रवर्त्ती दुरासदः । दग्धश्चास्त्रप्रतापेन स मया युधि घातितः ॥ १० ॥ स्वयं मृत्युं रक्ष्यमाणः पाञ्चाल्यं यः शिखण्डिनम् । न बाणैः पातयामास सोऽर्जुनेन निपातितः ॥११॥ यदैनं पतितं भूमावपश्यं रुधिरोक्षितम् । तदैवाविशदत्युग्रो ज्वरो मां मुनिसत्तम ॥१२॥ येन संवर्द्धिता बाला येन स्म परिरक्षिताः । स मया राज्यलुब्धेन पापेन गुरुघातिना । अल्पकालस्य राज्यस्य कृते मूढ़ेन घातितः ॥ १३ ॥ आचार्य्यश्च महेष्वासः सर्वपार्थिव पूजितः । अभिगम्य रणे मिथ्या पापेनोक्तः सुतं प्रति ॥ १४ ॥ तन्मे दहति गात्राणि यन्मां गुरुरभाषत । सत्यमाख्याहि राजंस्त्वं यदि जीवति मे सुतः ॥ १५ ॥ सत्यमामर्षयन् विप्रो मयि तत् परिपृष्टवान् । कुञ्जरञ्चान्तरं कृत्वा मिथ्योपचरितं मया ॥ १६ ॥ सुभृशं राज्यलुब्धेन पापेन गुरुघातिना । सत्यकञ्चुकमुन्मुच्य मया स गुरुराहवे । अश्वत्थामा हत इति मयोक्तः कुञ्जरे हते ॥ १७ ॥ कांल्लोकान्नु गमिष्यामि कृत्वा कर्म सुदुष्करम् । अघातयञ्च यत् कर्णं

समरेष्वपलायिनम् । ज्येष्ठं भ्रातरमत्युग्रं को मत्तः पापकृत्तमः ॥१८॥ अभिमन्युञ्च यद्बालं जातं सिंहमिवाद्रिषु । प्रविशन्तमहं लुब्धो वाहिनीं द्रोणपालिताम् ॥ १९ ॥ तदाप्रभृति बीभत्सुं न शक्नोमि निरीक्षितुम् । कृष्णाञ्च पुण्डरीकाक्षं किल्विषी भ्रूणहा यथा ॥२०॥ द्रौपदीञ्चापि दुःखार्त्तां पञ्चपुत्रैर्विनाकृताम् । शोचामि पृथिवीं हीनां पञ्चभिः पर्वतैरिव॥२१॥ सोऽहमागस्करः पापः पृथिवीनाशकारकः । आसीन एवमेवेदं शोषयिष्ये कलेवरम् ॥२२॥ प्रायोपविष्टं जानीध्वमथ मां गुरुघातिनम् । जातिष्वन्यास्वपि यथा न भवेयं कुलान्तकृत् ॥ २३ ॥ न भोक्ष्ये न च पानीयमुपभोक्ष्ये कथञ्चन । शोषयिष्ये प्रियान् प्राणानिहस्थोऽहं तपोधन ॥२४॥ यथेष्टं गम्यतां काममनुजाने प्रसाद्य वः । सर्वे मामनुजानीत त्यक्ष्यामीदं कलेवरम् ॥२५॥

वैशम्पायन उवाच । तमेवं वादिनं पार्थं बन्धुशोकेन विह्वलम् । मैवमित्यब्रवीद्व्यासो निगृह्य मुनिसत्तमः ॥ २६ ॥

व्यास उवाच । अतिवेलं महाराज शोकं न कर्त्तुमर्हसि । पुनरुक्तञ्च वक्ष्यामि दिष्टमेतदिति प्रभो ॥ २७ ॥ संयोगा विप्रयोगान्ता जातानां प्राणिनां ध्रुवाः । वुद्बुदा इव तोयेषु भवन्ति न भवन्ति च ॥ २८ ॥ सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥२९॥ सुखं दुःखान्तमालस्यं दुःखं दाक्ष्यं सुखोदयम् । भूतिः श्रीर्ह्रीर्धृतिः कीर्त्तिर्दक्षे वसति नालसे ॥ ३० ॥ नालं सुखाय सुहृदो नालं दुःखाय शत्रवः । न च प्रज्ञानमर्थेभ्यो न सुखिभ्यो ह्यलं धनम् ॥ ३१ ॥ यथा सृष्टोऽसि कौन्तेय धात्रा कर्मसु तत् कुरु । अत एव हि सिद्धिस्ते नेशस्त्वं कर्म्मणां नृप ॥ ३२ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि व्यासवाक्ये सप्तविंशोऽध्यायः ॥ २७ ॥

वैशम्पायन उवाच । ज्ञातिशोकाभितप्तस्य प्राणानभ्युत्सिसृक्षतः । ज्येष्ठस्य पाण्डुपुत्रस्य व्यासः शोकमपानुदत् ॥ १ ॥

व्यास उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । अश्मगीतं नरव्याघ्र तन्निबोध युधिष्ठिर॥२॥ अश्मानं ब्राह्मणं प्राज्ञं वैदेहो जनको नृप । संशयं परिपप्रच्छ दुःखशोकसमन्वितः ॥ ३ ॥

जनक उवाच । आगमे यदि वापाये ज्ञातीनां द्रविणस्य च । नरेण प्रतिपत्तव्यं कल्याणं कथमिच्छता ॥ ४ ॥

अश्मोवाच । उत्पन्नमिममात्मानं नरस्यानन्तरं ततः । तानि तान्यनुवर्त्तन्ते दुःखानि च सुखानि च ॥ ५ ॥ तेषामन्यतरापत्तौ यद्यदेवोपपद्यते । तदस्य चेतनामाशु हरत्यभ्रमिवानिलः ॥ ६ ॥ अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः । इत्येभिर्हेतुभिस्तस्य त्रिभिश्चित्तं प्रसिच्यते ॥ ७ ॥ संप्रसक्तमना भोगान् विसृज्य पितृसञ्चितान् । परिक्षीणः परस्वानामादानं साधु मन्यते ॥ ८॥ तमतिक्रान्तमर्य्यादमाददानमसाम्प्रतम् । प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः ॥ ९ ॥ ये च विंशतिवर्षा वा त्रिंशद्वर्षाश्च मानवाः । परेण ते वर्षशतान्न भविष्यन्ति पार्थिव ॥ १० ॥ तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत् । सर्वप्राणभृतां वृत्तं प्रेक्षमाणस्ततस्ततः ॥ ११ ॥ मानसानां पुनर्योनिर्दुःखानां चित्तविभ्रमः । अनिष्टोपनिपातो वा तृतीयं नोपपद्यते ॥ १२ ॥ एवमेतानि दुःखानि तानि तानीह मानवम् । विविधान्युपवर्त्तन्ते तथा संस्पर्शजान्यपि ॥१३॥ जरामृत्यू हि भूतानां खादितारौ वृकाविव । बलिनां दुर्बलानाञ्च ह्रस्वानां महतामपि ॥ १४ ॥ न कश्चिज्जात्वतिक्रामेत् जरामृत्यू हि मानवः । अपि सागरपर्य्यन्तां विजित्येमां वसुन्धराम् ॥ १५ ॥ सुखं वा यदि वा दुःखं भूतानां पर्य्युपस्थितम् । प्राप्तव्यमवशैः सर्वं परिहारो न विद्यते ॥ १६ ॥ पूर्व्वे वयसि मध्ये वाप्युत्तरे वा नराधिप । अवर्जनीयास्तेऽर्था वै काङ्क्षिता ये ततोऽन्यथा

॥ १७ ॥ सुप्रियैर्विप्रयोगश्च संप्रयोगश्च विप्रियैः। अर्थानर्थौ सुखं दुःखं विधानमनुवर्त्तते ॥ १८ ॥ प्रादुर्भावश्च भूतानां देहत्यागस्तथैव च। प्राप्तिर्व्यायामयोगश्च सर्व्वमेतत् प्रतिष्ठितम् ॥ १९ ॥ गन्धवर्णरसस्पर्शा निवर्त्तन्ते स्वभावतः। तथैव सुखदुःखानि विधानमनुवर्त्तते ॥ २० ॥ आसनं शयनं यानमुत्थानं पानभोजनम्। नियतं सर्व्वभूतानां कालेनैव भवन्त्युत ॥ २१ ॥ वैद्याश्चाप्यातुराः सन्ति बलवन्तश्च दुर्बलाः। श्रीमन्तश्चापरे षण्ढा विचित्रः कालपर्य्ययः ॥ २२ ॥ कुले जन्म तथा वीर्य्यमारोग्यं रूपमेव च। सौभाग्यमुपभोगश्च भवितव्येन लभ्यते ॥ २३ ॥ सन्ति पुत्राः सुबहवो दरिद्राणामनिच्छताम्। नास्ति पुत्रः समृद्धानां विचित्रं विधिचेष्टितम् ॥ २४ ॥ व्याधिरग्निर्जलं शस्त्रं बुभुक्षाश्चापदो विषम्। ज्वरश्च मरणं जन्तोरुच्चाच्च पतनं तथा ॥ २५ ॥ निर्माणे यस्य यद्दृष्टं तेन गच्छन्ति सेतुना। दृश्यते नाप्यतिक्रामन्ननिष्क्रान्तोऽथ वा पुनः। दृश्यते चाप्यतिक्रामन्न निर्गच्छोऽथ वा पुनः ॥ २६ ॥ दृश्यते हि युवैवेह विनश्यन् वसुमान् नरः। दरिद्रश्च परिक्लिष्टः शतवर्षो जरान्वितः ॥ २७ ॥ अकिञ्चनाश्च दृश्यन्ते पुरुषाश्चिरजीविनः। समृद्धे च कुले जाता विनश्यन्ति पतङ्गवत् ॥ २८ ॥ प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते। काष्ठान्यपि हि जीर्य्यन्ते दरिद्राणाञ्च सर्व्वशः ॥ २९ ॥ अहमेतत् करोमीति मन्यते कालचोदितः। यद्यदिष्टमसन्तोषाद्दुरात्मा पापमाचरेत्॥३० मृगयाद्याः स्त्रियः पानं प्रसङ्गा निन्दिता बुधैः। दृश्यन्ते पुरुषाश्चात्र संप्रसक्ता बहुश्रुताः ॥ ३१ ॥ इति कालेन सर्व्वार्थानीप्सितानीप्सितानिह। स्पृशन्ति सर्व्वभूतानि निमित्तं नोपलभ्यते ॥ ३२ ॥ वायुमाकाशमग्निञ्च चन्द्रादित्यावहःक्षपे। ज्योतींषि सरितः शैलान् कः करोति बिभर्त्ति च ॥ ३३ ॥ शीतमुष्णं तथा वर्षं कालेन परिवर्त्तते। एवमेव मनुष्याणां सुखदुःखे नरर्षभ ॥ ३४ ॥ नौषधानि

न मन्त्राश्च न होमा न पुनर्ज्जपाः । त्रायन्ते मृत्युनोपेतं जरया चापि मानवम् ॥३५॥ यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ । समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ३६ ॥ ये चैव पुरुषाः स्त्रीभिर्गीतवाद्यैरुपस्थिताः । ये चानाथाः परान्नादा कालस्तेषु समक्रियाः ॥ ३७ ॥ मातापितृसहस्राणि पुत्रदारशतानि च । संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् ॥ ३८ ॥ नैवास्य कश्चिद्भविता नायं भवति कस्यचित् । पथि सङ्गतमेवेदं दारबन्धुसुहृज्जनैः ॥ ३९ ॥ क्कासे क्क च गमिष्यामि को न्वहं किमिह स्थितः । कस्मात् किमनुशोचेयमित्येवं स्थापयेन्मनः ॥ ४० ॥ अनित्ये प्रियसम्वासे संसारे चक्रवद्गतौ । पथि सङ्गतमेवैतद्भ्राता माता पिता सखा ॥ ४१ ॥ न दृष्टपूर्वं प्रत्यक्षं परलोकं विदुर्बुधाः । आगमांस्त्वनतिक्रम्य श्रद्धातव्यं बुभूषता ॥ ४२ ॥ कुर्व्वीत पितृदैवत्यं धर्म्माणि च समाचरेत् । यजेच्च विद्वान् विधिवत्त्रिवर्गञ्चाप्युपाचरेत् ॥ ४३ ॥ सन्निमज्जज्जगदिदं गम्भीरे कालसागरे । जरामृत्युमहाग्राहे न कश्चिदवबुध्यते ॥ ४४ ॥ आयुर्व्वेदमधीयानाः केवलं सपरिग्रहाः । दृश्यन्ते वहवो वैद्या व्याधिभिः समभिप्लुताः ॥४५॥ ते पिवन्तः कषायांश्च सर्पींषि विविधानि च । न मृत्युमतिवर्त्तन्ते वेलामिव महोदधिः ॥ ४६ ॥ रसायनविदश्चैव सुप्रयुक्तरसायनाः । दृश्यन्ते जरया भग्ना नगा नागैरिवोत्तमैः ॥ ४७ ॥ तथैव तपसोपेताः स्वाध्यायाभ्यसने रताः । दातारो यज्ञशीलाश्च न तरन्ति जरान्तकौ ॥ ४८ ॥ न ह्यहानि निवर्त्तन्ते न मासा न पुनः समाः । जातानां सर्व्वभूतानां न पक्षा न पुनः क्षपाः ॥ ४९ ॥ सोऽयं विपुलमध्वानं कालेन ध्रुवमध्रुवः । नरोऽवशः समभ्येति सर्व्वभूतनिषेवितम् ॥ ५० ॥ देहो वा जीवतोऽभ्येति जीवो वाभ्येति देहतः । पथि सङ्गतमेवेदं दारैरन्यैश्च बन्धुभिः ॥ ५१ ॥ नायमत्यन्तसंवासो लभ्यते जातु केनचित् । अपि स्वेन शरीरेण किमुतान्येन केनचित्

॥ ५२ ॥ क्व नु तेऽद्य पिता राजन् क्व नु तेऽद्य पितामहाः। न त्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽनघ ॥ ५३ ॥ न चैव पुरुषो द्रष्टा स्वर्गस्य नरकस्य च। आगमस्तु सतां चक्षुर्नृपते तमिहाचर ॥ ५४ ॥ चरितब्रह्मचर्य्यो हि प्रजायेत यजेत च। पितृदेवमनुष्याणामानृण्यादनसूयकः ॥ ५५ ॥ स यज्ञशीलः प्रजने निविष्टः प्राग्ब्रह्मचारी प्रविविक्तचक्षुः। आराधयेत् स्वर्गमिमञ्च लोकं परञ्च मुक्त्वा हृदयव्यलीकम् ॥ ५६ ॥ समं हि धर्म्मञ्चरतो नृपस्य द्रव्याणि चाप्याहरतो यथावत्। प्रवृत्तधर्म्मस्य यशोऽभिवर्द्धते सर्वेषु लोकेषु चराचरेषु ॥ ५७ ॥ इत्येवमाज्ञाय विदेहराजो वाक्यं समग्रं परिपूर्णहेतु। अश्मानमामन्त्र्य विशुद्धबुद्धि ययौ गृहं स्वं प्रति शान्तशोकः ॥ ५८ ॥ तथा त्वमप्यच्युत मुञ्च शोकमुत्तिष्ठ शक्रोपम हर्षमेहि। क्षात्रेण धर्म्मेण मही जिता ते तां भुङ्क्ष्व कुन्तीसुतमावमंस्थाः ॥ ५९ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि व्यासवाक्ये अष्टाविंशोऽध्यायः ॥ २८ ॥

---

वैशम्पायन उवाच। अव्याहरति राजेन्द्रे धर्म्मपुत्रे युधिष्ठिरे। गुडाकेशो हृषीकेशमभ्यभाषत पाण्डवः ॥ १ ॥

अर्जुन उवाच। ज्ञातिशोकाभिसन्तप्तो धर्म्मपुत्रः परन्तपः। एष शोकार्णवे मग्नस्तमाश्वासय माधव ॥ २ ॥ सर्वे स्म ते संशयिताः पुनरेव जनार्द्दन। अस्य शोकं महाबाहो प्रणाशयितुमर्हसि ॥ ३ ॥

वैशम्पायन उवाच। एवमुक्तस्तु गोविन्दो विजयेन महात्मना। पर्य्यवर्त्तत राजानं पुण्डरीकेक्षणोऽच्युतः ॥ ४ ॥ अनतिक्रमणीयो हि धर्म्मराजस्य केशवः। बाल्यात् प्रभृति गोविन्दः प्रीत्या चाभ्य-

धिकोऽर्जुनात् ॥ ५ ॥ स प्रगृह्य महाबाहुर्भुजं चन्दनभूषितम् । शैलस्तम्भोपमं शौरिरुवाचाभिविनोदयन् ॥ ६ ॥ शुशुभे वदनं तस्य सुदंष्ट्रञ्चारुलोचनम् । व्याकोशमिव विस्पष्टं पद्मं सूर्य्य इवोदिते ॥ ७ ॥

वासुदेव उवाच । मा कृथाः पुरुषव्याघ्र शोकं त्वं गात्रशोषणम् । न हि ते सुलभा भूयो ये हतास्मिन् रणाजिरे ॥ ८ ॥ स्वप्नलब्धा यथा लाभा वितथा प्रतिबोधने । एवन्ते क्षत्रिया राजन् ये व्यतीता महारणे ॥ ९ ॥ सर्व्वेऽप्यभिमुखाः शूरा विजिता रणशोभिनः । नैषां कश्चित् पृष्ठतो वा पलायन् वापि पातित ॥१०॥ सर्व्वे त्यक्त्वात्मनः प्राणान् युद्ध्वा वीरा महाहवे । शस्त्रपूता दिवं प्राप्ता न ताञ्छोचितुमर्हसि ॥ ११ ॥ क्षत्रधर्मरताः शूरा वेदवेदाङ्गपारगाः । प्राप्ता वीरगतिं पुण्यां तान्न शोचितुमर्हसि । मृतान्महानुभावांस्त्वं श्रुत्वैव पृथिवीपतीन् ॥ १२ ॥ अत्रैवोदाहरन्तीममितिहासं पुरातनम् । सञ्जयं पुत्रशोकार्त्तं यथायं नारदोऽब्रवीत् ॥ १३ ॥ सुखदुःखैरहं त्वञ्च प्रजाः सर्व्वाश्च सृञ्जय । अविमुक्ता मरिष्यामस्तत्र का परिदेवना ॥ १४ ॥ महाभाग्यं पुरा राज्ञां कीर्त्तयमानं मया शृणु । गच्छावधानं नृपते ततो दुःखं प्रहास्यसि ॥ १५ ॥ एतान्महानुभावांस्त्वं श्रुत्वैव पृथिवीपतीन् । शममानय सन्तापं शृणु विस्तरशश्च मे ॥ १६ ॥ क्रूरग्रहाभिशमनमायुर्वर्द्धनमुत्तमम् । अग्रिमाणां क्षितिभुजामुपादानं मनोहरम् ॥ १७ ॥ आविक्षितं मरुत्तं वै मृतं सञ्जय शुश्रुम । यस्य सेन्द्राः सवरुणाः वृहस्पतिपुरोगमाः ॥ १८ ॥ देवा विश्वसृजो राज्ञो यज्ञमीयुर्म्महात्मनः । यः स्पर्द्धयाजयच्छक्रं देवराजं पुरन्दरम् ॥ १९ ॥ शक्रप्रियैषी यं विद्वान् प्रत्याचष्ट वृहस्पतिः । सम्वर्त्तो याजयामास यवीयान् स वृहस्पतेः ॥ २० ॥ यस्मिन् प्रशासति महीं नृपतौ राजसत्तम । अकृष्टपच्या पृथिवी विबभौ चैत्य-

मालिनी ॥ २१ ॥ आविच्चितस्य वै सत्रे विश्वेदेवाः सभासदः। मरुतः परिवेष्टारः साध्याश्चासन्महात्मनः ॥ २२ ॥ मरुद्गणा मरुत्तस्य यत् सोममपिबंस्ततः। देवान्मनुष्यान् गन्धर्वानत्यरिच्यन्त दक्षिणाः ॥ २३ ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ २४ ॥ सुहोत्रञ्चैवातिथिनं मृतं शुश्रुम सृञ्जय। यस्मिन् हिरण्यं ववृषे मघवा परिवत्सरम् ॥ २५ ॥ सत्यनामा वसुमती यं प्राप्यासीज्जनाधिपम्। हिरण्यमवहन्नद्यस्तस्मिन् जनपदेश्वरे ॥ २६ ॥ कूर्मान् कर्कटकान्नक्रान्मकरांच्छिशुकानपि। नदीष्वपातयद्राजन्मघवा लोकपूजितः ॥ २७ ॥ हिरण्यान् पातितान् दृष्ट्वा मत्स्यान्मकरकच्छपान्। सहस्रशोऽथ शतशस्ततोऽस्मयदथोऽतिथिः ॥ २८ ॥ तद्धिरण्यमपर्य्यन्तमावृतं कुरुजाङ्गले। ईजानो वितते यज्ञे ब्राह्मणेभ्यः समार्पयत् ॥ २९ ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ३० ॥ अदक्षिणमयज्वानं चैनं संश्राम्य मा शुच। अङ्गं बृहद्रथञ्चैव मृतं सृञ्जय शुश्रुम ॥ ३१ ॥ यः सहस्रं सहस्राणां श्वेतानश्वानवासृजत्। सहस्रञ्च सहस्राणां कन्या हेमपरिष्कृताः ॥ ३२ ॥ ईजानो वितते यज्ञे दक्षिणामत्यकालयत्। यः सहस्रं सहस्राणां गजानामतिपद्मिनाम् ॥ ३३ ॥ ईजानो नितते यज्ञे दक्षिणामत्यकालयत्। शतं शतसहस्राणां वृषाणां हेममालिनाम् ॥ ३४ ॥ गवां सहस्रानुचरं दक्षिणामत्यकालयत्। अङ्गस्य यजमानस्य तदा विष्णुपदे गिरौ ॥ ३५ ॥ अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः। यस्य यज्ञेषु राजेन्द्र शतसंख्येषु वै पुरा ॥ ३६ ॥ देवान् मनुष्यान् गन्धर्वानत्यरिच्यन्त दक्षिणाः। न जातो जनिता चान्यः पुमान् यस्तत् प्रदास्यति। यदङ्गः प्रददौ वित्तं सोमसंस्थासु सप्तसु ॥ ३७ ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुन्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ३८ ॥ शिवि-

शौशीनरञ्चैव मृतं सृञ्जय शुश्रुम । य इमां पृथिवीं सर्व्वाञ्चर्मवत् समवेष्टयत् ॥ ३९ ॥ महता रथघोषेण पृथिवीमनुनादयन् । एकच्छत्रां महीञ्चक्रे जैत्रेणैकरथेन यः ॥ ४० ॥ यावदस्य गवाश्वं स्यादारण्यैः पशुभिः सह । तावतीः प्रददौ गाः स शिविरौशी-नरोऽध्वरे ॥ ४१ ॥ न वोढारं धुरन्तस्य कञ्चिन्मेने प्रजापतिः । न भूतं न भविष्यञ्च सर्व्वराजसु सृञ्जय ॥ ४२ ॥ अन्यत्रौशीनराच्छैव्या-द्राजर्षेरिन्द्रविक्रमात् । अदक्षिणमयज्वानं मा पुत्रमनुतप्यथाः॥४३॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ४४ ॥ भरतञ्चैव दौष्मन्तिं मृतं शुश्रुम सृञ्जय । शाकुन्तलं महात्मानं भूरिद्रविणसञ्चयम् ॥ ४५ ॥ यो बद्धा त्रि-शतञ्चाश्वान् देवेभ्यो यमुनामनु । सरस्वतीं विंशतिञ्च गङ्गामनु चतुर्द्दश ॥ ४६ ॥ अश्वमेधसहस्रेण राजसूयशतेन च । इष्टवान् स महातेजा दौष्मन्तिर्भरतः पुरा ॥ ४७ ॥ भरतस्य महत् कर्म सर्व्वराजसु पार्थिवाः । खं मर्त्त्या इव बाहुभ्यां नानुगन्तुमशक्नुवन् ॥ ४८ ॥ परं सहस्राद्यो बद्धान् हयान् वेदीर्वितत्य च । सहस्रं यत्र पद्मानां कण्वाय भरतो ददौ ॥ ४९ ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ५० ॥ रामं दाशरथिञ्चैव मृतं शुश्रुम सृञ्जय । योऽन्वकम्पत वै नित्यं प्रजाः पुत्रानिवौरसान् ॥ ५१ ॥ विधवा यस्य विषये नानाथाः काश्चनाभवन् । सदैवासीत् पितृसमो रामो राज्यं यदन्वशात् ॥ ५२ ॥ कालवर्षी च पर्ज्जन्यः शस्यानि समुपादयत् ! नित्यं सुभिक्षमेवासीद्रामे राज्यं प्रशासति ॥ ५३ ॥ प्राणिनो नाप्सु-मज्जन्ति नान्यथा पावको दहत् । रुजा भयं न तत्रासीद्रामे राज्यं प्रशासति ॥ ५४ ॥ आसन् वर्षसहस्रिण्यस्तथा पुत्रसहस्रिकाः । अरोगाः सर्व्वसिद्धार्था रामे राज्यं प्रशासति ॥ ५५ ॥ नान्योन्येन विवादोऽभूत् स्त्रीणामपि कुतो नृणाम् । धर्मनित्याः प्रजाश्चासन्

रामे राज्यं प्रशासति ॥ ५६ ॥ सन्तुष्टाः सर्वसिद्धार्था निर्भयाः स्वैरचारिणः। नरा सत्यव्रताश्चासन् रामे राज्यं प्रशासति ॥५७॥ नित्यपुष्पफलाश्चैव पादपा निरुपाद्रवाः। सर्वाः द्रोणदुघा गावो रामे राज्यं प्रशासति ॥ ५८ ॥ स चतुर्द्दश वर्षाणि वने प्रोष्य महातपाः। दशाश्वमेधान् जारूथ्यानाजहार निरर्गलान् ॥५९॥ युवा श्यामो लोहिताक्षो मातङ्ग इव यूथपः। आजानुबाहुः सुमुखः सिंहस्कन्धो महाभुजः ॥ ६० ॥ दश वर्षसहस्राणि दश वर्षशतानि च। अयोध्याधिपतिर्भूत्वा रामो राज्यमकारयत् ॥६१॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ६२ ॥ भगीरथञ्च राजानं मृतं शुश्रुम सृञ्जय। यस्येन्द्रो वितते यज्ञे सोमं पीत्वा मदोत्कटः ॥ ६३ ॥ असुराणां सहस्राणि बहूनि सुरसत्तमः। अजयद्बाहुवीर्य्येण भगवान् पाकशासनः ॥ ६४ ॥ यः सहस्रं सहस्राणां कन्या हेमविभूषिताः। ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ॥ ६५ ॥ सर्वा रथगताः कन्या रथाः सर्वे चतुर्युजः। शतं शतं रथे नागाः पद्मिनो हेममालिन ॥ ६६ ॥ सहस्रमश्वा एकैकं हस्तिनं पृष्ठतोऽन्वयुः। गवां सहस्रमश्वेऽश्वे सहस्रं गव्यजाविकम् ॥ ६७ ॥ उपह्वरे निवसतो यस्याङ्के निषसाद ह। गङ्गा भागीरथी तस्मादुर्वशी ह्यभवत् पुरा ॥ ६८ ॥ भूरिदक्षिणमैक्ष्वाकुं यजमानं भगीरथम्। त्रिलोकपथगा गङ्गा दुहितृत्वमुपेयुषी ॥ ६९ ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ७० ॥ दिलीपञ्च महात्मानं मृतं शुश्रुम सृञ्जय। यस्य कर्माणि भूरीणि कथयन्ति द्विजातयः ॥ ७१ ॥ य इमां वसुसम्पूर्णां वसुधां वसुधाधिपः। ददौ तस्मिन्महायज्ञे ब्राह्मणेभ्यः समाहितः ॥ ७२ ॥ यस्येह यजमानस्य यज्ञे यज्ञे पुरोहितः। सहस्रं वारणान् हैमान् दक्षिणामत्यकालयत् ॥ ७३ ॥ यस्य यज्ञे महानासीदापः

श्रीमान् हिरण्मयः । तं देवाः कर्म्म कुर्वाणाः शक्रज्येष्ठा उपाश्रयन्
॥ ७४ ॥ चषाले यस्य सौवर्णे तस्मिन् यूपे हिरण्मये । ननृतु-
र्देवगन्धर्वाः षट्सहस्राणि सप्तधा ॥ ७५ ॥ अवादयत्तत्र वीणां
मध्ये विश्वावसुः स्वयम् । सर्वभूतान्यमन्यन्त मम वादयतीत्ययम्
॥ ७६ ॥ एतद्राज्ञो दिलीपस्य राजानो नानुचक्रिरे । यस्येभा
हेमसञ्छन्ना पथि मत्ताः स्म शेरते ॥ ७७ ॥ राजानं शतधन्वानं
दिलीपं सत्यवादिनम् । येऽपश्यत् सुमहात्मानं तेऽपि स्वर्गजितो
नराः ॥ ७८ ॥ त्रयः शब्दा न जीर्य्यन्ते दिलीपस्य निवेशने ।
स्वाध्यायघोषो ज्याघोषो दीयतामिति वै त्रयः ॥ ७९ ॥ स चे-
न्ममार सृञ्जय चतुर्भद्रतरस्त्वया । पुत्रात् पुण्यतरश्चैव मा पुत्र-
मनुतप्यथाः ॥ ८० ॥ मान्धातारं यौवनाश्वं मृतं शुश्रुम सृञ्जय ।
यं देवा मरुतो गर्भं पितुः पार्श्वादपाहरन् ॥ ८१ ॥ समृद्धो युव-
नाश्वस्य जठरे यो महात्मनः । पृषदाज्योद्भवः श्रीमांस्त्रिलोक-
विजयी नृपः ॥ ८२ ॥ यं दृष्ट्वा पितुरुत्सङ्गे शयानं देवरूपिणम् ।
अन्योऽन्यमब्रुवन् देवाः कमयं धास्यतीति वै ॥ ८३ ॥ मामेव
धास्यतीत्येवमिन्द्रोऽथाभ्युपपद्यत । मान्धातेति ततस्तस्य नाम
चक्रे शतक्रतुः ॥ ८४ ॥ ततस्तु पयसो धारां पुष्टिहेतोर्महात्मनः ।
तस्यास्ये यौवनाश्वस्य पाणिरिन्द्रस्य चास्रवत् ॥ ८५ ॥ तं पिबन्
पाणिमिन्द्रस्य शतमह्ना व्यवर्द्धत । स आसीत् द्वादशसमो द्वादशा-
हेन पार्थिवः ॥ ८६ ॥ तमिमं पृथिवी सर्वा एकाह्ना समपद्यत ।
धर्म्मात्मानं महात्मानं शूरमिन्द्रसमं युधि ॥ ८७ ॥ यश्चाङ्गारन्तु
नृपतिं मरुत्तमसितञ्जयम् । अङ्गं बृहद्रथञ्चैव मान्धाता समरे-
ऽजयत् ॥८८॥ यौवनाश्वो यदाङ्गारं समरे प्रत्ययुध्यत । विस्फारै-
र्धनुषो देवा द्यौरभेदिति मेनिरे ॥ ८९ ॥ यत्र सूर्य्य उदेति स्म
यत्र च प्रतितिष्ठति । सर्वं यद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते
॥ ९० ॥ अश्वमेधशतेनेष्ट्वा राजसूयशतेन च । अददद्रोहिता-

म्नत्स्यान् ब्राह्मणेभ्यो विभाम्यते ॥ ९१ ॥ हैरण्यान् योजनोत्सेधानायतान् दशयोजनम्। अतिरिक्तान् द्विजातिभ्यो व्यभजंस्त्वितरे जनाः ॥ ९२ ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ९३ ॥ ययातिं नाहुषञ्चैव मृतं शुश्रुम सृञ्जय। य इमां पृथिवीं कृत्स्नां विजित्य सहसागराम् ॥ ९४ ॥ शम्यापातेनाभ्यतीयाद्वेदीभिश्चित्रयन्महीम्। ईजानः क्रतुभिर्मुख्यैः पर्य्यगच्छद्वसुन्धराम्॥ ९५॥ इष्ट्वा क्रतुसहस्रेण वाजपेयशतेन च। तर्पयामास विप्रेन्द्रांस्त्रिभिः काञ्चनपर्वतैः ॥ ९६ । व्यूढेनासुरयुद्धेन हत्वा दैतेयदानवान्। व्यभजत् पृथिवीं कृत्स्नां ययातिर्नहुषात्मजः ॥९७॥ अन्ते तु पुत्रान्निक्षिप्य यदुद्रुह्युपुरोगमान्। पूरुं राज्येऽभिषिच्य स्वे सदारः प्राविशद्वनम् ॥ ९८ ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ९९ ॥ अम्बरीषञ्च नाभागिं मृतं शुश्रुम सृञ्जय। यं प्रजा वव्रिरे पुण्यं गोप्तारं नृपसत्तमम् ॥ १०० ॥ यः सहस्रं सहस्राणां राज्ञामयुतयाजिनाम्। ईजानो वितते यज्ञे ब्राह्मणेभ्यः सुसंहितः ॥ १०१ ॥ नैतत् पूर्वे जनाश्चक्रुर्न करिष्यन्ति चापरे। इत्यम्बरीषं नाभागिमन्वमोदन्त दक्षिणाः ॥ १०२ ॥ शतं राजसहस्राणि शतं राजशतानि च। सर्वेऽश्वमेधैरीजानास्तेऽन्वयुर्दक्षिणायनम् ॥ १०३ ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥१०४॥ शशबिन्दुं चैत्ररथं मृतं शुश्रुम सृञ्जय। यस्य भार्य्यासहस्राणां शतमासीन्महात्मनः ॥ १०५ ॥ सहस्रन्तु सहस्राणां यस्यासञ्छशबिन्दवः। हिरण्यकवचाः सर्वे सर्वे चोत्तमधन्विनः ॥ १०६ ॥ शतं कन्या राजपुत्रमेकैकं पृथगन्वयुः। कन्यां कन्यां शतं नागा नागं नागं शतं रथाः ॥ १०७ ॥ रथे रथे शतं चाश्वा देशजा हेममालिनः। अश्वे अश्वे शतं गावो गवां तद्वदजाविकम् ॥१०८॥

एतद्धनमपर्य्यन्तमश्वमेधे महामखे। शशविन्दुर्महाराज ब्राह्मणेभ्यः समार्पयत् ॥१०९॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ११० ॥ गयञ्चामूर्त्तरयसं मृतं शुश्रुम सृञ्जय। यः स वर्षशतं राजा हुतशिष्टाशनोऽभवत् ॥१११॥ यस्मै वह्निर्वरं प्रादात्ततो वव्रे वरान् गयः। ददतो मेऽक्षयं वित्तं धर्मे श्रद्धा च वर्द्धताम् ॥ ११२ ॥ मनो मे रमतां सत्ये त्वत्प्रसादाद्धुताशन। लेभे च कामांस्तान् सर्वान् पावकादिति नः श्रुतम् ॥ ११३ ॥ दर्शे च पूर्णमासे च चातुर्मास्ये पुनः पुनः। अयजद्धयमेधेन सहस्रं परिवत्सरान् ॥ ११४ ॥ शतं गवां सहस्राणि शतमश्वतराणि च। उत्थायोत्थाय वै प्रादात् सहस्रं परिवत्सरान् ॥ ११५ ॥ तर्पयामास सोमेन देवान् वित्तैर्द्विजानपि। पितॄन् स्वधाभिः कामैश्च स्त्रियः स पुरुषर्षभः ॥ ११६ ॥ सौवर्णीं पृथिवीं कृत्वा दशव्यामां द्विरायताम्। दक्षिणामददद्राजा वाजिमेधे महाक्रतौ ॥ ११७ ॥ यावत्यः सिकता राजन् गङ्गायाः पुरुषर्षभः। तावतीरेव गाः प्रादादामूर्त्तरयसो गयः ॥ ११८ ॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ११९ ॥ रन्तिदेवञ्च सांकृत्यं मृतं शुश्रुम सृञ्जय। सम्यगाराध्य यः शक्राद्वरं लेभे महातपाः ॥ १२० ॥ अन्नञ्च नो बहुभवेदतिथींश्च लभेमहि। श्रद्धा च नो मा व्यगमत् मा च याचिष्म कञ्चन ॥ १२१ ॥ उपातिष्ठंश्च पशवः स्वयं तं संशितव्रतम्। ग्राम्यारण्या महात्मानं रन्तिदेवं यशस्विनम् ॥ १२२ ॥ महानदी चर्म्मराशेरुत्क्लेदात् सुस्रुवे यतः। ततश्चर्मण्वतीत्येवं विख्याता सा महानदी ॥१२३॥ ब्राह्मणेभ्यो ददौ निष्कान् सदसि प्रतते नृप। तुभ्यं निष्कं तुभ्यं निष्कमिति क्रोशन्ति वै द्विजाः ॥ १२४ ॥ सहस्रन्तुभ्यमित्युक्त्वा ब्राह्मणान् संप्रपद्यते। अन्वाहार्य्योपकरणं द्रव्योपकरणञ्च यत् ॥ १२५ ॥ घटाः पात्र्यः कटा-

स्थानि स्थाल्यश्च पिठराणि च। नासीत् किञ्चिदसौवर्णं रन्तिदेवस्य श्रीमतः॥ १२६॥ सांकृते रन्तिदेवस्य यां रात्रिमवसन् गृहे। आलभ्यन्त शतं गावः सहस्राणि च विंशतिः॥ १२७॥ तत्र स्म सूदाः क्रोशन्ति सुमृष्टमणिकुण्डलाः। सूपभूयिष्ठमश्नीध्वं नाद्य मांसं यथा पुरा॥ १२८॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः॥ १२९॥ सगरञ्च महात्मानं मृतं शुश्रुम सृञ्जय। ऐक्ष्वाकुं पुरुषव्याघ्रमतिमानुषविक्रमम्॥ १३०॥ षष्टिः पुत्रसहस्राणि यं यान्तमनुजग्मिरे। नक्षत्रराजं वर्षान्ते व्यभ्रे ज्योतिर्गणा इव॥ १३१॥ एकच्छत्रा मही यस्य प्रतापादभवत्पुरा। योऽश्वमेधसहस्रेण तर्पयामास देवताः॥ १३२॥ यः प्रादात् कनकस्तम्भं प्रासादं सर्वकाञ्चनम्। पूर्णपद्मदलाक्षीणां स्त्रीणां शयनसंकुलम्॥ १३३॥ द्विजातिभ्योऽनुरूपेभ्यः कामांश्च विविधान् बहून्। यस्यादेशेन तद्वित्तं व्यभजन्त द्विजातयः॥१३४॥ खानयास यः कोपात् पृथिवीं सागराङ्किताम्। यस्य नाम्ना समुद्रश्च सागरत्वमुपागतः॥ १३५॥ स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः॥ १३६॥ राजानञ्च पृथुं वैन्यं मृतं शुश्रुम सृञ्जय। यमभ्यषिञ्चन् संभूय महारण्ये महर्षयः॥ १३७॥ प्रथयिष्यन्ति वै लोकान् पृथुरित्येव शब्दितः। क्षताद्यो वै त्रायतीति स तस्मात् क्षत्रियः स्मृतः॥ १३८॥ पृथुं वैन्यं प्रजा दृष्ट्वा रक्ताः स्मेति यदब्रुवन्। ततो राजेति नामास्य अनुरागादजायत॥ १३९॥ अकृष्टपच्या पृथिवी पुटके पुटके मधु। सर्वा द्रोणदुघा गावो वैन्यस्यासन् प्रशासतः॥ १४०॥ अरोगाः सर्वसिद्धार्था मनुष्या अकुतोभयाः। यथाभिकाममवसन् क्षेत्रेषु च गृहेषु च॥ १४१॥ आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः। सरितश्चान्वदीर्यन्त ध्वजभङ्गश्च नाभवत्॥ १४२॥ हैरण्यांस्त्रिनलोत्सेधान् पर्वता-

नेकविंशतिम्। ब्राह्मणेभ्यो ददौ राजा योऽश्वमेधे महामखे ॥१४३
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया। पुत्रात् पुण्यतरश्चैव मा
पुत्रमनुतप्यथाः ॥ १४४ ॥ किम्वा तूष्णीं ध्यायसे सृञ्जय त्वं न मे
राजन् वाचमिमां शृणोषि। न चेन्मोघं विप्रलप्तं मयेदं पथ्यं
मुमूर्षोरिव संप्रयुक्तम् ॥ १४५ ॥

सृञ्जय उवाच। शृणोमि ते नारद वाचमेनां विचित्रार्थां
स्रजमिव पुण्यगन्धाम्। राजर्षीणां पुण्यकृतां महात्मनां कीर्त्त्या
युक्तानां शोकनिर्णाशनार्थम् ॥ १४६ ॥ न ते मोघं विप्रलप्तं महर्षे
दृष्ट्वैवाहं नारद त्वां विशोकः। शुश्रूषंस्ते वचनं ब्रह्मवादिन्न तैः
तृप्याम्यमृतस्येव पानात् ॥ १४७ ॥ अमोघदर्शिन्मम चेत् प्रसादं
सुतापदग्धस्य विभो प्रकुर्य्याः। मृतस्य सञ्जीवनमद्य मे स्यात्तव
प्रसादात् सुतसङ्गमश्च ॥ १४८ ॥

नारद उवाच। यस्ते पुत्रो गमितोऽयं विजातः स्वर्णष्ठीवी
यमदात् पर्वतस्ते। पुनस्तु ते पुत्रमहं ददामि हिरण्यनाभं वर्ष-
सहस्रिणञ्च ॥ १४९ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि षोड़शराजिके
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

युधिष्ठिर उवाच। स कथं काञ्चनष्ठीवी सृञ्जयस्य सुतोऽभवत्।
पर्वतेन किमर्थं्वा दत्तस्तेन ममार च ॥ १ ॥ यदा वर्षसहस्रायु-
स्तदा भवति मानवः। कथमप्राप्तकौमारः सृञ्जयस्य सुतो मृतः
॥ २ ॥ उताहो नाममात्रं वै सुवर्णष्ठीविनोऽभवत्। कथम्वा
काञ्चनष्ठीवीत्येतदिच्छामि वेदितुम् ॥ ३ ॥

श्रीकृष्ण उवाच। अत्र ते वर्णयिष्यामि यथावृत्तं जनेश्वर।
नारदः पर्वतश्चैव द्वावृषी लोकसत्तमौ ॥ ४ ॥ मातुलो भागिनेयश्च

देवलोकादिहागतौ। विहर्त्तुकामौ संप्रीत्या मानुषेषु पुरा विभौ ॥ ५ ॥ हविःपवित्रभोज्येन देवभोज्येन चैव हि। नारदो मातुलश्चैव भागिनेयश्च पर्वत ॥ ६ ॥ तावुभौ तपसोपेताववनीतलचारिणौ। भुञ्जानौ मानुषान् भोगान् यथावत् पर्य्यधावताम् ॥ ७ ॥ प्रीतिमन्तौ मुदा युक्तौ समयञ्चैव चक्रतुः। यो भवेद्धृदि सङ्कल्पः शुभो वा यदि वाऽशुभः। अन्योऽन्यस्य स आख्येयो मृषा शापोऽन्यथा भवेत् ॥ ८ ॥ तौ तथेति प्रतिज्ञाय महर्षी लोकपूजितौ। सृञ्जयं श्वैत्यमभ्येत्य राजानमिदमूचतुः ॥ ९ ॥ आवां भवति वत्स्यावः कञ्चित् कालं हिताय ते। यथावत् पृथिवीपाल आवयोः प्रगुणो भव। तथैव कृत्वा राजा तौ सत्कृत्योपचचार ह ॥ १० ॥ ततः कदाचित्तौ राजा महात्मानौ तपोधनौ। अब्रवीत् परमप्रीतः सुतेयं वरवर्णिनी। एकैव मम कन्यैषा युवां परिचरिष्यति ॥ ११ ॥ दर्शनीयानवद्याङ्गी शीलवृत्तसमाहिता। सुकुमारी कुमारी च पद्मकिञ्जल्कसुप्रभा ॥ १२ ॥ परमं सौम्यमित्युक्तां ताभ्यां राजा शशास ताम्। कन्ये विप्रावुपचर देववत् पितृवच्च ह ॥ १३ ॥ सा तु कन्या तथेत्युक्त्वा पितरं धर्मचारिणी। यथानिदेशं राज्ञस्तौ सत्कृत्योपचचार ह ॥ १४ ॥ तस्यास्तेनोपचारेण रूपेणाप्रतिमेन च। नारदं हृच्छयस्तूर्णं सहसैवाभ्यपद्यत ॥ १५ ॥ ववृधे हि ततस्तस्य हृदि कामो महात्मनः। यथा शुक्लस्य पक्षस्य प्रवृत्तौ चन्द्रमाः शनैः ॥ १६ ॥ न च तं भागिनेयाय पर्वताय महात्मने। शशंस हृच्छयं तीव्रं व्रीड़मानः स धर्मवित् ॥ १७ ॥ तपसा चेङ्गितैश्चैव पर्वतोऽथ बुबोध तम्। कामार्त्तं नारदं क्रुद्धः शशापैनं ततो भृशम् ॥ १८ ॥ कृत्वा समयमव्यग्रो भवान् वै सहितो मया। यो भवेद्धृदि सङ्कल्पः शुभो वा यदि वाऽशुभः ॥ १९ ॥ अन्योऽन्यस्य स आख्येय इति तद्वै मृषा कृतम्। भवता वचनं ब्रह्मंस्तस्मादेष शपाम्यहम् ॥ २० ॥ न हि

कामं प्रवृत्तन्तं भवानाचष्ट मे पुरा। सुकुमार्य्यां कुमार्य्यां ते तस्मा-
देष शपाम्यहम् ॥ २१ ॥ ब्रह्मचारी गुरुर्यस्मात्तपस्वी ब्राह्मणश्च
सन्। अकार्षीत् समयभ्रंशमावाभ्यां यः कृतो मिथः ॥ २२ ॥
शप्स्ये तस्मात् सुसंक्रुद्धो भवन्तन्तं निबोध मे। सुकुमारी च ते
भार्य्या भविष्यति न संशयः ॥ २३ ॥ वानरश्चैव ते रूपं विवाहात्
प्रभृति प्रभो। संद्रच्यन्ति नराश्चान्ये स्वरूपेण विनाशनम ॥२४॥
स तद्वाक्यन्तु विज्ञाय नारदः पर्वतन्तथा। अशपत्तमपि क्रोधाद्-
भागिनेयं स मातुलः ॥ २५ ॥ तपसा ब्रह्मचर्य्येण सत्येन च दमेन
च। युक्तोऽपि नित्यधर्म्मश्च न वै स्वर्गमवाप्स्यसि ॥ २६ ॥ तौ
तु शप्ता भृशं क्रुद्धौ परस्परममर्षणौ। प्रतिजग्मतुरन्योन्यं क्रुद्धा-
विव गजोत्तमौ ॥ २७ ॥ पर्वतः पृथिवीं कृत्स्नां विचचार महा-
मतिः। पूज्यमानो यथान्यायं तेजसा स्वेन भारत ॥ २८ ॥ अथ
तामलभत् कन्यां नारदः सृञ्जयात्मजाम्। धर्म्मेण विप्रप्रवरः
सुकुमारीमनिन्दिताम् ॥ २९ ॥ सा तु कन्या यथाशापं नारदन्तं
ददर्श ह। पाणिग्रहणमन्त्राणां नियोगादेव नारदम् ॥ ३० ॥
सुकुमारी च देवर्षिं वानरप्रतिमाननम्। नैवावमन्यत तदा प्रीति-
मत्येव चाभवत् ॥३१॥ उपतस्थे च भर्त्तारं न चान्यं मनसाप्यगात्।
देवं मुनिस्वा यक्षस्वा पतित्वे पतिवत्सला ॥ ३२ ॥ ततः कदा-
चित् भगवान् पर्वतोऽनुचचार ह। वनं विरहितं किञ्चित्तत्रापश्यत्
स नारदम् ॥ ३३ ॥ ततोऽभिवाद्य प्रोवाच नारदं पर्वतस्तदा।
भवान् प्रसादं कुरुतात् स्वर्गादेशाय मे प्रभो ॥ ३४ ॥ तमुवाच
ततो दृष्ट्वा पर्वतं नारदस्तदा। कृताञ्जलिमुपासीनं दीनं दीन-
तरः स्वयम् ॥ ३५ ॥ त्वयाहं प्रथमं शप्तो वानरस्त्वं भविष्यसि।
इत्युक्तेन मया पश्चात् शप्तस्त्वमपि मत्सरात् ॥ ३६ ॥ अद्यप्रभृति वै
वासं स्वर्गे नावाप्स्यसीति ह। तव नैतद्धि सदृशं पुत्रस्थाने हि
मे भवान्। निवर्त्तयेतां तौ शापावन्योऽन्येन तदा मुनी ॥ ३७ ॥

श्रीमत्तङ्' तदा दृष्ट्वा नारदं देवरूपिणम् । सुकुमारी प्रदुद्राव परपत्यभिशङ्कया ॥ ३८ ॥ तां पर्वतस्ततो दृष्ट्वा प्रद्रवन्तीमनिन्दिताम् । अब्रवीत्तव भर्त्तैष नात्र कार्य्या विचारणा ॥ ३९ ॥ ऋषिः परमधर्म्मात्मा नारदो भगवान् प्रभुः । तवैवाभेद्यहृदयो मा ते भूदत्र संशयः ॥ ४० ॥ सानुनीता बहुविधं पर्वतेन महात्मना । शापदोषञ्च तं भर्त्तुः श्रुत्वा प्रकृतिमागता । पर्वतोऽथ ययौ स्वर्गं नारदोऽभ्यगमद्गृहान् ॥ ४१ ॥

वासुदेव उवाच । प्रत्यक्षकर्त्ता सर्वस्य नारदो भगवानृषिः । एष वक्ष्यति ते पृष्टो यथावृत्तं नरोत्तम ॥ ४२ ॥

इति शान्तिपर्वनि राजधर्म्मानुशासनपर्वणि श्रीकृष्णवाक्ये त्रिंशोऽध्यायः ॥ ३० ॥

---

वैशम्पायन उवाच । ततो राजा पाण्डुसुतो नारदं प्रत्यभाषत । भगवन् श्रोतुमिच्छामि सुवर्णष्ठीविसम्भवम् ॥ १ ॥ एवमुक्तस्तु स मुनिर्धर्म्मराजेन नारदः । आचचक्षे यथावृत्तं सुवर्णष्ठीविनं प्रति ॥ २ ॥

नारद उवाच । एवमेतन्महाबाहो यथायं केशवोऽब्रवीत् । कार्य्यस्यास्य तु यच्छेषं तत्ते वक्ष्यामि पृच्छतः ॥ ३ ॥ अहञ्च पर्वतश्चैव स्वस्रीयो मे महामुनिः । वस्तुकामावभिगतौ सृञ्जयत् जयताम्वरम् ॥ ४ ॥ तत्रावां पूजितौ तेन विधिदृष्टेन कर्म्मणा । सर्वकामैः सुविहितौ निवसावोऽस्य वेश्मनि ॥ ५ ॥ व्यतिक्रान्तासु वर्षासु समये गमनस्य च । पर्वतो मामुवाचेदं काले वचनमर्थवत् ॥ ६ ॥ आवामस्य नरेन्द्रस्य गृहे परमपूजितौ । उषितौ समये ब्रह्मंस्तद्विचिन्तय साम्प्रतम् ॥ ७ ॥ ततोऽहमब्रुवं राजन् पर्वतं शुभदर्शनम् । सर्वमेतत्त्वयि विभो भागिनेयोपपद्यते ॥ ८ ॥ वरेण-

स्कन्यतां राजा लभतां यद्यदिच्छति। आवयोस्तपसा सिद्धिं प्राप्नोतु यदि मन्यसे ॥ ९ ॥ तत आहूय राजानं सृञ्जयं जयतां वरम्। पर्वतोऽनुमतं वाक्यमुवाच कुरुपुङ्गव ॥ १० ॥ प्रीतौ स्वो नृप सत्कारैर्भवदार्ज्जवसम्भृतैः। आवाभ्यामभ्यनुज्ञातो वरं नृवर चिन्तय ॥ ११ ॥ देवानामविहिंसायां न भवेन्मानुषक्षयम्। तद्गृहाण महाराज पूजार्हो नौ मतो भवान् ॥ १२ ॥

सृञ्जय उवाच। प्रीतौ भवन्तौ यदि मे कृतमेतावता मम। एष एव परो लाभो निवृत्तो मे महाफलः ॥ १३ ॥ तमेवंवादिनं भूयः पर्वतः प्रत्यभाषत। वृणीष्व राजन् सङ्कल्पं यत्ते हृदि चिरं स्थितम् ॥ १४ ॥

सृञ्जय उवाच। अभीप्सामि सुतं वीरं वीर्य्यवन्तं दृढ़व्रतम्। आयुष्मन्तं महाभागं देवराजसमद्युतिम् ॥ १५ ॥

पर्व्वत उवाच। भविष्यत्येष ते कामो न त्वायुष्मान् भविष्यति। देवराजाभिभूत्यर्थं सङ्कल्पो ह्येष ते हृदि ॥ १६ ॥ ख्यातः सुवर्णष्ठीवीति पुत्रस्तव भविष्यति। रक्ष्यश्च देवराजात् स देवराजसमद्युतिः ॥ १७ ॥ तच्छ्रुत्वा सृञ्जयो वाक्यं पर्व्वतस्य महात्मनः। प्रसादयामास तदा नैतदेवं भवेदिति ॥ १८ ॥ आयुष्मान् मे भवेत् पुत्रो भवतस्तपसा मुने। न च तं पर्वतः किञ्चिदुवाचेन्द्रव्यपेक्षया ॥ १९ ॥ तमहं नृपतिं दीनमब्रुवं पुनरेव च। स्मर्त्तव्योऽस्मि महाराज दर्शयिष्यामि ते स्मृतः ॥ २० ॥ अहन्ते दयितं पुत्रं प्रेतराजवशङ्गतम्। पुनर्दास्यामि तद्रूपं मा शुचः पृथिवीपते ॥ २१ ॥ एवमुक्त्वा तु नृपतिं प्रयातौ स्वो यथेप्सितम्। सृञ्जयश्च यथाकामं प्रविवेश स्वमन्दिरम् ॥ २२ ॥ सृञ्जयस्याथ राजर्षेः कस्मिंश्चित् कालपर्य्यये। जज्ञे पुत्रो महावीर्य्यस्तेजसा प्रज्वलन्निव ॥ २३ ॥ ववृधे स यथाकालं सरसीव महोत्पलम्। बभूव काञ्चनष्ठीवी यथार्थं नाम तस्य तत् ॥ २४ ॥ तदद्भुततमं लोके पप्रथे कुरु-

सत्तम। बुबुधे तच्च देवेन्द्रो वरदानं महर्षितः ॥ २५ ॥ ततः स्वाभिभवाद्भीतो वृहस्पतिमते स्थितः। कुमारस्यान्तरप्रेक्षी बभूव वलवृत्रहा ॥२६॥ चोदयामास तद्वज्रं दिव्यास्त्रं मूर्त्तिमत् स्थितम्। व्याघ्रो भूत्वा जहीमन्त्वं राजपुत्रमिति प्रभो ॥ २७ ॥ प्रवृद्धः किल कार्य्येण मामेषोऽभिभविष्यति। सृञ्जयस्य सुतो वज्र यथैनं पर्वतोऽब्रवीत् ॥ २८ ॥ एवमुक्तस्तु शक्रेण वज्रः परपुरञ्जयः। कुमारमन्तरप्रेक्षी नित्यमेवान्वपद्यत ॥ २९ ॥ सृञ्जयोऽपि सुतं प्राप्य देवराजसमद्युतिम्। हृष्टः सान्तःपुरो राजा वननित्यो बभूव ह ॥ ३० ॥ ततो भागीरथीतीरे कदाचिन्निर्ज्जने वने। धात्रीद्वितीयो वालः स क्रीड़ार्थं पर्य्यधावत ॥ ३१ ॥ पञ्चवर्षकदेशीयो बालो नागेन्द्रविक्रमः। सहसोत्पतितं व्याघ्रमाससाद महाबलम् ॥३२॥ स वालस्तेन निष्पिष्टो वेपमानो नृपात्मजः। व्यसुः पपात मेदिन्यां ततो धात्री विचुक्रुशे ॥ ३३ ॥ हत्वा तु राजपुत्रं स तत्रैवान्तरधीयत। शार्दूलो देवराजस्य माययान्तर्हितस्तदा ॥ ३४ ॥ धात्र्यास्तु निनदं श्रुत्वा रुदन्त्याः परमार्त्तवत्। अभ्यधावत तं देशं स्वयमेव महीपतिः ॥ ३५ ॥ स ददर्श शयानन्तं गतासुं पीतशोणितम्। कुमारं विगतानन्दं निशाकरमिव च्युतम् ॥३६॥ सुतमुत्सङ्गमारोप्य परिपीड़ितमानसः। पुत्रं रुधिरसंसिक्तं पर्य्यदेवयदातुरः ॥ ३७ ॥ ततस्ता मातरस्तस्य रुदन्त्यः शोककर्षिताः। अभ्यधावन्त तं देशं यत्र राजा स सृञ्जयः ॥ ३८ ॥ ततः स राजा सस्मार मामेव गतमानसः। तदाहं चिन्तनं ज्ञात्वा गतवांस्तस्य दर्शनम् ॥ ३९ ॥ मयैतानि च वाक्यानि श्रावितः शोकलालसः। यानि ते यदुवीरेण कथितानि महीपते ॥ ४० ॥ सञ्जीवितश्चापि पुनर्वासवानुमते तदा। भवितव्यं तथा तच्च न तच्छक्यमतोऽन्यथा ॥ ४१ ॥ तत ऊर्द्धं कुमारस्तु स्वर्णष्ठीवी महायशाः। चित्तं प्रसादयामास पितुर्मातुश्च वीर्य्यवान् ॥ ४२ ॥ कारयामास राज्यञ्च

पितरि स्वर्गते नृप । वर्षाणां शतमेकञ्च सहस्रं भीमविक्रमः ॥४३॥ तत ईजे महायज्ञैर्बहुभिर्भूरिदक्षिणैः । तर्पयामास देवांश्च पितॄंश्चैव महाद्युतिः ॥ ४४ ॥ उत्पाद्य च बहून् पुत्रान् कुलसन्तानकारिणः । कालेन महता राजन् कालधर्म्ममुपेयिवान् ॥ ४५ ॥ स त्वं राजेन्द्र सञ्जातं शोकमेनं निवर्त्तय । यथा त्वां केशवः प्राह व्यासश्च सुमहातपाः ॥ ४६ ॥ पितृपैतामहं राज्यमास्थाय धुरमुद्वह । इष्ट्वा पुण्यैर्महायज्ञैरिष्टं लोकमवाप्स्यसि ॥ ४७ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि स्वर्णष्ठीविसम्भवोपाख्याने एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

वैशम्पायन उवाच । तूष्णींभूतन्तु राजानं शोचमानं युधिष्ठिरम् । तपस्वी धर्मतत्त्वज्ञः कृष्णद्वैपायनोऽब्रवीत् ॥ १ ॥

व्यास उवाच । प्रजानां पालनं धर्मो राज्ञां राजीवलोचन । धर्मः प्रमाणं लोकस्य नित्यं धर्मानुवर्त्तिनः ॥ २ ॥ अनुतिष्ठस्व तद्राजन् पितृपैतामहं पदम् । ब्राह्मणेषु तपो धर्मः स नित्यो वेदनिश्चितः ॥ ३ ॥ तत् प्रमाणं ब्राह्मणानां शाश्वतं भरतर्षभ । तस्य धर्मस्य कृत्स्नस्य क्षत्रियः परिरक्षिता ॥ ४ ॥ यः स्वयं प्रतिहन्ति स्म शासनं विषये रतः । स बाहुभ्यां विनिग्राह्यो लोकयात्राविघातकः ॥ ५ ॥ प्रमाणमप्रमाणं यः कुर्य्यान्मोहवशङ्गतः । भृत्यो वा यदि वा पुत्रस्तपस्वी वाथ कश्चन ॥ ६ ॥ पापान् सर्वैरुपायैस्तान् नियच्छेच्छातयीत वा । अतोऽन्यथा वर्त्तमानो राजा प्राप्नोति किल्बिषम् ॥ ७ ॥ धर्मं विनश्यमानं हि यो न रक्षेत् स धर्महा । ते त्वया धर्महन्तारो निहताः सपदानुगाः ॥ ८ ॥ स्वधर्मे वर्त्तमानस्त्वं किन्नु शोचसि पाण्डव । राजा हि हन्याद्दद्याच्च प्रजा रक्षेच्च धर्मतः ॥ ९ ॥

युधिष्ठिर उवाच । न तेऽभिशङ्के वचनं यद्ब्रवीषि तपोधन ।

अपरोक्षो हि ते धर्मः सर्वधर्मविदाम्वर ॥ १० ॥ मया त्ववध्या बहवो घातिता राज्यकारणात् । तानि कर्माणि मे ब्रह्मन् दहन्ति च पचन्ति च ॥ ११ ॥

व्यास उवाच । ईश्वरो वा भवेत् कर्त्ता पुरुषो वापि भारत । हठो वा वर्त्तते लोके कर्मजम्वा फलं स्मृतम् ॥ १२ ॥ ईश्वरेण नियुक्तो हि साध्वसाधु च भारत । कुरुते पुरुषः कर्म फलमीश्वरगामि तत् ॥ १३ ॥ यथा हि पुरुषश्छिन्द्याद्वृक्षं परशुना वने । छेत्तुरेव भवेत् पापं परशोर्न कथञ्चन ॥ १४ ॥ अथ वा तदुपादानात् प्राप्नुयात् कर्मणः फलम् । दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥ १५ ॥ न चैतदिष्टं कौन्तेय यदन्येन कृतं फलम् । प्राप्नुयादिति यस्माच्च ईश्वरे तन्निवेशय ॥ १६ ॥ अथापि पुरुषः कर्त्ता कर्मणोः शुभपापयोः । न परो विद्यते तस्मादेवमेतच्छुभं कृतम् ॥ १७ ॥ न हि कश्चित् क्वचिद्राजन् दिष्टात् प्रतिनिवर्त्तते । दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥ १८ ॥ यदि वा मन्यसे राजन् हठमेकं प्रतिष्ठितम् । एवमप्यशुभं कर्म न भूतं न भविष्यति ॥१९॥ अथाभिपत्तिर्लोकस्य कर्त्तव्या शुभपापयोः । अभिपन्नमिदं लोके राज्ञामुद्यतदण्डनम् ॥ २० ॥ तथापि लोके कर्माणि समावर्त्तन्ति भारत । शुभाशुभफलञ्चैते प्राप्नुवन्तीति मे मतिः ॥ २१ ॥ एवमप्यशुभं कर्म कर्मणस्तत्फलात्मकम् । त्यज त्वं राजशार्दूल मैवं शोके मनः कृथाः ॥ २२ ॥ स्वधर्मे वर्त्तमानस्य सापवादेऽपि भारत । एवमात्मपरित्यागस्तव राजन्न शोभनः ॥ २३ ॥ विहितानि हि कौन्तेय प्रायश्चित्तानि कर्मणाम् । शरीरवांस्तानि कुर्य्यादशरीरः पराभवेत् ॥ २४ ॥ तद्राजन् जीवमानस्त्वं प्रायश्चित्तं करिष्यसि । प्रायश्चित्तमकृत्वा तु प्रेत्य तप्तासि भारत ॥ २५ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि प्रायश्चित्तोपाख्याने द्वात्रिंशोऽध्यायः ॥ ३२ ॥

युधिष्ठिर उवाच । हताः पुत्राश्च पौत्राश्च भ्रातरः पितरस्तथा ।
श्वशुरा गुरवश्चैव मातुलाश्च पितामहाः ॥ १ ॥ क्षत्रियाश्च महा-
त्मानः सम्बन्धिसुहृदस्तथा । वयस्या भागिनेयाश्च ज्ञातयश्च पिता-
मह ॥ २ ॥ बहवश्च मनुष्येन्द्रा नानादेशसमागताः । घातिता
राज्यलुब्धेन मयैकेन पितामह ॥ ३ ॥ तांस्तादृशानहं हत्वा धर्म-
नित्यान्महीक्षितः । असकृत् सोमपान् वीरान् किं प्राप्स्यामि तपो-
धन ॥ ४ ॥ दह्याम्यनिशमद्यापि चिन्तयानः पुनः पुनः । हीनां
पार्थिवसिंहैस्तैः श्रीमद्भिः पृथिवीमिमाम् ॥ ५ ॥ दृष्ट्वा ज्ञातिवधं
घोरं हतांश्च शतशःपरान् । कोटिशश्च नरानन्यान् परितप्ये पिता-
मह ॥ ६ ॥ का नु तासां वरस्त्रीणामवस्थाद्य भविष्यति । विही-
नानान्तु तनयैः पतिभिर्भ्रातृभिस्तथा ॥ ७ ॥ अस्मानन्तकरान्
घोरान् पाण्डवान् वृष्णिसंहतान् । आक्रोशन्त्यः कृशा दीनाः
प्रपतिष्यन्ति भूतले ॥ ८ ॥ अपश्यन्त्यः पितॄन् भ्रातॄन् पतीन् पुत्रांश्च
योषितः । त्यक्त्वा प्राणान् स्त्रियः सर्वा गमिष्यन्ति यमक्षयम् ॥९॥
वत्सलत्वाद्द्विजश्रेष्ठ तत्र मे नास्ति संशयः । व्यक्तं सौक्ष्म्याच्च
धर्मस्य प्राप्स्यामः स्त्रीवधं वयम् ॥ १० ॥ यद्वयं सुहृदो हत्वा
कृत्वा पापमनन्तकम् । नरके निपतिष्यामो ह्यधःशिरस एव ह
॥ ११ ॥ शरीराणि विमोक्ष्यामस्तपसोग्रेण सत्तम । आश्रमाणां
विशेषांस्त्वमथाचक्ष्व पितामह ॥ १२ ॥

वैशम्पायन उवाच । युधिष्ठिरस्य तद्वाक्यं श्रुत्वा द्वैपायनस्तदा ।
निरीक्ष्य निपुणं बुद्ध्या ऋषिः प्रोवाच पाण्डवम् ॥ १३ ॥

व्यास उवाच । मा विषादं कृथा राजन् क्षत्रधर्ममनुस्मरन् ।
स्वधर्म्मेण हता ह्येते क्षत्रियाः क्षत्रियर्षभ ॥ १४ ॥ काङ्क्षमाणाः
श्रियं कृत्स्नां पृथिव्याञ्च महद्यशः । कृतान्तविधिसंयुक्ताः कालेन
निधनं गताः ॥ १५ ॥ न त्वं हन्ता न भीमोऽयं नार्जुनो न यमा-
वपि । कालः पर्य्यायधर्म्मेण प्राणानादत्त देहिनाम् ॥ १६ ॥ न

तस्य मातापितरौ नानुग्राह्यो हि कश्चन। कर्मसाक्षी प्रजानां यस्तेन कालेन संहृताः ॥ १७ ॥ हेतुमात्रमिदं तस्य विहितं भरतर्षभ। यद्धन्ति भूतैर्भूतानि तदस्मै रूपमैश्वरम् ॥ १८ ॥ कर्मसूत्रात्मकं विद्धि साक्षिणं शुभपापयोः। सुखदुःखगुणोदर्कं कालं कालफलप्रदम् ॥ १९ ॥ तेषामपि महाबाहो कर्माणि परिचिन्तय। विनाशहेतुकानि त्वं यैस्ते कालवशं गताः ॥ २० ॥ आत्मनश्च विजानीहि नियत व्रतशासनम्। यदा त्वमीदृशं कर्म विधिनाक्रम्य कारितः ॥ २१ ॥ त्वष्ट्रेव विहितं यन्त्रं तथाचेष्टयितुर्वशे। कर्मणा कालयुक्तेन तथेदं चेष्टते जगत् ॥ २२ ॥ पुरुषस्य हि दृष्ट्वा मासुत्पत्तिमनिमित्ततः। यदृच्छया विनाशश्च शोकहर्षावनर्थकौ ॥२३॥ व्यलीकमपि यत्तत्र चित्तवैतंसिकन्तव। तदर्थमिष्यते राजन् प्रायश्चित्तं तदाचर ॥ २४ ॥ इदन्तु श्रूयते पार्थ युद्धे देवासुरे पुरा। असुरा भ्रातरो ज्येष्ठा देवाश्चापि यवीयसः ॥ २५ ॥ तेषामपि श्रीनिमित्तं महानासीत् समुच्छ्रयः। युद्धं वर्षसहस्राणि द्वात्रिंशदभवत् किल ॥ २६ ॥ एकार्णवां महीं कृत्वा रुधिरेण परिप्लुताम्। जघ्नुर्दैत्यांस्तथा देवास्त्रिदिवञ्चाभिलेभिरे ॥ २७ ॥ तथैव पृथिवीं लब्ध्वा ब्राह्मणा वेदपारगाः। संश्रिता दानवानां वै साह्यार्थं दर्पमोहिताः ॥२८॥ शालावृका इति ख्यातास्त्रिषु लोकेषु भारत। अष्टाशीतिसहस्राणि ते चापि विबुधैर्हताः ॥ २९ ॥ धर्मव्युच्छित्तिमिच्छन्तो येऽधर्मस्य प्रवर्त्तकाः। हन्तव्यास्ते दुरात्मानो देवैर्दैत्या इवोल्बणाः ॥ ३० ॥ एकं हत्वा यदि कुले शिष्टानां स्यादनामयम्। कुलं हत्वा च राष्ट्रं च न तद्वृत्तोपघातकम् ॥३१॥ अधर्मरूपो धर्मो हि कश्चिदस्ति नराधिप। धर्मश्चाधर्मरूपोऽस्ति तच्च ज्ञेयं विपश्चिता ॥ ३२ ॥ तस्मात् संस्तम्भयात्मानं श्रुतवानसि पाण्डव। देवैः पूर्वगतं मार्गमनुयातोऽसि भारत ॥ ३३ ॥ न हीदृशा गमिष्यन्ति नरकं पाण्डवर्षभ। भ्रातॄनाश्वासयैतांस्त्वं

सुहृदश्च परन्तप ॥ ३४ ॥ यो हि पापसमारम्भे कार्य्ये तद्भाव-
भावितः । कुर्व्वन्नपि तथैव स्यात् कृत्वा च निरपत्रपः ॥ ३५ ॥
तस्मिंस्तत् कलुषं सर्व्वं समाप्तमिति शब्दितम् । प्रायश्चित्तं न
तस्यास्ति ह्रासो वा पापकर्म्मणः ॥ ३६ ॥ त्वन्तु शुक्लाभिजातीयः
परदोषेण कारितः । अनिच्छमानः कर्म्मेदं कृत्वा च परितप्यसे॥३७॥
अश्वमेधो महायज्ञः प्रायश्चित्तमुदाहृतम् । तमाहर महाराज
विपाप्मैवं भविष्यसि ॥ ३८ ॥ मरुद्भिः सह जित्वारीन् भगवान्
पाकशासनः । एकैकं क्रतुमाहृत्य शतकृत्वः शतक्रतुः ॥ ३९ ॥
धूतपाप्मा जितस्वर्गो लोकान् प्राप्य सुखोदयान् । मरुद्गणैर्वृतः
शक्रः शुशुभे भासयन् दिशः ॥४०॥ स्वर्गलोके महीयन्तमप्सरोभिः
शचीपतिम् । ऋषयः पर्य्युपासन्ते देवाश्च विबुधेश्वरम् ॥ ४१ ॥
सेयं त्वामनुसंप्राप्ता विक्रमेण वसुन्धरा । निर्ज्जिताश्च महीपाला
विक्रमेण त्वयानघ ॥ ४२ ॥ तेषां पुराणि राष्ट्राणि गत्वा राजन्
सुहृद्वृतः । भ्रातॄन् पुत्रांश्च पौत्रांश्च स्वे स्वे राज्येऽभिषिचय ॥ ४३ ॥
बालानपि च गर्भस्थान् सान्त्वेन समुदाचरन् । रञ्जयन् प्रकृतीः
सर्व्वाः परिपाहि वसुन्धराम् ॥ ४४ ॥ कुमारो नास्ति येषाञ्च कन्या-
स्तत्राभिषिचय । कामाशयोहि स्त्रीवर्गः शोकमेवं प्रहास्यसि ॥४५॥
एवमाश्वासनं कृत्वा सर्व्वराष्ट्रेषु भारत । यजस्व वाजिमेधेन
यथेन्द्रो विजयी पुरा ॥ ४५ ॥ अशोच्यास्ते महात्मानः क्षत्रियाः
क्षत्रियर्षभ । स्वकर्म्मभिर्गता नाशं कृतान्तबलमोहिताः ॥ ४७ ॥
अवाप्तः क्षत्रधर्म्मस्ते राज्यं प्राप्तमकण्टकम् । रक्षस्व धर्म्मं कौन्तेय
श्रेयान् यः प्रेत्य भारतः ॥ ४८ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि प्रायश्चित्तो-
पाख्याने त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

युधिष्ठिर उवाच । कानि कृत्वेह कर्माणि प्रायश्चित्तीयते नरः । किं कृत्वा मुच्यते तत्र तन्मे ब्रूहि पितामह ॥ १ ॥

व्यास उवाच । अकुर्वन् विहितं कर्म प्रतिषिद्धानि चाचरन् । प्रायश्चित्तीयते ह्येवं नरो मिथ्यानुवर्त्तयन् ॥ २ ॥ सूर्य्येणाभ्युदितो यश्च ब्रह्मचारी भवत्युत । तथा सूर्य्याभिनिर्मुक्तः कुनखी श्याव-दन्त्यपि ॥ ३ ॥ परिवित्तिः परिवेत्ता ब्रह्मघ्नो यश्च कुत्सकः । दिधि-षूपपतिर्यः स्यादग्रेदिधिषुरेव च ॥४॥ अवकीर्णी भवेद्यश्च द्विजाति-वधकस्तथा । अतीर्थे ब्रह्मणस्त्यागी तीर्थे चाप्रतिपादकः ॥ ५ ॥ ग्रामघाती च कौन्तेय मांसस्य परिविक्रयी । यश्चाग्नीन् परिमुच्येत तथैव ब्रह्मविक्रयी ॥ ६ ॥ गुरुस्त्रीवधको यश्च पूर्वः पूर्वस्तु गर्हितः । वृथा पशुसमालम्भी गृहदाहस्य कारकः ॥ ७ ॥ अनृतेनोपवर्त्ती च प्रतिरोद्धा गुरोस्तथा । एतान्येनांसि सर्वाणि व्युत्क्रान्तसमयश्च यः ॥ ८ ॥ अकार्य्याणि तु वक्ष्यामि यानि तानि निबोध मे । लोकवेदविरुद्धानि तान्येकाग्रमनाः शृणु ॥ ९ ॥ स्वधर्मस्य परि-त्यागः परधर्मस्य च क्रिया । अयाज्ययाजनञ्चैव तथाभक्ष्यस्य भक्ष-णम् ॥ १० ॥ शरणागतसन्त्यागो भृत्यस्याभरणन्तथा । रसानां विक्रयश्चापि तिर्य्यग्योनिवधस्तथा ॥ ११ ॥ आधानादीनि कर्माणि शक्तिमान्न करोति यः । अप्रयच्छंश्च सर्वाणि नित्यदेयानि भारत ॥ १२ ॥ दक्षिणानामदानञ्च ब्राह्मणस्याभिमर्षणम् । सर्वाण्ये-तान्यकार्य्याणि प्राहुर्धर्मविदो जनाः ॥ १३ ॥ पित्रा विवदते पुत्रो यश्च स्याद्गुरुतल्पगः । अप्रजायन्नरव्याघ्र भवत्यधार्मिको नरः ॥१४॥ उक्तान्येतानि कर्माणि विस्तरेणेतरेण च । यानि कुर्वन्नकुर्वंश्च प्रायश्चित्तीयते नरः ॥ १५ ॥ एतान्येव तु कर्माणि क्रियमाणानि मानवाः । येषु येषु निमित्तेषु न लिप्यन्तेऽथ तान् शृणु ॥ १६ ॥ प्रगृह्य शस्त्रमायान्तमपि वेदान्तगं रणे । जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ १७ ॥ इति चाप्यत्र कौन्तेय मन्त्रो वेदेषु

पठ्यते । वेदप्रमाणविहितं धर्मञ्च प्रब्रवीमि ते ॥ १८ ॥ अपेतं ब्राह्मणं वृत्ताद्यो हन्यादाततायिनम् । न तेन ब्रह्महा स स्यान्मन्युस्तन्मन्युमृच्छति ॥ १९ ॥ प्राणात्यये तथाज्ञानादाचरन्मदिरामपि । अदृष्टितो धर्मपरैः पुनः संस्कारमर्हति ॥ २० ॥ एतत्ते सर्वमाख्यातं कौन्तेयाभक्ष्यभक्षणम् । प्रायश्चित्तविधानेन सर्वमेतेन शुध्यति ॥ २१ ॥ गुरुतल्पं हि गुर्वर्थे न दूषयति मानवम् । उद्दालकः श्वेतकेतुं जनयामास शिष्यतः ॥ २२ ॥ स्तेयं कुर्वंश्च गुर्वर्थमापत्सु न निषिध्यते । बहुशः कामकारेण न चेद्यः संप्रवर्त्तते ॥ २३ ॥ अन्यत्र ब्राह्मणस्वेभ्य आददानो न दुष्यति । स्वयमप्राशिता यश्च न स पापेन लिप्यते ॥ २४ ॥ प्राणत्राणेऽनृतं वाच्यमात्मनो वा परस्य च । गुर्वर्थं स्त्रीषु चैव स्याद्विवाहकरणेषु च ॥ २५ ॥ नावर्त्तते व्रतं स्वप्ने शुक्रमोक्षे कथञ्चन । आज्यहोमः समिद्धेऽग्नौ प्रायश्चित्तं विधीयते ॥ २६ ॥ पारिवित्त्यन्तु पतिते नास्ति प्रव्रजिते तथा । भिक्षिते परदार्य्यञ्च तद्धर्मस्य न दूषकम् ॥ २७ ॥ वृथापशुसमालम्भं नैव कुर्य्यान्न कारयेत् । अनुग्रहः पशूनां हि संस्कारो विधिनोदितः ॥ २८ ॥ अनर्हे ब्राह्मणे दत्तमज्ञानात्तन्न दूषकम् । सत्काराणां तथा तीर्थे नित्यस्वा प्रतिपादनम् ॥ २९ ॥ स्त्रियास्तथापचारिण्या निष्कृतिः स्याददूषिका । अपि सा पूयते तेन न तु भर्त्ता प्रदुष्यति ॥ ३० ॥ तत्त्वं ज्ञात्वा तु सोमस्य विक्रयः स्याददोषवान् । असमर्थस्य भृत्यस्य विसर्गः स्याददोषवान् । वनदाहो गवामर्थे क्रियमाणो न दूषकः ॥ ३१ ॥ उक्तान्येतानि कर्माणि यानि कुर्वन्न दुष्यति । प्रायश्चित्तानि वक्ष्यामि विस्तरेणैव भारत ॥ ३२ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि प्रायश्चित्तीये चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

व्यास उवाच । तपसा कर्मभिश्चैव प्रदानेन च भारत । पुनाति पापं पुरुषः पुनश्चेन्न प्रवर्त्तते ॥ १ ॥ एककालन्तु भुञ्जीत चरन् भैक्ष्यं स्वकर्मकृत् । कपालपाणिः खट्वाङ्गी ब्रह्मचारी सदोत्थितः ॥ २ ॥ अनसूयुरधःशायी कर्म लोके प्रकाशयन् । पूर्णैर्द्वादशभिर्वर्षैर्ब्रह्महा विप्रमुच्यते ॥ ३ ॥ लक्ष्यः शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः । प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥४॥ जपन् वान्यतमं वेदं योजनानां शतं व्रजेत् । सर्वस्वम्वा वेदविदे ब्राह्मणायोपपादयेत् ॥ ५ ॥ धनम्वा जीवनायालं गृहम्वा सपरिच्छदम् । मुच्यते ब्रह्महत्यायाः गोप्ता गोब्राह्मणस्य च ॥ ६ ॥ षड्भिर्वर्षैः कृच्छ्रभोजी ब्रह्महा पूयते नरः । मासे मासे समश्नंस्तु त्रिभिर्वर्षैः प्रमुच्यते ॥ ७ ॥ सम्वत्सरेण मासाशी पूयते नात्र संशयः । तथैवोपवसन्राजन् स्वल्पेनापि प्रपूयते ॥ ८ ॥ क्रतुना वाश्वमेधेन पूयेत नात्र संशयः । ये चाप्यवभृथस्नाताः केचिदेवंविधा नराः ॥ ९ ॥ ते सर्वे धूतपाप्मानो भवन्तीति परा श्रुतिः । ब्राह्मणार्थे हतो युद्धे मुच्यते ब्रह्महत्यया ॥ १० ॥ गवां शतसहस्रन्तु पात्रेभ्यः प्रतिपादयेत् । ब्रह्महा विप्रमुच्येत सर्वपापेभ्य एव च ॥११॥ कपिलानां सहस्राणि यो दद्यात् पञ्चविंशतिम् । दोग्ध्रीणां स च पापेभ्यः सर्वेभ्यो विप्रमुच्यते ॥ १२ ॥ गोसहस्रं सवत्सानां दोग्ध्रीणां प्राणसंशये । साधुभ्यो वै दरिद्रेभ्यो दत्त्वा मुच्येत किल्बिषात् ॥ १३ ॥ शतं वै यस्तु काम्बोजान् ब्राह्मणेभ्यः प्रयच्छति । नियतेभ्यो महीपाल स च पापात् प्रमुच्यते ॥ १४ ॥ मनोरथन्तु यो दद्यादेकस्मा अपि भारत । न कीर्त्तयेत दत्त्वा यः स च पापात् प्रमुच्यते ॥ १५ ॥ सुरापानं सकृत् कृत्वा योऽग्निवर्णां सुरां पिबेत् । स पावयत्यथात्मानमिह लोके परत्र च ॥ १६ ॥ मरुत्प्रपातं प्रपतन् ज्वलनम्वा समाविशन् । महाप्रस्थानमातिष्ठन् मुच्यते सर्वकिल्बिषैः ॥ १७ ॥ बृहस्पतिसवेनेष्ट्वा सुरापो ब्राह्मणः

पुनः । समितिं ब्राह्मणो गच्छेदिति वै ब्रह्मणः श्रुतिः ॥ १८ ॥
भूमिप्रदानं कुर्य्याद्यः सुरां पीत्वा विमत्सरः । पुनर्न च पिबेद्राजन्
संस्कृतः स च शुध्यति ॥ १९ ॥ गुरुतल्पी शिलां तप्तामायसीमभि-
सम्विशेत् । अवकृत्यात्मनः शेफं प्रव्रजेदूर्द्ध्वदर्शनः ॥ २० ॥ शरी-
रस्य विमोक्षेण मुच्यते कर्मणोऽशुभात् । कर्म्मभ्यो विप्रमुच्यन्ते
यताः सम्वत्सरं स्त्रियः ॥ २१ ॥ महाव्रतञ्चरेद्यस्तु दद्यात् सर्वस्व-
मेव तु । गुर्व्वर्थे वा हतो युद्धे मुच्यते कर्मणोऽशुभात् ॥ २२ ॥
अनृतेनोपवर्त्ती चेत् प्रतिरोद्धा गुरोस्तथा । उपाहृत्य प्रियं तस्मै
तस्मात् पापात् प्रमुच्यते ॥ २३ ॥ अवकीर्णि निमित्तन्तु ब्रह्महत्या-
व्रतञ्चरेत् । गोचर्म्मवासाः षण्मासांस्तथा मुच्येत किल्बिषात् ॥२४॥
परदारापचारी तु परस्यापहरन् वसु । सम्वत्सरं व्रती भूत्वा
तथा मुच्येत किल्बिषात् ॥ २५ ॥ धनन्तु यस्यापहरेत्तस्मै दद्यात्
समं वसु । विविधेनाभ्युपायेन तदा मुच्येत किल्बिषात् ॥ २६ ॥
कृच्छ्राद्द्वादशरात्रेण संयतात्मा व्रते स्थितः । परिवेत्ता भवेत् पूतः
परिवित्तिस्तथैव च ॥ २७ ॥ निवेश्यन्तु पुनस्तेन सदा तारयते
पितॄन् । न तु स्त्रिया भवेद्दोषो न तु सा तेन लिप्यते ॥ २८ ॥
भोजनं ह्यन्तरा शुद्धं चातुर्मास्ये विधीयते । स्त्रियस्तेन प्रशुध्यन्ति
इति धर्मविदो विदुः ॥ २९ ॥ स्त्रियस्त्वाशङ्किता पापा नोपगम्या
विजानता । रजसा ता विशुध्यन्ते भस्मना भाजनं यथा ॥ ३० ॥
पादजोच्छिष्टकांस्यं यत् गवाघ्रातमथापि वा । गण्डूषोच्छिष्टमपि
वा विशुद्धे दशभिस्तु तत् ॥३१॥ चतुष्पात् सकलो धर्मो ब्राह्मणस्य
विधीयते । पादावकृष्टो राजन्ये तथा धर्मो विधीयते ॥३२॥ तथा
वैश्ये च शूद्रे च पादः पादो विधीयते । विद्यादेवं विधेनैषां गुरु-
लाघवनिश्चयम् ॥ ३३ ॥ तिर्य्यग्योनिवधं कृत्वा द्रुमांश्छित्वेतरान्
बहून् । त्रिरात्रं वायुभक्ष्यः स्यात् कर्म च प्रथयन्नरः ॥३४॥ अगम्या-
गमने राजन् प्रायश्चित्तं विधीयते । आर्द्रवस्त्रेण षण्मासान् विहार्य्यं

भक्षणायिना ॥ ३५ ॥ एष एव तु सर्व्वेषामकार्य्याणां विधिर्भवेत्। ब्रह्मणोक्तेन विधिना दृष्टान्तागमहेतुभिः॥३६॥ सावित्रीमप्यधीयीत शुचौ देशे मिताशनः। अहिंस्रो मन्दको जल्पो मुच्यते सर्व्वकिल्विषैः ॥ ३७ ॥ अहःसु सततं तिष्ठेदभ्याकाशं निशां स्वपन्। त्रिरह्नि त्रिर्निशायाञ्च सवासा जलमाविशेत् ॥ ३८ ॥ स्त्रीशूद्रं पतितञ्चापि नाभिभाषेद्व्रतान्वितः। पापान्यज्ञानतः कृत्वा मुच्येदेवं व्रती द्विजः ॥ ३९ ॥ शुभाशुभफलं प्रेत्य लभते भूतसाक्षिकम्। अतिरिच्येत यो यत्र तत्कर्त्ता लभते फलम् ॥४०॥ तस्माज्ज्ञानेन तपसा कर्म्मणा च फलं शुभम। वर्द्धयेदशुभं कर्त्ता यथा स्यादतिरेकवान् ॥ ४१ ॥ कुर्य्याच्छुभानि कर्म्माणि निवर्त्तेत् पापकर्म्मणः। दद्यान्नित्यञ्च वित्तानि तथा मुच्येद किल्विषात् ॥४२॥ अनुरूपं हि पापस्य प्रायश्चित्तमुदाहृतम्। महापातकवर्ज्जन्तु प्रायश्चित्तं विधीयते ॥ ४३ ॥ भक्ष्याभक्ष्येषु चान्येषु वाच्यावाच्ये तथैव च। अज्ञानज्ञानयो राजन् विहितान्यनुजानतः ॥४४॥ जानता तु कृतं पापं गुरु सर्व्वं भवत्युत। अज्ञानात् स्वल्पको दोषः प्रायश्चित्तं विधीयते॥४५॥शक्यते विधिना पापं यथोक्तेन व्यपोहितम्। आस्तिके श्रद्दधाने च विधिरेष विधीयते ॥४६॥ नास्तिकाश्रद्दधानेषु पुरुषेषु कदाचन। दम्भद्वेषप्रधानेषु विधिरेष न दृश्यते ॥ ४७ ॥ शिष्टाचारश्च शिष्टश्च धर्म्मो धर्म्मभृतावर। सेवितव्यो नरव्याघ्र प्रेत्येह च सुखेप्सुना ॥४८॥ स राजन् मोक्ष्यसे पापात्तेन पूर्व्वेण हेतुना। प्राणार्थम्वा धनेनैषामथ वा नृपकर्म्मणा ॥ ४९ ॥ अथ वा ते घृणा काचित् प्रायश्चित्तं चरिष्यसि। मा त्वेवानार्य्यजुष्टेन मन्युना निधनं गमः ॥ ५० ॥

वैशम्पायन उवाच। एवमुक्तो भगवता धर्म्मराजो युधिष्ठिरः। चिन्तयित्वा मुहूर्त्तेन प्रत्युवाच तपोधनम् ॥ ५१ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि प्रायश्चित्तीयोपाख्याने पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

युधिष्ठिर उवाच। किं भक्ष्यं चाप्यभक्ष्यञ्च किञ्चिद्देयं प्रशस्यते किञ्च पात्रमपात्रम्वा तन्मे ब्रूहि पितामह ॥

व्यास उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। सिद्धानाञ्चैव सम्वादं मनोश्चैव प्रजापतेः ॥ २ ॥ ऋषयस्तु व्रतपराः समागम्य परं विभुम्। धर्मं पप्रच्छुरासीनमादिकाले प्रजापतिम् ॥ ३ ॥ कथमन्नं कथं पात्रं दानमध्ययनं तपः। कार्य्याकार्य्यञ्च यत् सर्वं शंस वै त्वं प्रजापते ॥ ४ ॥ तैरेवमुक्तो भगवान् मनुः स्वायम्भुवोऽब्रवीत्। शुश्रूषध्वं यथावृत्तं धर्मं व्याससमासतः ॥ ५ ॥ अनादेशे जपो होम उपवासस्तथैव च। आत्मज्ञानं पुण्यनद्यो यत्र प्रायश्च तत्पराः ॥ ६ ॥ दिष्टान्येतानि पुण्यानि पुण्यार्थं धरणीभृतः। सुवर्णप्राशनमपि रत्नादिस्नानमेव च ॥ ७ ॥ देवस्थानाभिगमनमाज्यप्राशनमेव च। एतानि मेध्यं पुरुषं कुर्वन्त्याशु न संशयः ॥ ८ ॥ न गर्व्वेण भवेत् प्राज्ञः कदाचिदपि मानवः। दीर्घमायुरथेच्छन्ति त्रिरात्रञ्चोष्णपो भवेत् ॥ ९ ॥ अदत्तस्यानुपादानं दानमध्ययनं तपः। अहिंसा सत्यमक्रोध इज्या धर्मस्य लक्षणम् ॥ १० ॥ स एव धर्मः सोऽधर्मो देशे काले प्रतिष्ठितः। आदानमनृतं हिंसा धर्मो ह्यावस्थिकः स्मृतः ॥ ११ ॥ द्विविधौ चाप्युभावेतौ धर्माधर्मौ विजानताम्। अप्रवृत्तिः प्रवृत्तिश्च द्वैविध्यं लोकवेदयोः ॥ १२ ॥ अप्रवृत्तेरमर्त्तत्वं मर्त्तत्वं कर्म्मणः फलम्। अशुभस्याशुभं विद्यात् शुभस्य शुभमेव च। एतयोश्चोभयोः स्यातां शुभाशुभतया तथा ॥ १३ ॥ दैवञ्च दैवसंयुक्तं प्राणाश्च प्राणदश्च ह। अपेक्षापूर्व्वकरणादशुभानां शुभं फलम् ॥ १४ ॥ ऊर्द्ध्वं भवति सन्देहादिह दृष्टार्थमेव च। अपेक्षापूर्व्वकरणात् प्रायश्चित्तं विधीयते ॥ १५ ॥ क्रोधमोहकृते चैव दृष्टान्तागमहेतुभिः। शरीराणामुपक्लेशो मनसश्च प्रियाप्रिये ॥ १६ ॥ तदौषधैश्च मन्त्रैश्च प्रायश्चित्तैश्च शाम्यति ॥१७॥ उपवासमेकरात्रं दण्डोत्सर्गे नराधिपः।

विशुध्येदात्मशुद्ध्यर्थं त्रिरात्रे तु पुरोहितः॥ १८॥ चयं शोकं प्रकुर्वाणो न म्रियेत यदा नरः। शस्त्रादिभिरुपाविष्टस्त्रिरात्रं तत्र निर्द्दिशेत्॥ १९॥ जातिश्रेण्यधिवासानां कुलधर्मांश्च सर्वतः। वर्ज्जयन्ति च ये धर्मं तेषां धर्मो न विद्यते॥ २०॥ दश वा वेद-शास्त्रज्ञास्त्रयो वा धर्मपाठकाः। यद्ब्रूयुः कार्य्य उत्पन्ने स धर्मो धर्मसंशये॥ २१॥ अनड्वान् मृत्तिका चैव तथा क्षुद्रपिपीलिकाः। श्लेष्मातकस्तथा विप्रैरभक्ष्यं विषमेव च॥ २२॥ अभक्ष्या ब्राह्मणै-र्मत्स्याः शल्कैर्ये वै विवर्ज्जिताः। चतुष्पात् कच्छपादन्यो मण्डूका जलजाश्च ये॥२३॥ भासा हंसाः सुपर्णाश्च चक्रवाकाः प्लवा वकाः। काको मद्गुश्च गृध्रश्च श्येनोलूकस्तथैव च॥ २४॥ क्रव्यादा दंष्ट्रिणः सर्व्वे चतुष्पात् पक्षिणश्च ये। येषाञ्चोभयतो दन्ताश्चतुर्दंष्ट्राश्च सर्व्वशः॥ २५॥ एडकाश्च खरोष्ट्रीणां सूतिकानां गवामपि। मानुषीणां मृगीणाञ्च न पिबेद्ब्राह्मणः पयः॥ २६॥ प्रेतान्नं सूतिकान्नञ्च यच्च किञ्चिदनिर्द्दशम्। अभोज्यञ्चाप्यपेयञ्च धेनोर्दुग्धमनिर्द्दशम्॥ २७॥ राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्च्चसम्। आयुः सुवर्णकारान्नमवीरायाश्च योषितः॥ २८॥ विष्ठा वार्द्धुषिकस्यान्नं गणिकान्नमथेन्द्रियम्। मृष्यन्ति ये चोपपतिं स्त्रीजितान्नञ्च सर्व्वशः॥ २९॥ दीक्षितस्य कदर्य्यस्य क्रतुविक्रयिकस्य च। तक्ष्णश्चर्म्मावकर्त्तुश्च पुंश्चल्या रजकस्य च॥ ३०॥ चिकित्सकस्य यच्चान्नमभोज्यं रक्षिणस्तथा। गणग्रामाभिशस्तानां रङ्गस्त्रीजीविनां तथा॥३१॥ परिवित्तीनां पुंसाञ्च वन्दिद्यूतविदान्तथा। वामहस्ताहृतं चान्नं भक्तं पर्य्युषितञ्च यत्॥ ३२॥ सुरानुगतमुच्छिष्टमभोज्यं शेषितञ्च यत्। पिष्टस्य चेक्षुशाकानां विकाराः पयसस्तथा॥ ३३॥ शक्तु-धानाकरम्भाणां नोपभोग्याश्चिरस्थिताः। पायसं कृसरं मांसमपू-पाश्च वृथाकृताः॥३४॥ अपेयाश्चाप्यभक्ष्याश्च ब्राह्मणैर्गृहमेधिभिः। देवानृषीन्मनुष्यांश्च पितॄन् गृह्याश्च देवताः॥ ३५॥ पूजयित्वा ततः

पश्चात् गृहस्थो भोक्तुमर्हति। यथा प्रव्रजितो भिक्षुस्तथैव स्वे गृहे वसेत् ॥ ३६ ॥ एवं वृत्तः प्रियैर्दारैः संवसन् धर्ममाप्नुयात्। न दद्यात् यशसे दानं न भयान्नोपकारिणे ॥ ३७ ॥ न नृत्यगीतशीलेषु हासकेषु च धार्म्मिकः। न मत्ते चैव नोन्मत्ते न स्तेने न च कुत्सके ॥ ३८ ॥ न वाग्मिने विवर्णे वा नाङ्गहीने न वामने। न दुर्ज्जने दौष्कुले वा व्रतैर्यो वा न संस्कृतः ॥ ३९ ॥ न श्रोत्रियमृते दानं ब्राह्मणे ब्रह्मवर्ज्जिते। असम्यक् चैव-यद्दत्तमसम्यक् च प्रतिग्रहः। उभयं स्यादनर्थाय दातुरादातुरेव च ॥ ४० ॥ यथा खदिरमालम्ब्य शिलाम्वाप्यर्णवन्तरन्। मज्जेत मज्जतस्तद्वद्दाता यश्च प्रतिग्रही ॥ ४१ ॥ काष्ठैरार्द्रैर्यथा वह्निरुपस्तीर्णो न दीप्यते। तपः स्वाध्यायचारित्रैरेवं हीनः प्रतिग्रही ॥ ४२ ॥ कपाले यद्वदापः स्युः श्वदृतौ च यथापयः। आश्रयस्थानदोषेण वृत्तहीने तथा श्रुतम् ॥ ४३ ॥ निर्मन्त्रो निर्व्रतो यः स्यादशास्त्रज्ञोऽनसूयकः। अनुक्रोशात् प्रदातव्यं हीनेष्वव्रतिकेषु च ॥ ४४ ॥ न वै देयमनुक्रोशात् दीनार्त्तातुरकेष्वपि। आप्ताचरित इत्येव धर्म इत्येव वा पुनः ॥ ४५ ॥ निष्कारणं स्मृतं दत्तं ब्राह्मणे ब्रह्मवर्ज्जिते। भवेदपात्रदोषेण न चात्रास्ति विचारणा ॥४६॥ यथा दारुमयो हस्ती यथा चर्म्ममयो मृगः। ब्राह्मणश्चानधीयानस्त्रयस्ते नाम बिभ्रति ॥ ४७ ॥ यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला। शकुनिर्वाप्यपक्षः स्यान्निर्मन्त्रो ब्राह्मणस्तथा ॥ ४८ ॥ ग्रामधान्यं यथा शून्यं यथा कूपश्च निर्ज्जलः। यथा हुतमनग्नौ च तथैव स्यान्निराकृतौ ॥ ४९ ॥ देवातानां पितृणाञ्च हव्यकव्यविनाशकः। शत्रुरर्थहरो मूर्खो न लोकान् प्राप्तुमर्हति ॥ ५० ॥ एतत्ते कथितं सर्वं यथावृत्तं युधिष्ठिर। समासेन महद्ध्येतत् श्रोतव्यं भरतर्षभ ॥५१॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि व्यासवाक्ये षट्त्रिंशोऽध्यायः ॥ ३६ ॥

युधिष्ठिर उवाच। श्रोतुमिच्छामि भगवन् विस्तरेण महामुने। राजधर्मान् द्विजश्रेष्ठ चातुर्वर्ण्यस्य चाखिलान्॥१॥ आपत्सु च यथा नीतिः प्रणेतव्या द्विजोत्तम। धर्म्यमालम्ब्य पन्थानं विजयेयं कथं महीम्॥२॥ प्रायश्चित्तकथा ह्येषा भक्ष्याभक्ष्यविवर्जिता। कौतूहलानुप्रवणा हर्षं जनयतीव मे॥३॥ धर्मचर्या च राज्यञ्च नित्यमेव विरुध्यते। एवं मुह्यति मे चेतश्चिन्तयानस्य नित्यशः॥४॥

वैशम्पायन उवाच। तमुवाच महाराजो व्यासो वेदविदाम्वरः। नारदं समभिप्रेक्ष्य सर्वज्ञानं पुरातनम्॥५॥ श्रोतुमिच्छसि चेद्धर्मं निखिलेन नराधिप। प्रैहि भीष्मं महाबाहो वृद्धं कुरुपितामहम्॥६॥ स ते धर्मरहस्येषु संशयान् मनसि स्थितान्। छेत्ता भागीरथीपुत्रः सर्वज्ञः सर्वधर्मवित्॥७॥ जनयामास यं देवी दिव्या त्रिपथगा नदी। साक्षाद्ददर्श यो देवान् सर्वानिन्द्रपुरोगमान्॥८॥ वृहस्पतिपुरोगांस्तु देवर्षीनसकृत् प्रभुः। तोषयित्वोपचारेण राजनीतिमधीतवान्॥९॥ उशना वेद यत् शास्त्रं यच्च देवगुरुर्द्विजः। यच्च धर्मं सवैयाख्यं प्राप्तवान् कुरुसत्तमः॥१०॥ भार्गवाच्च्यवनाच्चापि वेदानङ्गोपवृंहितान्। प्रतिपेदे महाबाहुर्वशिष्ठाच्चरितव्रतः॥११॥ पितामहसुतं ज्येष्ठं कुमारं दीप्ततेजसम्। अध्यात्मगतितत्त्वज्ञमुपाशिक्षत यः पुरा॥१२ मार्कण्डेयमुखात् कृत्स्नं यतिधर्ममवाप्तवान्। रामादस्त्राणि शक्राच्च प्राप्तवान् पुरुषर्षभः॥१३॥ मृत्युरात्मेच्छया यस्य जातस्य मनुजेष्वपि। यथानपत्यस्य सतः पुण्या लोका दिवि श्रुताः॥ १४॥ यस्य ब्रह्मर्षयः पुण्या नित्यमासन् सभासदः। यस्य नाविदितं किञ्चित् ज्ञानज्ञेयेषु विद्यते॥१५॥ स ते वक्ष्यति धर्मज्ञः सूक्ष्मधर्मार्थतत्त्ववित्। तमभ्येहि पुरा प्राणान् स विमुञ्चति धर्मवित्॥१६॥ एवमुक्तस्तु कौन्तेयो दीर्घप्रज्ञो महामतिः। उवाच वदतां श्रेष्ठं व्यासं सत्यवतीसुतम्॥१७॥

युधिष्ठिर उवाच। वैशसं सुमहत् कृत्वा ज्ञातीनां रोमहर्षणम्। आगस्कृत् सर्वलोकस्य पृथिवीनाशकारकः ॥ १८ ॥ घातयित्वा तमेवाजौ छलेनाजिह्मयोधिनम्। उपसंप्रष्टुमर्हामि तमहं केन हेतुना ॥ १९ ॥

वैशम्पायन उवाच। ततस्तं नृपतिश्रेष्ठं चातुर्वर्ण्यहितेप्सया। पुनराह महाबाहुर्यदुश्रेष्ठो महामतिः ॥ २० ॥

वासुदेव उवाच। नेदानीमतिनिर्बन्धं शोके त्वं कर्त्तुमर्हसि। यदाह भगवान् व्यासस्तत् कुरुष्व नृपोत्तम ॥ २१ ॥ ब्राह्मणास्त्वां महाबाहो भ्रातरश्च महौजसः। पर्ज्जन्यमिव घर्मान्ते नाथमाना उपासते ॥ २२ ॥ हतशिष्टाश्च राजानः कृत्स्नश्चैव समागतम्। चातुर्वर्ण्यं महाराज राष्ट्रन्ते कुरुजाङ्गलम् ॥ २३ ॥ प्रियार्थमपि चैतेषां ब्राह्मणानां महात्मनाम्। नियोगादस्य च गुरोर्व्यासस्यामिततेजसः ॥ २४ ॥ सुहृदामस्मदादीनां द्रौपद्याश्च परन्तप। कुरु प्रियममित्रघ्न लोकस्य च हितं कुरु ॥ २५ ॥

वैशम्पायन उवाच। एवमुक्तः स कृष्णेन राजा राजीवलोचनः। हितार्थं सर्वलोकस्य समुत्तस्थौ महामनाः ॥ २६ ॥ सोऽनुनीतो नरव्याघ्रो विष्टरश्रवसा स्वयम्। द्वैपायनेन च तथा देवस्थानेन जिष्णुना ॥ २७ ॥ एतैश्चान्यैश्च बहुभिरनुनीतो युधिष्ठिरः। व्यजहान्मानसं दुःखं सन्तापञ्च महायशाः ॥ १८ ॥ श्रुतवाक्यः श्रुतनिधिः श्रुतश्रव्यविशारदः। व्यवस्य मनसः शान्तिमगच्छत् पाण्डुनन्दनः ॥ २९ ॥ स तैः परिवृतो राजा नक्षत्रैरिव चन्द्रमाः। धृतराष्ट्रं पुरस्कृत्य स्वपुरं प्रविवेश ह ॥ ३० ॥ प्रविविक्षुः स धर्मज्ञः कुन्तीपुत्रो युधिष्ठिरः। अर्च्चयामास देवांश्च ब्राह्मणांश्च सहस्रशः ॥ ३१ ॥ ततो नवं रथं शुभ्रं कम्बलाजिनसम्वृतम्। युक्तं षोड़शभिर्गोभिः पाण्डरैः शुभलक्षणैः ॥ ३२ ॥ मन्त्रैरभ्यर्च्चितं पुण्यैःशमानश्च्स्तू बन्दिभिः। आरुरोह रथञ्चैव

सोमोऽमृतमयं यथा ॥ २३ ॥ जग्राह रश्मीन् कौन्तेयो भीमो भीमपराक्रमः । अर्जुनः पाण्डुरं छत्रं धारयामास भानुमत् ॥ २४ ॥ ध्रियमाणञ्च तच्छत्रं पाण्डुरं रथमूर्द्धनि । शुशुभे तारकाकीर्णं सितमभ्रमिवाम्बरे ॥२५॥ चामरव्यजने तस्य वीरौ जगृहतुस्तदा । चन्द्ररश्मिप्रभे शुभ्रे माद्रीपुत्रावलङ्कृते ॥ २६ ॥ ते पञ्च रथमास्थाय भ्रातरः समलङ्कृताः । भूतानीव समस्तानि राजन् ददृशिरे तदा ॥ २७ ॥ आस्थाय तु रथं शुभ्रं युक्तमश्वैर्मनोजवैः । अन्वयात् पृष्ठतो राजन् युयुत्सुः पाण्डवाग्रजम् ॥ २८ ॥ रथं हेममयं शुभ्रं शैव्यसुग्रीवयोजितम् । सह सात्यकिना कृष्णः समास्थायान्वयात् कुरून् ॥२९॥ नरयानेन तु ज्येष्ठः पिता पार्थस्य भारत । अग्रतो धर्मराजस्य गान्धारीसहितो ययौ ॥ ४० ॥ कुरुस्त्रियश्च ताः सर्वाः कुन्ती कृष्णा तथैव च । यानैरुच्चावचैर्जग्मुर्विदुरेण पुरस्कृताः ॥ ४१ ॥ ततो रथाश्च बहुला नागाश्च समलङ्कृताः । पादाताश्च हयाश्चैव पृष्ठतः समनुव्रजन् ॥ ४२ ॥ ततो वैतालिकैः सूतैर्मागधैश्च सुभाषितैः । स्तूयमानो ययौ राजा नगरं नागसाह्वयम् ॥४३॥ तत्प्रयाणं महाबाहोर्बभूवाप्रतिमं भुवि । आकुलाकुलमुत्क्रुष्टं हृष्टपुष्टजनाकुलम् ॥४४॥ अभियाने तु पार्थस्य नरैर्नगरवासिभिः । नगरं राजमार्गश्च यथावत् समलङ्कृतम् ॥ ४५ ॥ पाण्डुरेण च माल्येन पताकाभिश्च मेदिनी । संस्कृतो राजमार्गोऽभूत् धूपनैश्च प्रधूपितः ॥ ४६ ॥ अथ चूर्णैश्च गन्धानां नानापुष्पप्रियङ्गुभिः । माल्यदामभिरासक्तैराजवेश्माभिसंवृतम् ॥ ४७ ॥ कुम्भाश्च नगरद्वारि वारिपूर्णा नवा दृढाः । कन्याः सुमनसो गौराः स्थापितास्तत्र तत्र ह ॥ ४८ ॥ तथास्वलङ्कृतं द्वारं नगरं पाण्डुनन्दनः । स्तूयमानः शुभैर्वाक्यैः प्रविवेश सुहृद्वृतः ॥ ४९ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि युधिष्ठिरस्य पुरप्रवेशे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

वैशम्पायन उवाच । प्रवेशेन तु पार्थानां जनानां पुरवासिनाम् । दिदृक्षूणां सहस्राणि समाजग्मुः सहस्रशः ॥ १ ॥ स राजमार्गः शुशुभे समलङ्कृतचत्वरः । यथा चन्द्रोदये राजन् वर्द्धमानो महोदधिः ॥ २ ॥ गृहाणि राजमार्गेषु रत्नवन्ति महान्ति च । प्राकम्पन्तेव भारेण स्त्रीणां पूर्णानि भारत ॥ ३ ॥ ताः शनैरिव सव्रीडं प्रशशंसुर्युधिष्ठिरम् । भीमसेनार्जुनौ चैव माद्रीपुत्रौ च पाण्डवौ ॥ ४ ॥ धन्या त्वमसि पाञ्चालि या त्वं पुरुषसत्तमान् । उपतिष्ठसि कल्याणि महर्षीनिव गौतमी ॥ ५ ॥ तव कर्माण्यमोघानि व्रतचर्य्या च भाविनि । इति कृष्णां महाराज प्रशशंसुस्तदा स्त्रियः ॥ ६ ॥ प्रशंसावचनैस्तासां मिथः शब्दैश्च भारत । प्रीतिजैश्च तदा शब्दैः पुरमासीत् समाकुलम् ॥ ७ ॥ तमतीत्य यथायुक्तं राजमार्गं युधिष्ठिरः । अलङ्कृतं शोभमानमुपायाद्राजवेश्म ह ॥ ८ ॥ ततः प्रकृतयः सर्व्वाः पौरजानपदास्तदा । ऊचुः कर्णसुखा वाचः समुपेत्य ततस्ततः ॥ ९ ॥ दिष्ट्या जयसि राजेन्द्र शत्रूञ्छत्रुनिसूदन । दिष्ट्या राज्यं पुनः प्राप्तं धर्म्मेण च बलेन च ॥ १० ॥ भव नस्त्वं महाराज राजेह शरदां शतम् । प्रजाः पालय धर्म्मेण यथेन्द्रस्त्रिदिवं तथा ॥ ११ ॥ एवं राजकुलद्वारि मङ्गलैरभिपूजितः । आशीर्वादान् द्विजैरुक्तान् प्रतिगृह्य समन्ततः ॥ १२ ॥ प्रविश्य भवनं राजा देवराजगृहोपमम् । श्रुत्वा विजयसंयुक्तं रथात् पश्चादवातरत् ॥ १३ ॥ प्रविश्याभ्यन्तरं श्रीमान् दैवतान्यभिगम्य च । पूजयामास रत्नैश्च गन्धमाल्यैश्च सर्व्वशः ॥ १४ ॥ निश्चक्राम ततः श्रीमान् पुनरेव महायशाः । ददर्श ब्राह्मणांश्चैव सोऽभिरूपानवस्थितान् ॥१५॥ स संवृतस्तदा विप्रैराशीर्वादविवक्षुभिः । शुशुभे विमलश्चन्द्रस्तारागणवृतो यथा ॥ १६ ॥ तांस्तु वै पूजयामास कौन्तेयो विधिवद्द्विजान् । धौम्यं गुरुं पुरस्कृत्य ज्येष्ठं पितरमेव च ॥ १७ ॥ सुमनोमोदकै रत्नैर्हिरण्येन च भूरिणा ।

गोभिर्वस्त्रैश्च राजेन्द्र विविधैश्च किमिच्छकैः ॥ १८ ॥ ततः पुण्याह-घोषोऽभूत् दिवं स्तब्ध्वेव भारत । सुहृदां प्रीतिजननः पुण्यः श्रुतिसुखावहः ॥ १९ ॥ हंसवन्नेदुषां राजा द्विजानां तत्र भारतीम् । शुश्रुवे वेदविदुषां पुष्कलार्थपदाक्षराम् ॥ २० ॥ ततो दुन्दुभिनिर्घोषः शङ्खानाञ्च मनोरमः । जयं प्रवदतां तत्र स्वनः प्रादुरभून्नृप ॥ २१ ॥ निःशब्दे च स्थिते तत्र ततो विप्रजने पुनः । राजानं ब्राह्मणच्छद्मा चार्वाको राक्षसोऽब्रवीत् ॥ २२ ॥ तत्र दुर्य्योधनसखा भिक्षुरूपेण संवृतः । साक्षः शिखी त्रिदण्डी च धृष्टो विगतसाध्वसः ॥ २३ ॥ वृतः सर्वैस्तथा विप्रैराशीर्वादविवक्षुभिः । परं सहस्रै राजेन्द्र तपोनियमसंश्रितैः ॥ २४ ॥ स दुष्टः पापमाशंसुः पाण्डवानां महात्मनाम् । अनामन्त्र्यैव तान् विप्रांस्तमुवाच महीपतिम् ॥ २५ ॥

चार्वाक उवाच । इमे प्राहुर्द्विजाः सर्वे समारोप्य वचो मयि । धिग्भवन्तं कुनृपतिं ज्ञातिघातिनमस्तु वै ॥ २६ ॥ किन्तेन स्याद्धि कौन्तेय कृत्वेमं ज्ञातिसङ्क्षयम् । घातयित्वा गुरूंश्चैव मृतं श्रेयो न जीवितम् ॥ २७ ॥ इति ते वै द्विजाः श्रुत्वा तस्य दुष्टस्य रक्षसः । विव्यथुश्चुक्रुशुश्चैव तस्य वाक्यप्रधर्षिताः ॥ २८ ॥ ततस्ते ब्राह्मणाः सर्वे स च राजा युधिष्ठिरः । व्रीड़िताः परमोद्विग्नास्तूष्णीमासन् विशाम्पते ॥ २९ ॥

युधिष्ठिर उवाच । प्रसीदन्तु भवन्तो मे प्रणतस्याभियाचतः । प्रत्यासन्नव्यसनिनं न मां धिक् कर्त्तुमर्हथ ॥ ३० ॥

वैशम्पायन उवाच । ततो राजन् ब्राह्मणास्ते सर्व एव विशाम्पते । ऊचुर्नैतद्वचोऽस्माकं श्रीरस्तु तव पार्थिव ॥ ३१ ॥ जज्ञुश्चैव महात्मानस्ततस्तं ज्ञानचक्षुषा । ब्राह्मणा वेदविद्वांसस्तपोभिर्विमलीकृताः ॥ ३२ ॥

ब्राह्मणा ऊचुः । एष दुर्य्योधनसखा चार्वाको नाम राक्षसः ।

परिव्राजकरूपेण हितं तस्य चिकीर्षति ॥ ३३ ॥ न वयं ब्रूम धर्म्मात्मन् व्येतु ते भयमीदृशम्। उपतिष्ठतु कल्याणं भवन्तं भ्रातृभिः सह ॥ ३४ ॥

वैशम्पायन उवाच। ततस्ते ब्राह्मणाः सर्व्वे हुङ्कारैः क्रोधमूर्च्छिताः। निर्भर्त्सयन्तः शुचयो निजघ्नुः पापराक्षसम् ॥ ३५ ॥ स पपात विनिर्द्दग्धस्तेजसा ब्रह्मवादिनाम्। महेन्द्राशनिनिर्द्दग्धः पादपोऽङ्कुरवानिव ॥ ३६ ॥ पूजिताश्च ययुर्व्विप्रा राजानमभिनन्द्य तम्। राजा च हर्षमापेदे पाण्डवः ससुहृज्जनः ॥ ३७ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि चार्व्वाकवधे अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

वैशम्पायन उवाच। ततस्तत्र तु राजानं तिष्ठन्तं भ्रातृभिः सह। उवाच देवकीपुत्रः सर्व्वदर्शी जनार्द्दनः ॥ १ ॥

वासुदेव उवाच। ब्राह्मणास्तात लोकेऽस्मिन्नर्च्चनीयाः सदा मम। एते भूमिचरा देवा वाग्विषाः सुप्रसादकाः ॥ २ ॥ पुरा कृतयुगे राजंश्चार्व्वाको नाम राक्षसः। तपस्तेपे महाबाहो वदर्य्यां बहुवार्षिकम् ॥ ३ ॥ वरेण छन्द्यमानश्च ब्रह्मणा च पुनः पुनः। अभयं सर्व्वभूतेभ्यो वरयामास भारत ॥ ४ ॥ द्विजावमानादन्यत्र प्रादाद्वरमनुत्तमम्। अभयं सर्व्वभूतेभ्यो ददौ तस्मै जगत्पतिः ॥ ५ ॥ स तु लब्धवरः पापो देवानमितविक्रमः। राक्षसस्तापयामास तीव्रकर्म्मा महाबलः ॥ ६ ॥ ततो देवाः समेताश्च ब्रह्माणमिदमब्रुवन्। बधाय रक्षसस्तस्य बलविप्रकृतास्तदा ॥ ७ ॥ तानुवाचाव्ययो देवो विहितस्तत्र वै मया। यथास्य भविता मृत्युरचिरेणेति भारत ॥ ८ ॥ राजा दुर्य्योधनो नाम सखास्य भविता नृषु। तस्य स्नेहावबद्धोऽसौ ब्राह्मणानवमंस्यते ॥ ९ ॥ तत्र नं रुषिता

विप्रा विप्रकारप्रधर्षिताः । धक्ष्यन्ति वाग्बलां पापं ततो नाशं गमिष्यति ॥ १० ॥ स एष निहतः शेते ब्रह्मदण्डेन राक्षसः । चार्वाको नृपतिश्रेष्ठ मा शुचो भरतर्षभ ॥ ११ ॥ हतास्ते क्षत्रधर्मेण ज्ञातयस्तव पार्थिव । स्वर्गताश्च महात्मानो वीराः क्षत्रियपुङ्गवाः ॥ १२ ॥ स त्वमातिष्ठ कार्य्याणि मा तेऽभूद्ग्लानिरच्युत । शत्रून् जहि प्रजा रक्ष द्विजांश्च परिपूजय ॥ १३ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि चार्वाकवधोपायकथने एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

वैशम्पायन उवाच । ततः कुन्तीसुतो राजा गतमन्युर्गतज्वरः । काञ्चने प्राङ्मुखो हृष्टो न्यषीदत् परमासने ॥ १ ॥ तमेवाभिमुखौ पीठे प्रदीप्ते काञ्चने शुभे । सात्यकिर्वासुदेवश्च निषीदतुररिन्दमौ ॥ २ ॥ मध्ये कृत्वा तु राजानं भीमसेनार्जुनावुभौ । निषीदतुर्महात्मानौ श्लक्ष्णयोर्मणिपीठयोः ॥ ३ ॥ दान्ते सिंहासने शुभ्रे जाम्बूनदविभूषिते । पृथापि सहदेवेन सहास्ते नकुलेन च ॥ ४ ॥ सुधर्मा विदुरो धौम्यो धृतराष्ट्रश्च कौरवः । निषेदुर्ज्वलनाकारेष्वासनेषु पृथक् पृथक् ॥ ५ ॥ युयुत्सुः सञ्जयश्चैव गान्धारी च यशस्विनी । धृतराष्ट्रो यतो राजा ततः सर्वे समाविशन् ॥ ६ ॥ तत्रोपविष्टो धर्मात्मा श्वेताः सुमनसोऽस्पृशत् । स्वस्तिकानक्षतान् भूमिं सुवर्णं रजतं मणिम् ॥ ७ ॥ ततः प्रकृतयः सर्वाः पुरस्कृत्य पुरोहितम् । ददृशुर्धर्मराजानमादाय बहुमङ्गलम् ॥ ८ ॥ पृथिवीञ्च सुवर्णञ्च रत्नानि विविधानि च । आभिषेचनिकं भाण्डं सर्वसम्भारसम्भृतम् ॥ ९ ॥ काञ्चनौदुम्बरास्तत्र राजताः पृथिवीमयाः । पूर्णाः कुम्भाः सुमनसो लाजा बर्हींषि गोरसम् ॥ १० ॥ शमीपिप्पलपालाशसमिधो मधुसर्पिषी । स्रुव औदुम्बरः शङ्खास्तथा

हेमविभूषितः ॥ ११ ॥ दाशार्हेणाभ्यनुज्ञातस्तत्र धौम्यः पुरोहितः। प्रागुदक्प्लवने वेदीं लक्षणेनोपलिख्य च ॥ १२ ॥ व्याघ्रचर्मोत्तरे शुक्ले सर्वतोभद्र आसने। दृढ़पादप्रतिष्ठाने हुताशनसमत्विषि ॥ १३ ॥ उपवेश्य महात्मानं कृष्णाञ्च द्रुपदात्मजाम्। जुहाव पावकं धीमान् विधिमन्त्रपुरस्कृतम् ॥ १४ ॥ तत उत्थाय दाशार्हः शङ्खमादाय पूजितम्। अभ्यषिञ्चत् पतिं पृथ्व्याः कुन्तीपुत्रं युधिष्ठिरम्। धृतराष्ट्रश्च राजर्षिः सर्वाः प्रकृतयस्तथा ॥१५॥ अनुज्ञातोऽथ कृष्णेन भ्रातृभिः सह पाण्डवः। पाञ्चजन्याभिषिक्तश्च राजामृतसुखोऽभवत् ॥ १६ ॥ ततोऽनुवादयामासुः पणवानकदुन्दुभीन्। धर्मराजोऽपि तत्सर्वं प्रतिजग्राह धर्म्मतः। पूजयामास तांश्चापि विधिवद्भूरिदक्षिणः ॥ १७ ॥ ततो निष्कसहस्रेण ब्राह्मणान् स्वस्तिवाचयन्। वेदाध्ययनसम्पन्नान् धृतिशीलसमन्वितान् ॥ १८ ॥ ते प्रीता ब्राह्मणा राजन् स्वस्त्यूचुर्जयमेव च। हंसा इव च नर्द्दन्तः प्रशशंसुर्युधिष्ठिरम् ॥ १९ ॥ युधिष्ठिर महावाहो दिष्ट्या जयसि पाण्डव। दिष्ट्या स्वधर्मं प्राप्तोऽसि विक्रमेण महाद्युते ॥ २० ॥ दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः। त्वञ्चापि कुशली राजन् माद्रीपुत्रौ च पाण्डवौ ॥२१॥ मुक्ता वीरक्षयात्तस्मात् संग्रामाद्विजितद्विषः। क्षिप्रमुत्तरकार्य्याणि कुरु सर्वाणि भारत ॥ २२ ॥ ततः प्रत्यर्च्चितः सद्भिर्धर्मराजो युधिष्ठिरः। प्रतिपेदे महद्राज्यं सुहृद्भिः सह भारत ॥ २३ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि युधिष्ठिरराज्याभिषेके चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥

---

वैशम्पायन उवाच । प्रकृतीनान्तु तद्वाक्यं देशकालोपबृंहितम् । श्रुत्वा युधिष्ठिरो राजा सोऽन्तरं प्रत्यभाषत ॥ १ ॥ धन्याः पाण्डुसुता नूनं तेषां ब्राह्मणपुङ्गवाः । तथ्यान् वाप्यथ वातथ्यान् गुणानाहुः समागताः ॥ २ ॥ अनुग्राह्या वयं नूनं भवतामिति मे मतिः । यदेवं गुणसम्पन्नानस्मान् ब्रूथ विमत्सराः ॥ ३ ॥ धृतराष्ट्रो महाराज पिता मे दैवतं परम् । शासनेऽस्य प्रिये चैव स्थेयं मत्प्रियकाङ्क्षिभिः ॥ ४ ॥ एतदर्थं हि जीवामि कृत्वा ज्ञातिवधं महत् । अस्य शुश्रूषणं कार्य्यं मया नित्यमतन्द्रिणा ॥ ५ ॥ यदि चाहमनुग्राह्यो भवतां सुहृदान्तथा । धृतराष्ट्रे यथापूर्वं वृत्तिं वर्त्तितुमर्हथ ॥ ६ ॥ एष नाथो हि जगतो भवताञ्च मया सह । अस्यैव पृथिवी कृत्स्ना पाण्डवाः सर्व एव च ॥ ७ ॥ एतन्मनसि कर्त्तव्यं भवद्भिर्वचनं मम । अनुज्ञाप्याथ तान् राजा यथेष्टं गम्यतामिति ॥ ८ ॥ पौरजानपदान् सर्वान् विसृज्य कुरुनन्दनः । यौवराज्येन कौन्तेयं भीमसेनमयोजयत् ॥ ९ ॥ मन्त्रे च निश्चये चैव षाड्गुण्यस्य च चिन्तने । विदुरं बुद्धिसम्पन्नं प्रीतिमान् स समादिशत् ॥ १० ॥ कृताकृतपरिज्ञाने तथायव्ययचिन्तने । सञ्जयं योजयामास वृद्धं सर्वगुणैर्युतम् ॥ ११ ॥ बलस्य परिमाणे च भक्तवेतनयोस्तथा । नकुलं व्यादिशद्राजा कर्मणाञ्चान्ववेक्षणे ॥ १२ ॥ परचक्रोपरोधे च दुष्टानाञ्चावमर्द्दने । युधिष्ठिरो महाराज फाल्गुनं व्यादिदेश ह ॥ १३ ॥ द्विजानां दैवकार्य्येषु कार्य्येष्वन्येषु चैव ह । धौम्यं पुरोधसां श्रेष्ठं नित्यमेव समादिशत ॥ १४ ॥ सहदेवं समीपस्थं नित्यमेव समादिशत् । तेन गोप्यो हि नृपतिः सर्वावस्थो विशाम्पते ॥ १५ ॥ यान् यानमन्यद्योग्यांश्च येषु येष्विह कर्मसु । तांस्तांस्तेष्वेव युयुजे प्रीयमाणो महीपतिः ॥ १६ ॥ विदुरं सञ्जयञ्चैव युयुत्सुञ्च महामतिम् । अब्रवीत् परवीरघ्नो धर्मात्मा धर्मवत्सलः ॥ १७ ॥ उत्थायो-

स्थाय तत् कार्य्यमस्य राज्ञः पितुर्मम । सर्वं भवद्भिः कर्त्तव्यमप्रमत्तैर्यथातथम् ॥ १८ ॥ पौरजानपदानाञ्च यानि कार्य्याणि सर्वशः । राजानं समनुज्ञाप्य तानि कार्य्याणि भागशः ॥ १९ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि भीमादिकार्य्यनियोगे एकचत्वारिंशत्तमोऽध्यायः ॥ ४१ ॥

---

वैशम्पायन उवाच । ततो युधिष्ठिरो राजा ज्ञातीनां ये हता युधि । श्राद्धानि कारयामास तेषां पृथगुदारधीः ॥ १ ॥ धृतराष्ट्रो ददौ राजा पुत्राणामौर्द्ध्वदेहिकम् । सर्वकामगुणोपेतमन्नं गाश्च धनानि च । रत्नानि च विचित्राणि महार्हाणि महायशाः ॥ २ ॥ युधिष्ठिरस्तु द्रोणस्य कर्णस्य च महात्मनः । धृष्टद्युम्नाभिमन्युभ्यां हैड़िम्बस्य च रक्षसः । विराटप्रभृतीनाञ्च सुहृदामुपकारिणाम् । द्रुपदद्रौपदेयानां द्रौपद्या सहितो ददौ ॥ ३ ॥ ब्राह्मणानां सहस्राणि पृथगेकैकमुद्दिशन् । धनैरत्नैश्च गोभिश्च वस्त्रैश्च समतर्पयत् ॥ ४ ॥ ये चान्ये पृथिवीपाला येषां नास्ति सुहृज्जनः । उद्दिश्योद्दिश्य तेषाञ्च चक्रे राजौर्द्ध्वदेहिकम् ॥ ५ ॥ सभाः प्रपाश्च विविधास्तड़ागानि च पाण्डवः । सुहृदां कारयामास सर्वेषामौर्द्ध्वदेहिकम् ॥ ६ ॥ स तेषामनृणो भूत्वा गत्वा लोकेष्ववाच्यताम् । कृतकृत्योऽभवद्राजा प्रजा धर्मेण पालयन् ॥ ७ ॥ धृतराष्ट्रं यथापूर्वं गान्धारीं विदुरं तथा । सर्वांश्च कौरवान्मान्यान् भृत्यांश्च समपूजयत् ॥ ८ ॥ याश्च तत्र स्त्रियः काश्चिद्धतवीरा हतात्मजाः । सर्वास्ताः कौरवो राजा सम्पूज्यापालयत् घृणी ॥ ९ ॥ दीनान्धकृपणानाञ्च गृहाच्छादनभोजनैः । आनृशंस्यपरो राजा चकारानुग्रहं प्रभुः ॥ १० ॥ स विजित्य

महीं कृत्स्नामानृण्यं प्राप्य वैरिषु। निःसपत्नः सुखी राजा विजहार युधिष्ठिरः ॥ ११ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि युद्धहतानां श्राद्धक्रियोपाख्याने द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

वैशम्पायन उवाच। अभिषिक्तो महाप्राज्ञो राज्यं प्राप्य युधिष्ठिरः। दाशार्हं पुण्डरीकाक्षमुवाच प्राञ्जलिः शुचिः ॥ १ ॥ तव कृष्ण प्रसादेन नयेन च बलेन च। बुद्ध्या च यदुशार्दूल तथा विक्रमणेन च ॥ २ ॥ पुनः प्राप्तमिदं राज्यं पितृपैतामहं मया। नमस्ते पुण्डरीकाक्ष पुनः पुनररिन्दम ॥ ३ ॥ त्वामेकमाहुः पुरुषं त्वामाहुः शाश्वतां गतिम्। नामभिस्त्वां बहुविधैः स्तुवन्ति प्रयता द्विजाः ॥ ४ ॥ विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन् विश्वसम्भव। विष्णो जिष्णो हरे कृष्ण वैकुण्ठ पुरुषोत्तम ॥ ५ ॥ अदित्याः सप्तधा त्वन्तु पुराणे गर्भतां गतः। पृश्निगर्भमेवैकस्त्रियुगं त्वां वदन्त्यपि ॥ ६ ॥ शुचिश्रवा हृषीकेशो घृतार्च्चिर्हंस उच्यसे। त्रिचक्षुः शम्भुरेकस्त्वं विभुर्दामोदरोऽपि च ॥ ७ ॥ वराहोऽग्निर्बृहद्भानुर्वृषभस्तार्क्ष्यलक्षणः। अनीकसाहः पुरुषः शिपिविष्ट उरुक्रमः ॥ ८ ॥ वरिष्ठ उग्रसेनानीः सत्यो वाजसनिर्गुहः। अच्युतश्च्यावनोऽरीणां संस्कृतिर्विकृतिर्वृषः ॥ ९ ॥ ऊर्द्ध्ववर्त्मा त्वमेवाद्रिर्वृषदर्भो वृषाकपिः। सिन्धुर्विधर्मस्त्रिककुत् त्रिधामा त्रिदिवाच्युतः ॥ १० ॥ सम्राट् विराट् स्वराट् चैव सुरराजो भवोद्भवः। विभुर्भूरभिभूः कृष्णः कृष्णवर्त्मा त्वमेव च ॥ ११ ॥ स्विष्टकृद्भिषजावर्त्तः कपिलस्त्वञ्च वामनः ॥ १२ ॥ यज्ञो ध्रुवः पतङ्गश्च यज्ञसेनस्त्वमुच्यसे। शिखण्डी नहुषो बभ्रुर्दिवस्पृक् त्वं पुनर्वसुः ॥ १३ ॥ सुवभ्रुरुक्मयज्ञश्च सुषेणो दुन्दुभिस्तथा।

गभस्तिनेमि श्रीपद्मः पुष्करः पुष्पधारणः ॥ १४ ॥ धातुर्विभुः सर्वंसूक्ष्मश्चासित्वञ्चैव पठ्यसे । अम्भोनिधिस्त्वं ब्रह्मा त्वं पवित्रं धाम धामवित् । हिरण्यगर्भं त्वामाहुः स्वधा स्वाहा च केशवः ॥ १५ ॥ योनिस्त्वमस्य प्रलयश्च कृष्ण त्वमेवेदं सृजसि विश्वमग्रे । विश्वञ्चेदं त्वद्वशे विश्वयोने नमोऽस्तु ते शार्ङ्गचक्रासिपाणे ॥ १६ ॥ एवं स्तुतो धर्मराजेन कृष्णः सभामध्ये प्रीतिमान् पुष्कराक्षः । तमभ्यनन्दद्भारतं पुष्कलाभिर्वाग्भिर्ज्येष्ठं पाण्डवं यादवाग्रः ॥१७॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि युधिष्ठिरस्तुतौ त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

वैशम्पायन उवाच । ततो विसर्ज्जयामास सर्वाः प्रकृतयो नृपः । विविशुश्चाभ्यनुज्ञाता यथा स्वानि गृहाणि ते ॥ १ ॥ ततो युधिष्ठिरो राजा भीमं भीमपराक्रमम् । सान्त्वयन्नब्रवीत् श्रीमानर्जुनं यमजौ तथा ॥ २ ॥ शत्रुभिर्विविधैः शस्त्रैः क्षतदेहा महारणे । श्रान्ता भवन्त सुभृशं तापिताः शोकमन्युभिः । ३ ॥ अरण्ये दुःखवसतीर्मत्कृते भरतर्षभाः । भवद्भिरनुभूता हि यथा कुपुरुषैस्तथा ॥ ४ ॥ यथा सुखं यथायोषं जयोऽयमनुभूयताम् । विश्रान्तान् लब्धविज्ञानान् श्वः समेतास्मि वः पुनः ॥ ५ ॥ ततो दुर्य्योधनगृहं प्रासादैरुपशोभितम् । बहुरत्नसमाकीर्णं दासीदाससमाकुलम् ॥ ६ ॥ धृतराष्ट्राभ्यनुज्ञातं भ्रात्रा दत्तं वृकोदरः । प्रतिपेदे महाबाहुर्मन्दिरं मघवानिव ॥ ७ ॥ यथा दुर्य्योधनगृहं तथा दुःशासनस्य तु । प्रासादमालासंयुक्तं हेमतोरणभूषितम् ॥ ८ ॥ दासीदाससुसंपूर्णं प्रभूतधनधान्यवत् । प्रतिपेदे महाबाहुरर्जुनो राजशासनात् ॥ ९ ॥ दुर्म्मर्षणस्य भवनं दुःशासनगृहाद्वरम् । कुवेरभवनप्रख्यं मणिहेमविभूषितम् ॥ १० ॥ नकुलाय वरार्हाय

कल्पिताय महावने। ददौ प्रीतो महाराज धर्म्मपुत्रो युधिष्ठिरः ॥ ११ ॥ दुर्मुखस्य च वेश्माग्र्यं श्रीमत् कनकभूषणम्। पूर्णं पद्म-दलाक्षीणां स्त्रीणां शयनसङ्कुलम् ॥ १२ ॥ प्रददौ सहदेवाय सततं प्रियकारिणे। मुमुदे तच्च लब्ध्वा स कैलासं धनदो यथा ॥ १३ ॥ युयुत्सुर्विदुरश्चैव सञ्जयश्च विशाम्पते। सुधर्म्मा चैव धौम्यश्च यथास्वं जग्मुरालयान् ॥ १४ ॥ सह सात्यकिना शौरि-रर्ज्जुनस्य निवेशनम्। विवेश पुरुषव्याघ्रो व्याघ्रो गिरिगुहामिव ॥ १५ ॥ तत्र भक्ष्यान्नपानैस्ते मुदिताः सुसुखोषिताः। सुखप्रबुद्धा राजानमुपतस्थुर्युधिष्ठिरम् ॥ १६ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि भीमादीनां गृहविभागे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

जनमेजय उवाच। प्राप्य राज्यं महाबाहुर्धर्मपुत्रो युधि-ष्ठिरः। यदन्यदकरोद्विप्र तन्मे वक्तुमिहार्हसि ॥ १ ॥ भगवान् वा हृषीकेशस्त्रैलोक्यस्य परो गुरुः। ऋषे यदकरोद्वीरस्तच्च व्याख्यातुमर्हसि ॥ २ ॥

वैशम्पायन उवाच। शृणु तत्त्वेन राजेन्द्र कीर्त्त्यमानं मया-नघ। वासुदेवं पुरस्कृत्य यदकुर्वत पाण्डवाः ॥ ३ ॥ प्राप्य राज्यं महाराज कुन्तीपुत्रो युधिष्ठिरः। चातुर्वर्ण्यं यथायोग्यं स्वे स्वे स्थाने न्यवेशयत् ॥ ४ ॥ ब्राह्मणानां सहस्रञ्च स्नातकानां महा-त्मनाम्। सहस्रं निष्कमेकैकं दापयामास पाण्डवः ॥ ५ ॥ तथा-नुजीविनो भृत्यान् संश्रितानतिथीनपि। कामैः सन्तर्पयामास कृपणांस्तर्ककानपि ॥ ६ ॥ पुरोहिताय धौम्याय प्रादादयुतशः स गाः। धनं सुवर्णं रजतं वासांसि विविधान्यपि ॥ ७ ॥ कृपाय च महाराज गुरुवृत्तिमवर्त्तत। विदुराय च राजासौ पूजां चक्रे

व्रतव्रतः ॥ ८ ॥ भक्ष्यान्नपानैर्विविधैर्वासोभिः शयनासनैः । सर्वान् सन्तोषयामास संश्रितान् ददताम्वरः ॥ ९ ॥ लब्धप्रशमनं कृत्वा स राजा राजसत्तम । युयुत्सोर्धार्त्तराष्ट्रस्य पूजां चक्रे महायशाः ॥ १० ॥ धृतराष्ट्राय तद्राज्यं गान्धार्य्यै विदुराय च । निवेद्य सुस्थवद्राजा सुखमास्ते युधिष्ठिरः ॥ ११ ॥ तथा सर्वं सनगरं प्रसाद्य भरतर्षभ । वासुदेवं महात्मानमभ्यगच्छत् कृताञ्जलिः ॥ १२ ततो महति पर्य्यङ्के मणिकाञ्चनभूषिते । ददर्श कृष्णमासीनं नीलमेघसमद्युतिम् ॥ १३ ॥ जाज्वल्यमानं वपुषा दिव्याभरणभूषितम् । पीतकौशेयवसनं हेम्नेवोपगतं मणिम् ॥ १४ ॥ कौस्तुभेनोरसिस्थेन मणिनाभिविराजितम् । उद्यतेवोदयं शैलं सूर्य्येणाभिविराजितम् ॥ १५ ॥ नौपम्यं विद्यते तस्य त्रिषु लोकेषु किञ्चन । सोऽभिगम्य महात्मानं विष्णुं पुरुषविग्रहम् ॥ १६ ॥ उवाच मधुरं राजा स्मितपूर्वमिदं तदा । सुखेन ते निशा कच्चित् व्युष्टा बुद्धिमताम्वर ॥ १७ ॥ कच्चित् ज्ञानानि सर्वाणि प्रसन्नानि तवाच्युत । तथैवोपश्रिता देवी बुद्धिर्बुद्धिमताम्वर ॥ १८ ॥ वयं राज्यमनुप्राप्ताः पृथिवी च वशे स्थिता । तवप्रसादाद्भगवंस्त्रिलोकगतिविक्रम । जयं प्राप्ता यशश्चाग्र्यं न च धर्मच्युता वयम् ॥ १९ ॥ तन्तथा भाषमाणन्तु धर्मराजमरिन्दमम् । नोवाच भगवान् किञ्चित् ध्यानमेवान्वपद्यत ॥ २० ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि युधिष्ठिरप्रश्ने पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

युधिष्ठिर उवाच । किमिदं परमाश्चर्यं ध्यायस्यमितविक्रम । कच्चिल्लोकत्रयस्यास्य स्वस्ति लोकपरायण ॥ १ ॥ चतुर्थं ध्यानमार्ग-

न्त्वमालम्बत्र पुरुषर्षभ। अपक्रान्तो यतो देवस्तेन मे विस्मितं मनः ॥ २ ॥ निगृहीतो हि वायुस्ते पञ्चकर्मा शरीरगः। इन्द्रियाणि प्रसन्नानि मनसि स्थापितानि ते ॥ ३ ॥ वाक् च सत्त्वञ्च गोविन्द बुद्धौ सन्वेशितानि ते। सर्वे चैव गुणा देव क्षेत्रे क्षेत्रे निवेशिताः ॥ ४ ॥ नेङ्गन्ति तव रोमाणि स्थिरा बुद्धिस्तथा मनः। काष्ठकुड्यशिलाभूतो निरीहश्चासि माधव ॥ ५ ॥ यथा दीपो निवातस्थो निरिङ्गो ज्वलते पुनः। तथासि भगवन् देव पाषाण इव निश्चलः ॥६॥ यदि श्रोतुमिहार्हामि न रहस्यञ्च ते यदि। छिन्धि मे संशयं देव प्रपन्नायाभियाचते ॥ ७ ॥ त्वं हि कर्त्ता विकर्त्ता च क्षरञ्चैवाक्षरञ्च ह। अनादिनिधनश्चाद्यस्त्वमेव पुरुषोत्तम ॥८॥ त्वत्प्रपन्नाय भक्ताय शिरसा प्रणताय च। ध्यानस्यास्य यथा तत्त्वं ब्रूहि धर्मभृताम्वर ॥ ९ ॥ ततः स्वे गोचरे न्यस्य मनोबुद्धीन्द्रियाणि सः। स्मितपूर्वमुवाचेदं भगवान् वासवानुजः ॥ १० ॥

वासुदेव उवाच। शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः। मान्धयाति पुरुषव्याघ्रस्ततो मे तद्गतं मनः ॥ ११ ॥ यस्य ज्यातलनिर्घोषं विस्फूर्ज्जितमिवाशनेः। न सेहे देवराजोऽपि तमस्मि मनमागतः ॥ १२ ॥ येनाभिजित्य तरसा समस्तं राजमण्डलम्। ऊढास्तिस्रस्तु ताः कन्यास्तमस्मि मनसा गतः ॥ १३ ॥ त्रयोविंशतिरात्रं यो योधयामास भार्गवम्। न च रामेण निस्तीर्णस्तमस्मि मनसागतः ॥ १४ ॥ एकीकृत्येन्द्रियग्रामं मनः संयम्य मेधया। शरणं मामुपागच्छत्ततो मे तद्गतं मनः ॥ १५ ॥ यं गङ्गा गर्भविधिना धारयामास पार्थिव। वशिष्ठशिष्यं तं तात तमस्मि मनसा गतः ॥ १६ ॥ दिव्यास्त्राणि महातेजा यो धारयति बुद्धिमान्। साङ्गांश्च चतुरो वेदांस्तमस्मि मनसागतः ॥ १७ ॥ रामस्य दयितं शिष्यं जामदग्न्यस्य पाण्डव। आधारं सर्वविद्यानां तमस्मि मनसागतः ॥ १८ ॥ स हि भूतं भविष्यच्च भवच्च भरतर्षभ। वेत्ति

धर्म्मविदां श्रेष्ठं तमस्मि मनसा गतः॥ १९॥ तस्मिन् हि पुरुष-
व्याघ्रे कर्म्मभिः स्वैर्द्दिवं गते। भविष्यति मही पार्थ नष्टचन्द्रेव
शर्व्वरी॥ २०॥ तद्युधिष्ठिर गाङ्गेयं भीष्मं भीमपराक्रमम्।
अभिगम्योपसंगृह्य पृच्छ यत्ते मनोगतम्॥ २१॥ चातुर्विद्यं चातु-
र्होत्रं चातुराश्रम्यमेव च। राजधर्मांश्च निखिलान् पृच्छैनं
पृथिवीपते॥ २२॥ तस्मिन्नस्तमिते भीष्मे कौरवाणां धुरन्धरे।
ज्ञानान्यस्तं गमिष्यन्ति तस्मात्त्वां चोदयाम्यहम्॥ २३॥ तच्छ्रुत्वा
वासुदेवस्य तथ्यं वचनमुत्तमम्। साश्रुकण्ठः स धर्मज्ञो जनार्द्दन-
मुवाच ह॥ २४॥ यद्भवानाह भीष्मस्य प्रभावं प्रति माधव।
तथा तन्नात्र सन्देहो विद्यते मम माधव॥ २५॥ महाभाग्यञ्च
भीष्मस्य प्रभावश्च महाद्युतेः। श्रुतं मया कथयतां ब्राह्मणानां
महात्मनाम्॥ २६॥ भवांश्च कर्त्ता लोकानां यद्ब्रवीत्यरिसूदन।
तथा तदनभिध्येयं वाक्यं यादवनन्दन॥ २७॥ यदि त्वनुग्रहवती
बुद्धिस्ते मयि माधव। त्वामग्रतः पुरस्कृत्य भीष्मं यास्यामहे
वयम्॥ २८॥ आवृत्ते भगवत्यर्के स हि लोकान् गमिष्यति।
त्वद्दर्शनं महाबाहो तस्मादर्हति कौरवः॥ २९॥ तव चाद्यस्य
देवस्य चरस्यैवाचरस्य च। दर्शनं तस्य लाभः स्यात् त्वं हि
ब्रह्ममयो निधिः॥ ३०॥

वैशम्पायन उवाच। श्रुत्वैवं धर्मराजस्य वचनं मधुसूदनः।
पार्श्वस्थं सात्यकिं प्राह रथो मे युज्यतामिति॥ ३१॥ सात्यकि-
स्त्वाशु निष्क्रम्य केशवस्य समीपतः। दारुकं प्राह कृष्णस्य युज्यतां
रथ इत्युत॥ ३२॥ स सात्यकेराशु वचो निशम्य रथोत्तमं
काञ्चनभूषिताङ्गम्। मसारगल्वर्कमयैर्विभङ्गैर्विभूषितं हेमनिबद्ध-
चक्रम्॥ ३३॥ दिवाकरांशुप्रभमाशुगामिनं विचित्रनानामणि-
भूषितान्तरम्। नवोदितं सूर्य्यमिव प्रतापिनं विचित्रतार्क्ष्य-
ध्वजिनं पताकिनम्॥ ३४॥ सुग्रीवशैव्यप्रमुखैर्वराश्वैर्मनोजवैः

काञ्चनभूषिताङ्गैः। संयुक्तमावेदयदच्युताय कृताञ्जलिर्दारुको राजसिंह ॥ २५ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि महापुरुषस्तवोपाख्याने षट्चत्वारिंशत्तमोऽध्यायः ॥ ४६ ॥

---

जनमेजय उवाच। शरतल्पे शयानस्तु भरतानां पितामहः। कथमुत्सृष्टवान् देहं कञ्च योगमधारयत् ॥

वैशम्पायन उवाच। शृणुष्वावहितो राजन् शुचिर्भूत्वा समाहितः। भीष्मस्य कुरुशार्दूल देहोत्सर्गं महात्मनः ॥ २ ॥ निवृत्तमात्रे त्वयने उत्तरे वै दिवाकरे। समावेशयदात्मानमात्मन्येव समाहितः ॥ ३ ॥ विकीर्णांशुरिवादित्यो भीष्मः शरशतैश्चितः। शुशुभे परया लक्ष्म्या वृतो ब्राह्मणसत्तमैः ॥ ४ ॥ व्यासेन वेदविदुषा नारदेन सुरर्षिणा। देवस्थानेन वात्स्येन तथाश्मकसुमन्तुना ॥ ५ ॥ तथा जैमिनिना चैव पैलेन च महात्मना। शाण्डिल्यदेवराताभ्यां मैत्रेयेण च धीमता ॥ ६ ॥ असितेन वशिष्ठेन कौशिकेन महात्मना। हारीतलोमशाभ्याञ्च तथात्रेयेण धीमता ॥ ७ ॥ बृहस्पतिश्च शुक्रश्च च्यवनश्च महामुनिः। सनत्कुमारः कपिलो वाल्मीकिस्तुम्बुरुः कुरुः ॥ ८ ॥ मौद्गल्यो भार्गवो रामस्तृणबिन्दुर्महामुनिः। पिप्पलादोऽथ वायुश्च सम्वर्त्तः पुलहः कठः ॥ ९ ॥ काश्यपश्च पुलस्त्यश्च क्रतुर्दक्षः पराशरः। मरीचिरङ्गिराः काश्यो गौतमो गालवो मुनिः ॥ १० ॥ धौम्यो विभाण्डो माण्डव्यो धौम्रः कृष्णानुभौतिकः। उलूकः परमो विप्रो मार्कण्डेयो महामुनिः। भास्करिः पूरणः कृष्णः सूतः परमधार्मिकः ॥ ११ ॥ एतैश्चान्यैर्मुनिगणैर्महाभागैर्महात्मभिः। श्रद्धादमशमोपेतैर्वृतश्चन्द्र इव ग्रहैः ॥ १२ ॥ भीष्मः स पुरुषव्याघ्रः कर्मणा

मनसा गिरा। भरतस्यगतः कृष्णं प्रदध्यौ प्राञ्जलिः शुचिः ॥ १३ ॥
स्वरेण हृष्टपुष्टेन तुष्टाव मधुसूदनम्। योगेश्वरं पद्मनाभं विष्णुं
जिष्णुं जगत्पतिम् ॥ १४ ॥ कृताञ्जलिपुटो भूत्वा वाग्विदां प्रवरः
प्रभुः। भीष्मः परमधर्मात्मा वासुदेवमथास्तुवत् ॥ १५ ॥

भीष्म उवाच। आरिराधयिषुः कृष्णं वाचं जिगदिषामि
याम्। तया व्याससमासिन्या प्रीयतां पुरुषोत्तम ॥ १६ ॥ शुचिं
शुचिपदं हंसं तत्पदं परमेष्ठिनम्। युक्त्वा सर्वात्मनात्मानं तं प्रपद्ये
प्रजापतिम् ॥ १७ ॥ अनाद्यन्तं परं ब्रह्म न देवा नर्षयो विदुः।
एकोऽयं वेद भगवान् धाता नारायणो हरिः ॥ १८ ॥ नारायणा-
दृषिगणास्तथा सिद्धमहोरगाः। देवा देवर्षयश्चैव यं विदुः
परमव्ययम् ॥ १९ ॥ देवदानवगन्धर्वा यक्षराक्षसपन्नगाः। यं न
जानन्ति को ह्येष कुतो वा भगवानिति ॥ २० ॥ यस्मिन्विश्वानि
भूतानि तिष्ठन्ति च विशन्ति च। गुणभूतानि भूतेशे सूत्रे मणि-
गणा इव ॥ २१ ॥ यस्मिन्नित्ये तते तन्तौ दृढे स्रगिव तिष्ठति।
सदसद्ग्रथितं विश्वं विश्वाङ्गे विश्वकर्मणि ॥ २२ ॥ हरिं सहस्र-
शिरसं सहस्रचरणेक्षणम्। सहस्रबाहुमुकुटं सहस्रवदनोज्ज्वलम्।
प्राहुर्नारायणं देवं यं विश्वस्य परायणम् ॥ २३ ॥ अणीयसा-
मणीयांसं स्थविष्ठञ्च स्थवीयसाम्। गरीयसां गरिष्ठञ्च श्रेष्ठञ्च
श्रेयसामपि ॥ २४ ॥ यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च।
गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ॥ २५ ॥ चतुर्भिश्चतुरा-
त्मानं सत्त्वस्थं सात्वतां पतिम्। यं दिव्यैर्देवमर्चन्ति गुह्यैः परम-
नामभिः ॥ २६ ॥ यस्मिन्नित्यं तपस्तप्तं तदङ्गेष्वनुतिष्ठति सर्वात्मा
सर्ववित् सर्वः सर्वज्ञः सर्वभावनः ॥ २७ ॥ यं देवं देवकी देवी
वसुदेवादजीजनत्। भौमस्य ब्रह्मणो गुप्त्यै दीप्तमग्निमिवारणिः
॥ २८ ॥ यमनन्यो व्यपेताशीरात्मानं वीतकल्मषम्। दृष्ट्वानन्त्याय
गोविन्दं पश्यत्यात्मानमात्मनि ॥ २९ ॥ अतिवाय्विन्द्रकर्माणमति-

सूर्य्यातितेजसम्। अतिबुद्धीन्द्रियात्मानं तं प्रपद्ये प्रजापतिम् ॥३०॥ पुराणपुरुषं प्रोक्तं ब्रह्मप्रोक्तं युगादिषु। चये सङ्कर्षणं प्रोक्तं तमुपास्यमुपास्महे ॥३१॥ यमेकं बहुधात्मानं प्रादुर्भूतमधोक्षजम्। नान्यभक्ताः क्रियावन्तो यजन्ते सर्वकामदम् ॥३२॥ यमाहुर्ज्जगतः कोषं यस्मिन् सन्निहिताः प्रजाः। यस्मिन् लोकाः स्फुरन्तीमे जले शकुनयो यथा ॥ ३३ ॥ ऋतमेकाक्षरं ब्रह्म यत्तत्सदसतोः परम्। अनादिमध्यपर्य्यन्तं न देवा नर्षयो विदुः ॥ ३४ ॥ यं सुरासुर-गन्धर्वाः सिद्धा ऋषिमहोरगाः। प्रयताः नित्यमर्च्चन्ति परमं दुःख-भेषजम् ॥ ३५ ॥ अनादिनिधनं देवमात्मयोनि सनातनम्। अप्रेक्ष्यमनभिज्ञेयं हरिं नारायणं प्रभुम् ॥ ३६ ॥ यं वै विश्वस्य कर्त्तारं जगतस्तस्थुषां पतिम्। वदन्ति जगतोऽध्यक्षमक्षरं परमं पदम् ॥ ३७ ॥ हिरण्यवर्णं यं गर्भमदितिर्दैत्यनाशनम्। एकं द्वादशधा जज्ञे तस्मै सूर्य्यात्मने नमः ॥ ३८ ॥ शुक्ले देवान् पितॄन् कृष्णे तर्पयत्यमृतेन यः। यश्च राजा द्विजातीनां तस्मै सोमात्मने नमः ॥ ३९ ॥ महतस्तमसः पारे पुरुषं ह्यतितेजसम्। यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः ॥ ४० ॥ यं बृहन्तं बृहत्युक्थे यमग्नौ यं महाध्वरे। यं विप्रसङ्घा गायन्ति तस्मै वेदात्मने नमः ॥ ४१ ॥ ऋग्यजुःसामधामानं दशार्द्धहविरात्मकम्। यं सप्ततन्तुं तन्वन्ति तस्मै यज्ञात्मने नमः ॥ ४२ ॥ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च। हूयते च पुनर्द्वाभ्यां तस्मै होमात्मने नमः ॥ ४३ ॥ यः सुपर्णो यजुर्नाम छन्दोगात्रस्त्रिवृच्छिराः। रथन्तरं बृहत् साम तस्मै स्तोत्रात्मने नमः ॥ ४४ ॥ यः सहस्रसमे सत्रे जज्ञे विश्वसृजामृषिः। हिरण्यपक्षः शकुनिस्तस्मै हंसात्मने नमः ॥४५॥ पादाङ्गं सन्धिपर्वाणं स्वरव्यञ्जनभूषणम्। यमाहुरक्षरं दिव्यं तस्मै वागात्मने नमः ॥ ४६ ॥ यज्ञाङ्गो यो वराहो वै भूत्वा गामुज्जहार ह। लोकत्रयहितार्थाय तस्मै वीर्य्यात्मने नमः ॥४७॥

यः शेते योगमास्थाय पर्य्यङ्के नागभूषिते। फणासहस्ररचिते तस्मै निद्रात्मने नमः ॥ ४८ ॥ यस्तनोति सतां सेतुमृतेनामृतयोनिना। धर्मार्थव्यवहाराङ्गैस्तस्मै सत्यात्मने नमः ॥ ४९ ॥ यं पृथग्धर्मचरणाः पृथग्धर्मफलैषिणः। पृथग्धर्मैः समर्च्चन्ति तस्मै धर्मात्मने नमः ॥ ५० ॥ यतः सर्वे प्रसूयन्ते ह्यनङ्गात्माङ्गदेहिनः। उन्मादः सर्वभूतानां तस्मै कामात्मने नमः ॥ ५१ ॥ यञ्च व्यक्तस्थमव्यक्तं विचिन्वन्ति महर्षयः। क्षेत्रे क्षेत्रज्ञमासीनं तस्मै क्षेत्रात्मने नमः ॥ ५२ ॥ यं त्रिधात्मानमात्मस्थं वृतं षोड़शभिर्गुणैः। प्राहुः सप्तदशं सांख्यास्तस्मै सांख्यात्मने नमः ॥ ५३ ॥ यं विनिद्रा जितश्वासाः सत्त्वस्थाः संयतेन्द्रियाः। ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ ५४ ॥ अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः। शान्ताः सन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥ ५५ ॥ योऽसौ युगसहस्रान्ते प्रदीप्तार्च्चिर्विभावसुः। संभक्षयति भूतानि तस्मै घोरात्मने नमः ॥ ५६ ॥ संभक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत्। बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः ॥ ५७ ॥ अजस्य नाभौ संभूतं यस्मिन् विश्वं प्रतिष्ठितम्। पुष्करे पुष्कराक्षस्य तस्मै पद्मात्मने नमः ॥ ५८ ॥ सहस्रशिरसे चैव पुरुषायामितात्मने। चतुःसमुद्रपर्य्याययोगनिद्रात्मने नमः ॥ ५९ ॥ यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु। कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥ ६० ॥ यस्मात् सर्वाः प्रसूयन्ते सर्गप्रलयविक्रियाः। यस्मिंश्चैव प्रलीयन्ते तस्मै हेत्वात्मने नमः ॥ ६१ ॥ यो निषण्णो भवेद्रात्रौ दिवा भवति विष्ठितः। इष्टानिष्टस्य च द्रष्टा तस्मै द्रष्टात्मने नमः ॥ ६२ ॥ अकुण्ठं सर्वकार्य्येषु धर्मकार्य्यार्थमुद्यतम्। वैकुण्ठस्य च तद्रूपं तस्मै कार्य्यात्मने नमः ॥ ६३ ॥ त्रिःसप्तकृत्वो यः क्षत्रं धर्मव्युत्क्रान्तगौरवम्। क्रुद्धो निजघ्ने समरे तस्मै क्रौर्य्यात्मने नमः ॥ ६४ ॥ विभज्य पञ्चधात्मानं वायुर्भूत्वा शरीरगः। यश्चेष्टयति

भूतानि तस्मै वाय्वात्मने नमः ॥६५॥ युगेष्वावर्त्तते योगैर्मासर्त्त्वयन-हायनैः। सर्गप्रलययोः कर्त्ता तस्मै कालात्मने नमः ॥ ६६ ॥ ब्रह्म वक्त्रं भुजौ क्षत्रं कृत्स्नमूरूदरं विशः। पादौ यस्याश्रिताः शूद्रास्तस्मै वर्णात्मने नमः ॥ ६७ ॥ यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः। सूर्य्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः ॥ ६८ ॥ परः कालात् परो यज्ञात् परात् परतरश्च यः। अनादि-रादिर्विश्वस्य तस्मै विश्वात्मने नमः ॥ ६९ ॥ विषये वर्त्तमानानां यन्तं वैशेषिकैर्गुणैः। प्राहुर्विषयगोप्तारं तस्मै गोप्त्रात्मने नमः ॥ ७० ॥ अन्नपानेन्धनमयो रसप्राणविवर्द्धनः। यो धारयति भूतानि तस्मै प्राणात्मने नमः ॥ ७१ ॥ प्राणानां धारणार्थाय योऽन्नं भुङ्क्ते चतुर्विधम्। अन्तर्भूतः पचत्यग्निस्तस्मै पाकात्मने नमः ॥ ७२ ॥ पिङ्गेक्षणसटं यस्य रूपं दंष्ट्रानखायुधम्। दान-वेन्द्रान्तकरणं तस्मै दृप्तात्मने नमः ॥ ७३ ॥ यं न देवा न गन्धर्वा न दैत्या न च दानवाः। तत्त्वतो हि विजानन्ति तस्मै सूक्ष्मात्मने नमः ॥ ७४ ॥ रसातलगतः श्रीमाननन्तो भगवान् विभुः। जग-द्धारयते कृत्स्नं तस्मै वीर्य्यात्मने नमः ॥ ७५ ॥ यो मोहयति भूतानि स्नेहपाशानुबन्धनैः। सर्गस्य रक्षणार्थाय तस्मै मोहा-त्मने नमः ॥ ७६ ॥ आत्मज्ञानमिदं ज्ञानं ज्ञात्वा पञ्चस्ववस्थितम्। यं ज्ञानेनाभिगच्छन्ति तस्मै ज्ञानात्मने नमः ॥ ७७ ॥ अप्रमेयशरी-राय सर्वतो बुद्धिचक्षुषे। अनन्तपरिमेयाय तस्मै दिव्यात्मने नमः ॥ ७८ ॥ जटिले दण्डिने नित्यं लम्बोदरशरीरिणे। कमण्डलु-निषङ्गाय तस्मै ब्रह्मात्मने नमः ॥ ७९ ॥ शूलिने त्रिदशेशाय त्र्यम्बकाय महात्मने। भस्मदिग्धोर्द्ध्वलिङ्गाय तस्मै रुद्रात्मने नमः ॥ ८० ॥ चन्द्रार्द्धकृतशीर्षाय व्यालयज्ञोपवीतिने। पिनाकशूल-हस्ताय त उग्रात्मने नमः ॥ ८१ ॥ सर्वभूतात्मभूताय भूतादि-निधनाय च। अक्रोधद्रोहमोहाय तस्मै शान्तात्मने नमः ॥ ८२ ॥

यस्मिन् सर्वं यतः सर्वं यः सर्वः सर्वतश्च यः । यश्च सर्वमयो नित्यं तस्मै सर्वात्मने नमः ॥८३॥ विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन् विश्वसम्भव । अपवर्गस्तु भूतानां पञ्चानां परतस्थितः ॥ ८४ ॥ नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु । नमस्ते दिक्षु सर्वासु त्वं हि सर्वमयो निधिः ॥ ८५ ॥ नमस्ते भगवन् विष्णो लोकानां प्रभवाव्यय । त्वं हि कर्त्ता हृषीकेश संहर्त्ता चापराजितः ॥ ८६ ॥ न हि पश्यामि ते भाव्यं दिव्यं हि त्रिषु वर्त्मसु । त्वान्तु पश्यामि तत्त्वेन यत्ते रूपं सनातनम् ॥ ८७ ॥ दिव्यन्ते शिरसा व्याप्तं पद्भ्यां देवी वसुन्धरा । विक्रमेण त्रयो लोका पुरुषोऽसि सनातनः ॥ ८८ ॥ दिशो भुजा रविश्चक्षुर्वीर्य्यं शुक्रः प्रजापतिः । सप्तमार्गा निरुद्धास्ते वायोरमिततेजसः ॥ ८९ ॥ अतसीपुष्पसङ्काशं पीतवाससमच्युतम् । ये नमस्यति गोविन्दं न तेषां विद्यते भयम् ॥ ९० ॥ एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः । दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥ ९१ ॥ कृष्णव्रताः कृष्णमनुस्मरन्तो रात्रौ च कृष्णं पुनरुत्थिता ये । ते कृष्णदेहाः प्रविशन्ति कृष्णमाज्यं यथा मन्त्रहुतं हुताशे ॥ ९२ ॥ नमो नरकसन्त्रासरक्षामण्डलकारिणे । संसारनिम्नगावर्त्ततरिकाष्ठाय विष्णवे ॥९३॥ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ ९४ ॥ प्राणकान्तारपाथेयं संसारोच्छेदभेषजम् । दुःखशोकपरित्राणं हरिरित्यक्षरद्वयम् ॥ ९५ ॥ यथा विष्णुमयं सत्यं यथा विष्णुमयं जगत् । यथा विष्णुमयं सर्वं पाप्मा मे नश्यतान्तथा ॥९६॥ त्वां प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे । यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम ॥ ९७ ॥ इति विद्यातपो योनिरयोनिर्विष्णुरीड़ितः । वाग्यज्ञेनार्च्चितो देवः प्रीयतां मे जनार्द्दन ॥ ९८ ॥ नारायण परं ब्रह्म नारायणपरं तपः । नारायणपरो देवः सर्वं नारायणः सदा ॥९९

वैशम्पायन उवाच। एतावदुक्त्वा वचनं भीष्मस्तद्गतमानसः। नम इत्येव कृष्णाय प्रणाममकरोत्तदा ॥ १०० ॥ अभिगम्य तु योगेन भक्तिं भीष्मस्य माधवः। त्रैकाल्यदर्शनं ज्ञानं दिव्यं दत्त्वा ययौ हरिः ॥ १०१ ॥ तस्मिन्नुपरते शब्दे ततस्ते ब्रह्मवादिनः। भीष्मं वाग्भिर्बाष्पकण्ठास्तमानर्चुर्महामतिम् ॥ १०२ ॥ ते स्तुवन्तश्च विप्राग्र्याः केशवं पुरुषोत्तमम्। भीष्मञ्च शनकैः सर्वे प्रशशंसुः पुनः पुनः ॥ १०३ ॥ विदित्वा भक्तियोगन्तु भीष्मस्य पुरुषोत्तमः। सहसोत्थाय संहृष्टो यानमेवान्वपद्यत ॥ १०४ ॥ केशवः सात्यकिश्चापि रथेनैकेन जग्मतुः। अपरेण महात्मानौ युधिष्ठिरधनञ्जयौ ॥ १०५ ॥ भीमसेनो यमौ चोभौ रथमेकं समाश्रिताः। कृपो युयुत्सुः सूतश्च सञ्जयस्तु परन्तपः ॥ १०६ ॥ ते रथैर्नगराकारैः प्रयाताः पुरुषर्षभाः। नेमिघोषेण महता कम्पयन्तो वसुन्धराम् ॥ १०७ ॥ ततो गिरः पुरुषवरस्तवान्विता द्विजेरिताः पथिसुमनाः स शुश्रुवे। कृताञ्जलिं प्रणतमथापरं जनं स केशिहा मुदितमनाभ्यनन्दत ॥ १०८ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि भीष्मकृत कृष्णस्तवे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

वैशम्पायन उवाच। ततः स च हृषीकेशः स च राजा युधिष्ठिरः। कृपादयश्च ते सर्वे चत्वारः पाण्डवाश्च ते ॥ १ ॥ रथैस्तैर्नगरप्रख्यैः पताकाध्वजशोभितैः। ययुराशु कुरुक्षेत्रं वाजिभिः शीघ्रगामिभिः ॥ २ ॥ तेऽवतीर्य्य कुरुक्षेत्रं केशमज्जास्थिसङ्कुलम्। देहन्यासः कृतो यत्र क्षत्रियैस्तैर्महात्मभिः ॥३॥ गजाश्वदेहास्थिचयैः पर्वतैरिव सञ्चितम्। नरशीर्षकपालैश्च शङ्खैरिव च सर्वशः ॥ ४ ॥ चितासहस्रप्रचितं वर्मशस्त्रसमाकुलम्। आपानभूमिं कालस्य

तदा भुक्तोज्झितामिव ॥ ५ ॥ भूतसङ्घानुचरितं रक्षोगणनिषे-
वितम् । पश्यन्तस्ते कुरुक्षेत्रं ययुराशु महारथाः ॥ ६ ॥ गच्छन्नेव
महाबाहुः सर्व्वयादवनन्दनः । युधिष्ठिराय प्रोवाच जामदग्न्यस्य
विक्रमम् ॥ ७ ॥ अमी रामह्रदाः पञ्च दृश्यन्ते पार्थ दूरतः । येषु
सन्तर्पयामास पितॄन् क्षत्रियशोणितैः ॥ ८ ॥ त्रिःसप्तकृत्वो वसुधां
कृत्वा निःक्षत्रियां प्रभुः । इहेदानीं ततो रामः कर्म्मणो विरराम
ह ॥ ९ ॥

युधिष्ठिर उवाच । त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया
पुरा । रामेणेति यथात्थ त्वमत्र मे संशयो महान् ॥ १० ॥ क्षत्र-
वीजं यदा दग्धं रामेण यदुपुङ्गव । कथं भूयः समुत्पत्तिः क्षत्र-
स्यामितविक्रम ॥ ११ ॥ महात्मना भगवता रामेण यदुपुङ्गव ।
कथमुत्पादितं क्षत्रं कथं वृद्धिमुपागतम् ॥ १२ ॥ महता रथ-
युद्धेन कोटिशः क्षत्रिया हताः । तथाभूच्च मही कीर्णा क्षत्रियै-
र्व्वदताम्बर ॥ १३ ॥ किमर्थं भार्गवेणेदं क्षत्रमुत्पादितं पुरा ।
रामेण यदुशार्दूल कुरुक्षेत्रे महात्मना ॥ १४ ॥ एतन्मे छिन्धि
वार्ष्णेय संशयं तार्क्ष्यकेतन । आगमो हि परः कृष्ण त्वत्तो नो
वासवानुज ॥ १५ ॥

वैशम्पायन उवाच । ततो यथावत् स गदाग्रजः प्रभुः शशंस
तस्मै निखिलेन तत्त्वतः । युधिष्ठिरायाप्रतिमौजसे तदा यथाभवत्
क्षत्रियसंकुला मही ॥ १६ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि युधिष्ठिरस्य
रामोपाख्यानप्रश्ने अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

वासुदेव उवाच । शृणु कौन्तेय रामस्य प्रभावो यो मया
श्रुतः । महर्षीणां कथयतां विक्रमं तस्य जन्म च ॥ १ ॥ यथा च

जामदग्न्येन कोटिशः क्षत्रिया हताः । उद्भूता राजवंशेषु ये भूयो भारते हताः ॥ २ ॥ जह्नो रजस्तु तनयो बलाकाश्वस्तु तत्सुतः । कुशिको नाम धर्मज्ञस्तस्य पुत्रो महीपते ॥ ३ ॥ उग्रं तपः समातिष्ठत् सहस्राक्षसमो भुवि । पुत्रं लभेयमजितं त्रिलोकेश्वरमित्युत ॥ ४ ॥ तमुग्रतपसं दृष्ट्वा सहस्राक्षः पुरन्दरः । समर्थं पुत्रजनने स्वयमेवाभ्यपद्यत ॥ ५ ॥ पुत्रत्वमगमद्राजंस्तस्य लोकेश्वरेश्वरः । गाधिर्नामाभवत् पुत्रः कौशिकः पाकशासनः ॥ ६ ॥ तस्य कन्याभवद्राजन्नाम्ना सत्यवती प्रभो । तां गाधिर्भृगुपुत्राय सोर्चीकाय ददौ प्रभुः ॥ ७ ॥ तस्याः प्रीतः स शौचेन भार्गवः कुरुनन्दन । पुत्रार्थं श्रपयामास चरुं गाधेस्तथैव च ॥ ८ ॥ आहूयोवाच तां भार्य्यां सोर्चीको भार्गवस्तदा । उपयोज्यश्चरुरयं त्वया मात्राप्ययं तव ॥९॥ तस्या जनिष्यते पुत्रो दीप्तिमान् क्षत्रियर्षभः । अजय्यः क्षत्रियैर्लोके क्षत्रियर्षभसूदनः ॥ १० ॥ तवापि पुत्रं कल्याणि धृतिमन्तं शमात्मकम् । तपोऽन्वितं द्विजश्रेष्ठं चरुरेष विधास्यति ॥ ११ ॥ इत्येवमुक्त्वा तां भार्य्यां सोऽर्चीको भृगुनन्दनः । तपस्यभिरतः श्रीमान् जगामारण्यमेव हि ॥ १२ ॥ एतस्मिन्नेव काले तु तीर्थयात्रापरो नृपः । गाधिः सदारः सम्प्राप्तः सोऽर्चीकस्याश्रमं प्रति ॥१३॥ चरुद्वयं गृहीत्वा च राजन् सत्यवती तदा । भर्त्तुर्वाक्यं तथा व्यग्रा मात्रे हृष्टा न्यवेदयत् ॥ १४ ॥ माता तु तस्याः कौन्तेय दुहित्रे स्वचरुं ददौ । तस्याश्चरुमथाज्ञानादात्मसंस्थं चकार ह ॥ १५ ॥ अथ सत्यवती गर्भं क्षत्रियान्तकरन्तदा । धारयामास दीप्तेन वपुषा घोरदर्शनम् ॥ १६ ॥ तामृचीकस्तदा दृष्ट्वा तस्यागर्भगतं द्विजम् । अब्रवीद्भृगुशार्दूल स्वां भार्य्यां देवरूपिणीम् ॥ १७ ॥ मात्रासि व्यंसिता भद्रे चरुव्यत्यासहेतुना । भविष्यति हि ते पुत्रः क्रूरकर्मात्यमर्षणः । उत्पत्स्यते च ते भ्राता ब्रह्मभूतस्तपोरतः ॥ १८ ॥ विश्वं हि ब्रह्म सुमहच्चरौ तव

समाहितम् । क्षत्रवीर्य्यञ्च सकलं तव मात्रे समर्पितम् ॥ १९ ॥
विपर्य्ययेण ते भद्रे नैतदेवं भविष्यति । मातुस्ते ब्राह्मणो भूयात्तव
च क्षत्रियः सुतः ॥ २० ॥ एवमुक्ता महाभागा भर्त्रा सत्यवती
तदा । पपात शिरसा तस्मै वेपन्ती चाब्रवीदिदम् ॥ २१ ॥ नार्हो-
ऽसि भगवन्नद्य वक्तुमेवंविधं वचः । ब्राह्मणापसदं प्राप्स्यसीति
हि मां प्रभो ॥ २२ ॥

ऋचीक उवाच । नैष सङ्कल्पितः कामो मया भद्रे तथा
त्वयि । उग्रकर्मा समुत्पन्नश्चरुव्यत्यासहेतुना ॥ २३ ॥

सत्यवत्युवाच । इच्छंल्लोकानपि मुने सृजेथाः किं पुनः सुतम् ।
शमात्मकमृजुं पुत्रं दातुमर्हसि मे प्रभो ॥ २४ ॥

ऋचीक उवाच । नोक्तपूर्व्वानृतं भद्रे स्वैरेष्वपि कदाचन ।
किमुताग्निं समाधाय मन्त्रवच्चरुसाधने ॥ २५ ॥ दृष्टमेतत् पुरा
भद्रे ज्ञातञ्च तपसा मया । ब्रह्मभूतं हि सकलं पितुस्तव कुलं
भवेत् ॥ २६ ॥

सत्यवत्युवाच । काममेवं भवेत् पौत्रो ममेह तव च प्रभो ।
शमात्मकमहं पुत्रं लभेयं जपतांवर ॥ २७ ॥

ऋचीक उवाच । पुत्रे नास्ति विशेषो मे पौत्रे च वरवर्णिनी ।
यथा त्वयोक्तं वचनं तथा भद्रे भविष्यति ॥ २८ ॥

वासुदेव उवाच । ततः सत्यवती पुत्रं जनयामास भार्गवम् ।
तपस्यभिरतं शान्तं जमदग्निं यतव्रतम् ॥ २९ ॥ विश्वामित्रञ्च
दायादं गाधिः कुशिकनन्दनः । यं प्राप्य ब्रह्मसमितं विश्वैर्ब्रह्म-
गुणैर्युतम् ॥ ३० ॥ ऋचीको जनयामास जमदग्निं तपोनिधिम् ।
सोऽपि पुत्रं ह्यजनयज्जमदग्निः सुदारुणम् ॥ ३१ ॥ सर्व्वविद्यान्तगं
श्रेष्ठं धनुर्व्वेदस्य पारगम् । रामं क्षत्रियहन्तारं प्रदीप्तमिव पाव-
कम् ॥ ३२ ॥ तोषयित्वा महादेवं पर्व्वते गन्धमादने । अस्त्राणि
वरयामास परशुञ्चातितेजसम् ॥ ३३ ॥ स तेनाकुण्ठधारेण

ज्वलितानलवर्चसा। कुठारेणाप्रमेयेण लोकेष्वप्रतिमोऽभवत् ॥३४॥ एतस्मिन्नेव काले तु कृतवीर्य्यात्मजो बली। अर्जुनो नाम तेजस्वी क्षत्रियो हैहयाधिप ॥ ३५ ॥ दत्तात्रेयप्रसादेन राजा बाहु-सहस्रवान्। चक्रवर्त्ती महातेजा विप्राणामाश्वमेधिके ॥ ३६ ॥ ददौ स पृथिवीं सर्वां सप्तद्वीपां सपर्वताम्। स्वबाहस्त्रबलेनाजौ जित्वा परमधर्मवित् ॥ ३७ ॥ तृषितेन च कौन्तेय भिक्षितश्चित्र-भानुना। सहस्रबाहुर्विक्रान्तः प्रादाद्भिक्षामथाग्नये ॥ ३८ ॥ ग्रामान् पुराणि राष्ट्राणि घोषांश्चैवानुवीर्य्यवान्। जज्वाल तस्य बाणाग्राच्चित्रभानुर्दिधक्षया ॥ ३९ ॥ स तस्य पुरुषेन्द्रस्य प्रभा-वेण महौजसः। ददाह कार्त्तवीर्य्यस्य शैलानथ वनस्पतीन् ॥४०॥ स शून्यमाश्रमं रम्यमापवस्य महात्मनः। ददाह पवनेनेद्धश्चित्र-भानुः सहैहयः ॥ ४१ ॥ आपवस्तु ततो रोषात् शशापार्जुनम-च्युत। दग्धे आश्रमे महाबाहो कार्त्तवीर्य्येण वीर्य्यवान् ॥ ४२ ॥ त्वया न वर्ज्जितं यस्मान्ममेदं हि महद्वनम्। दग्धं तस्माद्रणे रामो बाहूंस्ते छेत्स्यतेऽर्जुन ॥ ४३ ॥ अर्जुनस्तु महातेजा बली नित्यं शमात्मकः। ब्रह्मण्यश्च शरण्यश्च दाता शूरश्च भारत ॥ ४४ ॥ नाचिन्तयत्तदा शापं तेन दत्तं महात्मना। तस्य पुत्रास्तु बलिनः शापेनासन् पितुर्वधे ॥ ४५ ॥ निमित्तादवलिप्ता वै नृशंसाश्चैव सर्वदा। जमदग्निधेन्वास्ते वत्समानिन्युर्भरतर्षभ ॥ ४६ ॥ अज्ञातं कार्त्तवीर्य्येण हैहयेन्द्रेण धीमता। तन्निमित्तमभूद्युद्धं जमदग्ने-र्महात्मनः ॥ ४७ ॥ ततोऽर्जुनस्य बाहूंस्तान् छित्त्वा रामो रुषा-न्वितः। तं भ्रमन्तं ततो वत्सं जामदग्न्यः स्वमाश्रमम्। प्रत्या-नयत राजेन्द्र तेषामन्तःपुरात् प्रभुः ॥ ४८ ॥ अर्जुनस्य सुतास्ते तु सम्भूयाबुद्धयस्तदा। गत्वाश्रममसम्बुद्धा जमदग्नेर्महात्मनः ॥४९॥ अपातयन्त भल्लाग्रैः शिरः कायान्नराधिप। समित्कुशार्थं रामस्य निर्यातस्य यशस्विनः ॥ ५० ॥ ततः पितृवधामर्षाद्रामः परममन्यु-

मान्। निःक्षत्रियां प्रतिश्रुत्य महीं शस्त्रमगृह्णत ॥ ५१ ॥ ततः स भृगुशार्दूलः कार्त्तवीर्य्यस्य वीर्य्यवान्। विक्रम्य निजघानाशु पुत्रान् पौत्रांश्च सर्व्वशः ॥ ५२ ॥ स हैहयसहस्राणि हत्वा परम-मन्युमान्। चकार भार्गवो राजन् महीं शोणितकर्द्दमाम् ॥५३॥ स तथाशु महातेजा कृत्वा निःक्षत्रियां महीम्। कृपया परया-विष्टो वनमेव जगाम ह ॥ ५४ ॥ ततो वर्षसहस्रेषु समतीतेषु केषुचित्। क्षेपं सम्प्राप्तवांस्तत्र प्रकृत्या कोपनः प्रभुः ॥ ५५ ॥ विश्वामित्रस्य पौत्रस्तु रैभ्यपुत्रो महातपाः। परावसुर्महाराज क्षिप्त्वाह जनसंसदि ॥ ५६ ॥ ये ते ययातिपतने यज्ञे सन्तः समा-गताः। प्रतर्द्दनप्रभृतयो राम किं क्षत्रिया न ते ॥ ५७ ॥ मिथ्या-प्रतिज्ञो राम त्वं कत्थसे जनसंसदि। भयात् क्षत्रियवीराणां पर्व्वतं समुपाश्रितः ॥ ५८ ॥ सा पुनः क्षत्रियशतैः पृथिवी सर्व्वतस्तृता। परावसोर्व्वचः श्रुत्वा शस्त्रं जग्राह भार्गवः ॥ ५९ ॥ ततो ये क्षत्रिया राजन् शतशस्तेन वर्जिताः। ते विवृद्धा महावीर्य्याः पृथिवीपतयोऽभवन् ॥ ६० ॥ स पुनस्तान् जघानाशु बालानपि नराधिप। गर्भस्थैस्तु मही व्याप्ता पुनरेवाभवत्तदा ॥ ६१ ॥ जातं जातं स गर्भन्तु पुनरेव जघान ह। अरक्षंश्च सुतान् काश्चि-त्तदा क्षत्रिययोषितः ॥ ६२ ॥ त्रिःसप्तकृत्वः पृथिवीं कृत्वा निः-क्षत्रियां प्रभुः। दक्षिणामश्वमेधान्ते कश्यपायाददत्ततः ॥ ६३॥ स क्षत्रियाणां शेषार्थं करेणोद्दिश्य कश्यपः। स्रुक्प्रग्रहवता राजंस्ततो वाक्यमथाब्रवीत् ॥ ६४ ॥ गच्छ तीरं समुद्रस्य दक्षि-णस्य महामुने। न ते मद्विषये राम वस्तव्यमिह कर्हिचित् ॥६५॥ ततः शूर्पारकं देशं सागरस्तस्य निर्म्ममे। सहसा जामदग्न्यस्य सोऽपरान्तमहीतलम् ॥ ६६ ॥ कश्यपस्तां महाराज प्रतिगृह्य वसुन्धराम्। कृत्वा ब्राह्मणसंस्थां वै प्रविष्टः सुमहद्वनम् ॥ ६७ ॥ ततः शूद्राश्च वैश्याश्च यथा स्वैरप्रचारिणः। अवर्त्तन्त द्विजाग्र्याणां

दारेषु भरतर्षभ ॥ ६८ ॥ अराजके जीवलोके दुर्बला बलवत्तरैः । पीड्यन्ते न हि वित्तेषु प्रभुत्वं कस्यचित्तदा ॥ ६९ ॥ ततः कालेन पृथिवी पीड्यमाना दुरात्मभिः । विपर्य्ययेण तेनाशु प्रविवेश रसातलम् । अरक्ष्यमाणा विधिवत् क्षत्रियैर्धर्मरक्षिभिः ॥ ७० ॥ तां दृष्ट्वा द्रवतीं तत्र सन्त्रासात् स महामनाः । ऊरुणा धारयामास कश्यपः पृथिवीन्ततः । धृता तेनोरुणा येन तेनोर्वीति मही स्मृता ॥ ७१ ॥ रक्षणार्थं समुद्दिश्य ययाचे पृथिवी तदा । प्रसाद्य कश्यपं देवी वरयामास भूमिपम् ॥ ७२ ॥

पृथिव्युवाच । सन्ति ब्रह्मन् मया गुप्ता स्त्रीषु क्षत्रियपुङ्गवाः । हैहयानां कुले जातास्ते संरक्षन्तु मां मुने ॥ ७३ ॥ अस्ति पौरवदायादो विदूरथसुतः प्रभो । ऋक्षैः सम्वर्द्धितो विप्र ऋक्षवत्यथ पर्व्वते ॥ ७४ ॥ तथानुकम्पमानेन यज्वनाप्यमितौजसा । पराशरेण दायादः सौदासस्याभिरक्षितः ॥ ७५ ॥ सर्वकर्माणि कुरुते शूद्रवत् तस्य स द्विजः । सर्वकर्मेत्यभिख्यातः स मां रक्षतु पार्थिवः ॥ ७६ ॥ शिबिपुत्रो महातेजा गोपतिर्नाम नामतः । वने सम्वर्द्धितो गोभिः सोऽभिरक्षतु मां मुने ॥ ७७ ॥ प्रतर्दनस्य पुत्रस्तु वत्सो नाम महाबलः । वत्सैः सम्वर्द्धितो गोष्ठे स मां रक्षतु पार्थिवः ॥ ७८ ॥ दधिवाहनपौत्रस्तु पुत्रो दिविरथस्य च । गुप्तः स गौतमेनासीद्गङ्गाकूलेऽभिरक्षितः ॥ ७९ ॥ बृहद्रथो महातेजा भूरिभूतिपरिष्कृतः । गोलाङ्गूलैर्महाभागो गृध्रकूटेऽभिरक्षितः ॥ ८० ॥ मरुत्तस्यान्ववाये च रक्षिताः क्षत्रियात्मजाः । मरुत्पतिसमा वीर्य्ये समुद्रेणाभिरक्षिताः ॥ ८१ ॥ एते क्षत्रियदायादास्तत्र तत्र परिश्रुताः । व्योकारहेमकारादिजातिं नित्यं समाश्रिताः । यदि मामभिरक्षन्ति ततः स्थास्यामि निश्चला ॥ ८२ ॥ एतेषां पितरश्चैव तथैव च पितामहाः । मदर्थं निहता युद्धे रामेणाक्लिष्टकर्मणा । तेषामपचितिश्चैव मया कार्य्या महामुने ॥८३॥

न ह्यहं कामये नित्यमतिक्रान्तेन रक्षणम्। वर्त्तमानेन वर्त्तेयं तत्क्षिप्रं संविधीयताम् ॥ ८४ ॥

वासुदेव उवाच। ततः पृथिव्या निर्द्दिष्टांस्तान् समानीय कश्यपः। अभ्यषिञ्चन्महीपालान् क्षत्रियान् वीर्य्यसम्मतान् ॥ ८५ ॥ तेषां पुत्राश्च पौत्राश्च येषां वंशाः प्रतिष्ठिताः। एवमेतत् पुरावृत्तं यन्मां पृच्छसि पाण्डव ॥ ८६ ॥

वैशम्पायन उवाच। एवं ब्रुवंस्तत्र यदुप्रवीरो युधिष्ठिरं धर्म्मभृतां वरिष्ठम्। रथेन तेनाशु ययौ महात्मा दिशः प्रकाशन् भगवानिवार्कः ॥ ८७ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि रामोपाख्याने एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

---

वैशम्पायन उवाच। ततो रामस्य तत् कर्म्म श्रुत्वा राजा युधिष्ठिरः। विस्मयं परमं गत्वा प्रत्युवाच जनार्द्दनम् ॥ १ ॥ अहो रामस्य वार्ष्णेय शक्रस्येव महात्मनः। विक्रमो वसुधा येन क्रोधान्निःक्षत्रिया कृता ॥ २ ॥ गोभिः समुद्रेण तथा गोलाङ्गूलर्क्षवानरैः। गुप्ता रामभयोद्विग्नाः क्षत्रियाणां कुलोद्वहाः ॥३॥ अहो धन्यो नृलोकोऽयं सभाग्याश्च नरा भुवि। यत्र कर्म्मेदृशं धर्म्यं द्विजेन कृतमच्युत ॥ ४ ॥ तथा वृत्तौ तदा तात तावच्युतयुधिष्ठिरौ। जग्मतुर्यत्र गाङ्गेयः शरतल्पगतः प्रभुः ॥ ५ ॥ ततस्ते ददृशुर्भीष्मं शरसंस्तरशायिनम्। स्वरश्मिजालसम्वीतं सायं सूर्य्यसमप्रभम् ॥ ६ ॥ उपास्यमानं मुनिभिर्देवैरिव शतक्रतुम्। देशे परमधर्म्मिष्ठे नदीमोघवतीमनु ॥ ७ ॥ दूरादेव तमालोक्य कृष्णो राजा च धर्म्मजः। चत्वारः पाण्डवाश्चैव ते च शारद्वतादयः ॥ ८ ॥ अवस्कन्द्याथ वाहेभ्यः संयम्य प्रचलं मनः। एकी-

कृत्येन्द्रियग्राममुपतस्थु र्महामुनीन् ॥ ९ ॥ अभिवाद्य तु गोविन्दः सात्यकिस्ते च पार्थिवाः। व्यासादीनृषिमुख्यांश्च गाङ्गेयमुपतस्थिरे ॥ १० ॥ तपोवृद्धं तथा दृष्ट्वा गाङ्गेयं यदुकौरवाः। परिवार्थ्य ततः सर्वे निषेदुः पुरुषर्षभाः ॥ ११ ॥ ततो निशम्य गाङ्गेयं शाम्यमानमिवानलम्। किञ्चिद्दीनमना भीष्ममिति होवाच केशवः ॥ १२ ॥

वासुदेव उवाच। कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि यथा पुरा। कच्चिन्न व्याकुला चैव बुद्धिस्ते वदताम्वर ॥ १३ ॥ शराभिघातदुःखात्ते कच्चिद्गात्रं न दूयते। मानसादपि दुःखाद्धि शारीरं बलवत्तरम् ॥ १४ ॥ वरदानात् पितुः कामं छन्दमृत्युरसि प्रभो। शान्तनोर्धर्मनित्यस्य न त्वेतन्मम कारणम् ॥ १५ ॥ सुसूक्ष्मोऽपि तु देहे वै शल्यो जनयते रुजम्। किं पुनः शरसंघातैश्चित्तस्य तव पार्थिव ॥ १६ ॥ कामं नैतत् तवाख्येयं प्राणिनां प्रभवाप्ययौ। उपदेष्टुर्भवान् शक्तो देवानामपि भारत ॥ १७ ॥ यच्चभूतं भविष्यच्च भवच्च पुरुषर्षभ। सर्वं तज्ज्ञानवृद्धस्य तव भीष्म प्रतिष्ठितम् ॥ १८ ॥ संहारश्चैव भूतानां धर्मस्य च फलोदयः। विदितस्ते महाप्राज्ञ त्वं हि धर्ममयो निधिः ॥ १९ ॥ त्वां हि राज्ये स्थितं स्फीते समग्राङ्गमरोगिणम्। स्त्रीसहस्रैः परिवृतं पश्यामीवोर्द्धरेतसम् ॥ २० ॥ ऋते शान्तनवाद्भीष्मात्त्रिषु लोकेषु पार्थिव। सत्यधर्मान्महावीर्य्यात् शूराद्धर्मैकतत्परात् ॥२१॥ मृत्युमावार्य्य तपसा शरसंस्तरशायिनः। निसर्गप्रभवं किञ्चिन्न च तातानुशुश्रुम ॥ २२ ॥ सत्ये तपसि दाने च यज्ञाधिकरणे तथा। धनुर्वेदे च वेदे च नित्यञ्चैवान्ववेक्षणे ॥ २३ ॥ अनृशंसं शुचिं दान्तं सर्वभूतहिते रतम्। महारथं त्वत्सदृशं न कञ्चिदनुशुश्रुम ॥ २४ ॥ त्वं हि देवान् सगन्धर्वानसुरान् यक्षराक्षसान्। शक्तस्त्वेकरथेनैव विजेतुं नात्र संशयः ॥ २५ ॥ स त्वं भीष्म महाबाहो

वसूनां वासवोपमः। नित्यं विप्रै समाख्यातो नवमोऽनवमो गुणैः ॥ २६ ॥ अहञ्च त्वाभिजानामि यस्त्वं पुरुषसत्तम। त्रिदशेष्वपि विख्यातस्त्वं शक्त्या पुरुषोत्तमः ॥ २७ ॥ मनुष्येषु मनुष्येन्द्र न दृष्टो न च मे श्रुतः। भवतो वा गुणैर्युक्तः पृथिव्यां पुरुषः क्वचित् ॥ २८ ॥ त्वं हि सर्व्वगुणै राजन् देवानप्यतिरिच्यसे। तपसा हि भवान् शक्तः स्रष्टुं लोकांश्चराचरान्। किं पुनश्चात्मनो लोका-नुत्तमानुत्तमैर्गुणैः ॥ २९ ॥ तदस्य तप्यमानस्य ज्ञातीनां संक्षयेण वै। ज्येष्ठस्य पाण्डुपुत्रस्य शोकं भीष्म व्यपानुद ॥ ३० ॥ ये हि धर्म्माः समाख्याताश्चातुर्वर्ण्यस्य भारत। चातुराश्रम्यसंयुक्ताः सर्व्वे ते विदितास्तव ॥ ३१ ॥ चातुर्व्विद्ये च ये प्रोक्ताश्चातुर्होत्रे च भारत। योगे सांख्ये च नियता ये च धर्म्माः सनातनाः ॥ ३२ ॥ चातुर्व्वर्ण्यस्य यश्चोक्तो धर्म्मो नस्म विरुध्यते। सेव्यमानः सवैयाख्यो गाङ्गेय विदितस्तव ॥ ३३ ॥ प्रतिलोमप्रसूतानां वर्णानाञ्चैव यः स्मृतः। देशजातिकुलानाञ्च जानीषे धर्म्मलक्षणम्। वेदोक्तो यश्च शिष्टोक्तः सदैव विदितस्तव ॥ ३४ ॥ इतिहासपुराणार्थाः कार्त्स्न्येन विदितास्तव। धर्म्मशास्त्रञ्च सकलं नित्यं मनसि ते स्थितम् ॥ ३५ ॥ ये च केचन लोकेऽस्मिन्नर्थाः संशयकारकाः। तेषां छेत्ता नास्ति लोके त्वदन्यः पुरुषर्षभ ॥ ३६ ॥ स पाण्डवेयस्य मनःसमुत्थितं नरेन्द्र शोकं व्यपकर्ष मेधया। भवद्विधा ह्युत्तम-बुद्धिविस्तरा विमुह्यमानस्य नरस्य शान्तये ॥ ३७ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि श्रीकृष्णवाक्ये पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

वैशम्पायन उवाच। श्रुत्वा तु वचनं भीष्मो वासुदेवस्य धीमतः। किञ्चिदुन्नाम्य वदनं प्राञ्जलिर्वाक्यमब्रवीत् ॥ १ ॥

भीष्म उवाच। नमस्ते भगवन् कृष्ण लोकानां प्रभवाप्यय। त्वं हि कर्त्ता हृषीकेश संहर्त्ता चापराजितः ॥ २ ॥ विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन् विश्वसम्भव। अपवर्गस्तु भूतानां पञ्चानां परतः स्थितः ॥ ३ ॥ नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु। योगीश्वर नमस्तेऽस्तु त्वं हि सर्वपरायणः ॥ ४ ॥ मत्संश्रितं यदात्थ त्वं वचः पुरुषसत्तम ॥५॥ तेन पश्यामि ते भावान् दिव्यान् हि त्रिषु वर्त्मसु। तच्च पश्यामि गोविन्द यत्ते रूपं सनातनम् ॥ ६ ॥ सप्तमार्गा निरुद्धास्ते वायोरमिततेजसः। दिवन्ते शिरसा व्याप्तं पद्भ्यां देवी वसुन्धरा ॥ ७ ॥ दिशो भुजौ रविश्चक्षुर्वीर्य्ये शक्रः प्रतिष्ठितः। अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ॥ ८ ॥ वपुर्ह्यनुमिमीमस्ते मेघस्येव सविद्युतः। त्वत्प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे। यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम ॥ ९ ॥

वासुदेव उवाच। यतः खलु परा भक्तिर्मयि ते पुरुषर्षभ। ततो मया वपुर्दिव्यं त्वयि राजन् प्रदर्शितम ॥ २० ॥ न ह्यभक्ताय राजेन्द्र भक्तायानृजवे न च। दर्शयाम्यहमात्मानं न चाशान्ताय भारत ॥ ११ ॥ भवांस्तु मम भक्तश्च नित्यञ्चार्ज्जवमास्थितः। दमे तपसि नित्ये च दाने च निरतः शुचिः ॥ १२ ॥ अर्हस्त्वं भीष्म मां द्रष्टुं तपसा स्वेन पार्थिव। तव ह्युपस्थिता लोका येभ्यो नावर्त्तते पुनः ॥ १३ ॥ पञ्चाशतं षट् च कुरुप्रवीर शेषं दिनानां तव जीवितस्य। ततः शुभैः कर्मफलोदयैस्त्वं समेष्यसि भीष्म विमुच्य देहम् ॥ १४ ॥ एते हि देवा वसवो विमानान्यास्थाय सर्वे ज्वलिताग्निकल्पाः। अन्तर्हितास्त्वां प्रतिपालयन्ति काष्ठां प्रपद्यन्तमुदक्पतङ्गम् ॥ १५ ॥ व्यावर्त्तमाने भगवत्युदीचीं सूर्य्ये जगत्कालवशं प्रपन्ने। गन्तासि लोकान् पुरुषप्रवीर नावर्त्तते यानुपलभ्य विद्वान् ॥ १६ ॥ अमुञ्च लोकं त्वयि भीष्म याते ज्ञानानि नङ्क्ष्य-

न्यखिलेन वीर। अतस्तु सर्व्वे त्वयि सन्निकर्षं समागता धर्म-विवेचनाय॥ १७॥ तज्ज्ञातिशोकोपहतश्रुताय सत्याभिसन्धाय युधिष्ठिराय। प्रब्रूहि धर्म्मार्थसमाधियुक्तं सत्यं वचोऽस्यापनुदाशु शोकम्॥ १८॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि श्रीकृष्णवाक्ये एकपञ्चाशत्तमोऽध्यायः॥ ५१॥

---

वैशम्पायन उवाच। ततः कृष्णस्य तद्वाक्यं धर्म्मार्थसहितं हितम्। श्रुत्वा शान्तनवो भीष्मः प्रत्युवाच कृताञ्जलिः॥ १॥

भीष्म उवाच। लोकनाथ महाबाहो शिव नारायणाच्युत। तव वाक्यमुपश्रुत्य हर्षेणास्मि परिप्लुतः॥ २॥ किञ्चाहमभिधास्यामि वाक्पते तव सन्निधौ। यदा वाचो गतं सर्व्वं तव वाचि समाहितम्॥ ३॥ यच्च किञ्चित् क्वचिल्लोके कर्त्तव्यं क्रियते च यत्। त्वत्तस्तन्निःसृतं देव लोके बुद्धिमता हि ते॥ ४॥ कथयेद्देवलोकं यो देवराजसमीपतः। धर्म्मकामार्थमोक्षाणां सोऽर्थं ब्रूयात्तवाग्रतः॥ ५॥ शराभितापाद्व्यथितं मनो मे मधुसूदन। गात्राणि चावसीदन्ति न च बुद्धिः प्रसीदति॥ ६॥ न च मे प्रतिभा काचिदस्ति किञ्चित् प्रभाषितुम्। पीड्यमानस्य गोविन्द विषानलसमैः शरैः॥ ७॥ बलं मे प्रजहातीव प्राणाः सन्त्वरयन्ति च। मर्म्माणि परितप्यन्ति भ्रान्तचित्तस्तथा ह्यहम्॥ ८॥ दौर्ब्बल्यात् सज्जते वाङ्मे स कथं वक्तुमुत्सहे। साधु मे त्वं प्रसीदस्व दाशार्हकुलवर्द्धन॥ ९॥ तत् क्षमस्व महाबाहो न ब्रूयां किञ्चिदच्युत। त्वत्सन्निधौ च सीदेद्धि वाचस्पतिरपि ब्रुवन्॥ १०॥ न दिशः संप्रजानामि नाकाशं न च मेदिनीम्। केवलं तव वीर्य्येण तिष्ठामि मधुसूदन॥ ११॥ स्वयमेव भवांस्तस्माद्धर्म्मराजस्य यद्धितम्।

तद्ब्रवीत्वाशु सर्वेषामागमानां समागमः॥ १२॥ कथं त्वयि स्थिते कृष्णे शाश्वते लोककर्त्तरि। प्रब्रूयान्मद्विधः कश्चित् गुरौ शिष्य इव स्थिते॥ १३॥

वासुदेव उवाच। उपपन्नमिदं वाक्यं कौरवाणां धुरन्धरे। महावीर्य्ये महासत्त्वे स्थिरे सर्वार्थदर्शिनि॥ १४॥ यच्च मामात्थ गाङ्गेय बाणघातरुजं प्रति। गृहाणात्र वरं भीष्म मत्प्रसादकृतं प्रभो॥ १५॥ न ते ग्लानिर्न ते मूर्च्छा न दाहो न च ते रुजा। प्रभविष्यन्ति गाङ्गेय क्षुत्पिपासे न चाप्युत॥ १६॥ ज्ञानानि च समग्राणि प्रतिभास्यन्ति तेऽनघ। न च ते क्वचिदासक्तिर्बुद्धेः प्रादुर्भविष्यति॥ १७॥ सत्त्वस्थञ्च मनो नित्यं तव भीष्म भविष्यति। रजस्तमोभ्यां रहितं घनैर्मुक्त इवोडुराट्॥ १८॥ यद्-यच्च धर्मसंयुक्तमर्थयुक्तमथापि च। चिन्तयिष्यसि तत्राग्र्या बुद्धिस्तव भविष्यति॥ १९॥ इमञ्च राजशार्दूल भूतग्रामं चतुर्विधम्। चक्षुर्दिव्यं समाश्रित्य द्रक्ष्यस्यमितविक्रम॥ २०॥ संसरन्तं प्रजाजालं संयुक्तो ज्ञानचक्षुषा। भीष्म द्रक्ष्यसि तत्त्वेन जले मीन इवामले॥ २१॥

वैशम्पायन उवाच। ततस्ते व्याससहिताः सर्व एव महर्षयः। ऋग्यजुःसामसहितैर्वचोभिः कृष्णमर्च्चयन्॥ २२॥ ततः सर्वार्त्तवं दिव्यं पुष्पवर्षं नभस्तलात्। पपात यत्र वार्ष्णेयः सगाङ्गेयः सपाण्डवः॥ वादित्राणि च सर्वाणि जगुश्चाप्सरसां गणाः। न चाहितमनिष्टञ्च किञ्चित्तत्र प्रदृश्यते॥ २४॥ ववौ शिवः सुखो वायुः सर्वगन्धवहः शुचिः। शान्तायां दिशि शान्ताश्च प्राद्रवन् मृगपक्षिणः॥ २५॥ ततो मुहूर्त्ताद्भगवान् सहस्रांशुर्दिवाकरः। दहन् वनमिवैकान्ते प्रतीच्यां प्रत्यदृश्यत॥ २६॥ ततो महर्षयः सर्वे समुत्थाय जनार्द्दनम्। भीष्ममामन्त्रयाञ्चक्रू राजानञ्च युधिष्ठिरम्॥ २७॥ ततः प्रणाममकरोत् केशवः सहपाण्डवः।

सात्यकिः सञ्जयश्चैव स च शारद्वतः कृपः ॥ २८ ॥ ततस्ते धर्म्म-निरताः सम्यक् तैरभिपूजिताः । ययुः समेष्याम इत्युक्त्वा यथेष्टं त्वरिता ययुः ॥ २९ ॥ तथैवामन्त्र्य गाङ्गेयं केशवः पाण्डवास्तथा । प्रदक्षिणमुपावृत्य रथानारुरुहुः शुभान् ॥ ३० ॥ ततो रथैः काञ्चनचित्रकूवरैर्महीधराभैः समदैश्च दन्तिभिः । हयैः सुपर्णैरिव चाशुगामिभिः पदातिभिश्चात्तशरासनादिभिः ॥ ३१ ॥ ययौ रथानां पुरतो हि सा चमूस्तथैव पश्चादतिमात्रसारिणी । पुरश्च पश्चाच्च यथा महानदी तमृक्षवन्तं गिरिमेत्य नर्म्मदा ॥ ३२ ॥ ततः पुरस्ताद् भगवान्निशाकरः समुत्थितस्तामभिहर्षयंश्चमूम् । दिवा-करापीतरसा महौषधीः पुनः स्वकेनैव गुणेन योजयन् ॥ ३३ ॥ ततः पुरं सुरपुरसम्मितद्युतिं प्रविश्य ते यदुवृषपाण्डवास्तदा । यथोचितान् भवनवरान् समाविशन् श्रमान्विता मृगपतयो गुहा इव ॥ ३४ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि युधिष्ठिरादीनां पुरप्रवेशे द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

---

वैशम्पायन उवाच । ततः शयनमाविश्य प्रसुप्तो मधुसूदनः । याममात्रार्द्धशेषायां यामिन्यां प्रत्यबुध्यत ॥ १ ॥ स ध्यानपथमा-विश्य सर्व्वज्ञानानि माधवः । अवलोक्य ततः पश्चाद्दध्यौ ब्रह्मसना-तनम् ॥ २ ॥ ततः स्तुतिपुराणज्ञा रक्तकण्ठाः सुशिक्षिताः । अस्तुवन् विश्वकर्म्माणं वासुदेवं प्रजापतिम् ॥ ३ ॥ पठन्ति पाणि-स्वनिकास्तथा गायन्ति गायकाः । शङ्खानथ मृदङ्गांश्च प्रवाद्यन्ति सहस्रशः ॥ ४ ॥ वीणापणववेणूनां स्वनश्चातिमनोरमः । प्रहास इव विस्तीर्णः शुश्रुवे तस्य वेश्मनः ॥ ५ ॥ ततो युधिष्ठिरस्यापि राज्ञो मङ्गलसंहिताः । उच्चेरुर्म्मधुरा वाचो गीतवादित्रनिःस्वनाः

॥ ६ ॥ तत उत्थाय दाशार्हः स्नातः प्राञ्जलिरच्युतः । जप्त्वा गुह्यं महाबाहुरग्नीनाश्रित्य तस्थिवान् ॥ ७ ॥ ततः सहस्रं विप्राणां चतुर्वेदविदान्तथा । गवां सहस्रेणैकैकं वाचयामास माधवः ॥ ८ ॥ मङ्गलालम्भनं कृत्वा आत्मानमवलोक्य च । आदर्शे विमले कृष्णस्ततः सात्यकिमब्रवीत् ॥ ९ ॥ गच्छ शैनेय जानीहि गत्वा राजनिवेशनम् । अपि सज्जो महातेजा भीष्मं द्रष्टुं युधिष्ठिरः ॥ १० ॥ ततः कृष्णस्य वचनात् सात्यकिस्त्वरितो ययौ । उपगम्य च राजानं युधिष्ठिरमभाषत ॥ ११ ॥ युक्तो रथवरो राजन् वासुदेवस्य धीमतः । समीपमापगेयस्य प्रयास्यति जनार्दनः ॥ १२ ॥ भवत्प्रतीक्षः कृष्णोऽसौ धर्मराज महाद्युते । यदत्रानन्तरं कृत्यं तद्भवान् कर्त्तुमर्हति । एवमुक्तः प्रत्युवाच धर्मपुत्रो युधिष्ठिरः ॥ १३ ॥

युधिष्ठिर उवाच । युज्यतां मे रथवरः फाल्गुनाप्रतिमद्युते । न सैनिकैश्च यातव्यं यास्यामो वयमेव हि ॥ १४ ॥ न च पीड़यितव्यो मे भीष्मो धर्मभृताम्वरः । अतः पुरःसराश्चापि निवर्त्तन्तु धनञ्जय ॥ १५ ॥ अद्यप्रभृति गाङ्गेयः परं गुह्यं प्रवक्ष्यति । अतो नेच्छामि कौन्तेय पृथग्जनसमागमम् ॥ १६ ॥

वैशम्पायन उवाच । स तद्वाक्यमथाज्ञाय कुन्तीपुत्रो धनञ्जयः । युक्तं रथवरं तस्मा आचचक्षे नरर्षभः ॥ १७ ॥ ततो युधिष्ठिरो राजा यमौ भीमार्जुनावपि । भूतानीव समस्तानि ययुः कृष्णनिवेशनम् ॥ १८ ॥ आगच्छत्स्वथ कृष्णोऽपि पाण्डवेषु महात्मसु । शैनेयसहितो धीमान्रथमेवान्वपद्यत ॥ १९ ॥ रथस्थाः सम्विदं कृत्वा सुखां पृष्ट्वा च शर्वरीम् । मेघघोषैरथवरैः प्रययुस्ते नरर्षभाः ॥ २० ॥ बलाहकं मेघपुष्पं शैब्यं सुग्रीवमेव च । दारुकश्चोदयामास वासुदेवस्य वाजिनः ॥ २१ ॥ ते हया वासुदेवस्य दारुकेण प्रचोदिताः । गां खुराग्रैस्तदा राजन् लिखन्तः प्रय-

युस्ततः ॥ २२ ॥ ते शशन्त इवाकाशं वेगवन्तो महाबलाः । चेत्रं धर्मस्य कृत्स्नस्य कुरुक्षेत्रमवातरन् ॥ २३ ॥ ततो ययुर्यत्र भीष्मः शरतल्पगतः प्रभुः । आस्ते महर्षिभिः सार्द्धं ब्रह्मा देवगणैर्यथा ॥ २४ ॥ ततोऽवतीर्य्य गोविन्दो रथात् स च युधिष्ठिरः । भीमो गाण्डीवधन्वा च यमौ सात्यकिरेव च । ऋषीनभ्यर्च्चयामासुः करानुद्यम्य दक्षिणान् ॥ २५ ॥ स तैः परिवृतो राजा नक्षत्रैरिव चन्द्रमाः । अभ्याजगाम गाङ्गेयं ब्रह्माणमिव वासवः ॥२६॥ शरतल्पे शयानन्तमादित्यं पतितं यथा । स ददर्श महाबाहुं भयाच्चागतसाध्वसः ॥ २७ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि श्रीकृष्णादीनां भीष्मसमीपगमने त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

जनमेजय उवाच । धर्मात्मनि महावीर्य्ये सत्यसन्धे जितात्मनि । देवव्रते महाभागे शरतल्पगतेऽच्युते ॥ १ ॥ शयाने वीरशयने भीष्मे शान्तनुनन्दने । गाङ्गेये पुरुषव्याघ्रे पाण्डवैः पर्य्युपासिते ॥ २ ॥ काः कथाः समवर्त्तन्त तस्मिन् वीरसमागमे । हतेषु सर्वसैन्येषु तन्मे शंस महामुने ॥ ३ ॥

वैशम्पायन उवाच । शरतल्पगते भीष्मे कौरवाणां धुरन्धरे । आजग्मुरृषयः सिद्धा नारदप्रमुखा नृप ॥ ४ ॥ हतशिष्टाश्च राजानो युधिष्ठिरपुरोगमाः । धृतराष्ट्रश्च कृष्णश्च भीमार्जुनयमास्तथा ॥ ५ ॥ तेऽभिगम्य महात्मानो भरतानां पितामहम् । अन्वशोचन्त गाङ्गेयमादित्यं पतितं यथा ॥ ६ ॥ मुहूर्त्तमिव च ध्यात्वा नारदो देवदर्शनः । उवाच पाण्डवान् सर्वान् हतशिष्टांश्च पार्थिवान् ॥ ७ ॥ प्राप्तकालं समाचक्षे भीष्मोऽयमनुयुज्यताम् । अस्तमेति हि गाङ्गेयो भानुमानिव भारत ॥ ८ ॥ अयं प्राणानुत्-

भिस्तुस्तं सर्वेऽभ्यनुपृच्छत। कृत्स्नान् हि विविधान् धर्मांश्चा-
तुर्वर्ण्यस्य वेत्त्ययम् ॥ ९ ॥ एष वृद्धः परांल्लोकान् सम्प्राप्नोति
तनुं त्यजन्। तं शीघ्रमनुयुङ्क्ष्वोध्वं संशयान्मनसि स्थितान् ॥ १० ॥
एवमुक्ता नारदेन भीष्मंभीयुर्नराधिपाः। प्रष्टुञ्चाशक्नुवन्तस्ते वीक्षा-
ञ्चक्रुः परस्परम् ॥ ११ ॥ अथोवाच हृषीकेशं पाण्डुपुत्रो युधि-
ष्ठिरः। नान्यस्तु देवकीपुत्रात् शक्तः प्रष्टुं पितामहम् ॥ १२ ॥
प्रव्याहर यदुश्रेष्ठ त्वमग्रे मधुसूदन। त्वं हि नस्तात सर्वेषां
सर्वधर्मविदुत्तमः ॥ १३ ॥ एवमुक्तः पाण्डवेन भगवान् केशव-
स्तदा। अभिगम्य दुराधर्षं प्रव्याहारयदच्युतः ॥ १४ ॥

वासुदेव उवाच। कच्चित् सुखेन रजनी व्युष्टा ते राजसत्तम।
विस्पष्टलक्षणा बुद्धिः कच्चिच्चोपस्थिता तव ॥ १५ ॥ कच्चित् ज्ञानानि
सर्वाणि प्रतिभान्ति च तेऽनघ। न ग्लायते च हृदयं न च ते
व्याकुलं मनः ॥ १६ ॥

भीष्म उवाच। दाहो मोहः श्रमश्चैव क्लमो ग्लानिस्तथा रुजा।
तव प्रसादात् वार्ष्णेय सद्यः प्रतिगतानि मे ॥ १७ ॥ यच्च भूतं
भविष्यच्च भवच्च परमद्युते। तत् सर्वमनुपश्यामि पाणौ फल-
मिवार्पितम् ॥ १८ ॥ वेदोक्ताश्चैव ये धर्मा वेदान्ताधिगताश्च ये।
तान् सर्वान् संप्रपश्यामि वरदानात्तवाच्युत ॥ १९ ॥ शिष्टैश्च धर्मो
यः प्रोक्तः स च मे हृदि वर्त्तते। देशजातिकुलानाञ्च धर्मज्ञो-
ऽस्मि जनार्द्दन ॥ २० ॥ चतुर्ष्वाश्रमधर्मेषु योऽर्थः स च हृदि
स्थितः। राजधर्मांश्च सकलानवगच्छामि केशव ॥ २१ ॥ यच्च
यत्र च वक्तव्यं तद्वक्ष्यामि जनार्द्दन। तव प्रसादाद्धि शुभा मनो
मे बुद्धिराविशत् ॥ २२ ॥ युवेवास्मि समावृत्तस्त्वदनुध्यानबृंहितः।
वक्तुं श्रेयः समर्थोऽस्मि त्वत्प्रसादाज्जनार्द्दन ॥ २२ ॥ स्वयं किम-
र्थन्तु भवान् श्रेयो न प्राह पाण्डवम्। किन्ते विवक्षितञ्चात्र तदाशु
वद माधव ॥ २४ ॥

वासुदेव उवाच। यशसः श्रेयसश्चैव मूलं मां विद्धि कौरव। मत्तः सर्वेऽभिनिर्वृत्ता भावाः सदसदात्मकाः ॥ २५ ॥ शीतांशुश्चन्द्र इत्युक्ते लोके को विस्मयिष्यति। तथैव यशसा पूर्णे मयि को विस्मयिष्यति ॥ २६ ॥ आधेयन्तु मया भूयो यशस्तव महाद्युते। ततो मे विपुला बुद्धिस्त्वयि भीष्म समर्पिता ॥ २७ ॥ यावद्धि पृथिवीपाल पृथ्वीयं स्थास्यति ध्रुवा। तावत्तवाक्षया कीर्त्तिर्लोकाननुचरिष्यति ॥ २८ ॥ यच्च त्वं वक्ष्यसे भीष्म पाण्डवायानुपृच्छते। वेदप्रवाद इव ते स्थास्यते वसुधातले ॥ २९ ॥ यश्चैतेन प्रमानेन योक्ष्यत्यात्मानमात्मना। स फलं सर्वपुण्यानां प्रेत्य चानुभविष्यति ॥ ३० ॥ एतस्मात् कारणाद्भीष्म मतिर्दिव्या मया हि ते। दत्ता यशो विप्रथयेत् कथं भूयस्तवेति ह ॥ ३१ ॥ यावद्धि प्रथते लोके पुरुषस्य यशो भुवि। तावत्तस्याक्षया कीर्त्तिर्भवतीति विनिश्चितम् ॥ ३२ ॥ राजानो हतशिष्टास्त्वां राजन्नभित आसते। धर्माननुयुयुक्षन्तस्तेभ्यः प्रब्रूहि भारत ॥ ३३ ॥ भवान् हि वयसा वृद्धः श्रुताचारसमन्वितः। कुशलो राजधर्माणां सर्वेषामपराश्च ये ॥ ३४ ॥ जन्मप्रभृति ते कश्चिद्वृजिनं न ददर्श ह। ज्ञातरं सर्वधर्माणां त्वां विदुः सर्वपार्थिवाः ॥ ३५ ॥ तेभ्यः पितेव पुत्रेभ्यो राजन् ब्रूहि परं नयम्। ऋषयश्चैव देवाश्च त्वया नित्यमुपासिताः ॥ ३६ ॥ तस्माद्वक्तव्यमेवेदं त्वयावश्यमशेषतः। धर्मं शुश्रूषमाणेभ्यः पृष्टेन च सतां पुन। वक्तव्यं विदुषा चेति धर्ममाहुर्मनीषिणः ॥ ३७ ॥ अप्रतिब्रुवतः कष्टो दोषो हि भविता प्रभो। तस्मात् पुत्रैश्च पौत्रैश्च धर्मान् पृष्टः सनातनान्। विद्वन् जिज्ञासमानैस्त्वं प्रब्रूहि भरतर्षभ ॥ ३८ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि श्रीकृष्णवाक्ये चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

---

वैशम्पायन उवाच। अथाब्रवीन्महातेजा वाक्यं कौरवनन्दनः। हन्त धर्मान् प्रवक्ष्यामि दृढ़े वाङ्मनसी मम। तव प्रसादाद्गोविन्द भूतात्मा ह्यसि शाश्वतः॥ १॥ युधिष्ठिरस्तु धर्मात्मा मां धर्माननुपृच्छतु। एवं प्रीतो भविष्यामि सर्वान् वक्ष्यामि चाखिलान्॥२॥ यस्मिन्राजर्षभे जाते धर्मात्मनि महात्मनि। अहृष्यन् वृष्णयः सर्वे स मां पृच्छतु पाण्डवः॥ ३॥ सर्वेषां दीप्तयशसां कुरूणां धर्मचारिणाम्। यस्य नास्ति समः कश्चित् स मां पृच्छतु पाण्डवः॥४॥ धृतिर्दमो ब्रह्मचर्य्यं क्षमा धर्मश्च नित्यदा। यस्मिन्नोजश्च तेजश्च स मां पृच्छतु पाण्डव॥ ५॥ सम्बन्धीनतिथीन् भृत्यान् संश्रितांश्चैव यो भृशम्। सम्मानयति सत्कृत्य स मां पृच्छतु पाण्डवः॥६॥ सत्यं दानं तपः शौर्य्यं शान्तिर्दाक्ष्यमसम्भ्रमः। यस्मिन्नेतानि धर्माणि स मां पृच्छतु पाण्डवः॥ ७॥ यो न कामान्न संरम्भान्न भयान्नार्थकारणात्। कुर्य्यादधर्मं धर्मात्मा स मां पृच्छतु पाण्डवः॥ ८॥ सत्यनित्यः क्षमानित्यो ज्ञाननित्योऽतिथिप्रियः। यो ददाति सतां नित्यं स मां पृच्छतु पाण्डवः॥ ९॥ इज्याध्ययननित्यश्च धर्मे च निरतः सदा। शान्तः श्रुतरहस्यश्च स मां पृच्छतु पाण्डवः॥१०॥

वासुदेव उवाच। लज्जया परयोपेतो धर्मराजो युधिष्ठिरः। अभिशापभयाद्भीतो भवन्तं नोपसर्पति॥ ११॥ लोकस्य कदनं कृत्वा लोकनाथो विशाम्पते। अभिशापभयाद्भीतो भवन्तं नोपसर्पति॥ १२॥ पूज्यान्मान्यांश्च भक्तांश्च गुरून् सम्बन्धिबान्धवान्। अर्घार्हानिषुभिर्भित्त्वा भवन्तं नोपसर्पति॥ १३॥

भीष्म उवाच। ब्राह्मणानां यथा धर्मो दानमध्ययनं तपः। क्षत्रियाणां तथा कृष्ण समरे देहपातनम्॥ १४॥ पितॄन् पितामहान् भ्रातॄन् गुरून् सम्बन्धिबान्धवान्। मिथ्याप्रवृत्तान् यः संख्ये निहन्याद्धर्म्म एव सः॥ १५॥ समयत्यागिनो लुब्धान् गुरूनपि च केशव। निहन्ति समरे पापान् क्षत्रियः स हि धर्म्मवित्॥१६॥

यो लोभान्न समीक्षेत धर्मसेतुं सनातनम् । निहन्ति यस्तं समरे क्षत्रियो वै स धर्मवित् ॥ १७ ॥ लोहितोदां केशतृणां गजशैलां ध्वजद्रुमाम् । महीं करोति युद्धेषु क्षत्रियो यः स धर्मवित् ॥१८॥ आहूतेन रणे नित्यं योद्धव्यं क्षत्रबन्धुना । धर्म्यं स्वर्ग्यञ्च लोक्यञ्च युद्धं हि मनुरब्रवीत् ॥ १९ ॥

वैशम्पायन उवाच । एवमुक्तस्तु भीष्मेण धर्मपुत्रो युधिष्ठिरः । विनीतवदुपागम्य तस्थौ सन्दर्शनेऽग्रतः ॥ २० ॥ अथास्य पादौ जग्राह भीष्मश्चापि ननन्द तम् । मूर्द्धि चैनमुपाघ्राय निषीदेत्यब्रवीत्तदा ॥ २१ ॥ तमुवाचाथ गाङ्गेयो वृषभः सर्वधन्विनाम् । मां पृच्छ तात विश्रब्धं मा भैस्त्वं कुरुसत्तम ॥ २२ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि युधिष्ठिराश्वासने पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

वैशम्पायन उवाच । प्रणिपत्य हृषीकेशमभिवाद्य पितामहम् । अनुमान्य गुरून् सर्वान् पर्य्यपृच्छद्युधिष्ठिरः ॥ १ ॥

युधिष्ठिर उवाच । राज्ञां वै परमो धर्म इति धर्मविदो विदुः । महान्तमेतं भारञ्च मन्ये तद्ब्रूहि पार्थिव ॥ २ ॥ राजधर्मान् विशेषेण कथयस्व पितामह । सर्वस्य जीवलोकस्य राजधर्मः परायणम् ॥ ३ ॥ त्रिवर्गो हि समासक्तो राजधर्मेषु कौरव । मोक्षधर्मश्च विस्पष्टः सकलोऽत्र समाहितः ॥ ४ ॥ यथा हि रश्मयोऽश्वस्य द्विरदस्याङ्कुशो यथा । नरेन्द्रधर्मो लोकस्य तथा प्रग्रहणं स्मृतम् ॥ ५ ॥ तत्र चेत् संप्रमुह्येत धर्मे राजर्षिसेविते । लोकस्य संस्था न भवेत् सर्वञ्च व्याकुलीभवेत् ॥ ६ ॥ उदयन् हि यथा सूर्य्यो नाशयत्यशुभं तमः । राजधर्मास्तथालोक्यामाक्षिपन्त्यशुभां गतिम् ॥ ७ ॥ तदग्रे राजधर्मान् हि मदर्थं त्वं पितामह ।

प्रब्रूहि भरतश्रेष्ठ त्वं हि धर्मभृताम्वरः ॥ ८ ॥ आगमश्च परस्त्वत्तः सर्वेषां नः परन्तप । भवन्तं हि परं बुद्धौ वासुदेवोऽभिमन्यते ॥९॥

भीष्म उवाच । नमो धर्माय महते नमः कृष्णाय वेधसे । ब्राह्मणेभ्यो नमस्कृत्य धर्मान् वक्ष्यामि शाश्वतान् ॥ १० ॥ शृणु कार्त्स्न्येन मत्तस्त्वं राजधर्मान् युधिष्ठिर । निरुच्यमानान्निरतो यच्चान्यदपि वाञ्छसि ॥ ११ ॥ आदावेव कुरुश्रेष्ठ राज्ञा रञ्जन-काम्यया । देवतानां द्विजानाञ्च वर्त्तितव्यं यथाविधि ॥ १२ ॥ दैवतान्यर्चयित्वा हि ब्राह्मणांश्च कुरूद्वह । आनृण्यं याति धर्मस्य लोकेन च समर्च्यसे ॥ १३ ॥ उत्थानेन सदा पुत्र प्रयतेथा युधिष्ठिर । न ह्युत्थानमृते दैवं राज्ञामर्थं प्रसाधयेत् ॥ १४ ॥ साधारणं द्वयं ह्येतद्दैवमुत्थानमेव च । पौरुषं हि परं मन्ये दैवं निश्चित्य मुच्यते ॥ १५ ॥ विपन्ने च समारम्भे सन्तापं मा स्म वै कृथाः । घटस्वैवं सदात्मानं राज्ञामेष परो नयः ॥ १६ ॥ न हि सत्यादृते किञ्चिद्राज्ञां वै सिद्धिकारकम् । सत्ये हि राजा निरतः प्रेत्य चेह च नन्दति ॥ १७ ॥ ऋषीणामपि राजेन्द्र सत्यमेव परं धनम् । तथा राज्ञः परं सत्यान्नान्यद्विश्वासकारणम् ॥ १८ ॥ गुणवान् शीलवान् दान्तो मृदुर्धर्म्यो जितेन्द्रियः । सुदर्शः स्थूललक्ष्यश्च न भ्रश्येत सदा श्रियः ॥ १९ ॥ आर्ज्जवं सर्वकार्य्येषु श्रयेथाः कुरु-नन्दन । पुनर्नयविचारेण त्रयीसम्वरणेन च ॥ २० ॥ मृदुर्हि राजा सततं लङ्घ्यो भवति सर्वशः । तीक्ष्णाच्चोद्विजते लोक-स्तस्मादुभयमाचर ॥ २१ ॥ अदण्ड्याश्चैव ते पुत्र विप्राश्च ददतां-म्वर । भूतमेतत् परं लोके ब्राह्मणो नाम पाण्डव ॥ २२ ॥ मनुना चैव राजेन्द्र गीतौ श्लोकौ महात्मना । धर्मेषु स्वेषु कौरव्य हृदि तौ कर्त्तुमर्हसि ॥ २३ ॥ अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोह-मुत्थितम् । तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ २४ ॥ अयो हन्ति यदाश्मानमग्निना वारि हन्यते । ब्रह्म च क्षत्रियो द्वेष्टि

तदा सीदन्ति ते वयः ॥ २५ ॥ एवं कृत्वा महाराज नमस्या एव ते द्विजाः । भौमं ब्रह्म द्विजश्रेष्ठा धारयन्ति समर्च्चिताः ॥ २६ ॥ एवञ्चैव नरव्याघ्र लोकत्रयविघातकाः । निग्राह्या एव सततं बाहुभ्यां ये स्युरीदृशाः ॥ २७ ॥ श्लोकौ चोशनसा गीतौ पुरा तात महर्षिणा । तौ निबोध महाराज त्वमेकाग्रमना नृप ॥ २८ ॥ उद्यम्य शस्त्रमायान्तमपि वेदान्तगं रणे । निगृह्णीयात् स्वधर्मेण धर्म्मापेक्षी नराधिपः ॥ २९ ॥ विनश्यमानं धर्मं हि योऽभिरक्षेत् स्वधर्मवित् । न तेन धर्महा स स्यान्मन्युस्तन्मन्युमृच्छति ॥ ३० ॥ एवञ्चैव नरश्रेष्ठ रक्ष्या एव द्विजातयः । सापराधानपि हि तान् विषयान्ते समुत्सृजेत् ॥ ३१ ॥ अभिशस्तमपि ह्येषां कृपायीत विशाम्पते । ब्रह्मघ्ने गुरुतल्पे च भ्रूणहत्ये तथैव च ॥ ३२ ॥ राजद्विष्टे च विप्रस्य विषयान्ते विसर्ज्जनम् । विधीयते न शारीरं दण्डमेषां कदाचन ॥ ३३ ॥ दयिताश्च नरास्ते स्युर्भक्तिमन्तो द्विजेषु ये । न कोषः परमोऽन्योऽस्ति राज्ञां पुरुषसञ्चयात् ॥ ३४ ॥ दुर्गेषु च महाराज षट्सु ये शास्त्रनिश्चिताः । सर्वदुर्गेषु मन्यन्ते नरदुर्गं सुदुस्तरम् ॥ ३५ ॥ तस्मान्नित्यं दया कार्य्या चातुर्वर्ण्ये विपश्चिता । धर्मात्मा सत्यवाक् चैव राजा रञ्जयति प्रजाः ॥ ३६ ॥ न च क्षान्तेन ते नित्यं भाव्यं पुत्र समन्ततः । अधर्मो हि मृदू राजा क्षमावानिव कुञ्जरः ॥ ३७ ॥ वार्हस्पत्ये च शास्त्रे च श्लोको निगदितः पुरा । अस्मिन्नर्थे महाराज तन्मे निगदतं शृणु ॥ ३८ ॥ क्षममाणं नृपं नित्यं नीचः परिभवेज्जनः । हस्तियन्ता गजस्येव शिर एवारुरुक्षति ॥ ३९ ॥ तस्मान्नैव मृदुर्नित्यं तीक्ष्णो नैव भवेन्नृपः । वासन्तार्क इव श्रीमान् न शीतो न च घर्म्मदः ॥ ४० ॥ प्रत्यक्षेणानुमानेन तथौपम्यागमैरपि । परीक्ष्यास्ते महाराज स्वे परे चैव नित्यशः ॥ ४१ ॥ व्यसनानि च सर्वाणि त्यजेथा भूरिदक्षिण । न चैव न प्रयुञ्जीत सङ्गन्तु परिवर्ज्जयेत् ॥ ४२ ॥ लोकस्य

व्यसनी नित्यं परिभूतो भवत्युत। उद्वेजयति लोकञ्च योऽतिद्वेषी महीपतिः॥ ४३॥ भवितव्यं सदा राज्ञा गर्भिणीसहधर्म्मिणा। कारणञ्च महाराज शृणु येनेदमिष्यते॥ ४४॥ यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोनुगम्। गर्भस्य हितमाधत्ते तथा राज्ञाप्यसंशयम्॥ ४५॥ वर्त्तितव्यं कुरुश्रेष्ठ सदाधर्म्मानुवर्त्तिना। स्वं प्रियन्तु परित्यज्य यद्यल्लोकहितं भवेत्॥ ४६॥ न संत्याज्यञ्च ते धैर्य्यं कदाचिदपि पाण्डव। धीरस्य स्पष्टदण्डस्य न भयं विद्यते क्वचित्॥ ४७॥ परिहासश्च भृत्यैस्ते नात्यर्थं वदताम्वर। कर्त्तव्यो राजशार्दूल दोषमत्र हि मे शृणु॥ ४८॥ अवमन्यन्ति भर्त्तारं सङ्घर्षादुपजीविनः। स्वे स्थाने न च तिष्ठन्ति लङ्घयन्ति च तत्त्वतः॥ ४९॥ प्रेष्यमाणा विकल्पन्ते गुह्यं चाप्यनुयुञ्जते। अयाच्यञ्चैव याचन्ते भोज्यान्याहरयन्ति च॥ ५०॥ क्रुध्यन्ति परिदीप्यन्ति भूमिपायाधितिष्ठते। उत्कोचैर्वञ्चनाभिश्च कार्य्याण्यनुविहन्ति च॥ ५१॥ जर्ज्जरं चास्य विषयं कुर्वन्ति प्रतिरूपकैः। स्त्रीरक्षिभिश्च सज्जन्ते तुल्यवेशा भवन्ति च॥ ५२॥ वातं निष्ठीवनञ्चैव कुर्वते चास्य सन्निधौ। निर्लज्जा राजशार्दूल व्याहरन्ति च तद्वचः॥५३॥ हयम्वा दन्तिनम्वापि रथम्वा नृपसम्मतम्। अभिरोहन्त्यनादृत्य हर्षुले पार्थिवे मृदौ॥ ५४॥ इदन्ते दुष्करं राजन्निदन्ते दुष्टचेष्टितम्। इत्येवं सुहृदो वाचं वदन्ते परिषद्गताः॥ ५५॥ क्रुद्धे चास्मिन् हसन्त्येव न च हृष्यन्ति पूजिताः। संहर्षशीलाश्च तदा भवन्त्यन्योऽन्यकारणात्॥ ५६॥ विस्रंसयन्ति मन्त्रञ्च विवृण्वन्ति च दुष्कृतम्। लीलया चैव कुर्वन्ति सावज्ञास्तस्य शासनम्॥५७॥ अलङ्कारे च भोज्ये च तथा स्नानानुलेपने। क्रियमाणे नरव्याघ्र स्वस्थास्तस्योपशृण्वतः॥ ५८॥ नित्यन्ते स्वानधीकारान् सन्त्यजन्ते च भारत। न वृत्त्या परितुष्यन्ति राजदेयं हरन्ति च॥ ५९॥ क्रीड़ितुन्तेन चेच्छन्ति ससूत्रेणेव पक्षिणा। अस्मत्प्रणेयो राजेति

लोकांश्चैव वदन्त्युत ॥ ६० ॥ एते चैवापरे चैव दोषाः प्रादुर्भवन्त्युत । नृपतौ मार्द्दवोपेते हर्षुले च युधिष्ठिर ॥ ६१ ॥

इति शान्तिपर्व्वणि राजधर्मानुशासनपर्व्वणि भीष्मवाक्ये षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

---

भीष्म उवाच । नित्योद्युक्तेन वै राज्ञा भवितव्यं युधिष्ठिर । प्रशस्यते न राजा हि नारीवोद्यमवर्ज्जितः ॥ १ ॥ भगवानुशना आह श्लोकमत्र विशाम्पते । तदिहैकमना राजन् गदतस्तं निबोध मे ॥ २ ॥ द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव । राजानञ्चाविरोद्धारं ब्राह्मणञ्चाप्रवासिनम् ॥ ३ ॥ तदेतन्नरशार्दूल हृदि त्वं कर्त्तुमर्हसि । सन्धेयानभिसन्धत्स्व विरोध्यांश्च विरोधय ॥ ४ ॥ सप्ताङ्गस्य च राज्यस्य विपरीतं य आचरेत् । गुरुर्वा यदि वा मित्रं प्रतिहन्तव्य एव सः ॥ ५ ॥ मरुत्तेन हि राज्ञा वै गीतः श्लोकः पुरातनः । राजाधिकारे राजेन्द्र बृहस्पतिमते पुरा ॥६॥ गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः । उत्पथप्रतिपन्नस्य दण्डो भवति शाश्वतः ॥७॥ बाहोः पुत्रेण राज्ञा च सगरेण च धीमता । असमञ्जाः सुतो ज्येष्ठस्त्यक्तः पौरहितैषिणा ॥ ८ ॥ असमञ्जाः सरय्वां स पौराणां बालकान्नृप । न्यमज्जयदतः पित्रा निर्भर्त्स्य स विवासितः ॥ ९ ॥ ऋषिणोद्दालकेनापि श्वेतकेतुर्महातपाः । मिथ्याविप्रानुपचरन् सन्त्यक्तो दयितः सुतः ॥ १० ॥ लोकरञ्जनमेवात्र राज्ञां धर्मः सनातनः । सत्यस्य रक्षणञ्चैव व्यवहारस्य चार्ज्जनम् ॥ ११ ॥ न हिंस्यात् परवित्तानि देयं काले च दापयेत् । विक्रान्तः सत्यवाक् क्षान्तो नृपो न चलते पथः ॥ १२ ॥ आत्मवांश्च जितक्रोधः शास्त्रानुगतनिश्चयः । धर्मे चार्थे च कामे च मोक्षे च सततं रतः ॥ १३ ॥ त्रय्यां संवृतमन्त्रश्च राजा भवितुमर्हति ।

वृजिनञ्च नरेन्द्राणां नान्यच्चारक्षणात् परम् ॥ १४ ॥ चातुर्वर्ण्यस्य धर्माश्च रक्षितव्या महीक्षिता । धर्मसङ्कररक्षा च राज्ञां धर्मः सनातनः ॥ १५ ॥ न विश्वसेच्च नृपतिर्न चात्यर्थञ्च विश्वसेत् । षाड्गुण्यगुणदोषांश्च नित्यं बुद्ध्यावलोकयेत् ॥ १६ ॥ द्विट्छिद्र-दर्शी नृपतिर्नित्यमेव प्रशस्यते । त्रिवर्गे विदितार्थश्च युक्तचारो-पधिश्च यः ॥ १७ ॥ कोशस्योपार्ज्जनरतिर्यमवैश्रवणोपमः । वेत्ता च गुणदोषस्य स्थानवृद्धिक्षयात्मनः ॥ १८ ॥ अभृतानां भवेद्भर्त्ता भृतानामन्ववेक्षकः । नृपतिः सुमुखश्च स्यात् स्मितपूर्वाभिभाषिता ॥ १९ ॥ उपासिता च वृद्धानां जिततन्द्रिरलोलुपः । सतां वृत्ते स्थितमतिः सन्तोषाचारदर्शनः ॥ २० ॥ न चाददीत वित्तानि सतां हस्तात् कदाचन । असद्भ्यश्च समादद्यात् सद्भ्यस्तु प्रति-पादयेत् ॥ २१ ॥ स्वयं प्रहर्त्ता दाता च वश्यात्मा रम्यसाधनः । काले दाता च भोक्ता च शुद्धाचारस्तथैव च ॥ २२ ॥ शूरान् भक्तानसंहार्य्यान् कुले जातानरोगिणः । शिष्टान् शिष्टाभिसम्ब-न्धान् मानिनोऽनवमानिनः ॥ २३ ॥ विद्याविदो लोकविदः पर-लोकान्ववेक्षकान् । धर्मे च निरतान् साधूनचलानचलानिव ॥२४॥ सहायान् सततं कुर्य्यात् राजा भूतिपरिष्कृतः । तैश्च तुल्यो भवे-द्भोगैश्छत्रमात्राज्ञयाधिकः ॥ २५ ॥ प्रत्यक्षा च परोक्षा च वृत्ति-श्चास्य भवेत् सदा । एवं कुर्वन्नरेन्द्रोऽपि न खेदमिह विन्दति॥२६॥ सर्वाभिशङ्की नृपतिर्यश्च सर्वहरो भवेत् । स क्षिप्रमनृजुर्लुब्धः स्वजनेनैव बध्यते ॥ २७ ॥ शुचिस्तु पृथिवीपालो लोकचित्तग्रहे रतः । न पतत्यरिभिर्ग्रस्त पतितश्चावतिष्ठते ॥ २८ ॥ अक्रोधनो ह्यव्यसनी मृदुदण्डो जितेन्द्रियः । राजा भवति भूतानां विश्वास्यो हिमवानिव ॥ २९ ॥ प्राज्ञस्त्यागगुणोपेतः पररन्ध्रेषु तत्परः । सुदर्शः सर्ववर्णानां नयापनयवित्तथा ॥ ३० ॥ क्षिप्रकारी जित-क्रोधः सुप्रसादो महामनाः । अरोषप्रकृतिर्युक्तः क्रियावानवि-

कत्थनः ॥ ३१ ॥ आरब्धान्येव कार्य्याणि सुपर्य्यवसितानि च । यस्य राज्ञः प्रदृश्यन्ते स राजा राजसत्तम ॥ ३२ ॥ पुत्रा इव पितुर्गेहे विषये यस्य मानवाः । निर्भया विचरिष्यन्ति स राजा राजसत्तमः ॥ ३३ ॥ अगूढ़विभवा यस्य पौरा राष्ट्रनिवासिनः । नयापनयवेत्तारः स राजा राजसत्तमः ॥ ३४ ॥ स्वकर्मनिरता यस्य जना विषयवासिनः । असङ्घातरता दान्ता पाल्यमाना यथाविधि ॥३५॥ वश्या नेया विधेयाश्च न च सङ्घर्षशीलिनः । विषये दानरुचयो नरा यस्य स पार्थिवः । न यस्य कूटं कपटं न माया न च मत्सरः । विषये भूमिपालस्य तस्य धर्मः सनातनः ॥ ३६ ॥ यः सत्करोति ज्ञानानि ज्ञेये पौरहिते रतः । सतां वर्त्मानुगस्त्यागी स राजा राज्यमर्हति ॥ ३७ ॥ यस्य चाराश्च मन्त्राश्च नित्यञ्चैव कृताकृताः । न ज्ञायन्ते हि रिपुभिः स राजा राज्यमर्हति ॥ ३८ ॥ श्लोकश्चायं पुरा गीतो भार्गवेण महात्मना । आख्याने रामचरिते नृपतिं प्रति भारत ॥ ३९ ॥ राजानं प्रथमं विन्देत्ततो भार्य्यां ततो धनम् ॥ ४० ॥ तद्राज्ये राज्यकामानां नान्यो धर्मः सनातनः । ऋते रक्षान्तु विस्पष्टां रक्षा लोकस्य धारिणी ॥ ४१ ॥ प्राचेतसेन मनुना श्लोकौ चेमावुदाहृतौ । राजधर्मेषु राजेन्द्र ताविहैकमनाः शृणु ॥ ४२ ॥ षडेतान् पुरुषो जह्याद्भिन्नां नावमिवार्णवे । अप्रवक्तारमाचार्य्यमनधीयानमृत्विजम् ॥ ४३ ॥ अरक्षितारं राजानं भार्य्याञ्चाप्रियवादिनीम् । ग्रामकामञ्च गोपालं वनकामञ्च नापितम् ॥ ४४ ॥

इति शान्तिपर्व्वणि राजधर्मानुशासनपर्व्वणि भीष्मोक्तौ सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

भीष्म उवाच। एतत्ते राजधर्म्माणां नवनीतं युधिष्ठिर। वृह-स्पतिर्हि भगवान् नान्यं धर्मं प्रशंसति ॥ १ ॥ विशालाक्षश्च भग-वान् काव्यश्चैव महातपाः। सहस्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः ॥ २ ॥ भारद्वाजश्च भगवान् तथा गौरशिरा मुनिः। राज-शास्त्रप्रणेतारो ब्रह्मण्या ब्रह्मवादिनः ॥ ३ ॥ रक्षामेव प्रशंसन्ति धर्मं धर्मभृताम्वर। राज्ञां राजीवताम्राक्ष साधनञ्चात्र मे शृणु ॥ ४ ॥ चारश्च प्रणिधिश्चैव काले दानममत्सरात्। युक्त्यादानं न चादानमयोगेन युधिष्ठिर ॥ ५ ॥ सतां संग्रहणं शौर्य्यं दाक्ष्यं सत्यं प्रजाहितम्। अनार्ज्जवैरार्ज्जवैश्च शत्रुपक्षस्य भेदनम् ॥ ६ ॥ केतनानाञ्च जीर्णानामवेक्षा चैव सीदताम्। द्विविधस्य च दण्डस्य प्रयोगः कालचोदितः ॥ ७ ॥ साधूनामपरित्यागः कुलीनानाञ्च धारणम्। निचयश्च निचेयानां सेवा वुद्धिमतामपि ॥ ८ ॥ वलानां हर्षणं नित्यं प्रजानामन्ववेक्षणम्। कार्य्येष्वखेदः कोषस्य तथैव च विवर्द्धनम् ॥ ९ ॥ पुरगुप्तिरविश्वासः पौरसङ्घातभेदनम्। अरिमध्यस्थमित्राणां यथावच्चान्ववेक्षणम् ॥ १० ॥ उपजापश्च भृत्यानामात्मनः पुरदर्शनम्। अविश्वासः स्वयञ्चैव परस्याश्वासनं तथा ॥ ११ ॥ नीतिधर्म्मानुसरणं नित्यमुत्थानमेव च। रिपूणा-मनवज्ञानं नित्यञ्चानार्य्यवर्ज्जनम् ॥ १२ ॥ उत्थानं हि नरेन्द्राणां वृहस्पतिरभाषत। राजधर्मस्य तन्मूलं श्लोकांश्चात्र निवोध मे ॥१३ उत्थानेनामृतं लब्धमुत्थानेनासुरा हताः। उत्थानेन महेन्द्रेण श्रैष्ठ्यं प्राप्तं दिवीह च ॥ १४ ॥ उत्थानवीरः पुरुषो वाग्वीरानधि-तिष्ठति। उत्थानवीरान् वाग्वीरा रमयन्त उपासते ॥ १५ ॥ उत्थानहीनो राजा हि वुद्धिमानपि नित्यशः। प्रधर्षणीयः शत्रूणां भुजङ्ग इव निर्विषः ॥ १६ ॥ न च शत्रुरवज्ञेयो दुर्वलोऽपि वली-यसा। अल्पोऽपि हि दहत्यग्निर्विषमल्पं हिनस्ति च ॥ १७ ॥ एकाङ्गेनापि सम्भूतः शत्रुर्दुर्गमुपाश्रितः। सर्वं तापयते देशमपि

राज्ञः समृद्धिनः ॥ १८ ॥ राज्ञो रहस्यं यद्वाक्यं जयार्थं लोक-
संग्रहः । हृदि यच्चास्य जिह्मं स्यात् कारणेन च यद्भवेत् ॥१९॥
यच्चास्य कार्य्यं वृजिनमार्ज्जवेनेह निर्ज्जयेत् । दम्भनार्थञ्च लोकस्य
धर्मिष्ठामाचरेत् क्रियाम् ॥ २० ॥ राज्यं हि सुमहत्तन्त्रं धार्य्यते
नाकृतात्मभिः । न शक्यं मृदुना वोढ़मायासस्थानमुत्तमम् ॥२१॥
राज्यं सर्वामिषं नित्यं नार्ज्जवेनेह धार्य्यते । तस्मान्मिश्रेण सततं
वर्त्तितव्यं युधिष्ठिर ॥ २२ ॥ यद्यप्यस्य विपत्तिः स्याद्रक्षमाणस्य
वै प्रजा । सोऽप्यस्य विपुलो धर्म एवं वृत्ता हि भूमिपाः ॥ २३ ॥
एष ते राजधर्माणां लेशः समनुवर्णितः । भूयस्ते यत्र सन्देहस्तद्-
ब्रूहि कुरुसत्तम ॥ २४ ॥

वैशम्पायन उवाच । ततो व्यासश्च भगवान् देवस्थानोऽश्म
एव च । वासुदेवः कृपश्चैव सात्यकिः सञ्जयस्तथा ॥ २५ ॥ साधु-
साध्विति संहृष्टाः पुष्यमाणैरिवाननैः । अस्तुवंश्च नरव्याघ्रं भीष्मं
धर्मभृताम्वरम् ॥ २६ ॥ ततो दीनमना भीष्ममुवाच कुरुसत्तमः ।
नेत्राभ्यामश्रुपूर्णाभ्यां पादौ तस्य शनैः स्पृशन् ॥ २७ ॥ श्व इदानीं
स्वसन्देहं प्रच्छामि त्वां पितामह । उपैति सविता ह्यस्तं रसमापीय
पार्थिवम् ॥ २८ ॥ ततो द्विजातीनभिवाद्य केशवः कृपश्च ते चैव
युधिष्ठिरादयः । प्रदक्षिणीकृत्य महानदीसुतं ततो रथानारुरुहु-
र्मुदान्विताः ॥ २९ ॥ दृषद्वतीं चाप्यवगाह्य सुव्रताः कृतोदकार्थाः
कृतजप्यमङ्गलाः । उपास्य सन्ध्यां विधिवत् परन्तपास्ततः पुरं ते
विविशुर्गजाह्वयम् ॥ ३० ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि युधिष्ठिरादि
सायङ्गमे अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

वैशम्पायन उवाच। ततः कल्यं समुत्थाय कृतपूर्वाह्णिकक्रियाः। ययुस्ते नगराकारैः रथैः पाण्डवयादवाः॥ १॥ प्रतिपद्य कुरुक्षेत्रं भीष्ममासाद्य चानघम्। सुखाञ्च रजनीं पृष्ट्वा गाङ्गेयं रथिनाम्वरम्॥ २॥ व्यासादीनभिवाद्यर्षीन् सर्वैस्तैश्चाभिनन्दिताः। निषेदुरभितो भीष्मं परिवार्य्य समन्ततः॥ ३॥ ततो राजा महातेजा धर्मराजो युधिष्ठिरः। अब्रवीत् प्राञ्जलिर्भीष्मं प्रतिपूज्य यथाविधि॥ ४॥

युधिष्ठिर उवाच। य एष राजन् राजेति शब्दश्चरति भारत। कथमेष समुत्पन्नस्तन्मे ब्रूहि परन्तप॥ ५॥ तुल्यपाणिभुजग्रीवस्तुल्यबुद्धीन्द्रियात्मकः। तुल्यदुःखसुखात्मा च तुल्यपृष्ठमुखोदरः॥ ६॥ तुल्यशुक्रास्थिमज्जा च तुल्यमांसासृगेव च। निश्वासोच्छ्वासतुल्यश्च तुल्यप्राणशरीरवान्॥ ७॥ समानजन्ममरणः समः सर्वैर्गुणैर्नृणाम्। विशिष्टबुद्धीन् शूरांश्च कथमेकोऽधितिष्ठति॥८॥ कथमेको महीं कृत्स्नां शूरवीरार्य्यसंकुलाम्। रक्षत्यपि च लोकस्य प्रसादमभिवाञ्छति॥ ९॥ एकस्य तु प्रसादेन कृत्स्नो लोकः प्रसीदति। व्याकुले चाकुलः सर्वो भवतीति विनिश्चयः॥१० एतदिच्छाम्यहं श्रोतुं तत्त्वेन भरतर्षभ। कृत्स्नं तन्मे यथातत्त्वं प्रब्रूहि वदताम्वर॥ ११॥ नैतत्कारणमल्पं हि भविष्यति विशाम्पते। यदेकस्मिन् जगत् सर्वं देववद्याति सन्नतिम्॥ १२॥

भीष्म उवाच। नियतस्त्वं नरव्याघ्र शृणु सर्वमशेषतः। यथा राज्यं समुत्पन्नमादौ कृतयुगेऽभवत्॥ १३॥ नैव राज्यं न राजासीन्न च दण्डो न दाण्डिकः। धर्मेणैव प्रजा सर्वा रक्षन्ति स्म परस्परम्॥ १४॥ पाल्यमानास्तथान्योऽन्य नरा धर्मेण भारत। खेदं परमुपाजग्मुस्ततस्तान् मोह आविशत्॥ १५॥ ते मोहवशमापन्ना मनुजा मनुजर्षभ। प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत्॥१६॥ नष्टायां प्रतिपत्तौ च मोहवश्या नरास्तदा। लोभस्य

वशमापन्नाः सर्व्वे भरतसत्तम ॥ १७ ॥ अप्राप्तस्याभिमर्षन्तु कुर्व्वतो मनुजांस्ततः । कामो नामापरस्तत्र पत्यपद्यत वै प्रभो ॥ १८ ॥ तांस्तु कामवशं प्राप्तान् रागो नामाभिसंस्पृशत् । रक्ताश्च नाभ्यजानन्त कार्य्याकार्य्यं युधिष्ठिर ॥ १९ ॥ अगम्यागमनञ्चैव वाच्यावाच्यन्तथैव च । भक्ष्याभक्ष्यञ्च राजेन्द्र दोषादोषञ्च नात्यजन् ॥२०॥ विप्लुते नरलोके वै ब्रह्म चैवं ननाश ह । नाशाच्च ब्रह्मणो राजन् धर्मो नाशमथागमत् ॥ २१ ॥ नष्टे ब्रह्मणि धर्मे च देवांस्त्रासः समाविशत् । ते त्रस्ता नरशार्दूल ब्रह्माणं शरणं ययुः ॥ २२ ॥ प्रसाद्य भगवन्तं ते देवं लोकपितामहम् । ऊचुः प्राञ्जलयः सर्व्वे दुःखवेगसमाहताः ॥ २३ ॥ भगवन्नरलोकस्थं ग्रस्तं ब्रह्म सनातनम् । लोभमोहादिभिर्भावैस्ततो नो भयमाविशत् ॥ २४ ॥ ब्रह्मणश्च प्रणाशेन धर्मो व्यनशदीश्वर । ततः स्म समतां याता मर्त्यैस्त्रिभुवनेश्वर ॥२५॥ अधो हि वर्षाम वयं नरास्तूर्द्ध्वप्रवर्षिणः । क्रियाव्युपरमात्तेषां ततो गच्छाम संशयम् ॥ २६ ॥ अत्र निःश्रेयसं यन्नस्तद्ध्यायस्व पितामह । त्वत्प्रभावसमुत्थोऽसौ स्वभावो नो विनश्यति ॥ २७ ॥ तानुवाच सुरान् सर्व्वान् स्वयम्भूर्भगवांस्ततः । श्रेयोऽहं चिन्तयिष्यामि व्येतु वो भीः सुरर्षभाः ॥ २८ ॥ ततोऽध्यायसहस्राणां शतञ्चक्रे स्वबुद्धिजम् । यत्र धर्मस्तथैवार्थः कामश्चैवाभिवर्णितः ॥२९॥ त्रिवर्ग इति विख्यातो गण एष स्वयम्भुवा । चतुर्थो मोक्ष इत्येव पृथगर्थः पृथग्गुणः ॥ ३० ॥ मोक्षस्यापि त्रिवर्गोऽन्यः प्रोक्तः सत्त्वं रजस्तमः । स्थानं वृद्धिः क्षयश्चैव त्रिवर्गश्चैव दण्डजः ॥ ३१ ॥ आत्मा देशश्च कालश्चाप्युपायाः कृत्यमेव च । सहायाः कारणञ्चैव षड्वर्गो नीतिजः स्मृतः ॥ ३२ ॥ त्रयी चान्वीक्षिकी चैव वार्त्ता च भरतर्षभ । दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः ॥ ३३ ॥ अमात्यरक्षा प्रणिधी राजपुत्रस्य रक्षणम् । चारश्च विविधोपायः प्रणिधेः पृथग्विधः ॥ ३४ ॥ साम-

भेदः प्रदानञ्च ततो दण्डश्च पार्थिव। उपेक्षा पञ्चमी चात्र कार्त्स्न्येन समुदाहृता ॥ ३५ ॥ मन्त्रश्च वर्णितः कृत्स्नस्तथा भेदार्थ एव च। विभ्रमश्चैव मन्त्रस्य सिद्ध्यसिद्ध्योश्च यत् फलम् ॥ ३६ ॥ सन्धिश्च त्रिविधाभिख्यो हीनो मध्यस्तथोत्तमः। भयसत्कारवित्ताख्यं कार्त्स्न्येन परिवर्णितम् ॥३७॥ यात्राकालाश्च चत्वारस्त्रिवर्गस्य च विस्तरः। विजयो धर्मयुक्तश्च तथार्थविजयश्च ह ॥ ३८ ॥ आसुरश्चैव विजयस्तथा कार्त्स्न्येन वर्णितः। लक्षणं पञ्चवर्गस्य त्रिविधञ्चात्र वर्णितम् ॥ ३९ ॥ प्रकाशश्चाप्रकाशश्च दण्डोऽथ परिशब्दितः। प्रकाशोऽष्टविधस्तत्र गुह्यस्य च सुविस्तरः ॥ ४० ॥ रथा नागा हयाश्चैव पादाताश्चैव पाण्डव। विष्टिर्नावश्चराश्चेह दैशिका इति चाष्टमम् ॥ ४१ ॥ अङ्गान्येतानि कौरव्य प्रकाशानि बलस्य तु। जङ्गमाजङ्गमाश्चोक्ताश्चूर्णयोगा विषादयः ॥ ४२ ॥ स्पर्शे चाभ्यवहार्य्ये चाप्युपांशुस्त्रिविधः स्मृतः। अरिर्मित्रमुदासीन इत्येतेऽप्यनुवर्णिताः ॥४३॥ कृत्स्ना मार्गगुणाश्चैव तथा भूमिगुणाश्च ह। आत्मरक्षणमाश्वासः स्पशानाञ्चान्ववेक्षणम् ॥ ४४ ॥ कल्पना विविधाश्चापि नृनागरथवाजिनाम्। व्यूहाश्च विविधाभिख्या विचित्रं युद्धकौशलम् ॥ ४५ ॥ उत्पाताश्च निपाताश्च सुयुद्धं सुपलायितम्। शस्त्राणां पालनं ज्ञानं तथैव भरतर्षभ ॥ ४६ ॥ बलव्यसनयुक्तञ्च तथैव बलहर्षणम्। पीड़ा चापदकालश्च पत्तिज्ञानञ्च पाण्डव ॥४७ तथाख्यातविधानाञ्च योगसञ्चार एव च। चौरैराटविकैश्चोग्रैः परराष्ट्रस्य पीड़नम् ॥ ४८ ॥ अग्निदैर्गरदैश्चैव प्रतिरूपककारकैः। श्रेणीमुख्योपजापेन वीरुधच्छेदनेन च ॥४९॥ दूषणेन च नागानामातङ्कजननेन च। आराधनेन भक्तस्य प्रत्ययोपार्ज्जनेन च ॥५०॥ सप्ताङ्गस्य च राज्यस्य ह्रासवृद्धी समञ्जसम्। कृतसामर्थ्ययोगाश्च राष्ट्रस्य च विवर्द्धनम् ॥ ५१ ॥ अरिमध्यस्थमित्राणां सम्यक् चोक्तं प्रपञ्चनम्। अवमर्द्दः प्रतीघातस्तथा चैव बलीयसाम् ॥५२॥ व्यव-

हारः सुसूक्ष्मश्च तथा कण्टकशोधनम्। श्रमो व्यायामयोगश्च त्यागो द्रव्यस्य संग्रहः॥ ५३॥ अभृतानाञ्च भरणं भृतानाञ्चान्ववेक्षणम्। अर्थस्य काले दानञ्च व्यसने चाप्रसङ्गिता॥ ५४॥ तथा राजगुणाश्चैव सेनापतिगुणाश्च ह। कारणञ्च त्रिवर्गस्य गुणा दोषास्तथैव च॥ ५५॥ दुष्टेप्सितञ्च विविधं वृत्तिश्चैवानुवर्त्तिनाम्। शङ्कितत्वञ्च सर्वस्य प्रमादस्य च वर्ज्जनम्॥ ५६॥ अलब्धलाभो लब्धस्य तथैव च विवर्द्धनम्। प्रदानञ्च विवृद्धस्य पात्रेभ्यो विधिवत्ततः॥५७ विसर्गोऽर्थस्य धर्मार्थं कामहेतुकमुच्यते। चतुर्थं व्यसनाघाते तथैवात्रानुवर्णितम्॥ ५८॥ क्रोधजानि तथोग्राणि कामजानि तथैव च। दशोक्तानि कुरुश्रेष्ठ व्यसनान्यत्र चैव ह॥ ५९॥ मृगयाक्षास्तथा पानं स्त्रियश्च भरतर्षभ। कामजान्याहुराचार्य्याः प्रोक्तानीह स्वयम्भुवा॥ ६०॥ वाक्पारुष्यं तथोग्रत्वं दण्डपारुष्यमेव च। निग्रहोऽथात्मनस्त्यागमर्थदूषणमेव च॥ ६१॥ यन्त्राणि विविधान्येव क्रियास्तेषाञ्च वर्णिताः। अवमर्द्दः प्रतीघातः केतनानाञ्च भञ्जनम्॥ ६२॥ चैत्यद्रुमावमर्द्दश्च रोधः कर्म्मानुशासनम्। अपस्करोऽथ वसनं तथोपायाश्च वर्णिताः॥ ६३॥ पणवानकशङ्खानां भेरीणाञ्च युधिष्ठिर। उपार्ज्जनञ्च द्रव्याणां परिमर्द्दश्च तानि षट् ॥ ६४॥ लब्धस्य च प्रशमनं सताञ्चैवाभिपूजनम्। विद्वद्भिरेकीभावश्च दानहोमविधिज्ञता॥ ६५॥ मङ्गलालम्भनञ्चैव शरीरस्य प्रतिक्रिया। आहारयोजनञ्चैव नित्यमास्तिक्यमेव च॥६६॥ एकेन च यथोत्थेयं सत्यत्वं मधुरा गिरः। उत्सवानां समाजानां क्रियाकेतनजास्तथा॥ ६७॥ प्रत्यक्षाश्च परोक्षाश्च सर्व्वाधिकरणेष्वथ। वृत्तेर्भरतशार्दूल नित्यञ्चैवान्ववेक्षणम्॥६८॥ अदण्ड्यत्वञ्च विप्राणां युक्त्यादण्डनिपातनम्। अनुजीविस्वजातिभ्यो गुणेभ्यश्च समुद्भवः॥ ६९॥ रक्षणञ्चैव पौराणां राष्ट्रस्य च विवर्द्धनम्। मण्डलस्था च या चिन्ता राजन् द्वादशराजिका। द्वासप्ततिविधा चैव शरी-

रस्य प्रतिक्रिया ॥ ७० ॥ देशजातिकुलानाञ्च धर्माः समनुवर्णिताः ॥ ७१ ॥ धर्मश्चार्थश्च कामश्च मोक्षश्चात्रानुवर्णितः। उपायश्चार्थलिप्सा च विविधा भूरिदक्षिण ॥ ७२ ॥ मूलकर्मक्रिया चात्र मायायोगश्च वर्णितः। दूषणं स्रोतसाञ्चैव वर्णितञ्च स्थिराम्भसाम् ॥ ७३ ॥ यैर्यैरुपायैर्लोकस्तु न चलेदार्य्यवर्त्मनः। तत् सर्वं राजशार्दूल नीतिशास्त्रेऽभिवर्णितम् ॥ ७४ ॥ एतत् कृत्वा शुभं शास्त्रं ततः स भगवान् प्रभुः। देवानुवाच संहृष्टः सर्वाञ्छक्रपुरोगमान् ॥ ७५ ॥ उपकाराय लोकस्य त्रिवर्गस्थापनाय च। नवनीतं सरस्वत्या बुद्धिरेषा प्रभाविता ॥ ७६ ॥ दण्डेन सहिता ह्येषा लोकरक्षणकारिका। निग्रहानुग्रहरता लोकाननुचरिष्यति ॥७७॥ दण्डेन नीयते चेदं दण्डं नयति वा पुन। दण्डनीतिरिति ख्याता त्रींल्लोकानभिवर्त्तते ॥ ७८ ॥ षाड्गुण्यगुणसारैषा स्थास्यत्यग्रे महात्मसु। धर्मार्थकाममोक्षाश्च सकला ह्यत्र शब्दिताः ॥ ७९ ॥ ततस्तां भगवान्नीतिं पूर्वं जग्राह शङ्करः। बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः ॥ ८० ॥ प्रजानामायुषो ह्रासं विज्ञाय भगवान् शिवः। सञ्चिक्षेप ततः शास्त्रं महार्थं ब्रह्मणा कृतम् ॥८१॥ वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यत। दशाध्यायसहस्राणि सुब्रह्मण्यो महातपाः ॥ ८२ ॥ भगवानपि तत् शास्त्रं सञ्चिक्षेप पुरन्दरः। सहस्रैः पञ्चभिस्तात यदुक्तं बाहुदन्तकम् ॥ ८३ ॥ अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः। सञ्चिक्षेपेश्वरो बुद्ध्या बार्हस्पत्यं यदुच्यते ॥ ८४ ॥ अध्यायानां सहस्रेण काव्यः सङ्क्षेपमब्रवीत्। तच्छास्त्रममितप्रज्ञो योगाचार्य्यो महायशाः ॥ ८५ ॥ एवं लोकानुरोधेन शास्त्रमेतन्महर्षिभिः। सङ्क्षिप्तमायुर्विज्ञाय मर्त्त्यानां ह्रासमेव च ॥ ८६ ॥ अथ देवाः समागम्य विष्णुमूचुः प्रजापतिम्। एको योऽर्हति मर्त्त्येभ्यः श्रैष्ठ्यं वै तं समादिश ॥८७॥ ततः सञ्चिन्त्य भगवान् देवो नारायणः प्रभुः। तैजसं वै विरजसं

सोऽसृजन्मानसं सुतम् ॥ ८८ ॥ विरजास्तु महाभागः प्रभुत्वं भुवि नैच्छत। न्यासायैवाभवद्बुद्धिः प्रणीता तस्य पाण्डव ॥ ८९ ॥ कीर्त्तिमांस्तस्य पुत्रोऽभूत् सोऽपि पञ्चातिगोऽभवत्। कर्द्दमस्तस्य तु सुतः। सोऽप्यतप्यन्महत्तपः ॥ ९० ॥ प्रजापतेः कर्द्दमस्य त्वनङ्गो नाम वै सुतः प्रजारक्षयिता साधुर्द्दण्डनीतिविशारदः ॥ ९१ ॥ अनङ्गपुत्रोऽतिबलो नीतिमानभिगम्य वै। प्रतिपेदे महाराज्यमथेन्द्रियवशोऽभवत् ॥ ९२ ॥ मृत्योस्तु दुहिता राजन् सुनीथा नाम मानसी। प्रख्याता त्रिषु लोकेषु या सा वेणमजीजनत् ॥९३॥ तं प्रजासु विधर्माणं रागद्वेषवशानुगम्। मन्त्रपूतैः कुशैर्जघ्नुरृषयो ब्रह्मवादिनः ॥ ९४ ॥ ममन्थुर्द्दक्षिणं चोरुमृषयस्तस्य मन्त्रतः। ततोऽस्य विकृतो यज्ञे ह्रस्वाङ्गः पुरुषो भुवि ॥ ९५ ॥ दग्धस्थूणाप्रतीकाशो रक्ताक्षः कृष्णमूर्द्धजः। निषीदेत्येवमूचुस्तमृषयो ब्रह्मवादिनः ॥ ९६ ॥ तस्मान्निषादाः सम्भूताः क्रूराः शैलवनाश्रयाः। ये चान्ये विन्ध्यनिलया म्लेच्छाः शतसहस्रशः ॥ ९७ ॥ भूयोऽस्य दक्षिणं पाणिं ममन्थुस्ते महर्षयः। ततः पुरुष उत्पन्नो रूपेणेन्द्र इवापरः ॥ ९८ ॥ कवची बद्धनिस्त्रिंशः सशरः सशरासनः। वेदवेदाङ्गविच्चैव धनुर्वेदे च पारगः ॥ ९९ ॥ तं दण्डनीतिः सकला श्रिता राजन्नरोत्तमम्। ततस्तु प्राञ्जलिर्वैण्यो महर्षींस्तानुवाच ह ॥ १०० ॥ सुसूक्ष्मा मे समुत्पन्ना बुद्धिर्द्धर्मार्थदर्शिनी। अनया किं मया कार्य्यं तन्मे तत्त्वेन शंसत ॥ १०१ ॥ यन्मां भवन्तो वक्ष्यन्ति कार्य्यमर्थसमन्वितम्। तदहं वै करिष्यामि नात्र कार्य्या विचारणा ॥ १०२ ॥ तमूचुस्तत्र देवास्ते ते चैव परमर्षयः। नियतो यत्र धर्म्मो वै तमशङ्कः समाचर ॥१०३॥ प्रियाप्रिये परित्यज्य समः सर्व्वेषु जन्तुषु। कामक्रोधौ च लोभञ्च मानञ्चोत्सृज्य दूरतः ॥ १०४ ॥ यश्च धर्म्मात् प्रविचलेल्लोके कश्चन मानवः। निग्राह्यस्ते स्वबाहुभ्यां शश्वद्धर्म्ममवेक्षता ॥ १०५ ॥

प्रतिज्ञाञ्चाधिरोहस्व मनसा कर्मणा गिरा। पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत्॥१०६॥ यश्चात्र धर्मो नित्योक्तो दण्डनीतिव्यपाश्रयः। तमशङ्कः करिष्यामि स्ववशो न कदाचन॥१०७॥ अदण्ड्या मे द्विजाश्चेति प्रतिजानीहि हे विभो। लोकञ्च सङ्करात् कृत्स्नं त्रातास्मीति परन्तप॥१०८॥ वैण्यस्ततस्तानुवाच देवानृषिपुरोगमान्। ब्राह्मणा मे महाभागा नमस्याः पुरुषर्षभाः॥१०९॥ एवमस्त्विति वैण्यस्तु तैरुक्तो ब्रह्मवादिभिः। पुरोधाश्चाभवत्तस्य शुक्रो ब्रह्ममयो निधिः॥११०॥ मन्त्रिणो वालिखिल्याश्च सारस्वत्यो गणास्तथा। महर्षिर्भगवान् गर्गस्तस्य सांवत्सरोऽभवत्॥१११॥ आत्मनाष्टम इत्येव श्रुतिरेषा परा नृषु। उत्पन्नौ वन्दिनौ चास्य तत्पूर्वौ सूतमागधौ॥११२॥ तयोः प्रीतो ददौ राजा पृथुर्वैण्यः प्रतापवान्। अनूपदेशं सूताय मगधं मागधाय च॥११३॥ समतां वसुधायाश्च स सम्यगुपपादयत्। वैषम्यं हि परं भूमेरासीदिति च नः श्रुतम्॥११४॥ मन्वन्तरेषु सर्वेषु विषमा जायते मही। उज्जहार ततो वैण्यः शिलाजालान् समन्ततः॥११५॥ धनुष्कोट्या महाराज तेन शैला विवर्द्धिताः। स विष्णुना च देवेन शक्रेण विबुधैः सह॥११६॥ ऋषिभिश्च प्रजापालैर्ब्राह्मणैश्चाभिषेचितः। तं साक्षात् पृथिवी भेजे रत्नान्यादाय पाण्डव॥११७॥ सागरः सरितां भर्त्ता हिमवांश्चाचलोत्तमः। शक्रश्च धनमक्षय्यं प्रादात्तस्मै युधिष्ठिर॥११८॥ रुक्मञ्चापि महामेरुः स्वयं कनकपर्वतः। यक्षराक्षसभर्त्ता च भगवान्नरवाहनः॥११९॥ धर्मे चार्थे च कामे च समर्थं प्रददौ धनम्। हया रथाश्च नागाश्च कोटिशः पुरुषास्तथा॥१२०॥ प्रादुर्बभूवुर्वैण्यस्य चिन्तनादेव पाण्डव। न जरा न च दुर्भिक्षं नाधयो व्याधयस्तथा॥१२१॥ सरीसृपेभ्यः स्तेनेभ्यो न चान्योऽन्यात् कदाचन। भयमुत्पद्यते तत्र तस्य राज्ञोऽभिरक्षणात्॥१२२॥

आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः। पर्वताश्च ददुर्मार्गं ध्वजभङ्गश्च नाभवत्॥ १२३॥ तेनेयं पृथिवी दुग्धा शस्यानि दश सप्त च। यक्षराक्षसनागैश्चापीप्सितं यस्य यस्य यत्॥ १२४॥ तेन धर्मोत्तरश्चायं कृतो लोको महात्मना। रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते॥ १२५॥ ब्राह्मणानां क्षतत्राणात् ततः क्षत्रिय उच्यते। प्रथिता धर्म्मतश्चेयं पृथिवी बहुभिः स्मृता॥१२६॥ स्थापनञ्चाकरोद्विष्णुः स्वयमेव सनातनः। नातिवर्त्तिष्यते कश्चिद्राजंस्त्वामिति भारत॥ १२७॥ तपसा भगवान् विष्णुराविवेश च भूमिपम्। देववन्नरदेवानां नमते यं जगन्नृप॥ १२८॥ दण्डनीत्या च सततं रक्षितव्यं नरेश्वर। नाधर्षयेत्तथा कश्चिच्चारनिष्ठानुदर्शनात्॥ १२९॥ शुभं हि कर्म राजेन्द्र शुभत्वायोपकल्पते। आत्मना कारणैश्चैव समस्येह महीक्षितः॥ १३०॥ को हेतुर्यद्वशे तिष्ठेल्लोको देवादृते गुणात्। विष्णोर्ललाटात् कमलं सौवर्णमभवत्तदा॥ १३१॥ श्रीः सम्भूता यतो देवी पत्नी धर्मस्य धीमतः। श्रियः सकाशादर्थश्च जातो धर्म्मेण पाण्डव॥ १३२॥ अथ धर्मस्तथैवार्थः श्रीश्च राज्ये प्रतिष्ठिता। सुकृतस्य क्षयाच्चैव स्वर्लोकादेत्य मेदिनीम्॥ १३३॥ पार्थिवो जायते तात दण्डनीतिविशारदः। महत्त्वेन च संयुक्तो वैष्णवेन नरो भुवि। बुद्ध्या भवति संयुक्तो माहात्म्यञ्चाधिगच्छति १३४॥ स्थापितञ्च ततो देवैर्न कश्चिदतिवर्त्तते। तिष्ठत्येकस्य च वशे तच्चेदं न विधीयते॥ १३५॥ शुभं हि कर्म राजेन्द्र शुभत्वायोपकल्पते। तुल्यलोकस्य यस्यायं लोको वचसि तिष्ठति॥१३६॥ योऽस्य वै मुखमद्राक्षीत् सौम्यं सोऽस्य वशानुगः। शुभगञ्चार्थवन्तञ्च रूपवन्तञ्च पश्यति॥ १३७॥ महत्त्वात्तस्य दण्डस्य नीतिर्विस्पष्टलक्षणा। नयचारश्च विपुलो येन धर्ममिदं ततम्॥ १३८॥ आगमश्च पुराणानां महर्षीणाञ्च सम्भवः। तीर्थवंशश्च वंशश्च नक्षत्राणां युधि-

ष्ठिर ॥ १३९ ॥ सकलं चातुराश्रम्यं चातुर्हौत्रं तथैव च। चातु-र्वर्ण्यं तथैवात्र चातुर्विद्यञ्च कीर्त्तितम् ॥ १४० ॥ इतिहासाश्च वेदाश्च न्यायः कृत्स्नश्च वर्णितः। तपो ज्ञानमहिंसा च सत्यासत्ये नयः परः ॥ १४१ ॥ वृद्धोपसेवा दानञ्च शौचमुत्थानमेव च। सर्व-भूतानुकम्पा च सर्व्वमत्रोपवर्णितम् ॥ १४२ ॥ भुवि चाधोगतं यच्च तच्च सर्वं समर्पितम्। तस्मिन् पैतामहे शास्त्रे पाण्डवैतन्नसंशयः ॥ १४३ ॥ ततो जगति राजेन्द्र सततं शब्दित बुधैः। देवाश्च नरदेवाश्च तुल्या इति विशाम्पते ॥१४४॥ एतत्ते सर्वमाख्यातं महत्त्वं प्रतिराजसु। कार्त्स्न्येन भरतश्रेष्ठ किमन्यदिह वर्त्तते ॥ १४५ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि एकोनषष्टोऽध्यायः ॥ ५९ ॥

---

वैशम्पायन उवाच। ततः पुनः स गाङ्गेयमभिवाद्य पितामहम्। प्राञ्जलिर्नियतो भूत्वा पर्य्यपृच्छद्युधिष्ठिरः ॥ १ ॥ के धर्माः सर्व-वर्णानां चातुर्वर्ण्यस्य के पृथक्। चातुवर्ण्याश्रमाणाञ्च राजधर्माश्च के मता ॥ २ ॥ केन वै वर्द्धते राष्ट्रं राजा केन विवर्द्धते। केन पौराश्च भृत्याश्च वर्द्धन्ते भरतर्षभ ॥ ३ ॥ कोषं दण्डञ्च दुर्गञ्च सहायान्मन्त्रिणस्तथा। ऋत्विक् पुरोहिताचार्य्यान् कीदृशान् वर्ज्ज-येन्नृपः ॥ ४ ॥ केषु विश्वसितव्यं स्यात् राज्ञा कस्याञ्चिदापदि। कुतो वात्मा दृढ़ं रक्ष्यस्तन्मे ब्रूहि पितामह ॥ ५ ॥

भीष्म उवाच। नमो धर्माय महते नमः कृष्णाय वेधसे। ब्राह्मणेभ्यो नमस्कृत्य धर्मान् वक्ष्यामि शाश्वतान् ॥ ६ ॥ अक्रोधः सत्यवचनं सम्विभागः क्षमा तथा। प्रजनः स्वेषु दारेषु शौचमद्रोह एव च। आर्ज्जवं भृत्यभरणं नवैते सार्व्ववर्णिकाः ॥ ७ ॥ ब्राह्म-णस्य तु यो धर्मस्तन्ते वक्ष्यामि केवलम्। दममेव महाराज धर्म-

माहुः पुरातनम्। स्वाध्यायाभ्यसनञ्चैव तत्र कर्म्म समाप्यते॥ ८॥
तञ्चेद्वित्तमुपागच्छेद्वर्त्तमानं स्वकर्मणि। अकुर्व्वाणं विकर्म्माणि शान्तं
प्रज्ञानतर्पितम्॥ ९॥ कुर्व्वीतापत्यसन्तानमथो दद्याद्यजेत च।
संविभज्य हि भोक्तव्यं धनं सद्भिरितीर्य्यते॥ १०॥ परिनिष्ठित-
कार्य्यस्तु स्वाध्यायेनैव ब्राह्मणः। कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो
ब्राह्मण उच्यते॥ ११॥ क्षत्रियस्यापि यो धर्म्मस्तन्ते वक्ष्यामि
भारत। दद्याद्राजन्न याचेत यजेत न च याजयेत्॥ १२॥ ना-
ध्यापयेदधीयीत प्रजाश्च परिपालयेत्। नित्योद्युक्तो दस्युवधे रणे
कुर्य्यात् पराक्रमम्॥ १३॥ ये तु क्रतुभिरीजानाः श्रुतवन्तश्च
भूमिपाः। य एवाहवजेतारस्त एषां लोकजित्तमाः॥ १४॥ अवि-
क्षतेन देहेन समराद्यो निवर्त्तते। क्षत्रियो नास्य तत् कर्म्म प्रशं-
सन्ति पुराविदः॥ १५॥ एवं हि क्षत्रबन्धूनां मार्गमाहुः प्रधा-
नतः। नास्य कृत्यतमं किञ्चिदन्यद्दस्युनिवर्हणात्॥ १६॥ दान-
मध्ययनं यज्ञो राज्ञां क्षेमो विधीयते। तस्माद्राज्ञा विशेषेण
योद्धव्यं धर्म्ममीप्सता॥ १७॥ स्वेषु धर्म्मेष्ववस्थाप्य प्रजाः सर्व्वा
महीपतिः। धर्म्मेण सर्व्वकृत्यानि समनिष्ठानि कारयेत्॥ १८॥
परिनिष्ठितकार्य्यस्तु नृपतिः परिपालनात्। कुर्य्यादन्यन्न वा कुर्य्या-
दैन्द्रो राजन्य उच्यते॥ १९॥ वैश्यस्यापि हि यो धर्म्मस्तन्ते
वक्ष्यामि शाश्वतम्। दानमध्ययनं यज्ञः शौचेन धनसञ्चयः॥२०॥
पितृवत् पालयेद्वैश्यो युक्तः सर्व्वान् पशूनिह। विकर्म्म तद्भवेदन्यत्
कर्म्म यत् स समाचरेत्॥ २१॥ रक्षया स हि तेषां वै महत्
सुखमवाप्नुयात्। प्रजापतिर्हि वैश्याय सृष्ट्वा परिददौ पशून्॥२२॥
ब्राह्मणाय च राज्ञे च सर्व्वाः परिददे प्रजाः। तस्य वृत्तिं प्रव-
क्ष्यामि यच्च तस्योपजीवनम्॥ २३॥ षण्णामेकां पिवेद्धेनुं शताच्च
मिथुनं हरेत्। लब्धाच्च सप्तमं भागं तथाशृङ्गे कलाखुरे।
शस्यानि सर्व्वबीजानामेषा साम्वत्सरी भृतिः॥ २४॥ न च वैश्यस्य

काम स्यान्न रक्षेयं पशूनिति। वैश्ये चेच्छति नान्येन रक्षितव्याः कथञ्चन॥२५॥ शूद्रस्यापि हि यो धर्मस्तन्ते वक्ष्यामि भारत। प्रजापतिर्हि वर्णानां दासं शूद्रमकल्पयत्॥२६॥ तस्माच्छूद्रस्य वर्णानां परिचर्य्या विधीयते। तेषां शुश्रूषणाच्चैव महत् सुखमवाप्नुयात्॥२७॥ शूद्र एतान् परिचरेत्त्रीन् वर्णाननुपूर्वशः। सञ्चयांश्च न कुर्वीत जातु शूद्रः कथञ्चन॥२८॥ पापीयान् हि धनं लब्ध्वा वशे कुर्य्याद्गरीयसः। राज्ञा वा समनुज्ञातः कामं कुर्वीत धार्मिकः॥२९॥ तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम्। अवश्यभरणीयो हि वर्णानां शूद्र उच्यते॥३०॥ छत्रं वेष्टनमौशीरमुपानद्व्यजनानि च। यातयामानि देयानि शूद्राय परिचारिणे॥३१॥ अधार्य्याणि विशीर्णानि वसनानि द्विजातिभिः। शूद्रायैव प्रदेयानि तस्य धर्मधनं हि तत्॥३२॥ यश्च कश्चिद्द्विजातीनां शूद्रः शुश्रूषुराव्रजेत्। कल्प्यां तस्य तु तेनाहुर्वृत्तिं धर्मविदो जनाः॥३३॥ देयः पिण्डोऽनपत्याय भर्त्तव्यौ वृद्धदुर्बलौ। शूद्रेण तु न हातव्यो भर्त्ता कस्याञ्चिदापदि॥३४॥ अतिरेकेण भर्त्तव्यो भर्त्ता द्रव्यपरिक्षये। न हि स्वमस्ति शूद्रस्य भर्त्तृहार्य्यधनो हि सः॥३५॥ उक्तस्त्रयाणां वर्णानां यज्ञस्तस्य च भारत। स्वाहाकारवषट्कारौ मन्त्रः शूद्रे न विद्यते॥३६॥ तस्माच्छूद्रः पाकयज्ञैर्यजेताव्रतवान् स्वयम्। पूर्णपात्रमयीमाहुः पाकयज्ञस्य दक्षिणाम्॥३७॥ शूद्रः पैजवनो नाम सहस्राणां शतं ददौ। ऐन्द्राग्नेन विधानेन दक्षिणामिति नः श्रुतम्॥३८॥ यतो हि सर्ववर्णानां यज्ञस्तस्यैव भारत। अग्रे सर्वेषु यज्ञेषु श्रद्धायज्ञो विधीयते॥३९॥ दैवतं हि महच्छ्रद्धा पवित्रं यजताञ्च यत्। दैवतं हि परं विप्राः स्वेन स्वेन परस्परम्॥४०॥ अयजन्निह सर्वेस्ते तैस्तैः कामैः समाहितैः। संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः॥४१॥ देवानामपि ये देवा यद्ब्रूयुस्ते परं हितम्। तस्मा-

इत्यैः सर्व्वयज्ञाः संसृज्यन्ते न काम्यया ॥ ४२ ॥ ऋगयजुःसामवित् पूज्यो नित्यं स्याद्देववद्विजः । अनृगयजुरसामा च प्राजापत्य उपद्रवः ॥ ४३ ॥ यज्ञो मनीषया तात सर्व्ववर्णेषु भारत । नास्य यज्ञकृतो देवा ईहन्ते नेतरे जनाः । ततः सर्व्वेषु वर्णेषु श्रद्धायज्ञो विधीयते ॥ ४४ ॥ स्वं दैवतं ब्राह्मणः स्वेन नित्यं परान् वर्णान्नायजन्नेवमासीत् । आसुरो वितानः संसृष्टो वैश्यो ब्राह्मणास्त्रिषु वर्णेषु यज्ञसृष्टः ॥ ४५ ॥ तस्मादर्णा ऋजवो ज्ञातिवर्णाः संसृज्यन्ते तस्य विकार एव । एकं साम यजुरेकं ऋगेका विप्रश्चैको निश्चये तेषु सृष्टः ॥ ४६ ॥ अत्र गाथा यज्ञगीताः कीर्त्तयन्ति पुराविदः । वैखानसानां राजेन्द्र मुनीनां यष्टुमिच्छताम् ॥ ४७ ॥ उदितेऽनुदिते वापि श्रद्दधानो जितेन्द्रियः । वह्निं जुहोति धर्म्मेण श्रद्धा वै कारणं महत् ॥ ४८ ॥ यत् स्कन्नमस्य तत् पूर्वं यदस्कन्नं तदुत्तरम् । बहूनि यज्ञरूपाणि नानाकर्मफलानि च ॥ ४९ ॥ तानि यः सम्प्रजानाति ज्ञाननिश्चयनिश्चितः । द्विजातिः श्रद्धयोपेतः स यष्टुं पुरुषोऽर्हति ॥ ५० ॥ स्तेनो वा यदि वा पापो यदि वा पापकृत्तमः । यष्टुमिच्छति यज्ञं यः साधुमेव वदन्ति तम् ॥ ५१ ॥ ऋषयस्तं प्रशंसन्ति साधु चैतदसंशयम् । सर्व्वथा सर्व्वदा वर्णैर्यष्टव्यमिति निर्णयः ॥ ५२ ॥ न हि यज्ञसमं किञ्चित्त्रिषु लोकेषु विद्यते । तस्माद्यष्टव्यमित्याहुः पुरुषेणानुसूयता । श्रद्धापवित्रमाश्रित्य यथाशक्ति यथेच्छया ॥ ५३ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि वर्णाश्रमधर्म्मकथने षष्टितमोऽध्यायः ॥ ६० ॥

---

भीष्म उवाच । आश्रमाणां महाबाहो शृणु सत्यपराक्रम । चतुर्णामपि नामानि कर्म्माणि च युधिष्ठिर ॥ १ ॥ वानप्रस्थं भैक्ष्य-

चर्य्यं गार्हस्थ्यञ्च महाश्रमम्। ब्रह्मचर्य्याश्रमं प्राहुश्चतुर्थं ब्राह्मणैर्वृतम्॥ २॥ जटाधरणसंस्कारं द्विजातित्वमवाप्य च। आधानादीनि कर्म्माणि प्राप्य वेदमधीत्य च॥ ३॥ सदारो वाप्यदारो वा आत्मवान् संयतेन्द्रियः। वानप्रस्थाश्रमं गच्छेत् कृतकृत्यो गृहाश्रमात्॥ ४॥ तत्रारण्यकशास्त्राणि समधीत्य स धर्मवित्। ऊर्द्ध्वरेताः प्रव्रजित्वा गच्छत्यक्षरसात्मताम्॥ ५॥ एतान्येव निमित्तानि मुनीनामूर्द्ध्वरेतसाम्। कर्त्तव्यानीह विप्रेण राजन्नादौ विपश्चिता॥ ६॥ चरितब्रह्मचर्य्यस्य ब्राह्मणस्य विशाम्पते। भैक्षचर्य्यास्वधीकारः प्रशस्त इह मोक्षिणः॥ ७॥ यत्रास्तमितशायी स्यान्निराशीरनिकेतनः। यथोपलब्धजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः॥८॥ निराशी स्यात् सर्वसमो निर्भोगो निर्विकारवान्। विप्रः क्षेमाश्रमं प्राप्तो गच्छत्यक्षरसात्मताम्॥ ९॥ अधीत्य वेदान् कृतसर्वकृत्यः सन्तानमुत्पाद्य सुखानि भुक्त्वा। समाहितः प्रचरेद्दुश्चरं यो गार्हस्थ्यधर्मं मुनिधर्मजुष्टम्॥१०॥ स्वदारतुष्टस्त्वृतुकालगामी नियोगसेवी न शठो न जिह्मः मिताशनो देवरतः कृतज्ञः सत्यो मृदुश्चानृशंसः क्षमावान्॥ ११॥ दान्तो विधेयो हव्यकव्येऽप्रमत्तो ह्यन्नस्य दाता सततं द्विजेभ्यः। अमत्सरी सर्वलिङ्गिप्रदाता वैतान-नित्यश्च गृहाश्रमी स्यात्॥ १२॥ अथात्र नारायणगीतमाहुर्महर्षयस्तात महानुभावाः। महार्थमत्यन्ततपः प्रयुक्तं तदुच्यमानं हि मया निबोध॥ १३॥ सत्यार्जवञ्चातिथिपूजनञ्च धर्मस्तथार्थश्च रतिः स्वदारैः। निषेवितव्यानि सुखानि लोके ह्यस्मिन् परे चैव मतं ममैतत्॥ १४॥ भरणं पुत्रदाराणां वेदानां धारणं तथा। वसतामाश्रमं श्रेष्ठं वदन्ति परमर्षयः॥१५॥ एवं हि यो ब्राह्मणो यज्ञशीलो गार्हस्थ्यमध्यावसते यथावत्। गृहस्थवृत्तिं प्रविशोध्य सम्यक् स्वर्गे विशुद्धं फलमाप्नुते सः॥ १६॥ तस्य देहपरित्यागादिष्टाः कामाऽक्षया मताः। आनन्त्यायोपतिष्ठन्ति सर्वतोऽक्षिशिरो-

सुखाः ॥ १७ ॥ स्मरन्नेको जपन्नेकः सर्वानेको युधिष्ठिर । एक-
स्मिन्नेव चाचार्य्ये शुश्रूषुर्मलपङ्कवान् ॥१८॥ ब्रह्मचारी व्रती नित्यं
नित्यं दीक्षापरो वशी । प्रविचार्य्य तथा वेदं कृत्यं कुर्वन् वसेत्
सदा ॥ १९ ॥ शुश्रूषां सततं कुर्वन् गुरोः सम्प्रणमेत च । षट्-
कर्म्मसु निवृत्तश्च न प्रवृत्तश्च सर्वशः ॥ २० ॥ न चरत्यधिकारेण
सेवेत द्विषतो न च । एषोऽश्रमपदस्तात ब्रह्मचारिण इष्यते ॥२१ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि वर्णाश्रमधर्म-
कथने एकषष्टोऽध्यायः ॥ ६१ ॥

---

युधिष्ठिर उवाच । शिवान् सुखान् महोदर्कानहिंस्रान् लोक-
सम्मतान् । ब्रूहि धर्मान् सुखापायान् मद्विधानां सुखावहान् ॥१॥
भीष्म उवाच । ब्राह्मणस्य तु चत्वारस्त्वाश्रमा विहिताः प्रभो ।
वर्णास्तान्नानुवर्त्तन्ते त्रयो भरतसत्तम ॥ २ ॥ उक्तानि कर्माणि
बहूनि राजन् स्वर्ग्याणि राजन्यपरायणानि । नेमानि दृष्टान्त-
विधौ स्मृतानि क्षात्रे हि सर्वं विहितं यथावत् ॥ ३ ॥ क्षात्राणि
वैश्यानि च सेवमानः शौद्राणि कर्माणि च ब्राह्मणः सन् । अस्मिं
ल्लोके निन्दितो मन्दचेताः परे च लोके निरयं प्रयाति ॥ ४ ॥ या
संज्ञा विहिता लोके दासे शुनि वृके पशौ । विकर्मणि स्थिते
विप्रे सैव संज्ञा च पाण्डव ॥ ५ ॥ षट्कर्मसंप्रवृत्तस्य आश्रमेषु
चतुर्ष्वपि । सर्वधर्मोपपन्नस्य संवृतस्य कृतात्मनः ॥ ६ ॥ ब्राह्म-
णस्य विशुद्धस्य तपस्यभिरतस्य च । निराशिषो वदान्यस्य लोका
ह्यक्षरसंमिताः ॥ ७ ॥ यो यस्मिन् कुरुते कर्म यादृशं येन यत्र
च । तादृशं तादृशेनैव सगुणं प्रतिपद्यते ॥ ८ ॥ वृद्ध्या कृषि-
वणिक्त्वेन जीवसञ्जीवनेन च । वेत्तुमर्हसि राजेन्द्र स्वाध्यायगणितं
महत् ॥ ९ ॥ ॥ कालसञ्चोदितः कालः कालपर्य्यायनिश्चितः । उत्त-

माधममध्यानि कर्माणि कुरुतेऽवशः ॥ १० ॥ अन्तर्वन्ति प्रधानानि पुरा श्रेयस्कराणि च। स्वकर्मनिरतो लोको ह्यचरः सर्वतो-मुखः ॥ ११ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि वर्णाश्रमधर्म्म कथने द्विषष्टोऽध्यायः ॥ ६२ ॥

---

भीष्म उवाच। ज्याकर्षणं शत्रुनिवर्हणञ्च कृषिर्वणिज्या पशु-पालनञ्च। शुश्रूषणञ्चापि तथार्थहेतोरकार्य्यमेतत् परमं द्विजस्य ॥ १ ॥ सेव्यन्तु ब्रह्मषट्कर्म्मं गृहस्थेन मनीषिणा। कृतकृत्यस्य चारण्ये वासो विप्रस्य शस्यते ॥ २ ॥ राजप्रेष्यं कृषिधनं जीवनञ्च वणिज्यया। कौटिल्यं कौलटेयञ्च कुषीदञ्च विवर्ज्जयेत् ॥ ३ ॥ शूद्रो राजन् भवति ब्रह्मबन्धुर्दुश्चारित्रो यश्च धर्मादपेतः। वृषली-पतिः पिशुनो नर्त्तनश्च ग्रामप्रेष्यो यश्च भवेद्विकर्मा ॥ ४ ॥ जपन् वेदानजपंश्चापि राजन् समः शूद्रैर्दासवच्चापि भोज्यः। एते सर्वे शूद्रसमा भवन्ति राजन्नेतान् वर्ज्जयेद्देवकृत्ये ॥ ५ ॥ निर्मर्य्यादे चाशुचौ क्रूरवृत्तौ हिंसात्मके त्यक्तधर्मस्ववृत्ते। हव्यं कव्यं यानि चान्यानि राजन् देयान्यदेयानि भवन्ति चास्मै ॥ ६ ॥ तस्माद्धर्मो विहितो ब्राह्मणस्य दमः शौचमार्ज्जवञ्चापि राजन्। तथा विप्र-स्याश्रमाः सर्व एव पुरा राजन् ब्रह्मणा वै निसृष्टाः ॥ ७ ॥ यः स्याद्दान्तः सोमपश्चार्य्यशीलः सानुक्रोशः सर्वसहो निराशीः। ऋज-र्मृदुरनृशंसः क्षमावान् स वै विप्रो नेतरः पापकर्मा ॥ ८ ॥ शूद्रं वैश्यं राजपुत्रञ्च राजन् लोकाः सर्वे संश्रिता धर्मकामाः। तस्मा-द्वर्णान् शान्तिधर्मेष्वशक्तान् मत्वा विष्णुर्नेच्छति पाण्डुपुत्र ॥ ९ ॥ लोके चेदं सर्वलोकस्य न स्याच्चातुर्वर्ण्यं वेदवादाश्च न स्युः। सर्वाश्चेज्याः सर्वलोकक्रियाश्च सद्यः सर्वे चाश्रमस्था न वै स्युः ॥१०॥

अथ त्रयाणां वर्णानामिच्छेदाश्रमसेवनम् । चातुराश्रम्यदृष्टांश्च
धर्मांस्तान् शृणु पाण्डव ॥ ११ ॥ शुश्रूषोः कृतकार्य्यस्य कृतसन्तान-
कर्म्मणः । अभ्यनुज्ञातराजस्य शूद्रस्य जगतीपते ॥ १२ ॥ अल्पा-
न्तरगतस्यापि दशधर्मगतस्य वा । आश्रमा विहिताः सर्वे वर्ज्ज-
यित्वा निराशिषम् ॥ १३ ॥ भैक्ष्यचर्य्यां ततः प्राहुस्तस्य तद्धर्म-
चारिणः । तथा वैश्यस्य राजेन्द्र राजपुत्रस्य चैव हि ॥ १४ ॥
कृतकृत्यो वयोऽतीतो राज्ञः कृतपरिश्रमः । वैश्यो गच्छेदनुज्ञातो
नृपेणाश्रमसंश्रयम् ॥ १५ ॥ वेदानधीत्य धर्मेण राजशास्त्राणि
चानघ । सन्तानादीनि कर्माणि कृत्वा सोमं निषेव्य च ॥ १६ ॥
पालयित्वा प्रजाः सर्वा धर्मेण वदतां वर । राजसूयाश्वमेधादीन्
मखानन्यांस्तथैव च ॥ १७ ॥ आनयित्वा यथापाठं विप्रेभ्यो दत्त-
दक्षिणः । संग्रामे विजयं प्राप्य तथाल्पं यदि वा बहु ॥ १८ ॥
स्थापयित्वा प्रजापालं पुत्रं राज्ये च पाण्डव । अन्यगोत्रं प्रशस्तं
वा क्षत्रियं क्षत्रियर्षभ ॥ १९ ॥ अर्च्चयित्वा पितॄन् सम्यक् पितृ-
यज्ञैर्यथाविधि । देवान् यज्ञैर्ऋषीन् वेदैरर्च्चयित्वा तु यत्नतः ॥२०॥
अन्तकाले च सम्प्राप्ते य इच्छेदाश्रमान्तरम् । सोऽनुपूर्वाश्रमाद्राजन्
गत्वा सिद्धिमवाप्नुयात् ॥ २१ ॥ राजर्षित्वेन राजेन्द्र भैक्ष्यं चर्य्यान्न
सेवया । अपेतगृहधर्मोऽपि चरेज्जीवितकाम्यया ॥ २२ ॥ न
चैतन्नैष्ठिकं धर्मं त्रयाणां भूरिदक्षिण । चतुर्णां राजशार्दूल
प्राहुराश्रमवासिनाम् ॥ २३ ॥ बाह्वायत्तं क्षत्रियैर्मानवानां लोक-
श्रेष्ठं धर्ममासेवमानैः । सर्वे धर्माः सोपधर्मास्त्रयाणां राज्ञो धर्मा-
दिति वेदात् शृणोमि ॥ २४ ॥ यथा राजन् हस्तिपदे पदानि
संलीयन्ते सर्वसत्त्वोद्भवानि । एवं धर्मान्राजधर्मेषु सर्वान् सर्वावस्थं
सम्प्रलीनान्निबोध ॥ २५ ॥ अल्पाश्रयानल्पफलान् वदन्ति धर्मा-
नन्यान् धर्मविदो मनुष्याः । महाश्रयं बहुकल्याणरूपं क्षात्रं धर्मं
नेतरं प्राहुरार्य्याः ॥ २६ ॥ सर्वे धर्मा राजधर्मप्रधानाः सर्वे वर्णाः

पाल्यमाना भवन्ति सर्व्वस्त्यागो राजधर्म्मेषु राजंस्त्यागं धर्म्मञ्चाहु-
रग्र्यं पुराणम् ॥ २७ ॥ मज्जेत्त्रयी दण्डनीतौ हतायां सर्व्वे धर्म्माः
प्रक्षयेयुर्विबुद्धाः । सर्व्वे धर्म्माश्चाश्रमाणां हताः स्युः क्षात्रे त्यक्ते
राजधर्म्मे पुराणे ॥ २८ ॥ सर्व्वे त्यागा राजधर्म्मेषु दृष्टाः सर्व्वा दीक्षा
राजधर्म्मेषु चोक्ताः । सर्व्वा विद्या राजधर्म्मेषु युक्ताः सर्व्वे लोका
राजधर्म्मे प्रविष्टाः ॥ २९ ॥ यथा जीवाः प्राकृतैर्व्वध्यमाना धर्म्म-
श्रुतानामुपपीड़नाय । एवं धर्म्मा राजधर्म्मैर्व्वियुक्ताः सञ्चिन्वन्तो
नाद्रियन्ते स्वधर्म्मम् ॥ ३० ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि वर्णाश्रमधर्म्म-
कथने त्रिषष्टोऽध्यायः ॥ ६३ ॥

---

भीष्म उवाच । चातुराश्रम्यधर्म्माश्च यतिधर्म्माश्च पाण्डव ।
लोकवेदोत्तराश्चैव क्षात्रधर्म्मे समाहिताः ॥ १ ॥ सर्व्वाण्येतानि
कर्म्माणि क्षात्रे भरतसत्तम । निराशिषो जीवलोकाः क्षात्रधर्म्मे-
ऽव्यवस्थिते ॥ २ ॥ अप्रत्यक्षं बहुद्वारं धर्म्ममाश्रमवासिनाम् । प्रकी-
र्त्तयन्ति तद्भावमागमैरेव शाश्वतम् ॥ ३ ॥ अपरे वचनैः पुण्ये-
र्व्वादिनो लोकनिश्चयम् । अनिश्चयज्ञा धर्म्माणामदृष्टान्ते परे हताः
॥ ४ ॥ प्रत्यक्षं सुखभूयिष्ठमात्मसाक्षिकमच्छलम् । सर्व्वलोकहितं
धर्म्मं क्षत्रियेषु प्रतिष्ठितम् ॥ ५ ॥ धर्म्माश्रमेऽध्यावसिनां ब्राह्मणानां
युधिष्ठिर । यथा त्रयाणां वर्णानां संख्यातोपश्रुतिः पुरा । राज-
धर्म्मेष्वनुमता लोकाः सुचरितैः सह ॥ ६ ॥ उदाहृतन्ते राजेन्द्र
यथा विष्णुं महौजसम् । सर्व्वभूतेश्वरं देवं प्रभुं नारायणं पुरा ।
जग्मुः सुबहवः शूरा राजानो दण्डनीतये ॥ ७ ॥ एकैकमात्मनः
कर्म्म तुलयित्वाश्रमं पुरा । राजानः पर्य्युपासन्त दृष्टान्तवचने
स्थिताः ॥ ८ ॥ साध्यादेवा वसवश्चाश्विनौ च रुद्राश्च विश्वे मरुतो

गणाश्च । सृष्टाः पुरा ह्यादिदेवेन देवाः क्षात्रे धर्मे वर्त्तयन्ते च सिद्धाः ॥ ९ ॥ अत्र ते वर्त्तयिष्यामि धर्ममर्थविनिश्चयम् । निर्मर्य्यादे वर्त्तमाने दानवैकार्णवे पुरा ॥ १० ॥ बभूव राजा राजेन्द्र मान्धाता नाम वीर्य्यवान् । पुरा वसुमतीपालो यज्ञञ्चक्रे दिदृक्षया ॥ ११ ॥ अनादिमध्यनिधनं देवं नारायणं प्रभुम् । स राजा राजशार्दूल मान्धाता परमेश्वरम् ॥ १२ ॥ जगाम शिरसा पादौ यज्ञ विष्णोर्महात्मनः । दर्शयामास तं विष्णूरूपमास्थाय वासवम् ॥ १३ ॥ स पार्थिवैर्वृतः सद्भिरर्च्चयामास तं प्रभुम् ॥ १४ ॥ तस्य पार्थिवसिंहस्य तस्य चैव महात्मनः । संवादोऽयं महानासीत् विष्णुं प्रति महाद्युतिम् ॥ १५ ॥

इन्द्र उवाच । किमिष्यते धर्मभृतां वरिष्ठ यद्द्रष्टुकामोऽसि तमप्रमेयम् । अनन्तमायामितमन्त्रवीर्य्यं नारायणं ह्यादिदेवं पुराणम् ॥ १६ ॥ नासौ देवो विश्वरूपो मयापि शक्यो द्रष्टुं ब्रह्मणा वापि साक्षात् । येऽन्ये कामास्तव राजन् हृदिस्था दास्ये चैतांस्त्वं हि मर्त्त्येषु राजा ॥ १७ ॥ सत्ये स्थितो धर्मपरो जितेन्द्रियः शूरो दृढ़प्रीतिरतः सुराणाम् । बुद्ध्या भक्त्या चोत्तमश्रद्धया च ततस्तेऽहं दद्मि वरान् यथेष्टम् ॥ १८ ॥

मान्धाता उवाच । असंशयं भगवन्नादिदेवं द्रक्ष्यामि त्वाहं शिरसा प्रसाद्य । त्यक्त्वा कामान् धर्मकामो ह्यरण्यमिच्छे गन्तुं सत्पथं लोकजुष्टम् ॥१९॥ क्षात्राद्धर्माद्विपुलादप्रमेयाल्लोकाः प्राप्ताः स्थापितं स्वं यशश्च । धर्मो योऽसावादिदेवात् प्रवृत्तो लोकज्येष्ठं तं न जानामि कर्त्तुम् ॥ २० ॥

इन्द्र उवाच । असैनिका धर्मपराश्च धर्मे परां गतिं न नयन्ते ह्ययुक्तम् । क्षात्रो धर्मो ह्यादिदेवात् प्रवृत्तः पश्चादन्ये शेषभूताश्च धर्माः ॥ २१ ॥ शेषाः सृष्टा ह्यन्तवन्तो ह्यनन्ताः सुप्रस्थानाः क्षत्रधर्मा विशिष्टाः । अस्मिन् धर्मे सर्वधर्माः प्रविष्टास्तस्माद्धर्मं श्रेष्ठ-

मिमं वदन्ति ॥ २२ ॥ कर्म्मणा वै पुरा देवा ऋषयश्चामितौजसः ।
त्राताः सर्वे प्रसह्यारीन् क्षत्रधर्मेण विष्णुना ॥ २३ ॥ यदि ह्यसौ
भगवान्नाहनिष्यद्रिपून् सर्वानसुरानप्रमेयः । न ब्राह्मणा न च
लोकादिकर्त्ता नायं धर्मो नादिधर्मोऽभविष्यत् ॥ २४ ॥ इमामुर्वीं
नाजयद्विक्रमेण देवश्रेष्ठः सासुरामादिदेवः । चातुर्वर्ण्यं चातु-
राश्रम्यधर्मा सर्वे न स्युर्ब्राह्मणानां विनाशात् ॥ २५ ॥ नष्टा धर्म्माः
शतधा शाश्वतास्ते क्षात्रेण धर्मेण पुनः प्रवृद्धाः । युगे युगे ह्यादि-
धर्माः प्रवृत्ताः लोकश्रेष्ठं क्षत्रधर्मं वदन्ति ॥ २६ ॥ आत्मत्यागः
सर्वभूतानुकम्पा लोकज्ञानं पालनं मोक्षणञ्च । विषण्णानां मोक्षणं
पीड़ितानां क्षात्रे धर्मे विद्यते पार्थिवानाम् ॥ २७ ॥ निर्म्मर्य्यादाः
काममन्युप्रवृत्ता भीता राज्ञो नाधिगच्छन्ति पापम् । शिष्टाश्चान्ये
सर्वधर्मोपपन्नाः साध्वाचाराः साधुधर्म्मं वदन्ति ॥ २८ ॥ पुत्रवत्
पाल्यमानानि राजधर्मेण पार्थिवैः । लोके भूतानि सर्वाणि चरन्ते
नात्र संशयः ॥ २९ ॥ सर्वधर्म्मपरं क्षात्रं लोकश्रेष्ठं सनातनम् ।
शश्वदक्षरपर्य्यन्तमक्षरं सर्वतोमुखम् ॥ ३० ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि वर्णाश्रमधर्म्म
कथने चतुःषष्टोऽध्यायः ॥ ६४ ॥

---

इन्द्र उवाच । एवं वीर्य्यः सर्वधर्मोपपन्नः क्षात्रः श्रेष्ठः सर्व-
धर्मेषु धर्मः । पाल्यो युष्माभिर्लोकहितैरुदारैर्विपर्य्यये स्यात्तद-
भावः प्रजानाम् ॥ १ ॥ भूसंस्कारं राजसंस्कारयोगमभैक्ष्यचर्य्यां
पालनञ्च प्रजानाम् । विद्याद्राजा सर्वभूतानुकम्पी देहत्यागञ्चाहवे
धर्ममग्र्यम् ॥ २ ॥ त्यागं श्रेष्ठं मुनयो वै वदन्ति सर्वश्रेष्ठं यच्छ-
रीरं त्यजेत । नित्यं युक्ता राजधर्मेषु सर्वे प्रत्यक्षन्ते भूमिपाला
यथैव ॥३॥ बहुश्रुत्या गुरुशुश्रूषया च परस्पराः संहननाद्वदन्ति ।

नित्यं धर्मं क्षत्रियो ब्रह्मचारी चरेदेको ह्याश्रमं धर्मकामः ॥ ४ ॥ सामान्यार्थे व्यवहारे प्रवृत्ते प्रियाप्रिये वर्ज्जयन्नेव यत्नात् । चातुर्वर्ण्यस्थापनात् पालनाच्च तैस्तैर्योगैर्नियमैरौरसैश्च ॥ ५ ॥ सर्वैर्योगैराश्रमं धर्ममाहुः क्षात्रं श्रेष्ठं सर्वधर्मोपपन्नम् । स्वं स्वं धर्मं ये न चरन्ति वर्णास्तांस्तान् धर्मानन्यथार्थान् वदन्ति ॥ ६ ॥ निर्मर्यादान्नित्यमर्थे निविष्टानाहुस्तान् वै पशुभूतान् मनुष्यान् । यथा नीतिं गमयत्यर्थयोगाच्छ्रेयस्तस्मादाश्रमात् क्षत्रधर्मः ॥ ७ ॥ त्रैविद्यानां या गतिर्ब्राह्मणानां ये चैवोक्ताश्चाश्रमा ब्राह्मणानाम् । एतत् कर्म ब्राह्मणस्याहुरग्र्यमन्यत् कुर्वञ्छूद्रवच्छस्त्रवध्यः ॥ ८ ॥ चातुराश्रम्यधर्माश्च वेदधर्माश्च पार्थिव । ब्राह्मणेनानुगन्तव्या नान्यो विद्यात् कदाचन ॥ ९ ॥ अन्यथा वर्त्तमानस्य नासौ वृत्तिः प्रकल्प्यते । कर्मणा वर्द्धते धर्मो यथा धर्मस्तथैव सः ॥ १० ॥ यो विकर्मस्थितो विप्रो न स सम्मानमर्हति । कर्म स्वं नोपयुञ्जानमविश्वास्यं हि तं विदुः ॥ ११ ॥ एते धर्माः सर्ववर्णेषु लीना उत्कृष्टव्याः क्षत्रियैरेष धर्मः । तस्माज्ज्येष्ठा राजधर्मा न चान्ये वीरज्येष्ठा वीरधर्मा मता मे ॥ १२ ॥

मान्धातोवाच । यवनाः किराता गान्धाराश्चीनाः शवरबर्बराः । शकास्तुषाराः कङ्काश्च पह्लवाश्चान्ध्रमद्रकाः ॥१३॥ पौण्ड्राः पुलिन्दा रमठाः काम्बोजाश्चैव सर्वशः । ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः ॥ १४ ॥ कथं धर्मांश्चरिष्यन्ति सर्वे विषयवासिनः । मद्विधैश्च कथं स्थाप्याः सर्वे वै दस्युजीविनः ॥ १५ ॥ एतदिच्छाम्यहं श्रोतुं भगवंस्तद्ब्रवीहि मे । त्वं बन्धुभूतो ह्यस्माकं क्षत्रियाणां सुरेश्वर ॥ १६ ॥

इन्द्र उवाच । मातापित्रोर्हि शुश्रूषा कर्त्तव्या सर्वदस्युभिः । आचार्य्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ॥ १७ ॥ भूमिपानाञ्च शुश्रूषां कर्त्तव्या सर्वदस्युभिः । वेदधर्मक्रियाश्चैव तेषां धर्मो

विधीयते॥ १८॥ पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च। दानानि च यथाकालं द्विजेभ्यो विसृजेत् सदा॥ १९॥ अहिंसा सत्यमक्रोधो वृत्तिदायानुपालनम्। भरणं पुत्रदाराणां शौचमद्रोह एव च॥२०॥ दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता। पाकयज्ञा महार्हाश्च दातव्याः सर्वदस्युभिः॥ २१॥ एतान्येवं प्रकाराणि विहितानि पुरानघ। सर्वलोकस्य कर्माणि कर्त्तव्यानीह पार्थिव॥ २२॥

मान्धातोवाच। दृश्यन्ते मानुषे लोके सर्ववर्णेषु दस्यवः। लिङ्गान्तरे वर्त्तमाना आश्रमेषु चतुर्ष्वपि॥ २३॥

इन्द्र उवाच। विनष्टायां दण्डनीत्यां राजधर्मे निराकृते। सम्प्रमुह्यन्ति भूतानि राजदौरात्म्यतोऽनघ॥ २४॥ असङ्ख्याता भविष्यन्ति भिक्षवो लिङ्गिनस्तथा। आश्रमाणां विकल्पाश्च निवृत्तेऽस्मिन् कृते युगे॥ २५॥ अशृण्वानाः पुराणानां धर्माणां परमा गताः। उत्पथं प्रतिपत्स्यन्ते काममन्युसमीरिताः॥ २६॥ यदा निवर्त्त्यते पापो दण्डनीत्या महात्मभिः। तदा धर्मो न चलते सद्भूत शाश्वतः परः॥ २७॥ सर्वलोकगुरुञ्चैव राजानं योऽवमन्यते। न तस्य दत्तं न हुतं न श्राद्धं फलते क्वचित्॥ २८॥ मानुषाणामधिपतिं देवभूतं सनातनम्। देवापि नावमन्यन्ते धर्मकामं नरेश्वरम्॥ २९॥ प्रजापतिर्हि भगवान् सर्वञ्चैवासृजज्जगत्। स प्रवृत्तिनिवृत्त्यर्थं धर्माणां क्षत्रमिच्छति॥ ३०॥ प्रवृत्तस्य हि धर्मस्य बुद्ध्या यः स्मरते गतिम्। स मे मान्यश्च पूज्यश्च तत्र क्षत्रं प्रतिष्ठितम्॥ ३१॥

भीष्म उवाच। एवमुक्त्वा स भगवान् मरुद्गणवृतः प्रभुः। जगाम भवनं विष्णोरक्षरं शाश्वतं पदम्॥ ३२॥ एवं प्रवर्त्तिते धर्मे पुरा सुचरितेऽनघ। कः क्षत्रमवमन्येत चेतनावान् बहुश्रुतः॥ ३३॥ अन्यायेन प्रवृत्तानि निवृत्तानि तथैव च। अन्तरा

विलयं यान्ति यथा पथि विचक्षुषः ॥ ३४ ॥ आदौ प्रवर्त्तिते चक्रे तथैवादिपरायणे । वर्त्तस्व पुरुषव्याघ्र संविजानामि तेऽनघ ॥३५॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि वर्णाश्रमधर्म-कथने पञ्चषष्ठोऽध्यायः ॥ ६५ ॥

---

युधिष्ठिर उवाच । श्रुता मे कथिताः पूर्वं चत्वारो मानवाश्रमाः । आख्यानयित्वा व्याख्यानमेतदाचक्ष्व पृच्छत. ॥ १ ॥

भीष्म उवाच । विदिताः सर्व एवेह धर्मास्तव युधिष्ठिर । यथा मम महाबाहो विदिताः साधुसम्मताः ॥ २ ॥ यत्त लिङ्गान्तरगतं पृच्छसे मां युधिष्ठिर । धर्मं धर्मभृतांश्रेष्ठ तन्निबोध नराधिप ॥ ३ ॥ सर्वाख्येनानि कौन्तेय विद्यन्ते मनुजर्षभ । साध्वाचारप्रवृत्तानां चातराश्रम्यकारिणाम् ॥४॥ अकामद्वेषयुक्तस्य दण्डनीत्या युधिष्ठिर । समदर्शिनश्च भूतेषु भैक्षाश्रमपदं भवेत् ॥५॥ वेत्ति ज्ञानं विसर्गञ्च निग्रहानुग्रहं तथा । यथोक्तवृत्तेर्धीरस्य क्षेमाश्रमपदं भवेत् ॥ ६ ॥ अर्हान् पूजयतो नित्यं सम्विभागेन पाण्डव । सर्वतस्तस्य कौन्तेय भैक्षाश्रमपदं भवेत् ॥ ७ ॥ ज्ञातिसम्बन्धिमित्राणि व्यापन्नानि युधिष्ठिर । समभ्युद्धरमाणस्य दीक्षाश्रमपदं भवेत् ॥ ८ ॥ लोकमुख्येषु सत्कारं लिङ्गिमुख्येषु चासकृत् । कुर्वतस्तस्य कौन्तेय वन्याश्रमपदं भवेत् ॥ ९ ॥ आह्निकं पितृयज्ञांश्च भूतयज्ञान् समानुषान् । कुर्वतः पार्थ विपुलान् वन्याश्रमपदं भवेत् ॥ १० ॥ सम्विभागेन भूतानामतिथीनां तथार्चनात् । देवयज्ञैश्च राजेन्द्र वन्याश्रमपदं भवेत् ॥ ११ ॥ मर्द्दनं परराष्ट्राणां शिष्टार्थं सत्यविक्रम । कुर्वतः पुरुषव्याघ्र वन्याश्रमपदं भवेत् ॥१२॥ पालनात् सर्वभूतानां स्वराष्ट्रपरिपालनात् । दीक्षा बहुविधा राजन् सत्याश्रमपदं भवेत् ॥ १३ ॥ वेदाध्ययननित्यत्वं क्षमाधा-

चार्घ्यपूजनम्। अथोपाध्यायशुश्रूषा ब्रह्माश्रमपदं भवेत्॥ १४॥ आह्निकं जपमानस्य देवान् पूजयतः सदा। धर्मेण पुरुषव्याघ्र धर्माश्रमपदं भवेत्॥ १५॥ मृत्युर्वा रक्षणं वेति यस्य राज्ञो विनिश्चयः। प्राणद्यूते ततस्तस्य ब्रह्माश्रमपदं भवेत्॥१६॥ अजिह्म-मशठं मार्गं वर्त्तमानस्य भारत। सर्वदा सर्वभूतेषु ब्रह्माश्रमपदं भवेत्॥ १७॥ वानप्रस्थेषु विप्रेषु त्रैविद्येषु च भारत। प्रयच्छतोऽर्थान् विपुलान् वन्याश्रमपदं भवेत्॥ १८॥ सर्वभूतेष्वनुक्रोशं कुर्वतस्तस्य भारत। आनृशंस्यप्रवृत्तस्य सर्वावस्थं पदं भवेत्॥१९॥ बालवृद्धेषु कौन्तेय सर्वावस्थं युधिष्ठिर। अनुक्रोशक्रिया पार्थ सर्वावस्थं पदं भवेत्॥ २०॥ बलात्कृतेषु भूतेषु परित्राणं कुरूद्वह। शरणागतेषु कौरव्य कुर्वन् गार्हस्थ्यमावसेत्॥ २१॥ चराचराणां भूतानां रक्षणञ्चापि सर्वशः। यथार्हपूजाञ्च तथा कुर्वन् गार्हस्थ्यमावसेत्॥ २२॥ ज्येष्ठानुज्येष्ठपत्नीनां भ्रातॄणां पुत्रनप्तॄणाम्। निग्रहानुग्रहौ पार्थ गार्हस्थ्यमिति तत्तपः॥ २३॥ साधूनामर्च्चनीयानां पूजासु विदितात्मनाम्। पालनं पुरुषव्याघ्र गृहाश्रमपदं भवेत्॥ २४॥ आश्रमस्थानि भूतानि यस्तु वेश्मनि भारत। आददीतेह भोज्येन तद्गार्हस्थ्यं युधिष्ठिर॥ २५॥ यः स्थितः पुरुषो धर्मे धात्रा सृष्टे यथार्थवत्। आश्रमाणां हि सर्वेषां फलं प्राप्नोत्यनामयम्॥ २६॥ यस्मिन् न नश्यन्ति गुणाः कौन्तेय पुरुषे सदा। आश्रमस्थं तमप्याहुर्नरश्रेष्ठं युधिष्ठिर॥२७॥ स्थान-मानं कुले मानं वयोमानं तथैव च। कुर्वन् वसति सर्वेषु ह्याश्रमेषु युधिष्ठिर॥ २८॥ देशधर्मांश्च कौन्तेय कुलधर्मांस्तथैव च। पालयन् पुरुषव्याघ्र राजा सर्वाश्रमी भवेत्॥ २९॥ काले विभूतिं भूतानामुपहारांस्तथैव च। अर्हयन् पुरुषव्याघ्र साधूनामाश्रमे वसेत्॥ ३०॥ दशधर्मगतश्चापि यो धर्मं प्रत्यवेक्षते। सर्वलोकस्य कौन्तेय राजा भवति सोऽश्रमी॥ ३१॥ ये धर्मकुशला लोके धर्मं

कुर्वन्ति भारत । पालिता यस्य विषये धर्म्मास्तस्य भूपते ॥३२॥ धर्म्मारामान् धर्म्मपरान् ये न रक्षन्ति मानवान् । पार्थिवाः पुरुषव्याघ्र तेषां पापं हरन्ति ते ॥ ३३ ॥ ये चाप्यत्र सहायाः स्युः पार्थिवानां युधिष्ठिर । ते चैवांशहराः सर्व्वे धर्म्मे परकृतेऽनघ ॥३४॥ सर्व्वाश्रमपदेऽप्याहुर्गार्हस्थ्यं दीप्तनिर्णयम् । पावनं पुरुषव्याघ्र यं धर्म्मं पर्य्युपास्महे ॥३५॥ आत्मोपमस्तु भूतेषु यो वै भवति मानवः । न्यस्तदण्डो जितक्रोध प्रेत्येह लभते सुखम् ॥ ३६ ॥ धर्म्मोत्थिता सत्त्ववीर्य्या धर्म्मसेतुवटारका । त्यागवाताध्वगा शीघ्रा नौस्त्वं सन्तारयिष्यति ॥ ३७ ॥ यदा निवृत्तः सर्व्वस्मात् कामो योऽस्य हृदिस्थितः । तदा भवति सत्त्वस्थस्ततो ब्रह्म समश्नुते ॥ ३८ ॥ सुप्रसन्नस्तु भावेन योगेन च नराधिप । धर्म्मं पुरुषशार्दूल प्राप्स्यते पालने रतः ॥ ३९ ॥ वेदाध्ययनशीलानां विप्राणां साधुकर्म्मणाम् । पालने यत्नमातिष्ठ सर्व्वलोकस्य चैव ह ॥ ४० ॥ वने चरन्ति यं धर्म्ममाश्रमेषु च भारत । रक्षणात्तच्छतगुणं धर्म्मं प्राप्नोति पार्थिवः ॥ ४१ ॥ एष ते विविधो धर्म्मः पाण्डवश्रेष्ठ कीर्त्तितः । अनुतिष्ठ त्वमेवैनं पूर्व्वदृष्टं सनातनम् ॥ ४२ ॥ चातुराश्रम्यमेकाग्रं चातुर्व्वर्ण्यञ्च पाण्डव । धर्म्मं पुरुषशार्दूल प्राप्स्यसि पालने रतः ॥ ४३ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि चतुराश्रम्यविधौ षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

युधिष्ठिर उवाच । चातुराश्रम्यमुक्तन्ते चातुर्व्वर्ण्यन्तथैव च । राष्ट्रस्य यत् कृत्यतमं ततो ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच । राष्ट्रस्यैतत् कृत्यतमं राज्ञ एवाभिषेचनम् । अनिन्द्रमबलं राष्ट्रं दस्यवोऽभिभवन्त्युत ॥ २ ॥ अराजकेषु राष्ट्रेषु

धर्मो न व्यवतिष्ठते। परस्परञ्च खादन्ति सर्वथा धिगराजकम् ॥३॥ इन्द्रमेव प्रवृणुते यद्राजानमिति श्रुतिः। यथैवेन्द्रस्तथा राजा सम्पूज्यो भूतिमिच्छता ॥ ४ ॥ नाराजकेषु राष्ट्रेषु वस्तव्यमिति रोचये। नाराजकेषु राष्ट्रेषु हव्यमग्निर्वहत्युत ॥ ५ ॥ अथ चेदभिवर्त्तेत राज्यार्थी बलवत्तरः। अराजकानि राष्ट्राणि हतवीर्य्याणि वा पुनः ॥ ६ ॥ प्रत्युद्गम्याभिपूज्यः स्यादेतदत्र सुमन्त्रितम्। न हि पापात् पापतरमस्ति किञ्चिदराजकात् ॥ ७ ॥ स चेत् समनुपश्येत समग्रं कुशलं भवेत्। बलवान् हि प्रकुपितः कुर्य्यान्निःशेषतामपि ॥ ८ ॥ भूयांसं लभते क्लेशं या गौर्भवतिदुर्दुहा। अथ या सुदुहा राजन् नैव तां वितुदन्त्यपि ॥ ९ ॥ यदतप्तं प्रणमते नैतत् सन्तापमर्हति। यत् स्वयं नमते दारु न तत् सन्तापयन्त्यपि ॥ १० ॥ एतयोपमया वीर संनमेत बलीयसे। इन्द्राय स प्रणमते नमते यो बलीयसे ॥ ११ ॥ तस्माद्राजैव कर्त्तव्यः सततं भूतिमिच्छता। न धनार्थी न दारार्थस्तेषां येषामराजकम् ॥१२॥ प्रीयते हि हरन् पापः परवित्तमराजके। यदास्य उद्धरन्त्यन्ये तदा राजानमिच्छति ॥ १३ ॥ पापा ह्यपि तदा क्षेमं न लभन्ते कदाचन। एकस्य हि द्वौ हरतो द्वयोश्च बहवोऽपरे ॥ १४ ॥ अदासः क्रियते दासो ह्रियन्ते च बलात् स्त्रियः। एतस्मात् कारणात् देवाः प्रजापालं प्रचक्रिरे ॥ १५ ॥ राजा चेन्न भवेल्लोके पृथिव्यां दण्डधारकः। जले मत्स्यानिवाभक्ष्यन् दुर्बलान् बलवत्तराः ॥ १६ ॥ अराजकाः प्रजाः पूर्वं विनेशुरिति नः श्रुतम्। परस्परं भक्षयन्तो मत्स्या इव जले कृशान्। समेत्य तास्ततश्चक्रुः समयानिति नः श्रुतम् ॥ १७ ॥ वाक्शूरो दण्डपरुषो यश्च स्यात् पारजायिकः। यः परस्वमथादद्यात्त्याज्या नस्तादृशा इति ॥१८॥ विश्वासार्थञ्च सर्वेषां वर्णानामविशेषतः। तास्तथा समयं कृत्वा समयेनावतस्थिरे ॥ १९ ॥ सहितास्तास्तदा जग्मुरसुखार्त्ताः

पितामहम् । अनीश्वरा विनश्यामो भगवन्नीश्वरं दिश ॥ २० ॥
यं पूजयेम सम्भूय यश्च नः प्रतिपालयेत् । ततो मनुं व्यादिदेश
मनुर्नाभिननन्द ताः ॥ २१ ॥

मनुरुवाच । बिभेमि कर्म्मणः पापाद्राज्यं हि भृशदुस्तरम् ।
विशेषतो मनुष्येषु मिथ्यावृत्तेषु नित्यदा ॥ २२ ॥

भीष्म उवाच । तमब्रुवन् प्रजा मा भैः कर्त्तृनेनो गमिष्यति ।
पशूनामधिपञ्चाशद्धिरण्यस्य तथैव च ॥ २३ ॥ धान्यस्य दशमं
भागं दास्यामः कोषवर्द्धनम् । कन्यां शुल्के चारुरूपां विवाहे-
षूद्यतासु च ॥ २४ ॥ मुख्येन शस्त्रपातेन ये मनुष्याः प्रधानतः ।
भवन्तं तेऽनुयास्यन्ति महेन्द्रमिव देवताः ॥ २५ ॥ स त्वं जातबलो
राजा दुष्प्रधर्षः प्रतापवान् । सुखे धास्यसि नः सर्वान् कुवेर इव
नैरृतान् ॥ २६ ॥ यन्तु धर्मं चरिष्यन्ति प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य त्वत्संस्थं वै भविष्यति ॥ २७ ॥ तेन धर्म्मेण
महता सुखं लब्धेन भावितः । पाह्यस्मान् सर्वतो राजन् देवानिव
शतक्रतुः ॥ २८ ॥ विजयाय हि निर्य्याहि प्रतपन् रश्मिवानिव ।
मानं विधम शत्रूणां धर्मो जयतु नः सदा ॥ २९ ॥ स निर्ययौ
महातेजा बलेन महता वृतः । महाभिजनसम्पन्नस्तेजसा प्रज्वल-
न्निव ॥ ३० ॥ तस्य दृष्ट्वा महत्त्वं ते महेन्द्रस्येव देवताः । अपत-
त्रसिरे सर्वे स्वधर्मे च दधुर्मनः ॥ ३१ ॥ ततो महीं परिययौ
पर्ज्जन्य इव वृष्टिमान् । शमयन् सर्वतः पापान् स्वकर्म्मसु च योज-
यन् ॥ ३२ ॥ एवं ये भूतिमिच्छेयुः पृथिव्यां मानवाः क्वचित् ।
कुर्य्युराजानमेवाग्रे प्रजानुग्रहकारणात् ॥ ३३ ॥ नमस्येरंश्च तं
भक्त्या शिष्या इव गुरुं सदा । देवा इव च देवेन्द्रं तत्र राजान-
मन्तिके ॥ ३४ ॥ सत्कृतं स्वजनेनेह परोऽपि बहुमन्यते । स्वजनेन
त्ववज्ञातं परे परिभवन्त्युत ॥ ३५ ॥ राज्ञः परैः परिभवः सर्वेषा-
मसुखावहः । तस्माच्छत्रञ्च पत्रञ्च वाह्यान्याभरणानि च ॥ ३६ ॥

भोजनान्यथ पानानि राज्ञे दद्यर्गृहाणि च। आसनानि च शय्याश्च सर्वोपकरणानि च ॥ ३७ ॥ गोप्ता तस्माद्दुराधर्षः स्मितपूर्वाभिभाषिता। आभाषितश्च मधुरं प्रत्याभाषेत मानवान् ॥ ३८ ॥ कृतज्ञो दृढ़भक्तिः स्यात् संविभागी जितेन्द्रियः। ईक्षितः प्रतिवीक्षेत मृदु वल्गु च सुष्टु च ॥ ३९ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि वर्णाश्रमधर्मकथने सप्तषष्टोऽध्यायः ॥ ६७ ॥

---

युधिष्ठिर उवाच। किमाहुर्दैवतं विप्रा राजानं भरतर्षभ। मनुष्याणामधिपतिं तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। बृहस्पतिं वसुमना यथा पप्रच्छ भारत ॥ २ ॥ राजा वसुमना नाम कौशल्यो धीमतांवरः। महर्षिं किल पप्रच्छ कृतप्रज्ञं बृहस्पतिम् ॥ ३ ॥ सर्वं वैनयिकं कृत्वा विनयज्ञो बृहस्पतिम्। दक्षिणानन्तरो भूत्वा प्रणम्य विधिपूर्वकम् ॥४॥ विधिं प्रपच्छ राज्यस्य सर्वलोकहितेरतः। प्रजानां सुखमन्विच्छन् धर्मशीलं बृहस्पतिम् ॥५

वसुमना उवाच। केन भूतानि वर्द्धन्ते क्षयं गच्छन्ति केन वा। कमर्चन्तो महाप्राज्ञ सुखमव्ययमाप्नुयुः ॥ ६ ॥ एवं पृष्टो महाप्राज्ञ कौशल्येनामितौजसा। राजसत्कारमव्यग्रं शशंसास्मै बृहस्पति ॥ ७ ॥

बृहस्पतिरुवाच। राजमूलो महाप्राज्ञ धर्मो लोकस्य लक्ष्यते। प्रजा राजभयादेव न खादन्ति परस्परम् ॥ ८ ॥ राजा ह्येवाखिलं लोकं समुदीर्णं समुत्सुकम्। प्रसादयति धर्मेण प्रसाद्य च विराजते ॥ ९ ॥ यथा ह्यनुदये राजन् भूतानि शशिसूर्य्ययोः।

अन्धे तमसि मज्जेयुरपश्यन्तः परस्परम् ॥ १० ॥ यथा ह्यनुदके मत्स्या निराक्रन्दे विहङ्गमाः । विहरेयुर्यथाकामं विहिंसन्तः पुनः पुनः ॥ ११ ॥ विमथ्यातिक्रमेरंश्च विषह्यापि परस्परम् । अभावमचिरेणैव गच्छेयुर्नात्र संशयः ॥ १२ ॥ एवमेव विना राज्ञा विनश्येयुरिमाः प्रजाः । अन्धे तमसि मज्जेयुरगोपाः पशवो यथा ॥ १३ ॥ हरेयुर्बलवन्तोऽपि दुर्बलानां परिग्रहान् । हन्युर्व्यायच्छमानांश्च यदि राजा न पालयेत् ॥ १४ ॥ ममेदमिति लोकेऽस्मिन् न भवेत् सम्परिग्रहः । न दारा न च पुत्रः स्यान्न धनं न परिग्रहः ॥ १५ ॥ विष्वग्लोपः प्रवर्त्तेत यदि राजा न पालयेत् । यानं वस्त्रमलङ्कारान् रत्नानि विविधानि च । हरेयुः सहसा पापा यदि राजा न पालयेत् ॥ १६ ॥ पतद्बहुविधं शस्त्रं बहुधा धर्मचारिषु । अधर्मः प्रगृहीतः स्याद्यदि राजा न पालयेत् ॥ १७ ॥ मातरं पितरं वृद्धमाचार्य्यमतिथीन् गुरुम् । क्लिश्नीयुरपि हिंस्युर्वा यदि राजा न पालयेत् ॥ १८ ॥ वधबन्धपरिक्लेशो नित्यमर्थवतां भवेत् । ममत्वञ्च न विन्देयुर्यदि राजा न पालयेत् ॥ १९ ॥ अन्ताश्चाकाल एव स्युर्लोकोऽयं दस्युसाद्भवेत् । पतेयुर्नरकं घोरं यदि राजा न पालयेत् ॥ २० ॥ न योनिदोषो वर्त्तेत न कृषिर्न वणिक्पथः । मज्जेद्धर्मस्त्रयी न स्याद्यदि राजा न पालयेत् ॥ २१ ॥ न यज्ञाः सम्प्रवर्त्तेयुर्विधिवत् स्वाप्तदक्षिणाः । न विवाहाः समाजो वा यदि राजा न पालयेत् ॥ २२ ॥ न वृषाः सम्प्रवर्त्तेरन् न मथ्येरंश्च गर्गराः । घोषाः प्रनाशं गच्छेयुर्यदि राजा न पालयेत् ॥ २३ ॥ त्रस्तमुद्विग्नहृदयं हाहाभूतमचेतनम् । क्षणेन विनशेत् सर्वं यदि राजा न पालयेत् ॥ २४ ॥ न सम्वत्सरसत्राणि तिष्ठेयुरकुतोभयाः । विधिवद्दक्षिणावन्ति यदि राजा न पालयेत् ॥२५॥ ब्राह्मणाश्चतुरो वेदान्नाधीयीरंस्तपस्विनः । विद्यास्नाता व्रतस्नाता यदि राजा न पालयेत् ॥ २६ ॥ न लभेत् धर्मसंश्लेषं हत-

विप्रहतो जनः। हर्त्ता सुखेन्द्रियो गच्छेत् यदि राजा न पालयेत्॥ २७॥ हस्ताद्धस्तं परिमुष्णीयुर्विलेरन् सर्व्वसेतवः। भयार्त्तं विद्रवेत् सर्वं यदि राजा न पालयेत्॥ २८॥ अनयाः सम्प्रवर्त्तेरन् भवेद्वै वर्णसङ्करः। दुर्भिक्षमाविशेद्राष्ट्रं यदि राजा न पालयेत्॥ २९॥ विवृत्य हि यथाकामं गृहद्वाराणि शेरते। मनुष्या रक्षिता राज्ञा समन्तादकुतोभयाः॥ ३०॥ नाक्रुष्टं सहते कश्चित् कुतो वा हस्तलाघवम्। यदि राजा न सम्यग्गां रक्षयत्यपि धार्म्मिकः॥ ३१॥ स्त्रियश्चापुरुषा मार्गं सर्व्वालङ्कारभूषिताः। निर्भयाः प्रतिपद्यन्ते यदि रक्षति भूमिपः॥ ३२॥ धर्म्ममेव प्रपद्यन्ते न हिंसन्ति परस्परम्। अनुगृह्णन्ति चान्योऽन्यं यदा रक्षति भूमिपः॥ ३३॥ यजन्ते च महायज्ञैस्त्रयो वर्णाः पृथग्विधैः। युक्ताश्चाधीयते विद्यां यदा रक्षति भूमिपः॥ ३४॥ वार्त्तामूलो ह्ययं लोकस्त्रय्या वै धार्य्यते सदा। तत् सर्वं वर्त्तते सम्यग्यदि रक्षति भूमिपः॥ ३५॥ यदा राजा धुरं श्रेष्ठामादाय वहति प्रजाः। महता बलयोगेन तदा लोकः प्रसीदति॥ ३६॥ यस्याभावेन भूतानामभावः स्यात् समन्ततः। भावे च भावो नित्यं स्यात् कस्तं न प्रतिपूजयेत्॥ ३७॥ तस्य यो वहते भारं सर्व्वलोकभयावहम्। तिष्ठन् प्रियाहिते राज्ञ उभौ लोकाविमौ जयेत्॥ ३८॥ यस्तस्य पुरुषः पापं मनसाप्यनुचिन्तयेत्। असंशयमिह क्लिष्टः प्रेत्यापि नरकं व्रजेत्॥ ३९॥ न हि जात्ववमन्तव्यो मनुष्य इति भूमिपः। महती देवता ह्येषा नररूपेण तिष्ठति॥ ४०॥ कुरुते पञ्चरूपाणि कालयुक्तानि यः सदा। भवत्यग्निस्तथादित्यो मृत्युर्वैश्रवणो यमः॥४१॥ यदा ह्यासीदतः पापान् दहत्युग्रेण तेजसा। मिथ्योपचरितो राजा तदा भवति पावकः॥ ४२॥ यदा पश्यति चारेण सर्व्वभूतानि भूमिपः। क्षेमञ्च कृत्वा व्रजति तदा भवति भास्करः॥ ४३॥ अशुचींश्च यदा क्रुद्धः क्षिणोति शतशो नरान्।

सपुत्रपौत्रान् सामात्यांस्तदा भवति सोऽन्तकः ॥ ४४ ॥ यदा त्वधार्मिकान् सर्वांस्तीक्ष्णैर्दण्डैर्नियच्छति। धार्मिकांश्चानुगृह्णाति भवत्यथ यमस्तदा ॥४५॥ यदा तु धनधाराभिस्तर्पयत्युपकारिणः। आच्छिनत्ति च रत्नानि विविधान्यपकारिणाम् ॥४६॥ श्रियं ददाति कस्मैचित् कस्माच्चिदपकर्षति। तदा वैश्रवणो राजंल्लोके भवति भूमिप ॥ ४७ ॥ नास्यापवादे स्थातव्यं दक्षेणाक्लिष्टकर्मणा। धर्ममाकाङ्क्षता लोकमीश्वरस्यानुसूयता। न हि राज्ञः प्रतीपानि कुर्वन् सुखमवाप्नुयात् ॥ ४८ ॥ पुत्रो भ्राता वयस्यो वा यद्यप्यात्मसमो भवेत्। कुर्य्यात् कृष्णगतिः शेषं ज्वलितोऽनिलसारथिः ॥ ४९ ॥ न तु राजाभिपन्नस्य शेषं क्वचन विद्यते। तस्य सर्वाणि रक्ष्याणि दूरतः परिवर्ज्जयेत् ॥ ५० ॥ मृत्योरिव जुगुप्सेत राजस्वहरणान्नरः। नश्येदभिमृषन् सद्यो मृगः कूटमिव स्पृशन् ॥५१॥ आत्मस्वमिव रक्षेत राजस्वमिह बुद्धिमान् ॥ ५२ ॥ महान्तं नरकं घोरमप्रतिष्ठमचेतनम्। पतन्ति चिररात्राय राजवित्तापहारिणः ॥ ५३ ॥ राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्नृपः। य एभिस्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥ ५४ ॥ तस्माद्बुभूषुर्नियतो जितात्मा नियतेन्द्रियः। मेधावी स्मृतिमान् दक्षः संश्रयेत महीपतिम् ॥ ५५ ॥ कृतज्ञं प्राज्ञमक्षुद्रं दृढभक्तिं जितेन्द्रियम्। धर्मनित्यं स्थितं नीत्यां मन्त्रिणं पूजयेन्नृपः ॥ ५६ ॥ दृढभक्तिं कृतप्रज्ञं धर्मज्ञं संयतेन्द्रियम्। शूरमक्षुद्रकर्माणं निषिद्धजनमाश्रयेत् ॥ ५७ ॥ प्रज्ञा प्रगल्भं कुरुते मनुष्यं राजा कृशान् वै कुरुते मनुष्यान्। राजाभिपन्नस्य कुतः सुखानि राजभ्युपेतं सुखिनं करोति ॥ ५८ ॥ राजा प्रजानां हृदयं गरीयो गतिः प्रतिष्ठा सुखमुत्तमञ्च। समाश्रिता लोकमिमं परञ्च जयन्ति सम्यक् पुरुषा नरेन्द्र ॥ ५९ ॥ नराधिपश्चाप्यनुशिष्य मेदिनीं दमेन सत्येन च सौहृदेन। महद्भिरिष्ट्वा क्रतुभिर्महायशा त्रिविष्टपे स्थान-

मुपैति शाश्वतम् ॥ ६० ॥ स एवमुक्तोऽङ्गिरसा कौशल्यो राजसत्तमः। प्रयत्नात् कृतवान् वीरः प्रजानां परिपालनम् ॥ ६१ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि अङ्गिरावाक्ये अष्टषष्टोऽध्यायः ॥ ६८ ॥

---

युधिष्ठिर उवाच। पार्थिवेन विशेषेण किं कार्य्यमवशिष्यते। कथं रक्षो जनपदः कथं जयाश्च शत्रवः ॥ १ ॥ कथञ्चारं प्रयुञ्जीत वर्णान् विश्वासयेत् कथम्। कथं भृत्यान् कथं दारान् कथं पुत्रांश्च भारत ॥ २ ॥

भीष्म उवाच। राजवृत्तं महाराज शृणुष्वावहितोऽखिलम्। यत् कार्य्यं पार्थिवेनादौ पार्थिवप्रकृतेन वा ॥ ३ ॥ आत्मा जेयः सदा राज्ञा ततो जेयाश्च शत्रवः। अजितात्मा नरपतिर्विजयेत कथं रिपून् ॥ ४ ॥ एतावानात्मविजयः पञ्चवर्गविनिग्रहः। जितेन्द्रियो नरपतिर्बाधितुं शक्नुयादरीन् ॥ ५ ॥ न्यसेत गुल्मान् दुर्गेषु सन्धौ च कुरुनन्दन। नगरोपवने चैव पुरोद्यानेषु चैव ह ॥ ६ ॥ संस्थानेषु च सर्व्वेषु पुरेषु नगरेषु च। मध्ये च नरशार्दूल तथा राजनिवेशने ॥ ७ ॥ प्रणिधींश्च ततः कुर्य्याज्जड़ान्धवधिराकृतीन्। पुंसः परीक्षितान् प्राज्ञान् क्षुत्पिपासाश्रमक्षमान् ॥८॥ अमात्येषु च सर्व्वेषु मित्रेषु विविधेषु च। पुत्रेषु च महाराजा प्रणिदध्यात् समाहितः ॥ ९ ॥ पुरे जनपदे चैव तथा सामन्तराजसु। यथा न विद्युरन्योऽन्यं प्रणिधेयास्तथा हि ते ॥ १० ॥ चारांश्च विद्यात प्रहितान् परेण भरतर्षभ। आपनेषु विहारेषु समाजेषु च भिक्षुष ॥ ११ ॥ आरामेषु तथोद्याने पण्डितानां समागमे। देशेषु चत्वरे चैव सभास्वावसथेषु च ॥ १२ ॥ एवं विचिनुयाद्राजा परचारं विचक्षणः। चारे हि विदिते पूर्व्वं हितं भवति पाण्डव

॥ १३ ॥ यदा तु हीनं नृपतिर्विद्यादात्मानमात्मना। अमात्यैः सह संमन्त्र कुर्य्यात् सन्धिं बलीयसा ॥ १४ ॥ अज्ञायमाने हीनत्वे सन्धिं कुर्य्यात् परेण वै। लिप्सुर्वा कश्चिदेवार्थं त्वरमाणो विचक्षणः ॥ १५ ॥ गुणवन्तो महोत्साहा धर्म्मज्ञाः साधवश्च ये। सन्दधीत नृपस्तैश्च राष्ट्रं धर्म्मेण पालयन् ॥ १६ ॥ उच्छिद्यमानमात्मानं ज्ञात्वा राजा महामतिः। पूर्व्वापकारिणो हन्यात् लोकद्विष्टांश्च सर्व्वशः ॥ १७ ॥ यो नोपकर्त्तुं शक्नोति नापकर्त्तुं महीपतिः। न शक्यरूपश्चोद्धर्त्तुमुपेक्ष्यस्तादृशो भवेत् ॥ १८ ॥ यात्रायां यदविज्ञातमनाक्रन्दमनन्तरम्। व्यासक्तञ्च प्रमत्तञ्च दुर्व्वलञ्च विशेषतः ॥ १९ ॥ यात्रामाज्ञापयेद्वीरः कल्यः पुष्टबलः सुखी। पूर्व्वं कृत्वा बधानञ्च यात्रायां नगरे तथा ॥ २० ॥ न च वश्यो भवेदस्य नृपो यश्चातिवीर्य्यवान्। हीनश्च बलवीर्य्याभ्यां कर्षयंस्तत्परो वशेत् ॥२१ राष्ट्रञ्च पीड़येत्तस्य शस्त्राग्निविषमूर्च्छनैः। अमात्यवल्लभानाञ्च विवादांस्तस्य कारयेत् ॥ २२ ॥ वर्ज्जनीयं सदा युद्धं राज्यकामेन धीमता। उपायैस्त्रिभिरादानमर्थस्याह बृहस्पतिः ॥२३॥ सान्त्वेन तु प्रदानेन भेदेन च नराधिपः। यमर्थं शक्नुयात् प्राप्तुं तेन तुष्येत पण्डितः ॥ २४ ॥ आददीत वलिञ्चापि प्रजाभ्यः कुरुनन्दन। स षड्भागमपि प्राज्ञस्तासामेवाभिगुप्तये ॥ २५ ॥ दशधर्म्मगतेभ्यो यद्वसु बह्वल्पमेव च। तदाददीत सहसा पौराणां रक्षणाय वै ॥ २६ ॥ यथा पुत्त्रस्तथा पौरा द्रष्टव्यास्ते न संशयः। भक्तिश्चैषां न कर्त्तव्या व्यवहारे प्रदर्शिते ॥२७॥ श्रोतुञ्चैव न्यसेद्राजा प्राज्ञान् सर्व्वार्थदर्शिनः। व्यवहारेषु सततं तत्र राज्यं प्रतिष्ठितम् ॥ २८ ॥ आकरे लवणे शुल्के तरे नागबले तथा। न्यसेदमात्यान्नृपतिः स्वाप्तान् वा पुरुषान् हितान् ॥ २९ ॥ सम्यग्दण्डधरो नित्यं राजा धर्म्ममवाप्नुयात्। राज्ञो हि सततं दण्डः सम्यग्धर्म्मः प्रशस्यते ॥ ३० ॥ वेदवेदाङ्गवित् प्राज्ञः सुतपस्वी नृपो भवेत्। दान-

शीलस्य सततं यज्ञशीलस्य भारत ॥ ३१ ॥ एते गुणाः समस्ताः
स्युर्नृपस्य सततं स्थिराः। व्यवहारलोपे नृपतेः कुतः स्वर्गः कुतो
यशः ॥ ३२ ॥ यदा तु पीड़ितो राजा भवेद्राज्ञा बलीयसा।
तदाभिसंश्रयेद्दुर्गं बुद्धिमान् पृथिवीपतिः ॥ ३३ ॥ विधावाक्रम्य
मित्राणि विधानमुपकल्पयेत्। सामभेदान् विरोधार्थं विधानमुप-
कल्पयेत् ॥ ३४ ॥ घोषान्त्यसेत मार्गेषु ग्रामानुत्थापयेदपि। प्रवे-
शयेच्च तान् सर्वान् शाखानगरकेष्वपि ॥ ३५ ॥ ये गुप्ताश्चैव दुर्गाश्च
देशास्तेषु प्रवेशयेत्। धनिनो बलमुख्यांश्च सान्त्वयित्वा पुनः पुनः
॥ ३६ ॥ सस्याभिहारं कर्य्याच्च स्वयमेव नराधिपः। असम्भवे
प्रवेशस्य दहेद्दावाग्निना भृशम् ॥ ३७ ॥ क्षेत्रस्थेषु च सस्येषु शत्रो-
रुपजपेन्नरान्। विनाशयेद्वा तत् सर्वं बलेनाथ स्वकेन वा ॥३८॥
नदीमार्गेषु न तथा संक्रमानवसादयेत। जलं विस्रावयेत् सर्व-
मविस्राव्यञ्च दूषयेत् ॥ ३९ ॥ तदात्वेनायतीभिश्च निवसेद्भूम्यन-
न्तरम्। प्रतीघातं परस्याजौ मित्रकार्य्येऽप्युपस्थिते ॥ ४० ॥ दुर्गा-
नाञ्चाभितो राजा मूलच्छेदं प्रकारयेत्। सर्वेषां क्षुद्रवृक्षाणां
चैत्यवृक्षान् विवर्ज्जयेत् ॥ ४१ ॥ प्रवृद्धानाञ्च वृक्षाणां शाखांश्छे-
दयेत्तथा। चैत्यानां सर्वथा त्याज्यमपि पत्रस्य पातनम् ॥ ४२ ॥
प्रगण्डीः कारयेत् सम्यगाकाशजननीस्तदा। आपूरयेच्च परिखां
स्थाणुनक्रझषाकुलाम् ॥ ४३ ॥ सङ्कटद्वारकाणि स्युरुच्छ्वासार्थे
पुरस्य च। तेषाञ्च द्वारवद्गुप्तिः कार्य्या सर्वात्मना भवेत् ॥ ४४ ॥
द्वारेषु च गुरूण्येव यन्त्राणि स्थापयेत् सदा। आरोपयेच्छतघ्नीश्च
स्वाधीनानि च कारयेत् ॥ ४५ ॥ काष्ठानि चाभिहार्य्याणि तथा
कूपांश्च खानयेत्। संशोधयेत्तथा कूपान् कृतपूर्वान् पयोऽर्थिभिः
॥ ४६ ॥ तृणच्छन्नानि वेश्मानि पङ्केनाथ प्रलेपयेत्। निर्हरेच्च
तृणं मासि चैत्रे वह्निभयात्तथा ॥ ४७ ॥ नक्तमेव च भक्तानि
पाचयेत नराधिप। न दिवा ज्वालयेदग्निं वर्ज्जयित्वाग्निहोत्रि-

विक्रम् ॥ ४८ ॥ कर्म्मारारिष्टशालासु ज्वलेदग्निः सुरक्षितः । गृहाणि च प्रवेश्योऽन्तर्विधेयः स्याद्धुताशनः ॥ ४९ ॥ महान् दण्डश्च तस्य स्याद्यस्याग्निर्वै दिवा भवेत् । प्रघोषयेदथैवञ्च रक्षणार्थं पुरस्य च ॥ ५० ॥ भिक्षुकांश्चाक्रिकांश्चैव क्लीवोन्मत्तान् कुशीवलान् । बाह्यान् कुर्य्यान्नरश्रेष्ठ दोषाय स्युर्हि तेऽन्यथा ॥ ५१ ॥ चत्वरेष्वथ तीर्थेषु सभास्वावसथेषु च । यथार्थवर्णं प्रणिधिं कुर्य्यात् सर्वस्य पार्थिवः ॥ ५२ ॥ विशालान् राजमार्गांश्च कारयेत नराधिपः । प्रपाश्च विपणांश्चैव यथोद्देशं समादिशेत् ॥ ५३ ॥ भाण्डागारायुधागारान् योधागारांश्च सर्वशः । अश्वागारान् गजागारान् बलाधिकरणानि च ॥ ५४ ॥ परिखाश्चैव कौरव्य प्रतोलीर्निष्कुटानि च । न जात्वन्यः प्रपश्येत गुह्यमेतद्युधिष्ठिर ॥ ५५ ॥ अर्थसंनिचयं कुर्य्याद्राजा परबलार्द्दितः । तैलं वसा मधुघृतमौषधानि च सर्वशः ॥ ५६ ॥ अङ्गारकुशमुञ्जानां पलाशशरवर्णिनाम् । यवसेन्धनदिग्धानां कारयेत च सञ्चयान् ॥ ५७ ॥ आयुधानाञ्च सर्वेषां शक्त्यृष्टिप्रासवर्म्मणाम् । सञ्चयानेवमादीनां कारयेत नराधिपः ॥ ५८ ॥ औषधानि च सर्वाणि मूलानि च फलानि च । चतुर्विधांश्च वैद्यान् वै संगृह्णीयाद्विशेषतः ॥५९॥ नटाश्च नर्त्तकाश्चैव मल्ला मायाविनस्तथा । शोभयेयुः पुरवरं मोदयेयुश्च सर्वशः ॥ ६० ॥ यतः शङ्का भवेच्चापि भृत्यतोऽथापि मन्त्रितः । पौरेभ्यो नृपतेर्वापि स्वाधीनान् कारयेत तान् ॥ ६१ ॥ कृते कर्म्मणि राजेन्द्र पूजयेद्धनसञ्चयैः । दानेन च यथार्हेण सान्त्वेन विविधेन च ॥६२॥ निर्वेदयित्वा तु परं हत्वा वा कुरुनन्दन । ततोऽनृणो भवेद्राजा यथा शास्त्रे निदर्शितम् ॥ ६३ ॥ राज्ञा सप्तैव रक्ष्याणि तानि चैव निबोध मे । आत्मामात्यश्च कोशश्च दण्डो मित्राणि चैव हि ॥६४॥ तथा जनपदाश्चैव पुरञ्च कुरुनन्दन । एतत् सप्तात्मकं राज्यं परिपाल्यं प्रयत्नतः ॥ ६५ ॥ षाड्गुण्यञ्च त्रिवर्गञ्च त्रिवर्गं परमं

तथा। यो वेत्ति पुरुषव्याघ्र स भुङ्क्ते पृथिवीमिमाम् ॥ ६६ ॥ षाड्गुण्यमिति यत् प्रोक्तं तन्निबोध युधिष्ठिर। सन्धानासनमित्येव यात्रां संपरिगृह्य च। द्वैधीभावस्तथान्येषां संश्रयोऽथ परस्य च ॥ ६८ ॥ त्रिवर्गश्चापि यः प्रोक्तस्तमिहैकमनाः शृणु। क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गः परमस्तथा ॥ ६९ ॥ धर्मश्चार्थश्च कामश्च सेवितव्योऽथ कालतः। धर्मेण च महीपालश्चिरं पालयते महीम् ॥ ७० ॥ अस्मिन्नर्थे च श्लोकौ द्वौ गीतावाङ्गिरसा स्वयम्। यादवीपुत्र भद्रन्ते तावपि श्रोतुमर्हसि ॥ ७१ ॥ कृत्वा सर्वाणि कार्य्याणि सम्यक् सम्पाल्य मेदिनीम्। पालयित्वा तथा पौरान् परत्र सुखमेधते ॥ ७२ ॥ किं तस्य तपसा राज्ञः किञ्च तस्याध्वरैरपि। सुपालितप्रजो यः स्यात् सर्वधर्मविदेव सः ॥ ७३ ॥

युधिष्ठिर उवाच। दण्डनीतिश्च राजा च समस्तौ तावुभावपि। कस्य किं कुर्वतः सिध्येत्तन्मे ब्रूहि पितामह ॥ ७४ ॥

भीष्म उवाच। महाभाग्यं दण्डनीत्याः सिद्धैः शब्दैः सहेतुकैः। शृणु मे शंसतो राजन् यथावदिह भारत ॥ ७५ ॥ दण्डनीतिः स्वधर्मेभ्यश्चातुर्वर्ण्यं नियच्छति। प्रयुक्ता स्वामिना सम्यगधर्मेभ्यो नियच्छति ॥ ७६ ॥ चातुर्वर्ण्ये स्वकर्मस्थे मर्य्यादानामसङ्करे। दण्डनीतिकृते क्षेमे प्रजानामकुतोभये ॥ ७७ ॥ साम्ये प्रयत्नं कुर्वन्ति त्रयो वर्णा यथाविधि। तस्माद्देवमनुष्याणां सुखं विद्धि समाहितम् ॥ ७८ ॥ कालो वा कारणं राज्ञो राजा वा कालकारणम्। इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥ ७९ ॥ दण्डनीत्यां यदा राजा सम्यक् कार्त्स्न्येन वर्त्तते। तदा कृतयुगं नाम कालसृष्टं प्रवर्त्तते ॥ ८० ॥ ततः कृतयुगे धर्मो नाधर्मो विद्यते क्वचित्। सर्वेषामेव वर्णानां नाधर्मे रमते मनः ॥ ८१ ॥ योगक्षेमाः प्रवर्त्तन्ते प्रजानां नात्र संशयः। वैदिकानि च सर्वाणि भवन्त्यपि गुणान्युत ॥ ८२ ॥ ऋतवश्च सुखाः सर्वे भव-

न्युत निरामयाः । प्रसीदन्ति नराणाञ्च स्वरवर्णमनांसि च ॥८३॥
व्याधयो न भवन्त्यत्र नाल्पायुर्दृश्यते नरः । विधवा न भवन्त्यत्र कृपणो न तु जायते ॥ ८४ ॥ अकृष्टपच्या पृथिवी भवन्त्योषधयस्तथा । त्वक्पत्रफलमूलानि वीर्य्यवन्ति भवन्ति च ॥ ८५ ॥ नाधर्म्मो विद्यते तत्र धर्म्म एव तु केवलम् । इति कार्त्तयुगानेतान् धर्म्मान् विद्धि युधिष्ठिर ॥ ८६ ॥ दण्डनीत्यां यदा राजा त्रीनंशाननुवर्त्तते । चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्त्तते ॥ ८७ ॥ अशुभस्य चतुर्थांशस्त्रीनंशाननुवर्त्तते । कृष्टपच्यैव पृथिवी भवन्त्योषधयस्तथा ॥ ८८ ॥ अर्द्धं त्यक्त्वा यदा राजा नीत्यर्थमनुवर्त्तते । ततस्तु द्वापरं नाम स कालः सम्प्रवर्त्तते ॥ ८९ ॥ अशुभस्य यदा त्वर्द्धं द्वावंशावनुवर्त्तते । कृष्टपच्यैव पृथिवी भवत्यर्द्धफला तदा ॥ ९० ॥ दण्डनीतिं परित्यज्य यदा कार्त्स्न्येन भूमिपः । प्रजाः क्लिश्नात्ययोगेन प्रवर्त्तेत तदा कलिः ॥ ९१ ॥ कलावधर्म्मो भूयिष्ठो धर्म्मो भवति न क्वचित् । सर्व्वेषामेव वर्णानां स्वधर्मात् च्यवते मनः ॥९२॥ शूद्रा भैक्ष्येण जीवन्ति ब्राह्मणाः परिचर्य्यया । योगक्षेमस्य नाशश्च वर्त्तते वर्णसङ्करः ॥ ९३ ॥ वैदिकानि च कर्म्माणि भवन्ति विगुणान्युत । ऋतवो न सुखाः सर्व्वे भवन्त्यामयिनस्तथा ॥ ९४ ॥ ह्रसन्ति च मनुष्याणां स्वरवर्णमनांस्युत । व्याधयश्च भवन्त्यत्र म्रियन्ते च गतायुषः ॥ ९५ ॥ विधवाश्च भवन्त्यत्र नृशंसा जायते प्रजा । क्वचिद्वर्षति पर्ज्जन्यः क्वचित् सस्यं प्ररोहति ॥ ९६ ॥ रसाः सर्व्वे क्षयं यान्ति यदा नेच्छति भूमिपः । प्रजाः संरक्षितुं सम्यग्दण्डनीतिसमाहितः ॥ ९७ ॥ राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च । युगस्य च चतुर्थस्य राजा भवति कारणम् ॥ ९८ ॥ कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते । त्रेतायाः करणाद्राजा स्वर्गं नात्यन्तमश्नुते ॥ ९९ ॥ प्रवर्त्तनात् द्वापरस्य यथाभागमुपाश्नुते । कलेः प्रवर्त्तनाद्राजा पापमत्यन्तमश्नुते ॥ १०० ॥ ततो वसति दुष्कर्म्मा

नरके शाश्वतीः समाः । प्रजानां कल्मषे मग्नोऽकीर्त्तिं पापञ्च विन्दति ॥ १०१ ॥ दण्डनीतिं पुरस्कृत्य विजानन् क्षत्रियः सदा । अनवाप्तञ्च लिप्सेत लब्धञ्च परिपालयेत् ॥ १०२ ॥ लोकस्य सीमन्तकरी मर्य्यादा लोकभाविनी । सम्यङ्नीता दण्डनीतिर्यथा माता यथा पिता ॥ १०३ ॥ यस्यां भवन्ति भूतानि तद्विद्धि मनुजर्षभ । एष एव परो धर्मो यद्राजा दण्डनीतिमान् ॥ १०४ ॥ तस्मात् कौरव्य धर्मेण प्रजाः पालय नीतिमान् । एवंवृत्तः प्रजा रक्षन् स्वर्गं जेतासि दुर्ज्जयम् ॥ १०५ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि अङ्गिरावाक्ये एकोनसप्ततोऽध्यायः ॥ ६९ ॥

---

युधिष्ठिर उवाच । केन वृत्तेनवृत्तज्ञ वर्त्तमानो महीपतिः । सुखेनार्थान् सुखोदर्कान् इह च प्रेत्य चाप्नुयात् ॥ १ ॥

भीष्म उवाच । अयं गुणानां षट्त्रिंशत् षट्त्रिंशद्गुणसंयुतः । यान् गुणांस्तु गुणोपेतः कुर्वन् गुणमवाप्नुयात् ॥ २ ॥ चरेद्धर्मानकटुको मुञ्चेत् स्नेहं न नास्तिकः । अनृशंसश्चरेदर्थं चरेत् काममनुद्धतः ॥ ३ ॥ प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः । दाता नापात्रवर्षी स्यात् प्रगल्भः स्यादनिष्ठुरः ॥४॥ सन्दधीत न चानार्य्यैर्विगृह्णीयान्न बन्धुभिः । नाभक्तञ्चारयेच्चारं कुर्य्यात् कार्य्यमपीड़या ॥ ५ ॥ अर्थं ब्रूयान्न चासत्सु गुणान्ब्रूयान्न चात्मनः । अदद्यान्न च साधुभ्यो नासत्पुरुषमाश्रयेत् ॥ ६ ॥ नापरीक्ष्य नयेद्दण्डं न च मन्त्रं प्रकाशयेत् । विसृजेन्न च लुब्धेभ्यो विश्वसेन्नापकारिषु ॥७॥ अनीर्षुर्गुप्तदारः स्याच्चोक्षः स्यादघृणी नृपः । स्त्रियः सेवेत नात्यर्थं मृष्टं भुञ्जीत नाहितम् ॥ ८ ॥ अस्तब्धः पूजयेन्मान्यान् गुरून् सेवेदमायया । अर्च्चेद्देवानदम्भेन श्रियमिच्छेदकुत्सिताम् ॥ ९ ॥

सेवेत प्रणयं हित्वा दक्षः स्यान्न त्वकालवित्। सान्त्वयन्न च मोक्षाय अनुगृह्णन्न च क्षिपेत्॥ १०॥ प्रहरेन्न त्वविज्ञाय हत्वा शत्रून्न शोचयेत्। क्रोधं कुर्य्यान्न चाकस्मान्मृदुः स्यान्नापकारिषु॥११ एवं चरस्व राज्यस्थो यदि श्रेय इहेच्छसि। अतोऽन्यथा नरपतिर्भयमर्च्छत्यनुत्तमम्॥ १२॥ इति सर्वान् गुणानेतान् यथोक्तान् योऽनुवर्त्तते। अनुभूयेह भद्राणि प्रेत्य स्वर्गे महीयते॥ १३॥

वैशम्पायन उवाच। इदं वचः शान्तनवस्य शुश्रुवान् युधिष्ठिरः पाण्डवमुख्यसंवृतः। तदा ववन्दे च पितामहं नृपो यथोक्तमेतच्च चकार बुद्धिमान्॥ १४॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि
सप्ततितमोऽध्यायः॥ ७०॥

---

युधिष्ठिर उवाच। कथं राजा प्रजा रक्षन्नाधिबन्धेन युज्यते। धर्मे च नापराध्नोति तन्मे ब्रूहि पितामह॥ १॥

भीष्म उवाच। समासेनैव ते राजन् धर्मान् वक्ष्यामि शाश्वतान्। विस्तरेणैव धर्माणां न जात्वन्तमवाप्नुतात्॥ २॥ धर्मनिष्ठान् श्रुतवतो देवव्रतसमाहितान्। अर्च्चयित्वा यजेथास्त्वं गृहे गुणवतो द्विजान्॥ ३॥ प्रत्युत्थायोपसंगृह्य चरणावभिवाद्य च। अथ सर्वाणि कुर्वीथाः कार्य्याणि सपुरोहितः॥ ४॥ धर्मकार्य्याणि निर्वर्त्त्य मङ्गलानि प्रयुज्य च। ब्राह्मणान् वाचयेथास्त्वमर्थसिद्धिजयाशिषः॥ ५॥ आर्ज्जवेन च सम्पन्नो धृत्या बुद्ध्या च भारत। यथार्थं प्रतिगृह्णीयात् कामक्रोधौ च वर्ज्जयेत्॥ ६॥ कामक्रोधौ पुरस्कृत्य योऽर्थं राजानुतिष्ठति। न स धर्मं न चाप्यर्थं प्रतिगृह्णाति बालिशः॥ ७॥ मास्म लुब्धांश्च मूर्खांश्च कामार्थेषु प्रयुयुजः। अलुब्धान् बुद्धिसम्पन्नान् सर्वकर्मसु योजयेत्॥ ८॥

मूर्खोह्यधिकृतोऽर्थेषु कार्य्याणामविशारदः। प्रजाः क्लिश्नात्ययोगेन कामक्रोधसमन्वितः॥ ९॥ बलिषष्ठेन शुल्केन दण्डेनाथापराधिनाम्। शास्त्रानीतेन लिप्सेथा वेतनेन धनागमम्॥ १०॥ दापयित्वा करं धर्म्यं राष्ट्रं नीत्या यथाविधि। तथैतं कल्पयेद्राजा योगक्षेममतन्द्रितः॥ ११॥ गोपायितारं दातारं धर्मनित्यमतन्द्रितम्। अकामद्वेषसंयुक्तमनुरज्यन्ति मानवाः॥ १२॥ मास्माधर्मेण लोभेन लिप्सेथास्त्वं धनागमम्। धर्मार्थावध्रुवौ तस्य यो न शास्त्रपरो भवेत्॥ १३॥ अर्थशास्त्रपरो राजा धर्मार्थान्नाधिगच्छति। अस्थाने चास्य तद्वित्तं सर्वमेव विनश्यति॥ १४॥ अर्थमूलोऽपि हिंसाञ्च कुरुतेस्वयमात्मनः। करैरशास्त्रदृष्टैर्हि मोहात् संपीड़यन् प्रजाः॥ १५॥ ऊधश्छिन्द्यात्तु यो धेन्वाः क्षीरार्थी न लभेत् पयः। एवं राष्ट्रमयोगेन पीड़ितं न विवर्द्धते॥ १६॥ यो हि दोग्ध्रीमुपास्ते च स नित्यं विन्दते पयः। एवं राष्ट्रमुपायेन भुञ्जानो लभते फलम्॥ १७॥ अथ राष्ट्रमुपायेन भुज्यमानं सुरक्षितम्। जनयत्यतुलां नित्यं कोषवृद्धिं युधिष्ठिर॥ १८॥ दोग्ध्री धान्यं हिरण्यञ्च मही राज्ञा सुरक्षिता। नित्यं स्वेभ्यः परेभ्यश्च तृप्ता माता यथा पयः॥ १९॥ मालाकारोपमो राजन् भव माऽङ्गारिकोपमः। तथा युक्तश्चिरं राज्यं भोक्तुं शक्ष्यसि पालयन्॥ २०॥ परचक्राभियानेन यदि ते स्याद्धनक्षयः। अथ साम्नैव लिप्सेथा धनमब्राह्मणेषु यत्॥ २१॥ मास्म ते ब्राह्मणं दृष्ट्वा धनस्थं प्रचलेन्मनः। अन्त्यायामप्यवस्थायां किमु स्फीतस्य भारत॥ २२॥ धनानि तेभ्यो दद्यास्त्वं यथाशक्ति यथार्हतः। सान्त्वयन् परिरक्षंश्च स्वर्गमाप्स्यसि दुर्ज्जयम्॥ २३॥ एवं धर्मेण वृत्तेन प्रजास्त्वं परिपालय। स्वन्तं पुण्यं यशो नित्यं प्राप्स्यसे कुरुनन्दन॥ २४॥ धर्मेण व्यवहारेण प्रजां पालय पाण्डव। युधिष्ठिर यथायुक्तो नाधिवन्धेन योक्ष्यसे॥ २५॥ एष एव परो

धर्मो यद्राजा रक्षति प्रजाः । भूतानां हि यदा धर्मो रक्षणं परमा दया ॥ २६ ॥ तस्मादेव परं धर्मं मन्यन्ते धर्मकोविदाः । यो राजा रक्षणे युक्तो भूतेषु कुरुते दयाम् ॥ २७ ॥ यदह्ना कुरुते पापमरक्षन् भयतः प्रजाः । राजा वर्षसहस्रेण तस्यान्तमधिगच्छति ॥ २८ ॥ यदह्ना कुरुते धर्मं प्रजा धर्मेण पालयन् । दशवर्षसहस्राणि तस्य भुङ्क्ते फलं दिवि ॥२९॥ स्विष्टिः स्वधीतिः सुतपा लोकान् जयति यावतः । क्षणेन तानवाप्नोति प्रजा धर्मेण पालयन् ॥ ३० ॥ एवं धर्मं प्रयत्नेन कौन्तेय परिपालय । ततः पुण्यफलं लब्ध्वा नाधिवन्धेन योक्ष्यसे । स्वर्गलोकेषु महतीं श्रियं प्राप्स्यसि पाण्डव ॥ ३१ ॥ असम्भवश्च धर्माणामीदृशानामराजसु । तस्माद्राजैव नान्योऽस्ति यो धर्मफलमाप्नुयात् ॥ ३२ ॥ स राज्यं धृतिमान् प्राप्य धर्मेण परिपालय । इन्द्रं तर्पय सोमेन कामैश्च सुहृदो जनान् ॥ ३३ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि
एकसप्ततोऽध्यायः ॥ ७१ ॥

---

भीष्म उवाच । य एव तु सतो रक्षेदसतश्च निवर्त्तयेत् । स एव राज्ञा कर्त्तव्यो राजन् राजपुरोहितः ॥१॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् । पुरूरवस ऐलस्य सम्वादं मातरिश्वनः ॥२

पुरूरवा उवाच । कुतः स्विद्ब्राह्मणो जातो वर्णाश्चापि कुतस्त्रयः । कस्माच्च भवति श्रेष्ठस्तन्मे व्याख्यातुमर्हसि ॥ ३ ॥

मातरिश्वोवाच । ब्राह्मणो मुखतः सृष्टो ब्रह्मणो राजसत्तम । बाहुभ्यां क्षत्रियः सृष्ट ऊरुभ्यां वैश्य एव च ॥ ४ ॥ वर्णानां परिचर्य्यार्थं त्रयाणां भरतर्षभ । वर्णश्चतुर्थः सम्भूतः पद्भ्यां शूद्रो विनिर्मितः ॥ ५ ॥ ब्राह्मणो जायमानो हि पृथिव्यामनुजायते ।

ईश्वरः सर्वभूतानां धर्म्मकोषस्य गुप्तये ॥६॥ अतः पृथिव्या यन्तारं क्षत्रियं दण्डधारणे। द्वितीयं वर्णमकरोत् प्रजानामनुगुप्तये ॥७॥ वैश्यस्तु धनधान्येन त्रीन् वर्णान् विभृयादिमान्। शूद्रो ह्येतान् परिचरेदिति ब्रह्मानुशासनम् ॥ ८ ॥

ऐल उवाच। द्विजस्य क्षत्रबन्धोर्वा कस्येयं पृथिवी भवेत्। धर्म्मतः सह वित्तेन सम्यग्वायो प्रचक्ष्व मे ॥ ९ ॥

वायुरुवाच। विप्रस्य सर्वमेवैतद्यत् किञ्चिज्जगतीगतम्। ज्येष्ठेनाभिजनेनेह तद्धर्म्मकुशला विदुः ॥ १० ॥ स्वमेव ब्राह्मणो भुङ्क्ते स्वं ददाति च। गुरुर्हि सर्ववर्णानां ज्येष्ठः श्रेष्ठश्च वै द्विजः ॥ ११ ॥ पत्यभावे यथैव स्त्री देवरं कुरुते पतिम्। आनन्तर्य्यात्तथा क्षत्रं पृथिवी कुरुते पतिम्। एष ते प्रथमः कल्प आपद्यन्यो भवेदतः ॥ १२ ॥ यदि स्वर्गं परं स्थानं स्वधर्मं परिमार्गसि। यत् किञ्चिद्विजयैर्भूमिं ब्राह्मणाय निवेदय ॥ १३ ॥ श्रुतवृत्तोपपन्नाय धर्मज्ञाय तपस्विने। स्वधर्म्मपरितृप्ताय यो न वित्तपरो भवेत् ॥ १४ ॥ यो राजानं नयेद्बुद्ध्या सर्वतः परिपूर्णया। ब्राह्मणो हि कुले जातः कृतप्रज्ञो विनीतवान् ॥ १५ ॥ श्रेयो नयति राजानं ब्रुवंश्चित्रां सरस्वतीम्। राजा चरति यं धर्मं ब्राह्मणेन निदर्शितम् ॥ १६ ॥ शुश्रूषुरनहंवादी क्षत्रधर्म्मव्रते स्थितः। तावता सत्कृतः प्राज्ञश्चिरं यशसि तिष्ठति। तस्य धर्म्मस्य सर्वस्य भागी राजपुरोहितः ॥ १७॥ एवमेव प्रजाः सर्वा राजानमभिसंश्रिताः। सम्यग्वृत्ताः स्वधर्म्मस्था न कुतश्चिद्भयान्विताः ॥१८॥ राष्ट्रे चरन्ति यं धर्मं राज्ञा साध्वभिरक्षिताः। चतुर्थं तस्य धर्म्मस्य राजा भागन्तु विन्दति ॥ १९ ॥ देवा मनुष्याः पितरो गन्धर्वोरगराक्षसाः। यज्ञमेवोपजीवन्ति नास्ति चेष्टमराजके ॥२०॥ इतो दत्तेन जीवन्ति देवताः पितरस्तथा। राजन्येवास्य धर्म्मस्य योगः क्षेमः प्रतिष्ठितः ॥ २१ ॥ छायायामप्सु वायौ च सुख-

सुखोऽधिगच्छति। अग्नौ वारणि सूर्य्ये च सुखं शीतेऽधिगच्छति ॥ २२ ॥ शब्दे स्पर्शे रसे रूपे गन्धे च रमते मनः। तेषु भोगेषु सर्व्वेषु न भीतो लभते सुखम् ॥ २३ ॥ अभयस्य हि यो दाता तस्यैव सुमहत् फलम्। न हि प्राणसमं दानं त्रिषु लोकेषु विद्यते ॥ २४ ॥ इन्द्रो राजा यमो राजा धर्म्मो राजा तथैव च। राजा विभर्त्ति रूपाणि राज्ञा सर्व्वमिदं धृतम् ॥ २५ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि
द्विसप्ततोऽध्यायः ॥ ७२ ॥

---

भीष्म उवाच। राज्ञा पुरोहितः कार्य्यो भवेद्विद्वान् बहुश्रुतः। उभौ समीक्ष्य धर्म्मार्थावप्रमेयावनन्तरम् ॥ १ ॥ धर्म्मात्मा मन्त्र-विद्येषां राज्ञां राजन् पुरोहितः। राजा चैवङ्गुणो येषां कुशलं तेषु सर्व्वतः ॥ २ ॥ उभौ प्रजा वर्द्धयतो देवान् सर्व्वान् सुतान् पितॄन्। भवेयातां स्थितौ धर्म्मे श्रद्धेयौ सुतपस्विनौ ॥ ३ ॥ पर-स्परस्य सुहृदौ विहितौ समचेतसौ। ब्रह्मक्षत्रस्य सम्मानात् प्रजा सुखमवाप्नुयात् ॥ ४ ॥ विमाननात्तयोरेव प्रजा नश्येयुरेव हि। ब्रह्म क्षत्रञ्च सर्व्वेषां वर्णानां मूलमुच्यते ॥ ५ ॥ अत्राप्युदाहरन्ती-ममितिहासं पुरातनम्। ऐलकश्यपसंवादं तन्निबोध युधिष्ठिर ॥६॥

ऐल उवाच। यदा हि ब्रह्म प्रजहाति क्षत्रं क्षत्रं यदा वा प्रजहाति ब्रह्म। अन्वग्बलं कतमेऽस्मिन् भजन्ते तथा वर्णाः कत-मेऽस्मिन् ध्रियन्ते ॥ ७ ॥

कश्यप उवाच। वृद्धं राष्ट्रं भवति क्षत्रियस्य ब्रह्म क्षत्रं यत्र विरुध्यतीह। अन्वग्बलं दस्यवस्तद्भजन्ते तथा वर्णं तत्र विदन्ति सन्तः ॥ ८ ॥ नैषामुक्षा वर्द्धते नोत पुत्रा न गर्गरो मथ्यते नो यजन्ते। नैषां पुत्रा वेदमधीयते च यदा ब्रह्म क्षत्रियाः संत्यजन्ति

॥ ९ ॥ नैषामर्थों वर्द्धते जातु गेहे नाधीयते सुप्रजा नो यजन्ते ।
अपध्वस्ता दस्युभूता भवन्ति ये ब्राह्मणान् क्षत्रियाः संत्यजन्ति ॥१०
एतौ हि नित्यं संयुक्ताविततरेतरधारणे । क्षत्रं वै ब्रह्मणो योनि-
र्योनिः क्षत्रस्य वै द्विजाः ॥ ११ ॥ उभावेतौ नित्यमभिप्रपन्नौ
सम्प्रापतुर्महतीं सम्प्रतिष्ठाम् । तयोः सन्धिर्भिद्यते चेत् पुराणस्ततः
सर्वं भवति हि सम्प्रमूढ़म् ॥ १२ ॥ नान्तं पारं लभते पारगामी
महागाधे नौरिव सम्प्रपन्ना । चातुर्वर्ण्यं भवति हि सम्प्रमूढ़ं
प्रजास्ततः क्षयसंस्था भवन्ति ॥ १३ ॥ ब्रह्मवृक्षो रक्ष्यमाणो मधु
हेम च वर्षति । अरक्ष्यमानः सततमश्रु पापञ्च वर्षति ॥ १४ ॥ न
ब्रह्मचारी चरणादपेतो यदा ब्रह्म ब्रह्मणि त्राणमिच्छेत् । आश्च-
र्य्यतो वर्षति तत्र देवस्तत्राभीक्ष्णं दुःसहाश्चाविशन्ति ॥१५॥ स्त्रियं
हत्वा ब्राह्मणं वापि पापः सभायां यत्र लभतेऽनुवादम् । राज्ञः
सकाशे न बिभेति चापि ततो भयं विद्यते क्षत्रियस्य ॥१६॥ पापैः
पापे क्रियमाणे हि चैल ततो रुद्रो जायते देव एषः । पापैः
पापाः सञ्जनयन्ति रुद्रं ततः सर्वान् साध्वसाधून् हिनस्ति ॥ १७ ॥

ऐल उवाच । कुतो रुद्रः कीदृशो वापि रुद्रः सत्त्वैः सत्त्व
दृश्यते बध्यमानम् । एतत् सर्वं कश्यप मे प्रचक्ष्व कुतो रुद्रो जायते
देव एषः ॥ १८ ॥

कश्यप उवाच । आत्मा रुद्रो हृदये मानवानां स्वं स्वं देहं
परदेहञ्च हन्ति । वातोत्पातैः सदृशं रुद्रमाहुर्दैवैर्जीमूतैः सदृशं
रूपमस्य ॥ १९ ॥

ऐल उवाच । न वै वातः परिवृणोति कश्चिन्न जीमूतो वर्षति
नापि देवः । तथायुक्तो दृश्यते मानुषेषु कामद्वेषाद्बध्यते मुच्यते च॥२०

कश्यप उवाच । यथैकगेहे जातवेदाः प्रदीप्तः कृत्स्नं ग्रामं
दहते चत्वरं वा । विमोहनं कुरुते देव एष ततः सर्वं स्पृश्यते
पुण्यपापैः ॥ २१ ॥

ऐल उवाच। यदि दण्डः स्पृशते पुण्यपापं पापैः पापे क्रियमाणे विशेषात्। कस्य हेतोः सुकृतं नाम कुर्य्याद्दुष्कृतं वा कस्य हेतोर्न कुर्य्यात् ॥ २२ ॥

कश्यप उवाच। असंयोगात् पापकृतामपापास्तुल्यो दण्डः स्पृशते मिश्रभावात्। शुष्केणार्द्रं दह्यते मिश्रभावान्न मिश्रः स्यात् पापकृद्भिः कथञ्चित् ॥ २३ ॥

ऐल उवाच। साध्वसाधून् धारयतीह भूमिः साध्वसाधूंस्तापयतीह सूर्य्यः। साध्वसाधूंश्चापि वातीह वायुरापस्तथा साध्वसाधून् पुनन्ति ॥ २४ ॥

कश्यप उवाच। एवमस्मिन् वर्त्तते लोक एष नामुत्रैवं वर्त्तते राजपुत्र। प्रेत्यैतयोरन्तरावान् विशेषो यो वै पुण्यं चरते यश्च पापम् ॥ २५ ॥ पुण्यस्य लोको मधुमान् घृतार्च्चिर्हिरण्यस्य ज्योतिरमृतस्य नाभिः। तत्र प्रेत्य मोदते ब्रह्मचारी न तत्र मृत्युर्न जरा नोत दुःखम् ॥ २६ ॥ पापस्य लोको निरयो ऽप्रकाशो नित्यं दुःखं शोकभूयिष्ठमेव। तत्रात्मानं शोचति पापकर्म्मा बह्वीः समाः प्रतिपन्नप्रतिष्ठः ॥ २७ ॥ मिथो भेदात् ब्राह्मणक्षत्रियाणां प्रजा दुःखं दुःसहञ्चाविशन्ति। एवं ज्ञात्वा कार्य्य एवेह नित्यं पुरोहितो नैकविद्यो नृपेण ॥ २८ ॥ तञ्चैवान्वभिषिञ्चेत तथा धर्म्मो विधीयते। अग्र्यं हि ब्राह्मण प्रोक्तं सर्व्वस्यैवेह धर्म्मतः। पूर्वं हि ब्राह्मणः सृष्टिरिति ब्रह्मविदो विदुः ॥२९॥ ज्येष्ठेनाभिजनेनास्य प्राप्तं पूर्वं यदुत्तरम्। तस्मान्मान्यश्च पूज्यश्च ब्राह्मणः प्रसृताग्रभुक् ॥ ३० ॥ सर्वं श्रेष्ठं विशिष्टञ्च निवेद्यं तस्य धर्म्मतः। अवश्यमेव कर्त्तव्यं राज्ञा बलवतापि हि ॥ ३१ ॥ ब्रह्म वर्द्धयति क्षत्रं क्षत्रतो ब्रह्म वर्द्धते। एवं राज्ञा विशेषेण पूज्या वै ब्राह्मणाः सदा ॥ ३२॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि

त्रिसप्ततोऽध्यायः ॥ ७३॥

भीष्म उवाच । योगक्षेमो हि राष्ट्रस्य राजन्यायत्त उच्यते । योगक्षेमो हि राज्ञो हि समायत्तः पुरोहिते ॥ १ ॥ यत्रादृष्टं भयं ब्रह्म प्रजानां शमयत्युत । दृष्टञ्च राजा बाहुभ्यां तद्राज्यं सुखमेधते ॥ २ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् । मुचुकुन्दस्य संवादं राज्ञो वैश्रवणस्य च ॥ ३ ॥ मुचुकुन्दो विजित्येमां पृथिवीं पृथिवीपतिः । जिज्ञासमानः स्वबलमुपेयादलकाधिपम् ॥ ४ ॥ ततो वैश्रवणो राजा राक्षसानसृजत्तदा । ते बलान्यवमृद्नन्त मुचकुन्दस्य नैर्ऋताः ॥ ५ ॥ स हन्यमाने सैन्ये स्वे मुचुकुन्दो नराधिपः । गर्हयामास विद्वांसं पुरोहितमरिन्दम ॥ ६ ॥ तत उग्रं तपस्तप्त्वा वशिष्ठो धर्मवित्तमः । रक्षांस्यपावधीत्तस्य पन्थानञ्चाप्यविन्दत ॥ ७ ॥ ततो वैश्रवणो राजा मुचुकुन्दमदर्शयत् । बध्यमानेषु सैन्येषु वचनञ्चेदमब्रवीत् ॥ ८ ॥

धनद उवाच । बलवन्तस्त्वया पूर्वं राजानः सपुरोहिताः । न चैवं समवर्त्तन्त यथा त्वमिह वर्त्तसे ॥ ९ ॥ ते खल्वपि कृतास्त्राश्च बलवन्तश्च भूमिपाः । आगम्य पर्य्युपासन्त मामीशं सुखदुःखयोः ॥ १० ॥ यद्यस्ति बाहुवीर्य्यन्ते तद्दर्शयितुमर्हसि । किं ब्राह्मणबलेन त्वमतिमात्रं प्रवर्त्तसे ॥ ११ ॥ मुचकुन्दस्ततः क्रुद्धः प्रत्युवाच धनेश्वरम् । न्यायपूर्वमसंरब्धमसम्भ्रान्तमिदं वचः ॥ १२ ॥ ब्रह्मक्षत्रमिदं सृष्टमेकयोनि स्वयम्भुवा । पृथग्बलविधानन्तन्न लोकं परिपालयेत् ॥ १३ ॥ तपोमन्त्रबलं नित्यं ब्राह्मणेषु प्रतिष्ठितम् । अस्त्रबाहुबलं नित्यं क्षत्रियेषु प्रतिष्ठितम् ॥ १४ ॥ ताभ्यां सम्भूय कर्त्तव्यं प्रजानां परिपालनम् तथा च मां प्रवर्त्तन्तं किं गर्हस्यलकाधिप ॥ १५ ॥ ततोऽब्रवीद्वैश्रवणो राजानं सपुरोहितम् । नाहं राज्यमनिर्द्दिष्टं कस्मैचित् विदधास्युत । नाच्छिन्दे चाप्यनिर्द्दिष्टमिति जानीहि पार्थिव ॥१६॥ प्रशाधि पृथिवीं कृत्स्नां समन्तादखिलामिमाम् । एवमुक्तः प्रत्युवाच मुचुकुन्दो महीपतिः ॥ १७ ॥

मुचुकुन्द उवाच । नाहं राज्यं भवद्दत्तं भोक्तुमिच्छामि पार्थिव । बाहुवीर्य्यार्जितं राज्यमश्नीयामिति कामये ॥ १८ ॥

भीष्म उवाच । ततो वैश्रवणो राजा विस्मयं परमं ययौ । चत्रधर्म्मास्थितं दृष्ट्वा मुचुकुन्दमसम्भ्रमम् ॥ १९ ॥ ततो राजा मुचकुन्दः सोऽन्वशासद्वसुन्धराम् । बाहुवीर्य्यार्जितां सम्यक् चत्रधर्म्ममनुव्रतः ॥ २० ॥ एवं यो धर्म्मविद्राजा ब्रह्मपूर्वं प्रवर्त्तते । जयत्यविजितामुर्वीं यशश्च महदश्नुते ॥२१॥ नित्यदकी ब्राह्मणः स्यान्नित्यशस्त्रश्च चत्रियः । तयोर्हि सर्वमायत्तं यत् किञ्चिज्जगतीगतम् ॥ २२ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि मुचुकुन्दोपाख्याने चतुःसप्ततोऽध्यायः ॥ ७४ ॥

---

युधिष्ठिर उवाच । यया वृत्त्या महीपालो विवर्द्धयति मानवान् । पुण्यांश्च लोकान् जयति तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच । दानशीलो भवेद्राजा यज्ञशीलश्च भारत । उपवासतपःशीलः प्रजानां पालने रतः ॥ २ ॥ सर्वाश्चैव प्रजा नित्यं राजा धर्मेण पालयन् । उत्थानेन प्रदानेन पूजयेच्चापि धार्मिकान् ॥ ३ ॥ राज्ञा हि पूजितो धर्म्मस्ततः सर्वत्र पूज्यते । यद्यदाचरते राजा तत् प्रजानां स्म रोचते ॥४॥ नित्यमुद्यतदण्डश्च भवेन्मृत्युरिवारिषु । निहन्यात् सर्वतो दस्यून्न कामात् कस्यचित् चमेत् ॥ ५ ॥ यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः । चतुर्थन्तस्य धर्म्मस्य राजा भारत विन्दति ॥ ६ ॥ यदधीते यद्ददाति यज्जुहोति यदर्च्चति । राजा चतुर्थभाक् तस्य प्रजा धर्मेण पालयन् ॥ ७ ॥ यद्राष्ट्रेऽकुशलं किञ्चिद्राज्ञोऽरक्षयतः प्रजाः । चतुर्थं तस्य पापस्य राजा भारत विन्दति ॥ ८ ॥ अप्याहुः सर्व-

सेवेति भूयोऽहमिति निश्चय। कर्म्मणः पृथिवीपाल नृशंसोऽनृतवागपि ॥ ९ ॥ तादृशात् किल्बिषाद्राजा शृणु येन प्रमुच्यते। प्रत्याहर्त्तुमशक्यं स्याद्धनं चौरैर्हृतं यदि। तत् स्वकोषात् प्रदेयं स्यादशक्तेनोपजीवतः ॥१०॥ सर्ववर्णैः सदा रक्ष्यं ब्रह्मस्वं ब्राह्मणा यथा। न स्थेयं विषये तेन योऽपकुर्य्याद्द्विजातिषु ॥ ११ ॥ ब्रह्मस्वे रक्ष्यमाणे तु सर्वं भवति रक्षितम्। तस्मात्तेषां प्रसादेन कृतकृत्यो भवेन्नृपः ॥ १२ ॥ पर्ज्जन्यमिव भूतानि महाद्रुममिव द्विजाः। नरास्तमुपजीवन्ति नृपं सर्वार्थसाधकम् ॥ १३ ॥ न हि कामात्मना राज्ञा सततं कामबुद्धिना। नृशंसेनातिलुब्धेन शक्यं पालयितुं प्रजाः ॥ १४ ॥

युधिष्ठिर उवाच। नाहं राज्यसुखान्वेषी राज्यमिच्छाम्यपि क्षणम्। धर्मार्थं रोचये राज्यं धर्मश्चात्र न विद्यते ॥ १५ ॥ तदलं मम राज्येन यत्र धर्मो न विद्यते। वनमेव गमिष्यामि तस्माद्धर्म्मचिकीर्षया ॥ १६ ॥ तत्र मेध्येष्वरण्येषु न्यस्तदण्डो जितेन्द्रियः। धर्ममाराधयिष्यामि मुनिर्मूलफलाशनः ॥ १७ ॥

भीष्म उवाच। वेदाहं तव या बुद्धिरानृशंस्या गुणैव सा। न च शुद्धानृशंसेन शक्यं राज्यमुपासितुम् ॥ १८ ॥ अपि तु त्वां मृदुप्रज्ञमत्यार्त्तमतिधार्मिकम्। क्लीवं धर्मघृणायुक्तं न लोको बहुमन्यते ॥ १९ ॥ वृत्तिन्तु त्वमपेक्षस्व पितृपैतामहोचिताम्। नैव राज्ञां तथा वृत्तं यथा त्वं स्थातुमिच्छसि ॥ २० ॥ न हि वैक्लव्यसंसृष्टमानृशंस्यमिहास्थितः। प्रजापालनसम्भूतमाप्ता धर्मफलं ह्यसि ॥ २१ ॥ न ह्येतामाशिषं पाण्डुर्न च कुन्ती त्वयाचत। तथैतत् प्रज्ञया तात यथा चरसि मेधया ॥ २२ ॥ शौर्य्यं बलञ्च सत्यञ्च पिता तव सदाब्रवीत्। माहात्म्यञ्च महौदार्य्यं भवतः कुन्त्ययाचत ॥ २३ ॥ नित्यं स्वाहा स्वधा नित्यं चोभे मानुषदैवते। पुत्रेष्वाशासते नित्यं पितरो दैवतानि च ॥ २४ ॥ दान-

मध्ययनं यज्ञं प्रजानां परिपालनम्। धर्ममेतदधर्मं वा जन्म-
नैवाभ्यजायथाः ॥ २५ ॥ काले धुरि च युक्तानां वहतां भार-
माहितम्। सीदतामपि कौन्तेय न कीर्त्तिरवसीदति ॥ २६ ॥ सम-
न्ततो विनियतो वहत्यस्खलितो हतः। निर्द्दोषः कर्मवचनात्
सिद्धिः कर्म्मण एव सा ॥ २७ ॥ नैकान्तविनिपातेन विचचारेह
कश्चन। धर्म्मी गृही वा राजा वा ब्रह्मचार्य्यथ वा पुनः ॥ २८ ॥
अल्पं हि सारभूयिष्ठं यत् कर्म्मोदारमेव तत्। कृतमेवाकृताच्छ्रेयो
न पापीयोऽस्त्यकर्म्मणः ॥ २९ ॥ यदा कुलीनो धर्म्मज्ञः प्राप्नो-
त्यैश्वर्य्यमुत्तमम्। योगक्षेमस्तदा राज्ञः कुशलायैव कल्पते ॥३०॥
दानेनान्यं बलेनान्यमन्यं सूनृतया गिरा। सर्व्वतः प्रतिगृह्णीया-
द्राज्यं प्राप्येह धार्म्मिकः ॥ ३१ ॥ यं हि वैद्याः कुले जाता ह्यवृत्ति-
भयपीड़िताः। प्राप्य तृप्ताः प्रतिष्ठन्ति धर्म्मः कोऽभ्यधिकस्ततः ॥३२॥
युधिष्ठिर उवाच। किं तात परमं स्वर्ग्यं का ततः प्रीतिरुत्तमा।
किं ततः परमैश्वर्य्यं ब्रूहि मे यदि पश्यसि ॥ ३३ ॥
भीष्म उवाच। यस्मिन् भयार्द्दितः सम्यक् क्षेमं विन्दत्यपि
क्षणम्। स स्वर्गजित्तमोऽस्माकं सत्यमेतद्ब्रवीमि ते ॥ ३४ ॥ त्वमेव
प्रीतिमांस्तस्मात् कुरूणां कुरुसत्तम। भव राजा जय स्वर्गं सतो
रक्षासतो जहि ॥ ३५ ॥ अनु त्वां तात जीवन्तु सुहृदः साधुभिः
सह। पर्ज्जन्यमिव भूतानि स्वादुद्रुममिव द्विजाः ॥ ३६ ॥ धृष्टं
शूरं प्रहर्त्तारमनृशंसं जितेन्द्रियम्। वत्सलं संविभक्तारमुप-
जीवन्ति तं नराः ॥ ३७ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि
पञ्चसप्ततोऽध्यायः ॥ ७५ ॥

युधिष्ठिर उवाच। स्वकर्मण्यपरे युक्तास्तथैवान्ये विकर्मणि। तेषां विशेषमाचक्ष्व ब्राह्मणानां पितामह ॥ १ ॥

भीष्म उवाच। विद्यालक्षणसम्पन्नाः सर्वत्र समदर्शिनः। एते ब्रह्मसमा राजन् ब्राह्मणाः परिकीर्त्तिताः ॥ २ ॥ ऋग्यजुःसामसम्पन्नाः स्वेषु कर्मस्ववस्थिताः। एते देवसमा राजन् ब्राह्मणानां भवन्त्युत ॥ ३ ॥ जन्मकर्मविहीना ये कदर्य्या ब्रह्मबन्धवः। एते शूद्रसमा राजन् ब्राह्मणानां भवन्त्युत ॥ ४ ॥ अश्रोत्रियाः सर्व एव सर्वे चानाहिताग्नयः। तान् सर्वान् धार्मिको राजा बलिं विष्टिञ्च कारयेत् ॥ ५ ॥ आह्वायका देवलका नक्षत्रग्रामयाजकाः। एते ब्राह्मणचाण्डाला महापथिकपञ्चमाः ॥ ६ ॥ ऋत्विक् पुरोहितो मन्त्री दूतो वार्त्तानुकर्षकः। एते क्षत्रसमा राजन् ब्राह्मणानां भवन्त्युत ॥ ७ ॥ अश्वारोहा गजारोहा रथिनोऽथ पदातयः। एते वैश्यसमा राजन् ब्राह्मणानां भवन्त्युत ॥ ८ ॥ एतेभ्यो बलिमादद्याद्धीनकोषो महीपतिः। ऋते ब्रह्मसमेभ्यश्च देवकल्पेभ्य एव च ॥ ९ ॥ अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकम्। ब्राह्मणानाञ्च ये केचित् विकर्मस्था भवन्त्युत ॥ १० ॥ विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथञ्चन। नियम्याः संविभज्याश्च धर्मानुग्रहकारणात् ॥ ११ ॥ यस्य स्म विषये राजन् स्तेनो भवति वै द्विजः। राज्ञ एवापराधन्तं मन्यन्ते तद्विदो जनाः ॥ १२ ॥ अवृत्तया यो भवेत् स्तेनो वेदवित् स्नातकस्तथा। राजन् स राज्ञा भर्त्तव्य इति वेदविदो विदुः ॥ १३ ॥ स चेन्नोपनिवर्त्तेत कृतवृत्तिः परन्तप। ततो निर्वासनीयः स्यात्तस्माद्देशात् स बान्धवः ॥ १४ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि
षट्सप्ततोऽध्यायः ॥ ७६ ॥

---

युधिष्ठिर उवाच । केषां प्रभवते राजा वित्तस्य भरतर्षभ । कया च वृत्त्या वर्त्तेत तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच । अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकम् । ब्राह्मणानाञ्च ये केचित् विकर्मस्था भवन्त्युत ॥ २ ॥ विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथञ्चन । इति राज्ञां पुरावृत्तमपि जल्पन्ति साधवः ॥ ३ ॥ यस्य स्म विषये राज्ञः स्तेनो भवति वै द्विजः । राज्ञ एवापराधन्तं मन्यन्ते किल्बिषं नृप ॥ ४ ॥ अभिशस्तमिवात्मानं मन्यन्ते तेन कर्मणा । तस्माद्राजर्षयः सर्व्वे ब्राह्मणानन्वपालयन् ॥ ५ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् । गीतं कैकेयराजेन ह्रियमाणेन रक्षसा ॥ ६ ॥ केकयानामधिपतिं रक्षो जग्राह दारुणम् । स्वाध्यायेनान्वितं राजन्नरण्ये संशितव्रतम् ॥ ७ ॥

राजोवाच । न मे स्तेनो जनपदे न कदर्य्यो न मद्यपः । नानाहिताग्निर्नायज्वा मामकान्तरमाविशः ॥ ८ ॥ न च मे ब्राह्मणोऽविद्वान् नाव्रती नाप्यसोमपः । नानाहिताग्निर्नायज्वा मामकान्तरमाविशः ॥ ९ ॥ नानाप्तदक्षिणैर्यज्ञैर्यजन्ते विषये मम । अधीते नाव्रती कश्चिन्मामकान्तरमाविशः ॥ १० ॥ अध्यापयन्त्यधीयन्ते यजन्ते याजयन्ति च । ददति प्रतिगृह्णन्ति षट्सु कर्मस्ववस्थिताः ॥ ११ ॥ पूजिताः संविभक्ताश्च मृदवः सत्यवादिनः । ब्राह्मणा मे स्वकर्मस्था मामकान्तरमाविशः ॥ १२ ॥ न याचन्ति प्रयच्छन्ति सत्यधर्मविशारदाः । नाध्यापयन्त्यधीयन्ते यजन्ते याजयन्ति न ॥ १३ ॥ ब्राह्मणान् परिरक्षन्ति संग्रामेष्वपलायिनः । क्षत्रिया मे स्वकर्मस्था मामकान्तरमाविशः ॥ १४ ॥ कृषिगोरक्ष्यवाणिज्यमुपजीवन्त्यमायया । अप्रमत्ताः क्रियावन्तः सुव्रताः सत्यवादिनः ॥ १५ ॥ संविभागं दमं शौचं सौहृदञ्च व्यपाश्रिताः । मम वैश्याः स्वकर्मस्था मामकान्तरमाविशः ॥ १६ ॥ त्रीन् वर्णा-

नुपजीवन्ति यथावदनसूयकाः। मम शूद्राः स्वकर्मस्था मामकान्तर-माविशः॥ १७॥ कृपणानाथवृद्धानां दुर्बलातुरयोषिताम्। संविभक्तास्मि सर्वेषां मामकान्तरमाविशः॥ १८॥ कुलदेशादिधर्माणां ग्रथितानां यथाविधि। अव्युच्छेत्तास्मि सर्वेषां मामकान्तारमाविशः॥ १९॥ तपस्विनो मे विषये पूजिताः परिपालिताः। संविभक्ताश्च सत्कृत्य मामकान्तरमाविशः॥ २०॥ नासंविभज्य भोक्तास्मि नाविशानि परस्त्रियम्। स्वतन्त्रो जातु न क्रीड़े मामकान्तर-माविशः॥ २१॥ नाब्रह्मचारी भिक्षावान् भिक्षुर्वा ब्रह्मचर्य्यवान्। अनृत्विजा हुतं नास्ति मामकान्तरमाविशः॥२२॥ नावजानाम्यहं वैद्यान्न वृद्धान्न तपस्विनः। राष्ट्रे स्वपति जागर्मि मामकान्तर-माविशः॥ २३॥ आत्मविज्ञानसम्पन्नस्तपस्वी सर्वधर्मवित्। स्वामी-सर्वस्य राष्ट्रस्य धीमान् मम पुरोहितः॥ २४॥ दानेन विद्यामभि-वाञ्छामि लोकान् सत्येनाथो ब्राह्मणानाञ्च गुप्त्या। शुश्रूषया चापि गुरूनुपैमि न मे भयं विद्यते राक्षसेभ्यः॥ २५॥ न मे राष्ट्रे विधवा ब्रह्मबन्धुर्न ब्राह्मणः कितवो नोत चौरः। अयाज्ययाजी न च पापकर्मा न मे भयं विद्यते राक्षसेभ्यः॥ २६॥ न मे शस्त्रै-रनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरम्। धर्मार्थं युध्यमानस्य मामकान्तर-माविशः॥ २७॥ गोब्राह्मणेभ्यो यज्ञेभ्यो नित्यं स्वस्त्ययनं मम। आशासते जना राष्ट्रे मामकान्तरमाविशः॥ २८॥

राक्षस उवाच। यस्मात् सर्वास्ववस्थासु धर्ममेवान्ववेक्षसे। तस्मात् प्राप्नुहि कैकेय गृहं स्वस्ति व्रजाम्यहम्॥ २९॥ येषां गोब्राह्मणं रक्ष्यं प्रजा रक्ष्याश्च कैकय। न रक्षोभ्यो भयं तेषां कुत एव तु पापकात्॥ ३०॥ येषां पुरोगमा विप्रा येषां ब्रह्मपरं बलम्। अतिथिप्रियास्तथा पौरास्ते वै स्वर्गजितो नृपाः॥ ३१॥

भीष्म उवाच। तस्माद्द्विजातीन् रक्षेत ते हि रक्षन्ति रक्षिताः। आशीरेषां भवेद्राजन् राज्ञां सम्यक प्रवर्त्तताम्॥ ३२॥ तस्माद्राज्ञा

विशेषेण विकर्मस्था द्विजातयः। नियम्याः संविभज्याश्च तदनु-
ग्रहकारणात् ॥ ३३ ॥ एवं यो वर्त्तते राजा पौरजानपदेष्विह।
अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ॥ ३४ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि कैकेयोपाख्याने
सप्तसप्ततोऽध्यायः ॥ ७७ ॥

---

युधिष्ठिर उवाच। व्याख्याता राजधर्मेण वृत्तिरापत्सु भारत।
कथंस्विद्वैश्यधर्मेण सञ्जीवेद्ब्राह्मणो न वा ॥ १ ॥

भीष्म उवाच। अशक्तः क्षत्रधर्मेण वैश्यधर्मेण वर्त्तयेत्।
कृषिगोरक्ष्यमास्थाय व्यसने वृत्तिसङ्क्षये ॥ २ ॥

युधिष्ठिर उवाच। कानि पण्यानि विक्रीय स्वर्गलोकान्न
हीयते। ब्राह्मणो वैश्यधर्मेण वर्त्तयन् भरतर्षभ ॥ ३ ॥

भीष्म उवाच। सुरालवणमित्येव तिलान् केशरिणः पशून्।
ऋषभान् मधु मांसञ्च कृतान्नञ्च युधिष्ठिर ॥ ४ ॥ सर्वास्ववस्था-
स्वेतानि ब्राह्मणः परिवर्ज्जयेत्। एतेषां विक्रयात्तात ब्राह्मणो
नरकं व्रजेत् ॥ ५ ॥ अजोऽग्निर्वरुणो मेषः सूर्य्योऽश्वः पृथिवी
विराट्। धेनुर्यज्ञश्च सोमश्च न विक्रेयाः कथञ्चन ॥ ६ ॥ पक्केना-
मस्य निमयं न प्रशंसन्ति साधवः। निमयेत् पक्कमानेन भोजना-
र्थाय भारत ॥ ७ ॥ वयं सिद्धमशिष्यामो भवान् साधयतामिमाम्।
एवं संवीक्ष्य निमयं नाधर्मोऽस्ति कथञ्चन ॥ ८ ॥ अत्र ते वर्त्तयि-
ष्यामि पुरा धर्मः सनातनः। व्यवहारप्रवृत्तानां तन्निबोध युधि-
ष्ठिर ॥ ९ ॥ भवतेऽहं ददानीदं भवानेतत् प्रयच्छतु। रुचितो
वर्त्तते धर्मो न बलात् संप्रवर्त्तते ॥ १० ॥ इत्येवं संप्रवर्त्तन्ते व्यव-
हाराः पुरातनाः। ऋषीणामितरेषाञ्च साधु चेतदसंशयम् ॥११॥

युधिष्ठिर उवाच। अथ तात यदा सर्वाः शस्त्रमाददते प्रजा।

व्युत्क्रामन्ति स्वधर्मेभ्यः क्षत्रस्य क्षीयते बलम्॥ १२॥ राजा त्राता तु लोकस्य कथञ्च स्यात् परायणम्। एतन्मे संशयं ब्रूहि विस्तरेण नराधिप॥ १३॥

भीष्म उवाच। दानेन तपसा यज्ञैरद्रोहेण दमेन च। ब्राह्मण प्रमुखा वर्णाः क्षेममिच्छेयुरात्मनः॥ १४॥ तेषां ये वेदबलिनस्ते-ऽभ्युत्थाय समन्ततः। राज्ञो बलं वर्द्धयेयुर्महेन्द्रस्येव देवताः॥१५॥ राज्ञोऽपि क्षीयमाणस्य ब्रह्मैवाहुः परायणम्। तद्ब्रह्मबलेनैव समुत्थेयं विजानता॥ १६॥ यदा तु विजयी राजा क्षेमं राष्ट्रे-ऽभिसन्दधेत्। तदा वर्णा यथाधर्मं निविशेयुः कथञ्चन॥ १७॥ उन्मर्य्यादे प्रवृत्ते तु दस्युभिः सङ्करे कृते। सर्वे वर्णा न दुष्येयुः शस्त्रवन्तो युधिष्ठिर॥ १८॥

युधिष्ठिर उवाच। अथ चेत् सर्वतः क्षत्रं प्रदुष्येद्ब्राह्मणं प्रति। कस्तस्य ब्राह्मणस्त्राता को धर्मः किं परायणम्॥ १९॥

भीष्म उवाच। तपसा ब्रह्मचर्य्येण शस्त्रेण च बलेन च। अमायया मायया च नियन्तव्यं तदा भवेत्॥ २०॥ क्षत्रियस्यातिवृत्तस्य ब्राह्मणेषु विशेषतः। ब्रह्मैव संनियन्तृ स्यात् क्षत्रं हि ब्रह्मसम्भवम्॥ २१॥ अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम्। तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति॥ २२॥ यदा छिनत्त्ययोऽश्मानमग्निश्चापोऽभिमन्यति। क्षत्रञ्च ब्राह्मणं द्वेष्टि तदा नश्यन्ति ते त्रयः॥२३॥ तस्माद्ब्रह्माणि शाम्यन्ति क्षत्रियाणां युधिष्ठिर। समुदीर्णान्यजेयानि तेजांसि च बलानि च॥ २४॥ ब्रह्मवीर्य्ये मृदौ भूते क्षत्रवीर्य्ये च दुर्बले। दुष्टेषु सर्ववर्णेषु ब्राह्मणान् प्रति सर्वशः॥ २५॥ ये तत्र युद्धं कुर्वन्ति त्यक्त्वा जीवितमात्मनः। ब्राह्मणान् परिरक्षन्तो धर्ममात्मानमेव च॥२६॥ मनस्विनो मन्युमन्तः पुण्यलोका भवन्ति ते। ब्राह्मणार्थं हि सर्वेषां शस्त्रग्रहणमिष्यते॥ २७॥ अतिस्विष्टमधीतानां लोकानतितपस्वि-

नाम् । अनाशकाग्न्योर्विशतां शूरा यान्ति परां गतिम् ॥ २८ ॥ ब्राह्मणस्त्रिषु वर्णेषु शस्त्रं गृह्णन् न दुष्यति । एवमेवात्मनस्त्यागान्नान्यं धर्मं विदुर्ज्जना ॥ २९ ॥ तेभ्यो नमश्च भद्रञ्च ये शरीराणि जुह्वते । ब्रह्मद्विषो नियच्छन्तस्तेषां नोऽस्तु सलोकता । ब्रह्मलोकजितः स्वर्ग्यान् वीरांस्तान्मनुरब्रवीत् ॥ ३० ॥ यथाश्वमेधावभृथे स्नाताः पूता भवन्त्युत । दुष्कृतस्य प्रणाशेन तथा शस्त्रहता रणे ॥ ३१ ॥ भवत्यधर्मो धर्मो हि धर्माधर्मावुभावपि । कारणाद्देशकालस्य देशकालः स तादृशः ॥ ३२ ॥ मैत्राः क्रूराणि कुर्वन्तो जयन्ति स्वर्गमुत्तमम् । धर्म्याः पापानि कुर्वाणा गच्छन्ति परमां गतिम् ॥ ३३ ॥ ब्राह्मणस्त्रिषु कालेषु शस्त्रं गृह्णन्न दुष्यति । आत्मत्राणे वर्णदोषे दुर्द्दम्यनियमेषु च ॥ ३४ ॥

युधिष्ठिर उवाच । अभ्युत्थिते दस्युबले क्षत्रार्थे वर्णसङ्करे । सम्प्रमूढ़ेषु क्षत्रेषु यदन्योऽभिभवेद्बली ॥ ३५ ॥ ब्राह्मणो यदि वा वैश्यः शूद्रो वा राजसत्तम । दस्युभ्योऽथ प्रजारक्षेद्दण्डं धर्मेण धारयन् ॥ ३६ ॥ कार्य्यं कुर्य्यान्न वा कुर्य्यात् स वार्य्यो वा भवेन्न वा । तस्माच्छस्त्रं गृहीतव्यमन्यत्र क्षत्रबन्धुतः ॥ ३७ ॥

भीष्म उवाच । अपारे यो भवेत् पारमप्लवे यः प्लवो भवेत् । शूद्रो वा यदि वाप्यन्यः सर्वथा मानमर्हति ॥ ३८ ॥ यमाश्रित्य नरा राजन् वर्त्तयेयुर्यथासुखम् । अनाथाः परिकाल्यन्तो दस्युभिः परिपीड़िताः ॥ ३९ ॥ तमेव पूजयेयुस्ते प्रीत्या स्वमिव बान्धवम् । अभीरभीक्ष्णं कौरव्य कर्त्ता सम्मानमर्हति ॥ ४० ॥ किन्तैर्येऽनडुहो नोह्या किं धेन्वा वाप्यदुग्धया । वन्ध्यया भार्य्यया कोऽर्थः कोऽर्थो राज्ञाप्यरक्षता ॥ ४१ ॥ यथा दारुमयो हस्ती यथा चर्म्ममयो मृगः । यथा ह्यनर्थः षण्डो वा पार्थ क्षेत्रं यथोषरम् ॥ ४२ ॥ एवं विप्रोऽनधीयानो राजा यश्च न रक्षिता । मेघो न वर्षते यश्च सर्वथा ते निरर्थकाः ॥ ४३ ॥ नित्यं यस्तु सतो

रक्षेदस्तश्च निवर्त्तयेत् । स एव राजा कर्त्तव्यस्तेन सर्वमिदं धृतम् ॥ ४४ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि
अष्टसप्ततोऽध्यायः ॥ ७८ ॥

---

युधिष्ठिर उवाच । क्व समुत्थाः कथं शीला ऋत्विजः स्युः पितामह । कथंविधाश्च राजेन्द्र तद्ब्रूहि वदताम्वर ॥ १ ॥

भीष्म उवाच । प्रतिकर्म्मपराचार ऋत्विजां स्म विधीयते । छन्दः सामादि विज्ञाय द्विजानां श्रुतमेव च ॥ २ ॥ ये त्वेकरतयो नित्यं वीराणां प्रियवादिनः । परस्परस्य सुहृदः समन्तात् समदर्शिनः ॥ ३ ॥ अनृशंसाः सत्यवाक्या अकुसीदा अथर्ज्जवः । अद्रोहोऽनभिमानश्च ह्रीस्तीतिक्षा दमः शमः ॥ ४ ॥ धीमान् सत्यवती दान्तो भूतानामविहिंसकः । अकामद्वेषसंयुक्तस्त्रिभिः शुक्लैः समन्वितः ॥ ५ ॥ अहिंसको ज्ञानतृप्तः स ब्रह्मासनमर्हति । एते महर्त्विजस्तात सर्वे मान्या यथार्हतः ॥ ६ ॥

युधिष्ठिर उवाच । यदिदं वेदवचनं दक्षिणासु विधीयते । इदं देयमिदं देयं न क्वचिद्व्यवतिष्ठते ॥ ७ ॥ नेदं प्रतिधनं शास्त्रमापद्धर्मानुशास्त्रतः । आज्ञा शास्त्रस्य घोरेयं न शक्तिं समवेक्षते ॥ ८ ॥ श्रद्धावता च यष्टव्यमित्येषा वैदिकी श्रुतिः । मिथ्योपेतस्य यज्ञस्य किमु श्रद्धा करिष्यति ॥ ९ ॥

भीष्म उवाच । न वेदानां परिभवान्न शाठ्येन न मायया । कश्चिन्महदवाप्नोति मा तेऽभूद्बुद्धिरीदृशी ॥ १० ॥ यज्ञाङ्गं दक्षिणास्तात वेदानां परिवृंहणम् । न यज्ञा दक्षिणाहीनास्तारयन्ति कथञ्चन ॥ ११ ॥ शक्तिस्तु पूर्णपात्रेण सम्मिता न समा भवेत् । अवश्यं तात यष्टव्यं त्रिभिर्वर्णैर्यथाविधि ॥ १२ ॥ सोमो राजा

ब्राह्मणानामित्येषा वैदिकी स्थितिः। तञ्च विक्रेतुमिच्छन्ति न
वृथावृत्तिरिष्यते ॥ १३ ॥ तेन क्रीतेन यज्ञेन ततो यज्ञः प्रतायते।
इत्येवं धर्म्मतो ध्यातमृषिभिर्धर्म्मचारिभिः ॥ १४ ॥ पुमान् यज्ञश्च
सोमश्च न्यायवृत्तो यदा भवेत्। अन्यायवृत्तः पुरुषो न परस्य न
चात्मनः ॥ १५ ॥ शारीरं वृत्तमास्थाय इत्येषा सूयते श्रुतिः।
नातिसम्यक् प्रणीतानि ब्राह्मणानां महात्मनाम् ॥ १६ ॥ तपो-
यज्ञादपि श्रेष्ठमित्येषा परमा श्रुतिः। तत्ते तपः प्रवक्ष्यामि विद्वं-
स्तदपि मे शृणु ॥ १७ ॥ अहिंसा सत्यवचनमानृशंस्यं तथा घृणा।
एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् ॥ १८ ॥ अप्रामाण्यञ्च
वेदानां शास्त्राणाञ्चाभिलङ्घनम्। अव्यवस्था च सर्व्वत्र तद्वै नाशन-
मात्मनः ॥ १९ ॥ निबोध दशहोतॄणां विधानं पार्थ यादृशम्।
चित्तिः स्रुक् चित्तमाज्यञ्च पवित्रं ज्ञानमुत्तमम् ॥ २० ॥ सर्व्वं
जिह्मं मृत्युपदमार्ज्जवं ब्रह्मणः पदम्। एतावान् ज्ञानविषयः किं
प्रलापः करिष्यति ॥ २१ ॥

इति शान्तिपर्व्वणि राजधर्मानुशासनपर्व्वणि
एकोनाशीतोऽध्यायः ॥ ७९ ॥

---

युधिष्ठिर उवाच। यदप्यल्पतरं कर्म्म तदप्येकेन दुष्करम्।
पुरुषेणासहायेन किमु राज्ञा पितामह ॥ १ ॥ किं शीलः किं
समाचारो राज्ञोऽथ सचिवो भवेत्। कीदृशे विश्वसेद्राजा कीदृशे
न च विश्वसेत् ॥ २ ॥

भीष्म उवाच। चतुर्विधानि मित्राणि राज्ञां राजन् भवन्त्युत।
सहार्थो भजमानश्च सहजः कृत्रिमस्तथा ॥ ३ ॥ धर्म्मात्मा पञ्चम-
श्चापि मित्रं नैकस्य न द्वयोः। यतो धर्म्मस्ततो वा स्याद्धर्म्मस्थो
वा ततो भवेत् ॥ ४ ॥ यस्तस्यार्थो न रोचेत न तं तस्य प्रकाशयेत्।

धर्माधर्मेण राजानश्चरन्ति विजिगीषवः ॥ ५ ॥ चतुर्णां मध्यमौ श्रेष्ठौ नित्यं शङ्क्यौ तथापरौ। सर्वे नित्यं शङ्कितव्याः प्रत्यक्षं कार्य्यमात्मनः ॥ ६ ॥ न हि राज्ञा प्रमादो वै कर्त्तव्यो मित्ररक्षणे। प्रमादिनं हि राजानं लोकाः परिभवन्त्युत ॥ ७ ॥ असाधुः साधुतामेति साधुर्भवति दारुणः। अरिश्च मित्रं भवति मित्रञ्चापि प्रदुष्यति ॥ ८ ॥ अनित्यचित्तः पुरुषस्तस्मिन् को जातु विश्वसेत्। तस्मात् प्रधानं यत् कार्य्यं प्रत्यक्षं तत् समाचरेत् ॥ ९ ॥ एकान्तेन हि विश्वासः कृत्स्नो धर्मार्थनाशकः। अविश्वासश्च सर्वत्र मृत्युना च विशिष्यते ॥ १० ॥ अकालमृत्युर्विश्वासो विश्वसन् हि विपद्यते। यस्मिन् करोति विश्वासमिच्छतस्तस्य जीवति ॥ ११ ॥ तस्माद्विश्वसितव्यञ्च शङ्कितव्यञ्च केषुचित्। एषा नीतिगतिस्तात लक्ष्या चैव सनातनी ॥ १२ ॥ यं मन्येत ममाभावादिममर्थागमः स्पृशेत्। नित्यं तस्मात् शङ्कितव्यममित्रं तद्विदुर्बुधाः ॥ १३ ॥ यस्य क्षेत्रादप्युदकं क्षेत्रमन्यस्य गच्छति। न तत्रानिच्छतस्तस्य भिद्येरन् सर्वसेतव ॥ १४ ॥ तथैवात्युदकाद्भीतस्तस्य भेदनमिच्छति। यमेवं लक्षणं विद्यात्तममित्रं विनिर्द्दिशेत् ॥ १५ ॥ यस्य वृद्ध्या न तृप्येत क्षये दीनतरो भवेत्। एतदुत्तममित्रस्य निमित्तमिति चक्षते ॥१६॥ यं मन्येत ममाभावादस्याभावो भवेदिति। तस्मिन् कुर्वीत विश्वासं यथा पितरि वै तथा। तं शक्त्या वर्द्धमानञ्च सर्वतः परिवृंहयेत् ॥ १७ ॥ नित्यं क्षताद्वारयति यो धर्मेष्वपि कर्म्मसु। क्षताद्भीतं विजानीयादुत्तमं मित्रलक्षणम्। ये तस्य क्षतमिच्छन्ति ते तस्य रिपवः स्मृताः ॥ १८ ॥ व्यसनान्नित्यभीतो यः समृद्ध्या यो न दुष्यति। यत् स्यादेवं विधं मित्रं तदात्मसममुच्यते ॥ १९ ॥ रूपवर्णस्वरोपेतस्तितिक्षुरनसूयकः। कुलीनः कुलसम्पन्नः स तस्यात् प्रत्यनन्तरः ॥ २० ॥ मेधावी स्मृतिमान् दक्षः प्रकृत्या चानृशंस्यवान्। यो मानितोऽमानितो वा न च दुष्येत् कदाचन ॥२१

ऋत्विग्वा यदि वाचार्य्यः सखा वात्यन्तसंस्तुतः। गृहे वसेदमात्यस्ते स स्यात् परमपूजितः ॥ २२ ॥ स ते विद्यात् परं मन्त्रं प्रकृतिं चार्थधर्म्मयोः। विश्वासस्ते भवेत्तत्र यथा पितरि वै तथा ॥२३॥ नैव द्वौ न त्रयः कार्य्या न मृष्येरन् परस्परम्। एकार्थे ह्येव भूतानां भेदो भवति सर्व्वदा ॥ २४ ॥ कीर्त्तिप्रधानो यस्तु स्याद्यश्च स्यात् समये स्थितः। समर्थान् यश्च न द्वेष्टि नानार्थान् कुरुते च यः ॥२५॥ यो न कामाद्भयाल्लोभात् क्रोधाद्वा धर्म्ममुत्सृजेत्। दक्षः पर्य्याप्तवचनः स ते स्यात् प्रत्यनन्तरः ॥ २६ ॥ कुलीनः शीलसम्पन्नस्तितिक्षुरविकत्थनः। शूरश्चार्य्यश्च विद्वांश्च प्रतिपत्तिविशारदः ॥२७॥ एते ह्यामात्याः कर्त्तव्याः सर्व्वकर्म्मस्ववस्थिताः। पूजिताः संविभक्ताश्च सुसहायाः स्वनुष्ठिताः ॥ २८ ॥ कृत्स्नमेते विनिक्षिप्ताः प्रतिरूपेषु कर्म्मसु। युक्ता महत्सु कार्य्येषु श्रेयांस्युत्थापयन्त्युत ॥ २९ ॥ एते कर्म्माणि कुर्व्वन्ति स्पर्द्धमाना मिथः सदा। अनुतिष्ठन्ति चैवार्थमाचक्षाणाः परस्परम् ॥ ३० ॥ ज्ञातिभ्यश्चैव बुध्येथा मृत्योरिव भयं सदा। उपराजेव राजर्द्धिं ज्ञातिर्न सहते सदा ॥ ३१ ॥ ऋजोर्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः। नान्यो ज्ञातेर्महाबाहो विनाशमभिनन्दति ॥ ३२ ॥ अज्ञातितोऽपि न सुखा नावज्ञेयास्ततः परम्। अज्ञातिमन्तं पुरुषं परे चाभिभवन्त्युत ॥ ३३ ॥ निकृतस्य नरैरन्यैर्ज्ञातिरेव परायणम्। नान्यैर्निकारं सहते ज्ञातिर्ज्ञातेः कथञ्चन ॥ ३४ ॥ आत्मानमेव जानाति निकृतं बान्धवैरपि। तेषु सन्ति गुणाश्चैव नैर्गुण्यं चैव लक्ष्यते ॥ ३५ ॥ नाज्ञातिरनुगृह्णाति न चाज्ञातिर्नमस्यति। उभयं ज्ञातिवर्गेषु दृश्यते साध्वसाधु च ॥ ३६ ॥ सम्मानयेत् पूजयेच्च वाचा नित्यञ्च कर्म्मणा। कार्य्याञ्च प्रियमेतेभ्यो नाप्रियं किञ्चिदाचरेत् ॥ ३७ ॥ विश्वस्तवदविश्वस्तस्तेषु वर्त्तेत सर्व्वदा। न हि दोषो गुणो वेति निरूप्यस्तेषु दृश्यते ॥ ३८ ॥ अस्यैवं वर्त्तमानस्य पुरुषस्याप्रमादिनः। अमित्राः सं-

प्रसीदन्ति तथा मित्रीभवन्त्यपि ॥ ३९ ॥ य एवं वर्त्तते नित्यं ज्ञाति-
सम्बन्धिमण्डले । मित्रेष्वमित्रे मध्यस्थे चिरं यशसि तिष्ठति ॥४०॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि
अशीतितमोऽध्यायः ॥ ८० ॥

---

युधिष्ठिर उवाच। एवमशाक्यके तस्मिन् ज्ञातिसम्बन्धिमण्डले ।
मित्रेष्वमित्रेष्वपि च कथं भावो विभाव्यते ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सम्वादं वासुदेवस्य सुरर्षेर्नारदस्य च ॥ २ ॥

वासुदेव उवाच। नासुहृत् परमं मन्त्रं नारदार्हति वेदितुम्
अपण्डितो वापि सुहृत् पण्डितो वाप्यनात्मवान् ॥ ३ ॥ स ते
सौहृदमास्थाय किञ्चिद्वक्ष्यामि नारद। कृत्स्नं बुद्धिबलं प्रेक्ष्य सं-
पृच्छे त्रिदिवङ्गम ॥ ४ ॥ दास्यमैश्वर्य्यवादेन ज्ञातीनां न करो-
म्यहम्। अर्द्धं भोक्तास्मि भोगानां वाग्दुरुक्तानि च क्षमे ॥ ५ ॥
अरणीमग्निकामो वा मथ्नाति हृदयं मम। वाचा दुरुक्तं देवर्षे
तन्मे दहति नित्यदा ॥ ६ ॥ बलं सङ्कर्षणे नित्यं सौकुमार्य्यं पुन-
र्गदे। रूपेण मत्तः प्रद्युम्नः सोऽसहायोऽस्मि नारद ॥ ७ ॥ अन्ये
हि सुमहाभागा बलवन्तो दुरुत्सहाः। नित्योत्थानेन सम्पन्ना
नारदान्धकवृष्णयः। यस्य न स्युर्न वै स स्याद्यस्य स्युः कृत्स्नमेव
तत् ॥ ८ ॥ हाभ्यां निवारितो नित्यं वृणोम्येकतरं न च। स्यातां
यस्याहुकाक्रूरौ किन्नु दुःखतरं ततः। यस्य चापि न तौ स्यातां
किन्नु दुःखतरं ततः ॥ ९ ॥ सोऽहं कितवमातेव द्वयोरपि महा-
मते। एकस्य जयमाशंसे द्वितीयस्य पराजयम् ॥ १० ॥ ममैवं
क्लिश्यमानस्य नारदोभयतः सदा। वक्तुमर्हसि यच्छ्रेयो ज्ञातीना-
मात्मनस्तथा ॥ ११ ॥

नारद उवाच । आपदो द्विविधाः कृष्ण बाह्याश्चाभ्यन्तराश्च
ह । प्रादुर्भवन्ति वार्ष्णेय स्वभावाद्यदि वान्यतः ॥ १२ ॥ सेय-
माभ्यान्तरा तुभ्यमापत् कृच्छ्रा स्वकर्म्मजा । अक्रूरभोजप्रभवाः सर्व्वे
ह्येते तदन्वयाः ॥ १३ ॥ अर्थहेतोर्हि कामाद्वा वाचा वीभत्सयापि
वा । आत्मना प्राप्तमैश्वर्य्यमन्यत्र प्रतिपादितम् ॥ १४ ॥ कृतमूल-
मिदानीन्तु ज्ञातिशब्दं सहायवान । न शक्यं पुनरादातुं वान्त-
मन्नमिव त्वया ॥ १५ ॥ बभ्रूग्रसेनयो राज्यं नाप्तुं शक्यं कथञ्चन ।
ज्ञातिभेदभयात् कृष्ण त्वया चापि विशेषतः ॥ १६ ॥ तच्चेत् सिध्येत्
प्रयत्नेन कृत्वा कर्म्म सुदुष्करम् । महाक्षयं व्ययो वा स्याद्विनाशो
वा पुनर्भवेत् ॥ १७ ॥ अनायसेन शस्त्रेण मृदुना हृदयच्छिदा ।
जिह्वामुद्धर सर्व्वेषां परिमृज्यानुमृज्य च ॥ १८ ॥

वासुदेव उवाच । अनायसं मुने शस्त्रं मृदु विद्यामहं कथम् ।
येनैषामुद्धरे जिह्वां परिमृज्यानुमृज्यानुमृज्य च ॥ १९ ॥

नारद उवाच । शक्त्यान्नदानं सततं तितिक्षार्ज्जवमार्द्दवम् ।
यथार्हं प्रतिपूजा च शस्त्रमेतदनायसम् ॥ २० ॥ ज्ञातीनां वक्तु-
कामानां कटुकानि लघूनि च । गिरा त्वं हृदयं वाचं शमयस्व
मनांसि च ॥ २१ ॥ नामहापुरुषः कश्चिन्नानात्मा नासहायवान् ।
महतीं धुरमाधत्ते तामुद्यम्योरसा वह ॥ २२ ॥ सर्व्व एव गुरुं
भारमनड्वान् वहते समे । दुर्गे प्रतीकः सुगवो भारं वहति दुर्व्व-
हम् ॥ २३ ॥ भेदाद्विनाशः सङ्घानां सङ्घमुख्योऽसि केशव । यथा
त्वां प्राप्य नोत्सीदेदयं सङ्घस्तथा कुरु ॥ २४ ॥ नान्यत्र बुद्धि-
क्षान्तिभ्यां नान्यत्रेन्द्रियनिग्रहात् । नान्यत्र धनसंत्यागात् गुणः
प्राज्ञेऽवतिष्ठते ॥ २५ ॥ धन्यं यशस्यमायुष्यं स्वपक्षोद्भावनं सदा ।
ज्ञातीनामविनाशः स्यात् यथा कृष्ण तथा कुरु ॥ २६ ॥ आयत्यास्र
तदात्वे च न तेऽस्त्यविदितं प्रभो । षाड्गुण्यस्य विधानेन यात्रा-
यानविधौ तथा ॥ २७ ॥ यादवाः कुकुरा भोजाः सर्व्वे चान्धक-

वृष्णयः। लय्याश्रत्ता महाबाहो लोका लोकेश्वराश्च ये। उपासते हि तद्बुद्धिमृषयश्चापि माधव॥ २८॥ लं गुरुः सर्वभूतानां जानीषे लं गतागतम्। लामासाद्य यदुश्रेष्ठमेधन्ते यादवाः सुखम्॥ २९॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि श्रीकृष्णनारद-संवादे एकाशीतोऽध्यायः॥ ८१॥

---

भीष्म उवाच। एषा प्रथमतो वृत्तिर्द्वितीयां शृणु भारत। यः कश्चिज्जनयेदर्थं राज्ञा रक्ष्यः सदा नरः॥ १॥ ह्रियमाणममात्येन भृतो वा यदि वाभृतः। यो राजकोषं नश्यन्तमाचक्षीत युधिष्ठिर॥ २॥ श्रोतव्यमस्य च रहो रक्ष्यश्चामात्यतो भवेत्। अमात्या ह्युपहर्त्तारो भूयिष्ठं घ्नन्ति भारत॥ ३॥ राजकोषस्य गोप्तारं राजकोषविलोपकाः। समेत्य सर्वे बाधन्ते स विनश्यत्यरक्षितः॥ ४॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। मुनिः कालकवृक्षीयः कौशल्यं यदुवाच ह॥ ५॥ कोशलानामाधिपत्यं सम्प्राप्तं क्षेमदर्शिनम्। मुनिः कालकवृक्षीय आजगामेति नः श्रुतम्॥ ६॥ स काकं पञ्जरे बद्धा विषयं क्षेमदर्शिनः। सर्वं पर्य्यचरद्युक्तः प्रवृत्त्यर्थी पुनः पुनः॥ ७॥ अधीध्वं वायसीं विद्यां शंसन्ति मम वायसाः। अनागतमतीतञ्च यच्च सम्प्रतिवर्त्तते॥ ८॥ इति राष्ट्रे परिपतन् बहुभिः पुरुषैः सह। सर्वेषां राजयुक्तानां दुष्कृतं परिदृष्टवान्॥ ९॥ स बुद्धा तस्य राष्ट्रस्य व्यवसायं हि सर्वशः। राजयुक्तापहारांश्च सर्वान् बुद्धा ततस्ततः॥१०॥ ततः स काकमादाय राजानं द्रष्टुमागमत्। सर्वज्ञोऽस्मीति वचनं ब्रुवाणः संशितव्रतः॥ ११॥ स स्म कौशल्यमागम्य राजामात्यमलङ्कृतम्। प्राह काकस्य वचनादमुत्रेदं लया कृतम्॥ १२॥

अशौ चाशौ च जानीते राजकोषस्त्वयाहृतः। एवमाख्याति काको-
ऽयं तच्छीघ्रमनुगम्यताम् ॥ १३ ॥ तथान्यानपि स प्राह राज-
कोषहरांस्तदा। न चास्य वचनं किञ्चिदनृतं श्रूयते क्वचित् ॥१४॥
तेन विप्रकृताः सर्व्वे राजयुक्ताः कुरूद्वह। तमस्याभिप्रसुप्तस्य निशि-
काकमवेधयन् ॥ १५ ॥ वायसन्तु विनिर्भिन्नं दृष्ट्वा वाणेन पञ्जरे।
पूर्वाह्णे ब्राह्मणो वाक्यं क्षेमदर्शिनमब्रवीत् ॥१६॥ राजंस्त्वामभयं
याचे प्रभुं प्राणधनेश्वरम्। अनुज्ञातस्त्वया ब्रूयां वचनं भवतो
हितम्। मित्रार्थमभिसन्तप्तो भक्त्या सर्व्वात्मनागतः ॥ १७ ॥ अयं
तवार्थो ह्रियते यो ब्रूयादक्षमान्वितः। संबुबोधयिषुर्मित्रं सदश्व-
मिव सारथिः ॥ १८ ॥ अतिमन्युः प्रसक्तो हि प्रसह्य हितकार-
णात्। तथाविधस्य सुहृदा क्षन्तव्यं स्वं विजानता। ऐश्वर्य्य-
मिच्छता नित्यं पुरुषेण बुभूषता ॥ १९ ॥ तं राजा प्रत्युवाचेदं
यत् किञ्चिन्मां भवान् वदेत्। कस्मादहं न क्षमेयमाकाङ्क्षन्नात्मनो
हितम् ॥ २० ॥ ब्राह्मण प्रतिजाने ते प्रब्रूहि यदिहेच्छसि। करि-
ष्यामि हि ते वाक्यं यदस्मान् विप्र वक्ष्यसि ॥ २१ ॥

मुनिरुवाच। ज्ञात्वानयाननयांश्चापि भृत्यतस्ते भयानि च।
भक्त्या वृत्तिं समाख्यातुं भवतोऽन्तिकमागमम् ॥ २२ ॥ प्रागेवोक्तस्तु
दोषोऽयमाचार्य्यैर्नृपसेविनाम्। अगतीका गतिर्ह्येषा पापा राजोप
सेविनाम् ॥ २३ ॥ आशीविषैश्च तस्याहुः सङ्गतं यस्य राजभिः।
बहुमित्राश्च राजानो बह्वमित्रास्तथैव च ॥ २४ ॥ तेभ्यः सर्व्वेभ्य
एवाहुर्भयं राजोपजीविनाम्। तथैषां राजतो राजन् मुहूर्त्तादेव
भीर्भवेत् ॥ २५ ॥ नैकान्तेन प्रमादो हि शक्यः कर्त्तुं महीपतौ।
न तु प्रमादः कर्त्तव्यः कथञ्चिद्भूतिमिच्छता ॥ २६ ॥ प्रमादाद्धि
स्खलेद्राजा स्खलिते नास्ति जीवितम्। अग्निं दीप्तमिवासीदे-
द्राजानमुपशिक्षितः ॥ २७ ॥ आशीविषमिव क्रुद्धं प्रभुं प्राणधने-
श्वरम्। यत्नेनोपचरेन्नित्यं नाहमस्मीति मानवः ॥ २८ ॥ दुर्व्या-

ह्रतात् शङ्कमानो दुःस्थिताद्दुरधिष्ठितात्। दुराश्रिताद्दुर्व्रजिता-दिङ्गितादङ्गचेष्टितात्॥ २९॥ दैवतेव हि सर्वार्थान् कुर्य्याद्राजा प्रसादितः। वैश्वानर इव क्रुद्धः समूलमपि निर्द्दहेत्॥ ३०॥ इति राजन् यमः प्राह वर्त्तते च तथैव तत्। अथ भूयांसमेवार्थं करिष्यामि पुनः पुनः॥ ३१॥ ददात्यस्मद्विधोऽमात्यो बुद्धिसाहाय्य-मापदि। वायसस्त्वेष मे राजन् ननु कार्य्याभिसंहितः॥ ३२॥ न च मेऽत्र भवान् गर्ह्यो न च तेषां भवान् प्रियः। हिताहितांस्तु बुध्येथा मा परोक्षमतिर्भवेः॥ ३३॥ ये त्वादानपरा एव वसन्ति भवतो गृहे। अभूतिकामा भूतानां तादृशैर्मेऽभिसंहितम्॥ ३४॥ ये वा भवद्विनाशेन राज्यमिच्छन्त्यनन्तरम्। आन्तरैरभिसन्धाय राजन् सिध्यति चान्यथा॥ ३५॥ तेषामहं भयाद्राजन् गमिष्या-म्यन्यमाश्रमम्। तैर्हि मे सन्धितो बाणः काके निपतितः प्रभो॥ ३६ छद्मकामैरकामस्य गमितो यमसादनम्। दृष्टं ह्येतन्मया राज-स्तपोदीर्घेण चक्षुषा॥ ३७॥ बह्वनक्रझषग्राहां तिमिङ्गिलगणा-युताम्। काकेन बालिशेनेमां यामतार्षमहं नदीम्॥ ३८॥ स्थाणवश्मकण्टकवतीं सिंहव्याघ्रसमाकुलाम्। दुरासदां दुष्प्रसहां गुहां हैमवतीमिव॥ ३९॥ अग्निना तामसं दुर्गं नौभिराप्यञ्च गम्यते। राजदुर्गावतरणे नोपायं पण्डिता विदुः॥ ४०॥ गहनं भवतो राज्यमन्धकारं तमोऽन्वितम्। नेह विश्वसितुं शक्यं भव-तापि कुतो मया॥ ४१॥ अतो नायं शुभो वासस्तुल्ये सदसती इह। वधो ह्येवात्र सुकृते दुष्कृते न च संशयः॥ ४२॥ न्यायतो दुष्कृते घातः सुकृतेन कथञ्चन। नेह युक्तं स्थिरं स्थातुं जवेनैवा-व्रजेद्बुधः॥ ४३॥ सीता नाम नदी राजन् प्लवो यस्यां निमज्जति। तथोपमामिमां मन्ये वागुरां सर्वघातिनीम्॥ ४४॥ मधुप्रपातो हि भवान् भोजनं विषसंयुतम्। असतामिव ते भावो वर्त्तते न सतामिव। आशीविषैः परिवृतः कूपस्त्वमसि पार्थिव॥ ४५॥

दुर्गतीर्था वृहत्कुला कारीरा वेत्रसंयुता। नदी मधुरपाणीया यथा राजंस्तथा भवान् ॥ ४६ ॥ श्वगृध्रगोमायुयुतो राजहंससमो ह्यसि ॥ ४७ ॥ यथाश्रित्य महावृक्षं कक्षः सम्वर्द्धते महान्। ततस्तं संवृणोत्येव तमतीत्य च वर्द्धते ॥ ४८ ॥ तेनैवोग्रेन्धनेनैनं दावो दहति दारुणः। तथोपमा ह्यमात्यास्ते राजंस्तान् परिशोधयः ॥ ४९ ॥ त्वया चैव कृता राजन् भवता परिपालिताः। भवन्तमभिसन्धाय जिघांसन्ति भवत्प्रियम् ॥ ५० ॥ उषितं शङ्कमानेन प्रमादं परिरक्षता। अन्तःसर्पे इवागारे वीरपत्न्या इवालये। शीलं जिज्ञासमानेन राज्ञश्च सहजीविनः ॥ ५१ ॥ कच्चिज्जितेन्द्रियो राजा कच्चिदस्यान्तरा जिताः। कच्चिदेषां प्रियो राजा कच्चिद्राज्ञः प्रियाः प्रजाः। विजिज्ञासुरिह प्राप्तस्तवाहं राजसत्तम ॥ ५२ ॥ तस्य मे रोचते राजन् क्षुधितस्येव भोजनम्। अमात्या मे न रोचन्ते वितृष्णस्य यथोदकम् ॥ ५३ ॥ भवतोऽर्थकृदित्येवं मयि दोषो हि तैः कृतः। विद्यते कारणं नान्यदिति मे नात्र संशयः ॥ ५४ ॥ नहि तेषामहं दुग्धस्तत्तेषां दोषदर्शनम्। अरेर्हि दुर्हृदा ज्ञेयं भग्नपृष्ठादिवोरगात् ॥ ५५ ॥

राजोवाच। भूयसा परिहारेण सत्कारेण च भूयसा। पूजितो ब्राह्मणश्रेष्ठ भूयो वस गृहे मम ॥ ५६ ॥ ये त्वां ब्राह्मण नेच्छन्ति ते न वत्स्यन्ति मे गृहे। भवतैव हि तज्ज्ञेयं यत्तदेषामनन्तरम् ॥ ५७ ॥ यथा स्यात् सुधृतो दण्डो यथा च सुकृतं कृतम्। तथा समीक्ष्य भगवन् श्रेयसे विनियुङ्क्ष्व माम् ॥ ५८ ॥

मुनिरुवाच। अदर्शयन्निमं दोषमेकैकं दुर्ब्बलं कुरु। ततः कारणमाज्ञाय पुरुषं पुरुषं जहि ॥ ५९ ॥ एकदोषा हि बहवो मृद्नीयुरपिकण्टकान्। मन्त्रभेदभयाद्राजंस्तस्मादेतद्ब्रवीमि ते ॥ ६० ॥ वयन्तु ब्राह्मणा नाम मृदुदण्डाः कृपालवः। स्वस्ति चेच्छाम भवतः परेषाञ्च यथात्मनः ॥ ६१ ॥ राजन्नात्मानमाचक्षे

सम्बन्धी भवतो ह्यहम्। मुनिः कालकवृक्षीय इत्येवमभिसंज्ञितः ॥ ६२ ॥ पितुः सखा च भवतः सम्मतः सत्यसङ्गरः। व्यापन्ने भवतो राज्ये राजन् पितरि संस्थिते ॥ ६३ ॥ सर्वकामान् परित्यज्य तपस्तप्तं तदा मया। स्नेहात्त्वान्तु ब्रवीम्येतन्मा भूयो विभ्रमेदिति ॥ ६४ ॥ उभे दृष्ट्वा दुःखसुखे राज्यं प्राप्य यदृच्छया। राज्येनामात्यसंस्थेन कथं राजन् प्रमाद्यसि ॥ ६५ ॥ ततो राजकुले मन्त्री सजज्ञे भूयसा पुनः। पुरोहितकुले चैव सम्प्राप्ते ब्राह्मणर्षभे ॥ ६६ ॥ एकच्छत्रां महीं कृत्वा कौशल्याय यशस्विने। मुनिः कालकवृक्षीय ईजे क्रतुभिरुत्तमैः ॥ ६७ ॥ हितं तद्वचनं श्रुत्वा कौशल्योऽन्वजन्महीम्। तथा च कृतवान्राजा यथोक्तं तेन भारत ॥ ६८ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि कालकवृक्षीयोपाख्याने द्व्यशीतोऽध्यायः ॥ ८२ ॥

---

युधिष्ठिर उवाच। सभासदः सहायाश्च सुहृदश्च विशाम्पते। परिच्छदास्तथामात्याः कीदृशाः स्युः पितामह ॥ १ ॥

भीष्म उवाच। ह्रीनिषेवास्तथा दान्ताः सत्यार्ज्जवसमन्विताः। शक्ताः कथयितुं सम्यक् ते तव स्युः सभासदः ॥ २ ॥ अमात्यांश्चातिशूरांश्च ब्राह्मणांश्च परिश्रुतान्। सुसन्तुष्टांश्च कौन्तेय महोत्साहांश्च वर्म्मसु। एतान् सहायांल्लिप्सेथाः सर्वास्वापत्सु भारत ॥ ३ ॥ कुलीनः पूजितो नित्यं न हि शक्तिं निगूहति। प्रसन्नमप्रसन्नम्वा पीड़ितं हृतमेव वा। आवर्त्तयति भूयिष्ठं तदेव ह्यनुपालितम् ॥ ४ ॥ कुलीना देशजाः प्राज्ञा रूपवन्तो बहुश्रुताः। प्रगल्भाश्चानुरक्ताश्च ते तव स्युः परिच्छदाः ॥ ५ ॥ दौष्कुलेयाश्च

लुब्धाश्च नृशंसा निरपत्रपाः । ते त्वां तात निषेवेयुर्यावदार्द्रकपाणयः ॥ ६ ॥ कुलीनान् शीलसम्पन्नानिङ्गितज्ञाननिष्ठुरान् । देशकालविधानज्ञान् भर्त्तृकार्य्यहितैषिणः । नित्यमर्थेषु सर्वेषु राजा कुर्वीत मन्त्रिणः ॥ ७ ॥ अर्थमानार्घसत्कारैर्भोगैरुच्चावचैः प्रियान् । यानर्थभाजो मन्येथास्ते ते स्युः सुखभागिनः ॥ ८ ॥ अभिन्नवृत्ता विद्वांसः सद्वृत्ताश्चरितव्रताः । न त्वां नित्यार्थिनो जह्युरक्षुद्राः सत्यवादिनः ॥ ९ ॥ अनार्य्या ये न जानन्ति समयं मन्दचेतसः । तेभ्यः परिजुगुप्सेथा ये चापि समयच्युताः ॥ १० ॥ नैकमिच्छेद्गणं हित्वा स्याच्चेदन्यतरग्रहः । यस्त्वेको बहुभिः श्रेयान् कामं तेन गणं त्यजेत् ॥ ११ ॥ श्रेयसो लक्षणञ्चैतद्विक्रमो यस्य दृश्यते । कीर्त्तिप्रधाने यश्च स्यात् समये यश्च तिष्ठति ॥ १२ ॥ समर्थान् पूजयेद्यश्च नास्पर्द्धैः स्पर्द्धते च यः । न च कामाद्भयात् क्रोधात् लोभाद्वा धर्म्ममुत्सृजेत् ॥ १३ ॥ अमानी सत्यवाक् क्षान्तो जितात्मा मानसंयुतः । स ते मन्त्रसहायः स्यात् सर्वावस्थापरीक्षितः ॥१४॥ कुलीनः कुलसम्पन्नस्तितिक्षुर्दक्ष आत्मवान् । शूरः कृतज्ञः सत्यश्च श्रेयसः पार्थ लक्षणम् ॥१५॥ तस्यैवं वर्त्तमानस्य पुरुषस्य विजानतः । अमित्राः सम्प्रसीदन्ति तथा मित्रीभवन्त्यपि ॥ १६ ॥ अत ऊर्द्ध्वममात्यानां परीक्षेत गुणागुणम् । संयतात्मा कृतप्रज्ञो भूतिकामश्च भूमिपः ॥ १७ ॥ सम्बद्धाः पुरुषैराप्तैरभिजातैः स्वदेशजैः । अहार्य्यैरव्यभीचारैः सर्वशः सुपरीक्षितैः ॥ १८ ॥ यौनाः श्रौतास्तथा मौलास्तथैवाप्यनहङ्कृताः । कर्त्तव्या भूतिकामेन पुरुषेण बुभूषता ॥ १९ ॥ येषां वैनयिकी बुद्धिः प्रकृतिश्चैव शोभना । तेजो धैर्य्यं क्षमा शौचमनुरागः स्थितिर्धृतिः ॥ २० ॥ परीक्ष्य च गुणान्नित्यं प्रौढ़भावान् धुरन्धरान् । पञ्चोपधाव्यतीतांश्च कुर्य्याद्राजार्थकारिणः ॥ २१ ॥ पर्य्याप्तवचनान् वीरान् प्रतिपत्तिविशारदान् । कुलीनान् सत्यसम्पन्नानिङ्गितज्ञाननिष्ठुरान् ॥ २२ ॥ देशकाल-

विधानज्ञान् भर्त्तृकार्य्यहितैषिणः। नित्यमर्थेषु सर्वेषु राजन् कुर्वीत मन्त्रिणः ॥ २३ ॥ हीनतेजोऽभिसृष्टो वै नैव जातु व्यवस्यति। अवश्यं जनयत्येव सर्वकर्म्मसु संशयम् ॥ २४ ॥ एवमल्पश्रुतो मन्त्री कल्याणाभिजनोऽप्युत। धर्मार्थकामसंयुक्तो नालं मन्त्रं परीक्षितुम् ॥ २५ ॥ तथैवानभिजातोऽपि काममस्तु बहुश्रुतः। अनायक इवाचक्षुर्मुह्यत्यणुषु कर्म्मसु ॥ २६ ॥ यो वाप्यस्थिरसङ्कल्पो बुद्धिमानागतागमः। उपायज्ञोऽपि नालं स कर्म्म प्रापयितुं चिरम् ॥ २७ ॥ केवलात् पुनरादानात् कर्म्मणो नोपपद्यते। परामर्शो विशेषाणामश्रुतस्येह दुर्म्मतेः ॥ २८ ॥ मन्त्रिण्यननुरक्ते तु विश्वासो नोपपद्यते। तस्मादननुरक्ताय नैव मन्त्रं प्रकाशयेत् ॥ २९ ॥ व्यथयेद्धि स राजानं मन्त्रिभिः सहितोऽनृजुः। मारुतोऽपि हि तच्छिद्रैः प्रविश्याग्निरिव द्रुमम् ॥ ३० ॥ संक्रुद्धश्चैकदा स्वामी स्थानाच्चैवापकर्षति। वाचा क्षिपति संरब्धः पुनः पश्चात् प्रसीदति ॥ ३१ ॥ तानि तान्यनुरक्तेन शक्यानि हि तितिक्षितुम्। मन्त्रिणाञ्च भवेत् क्रोधो विस्फूर्ज्जितमिवाशनेः ॥ ३२ ॥ यस्तु संहरते तानि भर्त्तुः प्रियचिकीर्षया। समानसुखदुःखन्तं पृच्छेदर्थेषु मानवम् ॥ ३३ ॥ अनृजुस्त्वनुरक्तोऽपि सम्पन्नश्चेतरैर्गुणैः। राज्ञः प्रज्ञानयुक्तोऽपि न मन्त्रं श्रोतुमर्हति ॥ ३४ ॥ योऽमित्रैः सह सम्बद्धो न पौरान् बहु मन्यते। असुहृत्तादृशो ज्ञेयो न मन्त्रं श्रोतुमर्हति ॥ ३५ ॥ अविद्वानशुचिः स्तब्धः शत्रुसेवी विकत्थनः। असुहृत् क्रोधनो लुब्धो न मन्त्रं श्रोतुमर्हति ॥ ३६ ॥ आगन्तुश्चानुरक्तोऽपि काममस्तु बहुश्रुतः। सत्कृतः संविभक्तो वा न मन्त्रं श्रोतुमर्हति ॥ ३७ ॥ विधर्म्मतो विप्रकृतः पिता यस्याभवत् पुरा। सत्कृतः स्थापितः सोऽपि न मन्त्रं श्रोतुमर्हति ॥ ३८ ॥ यः स्वल्पेनापि कार्य्येण सुहृदाक्षारितो भवेत्। पुनरन्यैर्गुणैर्युक्तो न मन्त्रं श्रोतुमर्हति ॥ ३९ ॥ कृतप्रज्ञश्च मेधावी बुधो जानपदः

शुचिः। सर्वकर्मसु यः शुद्धः स मन्त्रं श्रोतुमर्हति ॥ ४० ॥ ज्ञान-विज्ञानसम्पन्नः प्रकृतिज्ञः परात्मनोः। सुहृदात्मसमो राज्ञः स मन्त्रं श्रोतुमर्हति ॥ ४१ ॥ सत्यवाक् शीलसम्पन्नो गम्भीरः सत्रपो मृदुः। पितृपैतामहो यः स्यात् स मन्त्रं श्रोतुमर्हति ॥ ४२ ॥ सन्तुष्टः सम्मतः सत्यः शौण्डीरो द्वेष्यपापकः। मन्त्रवित् कालवित् शूरः स मन्त्रं श्रोतुमर्हति ॥ ४३ ॥ सर्वलोकमिमं शक्तः सान्त्वेन कुरुते वशे। तस्मै मन्त्रः प्रयोक्तव्यो दण्डमाधित्सता नृप ॥ ४४ ॥ पौर-जानपदा यस्मिन् विश्वासं धर्मतो गताः। योद्धा नयविपश्चिच्च स मन्त्रं श्रोतुमर्हति ॥ ४५ ॥ तस्मात् सर्वैं गुणैरेतैरुपपन्नाः सुपू-जिताः। मन्त्रिणः प्रकृतिज्ञाः स्युस्त्र्यवरा महदीप्सवः ॥ ४६ ॥ स्वासु प्रकृतिषु छिद्रं लक्षयेरन् परस्य च। मन्त्रिणां मन्त्रमूलं हि राज्ञो राष्ट्रं विवर्द्धते॥ ४७ ॥ नास्य छिद्रं परः पश्येत् छिद्रेषु परमन्वियात्। गूहेत् कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ ४८ ॥ मन्त्रगूढ़ा हि राज्यस्य मन्त्रिणो ये मनीषिणः। मन्त्र-संहननो राजा मन्त्राङ्गानीतरे जनाः ॥ ४९ ॥ राज्यं प्रणिधि-मूलं हि मन्त्रसारं प्रचक्षते। स्वामिनस्त्वनुवर्त्तन्ते वृत्त्यर्थमिह मन्त्रिणः। संविनीय मदक्रोधौ माननीर्षाञ्च निर्वृताः ॥ ५० ॥ नित्यं पञ्चोपधातीतैर्मन्त्रयेत् सह मन्त्रिभिः ॥ ५१ ॥ तेषां त्रयाणां विविधं विमर्षं विबुध्य चित्तं विनिवेश्य तत्र। स्वनिश्चयं तत् परि-निश्चयञ्च निवेदयेदुत्तरमन्त्रकाले॥ ५२ ॥ धर्मार्थकामज्ञमुपेत्य पृच्छेद्युक्तो गुरुं ब्राह्मणमुत्तरार्थम्। निष्ठा कृता तेन यदा सह स्यात् तन्मन्त्रमार्गं प्रणयेदशक्तः ॥ ५३ ॥ एवं सदा मन्त्रयितव्य-माहुर्ये मन्त्रतत्त्वार्थविनिश्चयज्ञाः। तस्मात्तमेवं प्रणयेत् सदैव मन्त्रं प्रजासंग्रहणे समर्थम् ॥ ५४ ॥ न वामनाः कुब्जकृशा नखञ्जा नान्धो जड़ः स्त्री च नपुंसकञ्च। न चात्र तिर्य्यक् च पुरो न पश्चा-न्नोर्द्धं न चाधः प्रचरेत् कथञ्चित् ॥ ५५ ॥ आरुह्य नावन्तु तथैव

शून्यं स्थलं प्रकाशं कुशकाशहीनम्। वागङ्गदोषान् परिहृत्य सर्वान् संमन्त्रयेत् कार्य्यमहीनकालम् ॥ ५६ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि सभासदादि-
कथने त्र्यशीतोऽध्यायः ॥ ८३ ॥

---

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। बृहस्पतेश्च सम्वादं शक्रस्य च युधिष्ठिर ॥ १ ॥

शक्र उवाच। किंस्विदेकपदं ब्रह्मन् पुरुषः सम्यगाचरन्। प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत् ॥ २ ॥

बृहस्पतिरुवाच। सान्त्वमेकपदं शक्रः पुरुषः सम्यगाचरन्। प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत् ॥ ३ ॥ एतदेकपदं शक्र सर्वलोकसुखावहम्। आचरन् सर्वभूतेषु प्रियो भवति सर्वदा ॥४॥ यो हि नाभाषते किञ्चित् सर्वदा भ्रुकुटीमुखः। द्वेष्यो भवति भूतानां स सान्त्वमिह नाचरन् ॥ ५ ॥ यस्तु सर्वमभिप्रेक्ष्य पूर्वमेवाभिभाषते। स्मितपूर्वाभिभाषी च तस्य लोकः प्रसीदति ॥६॥ दानमेव हि सर्वत्र सान्त्वेनानभिजल्पितम्। न प्रीणयति भूतानि निर्व्यञ्जनमिवाशनम् ॥ ७ ॥ आदानादपि भूतानां मधुरामीरयन् गिरम्। सर्वलोकमिमं शक्र सान्त्वेन कुरुते वशे ॥ ८ ॥ तस्मात् सान्त्वं प्रयोक्तव्यं दण्डमाधित्सतापि हि। फलञ्च जनयत्येवं न चास्योद्विजते जनः ॥ ९ ॥ सुकृतेव हि सान्त्वस्य श्लक्ष्णस्य मधुरस्य च। सम्यगासेव्यमानस्य तुल्यं जातु न विद्यते ॥ १० ॥

भीष्म उवाच। इत्युक्तः कृतवान् सर्वं यथा शक्रः पुरोधसा। तथा त्वमपि कौन्तेय सम्यगेतत् समाचर ॥ ११ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि
चतुरशीतोऽध्यायः ॥ ८४ ॥

युधिष्ठिर उवाच। कथं स्विदिह राजेन्द्र पालयन् पार्थिवः प्रजाः। प्रीतिं धर्मविशेषेण कीर्त्तिमाप्नोति शाश्वतीम् ॥ १ ॥

भीष्म उवाच। व्यवहारेण शुद्धेन प्रजापालनतत्परः। प्राप्य धर्मञ्च कीर्त्तिञ्च लोकावाप्नोत्युभौ शुचिः ॥ २ ॥

युधिष्ठिर उवाच। कीदृशैर्व्यवहारैस्तु कैश्च व्यवहरेन्नृपः। एतत् पृष्टो महाप्राज्ञ यथावद्वक्तुमर्हसि ॥ ३ ॥ ये चैव पूर्वकथिता गुणास्ते पुरुषं प्रति। नैकस्मिन् पुरुषे ह्येते विद्यन्त इव मे मतिः ॥ ४ ॥

भीष्म उवाच। एवमेतन्महाप्राज्ञ यथा वदसि बुद्धिमान्। दुर्लभः पुरुषः कश्चिदेभिर्युक्तो गुणैः शुभैः ॥ ५ ॥ किन्तु संक्षेपतः शीलं प्रयत्नेनेह दुर्लभम्। वक्ष्यामि तु यथामात्यान् यादृशांश्च करिष्यसि ॥ ६ ॥ चतुरो ब्राह्मणान् वैद्यान् प्रगल्भान् स्नातकान् शुचीन्। क्षत्रियांश्च तथा चाष्टौ बलिनः शस्त्रपाणिनः ॥ ७ ॥ वैश्यान् वित्तेन सम्पन्नानेकविंशतिसङ्ख्यया। त्रींश्च शूद्रान् विनीतांश्च शुचीन् कर्मणि पूर्वके ॥ ८ ॥ अष्टाभिश्च गुणैर्युक्तं सूतं पौराणिकं तथा। पञ्चाशद्वर्षवयसं प्रगल्भमनसूयकम् ॥ ९ ॥ श्रुतिस्मृतिसमायुक्तं विनीतं समदर्शिनम्। कार्य्ये विवदमानानां शक्तमर्थेष्वलोलुपम् ॥ १० ॥ वर्ज्जितञ्चैव व्यसनैः सुघोरैः सप्तभिर्भृशम्। अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत् ॥ ११ ॥ ततः संप्रेषयेद्राष्ट्रे राष्ट्रियाय च दर्शयेत्। अनेन व्यवहारेण द्रष्टव्यास्ते प्रजाः सदा ॥ १२ ॥ न चापि गूढ़ं कार्य्यन्ते ग्राह्यं कार्य्योपघातकम्। कार्य्ये खलु विपन्ने त्वां सोऽधर्मस्तांश्च पीड़येत् ॥ १३ ॥ विद्रवेच्चैव राष्ट्रन्ते श्येनात् पक्षिगणा इव। परिस्रवेच्च सततं नौर्विशीर्णेव सागरे ॥ १४ ॥ प्रजाः पालयतोऽसम्यगधर्मेणेह भूपते। हार्द्दं भयं सम्भवति स्वर्गश्चास्य विरुध्यते ॥ १५ ॥ अथ योऽधर्मतः पाति राजामात्योऽथवात्मजः। धर्मासने सन्नियुक्तो

धर्म्ममूले नरर्षभ ॥ १६ ॥ राष्ट्रेष्वधिकृताः सम्यगकुर्वन्तो नृपानुगाः। आत्मानं पुरतः कृत्वा यान्त्यधः सहपार्थिवाः ॥ १७ ॥ बलात्कृतानां बलिभिः कृपणं बहु जल्पताम्। नाथो वै भूमिपो नित्यमनाथानां नृणां भवेत् ॥ १८ ॥ ततः साक्षिबलं साधु द्वैधवादकृतं भवेत्। असाक्षिकमनाथस्वा परीक्ष्यं तद्विशेषतः ॥ १९ ॥ अपराधानुरूपञ्च दण्डं पापेषु कारयेत्। वियोजनैर्धनैर्ऋद्धान् अधनानथ बन्धनैः ॥ २० ॥ विनयेच्चापि दुर्वृत्तान् प्रहारैरपि पार्थिवः। सान्त्वेनोपप्रदानेन शिष्टांश्च परिपालयेत् ॥ २१ ॥ राज्ञो वधं चिकीर्षेद्यस्तस्य चित्रो वधो भवेत्। आदीपकस्य स्तेनस्य वर्णसङ्करिकस्य च ॥ २२ ॥ सम्यक् प्रणयतो दण्डं भूमिपस्य विशाम्पते। युक्तस्य वा नास्त्यधर्मो धर्म एव हि शाश्वतः ॥ २३ ॥ कामकारेण दण्डस्तु यः कुर्य्यादविचक्षणः। स इहाकीर्त्तिसंयुक्तो मृतो नरकमृच्छति ॥ २४ ॥ न परस्य प्रवादेन परेषां दण्डमर्पयेत्। आगमानुगमं कृत्वा बध्नीयान्मोचयीत वा ॥ २५ ॥ न तु हन्यान्नृपो जातु दूतं कस्याञ्चिदापदि। दूतस्य हन्ता निरयमाविशेत् सचिवैः सह ॥ २६ ॥ यथोक्तवादिनं दूतं क्षत्रधर्मरतो नृपः। यो हन्यात् पितरस्तस्य भ्रूणहत्यामवाप्नुयुः ॥ २७ ॥ कुलीनः कुलसम्पन्नो वाग्मी दक्षः प्रियम्वदः। यथोक्तवादी स्मृतिमान् दूतः स्यात् सप्तभिर्गुणैः ॥ २८ ॥ एतैरेव गुणैर्युक्तः प्रतीहारोऽस्य रक्षिता। शिरोरक्षश्च भवति गुणैरेतैः समन्वितः ॥२९॥ धर्मशास्त्रार्थतत्त्वज्ञः सन्धिविग्रहिको भवेत्। मतिमान् धृतिमान् ह्रीमान् रहस्यविनिगूहिता ॥ ३० ॥ कुलीनः सत्त्वसम्पन्नः शुक्लोऽमात्यः प्रशस्यते। एतैरेव गुणैर्युक्तस्तथा सेनापतिर्भवेत् ॥ ३१ ॥ व्यूहयन्त्रायुधानाञ्च तत्त्वज्ञो विक्रमान्वितः। वर्षशीतोष्णवातानां सहिष्णुः पररन्ध्रवित् ॥ ३२ ॥ विश्वासयेत् परांश्चैव विश्वसेच्च न कस्यचित्। पुत्रेष्वपि हि राजेन्द्र विश्वासो न प्रशस्यते ॥३३॥

एतच्छास्त्रार्थतत्त्वन्तु मया ख्यातं तवानघ। अविश्वासो नरेन्द्राणां गुह्यं परममुच्यते ॥ ३४ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि
पञ्चाशीतोऽध्यायः॥ ८५ ॥

---

युधिष्ठिर उवाच। कथंविधं पुरं राजा स्वयमावस्तुमर्हति। कृतं वा कारयित्वा वा तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच। वस्तव्यं यत्र कौन्तेय सपुत्रज्ञातिबन्धुना। न्याय्यं तत्र परिप्रष्टुं वृत्तिं गुप्तिञ्च भारत ॥ २॥ तस्मात्ते वर्त्तयिष्यामि दुर्गकर्म विशेषतः। श्रुत्वा तथा विधातव्यमनुष्ठेयञ्च यत्नतः ॥ ३ ॥ षड्विधं दुर्गमास्थाय पुराण्यथ निवेशयेत्। सर्वसम्पत्प्रधानं यद्बाहुल्यञ्चापि सम्भवेत् ॥ ४ ॥ धनुर्दुर्गं महीदुर्गं गिरिदुर्गं तथैव च। मनुष्यदुर्गं मृद्दुर्गं वनदुर्गञ्च तानि षट् ॥ ५ ॥ यत् पुरं दुर्गसम्पन्नं धान्यायुधसमन्वितम्। दृढ़प्राकारपरिखं हस्त्यश्वरथसङ्कुलम् ॥ ६ ॥ विद्वांसः शिल्पिनो यत्र निचयाश्च सुसञ्चिताः। धार्मिकश्च जनो यत्र दाक्ष्यमुत्तममास्थितः ॥ ७॥ जज्जस्विनरनागाश्वं चत्वरापणशोभितम्। प्रसिद्धव्यवहारञ्च प्रशान्तमकुतोभयम् ॥ ८ ॥ सुप्रभं सानुनादञ्च सुप्रशस्तनिवेशनम्। शूराढ्यजनसम्पन्नं ब्रह्मघोषानुनादितम् ॥ ९ ॥ समाजोत्सवसम्पन्नं सदापूजितदैवतम्। वश्यामात्यबलो राजा तत्पुरं स्वयमाविशेत् ॥१०॥ तत्र कोशं बलं मित्रं व्यवहारञ्च वर्द्धयेत्। पुरे जनपदे चैव सर्वदोषान्निवर्त्तयेत् ॥११॥ भाण्डागारायुधागारं प्रयत्नेनाभिवर्द्धयेत्। निचयान् वर्द्धयेत् सर्वांस्तथा यन्त्रायुधालयान् ॥ १२ ॥ काष्ठलोहतुषाङ्गारदारुशृङ्गास्थिवैणवान्। मज्जास्नेहवसाक्षौद्रमौषधग्राममेव च ॥ १३ ॥ शणं सर्ज्जरसं धान्यमायुधानि शरांस्तथा। चर्म-

स्नायुं तथा वेत्रं मुञ्जवल्वजबन्धनान् ॥ १४ ॥ आयुधाश्चोपदानाश्च प्रभूतसलिलाकराः । निरोद्धव्याः सदा राज्ञा चीरिणश्च महोत्कटाः ॥ १५ ॥ सत्कृताश्च प्रयत्नेन आचार्य्यर्त्विक्पुरोहिताः । महेष्वासाः स्थपतयः साम्वत्सरचिकित्सकाः ॥ १६ ॥ प्राज्ञा मेधाविनो दान्ता दक्षाः शूरा बहुश्रुताः । कुलीनाः सत्त्वसम्पन्नाः युक्ताः सर्व्वेषु कर्मसु ॥ १७ ॥ पूजयेद्धार्मिकान् राजा निगृह्णीयादधार्मिकान् । नियुञ्ज्याच्च प्रयत्नेन सर्ववर्णान् स्वकर्मसु ॥ १८ ॥ वाह्यमभ्यन्तरञ्चैव पौरजानपदं तथा । चारैः सुविदितं कृत्वा ततः कर्म प्रयोजयेत् ॥ १९ ॥ चारान् मन्त्रञ्च कोषञ्च दण्डञ्चैव विशेषतः । अनुतिष्ठेत् स्वयं राजा सर्वं ह्यत्र प्रतिष्ठितम ॥ २० ॥ उदासीनारिमित्राणां सर्वमेव चिकीर्षितम् । पुरे जनपदे चैव ज्ञातव्यं चारचक्षुषा ॥ २१ ॥ ततस्तेषां विधातव्यं सर्वमेवाप्रमादतः । भक्तान् पूजयता नित्यं द्विषतश्च निगृह्णता ॥२२॥ यष्टव्यं क्रतुभिर्नित्यं दातव्यञ्चाप्यपीड़या । प्रजानां रक्षणं कार्य्यं न कार्य्यं धर्मबाधकम् ॥ २३ ॥ कृपणानाथवृद्धानां विधवानाञ्च योषिताम् । योगक्षेमञ्च वृत्तिञ्च नित्यमेव प्रकल्पयेत् ॥ २४ ॥ आश्रमेषु यथाकालं चैलभाजनभोजनम् । सदैवोपहरेद्राजा सत्कृत्याभ्यर्च्य मान्य च ॥ २५ ॥ आत्मानं सर्वकार्य्याणि तापसे राष्ट्रमेव च । निवेदयेत् प्रयत्नेन तिष्ठेत् प्रह्वश्च सर्वदा ॥ २६ ॥ सर्वार्थत्यागिनं राजा कुलेजातं बहुश्रुतम् । पूजयेत्तादृशं दृष्ट्वा शयनासनभोजनैः ॥ २७ ॥ तस्मिन् कुर्वीत विश्वासं राजा कस्याञ्चिदापदि । तापसेषु हि विश्वासमपि कुर्वन्ति दस्यवः ॥ २८ ॥ तस्मिन्निधीनादधीत प्रज्ञां पर्य्याददीत च । न चाप्यभीक्ष्णं सेवेत भृशं वा प्रतिपूजयेत् ॥ २९ ॥ अन्यः कार्य्यः स्वराष्ट्रेषु परराष्ट्रेषु चापरः । अटवीषु परः कार्य्यः सामन्तनगरेष्वपि ॥ ३० ॥ तेषु सत्कारमानाभ्यां संविभागांश्च कारयेत् । परराष्ट्राटवीस्थेषु यथा स्वविषये तथा ॥३१॥

ते कस्याञ्चिदवस्थायां शरणं शरणार्थिने। राज्ञे दद्युर्यथाकामं तापसाः संशितव्रताः॥ ३२॥ एष ते लक्षणोद्देशः संक्षेपेण प्रकीर्त्तितः। यादृशे नगरे राजा स्वयमावस्तुमर्हति॥ ३३॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि दुर्गपरीक्षायां षडशीतोऽध्यायः॥ ८६॥

---

युधिष्ठिर उवाच। राष्ट्रगुप्तिञ्च मे राजन् राष्ट्रस्यैव तु संग्रहम्। सम्यग्जिज्ञासमानाय प्रब्रूहि भरतर्षभ॥ १॥

भीष्म उवाच। राष्ट्रगुप्तिञ्च ते सम्यग्राष्ट्रस्यैव तु संग्रहम्। हन्त सर्वं प्रवक्ष्यामि तत्त्वमेकमनाः शृणु॥ २॥ ग्रामस्याधिपतिः कार्य्यो दशग्राम्यास्तथा परः। द्विगुणायाः शतस्यैवं सहस्रस्य च कारयेत्॥ ३॥ ग्रामेयान् ग्रामदोषांश्च ग्रामिकः प्रतिभावयेत्। तान् ब्रूयाद्दशपायासौ स तु विंशतिपाय वै॥ ४॥ सोऽपि विंशत्यधिपतिर्वृत्तं जानपदे जने। ग्रामाणां शतपालाय सर्वमेव निवेदयेत्॥ ५॥ यानि ग्राम्याणि भोज्यानि ग्रामिकस्तान्युपाश्नियात्। दशपस्तेन भर्त्तव्यस्तेनापि द्विगुणाधिपः॥ ६॥ ग्रामं ग्रामशताध्यक्षो भोक्तुमर्हति सत्कृतः। महान्तं भरतश्रेष्ठ सुस्फीतं जनसङ्कुलम्॥ ७॥ तत्र ह्यनेकपायत्तं राष्ट्रे भवति भारत। शाखानगरमर्हस्तु सहस्रपतिरुत्तमः॥ ८॥ धान्यं हिरण्यं भोगेन भोक्तुं राष्ट्रीयसङ्गतः। तेषां संग्रामकृत्यं स्याद्ग्रामकृत्यञ्च तेषु यत्॥ ९॥ धर्म्मज्ञः सचिवः कश्चित् तत् प्रपश्येदतन्द्रितः। नगरे नगरे वा स्यादेकः सर्वार्थचिन्तकः॥ १०॥ उच्चैः स्थाने घोररूपो नक्षत्राणामिव ग्रहः। भवेत् स तान् परिक्रामेत् सर्वानेव सभासदः। तेषां वृत्तिं परिणयेत् कश्चिद्राष्ट्रेषु तच्चरः॥ ११॥ जिघांसवः पापकामाः परस्वादायिनः शठाः। रक्षाभ्यधिकृता नाम

तेभ्यो रक्षेदिमाः प्रजाः ॥ १२ ॥ विक्रयं क्रयमध्वानं भक्तञ्च सपरिच्छदम् । योगक्षेमञ्च संप्रेक्ष्य वणिजां कारयेत् करान् ॥१३॥ उत्पत्तिं दानवृत्तिञ्च शिल्पं संप्रेक्ष्य चासकृत् । शिल्पं प्रति करानेवं शिल्पिनः प्रतिकारयेत् ॥ १४ ॥ उच्चावचकरा दाप्या महाराज्ञा युधिष्ठिर । यथा यथा न सीदेरंस्तथा कुर्य्यान्महीपतिः ॥१५ फलं कर्म्म च संप्रेक्ष्य ततः सर्वं प्रकल्पयेत् । फलं कर्म्म च निर्हेतु न कश्चित् संप्रवर्त्तते ॥ १६ ॥ यथा राजा च कर्त्ता च स्यातां कर्मणि भागिनौ । समवेक्ष्य तथा राज्ञा प्रणेयाः सततं कराः ॥ १७ ॥ नोच्छिन्द्यादात्मनो मूलं परेषाञ्चापि तृष्णया । ईहाद्वाराणि संरुध्य राजा संप्रीतदर्शनः ॥ १८ ॥ प्रद्विषन्ति परिख्यातं राजानमतिखादिनम् । प्रद्विष्टस्य कुतः श्रेयो नाप्रियो लभते फलम् ॥ १९ ॥ वत्सौपम्येन दोग्धव्यं राष्ट्रमक्षीणबुद्धिना । भृतो वत्सो जातबलः पीड़ां सहति भारत ॥ २० ॥ न कर्म कुरुते वत्सो भृशं दुग्धो युधिष्ठिर । राष्ट्रमप्यतिदुग्धं हि न कर्म कुरुते महत् ॥ २१ ॥ यो राष्ट्रमनुगृह्णाति परिरक्षन् स्वयं नृप । सञ्जातमुपजीवन् स लभते सुमहत् फलम् ॥ २२ ॥ आपदर्थञ्च निर्यातं राजा न इह विन्दते । राष्ट्रञ्च कोशभूतं स्यात् कोशो वेश्मगतस्तथा ॥ २३ ॥ पौरजानपदान् सर्वान् संश्रितोपाश्रितांस्तथा । यथाशक्त्यनुकम्पेत सर्वान् स्वल्पधनानप ॥ २४ ॥ बाह्यं जनं भेदयित्वा भोक्तव्यो मध्यमः सुखम् । एवं नास्य प्रकुप्यन्ति जनाः सुखितदुःखिताः ॥ २५ ॥ प्रागेव तु धनादानमनुभाष्य ततः पुनः । सन्निपत्य स्वविषये भयं राष्ट्रेषु दर्शयेत् ॥ २६ ॥ इयमापत् समुत्पन्ना परचक्रभयं महत् । अपि चान्ताय कल्पन्ते वेणोरिव फलागमः ॥ २७ ॥ अरयो मे समुत्थाय बहुभिर्दस्युभिः सह । इदमात्मवधायेव राष्ट्रमिच्छन्ति बाधितुम् ॥ २८ ॥ अस्यामापदि घोरायां सम्प्राप्ते दारुणे भये । परित्राणाय भवतः प्रार्थयिष्ये

धनानि वः ॥ २९ ॥ प्रतिदास्ये च भवतां सर्वं चाहं भयक्षये ।
नारयः प्रतिदास्यन्ति यद्धरेयुर्बलादितः ॥ ३० ॥ कलत्रमादितः
कृत्वा सर्वं वो विनशेदिति । अपि चेत्पुत्रदारार्थमर्थसञ्चय इष्यते
॥ ३१ ॥ नन्दामि वः प्रभावेन पुत्राणामिव चोदये । यथाशक्त्यप-
गृह्णामि राष्ट्रस्यापीड़या च वः ॥ ३२ ॥ आपत्स्वेव हि वोढ़व्यं
भवद्भिः पुङ्गवैरिव । न प्रियं सततं कार्य्यं धनं कस्याञ्चिदापदि
॥ ३३ ॥ इति वाचा मधुरया श्लक्ष्णया सोपचारया । स्वरश्मी-
नभ्यवसृजेद्योगमाधाय कालवित् ॥ ३४ ॥ प्राकारं भृत्यभरणं व्ययं
संग्रामतो भयम् । योगक्षेमञ्च संप्रेक्ष्य गोमिनः कारयेत् करान्
॥ ३५ ॥ उपेक्षिता हि नश्येयुर्गोमिनोऽरण्यवासिनः । तस्मात्तेषु
विशेषेण मृदुपूर्वं समाचरेत् ॥ ३६ ॥ सान्त्वनं रक्षणं दानमवस्था
चाप्यभीक्ष्णशः । गोमिनां पार्थ कर्त्तव्यः संविभागः प्रियाणि च
॥ ३७ ॥ अजस्रमुपयोक्तव्यं फलं गोमिषु भारत । प्रभावयन्ति
राष्ट्रञ्च व्यवहारं कृषिन्तथा ॥ ३८ ॥ तस्माद्गोमिषु यत्नेन प्रीतिं
कुर्य्याद्विचक्षणः । दयावानप्रमत्तश्च करान् संप्रणयेन्मृदून् ॥३९॥
सर्वत्र क्षेमचरणं सुलभं नाम गोमिषु । न ह्यतः सदृशं किञ्चिदर-
मस्ति युधिष्ठिर ॥ ४० ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि राष्ट्रपालन-
नियमे सप्ताशीतोऽध्यायः ॥ ८७ ॥

---

युधिष्ठिर उवाच । यदा राजा समर्थोऽपि कोशार्थी स्या-
न्महामते । कथं प्रवर्त्तेत तदा तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच । यथादेशं यथाकालं यथाबुद्धि यथाबलम् ।
अनुशिष्यात् प्रजा राजा धर्मार्थी तद्धिते रतः ॥ २ ॥ यथा तासाञ्च
मन्येत श्रेय आत्मन एव च । तथा कर्माणि सर्वाणि राजा राष्ट्रेषु

वर्त्तयेत्॥ ३॥ मधुदोहं दुहेद्राष्ट्रं भ्रमरा इव पादपम्। वत्सा-
पेक्षी दुहेच्चैव स्तनांश्च न निकुट्टयेत्॥ ४॥ जलौकावत् पिवेद्राष्ट्रं
मृदुनैव नराधिपः। व्याघ्रीव हरेत् पुत्रान् सन्दशन्न च पीड़-
येत्॥ ५॥ यथा शल्यकवानाखुः पदं धूनयते सदा। अतीक्ष्णो-
भ्युपायेन तथा राष्ट्रं समापिवेत्॥ ६॥ अल्पेनाल्पेन देयेन वर्द्ध-
मानं प्रदापयेत्। ततो भूयस्ततो भूयः क्रमवृद्धिं समाचरेत्॥७॥
दमयन्निव दम्यानि शश्वद्भारं विवर्द्धयेत्। मृदुपूर्वं प्रयत्नेन पाशा-
नभ्यवहारयेत्॥ ८॥ सकृत्पाशावकीर्णास्ते न भविष्यन्ति दुर्द्दमाः।
उचितेनैव भोक्तव्याः न भविष्यन्ति यत्नतः॥ ९॥ तस्मात् सर्व-
समारम्भो दुर्लभः पुरुषं प्रति। यथा मुख्यान् सान्त्वयित्वा भोक्तव्य
इतरो जनः॥ १०॥ ततस्तान् भेदयित्वा तु परस्परविवक्षितान्।
भुञ्जीत सान्त्वयंश्चैव यथासुखमयत्नतः॥ ११॥ न चास्थाने न
चाकाले करांस्तेभ्यो निपातयेत्। आनुपूर्व्येण सान्त्वेन यथाकालं
यथाविधि॥ १२॥ उपायान् प्रब्रवीम्येतान्न मे माया विवक्षिता।
अनुपायेन दमयन् प्रकोपयति वाजिनः॥ १३॥ पानागारनिवेशाश्च
वेश्याः प्रापणिकस्तथा। कुशीलवाः सकितवा ये चान्ये केचि-
दीदृशाः॥ १४॥ नियम्याः सर्व एवैते ये राष्ट्रस्योपघातकाः।
एते राष्ट्रेऽभितिष्ठन्तो वाधन्ते भद्रिकाः प्रजाः॥ १५॥ न केन-
चिद्याचितव्यं कश्चित् कस्याञ्चिदापदि। इति व्यवस्था भूतानां
पुरस्तान्मनुना कृता॥ १६॥ सर्वे तथानुजीवेयुर्न कुर्य्युः कर्म
चेदिह। सर्व एव इमे लोका न भवेयुरसंशयम्॥ १७॥ प्रभु-
र्नियमने राजा य एतान्न नियच्छति। भुङ्क्ते स तस्य पापस्य
चतुर्भागमिति श्रुतिः॥१८। भोक्ता तस्य तु पापस्य सुकृतस्य यथा
तथा। नियन्तव्याः सदा राज्ञा पापा ये स्युर्नराधिप॥ १९॥
कृतपापस्त्वसौ राजा य एतान्न नियच्छति। यथा कृतस्य धर्मस्य
चतुर्भागमुपाश्नुते॥ २०॥ स्थानान्येतानि संयम्य प्रसङ्गो भूति-

नाशनः। कामप्रसक्तः पुरुषः किमकार्य्यं विवर्ज्जयेत् ॥ २१ ॥ मद्यमांसपरस्वानि तथा दारा धनानि च। आहरेद्रागवशगस्तथा शास्त्रं प्रवर्त्तयेत् ॥ २२ ॥ आपद्येव तु याचेरन् येषां नास्ति परिग्रहः। दातव्यं धर्मतस्तेभ्यस्त्वनुक्रोशाद्भयान्न तु ॥ २३ ॥ मा ते राष्ट्रे याचनका भूवन्मा चापि दस्यवः। एषां दातार एवैते नैते भूतस्य भावकाः ॥ २४ ॥ ये भूतान्यनुगृह्णन्ति वर्द्धयन्ति च ये प्रजाः। ते ते राष्ट्रेषु वर्त्तन्तां मा भूतानामभावकाः ॥ २५ ॥ दण्ड्यास्ते च महाराज धनादानप्रयोजकाः। प्रयोगं कारयेयुस्तान् यथा वलिकरांस्तथा ॥ २६ ॥ कृषिगोरक्ष्यवाणिज्यं यच्चान्यत् किञ्चिदीदृशम्। पुरुषैः कारयेत् कर्म्म बहुभिः कर्म्मभेदतः ॥२७॥ नरश्चेत् कृषिगोरक्ष्यं वाणिज्यञ्चाप्यनुष्ठितः। संशयं लभते किञ्चित्तेन राजा विगर्ह्यते ॥ २८ ॥ धनिनः पूजयेन्नित्यं पानाच्छादनभोजनैः। वक्तव्याश्चानुगृह्णीध्वं प्रजाः सह मयेति वै ॥ २९ ॥ अङ्गमेतन्महद्राज्ये धनिनो नाम भारत। ककुदं सर्वभूतानां धनस्थो नात्र संशयः ॥ ३० ॥ प्राज्ञः शूरो धनस्थश्च स्वामी धार्मिक एव च। तपस्वी सत्यवादी च बुद्धिमांश्चापि रक्षति ॥ ३० ॥ तस्मात् सर्व्वेषु भूतेषु प्रीतिमान् भव पार्थिव। सत्यमार्ज्जवमक्रोधमानृशंस्यञ्च पालय ॥ ३२ ॥ एवं दण्डञ्च कोषञ्च मित्रं भूमिञ्च लिप्सस्रि। सत्यार्ज्जवपरो राजन्मित्रकोषबलान्वितः ॥ ३३ ॥

इति शान्तिपर्व्वणि राजधर्मानुशासनपर्व्वणि
अष्टाशीतोऽध्यायः ॥ ८८ ॥

---

भीष्म उवाच। वनस्पतीन् भक्ष्यफलान्नच्छिन्द्युर्विषये तव। ब्राह्मणानां मूलफलं धर्म्ममाहुर्मनीषिणः ॥ १ ॥ ब्राह्मणेभ्योऽतिरिक्तञ्च भुञ्जीरन्नितरे जनाः। न ब्राह्मणापराधेन हरेदन्यः कथ-

श्चन ॥ २ ॥ विप्रश्चेत्त्यागमातिष्ठेदात्मार्थे वृत्तिकर्षितः। परिकल्प्यास्य वृत्तिः स्यात् सदारस्य नराधिप ॥ ३ ॥ स चेन्नोपनिवर्त्तेत वाच्यो ब्राह्मणसंसदि। कस्मिन्निदानीं मर्य्यादामयं लोकः करिष्यति ॥ ४ ॥ असंशयं निवर्त्तेत न चेद्वच्यत्यतः परम्। पूर्वं परोक्षं कर्त्तव्यमेतत् कौन्तेय शाश्वतम् ॥५॥ आहुरेतज्जना ब्रह्मन्नचैतच्छ्रद्दधाम्यहम्। निमन्त्र्यश्च भवेद्भोगैरवृत्त्या चेत्तदाचरेत् ॥६॥ कृषिगोरच्यवाणिज्यं लोकानामिह जीवनम्। ऊर्द्ध्वञ्चैव त्रयी विद्या सा भूतान् भावयत्युत ॥ ७ ॥ तस्यां प्रवर्त्तमानायां ये स्युस्तत्परिपन्थिनः। दस्यवस्तद्वधायेह ब्रह्मा चत्रमथासृजत् ॥ ८ ॥ शत्रून् जय प्रजा रक्ष यजस्व क्रतुभिर्नृप। युध्यस्व समरे वीरो भूत्वा कौरवनन्दन ॥ ९ ॥ संरक्ष्यान् पालयेद्राजा स राजा राजसत्तमः। ये केचित्तान्न रक्षन्ति तैरर्थो नास्ति कश्चन ॥ १० ॥ सदैव राज्ञा बोद्धव्यं सर्वलोकाद्युधिष्ठिर। तस्माद्धेतोर्हि युञ्जीत मनुष्यानेव मानवः ॥ ११ ॥ आन्तरेभ्य परान्रक्षन् परेभ्यः पुनरान्तरान्। परान् परेभ्यः स्वान् स्वेभ्यः सर्वान् पालय नित्यदा ॥ १२ ॥ आत्मानं सर्वतो रक्षन्राजा रक्षेत मेदिनीम्। आत्ममूलमिदं सर्वमाहुर्वै विदुषो जनाः ॥ १३ ॥ किं छिद्रं कोऽनुषङ्गो मे किंस्वास्थ्यविनिपातितम्। कुतो मामाश्रयेद्दोष इति नित्यं विचिन्तयेत् ॥ १४ ॥ अतीतदिवसे वृत्तं प्रशंसन्ति न वा पुन। गुप्तैश्चारैरनुमतैः पृथिवीमनुसारयेत् ॥ १५ ॥ जानीयुर्यदि मे वृत्तं प्रशंसन्ति न वा पुनः। कच्चिद्रोचेज्जनपदे कच्चिद्राष्ट्रे च मे यशः ॥१६॥ धर्मज्ञानां धृतिमतां संग्रामेष्वपलायिनाम्। राष्ट्रे तु ये न जीवन्ति ये तु राज्ञो न जीविनः ॥ १७॥ अमात्यानाञ्च सर्वेषां मध्यस्थानाञ्च सर्वशः। ये च त्वाभिप्रशंसेयुर्निन्देयुरथ वा पुनः। सर्वान् सुपरिणीतांस्तान् कारयेद्वा युधिष्ठिर ॥ १८ ॥ एकान्तेन हि सर्वेषां न शक्यं तात रोचितुम्। मित्रामित्रमथो मध्यं सर्वभूतेषु भारत ॥१९॥

युधिष्ठिर उवाच । तुल्यबाहुबलानाञ्च तुल्यानाञ्च गुणैरपि ।
कथं स्यादधिकः कश्चित् स च भुञ्जीत मानवान् ॥ २० ॥

भीष्म उवाच । यच्चरा ह्यचरानद्युरदंष्ट्रान् दंष्ट्रिणस्तथा ।
आशीविषा इव क्रुद्धा भुजगान् भुजगा इव ॥ २१ ॥ एतेभ्यश्चाप्रमत्तः स्यात् सदा शत्रोर्युधिष्ठिर । भारुण्डसदृशा ह्येते निपतन्ति प्रमादतः ॥ २२ ॥ कच्चित्ते वणिजो राष्ट्रे नोद्विजन्ति करार्द्दिताः । क्रीणन्तो बहुनाल्पेन कान्तारकृतविश्रमाः ॥ २३ ॥ कच्चित् कृषिकरा राष्ट्रं न जहत्यतिपीड़िताः । ये वहन्ति धुरं राज्ञां ते तरन्तीतरानपि ॥ २४ ॥ इतो दत्तेन जीवन्ति देवाः पितृगणास्तथा । मानुषोरगरक्षांसि वयांसि पशवस्तथा ॥ २५ ॥ एषा ते राष्ट्रवृत्तिश्च राज्ञां गुप्तिश्च भारत । एतमेवार्थमाश्रित्य भूयो वक्ष्यामि पाण्डव ॥ २६ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि
एकोननवतोऽध्यायः ॥ ८९ ॥

---

भीष्म उवाच । यानङ्गिराः क्षत्रधर्मानुतथ्यो ब्रह्मवित्तमः ।
मान्धाते यौवनाश्वाय प्रीतिमानभ्यभाषत ॥ १ ॥ स यथानुशशासैनमुतथ्यो ब्रह्मवित्तमः । तत्ते सर्वं प्रवक्ष्यामि निखिलेन युधिष्ठिर ॥ २ ॥

उतथ्य उवाच । धर्माय राजा भवति न कामकरणाय तु ।
मान्धातरिति जानीहि राजा लोकस्य रक्षिता ॥ ३ ॥ राजा चरति चेद्धर्मं देवत्वायैव कल्पते । स चेदधर्मञ्चरति नरकायैव गच्छति ॥ ४ ॥ धर्मे तिष्ठन्ति भूतानि धर्मो राजनि तिष्ठति । तं राजा साधु यः शास्ति स राजा पृथिवीपतिः ॥ ५ ॥ राजा परधर्मात्मा लक्ष्मीवान् धर्म उच्यते । देवाश्च गर्हाङ्गच्छन्ति धर्मो

नास्तीति चोच्यते ॥ ६ ॥ स्वधर्मे वर्त्तमानानामर्थसिद्धिः प्रदृश्यते। तदेव मङ्गलं लोकः सर्वः समनुवर्त्तते ॥ ७ ॥ उच्छिद्यते धर्मवृत्त-मधर्मो वर्त्तते महान्। भयमाहुर्दिवारात्रं यदा पापो न वार्य्यते ॥ ८ ॥ ममेदमिति नैवैतत् साधूनां तात धर्मतः। न वै व्यवस्था भवति यदा पापो न वार्य्यते ॥ ९ ॥ नैव भार्य्या न पशवो न चेत्रं न निवेशनम्। संदृश्येत मनुष्याणां यदा पापबलं भवेत् ॥ १० ॥ देवाः पूजां न जानन्ति न स्वधां पितरस्तदा। न पूज्यन्ते ह्यतिथयो यदा पापो न वार्य्यते ॥ ११ ॥ न वेदानधिगच्छन्ति व्रतवन्तो द्विजातयः। न यज्ञांस्तन्वते विप्रा यदा पापो न वार्य्यते ॥ १२ ॥ वृद्धानामिव सत्त्वानां मनो भवति विह्वलम्। मनुष्याणां महाराज यदा पापो न वार्य्यते ॥ १३ ॥ उभौ लोकावभिप्रेच्य राजानमृषयः स्वयम्। असृजन् सुमहद्भूतमयं धर्मो भविष्यति ॥ १४ ॥ यस्मिन् धर्मो विराजेत तं राजानं प्रचक्षते। यस्मिन् विलीयते धर्मस्तं देवा वृषलं विदुः ॥ १५ ॥ वृषो हि भगवान् धर्मो यस्तस्य कुरुते ह्यलम्। वृषलं तं विदुर्देवास्तस्माद्धर्मं विवर्द्धयेत् ॥ १६ ॥ धर्मे वर्द्धति वर्द्धन्ति सर्वभूतानि सर्वदा। तस्मिन् ह्रसति हीयन्ते तस्माद्धर्मं न लोपयेत् ॥ १७ ॥ धनात् स्रवति धर्मो हि धारणादेति निश्चयः। अकार्य्याणां मनुष्येन्द्र स सीमान्तकरः स्मृतः ॥ १८ ॥ प्रभवार्थं हि भूतानां धर्मः सृष्टः स्वयम्भुवा। तस्मात् प्रवर्त्तयेद्धर्मं प्रजानुग्रहकारणात् ॥ १९ ॥ तस्माद्धि राजशार्दूल धर्मः श्रेष्ठतरः स्मृतः। स राजा यः प्रजाः शास्ति साधुकृत् पुरुषर्षभः ॥२०॥ कामक्रोधावनादृत्य धर्ममेवानुपालय। धर्मः श्रेयस्करतमो राज्ञां भरतसत्तम ॥ २१ ॥ धर्मस्य ब्राह्मणो योनिस्तस्मात् तान् पूजयेत् सदा। ब्राह्मणानाञ्च मान्धातः कुर्य्यात् कामानमत्सरी ॥ २२ ॥ तेषां ह्यकामकरणाद्राज्ञः सञ्जायते भयम्। मित्राणि न च वर्द्धन्ते तथामित्रा भवन्त्यपि ॥ २३ ॥ ब्राह्मणानां सदासूयाद्बाल्याद्वैरोचनो

वलि । अथास्मात् श्रीरपाक्रामद्यास्मिन्नासीत् प्रतापिनी ॥ २४ ॥ ततस्तस्मादपाक्रम्य सागच्छत् पाकशासनम् । अथ सोऽन्वपतत् पश्चाच्छ्रियं दृष्ट्वा पुरन्दरे ॥२५॥ एतत् फलमसूयाया अभिमानस्य वा विभो । तस्माद्बुध्यस्व मान्धातर्मा त्वां जह्यात् प्रतापिनी ॥२६॥ दर्पो नाम श्रियः पुत्रो जज्ञेऽधर्मादिति श्रुतिः । तेन देवासुरा राजन्नीताः स्वर्वह्वो व्ययम् । राजर्षयश्च बहवस्तथा बुध्यस्व पार्थिव ॥२७॥ राजा भवति तं जित्वा दासस्तेन पराजितः ॥२८॥ स यथा दर्पसहितमधर्मं नानुसेवते । तथा वर्त्तस्व मान्धातश्चिरं चेत् स्थातुमिच्छसि ॥ २९ ॥ मत्तात् प्रमत्तात् पाषण्डादुन्मत्ताच्च विशेषतः । तदभ्यासादुपावर्त्त संहितानाञ्च सेवनात् ॥३०॥ निगृहीतादमात्याच्च स्त्रीभ्यश्चैव विशेषतः । पर्वतादिषमाद्दुर्गाद्धस्तिनोऽश्वात् सरीसृपात् ॥ ३१ ॥ एतेभ्यो नित्ययुक्तः स्यान्नक्तं चर्य्याञ्च वर्ज्जयेत् । अत्यागञ्चाभिमानञ्च दम्भं क्रोधञ्च वर्ज्जयेत् ॥ ३२ ॥ अविज्ञातासु च स्त्रीषु क्लीबासु स्वैरिणीषु च । परभार्य्यासु कन्यासु नाचरेन्मैथुनं नृप ॥ ३३ ॥ कुलेषु पापरक्षांसि जायन्ते वर्णसङ्करात् । अपुमांसोऽङ्गहीनाश्च स्थूलजिह्वा विचेतसः ॥ ३४ ॥ एते चान्ये च जायन्ते यदा राजा प्रमाद्यति । तस्माद्राज्ञा विशेषेण वर्त्तितव्यं प्रजाहिते ॥ ३५ ॥ क्षत्रियस्य प्रमत्तस्य दोषः सञ्जायते महान् । अधर्म्माः संप्रवर्द्धन्ते प्रजासङ्करकारकाः ॥ ३६ ॥ अशीते विद्यते शीतं शीते शीतं न विद्यते । अवृष्टिरतिवृष्टिश्च व्याधिश्चाप्याविशेत् प्रजाः ॥ ३७ ॥ नक्षत्राण्युपतिष्ठन्ति ग्रहा घोरास्तथागते । उत्पाताश्चात्र दृश्यन्ते बहवो राजनाशनाः ॥ ३८ ॥ अरक्षितात्मा यो राजा प्रजाश्चापि न रक्षति । प्रजाश्च तस्य क्षीयन्ते ततः सोऽनुविनश्यति ॥ ३९ ॥ द्वावाददते ह्येकस्य द्वयोः सुबहवोऽपरे । कुमार्य्यः संप्रलुप्यन्ते तदाहुर्नृपदूषणम् ॥ ४० ॥ ममेद-

मिति नकस्य मनुष्येष्ववतिष्ठति। त्यक्त्वा धर्मं यदा राजा प्रमादमनुतिष्ठति ॥ ४१ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि उतथ्य-
गीतायां नवतितमोऽध्यायः ॥ ९० ॥

---

उतथ्य उवाच। कालवर्षी च पर्ज्जन्यो धर्मचारी च पार्थिवः। सम्पद्यदैषा भवति सा विभर्त्ति सुखं प्रजाः ॥ १ ॥ यो न जानाति निर्हर्त्तुं वस्त्राणां रजको मलम्। रक्तानाम्वा शोधयितुं यथा नास्ति तथैव सः ॥ २ ॥ एवमेतद्द्विजेन्द्राणां क्षत्रियाणां विशान्तथा। शूद्रश्चतुर्थो वर्णानां नानाकर्मस्ववस्थितः ॥ ३ ॥ कर्म-शूद्रे कृषिर्वैश्ये दण्डनीतिश्च राजनि। ब्रह्मचर्य्यं तपो मन्त्राः सत्यञ्चापि द्विजातिषु ॥ ४ ॥ तेषां यः क्षत्रियो वेद वस्त्राणामिव शोधनम्। शीलदोषान् विनिर्हर्त्तुं स पिता स प्रजापतिः ॥ ५ ॥ कृतं त्रेता द्वापरश्च कलिश्च भरतर्षभ। राजवृत्तानि सर्वाणि राजैव युगमुच्यते ॥ ६ ॥ चातुर्वर्ण्यं तथा वेदाश्चातुराश्रम्यमेवच। सर्वं प्रमुह्यते ह्येतद्यदा राजा प्रमाद्यति ॥ ७ ॥ अग्निस्त्रेता त्रयी विद्या यज्ञाश्च सहदक्षिणाः। सर्व एव प्रमाद्यन्ति यदा राजा प्रमाद्यति। राजैव कर्त्ता भूतानां राजैव च विनाशकः। धर्मात्मा यः स कर्त्तास्यादधर्मात्मा विनाशकः ॥ ९ ॥ राज्ञो भार्य्याश्च पुत्राश्च वान्धवाः सुहृदस्तथा। समेत्य सर्वे शोचन्ति यदा राजा प्रमाद्यति ॥ १० ॥ हस्तिनोऽश्वाश्च गावश्चाप्युष्ट्राश्वतरगर्द्दभाः। अधर्मभूते नृपतौ सर्वे सीदन्ति जन्तवः ॥ ११ ॥ दुर्वलार्थं वलं सृष्टं धात्रा मान्धातरुच्यते। अवलन्तु महद्भूतं यस्मिन् सर्वं प्रतिष्ठितम् ॥ १२ ॥ यच्च भूतं संभजते ये च भूतास्तदन्वयाः। अधर्मस्थे हि नृपतौ सर्वे शोचन्ति पार्थिव ॥ १३ ॥ दुर्वलस्य च यच्चक्षुर्मुनेराशीविषस्य

च। अविषह्यतमं मन्ये मा स्म दुर्व्वलमासदः ॥ १४ ॥ दुर्व्वलांस्तात बुध्येथा नित्यमेवाविमानितान्। मा त्वां दुर्व्वलचक्षुंषि प्रदहेयुः सबान्धवम् ॥ १५ ॥ न हि दुर्व्वलदग्धस्य कुले किञ्चित् प्ररोहति। आमूलं निर्द्दहत्येव मा स्म दुर्व्वलमासदः ॥ १६ ॥ अबलं वै बलाच्छ्रेयो यच्चातिबलवद्बलम्। बलस्याबलदग्धस्य न किञ्चिदवशिष्यते ॥ १७ ॥ विमानितो हतः क्रुष्टस्त्रातारञ्चेन्न विन्दति। अमानुषकृतस्तत्र दण्डो हन्ति नराधिपम् ॥ १८ ॥ मा स्म तात बले स्थित्वा भुञ्जीथा दुर्व्वलं जनम्। मा त्वां दुर्व्वलचक्षूंषि दहन्त्वग्निरिवाश्रयम् ॥ १९ ॥ यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदताम्। तानि पुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसनात् ॥ २० ॥ यदि नात्मनि पुत्रेषु न चेत् पौत्रेषु नप्तृषु। न हि पापं कृतं कर्म सद्यः फलति गौरिव ॥२१॥ यत्राबलो वध्यमानस्त्रातारं नाधिगच्छति। महान् दैवकृतस्तत्र दण्डः पतति दारुणः ॥ २२ ॥ युक्ता यदा जनपदा भिक्षन्ते ब्राह्मणा इव। अभीक्ष्णं भिक्षुरूपेण राजानं घ्नन्ति तादृशाः ॥ २३ ॥ राज्ञो यदा जनपदे बहवो राजपुरुषाः। अनयेनोपवर्त्तन्ते तद्राज्ञः किल्विषं महत् ॥ २४ ॥ यदायुक्ता नयन्त्यर्थान् कामादर्थवशेन वा। कृपणं याचमानानां तद्राज्ञो वैशसं महत् ॥ २५ ॥ महान् वृक्षो जायते वर्द्धते च तञ्चैव भूतानि समाश्रयन्ति। यदा वृक्षश्छिद्यते दह्यते च तदाश्रया अनिकेता भवन्ति ॥ २६ ॥ यदा राष्ट्रे धर्ममग्र्यञ्चरन्ति संस्कारम्वा राजगुणं ब्रुवाणाः। तैरेवाधर्मश्चरितो धर्ममोहात्तूर्णं जह्यात् सुकृतं दुष्कृतम्वा ॥ २७ ॥ यत्र पापा ज्ञायमानाश्चरन्ति सतां कलिर्विन्दते तत्र राज्ञः। यदा राजा शास्ति नरानशिष्टांस्तदा राज्यं वर्द्धते भूमिपस्य ॥ २८ ॥ यश्चामात्यान्मानयित्वा यथार्हं मन्त्रे च युद्धे च नृपो नियुञ्ज्यात्। विवर्द्धते तस्य राष्ट्रं नृपस्य भुङ्क्ते महीञ्चाप्यखिलां चिराय ॥ २९ ॥ यश्चापि सुकृतं कर्म वाचञ्चैव सुभा-

षिताम्। समीच्य पूजयन् राजा धर्ममाप्नोत्यनुत्तमम् ॥ ३० ॥ संविभज्य यथा भुङ्क्ते नामात्यानवमन्यते। विहन्ति बलिनं दृप्तं स राज्ञो धर्म उच्यते ॥ ३१ ॥ त्रायते हि यदा सर्वं वाचा कायेन कर्मणा। पुत्रस्यापि न मृष्येच्च स राज्ञो धर्म उच्यते ॥ ३२ ॥ सम्विभज्य यदा भुङ्क्ते नृपतिर्दुर्बलान्नरान्। तदा भवन्ति बलिनः स राज्ञो धर्म उच्यते ॥ ३३ ॥ यदा रचति राष्ट्राणि यदा दस्यूनपोहति। यदा जयति संग्रामे स राज्ञो धर्म उच्यते ॥ ३४ ॥ पापमाचरतो यत्र कर्मणा व्याहृतेन वा। प्रियस्यापि न मृष्येत स राज्ञो धर्म उच्यते ॥ ३५ ॥ यदा शारणिकान्राजा पुत्रवत् परिरचति। भिनत्ति च न मर्य्यादां स राज्ञो धर्म उच्यते ॥ ३६ ॥ यदाप्तदचिणैर्यज्ञैर्यजते श्रद्धयान्वितः। कामद्वेषावनादृत्य स राज्ञो धर्म उच्यते ॥ ३७ ॥ कृपणानाथवृद्धानां यदाश्रु परिमार्ज्जति। हर्षं संजनयन्नृणां स राज्ञो धर्म उच्यते ॥ ३८ ॥ विवर्द्धयति मित्राणि तथारींश्चापकर्षति। सम्पूजयति साधूंश्च स राज्ञो धर्म उच्यते ॥ ३९ ॥ सत्यं पालयति प्रीत्या नित्यं भूमिं प्रयच्छति। पूजयेदतिथीन् भृत्यान् स राज्ञो धर्म उच्यते ॥ ४० ॥ निग्रहानुग्रहौ चोभौ यत्र स्यातां प्रतिष्ठितौ। अस्मिंल्लोके परे चैव राजा स प्राप्नुते फलम् ॥ ४१ ॥ यमो राजा धार्मिकाणां मान्धातः परमेश्वरः। संयच्छन् भवति प्राणानसंयच्छंस्तु पावकः ॥ ४२ ॥ ऋत्विक् पुरोहिताचार्य्यान् सत्कृत्यानवमन्य च। यदा सम्यक् प्रगृह्णाति स राज्ञो धर्म उच्यते ॥ ४३ ॥ यमो यच्छति भूतानि सर्वाण्येवाविशेषतः। तथा राज्ञानुकर्त्तव्यं यन्तव्या विधिवत् प्रजाः ॥ ४४ ॥ सहस्राक्षेण राजा हि सर्वथैवोपमीयते। स पश्यति च यं धर्मं स धर्मः पुरुषर्षभ ॥ ४५ ॥ अप्रमादेन शिक्षेथाः क्षमां बुद्धिं धृतिं मतिम्। भूतानां सत्त्वजिज्ञासां साध्वसाधु च सर्वदा ॥ ४६ ॥ संग्रहः सर्वभूतानां दानञ्च मधुरं वचः। पौरजानपदा-

श्चैव गोप्तव्यास्ते यथासुखम् ॥ ४७ ॥ न जात्वदक्षो नृपतिः प्रजाः शक्नोति रक्षितुम्। भारो हि सुमहांस्तात राज्यं नाम सुदुष्करम् ॥ ४८ ॥ तद्दण्डविन्नृपः प्राज्ञः शूरः शक्नोति रक्षितुम्। न हि शक्यमदण्डेन क्लीवेनाबुद्धिनापि वा ॥ ४९ ॥ अविरूपैः कुले जातैर्दक्षैर्भक्तैर्बहुश्रुतैः। सर्वा बुद्धीः परीक्षेथास्तापसाश्रमिणामपि ॥ ५० ॥ अतस्त्वं सर्वभूतानां धर्मं वेत्स्यसि वै परम्। स्वदेशे परदेशे वा न ते धर्मो विनङ्क्ष्यति ॥ ५१ ॥ तस्मादर्थाच्च कामाच्च धर्म एवोत्तरोऽभवत्। अस्मिंल्लोके परे चैव धर्मात्मा सुखमेधते ॥ ५२ ॥ त्यजन्ति दारान् पुत्रांश्च मनुष्याः परिपूजिताः ॥ ५३ ॥ संग्रहश्चैव भूतानां दानञ्च मधुरा च वाक्। अप्रमादश्च शौचञ्च राज्ञो भूतिकरं महत्। एतेभ्यश्चैव मान्धातः सततं मा प्रमादिथाः ॥ ५४ ॥ अप्रमत्तो भवेद्राजा छिद्रदर्शी परात्मनोः। नास्य छिद्रं परः पश्येच्छिद्रेषु परमन्वियात् ॥५५॥ एतद्वृत्तं वासवस्य यमस्य वरुणस्य च। राजर्षीणाञ्च सर्वेषां तत्त्वमप्यनुपालय ॥५६॥ तत् कुरुष्व महाराज वृत्तं राजर्षिसेवितम्। आतिष्ठ दिव्यं पन्थानमह्नाय भरतर्षभ ॥ ५७ ॥ धर्मवृत्तं हि राजानं प्रेत्य चेह च भारत। देवर्षिपितृगन्धर्वाः कीर्त्तयन्ति महौजसः ॥ ५८ ॥

भीष्म उवाच। स एवमुक्तो मान्धाता तेनोतथ्येन भारत। कृतवानविशङ्कश्च एकः प्राप च मेदिनीम् ॥ ५९ ॥ भवानपि तथा सम्यक् मान्धातेव महीपते। धर्मं कृत्वा महीं रक्ष स्वर्गे स्थानमवाप्स्यसि ॥ ६० ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि उतथ्यगीतायामेकनवतोऽध्यायः ॥ ९१ ॥

---

युधिष्ठिर उवाच। कथं धर्मे स्थातुमिच्छन् राजा वर्त्तेत धार्मिकः। पृच्छामि त्वां कुरुश्रेष्ठ तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। गीतं दृष्टार्थतत्त्वेन वामदेवेन धीमता ॥ २ ॥ राजा वसुमना नाम ज्ञानवान् धृतिमान् शुचिः। महर्षिं परिपप्रच्छ वामदेवं तपस्विनम् ॥ ३ ॥ धर्मार्थसहितैर्वाक्यैर्भगवन्ननुशाधि माम्। येन वृत्तेन वै तिष्ठन्न हीयेयं स्वधर्मतः ॥ ४ ॥ तमब्रवीद्वामदेवस्तेजस्वी पततां वरः। हेमवर्णं सुखासीनं ययातिमिव नाहुषम् ॥ ५ ॥

वामदेव उवाच। धर्ममेवानुवर्त्तस्व न धर्माद्विद्यते परम्। धर्मे स्थिता हि राजानो जयन्ति पृथिवीमिमाम् ॥ ६ ॥ अर्थसिद्धेः परं धर्मं मन्यते यो महीपतिः। सताञ्च कुरुते बुद्धिं स धर्मेण विराजते ॥ ७ ॥ अधर्मदर्शी यो राजा बलादेव प्रवर्त्तते। क्षिप्रमेवापयातोऽस्मादुभौ प्रथममध्यमौ ॥ ८ ॥ असत्पापिष्ठसचिवो वध्यो लोकस्य धर्महा। सहैव परिवारेण क्षिप्रमेवावसीदति ॥ ९ ॥ अर्थानामननुष्ठाता कामचारी विकत्थनः। अपि सर्वां महीं लब्ध्वा क्षिप्रमेव विनश्यति ॥ १० ॥ अथाददानः कल्याणमनसूयुर्जितेन्द्रियः। वर्द्धते मतिमान्राजा स्रोतोभिरिव सागरः ॥ ११ ॥ न पूर्णोऽस्मीति मन्येत धर्मतः कामतोऽर्थतः। बुद्धितो मित्रतश्चापि सततं वसुधाधिपः ॥ १२ ॥ एतेष्वेव हि सर्वेषु लोकयात्रा प्रतिष्ठिता। एतानि शृण्वन् लभते यशः कीर्त्तिं श्रियः प्रजाः ॥ १३ ॥ एवं यो धर्मसंरम्भी धर्मार्थपरिचिन्तकः। अर्थान् समीक्ष्यारभते स ध्रुवं महदश्नुते ॥ १४ ॥ अदाता ह्यनतिस्नेही दण्डेनावर्त्तयन् प्रजाः। साहसप्रकृती राजा क्षिप्रमेव विनश्यति ॥ १५ ॥ अथ पापकृतं बुद्ध्या न च पश्यत्यबुद्धिमान्। अकीर्त्त्याभिसमायुक्तो भूयो नरकमश्नुते ॥ १६ ॥ अथ मानयितुर्दातुः श्लक्ष्णस्य वशवर्त्तिनः। व्यसनं स्वमिवोत्पन्नं विजिघांसन्ति मानवाः ॥ १७ ॥

यस्य नास्ति गुरुर्धर्मे न चान्यानपि पृच्छति । सुखतन्त्रोऽर्थलाभेषु न चिरं सुखमश्नुते ॥ १८ ॥ गुरुप्रधानो धर्म्मेषु स्वयमर्थान्ववेक्षिता । धर्म्मप्रधानो लाभेषु स चिरं सुखमश्नुते ॥ १९ ॥

इति शान्तिपर्व्वणि राजधर्मानुशासनपर्व्वणि वामदेव-
गीतायां द्विनवतोऽध्यायः ॥ ९२ ॥

---

वामदेव उवाच । यत्राधर्मं प्रणयते दुर्व्वले बलवत्तरः । तां वृत्तिमुपजीवन्ति ये भवन्ति तदन्वया ॥ १ ॥ राजानमनुवर्त्तन्ते तं पापाभिप्रवर्त्तकम् । अवनीतमनुष्यन्तत् क्षिप्रं राष्ट्रं विनश्यति ॥ २ ॥ यद्वृत्तमुपजीवन्ति प्रकृतिस्थस्य मानवाः । तदेव विषमस्थस्य स्वजनोऽपि न मृष्यते ॥ ३ ॥ साहसप्रकृतिर्यत्र किञ्चिदुल्बणमाचरेत् । अशास्त्रलक्षणो राजा क्षिप्रमेव विनश्यति ॥ ४ ॥ योऽत्यन्ताचरितां वृत्तिं क्षत्रियो नानुवर्त्तते । जितानामजितानाञ्च क्षत्रधर्मादपैति सः ॥ ५ ॥ द्विषन्तं कृतकल्याणं गृहीत्वा नृपतिं रणे । यो न मानयते द्वेषात् क्षत्रधर्मादपैति सः ॥ ६ ॥ शक्तः स्यात् सुमुखो राजा कुर्य्यात् करुणमापदि । प्रियो भवति भूतानां न च विभ्रश्यते श्रियः ॥ ७ ॥ अप्रियं यस्य कुर्व्वीत भूयस्तस्य प्रियञ्चरेत् । नचिरेण प्रियः स स्यात् योऽप्रियः प्रियमाचरेत् ॥८॥ मृषावादं परिहरेत् कुर्य्यात् प्रियमयाचितः । न च कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ॥ ९ ॥ नापत्रपेत प्रश्नेषु नाविभाव्यां गिरं सृजेत् । न त्वरेत न वासूयेत्तथा संगृह्यते परः ॥ १० ॥ प्रिये नातिभृशं हृष्येदप्रिये न च संज्वरेत् । न तप्येदर्थकृच्छ्रेषु प्रजाहितमनुस्मरन् ॥ ११ ॥ यः प्रियं कुरुते नित्यं गुणतो वसुधाधिपः । तस्य कर्म्माणि सिध्यन्ति न च संत्यज्यते श्रिया ॥ १२ ॥ निवृत्तं प्रतिकूलेषु वर्त्तमानमनुप्रिये । भक्तं भजेत नृपतिः सदैव

सुसमाहितः ॥ १३ ॥ अप्रकीर्णेन्द्रियग्राममत्यन्तानुगतं शुचिम् । शक्तञ्चैवानुरक्तञ्च युञ्ज्यान्महति कर्मणि ॥ १४ ॥ एवमेतैर्गुणैर्युक्तो योऽनुरज्यति भूमिपम् । भर्त्तुरर्थेष्वप्रमत्तं नियुञ्ज्यादर्थकर्मणि ॥ १५ ॥ मूढमैन्द्रियकं लुब्धमनार्य्यचरितं शठम् । अनतीतोपधं हिंस्रं दुर्बुद्धिमबहुश्रुतम् ॥ १६ ॥ त्यक्तोदात्तं मद्यरतं द्यूतस्त्रीमृगयापरम् । कार्य्ये महति युञ्जानो हीयते नृपतिः श्रिया ॥१७॥ रक्षितात्मा च यो राजा रक्ष्यान् यश्चानुरक्षति । प्रजाश्च तस्य वर्द्धन्ते ध्रुवञ्च महदश्नुते ॥१८॥ ये केचिद्भूमिपतयः सर्वांस्तानन्ववेक्षयेत् । सुहृद्भिरनभिख्यातैस्तेन राजातिरिच्यते ॥ १९ ॥ अपकृत्य बलस्थस्य दूरस्थोऽस्मीति नाश्वसेत् । श्येनाभिपतनैरेते निपतन्ति प्रमाद्यतः ॥२० ॥ दृढमूलस्त्वदुष्टात्मा विदित्वा बलमात्मनः । अबलानभियुञ्जीत न तु ये बलवत्तरा ॥ २१ ॥ विक्रमेण महीं लब्ध्वा प्रजा धर्मेण पालयेत् । आहवे निधनं कुर्य्याद्राजा धर्मपरायणः ॥ २२ ॥ मरणान्तमिदं सर्वं नेह किञ्चिदनामयम् । तस्माद्धर्मे स्थितो राजा प्रजा धर्मेण पालयेत् ॥ २३ ॥ रक्षाधिकरणं युद्धं तथा धर्मानुशासनम् । मन्त्रचिन्ता सुखं काले पञ्चभिर्वर्द्धते मही ॥ २४ ॥ एतानि यस्य गुप्तानि स राजा राजसत्तमः । सततं वर्त्तमानोऽत्र राजा धत्ते महीमिमाम् ॥ २५ ॥ नैतान्येकेन शक्यानि सातत्येनानुवीक्षितुम् । तेषु सर्वं प्रतिष्ठाप्य राजा भुङ्क्ते चिरं महीम् ॥ २६ ॥ दातारं संविभक्तारं मार्द्दवोपगतं शुचिम् । असन्त्यक्तमनुष्यञ्च जनाः कुर्वते नृपम् ॥ २७ ॥ यस्तु निःश्रेयसं श्रुत्वा ज्ञानं तत् प्रतिपद्यते । आत्मनो मतमुत्सृज्य तं लोकोऽनुविधीयते ॥ २८ ॥ योऽर्थकामस्य वचनं प्रातिकूल्यान्न मृष्यते । शृणोति प्रातिकूलानि सर्वदा विमना इव ॥ २९ ॥ अग्राम्यचरितां वृत्तिं यो न सेवेत नित्यदा । जितानामजितानाञ्च क्षत्रधर्मादुपैति सः ॥ ३० ॥ निगृहीतादमात्याच्च स्त्रीभ्यश्चैव विशेषतः । पर्वता-

विषमाद्दुर्गाद्धस्तिनोऽश्वात् सरीसृपात् ॥३१॥ एतेभ्यो नित्ययुक्तः सन् रक्षेदात्मानमेव तु । मुख्यानमात्यान् यो हित्वा निहीनान् कुरुते प्रियान् । स वै व्यसनमासाद्य गाधमार्त्तो न विन्दति ॥३२॥ यः कल्याणगुणान् ज्ञातीन् द्वेषान्नोपबुभूषति । अदृढ़ात्मा दृढ़क्रोधः स मृत्योर्वसतेऽन्तिके ॥ ३३ ॥ अथ यो गुणसम्पन्नान् हृदयस्याप्रियानपि । प्रियेण कुरुते वश्यांश्चिरं यशसि तिष्ठति ॥ ३४ ॥ नाकाले प्रणयेदर्थान्नाप्रिये जातु संज्वरेत् । प्रिये नातिभृशं तिष्ठेद्युज्येत शुभकर्म्मणि ॥३५॥ के वानुरक्ता राजानः के भयात् समुपाश्रिताः । मध्यस्थदोषाः के चैषामिति नित्यं विचिन्तयेत् ॥३६॥ न जातु बलवान् भूत्वा दुर्बले विश्वसेत् क्वचित् । भारुण्डसदृशा ह्येते निपतन्ति प्रमाद्यतः ॥ ३७ ॥ अपि सर्व्वगुणैर्युक्तं भर्त्तारं प्रियवादिनम् । अभिद्रुह्यति पापात्मा न तस्माद्विश्वसेज्जनात् ॥३८॥ एवं राजोपनिषदं ययातिः स्माह नाहुषः । मनुष्यविषये युक्तो हन्ति शत्रूननुत्तमान् ॥ ३९ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि वामदेवगीतासु त्रिनवतोऽध्यायः ॥ ९३ ॥

---

वामदेव उवाच । अयुद्धेनैव विजयं वर्द्धयेद्वसुधाधिपः । जघन्यमाहुर्विजयं युद्धेन च नराधिप ॥ १ ॥ न चाप्यलब्धं लिप्सेत मूले नातिदृढ़े सति । न हि दुर्बलमूलस्य राज्ञो लाभो विधीयते ॥ २ ॥ यस्य स्फीतो जनपदः सम्पन्नः प्रियराजकः । सन्तुष्टः पुष्टसचिवो दृढ़मूलः स पार्थिवः ॥ ३ ॥ यस्य योधा सुसन्तुष्टाः सान्त्विताः सूपधास्थिताः । अल्पेनापि स दण्डेन महीं जयति पार्थिवः ॥ ४ ॥ पौरजानपदा यस्य भूतेषु च दयालवः । सधना धान्यवन्तश्च दृढ़मूलः स पार्थिवः ॥ ५ ॥ प्रतापकालमधिकं

यदा मन्येत चात्मनः । तदा लिप्सेत मेधावी परभूमिधनान्युत ॥ ६ ॥ भोगेष्वदयमानस्य भूतेषु च दयावतः । वर्द्धते त्वरमाणस्य विषयो रक्षितात्मनः ॥ ७ ॥ तक्षेदात्मानमेवं स वनं परशुना यथा । यः सम्यक् वर्त्तमानेषु स्वेषु मिथ्या प्रवर्त्तते ॥ ८ ॥ नैव द्विषन्तो हीयन्ते राज्ञो नित्यमनिघ्नतः । क्रोधं निहन्तुं यो वेद तस्य द्वेष्टा न विद्यते ॥९॥ यदार्य्यजनविद्विष्टं कर्म तन्नाचरेद्बुधः । यत् कल्याणमभिध्यायेत्तत्रात्मानं नियोजयेत् ॥१०॥ नैनमन्येऽवजानन्ति नात्मना परितप्यते । कृत्यशेषेण यो राजा सुखान्यनुबुभूषति ॥ ११ ॥ इदं वृत्तं मनुष्येषु वर्त्तते यो महीपतिः । उभौ लोकौ विनिर्ज्जित्य विजये सम्प्रतिष्ठते ॥ १२ ॥

भीष्म उवाच । इत्युक्तो वामदेवेन सर्वं तत् कृतवान्नृपः । तथा कुर्वंस्त्वमप्येतौ लोकौ जेता न संशयः ॥ १३ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि वामदेव-
गीतासु चतुर्नवतोऽध्यायः ॥९४॥

---

युधिष्ठिर उवाच । अथ यो विजिगीषेत क्षत्रियः क्षत्रियं युधि । कस्तस्य विजये धर्मो ह्येतत् पृष्टो ब्रवीहि मे ॥ १ ॥

भीष्म उवाच । ससहायोऽसहायो वा राष्ट्रमागम्य भूमिपः । ब्रूयादहं वो राजेति रक्षिष्यामि च वः सदा ॥ २ ॥ मम धर्म्यं बलिं दत्त किम्वा मां प्रतिपत्स्यथ । ते चेत्तमागतं तत्र वृणुयुः कुशलं भवेत् ॥३॥ ते चेदक्षत्रियाः सन्तो विरुद्ध्येरन् कथञ्चन । सर्वोपायैर्नियन्तव्या विकर्म्मस्था नराधिप ॥ ४ ॥ अशक्तं क्षत्रियं मत्वा शस्त्रं गृह्णात्यथापरः । त्राणायाप्यसमर्थन्तं मन्यमानमतीव च ॥५॥

युधिष्ठिर उवाच । अथ यः क्षत्रियो राजा क्षत्रियं प्रत्युपव्रजेत् । कथं स प्रतियोद्धव्यस्तन्मे ब्रूहि पितामह ॥ ६ ॥

भीष्म उवाच । असन्नद्धोऽकवचिना योद्धव्य क्षत्रियो रणे । एक एकेन योध्यश्च विसृजेदक्षमं यथा ॥ ७ ॥ स चेत् सन्नद्ध आगच्छेत् सन्नद्धव्यं ततो भवेत् । स चेत् ससैन्य आगच्छेत् ससैन्यस्तमथाह्वयेत् ॥ ८ ॥ स चेन्निकृत्या युध्येत निकृत्या प्रतियोधयेत् । अथ चेद्धर्मतो युध्ये द्धर्म्मेणैव निवारयेत् ॥ ९ ॥ नाश्वेन रथिनं यायादुदियाद्रथिनं रथी । व्यसने न प्रहर्त्तव्यं न भीताय जिताय च ॥ १० ॥ इषुर्लिप्तो न कर्णी स्यादसतामेतदायुधम् । यथार्थमेव योद्धव्य न क्रुध्येत जिघांसतः ॥ ११ ॥ निष्प्राणो नाभिहन्तव्यो नानपत्यः कथञ्चन । भग्नशस्त्रो विपन्नश्च कृत्तज्यो हतवाहनः । चिकित्स्यः स्यात् स्वविषये प्राप्यो वा स्वगृहे भवेत् ॥१२॥ साधूनान्तु यदा भेदात् साधुश्चेद्व्यसनी भवेत् । निर्व्रणश्च स मोक्तव्य एष धर्मः सनातनः ॥ १३ ॥ तस्माद्धर्म्मेण योद्धव्यमिति स्वायम्भुवोऽब्रवीत् । सत्सु नित्यः सतां धर्मस्तमास्थाय न नाशयेत् ॥ १४ ॥ यो वै जयत्यधर्म्मेण क्षत्रियो धर्मसङ्करः । आत्मानमात्मना हन्ति पापो निकृतिजीवनः ॥ १५ ॥ कर्म चैतदसाधूनामसाधुं साधुना जयेत् । धर्म्मेण निधनं श्रेयो न जयः पापकर्मणा ॥ १६ ॥ नाधर्मश्चरितो राजन् सद्यः फलति गौरिव । मूलानि च प्रशाखाश्च दहन् समधिगच्छति ॥ १७ ॥ पापेन कर्मणा वित्तं लब्ध्वा पापः प्रहृष्यति । स वर्द्धमानः स्तेयेन पापः पापे प्रसज्जति ॥ १८ ॥ न धर्मोऽस्तीति मन्वानः शुचीनवहसन्निव । अश्रद्दधानश्च भवेद्विनाशमुपगच्छति ॥ १९ ॥ सम्बद्धो वारुणैः पाशैरमर्त्त्य इव मन्यते । महादृतिरिवाध्मातः सुकृते नैव वर्त्तते । ततः समूलो ह्रियते नदीकूलादिव द्रुमः ॥ २० ॥ अथैनमभिनन्दन्ति भिन्नं कुम्भमिवाश्मनि । तस्माद्धर्म्मेण विजयं कोषं लिप्सेत भूमिपः ॥ २१ ॥

इति शान्तिपर्व्वणि राजधर्मानुशासनपर्व्वणि विजिगीषमाणवृत्ते पञ्चनवतोऽध्यायः ॥ ९५ ॥

भीष्म उवाच। नाधर्मेण महीं जेतुं लिप्सेत जगतीपतिः।
अधर्मविजयं लब्ध्वा कोऽनुमन्येत भूमिपः॥ १॥ अधर्मयुक्तो
विजयो ह्यध्रुवोऽस्वर्ग्य एव च। सादयत्येष राजानं महीञ्च भरत-
र्षभ॥ २॥ विशीर्णकवचञ्चैव तवास्मीति च वादिनम्। कृताञ्जलिं
न्यस्तशस्त्रं गृहीत्वा न विहिंसयेत्॥ ३॥ बलेन विजितो यश्च न
तं युध्येत भूमिपः। सम्वत्सरं विप्रणयेत् तस्माज्जातः पुनर्भवेत्॥४॥
नार्वाक् सम्वत्सरात् कन्या प्रष्टव्या विक्रमाहृता। एवमेव धनं
सर्वं यच्चान्यत् सहसा हृतम्॥ ५॥ न तु वध्यधनं तिष्ठेत् पिबेयु-
र्ब्राह्मणाः पयः। युञ्जीरन्नप्यनड्वाहं चान्तव्यं वा तदा भवेत्॥ ६॥
राज्ञा राजैव योद्धव्यस्तथा धर्मो विधीयते। नान्यो राजानमभ्य
स्येदराजन्यः कथञ्चन॥७॥ अनीकयोः संहतयोर्यदीयाद्ब्राह्मणो
ऽन्तरा। शान्तिमिच्छन्नुभयतो न योद्धव्यं तदा भवेत्॥ ८॥
मर्य्यादां शाश्वतीं भिन्द्याद्ब्राह्मणं योऽभिलङ्घयेत्। अथ चेल्लङ्घ-
येदेतां मर्य्यादां क्षत्रियब्रुवः॥ ९॥ असंख्येयस्तदूर्द्ध्वं स्यादना-
देयश्च संसदि। यस्तु धर्मविलोपेन मर्य्यादाभेदनेन च॥ १०॥
तां वृत्तिं नानुवर्त्तेत विजिगीषुर्महीपतिः। धर्मलब्धाद्धि विजया-
ल्लाभः कोऽभ्यधिको भवेत्॥ ११॥ सहसानार्य्यभूतानि क्षिप्रमेव
प्रसादयेत्। सान्त्वेन भोगदानेन स राज्ञां परमो नयः॥ १२॥
भुज्यमाना ह्ययोगेन स्वराष्ट्रादभितापिताः। अमित्रान् पर्य्युपासी
रन् व्यसनौघ प्रतीक्षिणः॥ १३॥ अमित्रोपग्रहञ्चास्य ते कुर्य्युः
क्षिप्रमापदि। अतुष्टाः सर्वतो राजन् राजव्यसनकाङ्क्षिणः॥ १४॥
नामित्रो विनिकर्त्तव्यो नातिच्छेद्यः कथञ्चन। जीवितं ह्यपति-
च्छिन्नः सन्त्यजेच्च कदाचन॥ १५॥ अल्पेनापि च संयुक्तस्तुष्यत्येव
नराधिपः। शुद्धं जीवितमेवापि तादृशो बहुमन्यते॥ १६॥
यस्य स्फीतो जनपदः सम्पन्नः प्रियराजकः। सन्तुष्टभृत्यसचिवो
दृढ़मूलः स पार्थिवः॥ १७॥ ऋत्विक् पुरोहिताचार्य्या ये चान्ये

श्रुतसत्त्वमाः । पूजार्हाः पूजिता यस्य स वै लोकविदुच्यते ॥ १८ ॥ एतेनैव च वृत्तेन महीं प्राप सुरोत्तमः । अनेन चेन्द्रविषयं विजिगीषन्ति पार्थिवाः ॥ १९ ॥ भूमिवर्ज्जं धनं राजा जित्वा राजन्महाहवे । अपि चान्नौषधीः शश्वदाजहार प्रतर्द्दनः ॥ २० ॥ अग्निहोत्राग्निशेषञ्च हविर्भोजनमेव च । आजहार दिवोदासस्ततो विप्रकृतोऽभवत् ॥ २१ ॥ सराजकानि राष्ट्राणि नाभागो दक्षिणां ददौ । अन्यत्र श्रोत्रियस्वाच्च तापसार्थाच्च भारत ॥२२॥ उच्चावचानि वृत्तानि धर्मज्ञानां युधिष्ठिर । आसन्राज्ञां पुराणानां सर्वं तन्मम रोचते ॥ २३ ॥ सर्वविद्यातिरेकेण जयमिच्छेन्महीपतिः । न मायया न दम्भेन य इच्छेद्भूतिमात्मनः ॥ २४ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि विजिगीषमाणवृत्ते षण्णवतोऽध्यायः ॥ ९६ ॥

---

युधिष्ठिर उवाच । क्षत्रधर्मान्न पापीयान् न धर्मोऽस्ति नराधिप । अपयानेन युद्धेन राजा हन्ति महाजनम् ॥ १ ॥ अथ स्म कर्मणा केन लोकान् जयति पार्थिवः । विद्वन् जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ २ ॥

भीष्म उवाच । निग्रहेण च पापानां साधूनां संग्रहेण च । यज्ञैर्दानैश्च राजानो भवन्ति शुचयोऽमलाः ॥ ३ ॥ उपरुन्धन्ति राजानो भूतानि विजयार्थिनः । त एव विजयं प्राप्य वर्द्धयन्ति पुनः प्रजाः ॥ ४ ॥ अपविध्यन्ति पापानि दानयज्ञतपोबलैः । अनुग्रहाय भूतानां पुण्यमेषां विवर्द्धते ॥ ५ ॥ यथैव क्षेत्रनिर्याता निर्यातुं क्षेत्रमेव च । हिनस्ति धान्यं कक्षञ्च न च धान्यं विनश्यति ॥ ६ ॥ एवं शस्त्राणि मुञ्चन्तो घ्नन्ति बध्याननेकधा । तस्यैषा निष्कृतिः कृत्स्ना भूतानां भावनं पुनः ॥ ७ ॥ यो भूतानि धना-

क्रान्त्या वधात् क्लेशाच्च रक्षति। दस्युभ्य प्राणदानात् स धनदः सुखदो विराट् ॥८॥ स सर्वयज्ञैराजानो राजाथाभयदक्षिणैः। अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ॥ ९ ॥ ब्राह्मणार्थे समुत्पन्ने योऽरिभिः सृत्य युध्यति। आत्मानं यूथमुत्सृज्य स यज्ञोऽनन्तदक्षिणः ॥ १० ॥ अभीतो विकिरन् शत्रून् प्रतिगृह्य शरांस्तथा। न तस्मात्रिदशाः श्रेयो भुवि पश्यन्ति किञ्चन ॥ ११ ॥ तस्य शस्त्राणि यावन्ति त्वचं भिन्दन्ति संयुगे। तावतः सोऽश्नुते लोकान् सर्वकामदुहोऽक्षयान् ॥ १२ ॥ यदस्य रुधिरं गात्रादाहवे संप्रवर्त्तते। सह तेनैव पापेन सर्वपापैः प्रमुच्यते ॥ १३ ॥ यानि दुःखानि सहते क्षत्रियो युधि तापितः। तेन तेन तपो भूय इति धर्मविदो विदुः ॥ १४ ॥ पृष्ठतो भीरवः सङ्ख्ये वर्त्तन्ते धर्मपूरुषाः। शूराच्छरणमिच्छन्तः पर्ज्जन्यादिव जीवनम् ॥ १५ ॥ यदि शूरास्तथा क्षेमे प्रतिरक्षेयथा भये। प्रतिरूपं जनं कुर्य्यान्न च तद्वर्त्तते तथा ॥ १६ ॥ यदि ते कृतमाज्ञाय नमस्कुर्य्युः सदैव तम्। युक्तं न्याय्यञ्च कुर्य्युस्ते न च तद्वर्त्तते तथा ॥ १७ ॥ पुरुषाणां समानानां दृश्यते महदन्तरम्। संग्रामेऽनीकवेलायामुत्क्रुष्टेऽभिपतत्स्वुत ॥१८॥ पतत्यभिमुख शूरः परान् भीरुः पलायते। आस्थाय स्वर्ग्यमध्वानं सहायान् विषमे त्यजेत् ॥ १९ ॥ मा स्म तांस्तादृशांस्तात जनिष्ठाः पुरुषाधमान्। ये सहायान् रणे हित्वा स्वस्तिमन्तो गृहान् ययुः ॥ २० ॥ अस्वस्ति तेभ्यः कुर्वन्ति देवा इन्द्रपुरोगमाः। त्यागेन यः सहायानां स्वान् प्राणांस्त्रातुमिच्छति ॥ २१ ॥ तं हन्युः काष्ठलोष्ट्रैर्वा दहेयुर्वा कटाग्निना। पशुवन्मारयेयुर्वा क्षत्रिया ये स्युरीदृशाः ॥ २२ ॥ अधर्मः क्षत्रियस्यैव यच्छय्यामरणं भवेत्। विसृजन् श्लेष्ममूत्राणि कृपणं परिदेवयन् ॥ २३ ॥ अविक्षतेन देहेन प्रलयं योऽधिगच्छति। क्षत्रियो नास्य तत् कर्म प्रशंसन्ति पुराविदः ॥ २४ ॥ न गृहे मरणं तात क्षत्रियाणां प्रशस्यते।

शौण्डीराणामशौण्डीर्य्यमधर्म्यं कृपणञ्च तत् ॥ २५ ॥ इदं दुःखं महत् कष्टं पापीय इति निष्टनन्। प्रतिध्वस्तमुखः पूतिरमात्या- ननुशोचयन् ॥ २६ ॥ अरोगाणां स्पृहयते मुहुर्मृत्युमपीच्छति। वीरो दृप्तोऽभिमानी च नेदृशं मृत्युमर्हति ॥ २७ ॥ रणेषु कदनं कृत्वा ज्ञातिभिः परिवारितः। तीक्ष्णैः शस्त्रैरभिक्लिष्टः क्षत्रियो मृत्युमर्हति ॥२८॥ शूरो हि काममन्युभ्यामाविष्टो युध्यते भृशम्। हन्यमानानि गात्राणि परैर्नैवावबुध्यते ॥ २९ ॥ स संख्ये निधनं प्राप्य प्रशस्तं लोकपूजितम्। स्वधर्मं विपुलं प्राप्य शक्रस्यैति सलोकताम् ॥ ३० ॥ सर्व्वोपायैरणमुखमातिष्ठंस्त्यक्तजीवितः। प्राप्नोतीन्द्रस्य सालोक्यं शूरः पृष्ठमदर्शयन् ॥ ३१ ॥ यत्र यत्र हतः शूरः शत्रुभिः परिवारितः। अक्षयांल्लभते लोकान् यदि दैन्यं न सेवते ॥ ३२ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि सप्तनवतोऽध्यायः ॥ ९७ ॥

---

युधिष्ठिर उवाच। के लोका युध्यमानानां शूराणामनिवर्त्ति- नाम्। भवन्ति निधनं प्राप्य तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। अम्बरीषस्य सम्वादमिन्द्रस्य च युधिष्ठिर ॥ २ ॥ अम्बरीषो हि नाभागिः स्वर्गं गत्वा सुदुर्लभम्। ददर्श सुरलोकस्थं शक्रेण सचिवं सह ॥ ३ ॥ सर्व्वतेजोमयं दिव्यं विमानवरमास्थितम्। उपर्य्युपरि गच्छन्तं स्वं वै सेनापतिं प्रभुम् ॥ ४ ॥ स दृष्ट्वोपरिगच्छन्तं सेना- पतिमुदारधीः। ऋद्धिं दृष्ट्वा सुदेवस्य विस्मितः प्राह वासवम् ॥५॥

अम्बरीष उवाच। सागरान्तां महीं कृत्स्नामनुशास्य यथा- विधि। चातुर्वर्ण्यं यथाशास्त्रं प्रवृत्तो धर्मकाम्यया ॥ ६ ॥ ब्रह्म-

चर्य्येण घोरेण गुर्वाचारेण सेवया। वेदानधीत्य धर्मेण राजशास्त्रञ्च केवलम्॥ ७॥ अतिथीनन्नपानेन पितृंश्च स्वधया तथा। ऋषीन् स्वाध्यायदीक्षाभिर्देवान् यज्ञैरनुत्तमैः॥ ८॥ क्षत्रधर्मे स्थितो भूत्वा यथाशास्त्रं यथाविधि। उदीक्षमाणः पृतनां जयामि युधि वासव॥ ९॥ देवराज सुदेवोऽयं मम सेनापतिः पुरा। आसीद्योधः प्रशान्तात्मा सोऽयं कस्मादतीव माम्॥ १०॥ अनेन क्रतुभिर्मुख्यैरिष्टं नैव द्विजा न च। तर्पिता विधिवच्छक्र सोऽयं कस्मादतीव माम्॥ ११॥

इन्द्र उवाच। एतस्य विततस्तात सुदेवस्य बभूव ह। संग्रामयज्ञः सुमहान् यश्चान्यो युध्यते नरः॥ १३॥ सन्नद्धो दीक्षितः सर्वो योधः प्राप्य चमूमुखम्। युद्धयज्ञाधिकारस्थो भवतीति विनिश्चयः॥ १२

अम्बरीष उवाच। कानि यज्ञे हवींष्यस्मिन् किमाज्यं का च दक्षिणा। ऋत्विजश्चात्र के प्रोक्तास्तन्मे ब्रूहि शतक्रतो॥ १४॥

इन्द्र उवाच। ऋत्विजः कुञ्जरास्तत्र वाजिनोऽध्वर्य्यवस्तथा। हवींषि परमांसानि रुधिरं त्वाज्यमुच्यते॥ १५॥ शृगालगृध्रकाकोलाः सदस्यास्तत्र पत्रिणः। आज्यशेषं पिबन्त्येते हविः प्राश्नन्ति चाध्वरे॥ १६॥ प्रासतोमरसङ्घाताः खड्गशक्तिपरश्वधाः। ज्वलन्तो निशिताः पीताः स्रुचस्तस्याथ सत्रिणः॥१७॥ चापवेगायतस्तीक्ष्णः परकायावभेदनः। ऋजुः सुनिशितः पीतः सायकश्च स्रुवो महान्॥ १८॥ द्वीपिचर्मावनद्धश्च नागदन्तकृतत्सरुः। हस्तिहस्तहरः खड्गः स्फ्यो भवेत्तत्र संयुगे॥ १९॥ ज्वलितैर्निशितैः प्रासशक्त्यृष्टिसपरश्वधैः। शैक्यायसमयैस्तीक्ष्णैरभिघातो भवेद्वसु। संख्यासमयविस्तीर्णमभिजातोद्भवं बहु॥२०॥ आवेगाद्यच्च रुधिरं संग्रामे स्रवते भुवि। सास्य पूर्णाहुतिर्होमे समृद्धा सर्वकामधुक्॥ २१॥ छिन्धि भिन्धीत्ययं शब्दः श्रूयते

वाहिनीमुखे। सामानि सामगास्तस्य गायन्ति यमसादने ॥ २२ ॥ हविर्द्धानन्तु तस्याहुः परेषां वाहिनीमुखम्। कुञ्जराणां हया-नाञ्च वर्म्मिणाञ्च समुच्चयः। अग्निः श्येनचितो नाम स च यज्ञे विधीयते ॥ २३ ॥ उत्तिष्ठते कवन्धोऽत्र सहस्रे निहते तु यः। स यूपस्तस्य शूरस्य खादिरोऽष्टाश्रिरुच्यते ॥ २४ ॥ इड़ोपहूताः क्रोशन्ति कुञ्जराङ्कुशेरिताः। व्याघुष्टतलनादेन वषट्कारेण पार्थिव। उद्गाता तत्र संग्रामे त्रिसामा दुन्दुभिर्न्नृप ॥ २५ ॥ ब्रह्मस्वे क्रियमाणे तु त्यक्त्वा युद्धे प्रियां तनुम्। आत्मानं यूपमुत्-सृज्य स यज्ञोऽनन्तदक्षिणः ॥ २६ ॥ भर्त्तुरर्थे च यः शूरो विक्रमेद्वाहिनीमुखे। न भयाद्विनिवर्त्तेत तस्य लोका यथा मम ॥२७॥ नीलचर्म्मावृतैः खड़्गैर्बाहुभिः परिघोपमैः। यस्य वेदिरुपस्तीर्णा तस्य लोका यथा मम ॥ २८ ॥ यस्तु नापेक्षते कञ्चित् सहायं विजये स्थितः। विगाह्य वाहिनीमध्यं तस्य लोका यथा मम ॥२९॥ यस्य शोणितसङ्घाता भेरीमण्डूककच्छपा। वीरास्थिशर्करा दुर्गा मांसशोणितकर्द्दमा ॥ ३०॥ असिचर्म्मप्लवा घोरा केशशैवलशाद्वला। अश्वनागरथैश्चैव संछिन्नैः कृतसंक्रमा ॥ ३१ ॥ पताकाध्वजवानीरा हतवारणवाहिनी। शोणितोदा सुसंपूर्णा दुस्तरा पारगैर्नरैः ॥ ३२ ॥ हतनागमहानक्रा परलोकवहाशिवा। ऋष्टिखड़्गा महानौका गृध्रकङ्कवलप्लवा ॥ ३३ ॥ पुरुषादानुचरिता भीरूणां कश्मलावहा। नदी योधस्य संग्रामे तदस्यावभृथं स्मृतम् ॥ ३४ ॥ वेदी यस्य त्वमित्राणां शिरोभिश्च प्रकीर्य्यते। अश्वस्कन्धैर्गजस्कन्धै-स्तस्य लोका यथा मम ॥ ३५ ॥ पत्नीशाला कृता यस्य परेषां वाहिनीमुखम्। हविर्द्धानं स्ववाहिन्यास्तदस्याहुर्मनीषिणः ॥३६॥ सदस्या दक्षिणा योधा आग्नीध्रश्चोत्तरां दिशम्। शत्रुसेनाकलत्रस्य सर्व्वलोका न दूरतः ॥ ३७ ॥ यदा तूभयतो व्यूहे भवत्याकाश-मग्रतः। सास्य वेदिस्तदा यज्ञैर्नित्यं वेदास्त्रयोऽग्नयः ॥ ३८ ॥

यस्तु योधः परावृत्तः सन्त्रस्तो हन्यते परैः। अप्रतिष्ठः स नरकं याति नास्त्यत्र संशयः॥ ३९॥ यस्य शोणितवेगेन वेदिः स्यात् संपरिप्लुता। केशमांसास्थिसम्पूर्णा स गच्छेत् परमां गतिम्॥४०॥ यस्तु सेनापतिं हत्वा तद्यानमधिरोहति। स विष्णुविक्रमक्रामी बृहस्पतिसमः प्रभुः॥ ४१॥ नायकं तत्कुमारम्वा यो वा स्यात्तत्र पूजितः। जीवग्राहं प्रगृह्णाति तस्य लोका यथा मम॥ ४२॥ आहवे तु हतं शूरं न शोचेत कथञ्चन। अशोच्यो हि हतः शूरः स्वर्गलोके महीयते॥ ४३॥ न ह्यन्नं नोदकं तस्य न स्नानं नाप्यशौचकम्। हतस्य कर्त्तुमिच्छन्ति तस्य लोकान् शृणुष्व मे॥ ४४॥ वराप्सरःसहस्राणि शूरमायोधने हतम्। त्वरमाणाभिधावन्ति मम भर्त्ता भवेदिति॥ ४५॥ एतत्तपश्च पुण्यञ्च धर्म्मश्चैव सनातनः। चत्वारश्चाश्रमास्तस्य यो युद्धमनुपालयेत्॥४६॥ वृद्धबालौ न हन्तव्यौ न च स्त्री नैव पृष्ठतः। तृणपूर्णमुखश्चैव तवास्मीति च यो वदेत्॥ ४७॥ जम्भं वृत्तं बलं पाकं शतमायं विरोचनम्। दुर्वार्य्यं चैव नमुचिं नैकमायञ्च शम्बरम्॥ ४८॥ विप्रचित्तिञ्च दैतेयं दनोः पुत्रांश्च सर्वशः। प्रह्लादञ्च निहत्याजौ ततो देवाधिपोऽभवम्॥ ४९॥

भीष्म उवाच। इत्येतत् शक्रवचनं निशम्य प्रतिगृह्य च। योधानामात्मनः सिद्धिमम्बरीषोऽभिपन्नवान्॥ ५०॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि
अष्टनवतोऽध्यायः॥ ९८॥

---

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। प्रतर्द्दनो मैथिलश्च संग्रामं यत्र चक्रतुः॥ १॥ यज्ञोपवीती संग्रामे जनको मैथिलो यथा। यो धानुद्धर्षयामास तन्निबोध युधिष्ठिर॥ २॥ जनको मैथिलो राजा महात्मा सर्वतत्त्ववित्।

योधान् स्वान् दर्शयामास स्वर्गं नरकमेव च ॥ ३ ॥ अभीक्ष्णा-
मिमे लोका भास्वन्तो हन्त पश्यत । पूर्णा गन्धर्वकन्याभिः सर्व-
कामदुहोऽच्ययाः ॥ ४ ॥ इमे पलायमानानां नरकाः प्रत्युप-
स्थिताः । अकीर्त्तिः शाश्वती चैव पतितव्यमनन्तरम् ॥ ५ ॥ तान्
दृष्ट्वारीन् विजयत भूत्वा संत्यागबुद्धयः । नरकस्याप्रतिष्ठस्य मा
भूत वशवर्त्तिनः । त्यागमूलं हि शूराणां स्वर्गद्वारमनुत्तमम् ॥ ६ ॥
इत्युक्तास्ते नृपतिना योधाः परपुरञ्जय । अजयन्त रणे शत्रून्
हर्षयन्तो नरेश्वरम् । तस्मादात्मवता नित्यं स्थातव्यं रणमूर्द्धनि
॥ ७ ॥ गजानां रथिनो मध्ये रथानामनुसादिनः । सादिनामन्तरे
स्थाप्यं पादातमपि दंशितम् ॥ ८ ॥ य एवं व्यूहते राजा स नित्यं
जयति द्विषः । तस्मादेवं विधातव्यं नित्यमेव युधिष्ठिर ॥ ९ ॥
सर्वे स्वर्गतिमिच्छन्ति सुयुद्धेनातिमन्यवः । क्षोभयेयुरनीकानि
सागरं मकरा यथा ॥ १० ॥ हर्षयेयुर्विषण्णांश्च व्यवस्थाप्य पर-
स्परम् । जिताञ्च भूमिं रक्षेत भग्नान्नात्यनुसारयेत् ॥ ११ ॥ पुन-
रावर्त्तमानानां निराशानाञ्च जीविते । वेगः सुदुःसहो राजं-
स्तस्मान्नात्यनुसारयेत् ॥ १२ ॥ न हि प्रहर्त्तुमिच्छन्ति शूराः प्रद्र-
वतो भृशम् । तस्मान् पलायमानानां कुर्य्यान्नात्यनुसारणाम् ॥१३॥
चराणामचरा ह्यन्न मदंष्ट्रा दंष्ट्रिणामपि । आपः पिपासतामन्न-
मन्नं शूरस्य कातराः ॥ १४ ॥ समानपृष्ठोदरपाणिपादाः परा-
भवं भीरवो वै व्रजन्ति । अतो भयार्त्ताः प्रणिपत्य भूयः कृत्वा-
ञ्जलीनुपतिष्ठन्ति शूरान् ॥१५॥ शूरबाहुषु लोकोऽयं लभ्यते पुत्र-
वत् सदा । तस्मात् सर्वास्ववस्थासु शूरः सम्मानमर्हति ॥ १६ ॥
न हि शौर्य्यात् परं किञ्चित्त्रिषु लोकेषु विद्यते । शूरः सर्वं पाल-
यति सर्वं शूरे प्रतिष्ठितम् ॥ १७ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि
नवनवतोऽध्यायः ॥ ९९ ॥

युधिष्ठिर उवाच । यथा जयार्थिनः सेनां नयन्ति भरतर्षभ । ईषद्धर्मं प्रपीड्यापि तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच । सत्येन हि स्थितो धर्म्म उपपत्त्या तथापरे । साध्वाचारतया केचित्तथैवौपायिकादपि ॥ २ ॥ उपायधर्मान् वक्ष्यामि सिद्धार्थानर्थधर्म्मयोः । निर्म्मर्य्यादा दस्यवस्तु भवन्ति परिपन्थिनः ॥ ३ ॥ तेषां प्रतिविघातार्थं प्रवक्ष्याम्यथ नैगमम् । कार्य्याणां सर्वसिद्धार्थं तानुपायान्निबोध मे ॥ ४ ॥ उभे प्रज्ञे वेदितव्ये ऋज्वी वक्रा च भारत । जानन् वक्रां न सेवेत प्रतिबाधेत चागतान् ॥ ५ ॥ अमित्रा एव राजानं भेदेनोपचरन्त्युत । तां राजा निकृतिं जानन् यथामित्रान् प्रबाधते ॥ ६ ॥ गजानां पार्श्व चर्म्माणि गोवृषाजगराणि च । शल्यकण्टकलोहानि तनुत्रचमराणि च ॥७॥ शीतपीतानि शस्त्राणि सन्नाहा पीतलोहिताः । नाना-रञ्जनरक्ताः स्युः पताकाः केतवश्च ह ॥ ८ ॥ ऋष्टयस्तोमराः खड्गाः निशिताश्च परश्वधाः । फलकान्यथ चर्म्माणि प्रतिकल्प्या-न्यनेकशः ॥ ९ ॥ अभिनीतानि शस्त्राणि योधाश्च कृतनिश्चयाः । चैत्र्यां वा मार्गशीर्ष्यां वा सेनायोगः प्रशस्यते ॥ १० ॥ पक्वशस्या हि पृथिवी भवत्यम्बुमती तदा । नैवातिशीतो नात्युष्णः कालो भवति भारत ॥ ११ ॥ तस्मात्तथा योजयीत परेषां व्यसनेऽथवा । एते हि योगाः सेनायाः प्रशस्ताः परबाधने ॥ १२ ॥ जलवांस्तृण-वान्मार्गः समो गम्यः प्रशस्यते । चारैः सुविदिताभ्यासः कुशलै-र्वनगोचरैः ॥ १३ ॥ न ह्यरण्येन शक्येत गन्तुं मृगगणैरिव । तस्मात् सेनासु तानेव योजयन्ति जयार्थिनः ॥ १४ ॥ अग्रतः पुरु-षानीकं शक्तञ्चापि कुलोद्गतम् । आवासस्तोयवान् दुर्ग एकमार्गः प्रशस्यते ॥ १५ ॥ परेषामुपसर्प्याणां प्रतिषेधस्तथा भवेत् । आका-शात्तु वनाभ्यासं मन्यन्ते गुणवत्तरम् ॥ १६ ॥ बहुभिर्गुणजातैश्च ये युद्धकुशला जनाः । उपन्यासो भवेत्तत्र बलानां नातिदूरतः॥१७॥

उपन्यासावतरणं पदातानाञ्च गूहनम् । अथ शत्रुप्रतीघातमापदर्थं परायणम् ॥ १८ ॥ सप्तर्षीन् पृष्ठतः कृत्वा युद्धे युरचला इव । अनेन विधिना शत्रून् जिगीषेतापि दुर्ज्जयान् ॥ १९ ॥ यतो वायुर्यतः सूर्य्यो यतः शुक्रस्ततो जयः । पूर्वं पूर्वं ज्याय एषां सन्निपाते युधिष्ठिर ॥ २० ॥ अकर्द्दमामनुदकाममर्य्यादामलोष्टकाम् । अश्वभूमिं प्रशंसन्ति ये युद्धकुशला जना ॥ २१ ॥ सपङ्का गर्त्तरहिता रथभूमिः प्रशस्यते । नीचद्रुममहाकच्चा सोदका हस्तियोधिनाम् ॥ २२ ॥ बहुदुर्गा महाकच्चा वेणुवेत्रसमाकुला । पदातीनां चमा भूमिः पर्वतोपवनानि च ॥ २३ ॥ पदातिबहुला सेना दृढ़ा भवति भारत । रथाश्वबहुला सेना सुदिनेषु प्रशस्यते ॥ २४ ॥ पदातिनागबहुला प्रावृट्काले प्रशस्यते । गुनानेतान् प्रसंख्याय देशकालौ प्रयोजयेत् ॥ २५ ॥ एवं सञ्चिन्त्य यो याति तिथिनचत्रपूजितः । विजयं लभते नित्यं सेनां सम्यक् प्रयोजयन् ॥ २६ ॥ प्रसुप्तांस्तृषितान् श्रान्तान् प्रकीर्णान्नाभिघातयेत् । मोचे प्रयाणे चलने पानभोजनकालयो ॥ २७ ॥ अतिचिप्तान् व्यतिचिप्तान् निहतान् प्रतनूकृतान् । अविश्रब्धान् कृतारम्भानुपन्यासान् प्रतापितान् । वहिश्चरानुपन्यासान् कृतवेश्मानुसारिणः ॥ २८ ॥ पारम्पर्य्यागते द्वारे ये केचिदनुवर्त्तिनः । परिचर्य्यावतो द्वारे ये च केचन वर्गिणः ॥ २९ ॥ अनीकं ये विभिन्दन्ति भिन्नं संस्थापयन्ति च । समानाशनपानास्ते कार्य्या द्विगुणवेतनाः ॥ ३० ॥ दशाधिपतयः कार्य्याः शताधिपतयस्तथा । ततः सहस्राधिपतिं कुर्य्याच्छूरमतन्द्रितम् ॥ ३१ ॥ यथा मुख्यात् सन्निपात्य वक्तव्याः संशपामहे । विजयार्थं हि संग्रामे न त्यचामः परस्परम् ॥ ३२ ॥ इहैव ते निवर्त्तन्तां ये च केचन भीरवः । ये घातयेयुः प्रवरं कुर्वाणास्तुमलम्प्रति ॥ ३३ ॥ न सन्निपाते प्रदरं बधं वा कुर्य्युरीदृशाः । आत्मानञ्च स्वपचञ्च पालयन् हन्ति संयुगे ॥ ३४ ॥

अर्थनाशो वधोऽकीर्त्तिरयशश्च पलायने। अमनोज्ञासुखा वाचः पुरुषस्य पलायने ॥ ३५ ॥ प्रतिध्वस्तोष्ठदन्तस्य न्यस्तसर्वायुधस्य च। अमित्रैरवरुद्धस्य द्विषतामस्तु नः सदा ॥ ३६ ॥ मनुष्यापसदा ह्येते ये भवन्ति पराङ्मुखाः। राशिवर्द्धनमात्रास्ते नैव ते प्रेत्य नो इह ॥ ३७॥ अमित्रा हृष्टमनसः प्रत्युद्यान्ति पलायिनम्। जयिनस्तु नरास्तात वन्दनैर्मङ्गलेन च ॥ ३८ ॥ यस्य स्म संग्रामगता यशो वै घ्नन्ति शत्रवः। तदसह्यतरं दुःखमहं मन्ये वधादपि ॥३९॥ जयं जानीत धर्म्मस्य मूलं सर्वसुखस्य च। या भीरूणां परा ग्लानिः शूरस्तामधिगच्छति ॥ ४० ॥ ते वयं स्वर्गमिच्छन्तः संग्रामे त्यक्तजीविताः। जयन्तो बध्यमाना वा प्राप्नुयाम महद्गतिम् ॥४१॥ एवं संशप्तशपथाः समभित्यक्तजीविताः। अमित्रवाहिनीं वीराः प्रतिव्याहरन्त्यभीरवः ॥ ४२ ॥ अग्रतः पुरुषानीकमसिचर्म्मवतां भवेत्। पृष्ठतः शकटानीकं कलत्रं मध्यतस्तथा ॥ ४३ ॥ परेषाम्प्रतिघातार्थं पदातीनाञ्च गूहनम्। अपि तस्मिन् पुरे वृद्धा भवेयुर्ये पुरोगमाः ॥४४॥ ये पुरस्तादभिमताः सत्त्ववन्तो मनस्विनः। ते पूर्वमभिवर्त्तेरंस्तानेवेतरे जनाः ॥ ४५ ॥ अपि चोद्धर्षणं कार्य्यं भीरूणामपि यत्नत। स्कन्धदर्शनमात्रात्तु तिष्ठेयुर्वा समीपतः॥४६॥ संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून्। सूचीमुखमनीकं स्यादल्पानां बहुभिः सह ॥ ४७ ॥ सम्प्रयुक्ते निकृष्टे वा सत्यं वा यदि वानृतम्। प्रगृह्य बाहून् क्रोशेत भग्ना भग्ना परे इति ॥४८॥ आगतं मेऽमित्रबलं प्रहरध्वमभीतवत्। सत्त्ववन्तोऽभिधावेयुः कुर्वन्तो भैरवान्रवान् ॥ ४९ ॥ क्ष्वेडाः किलकिलाः शब्दाः क्रकचा गोविषाणिकाः। भेरीमृदङ्गपणवान्नादयेयुः पुरस्सरान् ॥ ५० ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि शततमोऽध्यायः ॥ १०० ॥

---

युधिष्ठिर उवाच । किं शीलाः किं समाचाराः कथं रूपाश्च भारत । किं सन्नाहाः कथं शस्त्रा जनाः स्युः सङ्गरे क्षमाः ॥ १ ॥

भीष्म उवाच । यथा चरितमेवात्र शस्त्रं पत्रं विधीयते । आचरन् वीरपुरुषस्तथा कर्म्मसु वर्त्तते ॥ २ ॥ गान्धाराः सिन्धु-सौवीरा नखरप्रासयोधिनः । अभीरवः सुबलिनस्तद्दलं सर्वपार-गम् ॥ ३ ॥ सर्वशस्त्रेषु कुशलाः सत्त्ववन्तो ह्युशीनराः । प्राच्या मातङ्गयुद्धेषु कुशलाः कूटयोधिनः ॥ ४ ॥ तथा जवनकाम्बोजा मथुरामभितश्च ये । एते नियुद्धकुशला दाक्षिणात्यासिपाणयः॥५॥ सर्वत्र शूरा जायन्ते महासत्त्वा महाबलाः । प्राय एव समुद्दिष्टा लक्षणानि तु मे शृणु ॥ ६ ॥ सिंहशार्दूलवाङ्नेत्राः सिंहशार्दूल-गामिनः । पारावतकुलिङ्गाक्षाः सर्व्वे शूराः प्रमाथिनः ॥ ७ ॥ मृगस्वरा द्वीपिनेत्रा ऋषभाक्षास्तरस्विनः । प्रमादिनश्च मन्दाश्च क्रोधनाः किङ्किणीस्वनाः ॥ ८ ॥ मेघस्वनाः क्रोधमुखाः केचित् करभसन्निभाः । जिह्मनासाग्रजिह्वाश्च दूरगाः दूरपातिनः ॥ ९॥ विड़ालकुब्जतनवस्तनुकेशास्तनुत्वचः । शीघ्राश्चपलवृत्ताश्च ते भवन्ति दुरासदाः ॥ १० ॥ गोधानिमीलिताः केचिन्मृदुप्रकृतयस्तथा । तुरङ्गगतिनिर्घोषास्ते नराः पारयिष्णवः ॥ ११ ॥ सुसंहताः सुत-नवो व्यूढ़ोरस्काः सुसंस्थिताः । प्रवादितेषु कुप्यन्ति हृष्यन्ति कलहेषु च ॥ १२ ॥ गम्भीराक्षा निःसृताक्षाः पिङ्गाक्षा भ्रुकुटी-मुखाः । नकुलाक्षास्तथा चैव सर्व्वे शूरास्तनुत्यजः ॥ १३ ॥ जिह्माक्षाः प्रललाटाश्च निर्म्मांसहनवोऽपि च । वज्रबाह्वङ्गुलीचक्राः कृशा धमनिसन्तताः ॥ १४ ॥ प्रविशन्ति च वेगेन साम्पराये ह्युप-स्थिते । वारणा इव संमत्तास्ते भवन्ति दुरासदाः ॥ १५ ॥ दीप्त-स्फुटितकेशान्ताः स्थूलपार्श्वहनूमुखाः। उन्नतांसाः पृथुग्रीवा विकटाः स्थूलपिण्डकाः ॥ १६ ॥ उद्धता इव सुग्रीवा विनता विहगा इव । पिण्डशीर्षाहिवक्त्राश्च वृषदंशमुखास्तथा ॥ १७ ॥ उग्रस्वरा मन्यु-

मन्तो यद्धेष्वाराबसारिणः । अधर्मज्ञावलिप्ताश्च घोरा रौद्रप्रदर्शनाः ॥ १८ ॥ त्यक्तात्मानः सर्व एते अन्त्यजा ह्यनिवर्त्तिनः । पुरस्कार्य्याः सदा सैन्ये हन्यन्ते घ्नन्ति चाप्रियैः ॥ १९ ॥ अधार्मिका भिन्नवृत्ताः सान्त्वेनैषां पराभवः । एवमेव प्रकुप्यन्ति राज्ञोऽप्येते ह्यभीक्ष्णशः ॥ २० ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि जिगीषमाणवृत्ते एकाधिकशततोऽध्यायः ॥ १०१ ॥

---

युधिष्ठिर उवाच । जयित्र्याः कानि रूपाणि भवन्ति भरतर्षभ । पृतनायाः प्रशस्तानि तानि चेच्छामि वेदितुम् ॥ १ ॥

भीष्म उवाच । जयित्र्या यानि रूपाणि भवन्ति भरतर्षभ । पृतनायाः प्रशस्तानि तानि वक्ष्यामि सर्वशः ॥ २ ॥ दैवे पूर्वं प्रकुपिते मानुषे कालचोदिते । तद्विद्वांसोऽनुपश्यन्ति ज्ञानदिव्येन चक्षुषा ॥ ३ ॥ प्रायश्चित्तविधिञ्चात्र जपहोमांश्च तद्विदः । मङ्गलानि च कुर्वन्ति शमयन्त्यहितानि च ॥ ४ ॥ उदीर्णमनसो योधा वाहनानि च भारत । यस्यां भवन्ति सेनायां ध्रुवं तस्यां परो जयः ॥ ५ ॥ अन्वेतान् वायवो वान्ति तथैवेन्द्रधनंषि च । अनुप्लवन्ते मेघाश्च तथादित्यस्य रश्मयः ॥६॥ गोमायवश्चानुकूला बलगृध्राश्च सर्वशः । अर्हयेयुर्यदा सेनां तदा सिद्धिरनुत्तमा ॥ ७ ॥ प्रसन्नभाः पावकश्चोर्द्धरश्मिः प्रदक्षिणावर्त्तशिखो विधूमः । पुण्या गन्धाश्चाहुतानां भवन्ति जयस्यैतद्भाविनो रूपमाहुः ॥ ८ ॥ गम्भीरशब्दाश्च महास्वनाश्च शङ्खाश्च भेर्य्यश्च नदन्ति यत्र । युयुत्सवश्चाप्रतिपा भवन्ति जयस्यैतद्भाविनो रूपमाहुः ॥ ९ ॥ इष्टा मृगाः पृष्ठतो वामतश्च संप्रस्थितानाञ्च गमिष्यताञ्च । जिघांसतां दक्षिणः सिद्धिमाहुर्ये त्वग्रतस्ते प्रतिषेधयन्ति ॥ १० ॥ माङ्गल्यशब्दान् शकुना वदन्ति

हंसाः क्रौञ्चाः शतपत्राश्च चाषाः । हृष्टा योधाः सत्त्ववन्तो भवन्ति जयस्यैतद्भाविनो रूपमाहुः ॥ ११ ॥ शस्त्रैर्यन्त्रैः कवचैः केतुभिश्च सुभानुभिर्मुखवर्णैश्च यूनाम् । भ्राजिष्मती दुष्प्रतिवीक्षणीया येषाञ्चमूस्तेऽभिभवन्ति शत्रून् ॥ १२ ॥ शुश्रूषवश्चानभिमानिनश्च परस्परं सौहृदमास्थिताश्च । येषां योधाः शौचमनुष्ठिताश्च जयस्यैतद्भाविनो रूपमाहुः ॥ १३ ॥ शब्दा स्पर्शास्तथा गन्धा विचरन्ति मनःप्रियाः । धैर्य्यञ्चाविशते योधान् विजयस्य मुखञ्च तत् ॥ १४ ॥ इष्टो वामः प्रविष्टस्य दक्षिणः प्रविविक्षतः । पश्चात् सम्बाधयत्यर्थं पुरस्ताच्च निषेधति ॥ १५ ॥ संभृत्य महतीं सेनां चतुरङ्गां युधिष्ठिर ॥ १६ ॥ साम्नैव वर्त्तयेः पूर्वं प्रयतेथास्ततो युधि । जघन्य एष विजयो यद्युद्धं नाम भारत । याहच्छिको युधि जयो दैवो वेति विचारणम् ॥ १७ ॥ अपामिव महावेगस्त्रस्ता इव महामृगाः । दुर्न्निवार्य्यतमा चैव प्रभग्ना महती चमूः ॥ १८ ॥ भग्ना इत्येव भज्यन्ते विद्वांसोऽपि न कारणम् । उदारसारा महती रुरुजङ्घोपमा चमूः ॥ १९ ॥ परस्परज्ञाः संहृष्टास्त्यक्तप्राणाः सुनिश्चिताः । अपि पञ्चाशतं शूरा मृद्नन्ति परवाहिनीम् ॥ २० ॥ अपि वा पञ्च षट् सप्त संहताः कृतनिश्चयाः । कुलीनाः पूजिताः सम्यग्विजयन्तीह शात्रवान् ॥ २१ ॥ सन्निपातो न मन्तव्यः शक्ये सति कथञ्चन । सान्त्वभेदप्रदानानां युद्धमुत्तरमुच्यते ॥ २२ ॥ सन्दर्शनेनैव सेनाया भयं भीरून् प्रबाधते । वज्रादिव प्रज्वलितादियं क्व नु पतिष्यति ॥ २३ ॥ अभिप्रयातां समितिं ज्ञात्वा ये प्रतियान्त्यथ । तेषां स्पन्दन्ति गात्राणि योधानां विजयस्य च ॥२४॥ विषयो व्यथते राजन् सर्वः सस्थाणुजङ्गमः । अस्त्रप्रतापतप्तानां मज्जा सीदति देहिनाम् ॥ २५ ॥ तेषां सान्त्वं क्रूरमिश्रं प्रणेतव्यं पुनः पुनः । संपीड्यमाना हि परैर्योगमायान्ति सर्वतः ॥ २६ ॥ आन्तराणाञ्च भेदार्थं चरानभ्यवचारयेत् । यश्च तस्मात् परो राजा

तेन सन्धिः प्रशस्यते ॥२७॥ न हि तस्यान्यथा पीड़ा शक्या कर्त्तुं तथाविधा। यथा सार्द्धममित्रेण सर्वतः प्रतिबाधनम् ॥ २८ ॥ क्षमा वै साधमायाति न ह्यसाधुं क्षमा सदा। क्षमायाश्चाक्षमायाश्च पार्थ विद्धि प्रयोजनम् ॥२९॥ विजित्य क्षममाणस्य यशो राज्ञो विवर्द्धते। महापराधे ह्यप्यस्मिन् विश्वसन्त्यपि शत्रवः ॥ ३० ॥ अन्यते कर्षयित्वा तु क्षमा सध्वीति शम्बरः। असन्तप्तन्तु यद्दारु प्रत्येति प्रकृतिं पुनः ॥३१॥ नैतत् प्रशंसन्त्याचार्य्या न तु साधुनिदर्शनम्। अक्रोधेनाविनाशेन नियन्तव्याः स्वपुत्रवत् ॥ ३२ ॥ द्वेष्यो भवति भूतानामुग्रो राजा युधिष्ठिर। मृदुमप्यवमन्यन्ते तस्मादुभयमाचरेत् ॥ ३३ ॥ प्रहरिष्यन् प्रियं ब्रूयात् प्रहरन्नपि भारत। प्रहृत्य च कृपायीत शोचन्निव रुदन्निव ॥ ३४ ॥ न मे प्रिय यन्निहताः संग्रामे मामकैर्नरैः। न च कुर्वन्ति मे वाक्यमुच्यमानाः पुनः पुनः ॥ ३५ ॥ अहो जीवितमाकाङ्क्षे नेदृशो वधमर्हति। सुदुर्लभाः सुपुरुषाः संग्रामेष्वपलायिनः ॥ ३६ ॥ कृतं ममाप्रियं तेन येनायं निहतो मृधे। इति वाचा वदन् हन्तॄन् पूजयेत रहोगतः ॥ ३७ ॥ हन्तॄणामाहतानाञ्चयत् कुर्य्युरपराधिनः। क्रोशेद्बाहुं प्रगृह्यापि चिकीर्षन् जनसंग्रहम् ॥ ३८ ॥ एवं सर्वास्ववस्थासु सान्त्वपूर्वं समाचरेत्। प्रियो भवति भूतानां धर्मज्ञो वीतभीर्नृपः ॥ ३९ ॥ विश्वासञ्चात्र गच्छन्ति सर्वभूतानि भारत। विश्वस्तः शक्यते भोक्तुं यथाकाममुपस्थितः ॥ ४० ॥ तस्माद्विश्वासयेद्राजा सर्वभूतान्यमायया। सर्वतः परिरक्षेच्च यो महीं भोक्तुमिच्छति ॥ ४१ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि सेनाप्राशस्त्यकथने द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

---

युधिष्ठिर उवाच। कथं मृदौ कथं तीक्ष्णे महापक्षे च पार्थिव। आदौ वर्त्तेत नृपतिस्तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम्। बृहस्पतेश्च सम्वादमिन्द्रस्य च युधिष्ठिर ॥ २ ॥ बृहस्पतिं देवपतिरभिवाद्य कृताञ्जलिः। उपसङ्गम्य पप्रच्छ वासवः परवीरहा॥३॥

इन्द्र उवाच। अहितेषु कथं ब्रह्मन् प्रवर्त्तेयमतन्द्रितः। असमुच्छिद्य चैवैतान्नियच्छेयमुपायतः ॥ ४ ॥ सेनयोर्व्यतिषङ्गेण जयः साधारणो भवेत्। किं कुर्वाणं न मां जह्याज्ज्वलिता श्रीः प्रतापिनी ॥ ५ ॥ ततो धर्मार्थकामानां कुशलः प्रतिभानवान्। राजधर्मविधानज्ञः प्रत्युवाच पुरन्दरम् ॥ ६ ॥

बृहस्पतिरुवाच। न जातु कलहेनेच्छेन्नियन्तुमपकारिणः। बालैरासेवितं ह्येतद्यदमर्षो यदक्षमा ॥ ७ ॥ न शत्रुर्विवृतः कार्य्यो वधमस्याभिकाङ्क्षता। क्रोधं भयञ्च हर्षञ्च नियम्य स्वयमात्मनि ॥८॥ अमित्रमुपसेवेत विश्वस्तवदविश्वसन्। प्रियमेव वदेन्नित्यं नाप्रियं किञ्चिदाचरेत् ॥ ९ ॥ विरमेच्छुष्कवैरेभ्यः कण्ठायासांश्च वर्ज्जयेत्। यथा वैतंसिको युक्तो द्विजानां सदृशस्वनः ॥ १० ॥ तान् द्विजान् कुरुते वश्यांस्तथायुक्तो महीपतिः। वशञ्चोपनयेच्छत्रून् निहन्याच्च पुरन्दर ॥ ११ ॥ न नित्यं परिभूयारीन् सुखं स्वपिति वासव। जागर्त्त्येव हि दुष्टात्मा सङ्करेऽग्निरिवोत्थितः ॥ १२ ॥ न सन्निपातः कर्त्तव्यः सामान्ये विजये सति। विश्वास्यैवोपसन्नार्थो वशे कृत्वा प्रियः प्रभो ॥ १३ ॥ सम्प्रधार्य्य सहामात्यैर्मन्त्रविद्भिर्महात्मभिः। उपेक्षमाणोऽवज्ञातो हृदयेनापराजितः ॥ १४ ॥ अथास्य प्रहरेत् काले किञ्चिद्विचलिते पदे। दण्डञ्च दूषयेदस्य पुरुषैराप्तकारिभिः ॥ १५ ॥ आदिमध्यावसानज्ञः प्रच्छन्नञ्च विधारयेत्। बलानि दूषयेदस्य जानन्नेव प्रमाणतः ॥ १६ ॥ भेदेनोपप्रदानेन संसृजेदौषधैस्तथा। न त्वेवं खलु संसर्गं रोचयेदरिभिः

सह ॥१७॥ दीर्घकालमपीक्षेत निहन्यादेव शात्रवान्। कालाकाङ्क्षी हि क्षपयेद्यथा विस्रम्भमाप्नुयुः। न सङ्घान् विनिहन्याच्च दृष्टव्यो विजयो ध्रुवः॥ १८ ॥ न शल्यं वा घटयति न वाचा कुरुते व्रणम्। प्राप्ते च प्रहरेत् काले न च सम्वर्त्तते पुनः। हन्तुकामस्य देवेन्द्र पुरुषस्य रिपून् प्रति॥ १९ ॥ यो हि कालो व्यतिक्रामेत् पुरुषं कालकाङ्क्षिणम्। दुर्लभः स पुनस्तेन कालः कर्म चिकीर्षुणा ॥ २० ॥ ओजश्च विनयेदेव संरक्षन् साधुसम्मतम्। अकाले साधयेन्नापि न च प्राप्ते प्रपीड़येत्॥ २१ ॥ विहाय कामं क्रोधञ्च तथाहङ्कारमेव च। युक्तो विवरमन्विच्छेदहितानां पुनः पुनः॥२२॥ मार्द्दवं दण्ड आलस्यं प्रमादश्च सुरोत्तम। मायाः सुविहिताः शक्र सादयन्त्यविचक्षणम् ॥ २३ ॥ निहत्यैतानि चत्वारि मायाः प्रतिविहाय च। ततः शक्नोति शत्रूणां प्रहर्त्तुमविचारयन्॥ २४ ॥ यदैवैकेन शक्येत गुह्यं कर्त्तुं तदाचरेत्। यच्छन्ति सचिवा गुह्यं मिथो विश्रावयन्त्यपि॥ २५ ॥ अशक्यमिति कृत्वा वा ततोऽन्यैः संविदञ्चरेत्। ब्रह्मदण्डमदृष्टेषु दृष्टेषु चतुरङ्गिणीम् ॥ २६ ॥ भेदञ्च प्रथमं युञ्ज्यात्तुष्णीमपि तथैव च। काले प्रयोजयेद्राजा तस्मिंस्तस्मिंस्तदा तदा॥२७॥ प्रणिपातञ्च गच्छेत काले शत्रोर्बलीयसः। युक्तोऽस्य बधमन्विच्छेदप्रमत्तः प्रमाद्यतः॥ २८ ॥ प्रणिपातेन दानेन वाचा मधुरया ब्रुवन्। अमित्रमपि सेवेत न च जातु विशङ्कयेत् ॥ २९ ॥ स्थानानि शङ्कितानाञ्च नित्यमेव विवर्ज्जयेत्। न च तेष्वाश्वसेद्राजा जाग्रतीह निराकृताः॥ ३० ॥ न ह्यतो दुष्करं कर्म किञ्चिदस्ति सुरोत्तम। यथा विविधवृत्तानामैश्वर्य्यममराधिप ॥३१॥ तथा विविधनाशानामपि सम्भव उच्यते। यतते योगमास्थाय मित्रामित्रं विचारयेत् ॥ ३२ ॥ मृदुमप्यवमन्यन्ते तीक्ष्णादुद्विजते जनः। मा तीक्ष्णो मा मृदुर्भूस्त्वं तीक्ष्णो भव मृदुर्भव॥ ३३ ॥ यथा वप्रे वेगवति सर्वतः संप्लुतोदके। नित्यं

विवरणाद्बाधस्तथाराज्यम्प्रमाद्यतः ॥ ३४ ॥ न बहूनभियुञ्जीत यौगपद्येन शात्रवान् । साम्ना दानेन भेदेन दण्डेन च पुरन्दर ॥ ३५ ॥ एकैकमेषां निष्पिष्य शिष्टेषु निपुणश्चरेत् । न तु शक्तोपि मेधावी सर्व्वानेवारभेन्नृपः ॥ ३६ ॥ यदा स्यान्महती सेना हय-नागरथाकुला । पदातियन्त्रबहुला अनुरक्ता षड़ङ्गिनी ॥ ३७ ॥ यदा बहुविधां वृद्धिं मन्येत प्रतिलोमतः । तदा विवृत्य प्रहरे-द्दस्यूनामविचारयन् ॥ ३८ ॥ न सामदण्डोपनिषत् प्रशस्यते न मार्द्दवं शत्रुषु यात्रिकं सदा । न शस्यघातो न च सङ्करक्रिया न चापि भूयः प्रकृतेर्विचारणा ॥ ३९ ॥ मायाविभेदानुपसर्ज्जनानि तथैव पापं न यशः प्रयोगात् । आप्तैर्मनुष्यैरुपचारयीत परेषु राष्ट्रेषु च सम्प्रयुक्तान् ॥ ४० ॥ पुराणि चैषामनुसृत्य भूमिपाः पुरेषु भोगानखिलान् जयन्ति । पुरेषु नीतिं विहितां यथाविधि प्रयोजयन्तो वलवृत्तसूदन ॥ ४० ॥ प्रदाय गूढ़ानि बसूनि राजन् प्रच्छिद्य भोगानवधाय च स्वान् । दुष्टान् स्वदोषैरिति कीर्त्तयित्वा पुरेषु राष्ट्रेषु च योजयन्ति ॥४० ॥ तथैव चान्यैरपि शास्त्रवेदिभिः स्वलङ्कृतैः शास्त्रविधानदृष्टिभिः । सुशिक्षितैर्भाष्यकथाविशारदैः पुरेषु कृत्यामुपधारयेच्च ॥ ४३ ॥

इन्द्र उवाच । कानि लिङ्गानि दुष्टस्य भवन्ति द्विजसत्तम । कथं दुष्टं विजानीयामेतत् पृष्टो ब्रवीहि मे ॥ ४४ ॥

वृहस्पतिरुवाच । परोक्षमगुणानाह सद्गुणानभ्यसूयते । परैर्वा कीर्त्त्यमानेषु तूष्णीमास्ते पराङ्मुखः ॥ ४५ ॥ तूष्णीम्भावे-ऽपि विज्ञेयं न चेद्भवति कारणम् । निश्वासञ्चौष्ठसन्दंशं शिरसश्च प्रकम्पनम् ॥ ४६ ॥ करोत्यभीक्ष्णं संसृष्टमसंसृष्टश्च भाषते । अदृ-ष्टितो न कुरुते दृष्टो नैवाभिभाषते ॥ ४७ ॥ पृथगेत्य समश्नाति नेदमद्य यथाविधि । आसने शयने याने भावा लक्ष्या विशेषतः ॥ ४८ ॥ आर्त्तिरार्त्ते प्रिये प्रीतिरेतावन्मित्रलक्षणम् । विपरीतन्तु

बोद्धव्यमरिलक्षणमेव वत्॥ ४९॥ एतान्येव यथोक्तानि बुध्येत त्रिदशाधिप। पुरुषाणां प्रदुष्टानां स्वभावो बलवत्तरः॥ ५०॥ इति दुष्टस्य विज्ञानमुक्तं ते सुरसत्तम। निशम्य शास्त्रतत्त्वार्थं यथावदमरेश्वर॥ ५१॥

भीष्म उवाच। स तद्वचः शत्रुनिवर्हणे रतस्तथा चकारावितथं वृहस्पतेः। चचार काले विजयाय चारिहा वशञ्च शत्रूननयत् पुरन्दरः॥ ५२॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि इन्द्रवृहस्पति-संवादे त्र्यधिकशततोऽध्यायः॥ १०३॥

---

युधिष्ठिर उवाच। धार्मिकोऽर्थानसम्प्राप्य राजामात्यैः प्रबाधितः। च्युतः कोशाच्च दण्डाच्च सुखमिच्छन् कथञ्चरेत्॥ १॥

भीष्म उवाच। अत्रायं क्षेमदर्शीय इतिहासोऽनुगीयते। तत्तेऽहं संप्रवक्ष्यामि तन्निबोध युधिष्ठिर॥ २॥ क्षेमदर्शी नृपसुतो शत्रुक्षीणबलः पुरा। मुनिं कालकवृक्षीयमाजगामेति नः श्रुतम्। तं पप्रच्छानुसंगृह्य कृच्छ्रामापदमास्थितः॥ ३॥

राजोवाच। अर्थेषु भागी पुरुष ईहमानः पुनः पुनः। अलब्ध्वा मद्विधो राज्यं ब्रह्मन् किं कर्त्तुमर्हति॥ ४॥ अन्यत्र मरणात् स्तैन्यादन्यत्र परसंश्रयात्। क्षुद्रादन्यत्र चाचारात्तन्ममाचक्ष्व सत्तम॥ ५॥ व्याधिना चाभिपन्नस्य मानसेनेतरेण वा। मर्मज्ञस्य कृतज्ञस्य त्वद्विधः शरणं भवेत्॥ ६॥ निर्विद्यति नरः कामान्निर्विद्य सुखमेधते। त्यक्त्वा प्रीतिञ्च शक्तिञ्च लब्ध्वा बुद्धिमयं वसु॥ ७॥ सुखमर्थाश्रयं येषामनुशोचामि तानहम्। मम ह्यर्थाः सुबहवो नष्टाः स्वप्न इवागताः॥ ८॥ दुष्करं वत कुर्वन्ति महतोऽर्थांस्त्यजन्ति ये। वयं त्वेतान् परित्यक्तुमसतोऽपि न शक्नुमः॥ ९॥

इमामवस्थां संप्राप्तं दीनमार्त्तं श्रिया च्युतम् । यदन्यत् सुख-
मस्तीह तद्ब्रह्मन्ननुशाधि माम् ॥ १० ॥ कौशल्येनैवमुक्तन्तु राज-
पुत्रेण धीमता । मुनिः कालकवृक्षीय प्रत्युवाच महाद्युतिः ॥ ११ ॥

मुनिरुवाच । पुरस्तादेव तं बुद्धिरियं कार्य्या विजानता ।
अनित्यं सर्व्वमेवैतदहञ्च मम चास्ति यत् ॥ १२ ॥ यत् किञ्चि-
न्मन्यसेऽस्तीति सर्वं नास्तीति विद्धि तत् । एवं न व्यथते प्राज्ञः
कृच्छ्रामप्यापदं गतः ॥ १३ ॥ यद्धि भूतं भविष्यञ्च सर्वं तन्न भवि-
ष्यति । एवं विदितवेद्यस्त्वमधर्म्मेभ्य प्रमोक्ष्यसे ॥ १४ ॥ यच्च पूर्वं
समाहारे यच्च पूर्वं परे परे । सर्वं तन्नास्ति ते चैव तज्ज्ञात्वा
कोऽनुसंज्वरेत् ॥ १५ ॥ भूत्वा च न भवत्येतद्भूत्वा च भविष्यति ।
शोके न ह्यस्ति सामर्थं शोकं कुर्य्यात् कथञ्चन ॥ १६ ॥ क्व नु तेऽद्य
पिता राजन् क्व नु तेऽद्य पितामहः । न त्वं पश्यसि तानद्य न त्वां
पश्यन्ति तेऽपि च ॥ १७ ॥ आत्मनोऽध्रुवतां पश्यंस्तांस्त्वं किमनु-
शोचसि । बुद्ध्या चैवानुबुध्यस्व ध्रुवं हि न भविष्यसि ॥ १८ ॥
अहञ्च त्वञ्च नृपते सुहृदः शत्रवश्च ते । अवश्यं न भविष्यामः सर्व्वञ्च
न भविष्यति ॥ १९ ॥ ये तु विंशतिवर्षा वै त्रिंशद्वर्षाश्च मानवाः ।
अर्वागेव हि ते सर्वे मरिष्यन्ति शरच्छतात् ॥२० ॥ अपि चेन्महतो
वित्तान्न प्रमुच्येत पूरुषः । नैतन्ममेति तन्मत्वा कुर्वीत प्रियमात्मनः
॥ २१ ॥ अनागतं यन्न ममेति विद्यादतिक्रान्तं यन्न ममेति
विद्यात् । दिष्टं बलीय इति मन्यमानास्ते पण्डितास्तत् सतां
स्थानमाहुः ॥ २२ ॥ अनाढ्याश्चापि जीवन्ति राज्यञ्चाप्यनुशासति।
बुद्धिपौरुषसम्पन्नास्त्वया तुल्याधिका जनाः ॥ २३ ॥ न च त्वमिव
शोचन्ति तस्मात्त्वमपि मा शुचः । किन्न त्वं तैर्नरैः श्रेयांस्तुल्यो वा
बुद्धिपौरुषैः ॥ २४ ॥

राजोवाच । यादृच्छिकं सर्व्वमासीत्तद्राज्यमिति चिन्तये ।
ह्रियते सर्व्वमेवेदं कालेन महता द्विज ॥ २५ ॥ तस्यैव क्रिय-

माणस्य श्रोतमेव तपोधन। फलमेतत् प्रपश्यामि यथालब्धेन वर्त्तयन् ॥ २६ ॥

मुनिरुवाच। अनागतमतीतञ्च यथातथ्यविनिश्चयात्। नानुशोचेत कौशल्य सर्वार्थेषु तथा भव ॥ २७ ॥ अवाप्यान् कामयन्नर्थान्नानवाप्यान् कदाचन। प्रत्युत्पन्नाननुभवन् मा शुचस्त्वमनागतान् ॥ २८ ॥ यथा लब्धोपपन्नर्थैस्तथा कौशल्य रंस्यसे। कच्चिच्छुद्धस्वभावेन श्रिया हीनो न शोचसि ॥ २९ ॥ पुरस्ताद्भूतपूर्वत्वाद्धीनभाग्यो हि दुर्मतिः। धातारं गर्हते नित्यं लब्धार्थांश्च न मृष्यते ॥ ३० ॥ अनर्हानपि चैवान्यान्मन्यते श्रीमतो जनान्। एतस्मात् कारणादेतद्दुःखं भूयोऽनुवर्त्तते ॥ ३१ ॥ ईर्षाभिमानसम्पन्ना राजन् पुरुषमानिन। कच्चित्त्वन्न तथा राजन् मत्सरी कोशलाधिप ॥ ३२ ॥ सहस्व श्रियमन्येषां यद्यपि त्वयि नास्ति सा। अन्यत्रापि सतीं लक्ष्मीं कुशला भुञ्जते सदा। अभिनिष्पन्दते श्रीर्हि सत्यपि द्विषतो जनम् ॥ ३३ ॥ श्रियञ्च पुत्रपौत्रञ्च मनुष्या धर्मचारिणः। योगधर्मविदो धीराः स्वयमेव त्यजन्त्युत ॥ ३४ ॥ वह्नसङ्कुसुकं दृष्ट्वा विधित्सा धनमेव च। तथान्ये सन्त्यजन्त्येवं मत्वा परमदुर्लभम् ॥ ३५ ॥ त्वं पुनः प्राज्ञरूपः सन् कृपणं परितप्यसे। अकाम्यान् कामयानोऽर्थान् पराधीनानुपद्रवान् ॥ ३६ ॥ तां बुद्धिमुपजिज्ञासुस्त्वमेवैतान् परित्यज। अनर्थांश्चार्थरूपेण ह्यर्थांश्चानर्थरूपिणः ॥ ३७ ॥ अर्थायैव हि केषाञ्चिद्धननाशो भवत्युत। आनन्त्यं तत् सुखं मत्वा श्रियमन्यः परीप्स्यति ॥ ३८ ॥ रममाणः श्रिया कश्चिन्नान्यच्छ्रेयोऽभिमन्यते। तथा तस्येहमानस्य समारम्भो विनश्यति ॥ ३९ ॥ कृच्छ्राल्लब्धमभिप्रेतं यदि कौशल्य नश्यति। तदा निर्विद्यते सोऽर्थात् परिभग्नक्रमो नरः ॥ ४० ॥ धर्ममेकेऽभिपद्यन्ते कल्याणाभिजना नराः। परत्र सुखमिच्छन्तो निर्विद्येयुश्च लौकिकात् ॥ ४१ ॥ जीवितं सन्त्यजन्त्येके धनलोभपरा जनाः।

न जीवितार्थं मन्यन्ते पुरुषा हि धनादृते ॥ ४२ ॥ पश्य तेषां कृपणानां पश्य तेषामबुद्धिताम् । अध्रुवे जीविते मोहादर्थतृष्णामुपाश्रिताः ॥ ४३ ॥ सञ्चये च विनाशान्ते मरणान्ते च जीविते । संयोगे च वियोगान्ते को नु विप्रणयेन्मनः ॥ ४४ ॥ धनं वा पुरुषो राजन् पुरुषं वा पुनर्धनम् । अवश्यं प्रजहात्येव तद्विद्वान् को नु संज्वरेत् । अन्येषामपि नश्यन्ति सुहृदश्च धनानि च ॥ ४५ ॥ पश्य बुद्ध्या मनुष्याणां राजन्नापदमात्मनः । नियच्छ यच्छ संयच्छ इन्द्रियाणि मनो गिरम् ॥४६॥ प्रतिषिद्धा न चाप्येषु दुर्बलेष्वहितेष्वपि । प्राप्तिसृष्टेषु भावेषु व्यपकृष्यसम्भवे । प्रज्ञानतृप्तो विक्रान्तस्त्वद्विधो नानुशोचति ॥ ४७ ॥ अल्पमिच्छन्न चपलो मृदुर्दान्तः सुनिश्चितः । ब्रह्मचर्य्योपपन्नश्च त्वद्विधो नैव शोचति ॥४८॥ नत्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हति । नृशंसवृत्तिं पापिष्ठां दुष्टां कापुरुषोचिताम् ॥४९॥ अपि मूलफलाजीवे रमस्वैको महावने । वाग्यतः संगृहीतात्मा सर्वभूतदयान्वितः ॥ ५० ॥ सदृशं पण्डितस्यैतदीषादन्तेन दन्तिना । यदेको रमतेऽरण्येष्वारण्येनैव तुष्यति ॥ ५१ ॥ महाह्रदः संक्षुभित आत्मनैव प्रसीदति । इत्थं नरोऽप्यात्मनैव कृतप्रज्ञः प्रसीदति । एतदेवं गतस्याहं सुखं पश्यामि जीवितुम् ॥५२॥ असम्भवे श्रियो राजन् हीनस्य सचिवादिभिः । दैवे प्रतिनिविष्टे च किं श्रेयो मन्यते भवान् ॥ ५३ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि कालकवृक्षीये
चतुरधिकशततोऽध्यायः ॥ १०४ ॥

---

मुनिरुवाच । अथ चेत् पौरुषं किञ्चित् क्षत्रियात्मनि पश्यसि । ब्रवीमि तान्तु ते नीतिं राज्यस्य प्रतिपत्तये ॥ १ ॥ ताञ्चेच्छक्ष्यस्यनुष्ठातुं कर्म्म चैव करिष्यसि । शृणु सर्वमशेषेण यत्त्वां वक्ष्यामि

तत्त्वतः ॥ २ ॥ आचरिष्यसि चेत् कर्म्म महतोऽर्थानवाप्स्यसि। राज्यं राज्यस्य मन्त्रं वा महतीं वा पुनः श्रियम् ॥ ३ ॥ अथैतद्रोचते राजन् पुनर्ब्रूहि ब्रवीमि ते ॥ ४ ॥

राजोवाच । ब्रवीतु भगवन्नीतिमुपपन्नोऽस्म्यहं विभो। अमोघोऽयं भवत्वद्य त्वया सह समागमः ॥ ५ ॥

मुनिरुवाच। हित्वा दम्भञ्च कामञ्च क्रोधं हर्षं भयं तथा। अप्यमित्राणि सेवस्व प्रणिपत्य कृताञ्जलिः ॥ ६ ॥ तमुत्तमेन शौचेन कर्म्मणा चाभिधारय। दातुमर्हति ते वित्तं वैदेहः सत्यसङ्गरः ॥ ७ ॥ प्रमाणं सर्वभूतेषु प्रग्रहञ्च भविष्यसि। ततः सहायान् सोत्साहाल्लप्स्यसेऽव्यसनान् शुचीन् ॥ ८ ॥ वर्त्तमानः स्वशास्त्रे वै संयतात्मा जितेन्द्रियः। अभ्युद्धरति चात्मानं प्रसादयति च प्रजाः ॥ ९ ॥ तेनैव त्वं धृतिमता श्रीमता चाभिसत्कृतः। प्रमाणं सर्वभूतेषु गत्वा प्रग्रहणं महत् ॥ १० ॥ ततः सुहृद्बलं लब्ध्वा मन्त्रयित्वा सुमन्त्रिभिः। आन्तरैर्भेदयित्वारीन् विल्वं विल्वेन भेदय। परैर्वा संविदं कृत्वा बलमप्यस्य घातय ॥ ११ ॥ अलभ्या ये शुभा भावाः स्त्रियश्चाच्छादनानि च। शय्यासनानि यानानि महार्हाणि गृहाणि च ॥ १२ ॥ पक्षिणो मृगजातानि रसगन्धाः फलानि च। तेष्वेव सज्जयेथास्त्वं यथा नश्येत् स्वयं परः ॥ १३ ॥ यद्येवं प्रतिषिद्धव्यो यद्युपेक्षणमर्हति। न जातु विवृतः कार्य्यः शत्रुः सुनयमिच्छता ॥ १४ ॥ रमस्व परमामित्रे विषये प्राज्ञसम्मतः। भजस्व श्वेतकाकीयैर्मित्रधर्म्ममनर्थकैः ॥ १५ ॥ आरम्भांश्चास्य महतो दुश्चरांश्च प्रयोजय। नदीवन्ध विरोधांश्च बलवद्भिर्विरुध्यताम् ॥ १६ ॥ उद्यानानि महार्हाणि शयनान्यासनानि च। प्रतिभोगसुखेनैव कोषमस्य विरेचय ॥ १७ ॥ यज्ञदाने प्रशाध्यस्मै ब्राह्मणाननुवर्ण्य तान् ते त्वां प्रतिकरिष्यन्ति तं भोक्ष्यन्ति वृका इव ॥ १८ ॥ असंशयं पुण्यशीलः प्राप्नोति परमां गतिम्। त्रिपिष्टपे पुण्यतमं स्थानं

प्राप्नोति मानवः ॥ १९ ॥ कोषक्षये त्वमित्राणां वशं कोशल्य गच्छति । उभयत्र प्रवृत्तास्य धर्म्मं चाधर्म एव च ॥ २० ॥ फलार्थ-मूलं व्युच्छिद्यत्तेन नन्दन्ति शत्रवः । न चास्य मानुषं कर्म्म दैव-मस्योपवर्णय ॥ २१ ॥ असंशयं दैवपरः क्षिप्रमेव विनश्यति । याजयैनं विश्वजिता सर्व्वस्वेन वियुज्यताम् ॥ २२ ॥ ततो गच्छति सिद्धार्थः पीड्यमानं महाजनम् । योगधर्म्मविदं पुण्यं किञ्चि-दस्योपवर्णये ॥ २३ ॥ अपि त्यागं बुभूषेत कच्चिन्नच्छेदनामयम् । सिद्धिनौषधियोगेन सर्वशत्रुविनाशिना । नागानश्वान्मनुष्यांश्च कृत-कैरुपघातयेः ॥२४॥ एते चान्ये च बहवो दम्भयोगाः सुचिन्तिताः । शक्या विषहताः कर्त्तुं पुरुषेण कृतात्मना ॥ २५ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि कालकवृक्षीये पञ्चाधिकशततोऽध्यायः ॥ १०५ ॥

---

राजोवाच । न निकृत्या न दम्भेन ब्रह्मन्निच्छामि जीवितुम् । नाधर्म्मयुक्तानिच्छेयमर्थान् सुमहतोऽप्यहम् ॥ १ ॥ पुरस्तादेव भगवन् मयैतदपवार्जितम् । येन मां नाभिशङ्केत येन कृत्स्नं हितं भवेत् ॥ २ ॥ आनृशंस्येन धर्मेण लोके ह्यस्मिन् जिजीविषुः । नाहमेतदलं कर्त्तुं नैतत्त्वय्युपपद्यते ॥ ३ ॥

मुनिरुवाच । उपपन्नस्त्वमेतेन यथा क्षत्रिय भाषसे । प्रकृत्या ह्युपपन्नोऽसि बुद्ध्या वा बहुदर्शन ॥ ४ ॥ उभयोरेव वामर्थे यतिष्ये तव तस्य च । संश्लेषं वा करिष्यामि शाश्वतं ह्यनपायिनम् ॥ ५ ॥ त्वादृशं हि कुले जातमनृशंसं बहुश्रुतम् । अमात्यं को न कुर्वीत राज्यप्रणयकोविदम् ॥ ६ ॥ यस्त्वं प्रच्यावितो राज्याद्व्यसनं चोत्तमं गतः । आनृशंस्येन वृत्तेन क्षत्रियेच्छसि जीवितम् ॥ ७ ॥ आगन्ता मद्गृहे तात वैदेहः सत्यसङ्गरः । यथाहं तं नियोक्ष्यामि तत्

करिष्यत्यसंशयम् ॥ ८ ॥ तत आहूय वैदेहं मुनिर्वचनमब्रवीत्। अयं राजकुले जातो विदिताभ्यन्तरो मम ॥ ९ ॥ आदर्श इव शुद्धात्मा शारदश्चन्द्रमा यथा। नास्मिन् पश्यामि वृजिनं सर्वतो मे परीक्षितः ॥ १० ॥ तेन ते सन्धिरेवास्तु विश्वसास्मिन् यथा मयि। न राज्यमनमात्येन शक्यं शास्तुमपि त्र्यहम् ॥ ११ ॥ अमात्यः शूर एव स्याद्बुद्धिसम्पन्न एव वा। ताभ्याञ्चैवोभयं राजन् पश्य राज्यप्रयोजनम् ॥ १२ ॥ धर्मात्मनां क्वचिल्लोके नान्योऽस्ति गतिरीदृशी। महात्मा राजपुत्रोऽयं सतां मार्गमनुष्ठितः ॥ १३ ॥ सुसंगृहीतस्त्वेवैष त्वया धर्मपुरोगमः। संसेव्यमानः शत्रूंस्ते गृह्णीयान्महतो गणान् ॥ १४ ॥ यद्ययं प्रतियुध्येत्त्वां स्वकर्म क्षत्रियस्य तत्। जिगीषमाणस्त्वां युद्धे पितृपैतामहे पदे ॥ १५ ॥ त्वञ्चापि प्रतियुद्धेथा विजिगीषुव्रते स्थितः। अयुद्ध्वैव नियोगान्मे वशे कुरु हिते स्थितः ॥ १६ ॥ स त्वं धर्ममवेक्षस्व हित्वा लोभमसाम्प्रतम्। न च कामान्न च द्रोहात् स्वधर्मं हातुमर्हति ॥ १७ ॥ नैव नित्यं जयस्तात नैव नित्यं पराजयः। तस्माद्भोजयितव्यश्च भोक्तव्यश्च परो जनः ॥ १८ ॥ आत्मन्यपि च संदृश्यावुभौ जयपराजयौ। निःशेषकारिणां तात निःशेषकरणाद्भयम् ॥ १९ ॥ इत्युक्तः प्रत्युवाचेदं वचनं ब्राह्मणर्षभम्। प्रतिपूज्याभिसत्कृत्य पूजार्हमनुमान्य च ॥ २० ॥ यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयान्महाश्रुतः। श्रेयस्कामो यथा ब्रूयादुभयोरेव तत् क्षमम् ॥ २१ ॥ यद्यद्वचनमुक्तोऽस्मि करिष्यामि च तत्तथा। एतद्धि परमं श्रेयो न मेऽत्रास्ति विचारणा ॥ २२ ॥ ततः कौशल्यमाहूय मैथिलो वाक्यमब्रवीच्च। धर्मतो नीतितश्चैव लोकश्च विजितो मया ॥ २३ ॥ अहं त्वया चात्मगुणैर्जितः पार्थिवसत्तम। आत्मानमनवज्ञाय जितवद्वर्त्ततां भवान् ॥ २४ ॥ नावमन्यामि ते बुद्धिं नावमन्ये च पौरुषम्। नावमन्ये जयामीति जितवद्वर्त्ततां भवान्। यथावत्

पूजितो राजन् गृहं गन्तास्मि मे भृशम् ॥ २५ ॥ ततः सम्पूज्य तौ विप्रं विश्वस्तौ जग्मतुर्गृहान् ॥ २६ ॥ वैदेहस्त्वथ कौशल्यं प्रवेश्य गृहमञ्जसा । पाद्यार्घ्यमधुपर्कैस्तं पूजार्हं प्रत्यपूजयत् ॥ २७ ॥ ददौ दुहितरं चास्मै रत्नानि विविधानि च । एष राज्ञां परो धर्मोऽनित्यौ जयपराजयौ ॥ २८ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि कालकवृक्षीये षड्धिकशतोऽध्यायः ॥ १०६ ॥

---

युधिष्ठिर उवाच । ब्राह्मणक्षत्रियविशां शूद्राणाञ्च परन्तप । धर्म्मवृत्तञ्च वित्तञ्च वृत्त्युपायाः फलानि च ॥ १ ॥ राज्ञां वृत्तञ्च कोषश्च कोषसञ्जननं जयः । अमात्यगुणवृत्तिश्च प्रकृतीनाञ्च वर्द्धनम् ॥ २ ॥ षाड्गुण्यगुणकल्पश्च सेनावृत्तिस्तथैव च । परिज्ञानञ्च दुष्टस्य लक्षणञ्च सतामपि ॥ ३ ॥ समहीनाधिकानाञ्च यथावल्लक्षणञ्च यत् । मध्यमस्य च तुष्ट्यर्थं यथा स्थेयं विवर्द्धता ॥४॥ क्षीणग्रहणवृत्तिश्च यथा धर्मं प्रकीर्त्तितम् । लघुनादेशरूपेण ग्रन्थयोगेन भारत ॥ ५ ॥ विजिगीषोस्तथा वृत्तमुक्तञ्चैव तथैव ते । गणानां वृत्तिमिच्छामि श्रोतुं मतिमताम्वर ॥ ६ ॥ यथा गणा प्रवर्द्धन्ते न भिद्यन्ते च भारत । अरींश्च विजिगीषन्ते सुहृदः प्राप्नुवन्ति च ॥ ७ ॥ भेदमूलो विनाशो हि गणानामुपलक्षये । मन्त्रसम्वरणं दुःखं बहूनामिति मे मतिः ॥ ८ ॥ एतदिच्छाम्यहं श्रोतुं नखिलेन परन्तप । यथा च ते न भिद्येरंस्तच्च मे वद पार्थिव ॥९॥

भीष्म उवाच । गणानाञ्च कुलानाञ्च राज्ञां भरतसत्तम । वैरसन्दीपनावेतौ लोभामर्षौ नराधिप ॥ १० ॥ लोभमेको हि वृणुते ततोऽमर्षमनन्तरम् । तौ क्षयव्ययसंयुक्तावन्योऽन्यञ्च विनाशिनौ ॥ ११ ॥ चारमन्त्रबलादानैः सामदानविभेदनैः । क्षयव्यय-

भयोपायैः कर्षयन्तीतरेतरम् ॥ १२ ॥ यत्नादानेन भिद्यन्ते गणाः सङ्घातवृत्तयः । भिन्ना विमनसः सर्वे गच्छन्त्यरिवशं भयात् ॥ १३॥ भेदे गणा विनश्युर्हि भिन्नास्तु सुजयाः परैः । तस्मात् सङ्घातयोगेन प्रयतेरन् गणाः सदा ॥ १४ ॥ अर्थाश्चैवाधिगम्यन्ते सङ्घातबलपौरुषैः । वाह्याश्च मैत्रीं कुर्वन्ति तेषु सङ्घातवृत्तिषु ॥ १५ ॥ ज्ञानवृद्धाः प्रशंसन्ति शुश्रूषन्तः परस्परम् । विनिवृत्ताभिसन्धानाः सुखमेधन्ति सर्वशः ॥ १६ ॥ धर्मिष्ठान् व्यवहारांश्च स्थापयन्तश्च शास्त्रतः । यथावत् प्रतिपश्यन्तो विवर्द्धन्ते गणोत्तमाः ॥ १७ ॥ पुत्रान् भ्रातॄन् निगृह्णन्तो विनयन्तश्च तान् सदा । विनीतांश्च प्रगृह्णन्तो विवर्द्धन्ते गुणोत्तमाः ॥ १८ ॥ चारमन्त्रविधानेषु कोषसन्निचयेषु च । नित्ययुक्ता महावाहो वर्द्धन्ते सर्वतो गणाः ॥ १९ ॥ प्राज्ञान् शूरान् महोत्साहान् कर्म्मसु स्थिरपौरुषान् । मानयन्तः सदा युक्ता विवर्द्धन्ते गणा नृप ॥२०॥ द्रव्यवन्तश्च शूराश्च शास्त्रज्ञाः शास्त्रपारगाः । कृच्छ्रास्वापत्सु संमूढ़ान् गणाः सन्तारयन्ति ते ॥२१॥ क्रोधो भेदो भयं दण्डः कर्षणं निग्रहो बधः । नयत्यरिवशं सद्यो गणान् भरतसत्तम ॥ २२ ॥ तस्मान्मानयितव्यास्ते गणमुख्याः प्रधानतः । लोकयात्रा समायत्ता भूयसी तेषु पार्थिव ॥२३॥ मन्त्रगुप्तिः प्रधानेषु चारश्चामित्रकर्षण । न गणाः कृत्स्नशो मन्त्रं श्रोतुमर्हन्ति भारत ॥ २४ ॥ गणमुख्यैस्तु सम्भूय कार्य्यं गणहितं मिथः । पृथग्गणस्य भिन्नस्य विततस्य ततोऽन्यथा ॥ २५ ॥ अर्थाः प्रत्यवसीदन्ति तथानर्था भवन्ति च । तेषामन्योऽन्यभिन्नानां स्वशक्तिमनुतिष्ठताम् ॥ २६ ॥ निग्रहः पण्डितैः कार्य्यः क्षिप्रमेव प्रधानतः । कुलेषु कलहा जाताः कुलवृद्धैरुपेक्षिताः । गोत्रस्य नाशं कुर्वन्ति गणभेदस्य कारणम् ॥ २७ ॥ आभ्यन्तरभयं रक्ष्यमसारं वाह्यतो भयम् । आभ्यन्तरं भयं राजन् सद्यो मूलानि कृन्तति ॥ २८ ॥ अकस्मात् क्रोधमोहाभ्यां लोभाद्वापि स्वभावजात् ।

अन्योन्यं नाभिभाषन्ते तत् पराभवलक्षणम् ॥ २९ ॥ जात्या च सदृशाः सर्व्वे कुलेन सदृशास्तथा । न च शौर्य्येण बुद्ध्या वा रूपद्रव्येण वा पुनः ॥ ३० ॥ भेदाच्चैव प्रधानाच्च भिद्यन्ते रिपुभिर्गणाः । तस्मात् सङ्घातयोगाद्धि गणानां शरणं महत् ॥ ३१ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि गणवृत्ते सप्ताधिकशततोऽध्यायः ॥ १०७ ॥

---

युधिष्ठिर उवाच । महानयं धर्म्मपथो बहुशाखश्च भारत । किंस्विदेवेह धर्म्माणामनुष्ठेयतमं मतम् ॥ १ ॥ किं कार्य्यं सर्व्वधर्म्माणां गरीयो भवतो मतम् । यथाहं परमं धर्म्ममिह च प्रेत्य चाप्नुयाम् ॥ २ ॥

भीष्म उवाच । मातापित्रोर्गुरूणाञ्च पूजा बहुमता मम । इह युक्तो नरो लोकान् यशश्च महदश्नुते ॥ ३ ॥ यच्च तेऽभ्यनुजानीयुः कर्म्म तात सुपूजिताः । धर्म्यं धर्म्मविरुद्धं वा तत् कर्त्तव्यं युधिष्ठिर ॥ ४ ॥ न च तैरननुज्ञातो धर्म्ममन्यं समाचरेत् । यञ्च तेऽभ्यनुजानीयुः स धर्म इति निश्चयः ॥ ५ ॥ एत एव त्रयो लोका एत एवाश्रमास्त्रयः । एत एव त्रयो वेदा एत एव त्रयोऽग्नयः ॥६॥ पिता वै गार्हपत्योऽग्निर्माताग्निर्द्दक्षिणः स्मृतः । गुरुराहवनीयोऽग्निः साग्नित्रेता गरीयसी । त्रिष्वप्रमाद्यन्नेतेषु त्रींल्लोकांश्च विजेष्यसि ॥ ७ ॥ पितृवृत्त्या त्विमं लोकं मातृवृत्त्या तथापरम् । ब्रह्मलोकं गुरोर्वृत्त्या नियमेन तरिष्यसि ॥ ८ ॥ सम्यगेतेषु वर्त्तस्व त्रिषु लोकेषु भारत । यशः प्राप्स्यसि भद्रन्ते धर्म्मञ्च सुमहत् फलम् ॥ ९ ॥ नैतानतिशयेज्जातु नात्यश्नीयान्न दूषयेत् । नित्यं परिचरेच्चैव तद्वै सुकृतमुत्तमम् ॥ १० ॥ कीर्त्तिं पुण्यं यशो लोकान् प्राप्स्यसे राजसत्तम । सर्व्वे तस्यादृता लोका यस्यैते त्रय

आदृताः ॥११॥ अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः। न चायं न परो लोकस्तस्य चैव परन्तप ॥ १२॥ अमानिता नित्य मेव यस्यैते गुरवस्त्रयः। न चास्मिन्न परे लोके यशस्तस्य प्रकाशते। न चान्यदपि कल्याणं परत्र समुदाहृतम् ॥ १३ ॥ तेभ्य एव हि यत् सर्वं कृत्वा च विसृजाम्यहम्। तदासीन्मे शतगुणं सहस्रगुणमेव च। तस्मान्मे सम्प्रकाशन्ते त्रयो लोका युधिष्ठिर ॥ १४ ॥ दशैव तु सदाचार्य्यः श्रोत्रियानतिरिच्यते। दशाचार्य्यानुपाध्याय उपाध्यायान् पिता दश ॥ १५ ॥ पितॄन्दश तु मातैका सर्व्वान् वा पृथिवीमपि। गुरुत्वेनाभिभवति नास्ति मातृसमो गुरुः ॥ १६ ॥ गुरुर्गरीयान् पितृतो मातृतश्चेति मे मतिः। उभौ हि मातापितरौ जन्मन्येवोपयुज्यतः ॥ १७ ॥ शरीरमेव सृजतः पिता माता च भारत। आचार्य्यशिष्टा जातिः सा दिव्या साजरामरा ॥ १८ ॥ अवध्या हि सदा माता पिता चाप्यपकारिणौ। न संदुष्यति तत् कृत्वा न च ते दूषयन्ति तम्। धर्माय यतमानानां विदुर्देवा महर्षिभिः ॥ १९ ॥ यश्चावृणोत्यवितथेन कर्म्मणा ऋतं ब्रुवन्नमृतं सम्प्रयच्छन्। तं वै मन्येत पितरं मातरञ्च तस्मै न द्रुह्येत् कृतमस्य जानन् ॥ २० ॥ विद्यां श्रुत्वा ये गुरुं नाद्रियन्ते प्रत्यासन्ना मनसा कर्म्मणा वा। तेषां पापं भ्रूणहत्याविशिष्टं नान्यस्तेभ्यः पापकृदस्ति लोके। यथैव ते गुरुभिर्भावनीयास्तथा तेषां गुरवोऽप्यर्च्चनीयाः ॥ २१ ॥ तस्मात् पूजयितव्याश्च संविभाज्याश्च यत्नतः। गुरवोऽर्च्चयितव्याश्च पुराणं धर्म्ममिच्छता ॥ २२ ॥ येन प्रीणाति पितरं तेन प्रीतः प्रजापतिः। प्रीणाति मातरं येन पृथिवी तेन पूजिता ॥ २३ ॥ येन प्रीणात्युपाध्यायं तेन स्याद्ब्रह्म पूजितम्। मातृतः पितृतश्चैव तस्मात् पूज्यतमो गुरुः ॥२४॥ ऋषयश्च हि देवाश्च प्रीयन्ते पितृभिः सह। पूज्यमानेषु गुरुषु तस्मात् पूज्यतमो गुरुः ॥ २५ ॥ केनचिन्न च वृत्तेन ह्यवज्ञेयो

गुरुर्भवेत् । न च माता न च पिता मन्यते यादृशो गुरुः ॥ २६ ॥ न तेऽवमानमर्हन्ति न तेषां दूषयेत् कृतम् । गुरूणामेव सत्कारं विदुर्देवा महर्षिभिः ॥ २७ ॥ उपाध्यायं पितरं मातरञ्च येऽभिद्रुह्यन्ते मनसा कर्म्मणा वा । तेषां पापं भ्रूणहत्याविशिष्टं तस्मान्नान्यः पापकृदस्ति लोके ॥ २८ ॥ भृतो वृद्धो यो न बिभर्त्ति पुत्रः स्वयोनिजः पितरं मातरञ्च । तद्वै पापं भ्रूणहत्याविशिष्टं तस्मान्नान्यः पापकृदस्ति लोके ॥ २९ ॥ मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य गुरुघातिनः । चतुर्णां वयमेतेषां निष्कृतिं नानुशुश्रुमः ॥ ३० ॥ एतत् सर्वमनिर्द्देशेनैवमुक्तं यत् कर्त्तव्यं पुरुषेणेह लोके । अतश्श्रेयो नान्यदस्माद्विशिष्टं सर्वान् धर्म्माननुसृत्यैतदुक्तम् ॥ ३१ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि
अष्टाधिकशततोऽध्यायः ॥ १०८ ॥

---

युधिष्ठिर उवाच । कथं धर्म्मे स्थातुमिच्छन्नरो वर्त्तेत भारत । विद्वन् जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ १ ॥ सत्यञ्चैवानृतञ्चोभे लोकानावृत्य तिष्ठतः । तयोः किमाचरेद्राजन् पुरुषो धर्म्मनिश्चितः ॥ २ ॥ किंस्वित् सत्यं किमनृतं किंस्विद्धर्म्मं सनातनम् । कस्मिन् काले वदेत् सत्यं कस्मिन् कालेऽनृतं वदेत् ॥ ३ ॥

भीष्म उवाच । सत्यस्य वचनं साधु न सत्याद्विद्यते परम् । यत्तु लोकेषु दुर्ज्ञानं तत् प्रवक्ष्यामि भारत ॥ ४ ॥ भवेत् सत्यं न वक्तव्यं वक्तव्यमनृतं भवेत् । यत्रानृतं भवेत् सत्यं सत्यञ्चाप्यनृतं भवेत् ॥ ५ ॥ तादृशो बध्यते बालो यत्र सत्यमनुष्ठितम् । सत्यानृते विनिश्चित्य ततो भवति धर्म्मवित् ॥ ६ ॥ अप्यनार्य्योऽकृतप्रज्ञः पुरुषोऽप्यतिदारुणः । सुमहत् प्राप्नुयात् पुण्यं बलाकोऽन्धबधादिव ॥ ७ ॥ किमाश्चर्य्यञ्च यन्मूढ़ो धर्म्मकामोऽप्यधर्म्मवित् । सुमहत्

प्राप्नुयात् सुखं गङ्गायामिव कौशिकः ॥ ८ ॥ तादृशोऽयमनुप्रश्नो यत्र धर्मः सुदुर्लभः। दुष्करं प्रतिसंख्यातुं न केनात्र व्यवस्यति ॥९॥ प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम्। यत् स्यात् प्रभवसंयुक्तं स धर्म इति निश्चयः ॥ १० ॥ अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम्। यत् स्यादहिंसासंयुक्तं स धर्म इति निश्चयः ॥ ११ ॥ धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः। यत् स्याद्धारणसंयुक्तं स धर्म इति निश्चयः ॥ १२ ॥ श्रुतिर्धर्म इति ह्येके नेत्याहुरपरे जनाः। न च तत् प्रत्यसूयामो न हि सर्वं विधीयते ॥ १३ ॥ ये न्यायेन जिहीर्षन्तो धर्ममिच्छन्ति कस्यचित्। तेभ्यस्तु न तदाख्येयं स धर्म इति निश्चितः ॥ १४ ॥ अकूजनेन चेन्मोक्षो नावकूजेत् कथञ्चन। अवश्यं कूजितव्ये वा शङ्केरन् वाप्यकूजनात्। श्रेयस्तत्रानृतं वक्तुं स्यादिति विचारितम् ॥ १५ ॥ यः पापैः सह सम्बन्धान्मुच्यते शपथादपि ॥ १६ ॥ न तेभ्योऽपि धनं देयं शक्ये सति कथञ्चन। पापेभ्यो हि धनं दत्तं दातारमपि पीड़येत् ॥१७॥ स्वशरीरोपरोधेन धनमादातुमिच्छतः। सत्यसम्प्रतिपत्त्यर्थं यद्ब्रूयुः साक्षिणः क्वचित्। अनुक्त्वा तत्र तद्वाच्यं सर्वे तेऽनृतवादिनः ॥ १८ ॥ प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत् ॥ १९ ॥ अर्थस्य रक्षणार्थाय परेषां धर्मकारणात्। परेषां सिद्धिमाकाङ्क्षन्नीचः स्याद्धर्मभिक्षुकः ॥ २० ॥ प्रतिश्रुत्य प्रदातव्यः स्वकार्यस्तु बलात् कृतः। यः कश्चिद्धर्मसमयात् प्रच्युतो धर्मसाधनः। दण्डेनैव स हन्तव्यस्तं पन्थानं समाश्रितः ॥ २१ ॥ च्युतः सदैव धर्मेभ्योऽमानवं धर्ममास्थितः। शठः स्वधर्ममुत्सृज्य तमिच्छेदुपजीवितुम् ॥२२॥ सर्वोपायैर्निहन्तव्यः पापो निकृतिजीविनः। धनमित्येव पापानां सर्वेषामिह निश्चयः ॥ २३ ॥ अविषह्या ह्यसम्भोज्या निकृत्यायतनं गताः। च्युता देवमनुष्येभ्यो यथा प्रेतास्तथैव ते ॥ २४ ॥ निर्यज्ञास्तपसा हीना मास्म तैः सह सङ्गमः। धननाशाद्दुःखतरं जीवि-

तादिप्रयोजनम् ॥ २५ ॥ अयन्ते रोचतां धर्म इति वाच्यः प्रयत्नतः । न कश्चिदस्ति पापानां धर्म इत्येष निश्चयः ॥ २६ ॥ तथागतञ्च यो हन्यान्नासौ पापेन लिप्यते । स्वकर्मणा हतं हन्ति हत एव स हन्यते ॥ २७ ॥ तेषु यः समयं कश्चित् कुर्वीत हतबुद्धिषु । यथा काकश्च गृध्रश्च तथैवोपधिजीविनः । ऊर्द्धं देहविमोचात्ते भवन्त्येतासु योनिषु ॥२८॥ यस्मिन् यथा वर्त्तते यो मनुष्यस्तस्मिंस्तथा वर्त्तितव्यं स धर्मः । मायाचारो मायया बाधितव्यः साध्वाचारः साधुना प्रत्युपेयः ॥ २९ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि सत्यानृतके नवाधिकशततोऽध्यायः ॥ १०९ ॥

---

युधिष्ठिर उवाच । क्लिश्यमानेषु भूतेषु तैस्तैर्भावैस्ततस्ततः । दुर्गाण्यतितरेद्येन तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच । आश्रमेषु यथोक्तेषु यथोक्तं ये द्विजातयः । वर्त्तन्ते संयतात्मानो दुर्गाण्यतितरन्ति ते ॥ २ ॥ ये दम्भान्नाचरन्ति स्म येषां वृत्तिश्च संयता । विषयांश्च निगृह्णन्ति दुर्गाण्यतितरन्ति ते ॥ ३ ॥ प्रत्याहुर्नोच्यमाना ये न हिंसन्ति च हिंसिताः । प्रयच्छन्ति न याचन्ते दुर्गाण्यतितरन्ति ते ॥ ४ ॥ वासयन्त्यतिथीन्नित्यं नित्यं ये चानसूयकाः । नित्यं स्वाध्यायशीलाश्च दुर्गाण्यतितरन्ति ते ॥ ५ ॥ मातापित्रोश्च ये वृत्तिं वर्त्तन्ते धर्मकोविदाः । वर्ज्जयन्ति दिवा स्वप्नं दुर्गाण्यतितरन्ति ते ॥ ६ ॥ ये वा पापं न कुर्वन्ति कर्मणा मनसा गिरा । निक्षिप्तदण्डा भूतेषु दुर्गाण्यतितरन्ति ते ॥ ७ ॥ ये न लोभान्नयन्त्यर्थान् राजानो राजसान्विताः । विषयान् परिरक्षन्ति दुर्गाण्यतितरन्ति ते ॥ ८ ॥ स्वेषु दारेषु वर्त्तन्ते नान्यवृत्तिव्रताव्रतौ । अग्निहोत्रपराः सन्तो दुर्गाण्यतितरन्ति

ते॥ ९॥ आहवेषु च ये शूरास्त्यक्त्वा मरणजं भयम्। धर्म्मेण जय-
मिच्छन्ति दुर्गाण्यतितरन्ति ते ॥ १० ॥ ये वदन्तीह सत्यानि
प्राणत्यागेऽप्युपस्थिते। प्रमाणभूता भूतानां दुर्गाण्यतितरन्ति ते
॥ ११ ॥ कर्माण्यकुहकार्थानि येषां वाचश्च सूनृताः। येषा-
मर्थाश्च सम्बद्धा दुर्गाण्यतितरन्ति ते ॥ १२ ॥ अनध्यायेषु ये विप्राः
स्वाध्यायं नेह कुर्वते। तपोनिष्ठाः सुतपसो दुर्गाण्यतितरन्ति ते
॥ १३ ॥ ये तपश्च तपस्यन्ति कौमारब्रह्मचारिणः। विद्यावेद-
व्रतस्नाता दुर्गाण्यतितरन्ति ते ॥ १४ ॥ ये च संशान्तरजसः सं-
शान्ततमसश्च ये। सत्त्वे स्थिता महात्मानो दुर्गाण्यतितरन्ति ते
॥ १५ ॥ येषां न कश्चिन्नसति न त्रसन्ति हि कस्यचित्। येषामात्म-
समो लोको दुर्गाण्यतितरन्ति ते ॥ १६ ॥ परश्रिया न तप्यन्ति ये
सन्तः पुरुषर्षभाः। ग्राम्यादर्थान्निवृत्ताश्च दुर्गाण्यतितरन्ति ते
॥ १७ ॥ सर्वान् देवान्नमस्यन्ति सर्वधर्मांश्च शृण्वते। ये श्रद्दधानाः
शान्ताश्च दुर्गाण्यतितरन्ति ते ॥ १८ ॥ ये न मानित्वमिच्छन्ति
मानयन्ति च ये परान्। मान्यमानान्नमस्यन्ति दुर्गाण्यतितरन्ति
ते ॥ १९ ॥ ये च श्राद्धानि कुर्वन्ति तिथ्यां तिथ्यां प्रजार्थिनः।
सुविशुद्धेन मनसा दुर्गाण्यतितरन्ति ते ॥ २० ॥ ये क्रोधं संनिय-
च्छन्ति क्रुद्धान् संशमयन्ति च। न च कुप्यन्ति भूतानां दुर्गाण्यति-
तरन्ति ते ॥ २१ ॥ मधु मांसञ्च ये नित्यं वर्ज्जयन्तीह मानवाः।
जन्मप्रभृति मद्यञ्च दुर्गाण्यतितरन्ति ते ॥ २२ ॥ यत्रार्थं भोजनं
येषां सन्तानार्थञ्च मैथुनम्। वाक् सत्यवचनार्थाय दुर्गाण्यति-
तरन्ति ते ॥ २३ ॥ ईश्वरं सर्वभूतानां जगतः प्रभवाप्ययम्। भक्ता
नारायणं देवं दुर्गाण्यतितरन्ति ते ॥ २४ ॥ य एष पद्मरक्ताक्षः
पीतवासा महाभुजः। सुहृद्भ्राता च मित्रञ्च सम्बन्धी च तथाच्युतः
॥ २५ ॥ य इमान् सकलांल्लोकान् चर्मवत् परिवेष्टयेत्। इच्छन्
प्रभुरचिन्त्यात्मा गोविन्दः पुरुषोत्तमः ॥ २६ ॥ स्थितः प्रियहिते

जिष्णोः स एव पुरुषोत्तमः । राजंस्तव च दुर्द्धर्षो वैकुण्ठः पुरुषर्षभः ॥ २७ ॥ य एनं संश्रयन्तीह भक्त्या नारायणं हरिम् । ते तरन्तीह दुर्गाणि न चात्रास्ति विचारणा ॥ २८ ॥ दुर्गातितरणं ये च पठन्ति श्रावयन्ति च । कथयन्ति च विप्रेभ्यो दुर्गाण्यतितरन्ति ते ॥ २९ ॥ इति कृत्यसमुद्देशः कीर्त्तितस्ते मयानघ । तरन्ते येन दुर्गाणि परत्रेह च मानवाः ॥ ३० ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि दुर्गातितरणोपायकथने दशाधिकशतोऽध्यायः ॥ ११० ॥

---

युधिष्ठिर उवाच । असौम्याः सौम्यरूपेण सौम्याश्चासौम्यदर्शनाः । ईदृशान् पुरुषांस्तात कथं विद्यामहे वयम् ॥ १ ॥

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । व्याघ्रगोमायुसम्वादं तन्निबोध युधिष्ठिर ॥ २ ॥ पुरिकायां पुरि पुरा श्रीमत्यां पौरिको नृपः । परहिंसारतिः क्रूरो बभूव पुरुषाधमः ॥ ३ ॥ स त्वायुषि परिक्षीणे जगामानीप्सितां गतिम् । गोमायुत्वञ्च सम्प्राप्तो दूषितः पूर्वकर्मणा ॥ ४ ॥ संस्मृत्य पूर्वभूतिञ्च निर्व्वेदं परमं गतः । न भक्षयति मांसानि परैरुपहृतान्यपि ॥ ५ ॥ अहिंस्रः सर्वभूतेषु सत्यवाक् सुदृढव्रतः । स चकार यथाकालमाहारं पतितैः फलैः ॥ ६ ॥ श्मशाने तस्य चावासो गोमायोः सम्मतोऽभवत् । जन्मभूम्यनुरोधाच्च नान्यं वासमरोचयत् ॥ ७ ॥ तस्य शौचममृष्यन्तस्ते सर्वे सहजातयः । चालयन्ति स्म तां बुद्धिं वचनैः प्रश्रयोत्तरैः ॥ ८ ॥ वसन् पितृवने रौद्रे शौचे वर्त्तितुमिच्छसि । इयं विप्रतिपत्तिस्ते यदा त्वं पिशिताशनः ॥ ९ ॥ तत् समानो भवास्माभिर्भोज्यं दास्यामहे वयम् । भुङ्क्ष्व शौचं परित्यज्य यद्धि भुक्तं तदास्तु ते ॥ १० ॥ इति तेषां वचः श्रुत्वा प्रत्युवाच

समाहितः । मधुरैः प्रसृतैर्वाक्यैर्हेतुमद्भिरनिष्ठुरैः ॥ ११ ॥ अप्रमाणा प्रसूतिर्मे शीलतः क्रियते कुलम् । प्रार्थयामि च तत् कर्म येन विस्तीर्य्यते यशः ॥ १२ ॥ श्मशाने यदि वासो मे समाधिर्मे निशाम्यताम् । आत्मा फलति कर्माणि नाश्रमो धर्मकारणम् ॥१३॥ आश्रमे यो द्विजं हन्याद्गां वा दद्यादनाश्रमे । किन्नु तत् पातकं न स्यात्तद्वा दत्तं वृथा भवेत् ॥ १४ ॥ भवन्तः स्वार्थलोभेन केवलं भक्षणे रताः । अनुबन्धे त्रयो दोषास्तान्न पश्यन्ति मोहिताः ॥१५॥ अप्रत्ययकृतां गर्ह्यामर्थापनयदूषिताम् । इह चामुत्र चानिष्टां तस्माद्वृत्तिं न रोचये ॥ १६ ॥ तं शुचिं पण्डितं मत्वा शार्दूलः ख्यातविक्रमः । कृत्वात्मसदृशीं पूजां साचिव्येऽवरयत् स्वयम् ॥ १७॥

शार्दूल उवाच । सौम्य विज्ञातरूपस्त्वं गच्छ यात्रां मया सह । व्रियन्तामीप्सिता भोगाः परिहार्य्याश्च पुष्कलाः ॥ १८ ॥ तीक्ष्णा इति वयं ख्याता भवन्तं ज्ञापयामहे । मृदुपूर्वं हितञ्चैव श्रेयश्चाधिगमिष्यसि ॥ १९ ॥ अथ सम्पूज्य तद्वाक्यं मृगेन्द्रस्य महात्मनः । गोमायु संश्रितं वाक्यं बभाषे किञ्चिदानतः ॥ २० ॥

गोमायुरुवाच । सदृशं मृगराजैतत्तव वाक्यं मदन्तरे । यत् सहायान्मृगयसे धर्मार्थकुशलान् शुचीन् ॥ २१ ॥ न शक्यं ह्यनमात्येन महत्त्वमनुशासितुम् । दुष्टामात्येन वा वीर शरीरपरिपन्थिना ॥ २२ ॥ सहायाननुरक्तांश्च नयज्ञानुपसंहितान् । परस्परमसंसृष्टान्वि जिगीषूनलोलुपान् ॥२३॥अनतीतोपधान् प्राज्ञान् हिते युक्तान्मनस्विनः । पूजयेथा महाभाग यथाचार्य्यान् यथा पितॄन् ॥ २४ ॥ न त्वेव मम सन्तोषाद्रोचतेऽन्यन्मृगाधिप । न कामये सुखान् भोगानैश्वर्य्यंञ्च तदाश्रयम् ॥ २५ ॥ न योक्ष्यति हि मे शीलं तव भृत्यैः पुरातनैः । ते त्वां विभेदयिष्यन्ति दुःशीलाश्च मदन्तरे ॥ २६ ॥ न संश्रयः श्लाघनीयो ह्यन्येषामपि भास्वताम् ॥ २७ ॥ कृतात्मा सुमहाभागः पापकेष्वप्यदारुणः । दीर्घदर्शी

महोत्साहः स्थूललक्षो महाबलः । कृती चामोघकर्त्तास्मि भोगैश्च समलङ्कृतः ॥ २८ ॥ न स्वल्पेनास्मि सन्तुष्टो दुःखावृत्तिरनुष्ठिता । सेवायाञ्चापि नाभिज्ञः स्वच्छन्देन वनेचरः ॥ २९ ॥ राजोपक्रोशदोषाश्च सर्वे संश्रयवासिनाम् । व्रतचर्य्या तु निःशङ्का निर्भया वनवासिनाम् ॥ ३० ॥ नृपेणाहूयमानस्य यत्तिष्ठति भयं हृदि । न तत्तिष्ठति तुष्टानां वने मूलफलाशिनाम् ॥ ३१ ॥ पानीयं वा निरायासं स्वाद्वन्नं वा भयोत्तरम् । विचार्य्य खलु पश्यामि तत् सुखं यत्र निर्वृतिः ॥ ३२ ॥ अपराधैर्न तावन्तो भृत्याः शिष्टा नराधिपैः । उपघातैर्यथा भृत्या दूषिता निधनङ्गताः ॥ ३३ ॥ यदि त्वेतन्मया कार्य्यं मृगेन्द्र यदि मन्यसे । समयं कर्त्तुमिच्छामि वर्त्तितव्यं यथा मयि ॥ ३४ ॥ मदीया माननीयास्ते श्रोतव्यञ्च हितं वचः । कल्पिता या च मे वृत्तिः सा भवेत्त्वयि सुस्थिरा ॥ ३५ ॥ न मन्त्रयेयमन्यैस्ते सचिवैः सह कर्हिचित् । नीतिमन्तः परीप्सन्तो वृथा ब्रूयुः परे मयि ॥ ३६ ॥ एक एकेन सङ्गम्य रहो ब्रूयां हितं वचः । न च ते ज्ञातिकार्य्येषु प्रष्टव्योऽहं हिताहिते ॥ ३७ ॥ मया संमन्त्र्य पश्चाच्च न हिंस्याः सचिवास्त्वया । मदीयानाञ्च कुपितो मा त्वं दण्डं निपातयीः ॥ ३८ ॥ एवमस्त्विति तेनासौ मृगेन्द्रेणाभिपूजितः । प्राप्तवान्मतिसाचिव्यं गोमायुर्व्याघ्रयोनितः ॥३९॥ तं तथा सत्कृतं दृष्ट्वा पूज्यमानं स्वकर्मसु । प्राद्विषन् कृतसङ्घाताः पूर्वभृत्या मुहुर्मुहुः ॥ ४० ॥ मित्रबुद्ध्या च गोमायुं सान्त्वयित्वा प्रसाद्य च । दोषैस्तु समतां नेतुमैच्छन्नशुभबुद्धयः ॥ ४१ ॥ अन्यथा ह्युषिताः पूर्वं परद्रव्याभिहारिणः । अशक्ताः किञ्चिदादातुं द्रव्यं गोमायुयन्त्रिताः ॥ ४२ ॥ व्युत्थानञ्च विकाङ्क्षद्भिः कथाभिः प्रतिलोभ्यते । धनेन महता चैव बुद्धिरस्य विलोभ्यते । न चापि स महाप्राज्ञस्तस्माद्धैर्य्याच्चचाल ह ॥ ४३ ॥ अथास्य समयं कृत्वा विनाशाय तथापरे । ईप्सितन्तु मृगेन्द्रस्य मांसं यत्तत्र संस्कृतम् ।

अपनीय स्वयं तद्धि तैर्न्यस्तं तस्य वेश्मनि ॥ ४४ ॥ यदर्थञ्चाप्यप-हृतं येन तच्चैव मन्त्रितम्। तस्य तद्विदितं सर्वं कारणार्थञ्च मर्षितम्॥ ४५ ॥ समयोऽयं कृतस्तेन साचिव्यमुपगच्छता। नोपयातस्त्वया कार्य्यो राजन्मैत्रीमिहेच्छता॥ ४६ ॥

भीष्म उवाच। क्षुधितस्य मृगेन्द्रस्य भोक्तुमभ्युत्थितस्य च। भोजनायोपहर्त्तव्यं तन्मासं नोपदृश्यते। मृगराजेन चाज्ञप्तं दृश्यतां चौर इत्युत॥ ४७ ॥ कृतकैश्चापि तन्मांसं मृगेन्द्रायोपवर्णितम्। सचिवेनापनीतं ते विदुषा प्राज्ञमानिना ॥ ४८ ॥ सरोषस्त्वथ शार्दूलः श्रुत्वा गोमायुचापलम्। बभूवामर्षितो राजा बधञ्चास्य व्यरोचयत्॥ ४९ ॥ छिद्रं ते तस्य तद्दृष्ट्वा प्रोचुस्ते पूर्वमन्त्रिणः। सर्वेषामेव सोऽस्माकं वृत्तिभङ्गे प्रवर्त्तते ॥ ५० ॥ निश्चित्यैवं पुनस्तस्य ते तत्कर्माण्यवर्णयन्। इदं तस्येदृशं कर्म किन्तेन न कृतं भवेत् ॥ ५१ ॥ श्रुतश्च स्वामिना पूर्वं यादृशो नैव तादृशः। वाङ्मात्रेणैव धर्मिष्ठः स्वभावेन तु दारुणः ॥ ५२ ॥ धर्मच्छद्मा ह्ययं पापो वृथाचारपरिग्रहः। कार्य्यार्थं भोजनार्थेषु व्रतेषु कृतवान् श्रमम् ॥५३॥ यदि विप्रत्ययो ह्येष तदिदं दर्शयाम ते। तन्मांसञ्चैव गोमायोस्तैः क्षणादाशु ढौकितम्॥ ५४ ॥ मांसापनयनं ज्ञात्वा व्याघ्रः श्रुत्वा च तद्वचः। आज्ञापयामास तदा गोमायुर्वध्यतामिति॥ ५५ ॥ शार्दूलस्य वचः श्रुत्वा शार्दूलजननी ततः। मृगराजं हितैर्वाक्यैः सम्बोधयितुमागमत्॥ ५६ ॥ पुत्र नैतत्त्वया ग्राह्यं कपटारम्भसंयुतम्। कर्मसङ्घर्षजैर्दोषैर्दुष्येताशुचिभिः शुचिः॥ ५७ ॥ नोच्छ्रितं सहते कश्चित् प्रक्रिया वैरकारिका। शुचेरपि हि युक्तस्य दोष एव निपात्यते॥ ५८ ॥ मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः। उत्पाद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः ॥ ५९ ॥ लुब्धानां शुचयो द्वेष्याः कातराणां तरस्विनः। मूर्खाणां पण्डिता द्वेष्या दरिद्राणां महाधनाः। अधार्मिकाणां धर्मिष्ठा विरूपाणां सुरू-

विशः ॥ ६० ॥ बहवः पण्डिता मूर्खा लुब्धा मायोपजीविनः। कुर्य्युर्दोषमदोषस्य वृहस्पतिमतेरपि ॥ ६१ ॥ शून्यात्तच्च गृहा-न्मांसं यद्यप्यपहृतं तव। नेच्छते दीयमानञ्च साधुतावद्विमृष्यताम् ॥ ६२ ॥ असत्याः सत्यसङ्काशाः सत्याश्चासत्यदर्शनाः। दृश्यन्ते विविधा भावास्तेषु युक्तं परीक्षणम् ॥ ६३ ॥ तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव। न चैवास्ति तलं व्योम्नि खद्योते न हुता-शनः ॥ ६४ ॥ तस्मात् प्रत्यक्षदृष्टोऽपि युक्तो ह्यर्थं परीक्षितुम्। परीक्ष्य ज्ञापयन्नर्थान्न पश्चात् परितप्यते ॥ ६५ ॥ न दुष्करमिदं पुत्र यत् प्रभुर्घातयेत् परम्। श्लाघनीया यशस्या च लोके प्रभ-वतां क्षमा ॥ ६६ ॥ स्थापितोऽयं त्वया पुत्र सामन्तेष्वपि विश्रुतः। दुःखेनासाद्यते पात्रं धार्य्यतामेष ते सुहृत् ॥ ६७ ॥ दूषितं पर-दोषैर्हि गृह्णीते योऽन्यथा शुचिम्। स्वयं संदूषितामात्यः क्षिप्र-मेव विनश्यति ॥ ६८ ॥ तस्मादप्यरिसङ्घाताद्गोमायोः कश्चिदागतः। धर्म्मात्मा तेन चाख्यातं यथैतत् कपटं कृतम् ॥ ६९ ॥ ततो विज्ञात-चारित्रः सत्कृत्य स विमोचितः। परिष्वक्तश्च सस्नेहं मृगेन्द्रेण पुनः पुनः ॥ ७० ॥ अनुज्ञाप्य मृगेन्द्रन्तु गोमायुर्नीतिशास्त्रवित्। तेनामर्षेण सन्तप्तः प्रायमासितुमैच्छत ॥ ७१ ॥ शार्दूलस्तन्तु गोमायुं स्नेहात् प्रोत्फुल्ललोचनः। अवारयत् स धर्मिष्ठं पूजया प्रतिपूजयन् ॥ ७२ ॥ तं स गोमायुरालोक्य स्नेहादागतसम्भ्रमम्। उवाच प्रणतो वाक्यं वाष्पगद्गदया गिरा ॥ ७३ ॥ पूजितोऽहं त्वया पूर्वं पश्चाच्चैव विमानितः। परेषामास्पदं नीतो वस्तुं नार्हा-म्यहं त्वयि ॥ ७४ ॥ असन्तुष्टाश्च्युताः स्थानान्मानात् प्रत्यवरो-पिताः। स्वयञ्चोपहृता भृत्या ये चाप्युपहिताः परैः ॥ ७५ ॥ परिक्षीणाश्च लुब्धाश्च क्रुद्धा भीताः प्रतारिताः। हृतस्वा मानिनो ये च त्यक्तादाना महेप्सवः ॥ ७६ ॥ सन्तापिताश्च ये केचिद्व्यस-नौघप्रतीक्षिणः। अन्तर्हिता सोपहितास्ते सर्व्वेऽपरसाधनाः ॥७७॥

अवमानेन युक्तस्य स्थानभ्रष्टस्य वा पुनः । कथं यास्यसि विश्वास-महं तिष्ठामि वा कथम् ॥ ७८॥ समर्थ इति संगृह्य स्थापयित्वा परीक्षितः । कृतश्च समयं भित्त्वा त्वयाहमवमानितः ॥ ७९ ॥ प्रथमं यः समाख्यातः शीलवानिति संसदि । न वाच्यं तस्य वैगुण्यं प्रतिज्ञां परिरक्षता ॥ ८० ॥ एवञ्चावमतस्येह विश्वासं मे न यास्यसि । त्वयि चापेतविश्वासे ममोद्वेगो भविष्यति ॥ ८१ ॥ शङ्कितस्त्वमहं भीतः परे छिद्रानुदर्शिनः । अस्निग्धाश्चैव दुस्तोषाः कर्म चैतद्बहुच्छलम् ॥ ८२ ॥ पूर्वं सम्माननना यत्र पश्चाच्चैव विमानना । न तं धीराः प्रशंसन्ति सम्मानितविमानितम् ॥ ८३ ॥ दुःखेन श्लिष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते । भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्त्तते ॥ ८४ ॥ कश्चिदेव हिते भर्त्तुर्दृश्यते न परात्मनोः । कार्य्यापेक्षा हि वर्त्तन्ते भावाः स्निग्धाः सुदुर्लभाः ॥ ८२ ॥ सुदुःखं पुरुषज्ञानं चित्तं ह्येषां चलाचलम् । समर्थो वाप्यशक्तो वा शतेष्वेकोऽधिगम्यते ॥ ८६ ॥ अकस्मात् प्रक्रिया नृणामकस्माच्चापकर्षणम् । शुभाशुभे महत्त्वञ्च प्रकर्त्तुं बुद्धिलाघवम् ॥ ८७ ॥

भीष्म उवाच । एवंविधं सान्त्वमुक्त्वा धर्मकामार्थहेतुमत् । प्रसादयित्वा राजानं गोमायुर्वनमभ्यगात् ॥ ८८ ॥ अगृह्यानुनयं तस्य मृगेन्द्रस्य च बुद्धिमान् । गोमायुः प्रायमास्थाय त्यक्त्वा देहं दिवं ययौ ॥ ८९ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि व्याघ्रगोमायु-संवादे एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

---

युधिष्ठिर उवाच । किं पार्थिवेन कर्त्तव्यं किञ्च कृत्वा सुखी भवेत् । एतदाचक्ष्व तत्त्वेन सर्वधर्मभृतांवर ॥ १ ॥

भीष्म उवाच । हन्त तेऽहं प्रवच्यामि शृणु कार्य्यैकनिश्चयम् । यथा राज्ञेह कर्त्तव्यं यच्च कृत्वा सुखी भवेत् ॥ २ ॥ न चैवं वर्त्तितव्यं स्म यथेदमनुशुश्रुम । उष्ट्रस्य तु महद्वृत्तं तन्निबोध युधिष्ठिर ॥ ३ ॥ जातिस्मरो महानुष्ट्रः प्राजापत्ययुगेऽभवत् । तपः सुमहदातिष्ठदरण्ये संशितव्रतः ॥ ४ ॥ तपसस्तस्य चान्तेऽथ प्रीतिमानभवद्विभुः । वरेण छन्दयामास ततश्चैनं पितामहः ॥ ५॥

उष्ट्र उवाच । भगवंस्त्वत्प्रसादान्मे दीर्घा ग्रीवा भवेदियम् । योजनानां शतं साग्रं गच्छामि चरितुं विभो ॥ ६ ॥ एवमस्त्विति चोक्तः स वरदेन महात्मना । प्रतिलभ्य वरं श्रेष्ठं ययावुष्ट्रः स्वकं वनम् ॥ ७ ॥ स चकार तदालस्यं वरदानात् सुदुर्मतिः । न चैच्छच्चरितुं गन्तुं दुरात्मा कालमोहितः ॥ ८ ॥ स कदाचित् प्रसार्य्यैव तां ग्रीवां शतयोजनाम् । चचाराश्रान्तहृदयो वातश्चागात्ततो महान् ॥ ९ ॥ स गुहायां शिरो ग्रीवां निधाय पशुरात्मनः । आस्तेऽथ वर्षमभ्यागात् सुमहत् प्लावयज्जगत् ॥ १० ॥ अथ शीतपरीताङ्गो जम्बुकः क्षुच्छ्रमान्वितः । सदारस्तां गुहानाशु प्रविवेश जलार्द्दितः ॥ ११ ॥ स दृष्ट्वा मांसजीवी तु सुभृशं क्षुच्छ्रमान्वितः । अभक्षयत्ततो ग्रीवामुष्ट्रस्य भरतर्षभ ॥ १२ ॥ यदा त्वबुध्यतात्मानं भक्ष्यमाणं स वै पशुः । तदा सङ्कोचने यत्नमकरोद्भृशदुःखितः ॥ १३ ॥ यावदूर्द्ध्वमधश्चैव ग्रीवां सङ्क्षिपते पशुः । तावत्तेन सदारेण जम्बुकेन स भक्षितः ॥ १४ ॥ स हत्वा भक्षयित्वा च तमुष्ट्रं जम्बुकस्तदा । विगते वातवर्षे तु निश्चक्राम गुहामुखात् ॥ १५ ॥ एवं दुर्बुद्धिना प्राप्तमुष्ट्रेण निधनं तदा । आलस्यस्य क्रमात् पश्य महान्तं दोषमागतम् ॥ १६ ॥ त्वमप्येवंविधं हित्वा योगेन नियतेन्द्रियः । वर्त्तस्व बुद्धिमूलन्तु विजयं मनुरब्रवीत् ॥ १७ ॥ बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत । तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥ १८ ॥ राज्यं तिष्ठति दक्षस्य

संगृहीतेन्द्रियस्य च। आर्त्तस्य बुद्धिमूलं हि विजयं मनुरब्रवीत् ॥ १९॥ गुह्यं मन्त्रं श्रुतवतः ससहायस्य चानघ। परीक्ष्य कारिणो ह्यर्थास्तिष्ठन्तीह युधिष्ठिर ॥ २०॥ सहाययुक्तेन मही कृत्स्ना शक्या प्रशासितुम् ॥ २१ ॥ इदं हि सद्भिः कथितं विधिज्ञैः पुरा महेन्द्रप्रतिमप्रभाव। मयापि चोक्तं तव शास्त्रदृष्ट्या यथैव बुद्ध्या प्रचरस्व राजन् ॥ २२ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि उष्ट्रग्रीवोपाख्याने द्वादशाधिकशतोऽध्यायः ॥ ११२ ॥

---

युधिष्ठिर उवाच। राजा राज्यमनुप्राप्य दुर्लभं भरतर्षभ। अमित्रस्यातिवृद्धस्य कथं तिष्ठेदसाधनः ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। सरिताञ्चैव संवादं सागरस्य च भारत ॥ २ ॥ सुरारिनिलयः शश्वत् सागरः सरिताम्पतिः। पप्रच्छ सरितः सर्वाः संशयं जातमात्मनः ॥ ३ ॥

सागर उवाच। समूलशाखान् पश्यामि निहतान् कायिनो द्रुमान्। युष्माभिरिह पूर्णाभिर्नद्यस्तत्र न वेतसम् ॥ ४ ॥ अकायश्चाल्पसारश्च वेतसः कूलजश्च वः। अवज्ञया वा नानीतः किञ्च वा तेन वः कृतम् ॥ ५ ॥ तदहं श्रोतुमिच्छामि सर्वासामेव वो मतम्। यथा चेमानि कूलानि हित्वा नायाति वेतसः ॥ ६ ॥ तत्र प्राह नदी गङ्गा वाक्यमुत्तरमर्थवत्। हेतुमद्ग्राहकञ्चैव सागरं सरितां पतिम् ॥ ७ ॥

गङ्गोवाच। तिष्ठन्त्येते यथास्थानं नगा ह्येकनिकेतनाः। ते त्यजन्ति ततः स्थानं प्रातिलोम्यान्न वेतसः ॥ ८ ॥ वेतसो वेगमायान्तं दृष्ट्वा नमति नापरे। सरिद्वेगेभ्य तिक्रान्ते स्थानमासाद्य

तिष्ठति॥ ९ ॥ कालज्ञ समयज्ञश्च सदा वश्यश्च नोद्धतः। अनुलोमस्तथा स्तब्धस्तेन नाभ्येति वेतसः ॥ १० ॥ मारुतोदकवेगेन ये नमन्त्युन्नमन्ति च। ओषध्यः पादपा गुल्मा न ते यान्ति पराभवम् ॥ ११ ॥

भीष्म उवाच। यो हि शत्रोर्विवृद्धस्य प्रभोर्वधविनाशने। पूर्वं न सहते वेगं चिप्रमेव विनश्यति ॥ १२ ॥ सारासारं बलं वीर्य्यमात्मनो द्विषतश्च यः जानन्। विचरति प्राज्ञो न स याति पराभवम् ॥ १३ ॥ एवमेव यदा विद्वान्मन्यतेऽविलं रिपुम्। संश्रयेद्वैतसीं वृत्तिमेतत् प्रज्ञानलक्षणम् ॥ १४ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि सरित्सागरसंवादे त्रयोदशाधिकशततोऽध्यायः ॥ ११३ ॥

---

युधिष्ठिर उवाच। विद्वान्मूर्ख प्रगल्भेन मृदुतीक्ष्णेण भारत। आक्रुश्यमानः सदसि कथं कुर्य्यादरिन्दम ॥ १ ॥

भीष्म उवाच। श्रूयतां पृथिवीपाल यथैषोऽर्थोनुगीयते। सदा सुचेताः सहते नरस्येहाल्पमेधसः ॥ २ ॥ अरुष्यन् क्रुश्यमानस्य सुकृतं नाम विन्दति। दुष्कृतञ्चात्मनोमर्षी रुष्यत्येवापमार्ष्टि वै ॥ ३ ॥ टिट्टिभं तमुपेचेत वाशमानमिवातुरम्। लोके विद्वेषमापन्नो निस्फलस्प्रतिपद्यते ॥ ४॥ इति संश्लाघते नित्यं तेन पापेन कर्मणा। इदमुक्तो मया कश्चित् सम्मतो जनसंसदि ॥ ५ ॥ स तत्र व्रीड़ितः शुष्का मृतकल्पोऽवतिष्ठते। श्लाघन्नश्लाघनीयेन कर्मणा निरपत्रपः ॥ ६ ॥ उपेक्षितव्यो यत्नेन तादृशः पुरुषाधमः। यद्यद्ब्रूयादल्पमतिस्तत्तदस्य सहेद्बुधः ॥ ७ ॥ प्राकृतो हि प्रशंसन् वा निन्दन् वा किं करिष्यति। वने काक इवाबुद्धिर्वाशमानो निरर्थकम् ॥ ८ ॥ यदि वाग्भिः प्रयोगः स्यात् प्रयोगे पापकर्मणः।

वागेवार्थो भवेत्तस्य न ह्येवार्थो जिघांसतः ॥ ९ ॥ निषिक्तं विपरीतं स आचष्टे वृत्तचेष्टया। मयूर इव कौपीनं नृत्यं सन्दर्शयन्निव ॥ १० ॥ यस्यावाच्यं न लोकेऽस्ति नाकार्यञ्चापि किञ्चन। वाचं तेन न सन्दध्याच्छुचिः संश्लिष्टकर्मणा ॥ ११ ॥ प्रत्यक्षं गुणवादी यः परोक्षे चापि निन्दकः। स मानवः श्ववल्लोके नष्टलोकपरावरः ॥ १२ ॥ तादृग्जनशतस्यापि यद्ददाति जुहोति च। परोक्षेणापवादी यस्तन्नाशयति तत्क्षणात् ॥ १३ ॥ तस्मात् प्राज्ञो नरः सद्यस्तादृशं पापचेतसम्। वर्जयेत् साधुभिर्वर्ज्यं सारमेयामिषं यथा ॥ १४ ॥ परिवादं ब्रुवाणो हि दुरात्मा वै महाजने। प्रकाशयति दोषांस्तु सर्पः फणमिवोच्छ्रितम् ॥ १५ ॥ तं स्वकर्माणि कुर्वाणं प्रतिकर्त्तुं य इच्छति। भस्मकूट इवाबुद्धिः खरो रजसि मज्जति ॥ १६ ॥ मनुष्यशालावृकमप्रशान्तं जनापवादे सततं निविष्टम्। मातङ्गमुन्मत्तमिवोन्नदन्तं त्यजेत तं श्वानमिवातिरौद्रम् ॥ १७ ॥ अधीरजुष्टे पथि वर्त्तमानं दमादपेतं विनयाच्च पापम्। अरिव्रतं नित्यमभूतिकामं धिगस्तु तं पापमतिं मनुष्यम् ॥ १८ ॥ प्रत्युच्यमानस्त्वभिभूय एभिर्निशाम्य माभूस्त्वमथार्त्तरूपः। उच्चस्य नीचेन हि संप्रयोगं विगर्हयन्ति स्थिरबुद्धयो ये ॥ १९ ॥ क्रुद्धो दशार्द्धेन हि ताड़येद्वा स पांशुभिर्वा विकिरेत्तुषैर्वा। विवृत्य दन्तांश्च विभीषयेद्वा सिद्धं हि मूढ़े कुपिते नृशंसे ॥ २० ॥ विगर्हणां परमदुरात्मना कृतां सहेत यः संसदि दुर्जनान्नरः। पठेदिदञ्चापि निदर्शनं सदा न वाङ्मयं स लभति किञ्चिदप्रियम् ॥ २१॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि टिट्टिभकोपाख्याने चतुर्द्दशाधिकशततोऽध्यायः ॥ ११४ ॥

---

युधिष्ठिर उवाच । पितामह महाप्राज्ञ संशयो मे महानयम् । संछेत्तव्यस्त्वया राजन् भवान् कुलकरो हि नः ॥ १ ॥ पुरुषाणामयं तात दुर्वृत्तानां दुरात्मनाम् । कथितो वाक्यसञ्चारस्ततो विज्ञापयामि ते ॥ २ ॥ यद्धितं राज्यतन्त्रस्य कुलस्य च सुखोदयम् । आयत्याञ्च तदात्वे च क्षेमवृद्धिकरञ्च यत् ॥ ३ ॥ पुत्रपौत्राभिरामञ्च राष्ट्रवृद्धिकरञ्च यत् । अन्नपाने शरीरे च हितं यत्तद्ब्रवीहि मे ॥ ४ ॥ अभिषिक्तो हि यो राजा राष्ट्रस्थो मित्रसंवृतः । ससुहृत् समुपेतो वा स कथं रञ्जयेत् प्रजाः ॥ ५ ॥ यो ह्यसत्प्रग्रहरतिः स्नेहरागबलात्कृतः । इन्द्रियाणामनीशत्वादसज्जनबुभूषकः ॥६॥ तस्य भृत्या विगुणतां यान्ति सर्व्वे कुलोद्गताः । न च भृत्यफलैरर्थैः स राजा सम्प्रयुज्यते ॥७॥ एतन्मे संशयस्थस्य राजधर्मान् सुदुर्विदान् । बृहस्पतिसमो बुद्ध्या भवान् शंसितुमर्हति ॥ ८ ॥ शंसिता पुरुषव्याघ्र त्वन्नः कुलहिते रतः । क्षत्ता चैको महाप्राज्ञो यो नः शंसति सर्वदा ॥ ९ ॥ त्वत्तु कुलहितं वाक्यं श्रुत्वा राज्यहितोदयम् । अमृतस्याव्ययस्येव तृप्तः स्वप्स्याम्यहं सुखम् ॥ १० ॥ कीदृशाः सन्निकर्षस्था भृत्याः सर्वगुणान्विताः । कीदृशैः किं कुलीनैर्वा सह यात्रा विधीयते ॥ ११ ॥ नह्येको भृत्यरहितो राजा भवति रक्षिता । राज्यञ्चेदं जनः सर्वस्तत्कुलीनोऽभिकाङ्क्षति ॥ १२ ॥

भीष्म उवाच । न च प्रशास्तुं राज्यं हि शक्यमेकेन भारत । असहायवता तात नैवार्थाः केचिदप्युत । लब्धुं लब्धा ह्यपि सदा रक्षितुं भरतर्षभ ॥ १३ ॥ यस्य भृत्यजनः सर्वो ज्ञानविज्ञानकोविदः । हितैषी कुलजः स्निग्धः स राज्यफलमश्नुते ॥ १४ ॥ मन्त्रिणो यस्य कुलजा असंहार्य्याः सहोषिताः । नृपतेर्मतिदाः सन्तः सम्बन्धज्ञानकोविदाः ॥ १५ ॥ अनागतविधातारः कालज्ञानविशारदाः । अतिक्रान्तमशोचन्त स राज्यफलमश्नुते ॥ १६ ॥

समदुःखसुखा यस्य सहायाः प्रियकारिणः। अर्थचिन्तापराः सत्याः स राज्यफलमश्नुते ॥ १७ ॥ यस्य नार्त्तो जनपदः सन्निकर्षगतः सदा। अक्षुद्रः सत्पथालम्बी स राजा राज्यभाग्भवेत् ॥ १८ ॥ कोषाख्यपटलं यस्य कोषवृद्धिकरैर्नरैः। आप्तैस्तुष्टैश्च सततं चीयते स नृपोत्तमः ॥ १९ ॥ कोष्ठागारमसंहार्य्यैराप्तैः सञ्चयतत्परैः। पात्रभूतैरलुब्धैश्च पाल्यमानं गुणीभवेत् ॥ २० ॥ व्यवहारश्च नगरे यस्य कर्म्मफलोदयः। दृश्यते शङ्खलिखितः स धर्म्मफलभाङ्नृपः ॥ २१ ॥ संगृहीतमनुष्यश्च यो राजा राजधर्मवित्। षड्वर्गं प्रतिगृह्णाति स धर्मफलमश्नुते ॥ २२ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि
पञ्चदशाधिकशततोऽध्यायः ॥ ११५ ॥

---

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। निदर्शनं परं लोके सज्जनाचरिते सदा ॥ १ ॥ अस्यैवार्थस्य सदृशं तच्छ्रुतं मे तपोवने। जामदग्न्यस्य रामस्य यदुक्तमृषिसत्तमैः ॥२॥ वने महति कस्मिंश्चिदमनुष्यनिषेविते। ऋषिर्मूलफलाहारो नियतो नियतेन्द्रियः ॥ ३ ॥ दीक्षादमपरः शान्तः स्वाध्यायपरमः शुचिः। उपवासविशुद्धात्मा सततं सत्त्वमास्थितः ॥४॥ तस्य संदृश्य सद्भावमुपविष्टस्य धीमतः। सर्वे सत्त्वाः समीपस्था भवन्ति वचनचारिणः ॥ ५ ॥ सिंहव्याघ्रगणाः क्रूरा मत्ताश्चैव महागजाः। द्वीपिनः खड्गभल्लूका ये चान्ये भीमदर्शनाः ॥ ६ ॥ ते सुखप्रश्नदाः सर्वे भवन्ति क्षतजाशनाः। तस्यर्षेः शिष्यवच्चैव न्यग्भूताः प्रियकारिणः ॥ ७ ॥ दत्त्वा च ते सुखप्रश्नं सर्वे यान्ति यथागतम्। ग्राम्यस्त्वेकः पशुस्तत्र नाजहात् स महामुनिम् ॥ ८ ॥ भक्तोऽनुरक्तः सततमुपवासकृशोऽबलः। फलमूलोदकाहारः शान्तः शिष्टाकृति-

यथा ॥ ९ ॥ तस्यर्षेरुपविष्टस्य पादमूले महामते । मनुष्यवद्गतो भावं स्नेहबद्धोऽभवद्भृशम् ॥ १० ॥ ततोऽभ्ययान्महावीर्य्यो द्वीपी क्षतजभोजनः । श्वार्थमत्यन्तसन्तुष्टः क्रूरः काल इवान्तकः ॥११॥ लेलिह्यमानस्तृषितः पुच्छास्फोटनतत्परः । व्यादितास्यः क्षुधाभुग्नः प्रार्थयानस्तदामिषम् ॥ १२ ॥ दृष्ट्वा तं क्रूरमायान्तं जीवितार्थी नराधिप । प्रोवाच श्वा मुनिं तत्र तच्छृणुष्व विशाम्पते ॥ १३ ॥ श्वशत्रुर्भगवन्नेष द्वीपी मां हन्तुमिच्छति । त्वत्प्रसादाद्भयं न स्यात्तस्मान्मम महामुने । तथा कुरु महावाहो सर्व्वज्ञस्त्वं न संशयः ॥ १४ ॥ स मुनिस्तस्य विज्ञाय भावज्ञो भयकारणम् । रुतज्ञः सर्व्वसत्त्वानां प्राहैश्वर्य्यसमन्वितः ॥ १५ ॥

मुनिरुवाच । न भयं द्वीपिनः कार्य्यं मृत्युतस्ते कथञ्चन । एष श्वरूपरहितो द्वीपी भवसि पुत्रक ॥ १६ ॥ ततः श्वा द्वीपितां नीतो जाम्बुनदनिभाकृतिः । चित्राङ्गो विस्फुरद्दंष्ट्रो वने वसति निर्भयः ॥ १७ ॥ दृष्ट्वा तं सम्मुखे द्वीपी आत्मनः सदृशं पशुम् । अविरुद्धस्ततस्तस्य क्षणेन समपद्यत ॥ १८ ॥ ततोऽभ्ययान्महारौद्रो व्यादितास्य क्षुधान्वितः । द्वीपिनं लेलिहद्वक्त्रो व्याघ्रो रुधिरलालसः ॥ १९ ॥ व्याघ्रं दृष्ट्वा क्षुधाभुग्नं दंष्ट्रिणं वनगोचरम् । द्वीपी जीवितरक्षार्थमृषिं शरणमीयिवान् ॥ २० ॥ संवासजं परं स्नेहमृषिणा कुर्व्वता तदा । स द्वीपी व्याघ्रतां नीतो रिपूणां बलवत्तरः ॥ २१ ॥ ततो दृष्ट्वा स शार्दूलो नाहनत्तं विशाम्पते । स तु श्वा व्याघ्रतां प्राप्य बलवान् पिशितासनः । न मूलफलभोगेषु स्पृहामप्यकरोत्तदा ॥ २२ ॥ यथा मृगपतिर्नित्यं प्रकाङ्क्षति वनौकसः । तथैव स महाराज व्याघ्रः समभवत्तदा ॥ २३ ॥

इति शान्तिपर्व्वणि राजधर्मानुशासनपर्व्वणि श्वऋषिसंवादे षोड़शाधिकशततोऽध्यायः ॥ ११६ ॥

भीष्म उवाच । व्याघ्रश्चोटजमूलस्थस्तृप्तः सुप्तो हतैर्मृगैः । गजश्चागात्समुद्देशं मत्तो मेघ इवोत्थितः ॥१॥ प्रभिन्नकरटः प्रांशुः पद्मी विततकुम्भकः । सुविषाणो महाकायो मेघगम्भीरनिस्वनः॥२॥ तं दृष्ट्वा कुञ्जरं मत्तमायान्तं बलगर्वितम् । व्याघ्रो हस्तिभयात्त्रस्तस्तमृषिं शरणं ययौ ॥३॥ ततोऽनयत् कुञ्जरत्वं व्याघ्रं तमृषिसत्तमः । महामेघनिभं दृष्ट्वा स भीतो ह्यभवद्गजः ॥ ४ ॥ ततः कमलषण्डानि शल्लकीगहनानि च । व्यचरत् स मुदायुक्तः पद्मरेणुविभूषितः ॥ ५ ॥ कदाचिद्भ्रममाणस्य हस्तिनः संमुखं तदा । ऋषेरुटजस्थस्य कालोऽगच्छन्निशानिशम् ॥ ६ ॥ अथाजगाम तं देशं केशरी केशरारुणः । गिरिकन्दरजो भीमः सिंहो नागकुलान्तकः ॥७॥ तं दृष्ट्वा सिंहमायान्तं नागः सिंहभयार्दितः । ऋषिं शरणमापेदे वेपमानो भयातुरः ॥ ८ ॥ स ततः सिंहतां नीतो नागेन्द्रो मुनिना तदा । वन्यं नागणयत् सिंहं तुल्यजातिसमन्वयात् । दृष्ट्वा च सोऽभवत् सिंहो वन्यो भयसमन्वितः ॥ ९ ॥ स चाश्रमेऽवसत् सिंहस्तस्मिन्नेव महावने । तद्भयात् पशवो नान्ये तपोवनसमीपतः । व्यदृश्यन्त तदा त्रस्ता जीविताकाङ्क्षिणस्तथा ॥ १० ॥ कदाचित् कालयोगेन सर्वप्राणिविहिंसकः । बलवान् क्षतजाहारो नानासत्त्वभयङ्करः ॥ ११ ॥ अष्टपादूर्द्ध्वनयनः शरभो वनगोचरः । तं सिंहं हन्तुमागच्छन्मुनेस्तस्य निवेशनम् ॥ १२ ॥ तं मुनिः शरभञ्चक्रे बलोत्कटमरिन्दम ॥ १३ ॥ ततः स शरभो वन्यो मुनेः शरभमग्रतः । दृष्ट्वा बलिनमत्युग्रं द्रुतं सम्प्राद्रवद्वनात् ॥ १४ ॥ स एवं शरभस्थाने संन्यस्तो मुनिना तदा । मुनेः पार्श्वगतो नित्यं शरभः सुखमाप्तवान् ॥ १५ ॥ ततः शरभसन्त्रस्ताः सर्वे मृगगणास्तदा । दिशः सम्प्राद्रवन्राजन् भयाज्जीवितकाङ्क्षिणः ॥१६॥ शरभोऽप्यतिसंहृष्टो नित्यं प्राणिवधे रतः । फलमूलाशनं कर्त्तुं नैच्छन् स पिशिताशनः ॥ १७ ॥ ततो रुधिरतर्षेण बलिना शर-

शोऽन्वितः । इयेष तं मुनिं हन्तुमकृतज्ञः श्वयोनिजः ॥ १८ ॥
ततस्तेन तपःशक्त्या विदितो ज्ञानचक्षुषा । विज्ञाय स महाप्राज्ञो
मुनिः श्वानं तमुक्तवान् ॥ १९ ॥

मुनिरुवाच । श्वा त्वं द्वीपित्वमापन्नो द्वीपी व्याघ्रत्वमागतः ।
व्याघ्रान्नागो मदपटुर्नागः सिंहत्वमागतः ॥ २० ॥ सिंहस्तं बल-
मापन्नो भूयः शरभतां गतः । मया स्नेहपरीतेन विसृष्टो न
कुलान्वयः ॥ २१ ॥ यस्मादेवमपापं मां पाप हिंसितुमिच्छसि ।
तस्मात् स्वयोनिमापन्नः श्वैव त्वं हि भविष्यसि ॥ २२ ॥ ततो
मुनिजनद्वेष्टा दुष्टात्मा प्राकृतोऽबुधः । ऋषिणा शरभः शप्तस्तद्रूपं
पुनराप्तवान् ॥ २३ ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि श्वर्षिसंवादे
सप्तदशाधिकशतोऽध्यायः ॥ ११७ ॥

---

भीष्म उवाच । स श्वा प्रकृतिमापन्नः परं दैन्यमुपागतः ।
ऋषिणा हुंकृतः पापस्तपोवनवहिष्कृतः ॥ १ ॥ एवं राज्ञा मति-
मता विदित्वा सत्यशौचताम् । आर्ज्जवं प्रकृतिं सत्यं श्रुतं वृत्तं
कुलं दमम् ॥ २ ॥ अनुक्रोशं बलं वीर्य्यं प्रभावं प्रश्रयं क्षमाम् ।
भृत्या ये यत्र योग्याः स्युस्तत्र स्थाप्याः सुरक्षिताः ॥ ३॥ नापरीक्ष्य
महीपालः सचिवं कर्त्तुमर्हति । अकुलीननराकीर्णो न राजा
सुखमेधते ॥ ४ ॥ कुलजः प्रकृतो राज्ञा स्वकुलीनतया सदा । न
पापे कुरुते बुद्धिं भिद्यमानोऽप्यनागसि ॥ ५ ॥ अकुलीनस्तु
पुरुषः प्राकृतः साधुसंश्रयात् । दुर्लभैश्वर्य्यतां प्राप्तो निन्दितः
शत्रुतां व्रजेत् ॥ ६॥ कुलीनं शिक्षितं प्राज्ञं ज्ञानविज्ञानपारगम् ।
सर्व्वशास्त्रार्थतत्त्वज्ञं सहिष्णुं देशजं तथा ॥७ ॥ कृतज्ञं बलवन्तञ्च
क्षान्तं दान्तं जितेन्द्रियम् । अलुब्धं लब्धसन्तुष्टं स्वामिमित्रबुभू-

षकम् ॥ ८ ॥ सचिवं देशकालज्ञं सत्त्वसंग्रहणे रतम् । सततं युक्तमनसं हितैषिणमतन्द्रितम् ॥ ९ ॥ युक्ताचारं स्वविषये सन्धि-विग्रहकोविदम् । राज्ञस्त्रिवर्गवेत्तारं पौरजानपदप्रियम् ॥ १० ॥ खातकव्यूहतत्त्वज्ञं बलहर्षणकोविदम् । इङ्गिताकारतत्त्वज्ञं यात्राज्ञानविशारदम् ॥ ११ ॥ हस्तिशिक्षासु तत्त्वज्ञमहङ्कारविवर्ज्जितम् । प्रागल्भं दक्षिणं दान्तं बलिनं युक्तकारिणम् ॥ १२ ॥ चौक्षं चौक्षजनाकीर्णं सुमुखं सुखदर्शनम् । नायकं नीतिकुशलं गुण-चेष्टासमन्वितम् ॥ १३ ॥ अस्तब्धं प्रश्रितं श्लक्ष्णं मृदुवादिनमेव च । धीरं शूरं महर्द्धिञ्च देशकालोपपादकम् ॥१४॥ सचिवं यः प्रकुरुते न चैनमवमन्यते । तस्य विस्तीर्य्यते राज्यं ज्योत्स्ना ग्रहपतेरिव ॥ १५ ॥ एतैरेव गुणैर्युक्तो राजा शास्त्रविशारदः । एष्टव्यो धर्म्मपरमः प्रजापालनतत्परः ॥ १६ ॥ धीरो मर्षी शुचिस्तीक्ष्णः काले पुरुषकारवित् । शुश्रूषुः श्रुतवान् श्रोता ऊहापोहविशारदः ॥ १७ ॥ मेधावी धारणायुक्तो यथान्यायोपपादकः । दान्तः सदा प्रियाभाषी क्षमावांश्च विपर्य्यये ॥ १८ ॥ दानाच्छेदे स्वयं कारी श्रद्धालुः सुखदर्शनः । आर्त्तहस्तप्रदो नित्यममात्यो हि हिते रतः ॥ १९ ॥ नाहंवादी न निर्द्वन्द्वो न यत्किञ्चिनकारकः । कृते कर्म्मण्यमात्यानां कर्त्ता भक्तजनप्रियः ॥ २० ॥ संगृहीतजनोऽस्तब्धः प्रसन्नवदनः सदा । सदा भृत्यजनापेक्षी न क्रोधी सुमहामनाः ॥ २१ ॥ युक्तदण्डो न निर्द्दण्डो धर्म्मकार्य्यानुशासनः । चारनेत्रः प्रजावेक्षी धर्मार्थकुशल सदा । राजा गुणशताकीर्ण एष्टव्यस्तादृशो भवेत् ॥ २२ ॥ योधाश्चैव मनुष्येन्द्र सर्व्वे गुणगणैर्वृताः । अन्वेष्टव्याः सुपुरुषाः सहाया राज्यधारणे ॥ २३ ॥ न विमानयितव्यास्ते राज्ञा वृद्धिमभीप्सता । योधाः समरशौण्डीराः कृतज्ञाः शास्त्रकोविदाः ॥ २४ ॥ धर्म्मशास्त्रसमायुक्ताः पदातिजनसंवृताः । अभया गजपृष्ठस्था रथचर्य्याविशारदाः । इष्वस्त्रकुशला

यस्य तस्येयं नृपतेर्मही ॥ २५ ॥ सर्वसंग्रहणे युक्तो नृपो भवति यः सदा । उत्थानशीलो मित्राढ्यः स राजा राजसत्तमः ॥ २६ ॥ शक्या चाश्वसहस्रेण वीरारोहेण भारत । संगृहीतमनुष्येण कृत्स्ना जेतुं वसुन्धरा ॥ २७ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि श्वर्षिसंवादे
अष्टादशाधिकशततोऽध्यायः ॥ ११८ ॥

---

भीष्म उवाच । एवं शुना समान् भृत्यान् स्वे स्वे स्थाने नराधिपः । नियोजयति कृत्येषु स राज्यफलमश्नुते ॥ १ ॥ न श्वा स्वं स्थानमुत्क्रम्य प्रमाणमभिसत्कृतः । आरोप्यः श्वा स्वकात् स्थानादुत्क्रम्यान्यत् प्रमाद्यति ॥ २ ॥ स्वजातिगुणसम्पन्नाः स्वेषु कर्मसु संस्थिताः । प्रकर्त्तव्या ह्यमात्यास्तु नास्थाने प्रक्रिया क्षमा ॥ ३ ॥ अनुरूपाणि कर्माणि भृत्येभ्यो यः प्रयच्छति । स भृत्यगुणसम्पन्नो राजा फलमुपाश्नुते ॥ ४ ॥ शरभः शरभस्थाने सिंहः सिंह इवोर्ज्जितः । व्याघ्रो व्याघ्र इव स्थाप्यो द्वीपी द्वीपी यथातथा ॥ ५ ॥ कर्मस्विहानुरूपेषु न्यस्या भृत्या यथाविधि । प्रतिलोमं न भृत्यास्ते स्थाप्याः कर्मफलैषिणा ॥ ६ ॥ यः प्रमाणमतिक्रम्य प्रतिलोमं नराधिपः । भृत्यान् स्थापयतेऽबुद्धिर्न स रञ्जयते प्रजाः ॥ ७ ॥ न बालिशा न च क्षुद्रा नाप्राज्ञा नाजितेन्द्रियाः । नाकुलीना नराः सर्वे स्थाप्या गुणगणैषिणा ॥ ८ ॥ साधवः कुलजाः शूरा ज्ञानवन्तोऽनसूयकाः । अक्षुद्राः शुचयो दक्षाः स्युर्नराः पारिपार्श्वकाः ॥ ९ ॥ न्यग्भूतास्तत्पराः शान्ताश्चोक्षाः प्रकृतिजैः शुभाः । स्वस्थानानपकृष्टा ये ते स्यू राज्ञां बहिश्चराः ॥ १० ॥ सिंहस्य सततं पार्श्वे सिंह एवानुगो भवेत् । असिंहः सिंहसहितः सिंहवल्लभते फलम् ॥ ११ ॥ यस्तु सिंहः

श्वभिः कीर्णः सिंहकर्म्मफले रतः। न स सिंहफलं भोक्तुं शक्तः श्वभिरुपासितः ॥ १२ ॥ एवमेतन्मनुष्येन्द्र शूरैः प्राज्ञैर्बहुश्रुतैः। कुलीनैः सह शक्येत कृत्स्नां जेतुं वसुन्धराम् ॥ १३ ॥ नाविद्यो नानृजुः पार्श्वे नाप्राज्ञो नामहाधनः। संग्राह्यो वसुधापालैर्भृत्यो भृत्यवतां वर ॥ १४॥ बाणवद्विसृता यान्ति स्वामिकार्य्यपरा नराः। ये भृत्याः पार्थिवहितास्तेषां सान्त्वं प्रयोजयेत् ॥ १५ ॥ कोषश्च सततं रक्ष्यो यत्नमास्थाय राजभिः। कोषमूला हि राजानः कोषो वृद्धिकरो भवेत् ॥ १६ ॥ कोष्ठागारञ्च ते नित्यं स्फीतैर्धान्यैः सुसंवृतम्। सदास्तु सत्सु संन्यस्तं धनधान्यपरो भव ॥ १७ ॥ नित्ययुक्ताश्च ते भृत्या भवन्तु रणकोविदः। वाजिनाञ्च प्रयोगेषु वैशारद्यमिहेष्यते ॥१८॥ ज्ञातिबन्धुजनावेक्षी मित्रसम्बन्धिसंवृतः। पौरकार्य्यहितान्वेषी भव कौरवनन्दन ॥ १९ ॥ एषा ते नैष्ठिकी बुद्धिः प्रजास्वभिहिता मया। शुनो निदर्शनं तात किं भूयः श्रोतुमिच्छसि ॥ २० ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि ऋषिसंवादे एकोनविंशत्यधिकशततोऽध्यायः ॥ ११९ ॥

---

युधिष्ठिर उवाच। राजवृत्तान्यनेकानि त्वया प्रोक्तानि भारत। पूर्वैः पूर्वनियुक्तानि राजधर्मार्थवेदिभिः ॥ १ ॥ तदेव विस्तरेणोक्तं पूर्वं दृष्टं सतां मतम्। प्रणेयं राजधर्माणां प्रब्रूहि भरतर्षभ ॥ २ ॥

भीष्म उवाच। रक्षणं सर्वभूतानामिति चात्रं परं मतम्। तद्यथा रक्षणं कुर्य्यात्तथा शृणु महीपते ॥ ३ ॥ यथा बर्हाणि चित्राणि बिभर्त्ति भुजगाशनः। तथा बहुविधं राजा रूपं कुर्वीत धर्म्मवित् ॥ ४ ॥ तैक्ष्ण्यं जिह्मत्वमादल्भ्यं सत्यमार्ज्जवमेव च।

मध्यस्थः सत्त्वमातिष्ठंस्तथा वै सुखमृच्छति ॥ ५ ॥ यस्मिन्नर्थे हितं यत् स्यात्तद्वर्णं रूपमाविशेत्। बहुरूपस्य राज्ञो हि सूक्ष्मोऽप्यर्थो न सीदति ॥ ६ ॥ नित्यं रक्षितमन्त्रः स्याद्यथामूकः शरच्छिखी। श्लक्ष्णाक्षरतनुः श्रीमान् भवेच्छास्त्रविशारदः ॥ ७ ॥ आपद्द्वारेषु युक्तः स्याज्जलप्रस्रवणेष्विव। शैलवर्षोदकानीव द्विजान् सिद्धान् समाश्रयेत्। अर्थकामः शिखां राजा कुर्य्याद्धर्म्मध्वजोपमम् ॥ ८॥ नित्यमुद्यतदण्डः स्यादाचरेदप्रमादतः। लोके चायव्ययौ दृष्ट्वा वृहद्वृक्षमिवास्रवत् ॥ ९ ॥ मृजावान् स्यात् स्वयूथ्येषु भौमानि चरणैः क्षिपेत्। जातपक्षः परिस्पन्देत् प्रेक्षेद्वैकल्यमात्मनः ॥ १०॥ दोषान् विवृणुयाच्छत्रोःपरपक्षान् विधूनयेत्। काननेष्विव पुष्पाणि वहिरर्थान् समाचरन् ॥ ११ ॥ उच्छ्रितान्नाशयेत् स्फीतान्नरेन्द्रानचलोपमान्। श्रयेच्छायामभिज्ञातां गुप्तं रणमुपाश्रयेत् ॥१२॥ प्रावृषीवासितग्रीवो मज्जेत निशि निर्ज्जने। मायूरेण गुणेनैव स्त्रीभिश्चाविच्छितश्चरेत् ॥ १२ ॥ न जह्याच्च तनुत्राणं रक्षेदात्मानमात्मना। चारभूमिष्वभिगतान् पाशांश्च परिवर्ज्जयेत् ॥ १४ ॥ प्रणयेद्वापि तां भूमिं प्रणश्येद्गहने पुनः। हन्यात् क्रुद्धानतिविषान् ये जिह्मगतयो हि तान् ॥ १५ ॥ नाशयेद्बलवर्हाणि सन्निवासान्निवासयेत्। सदा वर्हिनिभः कामं प्रशस्तं कृतमाचरेत्। सर्वतश्चाददेत् प्रज्ञां पतङ्गं गहनेष्विव ॥ १६ ॥ एवं मयूरवद्राजा स्वराज्यं परिपालयेत्। आत्मवृद्धिकरीं नीतिं विदधीत विचक्षणः ॥ १७ ॥ आत्मसंयमनं बुद्ध्या परबुद्ध्यावधारणम्। बुद्ध्या चात्मगुणप्राप्तिरेतच्छास्त्रनिदर्शनम् ॥ १८ ॥ परं विश्वासयेत् साम्ना स्वशक्तिञ्चोपलक्षयेत्। आत्मनः परिमर्षेण बुद्धिं बुद्ध्या विचारयेत् ॥ १९ ॥ सान्त्वयोगमतिः प्राज्ञः कार्य्याकार्य्यप्रयोजकः। निगूढ़बुद्धेर्धीरस्य वक्तव्ये वा कृतं तथा ॥ २० ॥ स निकृष्टां कथां प्राज्ञो यदि बुद्ध्या वृहस्पतिः। स्वभावमेष्यते तप्तं कृष्णायसमिवो-

दके ॥ २१ ॥ अनुयुञ्जीत कृत्यानि सर्वाख्येव महीपतिः । आगमै-
रुपदिष्टानि स्वस्य चैव परस्य च ॥ २२ ॥ मृदुशीलं तथा प्राज्ञं
शूरञ्चार्थविधानवित् । स्वकर्म्मणि नियुञ्जीत ये चान्ये च बला-
धिकाः ॥ २३ ॥ अथ दृष्ट्वा नियुक्तानि स्वानुरूपेषु कर्म्मसु । सर्वां-
स्ताननुवर्त्तेत स्वरांस्तन्त्रीरिवायता ॥ २४ ॥ धर्माणामविरोधेन
सर्वेषाम्प्रियमाचरेत् । ममायमिति राजा यः स पर्वत इवाचलः
॥ २५ ॥ व्यवसायं समाधाय सूर्य्यो रश्मीनिवायतान् । धर्म्ममेवा-
भिरक्षेत कृत्वा तुल्ये प्रियाप्रिये ॥ २६ ॥ कुलप्रकृतिदेशानां धर्म्म-
ज्ञान् मृदुभाषिणः । मध्ये वयसि निर्द्दोषान् हिते युक्तानविक्लवान्
॥ २७ ॥ अलुब्धान् शिक्षितान् दान्तान् धर्मेषु परिनिष्ठितान् ।
स्थापयेत् सर्वकार्य्येषु राजा धर्मार्थरक्षिणः ॥ २८ ॥ एतेन च
प्रकारेण कृत्यानामागतिं गतिम् । युक्तः समनुतिष्ठेत तुष्टश्चारै-
रुपस्कृतः ॥ २९ ॥ अमोघक्रोधहर्षस्य स्वयं कृत्यान्ववेक्षितुः ।
आत्मप्रत्ययकोषस्य वसुदैव वसुन्धरा ॥ ३० ॥ व्यक्तश्चानुग्रहो यस्य
यथार्थश्चापि निग्रहः । गुप्तात्मा गुप्तराष्ट्रश्च स राजा राजधर्म-
वित् ॥३१॥ नित्यं राष्ट्रमवेक्षेत गोभिः सूर्य्य इवोदितः । चरान्
स्वनुचरान् विद्यात्तथा बुद्ध्या स्वयं चरेत् ॥ ३२ ॥ कालं प्राप्त-
मुपादद्यान्नार्थं राजा प्रसूचयेत् । अहन्यहनि संदुह्यान्महीं गा-
मिव बुद्धिमान् ॥ ३३ ॥ यथाक्रमेण पुष्पेभ्यश्चिनोति मधु षट्पदः ।
तथा द्रव्यमुपादाय राजा कुर्वीत सञ्चयम् ॥ ३४ ॥ यद्धि गुप्ता
वशिष्ठं स्यात्तद्वित्तं धर्मकामयोः । सञ्चयान्न विसर्गी स्याद्राजा
शास्त्रविदात्मवान् ॥ ३५ ॥ नार्थमल्पं परिभवेन्नावमन्येत शात्र-
वान् । बुद्ध्या तु बुद्धेदात्मानं न चाबुद्धिषु विश्वसेत् ॥ ३६ ॥
धृतिर्द्दाक्ष्यं संयमो बुद्धिरात्मा धैर्य्यं शौर्य्यं देशकालाप्रमादः ।
अल्पस्य वा बहुनो वा विवृद्धौ धनस्यैतान्यष्ट समिन्धनानि ॥३७॥
अग्निः स्तोको वर्द्धतेऽप्याज्यसिक्तो वीजञ्चैकं रोहसहस्रमेति । आय-

व्ययौ विपुलौ सन्निशाम्य तस्मादल्पं नावमन्येत वित्तम् ॥ ३८ ॥
बालोऽप्यबालः स्थविरो रिपुर्यः सदाप्रमत्तं पुरुषं निहन्यात् ।
काले नान्यस्तस्य मूलं हरेत कालज्ञाता पार्थिवानां वरिष्ठः ॥३९॥
हरेत् कीर्त्तिं धर्म्ममस्योपरुन्ध्यादर्थे दीर्घं वीर्य्यमस्योपहन्यात् ।
रिपुर्द्दिष्टो दुर्बलो वा बली वा तस्माच्छत्रौनैव हीयेद्यतात्मा ॥ ४० ॥
क्षयं वृद्धिं पालनं सञ्चयं वा बुद्ध्वाप्युभौ संहतौ सर्वकामौ । तत-
श्चान्यन्मतिमान् सन्दधीत तस्माद्राजा बुद्धिमन्तं श्रयेत ॥ ४१॥ बुद्धि-
र्दीप्ता बलवन्तं हिनस्ति वलं बुद्ध्या पाल्यते वर्द्धमानम् । शत्रु-
र्बुद्ध्या सीदते वर्द्धमानो बुद्धेः पश्चात् कर्म्म यत्तत् प्रशस्तम् ॥ ४२ ॥
सर्वान् कामान् कामयानो हि धीरः सत्त्वेनाल्पेनाप्नुते हीनदोषः ।
यश्चात्मानं प्रार्थयतेऽर्थमानैः श्रेयः पात्रं पूरयते च नाल्पम् ॥ ४३ ॥
तस्माद्राजा प्रगृहीतः प्रजासु मूलं लक्ष्म्याः सर्वशो ह्याददीत ।
दीर्घं कालं ह्यपि संपीडयमानो विद्युत्सम्पातमपि वा नोर्ज्जितः
स्यात् ॥ ४४ ॥ विद्या तपो वा विपुलं धनं वा सर्वं ह्येतद्व्यवसायेन
शक्यम् । बुद्ध्यायत्तं तन्निवसेद्देहवत्सु तस्माद्विद्याद्व्यवसायं प्रभू-
तम् ॥ ४५ ॥ यत्रासते मतिमन्तो मनस्विनः शक्रो विष्णुर्यत्र सर-
स्वती च । वसन्ति भूतानि च यत्र नित्यं तस्माद्विद्वान्नावमन्येत
देहम् ॥ ४६ ॥ लुब्धं हन्यात् सम्प्रदानेन नित्यं लुब्धस्तृप्तिं पर-
वित्तस्य नैति । सर्वो लुब्धः कर्म्मगुणोपभोगी योऽर्थैर्हीनो धर्म्म-
कामौ जहाति ॥ ४७ ॥ धनं भोगं पुत्रदारं समृद्धिं सर्वं लुब्धः
प्रार्थयते परेषाम् । लुब्धे दोषाः सम्भवन्तीह सर्वे तस्माद्राजा न
प्रगृह्णीत लुब्धम् ॥ ४८॥ सन्दर्शनेन पुरुषं जघन्यमपि चोदयेत् ।
आरम्भान् द्विषतां प्राज्ञः सर्वार्थांश्च प्रसूदयेत् ॥ ४९ ॥ धर्मान्वितेषु
विज्ञाता मन्त्री गुप्तश्च पाण्डव । आप्तो राजा कुलीनश्च पर्य्याप्तो
राजसंग्रहे ॥ ५० ॥ विधिप्रयुक्तान्नरदेव धर्मानुक्तान् समासेन
निबोध बुद्ध्या । इमान् विदध्याद्व्यतिहृत्य यो वै राजा मह्यां

पालयितुं स शक्तः ॥ ५१ ॥ अनीतिजं यस्य विधानजं सुखं हठ-प्रणीतं विधिवत् प्रदृश्यते। न विद्यते तस्य गतिर्महीपतेर्न विद्यते राज्यसुखं ह्यनुत्तमम् ॥ ५२ ॥ धनैर्विशिष्टान्मतिशीलपूजितान् गुणोपपन्नान् युधि दृष्टविक्रमान्। गुणेषु दृष्ट्वा नचिरादिवात्मवान् यतोऽभिसन्धाय निहन्ति शात्रवान् ॥ ५३ ॥ पश्येदुपायान् विविधैः क्रियापथैर्नचानुपायेन मतिं निवेशयेत्। श्रियं विशिष्टां विपुलं यशोधनं न दोषदर्शी पुरुषः समश्नुते ॥ ५४ ॥ प्रीतिप्रवृत्तौ विनिवर्त्तितौ यथा सुहृत्सु विज्ञाय निवृत्य चोभयोः। यदेव मित्रं गुरुभारमावहेत्तदेव सुस्निग्धमुदाहरेद्बुधः ॥ ५५ ॥ एतान्मयोक्तांश्चर राजधर्मान् नृणाञ्च गुप्तौ मतिमादधत्स्व। अवाप्स्यसे पुण्यफलं सुखेन सर्वो हि लोको नृप धर्म्ममूलः ॥ ५६ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि
विंशत्यधिकशततोऽध्यायः ॥ १२० ॥

---

युधिष्ठिर उवाच। अयं पितामहेनोक्तो राजधर्म्मः सनातनः। ईश्वरश्च महान्दण्डो दण्डे सर्वं प्रतिष्ठितम् ॥ १ ॥ देवतानामृषीणाञ्च पितृणाञ्च महात्मनाम्। यक्षरक्षःपिशाचानां साध्यानाञ्च विशेषतः ॥ २ ॥ सर्वेषां प्राणिनां लोके तिर्य्यग्योनिनिवासिनाम्। सर्वव्यापी महातेजा दण्डः श्रेयानिति प्रभो ॥ ३ ॥ इत्येवमुक्तं भवता दण्डे वै सचराचरम्। पश्यतो लोकमासक्तं ससुरासुरमानुषम् ॥ ४ ॥ एतदिच्छाम्यहं ज्ञातुं तत्त्वेन भरतर्षभ। को दण्डः कीदृशो दण्डः किं रूपः किं परायणः ॥ ५ ॥ किमात्मकः कथं भूतः कथं मूर्त्तिः कथं प्रभः। जागर्त्ति च कथं दण्डः प्रजास्ववहितात्मकः ॥ ६ ॥ कश्च पूर्वापरमिदं जागर्त्ति प्रतिपालयन्। कश्च विज्ञायते पूर्वं को वरो दण्डसंज्ञितः। किं संस्थश्च भवेद्दण्डः का वास्य गतिरुच्यते ॥ ७ ॥

भीष्म उवाच। शृणु कौरव्य यो दण्डो व्यवहारो यथा च सः। यस्मिन् हि सर्व्वमायत्तं स दण्ड इह केवलः॥ ८॥ धर्म्म-संख्या महाराज व्यवहार इतीष्यते। तस्य लोपः कथं न स्या-ल्लोकेष्ववहितात्मनः॥ ९॥ इत्येवं व्यवहारस्य व्यवहारत्वमिष्यते। अपि चैतत् पुरा राजन् मनुना प्रोक्तमादितः॥ १०॥ सुप्रणीतेन दण्डेन प्रियाप्रियसमात्मना। प्रजा रक्षति यः सम्यक् धर्म्म एव स केवलः॥ ११॥ यथोक्तमेतद्वचनं प्रागेव मनुना पुरा। यन्म-योक्तं मनुष्येन्द्र ब्रह्मणो वचनं महत्॥ १२॥ प्रागिदं वचनं प्रोक्तमतः प्राग्वचनं विदुः। व्यवहारस्य चाख्यानाद्व्यवहार इहो-च्यते॥ १३॥ दण्डे त्रिवर्गः सततं सुप्रणीते प्रवर्त्तते। दैवं हि परमो दण्डो रूपतोऽग्निरिवोत्थितः॥ १४॥ नीलोत्पलदलश्याम-श्चतुर्द्दंष्ट्रश्चतुर्भुजः। अष्टपान्नैकनयनः शङ्कुकर्णोर्द्ध्वरोमवान्॥१५॥ जटी द्विजिह्वस्ताम्रास्यो मृगराजतनुच्छदः। एतद्रूपं बिभर्त्त्युग्रं दण्डो नित्यं दुराधरः॥ १६॥ असिर्द्धनुर्गदा शक्तिस्त्रिशूलं मुद्गरः शरः। मुषलं परशुश्चक्रं पाशो दण्डर्ष्टितोमरः॥ १७॥ सर्व्व-प्रहरणीयानि सन्ति यानीह कानिचित्। दण्ड एव स सर्व्वात्मा लोके चरति मूर्त्तिमान्॥ १८॥ भिन्दन् छिन्दन् रुजन् कृन्तन् दारयन् पाटयंस्तथा। घातयन्नभिधावंश्च दण्ड एव चरत्युत॥१९॥ असिर्विशसनो धर्म्मस्तीक्ष्णधर्म्मा दुराधरः। श्रीगर्भो विजयः शास्ता व्यवहारः सनातनः॥ २०॥ शास्त्रं ब्राह्मणमन्त्राश्च शास्ता प्राग्-वदतां वरः। धर्म्मपालोऽक्षरो देवः सत्यगो नित्यगोऽग्रजः॥ २१॥ असङ्गो रुद्रतनयो मनुर्ज्येष्ठः शिवङ्करः। नामान्येतानि दण्डस्य कीर्त्तितानि युधिष्ठिर॥ २२॥ दण्डो हि भगवान् विष्णुर्द्दण्डो नारायणः प्रभुः। शश्वद्रूपं महद्बिभ्रन्महापुरुष उच्यते॥ २३॥ यथोक्ता ब्रह्मकन्येति लक्ष्मीर्वृत्तिः सरस्वती। दण्डनीतिर्ज्जगद्धात्री दण्डो हि बहुविग्रहः॥ २४॥ अर्थानर्थौ सुखं दुःखं धर्म्माधर्म्मौ

बलाबले। दौर्भाग्यं भागधेयञ्च पुण्यापुण्ये गुणागुणौ॥ २५॥ कामाकामावृतुर्मासः शर्वरी दिवसः क्षणः। अप्रमादः प्रमादश्च हर्षक्रोधौ शमो दमः॥ २६॥ दैवं पुरुषकारश्च मोक्षामोक्षौ भयाभये। हिंसाहिंसे तपो यज्ञः संयमोऽथ विषाविषम्॥ २७॥ अन्तश्चादिश्च मध्यञ्च कृत्यानाञ्च प्रपञ्चनम्। मदः प्रमादो दर्पश्च दम्भो धैर्य्यं नयानयौ॥ २८॥ अशक्तिः शक्तिरित्येवं मानस्तम्भौ व्ययाव्ययौ। विनयश्च विसर्गश्च कालाकालौ च भारत॥ २९॥ अनृतं ज्ञानिता सत्यं श्रद्धाश्रद्धे तथैव च। क्लीवता व्यवसायांश्च लाभालाभौ जयाजयौ॥ ३०॥ तीक्ष्णता मृदुता मृत्युरागमानागमौ तथा। विरोधश्चाविरोधश्च कार्य्याकार्य्ये बलाबले॥ ३१॥ असूया चानसूया च धर्माधर्मौ तथैव च। अपत्रपानपत्रपे ह्रीश्च सम्पद्विपत्पदम्॥ ३२॥ तेजः कर्म्माणि पाण्डित्यं वाक्शक्तिस्तत्त्वबुद्धिता। एवं दण्डस्य कौरव्य लोकेऽस्मिन् बहुरूपता॥ ३३॥ न स्याद्यदीह दण्डो वै प्रमथेयुः परस्परम्। भयाद्दण्डस्य नान्योऽन्यं घ्नन्ति चैव युधिष्ठिर॥ ३४॥ दण्डेन रक्ष्यमाणा हि राजन्नहरहः प्रजाः। राजानं वर्द्धयन्तीह तस्माद्दण्डः परायणम्॥ ३५॥ व्यवस्थापयति क्षिप्रमिमं लोकं नरेश्वर। सत्ये व्यवस्थितो धर्मो ब्राह्मणेष्ववतिष्ठते॥ ३६॥ धर्म्मयुक्ता द्विजश्रेष्ठा वेदयुक्ता भवन्ति च। बभूव यज्ञो वेदेभ्यो यज्ञः प्रीणाति देवताः॥ ३७॥ प्रीताश्च देवता नित्यमिन्द्रे परिवदन्त्यपि। अन्नं ददाति शक्रश्चाप्यनुगृह्णन्निमाः प्रजाः॥ ३८॥ प्राणाश्च सर्वभूतानां नित्यमन्ने प्रतिष्ठिताः। तस्मात् प्रजाः प्रतिष्ठन्ते दण्डो जागर्त्ति तासु च॥ ३९॥ एवं प्रयोजनश्चैव दण्डः क्षत्रियतां गतः। रक्षन् प्रजाः स जागर्त्ति नित्यं स्ववहितोऽक्षरः॥ ४०॥ ईश्वरः पुरुषः प्राणः सत्त्वं चित्तं प्रजापतिः। भूतात्मा जीव इत्येवं नामभिः प्रोच्यतेऽष्टभिः॥४१॥ अददद्दण्डमेवास्मै ध्रुवमैश्वर्य्यमेव च। बलेन यश्च संयुक्तः सदा

पञ्चविधात्मकः ॥४२॥ कुलं बहुधनामात्याः प्रज्ञाः प्रोक्ता बलानि तु । आहार्य्यमष्टकैर्द्रव्यैर्बलमन्यद्युधिष्ठिर ॥ ४३ ॥ हस्तिनोऽश्वा रथाः पत्तिर्नावो विष्टिस्तथैव च । दैशिकाश्चाविकाश्चैव तदष्टाङ्गं बलं स्मृतम् ॥४४॥ अथवाङ्गस्य युक्तस्य रथिनो हस्तियायिनः । अश्वारोहाः पदाताश्च मन्त्रिणो रसदाश्च ये ॥ ४५ ॥ भिक्षुकाः प्राड्विवाकाश्च मौहूर्त्ता दैवचिन्तकाः । कोषो मित्राणि धान्यञ्च सर्वोपकरणानि च ॥४६॥ सप्तप्रकृति चाष्टाङ्गं शरीरमिह यद्विदुः । राज्यस्य दण्डमेवाङ्गं दण्डः प्रभव एव च ॥ ४७ ॥ ईश्वरेण प्रयत्नेन कारणात् क्षत्रियस्य च । दण्डो दत्तः समानात्मा दण्डो हीदं सनातनम् ॥ ४८ ॥ राज्ञां पूज्यतमो नान्यो यथा धर्म्मः प्रदर्शितः । ब्रह्मणा लोकरक्षार्थं स्वधर्मस्थापनाय च ॥ ४९ ॥ भर्त्तृप्रत्यय उत्पन्नो व्यवहारस्तथापरः । तस्माद्यः सहितो दृष्टो भर्त्तृप्रत्ययलक्षणः ॥ ५० ॥ व्यवहारस्तु वेदात्मा वेदप्रत्यय उच्यते । मौलश्च नरशार्दूल शास्त्रोक्तश्च तथापरः ॥ ५१ ॥ उक्तो यश्चापि दण्डोऽसौ भर्त्तृप्रत्ययलक्षणः । ज्ञेयो नः स नरेन्द्रस्थो दण्डप्रत्ययलक्षणः ॥ ५२ ॥ दण्डप्रत्ययदृष्टोऽपि व्यवहारात्मकः स्मृतः । व्यवहारः स्मृतो यश्च स वेदविषयात्मकः ॥५३॥ यश्च वेदप्रसूतात्मा स धर्मो गुणदर्शनः । धर्मप्रत्यय उद्दिष्टो यथाधर्मं कृतात्मभिः ॥ ५४ ॥ व्यवहारः प्रजागोप्ता ब्रह्मदिष्टो युधिष्ठिर । त्रीन् धारयति लोकान् वै सत्यात्मा भूतिवर्द्धनः ॥ ५५ ॥ यश्च दण्डः स दृष्टो नो व्यवहारः सनातनः । व्यवहारश्च दृष्टो यः स वेद इति निश्चितम् ॥ ५६ ॥ यश्च वेदः स वै धर्मो यश्च धर्मः स सत्पथः । ब्रह्मा पितामहः पूर्वं बभूवाथ प्रजापतिः ॥ ५७ ॥ लोकानां स हि सर्व्वेषां ससुरासुररक्षसाम् । समनुष्योरगवतां कर्त्ता चैव स भूतकृत् ॥५८॥ ततोऽन्यो व्यवहारोऽयं भर्त्तृप्रत्ययलक्षणः । तस्मादिदमथोवाच व्यवहारे निदर्शनम् ॥ ५९ ॥ माता पिता च भ्राता

च भार्य्या चैव पुरोहितः। नादण्ड्यो विद्यते राज्ञो यः स धर्म्मेण तिष्ठति ॥ ६० ॥

इति शान्तिपर्व्वणि राजधर्म्मानुशासनपर्व्वणि दण्डस्वरूप-कथने एकविंशत्यधिकशततोऽध्यायः ॥ १२१ ॥

---

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। अङ्गेषु राजा द्युतिमान् वसुहोम इति श्रुतः ॥ १ ॥ स राजा धर्म्मविन्नित्यं सह पत्न्या महातपाः। मुञ्जपृष्ठं जगामाथ पितृ-देवर्षिपूजितम् ॥ २ ॥ तत्र शृङ्गे हिमवतो मेरौ कनकपर्व्वते। यत्र मुञ्जावटे रामो जटाहरणमादिशत् ॥३॥ तदाप्रभृति राजेन्द्र ऋषिभिः संशितव्रतैः। मुञ्जपृष्ठ इति प्रोक्तः स देशो रुद्रसेवितः ॥ ४ ॥ स तत्र बहुभिर्युक्तस्तदा श्रुतिमयैर्गुणैः। ब्राह्मणानामनुमतो देवर्षिसदृशोऽभवत् ॥५॥ तं कदाचिददीनात्मा सखा शक्रस्य मानितः। अभ्यगच्छन्महीपालो मान्धाता शत्रुकर्षणः ॥ ६ ॥ सोऽपसृत्य तु मान्धाता वसुहोमं नराधिपम्। दृष्ट्वा प्रकृष्टतपसं विनतोऽग्रेऽभ्यतिष्ठत ॥ ७ ॥ वसुहोमोऽपि राज्ञो वै पाद्यमर्घ्यं न्यवेदयत्। सप्ताङ्गस्य तु राज्यस्य पप्रच्छ कुशलाव्ययौ ॥ ८ ॥ सद्भिराचरितं पूर्व्वं यथावदनुयायिनम्। अपृच्छद्वसुहोमस्तं राजन् किङ्करवाणि ते ॥९॥ सोऽब्रवीत् परमप्रीतो मान्धाता राजसत्तमः। वसुहोमं महाप्राज्ञमासीनं कुरुनन्दन ॥ १० ॥

मान्धातोवाच। बृहस्पतेर्मतं राजन्नधीतं सकलं त्वया। तथैवौशनसं शास्त्रं विज्ञातं ते नरोत्तम ॥ ११ ॥ तदहं ज्ञातुमिच्छामि दण्ड उत्पद्यते कथम्। किञ्चास्य पूर्व्वं जागर्त्ति किम्वा परममुच्यते ॥ १२ ॥ कथं क्षत्रियसंस्थश्च दण्डः सम्प्रत्यवस्थितः। ब्रूहि मे सुमहाप्राज्ञ ददाम्याचार्य्यवेतनम् ॥ १३ ॥

वसुहोम उवाच । शृणु राजन् यथा दण्डः सम्भूतो लोक-
संग्रहः । प्रजाविनयरक्षार्थं धर्मस्यात्मा सनातनः ॥ १४ ॥ ब्रह्मा
यियक्षुर्भगवान् सर्वलोकपितामहः । ऋत्विजं नात्मनस्तुल्यं दद-
र्शेति हि नः श्रुतम् ॥ १५ ॥ स गर्भं शिरसा देवो बहुवर्षाण्यधा-
रयत् । पूर्णे वर्षसहस्रे तु स गर्भः क्षुवतोऽपतत् ॥ १६ ॥ स
क्षुपो नाम सम्भूतः प्रजापतिररिन्दम । ऋत्विगासीन्महाराज यज्ञे
तस्य महात्मनः ॥ १७ ॥ तस्मिन् प्रवृत्ते सत्रे तु ब्रह्मणः पार्थिव-
र्षभ । हृष्टरूपप्रधानत्वाद्दण्डः सोऽन्तर्हितोऽभवत् ॥ १८ ॥ तस्मि-
न्नन्तर्हिते चापि प्रजानां सङ्करोऽभवत् । नैव कार्य्यं न वाकार्य्यं
भोज्याभोज्यं न विद्यते ॥ १९ ॥ पेयापेये कुतः सिद्धिर्हिंसन्ति च
परस्परम् । गम्यागम्यं तदा नासीत् स्वं परस्वञ्च वै समम् ॥२०॥
परस्परं विलुम्पन्ति सारमेया यथामिषम् । अबलान् बलिनो घ्नन्ति
निर्मर्य्यादमवर्त्तत ॥ २१ ॥ ततः पितामहो विष्णुं भगवन्तं सना-
तनम् । सम्पूज्य वरदं देवं महादेवमथाब्रवीत् ॥ २२ ॥ अत्र
त्वमनुकम्पां वै कर्त्तुमर्हसि केशव । सङ्करो न भवेदत्र यथा तद्वै
विधीयताम् ॥२३॥ ततः स भगवान् ध्यात्वा चिरं शूलवरायुधः ।
आत्मानमात्मना दण्डं ससृजे देवसत्तमः ॥ २४ ॥ तस्माच्च धर्म-
चरणान्नीतिर्देवी सरस्वती । ससृजे दण्डनीतिं सा त्रिषु लोकेषु
विश्रुताम् ॥ २५ ॥ भूयः स भगवान् ध्यात्वा चिरं शूलवरायुधः ।
तस्य तस्य निकायस्य चकारैकैकमीश्वरम् ॥२६॥ देवानामीश्वर-
ञ्चक्रे देवं दशशतेक्षणम् । यमं वैवस्वतञ्चापि पितॄणामकरोत्
प्रभुम् ॥ २७ ॥ धनानां राक्षसानाञ्च कुवेरमपि चेश्वरम् । पर्व्व-
तानां पतिं मेरुं सरिताञ्च महोदधिम् ॥ २८ ॥ अपां राज्येऽसु-
राणाञ्च विदधे वरुणं प्रभुम् । मृत्युं प्राणेश्वरेमथो तेजसाञ्च
हुताशनम् ॥ २९ ॥ रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुम् ।
महात्मानं महादेवं विशालाक्षं सनातनम् ॥ ३० ॥ वशिष्ठमीशं

विप्राणां वसूनां जातवेदसम्। तेजसां भास्करञ्चक्र नक्षत्राणां निशाकरम् ॥ ३१ ॥ वीरुधामंशुमन्तञ्च भूतानाञ्च प्रभुं वरम्। कुमारं द्वादशभुजं स्कन्दं राजानमादिशत् ॥ ३२ ॥ कालं सर्वेश-मकरोत् संहारविनयात्मकम्। मृत्योश्चतुर्विभागस्य दुःखस्य च सुखस्य च ॥ ३३ ॥ ईश्वरः सर्वदेवस्तु राजराजो नराधिप। सर्वेषामेव रुद्राणां शूलपाणिरिति श्रुतिः ॥ ३४ ॥ तमेनं ब्रह्मणः पुत्रमनुजातं क्षुपं ददौ। प्रजानामधिपं श्रेष्ठं सर्वधर्मभृतामपि ॥३५॥ महादेवस्ततस्तस्मिन् वृत्ते यज्ञे यथाविधि। दण्ड धर्मस्य गोप्तारं विष्णवे सत्कृतं ददौ ॥ ३६ ॥ विष्णुरङ्गिरसे प्रादादङ्गिरा मुनि-सत्तमः। प्रदादीन्द्रमरीचिभ्यां मरीचिर्भृगवे ददौ ॥ ३७ ॥ भृगु-र्ददावृषिभ्यस्तु दण्डं धर्मसमाहितम्। ऋषयो लोकपालेभ्यो लोक-पालाः क्षुपाय च ॥ ३८ ॥ क्षुपस्तु मनवे प्रादादादित्यतनयाय च। पुत्रेभ्यः श्राद्धदेवस्तु सूक्ष्मधर्मार्थकारणात् ॥ ३९ ॥ विभज्य दण्डः कर्त्तव्यो धर्मेण न यदृच्छया। दुष्टानां निग्रहो दण्डो हिरण्यं वाह्यतः क्रिया ॥ ४० ॥ व्यङ्गत्वञ्च शरीरस्य वधो नाल्पस्य कारणात्। शरीरपीड़ास्तास्ताश्च देहत्यागो विवासनम् ॥ ४१ ॥ तं ददौ सूर्य्यपुत्रस्तु मनुर्वै रक्षणार्थकम्। आनुपूर्व्या च दण्डोऽयं प्रजा जागर्त्ति पालयन् ॥ ४२ ॥ इन्द्रो जागर्त्ति भगवानिन्द्रा-दग्निर्विभावसुः। अग्नेर्जागर्त्ति वरुणो वरुणाच्च प्रजापतिः ॥४३॥ प्रजापतिस्ततो धर्मो जागर्त्ति विनयात्मकः। धर्माच्च ब्रह्मणः पुत्रो व्यवसायः सनातनः ॥ ४४ ॥ व्यवसायात्ततस्तेजो जागर्त्ति परि-पालयन्। ओषध्यस्तेजसस्तस्मादोषधीभ्यश्च पर्वताः ॥ ४५ ॥ पर्व-तेभ्यश्च जागर्त्ति रसो रसगुणास्तथा। जागर्त्ति निर्ऋतिर्देवी ज्योतींषि निर्ऋतेरपि ॥ ४६ ॥ वेदाः प्रतिष्ठा ज्योतिर्भ्यस्ततो हयशिराः प्रभुः। ब्रह्मा पितामहस्तस्माज्जागर्त्ति प्रभुरव्ययः ॥४७॥ पितामहान्महादेवो जागर्त्ति भगवान् शिवः। विश्वे देवाः शिवा-

चापि विश्वेभ्यश्च तथर्षयः ॥ ४८॥ ऋषिभ्यो भगवान् सोमः सोमा-
द्देवाः सनातनाः । देवेभ्यो ब्राह्मणा लोके जाग्रतीत्युपधारय ॥४९॥
ब्राह्मणेभ्यश्च राजन्या लोकान्रक्षन्ति धर्मतः । स्थावरं जङ्गमञ्चैव
क्षत्रियेभ्यः सनातनम् ॥ ५० ॥ प्रजा जाग्रति लोकेऽस्मिन् दण्डो
जागर्त्ति तासु च । सर्वं सङ्क्षिपते दण्डः पितामहसमप्रभः ॥ ५१ ॥
जागर्त्ति कालः पूर्वञ्च मध्ये चान्ते च भारत । ईश्वरः सर्वलोकस्य
महादेवः प्रजापतिः ॥ ५२ ॥ देवदेवः शिवः सर्वो जागर्त्ति सततं
प्रभुः । कपर्द्दी शङ्करो रुद्रः भवः स्थाणुरुमापतिः ॥ ५३ ॥ इत्येष
दण्डो विख्यात आदौ मध्ये तथापरे । भूमिपालो यथान्याय
वर्त्ततानेन धर्मवित् ॥ ५४ ॥

भीष्म उवाच । इतीदं वसुहोमस्य शृणुयाद्यो मतं नरः ।
श्रुत्वा च सम्यग्वर्त्तेत सर्वान् कामानवाप्नुयात् ॥ ५५ ॥ इति ते
सर्वमाख्यातं यो दण्डो मनुजर्षभ । नियन्ता सर्वलोकस्य धर्मा-
क्रान्तस्य भारत ॥ ५६ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि दण्डोत्पत्ति-
कथने द्वाविंशत्यधिकशततोऽध्यायः ॥ १२२ ॥

---

युधिष्ठिर उवाच । तात धर्मार्थकामानां श्रोतुमिच्छामि निश्च-
यम् । लोकयात्रा हि कार्त्स्नेन तिष्ठेत् केषु प्रतिष्ठिता ॥ १ ॥
धर्मार्थकामाः किं मूलास्त्रयाणां प्रभवश्च कः । अन्योऽन्यञ्चानु-
षज्जन्ते वर्त्तन्ते च पृथक् पृथक् ॥ २ ॥

भीष्म उवाच । यदा ते स्युः सुमनसो लोके धर्मार्थनिश्चये ।
कालप्रभवसंस्थासु सज्जन्ते च त्रयस्तदा ॥ ३ ॥ धर्ममूलः सदैवार्थः
कामोऽर्थफलमच्युते । सङ्कल्पमूलास्ते सर्वे सङ्कल्पो विषयात्मकः
॥ ४ ॥ विषयाश्चैव कार्त्स्नेन सर्व आहारसिद्धये । मूलमेत-

त्रिवर्गस्य निवृत्तिर्मोक्ष उच्यते ॥ ५ ॥ धर्माच्छरीरसंगुप्तिर्धर्मार्थश्चार्थ उच्यते। कामो रतिफलश्चात्र सर्वे ते च रजखलाः ॥ ६ ॥ सन्निकृष्टांश्चरेदेतान्न चैतान्मनसा त्यजेत्। विमुक्तस्तपसा सर्वान् धर्मादीन् कामनैष्ठिकान् ॥ ७ ॥ श्रेष्ठबुद्धिस्त्रिवर्गस्य यदयं प्राप्नुयान्नरः। बुद्धा बुद्धिरिहार्थेन तदज्ञाननिकृष्टया ॥ ८ ॥ अपध्यानमलो धर्मो मलोऽर्थस्य निगूहनम्। सम्प्रमोदमलः कामो भूयः स्वगुणवर्ज्जितः ॥ ९ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। कामन्दकस्य सम्वादमाङ्गरिष्ठस्य चोभयोः ॥ १० ॥ कामन्दमृषिमासीनमभिवाद्य नराधिपः। आङ्गरिष्ठोऽथ पप्रच्छ कृत्वा समयपर्य्ययम् ॥ ११ ॥ यः पापं कुरुते राजा काममोहबलात्कृतः। प्रत्यासन्नस्य तस्यर्षे किं स्यात् पापप्रणाशनम् ॥ १२ ॥ अधर्मं धर्म इति च योऽज्ञानादाचरेन्नरः। तञ्चापि प्रथितं लोके कथं राजा निवर्त्तयेत् ॥ १३ ॥

कामन्द उवाच। यो धर्मार्थौ परित्यज्य काममेवानुवर्त्तते। स धर्मार्थपरित्यागात् प्रज्ञानाशमिहार्च्छति ॥ १४ ॥ प्रज्ञानाशात्मको मोहस्तथा धर्मार्थनाशकः। तस्मान्नास्तिकता चैव दुराचारश्च जायते ॥ १५ ॥ दुराचारान् यदा राजा प्रदुष्टान्न नियच्छति। तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ॥ १६ ॥ तं प्रजा नानुवर्त्तन्ते ब्राह्मणा न च साधवः। ततः संशयमाप्नोति तथा बध्यत्वमेव च ॥ १७ ॥ अपध्वस्तस्त्ववमतो दुःखं जीवितमृच्छति। जीवेच्च यदपध्वस्तस्तच्छुद्धं मरणं भवेत् ॥ १८ ॥ अत्रैतदाहुराचार्य्याः पापस्य परिगर्हणम्। सेवितव्या त्रयी विद्या सत्कारो ब्राह्मणेषु च ॥ १९ ॥ महामना भवेद्धर्मे विवहेच्च महाकुले। ब्राह्मणांश्चापि सेवेत क्षमायुक्तान् मनस्विनः ॥ २० ॥ जपेदुदकशीलः स्यात् सततं सुखमास्थितः। धर्मान्वितान् सम्प्रविशेद्बहिः कृत्वैव दुष्कृतीन् ॥ २१ ॥ प्रसादयेन्मधुरया वाचा वाप्यथ कर्मणा। तवास्मीति

वदेन्नित्यं परेषां कीर्त्तयन् गुणान् ॥ २३ ॥ अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत् । पापान्यपि हि कृच्छ्राणि शमयेन्नात्र संशयः ॥ २३ ॥ गुरवो हि परं धर्मं यं वयुस्तं तथा कुरु । गुरूणां हि प्रसादाद्धि श्रेयः परमवाप्स्यसि ॥ २४ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि कामन्दका-
ङ्गरिष्ठसम्वादे त्रयोविंशत्यधिकशततोऽध्यायः ॥ १२३ ॥

---

युधिष्ठिर उवाच । इमे जना नरश्रेष्ठ प्रशंसन्ति सदा भुवि ॥ धर्मस्य शीलमेवादौ ततो मे संशयो महान् ॥ १ ॥ यदि तच्छक्य-मस्माभिर्ज्ञातुं धर्मभृताम्वर । श्रोतुमिच्छामि तत् सर्वं यथैतदुप-लभ्यते ॥ २ ॥ कथं तत् प्राप्यते शीलं श्रोतुमिच्छामि भारत । किं लक्षणञ्च तत् प्रोक्तं ब्रूहि मे वदतां वर ॥ ३ ॥

भीष्म उवाच । पुरा दुर्य्योधनेनेह धृतराष्ट्राय मानद । आख्यातं तप्यमानेन श्रियं दृष्ट्वा तथागतम् ॥ ४ ॥ इन्द्रप्रस्थे महा-राज तव सभ्रातृकस्य ह । सभायाञ्चावहसनं तत् सर्वं शृणु भारत ॥ ५ ॥ भवतस्तां सभां दृष्ट्वा समृद्धिञ्चाप्यनुत्तमाम् । दुर्य्यो-धनस्तदासीनः सर्वं पित्रे न्यवेदयत् ॥ ६ ॥ श्रुत्वा हि धृतराष्ट्रश्च दुर्य्योधनवचस्तदा । अब्रवीत् कर्णसहितं दुर्य्योधनमिदं वचः ॥७॥

धृतराष्ट्र उवाच । किमर्थं तप्यसे पुत्र श्रोतुमिच्छामि तत्त्वतः । श्रुत्वा त्वामनुनेष्यामि यदि सम्यगभविष्यति ॥ ८ ॥ त्वया च मह-देश्वर्य्यं प्राप्तं परपुरञ्जय । किङ्करा भ्रातरः सर्वे मित्रसम्बन्धिनः सदा ॥ ९ ॥ आच्छादयसि प्रावारानश्नासि पिशितौदनम् । आजा-नेया वहन्त्यश्वाः केनासि हरिणः कृशः ॥ १० ॥

दुर्य्योधन उवाच । दश तानि सहस्राणि स्नातकानां महा-त्मनाम् । भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने ॥ ११ ॥ दृष्ट्वा च

तां सभां दिव्यां दिव्यपुष्पफलान्विताम्। अश्वांस्तित्तिरिकल्माषान् वस्त्राणि विविधानि च॥१२॥ दृष्ट्वा तां पाण्डवेयानां ऋद्धिं वैश्रवणीं शुभाम्। अमित्राणां सुमहतीमनुशोचामि भारत॥१३॥

धृतराष्ट्र उवाच। यदीच्छसि श्रियं तात यादृशी सा युधिष्ठिरे। विशिष्टां वा नरव्याघ्र शीलवान् भव पुत्रक॥१४॥ शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः। न हि किञ्चिदसाध्यं वै लोके शीलवतां भवेत्॥१५॥ एकरात्रेण मान्धाता त्र्यहेण जनमेजयः। सप्तरात्रेण नाभाग पृथिवीं प्रतिपेदिरे॥१६॥ एते हि पार्थिवाः सर्वे शीलवन्तो दयान्विताः। अतस्तेषां गुणक्रीता वसुधा स्वयमागता॥१७॥

दुर्य्योधन उवाच। कथं तत् प्राप्यते शीलं श्रोतुमिच्छामि भारत। येन शीलेन तैः प्राप्ता क्षिप्रमेव वसुन्धरा॥१८॥

धृतराष्ट्र उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। नारदेन पुरा प्रोक्तं शीलमाश्रित्य भारत॥१९॥ प्रह्लादेन हृतं राज्यं महेन्द्रस्य महात्मनः। शीलमाश्रित्य दैत्येन त्रैलोक्यञ्च वशीकृतम्॥२०॥ ततो बृहस्पतिं शक्रः प्राञ्जलिः समुपस्थितः। तमुवाच महाप्राज्ञः श्रेय इच्छामि वेदितुम्॥२१॥ ततो बृहस्पतिस्तस्मै ज्ञानं नैःश्रेयसं परम्। कथयामास भगवान् देवेन्द्राय कुरूद्वह॥२२॥ एतावच्छ्रेय इत्येव बृहस्पतिरभाषत। इन्द्रस्तु भूय पप्रच्छ को विशेषो भवेदिति॥२३॥

बृहस्पतिरुवाच। विशेषोऽस्ति महांस्तात भार्गवस्य महात्मनः। अत्रागमय भद्रन्ते भूय एव सुरर्षभ॥२४॥ आत्मनस्तु ततः श्रेयो भार्गवात् सुमहातपाः। ज्ञानमागमयत् प्रीत्या पुनः स परमद्युतिः॥२५॥ तेनापि समनुज्ञातो भार्गवेण महात्मना। श्रेयोऽस्तीति पुनर्भूयः शुक्रमाह शतक्रतुः॥२६॥ भार्गवस्त्वाह सर्वज्ञः प्रह्लादस्य महात्मनः। ज्ञानमस्ति विशेषेणेत्युक्तो हृष्टश्च

सोऽभवत् ॥ २७ ॥ स ततो ब्राह्मणो भूत्वा प्रह्लादं पाकशासनः । गत्वा प्रोवाच मेधावी श्रेय इच्छामि वेदितुम् ॥ २८ ॥ प्रह्लादस्त्वब्रवीद्विप्रं क्षणो नास्ति द्विजर्षभ । त्रैलोक्यराज्यसक्तस्य ततो नोपदिशामि ते ॥ २९ ॥ ब्राह्मणस्त्वब्रवीद्राजन् यस्मिन् काले क्षणो भवेत् । तदोपाष्टुमिच्छामि यदाचर्य्यमनुत्तमम् ॥ ३० ॥ ततः प्रीतोऽभवद्राजा प्रह्लादो ब्रह्मवादिनः । तथेत्युक्त्वा शुभे काले ज्ञानतत्त्वं ददौ तदा ॥ ३१ ॥ ब्राह्मणोऽपि यथान्यायं गुरुवृत्तिमनुत्तमाम् । चकार सर्व्वभावेन यदस्य मनसेप्सितम् ॥ ३२ ॥ पृष्टश्च तेन बहुशः प्राप्तं कथमरिन्दम । त्रैलोक्यराज्यं धर्म्मज्ञ कारणं तद्ब्रवीहि मे । प्रह्लादोऽपि महाराज ब्राह्मणं वाक्यमब्रवीत् ॥ ३३ ॥

प्रह्लाद उवाच । नासूयामि द्विजान् विप्र राजास्मीति कदाचन । काव्यानि वदतां तेषां संयच्छामि वहामि च ॥ ३४ ॥ ते विश्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा । ते मां काव्यपथे युक्तं शुश्रुषुमनसूयकम् ॥ ३५ ॥ धर्म्मात्मानं जितक्रोधं नियतं संयतेन्द्रियम् । समासिञ्चन्ति शास्तारः चौद्रं मध्विव मक्षिकाः ॥ ३६ ॥ सोऽहं वागग्रविद्यानां रसानामवलेहिता । स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥३७॥ एतत् पृथिव्याममृतमेतच्चक्षुरनुत्तमम् । यद्ब्राह्मणमुखे काव्यमेतच्छ्रुत्वा प्रवर्त्तते ॥३८॥ एतावच्छ्रेय इत्याह प्रह्लादो ब्रह्मवादिनम । शुश्रूषितस्तेन तदा दैत्येन्द्रो वाक्यमब्रवीत् ॥ ३९ ॥ यथावद्गुरुवृत्त्या ते प्रीतोऽस्मि द्विजसत्तम । वरं वृणीष्व भद्रं ते प्रदातास्मि न संशयः ॥ ४० ॥ कृतमित्येव दैत्येन्द्रमुवाच स च वै द्विजः । प्रह्लादस्त्वब्रवीत् प्रीतो गृह्यतां वर इत्युत ॥४१॥

ब्राह्मण उवाच । यदि राजन् प्रसन्नस्त्वं मम चेदिच्छसि प्रियम् । भवतः शीलमिच्छामि प्राप्तुमेष वरो मम ॥ ४२ ॥ ततः प्रीतस्तु दैत्येन्द्रो भयमस्याभवन्महत् । वरे प्रदिष्टे विप्रेण नाल्प-

तेजायमित्युत ॥ ४३ ॥ एवमस्त्विति स प्राह प्रह्लादो विस्मितस्तदा । उपाकृत्य तु विप्राय वरं दुःखान्वितोऽभवत् ॥ ४४ ॥ दत्ते वरे गते विप्रे चिन्तासीन्महती तदा । प्रह्लादस्य महाराज निश्चयं न च जग्मिवान् ॥ ४५ ॥ तस्य चिन्तयतस्तावच्छायाभूतं महाद्युति । तेजोविग्रहवत्तात शरीरमजहात्तदा ॥ ४६ ॥ तमपृच्छन्महाकायं प्रह्लादः को भवानिति । प्रत्याह तन्तु शीलोऽस्मि त्यक्तो गच्छाम्यहं त्वया ॥ ४७ ॥ तस्मिन् द्विजोत्तमे राजन् वत्स्याम्यहमनिन्दिते । योऽसौ शिष्यत्वमागम्य त्वयि नित्यं समाहितः । इत्युक्त्वान्तर्हितं तद्वै शक्रञ्चान्वाविशत् प्रभो ॥ ४८ ॥ तस्मिंस्तेजसि याते तु तादृग्रूपस्ततोऽपरः । शरीरान्निःसृतस्तस्य कोऽभवानिति चाब्रवीत् ॥ ४९ ॥ धर्मं प्रह्लाद मां विद्धि यत्रासौ द्विजसत्तमः । तत्र यास्यामि दैत्येन्द्र यतः शीलं ततो ह्यहम् ॥ ५० ॥ ततोऽपरो महाराज प्रज्वलन्निव तेजसा । शरीरान्निःसृतस्तस्य प्रह्लादस्य महात्मनः ॥ ५१ ॥ को भवानिति पृष्टश्च तमाह स महाद्युतिः । सत्यं विद्ध्यसुरेन्द्राद्य प्रयास्ये धर्ममन्वहम् ॥ ५२ ॥ तस्मिन्ननुगते धर्मे महान् वै पुरुषोऽपरः । निश्चक्राम ततस्तस्मात् पृष्टश्चाह महाबलः । वृत्तं प्रह्लाद मां विद्धि यतः सत्यं ततो ह्यहम् ॥ ५३ ॥ तस्मिन् गते महाशब्दः शरीरात्तस्य निर्य्ययौ । पृष्टश्चाह बलं विद्धि यतो वृत्तमहं ततः ॥ ५४ ॥ इत्युक्त्वा प्रययौ तत्र यतो वृत्तं नराधिप । ततः प्रभामयी देवी शरीरात्तस्य निर्य्ययौ ॥ ५५ ॥ तामपृच्छत् स दैत्येन्द्रः सा श्रीरित्येनमब्रवीत् । उषितास्मि स्वयं वीर त्वयि सत्यपराक्रमम् । त्वया त्यक्ता गमिष्यामि बलं ह्यनुगता ह्यहम् ॥ ५६ ॥ ततो भयं प्रादुरासीत् प्रह्लादस्य महात्मनः । अपृच्छत् स ततो भूयः क्व यासि कमलालये ॥ ५७ ॥ त्वं हि सत्यव्रता देवी लोकस्य परमेश्वरी । कश्चासौ ब्राह्मणश्रेष्ठस्तत्त्वमिच्छामि वेदितुम् ॥ ५८ ॥

श्रीरुवाच । स शक्रो ब्रह्मचारी यस्त्वत्तश्चैवोपशिक्षितः । त्रैलोक्ये ते यदैश्वर्य्यं तत्तेनापहृतं प्रभो ॥ ५९ ॥ शीलेन हि त्रयो लोकास्त्वया धर्मज्ञ निर्ज्जिताः । तद्विज्ञाय सुरेन्द्रेण तव शीलं हृतं प्रभो ॥ ६० ॥ धर्मः सत्यं तथा वृत्तं बलञ्चैव तथाप्यहम् । शीलमूला महाप्राज्ञ सदा नास्त्यत्र संशयः ॥ ६१ ॥

भीष्म उवाच । एवमुक्त्वा गता श्रीस्तु ते च सर्व्वे युधिष्ठिर । दुर्य्योधनस्तु पितरं भूय एवाब्रवीद्वचः ॥ ६२ ॥ शीलस्य तत्त्वमिच्छामि वेत्तुं कौरवनन्दन । प्राप्यते च यथा शीलं तञ्चोपायं वदस्व मे ॥ ६३ ॥

धृतराष्ट्र उवाच । सोपायं पूर्व्वमुद्दिष्टं प्रह्लादेन महात्मना । संक्षेपेण तु शीलस्य शृणु प्राप्तिं नरेश्वर ॥ ६४ ॥ अद्रोहः सर्व्वभूतेषु कर्म्मणा मनसा गिरा । अनुग्रहश्च दानञ्च शीलमेतत् प्रशस्यते ॥ ६५ ॥ यदन्येषां हितं न स्यादात्मनः कर्म पौरुषम् । अपत्रपेत वा येन न तत् कुर्य्यात् कथञ्चन ॥ ६६ ॥ तत्तु कर्म तथा कुर्य्याद्येन श्लाघ्येत संसदि । शीलं समासेनैतत्ते कथितं कुरुसत्तम ॥ ६७॥ यद्यप्यशीला नृपते प्राप्नुवन्ति श्रियं क्वचित् । न भुञ्जते चिरं तात समूलाश्च न सन्ति ते ॥ ६८ ॥

धृतराष्ट्र उवाच । एतद्विदित्वा तत्त्वेन शीलवान् भव पुत्रक । यदीच्छसि श्रियं तात सुविशिष्टां युधिष्ठिरात् ॥ ६९ ॥

भीष्म उवाच । एतत् कथितवान् पुत्रे धृतराष्ट्रो नराधिपः । एतत् कुरुष्व कौन्तेय ततः प्राप्स्यसि तत् फलम् ॥ ७० ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि शीलवर्णने चतुर्विंशत्यधिकशततोऽध्यायः ॥ १२४ ॥

युधिष्ठिर उवाच। शीलं प्रधानं पुरुषे कथितं ते पितामह। कथं त्वाशा समुत्पन्ना या च सा तद्वदस्व मे ॥ १ ॥ संशयो मे महानेष समुत्पन्नः पितामह। छेत्ता च तस्य नान्योऽस्ति त्वत्तः परपुरञ्जय: ॥ २ ॥ पितामहाशा महती ममासीद्धि सुयोधने। प्राप्ते युद्धे तु यद्युक्तं तत् कर्त्तायमिति प्रभो ॥ ३ ॥ सर्वस्याशा सुमहती पुरुषस्योपजायते। तस्यां विहन्यमानायां दुःखो मृत्युर्न संशयः ॥ ४ ॥ सोऽहं हताशो दुर्बुद्धिः कृतस्तेन दुरात्मना। धार्त्तराष्ट्रेण राजेन्द्र पश्य मन्दात्मतां मम ॥ ५ ॥ आशां महत्तरां मन्ये पर्वतादपि सद्रुमात्। आकाशादपि वा राजन्न प्रमेयैव वा पुनः ॥ ६ ॥ एषा चैव कुरुश्रेष्ठ दुर्विचिन्त्या सुदुर्लभा। दुर्लभत्वाच्च पश्यामि किमन्यद्दुर्लभं ततः ॥ ७ ॥

भीष्म उवाच। अत्र ते वर्त्तयिष्यामि युधिष्ठिर निबोध तम्। इतिहासं सुमित्रस्य निर्वृत्तमृषभस्य च ॥ ८ ॥ सुमित्रो नाम राजर्षिर्हैहयो मृगयाङ्गतः। ससार स मृगं विद्ध्वा बाणेनानतपर्वणा ॥ ९ ॥ स मृगो बाणमादाय ययावमितविक्रमः। स च राजा बलान्नूनं ससार मृगयूथपम् ॥ १० ॥ ततो निम्नं स्थलञ्चैव स मृगोऽद्रवदाशुगः। मुहूर्त्तमिव राजेन्द्र समेन स पथागमत् ॥ ११ ॥ ततः स राजा तारुण्यादौरसेन बलेन च। ससार बाणासनभृत् सखड्गोऽसौ तनुत्रवान् ॥ १२ ॥ ततो नदान्नदीश्चैव पल्वलानि वनानि च। अतिक्रम्याभ्यतिक्रम्य ससारैको वनेचरः ॥ १३ ॥ स तु कामान्मृगो राजन्नासाद्यासाद्य तं नृपम्। पुनरभ्येति जवनो जवेन महता ततः ॥ १४ ॥ स तस्य बाणैर्बहुभिः समभ्यस्तो वनेचरः। प्रक्रीड़न्निव राजेन्द्र पुनरभ्येति चान्तिकम् ॥ १५ ॥ पुनश्च जवमास्थाय जवनो मृगयुथपः। अतीत्यातीत्य राजेन्द्र पुनरभ्येति चान्तिकम् ॥ १६ ॥ तस्य मर्मच्छिदं घोरं तीक्ष्णञ्चामित्रकर्शनः। समादाय शरं श्रेष्ठं कार्मुके तु तथा-

सृजत् ॥ १७ ॥ ततो गव्यूतिमात्रेण मृगयूथपयूथपः । तस्य वाण-
पथं मुक्त्वा तस्थिवान् प्रहसन्निव ॥ १८ ॥ तस्मिन्निपतिते वाणे भूमौ
ज्वलिततेजसि । प्रविवेश महारण्यं मृगो राजाप्यथाद्रवत् ॥ १९॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि ऋषभगीतासु
पञ्चविंशत्यधिकशतोऽध्यायः ॥ १२५ ॥

---

भीष्म उवाच । प्रविश्य तु महारण्यं तापसानामथाश्रमम् ।
आससाद ततो राजा श्रान्तश्चोपाविशत्तदा ॥ १ ॥ तं कार्मुकधरं
दृष्ट्वा श्रमार्त्तं क्षुधितं तदा । समेत्य ऋषयस्तस्मिन् पूजाञ्चक्रुर्यथा-
विधि ॥ २ ॥ स पूजामृषिभिर्द्दत्तां सम्प्रगृह्य नराधिपः । अपृच्छ-
त्तापसान् सर्वांस्तपसो वृद्धिमुत्तमाम् ॥ ३ ॥ ते तस्य राज्ञो वचनं
सम्प्रगृह्य तपोधनाः । ऋषयो राजशार्दूलं तमपृच्छन् प्रयोजनम्
॥ ४ ॥ केन भद्र सुखार्थेन सम्प्राप्तोऽसि तपोवनम् । पदातिर्बद्ध-
निस्त्रिंशो धन्वी वाणी नरेश्वर ॥५ ॥ एतदिच्छामहे श्रोतुं कुतः
प्राप्तोऽसि मानद । कस्मिन् कुले तु जातस्त्वं किन्नामा चासि ब्रूहि
नः ॥ ६ ॥ ततः स राजा सर्व्वेभ्यो द्विजेभ्यः पुरुषर्षभ । आचचक्षे-
यथान्यायं परिचर्य्याञ्च भारत ॥ ७ ॥ हैहयानां कुले जातः
सुमित्रो मित्रनन्दनः । चरामि मृगयूथानि निघ्नन् वाणैः सहस्रशः
॥ ८ ॥ बलेन महता गुप्तः सामात्यः सावरोधनः । मृगस्तु विद्धो
वाणेन मया सरति शल्यवान् ॥ ९ ॥ तं द्रवन्तमनुप्राप्तो वनमेत-
द्यदृच्छया । भवत्सकाशं नष्टश्रीर्हताशः श्रमकर्शितः ॥ १० ॥ किन्नु
दुःखमतोऽन्यद्वै यदहं श्रमकर्शितः । भवतामाश्रमं प्राप्तो हताशो
भ्रष्टलक्षणः ॥ ११ ॥ न राजलक्षणत्यागो न पुरस्य तपोधनाः ।
दुःखं करोति तत्तीव्रं यथाशा विहता मम ॥ १२ ॥ हिमवान् वा
महाशैलः समुद्रो वा महोदधिः । महत्त्वान्नान्वपद्येतां नभसो

वान्तरं तथा ॥ १३ ॥ आशायास्तपसि श्रेष्ठास्तथा नान्तमहं गतः ।
भवतां विदितं सर्वं सर्वज्ञा हि तपोधनाः ॥ १४ ॥ भवन्तः सुमहा-
भागास्तस्मात् पृच्छामि संशयम् । आशावान् पुरुषो यः स्यादन्त-
रीक्षमथापि वा ॥ १५ ॥ किन्नु ज्यायस्तरं लोके महत्त्वात् प्रति-
भाति वः । एतदिच्छामि तत्त्वेन श्रोतुं किमिह दुर्लभम् ॥ १६ ॥
यदि गुह्यं नरो नित्यन्तदा प्रब्रूतमाचिरम् । न गुह्यं श्रोतुमिच्छामि
शुश्रूषुर्वो द्विजसत्तमाः ॥ १७ ॥ भवत्तपोविघातो वा यदि स्याद्वि-
रमेत्ततः । यदि वास्ति कथायोगो योऽयं प्रश्नो मयेरितः ॥ १८ ॥
एतत् कारणसामर्थ्यं श्रोतुमिच्छामि तत्त्वतः । भवन्तोऽपि तपो-
नित्या ब्रूयुरेतत् समन्विताः ॥ १९ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि ऋषभगीतासु
षड्विंशत्यधिकशतोऽध्यायः ॥ १२६ ॥

---

भीष्म उवाच । ततस्तेषां समस्तानामृषीणामृषिसत्तमः ।
ऋषभो नाम विप्रर्षिर्विस्मयन्निदमब्रवीत् ॥ १ ॥ पुराहं राज-
शार्दूल तीर्थान्यनुचरन् प्रभो । समासादितवान् दिव्यं नरनारा-
यणाश्रमम् ॥ २ ॥ यत्र सा वदरी रम्या ह्रदो वैहायसस्तथा ।
यत्र चाश्वशिरा राजन् वेदान् पठति शाश्वतान् ॥ ३ ॥ तस्मिन्
सरसि कृत्वाहं विधिवत्तर्पणं पुरा । पितॄणां देवतानाञ्च ततो-
ऽश्रममियां तदा ॥ ४ ॥ रेमाते यत्र तौ नित्यं नरनरायणावृषी ।
अदूरादाश्रमं कञ्चिद्वासार्थमगमं तदा ॥ ५ ॥ तत्र चीराजिनधरं
कृशमुच्चमतीव च । अद्राक्षमृषिमायान्तं तनुं नाम तपोधनम् ॥ ६ ॥
अन्यैर्नरैर्महाबाहो वपुषाष्टगुणान्वितम् । कृशता चापि राजर्षे न
दृष्टा तादृशी क्वचित् ॥ ७ ॥ शरीरमपि राजेन्द्र तस्य कानिष्ठिका-
समम् । ग्रीवा बाहू तथा पादौ केशाश्चाद्भुतदर्शनाः ॥ ८ ॥ शिरः

कायानुरूपञ्च कर्णौ नेत्रे तथैव च । तस्य वाक् चैव चेष्टा च सामान्ये राजसत्तम ॥ ९ ॥ दृष्ट्वाहं तं कृशं विप्रं भीतः परमदुर्म्मनाः । पादौ तस्याभिवाद्याथ स्थितः प्राञ्जलिरग्रतः ॥ १० ॥ निवेद्य नामगोत्रे च पितरञ्च नरर्षभ । प्रदिष्टे चासने तेन शनैरहमुपाविशम् ॥ ११ ॥ ततः स कथयामास कथां धर्म्मार्थसंहिताम् । ऋषिमध्ये महाराज तनुर्धर्म्मभृताम्वरः ॥ १२ ॥ तस्मिंस्तु कथयत्येव राजा राजीवलोचनः । उपायाज्जवनैरश्वैः सबलः सावरोधनः ॥ १३ ॥ स्मरन् पुत्रमरण्ये वै नष्टं परमदुर्म्मनाः । भूरिद्युम्नपिता श्रीमान् वीरद्युम्नो महायशाः ॥ १४ ॥ इह द्रक्ष्यामि तं पुत्रं द्रक्ष्यामीहेति पार्थिवः । एवमाशाहतो राजा चरन् वनमिदं पुरा ॥ १५ ॥ दुर्लभः स मया द्रष्टुं नूनं परमधार्म्मिकः । एकः पुत्रो महारण्ये नष्ट इत्यसकृत्तदा ॥१६॥ दुर्लभः स मया द्रष्टुमाशा च महती मम । तया परीतगात्रोऽहं मुमूर्षुर्नात्र संशयः ॥ १७ ॥ एतच्छ्रुत्वा स भगवांस्तनुर्म्मुनिवरोत्तमः । अवाक्शिरा ध्यानपरो मुहूर्त्तमिव तस्थिवान् ॥ १८ ॥ तमनुध्यातमालक्ष्य राजा परमदुर्म्मनाः । उवाच वाक्यं दीनात्मा मन्दमन्दमिवासकृत् ॥१९॥ दुर्लभं किं नु देवर्षे आशायाश्चैव किं महत् । ब्रवीतु भगवानेतद्यदि गुह्यं न ते मयि ॥ २० ॥

मुनिरुवाच । महर्षिर्भगवांस्तेन पूर्व्वमासीद्विमानितः । बालिशां बुद्धिमास्थाय मन्दाभाग्यतयात्मनः ॥ २१ ॥ अर्थयन् कलसं राजन् काञ्चनं वल्कलानि च । अवज्ञापूर्व्वकेणापि न सम्पादितवांस्ततः ॥ २२ ॥ निर्व्विण्णः स तु राजर्षिर्निराशः समपद्यत । एवमुक्तोऽभिवाद्याथ तमृषिं लोकपूजितम् । श्रान्तोऽवसीद्धर्म्मात्मा यथा त्वं नरसत्तम ॥ २३ ॥ अर्घ्यं ततः समानीय पाद्यञ्चैव महानृषिः । आरण्येनैव विधिना राज्ञे सर्व्वं न्यवेदयत् ॥२४॥ ततस्ते मुनयः सर्व्वे परिवार्य्य नरर्षभम् । उपाविशन्नरव्याघ्र सप्तर्षय इव ध्रुवम् ॥२५॥

अपृच्छन्नैव ते तत्र राजानमपराजितम् । प्रयोजनमिदं सर्व-माश्रमस्य निवेशने ॥ २६ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि ऋषभगीतासु सप्तविंशत्यधिकशततोऽध्यायः ॥ १२७ ॥

---

राजोवाच । वीरद्युम्न इति ख्यातो राजाहं दिक्षु विश्रुतः । भूरिद्युम्नं सुतं नष्टमन्वेष्टुं वनमागतः ॥१ ॥ एकः पुत्रः स विप्राग्र्य बाल एव च मेऽनघ । न दृश्यते वने चास्मिंस्तमन्वेष्टुं चराम्यहम् ॥२॥

ऋषभ उवाच । इत्येवमुक्ते वचने राज्ञा मुनिरधोमुखः । तूष्णीमेवाभवत्तत्र न च प्रत्युक्तवान्नृपम् ॥ ३ ॥ स हि तेन पुरा विप्रो राज्ञा नात्यर्थमानितः । आशाकृतश्च राजेन्द्र तपो दीर्घं समास्थितः ॥ ४ ॥ प्रतिग्रहमहं राज्ञां न करिष्ये कथञ्चन । अन्येषाञ्चैव वर्णानामिति कृत्वा धियं तदा ॥ ५ ॥ आशा हि पुरुषं बालं लालापयति तस्थुषी । तामहं व्यपनेष्यामि इति कृत्वा व्यव-स्थितः । वीरद्युम्नस्तु तं भूयः पप्रच्छ मुनिसत्तमम् ॥ ६ ॥

राजोवाच । आशायाः किं कृशत्वञ्च किञ्चेह भुवि दुर्लभम् ! ब्रवीतु भगवानेतन्मे हि धर्मार्थदर्शिवान् ॥ ७ ॥

ऋषभ उवाच । ततः संस्मृत्य तत् सर्वं स्मारयिष्यन्निवाब्रवीत् । राजानं भगवान् विप्रस्ततः कृशतनुस्तदा ॥ ८ ॥

ऋषिरुवाच । कृशत्वेन समं राजन्नाशया विद्यते नृप । तस्या वै दुर्लभत्वाच्च प्रार्थिता पार्थिवा मया ॥ ९ ॥

राजोवाच । कृशाकृशे मया ब्रह्मन् गृहीते वचनात्तव । दुर्लभत्वञ्च तस्यैव वेदवाक्यमिव द्विज ॥ १० ॥ संशयस्तु महाप्राज्ञ सञ्जातो हृदये मम । तन्मे मम तत्त्वेन वक्तुमर्हसि पृच्छतः ॥११॥

त्वत्तः कृशतरं किन्नु ब्रवीतु भगवानिदम्। यदि गुह्यं न ते किञ्चित् विद्यते मुनिसत्तम ॥ १२ ॥

कृश उवाच। दुर्लभोऽप्यथ वा नास्ति योऽर्थी धृतिमवाप्नुयात्। सुदुर्लभतरस्तात योऽर्थिनं नावमन्यते ॥ १३ ॥ सत्कृत्य नोपकुरुते परं शक्त्या यथार्हतः। या सक्ता पूर्वभूतेषु साशा कृशतरी मया ॥ १४ ॥ कृतघ्नेषु च या सक्ता नृशंसेष्वलसेषु च। अपकारिषु चासक्ता साशा कृशतरी मया ॥ १५ ॥ एकपुत्रः पिता पुत्रे नष्टे वा प्रोषितेऽपि वा। प्रवृत्तिं यो न जानाति साशा कृशतरी मया ॥ १६ ॥ प्रसवे चैव नारीणां वृद्धानां पुत्रकारिता। तथा नरेन्द्र धनिनां साशा कृशतरी मया ॥ १७ ॥ प्रदानकाङ्क्षिणीनाञ्च कन्यानां वयसि स्थिते। श्रुत्वा कथास्तथायुक्ताः साशा कृशतरी मया ॥ १८ ॥ एतच्छ्रुत्वा ततो राजन् स राजा सावरोधनः। संस्पृश्य पादौ शिरसा निपपात द्विजर्षभम् ॥ १९ ॥

राजोवाच। प्रसादये त्वां भगवन् पुत्रेणेच्छामि सङ्गमम्। यदेतदुक्तं भवता सम्प्रति द्विजसत्तम। सत्यमेतन्न सन्देहो यदेतद्व्याहृतं त्वया ॥ २० ॥

ऋषिरुवाच। ततः प्रहस्य भगवांस्तनुर्धर्मभृताम्वरः। पुत्रमस्यानयत् क्षिप्रं तपसा च श्रुतेन च ॥ २१ ॥ स समानीय तत् पुत्रं तमुपालभ्य पार्थिवम्। आत्मानं दर्शयामास धर्मं धर्मभृताम्वरः ॥ २२ ॥ स दर्शयित्वा चात्मानं दिव्यमद्भुतदर्शनम्। विपाप्मा विगतक्रोधश्चचार वनमन्तिकात् ॥ २३ ॥ एतद्दृष्टं मया राजंस्तथा च वचनं श्रुतम्। आशामपनयस्वाशु ततः कृशतरीमिमाम् ॥ २४ ॥

भीष्म उवाच। स तथोक्तस्तदा राजन्नृषभेण महात्मना। सुमित्रोऽपनयत् क्षिप्रमाशां कृशतरीं ततः ॥ २५॥ एवं त्वमपि कौन्तेय श्रुत्वा वाणीमिमां मम। स्थिरो भव महाराज हिम-

वानिव पर्वतः ॥ २६ ॥ त्वं हि प्रष्टा च श्रोता च कृच्छ्रेष्वनुगते-
ष्विह। श्रुत्वा मम महाराज न सन्तप्तुमिहार्हसि ॥ २७ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि ऋषभगीतासु
अष्टविंशत्यधिकशततोऽध्यायः ॥ १२८ ॥

---

युधिष्ठिर उवाच। नामृतस्येव पर्य्याप्तिर्ममास्ति ब्रुवति त्वयि।
तथा हि स्वात्मवृत्तिस्थस्तथा तृप्तोऽस्मि भारत ॥ १ ॥ तस्मात्
कथय भूयस्त्वं धर्ममेव पितामह। न हि तृप्तिमहं यामि पिवन्
धर्मामृत हि ते ॥ २ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
गौतमस्य च सम्वादं यमस्य च महात्मनः ॥ ३ ॥ पारिपात्रं गिरिं
प्राप्य गौतमस्याश्रमो महान्। उवास गौतमो यत्र कालं तमपि
मे शृणु। षष्टिं वर्षसहस्राणि सोऽतप्यद्गौतमस्तपः ॥ ४ ॥ तमुग्र-
तपसा युक्तं भावितं सुमहामुनिम्। उपायातो नरव्याघ्र लोक-
पालो यमस्तथा। तमपश्यत् सुतपसमृषिं वै गौतमं तदा ॥ ५ ॥
स तं विदित्वा ब्रह्मर्षिर्यममागतमोजसा। प्राञ्जलिः प्रयतो भूत्वा
उपविष्टस्तपोधनः ॥ ६ ॥ तं धर्मराजो दृष्ट्वैव सत्कृत्यैव द्विज-
र्षभम्। न्यमन्त्रयत धर्मेण क्रियतां किमिति ब्रुवन् ॥ ७ ॥
गौतम उवाच। मातापितृभ्यामानृण्यं किं कृत्वा समवाप्नुयात्।
कथञ्च लोकानाप्नोति पुरुषो दुर्लभान् शुचीन् ॥ ८ ॥

यम उवाच। तपः शौचवता नित्यं सत्यधर्मरतेन च।
मातापित्रोरहरहः पूजनं कार्य्यमञ्जसा ॥ ९ ॥ अश्वमेधैश्च यष्टव्यं
बहुभिस्वाप्तदक्षिणैः। तेन लोकानवाप्नोति पुरुषोऽद्भुतदर्शनात्॥१०॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि एकोन-
त्रिंशत्यधिकशततोऽध्यायः ॥ १२९ ॥

युधिष्ठिर उवाच। मित्रैः प्रहीयमानस्य बह्वमित्रस्य का गतिः। राज्ञः सङ्क्षीणकोषस्य बलहीनस्य भारत ॥ १ ॥ दुष्टामात्यसहायस्य च्युतमन्त्रस्य सर्वशः। राज्यात् प्रच्यवमानस्य गतिमग्र्यामपश्यतः ॥ २ ॥ परचक्राभियातस्य परराष्ट्राणि मृद्नतः। विग्रहे वर्त्तमानस्य दुर्व्वलस्य बलीयसा। असंविहितराष्ट्रस्य देशकालावजानतः ॥ ३ ॥ अप्राप्यञ्च भवेत् सान्त्वं भेदो वाप्यतिपीड़नात्। जीवितन्त्वर्थहेतुर्वा तत्र किं सुकृतं भवेत् ॥ ४ ॥

भीष्म उवाच। गुह्यं धर्मञ्च मा प्राक्षीरतीव भरतर्षभ। अपृष्टो नोत्सहे वक्तुं धर्ममेतं युधिष्ठिर ॥ ५ ॥ धर्मो ह्यणीयान् वचनाद्बुद्धिश्च भरतर्षभ। श्रुत्वोपास्य सदाचारैः साधुर्भवति स क्वचित् ॥ ६ ॥ कर्मणा बुद्धिरूपेण भवत्याढ्यो न वा पुनः। तादृशोऽयमनुप्रश्नः संव्यवस्यः स्वया धिया ॥ ७ ॥ उपायं धर्मबहुलं यात्रार्थं शृणु भारत। नाहमेतादृशं धर्मं बुभूषे धर्मकारणात् ॥ ८ ॥ दुःखादान इह ह्येष स्यात्तु पश्चात् क्षयोपमः। अभिगम्य मतीनां हि सर्व्वासामेव निश्चयः ॥ ९ ॥ यथा यथा हि पुरुषो नित्यं शास्त्रमवेक्षते। तथा तथा विजानाति विज्ञानमथ रोचते ॥ १० ॥ अविज्ञानादयोगो हि योगो भूतिकरः परः। अशङ्कमानो वचनमनसूयुरिदं शृणु ॥ ११ ॥ राज्ञः कोषक्षयादेव जायते बलसङ्क्षयः। कोषञ्च जनयेद्राजा निर्ज्जलेभ्यो यथा जलम् ॥ १२ ॥ कालं प्राप्यानुगृह्णीयादेष धर्मः सनातनः। उपायधर्मं प्राप्येमं पूर्व्वैराचरितं जनैः ॥ १३ ॥ अन्यो धर्म्मः समर्थानामापत्स्वन्यश्च भारत। प्राक् कोषात् प्राप्यते धर्मो वृत्तिर्धर्माद्गरीयसी ॥ १४ ॥ धर्मं प्राप्य न्यायवृत्तिं नबलीयान्न विन्दति। यस्माद्बलस्योपपत्तिरेकान्तेन न विद्यते ॥ १५ ॥ तस्मादापद्यधर्मोऽपि श्रूयते धर्म्मलक्षणः। अधर्मो जायते तस्मिन्निति वै कवयो विदुः ॥ १६ ॥ अनन्तरं क्षत्रियस्य तत्र किं विचिकित्स्यते। यथास्य धर्मो न

श्लाघेन्नेयाच्छत्रुवशं यथा। तत्कर्त्तव्यमिति प्राज्ञर्नात्मानमवसादयेत् ॥ १७ ॥ सर्व्वात्मनैव धर्मस्य न परस्य न चात्मनः। सर्व्वोपायैरुज्जिहीर्षेदात्मानमिति निश्चयः ॥ १८ ॥ तत्र धर्मविदां तात निश्चयो धर्मनैपुणम्। उद्यमो नैपुणं चात्र बाहुवीर्य्यादिति श्रुतिः ॥ १९ ॥ क्षत्रियो वृत्तिसंरोधे कस्य नादातुमर्हति। अन्यत्र तापसस्वाच्च ब्राह्मणस्वाच्च भारत ॥ २० ॥ यथा वै ब्राह्मणः सीदन्नयाज्यमपि याजयेत्। अभोज्यान्नानि चाश्नीयात्तथेदं नात्र संशयः ॥ २१ ॥ पीड़ितस्य किमद्वारमुत्पथो विधृतस्य च। अद्वारतः प्रद्रवति यदा भवति पीड़ितः ॥ २२ ॥ यस्य कोषबलग्लान्या सर्व्वलोकपराभवः। भैक्ष्यचर्य्या न विहिता न च विट्शूद्रजीविका ॥२३॥ स्वधर्मानन्तरा वृत्तिर्जात्यानुपजीवत। वहतः प्रथमं कल्पमनुकल्पेन जीवनम् ॥ २४ ॥ आपद्गतेन धर्माणामन्यायेनोपजीवनम्। अपि ह्येतद्ब्राह्मणेषु दृष्टं वृत्तिपरिक्षये ॥ २५ ॥ क्षत्रिये संशयः कस्मादित्येवं निश्चितं सदा। आददीत विशिष्टेभ्यो नावसीदेत् कथञ्चन ॥ २६ ॥ हन्तारं रक्षितारञ्च प्रजानां क्षत्रियं विदुः। तस्मात् संरक्षता कार्य्यमादानं क्षत्रबन्धुना ॥ २७ ॥ अन्यत्र राजन् हिंसाया वृत्तिर्नेहास्ति कस्यचित्। अप्यरण्यसमुत्थस्य एकस्य चरतो मुने ॥ २८ ॥ न शङ्खलिखितां वृत्तिं शक्यमास्थाय जीवितुम्। विशेषतः कुरुश्रेष्ठ प्रजापालनमीप्सया ॥ २९ ॥ परस्परं हि संरक्षा राज्ञा राष्ट्रेण चापदि। नित्यमेव हि कर्त्तव्या एष धर्मः सनातनः ॥ ३० ॥ राजा राष्ट्रं यथापत्सु द्रव्यौघैरभिरक्षति। राष्ट्रेण राजा व्यसने रक्षितव्यस्तथा भवेत् ॥ ३१ ॥ कोषं दण्डं बलं मित्रं यदन्यदपि सञ्चितम्। न कुर्व्वीतान्तरं राष्ट्रे राजा परिगतः क्षुधा ॥३२॥ वीजं भक्तेन सम्पाद्यमिति धर्मविदो विदुः। अत्रैतच्छम्बरस्याहुर्महामायस्य दर्शनम् ॥ ३३ ॥ धिक् तस्य जीवितं राज्ञो राष्ट्रं यास्यावसीदति। अवृत्त्यात्यमनुष्योऽपि यो

वै देशिक इत्यपि ॥ ३४ ॥ राज्ञः कोषबलं मूलं कोषबलं पुन र्बलम् । तन्मूलं सर्वधर्माणां धर्म्ममूलाः पुनः प्रजाः ॥३५ ॥ नान्यानपीड़यत्वेह कोषः शक्य कुतो बलम् । तदर्थं पीड़यित्वा च दोषं प्राप्तुं न सोऽर्हति ॥३६॥ अकार्य्यमपि यज्ञार्थं क्रियते यज्ञकर्म्मसु । एतस्मात् कारणाद्राजा न दोषं प्राप्त मर्हति॥३७॥अर्थार्थमन्यद्भवति विपरीतमथापरम् । अनर्थार्थमथाप्यन्यत्तत् सर्वं ह्यर्थकारणम् । एवं वुद्धा सम्प्रपश्येन्मेधावी कर्म्मनिश्चयम् ॥३८॥ यज्ञार्थमन्यद्भवति यज्ञोऽन्यार्थस्तथापरः । यज्ञस्यार्थार्थमेवान्यत्तत् सर्वं यज्ञसाधनम् ॥ ३९ ॥ उपमानत्र वच्यामि धर्म्मतत्त्वप्रकाशिनीम् । यूपं छिन्दन्ति यज्ञार्थं तत्र ये परिपन्थिनः ॥ ४० ॥ द्रुमाः केचन सामन्ता ध्रुवं छिन्दन्ति तानपि । ते चापि निपतन्तोऽन्यान्निघ्नन्त्येव वनस्पतीन् ॥ ४१ ॥ एवं कोषस्य महतो ये नराः परिपन्थिनः । तानहत्वा न पश्यामि सिद्धिमत्र परन्तप ॥ ४२ ॥ धनेन जायते लोकावुभौ परमिमं तथा । सत्यञ्च धर्म्मवचनं यथा नास्त्यधनस्तथा ॥ ४३ ॥ सर्वोपायैराददीत धनं यज्ञप्रयोजनम् । न तुल्यदोषः स्यादेवं कार्य्याकार्य्येषु भारत ॥ ४४ ॥ नैतौ सम्भवतो राजन् कथञ्चिदपि पार्थिव । न ह्यरण्येषु पश्यामि धनवृद्धानहं क्वचित् ॥४५॥ यदिदं दृश्यते वित्तं पृथिव्यामिह किञ्चन । ममेदं स्यान्ममेदं स्यादित्येवं काङ्क्षते जनः ॥ ४६ ॥ न च राज्यसमो धर्म्मः कश्चिदस्ति परन्तप । धर्म्मं संशब्दितो राज्ञामापदर्थमतोऽन्यथा ॥४७ ॥ दानेन कर्म्मणा चान्ये तपसान्ये तपस्विनः । वुद्धा दाक्ष्येण चैवान्ये विन्दन्ति धनसञ्चयान् ॥ ४८ ॥ अधनं दुर्बलं प्राहुर्धनेन बलवान् भवेत् । सर्वं धनवता प्राप्यं सर्वं तरति कोषवान् ॥ ४९ ॥ कोषेण धर्म्मः कामश्च परलोकस्तथा ह्ययम् । तञ्च धर्मेण लिप्सेत नाधर्मेण कदाचन॥५०॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि त्रिंशदधिकशततोऽध्यायः ॥ १३० ॥ समाप्तञ्च राजधर्मानुशासनपर्व ॥

अथ आपद्धर्मानुशासनपर्व ॥

युधिष्ठिर उवाच। चीणस्य दीर्घसूत्रस्य सानुक्रोशस्य बन्धुषु परिशङ्कितवृत्तस्य श्रुतमन्त्रस्य भारत ॥ १ ॥ विभक्तपुरराष्ट्रस्य निर्द्रव्यनिचयस्य च। असम्भावितमित्रस्य भिन्नामात्यस्य सर्वशः॥२॥ परचक्राभियातस्य दुर्बलस्य बलीयसा। आपन्नचेतसो ब्रूहि किं कार्य्यमवशिष्यते ॥ ३ ॥

भीष्म उवाच। वाह्यश्चेद्विजिगीषुः स्याद्धर्मार्थकुशलः शुचिः। जवेन सन्धिं कुर्वीत पूर्वपूर्वान् विमोचयन् ॥ ४ ॥ योऽधर्मविजिगीषुः स्याद्बलवान् पापनिश्चयः। आत्मनः सन्निरोधेन सन्धिं तेनापि रोचयेत् ॥ ५ ॥ अपास्य राजधानीम्वा तरेद्द्रव्येण चापदम्। तद्भावयुक्तो द्रव्याणि जीवन् पुनरुपार्ज्जयेत् ॥ ६ ॥ यास्तु कोषबलत्यागात् शक्यास्तरितुमापदः। कस्तत्राधिकमात्मानं सन्त्यजेदर्थधर्मवित्॥ ७॥ अवरोधान् जुगुप्सेत का सपत्नधने दया। न त्वेवात्मा प्रदातव्यः शक्ये सति कथञ्चन ॥ ८ ॥

युधिष्ठिर उवाच। आभ्यन्तरे प्रकुपिते वाह्ये चोपनिपीड़िते। चीणे कोषे श्रुते मन्त्रे किं कार्य्यमवशिष्यते ॥ ९ ॥

भीष्म उवाच। चिप्रम्वा सन्धिकामः स्यात् चिप्रम्वा तीक्ष्णविक्रमः। तदापनयनं चिप्रमेतावत् साम्परायिकम् ॥ १० ॥ अनुरक्तेन चेष्टेन हृष्टेन जगतीपतिः। अल्पेनापि हि सैन्येन महीं जयति भूमिपः ॥ ११ ॥ हतो वा दिवमारोहेद्धत्वा वा चितिमावसेत्। युद्धे हि सन्त्यजन् प्राणान् शक्रस्यैति सलोकताम् ॥ १२ ॥ सर्वलोकागमं कृत्वा मृदुत्वं गन्तुमेव च। विश्वासाद्विनयं कुर्य्याद्विश्वसेच्चाप्युपायतः ॥ १३ ॥ अपचिक्रमिषुः चिप्रं साम्ना वा परिसान्त्वयन्। विलङ्घयित्वा मन्त्रेण ततः स्वयमुपक्रमेत् ॥ १४ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि
एकत्रिंशदधिकशततोऽध्यायः ॥ १३१ ॥

युधिष्ठिर उवाच। हीने परमके धर्म्मे सर्वलोकाभिसंहिते। सर्वस्मिन् दस्युसाद्भूते पृथिव्यामुपजीवने ॥ १ ॥ केनचिद्ब्राह्मणो जीवेत् जघन्ये काल आगते। असन्त्यजन् पुत्रपौत्राननुक्रोशात् पितामह ॥ २ ॥

भीष्म उवाच। विज्ञानबलमास्थाय जीवितव्यं तथागते। सर्वं साध्वर्थमेवेदमसाध्वर्थं न किञ्चन ॥ ३ ॥ असाधुभ्योऽर्थमादाय साधुभ्यो य प्रयच्छति। आत्मानं संक्रमं कृत्वा कृत्स्नधर्मविदेव सः ॥ ४ ॥ आकाङ्क्षन्नात्मनो राजन् राज्ये स्थितिमकोपयन्। अदत्तमेवाददीत दातुर्वित्तं ममेति च ॥ ५ ॥ विज्ञानबलपूतो यो वर्त्तते निन्दितेष्वपि। वृत्तिविज्ञानवान् धीरः कस्तम्वा वक्तुमर्हति ॥ ६ ॥ येषां बलकृता वृत्तिस्तेषामन्या न रोचते। तेजसाभिप्रवर्त्तन्ते बलवन्तो युधिष्ठिर ॥ ७ ॥ यदेवं प्राकृतं शास्त्रमविशेषेण वर्त्तते। तदेवमभ्यसेदेवं मेधावी चाप्यथोत्तरम् ॥ ८ ॥ ऋत्विक्पुरोहिताचार्य्यान् सत्कृतानभिसत्कृतान्। न ब्राह्मणान् घातयीत दोषान् प्राप्नोति घातयन् ॥ ९ ॥ एतत् प्रमाणं लोकस्य चक्षुरेतत् सनातनम्। तत् प्रमाणेऽवगाह्येत तेन तत् साध्वसाधु वा ॥ १० ॥ बहवो ग्रामवास्तव्या रोषाद्ब्रुयुः परस्परम्। न तेषां वचनाद्राजा सत्कुर्य्याद्घातयीत वा ॥ ११ ॥ न वाच्यः परिवादोऽयं न श्रोतव्यः कथञ्चन। कर्णावथ पिधातव्यौ प्रस्थेयञ्चान्यतो भवेत् ॥ १२ ॥ असतां शीलमेतद्वै परिवादोऽथ पैशुनम्। गुणानामेव वक्तारः सन्तः सत्सु नराधिप ॥ १३ ॥ यथा सुमधुरौ दम्यौ सुदान्तौ साधुवाहिनौ। धुरमुद्यम्य वहतस्तथा वर्त्तेत वै नृपः ॥ १४ ॥ यथा यथास्य बहवः सहायाः स्युस्तथापरे। आचारमेव मन्यन्ते गरीयो धर्म्मलक्षणम् ॥ १५ ॥ अपरे नैवमिच्छन्ति ये शङ्खलिखितप्रियाः। मात्सर्य्यादथ वा लोभान्न ब्रूयुर्वाक्यमीदृशम् ॥ १६ ॥ आर्षमप्यत्र पश्यन्ति विकर्म्मस्थस्य पातनम्। न तादृक्सदृशं

किञ्चित् प्रमाणं दृश्यते क्वचित् ॥ १७ ॥ देवा अपि विकर्मस्थं घातयन्ति नराधमम्। व्याजेन विन्दन् वित्तं हि धर्मात् स परिहीयते ॥ १८ ॥ सर्वतः सत्कृतः सद्भिर्भूतिप्रवरकारणैः। हृदयेनाभ्यनुज्ञातो यो धर्मस्तं व्यवस्यति ॥ १९ ॥ यश्चतुर्गुणसम्पन्नं धर्मं ब्रूयात् स धर्मवित्। अहेरिव हि धर्मस्य पदं दुःखं गवेषितुम् ॥ २० ॥ यथा मृगस्य विद्धस्य मृगव्याधः पदं नयेत्। लक्षयेद्रुधिरलेपेन तथा धर्मपदं नयेत् ॥ २१ ॥ एवं सद्भिर्विनीतेन पथा गन्तव्यमित्युत। राजर्षीणां वृत्तमेतदेवं गच्छ युधिष्ठिर ॥ २२ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि
द्वात्रिंशदधिकशततोऽध्यायः ॥ १३२ ॥

---

भीष्म उवाच। स्वराष्ट्रात् परराष्ट्राच्च कोषं संजनयेन्नृपः। कोषाद्धि धर्मः कौन्तेय राज्यमूलश्च वर्द्धते ॥ १ ॥ तस्मात् संजनयेत् कोषं सत्कृत्य परिपालयेत्। परिपाल्यानुतनुयादेष धर्मः सनातनः ॥ २ ॥ न कोषः शुद्धशौचेन न नृशंसेन जातुचित्। मध्यमं पदमास्थाय कोषसंग्रहणञ्चरेत् ॥ ३ ॥ अबलस्य कुतः कोषो ह्यकोषस्य कुतो बलम्। अबलस्य कुतो राज्यमराज्ञः श्रीर्भवेत् कुतः ॥ ४ ॥ उच्चैर्वृत्तेः श्रियो हानिर्यथैव मरणन्तथा। तस्मात् कोषं बलं मित्रमथ राजा विवर्द्धयेत् ॥ ५ ॥ हीनकोषं हि राजानमवजानन्ति मानवाः। न चास्याल्पेन तुष्यन्ति कार्य्यमप्युत् सहन्ति च ॥ ६ ॥ श्रियो हि कारणाद्राजा सत्क्रियां लभते पराम्। सास्य गूहति पापानि वासो गुह्यमिव स्त्रियाः ॥ ७ ॥ ऋद्धिमस्यानुतप्यन्ते पुरा विप्रकृता नराः। शालावृका इवाजस्रं जिघांसूनेव विन्दति ॥ ८ ॥ ईदृशस्य कुतो राज्ञः सुखं भवति भारत। उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ॥९ ॥ अप्यपर्वणि

भज्येत न नमेतेह कस्य चित् । अप्यरण्यं समाश्रित्य चरेन्मृगगणैः सह ॥ १० ॥ न लेवोज्झितमर्य्यादैर्दस्युभिः सहितश्चरेत् । दस्यूनां सुलभा सेना रौद्रकर्म्मसु भारत ॥ ११ ॥ एकान्ततो ह्यमर्य्यादात् सर्व्वोऽप्युद्विजते जनः । दस्यवोऽप्यभिशङ्कन्ते निरनुक्रोशकारिणः ॥ १२ ॥ स्थापयेदेव मर्य्यादां जनचित्तप्रसादनीम् । अल्पेऽप्यर्थे तु मर्य्यादा लोके भवति पूजिता ॥ १३ ॥ नायं लोकोऽस्ति न पर इति व्यवसितो जनः । नालं गन्तुं हि विश्वासं नास्तिके भयशङ्किते ॥ १४ ॥ यथा सद्भिः परादानमहिंसा दस्युभिः कृता । अनुरज्यन्ति भूतानि समर्य्यादेषु दस्युषु ॥ १५ ॥ अयुध्यमानस्य वधो दारामर्षः कृतघ्नता । ब्रह्मवित्तस्य चादानं निःशेषकरणन्तथा ॥ १६ ॥ स्त्रिया मोषः पतिस्थानं दस्युष्वेतद्विगर्हितम् । संश्लेषञ्च परस्त्रीभिर्दस्युरेतानि वर्ज्जयेत् ॥ १७ ॥ अभिसन्दधते ये च विश्वासायास्य मानवाः । अशेषमेवोपलभ्य कुर्वन्तीति विनिश्चयः ॥ १८ ॥ तस्मात् सशेषं कर्त्तव्यं स्वाधीनमपि दस्युभिः । न बलस्थोऽहमस्मीति नृशंसानि समाचरेत् ॥ १९ ॥ सशेषकारिणस्तत्र शेषं पश्यन्ति सर्वशः । निःशेषकारिणो नित्यं निःशेषकरणाद्भयम् ॥ २० ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि
त्रयस्त्रिंशदधिकशतोऽध्यायः ॥ १३३ ॥

---

भीष्म उवाच । अत्र धर्मानुवचनं कथयन्ति पुराविदः । प्रत्यक्षावेव धर्मार्थौ क्षत्रियस्य विजानतः । तत्र न व्यवधातव्यं परोक्षा धर्म्मयापना ॥ १ ॥ अधर्मो धर्म इत्येतद्यथा वृकपदं तथा । धर्माधर्मफले जातु ददर्शेह न कश्चन ॥ २ ॥ बुभूषेद्बलमेवैतत् सर्वं बलवतो वशे । श्रियो बलममात्यांश्च बलवानिह विन्दति ॥ ३ ॥

यो ह्यनाढ्यः स पतितस्तदुच्छिष्टं यदल्पकम्। बह्वपथ्यं बलवति न किञ्चित् क्रियते भयात्। उभौ सत्याधिकारस्थौ त्रायेते महतो भयात्॥ ४॥ अतिधर्माद्बलं मन्ये बलाद्धर्मः प्रवर्त्तते। बले प्रतिष्ठितो धर्मो धरण्यामिव जङ्गमम्॥ ५॥ धूमो वायोरिव वशे बलं धर्मोऽनुवर्त्तते। अनीश्वरो बले धर्मो द्रुमं वल्लीव संश्रिता॥ ६॥ वशे बलवतां धर्मः सुखं भोगवतामिव। नास्त्यसाध्यं बलवतां सर्वं बलवतां शुचि॥ ७॥ दुराचारः क्षीणबलः परित्राणं न गच्छति। अथ तस्मादुद्विजते सर्वलोको वृकादिव॥ ८॥ अपध्वस्तो ह्यवमतो दुःखं जीवति जीवितम्। जीवितं यदपक्रुष्टं यथैव मरणन्तथा॥९॥ यदैवमाहुः पापेन चारित्रेण विवर्ज्जितः। सुभृशं तप्यते तेन वाक्शल्येन परिक्षतः॥१०॥ अत्रैतदाङ्गराचार्य्याः पापस्य परिमोचणे। त्रयीं विद्यामवेक्षेत तथोपासीत वै द्विजान्॥ ११॥ प्रसादयेच्चक्षुषा च वाचा वाप्यथ कर्मणा। महामनाश्चापि भवेद्विवहेच्च महाकुले॥ १२॥ इत्यस्मीति वदेदेवं परेषां कीर्त्तयेद्गुणान्। जपेदुदकशीलः स्यात् पेशलो नातिजल्पकः॥ १३॥ ब्रह्मक्षत्रं सम्प्रविशेद्बहुकृत्वा सुदुष्करम्। उच्यमानो हि लोकेन बहुकृत्तदचिन्तयन्॥ १४॥ अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत्। सुखञ्च चित्रं भुञ्जीत कृतेनैकेन गोपयेत्। लोके च लभते पूजां परत्रेह महत् फलम्॥ १५॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि
चतुस्त्रिंशदधिकशततोऽध्यायः॥ १३४॥

---

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। यथा दस्युः समर्य्यादः प्रेत्यभावे न नश्यति॥ १॥ प्रहर्त्ता मतिमान् शूरः श्रुतवानन्नृशंसवान्। रक्षन्नाश्रमिणां धर्मं ब्रह्मण्यो

गुरुपूजकः ॥ २ ॥ निषाद्यां क्षत्रियाज्जातः क्षत्रधर्मानुपालकः । कायव्यो नाम नैषादिर्दस्युत्वात् सिद्धिमाप्तवान् ॥ ३ ॥ अरण्ये सायं पूर्वाह्णे मृगयूथप्रकोपिता । विधिज्ञो मृगजातीनां नैषादानाञ्च कोविदः ॥ ४ ॥ सर्वकालप्रदेशज्ञः पारियात्रचरः सदा । धर्मज्ञः सर्वभूतानाममोघेषुर्दृढ़ायुधः ॥ ५ ॥ अप्यनेकशताः सेना एक एव जिगाय सः । स वृद्धावन्धवधिरौ महारण्येऽभ्यपूजयत् ॥ ६ ॥ मधुमांसैर्मूलफलैरन्नैरुच्चावचैरपि । सत्कृत्य भोजयामास मान्यान् परिचचार च ॥ ७ ॥ आरण्यकान् प्रव्रजितान् ब्राह्मणान् परिपूजयन् । अपि तेभ्यो मृगान् हत्वा निनाय सततं वने ॥ ८ ॥ येऽस्मान्न प्रतिगृह्णन्ति दस्युतो जनशङ्कया । तेषामासज्य गेहेषु कल्य एव स गच्छति ॥ ९ ॥ बहूनि तं सहस्राणि ग्रामणीत्वेऽभिवव्रिरे । निर्मर्य्यादानि दस्यूनां निरनुक्रोशवर्त्तिनाम् ॥ १० ॥

दस्यव ऊचुः । मुहूर्त्तदेशकालज्ञः प्राज्ञः शूरो दृढ़व्रतः । ग्रामणीर्भव नो मुख्यः सर्वेषामेव सम्मतः ॥ ११ ॥ यथा यथा वक्ष्यसि नः करिष्यामस्तथा तथा । पालयास्मान् यथान्यायं यथा माता यथा पिता ॥ १२ ॥

कायव्य उवाच । मा वधीस्त्वं स्त्रियं भीरुं मा शिशुं मा तपस्विनम् । नायुध्यमानो हन्तव्यो न च ग्राह्या बलात्स्त्रिय ॥१३॥ सर्वथा स्त्री न हन्तव्या सर्वसत्त्वेषु केनचित् । नित्यन्तु ब्राह्मणे स्वस्ति योद्धव्यञ्च तदर्थतः ॥ १४ ॥ सत्यञ्च नोपहर्त्तव्यं सीरविघ्नञ्च मा कृथाः । पूज्यन्ते यत्र देवाश्च पितरोऽतिथयस्तथा ॥ १५ ॥ सर्वभूतेष्वपि च वै ब्राह्मणो मोक्षमर्हति । कार्य्या चोपचितिस्तेषां सर्वस्वेनापि या भवेत् ॥ १६ ॥ यस्य ह्येते संप्ररुष्टाः मन्त्रयन्ति पराभवम् । न तस्य त्रिषु लोकेषु त्राता भवति कश्चन ॥ १७ ॥ यो ब्राह्मणान् परिवदेत् विनाशञ्चापि रोचयेत् । सूर्य्योदय इव ध्वान्ते ध्रुवं तस्य पराभवः ॥ १८ ॥ इहैव फलमासीनः प्रत्या-

काङ्क्षेत सर्वशः। ये ये नो न प्रदास्यन्ति तांस्तान् सेनाभियास्यति ॥ १९ ॥ शिष्टार्थं विहितो दण्डो न वृद्ध्यर्थं विनिश्चयः। ये च शिष्टान् प्रबाधन्ते दण्डस्तेषां वधः स्मृतः ॥ २० ॥ ये च राष्ट्रोपरोधेन वृद्धिं कुर्वन्ति केन च। तदैव तेऽनुमीयन्ते कुणपे क्रमयो यथा ॥ २१ ॥ ये पुनर्धर्मशास्त्रेण वर्त्तेरन्निह दस्यव। अपि ते दस्यवो भूत्वा क्षिप्रं सिद्धिमवाप्नुयुः ॥ २२ ॥

भीष्म उवाच। ते सर्व्वमेवानचक्रुः कायव्यस्यानुशासनम्। वृद्धिञ्च लेभिरे सर्वे पापेभ्यश्चाप्युपारमन् ॥ २३ ॥ कायव्यः कर्म्मणा तेन महतीं सिद्धिमाप्तवान्। साधूनामाचरन् क्षेमं दस्यून् पापान्निवर्त्तयन् ॥ २४ ॥ इदं कायव्यचरितं यो नित्यमनुचिन्तयेत्। नारण्येभ्यो हि भूतेभ्यो भयं प्राप्नोति किञ्चन ॥ २५ ॥ न भयं तस्य भूतेभ्यः सर्व्वेभ्यश्चैव भारत। नासतो विद्यते राजन् स ह्यरण्येषु गोपतिः ॥ २६ ॥

इति शान्तिपर्व्वणि आपद्धर्मानुशासनपर्व्वणि कायव्यचरिते पञ्चविंशदधिकशतोऽध्यायः ॥ १३५ ॥

---

भीष्म उवाच। अत्र गाथा ब्रह्मगीताः कीर्त्तयन्ति पुराविदः। येन मार्गेण राजा वै कोषं सञ्जनयत्युत ॥ १ ॥ न धनं यज्ञशीलानां हार्य्यं देवस्वमेव च। दस्यूनां निष्क्रियाणाञ्च क्षत्रियो हर्त्तुमर्हति ॥ २ ॥ इमाः प्रजाः क्षत्रियाणां राज्यभोगाश्च भारत। धनं हि क्षत्रियस्यैव द्वितीयस्य न विद्यते ॥ ३ ॥ तदस्य स्याद्बलार्थं वा धनं यज्ञार्थमेव च। अभोग्याश्चौषधीश्छित्त्वा भोग्या एव पचन्त्युत ॥ ४ ॥ यो नैव देवान्न पितॄन्न मर्त्यान् हविषार्च्चति। अनर्थकं धनं तत्र प्राहुर्धर्मविदो जनाः ॥५॥ हरेत्तद्द्रविणं राजन् धार्म्मिकः पृथिवीपतिः। ततः प्रीणयते लोकं न कोषं तद्विधं

नृपः ॥६॥ असाधुभ्योऽर्थमादाय साधुभ्यो यः प्रयच्छति । आत्मानं संक्रमं कृत्वा कृत्स्नधर्मविदेव सः ॥ ७ ॥ तथा तथा जयल्लोकान् शक्त्या चैव यथा यथा । उद्भिज्जा जन्तवो यद्वत् शुक्लजीवा यथा यथा । अनिमित्तात् सम्भवन्ति तथा यज्ञः प्रजायते ॥ ८ ॥ यथैव दंशमशकं यथाचाण्डपिपीलिकम् । सैव वृत्तिरयज्ञेषु यथा धर्मो विधीयते ॥ ९ ॥ यथा ह्यकस्माद्भवति भूमौ पांशुविलोलितः । तथैवेह भवेद्धर्म्मः सूक्ष्मः सूक्ष्मतरस्तथा ॥ १० ॥

इति शान्तिपर्व्वणि आपद्धर्म्मानुशासनपर्व्वणि
षट्त्रिंशदधिकशततोऽध्यायः ॥ १३६ ॥

---

भीष्म उवाच । अनागतविधाता च प्रत्युत्पन्नमतिश्च यः । द्वावेव सुखमेधेते दीर्घसूत्रो विनश्यति ॥ १ ॥ अत्रैव चेदमव्यग्रं शृणुष्वाख्यानमुत्तमम् । दीर्घसूत्रमुपाश्रित्य कार्य्याकार्य्यविनिश्चये ॥ २ ॥ नातिगाधे जलाधारे सुहृदः शकुलास्त्रयः । प्रभूतमत्स्ये कौन्तेय बभूवुः सहचारिणः ॥ ३ ॥ तत्रैको दीर्घकालज्ञः उत्पन्नप्रतिभोऽपरः । दीर्घसूत्रश्च तत्रैकस्त्रयाणां सहचारिणाम् ॥ ४ ॥ कदाचित्तं जलस्थायं मत्स्यबन्धाः समन्ततः । निःस्रावयामासुरथो निम्नेषु विविधैर्मुखैः ॥ ५ ॥ प्रक्षीयमाणं तं दृष्ट्वा जलस्थायं भयागमे । अब्रवीद्दीर्घदर्शी तु तावुभौ सुहृदौ तदा ॥ ६ ॥ इयमापत् समुत्पन्ना सर्वेषां सलिलौकसाम् । शीघ्रमन्यत्र गच्छामः पन्था यावन्न दुष्यति ॥७॥ अनागतमनर्थं हि सुनयैर्यः प्रवाधयेत् । स न संशयमाप्नोति रोचतां भो व्रजामहे ॥ ८ ॥ दीर्घसूत्रस्तु यस्तत्र सोऽब्रवीत् सम्यगुच्यते । न तु कार्य्या त्वरा तावदिति मे निश्चिता मतिः ॥ ९ ॥ अथ संप्रतिपत्तिज्ञः प्राब्रवीद्दीर्घदर्शिनम् । प्राप्ते काले न मे किञ्चिन्न्यायतः परिहास्यते ॥ १० ॥ एवं श्रुत्वा

निराक्रामद्दीर्घदर्शी महामतिः। जगाम स्रोतसा तेन गम्भीरं सलिलाशयम्॥ ११॥ ततः प्रस्रुततोयन्तं प्रसमीच्य जलाशयम्। बबन्धु विविधैर्योगैर्मत्स्यान् मत्स्योपजीविनः ॥१२॥ विलोड्यमाने तस्मिंस्तु स्रुततोये जलाशये। अगच्छद्बन्धनं तत्र दीर्घसूत्रः सहापरैः॥ १३॥ उद्दाने क्रियमाणे तु मत्स्यानां तत्र रज्जुभिः। प्रविश्यान्तरमेतेषां स्थितः संप्रतिपत्तिमान्॥१४॥ ग्रस्यमेव तदुद्दानं गृहीत्वा तं तथैव सः। सर्वानेव च तांस्तत्र ते विदुर्ग्रथितानिति॥ १५॥ ततः प्रक्षाल्यमानेषु मत्स्येषु विपुले जले। मुक्त्वा रज्जुं प्रमुक्तोऽसौ शीघ्रं संप्रतिपत्तिमान्॥ १६॥ दीर्घसूत्रस्तु मन्दात्मा हीनबुद्धिरचेतनः। मरणं प्राप्तवान्मूढो यथैवोपहतेन्द्रियः॥ १७॥ एवं प्राप्ततमं कालं यो मोहान्नावबुध्यते। स विनश्यति वै क्षिप्रं दीर्घसूत्रो यथा झषः॥ १८॥ आदौ न कुरुते श्रेयः कुशलोऽस्मीति यः पुमान्। स संशयमवाप्नोति यथा संप्रतिपत्तिमान्॥ १९॥ अनागतविधाता च प्रत्युत्पन्नमतिश्च यः। द्वावेव सुखमेधेते दीर्घसूत्रो विनश्यति॥ २०॥ काष्ठा कला मुहूर्त्ताश्च दिवारात्रिस्तथा लवाः। मासाः पक्षाः षडृतवः कल्पः सम्वत्सरास्तथा॥ २१॥ पृथिवी देश इत्युक्तः कालः स च न दृश्यते। अभिप्रेतार्थसिद्ध्यर्थं ध्यायते यच्च तत्तथा॥ २२॥ एतौ धर्मार्थशास्त्रेषु मोक्षशास्त्रेषु चर्षिभिः। प्रधानाविति निर्दिष्टौ कालौ चाभिमतौ नृणाम्॥ २३॥ परीक्ष्यकारी युक्तश्च स सम्यक् समुपादयेत्। देशकालावभिप्रेतौ ताभ्यां फलमवाप्नुयात्॥ २४॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि शाकुलोपाख्याने सप्तत्रिंशदधिकशततोऽध्यायः॥ १३७॥

युधिष्ठिर उवाच। सर्व्वत्र बुद्धिः कथिता श्रेष्ठा ते भरतर्षभ। अनागता तथोत्पन्ना दीर्घसूत्रा विनाशिनी ॥ १ ॥ तदिच्छामि परां बुद्धिं श्रोतुं ते भरतर्षभ। यथा राजा न मुह्येत शत्रुभिः परिवारितः ॥ २ ॥ धर्म्मार्थकुशल प्राज्ञ धर्म्मशास्त्रविशारद। पृच्छामि त्वां कुरुश्रेष्ठ तन्मे व्याख्यातुमर्हसि ॥ ३ ॥ शत्रुभिर्बहुभिर्ग्रस्तो यथा वर्त्तेत पार्थिवः। एतदिच्छाम्यहं श्रोतुं सर्व्वमेव यथाविधि ॥ ४ ॥ विषमस्थं हि राजानं शत्रवः परिपन्थिनः। बहवोऽप्येकमुद्धर्त्तुं यतन्ते पूर्व्वतापिताः ॥ ५ ॥ सर्व्वत्र प्रार्थ्यमानेन दुर्व्वलेन महाबलैः। एकेनैवासहायेन शक्यं स्थातुं भवेत् कथम् ॥ ६ ॥ कथं मित्रमरिञ्चापि विन्दते भरतर्षभ। चेष्टितव्यं कथञ्चात्र शत्रोर्मित्रस्य चान्तरे ॥ ७ ॥ प्रज्ञातलक्षणे मित्रे तथैवामित्रतां गते। कथन्तु पुरुषः कुर्य्यात् कृत्वा किम्वा सुखी भवेत् ॥ ८ ॥ विग्रहं केन वा कुर्य्यात् सन्धिम्वा केन योजयेत्। कथम्वा शत्रुमध्यस्थो वर्त्तेत बलवानपि ॥ ९ ॥ एतद्वै सर्व्वकृत्यानां परं कृत्यं परन्तप। नैतस्य कश्चिद्वक्तास्ति श्रोता वापि सुदुर्लभः ॥ १० ॥ ऋते शान्तनवाद्भीष्मात् सत्यसन्धाज्जितेन्द्रियात्। तदन्विष्य महाभाग सर्व्वमेतद्ब्रवीहि मे ॥ ११ ॥

भीष्म उवाच। त्वद्युक्तोऽयमनुप्रश्नो युधिष्ठिर सुखोदयः। शृणु मे पुत्र कार्त्स्न्येन गुह्यमापत्सु भारत ॥ १२ ॥ अमित्रो मित्रतां याति मित्रञ्चापि प्रदुष्यति। सामर्थ्ययोगात् कार्य्याणामनित्या वै सदा गतिः ॥ १३ ॥ तस्माद्विश्वसितव्यञ्च विग्रहञ्च समाचरेत्। देशं कालञ्च विज्ञाय कार्य्याकार्य्यविनिश्चयी ॥ १४ ॥ सन्धातव्यं बुधैर्नित्यं व्यवस्य च हितार्थिभिः। अमित्रैरपि सन्धेयं प्राणा रक्षा हि भारत ॥ १५ ॥ यो ह्यमित्रैर्नरो नित्यं न सन्दध्यादपण्डितः। न सोऽर्थं प्राप्नुयात् किञ्चित् फलान्यपि च भारत ॥ १६ ॥ यस्त्वमित्रेण सन्दध्यान्मित्रेण च विरुध्यते। अर्थ-

युक्तिं समालोक्य स महद्विन्दते फलम् ॥ १७ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। मार्ज्जारस्य च सम्वादं न्यग्रोधे मूषिकस्य च ॥ १८ ॥ वने महति कस्मिंश्चिन्न्यग्रोधः सुमहानभूत्। लताजालपरिच्छन्नो नानाद्विजगणान्वितः ॥ १९ ॥ स्कन्धवान्मेघसङ्काशः शीतच्छायो मनोरमः। अरण्यमभितो जातस्तत्सर्व्यालमृगाकुलः ॥ २० ॥ तस्य मूलं समाश्रित्य कृत्वा शतमुखं बिलम्। वसति स्म महाप्राज्ञः पलितो नाम मूषिकः ॥ २१ ॥ शाखान्तस्य समाश्रित्य वसति स्म सुखं पुरा। लोमशो नाम मार्ज्जारः पक्षिसङ्घातखादकः ॥ २२ ॥ तत्र चागत्य चाण्डालो ह्यरण्ये कृतकेतनः। प्रयोजयति चोन्माथं नित्यमस्तङ्गते रवौ ॥ २३ ॥ तत्र स्नायुमयान् पाशान् यथावत् संविधाय सः। गृहं गत्वा सुखं शेते प्रभातामेति शर्व्वरीम् ॥ २४ ॥ तत्र स्म नित्यं वध्यन्ते नक्तं बहुविधा मृगाः। कदाचित्तत्रमार्ज्जारस्त्वप्रमत्तोऽप्यवध्यत ॥ २५ ॥ तस्मिन् बद्धे महाप्राज्ञ शत्रौ नित्याततायिनि। तं कालं पलितो ज्ञात्वा प्रचचार सुनिर्भयः ॥ २६ ॥ तेनानुचरता तस्मिन् वने विश्वस्तचारिणा। भक्ष्यं मृगयमाणेन चिराद्दृष्टन्तदामिषम् ॥ २७ ॥ स तमुन्माथमारुह्य तदामिषमभक्षयत्। तस्योपरि सपत्नस्य बद्धस्य मनसा हसन् ॥ २८ ॥ आमिषे तु प्रसक्तः स कदाचिदवलोकयन्। अपश्यदपरं घोरमात्मनः शत्रुमागतम् ॥ २९ ॥ शरप्रसूनसङ्काशं महीवीवरशायिनम्। नकुलं हरितं नाम चपलं ताम्रलोचनम् ॥३०॥ तेन मूषिकगन्धेन त्वरमाणमुपागतम्। भक्षार्थं संलिहानन्तं भूमावूर्द्ध्वमुखं स्थितम् ॥ ३१ ॥ शाखागतमरिञ्चान्यमपश्यत् कोटरालयम्। उलूकं चन्द्रकं नाम तीक्ष्णतुण्डं क्षपाचरम् ॥ ३२ ॥ गतस्य विषयं तत्र नकुलोलूकयोस्तदा। अथास्यासीदियं चिन्ता तत् प्राप्य सुमहद्भयम् ॥ ३३ ॥ आपद्यस्यां सुकष्टायां मरणे प्रत्युपस्थिते। समन्तात् भये उत्पन्ने कथं कार्य्यं हितैषिणा ॥ ३४ ॥

स तथा सर्वतो रुद्धः सर्वत्र भयदर्शनः । अभवद्भयसन्तप्तश्चक्रे च परमां मतिम् ॥ ३५ ॥ आपद्विनाशभूयिष्ठं शतैः कार्यं हि जीवितम् । समन्तात् संशयात् सैषा तस्मादापदुःस्थिता ॥ ३६ ॥ गतं मां सहसा भूमिं नकुलो भक्षयिष्यति । उलूकश्चेह तिष्ठन्तं मार्जारः पाशसंक्षयात् ॥ ३७ ॥ न त्वेवास्मद्विधः प्राज्ञः सम्मोहं गन्तुमर्हति । करिष्ये जीविते यत्नं यावद्युक्त्या मतिग्रहात् ॥३८॥ न हि बुद्ध्यान्वितः प्राज्ञो नीतिशास्त्रविशारदः । निमज्जत्यापदं प्राप्य महतीं दारुणामपि ॥ ३९ ॥ न त्वन्यामिह मार्जाराद्गतिं पश्यामि साम्प्रतम् । विषमस्थो ह्ययं शत्रुः कृत्यञ्चास्य महन्मया ॥ ४० ॥ जीवितार्थी कथन्त्वद्य शत्रुभिः प्रार्थितस्त्रिभिः । तस्मादेनमहं शत्रुं मार्जारं संश्रयामि वै ॥ ४१ ॥ नीतिशास्त्रं समाश्रित्य हितमस्योपवर्णये । येनेमं शत्रुसङ्घातं मतिपूर्वेण वञ्चये ॥४२॥ अयमत्यन्तशत्रुर्मे वैषम्यं परमं गतः । मूढो ग्राहयितुं स्वार्थं सङ्गत्या यदि शक्यते ॥ ४३ ॥ कदाचिद्व्यसनं प्राप्य सन्धिं कुर्य्यान्मया सह । बलिनासन्निकृष्टस्य शत्रोरपि परिग्रहः । कार्य्यइत्याहुराचार्य्या विषमे जीवितार्थिना ॥४४॥ श्रेयान् हि पण्डितः शत्रुर्न च मित्रमपण्डितः । मम त्वमित्रे मार्ज्जारे जीवितं सम्प्रतिष्ठितम् ॥ ४५ ॥ हन्तास्मै संप्रवक्ष्यामि हेतुमात्मविमोक्षणे । अपीदानीमयं शत्रुः सङ्गत्या पण्डितो भवेत् । एवं विचिन्तयामास मूषिकः शत्रुचेष्टितः ॥ ४६ ॥ ततोऽर्थगतितत्त्वज्ञः सन्धिविग्रहकालवित् । सान्त्वपूर्वमिदं वाक्यं मार्ज्जारं मूषिकोऽब्रवीत् ॥४७॥ सौहृदेनाभिभाषे त्वां कच्चित् मार्ज्जार जीवसि । जीवितं हि तवेच्छामि श्रेयः साधारणं हि नौ ॥ ४८ ॥ न ते सौम्य भयं कार्य्यं जीविष्यसि यथासुखम् । अहं त्वामुद्धरिष्यामि यदि मां न जिघांससि ॥ ४९ ॥ अस्ति कश्चिदुपायोऽत्र पुष्कलः प्रतिभाति मे । येन शक्यस्त्वया मोक्षः प्राप्तुं श्रेयस्तथा मया ॥ ५० ॥ मयाप्युपायो

दृष्टोऽयं विचार्य्य मतिमात्मनः । आत्मार्थञ्च त्वदर्थञ्च श्रेयः साधारणं हि नौ ॥ ५१ ॥ इदं हि नकुलोलूकं पापबुद्ध्याभिसंस्थितम् । न धर्षयति मार्ज्जार तेन मे स्वस्ति साम्प्रतम् ॥ ५२ ॥ कूजंश्चपलनेत्रोऽयं कौशिको मां निरीक्षते । नगशाखाग्रगः पापस्तस्याहं भृशमुद्विजे ॥ ५३ ॥ सतां साप्तपदं मैत्रं स सखा मेऽसि पण्डितः । सांवास्यकं करिष्यामि नास्ति ते भयमद्य वै ॥ ५४ ॥ न हि शक्तोऽसि मार्ज्जार पाशं छेत्तुं मया विना । अहं छेत्स्यामि पाशांस्ते यदि मां त्वं न हिंससि ॥ ५५ ॥ त्वमाश्रितो द्रुमस्याग्रं मूलन्त्वहमुपाश्रितः । चिरोषितावुभावावां वृक्षेऽस्मिन् विदितञ्च ते ॥५६॥ यस्मिन्नाश्वासिते कश्चित् यश्च नाश्वसिति क्वचित् । न तौ धीराः प्रशंसन्ति नित्यमुद्विग्नमानसौ ॥ ५७ ॥ तस्माद्विवर्द्धतां प्रीतिर्नित्यं सङ्गतमस्तु नौ । कालातीतमिहार्थन्तु न प्रशंसन्ति पण्डिताः ॥५८॥ अर्थयुक्तमिमां तत्र यथाभूतां निशामय । तव जीवितमिच्छामि त्वं ममेच्छसि जीवितम् ॥ ५९ ॥ कश्चित्तरति काष्ठेन सुगम्भीरां महानदीम् । स तारयति तत्काष्ठं स च काष्ठेन तार्य्यते ॥ ६० ॥ ईदृशो नौ समायोगो भविष्यति सुविस्तर । अहं त्वां तारयिष्यामि माञ्च त्वं तारयिष्यसि ॥ ६१ ॥ एवमुक्त्वा तु पलितस्तमर्थमुभयोर्हितम् । हेतुमद्ग्रहणीयञ्च कालापेक्षी न्यवेक्षत ॥ ६२ ॥ अथ सुव्याहृतं श्रुत्वा तस्य शत्रुर्विचक्षणः । हेतुमद्ग्रहणीयार्थं मार्ज्जारो वाक्यमब्रवीत् ॥ ६३ ॥ बुद्धिमान् वाक्यसम्पन्नस्तद्वाक्यमनुवर्णयन् । स्वामवस्थां समीक्ष्याथ साम्नैव प्रत्यपूजयत् ॥ ६४ ॥ ततस्तीक्ष्णाग्रदशनो मणिवैदूर्य्यलोचनः । मूषिकं मन्दमुद्वीक्ष्य मार्ज्जारो लोमशोऽब्रवीत् ॥ ६५ ॥ नन्दामि सौम्य भद्रन्ते यो मां जीवितुमिच्छसि । श्रेयश्च यदि जानीषे क्रियतां मा विचारय ॥ ६६ ॥ अहं हि भृशमापन्नस्त्वमापन्नतरो मम । द्वयोरापन्नयोः सन्धिः क्रियतां मा चिराय च ॥ ६७ ॥ विधास्ये प्राप्तकालं यत् कार्य्य-

सिद्धिकरं विभो। मयि कृच्छ्राद्विनिर्मुक्ते न विनङ्क्ष्यति ते कृतम् ॥ ६८ ॥ न्यस्तमानोऽस्मि भक्तोऽस्मि शिष्यस्त्वद्धितकृत्तथा। निदेशवशवर्त्ती च भवन्तं शरणं गतः ॥ ६९ ॥ इत्येवमुक्तः पलितो मार्ज्जारं वशमागतम्। वाक्यं हितमुवाचेदमभिनीतार्थमर्थवत् ॥ ७० ॥ उदारं यद्भवानाह नैतच्चित्रं भवद्विधे। विहितो यस्तु मार्गो मे हितार्थं शृणु तं मम ॥ ७१ ॥ अहं त्वानुप्रवेक्ष्यामि नकुलान्मे महद्भयम्। त्रायस्व भो मा वधीस्त्वं शक्तोऽस्मि तव रक्षणे ॥ ७२ ॥ उलूकाच्चैव मां रक्ष क्षुद्रः प्रार्थयते हि माम्। अहं छेत्स्यामि ते पाशान् सखे सत्येन ते शपे ॥ ७३ ॥ तद्वचः सङ्गतं श्रुत्वा लोमशो युक्तमर्थवत्। हर्षादुद्वीक्ष्य पलितं स्वागतेनाभ्यपूजयत् ॥७४॥ तं सम्पूज्याथ पलितं मार्ज्जारः सौहृदे स्थितः। स विचिन्त्याब्रवीद्धीरः प्रीतस्त्वरित एव च ॥ ७५ ॥ शीघ्रमागच्छ भद्रन्ते त्वं मे प्राणसमः सखा। तव प्राज्ञ प्रसादाद्धि प्रायः प्राप्स्यामि जीवितम् ॥ ७६ ॥ यद्यदेवं गते नाथ शक्यं कर्त्तुं मया तव। तदाज्ञापय कर्त्तास्मि सन्धिरेवास्तु नौ सखे ॥ ७७ ॥ अस्मात्तु सङ्कटान्मुक्तः समित्रगणबान्धवः। सर्वकार्य्याणि कर्त्ताहं प्रियाणि च हितानि च ॥ ७८ ॥ मुक्तश्च व्यसनादस्मात् सौम्याहमपि नाम ते। प्रीतिमुत्पादयेयञ्च प्रतिकर्त्तुश्च सत्क्रियाम् ॥ ७९ ॥ प्रत्युपकुर्वन् बह्वपि न भाति पूर्वोपकारिणा तुल्यः। एकः करोति हि कृते निष्कारणमेव कुरुतेऽन्यः ॥ ८० ॥

भीष्म उवाच। ग्राहयित्वा तु तं स्वार्थं मार्ज्जारं मूषिकस्तथा। प्रविवेश तु विस्रब्ध क्रोड़मस्य कृतागसः ॥ ८१ ॥ एवमाश्वासितो विद्वान् मार्ज्जारेण स मूषिकः। मार्ज्जारोरसि विस्रब्धः सुष्वाप पितृमातृवत् ॥ ८२ ॥ लीनन्तु तस्य गात्रेषु मार्ज्जारस्य च मूषिकम्। दृष्ट्वा तौ नकुलोलूकौ निराशौ प्रत्यपद्यताम् ॥ ८३ ॥ तथैव तौ सुसन्त्रस्तौ दृढ़ं हरितचन्द्रकौ। दृष्ट्वा तयोः परां प्रीतिं

विस्मयं परमं गतौ ॥८४॥ बलिनौ मतिमन्तौ च सुवृत्तौ चाप्युपाश्रितौ । अशक्तौ तु नयात्तस्मात् संप्रधर्षयितुं बलात् ॥ ८५ ॥ कार्य्यार्थकृतसन्धी तौ दृष्ट्वा मार्ज्जारमूषिकौ । उलूकनकुलौ तूर्णं जग्मतुः स्वं स्वमालयम् ॥ ८६ ॥ ततः स तस्य गात्रेषु पलितो देशकालवित् । चिच्छेद पाशान्नृपते कालापेक्षी शनैः शनैः ॥८७॥ अथ बन्धपरिक्लिष्टो मार्ज्जारो वीक्ष्य मूषिकम् । छिन्दन्तं वै तदा पाशानत्वरन्तं त्वरान्वितः ॥ ८८ ॥ तमत्वरन्तं पलितं पाशानां छेदने तथा । सञ्चोदयितुमारेभे मार्ज्जारो मूषिकन्तदा ॥ ८९ ॥ किं सौम्य नातित्वरसे किं कृतार्थोऽवमन्यसे । छिन्धि पाशानमित्रघ्न पुरा श्वपच एति च ॥ ९० ॥ इत्युक्तस्त्वरता तेन मतिमान् पलितोऽब्रवीत् । मार्ज्जारमकृतप्रज्ञं पथ्यमात्महितं वचः ॥ ९१ ॥ तूष्णीं भव न ते सौम्य त्वरा कार्य्या न संभ्रमः । वयमेवात्र कालज्ञा न कालः परिहास्यते ॥ ९२ ॥ अकाले कृत्यमारब्धं कर्त्तुं नार्थाय कल्पते । तदेव काल आरब्धं महतेऽर्थाय कल्पते ॥ ९३ ॥ अकाले विप्रमुक्तात्मे त्वत्त एव भयं भवेत् । तस्मात् कालं प्रतीक्षस्व किमिति त्वरसे सखे ॥ ९४ ॥ यदा पश्यामि चाण्डालमायान्तं शस्त्रपाणिनम् । ततश्छेत्स्यामि ते पाशान् प्राप्ते साधारणे भये ॥ ९५ ॥ तस्मिन् काले प्रमुक्तस्त्वं तरुमेवाधिरोक्ष्यसे । न हि ते जीवितादन्यत् किञ्चित् कृत्यं भविष्यति ॥ ९६ ॥ ततो भवत्यपक्रान्ते त्रस्ते भीते च लोमश । अहं बिलं प्रवेक्ष्यामि भवान् शाखां भजिष्यति ॥ ९७ ॥ एवमुक्तस्तु मार्ज्जारो मूषिकेनात्मनो हितम् । वचनं वाक्यतत्त्वज्ञो जीवितार्थी महामतिः ॥ ९८ ॥ अथात्मकृत्यं त्वरितः सम्यक् प्रस्तुतमाचरन् । उवाच लोमशो वाक्यं मूषिकं चिरकारिणम् ॥ ९९ ॥ न ह्येव मित्रकार्य्याणि प्रीत्या कुर्वन्ति साधवः । यथा त्वं मोचितः कृच्छ्रात् त्वरमाणेन वै मया ॥१००॥ तथा हि त्वरमानेन त्वया कार्य्यं हितं मम । यत्नं कुरु महाप्राज्ञ

यथा स्वस्थावयोर्भवेत् ॥ १०१ ॥ अथ वा पूर्ववैरं त्वं स्मरन् कालं जिहीर्षसि । पश्य दुष्कृतमर्मस्त्वं व्यक्तमायुःक्षयं तव ॥ १०२ ॥ यदि किञ्चिन्मयाज्ञानात् पुरस्ताद्दुष्कृतं कृतम् । न तन्मनसि कर्त्तव्यं क्षामये त्वां प्रसीद मे ॥ १०३ ॥ तमेवं वादिनं प्राज्ञ' शास्त्रविद्बुद्धिसम्मतः । उपाचेदं वचः श्रेष्ठ' मार्ज्जारं मूषिकस्तदा ॥ १०४ ॥ श्रुतं मे तव मार्ज्जार स्वमर्थं परिगृह्णतः । ममापि त्वं विजानीहि स्वमर्थं परिगृह्णतः ॥ १०५ ॥ यन्मित्रं भीतवत् साध्य' यन्मित्रं भयसंहितम् । सुरक्षितव्यं तत्कार्य्यं पाणिः सर्पमुखादिव ॥ १०६ ॥ कृत्वा बलवता सन्धिमात्मानं यो न रक्षति । अपथ्यमिव तद्भुक्तं तस्य नार्थाय कल्पते ॥ १०७ ॥ न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचित् सुहृत् । अर्थतस्तु निबध्यन्ते मित्राणि रिपवस्तथा ॥१०८॥ अर्थैरर्था निबध्यन्ते गजैर्वनगजा इव । न हि कश्चित् कृते कार्य्ये कर्त्तारं समवेक्षते । तस्मात् सर्वाणि कार्य्याणि सावशेषाणि कारयेत् ॥ १०९ ॥ तस्मिन् कालेऽपि च भवान् दिवाकीर्त्तिभयार्द्दितः । मम न ग्रहणे शक्तः पलायनपरायणः ॥ ११० ॥ छिन्नन्तु तन्तुबाहुल्यं तन्तुरेकोऽवशेषितः । छेत्स्याम्यहं तमप्याशु निर्वृतो भव लोमश ॥ १११ ॥ तयोः संवदतोरेवं तथैवापन्नयोर्द्वयोः । क्षयं जगाम सा रात्रिर्लोमशन्त्वविशद्भयम् ॥ ११२ ॥ ततः प्रभातसमये विकृतः कृष्णपिङ्गलः । स्थूलस्फिग्विकृतो रूक्षः श्वयूथपरिवारितः ॥ ११३ ॥ लम्बकर्णो महावक्त्रो मलिनो घोरदर्शनः । परिघो नाम चण्डालः शस्त्रपाणिरदृश्यत ॥ ११४ ॥ तं दृष्ट्वा यमदूताभं मार्ज्जारस्त्रस्तचेतनः । उवाच पलितं भीतः किमिदानीं करिष्यसि ॥ ११५ ॥ अथ तावपि सन्त्रस्तौ तं दृष्ट्वा घोरसंकुलम् ॥ ११६ ॥ क्षणेन नकुलोलूकौ नैराश्यमुपजग्मतुः । बलिनौ मतिमन्तौ च सङ्घाते चाप्युपागतौ ॥ ११७ ॥ अशक्तौ सुनयात्तस्मात्

संप्रधर्षयितुं बलात् । कार्य्यार्थं कृतसन्धानो दृष्ट्वा मार्ज्जारमूषिकौ ॥ ११८ ॥ उलूकनकुलौ तत्र जग्मतुः स्वं स्वमालयम् । तयश्चिच्छेद तं पाशं मार्ज्जारस्य स मूषिकः ॥ ११९ ॥ विप्रमुक्तोऽथ मार्ज्जारस्तमेवाभ्यपतद्द्रुमम् । स तस्मात् सम्भ्रमावर्त्तान्मुक्तो घोरेण शत्रुणा । बिलं विवेश पलितः शाखां लेभे च लोमशः ॥ १२० ॥ उन्माथमप्यथादाय चाण्डालो वीक्ष्य सर्वशः । विहताशः क्षणेनाशु तस्माद्देशादपाक्रमत् । जगाम च स्वभवनं चाण्डालो भरतर्षभ ॥ १२१ ॥ ततस्तस्माद्भयान्मुक्तो दुर्लभं प्राप्य जीवितम् । बिलस्थं पादपाग्रस्थः पलितं लोमशोऽब्रवीत् ॥ १२२ ॥ अकृत्वा सम्विदं काञ्चित् सहसा समवप्लुतः । कृतज्ञं कृतकर्म्माणं कच्चिन्मां नाभिशङ्कसे ॥१२३॥ गत्वा च मम विश्वासं दत्त्वा च मम जीवितम् । मित्रोपभोगसमये किं मां त्वं नोपसर्पसि ॥ १२४ ॥ कृत्वा हि पूर्वं मित्राणि यः पश्चान्नानुतिष्ठति । न स मित्राणि लभते कृच्छ्रास्वापत्सु दुर्म्मतिः ॥ १२५ ॥ सत्कृतोऽहं त्वया मित्र सामर्थ्यादात्मनः सखे । स मां मित्रत्वमापन्नमुपभोक्तुं त्वमर्हसि ॥ १२६ ॥ यानि मे सन्ति मित्राणि ये च सम्बन्धि बान्धवाः । सर्वे त्वां पूजयिष्यन्ति शिष्या गुरुमिव प्रियम् ॥ १२७ ॥ अहञ्च पूजयिष्ये त्वां समित्रगणबान्धवम् । जीवितस्य प्रदातारं कृतज्ञः को न पूजयेत् ॥ १२८ ॥ ईश्वरो मे भवानस्तु स्वशरीरगृहस्य च । अर्थानाञ्चैव सर्वेषामनुशास्ता च मे भव ॥ १२९ ॥ अमात्यो हि भव प्राज्ञ पितेवेह प्रशाधि माम् । न तेऽस्ति भयमस्मत्तो जीवितेनात्मनः शपे ॥ १३० ॥ बुद्ध्या त्वमुशनाः साक्षात् बलेनाधिकृता वयम् । त्वं मन्त्रबलयुक्तो हि दत्त्वा जीवितमद्य मे ॥ १३१ ॥ एवमुक्तः परं सान्त्वं मार्ज्जारेण स मूषिकः । उवाच परमार्थज्ञः श्लक्ष्णमात्महितं वचः ॥ १३१ ॥ यद्भवानाह तत् सर्वं मया ते लोमश श्रुतम् । ममापि तावद्ब्रुवतः शृणु यत् प्रतिभाति मे ॥ १३३ ॥

वेदितव्यानि मित्राणि विज्ञेयाश्चापि शत्रवः । एतत् सुसूक्ष्मं लोकेऽस्मिन् दृश्यते प्राज्ञसम्मतम् ॥ १३४ ॥ शत्रुरूपा हि सुहृदो मित्ररूपाश्च शत्रवः । सन्धितास्ते न बुध्यन्ते कामक्रोधवशङ्गताः ॥ १३५ ॥ नास्ति जातु रिपुर्नाम मित्रं नाम न विद्यते । सामर्थ्य-योगाज्जायन्ते मित्राणि रिपवस्तथा ॥ १३६ ॥ यो यस्मिन् जीवति स्वार्थं पश्येत् पीड़ामजीवति । स तस्य मित्रं तावत् स्यात् यावन्न स्याद्विपर्य्ययः ॥ १३७ ॥ नास्ति मैत्री स्थिरा नाम न च ध्रुवमसौ-हृदम् । अर्थयुक्त्यानुजायन्ते मित्राणि रिपवस्तथा ॥१३८॥ मित्रञ्च शत्रुतामेति कस्मिंश्चित् कालपर्य्यये । शत्रुश्च मित्रतामेति स्वार्थो हि बलवत्तरः ॥ १३९ ॥ यो विश्वसिति मित्रेषु न चाश्वसिति शत्रुषु । अर्थयुक्तिमविज्ञाय चलितं तस्य जीवितम् ॥ १४० ॥ अर्थयुक्तिमविज्ञाय यः प्रीतौ कुरुते मनः । मित्रे वा यदि वा शत्रौ तस्यापि चलिता मतिः ॥ १४१ ॥ न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् । विश्वासाद्भयमुत्पन्नमपि मूलानि कृन्तति ॥ १४२ ॥ अर्थयुक्त्या हि जायन्ते पिता माता सुतस्तथा । मातुला भागिनेयाश्च तथा सम्बन्धिबान्धवाः ॥ १४३ ॥ पुत्रं हि माता-पितरौ त्यजतः पतितं प्रियम् । लोको रक्षति चात्मानं पश्य स्वार्थस्य सारताम् ॥ १४४ ॥ सामान्या निष्कृतिः प्राज्ञ यो मोक्षात् प्रत्यनन्तरम् । कृत्यं मृगयते शत्रुसुखोपायमसंशयम् ॥ १४५ ॥ अस्मिन्निलय एव त्वं न्यग्रोधादवतारितः । पूर्वं निविष्टमुत्साथः चपलत्वान्न बुद्धवान् ॥ १४६ ॥ आत्मनश्चपलो नास्ति कुतोऽन्येषां भविष्यति । तस्मात् सर्वाणि कार्य्याणि चपलो हन्त्यसंशयम् ॥१४७॥ ब्रवीषि मधुरं यच्च प्रियो मेऽद्य भवानिति । तन्मित्र कारणं सर्वं विस्तरेणापि मे शृणु ॥ १४८ ॥ कारणात् प्रियतामेति द्वेष्यो भवति कारणात् । अर्थार्थी जीवलोकोऽयं न कश्चित् कस्यचित् प्रियः ॥ १४९ ॥ सख्यं सोदर्य्ययोर्भ्रात्रोर्दम्पत्योर्वा परस्परम् । कस्यचि-

न्नाभिजानामि प्रीतिं निष्कारणामिह ॥ १५० ॥ यद्यपि भ्रातरः क्रुद्धा भार्य्या वा कारणान्तरे । स्वभावतस्ते प्रीयन्ते नेतरः प्रीयते जनः ॥ १५१ ॥ प्रियो भवति दानेन प्रियवादेन चापरः । मन्त्रहोमजपैरन्यः कार्य्यार्थं प्रीयते जनः ॥ १५२ ॥ उत्पन्ना कारणे प्रीतिरासीन्नौ कारणान्तरे । प्रध्वस्ते कारणस्थाने सा प्रीतिर्विनिवर्त्तते ॥ १५३ ॥ किन्नु तत् कारणं मन्ये येनाहं भवतः प्रियः । अन्यत्राभ्यवहारार्थं तत्रापि च बुधा वयम् ॥ १४५ ॥ कालो हेतुं विकुरुते स्वार्थस्तमनुवर्त्तते । स्वार्थं प्राज्ञोऽभिजानाति प्राज्ञे लोकोऽनुवर्त्तते । न त्वीदृशं त्वया वाच्यं विदुषि स्वार्थपण्डिते ॥ १५५ ॥ अकाले हि समर्थस्य स्नेहहेतुरयं तव । तस्मादहञ्चले स्वार्थात् सुस्थिरः सन्धिविग्रहे ॥ १५६ ॥ अभ्राणामिव रूपाणि विकुर्वन्ति क्षणे क्षणे । अद्यैव हि रिपुर्भूत्वा पुनरद्यैव मे सुहृत् । पुनश्च रिपुरद्यैव युक्तीनां पश्य चापलम् ॥ १५७॥ आसीन्मैत्री तु तावन्नौ यावद्धेतुरभूत् पुरा । सा गता सह तेनैव कालयुक्तेन हेतुना ॥ १५८ ॥ त्वं हि मे जातितः शत्रुः सामर्थ्यान्मित्रतां गतः । तत् कृत्यमभिनिर्वृत्तं प्रकृतिः शत्रुतां गता ॥ १५९ ॥ सोऽहमेवं प्रणीतानि ज्ञात्वा शास्त्राणि तत्त्वतः । प्रविशेयं कथं पाशं त्वत् कृते तद्वदस्व मे ॥ १६०॥ त्वद्वीर्य्येण प्रमुक्तोऽहं मद्वीर्य्येण तथा भवान् । अन्योऽन्यानुग्रहे वृत्ते नास्ति भूयः समागमः ॥ १६१ ॥ त्वं हि सौम्य कृतार्थोऽद्य निवृत्तार्थास्तथा वयम् । न तेऽस्त्यद्य मया कृत्यं किञ्चिदन्यत्र भक्षणात् ॥ १६२ ॥ अहमन्नं भवान् भोक्ता दुर्बलोऽहं भवान् बली । नावयोर्विद्यते सन्धिर्वियुक्ते विषमे बले ॥ १६३ ॥ स मन्येऽहं तव प्रज्ञां यन्मोक्षात् प्रत्यनन्तरम् । भक्ष्य प्रशंससे नूनं सुखोपायेन कर्म्मणा ॥ १६४ ॥ भक्ष्यार्थं ह्यववद्धस्त्वं स मुक्तः पीड़ितः क्षुधा । शास्त्रजां मतिमास्थाय नूनं भक्षयिताद्य माम् ॥ १६५ ॥ जानामि क्षुधितन्तु त्वामाहारसमयश्च ते । स त्वं

मामभिसन्धाय भक्ष्यं मृगयसे पुनः ॥ १६६ ॥ त्वञ्चापि पुत्त्रदारस्थो यत् सन्धिं सृजसे मयि। शुश्रूषां यतसे कर्त्तुं सखे मम न तत् क्षमम् ॥ १६७ ॥ त्वया मां सहितं दृष्ट्वा प्रिया भार्य्या सुताश्च ते। कस्मात्ते मां न खादेयुर्हृष्टाः प्रणयिनस्त्वयि ॥ १६८ ॥ नाहं त्वया समेष्यामि वृत्तो हेतुः समागमे। शिवं ध्यायस्व मे स्वस्थः सुकृतं स्मरसे यदि ॥ ६९ ॥ शत्रोरन्नार्थिभूतस्य क्लिष्टस्य क्षुधितस्य च। भक्ष्यं मृगयमाणस्य कः प्राज्ञो विषयं व्रजेत् ॥ १७० ॥ स्वस्ति तेऽस्तु गमिष्यामि दूरादपि तवोद्विजे। नाहं त्वया समेष्यामि निवृत्तो भव लोमश ॥ १७१ ॥ यदि त्वं सुकृतं वेत्सि तत् सख्यमनुसारय। विश्वस्त्वं वाप्रमत्तं वा एतदेव कृतं भवेत् ॥ १७२ ॥ बलवत् सन्निकर्षो हि न कदाचित् प्रशस्यते। प्रशान्तादपि मे पापात् भेतव्यं बलिनः सदा ॥ १७३ ॥ यदि स्वार्थं न ते कार्य्यं ब्रूहि किं करवाणि ते। कामं सर्वं प्रदास्यामि न त्वात्मानं कदाचन ॥ १७४ ॥ आत्मार्थे सन्ततिस्त्याज्या राज्यं रत्नं धनानि च। अपि सर्वस्वमुत्सृज्य रक्षेदात्मानमात्मना ॥ १७५ ॥ ऐश्वर्य्यधनरत्नानां प्राप्यं मित्रे निवर्त्तताम्। दृष्टा हि पुनरावृत्तिर्जीवितामिति नः श्रुतम् ॥ १७६ ॥ न त्वात्मनः सम्प्रदानं धनरत्नवदिष्यते। आत्मा हि सर्वदा रक्ष्यो दारैरपि धनैरपि ॥ १७७ ॥ आत्मरक्षणतन्त्राणां सुपरीक्षितकारिणाम्। आपदो नोपपद्यन्ते पुरुषाणां स्वदोषजाः ॥ १७८ ॥ शत्रुं सम्यग्विजानन्ति दुर्बला ये बलीयसम्। न तेषां चाल्यते बुद्धिः शास्त्रार्थकृतनिश्चया ॥ १७९ ॥ इत्यभिव्यक्तमेवं स पलितेनाभिभर्त्सितः। मार्ज्जारो व्रीड़ितो भूत्वा मूषिकं वाक्यमब्रवीत् ॥ १८० ॥

लोमश उवाच। सत्यं शपे त्वयाहं वै मित्रद्रोहो विगर्हितः। तन्मन्येऽहं तव प्रज्ञां यस्त्वं मम हिते रतः ॥ १८१ ॥ उक्तवानर्थतत्त्वेन मया सम्भिन्नदर्शनम्। न तु मामन्यथा साधो त्वं ग्रहीतु-

मिहार्हसि ॥ १८२ ॥ प्राणप्रदानजं त्वत्तो मयि सौहृदमागतम्। धर्मज्ञोऽस्मि गुणज्ञोऽस्मि कृतज्ञोऽस्मि विशेषतः॥ १८३ ॥ मित्रेषु वत्सलश्चास्मि त्वद्भक्तश्च विशेषतः। तस्मादेवं पुनः साधो मया चरितुमर्हसि॥ १८४ ॥ त्वया हि वाच्यमानोऽहं जह्यां प्राणान् सवान्धवः। विश्रम्भो हि बुधैर्दृष्टो मद्विधेषु मनस्विषु। यदेत-द्धर्मतत्त्वज्ञ न त्वं शङ्कितुमर्हसि ॥ १८५ ॥ इति संस्तूयमानोऽपि मार्ज्जारेण स मूषिकः। मनसा भावगम्भीरं मार्ज्जारं वाक्यमब्रवीत्॥ १८६ ॥ साधुर्भवान् श्रुतार्थोऽस्मि प्रीये च न च विश्वसे। संस्तवैर्वा धनौघैर्वा नाहं शक्यः पुनस्त्वया ॥ १८७ ॥ न ह्यमित्रे वशं यान्ति प्राज्ञा निष्कारणं सखे। अस्मिन्नर्थे च गाथे द्वे निबो-धोशनसा कृते॥ १८८ ॥ शत्रुसाधारणे कृत्ये कृत्वा सन्धिं बली-यसा। समाहितश्चरेद्युक्त्या कृतार्थश्च न विश्वसेत् ॥ १८९ ॥ न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्। नित्यं विश्वासयेदन्यान् परेषान्तु न विश्वसेत् ॥ १९० ॥ तस्मात् सर्वास्ववस्थासु रक्षे-ज्जीवितमात्मन। द्रव्याणि सन्ततिश्चैव सर्वं भवति जीवतः॥ १९१॥ संक्षेपो नीतिशास्त्राणामविश्वासः परो मतः! नृषु तस्मादविश्वास पुष्कलं हितमात्मनः॥ १९२॥ बध्यन्ते न ह्यविश्वस्ताः शत्रुभि-र्दुर्बला अपि। विश्वस्तास्तेषु बध्यन्ते बलवन्तोऽपि दुर्बलैः ॥१९२॥ त्वद्विधेभ्यो मता ह्यात्मा रक्ष्यो मार्ज्जार सर्वदा। रक्ष त्वमपि चात्मानं चाण्डालाज्जातिकिल्बिषात् ॥ १९४ ॥ स तस्य ब्रुवतस्त्वेवं सन्त्रासाज्जातसाध्वसः। शाखां हित्वा जवेनाशु मार्ज्जारः प्रययौ ततः ॥१९५॥ ततः शास्त्रार्थतत्त्वज्ञो बुद्धि सामर्थ्यमात्मनः। विश्राव्य पलितः प्राज्ञो विलमन्यज्जगाम ह ॥ १९६ ॥ एवं प्रज्ञावता बुद्ध्या दुर्बलेन महाबलाः। एकेन बहवोऽमित्राः पलितेनाभिसन्धिताः ॥ १९७ ॥ अरिणापि समर्थेन सन्धिं कुर्वीत पण्डितः। मूषिकश्च विड़ालश्च मुक्तावन्योऽन्यसंश्रयात् ॥ १९८ ॥ दृत्येष चत्रधर्मस्य

मया मार्गोऽनुदर्शितः । विस्तरेण महाराज संक्षेपमपि मे शृणु ॥ १९९ ॥ अन्याऽन्यकृतवैरौ तु चक्रतुः प्रीतिमुत्तमाम् । अन्योऽन्यमभिसन्धातुं सम्बभूव तयोर्मतिः ॥ २०० ॥ तत्र प्राज्ञोऽभिसन्धत्ते सम्यग्बुद्धिबलाश्रयात् । अभिसन्धीयते प्राज्ञः प्रमादादपि वा बुधैः ॥ २०१ ॥ तस्मादभीतवद्भीतो विश्वस्तवदविश्वसन् । न ह्यप्रमत्तश्चलति चलितो वा विनश्यति ॥ २०२ ॥ कालेन रिपुणा सन्धिः काले मित्रेण विग्रहः । कार्य्य इत्येव सन्धिज्ञाः प्राहुर्नित्यं नराधिप ॥ २०३ ॥ एतज्ज्ञात्वा महाराज शास्त्रार्थमभिगम्य च । अभियुक्तोऽप्रमत्तश्च प्राग्भयाद्भीतवच्चरेत् ॥ २०४ ॥ भीतवत् सन्निधिः कार्य्यः प्रतिसन्धिस्तथैव च । भयादुत्पद्यते बुद्धिरप्रमत्ताभियोगतः ॥ २०५ ॥ न भयं विद्यते राजन् भीतस्यानागते भये । अभीतस्य च विस्रम्भात् सुमहज्जायते भयम् ॥ २०६ ॥ न भीरुरिति चात्यर्थं मन्त्रो देयः कथञ्चन । अविज्ञानादविज्ञातो गच्छेदास्सदर्शिषु ॥ २०७ ॥ तस्मादभीतवद्भीतो विश्वस्तवदविश्वसन् । कार्य्याणां गूढ़तां बुद्ध्वा नानृतं किञ्चिदाचरेत् ॥ २०८ ॥ एवमेतन्मया प्रोक्तमितिहासं युधिष्ठिर । श्रुत्वा त्वं सुहृदां मध्ये यथावत् समुपाचर ॥ २०९ ॥ उपलभ्य मतिञ्चाग्र्यामरिमित्रान्तरन्तथा । सन्धिविग्रहकाले च मोक्षोपायस्तथापदि ॥ २१० ॥ शत्रुसाधारणे कृत्ये कृत्वा सन्धिं बलीयसा । समागमे चरेद्युक्त्या कृतार्थो न च विश्वसेत् ॥ २११ ॥ अविरुद्धां त्रिवर्गेण नीतिमेतां महीपते । अभ्युत्तिष्ठ श्रुतादस्माद्भूयः संरक्षयन् प्रजाः ॥२१२ ॥ ब्राह्मणैश्चापि ते सार्द्धं यात्रा भवतु पाण्डव । ब्राह्मणा वै परं श्रेयो दिवि चेह च भारत ॥ २१३ ॥ एते धर्म्मस्य वेत्तारः कृतज्ञाः सततं प्रभो पूजिताः शुभकर्त्तारः पूजयेत्तान्नराधिप ॥ २१४ ॥ राज्यं श्रेयः परं राजन् यशः कीर्त्तिञ्च लप्स्यसे । कुलस्य सन्ततिञ्चैव यथान्यायं यथाक्रमम् ॥ २१५ ॥ द्वयोरिमं भारत सन्धिविग्रहं शुभा-

षितं बुद्धिविशेषकारकम् । यथा त्ववेच्य चितिपेन सर्वदा निषेवितव्यं नृप शत्रुमण्डलम् ॥ २१६ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि मार्ज्जारमूषिकसम्वादे अष्टत्रिंशत्यधिकशततोऽध्यायः ॥ १२८ ॥

---

युधिष्ठिर उवाच । उक्तो मन्त्रो महाबाहो विश्वासो नास्ति शत्रुषु । कथं हि राजा वर्त्तेत यदि सर्वत्र नाश्वसेत् ॥ १ ॥ विश्वासाद्धि परं राजन् राज्ञामुत्पद्यते भयम् । कथं हि नाश्वसन् राजा शत्रून् जयति पार्थिव ॥ २ ॥ एतन्मे संशयं छिन्धि मनो मे संप्रमुह्यति । अविश्वासकथामेतामुपश्रुत्य पितामह ॥ ३ ॥

भीष्म उवाच । शृणुष्व राजन् यद्वृत्तं ब्रह्मदत्तनिवेशने । पूजन्या सह सम्वादं ब्रह्मदत्तस्य भूपतेः ॥ ४ ॥ काम्पिल्ये ब्रह्मदत्तस्य त्वन्तःपुरनिवासिनी । पूजनी नाम शकुनिर्दीर्घकालं सहोषिता ॥ ५ ॥ रुतज्ञा सर्वभूतानां यथा वै जीवजीवकः । सर्वज्ञा सर्वतत्त्वज्ञा तिर्य्यग्योनिं गतापि सा ॥ ६ ॥ अभिप्रजाता सा तत्र पुत्रमेकं सुवर्च्चसम् । समकालञ्च राज्ञोऽपि देव्यां पुत्रो व्यजायत ॥ ७ ॥ तयोरर्थं कृतज्ञा सा खेचरी पूजनी सदा । समुद्रतीरं सा गत्वा आजहार फलद्वयम् ॥ ८ ॥ पुष्ट्यर्थञ्च स्वपुत्रस्य राजपुत्रस्य चैव ह । फलमेकं सुतायादाद्राजपुत्राय चापरम् ॥ ९ ॥ अमृतास्वादसदृशं बलतेजोभिवर्द्धनम् । आदायादाय सैवाशु तयोः प्रादात् पुनः पुनः । ततोऽगच्छत् परां वृद्धिं राजपुत्रः फलाशनात् ॥ १० ॥ ततः स धात्र्या कक्षेण उह्यमानो नृपात्मजः । ददर्श तं पक्षिसुतं बाल्यादागत्य बालकः । ततो बाल्याच्च यत्नेन तेनाक्रीड़त पक्षिणा ॥ ११ ॥ शून्ये च तमुपादाय पक्षिणं समजातकम् । हत्वा ततः स राजेन्द्र धात्र्या हस्तमुपागमत् ॥ १२ ॥ अथ सा पूजनी

राजन्नागस्य फलहारिका। अपश्यन्निहतं पुत्रं तेन बालेन भूतले ॥ १३ ॥ वाष्पपूर्णमुखी दीना दृष्ट्वा सा तु हतं सुतम्। पूजनी दुःखसन्तप्ता रुदती वाक्यमब्रवीत् ॥ १४ ॥ क्षत्रिये सङ्गतं नास्ति न प्रीतिर्न च सौहृदम्। कारणात् सान्त्वयन्त्येते कृतार्थाः सन्त्यजन्ति च ॥ १५ ॥ क्षत्रियेषु न विश्वासः कार्य्यः सर्वापकारिषु। अपकृत्यापि सततं सान्त्वयन्ति निरर्थकम् ॥ १६ ॥ अहमस्य करोम्यद्य सदृशीं वैरयातनाम्। कृतघ्नस्य नृशंसस्य भृशं विश्वासघातिनः ॥ १७ ॥ सहसञ्जातवृद्धस्य तथैव सहभोजिनः। शरणागतस्य च वधस्त्रिविधं ह्येव पातकम् ॥ १८ ॥ इत्युक्ता चरणाभ्यान्तु नेत्रे नृपसुतस्य सा। भित्त्वा खस्था तत इदं पूजनी वाक्य मब्रवीत् ॥ १९ ॥ इच्छयेह कृतं पापं सद्यस्तच्चोपसर्पति। कृतं प्रतिकृतं येषां न नश्यति शुभाशुभम् ॥ २० ॥ पापं कर्म्म कृतं किञ्चिद्यदि तस्मिन्न दृश्यते। नृपते तस्य पुत्रेषु पौत्रेष्वपि च नप्तृषु ॥ २१ ॥ ब्रह्मदत्तः सुतं दृष्ट्वा पूजन्या हृतलोचनम्। कृते प्रतिकृतं मत्वा पूजनीमिदमब्रवीत् ॥ २२ ॥

ब्रह्मदत्त उवाच। अस्ति वै कृतमस्माभिरस्ति प्रतिकृतं त्वया। उभयन्तत् समाभूतं वस पूजनि मा गमः ॥ २३ ॥

पूजन्युवाच। सकृत्कृतापराधस्य तत्रैव परिलम्बत। न तद्बुधाः प्रशंसन्ति श्रेयस्तत्रापसर्पणम् ॥ २४ ॥ सान्त्वे प्रयुक्ते सततं कृतवैरे न विश्वसेत्। क्षिप्रं स वध्यते मूढ़ो न हि वैरं प्रशाम्यति ॥ २५ ॥ अन्योऽन्यकृतवैराणां पुत्रं पौत्रं नियच्छति। पुत्रपौत्रविनाशे च परलोकं नियच्छति ॥ २६ ॥ सर्वेषां कृतवैराणामविश्वासः सुखोदयम्। एकान्ततो न विश्वासः कार्य्यो विश्वासघातकैः ॥ २७ ॥ न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्। विश्वासाद्भयमुत्पन्नमपि मूलं निकृन्तति। कामं विश्वासयेदन्यान् परेषाञ्च न विश्वसेत् ॥ २८ ॥ माता पिता बान्धवानां वरिष्ठौ भार्य्या जरा

वीजमात्रन्तु पुत्रः। भ्राता शत्रुः क्लिन्नपाणिर्वयस्य आत्मा ह्येकः सुखदुःखस्य भोक्ता ॥ २९ ॥ अन्योऽन्यकृतवैराणां न सन्धिरुपपद्यते। स च हेतुरतिक्रान्तो यदर्थमहमावसम् ॥ ३० ॥ पूजितस्यार्थमानाभ्यां जन्तोः पूर्वापकारिणः। मनो भवत्यविश्वस्तं कर्म्म त्रासयतेऽबलान् ॥ ३१ ॥ पूर्वं सम्मानना यत्र पश्चाच्चैव विमानना। जह्यात्तत् सत्त्ववान् स्थानं शत्रोः सम्मानितोऽपि सन् ॥३२॥ उषितास्मि तवागारे दीर्घकालं समर्च्चिता। तदिदं वैरमुत्पन्नं सुखमाशु व्रजाम्यहम् ॥ ३३ ॥

ब्रह्मदत्त उवाच। यः कृतं प्रतिकुर्य्याद्दै न स तत्रापराध्नुयात्। अनृणस्तेन भवति वस पूजनि मा गमः ॥ ३४ ॥

पूजन्युवाच। न कृतस्य च कर्त्तुश्च सख्यं सन्धीयते पुनः। हृदयं तत्र जानाति कर्त्तुश्चैव कृतस्य च ॥ ३५ ॥

ब्रह्मदत्त उवाच। कृतस्य चैव कर्त्तुश्च कार्य्यं सन्धीयते पुनः। वैरस्योपशमो दृष्टः पापं नोपाश्नुते पुनः ॥ ३६ ॥

पूजन्युवाच। नास्ति वैरमतिक्रान्तं सान्त्वितोऽस्मीति नाश्वसेत्। विश्वासाद्बध्यते लोके तस्मात् श्रेयोऽप्यदर्शनम् ॥ ३७ ॥ तरसा ये न शक्यन्ते शस्त्रैः सुनिशितैरपि। साम्ना तेऽपि निगृह्यन्ते गजा इव करेणुभिः ॥ ३८ ॥

ब्रह्मदत्त उवाच। सम्वासाज्जायते स्नेहो जीवितान्तकरेष्वपि। अन्योऽन्यस्य च विश्वासः श्वपचेन शुनो यथा ॥ ३९ ॥ अन्योऽन्यकृतवैराणां सम्वासान्मृदुतां गतम्। नैव तिष्ठति तद्वैरं पुष्करस्थमिवोदकम् ॥ ४० ॥

पूजन्युवाच। वैरं पञ्चसमुत्थानं तच्च बुद्ध्यन्ति पण्डिताः। स्त्रीकृतं वास्तुजं वाग्जं ससपत्नापराधजम् ॥ ४१ ॥ तत्र दाता न हन्तव्यः क्षत्रियेण विशेषतः। प्रकाशं वाप्रकाशञ्च बुद्ध्वा दोषबलाबलम् ॥ ४२ ॥ कृतवैरे न विश्वासः कार्य्यस्त्विह सुहृद्यपि। छन्नं

संतिष्ठते वैरं गूढ़ोऽग्निरिव दारुषु ॥ ४३ ॥ न वित्तेन न पौरुषैर्न च सान्त्वेन वा श्रुतैः । वैराग्निः शाम्यते राजन्नौर्वोऽग्निरिव सागरे ॥ ४४ ॥ न हि वैराग्निरुद्भूतः कर्म्म चाप्यपराधजम् । शाम्यत्य-दग्ध्वा नृपते विना ह्येकतरक्षयात् ॥ ४५ ॥ सत्कृतस्यार्थमानाभ्या-मनुपूर्वापकारिणः । नादेयो मित्रविश्वासः कर्म त्रासयते बलात् ॥ ४६ ॥ नैवापकार्य्यं कस्मिंश्चिदिह त्वयि तथा भवान् । उषितास्मि गृहेऽहन्ते नेदानीं विश्वसाम्यहम् ॥ ४७ ॥

ब्रह्मदत्त उवाच । कालेन क्रियते कार्य्यं तथैव विविधाः क्रियाः । कालेनैते प्रवर्त्तन्ते कः कस्येहापराध्यति ॥ ४८ ॥ तुल्य-ञ्चोभे प्रवर्त्तेते मरणं जन्म चैव ह । कार्य्यते चैव कालेन तन्निमित्तं न जीवति ॥ ४९ ॥ बध्यन्ते युगपत् केचित् एकैकस्य न चापरे । कालो दहति भूतानि संप्राप्याग्निरिवेन्धनम् ॥ ५० ॥ नाहं प्रमाणं नैव त्वमन्योऽन्यं कारणं शुभे । कालो नित्यमुपादत्ते सुखं दुःखञ्च देहिनाम् ॥ ५१ ॥ एवं वसेह सस्नेहा यथाकाममहिंसिता । यत् कृतं तत्तु मे क्षान्तं त्वञ्च वै क्षम पूजनि ॥ ५२ ॥

पूजन्युवाच । यदि कालः प्रमाणं ते न वैरं कस्यचिद्भवेत् । कस्मात्त्वपचितिं यान्ति वान्धवा वान्धवैर्हतैः ॥ ५३ ॥ कस्माद्देवा-सुराः पूर्वमन्योऽन्यमभिजघ्निरे । यदि कालेन निर्याणं सुखं दुःखं भवाभवौ ॥ ५४ ॥ भिषजो भेषजं कर्त्तुं कस्मादिच्छन्ति रोगिणः । यदि कालेन पच्यन्ते भेषजैः किं प्रयोजनम् ॥ ५५ ॥ प्रलापः सुम-हान् कस्मात् क्रियते शोकमूर्च्छितैः । यदि कालः प्रमाणन्ते कस्मा-द्धर्मोऽस्ति कर्त्तृषु ॥ ५६ ॥ तव पुत्रो ममापत्यं हतवान् स हतो मया । अनन्तरं त्वयाहञ्च हन्तव्या हि नराधिप ॥ ५७ ॥ अहं हि पुत्रशोकेन कृतपापा तवात्मजे । यथा त्वया प्रहर्त्तव्यं तथा तत्त्वञ्च मे शृणु ॥ ५८ ॥ भक्षार्थं क्रीड़नार्थञ्च नरा वाञ्छन्ति पक्षिणः । तृतीयो नास्ति संयोगो वधबन्धादृते नृपः ॥ ५९ ॥

वधबन्धभयादेते मोक्षतन्त्रमुपाश्रिताः। मरणोत्पातजं दुःखं प्राहु-र्वेदविदो जनाः॥ ६०॥ सर्वस्य दयिताः प्राणाः सर्वस्य दयिताः सुताः। दुःखादुद्विजते सर्वः सर्वस्य सुखमीप्सितम्॥ ६१॥ दुःखं जरा ब्रह्मदत्त दुःखमर्थविपर्य्ययः। दुःखञ्चानिष्टसम्वासो दुःखमिष्टवियोजनम्॥ ६२॥ वधबन्धकृतं दुःखं स्त्रीकृतं सहजं तथा। दुःखं सुतेन सततं जनान् विपरिवर्त्तते॥ ६२॥ न दुःखं परदुःखे वै केचिदाहुरबुद्धयः। यो दुःखं नाभिजानाति स जल्पति महाजने॥ ६४॥ यस्तु शोचति दुःखार्त्तः स कथं वक्तुमुत्सहेत्। रसज्ञः सर्वदुःखस्य यथात्मनि यथा परे॥ ६५॥ यत्कृतं ते मया राजंस्त्वया च मम यत् कृतम्। न तद्वर्षशतैः शक्यं व्यपोहितु-मरिन्दम॥ ६६॥ आवयोः कृतमन्योऽन्यं पुनः सन्धिर्न विद्यते। स्मृत्वा स्मृत्वा हि ते पुत्रं नवं वैरं भविष्यति॥ ६७॥ वैरमन्तिक-मासाद्य यः प्रीतिं कर्त्तुमिच्छति। मृण्मयस्येव भग्नस्य यथा सन्धिर्न विद्यते॥ ६८॥ निश्चितश्चार्थशास्त्रज्ञैर्न विश्वासः सुखो-दयः। उशना चैव गाथे द्वे प्रह्लादायाब्रवीत् पुरा॥ ६९॥ ये वैरिणः श्रद्दधते सत्ये सत्येतरेऽपि वा। बध्यन्ते श्रद्दधानस्तु मधु शुष्कतृणैर्यथा॥ ७०॥ न हि वैराणि शाम्यन्ति कुले दुःखगतानि च। आख्यातारश्च विद्यन्ते कुले वै ध्रियते पुमान्॥ ७१॥ उप-गृह्य तु वैराणि सान्त्वयन्ति नराधिप। अथैनं प्रतिपिंषन्ति पूर्णं घटमिवाश्मनि॥७२॥ सदा न विश्वसेद्राजा पापं कृत्वेह कस्य-चित्। अपकृत्य परेषां हि विश्वासाद्दुःखमश्नुते॥ ७२॥

ब्रह्मदत्त उवाच। नाविश्वासाद्विन्दतेऽर्थानीहन्ते चापि किञ्चन। भयात्त्वेकतरान्नित्यं मृतकल्पा भवन्ति च॥ ७४॥

पूजन्युवाच। यस्येह व्रणितौ पादौ पद्भ्याञ्च परिसर्पति। खन्येते तस्य तौ पादौ सुसुप्तमपि धावतः॥ ७५॥ नेत्राभ्यां सरुजाभ्यां यः प्रतिवातमुदीक्षते। तस्य वायुरुजात्यर्थं नेत्रयो-

भवति ध्रुवम् ॥ ७६ ॥ दुष्टं पन्थानमासाद्य यो मोहादुपपद्यते। आत्मनो बलमज्ञाय तदन्तं तस्य जीवितम् ॥ ७७॥ यस्तु वर्ष-मविज्ञाय क्षेत्रं कर्षति मानवः। हीनः पुरुषकारेण नैवा-प्नुते ततः ॥ ७८ ॥ यस्तु तिक्तं कषायम्वा स्वादु वा मधुरं हितम्। आहारं कुरुते नित्यं सोऽमृतत्वाय कल्पते ॥ ७९ ॥ पथ्यं मुक्त्वा तु यो मोहात् दुष्टमश्नाति भोजनम्। परिणाममविज्ञाय तदन्तं तस्य जीवितम् ॥ ८० ॥ दैवं पुरुषकारश्च स्थितावन्योऽन्यसंश्रयात्। उदाराणान्तु सत् कर्म्म दैवं क्लीवा उपासते ॥ ८१ ॥ कर्म्म चात्म-हितं कार्य्यं तीक्ष्णम्वा यदि वा मृदु। ग्रस्यतेऽकर्म्मशीलस्तु सदा-नर्थैरकिञ्चनः ॥ ८२ ॥ तस्मात् सर्वं व्यपोह्यार्थं कार्य्य एव परा-क्रमः। सर्वस्वमपि संत्यज्य कार्य्यमात्महितं नरैः ॥ ८३ ॥ विद्या शौर्य्यञ्च दाक्ष्यञ्च बलं धैर्य्यञ्च पञ्चमम्। मित्राणि सहजान्याहु-र्वर्त्तयन्तीह तैर्बुधाः ॥ ८४ ॥ निवेशनञ्च कुप्यञ्च क्षेत्रं भार्य्या सुहृज्जनः। एतान्युपहितान्याहु सर्वत्र लभते पुमान् ॥ ८५ ॥ सर्वत्र रमते प्राज्ञः सर्वत्र च विराजते। न विभीषयते कश्चि-द्भीषितो न बिभेति च ॥ ८६ ॥ नित्यं बुद्धिमतोऽप्यर्थः स्वल्पकोऽपि विवर्द्धते। दाक्ष्येण कुर्वत कर्म्म संयमात् प्रतितिष्ठति ॥ ८७ ॥ गृहस्नेहावबद्धानां नराणामल्पमेधसाम्। कुस्त्री खादति मांसानि माघमांसेगवा इव ॥ ८८ ॥ गृहं क्षेत्राणि मित्राणि स्वदेश इति चापरे। इत्येवमवसीदन्ति नरा बुद्धिविपर्य्यये ॥ ८९ ॥ उत्-पतेत् सहजाद्देशाद्व्याधिदुर्भिक्षपीड़ितात्। अन्यत्र वस्तुं गच्छेद्वा वसेद्वा नित्यमानितः ॥ ९० ॥ तस्मादन्यत्र यास्यामि वस्तुं नाह-मिहोत्सहे। कृतमेतदनार्य्यं मे तव पुत्रे च पार्थिव ॥ ९१ ॥ कु-भार्य्याञ्च कुपुत्रञ्च कुराजानं कुसौहृदम्। कुसम्बन्धं कुदेशञ्च दूरतः परिवर्ज्जयेत् ॥ ९२ ॥ कुपुत्रे नास्ति विश्वासः कुभार्य्यायां कुतो रतिः। कुराज्ये निर्वृतिर्नास्ति कुदेशे नास्ति जीविका ॥ ९३ ॥

कुमित्रे सङ्गतिर्नास्ति नित्यमस्थिरसौहृदे। अवमानः कुसम्बन्धे भवत्यर्थविपर्य्यये ॥ ९४ ॥ सा भार्य्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः। तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते ॥ ९५ ॥ यत्र नास्ति बलात्कारः स राजा तीव्रशासनः। भीरेव नास्ति सम्बन्धो दरिद्रं यो बुभूषते ॥ ९६ ॥ भार्य्या देशोऽथ मित्राणि पुत्रसम्बन्धिबान्धवाः। एते सर्वे गुणवति धर्म्मनेत्रे महीपतौ ॥९७॥ अधर्म्मज्ञस्य विलयं प्रजा गच्छन्ति निग्रहात्। राजा मूलं त्रिवर्गस्य स्वप्रमत्तोऽनुपालयेत् ॥ ९८ ॥ बलिषड्भागमुद्धृत्य बलिं समुपयोजयेत्। न रक्षति प्रजाः सम्यक् यः स पार्थिवतस्करः॥९९॥ दत्त्वाभयं यः स्वयमेव राजा न तत् प्रमाणं कुरुतेऽर्थलोभात्। स सर्वलोकादुपलभ्य पापं सोऽधर्म्मबुद्धिर्निरयं प्रयाति ॥१००॥ दत्त्वाभयं स्वयं राजा प्रमाणं कुरुते यदि। स सर्वसुखकृज्ज्ञेयः प्रजा धर्म्मेण पालयन् ॥ १०१ ॥ माता पिता गुरुर्गोप्ता वह्निर्वैश्रवणो यमः। सप्त राज्ञो गुणानेताननुराह प्रजापतिः ॥ १०२ ॥ पिता हि राजा राष्ट्रस्य प्रजानां योऽनुकम्पनः। तस्मिन् मिथ्याविनीतो हि तिर्य्यग्गच्छति मानवः ॥ १०३ ॥ सम्भावयति मातेव दीनमप्युपपद्यते। दहत्यग्निरिवानिष्टान् यमयन्नसतो यमः ॥ १०४ ॥ इष्टेषु विसृजन्नर्थान् कुवेर इव कामदः। गुरुर्धर्म्मोपदेशेन गोप्ता च परिपालयन् ॥ १०५ ॥ यस्तु रञ्जयते राजा पौरजानपदान् गुणैः। न तस्य भ्रश्यते राज्यं स्वयं धर्मानुपालनात् ॥ १०६ ॥ स्वयं समुपजानन् हि पौरजानपदार्च्चनम्। न सुखं प्रेक्षते राजा इह लोके परत्र च ॥१०७॥ नित्योद्विग्नाः प्रजा यस्य करभारप्रपीड़िताः। अनर्थैर्विप्रलुप्यन्ते स गच्छति पराभवम् ॥ १०२ ॥ प्रजा यस्य विवर्द्धन्ते सरसीव महोत्पलम्। स सर्वफलभाग्राजा स्वर्गलोके महीयते ॥ १०९ ॥ बलिना विग्रहो राजन्न कदाचित् प्रशस्यते। बलिना विग्रहो यस्य कुतो राज्यं कुतः सुखम् ॥ ११० ॥

भीष्म उवाच। सैवमुक्त्वा शकुनिका ब्रह्मदत्तं नराधिप। राजानं समनुज्ञाप्य जगामाभीप्सितां दिशम् ॥ १११॥ एतत्ते ब्रह्मदत्तस्य पूजन्या सह भाषितम्। मयोक्तं नृपतिश्रेष्ठ किमन्यत् श्रोतुमिच्छसि ॥ ११२ ॥

इति शान्तिपर्वणि राजधर्मानुशासनपर्वणि ब्रह्मदत्तपूजनी-
एकोनचत्वारिंशदधिकशतोऽध्यायः ॥ १३९ ॥

---

युधिष्ठिर उवाच । युगक्षयात् परिक्षीणे धर्मे लोके च भारत। दस्युभिः पीड्यमाने च कथं स्थेयं पितामह ॥ १ ॥

भीष्म उवाच। अत्र ते वर्त्तयिष्यामि नीतिमापत्सु भारत। उत्सृज्यापि घृणां काले यथा वर्त्तेत भूमिपः ॥ २ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् । भारद्वाजस्य सम्वादं राज्ञः शत्रुञ्जयस्य च ॥ ३ ॥ राजा शत्रुञ्जयो नाम सौवीरेषु महारथः। भारद्वाजमुपागम्य पप्रच्छार्थविनिश्चयम् ॥ ४ ॥ अलब्धस्य कथं लिप्सा लब्धं केन विवर्द्धते । वर्द्धितं पाल्यते केन पालितं प्रणयेत् कथम् ॥ ५ ॥ तस्मै विनिश्चितार्थाय परिपृष्टोर्थनिश्चयम् । उवाच ब्राह्मणो वाक्यं इदं हेतुमदुत्तमम् ॥ ६ ॥ नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः। अच्छिद्रश्छिद्रदर्शी च परेषां विवरानुगः ॥ ७ ॥ नित्यमुद्यतदण्डस्य भृशमुद्विजते नरः। तस्मात् सर्वाणि भूतानि दण्डेनैव प्रसाधयेत् ॥ ८ ॥ एवं दण्डं प्रशंसन्ति पण्डितास्तत्त्वदर्शिनः। तस्माच्चतुष्टये तस्मिन् प्रधानो दण्ड उच्यते ॥ ९ ॥ छिन्नमूले त्वधिष्ठाने सर्वेषां जीवनं हतम्। कथं हि शाखास्तिष्ठेयुश्छिन्नमूले वनस्पतौ ॥ १० ॥ मूलमेवादितश्छिन्द्यात् परपक्षस्य पण्डितः। ततः सहायान् पक्षञ्च मूलमेवानुसाधयेत् ॥११॥ सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम्। आपदास्पदकालेन

कुर्वीत न विचारयेत् ॥ १२ ॥ वाङ्मात्रेण विनीतः स्याद्धृदयेन यथा क्षुरः। श्लक्ष्णपूर्वाभिभाषी च कामक्रोधौ च वर्जयेत् ॥ १३ ॥ सपत्नसंहिते कार्य्ये कृत्वा सन्धिं न विश्वसेत्। अपक्रामेत्ततः शीघ्रं कृतकार्य्यो विचक्षणः ॥ १४ ॥ शत्रुञ्च मित्ररूपेण सान्त्वेनैवाभिसान्त्वयेत्। नित्यशश्चोद्विजेत्तस्मात् सर्पयुताद्गृहादिव ॥ १५ ॥ यस्य बुद्धिं परिभवेत्तमतीतेन सान्त्वयेत्। अनागतेन दुष्प्रज्ञं प्रत्युत्पन्नेन पण्डितम् ॥१६॥ अञ्जलिं शपथं सान्त्वं प्रणम्य शिरसा वदेत्। अश्रुप्रमार्ज्जनञ्चैव कर्त्तव्यं भूतिमिच्छता ॥ १७ ॥ वहेदमित्रं स्कन्धेन यावत् कालस्य पर्य्ययः। प्राप्तकालन्तु विज्ञाय भिन्द्याद्घटमिवाश्मनि ॥ १८ ॥ मुहूर्त्तमपि राजेन्द्र तिन्दुकालातवज्ज्वलेत्। न तुषाग्निरिवानर्च्चिर्धूमयेत चिरं नर ॥ १९ ॥ नानार्थिकोऽर्थसम्बन्धं कृतघ्नेन समाचरेत्। अर्थी तु शक्यते भोक्तुं कृतकार्य्योऽवमन्यते ॥ २० ॥ तस्मात् सर्वाणि कार्य्याणि सावशेषाणि कारयेत्। कोकिलस्य वराहस्य मेरोः शून्यस्य वेश्मनः। नटस्य भक्तिमित्रस्य यत् श्रेयस्तत् समाचरेत् ॥ २१ ॥ उत्थायोत्थाय गच्छेत नित्ययुक्तो रिपोर्गृहान्। कुशलञ्चास्य पृच्छेत यद्यप्यकुशलं भवेत् ॥ २२ ॥ नालसाः प्राप्नुवन्त्यर्थान्न क्लीवा नाभिमानिनः। न च लोकरवाद्भीता न वै शश्वत् प्रतीक्षिणः ॥ २३ ॥ नास्यच्छिद्रं रिपुर्विद्यात् विद्याच्छिद्रं परस्य तु। गूहेत् कूर्म्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ २४ ॥ वकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत्। वृकवच्चावलुम्पेत शरवच्च विनिष्पतेत् ॥ २५ ॥ पानमक्षास्तथा नार्य्यो मृगया गीतवादितम्। एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् ॥२६॥ कुर्य्यात्तृणमयं चापं शयीत मृगशायिकाम्। अन्धः स्यादन्धवेलायां वाधिर्य्यमपि संश्रयेत् ॥ २७ ॥ देशकालौ समासाद्य विक्रमेत विचक्षणः। देशकालव्यतीतो हि विक्रमो निष्फलो भवेत् ॥२८॥ कालाकालौ सम्प्रधार्य्य बलाबलमथात्मनः।

परस्परं बलं ज्ञात्वा तत्रात्मानं नियोजयेत् ॥ २९ ॥ दण्डेनोपनतं शत्रुं यो राजा न नियच्छति । स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ ३० ॥ सुपुष्पितः स्यादफलः फलवान् स्याद्दुरारुहः । आमः स्यात् पक्वसङ्काशो न च शीर्य्येत कस्यचित् ॥ ३१ ॥ आशां कालवतीं कुर्य्यात्ताञ्च विघ्नेन योजयेत् । विघ्नं निमित्ततो ब्रूयात् निमित्तञ्चाभिहेतुतः ॥ ३२ ॥ भीतवत् संविधातव्यं यावद्भयमनागतम् । आगतन्तु भयं दृष्ट्वा प्रहर्त्तव्यमभीतवत् ॥ ३३ ॥ न संशयमनारुह्य नरो भद्राणि पश्यति । संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ३४ ॥ अनागतं विजानीयात् यच्छेद्भयमुपस्थितम् । पुनर्वृद्धिभयात् किञ्चिदनिवृत्तं निशामयेत् ॥ ३५ ॥ प्रत्युपस्थितकालस्य सुखस्य परिवर्ज्जनम् । अनागतसुखाशा च नैव बुद्धिमतां नयः ॥ ३६ ॥ योऽरिणा सह सन्धाय सुखं स्वपिति विश्वसन् । स वृक्षाग्रे प्रसुप्तो वा पतितः प्रतिबुध्यते ॥ ३७ ॥ कर्म्मणा येन तेनैव मृदुना दारुणेन च । उद्धरेद्दीनमात्मानं समर्थो धर्म्ममाचरेत् ॥३८॥ ये सपत्नाः सपत्नानां सर्वांस्तानुपसेवयेत् । आत्मनश्चापि बोद्धव्याश्चारा विनिहिताः परैः ॥ ३९ ॥ चारन्त्वविदितः कार्य्य आत्मनोऽथ परस्य च । पाषण्डांस्तापसादींश्च परराष्ट्रे प्रवेशयेत् ॥ ४० ॥ उद्यानेषु विहारेषु प्रपास्वावसथेषु च । पानागारे प्रवेशेषु तीर्थेषु च सभासु च ॥४१॥ धर्माभिचारिणः पापाश्चौरा लोकस्य कण्टकाः । समागच्छन्ति तान् बुद्धा नियच्छेच्छमयेत च ॥ ४२ ॥ न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् । विश्वासाद्भयमभ्येति नापरीक्ष्य च विश्वसेत् ॥ ४३ ॥ विश्वसयित्वा तु परं तत्त्वभूतेन हेतुना । अथास्य प्रहरेत् काले किञ्चित् विचलिते पदे ॥ ४४ ॥ अशङ्क्यमपि शङ्केत नित्यं शङ्केत शङ्कितात् । भयं ह्यशङ्किताज्जातं समूलमपि कृन्तति ॥४५॥ अवधानेन मौनेन काषायेण जटाजिनः । विश्वासयित्वा द्वेष्टारमवलुम्पेद्यथा वृकः ॥ ४६ ॥ पुत्रो वा यदि

वा भ्राता पिता वा यदि वा सुहृत्। अर्थस्य विघ्नं कुर्वाणा हन्तव्या भूतिमिच्छता ॥ ४७ ॥ गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः। उत्पथप्रतिपन्नस्य दण्डो भवति शासनम् ॥४८॥ अभ्युत्थानाभिवादाभ्यां सम्प्रदानेन केनचित्। प्रतिपुष्पफलाघाती तीक्ष्णतुण्ड इव द्विजः ॥ ४९ ॥ नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म्म दारुणम्। नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥५०॥ नास्ति जात्या रिपुर्नाम मित्रञ्चापि न विद्यते। सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥ ५१ ॥ अमित्रं नैव मुञ्चेत वदन्तं करुणान्यपि। दुःखं तत्र न कर्त्तव्यं हन्यात् पूर्वापकारिणम् ॥५२॥ संग्रहानुग्रहे यत्नः सदा कार्य्योऽनसूयता। निग्रहश्चापि यत्नेन कर्त्तव्यो भूतिमिच्छता ॥ ५३ ॥ प्रहरिष्यन् प्रियं ब्रूयात् प्रहृत्यैव प्रियोत्तरम्। असिनापि शिरश्छित्त्वा शोचेत च रुदेत च ॥५४॥ निमन्त्रयीत सान्त्वेन सम्मानेन तितिक्षया। लोकाराधनमित्येतत् कर्त्तव्यं भूतिमिच्छता ॥ ५५ ॥ न शुष्कवैरं कुर्वीत बाहुभ्यां न नदीं तरेत्। अनर्थकमनायुष्यं गोविषाणस्य भक्षणम्। दन्ताश्च परिमृज्यन्ते रसश्चापि न लभ्यते ॥ ५६ ॥ त्रिवर्गस्त्रिविधा पीड़ा अनुबन्धास्तथैव च। अनुबन्धं तथा ज्ञात्वा पीड़ाञ्च परिवर्ज्जयेत् ॥ ५७ ॥ ऋणशेषमग्निशेषं शत्रुशेषन्तथैव च। पुनः पुनः प्रवर्द्धन्ते तस्मात् शेषमकारयेत् ॥ ५८ ॥ वर्द्धमानमृणं तिष्ठेत् परिभूताश्च शत्रवः। जनयन्ति भयं तीव्रं व्याधयश्चाप्युपेक्षिताः ॥५९॥ नासम्यक्कृतकारी स्यादप्रमत्तः सदा भवेत्। कण्टकोऽपि हि दुश्छिन्नो विकारं कुरुते चिरम् ॥ ६० ॥ वधेन च मनुष्याणां मार्गाणां दूषणेन च। आगाराणां विनाशैश्च परराष्ट्रं विनाशयेत् ॥ ६१ ॥ गृध्रदृष्टिर्वकालीनः श्वचेष्टः सिंहविक्रमः। अनुद्विग्नः काकशङ्की भुजङ्गचरितञ्चरेत् ॥ ६२ ॥ शूरमञ्जलिपातेन भीरुं भेदेन भेदयेत्। लुब्धमर्थप्रदानेन समं तुल्येन विग्रहः ॥ ६३ ॥

श्रेणीमुख्योपजातेषु वल्लभानुनयेषु च। अमात्यान् परिरक्षेत भेद-
सङ्घातयोरपि ॥ ६४ ॥ मृदुरित्यवजानन्ति तीक्ष्ण इत्युद्विजन्ति च।
तीक्ष्णकाले भवेत्तीक्ष्णो मृदुकाले मृदुर्भवेत् ॥ ६५ ॥ मृदुनैव मृदुं
छिन्धि मृदुना हन्ति दारुणम्। नासाध्यं मृदुना किञ्चित्तस्मा-
त्तीक्ष्णतरो मृदुः ॥ ६६ ॥ काले मृदुर्यो भवति काले भवति
दारुणः। प्रसाधयति कृत्यानि शत्रुञ्चाप्यधितिष्ठति ॥ ६७ ॥
पण्डितेन विरुद्धः सन् दूरस्थोऽस्मीति नाश्वसेत्। दीर्घौ बुद्धिमतो
बाहू याभ्यां हिंसति हिंसितः ॥ ६८ ॥ न तत्तरेद्यस्य न पार-
मुत्तरेन्न तद्धरेद्यत् पुनराहरेत् परः। न तत् खनेद्यस्य न मूल-
मुद्धरेन्नतं हन्याद्यस्य शिरो न पातयेत् ॥ ६९ ॥ इतीदमुक्तं
वृजिनाभिसंहितं न चैतदेवं पुरुषः समाचरेत्। परप्रयुक्तेन कथं
विभावयेदतो मयोक्तं भवतो हितार्थिना ॥ ७० ॥

भीष्म उवाच। यथावदुक्तं वचनं हितार्थिना निशम्य विप्रेण
सुवीरराष्ट्रपः। तथाकरोद्वाक्यमदीनचेतनः श्रियञ्च दीप्तां बुभुजे
सबान्धवः ॥ ७१ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि कणिकोपाख्याने
चत्वारिंशदधिकशततोऽध्यायः ॥ १४० ॥

---

युधिष्ठिर उवाच। हीने परमके धर्मे सर्वलोकाभिलङ्घिते।
अधर्मे धर्मतां नीते धर्मे चाधर्मतां गते ॥ १ ॥ मर्य्यादासु विन-
ष्टासु क्षुभिते धर्मनिश्चये। राजभिः पीड़िते लोके परैर्वापि विशा-
म्पते ॥ २ ॥ सर्व्वाश्रमेषु मूढ़ेषु कर्मसूपहतेषु च। कामाल्लोभाच्च
मोहाच्च भयं पश्यत्सु भारत ॥ ३ ॥ अविश्वस्तेषु सर्व्वेषु नित्यं
भूतेषु पार्थिव। निकृत्या हन्यमानेषु वञ्चयत्सु परस्परम् ॥ ४ ॥
सम्प्रदीप्तेषु देशेषु ब्राह्मणे चातिपीड़िते। अवर्षति च पर्जन्ये

मिथो भेदे समुत्थिते ॥ ५ ॥ सर्वस्मिन् दस्युसाद्भूते पृथिव्यामुप-
जीवने । केन स्विद्ब्राह्मणो जीवेज्जघन्ये काल आगते ॥ ६ ॥
अतितिक्षुः पुत्रपौत्राननुक्रोशान्नराधिप । कथमापत्सु वर्त्तेत तन्मे
ब्रूहि पितामह ॥ ७ ॥ कथञ्च राजा वर्त्तेत लोके कलुषतां गते ।
कथमर्थाच्च धर्माच्च न हीयते परन्तप ॥ ८ ॥

भीष्म उवाच । राजमूला महाबाहो योगक्षेमसुवृष्टयः ।
प्रजासु व्याधयश्चैव मरणञ्च भयानि च ॥ ९ ॥ कृतं त्रेता द्वापरञ्च
कलिश्च भरतर्षभ । राजमूला इति गतिर्मम तास्वत्र संशयः ॥१०॥
तस्मिंस्त्वभ्यागते काले प्रजानां दोषकारके । विज्ञानबलमास्थाय
जीवितव्यं भवेत्तदा ॥ ११ ॥ अत्राप्युदाहरन्तीममितिहासं पुरा-
तनम् । विश्वामित्रस्य सम्वादं चाण्डालस्य च पक्कणे ॥ १२ ॥
त्रेताद्वापरयोः सन्धौ तदा दैवविधिक्रमात् । अनावृष्टिरभूद्घोरा
लोके द्वादशवार्षिकी ॥ १३ ॥ प्रजानामतिवृद्धानां युगान्ते समुप-
स्थिते । त्रेताविमोक्षसमये द्वापरे प्रतिपादने ॥ १४ ॥ न ववर्ष
सहस्राक्षः प्रतिलोमोऽभवद्गुरुः । जगाम दक्षिणं मार्गं सोमो
व्यावृत्तलक्षणः ॥ १५ ॥ नावश्यायोऽपि तत्राभूत् कुत एवाभ्र-
राजयः । नद्यः संक्षिप्ततोयौघाः किञ्चिदन्तर्गतास्ततः ॥ १६ ॥
सरांसि परितश्चैव कूपाः प्रस्रवणानि च । हतत्विषो न लक्ष्यन्ते
निसर्गाद्दैवकारितात् ॥ १७ ॥ उपशुष्कजलस्थाया विनिवृत्तसभा
प्रपा । निवृत्तयज्ञस्वाध्याया निर्वषट्कारमङ्गला ॥ १८ ॥ उच्छिन्न-
कृषिगोरक्षा निवृत्तविपणापणा । निवृत्तयूपसम्भारा विप्रनष्ट-
महोत्सवा ॥ १९ ॥ अस्थिसञ्चयसङ्कीर्णा महाभूतरवाकुला ।
शून्यभूमिष्ठनगरा दग्धग्रामनिवेशना ॥ २० ॥ क्वचिच्चौरैः क्वचि-
च्छस्त्रैः क्वचिद्राजभिरातुरैः । परस्परभयाच्चैव शून्यभूयिष्ठनिर्ज्जना
॥ २१ ॥ गतदैवतसंस्थाना वृद्धलोकनिराकृता । गोऽजाविमहिषी-
हीना परस्परपराहता ॥ २२ ॥ हतविप्रा हतारक्षा प्रनष्टौषधि-

सृष्टया । सर्वभूततरुप्राया बभूव वसुधा तदा ॥ २३ ॥ तस्मिन् प्रतिभये काले चते धर्मे युधिष्ठिर । बभ्रमुः चुधिता मर्त्याः खादमानाः परस्परम् ॥ २४ ॥ ऋषयो नियमांस्त्यक्त्वा परित्यज्याग्निदेवताः । आश्रमान् संपरित्यज्य पर्य्यधावन्नितस्ततः ॥२५॥ विश्वामित्रोऽथ भगवान् महर्षिरनिकेतनः । चुधापरिगतो धीमान् समन्तात् पर्य्यधावत ॥ २६ ॥ त्यक्त्वा दारांश्च पुत्रांश्च कस्मिंश्चिज्जनसंसदि । भैच्याभच्यसमो भूत्वा निरग्निरनिकेतनः ॥ २७ ॥ स कदाचित् परिपतन् श्वपचानां निवेशनम् । हिंस्राणां प्राणिघातानामाससाद वने क्वचित् ॥ २८ ॥ विभिन्नकलसाकीर्णं श्वचर्मच्छेदनायुतम् । वराहखरभग्नास्थिकपालघटसङ्कुलम् ॥ २९ ॥ मृतचैलपरिस्तीर्णं निर्माल्यकृतभूषणम् । सर्पनिर्मोकमालाभिः कृत चिह्नं कुटीमठम् ॥ ३० ॥ कुक्कुटारावबहुलं गर्द्दभध्वनिनादितम् । उद्घोषद्भिः खरैर्वाक्यैः कलहद्भिः परस्परम् ॥ ३१ ॥ उलूकपच्चिध्वजिभिर्देवतायतनैर्वृतम् । लोहघण्टापरिष्कारं श्वयूथपरिवारितम् ॥ ३२ ॥ तत् प्रविश्य चुधाविष्टो विश्वामित्रो महानृषिः । आहारान्वेषणे युक्तः परं यत्नं समास्थितः ॥ ३३ ॥ न च क्वचिदविन्दत् स भिक्षमाणोऽपि कौशिकः । मांसमन्नं फलं मूलमन्यद्वा तत्र किञ्चन ॥३४॥ अहो कृच्छ्रं मया प्राप्तमिति निश्चित्य कौशिकः । पपात भूमौ दौर्बल्यात् तस्मिंश्चाण्डालपक्कणे ॥ ३५ ॥ स चिन्तयामास मुनिः किन्नु मे सुकृतं भवेत् । कथं वृथा न मृत्युः स्यादिति पार्थिवसत्तम ॥ ३६ ॥ स ददर्श श्वमांसस्य कुतन्त्रीं विततां मुनिः । चाण्डालस्य गृहे राजन् सद्यः शस्त्रहतस्य वै ॥ ३७ ॥ संचिन्तयामास तदा स्तैन्यं कार्य्यमितो मया । न हीदानीमुपायो मे विद्यते प्राणधारणे ॥ ३८ ॥ आपत्सु विहितं स्तैन्यं विशिष्टश्च महीयसः । विप्रेण प्राणरक्षार्थं कर्त्तव्यमितिनिश्चयः ॥ ३९ ॥ हीनादादेयमादौ स्यात् समानात्तदनन्तरम् । असम्भवे वाददीत

विशिष्टादपि धार्म्मिकात्॥ ४०॥ सोऽहमन्त्यावसानाय हराम्येनां प्रतिग्रहात्। न स्तैन्यदोषं पश्यामि हरिष्यामि श्वजाघनीम्। एतां बुद्धिं समास्थाय विश्वामित्रो महामुनिः। तस्मिन् देशे स सुष्वाप श्वपचो यत्र भारत॥ ४१॥ स विगाढ़ां निशां दृष्ट्वा सुप्ते चाण्डालपक्कणे। शनैरुत्थाय भगवान् प्रविवेश कुटीमतः॥ ४२॥ सुसुप्त इव चाण्डालः श्लेष्मापिहितलोचनः। परिभिन्नस्वरो रुक्षः प्रोवाचाप्रियदर्शनः॥ ४३॥

श्वपच उवाच। कः कुतन्त्रीं घटयति सुप्ते चाण्डालपक्कणे। जागर्म्मि नात्र सुप्तोऽस्मि हतोऽसीति च दारुणः॥ ४४॥ विश्वामित्रस्ततो भीतः सहसा तमुवाच ह। तत्र व्रीड़ाकुलमुख सोद्वेगस्तेन कर्म्मणा॥ ४५॥ विश्वामित्रोऽहमायुष्मलागतोऽहं बुभुक्षितः। मा वधीर्मम सद्बुद्धे यदि सम्यक् प्रपश्यसि॥ ४६॥ चाण्डालस्तद्वचः श्रुत्वा महर्षेर्भावितात्मनः। शयनादुपसंभ्रान्त उदयौ प्रति तं ततः॥ ४७॥ स विसृज्याश्रुनेत्राभ्यां बहुमानात् कृताञ्जलिः। उवाच कौशिकं रात्रौ ब्रह्मन् किन्ते चिकीर्षितम्॥ ४८॥ विश्वामित्रस्तु मातङ्गमुवाच परिसान्त्वयन्। क्षुधितोऽहं गतप्राणो हरिष्यामि श्वजाघनीम्॥ ४९॥ क्षुधितः कलुषं यातो नास्ति ह्रीरशनार्थिनः। क्षुच्च मां दूषयत्यत्र हरिष्यामि श्वजाघनीम्॥ ५०॥ अवसीदन्ति मे प्राणाः श्रुतिर्मे नश्यति क्षुधा। दुर्व्वलो नष्टसंज्ञश्च भक्ष्याभक्ष्यविवर्ज्जितः। सोऽधर्मं बुध्यमानोऽपि हरिष्यामि श्वजाघनीम्॥ ५१॥ अटन् भैक्ष्यं न विन्दामि यदा युष्माकमालये। तदा बुद्धिः कृता पापे हरिष्यामि श्वजाघनीम्॥ ५२॥ अग्निर्मुखं पुरोधाश्च देवानां शुचिषाड़्विभूः। यथावत् सर्वभुग्ब्रह्मा तथा मां विद्धि धर्मतः॥ ५३॥ तमुवाच स चाण्डालो महर्षे शृणु मे वचः। श्रुत्वा तत्त्वं यथा तिष्ठ यथा धर्मो न हीयते॥५४॥ धर्मं तवापि विप्रर्षे शृणु यत्ते ब्रवीम्यहम्। शृगालादधमं श्वानं प्रव-

दन्ति मनीषिणः । तस्याप्यधम उद्देशः शरीरस्य श्वजाघनी ॥५५॥ नेदं सम्यक् व्यवसितं महर्षे धर्म्मगर्हितम् । चाण्डालस्वस्य हरण-मभक्ष्यस्य विशेषतः ॥५६॥ साध्वन्यमनुपश्य त्वमुपायं प्राणधारणे । न मांसलोभात्तपसो नाशस्ते स्यान्महामुने ॥५७॥ जानता विहितं धर्मं न कार्य्यो धर्म्मसङ्करः । मा स्म धर्मं परित्याक्षीस्त्वं हि धर्म-भृताम्वरः ॥ ५८ ॥ विश्वामित्रस्ततो राजन्नित्युक्तो भरतर्षभ । क्षुधार्त्तः प्रत्युवाचेदं पुनरेव महामुनिः । ५९ ॥ निराहारस्य सुमहान्मम कालोऽभिधावतः । न विद्यतेऽप्युपायश्च कश्चिन्मे प्राण-धारणे ॥ ६० ॥ येन येन विशेषेण कर्म्मणा येन केनचित् । अभ्यु-ज्जीवेत् साद्यमानः समर्थो धर्म्ममाचरेत् ॥ ६१ ॥ ऐन्द्रो धर्मः क्षत्रियाणां ब्राह्मणानामथाग्निकः । ब्रह्मवह्निर्मम बलं भक्ष्यामि शमयन् क्षुधाम् ॥६२॥ यथा यथैव जीवेद्धि तत् कर्त्तव्यमहेलया । जीवितं मरणात् श्रेयो जीवन् धर्म्ममवाप्नुयात् ॥ ६३ ॥ सोऽहं जीवितमाकाङ्क्षन्नभक्षस्यापि भक्षणम् । व्यवस्ये बुद्धिपूर्वं वै तद्भवा-नमुमन्यताम् ॥ ६४ ॥ जीवन् धर्मं चरिष्यामि प्रणोत्स्याम्यशुभानि तु । तपोभिर्विद्यया चैव ज्योतींषीव महत्तमः ॥ ६५ ॥

श्वपच उवाच । नैतत् खादन् प्राप्नुते दीर्घमायुर्नैव प्राणा-न्नामृतस्येव तृप्तिः । भिक्षामन्यां भिक्ष मा ते मनोऽस्तु श्वभक्षणे श्वा ह्यभक्ष्यो द्विजानाम् ॥ ६६ ॥

विश्वामित्र उवाच । न दुर्भिक्षे सुलभं मांसमन्यत् श्वपाक नान्यन्मम चास्ति वित्तम् । क्षुधार्त्तश्चाहमगतिर्निराशः श्वमांसे-ऽस्मिन् षड्रसान् साधु मन्ये ॥ ६७ ॥

श्वपच उवाच । पञ्च पञ्च नखा भक्ष्या ब्रह्मक्षत्रस्य वै विशः । यथा शास्त्रं प्रमाणन्ते माभक्ष्ये मानसं कृथाः ॥ ६८ ॥

विश्वामित्र उवाच । अगस्त्येनासुरो जग्धो वातापिः क्षुधितेन वै । अहमापद्गतः क्षुब्धो भक्षयिष्ये श्वजाघनीम् ॥ ६९ ॥

श्वपच उवाच। भिक्षामन्यामाहरेति न च कर्त्तुमिहार्हसि।
न नूनं कार्य्यमेतद्वै हर कामं श्वजाघनीम्॥ ७०॥

विश्वामित्र उवाच। शिष्टा वै कारणं धर्म्मे तद्वृत्तमनुवर्त्तये।
परां मेध्याशनादेनां भक्ष्यां मन्ये श्वजाघनीम्॥ ७१॥

श्वपच उवाच। असता यत् समाचीर्णं न स धर्म्मः सनातनः।
नाकार्य्यमिह कार्य्यं वै मा छलेनाशुभं कृथाः॥ ७२॥

विश्वामित्र उवाच। न पातकं नावमतमृषिः सन् कर्त्तुमर्हति।
समौ च श्वमृगौ मन्ये तस्माद्भक्ष्ये श्वजाघनीम्॥ ७३॥

श्वपच उवाच। यद्ब्राह्मणार्थे कृतमर्थितेन तेनर्षिणा तद-वस्थाधिकारे। स वै धर्म्मो यत्र न पापमस्ति सर्व्वैरुपायैर्गुरवो हि रक्ष्याः॥ ७४॥

विश्वामित्र उवाच। मित्रञ्च मे ब्राह्मणस्यायमात्मा प्रियश्च मे पूज्यतमश्च लोके। तं भर्त्तुकामोऽहमिमां जिहीर्षे नृशंसानामीदृ-शानां न बिभ्ये॥ ७५॥

श्वपच उवाच। कामं नरा जीवितं सन्त्यजन्ति न चाभक्ष्ये क्वचित कुर्व्वन्ति बुद्धिम्। सर्व्वान् कामान् प्राप्नुवन्तीह विद्वन् प्रियस्व कामं सहितः क्षुधैव॥ ७६॥

विश्वामित्र उवाच। स्थाने भवेत् संशयः प्रेत्यभावे निःसंशयः कर्म्मणां वै विनाशः। अहं पुनर्व्रतनित्यः शमात्मा मूलं रक्ष्यं भक्षयिष्याम्यभक्ष्यम्॥ ७७॥ बुद्ध्यात्मके व्यक्तमस्तीति पुण्यं मोहात्मके यत्र यथा श्वभक्षे। यद्यप्येतत् संशयात्मा चरामि नाहं भविष्यामि यथा त्वमेव॥ ७८॥

श्वपच उवाच। गोपनीयमिदं दुःखमिति मे निश्चिता मतिः।
दुष्कृतोऽब्राह्मणः सन्तं यस्त्वामहमुपालभे॥ ७९॥

विश्वामित्र उवाच। पिबन्त्येवोदकं गावो मण्डूकेषु रुवत्स्वपि।
न तेऽधिकारो धर्म्मेऽस्ति मा भूरात्मप्रशंसकः॥ ८०॥

श्वपच उवाच। सुहृद्भूत्वानुशासे त्वां कृपा हि त्वयि मे द्विज। यदिदं श्रेय अत्स्व मा लोभात् पापकं कृथाः॥ ८१॥

विश्वामित्र उवाच। सुहृन्मे त्वं सुखिप्सुश्चेदापदो मां समुद्धर। जानेऽहं धर्मतोऽत्मानं शौनीमुत्सृज्य जाम्बनीम्॥ ८२॥

श्वपच उवाच। नैवोत्सहे भवतो दातुमेतां नोपेक्षितुं क्रियमाणं स्वमन्नम्। उभौ स्यावः पापलोकावलिप्तौ दाता चाहं ब्राह्मणस्त्वं प्रतीच्छन्॥ ८३॥

विश्वामित्र उवाच। अद्याहमेतत् वृजिनं कर्म कृत्वा जीवं चरिष्यामि महापवित्रम्। स पूतात्मा धर्ममेवाभिपत्स्ये यदेतयोर्गुरु तद्दै ब्रवीहि॥ ८४॥

श्वपच उवाच। आत्मैव साक्षी कुलधर्मकृत्ये त्वमेव जानासि यदत्र दुष्कृतम्। यो ह्याद्रियाद्भक्ष्यमिति श्वमांसं मन्ये न तस्यास्ति विवर्ज्जनीयम्॥ ८५॥

विश्वामित्र उवाच। उपादाने खादने चास्ति दोषः कार्य्यात्यये नित्यमत्रापवादः। यस्मिन् हिंसा नानृतं वाच्यलेशोऽभक्षक्रिया यत्र न तद्गरीयः॥ ८६॥

श्वपच उवाच। यद्येष हेतुस्तव खादनेऽस्य न ते वेदः कारणं नार्य्यधर्मः। तस्माद्भक्षेऽभक्षणे वा द्विजेन्द्र दोषं न पश्यामि यथेदमत्र॥ ८७॥

विश्वामित्र उवाच। नैवातिपापं भक्षमाणस्य दृष्टं सुरान्तु पीत्वा पततीति शब्दः। अन्योऽन्यकार्य्याणि यथा तथैव न पापमात्रेण कृतं हिनस्ति॥ ८८॥

श्वपच उवाच। अस्थानतो हीनतः कुत्सितादा वद्विद्वांसं बाधते साधुवृत्तम्। श्वानं पुनर्यो लभतेऽभिसङ्गात्तेनापि दण्डः सहितव्य एव॥ ८९॥

भीष्म उवाच। एवमुक्त्वा निवृत्ते मातङ्गः कौशिकं तदा।

विश्वामित्रो जहारैव कृतबुद्धिः श्वजाघनीम् ॥ ९० ॥ ततो जग्राह स श्वाङ्गं जीवितार्थी महामुनिः । सदारस्तामुपाहृत्य वने भोक्तु मियेष सः ॥ ९१ ॥ तथास्य बुद्धिरभवत् विधिनाहं श्वजाघनीम् । भक्षयामि यथाकामं पूर्वं सन्तर्प्य देवताः ॥ ९२ ॥ ततोऽग्निमुपसंहृत्य ब्राह्मे ण विधिना मुनिः । ऐन्द्राग्नेयेन विधिना चरुं श्रपयत स्वयम् ॥ ९३ ॥ ततः समारभत् कर्म दैवं पित्र्यञ्च भारत । आहूय देवानिन्द्रादीन् भागं भागं विधिक्रमात् ॥ ९४ ॥ एतस्मिन्नेव काले तु प्रववर्ष स वासवः । सञ्जीवयन् प्रजाः सर्वा जनयामास चौषधीः ॥ ९५ ॥ विश्वामित्रोऽपि भगवांस्तपसा दग्धकिल्विषः । कालेन महता सिद्धिमवाप परमाद्भुताम् ॥ ९६ ॥ स संहृत्य च तत् कर्म अनास्वाद्य च तद्धविः । तोषयामास देवांश्च पितृंश्च द्विजसत्तमः ॥ ९७ ॥ एवं विद्वानदीनात्मा व्यसनस्थो जिजीविषुः । सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् ॥ ९८ ॥ एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत् । जीवन् पुण्यमवाप्नोति पुरुषो भद्रमश्नुते ॥ ९९ ॥ तस्मात् कौन्तेय विदुषा धर्माधर्मविनिश्चये । बुद्धिमास्थाय लोकेऽस्मिन् वर्त्तितव्यं कृतात्मना ॥ १०० ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि विश्वामित्रसंवादे एकचत्वारिंशदधिकशततोऽध्यायः ॥ १४१ ॥

---

युधिष्ठिर उवाच । यदि घोरं समुद्दिष्टमश्रद्धेयमिवानृतम् । अस्ति स्विद्दस्युमर्य्यादा यामहं परिवर्ज्जये ॥ १ ॥ संमुह्यामि विषीदामि धर्मो मे शिथिलीकृतः । उद्यमं नाधिगच्छामि कदाचित् परिसान्त्वयन् ॥ २ ॥

भीष्म उवाच । नैतत् श्रुत्वागमादेव तव धर्मानुशासनम् । प्रज्ञासमवहारोऽयं कविभिः संभृतं मधु ॥ ३ ॥ बह्व्यः प्रतिविधा-

तव्या प्रज्ञा राज्ञा ततस्ततः । नैकशाखेन धर्म्मेण यत्रैषा संप्रव-र्त्तते ॥ ४ ॥ बुद्धिसंजननो धर्म आचारश्च सतां सदा । ज्ञेयो भवति कौरव्य सदा तद्विद्धि मे वचः ॥ ५ ॥ बुद्धिश्रेष्ठो हि राजानश्चरन्ति विजयैषिणः । धर्मः प्रतिविधातव्यो बुद्ध्या राज्ञा ततस्ततः ॥ ६ ॥ नैकशाखेन धर्म्मेण राज्ञो धर्मो विधीयते । दुर्ब्बलस्य कुतः प्रज्ञा पुरस्तादनुपाहृता ॥ ७ ॥ अद्वैधज्ञः पथि द्वैधे संशयं प्राप्तुमर्हति । बुद्धिद्वैधं वेदितव्यं पुरस्तादेव भारत ॥ ८ ॥ पार्श्वतः करणं प्राज्ञो विष्टम्भित्वा प्रकारयेत् । जनस्तच्चरितं धर्मं विजानात्यन्यथान्यथा ॥ ९ ॥ अमिथ्याज्ञानिनः केचिन्मिथ्याविज्ञानिनः परे । तद्वै यथायथं बुद्ध्वा ज्ञानमाददते सताम् ॥ १० ॥ परिमुष्णन्ति शास्त्राणि धर्मस्य परिपन्थिनः । वैषम्यमर्थविद्यानां निरर्थाः ख्यापयन्ति ते ॥ ११ ॥ आजिजीविषवो विद्यां यशःकामौ समन्ततः । ते सर्वे नृप पापिष्ठा धर्मस्य परिपन्थिनः ॥ १२ ॥ अपक्कमतयो मन्दा न जानन्ति यथायथम् । यथा ह्यशास्त्रकुशलाः सर्वत्रायुक्तिनिष्ठिताः ॥ १३ ॥ परिमुष्णन्ति शास्त्राणि शास्त्रदोषा-नुदर्शिनः । विज्ञातमर्थं विद्यानां न सम्यगिति वर्त्तते ॥ १४ ॥ निन्दया परविद्यानां स्वविद्यां ख्यापयन्ति च । वागस्त्रा वाक्-छुरीभूता दुग्धविद्याफला इव ॥ १५ ॥ तान् विद्यावणिजो विद्धि राक्षसानिव भारत । व्याजेन सद्भिर्विहितो धर्मस्ते परिहास्यति ॥ १६ ॥ न धर्मवचनं वाचा नैव बुद्धेरनि नः श्रुतम् । इति बार्हस्पतं ज्ञानं प्रोवाच मघवा स्वयम् ॥ १७ ॥ न लेव वचनं किञ्चिदनिमित्तादिहोच्यते । सुविनीतेन शास्त्रेण न व्यवस्यन्तथा-परे ॥ १८ ॥ लोकयात्रामिहैके तु धर्मं प्राहुर्मनीषिणः । समु-द्दिष्टं सतां धर्मं स्वयमूहेत पण्डितः ॥१९॥ अमर्षाच्छास्त्रसम्मोहा-दविज्ञानाच्च भारत । शास्त्रं प्राज्ञस्य वदतः समूहे यात्यदर्शनम् ॥ २० ॥ आगतागमया बुद्ध्या न चान्येन प्रशस्यते । अज्ञानाज्

ज्ञानहेतुत्वाद्वचनं साधु मन्यते ॥ २१ ॥ अनया हतमेवेदमिति शास्त्रमपार्थकम् । दैतेयानुशना प्राह संशयच्छेदनं पुरा ॥ २२ ॥ ज्ञानमप्यपदेश्यं हि यथा नास्ति तथैव तत् । तं तथा छिन्न-मूलेन सन्नोदयितुमर्हसि ॥ २३ ॥ अन्यव्यवहितं यो वा नेदं वाक्यमुपाश्नुते । उग्रायैव हि सृष्टोऽसि कर्मणे न त्वमीहसे ॥ २४ ॥ अङ्ग मामन्ववेक्षस्व राजन्याय बुभूषते । यथा प्रमुच्यते त्वन्यो यदर्थं न प्रमोदते ॥ २५ ॥ अजोऽश्वः क्षत्रमित्येतत् सदृशं ब्रह्मणा कृतम् । तस्मादभीक्ष्णं भूतानां यात्रा काचित् प्रसिध्यति ॥ २६ ॥ यस्त्ववध्यवधे दोषः स वध्यस्यावधे स्मृतः । सा चैव खलु मर्य्यादा यामयं परिवर्ज्जयेत् ॥ २७ ॥ तस्मात्तीक्ष्णाः प्रजा राजा स्वधर्म्मे स्थापयेत्ततः । अन्योऽन्यं भक्षयन्तो हि प्रचरेयुर्वृका इव ॥ २८॥ यस्य दस्युगणा राष्ट्रे ध्वाङ्क्षा मत्स्यान् जलादिव । विहरन्ति परस्वानि स वै क्षत्रियपांसनः ॥ २९ ॥ कुलीनान् सचिवान् कृत्वा वेदविद्यासमन्वितान् । प्रशाधि पृथिवीं राजन् प्रजा धर्म्मेण पालयन् ॥ ३० ॥ विहीनं कर्म्मणान्यायं यः प्रगृह्णाति भूमिपः । उपायस्याविशेषज्ञं तद्वै क्षत्रं नपुंसकम् ॥ ३१ ॥ नैवोग्रं नैव चानुग्रं धर्म्मेणेह प्रशस्यते । उभयं न व्यतिक्रामेदुग्रो भूत्वा मृदुर्भव ॥ ३२॥ कष्टः क्षत्रियधर्म्मोऽयं सौहृदं त्वयि मे स्थितम् । उग्रकर्म्मणि सृष्टोऽसि तस्मात् राज्यं प्रशाधि वै ॥ ३३ ॥ अशिष्टनिग्रहो नित्यं शिष्टस्य परिपालनम् । एवं शुक्रोऽब्रवीद्धीमानापत्सु भरतर्षभ ॥ ३४ ॥

युधिष्ठिर उवाच । अस्ति चेदिह मर्य्यादा यामन्यो नाभि लङ्घयेत् । पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥ ३५ ॥

भीष्म उवाच । ब्राह्मणानेव सेवेत विद्यावृद्धांस्तपस्विनः । श्रुतचारित्रवृत्ताढ्यान् पवित्रं ह्येतदुत्तमम् ॥ ३६ ॥ या देवतासु वृत्तिस्ते सास्तु विप्रेषु नित्यदा । क्रुद्धैर्हि विप्रैः कर्माणि कृतानि

बहुधा नृप ॥३७॥ प्रीत्या यशो भवेन्मख्यमप्रीत्या परमं भयम् । प्रीत्या ह्यमृतवद्विप्राः क्रुद्धाश्चैव विषं तथा ॥ ३८ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि
द्विचत्वारिंशदधिकशतोऽध्यायः॥ १४२ ॥

---

युधिष्ठिर उवाच । पितामह महाप्राज्ञ सर्वशास्त्रविशारद । शरणं पाल्यमानस्य यो धर्मस्तं ब्रवीहि मे ॥ १ ॥

भीष्म उवाच। महान् धर्मो महाराज शरणागतपालने । अर्हः प्रष्टुं भवांश्चैव प्रश्नं भरतसत्तम ॥ २ ॥ शिबिप्रभृतयो राजन्राजानः शरणागतान् । परिपाल्य महात्मानः संसिद्धिं परमाङ्गताः ॥ ३ ॥ श्रूयते च कपोतेन शत्रुः शरणमागतः । पूजितश्च यथा न्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ ४ ॥

युधिष्ठिर उवाच । कथं कपोतेन पुरा शत्रुः शरणमागतः । स्वमांसं भोजितः काञ्च गतिं लेभे स भारत ॥ ५ ॥

भीष्म उवाच । शृणु राजन् कथां दिव्यां सर्वपापप्रणाशिनीम् । नृपतेर्मुचकुन्दस्य कथितां भार्गवेन वै ॥ ६ ॥ इममर्थं पुरा पार्थ मुचुकुन्दो नराधिपः । भार्गवं परिपप्रच्छ प्रणतः पुरुषर्षभ ॥७॥ तस्मै शुश्रूषमाणाय भार्गवोऽकथयत् कथाम् । इमां यथा कपोतेन सिद्धिः प्राप्ता नराधिप ॥ ८ ॥

मुनिरुवाच । धर्मनिश्चयसंयुक्तां कामार्थसहितां कथाम् । शृणुष्वावहितो राजन् गदतो मे महाभुज ॥ ९ ॥ कश्चित् क्षुद्रसमाचारः पृथिव्यां कालसम्मितः । विचचार महारण्ये घोरः शकुनिलुब्धकः ॥ १० ॥ काकोल इव कृष्णाङ्गो रक्ताक्षः कालसम्मितः । दीर्घजङ्घो ह्रस्वपादो महावक्त्रो महाहनुः ॥ ११ ॥ नैव तस्य सुहृत् कश्चिन्न सम्बन्धी न बान्धवः । स हि तैः सम्परि-

त्यक्तस्तेन रौद्रेण कर्म्मणा ॥ १२ ॥ नरः पापसमाचारस्त्यक्तव्यो दूरतो बुधैः। आत्मानं योऽभिसंधत्ते सोऽन्यस्य स्यात् कथं हितः ॥ १३ ॥ ये नृशंसा दुरात्मानः प्राणिप्राणहरा नराः। उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥ १४ ॥ स वै चारकमादाय द्विजान् हत्वा वने सदा। चकार विक्रयं तेषां पतङ्गानां जनाधिप ॥ १५ ॥ एवन्तु वर्त्तमानस्य तस्य वृत्तिं दुरात्मनः। अगमत् सुमहान् कालो न चाधर्म्ममबुध्यत ॥ १६ ॥ तस्य भार्य्यासहायस्य रममाणस्य शाश्वतम्। दैवयोगविमूढ़स्य नान्या वृत्तिररोचत ॥ १७ ॥ ततः कदाचित्तस्याथ वनस्थस्य समन्ततः। पातयन्निव वृक्षांस्तान् सुमहान् वातसम्भ्रमः ॥ १८ ॥ मेघसङ्कुलमाकाशं विद्युन्मण्डलमण्डितम्। संछन्नस्तु मुहूर्त्तेन नौसार्थैरिव सागरः ॥ १९ ॥ वारिधारासमूहेन संप्रवृष्टः शतक्रतुः। क्षणेन पूरयामास सलिलेन वसुन्धराम् ॥ २० ॥ ततो धाराकुले काले सम्भ्रमन्नष्टचेतनः। शीतार्त्तस्तद्वनं सर्वमाकुलेनात्मरात्मना ॥ २१ ॥ नैव निम्नं स्थलं वापि सोऽविन्दत विहङ्गहा। पूरितो हि जलौघेन तस्य मार्गो वनस्य तु ॥ २२ ॥ पक्षिणो वर्षवेगेण हता लीनास्तदाभवन्। मृगाः सिंहा वराहाश्च स्थलमाश्रित्य शेरते ॥ २३ ॥ महता वातवर्षेण त्रासितास्ते वनौकसः। भयार्त्ताश्च क्षुधार्त्ताश्च बभ्रमुः सहिता वने ॥ २४ ॥ स तु शीतहतैर्गात्रैर्न जगाम न तस्थिवान्। ददर्श पतितां भूमौ कपोतीं शीतविह्वलाम् ॥ २५ ॥ दृष्ट्वार्त्तोऽपि हि पापात्मा स तां पञ्जरकेऽक्षिपत्। स्वयं दुःखाभिभूतोऽपि दुःखमेवाकरोत् परे ॥ २६ ॥ पापात्मा पापकारित्वात् पापमेव चकार सः। सोऽपश्यद्वनषण्डेषु मेघनीलं वनस्पतिम् ॥ २७ ॥ सव्यमानं विहङ्गौघैश्छायावासफलार्थिभिः। धात्रा परोपकाराय स साधुरिव निर्मितः ॥ २८ ॥ अथाभवत् क्षणेनैव वियद्विमलतारकम्। महत्सर इवोत्फुल्लं कुमुदच्छुरितोदकम् ॥ २९ ॥ ताराढ्यं कुमु-

द्वाकारमाकाशं निर्म्मलं बहु । घनैर्मुक्तं दृष्ट्वा लुब्धकः शीत-
विह्वलः । दिशो विलोकयामास विगाढ़ां प्रेक्ष्य शर्वरीम् ॥ ३० ॥
दूरतो मे निवेशश्च अस्माद्देशादिति प्रभो । कृतबुद्धिर्द्रुमे तस्मिन्
वस्तुं तां रजनीं ततः ॥ ३१ ॥ साञ्जलिः प्रणतिं कृत्वा वाक्यमाह
वनस्पतिम् । शरणं यामि यान्यस्मिन् दैवतानि वनस्पतौ ॥ ३२ ॥
स शिलायां शिरः कृत्वा पर्णान्यास्तीर्य्य भूतले । दुःखेन महता-
विष्टस्ततः सुष्वाप पक्षिहा ॥ ३३ ॥

इति शान्तिपर्व्वणि राजधर्मानुशासनपर्व्वणि कपोतलुब्धक-
संवादे त्रिचत्वारिंशदधिकशतोऽध्यायः ॥ १४३ ॥

---

भीष्म उवाच । अथ वृक्षस्य शाखायां विहङ्गः ससुहृज्जनः ।
दीर्घकालोषितो राजन् तत्र चित्रतनूरुहः ॥ १ ॥ तस्य कल्यं गता
भार्य्या चरितुं नाभ्यवर्त्तत । प्राप्तान्तु रजनीं दृष्ट्वा स पक्षी पर्य्य-
तप्यत ॥ २ ॥ वातवर्षं महच्चासीन्न चागच्छति मे प्रिया । किन्नु
तत् कारणं येन साद्यापि न निवर्त्तते ॥ ३ ॥ अपि स्वस्ति भवे-
त्तस्याः प्रियाया मम कानने । तथा विरहितं हीदं शून्यमद्य गृहं
मम ॥ ४ ॥ पुत्रपौत्रबधूभृत्यैराकीर्णमपि सर्वतः । भार्य्याहीनं
गृहस्थस्य शून्यमेव गृहं भवेत् ॥ ५ ॥ न गृहं गृहमित्याहुर्गृहिणी
गृहमुच्यते । गृहन्तु गृहिणीहीनमरण्यसदृशं मतम् ॥ ६ ॥ यदि
सा रक्तनेत्रान्ता चित्राङ्गी मधुरस्वरा । अद्य नायाति मे कान्ता
न कार्य्यं जीवितेन मे ॥ ७ ॥ न भुङ्क्ते मय्यभुक्ते या नास्नाते
स्नाति सुव्रता । नातिष्ठत्युपतिष्ठेत न शेतेऽशयिते मयि ॥ ८ ॥
हृष्टे भवति सा हृष्टा दुःखिते मयि दुःखिता । प्रोषिते दीनवदना
क्रुद्धे च प्रियवादिनी ॥ ९ ॥ पतिव्रता पतिगतिः पतिप्रियहिते
रता । यस्य स्यात्तादृशी भार्य्या धन्यः स पुरुषो भुवि ॥ १० ॥

सा हि श्रान्तं क्षुधार्त्तञ्च जानीते मां तपस्विनी । अनुरक्ता स्थिरा चैव भक्ता स्निग्धा यशस्विनी ॥ ११ ॥ वृक्षमूलेऽपि दयिता यस्य तिष्ठति तद्गृहम् । प्रासादेऽपि तया हीनः कान्तार इति निश्चितम् ॥ १२ ॥ धर्मार्थकामकालेषु भार्य्या पुंसः सहायिनी । विदेशगमने चास्य सैव विश्वासकारिका ॥ १३ ॥ भार्य्या हि परमो ह्यर्थः पुरुषस्येह पठ्यते । असहायस्य लोकेऽस्मिन् लोकयात्रासहायिनी ॥ १४ ॥ तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च । नास्ति भार्य्यासमं किञ्चित् नरस्यार्त्तस्य भेषजम् ॥ १५ ॥ नास्ति भार्य्यासमो बन्धुर्नास्ति भार्य्यासमा गतिः । नास्ति भार्य्यासमो लोके सहायो धर्मसंग्रहे ॥ १६ ॥ यस्य भार्य्या गृहे नास्ति साध्वी च प्रियवादिनी । अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥१७॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि भार्य्याप्रशंसायांचतुश्चत्वारिंशदधिकशतोऽध्यायः ॥ १४४ ॥

---

भीष्म उवाच । एवं विलपतस्तस्य श्रुत्वा तु करुणं वचः । गृहीता शकुनिघ्नेन कपोती वाक्यमब्रवीत् ॥ १ ॥

कपोत्युवाच । अहोऽतीव सुभाग्याहं यस्या मे दयितः पतिः । असतो वा सतो वापि गुणानेवं प्रभाषते ॥ २ ॥ न सा स्त्री ह्यभिमन्तव्या यस्यां भर्त्ता न तुष्यति । तुष्टे भर्त्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ॥ ३ ॥ अग्निसाक्षिकमित्येव भर्त्ता वै दैवतं परम् ॥ ४ ॥ दावाग्निनेव निर्द्दग्धा सपुष्पस्तवका लता । भस्मीभवति सा नारी यस्या भर्त्ता न तुष्यति ॥ ५ ॥ इति सञ्चिन्त्य दुःखार्त्ता भर्त्तारं दुःखितं तदा । कपोती लुब्धकेनापि गृहीता वाक्यमब्रवीत् ॥ ६ ॥ हन्त वक्ष्यामि ते श्रेयः श्रुत्वा तु कुरु तत्तथा । शरणागतसन्त्राता भव कान्त विशेषतः ॥ ७ ॥ एष शाकुनिकः शेते तवावासं समा-

श्रितः । शीतार्त्तश्च क्षुधार्त्तश्च पूजामस्मै समाचर ॥ ८॥ यो हि कश्चिद्द्विजं हन्याद्गाञ्च लोकस्य मातरम् । शरणागतञ्च यो हन्यात् तुल्यं तेषाञ्च पातकम् ॥ ९ ॥ यास्माकं विहिता वृत्तिः कपोती जातिधर्म्मतः । सा न्याय्यात्मवता नित्यं तद्विधेनानुवर्त्तितुम् ॥ १० ॥ यस्तु धर्मं यथाशक्ति गृहस्थो ह्यनुवर्त्तते । स प्रेत्य लभते लोकानक्षयानिति शुश्रुम ॥ ११ ॥ स त्वं सन्तानवानद्य पुत्रवानसि च द्विज । तत् स्वदेहे दयां त्यक्त्वा धर्मार्थौ परिगृह्य च । पूजामस्मै प्रयुङ्क्ष्व त्वं प्रीयेतास्य मनो यथा ॥ १२ ॥ मत्कृते मा च सन्तापं कुर्व्वीथास्त्वं विहङ्गम । शरीरयात्राकृत्यार्थमन्यान् दारानुपैष्यसि ॥ १३ ॥ इति सा शकुनी वाक्यं पञ्जरस्था तपस्विनी । अतिदुःखान्विता प्राह भर्त्तारं समुदीक्ष्य च ॥ १४ ॥

इति शान्तिपर्व्वणि आपद्धर्मानुशासनपर्व्वणि कपोतलुब्धकसम्वादे पञ्चचत्वारिंशदधिकशतोऽध्यायः ॥ १४५ ॥

---

भीष्म उवाच । स पत्न्या वचनं श्रुत्वा धर्मयुक्तिसमन्वितम् । हर्षेण महता युक्तो वाष्पव्याकुललोचनः ॥ १ ॥ तं वै शाकुनिकं दृष्ट्वा विधिदृष्टेन कर्मणा । पूजयामास यत्नेन स पक्षी पक्षीजीविनम् ॥ २ ॥ उवाच स्वागतं तेऽद्य ब्रूहि किं करवाणि ते । सन्तापश्च न कर्त्तव्यः स्वगृहे वर्त्तते भवान् ॥ ३ ॥ तद्ब्रवीतु भवान् क्षिप्रं किं करोमि किमिच्छसि । प्रणयेन ब्रवीमि त्वां त्वं हि नः शरणागतः ॥ ४ ॥ अरावप्युचितं कार्य्यमातिथ्यं गृहमागते । छेत्तुमप्यागते छायां नोपसंहरते द्रुमः ॥ ५ ॥ शरणागतस्य कर्त्तव्यमातिथ्यं हि प्रयत्नत । पञ्चयज्ञप्रवृत्तेन गृहस्थेन विशेषतः ॥ ६ ॥ पञ्चयज्ञांस्तु यो मोहात् न करोति गृहाश्रमे । तस्य नायं न च

परो लोको भवति धर्मतः॥ ७॥ तद्ब्रूहि मां सुविस्रब्धो यत्त्वं वाचा वदिष्यसि। तत् करिष्याम्यहं सर्वं मा त्वं शोके मनः कृथाः॥ ८॥ तस्य तद्वचनं श्रुत्वा शकुनिं लुब्धकोऽब्रवीत्। बाधते खलु मां शीतं हिमत्राणं विधीयताम्॥ ९॥ एवमुक्तस्ततः पक्षी पर्णान्यास्तीर्य्य भूतले। यथा शक्त्या हि पर्णेन ज्वलनार्थं द्रुतं ययौ॥ १०॥ गत्वाङ्गारककर्मान्तं गृहीत्वाग्निमथागमत्। ततः शुष्केषु पर्णेषु पावकं सोऽप्यदीपयत्॥ ११॥ स संदीप्तं महत् कृत्वा तमाह शरणागतम्। प्रतापय सुविस्रब्धः स्वगात्राण्यकुतोभयः॥ १२॥ स तथोक्तस्तथेत्युक्त्वा लुब्धो गात्राण्यपातयत्। अग्निप्रत्यागतप्राणस्ततः प्राह विहङ्गमम्॥ १३॥ दत्तमाहारमिच्छामि त्वया क्षुद्बाधते हि माम्। स तद्वचः प्रतिश्रुत्य वाक्यमाह विहङ्गमः॥ १४॥ न मेऽस्ति विभवो येन नाशयेयं क्षुधान्तव। उत्पन्नेन हि जीवामो वयं नित्यं वनौकसः॥ १५॥ सञ्चयो नास्ति चास्माकं मुनीनामिव भोजने। इत्युक्त्वा तं तदा तत्र विवर्णवदनोऽभवत्॥ १६॥ कथं नु खलु कर्त्तव्यमिति चिन्तापरस्तदा। बभूव भरतश्रेष्ठ गर्हयन् वृत्तिमात्मनः॥ १७॥ मुहूर्त्ताल्लब्धसंज्ञस्तु स पक्षी पक्षिघातिनम्। उवाच तर्पयिष्ये त्वां मुहूर्त्तं प्रतिपालय॥ १८॥ इत्युक्त्वा शुष्कपर्णैस्तु समुज्ज्वाल्य हुताशनम्। हर्षेण महताविष्टः स पक्षी वाक्यमब्रवीत्॥ १९॥ ऋषीणां देवतानाञ्च पितॄणाञ्च महात्मनाम्। श्रुतः पूर्वं मया धर्मो महानतिथिपूजने॥ २०॥ कुरुष्वानुग्रहं सौम्य सत्यमेतद् ब्रवीमि ते। निश्चिता खलु मे बुद्धिरतिथिप्रतिपूजने॥ २१॥ ततः कृतप्रतिज्ञो वै स पक्षी प्रहसन्निव। तमग्निं त्रिः परिक्रम्य प्रविवेश महामतिः॥ २२॥ अग्निमध्यं प्रविष्टन्तु लुब्धो दृष्ट्वा तु पक्षिणम्। चिन्तयामास मनसा किमिदं वै मया कृतम्॥ २३॥ अहो मम नृशंसस्य गर्हितस्य स्वकर्मणा। अधर्मः सुमहान् घोरो भविष्यति न

संशयः ॥ २४ ॥ एवं बहुविधं भूरि विललाप स लुब्धकः । गर्ह-
यन् स्वानि कर्माणि द्विजं दृष्ट्वा तथागतम् ॥ २५ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि कपोतलुब्धक-
संवादे षट्चत्वारिंशदधिकशततोऽध्यायः ॥ १४६ ॥

---

भीष्म उवाच । ततः स लुब्धकः पश्यन् क्षुधयाभिपरिप्लुतः ।
कपोतमग्नौ पतितं वाक्यं पुनरुवाच ह ॥ १ ॥ किमीदृशं नृशंसेन
मया कृतमबुद्धिना । भविष्यति हि मे नित्यं पातकं कृशजीविनः
॥ २ ॥ स विनिन्दंस्तथात्मानं पुनः पुनरुवाच ह । अविश्वास्यः
सुदुर्बुद्धिः सदा निकृतिनिश्चयः ॥ ३ ॥ शुभं कर्म परित्यज्य योऽहं
शकुनिलुब्धकः । नृशंसस्य ममाद्यायं प्रत्यादेशो न संशयः । दत्तः
स्वमांसं दहता कपोतेन महात्मना ॥ ४ ॥ सोऽहं त्यक्ष्ये प्रियान्
प्राणान् पुत्रान् दारान् विसृज्य च । उपदिष्टो हि मे धर्मः कपो-
तेन महात्मना ॥ ५ ॥ अद्यप्रभृति देहं स्वं सर्वभोगैर्विवर्ज्जितम् ।
यथा स्वल्पं सरो ग्रीष्मे शोषयिष्याम्यहं तथा ॥ ६ ॥ क्षुत्पिपासा-
तपसहः कृशो धमनिसन्ततः । उपवासैर्बहुविधैश्चरिष्ये पारलौकि-
कम् ॥ ७ ॥ अहो देहप्रदानेन दर्शितातिथिपूजना । तस्माद्धर्मं
चरिष्यामि धर्मो हि परमा गतिः । दृष्टो धर्मो हि धर्मिष्ठे यादृशो
विहगोत्तमे ॥ ८ ॥ एवमुक्त्वा विनिश्चित्य रौद्रकर्मा स लुब्धकः ।
महाप्रस्थानमाश्रित्य प्रययौ संशितव्रतः ॥ ९ ॥ ततो यष्टिं शला-
काञ्च जालकं पञ्जरं तथा । तांश्च बद्धां कपोतीं स प्रमुच्य विस-
सर्ज्ज ह ॥ १० ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि कपोतलुब्धक-
सम्वादे सप्तचत्वारिंशदधिकशततोऽध्यायः ॥ १४७ ॥

---

भीष्म उवाच। ततो गते शकुनिके कपोती प्राह दुःखिता। संस्मृत्य सा च भर्त्तारं रुदती शोककर्षिता ॥ १ ॥ नाहं ते विप्रियं कान्त कदाचिदपि संस्मरे। सर्वापि विधवा नारी बहुपुत्रापि शोचते। शोच्या भवति बन्धूनां पतिहीना तपस्विनी ॥२ ॥ लालिताहं त्वया नित्यं बहुमानाच्च पूजिता। वचनैर्मधुरैः स्निग्धैरसंक्लिष्टमनोहरैः ॥ ३ ॥ कन्दरेषु च शैलानां नदीनां निर्झरेषु च। द्रुमाग्रेषु च रम्येषु रमिताहं त्वया सह ॥ ४ ॥ आकाशगमने चैव विहृताहं त्वया सुखम्। रमामि स्म पुरा कान्त तन्मे नास्त्यद्य किञ्चन ॥ ५ ॥ मितं ददाति हि पिता मितं भ्राता मितं सुतः। अमितस्य हि दातारं भर्त्तारं का न पूजयेत् ॥ ६ ॥ नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखम्। विसृज्य धनसर्वस्वं भर्त्ता वै शरणं स्त्रियाः ॥ ७ ॥ न कार्य्यमिह मे नाथ जीवितेन त्वया विना। पतिहीना तु का नारी सती जीवितुमुत्सहेत् ॥ ८ ॥ एवं विलप्य बहुधा करुणं सा सुदुःखिता। पतिव्रता संप्रदीप्तं प्रविवेश हुताशनम् ॥ ९ ॥ ततश्चित्राङ्गदधरं भर्त्तारं सान्वपश्यत। विमानस्थं सुकृतिभिः पूज्यमानं महात्मभिः ॥ १० ॥ चित्रमाल्याम्बरधरं सर्वाभरणभूषितम्। विमानशतकोटीभिरावृतं पुण्यकर्मभिः ॥ ११ ॥ ततः स्वर्गं गतः पक्षी विमानवरमास्थितः। कर्मणा पूजितस्तत्र रेमे स सह भार्य्यया ॥ १२ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि कपोतलुब्धकसंवादे अष्टचत्वारिंशदधिकशतोऽध्यायः ॥ १४८ ॥

---

भीष्म उवाच। विमानस्थौ तु तौ राजन् लुब्धकः खे ददर्श ह। दृष्ट्वा तौ दम्पती दुःखादचिन्तयत तां गतिम् ॥ १ ॥ ईदृ-

येनैव तपसा गच्छेयं परमां गतिम्। इति बुद्ध्या विनिश्चित्य गमनायोपचक्रमे ॥ २ ॥ महाप्रस्थानमाश्रित्य लुब्धकः पक्षिजीवकः। निश्चेष्टो मरुदाहारो निर्म्ममः स्वर्गकाङ्क्षया ॥ ३ ॥ ततोऽपश्यत् सुविस्तीर्णं हृद्यं पद्माभिभूषितम्। नानापक्षिगणाकीर्णं सरः शीतजलं शिवम् ॥ ४ ॥ पिपासार्त्तोऽपि तद्दृष्ट्वा तृप्तः स्यान्नात्र संशयः। उपवासकृशोऽत्यर्थं स तु पार्थिव लुब्धकः ॥ ५ ॥ अनवेक्ष्यैव संहृष्टः श्वापदाध्युषितं वनम्। महान्तं निश्चयं कृत्वा लुब्धकः प्रविवेश ह। प्रविशन्नेव स वनं निगृहीतः स कण्टकैः ॥ ६ ॥ स कण्टकैर्विभिन्नाङ्गो लोहितार्द्रीकृतच्छविः। वभ्राम तस्मिन् विजने नानामृगसमाकुले ॥ ७ ॥ ततो द्रुमाणां महतां पवनेन वने तदा। उदतिष्ठत सङ्घर्षात् सुमहान् हव्यवाहन ॥८॥ तद्वनं वृक्षसम्पूर्णं लताविटपसंकुलम्। ददाह पावकः क्रुद्धो युगान्ताग्निसमप्रभः ॥ ९ ॥ स ज्वालैः पवनोद्धूतैर्विस्फुलिङ्गैः समन्ततः। ददाह तद्वनं घोरं मृगपक्षिसमाकुलम् ॥ १० ॥ ततः स देहमोक्षार्थं संहृष्टेन प्रचेतसा। अभ्यधावत वर्द्धन्तं पावकं लुब्धकस्तदा ॥ ११ ॥ ततस्तेनाग्निना दग्धो लुब्धको नष्टकल्मषः। जगाम परमां सिद्धिं ततो भरतसत्तम ॥ १२ ॥ ततः स्वर्गस्थमात्मानमपश्यद्विगतज्वरः। यक्षगन्धर्वसिद्धानां मध्ये भ्राजन्तमिन्द्रवत् ॥१३॥ एवं खलु कपोतश्च कपोती च पतिव्रता। लुब्धकेन सह स्वर्गं गताः पुण्येन कर्म्मणा ॥ १४ ॥ यापि चैवं विधा नारी भर्त्तारमनुवर्त्तते। विराजते हि सा क्षिप्रं कपोतीव दिविस्थिता ॥१५॥ एवमेतत् पुरावृत्तं लुब्धकस्य महात्मनः। कपोतस्य च धर्मिष्ठा गतिः पुण्येन कर्म्मणा ॥ १६ ॥ यश्चेदं शृणुयान्नित्यं यश्चेदं परिकीर्त्तयेत्। नाशुभं विद्यते तस्य मनसापि प्रमादतः ॥ १७ ॥ युधिष्ठिर महानेष धर्मो धर्मभृताम्वर। गोघ्नेष्वपि भवेदस्मिन्निष्कृतिः पापकर्म्मणः ॥ १८ ॥ न निष्कृतिर्भवेत्तस्य यो हन्या-

च्छरणागतम्। इतिहासमिमं श्रुत्वा पुण्यं पापप्रणाशनम्। न दुर्गतिमवाप्नोति स्वर्गलोकञ्च गच्छति ॥ १९ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि कपोतलुब्धक-सम्वादे एकोनपञ्चाशदधिकशततोऽध्यायः ॥ १४९ ॥

---

युधिष्ठिर उवाच। अबुद्धिपूर्वं यः पापं कुर्य्याद्भरतसत्तम। मुच्यते स कथं तस्मादेतत् सर्वं ब्रवीहि मे ॥ १ ॥

भीष्म उवाच। अत्र ते वर्त्तयिष्यामि पुराणमृषिसंस्तुतम्। इन्द्रोतः शौनको विप्रो यदाह जनमेजयम् ॥ २ ॥ आसीद्राजा महावीर्य्यः पारीक्षिज्जनमेजयः। अबुद्धिपूर्वमागच्छद्ब्रह्महत्यां महीपतिः ॥ ३ ॥ तं ब्राह्मणाः सर्व एव तत्यजुः सपुरोहिताः। स जगाम वनं राजा दह्यमानो दिवानिशम् ॥ ४ ॥ प्रजाभिः स परित्यक्तश्चकार कुशलं महत्। अतिवेलं तपस्तेपे दह्यमानः स मन्युना ॥ ५ ॥ ब्रह्महत्यापनोदार्थमपृच्छद्ब्राह्मणान् बहून्। पर्य्यटन् पृथिवीं कृत्स्नां देशे देशे नराधिप ॥ ६ ॥ तत्रेतिहासं वक्ष्यामि धर्मस्यास्योपबृंहनम्। दह्यमानः पापकृत्या जगाम जनमेजयः ॥ ७ ॥ चरिष्यमाण इन्द्रोतं शौनकं संशितव्रतम्। समासाद्योपजग्राह पादयोः परिपीड़यन् ॥ ८ ॥ ऋषिर्दृष्ट्वा नृपं तत्र जगर्हे सुभृशं तदा। कर्त्ता पापस्य महतो भ्रूणहा किमिहागतः ॥ ९ ॥ किन्त्वयास्मासु कर्त्तव्यं मा मांस्प्राक्षीः कथञ्चन। गच्छ गच्छ न ते स्थानं प्रीणात्यस्मानिति ब्रुवन् ॥ १० ॥ रुधिरस्येव ते गन्धः शवस्येव च दर्शनम्। अशिवः शिवसङ्काशो मृतो जीवन्निवाटसि ॥ ११ ॥ अन्तर्मृत्युरशुद्धात्मा पापमेवानुचिन्तयन्। प्रबुध्यसे प्रस्वपिषि वर्त्तसे परमेऽसुखे ॥ १२ ॥ मोघन्ते जीवितं राजन् परिक्लिष्टञ्च जीवसि। पापायैव हि सृष्टोऽसि कर्मणे हि यवीयसे ॥ १३ ॥ बहुकल्याणमिच्छन्त ईहन्ते पितरः सुतान्। तपसा

दैवतेज्याभिर्वन्दनेन तितिक्षया ॥ १४ ॥ पितृवंशमिमं पश्य त्वत्-कृते नरकं गतम् । निरर्थाः सर्व एवैषमाशाबन्धास्त्वदाश्रयाः ॥१५॥ यान् पूजयन्तो विन्दन्ति स्वर्गमायुर्यशः प्रजाः । तेषु त्वमवाङ्मूर्द्धा द्वेष्टा ब्राह्मणेषु निरर्थकः ॥ १६ ॥ इमं लोकं विमुच्य त्वं सततं पतिष्यसि । अशाश्वतीः शाश्वतीश्च समाः पापेन कर्मणा ॥ १७ ॥ अर्द्द्यमानो यत्र गृध्रैः शितिकण्ठैरयोमुखैः । ततश्च पुनरावृत्य पापयोनिं गमिष्यसि ॥ १८ ॥ यदि त्वं मन्यसे राजन्नायमस्ति कुतः परः । प्रतिस्मारयितारस्त्वां यमदूता यमक्षये ॥ १९ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि इन्द्रोतजनमेजय-सम्वादे पञ्चाशदधिकशतोऽध्यायः ॥ १५० ॥

---

भीष्म उवाच । एवमुक्तः प्रत्युवाच तं मुनिं जनमेजयः । गर्ह्यं भवान् गर्हयति निन्द्यं निन्दति मां पुनः ॥ १ ॥ धिक्कार्य्यं मां धिक्कुरुते तस्मात्त्वाहं प्रसादये । सर्वं ह्येदं दुष्कृतं मे ज्वलाम्यग्नाविवाहितः ॥ २ ॥ स्वकर्माण्यभिसन्धाय नाभिनन्दति मे मनः । प्राप्तं घोरं भयं नूनं मया वैवस्वतादधि ॥ ३ ॥ तत्तु शल्यमनिर्हृत्य कथं शक्ष्यामि जीवितुम् । सर्वं मन्युं विनीय त्वमभि मां वद शौनक ॥ ४ ॥ महानासं ब्राह्मणानां भूयो वक्ष्यामि साम्प्रतम् । अस्तु शेषं कुलस्यास्य मा पराभूदिदं कुलम् ॥ ५ ॥ न हि ब्राह्मण-शस्तानां शेषो भवितुमर्हति । स्तुतीरलभमानानां सम्विदं वेद-निश्चयात् । निर्विद्यमानः सुभृशं भूयो वक्ष्यामि साम्प्रतम् ॥ ६ ॥ भूयश्चैवाभिरक्षन्ति निर्धनान्निर्ज्जना इव ॥ ७ ॥ न ह्ययज्ञा अमुं लोकं प्राप्नुवन्ति कथञ्चन । अपातान् प्रतितिष्ठन्ति पुलिन्दशवरा इव ॥ ८ ॥ अविज्ञायैव मे प्रज्ञां बालस्येव सुपण्डितः । ब्रह्मन् पितेव पुत्रस्य प्रीतिमान् भव शौनक ॥ ९ ॥

शौनक उवाच। किमाश्चर्य्यं यदप्राज्ञो बहु कुर्य्यादसाम्प्रतम्। इति वै पण्डितो भूत्वा भूतानां नानुकुप्यते ॥ १० ॥ प्रज्ञाप्रासादमारुह्य अशोच्यः शोचते जनान्। जगतीस्थानिवाद्रिस्थः प्रज्ञया प्रतिपत्स्यति ॥ ११ ॥ न चोपलभते भद्रं न च कार्य्याणि पश्यति। निर्विण्णो वा परोक्षो वा धिक्कृतः सर्वसाधुषु ॥ १२ ॥ विदितं भवतो वीर्य्यं माहात्म्यं वेद आगमे। कुरुष्वेह यथाशान्ति ब्रह्म शरणमस्तु ते ॥ १३ ॥ तद्वै पारत्रिकं तात ब्राह्मणानामकुप्यताम्। अथ वा तप्यते पापे धर्ममेवानुपश्य वै ॥ १४ ॥

जनमेजय उवाच। अनुतप्ये च पापेन न च धर्मं विलोपये। बुभूषुं भजमानञ्च प्रीतिमान् भव शौनक ॥ १५ ॥

शौनक उवाच। छित्त्वा दम्भञ्च मानञ्च प्रीतिमिच्छामि ते नृप। सर्वभूतहिते तिष्ठ धर्मञ्चैव प्रतिस्मरन् ॥ १६ ॥ न भयान्न च कार्पण्यान्न लोभात्त्वामुपाह्वये। तां मे दैवीं गिरं सत्यां शृणु त्वं ब्राह्मणैः सह ॥ १७ ॥ सोऽहं न केनचिच्चार्थी त्वाञ्च धर्मादुपाह्वये। क्रोशतां सर्वभूतानां हाहाधिगिति जल्पताम् ॥ १८ ॥ वक्ष्यन्ति मामधर्मज्ञं त्यक्ष्यन्ति सुहृदो जनाः। ता वाचः सुहृदः श्रुत्वा संज्वरिष्यन्ति मे भृशम् ॥ १९ ॥ केचिदेव महाप्राज्ञाः प्रतिज्ञास्यन्ति तत्त्वतः। जानीहि मे कृतं तात ब्राह्मणान् प्रति भारत ॥ २० ॥ यथा ते मत्कृते क्षेमं लभेरंस्तत्तथा कुरु। प्रतिजानीहि चाद्रोहं ब्राह्मणानां नराधिप ॥ २१ ॥

जनमेजय उवाच। नैव वाचा न मनसा पुनर्ज्जातु न कर्मणा। द्रोग्धास्मि ब्राह्मणान् विप्र चरणावपि ते स्पृशे ॥ २२ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि इन्द्रोतजनमेजयसंवादे एकपञ्चाशदधिकशतोऽध्यायः ॥ १५१ ॥

---

शौनक उवाच। तस्मात्तेऽहं प्रवक्ष्यामि धर्ममावृत्तचेतसे। श्रीमन्महाबलस्तुष्टः स्वयं धर्ममवेचसे॥ १॥ परस्ताद्दारुणो भूत्वा सुचित्रतरमेव तत्। अनुगृह्णाति भूतानि स्वेन वृत्तेन पार्थिवः॥२॥ कृत्स्नं लोकं स दहति इति लोको व्यवस्यति। यत्र त्वं तादृशो भूत्वा धर्म्ममेवानुपश्यसि॥ ३॥ हित्वा तु सुचिरं भक्ष्यं भोज्यांश्च तप आस्थितः। इत्येतदभिभूतानामद्भुतं जनमेजय॥ ४॥ योऽदुर्लभो भवेद्दाता कृपणो वा तपोधनः। अनाश्चर्य्यं तदित्याहु-र्नातिदूरेण वर्त्तते॥ ५॥ एतदेव हि कार्पण्यं समग्रमसमीक्षितम्। यच्चेत् समीक्षयैव स्यात् भवेत्तस्मिंस्ततो गुणः॥ ६॥ यज्ञो दानं दया वेदाः सत्यञ्च पृथिवीपते। पञ्चैतानि पवित्राणि षष्ठं सुचरितं तपः। तदेव राज्ञां परमं पवित्रं जनमेजय॥ ७॥ तेन सम्यग्-गृहीतेन श्रेयांसं धर्ममाप्स्यसि। पुण्यदेशाभिगमनं पवित्रं परमं स्मृतम्॥ ८॥ अत्राप्युदाहरन्तीमां गाथां गीतां ययातिना। यो मर्त्त्यः प्रतिपद्येत आयुर्जीवितमात्मनः। यज्ञमेकान्ततः कृत्वा तत् संन्यस्य तपश्चरेत्॥ ९॥ पुण्यमाहुः कुरुक्षेत्रं कुरुक्षेत्रात् सरस्वतीम्। सरस्वत्याश्च तीर्थानि तीर्थेभ्यश्च पृथूदकम्। यत्राव-गाह्य पीत्वा च नैनं श्वो मरणं तपेत्॥ १०॥ महासरः पुष्कराणि प्रभासोत्तरमानसे। कालोदकञ्च गन्तासि लब्धायुर्जीविते पुनः॥ ११॥ सरस्वतीदृषद्वत्यौ सङ्गमो मानसः सरः। स्वाध्यायशीलः स्थानेषु सर्वेष्वेवमुपस्पृशेत्। त्यागधर्म्मः पवित्राणां सन्न्यासं मनु-रब्रवीत्॥ १२॥ अत्राप्युदाहरन्तीमा गाथाः सत्यवता कृता। यथा कुमारः सत्यो वै नैव पुण्यो न पापकृत्॥ १३॥ न ह्यस्ति सर्वभूतेषु दुःखमस्मिन् कुतः सुखम्। एवं प्रकृतिभूतानां सर्व-संसर्गयायिनाम्॥ १४॥ त्यजतां जीवितं श्रेयो निवृत्ते पुण्य-पातके। यत्त्वेव राज्ञो ज्यायिष्ठं कार्य्याणां तद्ब्रवीमि ते॥१५॥ बलेन संविभागैश्च जय स्वर्गं जनेश्वर। यस्यैव बलमोजश्च स

धर्म्मस्य प्रभुर्नरः॥ १६ ॥ ब्राह्मणार्थं सुखार्थं हि त्वं पाहि वसुधां नृप। यथैवैतान् पुराक्षैप्सीस्तथैवैतान् प्रसादय॥ १७ ॥ अपि धिक्क्रियमाणोऽपि त्यज्यमानोऽप्यनेकधा। आत्मनो दर्शनाद्विप्रान्न हन्तास्मीति मार्गय। घटमानः स्वकार्य्येषु कुरु निःश्रेयसं परम् ॥ १८ ॥ हिमाग्निघोरसदृशो राजा भवति कश्चन। लाङ्गलाशनिकल्पो वा भवेदन्यः परन्तपः॥ १९ ॥ न विशेषेण गन्तव्यमविच्छिन्नेन वा पुनः। न जातु नाहमस्मीति सुप्रसक्तमसाधुषु॥ १७ ॥ विकर्म्मणा तप्यमानः पापाद्विपरिमुच्यते। नैतत् कार्य्यं पुनरिति द्वितीयात् परिमुच्यते॥ २१ ॥ चरिष्ये धर्म्ममेवेति तृतीयात् परिमुच्यते। शुचिस्तीर्थान्यनुचरन् बहुत्वात् परिमुच्यते। कल्याणमनुकर्त्तव्यं पुरुषेण बुभूषता॥ २२ ॥ ये सुगन्धीनि सेवन्ते तथागन्धा भवन्ति ते। ये दुर्गन्धीनि सेवन्ते तथागन्धा भवन्ति ते॥२३॥ तपश्चर्य्यापरः सद्यः पापाद्विपरिमुच्यते। संवत्सरमुपास्याग्निमभिशस्तः प्रमुच्यते॥ २४ ॥ त्रीणि वर्षाण्युपास्याग्निं भ्रूणहा विप्रमुच्यते। महासरः पुष्कराणि प्रभासोत्तरमानसे। अभ्येत्य योजनशतात् भ्रूणहा विप्रमुच्यते॥ २५ ॥ यावतः प्राणिनो हन्यात्तज्जातीयांस्तु तावतः। प्रमीयमाणानुन्मोच्य प्राणिहा विप्रमुच्यते॥ २६ ॥ अपि चाप्सु निमज्जेत जपंस्त्रिरघमर्षणम्। यथाश्वमेधावभृथस्तथा तन्मनुरब्रवीत॥ २७ ॥ तत् क्षिप्रं नुदते पापं सत्कारं लभते तथा। अपि चैनं प्रसीदन्ति भूतानि जड़मूकवत् ॥२८॥ बृहस्पतिं देवगुरुं सुरासुराः सर्व्वे समेत्याभ्यनुयुज्य राजन्। धर्म्यं फलं वेत्थ फलं महर्षे तथैव तस्मिन्नरके पारलोक्य॥ २९ ॥ उभे तु यस्य सदृशे भवेतां किंस्वित्तयोस्तत्र जयोऽथ न स्यात्। आचक्ष्व नः पुण्यफलं महर्षे कथं पापं नुदते धर्मशीलः॥ ३० ॥

बृहस्पतिरुवाच। कृत्वा पापं पूर्वमबुद्धिपूर्वं पुण्यानि चेत् कुरुते बुद्धिपूर्वम्। स तत् पापं नुदते पुण्यशीलो वासो यथा

मलिनं चारयुक्त्या ॥ ३१ ॥ पापं कृत्वाभिमन्येत नाहमस्मीति पूरुषः । तच्चिकीर्षति कल्याणं श्रद्दधानोऽनसूयकः ॥३२॥ छिद्राणि विवृतान्येव साधूनां चावृणोति यः । यः पापं पुरुषः कृत्वा कल्याणमभिपद्यते ॥ ३३ ॥ यथादित्यः प्रातरुद्यंस्तमः सर्वं व्यपोहति । कल्याणमाचरन्नेवं सर्वपापं व्यपोहति ॥ ३४ ॥

भीष्म उवाच । एवमुक्त्वा तु राजानमिन्द्रोतो जनमेजयम् । याजयामास विधिवत् वाजिमेधेन शौनकः ॥ ३५ ॥ ततः स राजा व्यपनीतकल्मषः श्रेयोवृतः प्रज्वलिताग्निरूपवान् । विवेश राज्यं स्वममित्रकर्षणो यथा दिवं पूर्णवपुर्निशाकरः ॥ ३६ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि इन्द्रोतजनमेजयसंवादे द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

---

युधिष्ठिर उवाच । कच्चित् पितामहेनासीच्छ्रुतं वा दृष्टमेव च । कच्चिन्मर्त्यो मृतो राजन् पुनरुज्जीवितोऽभवत् ॥ १ ॥

भीष्म उवाच । शृणु राजन् यथावृत्तमितिहासं पुरातनम् । गृध्रजम्बुकसंवादं यो वृत्तो नैमिषे पुरा ॥ २ ॥ कस्यचित् ब्राह्मणस्यासीत् दुःखलब्धः सुतो मृतः । बाल एव विशालाक्षो बालग्रहनिपीड़ितः ॥३॥ दुःखिताः केचिदादाय बालमप्राप्तयौवनम् । कुलसर्वस्वभूतं वै रुदन्तः शोकविह्वलाः ॥ ४ ॥ बालं मृतं गृहीत्वाथ श्मशानाभिमुखाः स्थिताः । अङ्केनैव च संक्राम्य रुरुदुर्भृशदुःखिताः ॥ ५ ॥ शोचन्तस्तस्य पूर्वोक्तान् भाषितांश्चासकृत् पुनः । तं बालं भूतले क्षिप्य प्रतिगन्तुं न शक्नुयुः ॥ ६ ॥ तेषां रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत् । एकात्मजमिमं लोके त्यक्त्वा गच्छत मा चिरम् ॥ ७ ॥ इह पुंसां सहस्राणि स्त्रीसहस्राणि चैव ह । समानीतानि कालेन हित्वा वै यान्ति बान्धवाः ॥ ८ ॥

संपश्यत जगत् सर्वं सुखदुःखैरधिष्ठितम् । संयोगो विप्रयोगश्च पर्य्यायेणोपलक्ष्यते ॥ ९ ॥ गृहीत्वा येऽनुतिष्ठन्ति येऽनुयान्ति च तान्मृतान् । तेऽप्यायुषः प्रमाणेन स्वेन गच्छन्ति जन्तवः ॥ १० ॥ अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसंकुले । कङ्कालबहुले रौद्रे सर्वप्राणिभयङ्करे ॥ ११ ॥ न मर्त्त्यो जीवितो कश्चित् कालधर्ममुपागतः । प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥१२॥ सर्वेण खलु मर्त्तव्यं मर्त्त्यलोके प्रसूयता । कृतान्तविहिते मार्गे मृतं को जीवयिष्यति ॥ १३ ॥ कर्मान्तविरते लोके अस्तं गच्छति भास्करः । गम्यतां स्वमधिष्ठानं सुतस्नेहं विसृज्य वै ॥ १४ ॥ ततो गृध्रवचः श्रुत्वा विशोका इव ते तदा । बान्धवास्तेऽभ्यगच्छन्त पुत्रमुत्सृज्य भूतले ॥ १५ ॥ विनिश्चित्याथ च तदा विक्रोशन्तस्ततस्ततः । मृतमित्येव गच्छन्तो निराशास्तस्य दर्शने ॥ १६ ॥ निश्चितार्थश्च ते सर्वे संत्यजन्तः स्वमात्मजम् । निराशा जीविते तस्य मार्गमावृत्य धिष्ठिताः ॥ १७ ॥ ततो ध्वाङ्क्षसवर्णस्तु विलान्निःसृत्य जम्बुकः । गच्छमानान् स्म तानाह निर्घृणाः खलु बान्धवाः ॥१८॥ आदित्योऽयं स्थितो मूढ़ाः स्नेहं कुरुत मा भयम् । बहुरूपो मुहूर्त्तश्च जीवेदपि कदाचन ॥ १९ ॥ दर्भान् भूमौ विनिक्षिप्य पुत्रस्नेहविनाकृताः । श्मशाने सुतमुत्सृज्य कस्मात् गच्छत निर्घृणाः ॥ २० ॥ न वोऽस्त्यस्मिन् सुते स्नेहो बाले मधुरभाषिणि । यस्य भाषितमात्रेण प्रसादमधिगच्छत ॥ २१ ॥ ते पश्यत सुतस्नेहो यादृशः पशुपक्षिणाम् । न तेषां धारयित्वा तान् कश्चिदस्ति फलागमः ॥२२॥ चतुष्पात् पक्षिकीटानां प्राणिनां स्नेहसङ्गिनाम् । परलोकगतिस्थानां मुनियज्ञक्रिया इव ॥ २३ ॥ तेषां पुत्राभिरामाणामिह लोके परत्र च । न गुणो दृश्यते कश्चित् प्रजाः सन्धारयन्ति च ॥ २४ ॥ अपश्यतां प्रियान् पुत्रांस्तेषां शोको न तिष्ठति । न च पुष्णन्ति संवृद्धास्ते मातापितरौ क्वचित् ॥ २५ ॥

मानुषाणां कृतः स्नेहो येषां शोको भविष्यति । इमं कलेवरं पुत्रं
क्व नु त्यक्त्वा गमिष्यथ ॥ २६ ॥ चिरं मुञ्चत वाष्पञ्च चिरं स्नेहेन
पश्यत । एवं विधानि हीष्टानि दुस्त्यजानि विशेषतः ॥ २७ ॥
क्षीणस्यायाभियुक्तस्य श्मशानाभिमुखस्य च । वान्धवा यत्र
तिष्ठन्ति तत्रान्यो नावतिष्ठते ॥ २८ ॥ सर्वस्य दयिताः प्राणाः सर्वः
स्नेहञ्च विन्दति । तिर्य्यग्योनिष्वपि सतां स्नेहं पश्यत यादृशम्॥२९
त्यक्त्वा कथं गच्छतेमं पद्मलोलायतेक्षणम् । यथा नवोद्वाहकृतं
स्नानमाल्यविभूषितम् ॥ ३० ॥ जम्बुकस्य वचः श्रुत्वा कृपणं परि-
देवतः । न्यवर्त्तन्त तदा सर्वे शवार्थं ते स्म मानुषाः ॥ ३१ ॥

गृध्र उवाच । अहो वत नृशंसेन जम्बुकेनाल्पमेधसा । क्षुद्रे-
णोक्ता हीनसत्त्वा मानुषा किं निवर्त्तथ ॥ ३२ ॥ पञ्चभूतपरित्यक्तं
शून्यं काष्ठत्वमागतम् । कस्मात् शोचथ निश्चेष्टमात्मानं किन्न
शोचथ ॥ ३३ ॥ तपः कुरुत वै तीव्रं मुच्यध्वं येन किल्विषात् ।
तपसा लभ्यते सर्वं विलापः किं करिष्यति ॥ ३४ ॥ अनिष्टानि च
भाग्यानि जातानि सह मृत्युना । येन गच्छति बालोऽयं दत्त्वा
शोकमनन्तकम ॥ ३५ ॥ धनं गावः सुवर्णञ्च मणिरत्नमथापि च ।
अपत्यञ्च तपोमूलं तपो योगाच्च लभ्यते ॥ ३६ ॥ यथा कृता च
भूतेषु प्राप्यते सुखदुःखिता । गृहीत्वा जायते जन्तुर्दुःखानि च
सुखानि च ॥ ३७ ॥ न कर्म्मणा पितुः पुत्रः पिता वा पुत्रकर्मणा ।
मार्गेणानेन गच्छन्ति बद्धाः सुकृतदुष्कृतैः ॥ ३८ ॥ धर्म्मञ्चरत
यत्नेन यथाधर्मान्निवर्त्तत । वर्त्तध्वञ्च यथाकालं देवतेषु द्विजेषु
च ॥ ३९ ॥ शोकं त्यजत दैन्यञ्च सुतस्नेहान्निवर्त्तत । त्यज्यता-
मयमाकाशे ततः शीघ्रं निवर्त्तत ॥ ४० ॥ यत् करोति शुभं कर्म्म
तथा कर्म्म सुदारुणम् । तत् कर्त्तैव समश्नाति बान्धवानां किमत्र
ह ॥ ४१ ॥ इह त्यक्त्वा न तिष्ठन्ति बान्धवा बान्धवं प्रियम् । स्नेह
मुत्सृज्य गच्छन्ति वाष्पपूर्णाविलेक्षणाः ॥ ४२ ॥ प्राज्ञो वा यदि

वा मूर्खः सधनो निर्धनोऽपि वा। सर्वं कालवशं यान्ति शुभाशुभसमन्विताः ॥ ४३ ॥ किं करिष्यथ शोचित्वा मृतं किमनुशोचथ। सर्वस्य हि प्रभुः कालो धर्मतः समदर्शनः ॥ ४४ ॥ यौवनस्थांश्च बालांश्च वृद्धान् गर्भगतानपि। सर्वानाविशते मृत्युरेवं भूतमिदं जगत् ॥ ४५ ॥

जम्बुक उवाच। अहो मन्दीकृतः स्नेहो गृध्रेणेहाल्पबुद्धिना। पुत्रस्नेहाभिभूतानां युष्माकं शोचतां भृशम् ॥ ४६ ॥ समैः सम्यक्प्रयुक्तैश्च वचनैः प्रत्ययोत्तरैः। यद्गच्छति जनस्थानं स्नेहमुत्सृज्य दुस्त्यजम् ॥ ४७ ॥ अहो पुत्रवियोगेन मृतशून्योपसेवनात्। क्रोशतां सुभृशं दुःखं विवत्सानां गवामिव ॥ ४८ ॥ अद्य शोकं विजानामि मनुष्याणां महीतले। स्नेहं हि करुणं दृष्ट्वा ममाप्यश्रूण्यथापतन् ॥ ४९ ॥ यत्नो हि सततं कार्य्यस्ततो दैवेन सिध्यति। दैवं पुरुषकारश्च कृतान्तेनोपपद्यते ॥ ५० ॥ अनिर्वेदः सदा कार्य्यो निर्वेदाद्धि कुतः सुखम्। प्रयत्नात् प्राप्यते ह्यर्थः कस्माद्गच्छथ निर्दयाः ॥ ५१ ॥ आत्ममांसोपवृत्तञ्च शारीरार्द्धमयीं तनुम्। पितॄणां वंशकर्त्तारं वने त्यक्त्वा क्व यास्यथ ॥ ५२ ॥ अथवास्तं गते सूर्य्ये सन्ध्याकाल उपस्थिते। ततो नेष्यथ वा पुत्रं इहस्था वा भविष्यथ ॥ ५३ ॥

गृध्र उवाच। अद्य वर्षसहस्रं मे साग्रं जातस्य मानुषाः। न च पश्यामि जीवन्तं मृतं स्त्रीपुंनपुंसकम् ॥ ५४ ॥ मृता गर्भेषु जायन्ते जातमात्रा म्रियन्ति च। चंक्रमन्तो म्रियन्ते च यौवनस्थास्तथापरे ॥ ५५ ॥ अनित्यानीह भाग्यानि चतुष्पात्पक्षिणामपि। जङ्गमानां नगानाञ्चाप्यायुरग्रेऽवतिष्ठते ॥ ५६ ॥ इष्टदारवियुक्ताश्च पुत्रशोकान्वितास्तथा। दह्यमानाः स्म शोकेन गृहं गच्छन्ति नित्यशः ॥ ५७ ॥ अनिष्टानां सहस्राणि तथेष्टानां शतानि च। उत्सृज्येह प्रयाता वै बान्धवा भृशदुःखिताः ॥ ५८ ॥ त्यज्यतामेष

निस्तेजाः शून्यः काष्ठत्वमागतः। अन्यदेहविषक्तं हि शावं काष्ठत्वमागतम्। त्यक्तजीवस्य चैवास्य कस्माद्धित्वा न गच्छथ॥ ५९॥ निरर्थको ह्ययं स्नेहो निष्फलश्च परिग्रहः। चक्षुर्भ्यां न च कर्णाभ्यां संशृणोति समीक्षते॥ ६०॥ अस्मादेनं समुत्सृज्य स्वगृहान् गच्छताशु वै॥ ६१॥ मोक्षधर्माश्रितैर्वाक्यैर्हेतुमद्भिः सुनिष्ठुरैः। मयोक्ता गच्छत क्षिप्रं स्वं स्वमेव निवेशनम्॥ ६२॥ प्रज्ञाविज्ञानयुक्तेन बुद्धिसंज्ञाप्रदायिना। वचनं श्राविता नूनं मानुषाः संन्यवर्त्तत। शोको द्विगुणतां याति दृष्ट्वा स्मृत्वा च चेष्टितम्॥ ६३॥ इत्येतद्वचनं श्रुत्वा सन्निवृत्तास्तु मानुषाः। अपश्यत्तं तदा सुप्तं द्रुतमागत्य जम्बुकः॥ ६४॥

जम्बुक उवाच। इमं कनकवर्णाभं भूषणैः समलंकृतम्। गृध्रवाक्यात् कथं पुत्रं त्यजध्वं पितृपिण्डदम्॥ ६५॥ न स्नेहस्य च विच्छेदो विलापरुदितस्य च। मृतस्यास्य परित्यागात्ततो वै भविता ध्रुवम्॥ ६६॥ श्रूयते शम्बुके शूद्रे हते ब्राह्मणदारकः। जीवितो धर्ममासाद्य रामात् सत्यपराक्रमात्॥ ६७॥ तथा श्वेतस्य राजर्षेर्बालो दिष्टान्तमागतः। श्वेतेन धर्मनिष्ठेन मृतः सञ्जीवितः पुनः॥ ६८॥ तथा कश्चिद्भवेत् सिद्धो मुनिर्वा देवतापि वा। कृपणानामनुक्रोशं कुर्य्याद्वो रुदतामिह॥ ६९॥ इत्युक्तास्ते न्यवर्त्तन्त शोकार्त्ताः पुत्रवत्सलाः। अङ्के शिरः समाधाय रुरुदुर्बहुविस्तरम्। तेषां रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत्॥ ७०॥

गृध्र उवाच। अश्रुपातपरिक्लिन्नः पाणिस्पर्शप्रपीड़ितः। धर्मराजप्रयोगाच्च दीर्घनिद्रां प्रवेशितः॥ ७१॥ तपसापि हि संयुक्ता धनवन्तो महाधियः। सर्वे मृत्युवशं यान्ति तदिदं प्रेतपत्तनम्॥ ७२॥ बालवृद्धसहस्राणि सदा सन्त्यज्य बान्धवाः। दिनानि चैव रात्रीश्च दुःखं तिष्ठन्ति भूतले॥ ७३॥ अलं निर्बन्धमागत्य शोकस्य परिधारणे। अप्रत्ययकृतं ह्यस्य पुनरद्येह जीवितम्॥ ७४

नैष जम्बुकवाक्येन पुनः प्राप्स्यति जीवितम्। मृतस्योत्सृष्टदेहस्य पुनर्देहो न विद्यते ॥ ७५ ॥ नैव मूर्त्तिप्रदानेन जम्बुकस्य शतैरपि। शक्यो जीवयितुं ह्येष बालो वर्षशतैरपि ॥ ७६ ॥ अथ रुद्रः कुमारो वा ब्रह्मा वा विष्णुरेव च। वरमस्मै प्रयच्छेयुस्ततो जीवेदयं शिशुः ॥ ७७ ॥ नैव वास्रविमोक्षेण न वाश्वासकृतेन च। न दीर्घरुदितेनायं पुनर्जीवं गमिष्यति ॥ ७८ ॥ अहञ्च क्रोष्टुकश्चैव यूयं ये चास्य बान्धवाः। धर्माधर्मौ गृहीत्वेह सर्वे वर्त्तामहेऽध्वनि ॥ ७९ ॥ अप्रियं परुषञ्चापि परद्रोहं परस्त्रियम्। अधर्ममनृतञ्चैव दूरात् प्राज्ञो विवर्ज्जयेत् ॥ ८० ॥ धर्मं सत्यं शुभं न्याय्यं महतीं प्राणिनां दयाम्। अजिह्मत्वमशाठ्यञ्च यत्नतः परिमार्गत ॥ ८१ ॥ मातरं पितरञ्चापि बान्धवान् सुहृदस्तथा। जीवतो ये न पश्यन्ति तेषां धर्म्मविपर्य्ययः ॥ ८२ ॥ यो न पश्यति चक्षुर्भ्यां नेङ्गते च कथञ्चन। तस्य निष्ठावसानान्ते रुदन्तः किं करिष्यथ ॥८३॥ इत्युक्तास्ते सुतं त्यक्त्वा भूमौ शोकपरिप्लुताः। दह्यमाना सुतस्नेहात् प्रययुर्बान्धवा गृहम् ॥ ८४ ॥

जम्बुक उवाच। दारुणो मर्त्त्यलोकोऽयं सर्वप्राणिविनाशनम्। इष्टबन्धुवियोगश्च तथेहाल्पञ्च जीवितम् ॥ ८५ ॥ बहलीकमसत्यञ्चाप्यतिवादाप्रियम्वदम्। इमं प्रेक्ष्य पुनर्भावं दुःखशोकविवर्द्धनम्। न मे मानुषलोकोऽयं मुहूर्त्तमपि रोचते ॥ ८६ ॥ अहो धिक् गृध्रवाक्येन सन्निवर्त्तथ मानुषाः। प्रदीप्ताः पुत्रशोकेन यथैवाबुद्धयस्तथा ॥ ८७ ॥ कथं गच्छत निःस्नेहाः सुतस्नेहं विसृज्य च। श्रुत्वा गृध्रस्य वचनं पापस्येहाकृतात्मनः ॥ ८८ ॥ सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्। सुखदुःखावृते लोके नेहास्त्येकमनन्तरम् ॥ ८९ ॥ इमं क्षितितले त्यक्त्वा बालं रूपसमन्वितम्। कुलशोभाकरं मूढाः पुत्रं त्यक्त्वा क्व यास्यथ ॥ ९० ॥ रूपयौवनसम्पन्नं द्योतमानमिव श्रिया। जीवन्तमिव पश्यामि मनसा नात्र

संशय ॥ ९१ ॥ विनाशश्चाप्यनर्हो ऽस्य सुखं प्राप्स्यथ मानुषाः । पुत्रशोकाभितप्तानां भविष्यत्यद्य वै क्षमम् ॥ ९२ ॥ दुःखसम्भावनां कृत्वा धारयित्वा सुखं स्वयम् । त्यक्त्वा गमिष्यथ क्वाद्य समुत्सृज्याल्पबुद्धिवत् ॥ ९३ ॥

भीष्म उवाच । तथा धर्मविरोधेन प्रियमिथ्याभिधायिना । श्मशानवासिना नित्यं रात्रिं मृगयता नृप ॥ ९४ ॥ ततो मध्यस्थतां नीता वचनैरमृतोपमैः । जम्बुकेन स्वकार्य्यार्थं बान्धवास्तस्य धिष्ठिताः ॥ ९५ ॥

गृध्र उवाच । अयं प्रेतसमाकीर्णो यक्षराक्षससेवितः । दारुणः काननोद्देशः कौशिकैरभिनादिताः ॥ ९६ ॥ भीमः सुघोरश्च तथा नीलमेघसमप्रभः । अस्मिञ्छवं परित्यज्य प्रेतकार्य्याण्युपासत ॥ ९७ भानुर्यावत् प्रयात्यस्तं यावच्च विमला दिशः । तावदेनं परित्यज्य प्रेतकार्य्याण्युपासत ॥ ९८ ॥ नदन्ति परुषं श्येनाः शिवाः क्रोशन्ति दारुणम् । मृगेन्द्राः प्रतिनर्दन्ति रविरस्तञ्च गच्छति ॥ ९९ ॥ चिताधूमेन नीलेन संरज्यन्ते च पादपाः । श्मशाने च निराहाराः प्रतिनर्दन्ति देवताः ॥ १०० ॥ सर्वे विकृतदेहाश्चाप्यस्मिन् देशे सुदारुणे । युष्मान् प्रधर्षयिष्यन्ति विकृता मांसभोजिनः ॥ १०१ ॥ क्रूरश्चायं वनोद्देशो भयमद्य भविष्यति । त्यज्यतां काष्ठभूतोऽयं मृष्यतां जाम्बुकं वचः ॥ १०२ ॥ यदि जम्बुकवाक्यानि निष्फलान्यनृतानि च । श्रोष्यथ भ्रष्टविज्ञानास्ततः सर्वे विनङ्क्ष्यथ ॥ १०३ ॥

जम्बुक उवाच । स्थीयतां नेह भेतव्यं यावत्तपति भास्करः । तावदस्मिन् सुतस्नेहादनिर्विण्णेन वर्त्तत ॥ १०४ ॥ स्वैरं रुदन्तो विस्रब्धाश्चिरं स्नेहेन पश्यत । दारुणेऽस्मिन् वनोद्देशे भयं वो न भविष्यति ॥ १०५ ॥ अयं सौम्यो वनोद्देशः पितॄणां निधनाकरः । स्थीयतां यावदादित्यः किं वः क्रव्यादभाषितैः ॥ १०६ ॥ यदि

गृध्रस्य वाक्यानि तीव्राणि रभसानि च। गच्छेत मोहितात्मानः सुतो वो न भविष्यति ॥ १०७ ॥

भीष्म उवाच। गृध्रोऽस्तमित्याह गतो गतो नेति च जम्बुकः। मृतस्य तं परिजनमूचतुस्तौ क्षुधान्वितौ ॥ १०८ ॥ स्वकार्य्यवद्धकक्षौ तौ राजन् गृध्रोऽथ जम्बुकः। क्षुत्पिपासापरिश्रान्तौ शास्त्रमालम्ब्य जल्पतः ॥ १०९ तयोर्विज्ञानविदुषोर्द्वयोर्मृगपतत्त्रिणोः। वाक्यैरमृतकल्पैस्तैः प्रतिष्ठन्ति व्रजन्ति च ॥ ११० ॥ शोकदैन्यसमाविष्टा रुदन्तस्तस्थिरे तदा। स्वकार्य्यकुशलाभ्यान्ते संभ्राम्यन्ते हि नैपुणात् ॥ १११ ॥ तथा वयोर्विवदतोर्विज्ञानविदुषोर्द्वयोः। बान्धवानां स्थितानाञ्चाप्युपातिष्ठत शङ्करः। देव्या प्रणोदितो देवः कारुण्यार्द्रीकृतेक्षणः ॥ ११२ ॥ ततस्तानाह मनुजान् वरदोऽस्मीति शङ्करः। ते प्रतूचुरिदं वाक्यं दुःखिताः प्रणताः स्थिताः ॥ ११३ ॥ एकपुत्रविहीनानां सर्व्वेषां जीवितार्थिनाम्। पुत्रस्य नो जीवदानाज्जीवितं दातुमर्हसि ॥ ११४ ॥ एवमुक्तः स भगवान् वारिपूर्णेन पाणिना। जीवितं स कुमाराय प्रादाद्वर्षशतानि वै ॥ ११५ ॥ तथा गोमायुगृध्राभ्यां प्राददत् क्षुद्विनाशनम्। वरं पिनाकी भगवान् सर्व्वभूतहिते रतः ॥ ११६ ॥ ततः प्रणम्य ते देवं श्रेयोहर्षसमन्विताः। कृतकृत्याः सुसंहृष्टाः प्रातिष्ठन्त तदा विभो ॥ ११७ ॥ अनिर्व्वेदेन दीर्घेण निश्चयेन ध्रुवेण च। देवदेवप्रसादाच्च क्षिप्रं फलमवाप्यते ॥ ११८ ॥ पश्य दैवस्य संयोगं बान्धवानाञ्च निश्चयम्। कृपणानान्तु रुदतां कृतमश्रुप्रमार्जनम् ॥ ११९ ॥ पश्य चाल्पेन कालेन निश्चयान्वेषणेन च। प्रसादं शङ्करात् प्राप्य दुःखिताः सुखमाप्नुवन् ॥ १२० ॥ ते विस्मिताः प्रहृष्टाश्च पुत्रसञ्जीवनात् पुनः। बभूवुर्भरतश्रेष्ठ प्रसादात् शङ्करस्य वै ॥ १२१ ॥ ततस्ते त्वरिता राजंस्त्यक्त्वा शोकं शिशूद्भवम्। विविशुः पुत्रमादाय नगरं हृष्टमानसाः। एषा बुद्धिः समस्तानां

चातुर्व्वर्ण्यं निदर्शिताः ॥ १२२ ॥ धर्मार्थमोक्षसंयुक्तमितिहासमिमं शुभम् । श्रुत्वा मनुष्यः सततमिह प्रेत्य च मोदते ॥ १२३ ॥

इति शान्तिपर्व्वणि आपधर्मानुशासनपर्व्वणि गृध्रजम्बुक-संवादे त्रिपञ्चाशदधिकशततोऽध्यायः ॥ १५३ ॥

---

युधिष्ठिर उवाच । बलिनः प्रत्यमित्रस्य नित्यमासन्नवर्त्तिनः । उपकारापकाराभ्यां समर्थस्योद्यतस्य च ॥ १ ॥ मोहाद्विकत्थनामात्रैरसारोऽल्पबलो लघुः । वाग्भिरप्रतिरूपाभिरभिद्रुत्य पितामह ॥ २ ॥ आत्मनो बलमास्थाय कथं वर्त्तेत मानवः । आगच्छतोऽतिक्रुद्धस्य तस्योद्धरणकाम्यया ॥ ३ ॥

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । सम्वादं भरतश्रेष्ठ शाल्मलेः पवनस्य च ॥ ४ ॥ हिमवन्तं समासाद्य महानासीद्वनस्पतिः । वर्षपूगाभिसंवृद्धः शाखी स्कन्धी पलाशवान् ॥ ५ ॥ तत्र स्म मत्तमातङ्गा धर्म्मार्त्ताः श्रमकर्षिताः । विश्राम्यन्ति महाबाहो तथान्या मृगजातयः ॥ ६ ॥ नल्वमात्रपरीणाहो घनच्छायो वनस्पतिः । सारिकाशुकसंजुष्टः पुष्पवान् फलवानपि ॥ ७ ॥ सार्थिका वणिजश्चापि तापसाश्च वनौकसः । वसन्ति तत्र मार्गस्थाः सुरम्ये नगसत्तमे ॥ ८ ॥ तस्य ता विपुलाः शाखा दृष्ट्वा स्कन्धञ्च सर्व्वशः । अभिगम्याब्रवीदेनं नारदो भरतर्षभ ॥ ९ ॥ अहो नु रमणीयस्त्वं अहो चासि मनोहरः । प्रीयामहे त्वया नित्यं तरुप्रवरशाल्मले ॥ १० ॥ सदैव शकुनास्तात मृगाश्चाथ तथा गजाः । वसन्ति तव संहृष्टा मनोहर मनोहराः ॥ ११ ॥ तव शाखा महाशाख स्कन्धाश्च विपुलास्तथा । न वै प्रभग्नान् पश्यामि मारुतेन कथञ्चन ॥ १२ ॥ किन्नु ते पवनस्तात प्रीतिमानथ वा सुहृत् । त्वां रक्षति सदा येन वनेऽत्र पवनो ध्रुवम् ॥ १३ ॥ भग-

वान् पवनः स्थानादृक्षानुच्चावचानपि । पर्वतानाञ्च शिखराख्या-चालयति वेगवान् ॥ १४ ॥ शोषयत्येष पातालं वहन् गन्धवहः शुचिः । सरांसि सरितश्चैव सागरांश्च तथैव च ॥ १५ ॥ संरक्षति त्वां पवनः सखित्वेन न संशयः । तस्मात्त्वं बहुशाखोऽपि पर्णवान् पुष्पवानपि ॥ १६ ॥ इदञ्च रमणीयन्ते वनं भाति वनस्पते । यदिमे विहगास्तात रमन्ते मुदितास्त्वयि ॥ १७ ॥ एषां पृथक्समस्तानां श्रूयते मधुरस्वरः । पुष्पसम्मोदने काले वाशतां सुमनोहरम् ॥१८॥ तथेमे गर्ज्जिता नागाः स्वयूथकुलशोभिताः । घर्मार्त्तास्त्वां समासाद्य सुखं विन्दन्ति शाल्मले ॥ १९ ॥ तथैव मृगजातीभिरन्याभिरभिशोभसे । तथा सर्वाधिवासैश्च शोभसे मेरुवद्द्रुमः ॥ २० ॥ ब्राह्मणैश्च तपःसिद्धैस्तापसैः श्रमणैस्तथा । त्रिपिष्टपसमं मन्ये तवायतनमेव ह ॥ २१ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि पवनशाल्मलिसंवादे चतुःपञ्चाशदधिकशतोऽध्यायः ॥ १५४ ॥

---

नारद उवाच । बन्धुत्वादथ वा सख्यात् शाल्मले नात्र संशय । पालयत्येव सततं भीमः सर्वत्रगोऽनिलः ॥ १ ॥ न्यग्भावं परमं वायोः शाल्मले त्वमुपागतः । तवाहमस्मीति सदा येन रक्षति मारुतः ॥ २ ॥ न तं पश्याम्यहं वृक्षं पर्वतं वेश्म चेदृशम् । यन्न वायुबलाद्भग्नं पृथिव्यामिति मे मतिः ॥ ३ ॥ त्वं पुनः कारणैर्नूनं रक्ष्यसे शाल्मले यथा । वायुना सपरीवारस्तेन तिष्ठस्यसंशयम् ॥४॥

शाल्मलिरुवाच । न मे वायुः सखा ब्रह्मन् बन्धुर्न च मे सुहृत् । परमेष्ठी तथा नैव येन रक्षति चानिलः ॥ ५ ॥ मम तेजो बलं भीमं वायोरपि हि नारद । कलामष्टादशीं प्राणैर्न मे प्राप्नोति मारुतः ॥ ६ ॥ आगच्छन् पुरुषो वायुर्मया विष्टम्भितो

बलात् । भञ्जन् द्रुमान् पर्वतांश्च यच्चान्यदपि किञ्चन ॥ ७ ॥ स मया बहुशो भग्नः प्रभञ्जन् वै प्रभञ्जनः । तस्मान्न बिभ्ये देवर्षे क्रुद्धादपि समीरणात् ॥ ८ ॥

नारद उवाच । शाल्मले विपरीतं ते दर्शनं नात्र संशयः । न हि वायोर्बलेनास्ति भूतं तुल्यबलं क्वचित् ॥ ९ ॥ इन्द्रो यमो वैश्रवणो वरुणश्च जलेश्वरः । नैतेऽपि तुल्या मरुतः किं पुनस्त्वं वनस्पते ॥ १० ॥ यच्च किञ्चिदिह प्राणी चेष्टते शाल्मले भुवि । सर्वत्र भगवान् वायुश्चेष्टाप्राणकरः प्रभुः ॥ ११ ॥ एष चेष्टयते सम्यक् प्राणिनः सम्यगायतः । असम्यगायतो भूयश्चेष्टते विकृतं नृषु ॥ १२ ॥ स त्वमेवंविधं वायुं सर्वसत्त्वभृतांवरम् । न पूजयसि पूज्यं त्वं किमन्यद्बुद्धिलाघवात् ॥ १३ ॥ असारश्चापि दुर्मेधाः केवलं बहुभाषसे । क्रोधादिभिरवच्छन्नो मिथ्या वदसि शाल्मले ॥ १४ ॥ मम रोषः समुत्पन्नस्त्वय्येवं संप्रभाषति । ब्रवीम्येष स्वयं वायोस्तव दुर्भाषितं बहु ॥ १५ ॥ चन्दनैः स्यन्दनैः शालैः सरलैर्देवदारुभिः । वेतसैर्धन्वनैश्चापि ये चान्ये बलवत्तराः । तैश्चापि नैवं दुर्बुद्धे क्षिप्तो वायुः कृतात्मभिः ॥ १६ ॥ तेऽपि जानन्ति वायोश्च बलमात्मन एव च । तस्मात्त्वं वै नमस्यन्ति श्वसनं तरुसत्तमा ॥ १७ ॥ त्वन्तु मोहान्न जानीषि वायोर्बलमनन्तकम् । एवं तस्माद्गमिष्यामि सकाशं मातरिश्वनः ॥ १८ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि पवनशाल्मलिसम्वादे पञ्चपञ्चाशदधिकशततोऽध्यायः ॥ १५५ ॥

---

भीष्म उवाच । एवमुक्त्वा तु राजेन्द्र शाल्मलिं ब्रह्मवित्तमः । नारदः पवने सर्वं शाल्मलेर्वाक्यमब्रवीत् ॥ १ ॥

नारद उवाच । हिमवत्पृष्ठजः कश्चित् शाल्मलिः परिवार-

वान् । वृहन्मूलो वृहच्छाखः स त्वां वायोऽवमन्यते ॥ २ ॥ बह्व-न्याक्षेपयुक्तानि त्वामाह वचनानि सः । न युक्तानि मया वायो तानि वक्तुं तवाग्रतः ॥ ३ ॥ जानामि त्वामहं वायो सर्वप्राणभृता-म्वरम् । वरिष्ठञ्च गरिष्ठञ्च क्रोधे वैवस्वतं यथा ॥ ४ ॥

भीष्म उवाच । एतत्तु वचनं श्रुत्वा नारदस्य समीरणः । शाल्मलिं तमुपागम्य क्रुद्धो वचनमब्रवीत् ॥ ५ ॥

वायुरुवाच । शाल्मले नारदो वाक्यं त्वयोक्तो मद्विगर्हणम् । अहं वायुः प्रभावन्ते दर्शयाम्यात्मनो बलात् ॥ ६ ॥ अहं त्वामभि-जानामि विदिताश्चासि मे द्रुम । पितामहः प्रजासर्गे त्वयि विश्रा-न्तवान् प्रभुः॥७॥ तस्य विश्रमणादेष प्रसादो मत्कृतस्तव । रक्ष्यसे तेन दुर्बुद्धे नात्मवीर्य्याद्द्रुमाधम ॥८॥ यन्मां त्वमवजानीषे यथान्यं प्राकृतं तथा । दर्शयाम्येष चात्मानं यथा मां नावमन्यसे ॥ ९ ॥

भीष्म उवाच । एवमुक्तस्ततः प्राह शाल्मलिः प्रहसन्निव । पवन त्वञ्च मे क्रुद्धो दर्शयात्मानमात्मना ॥ १० ॥ मयि वै त्यज्यतां क्रोधः किं मे क्रुद्धः करिष्यसि । न ते बिभेमि पवन यद्यपि त्वं स्वयं प्रभुः । बलाधिकोऽहं त्वत्तश्च न भीः कार्य्या मया तव ॥ ११ ॥ ये तु बुद्ध्या हि बलिनस्ते भवन्ति बलीयसः । प्राणमात्रबला ये वै नैव ते बलिनो मताः ॥ १२ ॥ इत्येवमुक्तः पवनः श्व इत्येव ब्रवीद्वचः । दर्शयिष्यामि ते तेजस्ततो रात्रिरुपागमत् ॥ १३ ॥ अथ निश्चित्य मनसा शाल्मलिर्वातकारितम् । पश्यमानस्तदात्मान-मसमं मातरिश्वना ॥ १४ ॥ नारदे यन्मया प्रोक्तं पवनं प्रति तन्मृषा । असमर्थो ह्यहं वायोर्बलेन बलवान् हि सः ॥ १५ ॥ मारुतो बलवान्नित्यं यथा वै नारदोऽब्रवीत् । अहन्तु दुर्बलो-ऽन्येभ्यो वृक्षेभ्यो नात्र संशयः ॥ १६ ॥ किन्तु बुद्ध्या समो नास्ति मया कश्चिद्वनस्पतिः । तदहं बुद्धिमास्थाय भयं मोक्ष्ये समीरनात् ॥ १७ ॥ यदि तां बुद्धिमास्थाय तिष्ठेयु पर्णिनो वने । अरिष्टाः

स्युः सदा क्रुद्धात् पवनान्नात्र संशयः ॥ १८ ॥ ते तु बाला न जानन्ति यथा वै तान् समीरण। समीरयति संक्रुद्धो यथा जानाम्यहं तथा ॥ १९ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि पवनशाल्मलि-
सम्वादे षट्पञ्चाशदधिकशततोऽध्यायः ॥ १५६ ॥

---

भीष्म उवाच। ततो निश्चित्य मनसा शाल्मलिः क्षुभितस्तदा। शाखास्कन्धान् प्रशाखाश्च स्वममेव व्यशातयत् ॥ १ ॥ स परित्यज्य शाखाश्च पत्राणि कुसुमानि च। प्रभाते वायुमायान्तं प्रत्यैक्षत वनस्पतिः ॥ २ ॥ ततः क्रुद्धः श्वसन् वायुः पातयन् वै महाद्रुमान्। आजगामाथ तं देशमास्ते यत्र स शाल्मलिः ॥ ३ ॥ तं हीनपर्णं पतिताग्रशाखं विशीर्णपुष्पं प्रसमीक्ष्य वायुः। उवाच वाक्यं स्मयमान एव मुदायुतः शाल्मलिमुग्रशाखम् ॥ ४ ॥

वायुरुवाच। अहमप्येवमेवं त्वां कुर्वाणः शाल्मले रुषा। आत्मना यत् कृतं कृच्छ्रं शाखानामपकर्षणम् ॥ ५ ॥ हीनपुष्पाग्रशाखस्त्वं शीर्णाङ्कुरपलाशकः। आत्मदुर्मन्त्रितेनेह मद्वीर्य्यवशगः कृतः ॥ ६ ॥

भीष्म उवाच। एतत् श्रुत्वा वचो वायोः शाल्मलिर्व्रीड़ितस्तदा। अतप्यत वचः श्रुत्वा नारदो यत्तदाब्रवीत् ॥ ७ ॥ एवं हि राजशार्दूल दुर्बलः सन् बलीयसा। वैरमारभते बालस्तप्यते शाल्मलिर्यथा ॥ ८ ॥ तस्माद्वैरं न कुर्वीत दुर्बलो बलवत्तरैः। शोचेद्धि वैरं कुर्वाणो यथा वै शाल्मलिस्तथा ॥९॥ न हि वैरं महात्मानो विवृखन्त्यपकारिषु। शनैः शनैर्महाराज दर्शयन्ति स्म ते बलम् ॥ १० ॥ वैरं न कुर्वीत नरो दुर्बुद्धिर्बुद्धिजीविना। बुद्धिर्बुद्धिमतो याति तृणेष्विव हुताशनः ॥ ११ ॥ न हि बुद्ध्या समं किञ्चिद्विद्यते पुरुषे

नृप । तथा बलेन राजेन्द्र न समोऽस्तीह कश्चन ॥ १२ ॥ तस्मात् क्षमेत बालाय जड़ान्धबधिराय च । बलाधिकाय राजेन्द्र तद्दृष्टं त्वयि शत्रुहन् ॥ १३ ॥ अक्षौहिण्यो दशैका च सप्त चैव महाद्युते । बलेन न समा राजन्नर्जुनस्य महात्मनः ॥ १४ ॥ निहताश्चैव भग्नाश्च पाण्डवेन यशस्विना । चरता बलमास्थाय पाकशासनिना मृधे ॥ १५ ॥ उक्तास्ते राजधर्मा आपद्धर्माश्च भारत । विस्तरेण महाराज किं भूयः श्रोतुमिच्छसि ॥ १६ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि पवनशाल्मलिसम्वादे सप्तपञ्चाशदधिकशततोऽध्यायः ॥ १५७ ॥

---

युधिष्ठिर उवाच । पापस्य यदधिष्ठानं यतः पापं प्रवर्त्तते । एतदिच्छाम्यहं श्रोतुं तत्त्वेन भरतर्षभ ॥ १ ॥

भीष्म उवाच । पापस्य यदधिष्ठानं तत् शृणुष्व नराधिप । एको लोभो महाग्राहो लोभात् पापं प्रवर्त्तते ॥ २ ॥ अतः पापमधर्म्मश्च तथा दुःखमनुत्तमम् । निकृत्या मूलमेतद्धि येन पापकृतो जनाः ॥ ३ ॥ लोभात् क्रोधः प्रभवति लोभात् कामः प्रवर्त्तते । लोभान्मोहश्च माया च मानस्तम्भः परासुता ॥ ४ ॥ अक्षमा ह्रीपरित्यागः श्रीनाशो धर्म्मसंक्षयः । अभिध्याप्रख्यता चैव सर्वं लोभात् प्रवर्त्तते ॥ ५ ॥ अत्यागश्चातितर्षश्च विकर्म्मसु च या क्रिया । कुलविद्या मदश्चैव रूपैश्वर्य्यमदस्तथा ॥ ६ ॥ सर्वभूतेष्वभिद्रोहः सर्वभूतेष्वसत्कृतिः । सर्वभूतेष्वविश्वासः सर्वभूतेष्वनार्जवम् ॥ ७ ॥ हरणं परवित्तानां परदाराभिमर्षणम् । वाग्वेगो मनसो वेगो निन्दावेगस्तथैव च ॥ ८ ॥ उपस्थोदरयोर्वेगो मृत्युवेगश्च दारुणः । ईर्षावेगश्च बलवान् मिथ्यावेगश्च दुर्ज्जयः । रसवेगश्च दुर्वार्य्यः श्रोत्रवेगश्च दुःसहः ॥९॥ कुत्सा विकत्था मात्सर्य्यं पापं दुष्करकारिता ।

साहसानाञ्च सर्व्वेषामकार्य्याणां क्रियास्तथा॥ १०॥ जातौ बाल्ये च कौमारे यौवने चापि मानवाः। न सन्त्यजन्त्यात्मकर्म्म यो न जीर्य्यति जीर्य्यतः॥ ११॥ यो न पूरयितुं शक्यो लोभः प्राप्त्या कुरूद्वह। नित्यं गम्भीरतोयाभिरापगाभिरिवोदधिः। न प्रहृष्यति यो लाभैः कामैर्यश्च न तृप्यति॥ १२॥ यो न देवैर्न गन्धर्व्वैर्नासुरैर्न महोरगैः। ज्ञायते नृप तत्त्वेन सर्व्वैर्भूतगणैस्तथा। स लोभः सह मोहेन विजेतव्यो जितात्मना॥ १३॥ दम्भो द्रोहश्च निन्दा च पैशुन्यं मत्सरस्तथा। भवन्त्येतानि कौरव्य लुब्धानामकृतात्मनाम्॥ १४॥ सुमहान्त्यपि शास्त्राणि धारयन्ति बहुश्रुताः। छेत्तारः संशयानाञ्च क्लिश्यन्तीहाल्पबुद्धयः॥ १५॥ द्वेषक्रोधप्रसक्ताश्च शिष्टाचारबहिष्कृताः। अन्तःक्रूरा वाङ्मधुराः कूपाश्छन्नास्तृणैरिव॥१६॥ धर्म्मवैतंसिकाः क्षुद्रा मुष्णन्ति ध्वजिनो जगत्। कुर्व्वते च बहून् मार्गांस्तान् हेतुबलमाश्रिताः। सतां मार्गान् विलुम्पन्ति लोभज्ञानेष्ववस्थिताः॥ १७॥ धर्म्मस्य क्रियमाणस्य लोभग्रस्तैर्दुरात्मभिः। या या विक्रियते संस्था ततः सापि प्रपद्यते॥ १८॥ दर्पः क्रोधो मदः स्वप्नो हर्षः शोकोऽभिमानिता। एत एव हि कौरव्य दृश्यन्ते लुब्धबुद्धिषु॥ १९॥ एतानशिष्टान् बुध्यस्व नित्यं लोभसमन्वितान्। शिष्टांस्तु परिपृच्छेथा यान् वक्ष्यामि शुचिव्रतान्॥ २०॥ येष्वावृत्तिभयं नास्ति परलोकभयं न च। नामिषेषु प्रसङ्गोऽस्ति न प्रियेष्वप्रियेषु च॥२१॥ शिष्टाचारः प्रियो येषु दमो येषु प्रतिष्ठितः। सुखदुःखं समं येषां सत्यं येषां परायणम्॥ २२॥ दातारो न गृहीतारो दयावन्तस्तथैव च। पितृदेवातिथेयाश्च नित्योद्युक्तास्तथैव च॥ २३॥ सर्व्वोपकारिणो वीराः सर्व्वधर्म्मानुपालकाः। सर्व्वभूतहिताश्चैव सर्व्वदेयाश्च भारत॥ २४॥ न ते चालयितुं शक्या धर्म्मव्याहारकारिणः। न तेषां भिद्यते वृत्तं यत् पुरा साधुभिः कृतम्॥२५॥

न वाग्मिनो न चपला न रौद्राः सत्पथे स्थिताः। ते सेव्याः साधुभिर्नित्यं येष्वहिंसाप्रतिष्ठिताः ॥ २६ ॥ कामक्रोधव्यपेता ये निर्ममा निरहङ्कृताः। सुव्रताः स्थिरमर्य्यादास्तानुपास्स्व च पृच्छ च ॥ २७ ॥ न धनार्थं यशोऽर्थं वा धर्मस्तेषां युधिष्ठिर। अवश्यं कार्य्य इत्येव शरीरस्य क्रियास्तथा ॥ २८ ॥ न भयं क्रोधचापल्ये न शोकस्तेषु विद्यते। न धर्मध्वजिनश्चैव न गुह्यं किञ्चिदास्थिताः ॥ २९ ॥ येष्वलोभस्तथामोहो ये च सत्यार्ज्जवे स्थिताः। तेषु कौन्तेय रज्येथा येषां न भ्रश्यते पुनः ॥ ३० ॥ ये न हृष्यन्ति लाभेषु नालाभेषु व्यथन्ति च। निर्ममा निरहङ्काराः सत्त्वस्थाः समदर्शिनः ॥ ३१ ॥ लाभालाभौ सुखदुःखे च तात प्रियाप्रियं मरणं जीवितञ्च। समानि येषां स्थिरविक्रमाणां बुभुत्सतां सत्त्वपथस्थितानाम् ॥ ३२ ॥ धर्मप्रियांस्तान् सुमहानुभावान् दान्तोऽप्रमत्तश्च समर्चयेथाः। दैवात् सर्व्वे गुणवन्तो भवन्ति शुभाशुभे वाक्प्रलापास्तथान्ये ॥ ३३ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि
अष्टपञ्चाशदधिकशततोऽध्यायः ॥ १५८ ॥

---

युधिष्ठिर उवाच। अनर्थानामधिष्ठानमुक्तो लोभः पितामह। अज्ञानमपि वै तात श्रोतुमिच्छामि तत्त्वतः ॥ १ ॥

भीष्म उवाच। करोति पापं योऽज्ञानान्नात्मनो वेत्ति च क्षयम्। प्रद्वेष्टि साधुवृत्तांश्च स लोकस्यैति वाच्यताम् ॥ २ ॥ अज्ञानान्निरयं याति तथाज्ञानेन दुर्गतिम्। अज्ञानात् क्लेशमाप्नोति तथापत्सु निमज्जति ॥ ३ ॥

युधिष्ठिर उवाच। अज्ञानस्य प्रवृत्तिञ्च स्थानं वृद्धिं क्षयोदयौ। मूलं योगं गतिं कालं कारणं हेतुमेव च ॥ ४ ॥ श्रोतु-

मिच्छामि तत्त्वेन यथावदिह पार्थिव। अज्ञानप्रभवं हीदं यद्दुःख-मुपलभ्यते ॥ ५ ॥

भीष्म उवाच। रागो द्वेषस्तथा मोहो हर्षः शोकोऽभिमानिता। कामः क्रोधश्च दर्पश्च तन्द्रा चालस्यमेव च ॥ ६ ॥ इच्छा द्वेषस्तथा तापः परवृद्ध्युपतापिता। अज्ञानमेतन्निर्द्दिष्टं पापानाञ्चैव याः क्रियाः ॥ ७ ॥ एतस्य वा प्रवृत्तेश्च वृद्ध्यादीन् यांश्च पृच्छसि। विस्तरेण महाराज शृणु तच्च विशेषतः ॥ ८ ॥ उभावेतौ समफलौ समदोषौ च भारत। अज्ञानञ्चातिलोभञ्चाप्येकं जानीहि पार्थिव ॥ ९ ॥ लोभप्रभवमज्ञानं वृद्धं भूयः प्रवर्द्धते। स्थाने स्थाने क्षयं क्षीणे उपैति विविधां गतिम् ॥ १० ॥ मूलं लोभस्य मोहो वै कालात्मगतिरेव च। छिन्ने भिन्ने तथा लोभे कारणं काल एव च ॥ ११ ॥ तस्याज्ञानाद्धि लोभो हि लोभादज्ञानमेव च। सर्व्वदोषास्तथा लोभात्तस्माल्लोभं विवर्ज्जयेत् ॥१२॥ जनको युवनाश्वश्च वृषादर्भिः प्रसेनजित्। लोभक्षयाद्दिवं प्राप्तास्तथैवान्ये जनाधिपाः ॥ १३ ॥ प्रत्यक्षन्तु कुरुश्रेष्ठ त्यज लोभमिहात्मना। त्यक्त्वा लोभं सुखं लोके प्रेत्य चानुचरिष्यसि ॥ १४ ॥

इति शान्तिपर्व्वणि आपद्धर्म्मानुशासनपर्व्वणि
एकोनषष्ट्यधिकशततोऽध्यायः ॥ १५९ ॥

---

युधिष्ठिर उवाच। स्वाध्याये कृतयत्नस्य नरस्य च पितामह। धर्म्मकामस्य धर्म्मात्मन् किं नु श्रेय इहोच्यते ॥ १ ॥ बहुधा दर्शने लोके श्रेयो यदिह मन्यसे। अस्मिंल्लोके परे चैव तन्मे ब्रूहि पितामह ॥ २ ॥ महानयं धर्म्मपथो बहुशाखश्च भारत। किंस्विदेवेह धर्म्माणामनुष्ठेयतमं मतम् ॥ ३ ॥ धर्म्मस्य महतो राजन् बहुशाखस्य तत्त्वतः। यन्मूलं परमं तात तत्सर्व्वं ब्रूहि तत्त्वतः ॥४॥

भीष्म उवाच । हन्त ते कथयिष्यामि येन श्रेयो ह्यवाप्स्यसि । पीत्वामृतमिव प्राज्ञो ज्ञानतृप्तो भविष्यसि ॥ ५ ॥ धर्मस्य विधयो नैको ये वै प्रोक्ता महर्षिभिः । स्वं स्वं विज्ञानमाश्रित्य दमस्तेषां परायणम् ॥ ६ ॥ दमं निःश्रेयसं प्राहुर्वृद्धा निश्चयदर्शिनः । ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ॥ ७ ॥ दमात्तस्य क्रियासिद्धिर्यथावदुपलभ्यते । दमो दानं तथा यज्ञानधीतं चातिवर्त्तते ॥ ८ ॥ दमस्तेजो वर्द्धयति पवित्रञ्च दमः परम् । विपाप्मा तेजसा युक्तः पुरुषो विन्दते महत् ॥ ९ ॥ दमेन सदृशं धर्मं नान्यं लोकेषु शुश्रुम । दमो हि परमो लोके प्रशस्तः सर्वकर्मणाम् ॥१०॥ प्रेत्य चात्र मनुष्येन्द्र परमं विन्दते सुखम् । दमेन हि समायुक्तो महान्तं धर्ममश्नुते ॥ ११ ॥ सुखं दान्तः प्रस्वपिति सुखञ्च प्रतिबुध्यते । सुखं पर्य्येति लोकांश्च मनश्चास्य प्रसीदति ॥१२॥ अदान्तः पुरुषः क्लेशमभीक्ष्णं प्रतिपद्यते । अनर्थांश्च बहूनन्यान् प्रसृजत्यात्मदोषजान् ॥ १३ ॥ आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतम् । तस्य लिङ्गानि वक्ष्यामि येषां समुदयो दमः ॥ १४ ॥ क्षमा धृतिरहिंसा च समता सत्यमार्ज्जवम् । इन्द्रियाभिजयो दाक्ष्यं मार्द्दवं ह्रीरचापलम् ॥ १५ ॥ अकार्पण्यमसंरम्भः सन्तोषः प्रियवादिता । अविहिंसानसूया चाप्येषां समुदयो दमः ॥ १६ ॥ गुरुपूजा च कौरव्य दयाभूतेषु पैशुनम् । जनवादं मृषावादं स्तुतिनिन्दाविवर्ज्जनम् ॥ १७ ॥ कामं क्रोधञ्च लोभञ्च दर्पं स्तम्भं विकत्थनम् । रोषमीर्षावमानञ्च नैव दान्तो निषेवते ॥ १८ ॥ अनिन्दितो ह्यकामात्मा नाल्पेष्वर्थ्यनसूयकः । समुद्रकल्पः स नरो न कथञ्चन पूर्य्यते ॥१९॥ अहं त्वयि मम त्वञ्च मयि ते तेषु चाप्यहम् । पूर्वसम्बन्धिसंयोगा न्नैतद्दान्तो निषेवते ॥ २० ॥ सर्वा ग्राम्यास्तथारण्या याश्च लोके प्रवृत्तयः । निन्दाञ्चैव प्रशंसाञ्च यो नाश्रयति मुच्यते ॥ २१ ॥ मैत्रोऽथ शीलसम्पन्नः प्रसन्नात्मात्मविच्च यः । मुक्तस्य विविधैः

सङ्गैस्तस्य प्रेत्य फलं महत् ॥ २२ ॥ सुवृत्तः शीलसम्पन्नः प्रसन्नात्मात्मविद्बुधः। प्राप्येह लोके सत्कारं सुगतिं प्रतिपद्यते ॥२३॥ कर्म्म यत् शुभमेवेह सद्भिराचरितञ्च यत्। तदेव ज्ञानयुक्तस्य मुनेर्वर्त्म न हीयते ॥ २४ ॥ निष्क्रम्य वनमास्थाय ज्ञानयुक्तो जितेन्द्रियः। कालाकाङ्क्षी चरत्येवं ब्रह्मभूयाय कल्पते ॥ २५ ॥ अभयं यस्य भूतेभ्यो भूतानामभयं यतः। तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ॥ २६ ॥ अवाचिनोति कर्माणि न च सम्प्रचिनोति ह। समः सर्व्वेषु भूतेषु मैत्रायणगतिश्चरेत् ॥ २७ ॥ शकुनीनामिवाकाशे जले वारिचरस्य च। यथा गतिर्न दृश्येत तथा तस्य न संशयः ॥ २८ ॥ गृहानुत्सृज्य यो राजन्मोक्षमेवाभिपद्यते। लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वतीः समाः ॥ २९ ॥ सन्न्यस्य सर्व्वकर्माणि सन्न्यस्य विधिवत्तपः। सन्न्यस्य विविधा विद्याः सर्व्वं सन्न्यस्य चैव ह ॥ ३० ॥ कामे शुचिरणावृत्तः प्रसन्नात्मात्मविच्छुचिः। प्राप्येह लोके सत्कारं स्वर्गं समभिपद्यते ॥ ३१ ॥ यच्च पैतामहं स्थानं ब्रह्मराशिसमुद्भवम्। गुहायां पिहितं नित्यं तद्दमेनाभिगम्यते ॥३२॥ ज्ञानारामस्य बुद्धस्य सर्व्वभूताविरोधिनः। नावृत्तिभयमस्तीह परलोकभयं कुतः ॥ ३३ ॥ एक एव दमे दोषो द्वितीयो नोपपद्यते। यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥३४॥ एकोऽस्य सुमहाप्राज्ञ दोषः स्यात् सुमहान् गुणः। क्षमया विपुला लोकाः सुलभा हि सहिष्णुता ॥ ३५ ॥ दान्तस्य किमरण्येन तथादान्तस्य भारत। यत्रैव निवसेद्दान्तस्तदरण्यं स चाश्रयः ॥३६॥

वैशम्पायन उवाच। एतद्भीष्मस्य वचनं श्रुत्वा राजा युधिष्ठिरः। अमृतेनेव संतृप्तः प्रहृष्टः समपद्यत ॥३७॥ पुनश्च परिपप्रच्छ भीष्मं धर्म्मभृताम्वरम्। ततः प्रीतः स चोवाच तस्मै सर्व्वं कुरूद्वहः ॥३८॥

इति शान्तिपर्व्वणि आपद्धर्मानुशासनपर्व्वणि दमप्रशंसायां षष्ट्यधिकशततोऽध्यायः ॥ १६० ॥

भीष्म उवाच। सर्वमेतत्तपोमूलं कवयः परिचक्षते। न ह्यतप्त-तपा मूढ़ः क्रियाफलमवाप्नुते॥ १॥ प्रजापतिरिदं सर्वं तपसैवा-सृजत् प्रभुः। तथैव वेदानृषयस्तपसा प्रतिपेदिरे॥ २॥ तपसैव समर्ज्जान्नं फलमूलानि यानि च। त्रींल्लोकांस्तपसा सिद्धाः पश्यन्ति सुसमाहिताः॥ ३॥ औषधान्यगदादीनि क्रियाश्च विविधास्तथा। तपसैव हि सिध्यन्ति तपोमूलं हि साधनम्॥ ४॥ यद्दुरापं भवेत् किञ्चित् तत् सर्वं तपसो भवेत्। ऐश्वर्य्यमृषयः प्राप्तास्तपसैव न संशयः॥ ५॥ सुरापोऽसम्मतादायी भ्रूणहा गुरुतल्पगः। तपसैव सुतप्तेन नरः पापाद्विमुच्यते॥ ६॥ तपसो बहुरूपस्य तैस्तैर्द्वारैः प्रवर्त्ततः। निवृत्तस्य वर्त्तमानस्य तपो नानशनात् परम्॥ ७॥ अहिंसा सत्यवचनं दानमिन्द्रियनिग्रहः। एतेभ्यो हि महाराज तपो नानशनात् परम्॥ ८॥ न दुष्करतरं दानान्नातिमातर-माश्रमः। त्रैविद्येभ्यः परं नास्ति सन्न्यासः परमं तपः॥ ९॥ इन्द्रियाणीह रक्षन्ति स्वर्गधर्माभिगुप्तये। तस्मादर्थे च धर्मे च तपो नानशनात् परम्॥ १०॥ ऋषयः पितरो देवा मनुष्या मृग-पक्षिणः। यानि चान्यानि भूतानि स्थावराणि चराणि च॥११॥ तपःपरायणाः सर्वे सिध्यन्ति तपसा च ते। इत्येवं तपसा देवा महत्वं प्रतिपेदिरे॥ १२॥ इमानीष्टविभागानि फलानि तपसः सदा। तपसा शक्यते प्राप्तुं देवत्वमपि निश्चयात्॥ १३॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि तपःकथने
एकषष्ट्यधिकशततोऽध्यायः॥ १६१॥

---

युधिष्ठिर उवाच। सत्यं धर्मं प्रशंसन्ति विप्रर्षिपितृदेवताः। सत्यमिच्छाम्यहं श्रोतुं तन्मे ब्रूहि पितामह॥ १॥ सत्यं किं लक्षणं राजन् कथं वा तदवाप्यते। सत्यं प्राप्य भवेत् किञ्च कथ-ञ्चैव तदुच्यताम्॥ २॥

भीष्म उवाच। चातुर्वर्ण्यस्य धर्म्माणां सङ्करो न प्रशस्यते।
अविकारितमं सत्यं सर्व्ववर्णेषु भारत ॥ ३ ॥ सत्यं सत्सु सदा धर्म्मः
सत्यं धर्म्मः सनातनः। सत्यमेव नमस्येत सत्यं हि परमा गतिः ॥४॥
सत्यं धर्म्मस्तपो योगः सत्यं ब्रह्म सनातनम्। सत्यं यज्ञः परः
प्रोक्तः सर्व्वं सत्ये प्रतिष्ठितम् ॥ ५ ॥ आकारानिह सत्यस्य यथा-
वदनुपूर्व्वशः। लक्षणञ्च प्रवक्ष्यामि सत्यस्येह यथाक्रमम् ॥ ६ ॥
प्राप्यते च यथा सत्यं तच्च श्रोतुमिहार्हसि। सत्यं त्रयोदशविधं
सर्व्वलोकेषु भारत ॥ ७ ॥ सत्यञ्च समता चैव दमश्चैव न संशयः।
अमात्सर्य्यं क्षमा चैव ह्रीस्तितिक्षानसूयता ॥ ८ ॥ त्यागो ध्यान-
मथार्य्यत्वं धृतिश्च सततं दया। अहिंसा चैव राजेन्द्र सत्याकारा-
स्त्रयोदश ॥ ९ ॥ सत्यं नामाव्ययं नित्यमविकारि तथैव च।
सर्व्वधर्माविरुद्धेन योगेनैतदवाप्यते ॥ १० ॥ आत्मनीष्टे तथानिष्टे
रिपौ च समता तथा। इच्छाद्वेषक्षयं प्राप्य कामक्रोधक्षयं तथा
॥ ११ ॥ दमोनान्यस्पृहा नित्यं गाम्भीर्य्यं धैर्य्यमेव च। अभयं
रोगशमनं ज्ञानेनैतदवाप्यते ॥ १२ ॥ अमात्सर्य्यं बुधाः प्राहुर्दाने
धर्म्मे च संयमः। अवस्थिते च नित्यञ्च सत्येनामत्सरी भवेत् ॥१३॥
अक्षमायाः क्षमायाश्च प्रियाणीहाप्रियाणि च। क्षमते सम्मतः
साधुः साध्वाप्नोति च सत्यवाक् ॥ १४ ॥ कल्याणं कुरुते वाढ़ं
धीमान्न ग्लायते क्वचित्। प्रशान्तवाङ्मना नित्यं ह्रीस्तु धर्मा-
दवाप्यते ॥ १५ ॥ धर्मार्थहेतोः क्षमते तितिक्षा क्षान्तिरुच्यते।
लोकसंग्रहणार्थं वै सा तु धैर्य्येण लभ्यते ॥ १६ ॥ त्यागः स्नेहस्य
यस्त्यागो विषयाणां तथैव च। रागद्वेषप्रहीणस्य त्यागो भवति
नान्यथा ॥ १७ ॥ आर्य्यता नाम भूतानां यः करोति प्रयत्नतः।
शुभं कर्म निराकारो वीतरागस्तथैव च ॥ १८ ॥ धृतिर्नाम सुखे
दुःखे यथा नाप्नोति विक्रियाम्। तां भजेत सदा प्राज्ञो य इच्छे-
द्भूतिमात्मनः ॥ १९ ॥ सर्व्वथा क्षमिणा भाव्यं तथा सत्यपरेण च।

वीतहर्षभयक्रोधो धृतिमाप्नोति पण्डितः ॥ २० ॥ अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा। अनुग्रहश्च दानञ्च सतां धर्मः सनातनः ॥ २१ ॥ एते त्रयोदशाकाराः पृथक् सत्यैकलक्षणाः। भजन्ते सत्यमेवेह वृंहयन्ते च भारत ॥ २२ ॥ नान्तः शक्यो गुणानाञ्च वक्तुं सत्यस्य पार्थिव। अतः सत्यं प्रशंसन्ति विप्राः सपितृदेवताः ॥ २३ ॥ नास्ति सत्यात् परो धर्मो नानृतात् पातकं परम्। स्थितिर्हि सत्यं धर्मस्य तस्मात् सत्यं न लोपयेत् ॥ २४ ॥ उपैति सत्याद्दानं हि तथा यज्ञाः सदक्षिणाः। त्रेताग्निहोत्रं वेदाश्च ये चान्ये धर्मनिश्चयाः ॥ २५ ॥ अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम्। अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ २६ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि सत्यकथने द्विषष्ट्यधिकशततोऽध्यायः ॥ १६२ ॥

---

युधिष्ठिर उवाच। यतः प्रभवति क्रोधः कामो वा भरतर्षभ। शोकमोहौ विधित्सा च परासुत्वञ्च तद्वद ॥ १ ॥ मात्सर्य्यं मद ईर्षा च कुत्सासूया कृपा भयम्। एतत् सर्वं महाप्राज्ञ याथातथ्येन मे वद ॥ २ ॥

भीष्म उवाच। त्रयोदशैतेऽतिबलाः शत्रवः प्राणिनां स्मृताः। उपासते महाराज समन्तात् पुरुषानिह ॥ ३ ॥ एते प्रमत्तं पुरुषमप्रमत्तास्तुदन्ति च। वृका इव विलुम्पन्ति दृष्ट्वैव पुरुषं बलात् ॥ ४ ॥ एभ्यः प्रवर्त्तते दुःखमेभ्यः पापं प्रवर्त्तते। इति मर्त्त्यो विजानीयात् सततं पुरुषर्षभ ॥ ५ ॥ एतेषामुदयं स्थानं क्षयञ्च पृथिवीपते। हन्त ते कीर्त्तयिष्यामि क्रोधस्योत्पत्तिमादितः। यथातत्त्वं क्षितिपते तदिहैकमना शृणु ॥ ६ ॥ लोभात् क्रोधः प्रभवति परदोषैरुदीर्य्यते। क्षमया तिष्ठते राजन् क्षमया विनि-

वर्त्तते ॥ ७ ॥ सङ्कल्पाज्जायते कामः सेव्यमानो विवर्द्धते । यदा प्राज्ञो विरमते तदा सद्यः प्रणश्यति ॥ ८ ॥ परासूया क्रोधलोभावन्तरा प्रतिमुच्यते । दयया सर्व्वभूतानां निर्व्वेदाद्विनिवर्त्तते । अवद्यदर्शनाद्देति तत्त्वज्ञानाच्च धीमताम् ॥ ९ ॥ अज्ञानप्रभवो मोहः पापाभ्यासात् प्रवर्त्तते । यदा प्राज्ञेषु रमते तदा सद्यः प्रणश्यति ॥ १० ॥ विरुद्धानीह शास्त्राणि पश्यन्तीह कुरूद्वह । विधित्सा जायते तत्र तत्त्वज्ञानान्निवर्त्तते ॥ ११ ॥ प्रीत्या शोकः प्रभवति वियोगात्तस्य देहिनः । यदा निवर्त्तकं वेत्ति तदा सद्यः प्रणश्यति ॥ १२ ॥ परासुता क्रोधलोभादभ्यासाच्च प्रवर्त्तते । दयायाः सर्व्वभूतानां निर्व्वेदात् सा निवर्त्तते ॥ १३ ॥ सत्यत्यागात्तु मात्सर्य्यमहितानाञ्च सेवया । एतत्तु क्षीयते तात साधूनामुपसेवनात् ॥ १४ ॥ कुलात् ज्ञानात्तथैश्वर्य्यान्मदो भवति देहिनाम् । एभिरेव तु विज्ञातैः स च सद्यः प्रणश्यति ॥ १५ ॥ ईर्षा कामात् प्रभवति संहर्षाच्चैव जायते । इतरेषान्तु सत्त्वानां प्रज्ञया सा प्रणश्यति ॥१६॥ विभ्रमाल्लोकबाह्यानां द्वेष्यैर्वाक्यैरसम्मतैः । कुत्सा संजायते राजन् लोकान् प्रेक्ष्याभिशाम्यति ॥ १७ ॥ प्रतिकर्त्तुं न शक्ता ये बलस्थायापकारिणे । असूया जायते तीव्रा कारुण्याद्विनिवर्त्तते ॥ १८ ॥ कृपणान् सन्ततं दृष्ट्वा ततः सञ्जायते कृपा । धर्म्मनिष्ठां यदा वेत्ति तदा शाम्यति सा कृपा ॥ १९ ॥ अज्ञानप्रभवो लोभो भूतानां दृश्यते सदा । अस्थिरत्वञ्च भोगानां दृष्ट्वा ज्ञात्वा निवर्त्तते ॥२०॥ एतान्येव जितान्याहुः प्रशमाच्च त्रयोदश । एते हि धार्त्तराष्ट्राणां सर्व्वे दोषास्त्रयोदश । त्वया सत्यार्थिना नित्यं विजिता ज्येष्ठसेवनात् ॥ २१ ॥

इति शान्तिपर्व्वणि आपद्धर्म्मानुशासनपर्व्वणि लोभोपाख्याने त्रिषष्ट्यधिकशततोऽध्यायः ॥ १६३ ॥

---

युधिष्ठिर उवाच। आनृशंस्यं विजानामि दर्शनेन सतां सदा। नृशंसान्न विजानामि तेषां कर्म च भारत ॥ १ ॥ कण्टकान् कूपमग्निञ्च वर्ज्जयन्ति यथा नराः। तथा नृशंसकर्माणं वर्ज्जयन्ति नरा नरम् ॥ २ ॥ नृशंसो हि दहेदग्न्तां प्रेत्य चेह च भारत। तस्मात्तं ब्रूहि कौरव्य तस्य कर्म्म विनिश्चयम् ॥ ३ ॥

भीष्म उवाच। स्पृहा स्याद्गर्हिता चैव विधित्सा चैव कर्म्मणाम्। आक्रोष्टा क्रुश्यते चैव वञ्चितो बुध्यते स च ॥ ४ ॥ दत्तानुकीर्त्तिर्विषमः क्षुद्रो नैकृतिकः शठः। असम्विभागी मानी च तथा सङ्गी विकत्थनः ॥ ५ ॥ सर्व्वाभिशङ्की पुरुषो वालिशः कृपणोऽथवा। वर्णप्रशंसी सततमाश्रमद्वेषसङ्करी ॥ ६ ॥ हिंसाविहारः सततमविशेषगुणागुणः। बह्वलीको मनस्वी च लुब्धोऽत्यर्थं नृशंसकृत् ॥ ७ ॥ धर्म्मशीलं गुणोपेतं पापमित्यवगच्छति। आत्मशीलप्रमाणेन न विश्वसिति कस्यचित् ॥ ८ ॥ परेषां यत्र दोषः स्यात्तद्गुह्यं संप्रकाशयेत्। समानेष्वेव दोषेषु वृत्त्यर्थमुपघातयेत् ॥ ९ ॥ तथोपकारिणञ्चैव मन्यते वञ्चितं परम्। दत्त्वापि च धनं काले सन्तपत्यपकारिणे ॥ १० ॥ भक्ष्यं पेयमथो लेह्यं यच्चान्यत् साधु भोजनम्। प्रेक्षमाणेषु योऽश्नीयान्नृशंसमिति तं वदेत् ॥११॥ ब्राह्मणेभ्यः प्रदायाग्रं यः सुहृद्भिः सहाश्नुते। स प्रेत्य लभते स्वर्गमिह चानन्त्यमश्नुते ॥ १२ ॥ एष ते भरतश्रेष्ठ नृशंसः परिकीर्त्तितः। सदा विवर्ज्जनीयो हि पुरुषेण विजानता ॥ १३ ॥

इति शान्तिपर्व्वणि आपद्धर्मानुशासनपर्व्वणि नृशंसकथने चतुःषष्ट्यधिकशततोऽध्यायः ॥ १६४ ॥

भीष्म उवाच। कृतार्थो यच्यमाणश्च सर्ववेदान्तगश्च यः। आचार्य्यपितृकार्य्यार्थं स्वाध्यायार्थमथापि च ॥ १ ॥ एते वै साधवो दृष्टा ब्राह्मणा धर्म्मभिक्षवः। निःस्वेभ्यो देयमेतेभ्यो दानं विद्या च भारत ॥ २ ॥ अन्यत्र दक्षिणादानं देयं भरतसत्तम। अन्येभ्योऽपि बहिर्वेदिनाकृतान्नं विधीयते ॥ ३ ॥ सर्वरत्नानि राजा हि यथार्हं प्रतिपादयेत्। ब्राह्मणा एव वेदाश्च यज्ञाश्च बहुदक्षिणाः। अन्योऽन्यं विभवाचारा यजन्ते गुणतः सदा ॥ ४ ॥ यस्य त्रैवार्षिकं भक्तं पर्य्याप्तं भृतवृत्तये। अधिकं वापि विद्येत स सोमं पातुमर्हति ॥ ५ ॥ यज्ञश्चेत् प्रतिरुद्धः स्यादंशेनैकेन यज्वनः। ब्राह्मणस्य विशेषेण धार्म्मिके सति राजनि ॥ ६ ॥ यो वैश्यः स्याद्बहुपशुर्हीनक्रतुरसोमपः। कुटुम्बात्तस्य तद्वित्तं यज्ञार्थं पार्थिवो हरेत् ॥ ७ ॥ आहरेदथ नो किञ्चित् कामं शूद्रस्य वेश्मनः। न हि यज्ञेषु शूद्रस्य कश्चिदस्ति परिग्रहः ॥ ८ ॥ योऽनाहिताग्निः शतगुरयज्वा च सहस्रगुः। तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥ ९ ॥ अदातृभ्यो हरेद्वित्तं विख्याप्य नृपतिः सदा। तथैव चरतो धर्म्मो नृपतेः स्यादथाखिलः ॥ १० ॥ तथैव शृणु मे भक्तं भक्तानि षड़नश्नतः। अश्वस्तनविधानेन हर्त्तव्यं हीनकर्म्मणा ॥११॥ खलात् क्षेत्रात्तथारामाद्यतो वाप्युपपद्यते। आख्यातव्यं नृपस्यैतत् पृच्छतेऽपृच्छतेऽपि वा ॥ १२ ॥ न तस्मै धारयेद्दण्डं राजा धर्म्मेण धर्म्मवित्। क्षत्रियस्य तु बालिश्याद्ब्राह्मणः क्लिश्यते क्षुधा ॥ १३ ॥ श्रुतशीले समाज्ञाय वृत्तिमस्य प्रकल्पयेत्। अथैनं परिरक्षेत पिता पुत्रमिवौरसम् ॥ १४ ॥ इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्य्यये। अनुकल्पः परो धर्म्मो धर्म्मवादैस्तु केवलम् ॥ १५ ॥ विश्वैर्देवैश्च साध्यैश्च ब्राह्मणैश्च महर्षिभिः। आपत्सु मरणाद्भीतैर्विधिप्रतिनिधीकृतः ॥ १६ ॥ प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते। न साम्परायिकं तस्य दुर्म्मतेर्विद्यते फलम् ॥ १७ ॥ न ब्राह्मणो

निवेदैत किञ्चिद्राजनि वेदवित्। स्ववीर्य्याद्राजवीर्य्याच्च स्ववीर्य्यं बलवत्तरम्। कर्त्ता शास्ता विधाता च ब्राह्मणो देव उच्यते ॥१९॥ तस्मिन्नाकुशलं ब्रूयान्न शुष्कामीरयेद्गिरम। क्षत्रियो बाहुवीर्य्येण तरेदापदमात्मनः ॥२०॥ धनैर्वैश्यश्च शूद्रश्च मन्त्रहोमैश्च वै द्विजः। नैव कन्या न युवतिर्नामन्त्रज्ञो न बालिशः ॥ २० ॥ परिवेष्टाग्निहोत्रस्य भवेन्नासंस्कृतस्तथा। नरके निपतन्त्येते जुह्वानाः स च यस्य तत्। तस्माद्वैतानकुशलो होता स्याद्वेदपारगः ॥ २२ ॥ प्राजापत्यमदत्त्वाश्वमग्न्याधेयस्य दक्षिणाम्। अनाहिताग्निरिति स प्रोच्यते धर्मदर्शिभिः ॥ २३ ॥ पुण्यानि यानि कुर्वीत श्रद्दधानो जितेन्द्रियः। अनाप्तदक्षिणैर्यज्ञैर्न यजेत कथञ्चन ॥ २४ ॥ प्रजाः पशूंश्च स्वर्गञ्च हन्ति यज्ञो ह्यदक्षिणः। इन्द्रियाणि यशः कीर्त्तिमायुश्चाप्यवकृन्तति ॥ २५ ॥ उदक्यामासते ये च ये च केचिदनग्नयः। कुलं वाश्रोत्रियं येषां ते सर्व्वे शूद्रकर्म्मिणः ॥ २६ ॥ उदपानोदके ग्रामे ब्राह्मणो वृषलीपतिः। उषित्वा द्वादशसमाः शूद्रकर्मैव गच्छति ॥ २६ ॥ अभार्य्यां शयने बिभ्रत् शूद्रं वृद्धञ्च वै द्विजः। अब्राह्मणं मन्यमानस्तृणेष्वासीत पृष्ठतः। तथा संशुध्यते राजन् शृणु चात्र वचो मम ॥ २८ ॥ यदेकरात्रेण करोति पापं निकृष्टवर्णं ब्राह्मणः सेवमानः। स्थानासनाभ्यां विचरन् व्रती स त्रिभिर्वर्षैः शमयेदात्मपापम् ॥ २९ ॥ न नर्मयुक्तमनृतं हिनस्ति न स्त्रीषु राजन्न विवाहकाले। न गुर्वर्थे नात्मनो जीवितार्थे पञ्चानृतान्याहुरपातकानि ॥ ३० ॥ श्रद्दधानः शुभां विद्यां हीनादपि समाप्नुयात्। सुवर्णमपि चामेध्यादाददीताविचारयन् ॥३१॥ स्त्रीरत्नं दुष्कुलाच्चापि विषादप्यमृतं पिबेत्। अदूष्या हि स्त्रियो रत्नमाप इतेव धर्मतः ॥ ३२ ॥ गोब्राह्मणहितार्थञ्च वर्णानां सङ्करेषु च। वैश्यो गृह्णीत शस्त्राणि परित्राणार्थमात्मनः ॥३३॥ सुरापानं ब्रह्महत्या गुरुतल्पमथापि वा। अनिर्द्देश्यानि मन्यन्ते

प्राणान्तमिति धारणाः ॥ ३४ ॥ सुवर्णहरणं स्तैन्यं विप्रस्वञ्चेति पातकम् । विहरन्मद्यपानाच्च अगम्यागमनादपि ॥ ३५ ॥ पतितैः सम्प्रयोगाच्च ब्राह्मणीयोनितस्तथा । अचिरेण महाराज पतितो वै भवत्युत ॥ ३६ ॥ सम्वत्सरेण पतति पतितेन महाचरन् । याजनाध्यापनाद्यौनान्न तु यानासनाशनात् ॥३७॥ एतानि हित्वा-तोऽन्यानि निर्द्देश्यानीति भारत । निर्द्देश्यानेन विधिना कालेना-व्यसनी भवेत् ॥ ३८ ॥ अन्नं वीर्य्यं गृहीतव्यं प्रेतकर्मण्यपातिते । त्रिषु त्वेतेषु पूर्व्वेषु न कुर्व्वीत विचारणम् ॥ ३९ ॥ अमात्यान् वा गुरून् वापि जह्याद्धर्म्मेण धार्म्मिकः । प्रायश्चित्तानि कर्म्माणि न तै-रर्हन्ति संविदम् । अधर्म्मकारी धर्म्मेण तपसा हन्ति किल्विषम् ॥ ४० ॥ ब्रुवंस्तेन इति स्तेनं तावत् प्राप्नोति किल्विषम् । अस्तेनं स्तेन इत्युक्त्वा द्विगुणं पापमाप्नुयात् ॥ ४१ ॥ त्रिभागं ब्रह्महत्यायाः कन्या प्राप्नोति दुष्यती । यस्तु दूषयिता तस्याः शेषं प्राप्नोति पाप्मनः ॥४२॥ ब्राह्मणानवगूर्य्यैव स्पृष्ट्वा गुरुतरं भवेत् । वर्षाणां हि शतं तात प्रतिष्ठां नाधिगच्छति ॥ ४३ ॥ सहस्रञ्चैव वर्षाणां निपात्य नरकं वसेत् । तस्मान्नैवावगूर्य्येत नैव जातु निपातयेत् ॥ ४४ ॥ शोणितं यावतः पांशून् संगृह्णीयाद्द्विजक्षतात् । तावतीः स समा राजन् नरके प्रतिपद्यते ॥ ४५ ॥ भ्रूणहाहवमध्ये तु शुध्यते शस्त्रपाततः । आत्मानं जुहुयादग्नौ समिद्धे तेन शुध्यते ॥ ४६ ॥ सुरापो वारुणीमुष्णां पीत्वा पापात् प्रमुच्यते । तया स काये निर्द्दग्धे मृतुप्रना प्रेत्य शुध्यति । लोकांश्च लभते विप्रो नान्यथा लभते हि सः ॥ ४७ ॥ गुरुतल्पमधिष्ठाय दुरात्मा पाप-चेतनः । शूर्म्मीं ज्वलन्तीमाश्लिष्य मृतुप्रना सोऽभिशुध्यति ॥ ४८ ॥ अथवा शिश्नवृषणावादायाञ्जलिना स्वयम् । नैर्ऋतीं दिश-मास्थाय निपतत् स त्वजिह्मगः ॥ ४९ ॥ ब्राह्मणार्थेऽपि वा प्राणान् संत्यजेत् तेन शुध्यति । अश्वमेधेन वापीष्ट्वा अथ वा गोसवेन वा ।

अग्निष्टोमेन वा सम्यगिह प्रेत्य च पूज्यते ॥ ५० ॥ तथैव द्वादश-
समाः कापाली ब्रह्महा भवेत्। ब्रह्मचारी भवेन्नित्यं स्वकर्म-
ख्यापयन्मुनिः ॥ ५१ ॥ एवं वा तपसा युक्तो ब्रह्महा स मुनिर्भवेत्।
एवन्तु समभिज्ञातामात्रेयीम्वा निपातयेत् ॥ ५२ ॥ द्विगुणा ब्रह्म-
हत्या वै आत्रेयीनिधने भवेत्। सुरापो नियताहारो ब्रह्मचारी
क्षितीशयः ॥ ५३ ॥ ऊर्द्ध्वं त्रिभ्योऽपि वर्षेभ्यो यजेताग्निष्टुतापरम्।
ऋषभैकसहस्रंगा दत्त्वा शौचमवाप्नुयात् ॥ ५४ ॥ वैश्यं हत्वा तु
वर्षे द्वे ऋषभैकशतञ्च गाः। शूद्रं हत्वाब्दमेवैकमृषभञ्च शतञ्च
गाः। श्ववराहखरान् हत्वा शौद्रमेव व्रतं चरेत् ॥५५॥ मार्ज्जार-
चाषमण्डूकान् काकं व्यालञ्च मूषिकम्। उक्तः पशुसमो दोषो
राजन् प्राणिनिपातनात् ॥ ५६ ॥ प्रायश्चित्तान्यथान्यानि प्रवक्ष्या-
म्यनुपूर्व्वशः। अल्पे वाप्यथ शोचेत पृथक् सम्वत्सरञ्चरेत् ॥५७॥
त्रीणि श्रोत्रियभार्य्यायां परदारे च द्वे स्मृते। काले चतुर्थे भुञ्जानो
ब्रह्मचारी व्रती भवेत् ॥ ५८ ॥ स्थानासनाभ्यां विहरेत् त्रिरह्नो-
ऽभ्युपयन्नृपः। एवमेव निराकर्त्ता यश्चाग्नीन् परिशुध्यति ॥५९॥
त्यजत्यकारणे यश्च पितरं मातरं गुरुम्। पतितः स्यात् स
कौरव्य यथा धर्म्मेषु निश्चयः। ग्रासाच्छादनमात्रन्तु दद्यादिति
निदर्शनम् ॥ ६ ॥ भार्य्यायां व्यभिचारिण्यां निरुद्धायां विशेषतः।
यत् पुंसः परदारेषु तदेनाञ्चारयेद्व्रतम् ॥ ६१ ॥ श्रेयांसं शयनं
हित्वा यान्यत् पापं नियच्छति। श्वभिस्तामर्द्दयेद्राजा संस्थाने
बहुविस्तरे ॥ ६२ ॥ पुमांसमुन्नयेत् प्राज्ञः शयने तप्त आयसे।
अप्यादधीत दारूणि तत्र दह्येत पापकृत् ॥ ६३ ॥ एष दण्डो
महाराज स्त्रीणां भर्त्तृष्वतिक्रमात्। सम्वत्सराभिशस्तस्य दुष्टस्य
द्विगुणो भवेत् ॥ ६४ ॥ द्वे तस्य त्रीणि वर्षाणि चत्वारि सह
सेविनि। कुचरः पञ्चवर्षाणि चरद्भैक्ष्यं मुनिव्रतः ॥ ६५ ॥ परि-
वित्तिः परिवेत्ता या चैव परिविद्यते। पाणिग्राहस्वधर्म्मेण सर्व्वे

ते पतिताः स्मृताः ॥ ६६ ॥ चरेयुः सर्व एवैते वीरहा यद्व्रत-
ञ्चरेत् । चान्द्रायणं चरेन्मासं कृच्छ्रं वा पापशुद्धये ॥ ६७ ॥ परि-
वेत्ता प्रयच्छेत परिवित्ताय तां स्नुषाम् । ज्येष्ठेन त्वभ्यनुज्ञातो
यवीयानप्यनन्तरम् । एवञ्च मोक्षमाप्नोति तौ च सा चैव धर्मतः
॥ ६८ ॥ अमानुषीषु गोवर्ज्जं अनावृष्टिर्न दूष्यति । अधिष्ठातार-
मन्तारं पशूनां पुरुषं विदुः ॥ ६९ ॥ परिधायोर्द्ध्ववालन्तु पात्र-
मादाय मृण्मयम् । चरेत् सप्तगृहान्भिक्षां स्वकर्म्मपरिकीर्त्तयन्
॥ ७० ॥ तत्रैव लब्धभोजी स्यात् द्वादशाहात् स शुध्यति । चरेत्
सम्वत्सरञ्चापि तद्व्रतं येन कृन्तति ॥ ७१ ॥ भवेत्तु मानुषेष्वेवं
प्रायश्चित्तमनुत्तमम् । दानं वा दानशक्तेषु सर्व्वमेतत् प्रकल्पयेत्
॥ ७२ ॥ अनास्तिकेषु गोमात्रं दानमेकं प्रचक्षते ॥७३॥ श्ववराह-
मनुष्याणां कुक्कुटस्य खरस्य च । मांसं मूत्रं पुरीषं वा प्राश्य
संस्कारमर्हति ॥ ७४ ॥ ब्राह्मणस्तु सुरापस्य गन्धमादाय सोमपः ।
अपस्त्र्यहं पिवेदुष्णां त्र्यहमुष्णां पयः पिवेत् ॥ ७५ ॥ त्र्यहमुष्णां
पयः पीत्वा वायुभक्षो भवेत्त्र्यहम् । एवमेतत् समुद्दिष्टं प्रायश्चित्तं
सनातनम् । ब्राह्मणस्य विशेषेण यदज्ञानेन सम्भवेत् ॥ ७६ ॥

इति शान्तिपर्व्वणि आपद्धर्म्मानुशासनपर्व्वणि प्रायश्चित्तीये
पञ्चषष्ट्यधिकशतोऽध्यायः ॥ १६५ ॥

---

वैशम्पायन उवाच । कथान्तरमथासाद्य खड्गयुद्धविशारदः ।
नकुलः शरतल्पस्थमिदमाह पितामहम् ॥ १ ॥

नकुल उवाच । धनुः प्रहरणं श्रेष्ठमतीवात्र पितामह ।
यतस्तु मम धर्म्मज्ञ खड्ग एव सुसंशितः ॥ २ ॥ विशीर्णे कार्म्मुके
राजन् प्रक्षीणेषु च वाजिषु । खड्गेन शक्यते युद्धे साध्वात्मा
परिरक्षितुम् ॥ ३ ॥ शरासनधरांश्चैव गदाशक्तिधरांस्तथा । एकः

खड्गधरो वीरः समर्थः प्रतिवाधितुम् ॥ ४ ॥ एतन्मे संशयश्चैव कौतूहलमतीव च। किंस्वित् प्रहरणं श्रेष्ठं सर्वयुद्धेषु पार्थिव ॥५ कथञ्चोत्पादितः खड्गः कस्मै चार्थाय केन च। पूर्वाचार्य्यञ्च खड्गस्य प्रब्रूहि त्वं पितामह ॥ ६ ॥

वैशम्पायन उवाच। तस्य तद्वचनं श्रुत्वा माद्रीपुत्रस्य धीमतः। स तु कौशलसंयुक्तं सूक्ष्मचित्रार्थसम्मतम् ॥ ७ ॥ ततस्तस्योत्तरं वाक्यं स्वरवर्णोपपादितम्। शिक्षया चोपपन्नाय द्रोणशिष्याय भारत ॥ ८ ॥ उवाच स तु धर्मज्ञो धनुर्वेदस्य पारगः। शरतल्पगतो भीष्मो नकुलाय महात्मने ॥ ९ ॥

भीष्म उवाच। तत्त्वं शृणुष्व माद्रेय यदेतत् परिपृच्छसि। प्रबोधितोऽस्मि भवता धातुमानिव पर्वतः ॥ १० ॥ सलिलैकार्णवं तात पुरा सर्वमभूदिदम्। निष्प्रकम्पमनाकाशमनिर्द्देश्यमहीतलम् ॥ ११ ॥ तमसावृतमस्पर्शमतिगम्भीरदर्शनम्। निःशब्दञ्चाप्रमेयञ्च तत्र जज्ञे पितामहः ॥ १२ ॥ सोऽसृजद्वातमग्निञ्च भास्करञ्चापि वीर्य्यवान्। आकाशमसृजच्चोर्द्धमधो भूमिञ्च नैर्ऋतीम् ॥ १३ ॥ नभः सचन्द्रतारञ्च नक्षत्राणि ग्रहांस्तथा। सम्वत्सरानृतून्मासान् पक्षानथ लवान् क्षणान् ॥ १४ ॥ ततः शरीरं लोकस्थं स्थापयित्वा पितामहः। जनयामास भगवान् पुत्रानुत्तमतेजसः ॥ १५ ॥ मरीचिमृषिमत्रिञ्च पुलस्त्यं पुलहं क्रतुम्। वशिष्ठाङ्गिरसौ चोभौ रुद्रञ्च प्रभुमीश्वरम् ॥ १६ ॥ प्राचेतसस्तथा दक्षः कन्याः षष्टिमजीजनत्। ता वै ब्रह्मर्षयः सर्वाः प्रजार्थं प्रतिपेदिरे ॥१७॥ ताभ्यो विश्वानि भूतानि देवाः पितृगणास्तथा। गन्धर्वाप्सरसश्चैव रक्षांसि विविधानि च ॥ १८ ॥ पतत्रिमृगमीनाश्च प्लवङ्गाश्च महोरगाः। तथा पक्षिगणाः सर्वे जलक्षितिविचारिणः ॥१९ उद्भिदः स्वेदजाश्चैव साण्डजाश्च जरायुजाः। जज्ञे तात जगत् सर्वं तथा स्थावरजङ्गमम् ॥ २० ॥ भूतसर्गमिमं कृत्वा सर्वलोकपिता-

महः । शाश्वतं वेदपठितं धर्मं प्रयुयुजे ततः ॥ २१ ॥ तस्मिन् धर्मे स्थिता देवाः सहाचार्य्यपुरोहिताः । आदित्या वसवो रुद्राःससाध्या मरुदश्विनः ॥ २२ ॥ भृग्वत्र्यङ्गिरसः सिद्धाः कश्यपश्च तपोधनः । वशिष्ठगौतमागस्त्यास्तथा नारदपर्वतौ ॥ २३ ॥ ऋषयो वालखिल्याश्च प्रभासाः सिकतास्तथा । घृतपाः सोमवायव्या वैश्वानरमरीचिपाः ॥ २४ ॥ आकृष्टाश्चैव हंसाश्च ऋषयो वाग्नि-योनयः । वानप्रस्थाः प्रश्नयश्च स्थिता ब्रह्मानुशासने ॥ २५ ॥ दानवेन्द्रास्त्वतिक्रम्य तत् पितामहशासनम् । धर्मस्यापचयं चक्रुः क्रोध-लोभसमन्विताः ॥ २६ ॥ हिरण्यकशिपुश्चैव हिरण्याक्षो विरोचनः । शम्बरो विप्रचित्तिश्च प्रह्लादो नमुचिर्बलिः ॥ २७ ॥ एते चान्ये च बहवः सगणा दैत्यदानवाः । धर्मसेतुमतिक्रम्य रेमिरे-ऽधर्म्मनिश्चयाः ॥ २८ ॥ सर्वे तुल्याभिजातीया यथा देवास्तथा वयम् । इत्येवं धर्म्ममास्थाय स्पर्द्धमानाः सुरर्षिभिः ॥ २९ ॥ न प्रियं नाप्यनुक्रोशं चक्रुर्भूतेषु भारत । त्रीनुपायानतिक्रम्य दण्डेन रुरुधुः प्रजाः ॥ ३० ॥ न जग्मुः संविदन्तैश्च दर्पादसुरसत्तमाः । अथैव भगवान् ब्रह्मा ब्रह्मर्षिभिरुपस्थितः ॥ ३१ ॥ तथा हिमवतः शृङ्गे सुरम्ये पद्मतारके । शतयोजनविस्तारे मणिरत्नचयाचिते ॥ ३२ ॥ तस्मिन् गिरिवरे पुत्र पुष्पितद्रुमकानने । तस्थौ स विबुधश्रेष्ठो ब्रह्मा लोकार्थसिद्धये ॥ ३३ ॥ ततो वर्षसहस्रान्ते वितानमकरोत् प्रभुः । विधिना कल्पदृष्टेन यथावच्चोपपादितम् ॥ ३४ ॥ ऋषिभिर्यज्ञपटुभिर्यथावत् कर्म्मकर्त्तृभिः । समिद्भिः परि-संकीर्णं दीप्यमानैश्च पावकैः ॥३५॥ काञ्चनैर्यज्ञभाण्डैश्च भ्राजिष्णु-भिरलंकृतम् । वृतं देवगणैश्चैव प्रवरैर्यज्ञमण्डलम् ॥ ३६ ॥ तथा ब्रह्मर्षिभिश्चैव सदस्यैरुपशोभितम् । तत्र घोरतमं वृत्तमृषीणां मे परिश्रुतम् ॥ ३७ ॥ चन्द्रमोविमलं व्योम यथाभ्युदिततारकम् । विकीर्य्याग्निं तथा भूतमुत्थितं श्रूयते तदा ॥ ३८ ॥ नीलोत्पल-

द्रलश्यामं तीक्ष्णदंष्ट्रं कृशोदरम्। प्रांशुं दुर्द्धर्षणञ्चापि अति-
तेजस्तथैव च ॥ ३९ ॥ तस्मिन्नुत्पतमाने च प्रचचाल वसुन्धरा।
महोर्म्मिकलितावर्त्तश्चुक्षुभे स महोदधिः ॥ ४० ॥ पेतुरुल्का महोत्-
पाताः शाखाश्च मुमुचुर्द्रुमाः। अप्रशान्ता दिशः सर्व्वाः पवनाश्चा-
शिवो ववौ। मुहुर्म्मुहुश्च भूतानि चाव्यथन्त भयात्तदा ॥ ४१ ॥
ततः स तुमुलं दृष्ट्वा तच्च भूतमुपस्थितम्। महर्षिसुरगन्धर्व्वानुवा-
चेदं पितामहः ॥ ४२ ॥ मयैवं चिन्तितं भूतमसिर्नामैष वीर्य्यवान्।
रक्षणाय च लोकस्य वधाय च सुरद्विषाम् ॥ ४३ ॥ ततस्तद्रूप-
मुत्सृज्य बभौ निस्त्रिंश एव सः। विमलस्तीक्ष्णधारश्च कालान्तक
इवोद्यतः ॥ ४४ ॥ तत स शितिकण्ठाय रुद्रायर्षभकेतवे। ब्रह्मा
ददावसिं तीक्ष्णमधर्म्मप्रतिवारणम् ॥४५॥ ततः स भगवान् रुद्रो
महर्षिजनसंस्तुतः। प्रगृह्यासिममेयात्मा रूपमन्यच्चकार ह ॥४६॥
चतुर्बाहुः स्पृशन्मूर्द्ध्ना भूस्थितोऽपि दिवाकरम्। ऊर्द्ध्वदृष्टिर्महा-
लिङ्गो मुखाज्ज्वालाः समुत्सृजन् ॥ ४७ ॥ विकुर्व्वन् बहुधा वर्णा-
न्नीलपाण्डुरलोहितान्। बिभ्रत् कृष्णाजिनं वासो हेमप्रवरतार-
कम् ॥ ४८ ॥ नेत्रञ्चैकं ललाटेन भास्करप्रतिमं वहन्। शुशुभाते-
ऽतिविमले द्वे नेत्रे कृष्णपिङ्गले ॥ ४९ ॥ ततो देवो महादेवः
शूलपाणिर्भगाक्षिहा। संप्रगृह्य तु निस्त्रिंशं कालाग्निसमवर्च्चसम्
॥ ५० ॥ त्रिकूटं चर्म्म चोद्यम्य सविद्युतमिवाम्बुदम्। चचार
विविधान्मार्गान् महाबलपराक्रमः। विधुन्वन्नसिमाकाशे तथा
युद्धचिकीर्षया ॥ ५१ ॥ तस्य नादं विनदतो महाहासञ्च मुञ्चतः।
बभौ प्रतिभयं रूपं तदा रुद्रस्य भारत ॥ ५२ ॥ तद्रूपधारिणं
रुद्रं रौद्रकर्म्मचिकीर्षया। निशम्य दानवाः सर्व्वे हृष्टाः समभि-
दुद्रुवुः ॥ ५३ ॥ अश्मभिश्चाभ्यवर्षन्त प्रदीप्तैश्च तथोल्मुकैः। घोरैः
प्रहरणैश्चान्यैः क्षुरधारैरयोमयैः ॥ ५४ ॥ ततस्तु दानवानीकं
संप्रणेतारमच्युतम्। रुद्रं दृष्ट्वा बलोद्भूतं प्रमुमोह चचाल च ॥५५

चित्रं शीघ्रपदत्वाच्च चरन्तमसिपाणिनम्। तमेकमसुराः सर्व्वे सहस्रमिति मेनिरे ॥ ५६ ॥ छिन्दन् भिन्दन् रुजन् कृन्तन् दारयन् पोथयन्नपि। अचरद्दैत्यसङ्घेषु दावाग्निरिव कक्षगः ॥ ५७ ॥ असिवेगप्रभग्नास्ते छिन्नबाहूरुवक्षसः। संप्रकृत्तोत्तमाङ्गाश्च पेतुरुर्व्यां महाबलाः ॥ ५८ ॥ अपरे दानवा भग्नाः खड्गपातावपीड़िताः। अन्योऽन्यमभिनन्दन्तो दिशः संप्रतिपेदिरे ॥ ५९ ॥ भूमिं केचित् प्रविविशुः पर्वतानपरे तथा। अपरे जग्मुराकाशमपरेऽम्भ समाविशन् ॥ ६० ॥ तस्मिन्महति सम्वृत्ते समरे भृशदारुणे। बभूव भूः प्रतिभया मांसशोणितकर्द्दमा ॥ ६१ ॥ दानवानां शरीरैश्च पतितैः शोणितोक्षितैः। समाकीर्णा महाबाहो शैलैरिव सकिंशुकैः ॥ ६२ ॥ रुधिरेण परिक्लिन्ना प्रबभौ वसुधा तदा। रक्तार्द्रवसना श्यामा नारीव मदविह्वला ॥ ६३ ॥ स रुद्रो दानवान् हत्वा कृत्वा धर्म्मोत्तरं जगत्। रौद्रं रूपमथोत्क्षिप्य चक्रे रूपं शिवं शिवः ॥ ६४ ॥ ततो महर्षयः सर्वे सर्वे देवगणास्तथा। जयेनाद्भुतकल्पेन देवदेवं तथार्च्चयन् ॥ ६५ ॥ ततः स भगवान् रुद्रो दानवक्षतजोक्षितम्। असिं धर्मस्य गोप्तारं ददौ सत्कृत्य विष्णवे ॥५६॥ विष्णुर्मरीचये प्रादात् मरीचिर्भगवानपि। महर्षिभ्यो ददौ खड्गमृषयो वासवाय च ॥ ६७॥ महेन्द्रो लोकपालेभ्यो लोकपालास्तु पुत्रक। मनवे सूर्य्यपुत्राय ददुः खड्गं सुविस्तरम् ॥६८॥ ऊचश्चैनं तथा वाक्यं मानुषाणां त्वमीश्वरः। असिना धर्मगर्भेण पालयस्व प्रजा इति ॥ ६९ ॥ धर्म्मसेतुमतिक्रान्ताः स्थूलसूक्ष्मात्मकारणात्। विभज्य दण्डं रक्ष्यास्तु धर्मतो न यदृच्छया ॥ ७० ॥ दुर्वाचा निग्रहो दण्डो हिरण्यापचयस्तथा। व्यङ्गता च शरीरस्य बधो वानल्पकारणात् ॥ ७१ ॥ असेरेतानि रूपाणि दुर्वाराणीति निर्द्दिशेत्। असेरेवं प्रमाणानि

परिपाल्य व्यतिक्रमात् ॥ ७२ ॥ अभिषिच्याथ पुत्रं स्वं प्रजाना-
मधिपं ततः । मनुः प्रजानां रक्षार्थं क्षुपाय प्रददावसिम् ॥७३॥
क्षुपाज्जग्राह चेक्ष्वाकुरिक्ष्वाकोश्च पुरूरवाः । आयुश्च तस्माल्लेभे तं
नहुषश्च ततो भुवि ॥ ७४ ॥ ययातिर्नहुषाच्चापि पूरुस्तस्माच्च
लब्धवान् । अमूर्त्तरयसस्तस्मात्ततो भूमिशयो नृपः ॥ ७५ ॥
भरतश्चापि दौषन्तिर्लेभे भूमिशयादसिम् । तस्माल्लेभे च धर्मज्ञो
राजन्नैलविलस्तथा ॥ ७६ ॥ ततस्त्वैलविलाल्लेभे धुन्धुमारो नरे-
श्वरः । धुन्धुमाराच्च काम्बोजो मुचुकुन्दस्ततोऽलभत् ॥ ७७ ॥
मुचुकुन्दान्मरुत्तश्च मरुत्तादपि रैवतः । रैवताद्युवनाश्वश्च युव-
नाश्वात् ततो रघुः ॥ ७८ ॥ इक्ष्वाकुवंशजस्तस्माद्धरिणाश्वः प्रताप-
वान् । हरिणाश्वादसिं लेभे शुनकः शुनकादपि । उशीनरो वै
धर्मात्मा तस्माद्भोजः सयादवः ॥ ७९ ॥ यदुभ्यश्च शिविर्लेभे शिवे-
श्चापि प्रतर्द्दनः । प्रतर्द्दनादष्टकश्च पृषदश्वोऽष्टकादपि ॥ ८० ॥
पृषदश्वाद्भरद्वाजो द्रोणस्तस्मात् कृपस्ततः । ततस्तु भ्रातृभिः सार्द्धं
परमासिमवाप्तवान् ॥ ८१ ॥ कृत्तिकाश्चास्य नक्षत्रमसेरग्निश्च दैव-
तम् । रोहिणीगोत्रमस्याथ रुद्रश्च गुरुरुत्तमः ॥ ८२ ॥ असेरष्टौ
हि नामानि रहस्यानि निबोध मे । पाण्डवेय सदा यानि कीर्त्तय-
ल्लभते जयम् ॥८३॥ असिर्विशसन खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मपालस्तथैव च ॥ ८४ ॥ अग्र्यः प्रहरणा-
नाञ्च खड्गो माद्रवतीसुत । महेश्वरप्रणीतश्च पुराणे निश्चयं
गतः ॥ ८५ ॥ पृथुस्तूत्पादयामास धनुराद्यमरिन्दम । तेनेयं
पृथिवी दुग्धा शस्यानि सुबहून्यपि । धर्मेण च यथाकालं वैण्येन
परिरक्षता ॥ ८६ ॥ तदेतदार्षं माद्रेय प्रमाणं कर्त्तुमर्हसि ।
असेश्च पूजा कर्त्तव्या सदा युद्धविशारदैः ॥ ८७ ॥ इत्येष प्रथमः
कल्पो व्याख्यातस्ते सविस्तरात् । असेरुत्पत्तिसंसर्गो यथावद्भरत-

र्षभ ॥ ८८ ॥ सर्व्वमेतदिदं श्रुत्वा खड्‌गसाधनमुत्तमम्। लभते पुरुषः कीर्त्तिं प्रेत्य चानन्त्यमश्नुते ॥ ८९ ॥

इति शान्तिपर्व्वणि आपद्धर्म्मानुशासनपर्व्वणि खड्‌गोत्पत्तिकथने षट्‌षष्ट्यधिकशततोऽध्यायः ॥ १६६ ॥

---

वैशम्पायन उवाच। इत्युक्तवति भीष्मे तु तूष्णीं भूते युधिष्ठिर। पप्रच्छावसथं गत्वा भ्रातॄन् विदुरपञ्चमान् ॥ १ ॥ धर्म्मे चार्थे च कामे च लोकवृत्तिः समाहिता। तेषां गरीयान् कतमो मध्यमः को लघुश्च कः ॥२॥ कस्मिंश्चात्मा नियन्तव्यस्त्रिवर्गविजयाय वै। संहृष्टा नैष्ठिकं वाक्यं यथावद्वक्तुमर्हथ ॥ ३ ॥ ततोऽर्थगतितत्त्वज्ञ प्रथमं प्रतिभानवान्। जगाद विदुरो वाक्यं धर्म्मशास्त्रमनुस्मरन् ॥ ४ ॥

विदुर उवाच। बाहुश्रुत्यं तपस्त्यागः श्रद्धा यज्ञक्रिया क्षमा। भावशुद्धिर्दया सत्यं संयमश्चात्मसम्पदः ॥ ५ ॥ एतदेवाभिपद्यस्व मा तेऽभूच्चलितं मनः। एतन्मूलौ हि धर्म्मार्थावेतदेकपदं हि मे ॥ ६ ॥ धर्म्मेणैवर्षयस्तीर्णा धर्म्मे लोकाः प्रतिष्ठिताः। धर्म्मेण देवा ववृधुर्धर्म्मे चार्थः समाहितः ॥ ७ ॥ धर्म्मो राजन् गुणश्रेष्ठो मध्यमो ह्यर्थ उच्यते। कामो यवीयानिति च प्रवदन्ति मनीषिणः ॥ ८ ॥ तस्माद्धर्म्मप्रधानेन भवितव्यं यतात्मना। तथा च सर्व्वभूतेषु वर्त्तितव्यं यथात्मनि ॥ ९ ॥

वैशम्पायन उवाच। समाप्तवचने तस्मिन्नर्थशास्त्रविशारदः। पार्थो धर्म्मार्थतत्त्वज्ञो जगौ वाक्यं प्रचोदितः ॥ १० ॥

अर्ज्जुन उवाच। कर्म्मभूमिरियं राजन्निह वार्त्ता प्रशस्यते। कृषिर्वाणिज्यगोरक्ष्यं शिल्पानि विविधानि च ॥ ११ ॥ अर्थ इत्येव सर्व्वेषां कर्म्मणामव्यतिक्रमः। न ऋतेऽर्थेन वर्त्तेते धर्म्मकामाविति

श्रुतिः ॥ १२ ॥ विषयैश्चार्थवान् धर्ममाराधयितुमुत्तमम् । कामञ्च चरितुं शक्तो दुष्प्रापमकृतात्मभिः ॥ १३ ॥ अर्थस्यावयवावेतौ धर्मकामाविति श्रुतिः । अर्थसिद्धा विनिर्वृत्तावुभावेतौ भविष्यतः ॥ १४ ॥ तद्गतार्थं हि पुरुषं विशिष्टतरयोनयः । ब्रह्माणमिव भूतानि सततं पर्य्युपासते ॥ १५ ॥ जटाजिनधरा दान्ताः पङ्कदिग्धा जितेन्द्रियाः । मुण्डा निस्तन्तवश्चापि वसन्त्यर्थार्थिनः पृथक् ॥ १६ ॥ काषायवसनाश्चान्ये श्मश्रुला ह्रीनिषेविणः । विद्वांसश्चैव शान्ताश्च मुक्ताः सर्वपरिग्रहैः ॥ १७ ॥ अर्थार्थिनः सन्ति केचिदपरे स्वर्गकाङ्क्षिणः । कुलप्रत्यागमाश्चैके स्वं स्वं धर्ममनुष्ठिताः ॥ १८ ॥ आस्तिका नास्तिकाश्चैव नियताः संयमे परे । अप्रज्ञानं तमोभूतं प्रज्ञानन्तु प्रकाशिता ॥ १९ ॥ भृत्यान् भोगैर्द्विषो दण्डैर्यो योजयति सोऽर्थवान् । एतन्मतिमतां श्रेष्ठ मतं मम यथायथम् ॥२० अनयोस्तु निबोध त्वं वचनं वाक्यकण्ठयोः ॥ २१ ॥

वैशम्पायन उवाच । ततो धर्मार्थकुशलौ माद्रीपुत्रावनन्तरम् । नकुलः सहदेवश्च वाक्यं जगदतुः परम् ॥ २२ ॥

नकुलसहदेवावूचतुः । आसीनश्च शयानश्च विचरन्नपि वा स्थितः । अर्थयोगं दृढं कुर्य्याद्योगैरुच्चावचैरपि ॥ २३ ॥ अस्मिंस्तु वै विनिर्वृत्ते दुर्लभे परमं प्रिये । इह कामानवाप्नोति प्रत्यक्षं नात्र संशयः ॥२४॥ योऽर्थो धर्मेण संयुक्तो धर्मो यश्चार्थसंयुतः । तद्धितामृतसम्वादं तस्मादेतौ मताविह ॥ २५ ॥ अनर्थस्य न कामोऽस्ति तथार्थोऽधर्मिणः कुतः । तस्मादुद्विजते लोको धर्मार्थाद्यो बहिष्कृतः ॥ २६ ॥ तस्माद्धर्मप्रधानेन साध्योऽर्थः संयतात्मना । विश्वस्तेषु हि भूतेषु कल्पते सर्वमेव हि ॥२७॥ धर्मं समाचरेत् पूर्वं ततोऽर्थं धर्मसंयुतम् । ततः कामं चरेत् पश्चात् सिद्धार्थस्य हि तत् परम् ॥२८॥

वैशम्पायन उवाच । विरेमतुस्तु तद्वाक्यमुक्त्वा तावश्विनीसुतौ । भीमसेनस्तदा वाक्यमिदं वक्तुं प्रचक्रमे ॥ २९ ॥

भीमसेन उवाच । नाकामः कामयत्यर्थं नाकामो धर्ममिच्छति । नाकामः काममानोऽस्ति तस्मात् कामो विशिष्यते ॥ ३० ॥ कामेन युक्ता ऋषयस्तपस्येव समाहिताः । पलाशफलमूलादा वायुभक्षाः सुसंयताः ॥ ३१ ॥ वेदोपवेदेष्वपरे युक्ताः स्वाध्यायपारगाः । श्राद्धयज्ञक्रियायाञ्च तथा दानप्रतिग्रहे ॥ ३२ ॥ वणिज कर्षका गोपाः कारवः शिल्पिनस्तथा । दैवकर्म्मकृतश्चैव युक्ताः कामेन कर्म्मसु ॥ ३३ ॥ समुद्रञ्चा विशन्त्यन्ये नराः कामेन संयुताः । कामो हि विविधाकारः सर्वं कामेन सन्ततम् ॥ ३४ ॥ नास्ति नासी-न्नाभविष्यत् भूतं कामात्मकात् परम् । एतत् सारं महाराज धर्मार्थावत्र संस्थितौ ॥ ३५ ॥ नवनीतं यथा दध्नस्तथा कामोऽर्थ-धर्मतः । श्रेयस्तैलं हि पिण्याकात् घृतं श्रेय उदश्वितः ॥ ३६ ॥ श्रेयः पुष्पफलं काष्ठात् कामो धर्मार्थयोर्वरः । पुष्पतो माध्वीकरसः काम आभ्यां तथा स्मृतः । कामो धर्मार्थयोर्योनिः कामश्चाथ तदा-त्मकः॥३७॥ नाकामतो ब्राह्मणाः स्वन्नमर्थान्नाकामतो ददति ब्राह्म-णेभ्यः । नाकामतो विविधा लोकचेष्टा तस्मात् कामः प्राक् त्रिवर्गस्य दृष्टः॥३८॥ सुचारुवेशाभिरलङ्कृताभिर्मदोत्कटाभिः प्रियदर्शनाभिः । रमस्व योषाभिरुपेत्य कामं कामो हि राजन्य परो भवेन्नः ॥३९॥ बुद्धिर्ममैषा परिखास्थितस्य मा भूद्विचारस्तव धर्मपुत्र । स्यात्-संहितं सद्भिरफल्गुसारं समेति वाक्यं परमानृशंसम्॥४०॥धर्मार्थ-कामाः सममेव सेव्या यो ह्येकभक्तः स नरो जघन्यः । तयोस्तु दाक्ष्यं प्रवदन्ति मध्यं स उत्तमो योऽभिरतस्त्रिवर्गे । प्राज्ञः सुहृ-च्चन्दनसारलिप्तो विचित्रमाल्याभरणैरुपेतः ॥ ४१ ॥

वैशम्पायन उवाच । ततो वचः संग्रहविस्तरेण प्रोक्ताथ वीरान् विरराम भीमः ॥ ४२ ॥ ततो मुहूर्त्तादथ धर्मराजो वाक्यानि तेषामनुचिन्त्य सम्यक् । उवाच वाचा वितथं स्मरन् वै लब्धश्रुतो धर्मभृतां वरिष्ठः ॥ ४३ ॥

युधिष्ठिर उवाच । निःसंशयं निश्चितधर्मशास्त्राः सर्वे भवन्तो विदितप्रमाणाः । विज्ञातुकामस्य ममेह वाक्यमुक्तं यद्वै नैष्ठिकं तत् श्रुतं मे ॥ ४४ ॥ इदं त्ववश्यं गदतो ममापि वाक्यं निबोधध्वमनन्यभावाः । यो वै न पापे निरतो न पुण्ये नार्थे न धर्मे मनुजो न कामे । विमुक्तदोषः समलोष्टकाञ्चनो विमुच्यते दुःखसुखार्थसिद्धेः ॥ ४५ ॥ भूतानि जातिस्मरणात्मकानि जराविकारैश्च समन्वितानि । भूयश्च तैस्तैः प्रतिबोधितानि मोक्षं प्रशंसन्ति न तञ्च विद्मः ॥ ४६ ॥ स्नेहेन युक्तस्य न चास्ति मुक्तिरिति स्वयम्भूर्भगवानुवाच । बुधाश्च निर्वाणपरा भवन्ति तस्मान्न कुर्यात् प्रियमप्रियञ्च ॥ ४७ ॥ एतत् प्रधानञ्च न कामकारो यथा नियुक्तोऽस्मि तथा करोमि । भूतानि सर्वाणि विधिर्नियुङ्क्ते विधिर्बलीयानिति वित्त सर्वे ॥ ४८ ॥ न कर्मणाप्नोत्यनवाप्यमर्थं यद्भावितद्वै भवतीति वित्त । त्रिवर्गहीनोऽपि हि विन्दतेऽर्थं तस्मादिदं लोकहिताय गुह्यम् ॥ ४९ ॥

वैशम्पायन उवाच । ततस्तदग्र्यं वचनं मनोगतं समस्तमाज्ञाय ततो हि हेतुमत् । तदा प्रणेमुश्च जहर्षिरे च ते कुरुप्रवीराय च चक्रिरेऽञ्जलिम् ॥ ५० ॥ सुचारुवर्णाक्षरचारुभूषितां मनोनुगां निर्धूतवाक्यकण्टकाम् । निशम्य तां पार्थिव पार्थभाषितां गिरं नरेन्द्राः प्रशशंसुरेव ते ॥ ५१ ॥ स चापि तान् धर्मसुतो महामनास्तदा प्रतीतान् प्रशशंस वीर्य्यवान् । पुनश्च पप्रच्छ सरिद्वरासुतं ततः परं धर्ममहीनचेतसम् ॥ ५२ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि षड्जगीतायां सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

---

युधिष्ठिर उवाच । पितामह महाप्राज्ञ कुरूणां प्रीतिवर्द्धनः ।
प्रश्नं कञ्चित् प्रवक्ष्यामि तन्मे व्याख्यातुमर्हसि ॥ १ ॥ कीदृशाः
मानवाः सौम्याः कैः प्रीतिः परमा भवेत् । आयत्याञ्च तदात्वे च
के क्षमास्तान् वदस्व मे ॥ २ ॥ न हि तत्र धनं स्फीतं न च
सम्बन्धिबान्धवाः । तिष्ठन्ति यत्र सुहृदस्तिष्ठन्तीति मतिर्म्मम ॥३॥
दुर्लभो हि सुहृत् श्रोता दुर्लभश्च हितः सुहृत् । एतत् धर्मभृतां
श्रेष्ठ सर्वं व्याख्यातुमर्हति ॥ ४ ॥

भीष्म उवाच । सन्धेयान् पुरुषान्राजन्नसन्धेयांश्च तत्त्वतः ।
वदतो मे निबोध त्वं निखिलेन युधिष्ठिर ॥ ५ ॥ लुब्धः क्रूर-
स्त्यक्तधर्मा निकृतिः शठ एव च । क्षुद्रः पापसमाचारः सर्वशङ्की
तथालसः ॥ ६ ॥ दीर्घसूत्रोऽनृजुः क्रुष्टो गुरुदारप्रधर्षकः । व्यस-
नेयः परित्यागो दुरात्मा निरपत्रपः ॥ ७ ॥ सर्वतः पापदर्शी च
नास्तिको वेदनिन्दकः । संप्रकीर्णेन्द्रियो लोके यः कामं निरत-
श्चरेत् ॥ ८ ॥ असत्यो लोकविद्विष्टः समये चानवस्थितः । पिशुनो-
ऽथाकृतप्रज्ञो मत्सरी पापनिश्चयः ॥ ९ ॥ दुःशीलोऽथाकृतात्मा च
नृशंसः कितवस्तथा । मित्रैरपकृतिर्नित्यमिच्छतेऽर्थं परस्य यः
॥ १० ॥ ददतश्च यथाशक्ति यो न तुष्यति मन्दधीः । अधैर्य्यमपि
यो युङ्क्ते सदा मित्रं नरर्षभ ॥ ११ ॥ अस्थानक्रोधनोऽयुक्तो
यश्चाकस्मादिरुध्यते । सुहृदश्चैव कल्याणानाशु त्यजति किल्विषी
॥ १२ ॥ अल्पेऽप्यपकृते मूढ़स्तथाज्ञानात् कृतेऽपि च । कार्य्यसेवी
च मित्रेषु मित्रद्वेषी नराधिप ॥ १३ ॥ शत्रुर्मित्रमुखो यश्च जिह्म-
प्रेक्षी विलोचनः । न विरज्यति कल्याणे यस्त्यजेत्तादृशं नरम्
॥ १४ ॥ पानपो द्वेषणः क्रोधी निर्घृणः पुरुषस्तथा । परोपतापी
मित्रध्रुक् तथा प्राणिवधे रतः ॥ १५ ॥ कृतघ्नश्चाधमो लोके न
सन्धेयः कदाचन । छिद्रान्वेषी ह्यसन्धेयः सन्धेयानपि मे शृणु
॥ १६ ॥ कुलीना वाक्यसम्पन्ना ज्ञानविज्ञानकोविदाः । रूपवन्तो

गुणोपेतास्तथालुब्धा जितश्रमाः ॥ १७ ॥ सन्मित्राश्च कृतज्ञाश्च सर्वज्ञा लोभवर्ज्जिताः । माधुर्य्यगुणसम्पन्नाः सत्यसन्धा जितेन्द्रियाः ॥ १८ ॥ व्यायामशीलाः सततं कुलपुत्राः कुलोद्वहाः । दोषैर्वियुक्ताः प्रथितास्ते ग्राह्या पार्थिवैर्नराः ॥ १९ ॥ यथाशक्तिसमाचाराः संप्रतुष्यन्ति हि प्रभो । नास्थाने क्रोधवन्तश्च न चाकस्माद्विरागिणः ॥ २० ॥ विरक्ताश्च न दुष्यन्ति मनसाप्यर्थकोविदाः । आत्मानं पीड़यित्वापि सुहृत्कार्य्यपरायणाः ॥ २१ ॥ विरज्यन्ति न मित्रेभ्यो वासो रक्तमिवाधिकम । क्रोधाच्च लोभमोहाभ्यां नानर्थं युवतीषु च ॥ २२ ॥ न दर्शयन्ति सुहृदो विश्वस्ता धर्म्मवत्सलाः । लोष्ट्रकाञ्चनतुल्यार्थाः सुहृत्सु दृढ़बुद्धयः ॥ २३ ॥ ये चरन्त्यभिमानानि निसृष्टात्मविभूषणाः । संगृह्णन्तः परिजनं स्वाम्यर्थपरमाः सदा ॥ २४ ॥ ईदृशैः पुरुषश्रेष्ठैर्यः सन्धिं कुरुते नृपः । तस्य विस्तीर्य्यते राज्यं ज्योत्स्ना ग्रहपतेरिव ॥ २५ ॥ शस्त्रनित्या जितक्रोधा बलवन्तो रणे सदा । जन्मशीलगुणोपेताः सन्धेयाः पुरुषोत्तमाः ॥ २६ ॥ ये च दोषसमायुक्ता नराः प्रोक्ता मयानघ । तेषामप्यधमा राजन् कृतघ्ना मित्रघातकाः । त्यक्तव्यास्तु दुराचाराः सर्वेषामिति निश्चयः ॥ २७ ॥

युधिष्ठिर उवाच । विस्तरेणाथ सम्बन्धं श्रोतुमिच्छामि तत्त्वतः । मित्रद्रोही कृतघ्नश्च यः प्रोक्तस्तद्वदस्व मे ॥ २८ ॥

भीष्म उवाच । हन्त ते वर्त्तयिष्येऽहमितिहासं पुरातनम् । उदीच्यां दिशि यद्वृत्तं म्लेच्छेषु मनुजाधिप ॥ २९ ॥ ब्राह्मणो मध्यदेशीयः कश्चिद्वै ब्रह्मवर्ज्जितम् । ग्रामं वृद्धियुतं वीक्ष्य प्राविशद्भैक्ष्यकाङ्क्षया ॥ ३० ॥ तत्र दस्युर्धनयुतः सर्ववर्णविशेषवित् । ब्रह्मण्यः सत्यसन्धश्च दाने च निरतोऽभवत् ॥ ३१ ॥ तस्य क्षयमुपागम्य ततो भिक्षामयाचत । प्रतिश्रयञ्च वासार्थं भिक्षाञ्चैवाथ वार्षिकीम् ॥ ३२ ॥ प्रादात्तस्मै च विप्राय वस्त्रञ्च सदृशं नवम् ।

नारीञ्चापि वयोपेतां भर्त्रा विरहितां तथा ॥ ३३ ॥ एतत् सम्प्राप्य हृष्टात्मा दस्योः सर्वं द्विजस्तथा। तस्मिन् गृहवरे राजंस्तया रेमे स गौतमः ॥ ३४ ॥ कुटुम्बार्थञ्च दास्याश्च साहाय्यञ्चाप्यथाकरोत्। तत्राऽवसत स वर्षांश्च समृद्धे शवरालये ॥ ३५ ॥ वाणवेधे परं यत्नमकरोच्चैव गौतमः। चक्राङ्गान् स च नित्यं वै सर्वतो वनगोचरान् ॥ ३६ ॥ जघान गौतमो राजन् यथा दस्युगणास्तथा। हिंसापटुर्घृणाहीनः सदा प्राणिवधे रतः। गौतमः सन्निकर्षेण दस्युभिः समतामियात् ॥ ३७ ॥ तथा तु वसतस्तस्य दस्युग्रामे सुखं तदा। अगमन् बहवो मासा निघ्नतः पक्षिणो बहून् ॥३८॥ ततः कदाचिदपरो द्विजस्तं देशमागतः। जटाचीराजिनधरः स्वाध्यायपरमः शुचिः ॥ ३९ ॥ विनीतो नियताहारो ब्रह्मण्यो वेदपारगः। स ब्रह्मचारी तद्देश्यः सखा तस्यैव सुप्रियः ॥ ४० ॥ तं दस्युग्राममगमद्यत्रासौ गौतमोऽवसत्। स तु विप्रगृहान्वेषी शूद्रान्नपरिवर्ज्जकः। ग्रामे दस्युसमाकीर्णे व्यचरत् सर्वतो दिशम् ॥ ४१ ॥ ततः स गौतमगृहं प्रविवेश द्विजोत्तमः ॥ ४२ ॥ गौतमश्चापि सम्प्राप्तस्तावन्योऽन्येन सङ्गतौ ॥ ४३ ॥ चक्राङ्गभारस्कन्धन्तं धनुष्पाणिं धृतायुधम्। रुधिरेणावसिक्ताङ्गं गृहद्वारमुपागतम् ॥ ४४ ॥ तं दृष्ट्वा पुरुषादाभमपध्वस्तं क्षयागतम्। अभिज्ञाय द्विजो राजन्निदं वाक्यमथाब्रवीत् ॥ ४५ ॥ किमिदं कुरुषे मोहाद्विप्रस्त्वं हि कुलोद्वहः। मध्यदेशपरिज्ञातो दस्युभावं गतः कथम् ॥ ४६ ॥ पूर्वान् स्मर द्विज ज्ञातीन् प्रख्यातान् वेदपारगान्। तेषां वंशेऽभिजातस्त्वमीदृशः कुलपांसनः ॥ ४७ ॥ अवबुध्यात्मनात्मानं सत्त्वं शीलं श्रुतं दमम्। अनुक्रोशञ्च संस्मृत्य त्यज वासमिदं द्विज ॥ ४८ ॥ एवमुक्तः स सुहृदा तेन तत्र हितैषिणा। प्रत्युवाच ततो राजन् विनिश्चित्य तदार्त्तवत् ॥ ४९ ॥ निर्धनोऽस्मि द्विजश्रेष्ठ नापि वेदविदप्यहम्। वित्तार्थमिह सम्प्राप्तं विद्धि मां द्विजसत्तम ॥५०॥

त्वद्दर्शनात्तु विप्रेन्द्र कृतार्थोऽस्म्यद्य वै द्विज। आवां हि सह यास्यावः श्वो वसस्वाद्य शर्वरीम् ॥ ५१ ॥ स तत्र न्यवसद्विप्रो घृणी किञ्चिदसंस्पृशन्। क्षुधितश्छन्द्यमानोऽपि भोजनं नाभ्यनन्दत ॥ ५२ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि कृतघ्नोपाख्याने अष्टषष्ट्यधिकशततोऽध्यायः ॥ १६८ ॥

---

भीष्म उवाच। तस्यां निशायां व्युष्टायां गते तस्मिन् द्विजोत्तमे। निष्क्रम्य गौतमेऽगच्छत् समुद्रं प्रति भारत ॥ १ ॥ सामुद्रिकान् स वणिजस्ततोऽपश्यत् स्थितान् पथि। स तेन सह सार्थेन प्रययौ सागरं प्रति ॥ २ ॥ स तु सार्थो महाराजन् कस्मिंश्चिद्गिरिगह्वरे। मत्तेन द्विरदेनाथ निहतः प्रायशोऽभवत् ॥ ३ ॥ स कथञ्चिद्भयात्तस्माद्विमुक्तो ब्राह्मणस्तदा। कान्दिग्भूतो जीवितार्थी प्रादुद्रावोत्तरां दिशम् ॥ ४ ॥ स तु सार्थपरिभ्रष्टस्तस्माद्देशात्तथाच्युतः। एकाकी व्यचरत्तत्र वने किंपुरुषो यथा ॥ ५ ॥ अपन्थानमथागाद्य समुद्राभिसरं तदा। आससाद वनं रम्यं दिव्यं पुष्पितपादपम् ॥ ६ ॥ सर्वर्त्तुकैराम्रवणैः पुष्पितैरुपशोभितम्। नन्दनोद्देशसदृशं यक्षकिन्नरसेवितम् ॥ ७ ॥ शालैस्तालैस्तमालैश्च कालागुरुवनैस्तथा। चन्दनस्य च मुख्यस्य पादपैरुपशोभितम् ॥ ८ ॥ गिरेः प्रस्थेषु रम्येषु तेषु तेषु सुगन्धिषु। समन्ततो द्विजश्रेष्ठास्तत्राकूजन्त वै तदा ॥ ९ ॥ मनुष्यवदनाश्चान्ये भारुण्डा इति विश्रुताः। भूलिङ्गशकुनाश्चान्ये सामुद्राः पर्वतोद्भवाः ॥ १० ॥ स तान्यतिमनोज्ञानि विहङ्गानां रुतानि वै। शृण्वन् सुरमणीयानि विप्रोऽगच्छत् स गौतमः ॥ ११ ॥ ततोऽपश्यत् सुरम्ये वै सुवर्णसिकताचिते। देशे समे सुखे चित्रे स्वर्गोद्देशसमे नृप ॥ १२ ॥

श्रिया जुष्टं महावृक्षं न्यग्रोधञ्च सुमण्डलम् । शाखाभिरनुरूपाभिर्भूयिष्ठच्छत्रसन्निभम् ॥ १३ ॥ तस्य मूलञ्च संसिक्तं वरचन्दनवारिणा । दिव्यपुष्पान्वितं श्रीमत् पितामहसभोपमम् ॥ १४ ॥ तं दृष्ट्वा गौतमः प्रीतो मनःकान्तमनुत्तमम् । मेध्यं सुरगृहप्रख्यं पुष्पितैः पादपैर्वृतम् ॥१५॥ तमासाद्य मुदायुक्तस्तस्याधस्तादुपाविशत् । तत्रासीनस्य कौन्तेय गौतमस्य सुखः शिवः ॥ १६ ॥ पुष्पाणि समुपस्पृश्य प्रववावनिल शुभः । ह्लादयन् सर्वगात्राणि गौतमस्य तदा नृप ॥ १७ ॥ स तु विप्रः प्रशान्तश्च स्पृष्टः पुण्येन वायुना । सुखमासाद्य सुष्वाप भास्करश्चास्तमभ्ययात् ॥ १८ ॥ ततोऽस्तं भास्करे याते सन्ध्याकाल उपस्थिते । आजगाम स्वभवनं ब्रह्मलोकात् खगोत्तमः ॥ १९ ॥ नाड़ीजङ्घ इति ख्यातो दयितो ब्रह्मणः सखा । वकराजो महाप्राज्ञः कश्यपस्यात्मसंभवः ॥ २० ॥ राजधर्मेति विख्यातो बभूवाप्रतिमो भुवि । देवकन्यासुतः श्रीमान् विद्वान् देवसमप्रभः ॥ २१ ॥ मृष्टाभरणसम्पन्नो भूषणैरर्कसन्निभैः । भूषितः सर्वगात्रेषु देवगर्भः श्रिया ज्वलन् ॥ २२ ॥ तमागतं खगं दृष्ट्वा गौतमो विस्मितोऽभवत् । क्षुत्पिपासापरिश्रान्तो हिंसार्थी चास्यवैक्षत ॥ २३ ॥

राजधर्मोवाच । स्वागतं भवतो विप्र दिष्ट्या प्राप्तोऽसि मे गृहम् । अस्तञ्च सविता यातः सन्ध्येयं समुपस्थिता ॥ २४ ॥ मम त्वं निलयं प्राप्तः प्रियातिथिरनिन्दितः । पूजितो यास्यसि प्रातर्विधिदृष्टेन कर्म्मणा ॥ २५ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि कृतघ्नोपाख्याने एकोनसप्तत्यधिकशतोऽध्यायः ॥ १६९ ॥

---

भीष्म उवाच । गिरं तां मधुरां श्रुत्वा गौतमो विस्मितस्तदा । कौतूहलान्वितो राजन् राजधर्माणमैक्षत ॥ १ ॥

राजधर्मोवाच । भोः कश्यपस्य पुत्रोऽहं माता दाक्षायणी च मे । अतिथिस्त्वं गुणोपेतः स्वागतं ते द्विजोत्तम ॥ २ ॥

भीष्म उवाच । तस्मै दत्त्वा स सत्कारं विधिदृष्टेन कर्मणा । शालपुष्पमयीं दिव्यां वृषीं वै समकल्पयत् ॥ ३ ॥ भगीरथरथाक्रान्तदेशान् गङ्गानिषेवितान् । ये चरन्ति महामीनास्तांश्च तस्यान्वकल्पयत् ॥ ४ ॥ वह्निञ्चापि सुसंदीप्तं मीनांश्चापि सुपीवरान् । स गौतमायातिथये न्यवेदयत काश्यपिः ॥ ५ ॥ भुक्तवन्तञ्च तं विप्रं प्रीतात्मानं महातपाः । क्लमापनयनार्थं स पक्षाभ्यामभ्यवीजयत् ॥ ६ ॥ ततो विश्रान्तमासीनं गोत्रप्रश्नमपृच्छत । सोऽब्रवीद्गौतमोऽस्मीति ब्रह्म नान्यदुदाहरत् ॥ ७ ॥ तस्मै पर्णमयं दिव्यं दिव्यपुष्पाभिवासितम् । गन्धाढ्यं शयनं प्रादात् स शिश्ये तत्र वै सुखम् ॥ ८ ॥ अथोपविष्टं शयने गौतमं धर्मराट् तदा । पप्रच्छ काश्यपो वाग्मी किमागमनकारणम् ॥ ९ ॥ ततोऽब्रवीद्गौतमस्तं दरिद्रोऽहं महामते । समुद्रगमनाकाङ्क्षी द्रव्यार्थमिति भारत ॥१०॥ तं काश्यपोऽब्रवीत् प्रीतो नोत्कण्ठां कर्त्तुमर्हसि । कृतकार्य्यो द्विजश्रेष्ठ सद्रव्यो यास्यसे गृहान् ॥ ११ ॥ चतुर्विधा ह्यर्थसिद्धिर्वृहस्पतिमतं यथा । पारंपर्य्यं तथा दैवं काम्यं मैत्रमिति प्रभो ॥ १२ ॥ प्रादुर्भूतोऽस्मि ते मित्रं सुहृत्त्वञ्च मम त्वयि । सोऽहं तथा यतिष्यामि भविष्यति यथार्थवान् ॥ १३ ॥ ततः प्रभातसमये सुखं दृष्ट्वाब्रवीदिदम् । गच्छ सौम्य पथानेन कृतकृत्यो भविष्यसि ॥ १४ ॥ इतस्त्रियोजनं गत्वा राक्षसाधिपतिर्महान् । विरूपाक्ष इति ख्यातः सखा मम महाबलः ॥ १५ ॥ तं गच्छ द्विजमुख्य त्वं स मद्वाक्यप्रचोदितः । कामानभीप्सितांस्तुभ्यं दाता नास्त्यत्र संशयः ॥ १६ ॥ इत्युक्तः प्रययौ राजन् गौतमो विगतक्लमः । फलान्यमृत-

फलानि भक्षयन् स यथेष्टतः ॥ १७ ॥ चन्दनागुरुमुख्यानि त्वक्-
पत्राणां वनानि च । तस्मिन् पथि महाराज सेवमानो द्रुतं ययौ
॥ १८ ॥ ततो मेरुव्रजं नाम नगरं शैलतोरणम् । शैलप्राकार
वप्रञ्च शैलयन्त्राकुलं तथा ॥ १९ ॥ विदितश्चाभवत्तस्य राक्षसे-
न्द्रस्य धीमतः । प्रहितः सुहृदा राजन् प्रीयमाणो प्रियातिथिः
॥ २० ॥ ततः स राक्षसेन्द्रः स्वान् प्रेष्यानाह युधिष्ठिर । गौतमो
नगरद्वाराच्छीघ्रमानीयतामिति ॥ २१ ॥ ततः पुरवरात्तस्मात्
पुरुषाः श्येनचेष्टनाः । गौतमेत्यभिभाषन्तः पुरद्वारमुपागमन् ॥२२॥
ते तमूचुर्महाराज राजप्रेष्यास्तदा द्विजम् । तरस्व तूर्णमागच्छ
राजा त्वां द्रष्टुमिच्छति ॥ २३ ॥ राक्षसाधिपतिर्व्वीरो विरूपाक्ष
इति श्रुतः । स त्वां त्वरति वै द्रष्टुं तत् क्षिप्रं संविधीयताम् ॥२४॥
ततः स प्राद्रवद्विप्रो विस्मयाद्विगतक्लमः । गौतमः परमर्द्धिं तां
पश्यन् परमविस्मितः ॥ २५ ॥ तैरेव सहितो राज्ञो वेश्म तूर्ण-
मुपाद्रवत् । दर्शनं राक्षसेन्द्रस्य काङ्क्षमाणो द्विजस्तदा ॥ २६ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि कृतघ्नोपाख्याने
सप्तत्यधिकशततोऽध्यायः ॥ १७० ॥

---

भीष्म उवाच । ततः स विदितो राज्ञः प्रविश्य गृहमुत्तमम् ।
पूजितो राक्षसेन्द्रेण निषसादासनोत्तमे ॥ १ ॥ पृष्टश्च गोत्रचरणं
स्वाध्यायब्रह्मचारिकम् । न तत्र व्याजहारान्यत् गोत्रमात्राद्दृते
द्विजः ॥ २ ॥ ब्रह्मवर्च्चसहीनस्य स्वाध्यायोपरतस्य च । गोत्र-
मात्रविदो राजा निवासं समपृच्छत ॥ ३ ॥

राक्षस उवाच । क्व ते निवासः कल्याण किं गोत्रा ब्राह्मणी
च ते । तत्त्वं ब्रूहि न भीः कार्य्या विस्रब्धस्व यथासुखम् ॥ ४ ॥

गौतम उवाच। मध्यदेशप्रसूतोऽहं वासो मे शवरालये।
शूद्रा पुनर्भूर्भार्य्या मे सत्यमेतद्‌ब्रवीमि ते॥ ५॥
भीष्म उवाच। ततो राजा विममृशे कथं कार्य्यमिदं भवेत्।
कथं वा सुकृतं मे स्यादिति बुद्ध्यान्वचिन्तयत्॥ ६॥ अयं वै
जन्मना विप्रः सुहृत्तस्य महात्मनः। सम्प्रेषितश्च तेनायं काश्यपेन
समान्तिकम्॥ ७॥ तस्य प्रियं करिष्यामि स हि मामाश्रितः
सदा। भ्राता च बान्धवश्चासौ सखा च हृदयङ्गमः॥ ८॥
कार्त्तिक्यामद्य भोक्तारः सहस्रं मे द्विजोत्तमाः। तत्रायमपि भोक्ता
च देयमस्मै च मे धनम्॥ ९॥ स चाद्य दिवसः पुण्यो अतिथि-
श्चायमागतः। सङ्कल्पितञ्चैव धनं किं विचार्य्यमतः परम्॥ १०॥
ततः सहस्रं विप्राणां विदुषां समलङ्कृतम्। स्नातानामनुसंप्राप्तं
सुमहत्क्षौमवाससाम्॥ ११॥ तानागतान् द्विजश्रेष्ठान् विरूप-
पाक्षो विशाम्पते। यथार्हं प्रतिजग्राह विधिदृष्टेन कर्म्मणा॥१२॥
वृष्यस्तेषान्तु सन्न्यस्ता राक्षसेन्द्रस्य शासनात्। भूमौ वरकुशा-
स्तीर्णाः प्रेष्यैर्भरतसत्तम॥ १३॥ तासु ते पूजिता राज्ञा निषण्णा
द्विजसत्तमाः। तिलदर्भोदकेनाथ अर्च्चिता विधिवद्द्विजाः॥ १४॥
विश्वे देवाः सपितरः साग्नयश्चोपकल्पिताः। विलिप्ताः पुष्पवन्तश्च
सुप्रचाराः सुपूजिताः॥ १५॥ व्यराजन्त महाराज नक्षत्रपतयो
यथा। ततो जाम्बूनदीः पात्रीर्वज्राङ्का विमलाः शुभाः॥ १६॥
वरान्नपूर्णा विप्रेभ्यः प्रादान्मधुघृतप्लुताः। तस्य नित्यं सदाषाढ्यां
माघ्याञ्च बहवो द्विजाः॥ १७॥ ईप्सितं भोजनवरं लभन्ते सत्-
कृतं सदा। विशेषतस्तु कार्त्तिक्यां द्विजेभ्यः संप्रयच्छति॥ १८॥
शरद्व्यपाये रत्नानि पौर्णमास्यामिति श्रुतिः। सुवर्णं रजतञ्चैव
मणीनथ च मौक्तिकान्॥ १९॥ वज्रान्महाधनांश्चैव वैदूर्य्याजिन-
राङ्कवान्। रत्नराशीन् विनिक्षिप्य दक्षिणार्थं स भारत॥ २०॥
ततः प्राह द्विजश्रेष्ठान् विरूपाक्षो महाबलः। गृह्णीत रत्नान्येतानि

यथोत्साहं यथेष्टतः ॥ २१ ॥ येषु येषु च भाण्डेषु भुक्तं वो द्विज-सत्तमाः। तान्येवादाय गच्छध्वं स्ववेश्मानीति भारत ॥ २२ ॥ इत्युक्तवचने तस्मिन् राक्षसेन्द्रे महात्मनि। यथेष्टं तानि रत्नानि जगृहुर्ब्राह्मणर्षभाः ॥ २३ ॥ ततो महार्हास्ते सर्वे रत्नैरभ्यर्चिताः शुभैः। ब्राह्मणा मृष्टवसनाः सुप्रीताः स्म ततोऽभवन् ॥ २४ ॥ ततस्तान् राक्षसेन्द्रश्च द्विजानाह पुनर्वचः। नानादिग्भ्यगतान् राजन् राक्षसान् प्रतिषिध्य वै ॥ २५ ॥ अद्यैकं दिवसं विप्रा न वोऽस्तीह भयं क्वचित्। राक्षसेभ्यः प्रमोदध्वमिष्टतो यातमाचिरम् ॥ २६ ॥ ततःप्रदुद्रुवुः सर्वे विप्रसङ्घाः समन्ततः। गौतमोऽपि सुवर्णस्य भारमादाय सत्वरः ॥ २७ ॥ कृच्छ्रात् समुद्वहन् भारं न्यग्रोधं समुपागमत्। न्यषीदच्च परिश्रान्तः क्लान्तश्च क्षुधितश्च सः ॥२८॥ ततस्तमभ्यगाद्राजन् राजधर्मा खगोत्तमः। स्वागतेनाभिनन्द्यंश्च गौतमं मित्रवत्सलः ॥ २९ ॥ तस्य पक्षाग्रविक्षेपैः क्लमं व्यपनयत् खगः। पूजां चाप्यकरोद्धीमान् भोजनं चाप्यकल्पयत् ॥ ३० ॥ स भुक्तवान् सुविश्रान्तो गौतमोऽचिन्तयत्तदा। हाटकस्याभिरूपस्य भारोऽयं सुमहान्मया ॥ ३१ ॥ गृहीतो लोभमोहाभ्यां दूरञ्च गमनं मम। न चास्ति पथि भोक्तव्यं प्राणसंधारणं मम ॥ ३२ ॥ किं कृत्वा धारयेयं वै प्राणानित्यभ्यचिन्तयत्। ततः स पथि भोक्तव्यं प्रेक्षमाणो न किञ्चन ॥ ३३ ॥ कृतघ्नः पुरुषव्याघ्र मनसेदमचिन्तयत्। अयं बकपतिः पार्श्वे मांसराशिः स्थितो महान् ॥ ३४ ॥ इमं हत्वा गृहीत्वा च यास्येऽहं समभिद्रुतम् ॥ ३५ ॥

इति शान्तिपर्वणि आपद्धर्मानुशासनपर्वणि कृतघ्नोपाख्याने एकसप्तत्यधिकशततोऽध्यायः ॥ १७१ ॥

भीष्म उवाच। अथ तत्र महार्च्चिष्माननलो वातसारथिः। तस्याविदूरे रक्षार्थं खगेन्द्रेण कृतोऽभवत्॥ १॥ स चापि पार्श्वे सुप्ताप विश्वस्तो बकराट् तदा। कृतघ्नस्तु स दुष्टात्मा तं जिघांसुरवाग्रतः॥ २॥ ततोऽलातेन दीप्तेन विश्वस्तं निजघान तम्। निहत्य च मुदायुक्तः सोऽनुबन्धं न दृष्टवान्॥ ३॥ स तं विपक्षरोमाणं कृत्वाग्नावपचत्तदा। तं गृहीत्वा सुवर्णञ्च ययौ द्रुततरं द्विजः॥ ४॥ ततोऽन्यस्मिन् गते चाह्नि विरूपाक्षोऽब्रवीत् सुतम्। न प्रेक्षे राजधर्माणमद्य पुत्र खगोत्तमम्॥ ५॥ स पूर्वसन्ध्यां ब्रह्माणं वन्दितुं याति सर्वदा। मामदृष्ट्वा कदाचित् स न गच्छति सद्म खगः॥ ६॥ उभे द्विरात्रं सन्ध्ये वै नाभ्यगात् स ममालयम्। तस्मान्न शुध्यते भावो मम स ज्ञायतां सुहृत्॥ ७॥ स्वाध्यायेन वियुक्तो हि ब्रह्मवर्च्चसवर्ज्जितः। तं गतस्तत्र मे शङ्का हन्यात्तं स द्विजाधमः॥ ८॥ दुराचारस्तु दुर्बुद्धिरिङ्गितैर्लक्षितो मया। निष्कृपो दारुणाकारो दुष्टो दस्युरिवाधमः। गौतमः स गतस्तत्र तेनोद्विग्नं मनो मम॥ ९॥ पुत्र शीघ्रमितो गत्वा राजधर्म्मनिवेशनम्। ज्ञायतां स विशुद्धात्मा यदि जीवति मा चिरम्॥ १०॥ स एवमुक्तस्त्वरितो रक्षोभिः सहितो ययौ। न्यग्रोधं तत्र चापश्यत् कङ्कालं राजधर्म्मणः॥११॥ स रुदन्नगमत् पुत्रो राक्षसेन्द्रस्य धीमतः। त्वरमाणः परं शक्त्या गौतमग्रहणाय वै॥ १२॥ ततोऽविदूरे जग्राह गौतमं राक्षसास्तदा। राजधर्म्मशरीरञ्च पक्षास्थिचरणोज्झितम्॥ १३॥ तमादायाथ रक्षांसि द्रुतं मेरुव्रजं ययुः। राज्ञश्च दर्शयामासुः शरीरं राजधर्म्मणः। कृतघ्नं पुरुषं तञ्च गौतमं पापकारिणम्॥ १४॥ रुरोद राजा तं दृष्ट्वा सामात्यः सपुरोहितः। आर्त्तनादश्च सुमहानभूत्तस्य निवेशने॥१५॥ सस्त्रीकुमारञ्च पुरं बभूवास्वस्थमानसम्। अथाब्रवीन्नृपः पुत्रं पापोऽयं बध्यतामिति॥ १६॥ अस्य मांसैरिमे सर्वे विहरन्तु यथेष्टतः॥१७॥

पापाचारः पापकर्मा पापात्मा पापसाधनः। हन्तव्योऽयं मम मति-र्भवद्भिरिति राक्षसाः ॥ १८ ॥ इत्युक्ता राक्षसेन्द्रेण राक्षसा घोर-विक्रमाः। नैच्छन्त तं भक्षयितुं पापकर्माणमित्युत ॥ १९ ॥ दस्यूनां दीयतामेष साध्वद्य पुरुषाधमः। इत्यूचुस्ते महाराज राक्षसेन्द्रं निशाचराः ॥ २० ॥ शिरोभिः प्रणताः सर्वे व्याहर-न्राक्षसाधिपम्। न दातुमर्हसि त्वन्नो भक्षणायास्य किल्बिषम् ॥२१ एवमस्त्विति तानाह राक्षसेन्द्रो निशाचरान्। दस्यूनां दीयतामेष कृतघ्नोऽद्यैव राक्षसाः ॥ २२ ॥ इत्युक्ता राक्षसास्तेन शूलपट्टिश-पाणयः। कृत्वा तं खण्डशः पापं दस्युभ्यः प्रददुस्तदा ॥ २३ ॥ दस्यवश्चापि नैच्छन्त तमत्तुं पापकारिणम्। क्रव्यादा अपि राजेन्द्र कृतघ्नं नोपभुञ्जते ॥ २४ ॥ ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा। निष्कृतिर्विहिता राजन् कृतघ्ने नास्ति निष्कृतिः ॥ २५ ॥ मित्रद्रोही कृतघ्नश्च नृशंसश्च नराधमः। क्रव्यादैः कृमिभिश्चा-न्यैर्न भुज्यन्ते हि तादृशाः ॥ २६ ॥

इति शान्तिपर्व्वणि आपद्धर्मानुशासनपर्व्वणि कृतघ्नोपाख्याने द्विसप्तत्यधिकशततोऽध्यायः ॥ १७२ ॥

---

भीष्म उवाच। ततश्चितां बकपतेः कारयामास राक्षसः। रत्नैर्गन्धैश्च बहुभिर्वस्त्रैश्च समलंकृताम् ॥ १ ॥ ततः प्रज्वाल्य नृपति-र्बकराजं प्रतापवान्। प्रेतकार्य्याणि विधिवद्राक्षसेन्द्रश्चकार ह ॥२॥ तस्मिन् कालेऽपि सुरभिर्देवी दाक्षायणी शुभा। उपरिष्टात्तत-स्तस्य सा बभूव पयस्विनी ॥ ३ ॥ तस्या वक्त्राच्च्युतः फेनः क्षीर-मिश्रस्तदानघ। सोऽपतद्वै ततस्तस्यां चितायां राजधर्म्मणः ॥४॥ ततः संजीवितस्तेन बकराजस्तदानघ। उत्पत्य च समीयाय विरू-पाक्षं बकाधिपः ॥ ५ ॥ ततोऽभ्ययाद्देवराजो विरूपाक्षपुरं तदा। प्राह चेदं विरूपाक्षं दिष्ट्या संजीवितस्त्वया ॥ ६ ॥ श्रावयामास

चेन्द्रस्तं विरूपाक्षं पुरातनम्। यथा शापः पुरा दत्तो ब्रह्मणा राजधर्मणः ॥ ७ ॥ यदा वकपती राजन् ब्रह्माणं नोपसर्पति। ततो रोषादिदं प्राह खगेन्द्राय पितामहः ॥ ८ ॥ यस्मान्मूढ़ो मम सभां नागतोऽसौ वकाधमः। तस्माद्वधं स दुष्टात्मा न चिरात् समवाप्स्यति ॥ ९ ॥ तदयं तस्य वचनान्निहतो गौतमेन वै। तेनैवामृतसिक्तश्च पुनः संजीवितो वकः ॥ १० ॥ राजधर्मा वकः प्राह प्रणिपत्य पुरन्दरम्। यदि तेऽनुग्रहकृता मयि बुद्धिः सुरेश्वर। सखा यो मे सुदयितो गौतमो जीवितादयम् ॥ ११ ॥ तस्य वाक्यं समादाय वासवः पुरुषर्षभः। सिक्तामृतेन तं विप्रं गौतमं जीवयत्तदा ॥ १२ ॥ स भाण्डोपस्करं राजंस्तमासाद्य वकाधिपः। संपरिष्वज्य सुहृदं प्रीत्या परमया युतः ॥ १३ ॥ अथ तं पापकर्माणं राजधर्मा वकाधिपः। विसर्ज्जयित्वा सधनं प्रविवेश स्वमालयम् ॥ १४ ॥ यथोचितञ्च स वको ययौ ब्रह्मसदस्तथा। ब्रह्मा चैनं महात्मानमातिथ्येनाभ्यपूजयत् ॥ १५ ॥ गौतमश्चापि संप्राप्य पुनस्तं शवरालयम्। शूद्रायां जनयामास पुत्रान् दुष्कृतकारिणः ॥ १६ ॥ शापश्च सुमहांस्तस्य दत्तः सुरगणैस्तदा। कुक्षौ पुनर्भ्वः पापोऽयं जनयित्वाचिरात् सुतान्। निरयं प्राप्स्यति महत् कृतघ्नोऽयमिति प्रभो ॥ १७ ॥ एतत् प्राह पुरा सर्वं नारदो मम भारत। संस्मृत्य चापि सुमहदाख्यानं भरतर्षभ। मयापि भवते सर्वं यथावदनुवर्णितम् ॥ १८ ॥ कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम्। अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः ॥ १९ ॥ मित्रद्रोहो न कर्त्तव्यः पुरुषेण विशेषतः। मित्रध्रुक् नरकं घोरमनन्तं प्रतिपद्यते ॥ २० ॥ कृतज्ञेन सदा भाव्यं मित्रकामेन चैव ह। मित्राच्च लभते सर्वं मित्रात् पूजां लभेत च ॥ २१ ॥ मित्राद्भोगांश्च भुञ्जीत मित्रेणापत्सु मुच्यते। सत्कारैरुत्तमैर्मित्रं पूजयेत विचक्षणः ॥ २२ ॥ परित्याज्यो बुधैः

पापः कृतघ्नो निरपत्रपः । मित्रद्रोही कुलाङ्गारः पापकर्मा नराधमः ॥ २३ ॥ एष धर्म्मभृतांश्रेष्ठ प्रोक्तः पापो मया तव । मित्रद्रोही कृतघ्नो वै किं भूयः श्रोतुमिच्छसि ॥ २४ ॥

वैशम्पायन उवाच । एतच्छ्रुत्वा तदा वाक्यं भीष्मेणोक्तं महात्मना । युधिष्ठिरः प्रीतमना बभूव जनमेजय ॥ २५ ॥

इति शान्तिपर्व्वणि आपद्धर्मानुशासनपर्व्वणि कृतघ्नोपाख्याने त्रिसप्तत्यधिकशततोऽध्यायः ॥ १७३ ॥

समाप्तश्चापद्धर्मपर्व्व ।

---

अथ मोक्षधर्मपर्व्व ।

युधिष्ठिर उवाच । धर्माः पितामहेनोक्ता राजधर्माश्रिताः शुभाः । धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हसि पार्थिव ॥ १ ॥

भीष्म उवाच । सर्व्वत्र विहितो धर्मः सत्यप्रेत्य तपःफलम् । बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥२॥ यस्मिन् यस्मिंस्तु विषये यो यो याति विनिश्चयम् । स तमेवाभिजानाति नान्य भरतसत्तम ॥ ३ ॥ यथा यथा च पर्य्येति लोकतन्त्रमसारवत् । तथा तथा विरागोऽत्र जायते नात्र संशयः ॥ ४ ॥ एवं व्यवसिते लोके बहुदोषे युधिष्ठिर । आत्ममोक्षनिमित्तं वै यतेत मतिमान्नरः ॥५॥

युधिष्ठिर उवाच । नष्टे धने वा दारे वा पुत्रे पितरि वा मृते । यया बुद्ध्या नुदेच्छोकं तन्मे ब्रूहि पितामह ॥ ६ ॥

भीष्म उवाच । नष्टे धने वा दारे वा पुत्रे पितरि वा मृते । अहो दुःखमिति ध्यायन् शोकस्यापचितिञ्चरेत् ॥ ७ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् । यथा सेनजितं विप्रः कश्चिदेत्याब्रवीत् सुहृत् ॥ ८ ॥ पुत्रशोकाभिसन्तप्तं राजानं शोकविह्वलम् । विषण्णमनसं दृष्ट्वा विप्रो वचनमब्रवीत् ॥ ९ ॥ किन्नु खलसि मूढ़स्त्वं

शोच्यः किमनुशोचसि । यदा त्वामपि शोचन्तः शोच्या यास्यन्ति तां गतिम् ॥ १० ॥ त्वाञ्चैवाहञ्च ये चान्ये त्वामुपासन्ति पार्थिव । सर्वे तत्र गमिष्यामो यत एवागता वयम् ॥ ११ ॥

सेनजिदुवाच । का बुद्धिः किं तपो विप्र कः समाधिस्तपोधन । किं ज्ञानं किं श्रुतञ्चैव यत् प्राप्य न विषीदसि ॥ १२ ॥

ब्राह्मण उवाच । पश्य भूतानि दुःखेन व्यतिषक्तानि सर्वशः । उत्तमाधममध्यानि तेषु तेष्विह कर्मसु ॥ १३ ॥ आत्मापि चायं न मम सर्वा वा पृथिवी मम । यथा मम तथान्येषामिति चिन्त्य न मे व्यथा ॥ १४ ॥ एतां बुद्धिमहं प्राप्य न प्रहृष्ये न च व्यये ॥१५॥ यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ । समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ १६ ॥ एवं पुत्राश्च पौत्राश्च ज्ञातयो बान्धवास्तथा । तेषां स्नेहो न कर्त्तव्यो विप्रयोगो ध्रुवो हि तैः ॥ १७ ॥ अदर्शनादापतितः पुनश्चादर्शनं गतः न त्वासौ वेद न त्वन्तं कः सन् कमनुशोचसि ॥ १८ ॥ तृष्णार्त्तिप्रभवं दुःखं दुःखार्त्तिप्रभवं सुखम् । सुखात् संजायते दुःखं दुःखमेवं पुनः पुनः ॥ १९ ॥ सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् । सुखदुःखे मनुष्याणां चक्रवत् परिवर्त्ततः ॥ २० ॥ सुखात्त्वं दुःखमापन्नः पुनरापत्स्यसे सुखम् । न नित्यं लभते दुःखं न नित्यं लभते सुखम् । शरीरमेवायतनं दुःखस्य च सुखस्य ॥ २१ ॥ शरीरमेवायतनं सुखस्य दुःखस्य चाप्यायतनं शरीरम् । यद्यच्छरीरेण करोति कर्म तेनैव देही समुपाश्नुते च तत् ॥२२॥ जीवितञ्च शरीरेण जात्यैव सह जायते । उभे सह विवर्त्तेते उभे सह विनश्यतः ॥ २३ ॥ स्नेहपाशैर्बहुविधैराविष्टविषया जनाः । अकृतार्थाश्च सीदन्ते जले सैकतसेतवः ॥ २४ ॥ स्नेहेन तिलवत् सर्वं सर्गचक्रे निपीड्यते । तिलपीडैरिवाक्रम्य क्लेशैरज्ञानसम्भवैः ॥ २५ ॥ सञ्चिनोत्यशुभं कर्म कलत्रापेक्षया नरः । एकः क्लेशानवाप्नोति परत्रेह च मानवः ॥२६॥

पुत्रदारकुटुम्बेषु प्रसक्ताः सर्वमानवा। शोकपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ २७ ॥ पुत्रनाशे वित्तनाशे ज्ञातिसम्बन्धिनामपि। प्राप्यते सुमहद्दुःखं दावाग्निप्रतिमं विभो ॥ २८ ॥ दैवायत्तमिदं सर्वं सुखदुःखे भवाभवौ ॥ २९ ॥ असुहृत्सुहृच्चापि सशत्रुर्मित्रवानपि। सप्रज्ञः प्रज्ञया हीनो दैवेन लभते सुखम् ॥ ३० ॥ नालं सुखाय सुहृदो नालं दुःखाय शत्रवः। न च प्रज्ञालमर्थानां न सुखानामलं धनम् ॥ ३१ ॥ न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये। लोकपर्य्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ ३२ ॥ बुद्धिमन्तञ्च शूरञ्च मूढ़ं भीरुं जड़ं कविम्। दुर्बलं बलवन्तञ्च भागिनं भजते सुखम् ॥ ३३ ॥ धेनुर्वत्सस्य गोपस्य स्वामिनस्तस्करस्य च। पयः पिबति यस्तस्या धेनुस्तस्येति निश्चयः ॥ ३४ ॥ ये च मूढ़तमा लोके ये च बुद्धेः परं गताः। ते नराः सुखमेधन्ते क्लिश्यत्यन्तरितो जनः ॥ ३५ ॥ अन्त्येषु रेमिरे धीरा न ते मध्येषु रेमिरे। अन्त्यप्राप्तिं सुखं प्राहुर्दुःखमन्तरमन्त्ययोः ॥ ३६ ॥ ये च बुद्धिसुखं प्राप्ता द्वन्द्वातीता विमत्सराः। तान्नैवार्था न चानर्था व्यथयन्ति कदाचन ॥ ३७ ॥ अथ ये बुद्धिमप्राप्ता व्यतिक्रान्ताश्च मूढ़ताम्। तेऽतिवेलं प्रहृष्यन्ति सन्तापमुपयान्ति च ॥ ३८ ॥ नित्यं प्रमुदिता मूढ़ा दिवि देवगणा इव। अवलेपेन महता परिभूत्वा विचेतसः ॥ ३९ ॥ सुखं दुःखान्तमालस्यं दुःखं दाक्ष्यं सुखोदयम्। भूतिस्त्वेवं श्रिया सार्द्धं दक्षे वसति नालसे ॥ ४० ॥ सुखं वा यदि वा दुःखं प्रियं वा यदि वाप्रियम्। प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः ॥ ४१ ॥ शोकस्थानसहस्राणि भयस्थानशतानि च। दिवसे दिवसे मूढ़माविशन्ति न पण्डितम् ॥ ४२ ॥ बुद्धिमन्तं कृतप्रज्ञं शुश्रूषुमनसूयकम्। दान्तं जितेन्द्रियञ्चापि शोको न स्पृशते नरम् ॥ ४३ ॥ एतां बुद्धिं समास्थाय गुप्तचित्तश्चरेद्बुधः। उदयास्तमयज्ञं हि न शोकः स्प्रष्टुमर्हति ॥ ४४ ॥ यन्निमित्तं भवे-

च्छोकस्तापो वा दुःखमेव च। आयासो वा यतो मूलमेकाङ्गमपि तत्त्यजेत् ॥ ४५ ॥ किञ्चिदेव ममत्वेन यदा भवति कल्पितम्। तदेव परितापार्थं सर्वं संपद्यते तदा ॥४६॥ यद्यत्त्यजति कामानां तत् सुखस्याभिपूर्य्यते। कामानुसारी पुरुषः कामाननुविनश्यति ॥ ४७ ॥ यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोड़शीं कलाम् ॥ ४८ ॥ पूर्वदेहकृतं कर्म शुभं वा यदि वाशुभम्। प्राज्ञं मूढ़ं तथा शूरं भजते यादृशं कृतम् ॥ ४९ ॥ एवमेव किलैतानि प्रियाख्येवाप्रियाणि च। जीवेषु वरिवर्त्तन्ते दुःखानि च सुखानि च ॥ ५० ॥ एतां बुद्धिं समास्थाय सुखमास्ते गुणान्वितः। सर्वान् कामान् जुगुप्सेत कोपं कुर्वीत पृष्ठतः ॥ ५१ ॥ वृत्त एष हृदि प्रौढ़ो मृत्युरेष मनोभवः। क्रोधो नामशरीरस्थो देहिनां प्रोच्यते बुधैः ॥ ५२ ॥ यदा संहरते कामान् कूर्मोऽङ्गानीव सर्वशः। तदात्मज्योतिरात्मायमात्मन्येव प्रपश्यति ॥ ५३ ॥ किञ्चिदेव ममत्वेन यदा भवति कल्पितम्। तदेव परितापार्थं सर्वं संपद्यते तदा ॥ ५४ ॥ न बिभेति यदा चायं यदा चास्मान्न बिभ्यति। यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥ ५५ ॥ उभे सत्यानृते त्यक्त्वा शोकानन्दौ भयाभये। प्रियाप्रिये परित्यज्य प्रशान्तात्मा भविष्यसि ॥ ५६ ॥ यदा न कुरुते भावं सर्वभूतेषु पापकम्। कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ५७ ॥ या दुस्त्यजा दुर्मतिभिर्या न जीर्य्यति जीर्य्यतः। योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ ५८ ॥ अत्र पिङ्गलया गीता गाथाः शृण्वन्ति पार्थिव। यथा सा कृच्छ्रकालेऽपि लेभे धर्मं सनातनम् ॥ ५९ ॥ सङ्केते पिङ्गला वेश्या कान्तेनासीद्विनाकृता। अथ कृच्छ्रगता शान्तां बुद्धिमास्थापयत्तदा ॥ ६० ॥

पिङ्गलोवाच। उन्मत्ताहमनुन्मत्तं कान्तमन्ववसं चिरम्। अन्तिके रमणं सन्तं नैनमध्यगमं पुरा ॥ ६१ ॥ एकस्थूणं नवद्वार-

नपिशास्याम्यगारकम्। का हि कान्तमिहायान्तमयं कान्तेति मंस्यते॥ ६२॥ अकामां कामरूपेण धूर्त्ता नरकरूपिणः। न पुनर्वञ्चयिष्यन्ति प्रतिबुद्धास्मि जागृमि॥ ६३॥ अनर्थो हि भवेदर्थो दैवात् पूर्वकृतेन वा। संबुद्धाहं निराकारा नाह-मद्याजितेन्द्रिया॥ ६४॥ सुखं निराशः स्वपिति नैराश्यं परमं सुखम्। आशामनाशां कृत्वा हि सुखं स्वपिति पिङ्गला॥ ६५॥

भीष्म उवाच। एतैश्चान्यैश्च विप्रस्य हेतुमद्भिः प्रभाषितैः। पर्य्यवस्थापितो राजा सेनजिन्मुमुदे सुखी॥ ६६॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि पिङ्गलगीतायां चतुःसप्तत्यधिकशततोऽध्यायः॥ १७४॥

---

युधिष्ठिर उवाच। अतिक्रामति कालेऽस्मिन् सर्वभूतक्षयावहे। किं श्रेयः प्रतिपद्येत तन्मे ब्रूहि पितामह॥ १॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। पितुः पुत्रेण संवादं तन्निबोध युधिष्ठिर॥ २॥ द्विजातेः कस्यचित् पार्थ स्वाध्यायनिरतस्य वै। बभूव पुत्रो मेधावी मेधावी नाम नामतः॥ ३॥ सोऽब्रवीत् पितरं पुत्रः स्वाध्यायकरणे रतम्। मोक्षधर्मार्थकुशलो लोकतत्त्व विचक्षणः॥ ४॥

पुत्र उवाच। धीरः किं स्वित् तात कुर्य्यात् प्रजानन् क्षिप्रं ह्यायुर्भ्रश्यते मानवानाम्। पितस्तदाचक्ष्व यथार्थयोगं ममानु-पूर्व्या येन धर्मञ्चरेयम्॥ ५॥

पितोवाच। वेदानधीत्य ब्रह्मचर्य्येण पुत्र पुत्रानिच्छेत् पावनार्थं पितॄणाम्। अग्नीनाधाय विधिवच्चेष्टयज्ञो वनं प्रविश्याथ मुनिर्बुभूषेत्॥ ६॥

पुत्र उवाच। एवमभ्याहते लोके समन्तात् परिवारिते।
अमोघासु पतन्तीषु किं धीर इव भाषसे ॥ ७॥

पितोवाच। कथमभ्याहतो लोकः केन वा परिवारितः।
अमोघाः का पतन्तीह किन्नु भीषयसीव माम् ॥ ८॥

पुत्र उवाच। मृत्युनाभ्याहतो लोको जरया परिवारितः।
अमोघा रात्रयश्चापि नित्यमायान्ति यान्ति च ॥ ९ ॥ यदाहमेतज्जानामि न मृत्युस्तिष्ठतीति ह। सोऽहं कथं प्रतीक्षिष्ये ज्ञानेनापिहितश्चरन् ॥ १० ॥ रात्र्यां रात्र्यां व्यतीतायामायुरल्पतरं यदा। तदैव बन्ध्यं दिवसमिति विद्याद्विचक्षणः ॥ ११ ॥ गाधोदके मत्स्य इव सुखं विन्देत कस्तदा। अनवाप्तेषु कामेषु मृत्युरभ्येति मानवम् ॥१२॥ पुष्पाणीव विचिन्वन्तमन्यत्र गतमानसम्। वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ १३ ॥ अद्यैव कुरु यच्छ्रेयो मा त्वां कालोऽत्यगादयम्। अकृतेष्वेव कार्य्येषु मृत्युर्वै सम्प्रकर्षति ॥ १४ ॥ श्वः कार्य्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्। न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥ १५ ॥ को हि जानाति कस्याद्य मृत्युकालो भविष्यति। युवैव धर्मशीलः स्यादनित्यं खलु जीवितम्। कृते धर्मे भवेत् कीर्त्तिरिह प्रेत्य च वै सुखम् ॥ १६ ॥ मोहेन हि समाविष्टः पुत्रदारार्थमुद्यतः। कृत्वा कार्य्यमकार्य्यं वा पुष्टिमेषां प्रयच्छति ॥ १७ ॥ तं पुत्रपशुसम्पन्नं व्यासक्तमनसं नरम्। सुप्तं व्याघ्रो मृगमिव मृत्युरादाय गच्छति॥१८ सञ्चिन्वानकमेवैनं कामानामवितृप्तकम्। व्याघ्रः पशुमिवादाय मृत्युरादाय गच्छति ॥ १९ ॥ इदं कृतमिदं कार्य्यमिदमन्यत् कृताकृतम्। एवमीहासुखासक्तं कृतान्तः कुरुते वशे ॥ २० ॥ कृतानां फलमप्राप्तं कर्मणां कर्मसंज्ञितम्। क्षेत्रापणगृहासक्तं मृत्युरादाय गच्छति ॥ २१ ॥ दुर्बलं बलवन्तञ्च शूरं भीरुं जडं कविम्। अप्राप्तं सर्वकामार्थान् मृत्युरादाय गच्छति ॥२२॥ मृत्यु-

जरा च व्याधिश्च दुःखञ्चानेककारणम् । अनुषक्तं यदा देहे किं स्वस्थ इव तिष्ठसि ॥ २३ ॥ जातमेवान्तकोऽन्ताय जरा चान्वेति देहिनम् । अनुषक्ता इयेनैते भावाः स्थावरजङ्गमाः ॥ २४ ॥ मृत्योर्वा मुखमेतद्वै या ग्रामे वसति रतिः । देवनामेष वै गोष्ठो यदरण्यमिति श्रुतिः ॥ २५ ॥ निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः । छित्त्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥ २६ ॥ न हिंसयति यः प्राणान्मनोवाक्कायहेतुभिः । जीवितार्थापनयनैः कर्मभिर्न स वध्यते ॥ २७ ॥ न मृत्युसेनामायान्तीं जातु कश्चित् प्रबाधते । ऋते सत्यमसत्याज्यं सत्ये ह्यमृतमाश्रितम् ॥ २८ ॥ तस्मात् सत्यव्रताचारः सत्ययोगपरायणः । सत्यागमः सदा दान्तः सत्येनैवान्तकं जयेत् ॥ २९ ॥ अमृतञ्चैव मृत्युश्च इयं देहे प्रतिष्ठितम् । मृत्युरापद्यते मोहात् सत्येनापद्यतेऽमृतम् ॥ ३० ॥ सोऽहं ह्यहिंस्रः सत्यार्थी कामक्रोधबहिष्कृतः । समदुःखसुखः क्षेमी मृत्युं हास्याम्यमर्त्यवत् ॥ ३१ ॥ शान्तियज्ञरतो दान्तो ब्रह्मयज्ञे स्थितो मुनिः । वाङ्मनः कर्मयज्ञश्च भविष्याम्युदगायने ॥ ३२ ॥ पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति । अन्तवद्भिरिव प्राज्ञः क्षेत्रयज्ञैः पिशाचवत् ॥३३॥ यस्य वाङ्मनसी स्यातां सम्यक् प्रणिहिते सदा । तपस्त्यागश्च योगश्च स वै परममाप्नुयात् ॥ ३४ ॥ नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः । नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥ ३५ ॥ आत्मन्येवात्मना जात आत्मनिष्ठोऽप्रजोऽपि वा । आत्मन्येव भविष्यामि न मां तारयति प्रजा ॥ ३६ ॥ नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । शीलं स्थिति र्दण्डनिधानमार्ज्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥ ३७ ॥ किन्ते धनैर्बान्धवैर्वापि किन्ते किन्ते दारैर्ब्राह्मण यो मरिष्यसि । आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताः पिता च ॥ ३८ ॥

भीष्म उवाच । पुत्रस्यैतद्वचः श्रुत्वा यथाकार्षीत् पिता नृप ।
तथा त्वमपि वर्त्तस्व सत्यधर्मपरायणः ॥ २९ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि पितापुत्रसंवादे
पञ्चसप्तत्यधिकशततोऽध्यायः ॥ १७५ ॥

---

युधिष्ठिर उवाच । धनिनोऽथाधना ये च वर्त्तयन्ते स्वतन्त्रिणः ।
सुखदुःखागमस्तेषां कः कथं वा पितामह ॥ १ ॥
भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शम्पाकेनेह मुक्तेन गीतं शान्तिगतेन च ॥ २ ॥ अब्रवीन्मां पुरा
कश्चिद्ब्राह्मणस्त्यागमास्थितः । क्लिश्यमानः कुदारेण कुचैलेन
बुभुक्षया ॥ ३ ॥ उत्पन्नमिह लोके वै जन्मप्रभृति मानवम् ।
विविधान्युपवर्त्तन्ते दुःखानि च सुखानि च ॥ ४ ॥ तयोरेकतरे
मार्गे यदेनमभिसंनयेत् । न सुखं प्राप्य संहृष्येन्नासुखं प्राप्य सं-
ज्वरेत् ॥ ५ ॥ न वै चरसि यच्छ्रेय आत्मनो वा यदीशिषे ।
अकामात्मापि हि सदा धुरमुद्यम्य चैव ह ॥ ६ ॥ अकिञ्चनः परि-
पतन् सुखमास्वादयिष्यसि । अकिञ्चनः सुखं शेते समुत्तिष्ठति चैव
ह ॥ ७ ॥ आकिञ्चन्यं सुखं लोके पथ्यं शिवमनामयम् । अन-
मित्रपथो ह्येष दुर्लभः सुलभो मतः ॥ ८ ॥ अकिञ्चनस्य शुद्धस्य
उपपन्नस्य सर्वतः । अवेक्षमाणस्त्रींल्लोकान्न तुल्यमिह लक्षये ॥९॥
आकिञ्चन्यञ्च राज्यञ्च तुलया समतोलयम् । अत्यरिच्यत दारिद्र्यं
राज्यादपि गुणाधिकम् ॥ १० ॥ आकिञ्चन्ये च राज्ये च विशेषः
सुमहानयम् । नित्योद्विग्नो हि धनवान् मृत्योरास्यगतो यथा ॥११
नैवास्याग्निर्न चारिष्टो न मृत्युर्न च दस्यवः । प्रभवन्ति धनत्यागा-
द्विमुक्तस्य निराशिषः ॥ १२ ॥ तं वै सदा कामचरमनुपस्तीर्ण-
शायिनम् । बाहूपधानं शाम्यन्तं प्रशंसन्ति दिवौकसः ॥ १३ ॥

धनवान् क्रोधलोभाभ्यामाविष्टो नष्टचेतनः । तीक्ष्णोक्षः शुष्कमुखः पापको भ्रुकुटीमुखः ॥ १४ ॥ निर्दशन्नधरोष्ठञ्च क्रुद्धो दारुणभाषिता । कस्तमिच्छेत् परिद्रष्टुं दातुमिच्छति चेन्महीम् ॥ १५ ॥ श्रिया ह्यभीक्ष्णं संवासो मोहयत्यविचक्षणम् । स तस्य चित्तं हरति शारदाभ्रमिवानिलः । तथैनं रूपमानश्च धनमानश्च विन्दति ॥ १६ ॥ अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः । इत्येभिः कारणैस्तस्य त्रिभिश्चित्तं प्रमाद्यति ॥ १७ ॥ सम्प्रसक्तमना भोगान् विसृज्य पितृसञ्चितान् । परिक्षीणः परस्वानामादानं साधु मन्यते ॥ १८ ॥ तमतिक्रान्त मर्य्यादमाददानं ततस्ततः । प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः ॥ १९ ॥ एवमेतानि दुःखानि तानि तानीह मानवम् । विविधान्युपपद्यन्ते गात्रसंस्पर्शजान्यपि ॥२०॥ तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत् । लोकधर्ममवज्ञाय ध्रुवाणामध्रुवैः सह ॥ २१ ॥ नात्युक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् । नात्यक्त्वा चाभयः शेते त्यक्त्वा सर्वं सुखी भव ॥२२॥ इत्येतद्धास्तिनपुरे ब्राह्मणेनोपवर्णितम् । शम्पाकेन पुरा मह्यं तस्मात्त्यागः परो मतः ॥ २३ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शम्पाकगीतायां
षट्सप्तत्यधिकशततोऽध्यायः ॥ १७६ ॥

---

युधिष्ठिर उवाच । ईहमानः समारम्भान् यदि नासादयेद्धनम् । धनतृष्णाभिभूतश्च किं कुर्वन् सुखमाप्नुयात् ॥ १ ॥

भीष्म उवाच । सर्वसाम्यमनायासः सत्यवाक्यञ्च भारत । निर्वेदश्चाविधित्सा च यस्य स्यात् स सुखी नरः ॥ २ ॥ एतान्येव पदान्याहुः पञ्च वृद्धाः प्रशान्तये । एष स्वर्गश्च धर्मश्च सुखञ्चानुत्तमं मतम् ॥ ३ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् । निर्वेदा-

मङ्किना गीतं तन्निबोध युधिष्ठिर ॥ ४ ॥ ईहमानो धनं मङ्कि-
र्भग्नेहश्च पुनः पुनः। केनचिद्धनशेषेण क्रीतवान् दम्यगोयुगम् ॥५॥
सुसंबद्धौ तु तौ दम्यौ दमनायाभिनिःसृतौ। आसीनमुष्ट्रं मध्येन
सहसैवाभ्यधावताम् ॥ ६ ॥ तयोः सम्प्राप्तयोरुष्ट्रः स्कन्धदेशममर्-
षणः। उत्थायोत्क्षिप्य तौ दम्यौ प्रससार महाजवः ॥ ७ ॥ ह्रियमाणौ
तु तौ दम्यौ तेनोष्ट्रेण प्रमाथिना। म्रियमाणौ च संप्रेक्ष्य
मङ्किस्तत्राब्रवीदिदम् ॥ ८ ॥ न चैवाविहितं शक्यं दक्षेणापीहितं
धनम्। युक्तेन श्रद्धयासम्यगीहां समनुतिष्ठता ॥ ९ ॥ कृतस्य
पूर्वं चानर्थैर्युक्तस्याप्यनुतिष्ठतः। इमं पश्यत सङ्गत्या मम दैवमुप-
प्लवम् ॥ १० ॥ उद्यम्योद्यम्य मे दम्यौ विषमे नैव गच्छतः। उत्-
क्षिप्य काकतालीयमुत्पथेनैव धावतः ॥ ११ ॥ मणीवोष्ट्रस्य लम्बेते
प्रियौ वत्सतरौ मम। शुद्धं हि दैवमेवेदं हठेनैवास्ति पौरुषम्
॥ १२ ॥ यदि वाप्युपपद्येत पौरुषं नाम कर्हिचित्। अन्विष्य-
माणं तदपि दैवमेवावतिष्ठते ॥ १३ ॥ तस्मान्निर्वेद एवेह गन्तव्यः
सुखमिच्छता। सुखं स्वपिति निर्विण्णो निराशश्चार्थसाधने ॥१४॥
अहो सम्यक् शुकेनोक्तं सर्वतः परिमुच्यता। प्रतिष्ठता महारण्यं
जनकस्य निवेशनात् ॥ १५ ॥ यः कामानाप्नुयात् सर्वान् यश्चैतान्
केवलांस्त्यजेत्। प्रापणात् सर्वकामानां परित्यागो विशिष्यते ॥१६॥
नान्तं सर्वविधित्सानां गतपूर्वोऽस्ति कश्चन। शरीरे जीविते चैव
तृष्णा मन्दस्य वर्द्धते ॥ १७ ॥ निवर्त्तस्व विधित्साभ्यः शाम्य निर्विद्य
कामुक। असकृच्चासि निकृतो न च निर्विद्यसे ततः ॥ १८ ॥ यदि
नाहं विनाश्यस्ते यद्येवं रमसे मया। मा मां योजय लोभेन वृथा
त्वं वित्तकामुक ॥ १९ ॥ सञ्चितं सञ्चितं द्रव्यं नष्टं तव पुनः पुनः।
कदाचिन्मोक्ष्यसे मूढ़ धनेहां धनकामुक ॥ २० ॥ अहो नु मम
बालिश्यं योऽहं क्रीड़नकस्तव। किन्त्वेवं जातु पुरुषः परेषां
प्रेष्यतामियात् ॥ २१ ॥ न पूर्वे न परे जातु कामानामन्तमाप्नुवन्।

त्यक्त्वा सर्व्वसमारम्भान् प्रतिवुद्धोऽस्मि जागृमि ॥ २२ ॥ नूनं ते हृदयं काम वज्रसारमयं दृढ़म्। यदनर्थशताविष्टं शतधा न विदीर्य्यते ॥ २३ ॥ जानामि काम त्वाञ्चैव यच्च किञ्चित् प्रियं तव। तवाहं प्रियमन्विच्छन्नात्मन्युपलभे सुखम् ॥ २४ ॥ काम जानामि ते मूलं सङ्कल्पात् किल जायसे। न त्वां सङ्कल्पयिष्यामि समूलो न भविष्यसि ॥२५॥ ईहा धनस्य न सुखा लब्धे चिन्ता च भूयसी। लब्धनाशो यथा मृत्युर्लब्धं भवति वा न वा ॥ २६ ॥ परित्यागे न लभते ततो दुःखतरं नु किम्। न च तुष्यति लब्धेन भूय एव न मार्गति ॥ २७ ॥ अनुतर्षुल एवार्थः स्वादु गाङ्गमिवोदकम्। मद्विलापनमेतत्तु प्रतिवुद्धोऽस्मि सन्त्यज ॥ २८ ॥ य इमं मामकं देहं भूतग्रामं समाश्रितः। स यात्वितो यथाकामं वसतां वा यथासुखम् ॥ २९ ॥ न युष्मास्विह मे प्रीतिः कामलोभानुसारिषु। तस्मादुत्सृज्य कामान् वै सत्यमेवाश्रयाम्यहम् ॥ ३० ॥ सर्व्वभूतान्यहं देहे पश्यन्मनसि चात्मनः। योगे वुद्धिं श्रुते सत्त्वं मनो ब्रह्मणि धारयन् ॥ ३१ ॥ विहरिष्याम्यनासक्तः सुखी लोकान्निरामयः। यथा मां त्वं पुनर्नैवं दुःखेषु प्रणिधास्यसि ॥ ३२ ॥ त्वया हि मे प्रणुन्नस्य गतिरन्या न विद्यते। तृष्णाशोकश्रमाणां हि त्वं कामप्रभवः सदा ॥ ३३ ॥ धननाशेऽधिकं दुःखं मन्ये सर्व्वमहत्तरम्। ज्ञातयो ह्यवमन्यन्ते मित्राणि च धनाच्युतम् ॥ ३४ ॥ अवज्ञानसहस्रैस्तु दोषाः कष्टतरा धने। धने सुखकला या तु सापि दुःखै विधीयते ॥ ३५ ॥ धनमस्येति पुरुषं पुरो निघ्नन्ति दस्यवः। क्लिश्यन्ति विविधैर्दण्डै र्नित्यमुद्वेजयन्ति च ॥ ३६ ॥ अर्थलोलुपता दुःखमिति वुद्धं चिरान्मया। यद्यदालम्बसे काम तत्तदेवानुरुध्यसे। अतत्त्वज्ञोऽसि वालश्च दुस्तोषोपूरणोऽनलः ॥३७॥ नैव त्वं वेत्थ सुलभं नैव त्वं वेत्थ दुर्लभम्। पातालमिव दुष्पूरो मां दुःखैर्योक्तुमिच्छसि। नाहमद्य समावेष्टुं शक्यः काम पुन-

स्वया ॥ ३८ ॥ निर्वेदमहमासाद्य द्रव्यनाशाद्यदृच्छया। निर्वृत्तिं परमां प्राप्य नाद्य कामान् विचिन्तये ॥ ३९ ॥ अतिक्लेशान् सहामीह नाहं बुध्याम्यबुद्धिमान्। निकृतौ धननाशेन शये सर्वाङ्गविज्वरः ॥४०॥ परित्यजामि काम त्वां हित्वा सर्वमनोगतीः। न त्वं मया पुनः काम वत्स्यसि न च रंस्यसे ॥ ४१ ॥ क्षमिष्ये क्षिपमाणानां न हिंसिष्ये विहिंसितः। द्वेष्यमुक्तः प्रियं वक्ष्याम्यनादृत्य तदप्रियम्। तृप्तः स्वस्थेन्द्रियो नित्यं यथालब्धेन वर्त्तयन् ॥ ४२ ॥ न सकामं करिष्यामि त्वामहं शत्रुमात्मनः। निर्वेदं निर्वृतिं तृप्तिं शान्तिं सत्यं दमं क्षमाम्। सर्वभूतदयाञ्चैव विद्धि मां समुपागतम् ॥ ४३ ॥ तस्मात् कामश्च लोभश्च तृष्णा कार्पण्यमेव च। त्यजन्तु मां प्रतिष्ठन्तं सत्त्वस्थो ह्यस्मि साम्प्रतम् ॥ ४४ ॥ प्रहाय कामं लोभञ्च सुखं प्राप्तोऽस्मि साम्प्रतम्। नाद्य लोभवशं प्राप्तो दुःखं प्राप्स्याम्यनात्मवान् ॥ ४५ ॥ यद्यत्त्यजति कामानां तत् सुखस्याभिपूर्य्यते। कामस्य वशगो नित्यं दुःखमेव प्रपद्यते ॥ ४६ ॥ कामानुबन्धं नुदते यत्किञ्चित् पुरुषो रजः। कामक्रोधोद्भवं दुःखमह्रीररतिरेव च ॥ ४७ ॥ एष ब्रह्म प्रविष्टोऽहं ग्रीष्मे शीतमिव ह्रदम्। शाम्यामि परिनिर्वामि सुखं मामेति केवलम् ॥४८॥ यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोड़शीं कलाम् ॥ ४९ ॥ आत्मना सप्तमं कामं हत्वा शत्रुमिवोत्तमम्। प्राप्यावध्यं ब्रह्मपुरं राजेव स्यामहं सुखी ॥ ५० ॥ एतां बुद्धिं समास्थाय मङ्किर्निर्वेदमागतः। सर्वान् कामान् परित्यज्य प्राप्य ब्रह्म महत्सुखम् ॥ ५१ ॥ दम्यनाशकृते मङ्किरमृतत्वं किलागमत्। अच्छिनत् काममूलं न तेन प्राप महत्सुखम् ॥ ५२ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि मङ्किगीतायां सप्तसप्तत्यधिकशततोऽध्यायः ॥ १७७ ॥

———

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । गीतं विदेहराजेन जनकेन प्रशाम्यता ॥ १ ॥ अनन्तं वत मे वित्तं यस्य मे नास्ति किञ्चन । मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन ॥ २ ॥ अत्रैवोदाहरन्तीमं बोध्यस्य पदसञ्चयम् । निर्व्वेदं प्रति विन्यस्तं तन्निबोध युधिष्ठिर ॥ ३ ॥ बोध्यं शान्तमृषिं राजा नहुषः पर्य्यपृच्छत । निर्व्वेदाच्छान्तिमापन्नं शास्त्रप्रज्ञानतर्पितम् ॥ ४ ॥ उपदेशं महाप्राज्ञ शमस्योपदिशस्व मे । कां बुद्धिं समनुध्याय शान्तश्चरसि निर्वृतः ॥ ५ ॥

बोध्य उवाच । उपदेशेन वर्त्तामि नानुशास्मीह कञ्चन । लक्षणं तस्य वक्ष्येऽहं तत् स्वयं परिमृश्यताम् ॥ ६ ॥ पिङ्गला कुररः सर्पः सारङ्गान्वेषणं वने । इषुकारः कुमारी च षड़ेते गुरवो मम ॥७॥

भीष्म उवाच । आशा बलवती राजन्नैराश्यं परमं सुखम् । आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला ॥ ८ ॥ सामिषं कुररं दृष्ट्वा वध्यमानं निरामिषैः । आमिषस्य परित्यागात् कुररः सुखमेधते ॥ ९ ॥ गृहारम्भो हि दुःखाय न सुखाय कदाचन । सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ १० ॥ सुखं जीवन्ति मुनयो भैक्ष्यवृत्तिं समाश्रिताः । अद्रोहेणैव भूतानां सारङ्गा इव पक्षिणः ॥ ११ ॥ इषुकारो नरः कश्चिदिषावासक्तमानसः । समीपेनापि गच्छन्तं राजानं नावबुद्धवान् ॥ १२ ॥ बहूनां कलहो नित्यं द्वयोः संकथनं ध्रुवम् । एकाकी विचरिष्यामि कुमारीशङ्खको यथा ॥१३॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि बोध्यगीतायां अष्टसप्तत्यधिकशततोऽध्यायः ॥ १७८ ॥

---

युधिष्ठिर उवाच । केन वृत्तेन वृत्तज्ञ वीतशोकश्चरेन्महीम् । किञ्च कुर्व्वन्नरो लोके प्राप्नोति गतिमुत्तमाम् ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। प्रह्लादस्य च संवादं मुनेराजगरस्य च ॥ २ ॥ चरन्तं ब्राह्मणं कञ्चित् कल्यचित्तमनामयम्। पप्रच्छ राजा प्रह्लादो बुद्धिमान् बुद्धिसम्मतम् ॥ ३ ॥

प्रह्लाद उवाच। स्वस्थः शुक्लो मृदुर्दान्तो निर्विधित्सोऽनसूयकः। सुवाक् प्रगल्भो मेधावी प्राज्ञश्चरसि बालवत् ॥ ४ ॥ नैव प्रार्थयसे लाभं नालाभेष्वनुशोचसि। नित्यतृप्त इव ब्रह्मन्नकिञ्चिद्‌दिवि मन्यसे ॥ ५ ॥ स्रोतसा ह्रियमाणासु प्रजासु विमना इव। धर्मकामार्थकार्य्येषु कूटस्थ इव लक्ष्यसे ॥ ६ ॥ नानुतिष्ठसि धर्मार्थौ न कामे चापि वर्त्तसे। इन्द्रियार्थाननादृत्य मुक्तश्चरसि साक्षिवत् ॥ ७ ॥ का नु प्रज्ञा श्रुतं वा किं वृत्तिर्वा का नु ते मुने। क्षिप्रमाचक्ष्व मे ब्रह्मन् श्रेयो यदिह मन्यसे ॥ ८ ॥

भीष्म उवाच। अनुयुक्तः स मेधावी लोकधर्मविधानवित्। उवाच श्लक्ष्णया वाचा प्रह्लादमनपार्थया ॥ ९ ॥ पश्य प्रह्लाद भूतानामुत्पत्तिमनिमित्ततः। ह्रासं वृद्धिं विनाशञ्च न प्रहृष्ये न च व्यथे ॥ १० ॥ स्वभावादेव संदृश्या वर्त्तमानाः प्रवृत्तयः। स्वभावनिरताः सर्वाः परितुष्ये न केनचित् ॥११॥ पश्य प्रह्लाद संयोगान् विप्रयोगपरायणान्। सञ्चयांश्च विनाशान्तान्न क्वचिद्विदधे मनः ॥ १२ ॥ अन्तवन्ति च भूतानि गुणयुक्तानि पश्यतः। उत्पत्तिनिधनज्ञस्य किं कार्य्यमवशिष्यते ॥ १३ ॥ जलजानामपि ह्यन्तं पर्य्यायेणोपलक्षये। महतामपि कायानां सूक्ष्माणाञ्च महोदधौ ॥ १४ ॥ जङ्गमस्थावराणाञ्च भूतानामसुराधिप। पार्थिवानामपि व्यक्तं मृत्युं पश्यामि सर्वशः ॥ १५ ॥ अन्तरीक्षचराणाञ्च दानवोत्तम पक्षिणाम्। उत्तिष्ठते यथाकालं मृत्युर्बलवतामपि ॥ १६ ॥ दिवि सञ्चरमाणानि ह्रस्वानि च महान्ति च। ज्योतींष्यपि यथाकालं पतमानानि लक्षये ॥ १७ ॥ इति भूतानि संपश्यन्ननुषक्तानि

मृत्युना। सर्वसामान्यगो विद्वान् कृतकृत्यः सुखं स्वपे ॥ १८ ॥
सुमहान्तमपि ग्रासं ग्रसे लब्धं यदृच्छया। शये पुनरभुञ्जानो
दिवसानि बहून्यपि ॥१९॥ आशयन्त्यपि मामन्नं पुनर्बहुगुणं बहु।
पुनरल्पं पुनस्तोकं पुनर्नैवोपपद्यते ॥ २० ॥ कणान् कदाचित्
खादामि पिण्याकमपि च ग्रसे। भक्षये शालिमांसानि भक्ष्यां-
श्चोच्चावचान् पुनः ॥ २१ ॥ शये कदाचित् पर्य्यङ्के भूमावपि पुनः
शये। प्रासादे चापि मे शय्या कदाचिदुपपद्यते ॥ २२ ॥ धारयामि
च चीराणि शाणक्षौमाजिनानि च। महार्हाणि च वासांसि धार-
याम्यहमेकदा ॥ २३ ॥ न सन्निपतितं धर्म्यमुपभोगं यदृच्छया।
प्रत्याचक्षे न चाप्येनमनुरुध्ये सुदुर्लभम् ॥ २४ ॥ अचलमनिधनं
शिवं विशोकं शुचिमतुलं विदुषां मते प्रविष्टम्। अनभिमतमसेवितं
विमूढैर्व्रतमिदमाजगरं शुचिश्चरामि ॥ २५ ॥ अचलितमतिरच्युतः
स्वधर्मात् परिमितसंसरणः परावरज्ञः। विगतभयकषायलोभ-
मोहो व्रतमिदमजगरं शुचिश्चरामि ॥ २६ ॥ अनियतफलभक्ष्य-
भोज्यपेयं विधिपरिणामविभक्तदेशकालम्। हृदयसुखमसेवितं
कदर्य्यैर्व्रतमिदमाजगरं शुचिश्चरामि ॥ २७ ॥ इदमिदमिति तृष्णा-
याभिभूतं जनमनवाप्तधनं विषीदमानम्। निपुणमनुनिशम्य तत्त्व-
बुद्ध्या व्रतमिदमाजगरं शुचिश्चरामि ॥ २८ ॥ बहुविधमनुदृश्य
चार्थहेतोः कृपणमिहार्य्यमनार्य्यमाश्रयन्तम्। उपशमरुचिरात्म-
वान् प्रशान्तो व्रतमिदमाजगरं शुचिश्चरामि ॥ २९ ॥ सुखमसुख-
मलाभमर्थलाभं रतिमरतिं मरणञ्च जीवितञ्च। विधिनियतमवेक्ष्य
तत्त्वतोऽहं व्रतमिदमाजगरं शुचिश्चरामि ॥ ३० ॥ अपगतभयराग-
मोहदर्पो धृतिमतिबुद्धिसमन्वितः प्रशान्तः। उपगतफलभोगिनो
निशम्य व्रतमिदमाजगरं शुचिश्चरामि ॥ ३१ ॥ अनियतशयनाशनः
प्रकृत्या दमनियमव्रतसत्यशौचयुक्तः। अपगतफलसञ्चयः प्रहृष्टो
व्रतमिदमाजगरं शुचिश्चरामि ॥ ३२ ॥ अपगतमसुखार्थमीहनार्थै-

रुपगतबुद्धिरवेक्ष्य चात्मसंस्थम्। तृषितमनियतं मनो नियन्तुं व्रतमिदमाजगरं शुचिश्चरामि ॥ ३३ ॥ न हृदयमनुरुध्य वाङ्मनो वा प्रियसुखदुर्लभतामनित्यताञ्च। तदुभयमुपलक्षयन्निवाहं व्रतमिदमाजगरं शुचिश्चरामि ॥ ३४ ॥ बहुकथितमिदं हि बुद्धिमद्भिः कविभिरभिप्रथयद्भिरात्मकीर्त्तिम्। इदमिदमिति तत्र तत्र तत्तत् स्वपरमतैर्गहनं प्रतर्कयद्भिः ॥ ३५ ॥ तदहमनुनिशम्य विप्रपातं पृथमभिपन्नमिहाबुधैर्मनुष्यैः। अनवसितमनन्तदोषपारं नृषु विचरामि विनीतदोषतृष्णः ॥ ३६ ॥

भीष्म उवाच। अजगरचरितं व्रतं महात्मा य इह नरोऽनुचरेद्विनीतरागः। अपगतभयलोभमोहमन्युः स खलु सुखी विचरेदिमं विहारम् ॥ ३७ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि प्रह्लादाजगरसंवादे एकोनाशीत्यधिकशतोऽध्यायः ॥ १७९ ॥

---

युधिष्ठिर उवाच। बान्धवाः कर्म्म वित्तं वा प्रज्ञा वेह पितामह। नरस्य का प्रतिष्ठा स्यादेतत् पृष्टो वदस्व मे ॥ १ ॥

भीष्म उवाच। प्रज्ञा प्रतिष्ठा भूतानां प्रज्ञा लाभः परो मतः। प्रज्ञा निःश्रेयसी लोके प्रज्ञा स्वर्गो मतः सताम् ॥ २ ॥ प्रज्ञया प्रापितार्थो हि बलिरैश्वर्य्यसङ्क्षये। प्रह्लादो नमुचिर्मङ्किस्तस्याः किं विद्यते परम् ॥ ३ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। इन्द्रकाश्यपसंवादं तन्निबोध युधिष्ठिर ॥ ४ ॥ वैश्यः कश्चिदृषिसुतं काश्यपं संशितव्रतम्। रथेन पातयामास श्रीमान् दृप्तस्तपस्विनम् ॥ ५ ॥ आर्त्तः स पतितः क्रुद्धस्त्यक्त्वात्मानमथाब्रवीत्। मरिष्याम्यधनस्येह जीवितार्थो न विद्यते ॥ ६ ॥ तथा मुमूर्षुमासीनमकूजन्तमचेतसम्। इन्द्रः शृगालरूपेण बभाषे क्रुध्यमानसम् ॥ ७ ॥

मनुष्ययोनिमिच्छन्ति सर्वभूतानि सर्वशः । मनुष्यत्वे च विप्रत्वं सर्वं एवाभिनन्दति ॥८॥ मनुष्यो ब्राह्मणश्चापि श्रोत्रियश्चासि काश्यप । सुदुर्लभतवाप्यैतन्न दोषान्मर्त्तुमर्हसि ॥ ९ ॥ सर्वे लाभाः साभिमाना इति सत्या च ते श्रुतिः । सन्तोषणीयरूपोऽसि लोभात् यदभिमन्यसे ॥१०॥ अहो सिद्धार्थता तेषां येषां सन्तीह पाणयः । अतीव स्पृहये तेषां येषां सन्तीह पाणयः ॥ ११ ॥ पाणिमद्भ्यः स्पृहास्माकं तथा तव धनस्य वै । न पाणिलाभादधिको लाभः कश्चन विद्यते ॥ १२ ॥ अपाणित्वादयं ब्रह्मन् कण्टकं नोद्धरामहे । जन्तूनुच्चावचानङ्गे दशतो न कषाम वा ॥ १३ ॥ अथ येषां पुनः पाणी देवदत्तौ दशाङ्गुलौ । उद्धरन्ति कृमीनङ्गाद्दशतो निकषन्ति च ॥ १४ ॥ वर्षाहिमातपानाञ्च परित्राणानि कुर्वते । चैलमन्नं सुखं शय्यां निवातञ्चोपभुञ्जते ॥ १५ ॥ अधिष्ठाय च गां लोके भुञ्जते वाहयन्ति च । उपायैर्बहुभिश्चैव वश्यानात्मनि कुर्वते ॥१६॥ ये खल्वजिह्वाः कृपणाः अल्पप्राणा अपाणयः । सहन्ते तानि दुःखानि दिष्ट्या त्वं न तथा मुने ॥ १७॥ दिष्ट्या त्व न शृगालो वै न कृमिर्न च मूषिकः । न सर्पो न च मण्डूको न चान्यः पापयोनिजः ॥ १८ ॥ एतावतापि लाभेन तोष्टुमर्हसि काश्यप । किं पुनर्योऽसि सत्त्वानां सर्वेषां ब्राह्मणोत्तमः ॥ १९ ॥ इमे मां कृमयोऽदन्ति येषामुद्धरणाय वै । नास्ति शक्तिरपाणित्वात् पश्यावस्थामिमां मम ॥ २० ॥ अकार्य्यमिति चैवेमं नात्मानं संत्यजाम्यहम् । नातः पापीयसीं योनिं पतेयमपरामिति ॥ २१ ॥ मध्ये वै पापयोनीनां शार्गालीं यामहं गतः । पापीयस्यो बहुतरा इतोऽन्याः पापयोनयः ॥ २२ ॥ जात्यैवैके सुखितराः सन्त्यन्ये भृशदुःखिताः । नैकान्तं सुखमेवेह क्वचित् पश्यामि कस्यचित् ॥ २३ ॥ मनुष्या ह्याढ्यतां प्राप्य राज्यमिच्छन्त्यनन्तरम् । राज्याद्देवत्वमिच्छन्ति देवत्वादिन्द्रतामपि ॥ २४ ॥ भवेस्त्वं यद्यपि त्वाढ्यो न राजा न च

दैवतम् । दैवत्वं प्राप्य चेन्द्रत्वं नैव तुष्येस्तथा सति ॥ २५ ॥ न तृप्तिः प्रियलाभेऽस्ति तृष्णा नाद्भिः प्रशाम्यति । संप्रज्वलति सा भूयः समिद्भिरिव पावकः ॥ २६ ॥ अस्त्येव त्वयि शोकोऽपि हर्षश्चापि तथा त्वयि । सुखदुःखे तथा चोभे तत्र का परिदेवना ॥२७ परिच्छिद्यैव कामानां सर्वेषां चैव कर्म्मणाम् । मूलं बुद्धीन्द्रियग्रामं शकुन्तानिव पञ्जरे ॥ २८ ॥ न द्वितीयस्य शिरसश्छेदनं विद्यते क्वचित् । न च पाणेस्तृतीयस्य यन्नास्ति न ततो भयम् ॥ २९ ॥ न खल्वप्यरसज्ञस्य कामः क्वचन जायते । संस्पर्शाद्दर्शनाद्वापि श्रवणाद्वापि जायते ॥ ३० ॥ न त्वं स्मरसि वारुण्या लट्वाकानाञ्च पक्षिणाम् । ताभ्याञ्चाभ्यधिको भक्ष्यो न कश्चिद्विद्यते क्वचित् ॥ ३१ ॥ यानि चान्यानि भूतेषु भक्ष्यजातानि काश्यप । येषामभुक्तपूर्वन्ते तेषामस्मृतिरेव च ॥ ३२ ॥ अप्राशनमसंस्पर्शमसंदर्शनमेव च । पुरुषस्यैष नियमो मन्ये श्रेयो न संशयः ॥ ३३ ॥ पाणिमन्तो बलवन्तो धनवन्तो न संशयः । मनुष्या मानुषैरेव दासत्वमुपपादिताः ॥ ३४ ॥ वधबन्धपरिक्लेशैः क्लिश्यन्ति च पुनः पुनः । ते खल्वपि रमन्ते च मोदन्ते च हसन्ति च ॥ ३५ ॥ अपरे बाहुबलिनः कृतविद्या मनस्विनः । जुगुप्सितां सुकृपणां पापवृत्तिमुपासते ॥ ३६ ॥ उत्सहन्ते च ते वृत्तिमन्यामप्युपसेवितुम् । स्वकर्म्मणा तु नियतं भवितव्यन्तु तत्तथा ॥ ३७ ॥ न पुल्कसो न चाण्डाल आत्मानं त्यक्तुमिच्छति । तया तुष्टः स्वया योन्या मायां पश्यस्व यादृशीम् ॥ ३८ ॥ दृष्ट्वा कुणीन् पक्षहतान् मनुष्यानामयाविनः । सुखं पूर्णः स्वया योन्या लब्धलाभोऽसि काश्यप ॥ ३९ ॥ यदि ब्राह्मण देहस्ते निरातङ्को निरामयः । अङ्गानि च समग्राणि न च लोकेषु धिक्कृतः ॥ ४० ॥ न केनचित् प्रवादेन सत्येनैवापहारिणा । धर्मायोत्तिष्ठ विप्रर्षे नात्मानं त्यक्तुमर्हसि ॥ ४१ ॥ यदि ब्रह्मन् शृणोष्येतत् श्रद्दधासि च मे वचः । वेदोक्तस्यैव धर्मस्य

फलं मुख्यमवाप्स्यसि ॥ ४२ ॥ स्वाध्यायमग्निसंस्कारमप्रमत्तोऽनुपालय । सत्यं दमञ्च दानञ्च स्पर्द्धिष्ठा मा च केनचित् ॥ ४३ ॥ ये केचन स्वाध्ययनाः प्राप्ता यजनयाजनम् । कथं ते वानुशोचेयुर्ध्यायेयुर्वाप्यशोभनम् । इच्छन्तस्ते विहाराय सुखं महदवाप्नुयुः ॥ ४४ ॥ उत जाताः सुनक्षत्रे सुतिथौ सुमुहूर्त्तजाः । यज्ञदानप्रजेहायां यतन्ते शक्तिपूर्व्वकम् ॥ ४५ ॥ नक्षत्रेष्वासुरेष्वन्ये दुस्तिथौ दुर्मुहूर्त्तजाः । संपतन्त्यासुरीं योनिं यज्ञप्रसववर्ज्जिताः ॥ ४६ ॥ अहमासं पण्डितको हैतुको वेदनिन्दकः । आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम ॥ ४७ ॥ हेतुवादान् प्रवदिता वक्ता संसत्सु हेतुमत् । आक्रोष्टा चातिवक्ता च ब्रह्मवाक्येषु वै द्विजान् ॥ ४८ ॥ नास्तिकः सर्व्वशङ्की च मूर्खः पण्डितमानिकः । तस्येयं फलनिर्वृत्तिः शृगालत्वं मम द्विज ॥ ४९ ॥ अपि जातु तथा तस्यादहोरात्रशतैरपि । यदहं मानुषीं योनिं शृगालः प्राप्नुयां पुनः ॥ ५० ॥ सन्तुष्टश्चाप्रमत्तश्च यज्ञदानतपोरतः । ज्ञेयज्ञाता भवेयं वै वर्ज्यवर्ज्जयिता तथा ॥ ५१ ॥ ततः स मुनिरुत्थाय काश्यपस्तमुवाच ह । अहो बतासि कुशलो बुद्धिमांश्चेति विस्मितः ॥ ५२ ॥ समवैक्षत तं विप्रो ज्ञानदीर्घेण चक्षुषा । ददर्श चैनं देवानां देवमिन्द्रं शचीपतिम् ॥ ५३ ॥ ततः संपूजयामास काश्यपो हरिवाहनम् । अनुज्ञातस्तु तेनाथ प्रविवेश स्वमालयम् ॥ ५४ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शृगालकाश्यपसंवादे अशीत्यधिकशतोऽध्यायः ॥ १८० ॥

---

युधिष्ठिर उवाच । यद्यस्ति दत्तमिष्टं वा तपस्तप्तं तथैव च । गुरूणां वापि शुश्रूषा तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच । आत्मनानर्थयुक्तेन पापे निविशते मनः । स्वकर्म्मकलुषं कृत्वा कृच्छ्रे लोके विधीयते ॥ २ ॥ दुर्भिक्षादेव दुर्भिक्षं क्लेशात् क्लेशं भयाद्भयम् । मृतेभ्यः प्रमृतं यान्ति दारिद्राः पापकारिणः ॥ ३ ॥ उत्सवादुत्सवं यान्ति स्वर्गात् स्वर्गं सुखात् सुखम् । श्रद्दधानाश्च दान्ताश्च धनाढ्याः शुभकारिणः ॥ ४ ॥ व्यालकुञ्जरदुर्गेषु सर्पचौरभयेषु च । हस्तावापेन गच्छन्ति नास्तिकाः किमतः परम् ॥ ५ ॥ प्रियदेवातिथेयाश्च वदान्याः प्रियसाधवः । क्षेम्यमात्मवतां मार्गमास्थिता हस्तदक्षिणम् ॥६॥ पुलाका इव धान्येषु पुत्तिका इव पक्षिषु । तद्विधास्ते मनुष्याणां येषां धर्मो न कारणम् ॥ ७ ॥ सुशीघ्रमपि धावन्तं विधानमनुधावति । शेते सह शयानेन येन येन यथाकृतम् ॥ ८ ॥ उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति । करोति कुर्वतः कर्म्म छायेवानुविधीयते ॥९॥ येन येन यथा यद्यत् पुरा कर्म्म समीहितम् । तत्तदेव नरो भुङ्क्ते नित्यं विहितमात्मना ॥ १० ॥ स्वकर्म्मफलनिक्षेपं विधानपरिरक्षितम् । भूतग्राममिमं कालः समन्तात् परिकर्षति ॥११॥ अचोद्यमानानि यथा पुष्पाणि च फलानि च । स्वं कालं नातिवर्त्तन्ते तथा कर्म्म पुराकृतम ॥ १२ ॥ सम्मानश्चावमानश्च लाभालाभौ क्षयोदयौ । प्रवृत्तानि निवर्त्तन्ते विधानान्ते पुनः पुनः ॥१३ आत्मना विहितं दुःखमात्मना विहितं सुखम् । गर्भशय्यामुपादाय भुज्यते पौर्वदेहिकम् ॥ १४ ॥ वालो युवा च वृद्धश्च यत् करोति शुभाशुभम् । तस्यां तस्यामवस्थायां तत्फलं प्रतिपद्यते ॥ १५ ॥ यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् । तथा पूर्वकृतं कर्म्म कर्त्तारमनुगच्छति ॥१६॥ समुन्नमग्रतो वस्त्रं पश्चाच्छुध्यति कर्म्मणा । उपवासैः प्रतप्तानां दीर्घं सुखमनन्तकम् ॥ १७ ॥ दीर्घकालेन तपसा सेवितेन तपोवने । धर्म्मनिर्द्धूतपापानां संपद्यन्ते मनोरथाः ॥ १८ ॥ शकुनानामिवाकाशे मत्स्यानामिव चोदके । पदं यथा

न दृश्येत तथा ज्ञानविदां गतिः ॥ १९ ॥ अलमन्यैरुपालम्भैः कीर्त्ति-
तैश्च व्यतिक्रमैः । पेशलञ्चानुरूपञ्च कर्त्तव्यं हितमात्मनः ॥ २० ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि
एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

---

युधिष्ठिर उवाच । कुतः सृष्टमिदं विश्वं जगत्स्थावरजङ्गमम् ।
प्रलये च कमभ्येति तन्मे ब्रूहि पितामह ॥ १ ॥ ससागरः सगगनः
सशैलः सबलाहकः । सभूमिः साग्निपवनो लोकोऽयं केन निर्मितः
॥ २ ॥ कथं सृष्टानि भूतानि कथं वर्णविभक्तयः । शौचाशौचं
कथं तेषां धर्माधर्मविधिः कथम् ॥ ३ ॥ कीदृशो जीवतां जीवः क्व
वा गच्छन्ति ये मृताः । अस्माल्लोकादमुं लोकं सर्वं शंसतु नो
भवान् ॥ ४ ॥

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भृगुणाभिहितं शास्त्रं भरद्वाजाय पृच्छते ॥ ५ ॥ कैलासशिखरे
दृष्ट्वा दीप्यमानं महौजसम् । भृगुं महर्षिमासीनं भरद्वाजोऽन्व-
पृच्छत ॥ ६ ॥

भरद्वाज उवाच । ससागरः सगगनः सशैलः सबलाहकः ।
सभूमिः साग्निपवनो लोकोऽयं केन निर्मितः ॥ ७ ॥ कथं सृष्टानि
भूतानि कथं वर्णविभक्तयः । शौचाशौचं कथं तेषां धर्माधर्मविधिः
कथम् ॥ ८ ॥ कीदृशो जीवतां जीवः क्व वा गच्छन्ति ये मृताः ।
परलोकमिमञ्चापि सर्वं शंसितुमर्हसि ॥ ९ ॥ एवं स भगवान्
पृष्टो भरद्वाजेन संशयम् । ब्रह्मर्षिर्ब्रह्मसङ्काशः सर्वं तस्मै ततो-
ऽब्रवीत् ॥ १० ॥

भृगुरुवाच । मानसो नाम यः पूर्वो विश्रुतो वै महर्षिभिः ।
अनादिनिधनो देवस्तथाभेद्योऽजरामरः ॥ ११ ॥ अव्यक्त इति

विख्यातः शाश्वतोऽथाक्षयोऽव्ययः। यतः सृष्टानि भूतानि जायन्ते च म्रियन्ति च॥१२॥ सोऽसृजत् प्रथमं देवो महान्तं नाम नामतः॥१३॥ महान् ससर्जाहङ्कारं स चापि भगवानथ। आकाशमिति विख्यातं सर्वभूतधरः प्रभुः॥१४॥ आकाशादभवद्वारि सलिलादग्निमारुतौ। अग्निमारुतसंयोगात्ततः समभवन्मही॥१५॥ ततस्तेजोमयं दिव्यं पद्मं सृष्टं स्वयम्भुवा। तस्मात् पद्मात् समभवत् ब्रह्मा वेदमयो निधिः॥१६॥ अहङ्कार इति ख्यातः सर्वभूतात्मभूतकृत्। ब्रह्मा वै स महातेजा य एते पञ्च धातवः॥१७॥ शैलास्तस्यास्थिसंज्ञास्तु मेदो मांसञ्च मेदिनी। समुद्रास्तस्य रुधिरमाकाशमुदरं तथा॥१८॥ पवनश्चैव निश्वासस्तेजोऽग्निर्निम्नगाः शिराः। अग्नीषोमौ तु चन्द्रार्कौ नयने तस्य विश्रुते॥१९॥ नभश्चोर्द्ध्वं शिरस्तस्य चितिः पादौ भुजा दिशः। दुर्विज्ञेयो ह्यचिन्त्यात्मा सिद्धैरपि न संशयः॥२०॥ स एष भगवान् विष्णुरनन्त इति विश्रुतः। सर्वभूतात्मभूतस्थो दुर्विज्ञेयोऽकृतात्मभिः॥२१॥ अहङ्कारस्य यः स्रष्टा सर्वभूतभवाय वै। यतः समभवद्विश्वं पृष्टोऽहं यदिह त्वया॥२२॥

भरद्वाज उवाच। गगणस्य दिशाञ्चैव भूतलस्यानिलस्य वा। कान्यत्र परिमाणानि संशयं छिन्धि तत्त्वतः॥२३॥

भृगुरुवाच। अनन्तमेतदाकाशं सिद्धदैवतसेवितम्। रम्यं नानाश्रयाकीर्णं यस्यान्तो नाधिगम्यते॥२४॥ ऊर्द्ध्वं गतेरधस्तात्तु चन्द्रादित्यौ न दृश्यतः। तत्र देवाः स्वयं दीप्ता भास्कराभाग्निवर्च्चसः॥२५॥ ते चानन्तं न पश्यन्ति नभसः प्रथितौजसः। दुर्गमत्वादनन्तत्वादिति मे विद्धि मानद॥२६॥ उपरिष्टोपरिष्टात्तु प्रज्वलद्भिः स्वयंप्रभैः। निरुद्धमेतदाकाशमप्रमेयं सुरैरपि॥२७॥ पृथिव्यन्ते समुद्रास्तु समुद्रान्ते तमः स्मृतम्। तमसोऽन्ते जलं प्राहुर्जलस्यान्तेऽग्निरेव च॥२८॥ रसातलान्ते सलिलं जलान्ते पन्न-

गाधिपाः। तदन्ते पुनराकाशमाकाशान्ते पुनर्जलम्॥ २९॥ एव-मन्तं भगवत प्रमाणं सलिलस्य च। अग्निमारुततोयेभ्यो दुर्ज्ञेयं दैवतैरपि॥ ३०॥ अग्निमारुततोयानां वर्णाः चितितलस्य च। आकाशसदृशा ह्येते भिद्यन्ते तत्त्वदर्शनात्॥ ३१॥ पठन्ति चैवं मुनयः शास्त्रेषु विविधेषु च। त्रैलोक्यसागरे चैव प्रमाणं विहितं यथा॥ ३१॥ अदृश्याय लगम्याय कः प्रमाणमुदाहरेत्॥ ३३॥ सिद्धानां देवतानाञ्च यदा परिमिता गतिः। तदा गौणमनन्तस्य नामानन्तेति विश्रुतम्। नामधेयानुरूपस्य मानसस्य महात्मनः॥ ३४॥ तदा तु दिव्यं यद्रूपं ह्रसते वर्द्धते पुनः। कोऽन्यस्तद्वेदितु शक्तो योऽपि स्यात्तद्विधोऽपरः॥ ३५॥ ततः पुष्करतः सृष्टः सर्वज्ञो मूर्त्तिमान् प्रभुः। ब्रह्मा धर्ममयः पूर्वः प्रजापतिरनुत्तमः॥३६॥

भरद्वाज उवाच। पुष्कराद्यदि सम्भूतो ज्येष्ठं भवति पुष्करम्। ब्रह्माणं पूर्वजञ्चाह भवान् सन्देह एष मे॥ ३७॥

भृगुरुवाच। मानसस्येह या मूर्त्तिर्ब्रह्मत्वं समुपागता। तस्यासनविधानार्थं पृथिवी पद्ममुच्यते॥ ३८॥ कर्णिका तस्य पद्मस्य मेरुर्गगणमुच्छ्रितः। तस्य मध्ये स्थितो लोकान् सृजते जगतः प्रभुः॥ ३९॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि भृगुभरद्वाजसंवादे द्व्यशीत्यधिकशतोऽध्यायः॥ १८२॥

---

भरद्वाज उवाच। प्रजाविसर्गं विविधं कथं संसृजते प्रभुः। मेरुमध्ये स्थितो ब्रह्मा तद्ब्रूहि द्विजसत्तम॥ १॥

भृगुरुवाच। प्रजाविसर्गं विविधं मानसो मनसासृजत्। संरक्षणार्थं भूतानां सृष्टं प्रथमतो जलम्॥ २॥ यत् प्राणः सर्व-भूतानां वर्द्धन्ते येन च प्रजाः। परित्यक्ताश्च नश्यन्ति तेनेदं सर्व-

आवृतम् ॥ ३ ॥ पृथिवी पर्वता मेघा मूर्त्तिमन्तश्च ये परे । सर्वं तद्वारुणं ज्ञेयमापस्तस्तम्भिरे यतः ॥ ४ ॥

भरद्वाज उवाच । कथं सलिलमुत्पन्नं कथं चैवाग्निमारुतौ । कथं वा मेदिनी सृष्टेत्यत्र मे संशयो महान् ॥ ५ ॥

भृगुरुवाच । ब्रह्मकल्पे पुरा ब्रह्मन् ब्रह्मर्षीणां समागमे । लोकसम्भवसन्देहः समुत्पन्नो महात्मनाम् ॥ ६ ॥ तेऽतिष्ठन् ध्यानमालम्ब्य मौनमास्थाय निश्चलाः । त्यक्ताहाराः पवनपा दिव्यं वर्षशतं द्विजाः ॥७॥ तेषां ब्रह्ममयी वाणी सर्वेषां श्रोत्रमागमत् । दिव्या सरस्वती तत्र सम्बभूव नभस्तलात् ॥ ८ ॥ पुरा स्तिमितमाकाशमनन्तमचलोपमम् । नष्टचन्द्रार्कपवनं प्रसुप्तमिव सम्बभौ ॥ ९ ॥ ततः सलिलमुत्पन्नं तमसीवापरं तमः । तस्माच्च सलिलोत्पीडादुदतिष्ठत मारुतः ॥ १० ॥ यथा भाजनमच्छिद्रं निःशब्दमिव लक्ष्यते । तच्चाम्भसा पूर्य्यमाणं सशब्दं कुरुतेऽनिलः ॥ ११ ॥ यथा सलिलसंरुद्धे नभसोऽन्ते निरन्तरे । भित्त्वार्णवतलं वायुः समुत्पतति घोषवान् ॥ १२ ॥ स एष चरते वायुरर्णवोत्पीड़सम्भवः । आकाशस्थानमासाद्य प्रशान्तिं नाधिगच्छति ॥१३ तस्मिन् वायूम्बुसङ्घर्षे दीप्ततेजा महाबलः । प्रादुरभूदूर्द्ध्वशिखः कृत्वा निस्तिमिरं नभः ॥ १४ ॥ अग्निः पवनसंयुक्तः खं समाक्षिपते जलम् । सोऽग्निर्मारुतसंयोगाद्घनत्वमुपपद्यते ॥ १५ ॥ तस्याकाशे निपततः स्नेहस्तिष्ठति योऽपरः । स सङ्घातत्वमापन्नो भूमित्वमनुगच्छति ॥ १६ ॥ रसानां सर्वगन्धानां स्नेहानां प्राणिनां तथा । भूमिर्योनिरिह ज्ञेया यस्यां सर्वं प्रसूयते ॥ १७ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि भृगुभरद्वाजसंवादे त्र्यशीत्यधिकशततोऽध्यायः ॥ १८३ ॥

भरद्वाज उवाच। य एते धातव पञ्च ब्रह्मा यानसृजत् पुरा। आवृता यैरिमे लोका महाभूताभिसंज्ञितैः॥ १॥ यदासृजत् सहस्राणि भूतानां स महामतिः। पञ्चानामेव भूतत्वं कथं समुपपद्यते॥ २॥

भृगुरुवाच। अमितानां महाशब्दो यान्ति भूतानि सम्भवम्। ततस्तेषां महाभूतशब्दोऽयमुपपद्यते॥ ३॥ चेष्टा वायुः खमाकाशमुष्माग्निः सलिलं द्रवः। पृथिवी चात्र सङ्घातः शरीरं पाञ्चभौतिकम्॥ ४॥ इत्येतैः पञ्चभिर्भूतैर्युक्तं स्थावरजङ्गमम्। श्रोत्रं घ्राणं रसः स्पर्शोदृष्टिश्चेन्द्रियसंज्ञिकाः॥ ५॥

भरद्वाज उवाच। पञ्चभिर्यदि भूतैस्तु युक्ताः स्थावरजङ्गमाः। स्थावराणां न दृश्यन्ते शरीरे पञ्च धातवः॥ ६॥ अनुष्मणामचेष्टानां घनानाञ्चैव तत्त्वतः। वृक्षाणां नोपलभ्यन्ते शरीरे पञ्च धातवः॥ ७॥ न शृण्वन्ति न पश्यन्ति न गन्धरसवेदिनः। न च स्पर्शं विजानन्ति ते कथं पाञ्चभौतिकाः॥ ८॥ अद्रवत्वादनग्नित्वादभूमित्वादवायुतः। आकाशस्याप्रमेयत्वाद्वृक्षाणां नास्ति भौतिकम्॥ ९॥

भृगुरुवाच। घनानामपि वृक्षाणामाकाशोऽस्ति न संशयः। तेषां पुष्पफलव्यक्तिर्नित्यं समुपपद्यते॥ १०॥ उष्मतो म्लायते पर्णं त्वक् फलं पुष्पमेव च। म्लायते शीर्य्यते चापि स्पर्शस्तेनात्र विद्यते॥११॥ वाय्वग्न्यशनिनिर्घोषैः फलं पुष्पं विशीर्य्यते। श्रोत्रेण गृह्यते शब्दस्तस्माच्छृण्वन्ति पादपाः॥ १२॥ वल्ली वेष्टयते वृक्षं सर्वतश्चैव गच्छति। न ह्यदृष्टेश्च मार्गोऽस्ति तस्मात् पश्यन्ति पादपाः॥ १३॥ पुण्यापुण्यैस्तथा गन्धैर्धूपैश्च विविधैरपि। अरोगाः पुष्पिताः सन्ति तस्माज्जिघ्रन्ति पादपाः॥ १४॥ पादैः सलिलपानाच्च व्याधीनाञ्चापि दर्शनात्। व्याधिप्रतिक्रियात्वाच्च विद्यते रसनं द्रुमे॥ १५॥ वक्त्रेणोत्पलनालेन यथोर्द्ध्वं जलमाददेत्।

तथा पवनसंयुक्तः पादैः पिवति पादपः ॥ १६ ॥ सुखदुःखयोश्च ग्रहणात् छिन्नस्य च विरोहणात् । जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते ॥१७॥ तेन तज्जलमादत्तं जरयत्यग्निमारुतौ । आहार-परिमाणाच्च स्नेहो वृद्धिश्च जायते ॥ १८ ॥ जङ्गमानाञ्च सर्वेषां शरीरे पञ्चधातवः । प्रत्येकशः प्रभिद्यन्ते यैः शरीरं विचेष्टते ॥१९॥ त्वक् च मांसं तथास्थीनि मज्जा स्नायुश्च पञ्चमम् । इत्येतदिह सङ्घातं शरीरे पृथिवीमयम् ॥ २० ॥ तेजो ह्यग्निस्तथाक्रोधश्चक्षु-रूष्मा तथैव च । अग्निर्जरयते यच्च पञ्चाग्नेयाः शरीरिणः ॥ २१ ॥ श्रोत्रं घ्राणं तथास्यञ्च हृदयं कोष्ठमेव च । आकाशात् प्राणिना-मेते शरीरे पञ्च धातवः ॥ २२ ॥ श्लेष्मा पित्तमथ स्वेदो वसा शोणितमेव च । इत्यापः पञ्चधा देहे भवन्ति प्राणिनां सदा ॥२३॥ प्राणात्प्राणयते प्राणी व्यानाद्व्यायच्छते तथा । गच्छत्यपानोऽध-श्चैव समानो हृद्यवस्थितः ॥ २४ ॥ उदानादुच्छ्वसिति च प्रतिभेदाच्च भाषते । इत्येते वायवः पञ्च चेष्टयन्तीह देहिनम् ॥ २५ ॥ भूमे-र्गन्धगुणान् वेत्ति रसञ्चाद्भ्यः शरीरवान् । ज्योतिषा चक्षुषा रूपं स्पर्शं वेत्ति च वायुना ॥ २६ ॥ गन्धः स्पर्शो रसो रूपं शब्दश्चात्र गुणाः स्मृताः । तस्य गन्धस्य वक्ष्यामि विस्तराभिहितान् गुणान् ॥ २७ ॥ इष्टश्चानिष्टगन्धश्च मधुरः कटुरेव च । निर्हारी संहतः स्निग्धो रूक्षो विषद एव वा ॥ २८ ॥ एवं नवविधो ज्ञेयः पार्थिवो गन्धविस्तरः । ज्योतिः पश्यति चक्षुर्भ्यां स्पर्शं वेत्ति च वायुना ॥२९ शब्दः स्पर्शश्च रूपञ्च रसश्चापि गुणाः स्मृताः । रसज्ञानन्तु वक्ष्यामि तन्मे निगदतः शृणु ॥ ३० ॥ रसो बहुविधः प्रोक्त ऋषिभिः प्रथितात्मभिः । मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा ॥ ३१ ॥ एष षड्विधविस्तारो रसो वारिमयः स्मृतः । शब्दः स्पर्शश्च रूपञ्च त्रिगुणं ज्योतिरुच्यते ॥ ३२ ॥ ज्योतिः पश्यति रूपाणि रूपञ्च बहुधा स्मृतम् । ह्रस्वो दीर्घस्तथा स्थूलश्चतुरस्रोऽनुवृत्त-

वान् ॥ ३३ ॥ शुक्लः कृष्णस्तथा रक्तो नीलः पीतोऽरुणस्तथा । कठिनश्चिक्कण स्लक्ष्णः पिच्छिलो मृदुदारुणः ॥ ३४ ॥ एवं षोड़श-विस्तारो ज्योतीरूपगुणः स्मृतः । वायव्यस्तु गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः ॥ ३५ ॥ उष्णः शीतः सुखो दुःखः स्निग्धो विशद एव च । तथा खरो मृदुः श्लक्ष्णो लघुर्गुरुतरोऽपि च ॥ ३६ ॥ शब्दस्पर्शौ च विज्ञेयौ द्विगुणो वायुरित्युत । एवमेकादशविधो वायव्यो गुण उच्यते ॥ ३७ ॥ तत्रैकगुणमाकाशं शब्द इत्येव तत् स्मृतम् । तस्य शब्दस्य वच्यामि विस्तरं विविधात्मकम् ॥ ३८ ॥ षड़्ज ऋषभगान्धारौ मध्यमो धैवतस्तथा । पञ्चमश्चापि विज्ञेय-स्तथा चापि निषादवान् ॥ ३९ ॥ एष सप्तविधः प्रोक्तो गुण आकाशसम्भवः । ऐश्वर्य्येण तु सर्व्वत्र स्थितोऽपि पटहादिषु ॥४०॥ मृदङ्गभेरीशङ्खानां स्तनयित्नो रथस्य च । यः कश्चिच्छ्रूयते शब्दः प्राणिनोऽप्राणिनोऽपि वा । एतेषामेव सर्व्वेषां विषये संप्रकीर्त्तितः ॥ ४१ ॥ एवं बहुविधाकारः शब्द आकाशसम्भवः । आकाशजं शब्दमाहुरेभिर्वायुगुणैः सह ॥ ४२ ॥ अव्याहतैश्चेतयते न वेत्ति विषमस्थितैः । आप्याय्यन्ते च ते नित्यं धातवस्तैस्तु धातुभिः ॥४३॥ आपोऽग्निर्म्मरुतश्चैव नित्यं जाग्रति देहिषु । मूलमेते शरीरस्य व्याप्य प्राणानिह स्थिताः ॥ ४४ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि भृगुभरद्वाजसंवादे चतुरशीत्यधिकशततोऽध्यायः ॥ १८४ ॥

---

भरद्वाज उवाच । पार्थिवं धातुमासाद्य शारीरोऽग्निः कथं प्रभो । अवकाशविशेषेण कथं वर्त्तयतेऽनिलः ॥ १ ॥

भृगुरुवाच । वायोर्गतिमहं ब्रह्मन् कथयिष्यामि तेऽनघ । प्राणिनामनिलो देहान् यथा चेष्टयते बली ॥ २ ॥ श्रितो मूर्द्धान-

अग्निस्तु शरीरं परिपालयन्। प्राणो मूर्द्धनि चाग्नौ च वर्त्तमानो विचेष्टते ॥ ३ ॥ स जन्तुः सर्वभूतात्मा पुरुषः सः सनातनः। मनो बुद्धिरहङ्कारो भूतानि विषयाश्च सः। एवंत्विह स सर्वत्र प्राणेन परिचाल्यते ॥ ४ ॥ पृष्ठतस्तु समानेन स्वां स्वां गतिमुपाश्रितः। वस्तिमूलं गुदञ्चैव पावकं समुपाश्रितः ॥ ५ ॥ वहन् मूत्रं पुरीषञ्चाप्यपानः परिवर्त्तते। प्रयत्ने कर्म्मणि बले य एकस्त्रिषु वर्त्तते ॥ ६ ॥ उदान इति तं प्राहुरध्यात्मविदुषो जनाः। सन्धिष्वपि च सर्वेषु सन्निविष्टस्तथानिलः ॥ ७ ॥ शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते ॥ ८ ॥ धातुष्वग्निस्तु विततः समानेन समीरितः। रसान् धातूंश्च दोषांश्च वर्त्तयन्नवतिष्ठते ॥ ९ ॥ अपानप्राणयोर्मध्ये प्राणापानसमाहित। समन्वितस्त्वधिष्ठानं सम्यक् पचति पावकः ॥ १० ॥ आस्यं हि पायुपर्य्यन्तमन्ते स्याद्गुदसंज्ञितम्। स्रोतस्तस्मात् प्रजायन्ते सर्वस्रोतांसि देहिनाम् ॥ ११ ॥ प्राणानां सन्निपाताच्च सन्निपातः प्रजायते। ऊष्मा चाग्निरिति ज्ञेयो योऽन्नं पचति देहिनाम् ॥१२॥ अग्निवेगवहः प्राणो गुदान्ते प्रतिहन्यते। स ऊर्द्ध्वमागम्य पुनः समुत्क्षिपति पावकम् ॥ १३ ॥ पक्वाशयस्त्वधो नाभ्या ऊर्द्ध्वमामाशयः स्थितः। नाभिमध्ये शरीरस्य सर्वे प्राणाश्च संस्थिताः ॥ १४ ॥ प्रस्थिता हृदयात् सर्वे तिर्य्यगूर्द्ध्वमधस्तथा। वहन्त्यन्नरसान्नाड्यो दश प्राणप्रचोदिताः ॥ १५ ॥ एष मार्गोऽथ योगानां येन गच्छन्ति तत्पदम्। जितक्लमाः समा धीरा मूर्द्धन्यात्मानमादधन् ॥ १६ ॥ एवं सर्वेषु विहितः प्राणापानेषु देहिनाम्। तस्मिन् समिध्यते नित्यमग्निः स्थाल्यामिवाहितः ॥ १७ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि भृगुभरद्वाजसंवादे
पञ्चाशीत्यधिकशतोऽध्यायः ॥ १८५ ॥

भरद्वाज उवाच । यदि प्राणयते वायुर्वायुरेव विचेष्टते । श्वसित्याभाषते चैव तस्माज्जीवो निरर्थकः ॥ १ ॥ यद्युष्मभाव आग्नेयो वह्निना पच्यते यदि । अग्निर्जरयते चैव तस्माज्जीवो निरर्थकः ॥ २ ॥ जन्तोः प्रमीयमाणस्य जीवो नैवोपलभ्यते । वायुरेव जहात्येनमुष्मभावश्च नश्यति ॥ ३ ॥ यदि वायुमयो जीवः संश्लेषो यदि वायुना । वायुमण्डलवद्दृश्यो गच्छेत् सह मरुद्गणैः ॥ ४ ॥ संश्लेषो यदि वातेन यदि तस्मात् प्रणश्यति । महार्णव-विमुक्तत्वादन्यत् सलिलभाजनम् ॥ ५ ॥ कूपे वा सलिलं दद्यात् प्रदीपं वा हुताशने । क्षिप्रं प्रविश्य नश्येत यथा नश्यत्यसौ तथा ॥ ६ ॥ पञ्चधारणके ह्यस्मिन् शरीरे जीवितं कुतः । तेषामन्य-तराभावाच्चतुर्णां नास्ति संग्रहः ॥ ७ ॥ नश्यन्त्यापो ह्यनाहारा-द्वायुरुच्छ्वासनिग्रहात् । नश्यते कोष्ठभेदात् खमग्निर्नश्यत्यभोज-नात् ॥ ८ ॥ व्याधिव्रणपरिक्लेशैर्मेदिनी चैव शीर्य्यते । पीड़ितेऽन्य-तरे ह्येषां सङ्घातो याति पञ्चधा ॥९॥ तस्मिन् पञ्चत्वमापन्ने जीवः किमनुधावति । किं वेदयति वा जीवः किं शृणोति ब्रवीति च ॥ १० ॥ एषा गौः परलोकस्थं तारयिष्यति मामिति । यो दत्त्वा म्रियते जन्तुः सा गौः कं तारयिष्यति ॥ ११ ॥ गौश्च प्रतिग्रहीता च दाता चैव समं यदा । इहैव विलयं यान्ति कुतस्तेषां समागमः ॥ १२ ॥ विहगैरुपभुक्तस्य शैलाग्रात् पतितस्य च । अग्निना चोप-युक्तस्य कुतः संजीवनं पुनः ॥ १३ ॥ छिन्नस्य यदि वृक्षस्य न मूलं प्रतिरोहति । बीजान्यस्य प्ररोहन्ते मृतः क्व पुनरेष्यति ॥१५॥ बीजमात्रं पुरा सृष्टं यदेतत् परिवर्त्तते । मृता मृताः प्रणश्यन्ति बीजाद्बीजं प्रवर्त्तते ॥ १५ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि भृगुभरद्वाजसंवादे षड्शीत्यधिकशततोऽध्यायः ॥ १८६ ॥

---

भृगुरुवाच। न प्रणाशोऽस्ति जीवस्य दत्तस्य च कृतस्य च। याति देहान्तरं प्राणी शरीरन्तु विशीर्य्यते ॥१॥ न शरीराश्रितो जीवस्तस्मिन्नष्टे प्रणश्यति। समिधामिव दग्धानां यथाग्निर्दृश्यते तथा ॥ २ ॥

भरद्वाज उवाच। अग्नेर्यथा तथा तस्य यदि नाशो न विद्यते। इन्धनस्योपयोगान्ते स चाग्निर्नोपलभ्यते ॥३॥ नश्यतीत्येव जानामि शान्तमग्निमनिन्धनम्। गतिर्यस्य प्रमाणं वा संस्थानं वा न विद्यते ॥ ४ ॥

भृगुरुवाच। समिधामुपयोगान्ते यथाग्निर्नोपलभ्यते। आकाशानुगतत्वाद्धि दुर्ग्राह्यो हि निराश्रयः ॥ ५ ॥ तथा शरीरसंत्यागे जीवो ह्याकाशवत् स्थितः। न गृह्यते सुसूक्ष्मत्वात् यथा ज्योतिर्न संशयः ॥ ६ ॥ प्राणान् धारयते ह्यग्निः स जीव उपधार्य्यताम्। वायुसन्धारणो ह्यग्निर्नश्यत्युच्छ्वासनिग्रहात् ॥ ७ ॥ तस्मिन्नष्टे शरीराग्नौ ततो देहमचेतनम्। पतितं याति भूमित्वमयनं तस्य हि क्षितिः ॥८॥ जङ्गमानां हि सर्वेषां स्थावराणां तथैव च। आकाशं पवनोऽन्वेति ज्योतिस्तमनुगच्छति ॥ ९ ॥ तेषां त्रयाणामेकत्वाद्द्वयं भूमौ प्रतिष्ठितम् ॥ १० ॥ यत्र खं तत्र पवनस्तत्राग्निर्यत्र मारुतः। अमूर्त्तयस्ते विज्ञेया मूर्त्तिमन्तः शरीरिणाम् ॥ ११ ॥

भरद्वाज उवाच। यद्यग्निमारुतौ भूमिः खमापश्च शरीरिषु। जीवः किं लक्षणस्तत्रेत्येतदाचक्ष्व मेऽनघ ॥ १२ ॥ पञ्चात्मके पञ्चरतौ पञ्चविज्ञानचेतने। शरीरे प्राणिनां जीवं वेत्तुमिच्छामि यादृशम् ॥ १३ ॥ मांसशोणितसङ्घाते मेदःस्नाय्वस्थिसञ्चये। भिद्यमाने शरीरे तु जीवो नैवोपलभ्यते ॥ १४ ॥ यद्यजीवं शरीरन्तु पञ्चभूतसमन्वितम्। शारीरे मानसे दुःखे कस्तां वेदयते रुजम् ॥ १५ ॥ शृणोति कथितं जीवः कर्णाभ्यां न शृणोति तत्। महर्षे

मनसि व्यग्रे तस्माज्जीवो निरर्थकः ॥१६॥ सर्वं पश्यति यद्दृश्यं मनोयुक्तेन चक्षुषा । मनसि व्याकुले चक्षुः पश्यन्नपि न पश्यति ॥ १७ ॥ न पश्यति न चाघ्राति न शृणोति न भाषते । न च स्पर्शरसौ वेत्ति निद्रावशगतः पुनः ॥ १८ ॥ हृष्यति क्रुध्यते कोऽत्र शोचत्युद्विजते च कः । इच्छति ध्यायति द्वेष्टि वाचमीरयते च कः ॥ १९ ॥

भृगुरुवाच । न पञ्चसाधारणमत्र किञ्चिच्छरीरमेको वहते-ऽन्तरात्मा । स वेत्ति गन्धांश्च रसान् श्रुतीश्च स्पर्शञ्च रूपञ्च गुणाश्च येऽन्ये ॥ २० ॥ पञ्चात्मके पञ्चगुणप्रदर्शी स सर्वगात्रानुगतोऽन्तरात्मा । स वेत्ति दुःखानि सुखानि चात्र तद्विप्रयोगात्तु न वेत्ति देहः ॥ २१ ॥ यदा न रूपं न स्पर्शो नोष्मभावश्च पावके । तदा शान्ते शरीराग्नौ देहत्यागेन नश्यति ॥ २२ ॥ आपोमयमिदं सर्वमापो मूर्त्तिः शरीरिणाम् । तत्रात्मा मानसो ब्रह्मा सर्वभूतेषु लोककृत् ॥ २३ ॥ आत्मा क्षेत्रज्ञ इत्युक्तः संयुक्तः प्राकृतैर्गुणैः । तैरेव तु विनिर्मुक्तः परमात्मेत्युदाहृतः ॥ २४ ॥ आत्मानं त्वं विजानीहि सर्वलोकहितात्मकम् । तस्मिन् यः संश्रितो देहे ह्यब्बिन्दुरिव पुष्करे ॥ २५ ॥ क्षेत्रज्ञं तं विजानीहि नित्यं लोक-हितात्मकम् । तमो रजश्च सत्त्वञ्च विद्धि जीवगुणानिमान् ॥२६॥ सचेतनं जीवगुणं वदन्ति स चेष्टते चेष्टयते च सर्वम् । अतः परं क्षेत्रविदो वदन्ति प्रावर्त्तयत् यो भुवनानि सप्त ॥ २७ ॥ न जीव-नाशोऽस्ति हि देहभेदे मिथ्यैतदाहुर्म्मृत इत्यबुद्धाः । जीवस्तु देहा-न्तरितः प्रयाति दशार्द्धता तस्य शरीरभेदः ॥ २८ ॥ एवं सर्वेषु भूतेषु गूढ़श्चरति संवृतः । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया तत्त्व-दर्शिभिः ॥ २९ ॥ तं पूर्वापररात्रेषु युञ्जानः सततं बुधः । लघ्वा-हारो विशुद्धात्मा पश्यत्यात्मानमात्मनि ॥ ३० ॥ चित्तस्य हि प्रसादेन हित्वा कर्म्म शुभाशुभम् । प्रसन्नात्मात्मनि स्थित्वा सुख-

चानन्त्यमश्नुते॥ २१॥ मानसोऽग्निः शरीरेषु जीव इत्यभिधीयते।
सृष्टिः प्रजापतेरेषा भूताध्यात्मविनिश्चये॥ २२॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि भृगुभरद्वाजसंवादे
सप्ताशीत्यधिकशतोऽध्यायः॥ १८७॥

---

भृगुरुवाच। असृजद्ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतीन्।
आत्मतेजोऽभिनिर्वृत्तान् भास्कराग्निसमप्रभान्॥ १॥ ततः सत्यञ्च
धर्मञ्च तपो ब्रह्म च शाश्वतम्। आचारञ्चैव शौचञ्च स्वर्गाय विदधे
प्रभुः॥ २॥ देवदानवगन्धर्वा दैत्यासुरमहोरगाः। यक्षराक्षस-
नागाश्च पिशाचा मनुजास्तथा॥ ३॥ ब्राह्मणाः क्षत्रिया वैश्याः
शूद्राश्च द्विजसत्तम। ये चान्ये भूतसङ्घानां वर्णास्तांश्चापि निर्ममे
॥ ४॥ ब्राह्मणानां सितो वर्णः क्षत्रियानान्तु लोहितः। वैश्यानां
पीतको वर्णः शूद्राणामसितस्तथा॥ ५॥

भरद्वाज उवाच। चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभिद्यते।
सर्वेषां खलु वर्णानां दृश्यते वर्णसङ्करः॥ ६॥ कामः क्रोधो भयं
लोभः शोकश्चिन्ता क्षुधा श्रमः। सर्वेषां न प्रभवति कस्माद्वर्णो
विभज्यते॥ ७॥ स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितम्।
तनुः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते॥ ८॥ जङ्गमानामसं-
ख्येयाः स्थावराणाञ्च जातयः। तेषां विविधवर्णानां कुतो वर्ण-
विनिश्चयः॥ ९॥

भृगुरुवाच। न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्॥ १०॥ कामभोगप्रिया-
स्तीक्ष्णाः क्रोधनाः प्रियसाहसाः। त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः
क्षत्रतां गताः॥ ११॥ गोभ्यो वृत्तिं समास्थाय पीताः कृष्युप-
जीविनः। स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः॥ १२॥

हिंसानृतप्रिया लुब्धाः सर्वकर्मोपजीविनः । कृष्णाः शौचपरि-
भ्रष्टास्ते द्विजाः शूद्रतां गताः ॥ १३ ॥ इत्येतैः कर्मभिर्व्यस्ता द्विजा
वर्णान्तरं गताः । धर्मो यज्ञक्रिया तेषां नित्यं नप्रतिषिध्यते ॥१४॥
इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती । विहिता ब्रह्मणा पूर्वं
लोभात्त्वज्ञानतां गताः ॥ १५ ॥ ब्राह्मणा ब्रह्मतन्त्रस्थास्तपस्तेषां
न नश्यति । ब्रह्म धारयतां नित्यं व्रतानि नियमांस्तथा ॥ १६ ॥
ब्रह्म चैव परं सृष्टं ये न जानन्ति तेऽद्विजाः । तेषां बहुविधा-
स्त्वन्यास्तत्र तत्र हि जातयः ॥ १७ ॥ पिशाचा राक्षसा प्रेता
विविधा म्लेच्छजातयः । प्रनष्टज्ञानविज्ञानाः स्वच्छन्दाचारचेष्टिताः
॥ १८ ॥ प्रजा ब्राह्मणसंस्काराः स्वकर्मकृतनिश्चयाः । ऋषिभिः
स्वेन तपसा सृजन्ते चापरे परैः ॥ १९ ॥ आदिदेवसमुद्भूता ब्रह्म-
मूलाक्षयाव्यया । या सृष्टिर्मानसी नाम धर्मतन्त्रपरायणा ॥२०॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि भृगुभरद्वाजसंवादे
अष्टाशीत्यधिकशतोऽध्यायः ॥ १८८ ॥

---

भरद्वाज उवाच । ब्राह्मणः केन भवति क्षत्रियो वा द्विजो-
त्तम । वैश्यः शूद्रश्च विप्रर्षे तद्ब्रूहि वदतां वर ॥ १ ॥

भृगुरुवाच । जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः ।
वेदाध्ययनसम्पन्नः षट्सु कर्मस्ववस्थितः ॥ २ ॥ शौचाचारस्थितः
सम्यग्विघसाशी गुरुप्रियः । नित्यव्रती सत्यपरः स वै ब्राह्मण
उच्यते ॥ ३ ॥ सत्यं दानमथाद्रोह आनृशंस्यं त्रपा घृणा । तपश्च
दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥ ४ ॥ क्षत्रजं सेवते कर्म वेदा-
ध्ययनसङ्गतः । दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते ॥ ५ ॥
विशत्याशु पशुभ्यश्च कृष्यादानरतिः शुचिः । वेदाध्ययनसम्पन्नः
स वैश्य इति संज्ञितः ॥६॥ सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः ।

त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः॥ ७॥ शूद्रे चैतद्भवे-
ल्लच्यं द्विजे तच्च न विद्यते। न वै शूद्रो भवेच्छूद्रो ब्राह्मणो ब्राह्मणो
न च॥ ८॥ सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः। एतत्
पवित्रं ज्ञानानां तथा चैवात्मसंयमः॥ ९॥ वार्य्यौ सर्वात्मना तौ
हि श्रेयोघातार्थमुत्थितौ॥ १०॥ नित्यं क्रोधाच्छ्रियं रक्षेत्तपो
रक्षेच्च मत्सरात्। विद्यां मानापमानाभ्यामात्मानन्तु प्रमादतः॥११॥
यस्य सर्वे समारम्भा निराशीर्बन्धना द्विज। त्यागे यस्य हुतं सर्वं
स त्यागी स च बुद्धिमान्॥ १२॥ अहिंस्रः सर्वभूतानां मैत्रायण-
गतश्चरेत्। परिग्रहान् परित्यज्य भवेद्बुद्ध्या जितेन्द्रियः। अशोकं
स्थानमातिष्ठेदिह चामुत्र चाभयम्॥ १३॥ तपोनित्येन दान्तेन
मुनिना संयतात्मना। अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना
॥ १४॥ इन्द्रियैर्गृह्यते यद्यत्तत्तद्व्यक्तमिति स्थितिः। अव्यक्तमिति
विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम्॥१५॥ अविस्रम्भे न गन्तव्यं विस्रम्भे
धारयेन्मनः। मनः प्राणे निगृह्णीयात् प्राणं ब्रह्मणि धारयेत्॥१६॥
निर्वेदादेव निर्वाणं न च किञ्चिद्विचिन्तयेत्। सुखं वै ब्राह्मणो
ब्रह्म निर्वेदेनाधिगच्छति॥ १७॥ शौचेन सततं युक्तः सदाचार-
समन्वितः। सानुक्रोशश्च भूतेषु तद्द्विजातिषु लक्षणम्॥ १८॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि भृगुभरद्वाजसंवादे
एकोननवत्यधिकशतोऽध्यायः॥ १८९॥

---

भृगुरुवाच। सत्यं ब्रह्म तपःसत्यं सत्यं विसृजते प्रजाः।
सत्येन धार्य्यते लोकः स्वर्गं सत्येन गच्छति॥ १॥ अनृतं तमसो
रूपं तमसा नीयते ह्यधः। तमोग्रस्ता न पश्यन्ति प्रकाशन्तमसा-
वृताः॥ २॥ स्वर्गः प्रकाश इत्याहुर्नरकं तम एव च। सत्यानृतं
तदुभयं प्राप्यते जगतीचरैः॥ ३॥ अत्राप्येवंविधा लोके वृत्तिः

सत्यानृते भवेत्। धर्माधर्मौ प्रकाशश्च तमो दुःखं सुखं तथा ॥४॥ तत्र यत् सत्यं स धर्मो यो धर्मः स प्रकाशो यः प्रकाशस्तत् सुखमिति। तत्र यदनृतं सोऽधर्मो योऽधर्मस्तत्तमो यत्तमस्तद्दुःखमिति ॥ ५ ॥ अत्रोच्यते शारीरैर्मानसैर्दुःखैः सुखैश्चाप्यसुखोदयैः। लोकसृष्टिं प्रपश्यन्तो न मुह्यन्ति विचक्षणाः ॥ ६ ॥ तत्र दुःखविमोक्षार्थं प्रयतेत विचक्षणः। सुखं ह्यनित्यं भूतानां इह लोके परत्र च ॥ ७ ॥ राहुग्रस्तस्य सोमस्य यथा ज्योत्स्ना न भासते। तथा तमोऽभिभूतानां भूतानां नश्यते सुखम् ॥ ८ ॥ तत् खलु द्विविधं सुखमुच्यते शारीरं मानसञ्च। इह खल्वमुष्मिंश्च लोके वस्तुप्रवृत्तयः सुखार्थमभिधीयन्त। न ह्यतः परं त्रिवर्गफलं विशिष्टतरमस्ति स एव काम्यो गुणविशेषो धर्मार्थगुणारम्भस्तद्धेतुरस्योत्पत्तिः सुखप्रयोजनार्थ आरम्भः ॥ ९ ॥

भरद्वाज उवाच। यदेतद्भवता विहितं सुखानां परमा स्थितिरिति न तदुपलक्षीमो न ह्येषामृषीणां महति स्थितानामप्राप्य एव काम्यो गुणविशेषो न चैनमभिलषन्ति च तपसि श्रूयते त्रिलोककृद्ब्रह्मा प्रभुरेकाकी तिष्ठति ब्रह्मचारी न कामसुखेष्वात्मानमवदधाति अपि च भगवान् विश्वेश्वर उमापतिः काममभिवर्त्तमानमनङ्गत्वेन शममनयत्। तस्माद्ब्रूमो न तु महात्मभिरयं प्रतिगृहीतो न त्वेष तावद्विशिष्टो गुणविशेष इति नैतद्भगवतः। प्रत्येमि भगवता तूक्तं सुखान्न परमस्तीति लोकप्रवादो हि द्विविधः फलोदयः। सुकृतात् सुखमवाप्यते दुष्कृताद्दुःखमिति ॥ १० ॥

भृगुरुवाच। अत्रोच्यते अनृतात् खलु तमः प्रादुर्भूतं ततस्तमोग्रस्ता अधर्ममेवानुवर्त्तन्ते न धर्मं क्रोधलोभहिंसानृतादिभिरवच्छन्नाः। न खल्वस्मिंल्लोके नामुत्र सुखमाप्नुवन्ति विविधव्याधिरुजोपतापैरवकीर्य्यन्ते। वधबन्धनपरिक्लेशादिभिश्च क्षुत्पिपासाश्रमकृतैरुपतापैरुपतप्यन्ते वर्षवातात्युष्णातिशीतकृतैश्च

प्रतिभये शारीरैर्दुःखैरुपतप्यन्ते। वन्धधनविनाशविप्रयोगकृतैश्च मानसः शोकैरभिभूयन्ते जरामृत्युकृतैश्चान्यैरिति॥ ११॥ यस्त्वेतैः शारीरमानसैर्दुःखैन संस्पृश्यते स सुखं वेद॥ १२॥ न चैते दोषाः स्वर्गे प्रादुर्भवन्ति तत्र खलु भवति सुसुखः पवनः स्वर्गे गन्धश्च सुरभिस्तथा। क्षुत्पिपासा श्रमो नास्ति न जरा न च पापकम॥ १३॥ नित्यमेव सुखं स्वर्गे सुखं दुःखमिहोभयम्। नरके दुःखमेवाहुः सुखं तत् परमं पदम्॥ १४॥ पृथिवी सर्वभूतानां जनित्री तद्विधाः स्त्रियः। पुमान् प्रजापतिस्तत्र शुक्रं तेजोमयं विदुः॥ १५॥ इत्येतल्लोकनिर्माणं ब्रह्मणा विहितं पुरा। प्रजाः समनुवर्त्तन्ते स्वैः स्वैः कर्मभिरावृताः॥ १६॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि भृगुभरद्वाजसंवादे नवत्यधिकशततोऽध्यायः॥ १९०॥

---

भरद्वाज उवाच। दानस्य किं फलं प्राहुर्धर्मस्य चरितस्य च। तपसश्च सुतप्तस्य स्वाध्यायस्य हुतस्य वा॥ १॥

भृगुरुवाच। हुतेन शाम्यते पापं स्वाध्यायैः शान्तिरुत्तमा। दानेन भोगानित्याहुस्तपसा स्वर्गमाप्नुयात्॥ २॥ दानन्तु द्विविधं प्राहुः परत्रार्थमिहैव च। सद्भ्यो यद्दीयते किञ्चित्तत् परत्रोपतिष्ठते॥ ३॥ असद्भ्यो दीयते यत्तु तद्दानमिह भुज्यते। यादृशं दीयते दानं तादृशं फलमश्नुते॥ ४॥

भरद्वाज उवाच। किं कस्य धर्माचरणं किम्वा धर्मस्य लक्षणम्। धर्म्मः कतिविधो वापि तद्भवान् वक्तुमर्हति॥ ५॥

भृगुरुवाच। स्वधर्माचरणे युक्ता ये भवन्ति मनीषिणः। तेषां स्वर्गफलावाप्तिर्योऽन्यथा स विमुह्यते॥ ६॥

भरद्वाज उवाच । यदेतच्चातुराश्रम्यं ब्रह्मणाविहितं पुरा । तेषां स्वे स्वे समाचारास्तान्मे वक्तुमिहार्हसि ॥ ७ ॥

भृगुरुवाच । पूर्वमेव भगवता ब्रह्मणा लोकहितमनुतिष्ठता धर्मसंरक्षणार्थमाश्रमाश्चत्वारोऽभिनिर्द्दिष्टा । तत्र गुरुकुलवास-मेव प्रथममाश्रममुदाहरन्ति । सम्यगत्र शौचसंस्कारनियमव्रत-विनियतात्मा उभेसन्ध्ये भास्कराग्निदैवतान्युपस्थाय विहाय तन्द्रा-लस्ये गुरोरभिवादनवेदाभ्यासश्रवणपवित्रीकृतान्तरात्मात्रिषवण-मुपस्पृश्य ब्रह्मचर्य्याग्निपरिचरणगुरुशुश्रूषानित्यभिक्षाभैक्षादिसर्व-निवेदितान्तरात्मा गुरुवचननिर्द्देशानुष्ठानाप्रतिकूलो गुरुप्रसाद-लब्धस्वाध्यायतत्परः स्यात् ॥ ८ ॥ भवति चात्र श्लोकः । गुरुं यस्तु समाराध्य द्विजो वेदमवाप्नुयात् । तस्य स्वर्गफलावाप्तिः सिध्यते चास्यमानसमिति ॥ ९ ॥ गार्हस्थ्यं खलु द्वितीयमाश्रमं वदन्ति तस्य समुदाचारलक्षणं सर्वमनुव्याख्यास्यामः । समावृत्तानां सदा-चाराणां सहधर्मचर्य्याफलार्थिनां गृहाश्रमो विधीयते । धर्मार्थ-कामावाप्तिर्ह्यत्र त्रिवर्गसाधनमपेक्ष्यागर्हितेन कर्म्मणा धनान्यादाय स्वाध्यायोपलब्धप्रकर्षेण वा ब्रह्मर्षिनिर्म्मितेन वा अद्रिसारगतेन वा हव्यकव्यनियमाभ्यासदैवतप्रसादोपलब्धेन वा धनेन गृहस्थो गार्हस्थ्यं वर्त्तयेत् । तद्धि सर्वाश्रमाणां मूलमुदाहरन्ति । गुरुकुल निवासिनः परिव्राजका ये चान्ये सङ्कल्पितव्रतनियमधर्मानुष्ठायिन-स्तेषामप्यतएव भिक्षावलिसंविभागाः प्रवर्त्तन्ते ॥ १० ॥ वानप्रस्था-नाञ्च द्रव्योपस्कार इति प्रायशः खलु ते साधवः साधुपथ्योदनाः स्वाध्यायप्रसङ्गिनस्तीर्थाभिगमनदेशदर्शनार्थं पृथिवीं पर्य्यटन्ति । तेषांप्रत्युत्थानाभिगमनमनसूयावाक्प्रदानसुखशक्त्यासनसुखशयना-भ्यवहारसत्क्रिया चेति ॥ ११ ॥ भवति चात्र श्लोकः । अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते । स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥ १२ ॥ अपि चात्र यज्ञक्रियाभिर्देवताः प्रीयन्ते निवापेन

पितरौ विद्याभ्यासव्रतधारणेन ऋषयः अपत्योत्पादनेन प्रजापतिरिति ॥ १३ ॥ श्लोकौ चात्र भवतः । वत्सलाः सर्व्वभूतेभ्यो वाच्याः श्रोत्रसुखा गिरः । परितापोपघातश्च पारुष्यञ्चात्र गर्हितम् ॥ १४ ॥ अवज्ञानमहङ्कारो दम्भश्चैव विगर्हितः । अहिंसा सत्यमक्रोधः सर्व्वाश्रमगतं तपः ॥ १५ ॥ अपि चात्र माल्याभरणवस्त्राभ्यङ्गनित्योपभोग नृत्यगीतवादित्रश्रुतिसुखनयनाभिरामदर्शनानां प्राप्तिर्भक्ष्यभोज्यलेह्यपेयचूष्याणामभ्यवहार्य्याणां विविधानामुपभोगः स्वविहारसन्तोषकामसुखावाप्तिरिति ॥ १६ ॥ त्रिवर्गगुणनिर्वृत्तिर्यस्य नित्यं गृहाश्रमे । स सुखान्यनुभूयेह शिष्टानां गतिमाप्नुयात् ॥ १७ ॥ उञ्छवृत्तिर्गृहस्थो यः स्वधर्म्मचरणे रतः । त्यक्तकामसुखारम्भः स्वर्गस्तस्य न दुर्लभः ॥ १८ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि भृगुभरद्वाजसंवादे
एकनवत्यधिकशतोऽध्यायः ॥ १९१ ॥

---

भृगुरुवाच । वानप्रस्थाः खल्वपि धर्म्ममनुसरन्तः पुण्यानि तीर्थानि नदीप्रस्रवणानि । सुविविक्तेष्वरण्येषु मृगमहिषवराहशार्दूलवनगजाकीर्णेषु तपस्यन्तोऽनुसञ्चरन्ति त्यक्तग्राम्यवस्त्राभ्यवहारोपभोगा वन्यौषधिफलमूलपर्णपरिमितविचित्रनियताहाराः स्थानासनिनो भूमिपाषाणसिकताशर्करावालुकाभस्मशायिनः काशकुशचर्म्मवल्कलसंवृताङ्गाः केशश्मश्रुनखरोमधारिणो नियतकालोपस्पर्शना अस्कन्दितकालबलिहोमानुष्ठायिनः समित्कुशकुसुमापहारसंमार्जनलब्धविश्रामाः शीतोष्णवर्षपवनविष्टम्भविभिन्नसर्व्वत्वचो विविधनियमोपयोगचर्य्यानुष्ठानविहितपरिशुष्कमांसशोणितत्वगस्थिभूता धृतिपराः सत्त्वयोगाच्छरीराण्युद्वहन्ते ॥१॥ यस्त्वेतां नियतचर्य्यां ब्रह्मर्षिविहिताञ्चरेत् । स दहेदग्निवद्दोषान् जयेल्लोकांश्च

दुर्ज्जयान् ॥ २ ॥ परिव्राजकानां पुनराचारः । तद्यथा । त्रिषु-ष्वाग्निधनकलत्रपरिवर्हं गां सङ्गं त्यक्त्वात्मानं त्वं त्रिद्रोषा यान्ति न विराजन्ति समलोष्टाश्मकाञ्चनास्त्रिवर्गप्रवृत्तेष्वसक्तबुद्धयः । अरिमित्रोदासीनानां तुल्यदर्शनाः । स्थावरजरायुजाण्डजसंस्वेदजोद्भिज्जानां भूतानां वाङ्मनःकर्म्मभिरनभिद्रोहिणोऽनिकेताः पर्व्वतपुलिनवृक्षमूल-देवतायतनान्यनुचरन्तो वासार्थमुपेयुर्नगरं ग्रामं वा नगरे पञ्च-रात्रिका ग्रामे चैकरात्रिकाः प्रविश्य च प्राणधारणार्थं द्विजातीनां भवनान्यसंकीर्णकर्म्मणामुपतिष्ठेयुः पात्रपतितायाचितभैक्ष्याः काम-क्रोधदर्पलोभमोहकार्पण्यदम्भपरिवादाभिमानहिंसानिवृत्ता इति ॥ ३ ॥ भवन्ति चात्र श्लोकाः । अभयं सर्व्वभूतेभ्यो दत्त्वा यश्चरते मुनिः । न तस्य सर्व्वभूतेभ्यो भयमुत्पद्यते क्वचित् ॥ ४ ॥ कृत्वाग्नि-होत्रं स्वशरीरसंस्थं शारीरमग्निं स्वमुखे जुहोति । विप्रस्तु भैक्ष्योपगतैर्हविर्भिश्चिताग्निना स व्रजति हि लोकान् ॥ ५ ॥ मोक्षा-श्रमं यश्चरते यथोक्तं शुचिः सुसंकल्पितयुक्तबुद्धिः । अनिन्धनं ज्योतिरिव प्रशान्तं स ब्रह्मलोकं श्रयते द्विजातिः ॥ ६ ॥

भरद्वाज उवाच । अस्माल्लोकात् परो लोकः श्रूयते नोपलभ्यते । तमहं ज्ञातुमिच्छामि तद्भवान् वक्तुमर्हति ॥ ७ ॥

भृगुरुवाच । उत्तरे हिमवत्पार्श्वे पुण्ये सर्व्वगुणान्विते । पुण्यः क्षेम्यश्च काम्यश्च स परो लोक उच्यते ॥ ८ ॥ तत्र ह्यपाप-कर्म्माणः शुचयोऽत्यन्तनिर्म्मलाः । लोभमोहपरित्यक्ता मानवा निरु-पद्रवाः ॥ ९ ॥ स स्वर्गसदृशो देशस्तत्र ह्युक्ताः शुभा गुणाः । काले मृत्युः प्रभवति स्पृशन्ति व्याधयो न च ॥ १० ॥ न लोभः परदारेषु स्वदारनिरतो जनः । नान्योऽन्यं बध्यते तत्र द्रव्येषु च न विस्मयः । परो ह्यधर्म्मो नैवास्ति सन्देहो नापि जायते ॥ ११ ॥ कृतस्य तु फलं तत्र प्रत्यक्षमुपलभ्यते । पानासनाशनोपेताः प्रासादभवना-श्रयाः ॥ १२ ॥ सर्व्वकामैर्वृताः केचिद्धेमाभरणभूषिताः । प्राणु-

धारणमात्रन्तु केषाञ्चिदुपपद्यते ॥ १३ ॥ श्रमेण महता केचित् कुर्वन्ति प्राणधारणाम्। इह धर्मपराः केचित् केचिन्नैकृतिका नराः सुखिता दुःखिताः केचिन्निर्धना धनिनोऽपरे ॥ १४ ॥ इह श्रमभयं मोहः क्षुधा तीव्रा च जायते। लोभश्चार्थकृतो नृणां येन मुह्यन्ति पण्डिताः ॥ १५ ॥ इह वार्त्ता बहुविधा धर्माधर्मस्य कारिणः। यस्तद्वेदोभयं प्राज्ञः पाप्मना न स लिप्यते ॥ १६ ॥ सोपधं निकृतिः स्तेयं परिवादो ह्यसूयिता। परोपघातो हिंसा च पैशुन्यमनृतं तथा ॥ १७ ॥ एतानासेवते यस्तु तपस्तस्य प्रहीयते। यस्त्वेतान्नाचरेद्विद्वान् तपस्तस्य विवर्द्धते ॥ १८ ॥ इह चिन्ता बहुविधा धर्माधर्मस्य कर्मणः। कर्मभूमिरियं लोके इह कृत्वा शुभाशुभम्। शुभैः शुभमवाप्नोति तथाशुभमथान्यथा ॥ १९ ॥ इह प्रजापतिः पूर्वं देवाः सर्षिगणास्तथा। इष्ट्वेष्टतपसः पूता ब्रह्मलोकमुपाश्रिताः ॥ २० ॥ उत्तरः पृथिवीभागः सर्वपुण्यतमः शुभः। इहस्थास्तत्र जायन्ते ये वै पुण्यकृतो जनाः ॥ २१ ॥ यदि कल्मारमृच्छन्ति तिर्य्यग्योनिषु चापरे। क्षीणायुषस्तथा चान्ये नश्यन्ति पृथिवीतले ॥ २२ ॥ अन्योऽन्यभक्षणासक्ता लोभमोहसमन्विताः। इहैव परिवर्त्तन्ते न ते यान्त्युत्तरां दिशम् ॥ २३ ॥ ये गुरून् पर्य्युपासन्ते नियता ब्रह्मचारिणः। पन्थानं सर्वलोकानां विजानन्ति मनीषिणः ॥२४॥ इत्युक्तोऽयं मया धर्मः सङ्क्षिप्तो ब्रह्मनिर्मितः। धर्माधर्मौ हि लोकस्य यो वै वेत्ति स बुद्धिमान् ॥२५॥

भीष्म उवाच। इत्युक्तो भृगुणा राजन् भरद्वाजः प्रतापवान्। भृगुं परमधर्मात्मा विस्मितः प्रत्यपूजयत् ॥ २६ ॥ एष ते प्रभवो राजन् जगतः सम्प्रकीर्त्तितः। निखिलेन महाप्राज्ञ किम्भूयः श्रोतुमिच्छसि ॥ २७ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि भृगुभरद्वाजसंवादे द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

युधिष्ठिर उवाच। आचारस्य विधिं तात प्रोच्यमानं त्वयानघ। श्रोतुमिच्छामि धर्मज्ञ सर्वज्ञो ह्यसि मे मतः ॥ १ ॥

भीष्म उवाच। दुराचारा दुर्व्विचेष्टा दुष्प्रज्ञाः प्रियसाहसाः। असन्तस्त्विति विख्याताः सन्तश्चाचारलक्षणाः ॥ २ ॥ पुरीषं यदि वा मूत्रं ये न कुर्वन्ति मानवाः। राजमार्गे गवां मध्ये धान्यमध्ये च ते शुभाः ॥ ३ ॥ शौचमावश्यकं कृत्वा देवतानाञ्च तर्पणम्। धर्ममाहुर्मनुष्याणामुपस्पृश्य नदीं भवेत् ॥ ४ ॥ सूर्य्यं सदोपतिष्ठेत न च सूर्य्योदये स्वपेत्। सायं प्रातर्ज्जपेत् सन्ध्यां तिष्ठन् पूर्वां तथेतराम् ॥ ५ ॥ पञ्चार्द्रो भोजनं भुञ्ज्यात् प्राङ्मुखो मौनमास्थितः। न निन्द्यादन्नभक्ष्यांश्च स्वादु स्वादु च भक्षयेत् ॥ ६ ॥ आर्द्रपाणिः समुत्तिष्ठेत् नार्द्रपादः स्वपेन्निशि। देवर्षिर्नारदः प्राह एतदाचारलक्षणम् ॥ ७ ॥ शुचिं देशमनड्वाहं देवं गोष्ठञ्चतुष्पथम्। ब्राह्मणं धार्मिकं चैत्यं नित्यं कुर्य्यात् प्रदक्षिणम् ॥ ८ ॥ अतिथीनाञ्च सर्वेषां प्रेष्याणां स्वजनस्य च। सामान्यं भोजनं भृत्यैः पुरुषस्य प्रशस्यते ॥ ९ ॥ सायं प्रातर्मनुष्याणामशनं देवनिर्मितम्। नान्तरा भोजनं दृष्टमुपवासी तथा भवेत् ॥ १० ॥ होमकाले तथा जुह्वदृतुकाले तथा व्रजन्। अनन्यस्त्रीजनः प्राज्ञो ब्रह्मचारी तथा भवेत् ॥ ११ ॥ अमृतं ब्राह्मणोच्छिष्टं जनन्या हृदयं कृतम्। तज्जनाः पर्य्युपासन्ते सत्यं सन्तः समासते ॥ १२ ॥ लोष्टमर्द्दी तृणच्छेदी नखखादी तु यो नरः। नित्योच्छिष्टः सङ्कुसुको नेहायुर्विन्दते महत् ॥ १३ ॥ यजुषा संस्कृतं मांसं निवृत्तो मांसभक्षणात्। न भक्षयेद्वृथामांसं पृष्ठमांसञ्च वर्ज्जयेत् ॥ १४ ॥ स्वदेशे परदेशे वा अतिथिं नोपवासयेत्। काम्यकर्मफलं लब्ध्वा गुरूणामुपपादयेत् ॥ १५ ॥ गुरुभ्य आसनं देयं कर्त्तव्यञ्चाभिवादनम्। गुरूनभ्यर्च्य युज्यन्ते आयुषा यशसा श्रिया ॥ १६ ॥ नेक्षेतादित्य-

मुद्यन्तं न च नग्नां परस्त्रियम्। मैथुनं सततं धर्म्यं गुह्ये चैव समाचरेत् ॥ १७ ॥ तीर्थानां हृदयं तीर्थं शुचीनां हृदयं शुचिः। सर्वमार्य्यकृतं चौच्यं बालसंस्पर्शनानि च ॥ १८ ॥ दर्शने दर्शने नित्यं सुखप्रश्नमुदाहरेत्। सायं प्रातश्च विप्राणां प्रदिष्टमभिवादनम् ॥ १९ ॥ देवागारे गवांमध्ये ब्राह्मणानां क्रियापथे। स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ॥ २० ॥ सायं प्रातश्च विप्राणां पूजनञ्च यथाविधि। पण्यानां शोभते पण्यं कृषीणां वाद्यते कृषिः। बहुकारञ्च शस्यानां वाह्ये वाहे गवां तथा ॥ २१ ॥ सम्पन्नं भोजने नित्यं पानीये तर्पणं तथा। सुशृतं पायसे ब्रूयाद्यवाग्वां कृषरे तथा ॥ २२ ॥ श्मश्रुकर्मणि सम्प्राप्ते क्षुते स्नानेऽथ भोजने। व्याधितानाञ्च सर्वेषामायुष्यमभिनन्दनम् ॥ २३ ॥ प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत्। सह स्त्रियाथशयनं सहभोज्यञ्च वर्ज्जयेत् ॥ २४ ॥ त्वंकारं नामधेयञ्च ज्येष्ठानां परिवर्ज्जयेत्। अवराणां समानानामुभयेषां न दुष्यति ॥ २५ ॥ हृदयं पापवृत्तानां पापमाख्याति वैकृतम्। ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने ॥ २६ ॥ ज्ञानपूर्वं कृतं पापं छादयन्त्यबहुश्रुताः। नैनं मनुष्याः पश्यन्ति पश्यन्त्येव दिवौकसः ॥ २७ ॥ पापेनापिहितं पापं पापमेवानुवर्त्तते। धर्मेणापिहितो धर्मो धर्ममेवानुवर्त्तते। धार्मिकेण कृतो धर्मो धर्ममेवानुवर्त्तते ॥ २८ ॥ पापं कृतं न स्मरतीह मूढो विवर्त्तमानस्य तदेतिकर्त्तुः। राहुर्यथा चन्द्रमुपैति चापि तथाबुधं पापमुपैति कर्म ॥ २९ ॥ आशया सञ्चितं द्रव्यं दुःखेनैवोपभुज्यते। तद्बुधा न प्रशंसन्ति मरणं न प्रतीक्षते ॥ ३० ॥ मानसं सर्वभूतानां धर्ममाहुर्मनीषिणः। तस्मात् सर्वेषु भूतेषु मनसा शिवमाचरेत् ॥ ३१ ॥ एक एव चरेद्धर्मं नास्ति धर्मे सहायता। केवलं विधिमासाद्य सहायः किं करिष्यति ॥ ३२ ॥ धर्मो योनि-

मनुष्याणां देवानाममृतं दिवि । प्रेत्यभावे सुखं धर्माच्छश्वत्तैरुप-
भुज्यते ॥ ३३ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि आचारविधौ
त्रिनवत्यधिकशततोऽध्यायः ॥ १९३ ॥

---

युधिष्ठिर उवाच । अध्यात्मं नाम यदिदं पुरुषस्येह चिन्त्यते ।
यदध्यात्मं यथा चैतत्तन्मे ब्रूहि पितामह ॥ १ ॥ कुतः सृष्टमिदं
विश्वं ब्रह्मन् स्थावरजङ्गमम् । प्रलये च कमभ्येति तन्मे वक्तु-
मिहार्हसि ॥ २ ॥

भीष्म उवाच । अध्यात्ममिति मां पार्थ यदेतदनुपृच्छसि ।
तद्व्याख्यास्यामि ते तात श्रेयस्करतमं सुखम् ॥ ३ ॥ सृष्टिप्रलय-
संयुक्तमाचार्य्यैः परिदर्शितम् । यज्ज्ञात्वा पुरुषो लोके प्रीतिं
सौख्यञ्च विन्दति । फललाभश्च तस्य स्यात् सर्वभूतहितञ्च तत् ॥४॥
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् । महाभूतानि भूतानां
सर्वेषां प्रभवाप्ययौ ॥ ५ ॥ यतः सृष्टानि तत्रैव तानि यान्ति पुनः
पुनः । महाभूतानि भूतेभ्यः सागरस्योर्मयो यथा ॥ ६ ॥ प्रसार्य्य
च यथाङ्गानि कूर्मः संहरते पुनः । तद्वद्भूतानि भूतात्मा सृष्टानि
हरते पुनः ॥ ७ ॥ महाभूतानि पञ्चैव सर्वभूतेषु भूतकृत् । अक-
रोत्तेषु वैषम्यं तत्तु जीवो न पश्यति ॥ ८ ॥ शब्दः श्रोत्रं तथा
खानि त्रयमाकाशयोनिजम् । वायोः स्पर्शस्तथा चेष्टा त्वक् चैव
त्रितयं स्मृतम् ॥ ९ ॥ रूपञ्चक्षुस्तथा पाकस्त्रिविधं तेज उच्यते ।
रसः क्लेदश्च जिह्वा च त्रयो जलगुणाः स्मृताः ॥ १० ॥ घ्रेयं घ्राणं
शरीरञ्च एते भूमिगुणास्त्रयः । महाभूतानि पञ्चैव षष्ठञ्च मन
उच्यते ॥ ११ ॥ इन्द्रियाणि मनश्चैव विज्ञानान्यस्य भारत । सप्तमी
बुद्धिरित्याहुः क्षेत्रज्ञः पुनरष्टमः ॥ १२ ॥ चक्षुरालोचनायैव

संशयं कुरुते मनः। बुद्धिरध्यवसानाय क्षेत्रज्ञः साक्षिवत् स्थितः ॥१३॥ ऊर्द्धं पादतलाभ्यां यदर्वाक् चोर्द्ध्वञ्च पश्यति। एतेन सर्वमेवेदं विद्धभिव्याप्तमन्तरम् ॥ १४ ॥ पुरुषैरिन्द्रियाणीह वेदितव्यानि कृत्स्नशः। तमो रजश्च सत्त्वञ्च तेऽपि भावास्तदाश्रिताः ॥ १५ ॥ एतां बुद्धा नरो बुद्ध्या भूतानामागतिं गतिम्। समवेक्ष्य शनैश्चैव लभते शममुत्तमम् ॥ १६ ॥ गुणैर्नीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि। मनःषष्ठानि भूतानि बुद्ध्यभावे कुतो गुणाः ॥ १७ ॥ इति तन्मयमेवैतत् सर्वं स्थावरजङ्गमम्। प्रलीयते चोद्भवति तस्मान्निर्दिश्यते तथा ॥१८॥ येन पश्यति तच्चक्षुः शृणोति श्रोत्रमुच्यते। जिघ्रति घ्राणमित्याहू रसं जानाति जिह्वया ॥१९॥ त्वचा स्पर्शयते स्पर्शं बुद्धिर्विक्रियते सकृत्। येन प्रार्थयते किञ्चित्तदा भवति तन्मनः ॥ २० ॥ अधिष्ठानानि बुद्धेर्हि पृथगर्थानि पञ्चधा। इन्द्रियाणीति तान्याहुस्तान्यदृश्योऽधितिष्ठति ॥ २१ ॥ पुरुषे तिष्ठती बुद्धिस्त्रिषु भावेषु वर्त्तते। कदाचिल्लभते प्रीतिं कदाचिदनुशोचति ॥२२॥ न सुखेन न दुःखेन कदाचिदपि वर्त्तते। एवं नराणां मनसि त्रिषु भावेष्ववस्थिता ॥२३॥ सेयं भावात्मिका भावांस्त्रीनेतानतिवर्त्तते। सरितां सागरो भर्त्ता महावेलामिवोर्मिवान् ॥ २४ ॥ अतिभावगता बुद्धिर्भावे मनसि वर्त्तते। प्रवर्त्तमानन्तु रजस्तद्भावमनुवर्त्तते ॥ २५ ॥ इन्द्रियाणि हि सर्वाणि प्रवर्त्तयति सा तदा। प्रीतिः सत्त्वं रजः शोकस्तमो मोहस्तु ते त्रयः ॥ २६ ॥ ये ये च भावा लोकेऽस्मिन् सर्वेष्वेतेषु वै त्रिषु। इति बुद्धिगतिः सर्वा व्याख्याता तव भारत ॥ २७ ॥ इन्द्रियाणि च सर्वाणि विजेतव्यानि धीमता। सत्त्वं रजस्तमश्चैव प्राणिनां संश्रिता सदा ॥ २८ ॥ त्रिविधा वेदना चैव सर्वसत्त्वेषु दृश्यते। सात्त्विकी राजसी चैव तामसी चेति भारत ॥ २९ ॥ सुखस्पर्शः सत्त्वगुणो दुःखस्पर्शो रजोगुणः। तमोगुणेन संयुक्तौ भवतो

व्यावहारिकौ ॥ ३० ॥ तत्र यत् प्रीतिसंयुक्तं काये मनसि वा भवेत् । वर्त्तते सात्त्विको भाव इत्याचक्षीत तत्तथा ॥ ३१ ॥ अथ यद्दुःखसंयुक्तमप्रीतिकरमात्मनः । प्रवृत्तं रज इत्येव तन्न संरभ्य चिन्तयेत् ॥ ३२ ॥ अथ यन्मोहसंयुक्तमव्यक्तविषयं भवेत् । अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥३३॥ प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता । कथञ्चिदभिवर्त्तन्त इत्येते सात्त्विका गुणाः ॥३४॥ अतुष्टिः परितापश्च शोको लोभस्तथाक्षमा । लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुभिः ॥ ३५ ॥ अवमानस्तथा मोहः प्रमादः स्वप्नतन्द्रिता । कथञ्चिदभिवर्त्तन्ते विविधास्तामसा गुणाः ॥ ३६ ॥ दूरगं बहुधागामि प्रार्थनासंशयात्मकम् । मनः सुनियतं यस्य स सुखी प्रेत्य चेह च ॥३७॥ सत्त्वक्षेत्रज्ञयोरेतदन्तरं पश्य सूक्ष्मयोः । सृजते तु गुणानेक एको न सृजते गुणान् ॥ ३८ ॥ मशकोडुम्बरौ वापि सम्प्रयुक्तौ यथा सदा । अन्योन्यमेतौ स्याताञ्च सम्प्रयोगस्तथा तयोः ॥३९॥ पृथग्भूतौ प्रकृत्या तौ सम्प्रयुक्तौ च सर्वदा । यथा मत्स्यो जलञ्चैव संयुक्तौ तथैव तौ ॥ ४० ॥ न गुणा विदुरात्मानं स गुणान् वेत्ति सर्वशः । परिद्रष्टा गुणानान्तु संसृष्टामन्यते तथा ॥ ४१ ॥ इन्द्रियैस्तु प्रदीपार्थं कुरुते बुद्धिसप्तमैः । निर्विचेष्टैरजानद्भिः परमात्मा प्रदीपवत् ॥४२॥ सृजते हि गुणान् सत्त्वं क्षेत्रज्ञः परिपश्यति । सम्प्रयोगस्तयोरेष सत्त्वक्षेत्रज्ञयोर्ध्रुवः ॥ ४३ ॥ आश्रयो नास्ति सत्त्वस्य क्षेत्रज्ञस्य च कश्चन । सत्त्वं मनः संसृजति न गुणान् वै कदाचन ॥ ४४ ॥ रश्मींस्तेषां स मनसा यदा सम्यङ्नियच्छति । तदा प्रकाशतेऽस्यात्मा घटे दीपो ज्वलन्निव ॥ ४५ ॥ त्यक्त्वा यः प्राकृतं कर्म्म नित्यमात्मरतिर्मुनिः । सर्वभूतात्मभूतस्तस्मात् स गच्छेदुत्तमां गतिम् ॥ ४६ ॥ यथा वारिचरः पक्षी सलिलेन न लिप्यते । एवमेव कृतप्रज्ञो भूतेषु परिवर्त्तते ॥ ४७ ॥ एवं स्वभावमेवैतत् स्वबुद्ध्या विहरेन्नरः । अशोच-

न्नप्रहृष्यंश्च समो विगतमत्सरः ॥ ४८ ॥ स्वभावयुक्त्या युक्तस्तु स नित्यं सृजते गुणान् । ऊर्णनाभिर्यथा सूत्रं विज्ञेयास्तन्तुवद्गुणाः ॥ ४९ ॥ प्रध्वस्ता न निवर्त्तन्ते निवृत्तिर्नोपलभ्यते । प्रत्यक्षेण परोक्षं तदनुमानेन सिध्यति ॥ ५० ॥ एवमेके व्यवस्यन्ति निवृत्तिरिति चापरे । उभयं संप्रधार्य्यैतदध्यवस्येत यथा मति ॥ ५१ ॥ इतीमं हृदयग्रन्थिं बुद्धिभेदमयं दृढ़म् । विमुच्य सुखमासीत न शोचेच्छिन्नसंशयः ॥ ५२ ॥ मलिनाः प्राप्नुयुः सिद्धिं यथा पूर्णां नदीं नराः । अवगाह्य सुविद्वांसो विद्धि ज्ञानमिदं तथा ॥ ५३ ॥ महानद्या हि पारज्ञस्तप्यते न तदन्यथा । न तु तप्यति तत्त्वज्ञः फले जाते तरत्युत । एवं ये विदुरध्यात्मं कैवल्यं ज्ञानमुत्तमम् ॥ ५४ ॥ एतां बुद्ध्वा नरः सर्वां भूतानामागतिं गतिम् । अवेक्ष्य च शनैर्बुद्ध्या लभते शमनन्ततः ॥ ५५ ॥ त्रिवर्गो यस्य विदितः प्रेक्ष्य यश्च विमुञ्चति । अन्विष्य मनसा युक्तस्तत्त्वदर्शी निरुत्सुकः ॥ ५६ ॥ न चात्मा शक्यते द्रष्टुमिन्द्रियैश्च विभागशः । तत्र तत्र विसृष्टैश्च दुर्वार्य्यैश्चाकृतात्मभिः ॥ ५७ ॥ एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणम् । विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिणः ॥५८॥ न भवति विदुषां ततो भयं वै यदविदुषां सुमहद्भयं भवेत् । न हि गतिरधिकास्ति कस्यचित् सति हि गुणे प्रवदन्त्यतुल्यताम्॥५९ यः करोत्यनभिसन्धिपूर्वकं तच्च निर्नुदति यत् पुरा कृतम् । नाप्रियं तदुभयं कुतः प्रियं तस्य तज्जनयतीह कुर्वतः ॥६०॥ लोकमातुरमसूयते जनस्तस्य तज्जनयतीह सर्वतः ॥ ६१॥ लोक आतुरजनान्निराविशंस्तत्तदेव बहु पश्य शोचतः । तत्र पश्य कुशलानशोचतो ये विदुस्तदुभयं पदं सताम् ॥ ६२ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि अध्यात्मकथने
चतुर्नवत्यधिकशततोऽध्यायः ॥ १९४ ॥

---

भीष्म उवाच । हन्त वक्ष्यामि ते पार्थ ध्यानयोगं चतुर्विधम्।
यं ज्ञात्वा शाश्वतीं सिद्धिं गच्छन्तीह महर्षयः ॥ १ ॥ यथा स्वनु-
ष्ठितं ध्यानं तथा कुर्वन्ति योगिनः । महर्षयो ज्ञानतृप्ता निर्वाण-
गतमानसाः ॥ २ ॥ नावर्त्तन्ते पुनः पार्थ मुक्ताः संसारदोषतः ।
जन्मदोषपरिक्षीणाः स्वभावे पर्य्यवस्थिताः ॥ ३ ॥ निर्द्वन्द्वा नित्य-
सत्त्वस्था विमुक्ता निष्परिग्रहाः । असङ्गान्यविवादीनि मनःशान्ति-
कराणि च ॥ ४ ॥ तत्र ध्यानेन संश्लिष्टमेकाग्रं धारयेन्मनः । पिण्डी
कृत्येन्द्रियग्राममासीनः काष्ठवन्मुनिः ॥ ५ ॥ शब्दं न विन्देच्छ्रोत्रेण
त्वचा स्पर्शं न वेदयेत् । रूपं न चक्षुषा विन्द्याज्जिह्वया न रसां-
स्तथा ॥ ६ ॥ घ्रेयाण्यपि च सर्वाणि जह्याद्ध्यानेन योगवित् ।
पञ्चवर्गप्रमाथीनि नेच्छेच्चैतानि वीर्य्यवान् ॥ ७ ॥ ततो मनसि
संगृह्य पञ्चवर्गं विचक्षणः । समादध्यान्मनो भ्रान्तमिन्द्रियैः सह
पञ्चभिः ॥ ८ ॥ विसञ्चारि निरालम्बं पञ्चद्वारञ्चलाचलम् । पूर्वं
ध्यानपथे धीरः समादध्यान्मनोऽन्तरा ॥ ९ ॥ इन्द्रियाणि मनश्चैव
यदा पिण्डीकरोत्ययम् । एष ध्यानपथः पूर्वो मया समनुवर्णितः
॥ १० ॥ तस्य तत् पूर्वसंरुद्धमात्मनः षष्ठमान्तरम् । स्फुरिष्यति
समुद्भ्रान्ता विद्युदम्बुधरे यथा ॥ ११ ॥ जलबिन्दुर्यथा लोलः
पर्णस्थः सर्वतश्चलः । एवमेवास्य चित्तञ्च भवति ध्यानवर्त्मनि ॥१२॥
समाहितं क्षणं किञ्चिद्ध्यानवर्त्मनि तिष्ठति । पुनर्वायुपथं भ्रान्तं
मनो भवति वायुवत् ॥ १३ ॥ अनिर्वेदो गतक्लेशो गततन्द्रीरमत्-
सरी । समादध्यात् पुनश्चेतो ध्यानेन ध्यानयोगवित् ॥१४॥ विचा-
रश्च विवेकश्च वितर्कश्चोपजायते । मुनेः समादधानस्य प्रथमं ध्यान-
मादितः ॥ १५ ॥ मनसा क्लिश्यमानस्तु समाधानञ्च कारयेत् । न
निर्वेदं मुनिर्गच्छेत् कुर्य्यादेवात्मनो हितम् ॥ १६ ॥ पांशुभस्म-
करीषाणां यथा वै राशयश्चिताः । सहसा वारिणा सिक्ता न
यान्ति परिभावनम् ॥ १७ ॥ किञ्चित् स्निग्धं यथा च स्याच्छुष्क-

चूर्णमभावितम्। क्रमशस्तु शनैर्गच्छेत् सर्वं तत् परिभावनम् ॥१८॥ एवमेवेन्द्रियग्रामं शनैः संपरिभावयेत्। संहरेत् क्रमशश्चैव स सम्यक् प्रशमिष्यति ॥ १९ ॥ स्वयमेवं मनश्चैव पञ्चवर्गञ्च भारत। पूर्वं ध्यानपथे स्थाप्य नित्ययोगेन शाम्यति ॥ २० ॥ न तत् पुरुषकारेण न च दैवेन केनचित्। सुखमेष्यति तत्तस्य यदेवं संयतात्मनः ॥ २१ ॥ सुखेन तेन संयुक्तो रंस्यते ध्यानकर्म्मणि। गच्छन्ति योगिनो ह्येवं निर्वाणं तन्निरामयम् ॥ २२ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि ध्यानयोगवर्णने पञ्चनवत्यधिकशततोऽध्यायः ॥ १९५ ॥

---

युधिष्ठिर उवाच। चातुराश्रम्यमुक्तन्ते राजधर्मास्तथैव च। नानाश्रयाश्च बहव इतिहासाः पृथग्विधाः ॥ १ ॥ श्रुतास्त्वत्तः कथाश्चैव धर्म्मयुक्ता महामते। सन्देहोऽस्ति तु कश्चिन्मेतद्भवान् वक्तुमर्हति ॥ २ ॥ जापकानां फलावाप्तिं श्रोतुमिच्छामि भारत। किं फलं जपतामुक्तं क्व वा तिष्ठन्ति जापकाः ॥ ३ ॥ जप्यस्य च विधिं कृत्स्नं वक्तुमर्हसि मेऽनघ। जापका इति किञ्चैतत् सांख्ययोगक्रियाविधिः ॥ ४ ॥ किं यज्ञविधिरेवैष किमेतज्जप्यमुच्यते। एतन्मे सर्वमाचक्ष्व सर्वज्ञोऽह्यसि मे मतः ॥ ५ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। यमस्य तत् पुरा वृत्तं कालस्य ब्राह्मणस्य च ॥ ६ ॥ सांख्ययोगौ तु यावुक्तौ मुनिभिर्मोक्षदर्शिभिः। संन्यास एव वेदान्ते वर्त्तते जपनं प्रति ॥ ७ ॥ वेदवादाश्च निर्वृत्ताः शान्ता ब्रह्मण्यवस्थिताः। सांख्ययोगौ तु यावुक्तौ मुनिभिः शुभदर्शिभिः ॥ ८ ॥ मार्गौ तावप्युभावेतौ संश्रितौ न च संश्रितौ। यथा संश्रूयते राजन् कारणन्तत्र वक्ष्यते ॥ ९॥ मनःसमाधिरत्रापि तथेन्द्रियजयः स्मृतः।

सत्यमग्निपरीचारो विविक्तानाञ्च सेवनम् ॥ १० ॥ ध्यानं तपो दमः क्षान्तिरनसूया मिताशनम्। विषयप्रतिसंहारो मितजल्पस्तथा शमः ॥ ११ ॥ एष प्रवर्त्तको यज्ञो निवर्त्तकमथो शृणु। यथा निवर्त्तते कर्म्म जपतो ब्रह्मचारिणः ॥ १२ ॥ एतत् सर्वमशेषेण यथोक्तं परिवर्त्तयेत्। त्रिरतं मार्गमासाद्य व्यक्ताव्यक्तमनाश्रयम् ॥ १३ ॥ कुशोच्चयनिषण्णः सन् कुशहस्तः कुशैः शिखी। कुशैः परिवृतस्तस्मिन्मध्ये छन्नः कुशैस्तथा ॥ १४ ॥ विषयेभ्यो नमस्कुर्य्या-द्विषयान्न च भावयेत्। साम्यमुत्पाद्य मनसा मनस्येव मनो दधत् ॥ १५ ॥ तद्धिया ध्यायति ब्रह्म जपन् वै संहितां हिताम्। संन्यस्यत्यथ वा तां वै समाधौ पर्य्यवस्थितः ॥ १६ ॥ ध्यानमुत्पादयत्यत्र संहिताबलसंश्रयात्। शुद्धात्मा तपसा दान्तो निवृत्तद्वेषकामवान् ॥ १७ ॥ अरागमोहो निर्द्वन्द्वो न शोचति न सज्जते। न कर्त्ता कारणानाञ्च न कार्य्याणामिति स्थितिः ॥ १८ ॥ न चाहङ्कारयोगेन मनः प्रस्थापयेत् क्वचित्। न चार्थग्रहणे युक्तो नावमानी न चाक्रियः ॥ १९ ॥ ध्यानक्रियापरो युक्तो ध्यानवान् ध्याननिश्चयः। ध्याने समाधिमुत्पाद्य तदपि त्यजति क्रमात् ॥ २० ॥ स वै तस्यामवस्थायां सर्वत्यागकृतः सुखम्। निरिच्छस्त्यजति प्राणान् ब्राह्मीं संविशते तनुम् ॥२१॥ अथ वा नेच्छते तत्र ब्रह्मकायनिषेवणम्। उत्क्रामति च मार्गस्थो नैव क्वचन जायते ॥ २२ ॥ आत्मबुद्ध्या समास्थाय शान्तीभूतो निरामयः। अमृतं विरजः शुद्धमात्मानं प्रतिपद्यते ॥ २३ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि यापकोपाख्याने
षण्णवत्याधिकशततोऽध्यायः ॥ १९६ ॥

———

युधिष्ठिर उवाच। गतीनामुत्तमा प्राप्तिः कथिता जापकेष्विह। एकैवैषा गतिस्तेषामुत यान्त्यपरामपि ॥ १ ॥

भीष्म उवाच। शृणुष्वावहितो राजन् जापकानां गतिं विभो। यथा गच्छन्ति निरयानेकान् पुरुषर्षभ ॥ २ ॥ यथोक्तमेतं पूर्वं यो नानुतिष्ठति जापकः। एकाङ्गक्रियश्चात्र निरयं स च गच्छति ॥ ३ ॥ अवमानेन कुरुते न प्रीयति न हृष्यति। ईदृशो जापको याति निरये नात्र संशयः ॥ ४ ॥ अहङ्कारकृतश्चैव सर्वे निरयगामिनः। परावमानी पुरुषो भविता निरयोपगः ॥ ५ ॥ अभिध्यापूर्वकं जप्यं कुरुते यश्च मोहितः। यत्रास्य रागः पतति तत्र तत्रोपपद्यते ॥ ६ ॥ अथैश्वर्यप्रवृत्तेषु जापकस्तत्र रज्यते। स एव निरयस्तस्य नासौ तस्मात् प्रमुच्यते ॥ ७ ॥ रागेण जापको जप्यं कुरुते तत्र मोहितः। यत्रास्य रागः पतति तत्र तत्रोपपद्यते ॥८॥ दुर्बुद्धिरकृतप्रज्ञश्चले मनसि तिष्ठति। चलामेव गतिं याति निरयं वा नियच्छति ॥ ९ ॥ प्रज्ञेयं समतिक्रान्ता प्रमादान्नावधारिता। अकृतप्रज्ञको बालो मोहं गच्छति जापकः ॥१०॥ स मोहान्निरयं याति तत्र गत्वानुशोचति। दृढग्राही करोमीति जप्यं जपति जापकः। न सम्पूर्णो न संयुक्तो निरयं सोऽनुगच्छति ॥ ११ ॥

युधिष्ठिर उवाच। अनिवृत्तं परं यत्तदव्यक्तं ब्रह्मणि स्थितम्। तद्भूतो जापकः कस्मात् स शरीरमिहाविशेत् ॥ १२ ॥

भीष्म उवाच। दुष्प्रज्ञानेन निरया बहवः समुदाहृताः। प्रशस्तं जापकत्वञ्च दोषाश्चैते तदात्मकाः ॥ १३ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि जापकोपाख्याने सप्तनवत्यधिकशततोऽध्यायः ॥ १९७ ॥

---

युधिष्ठिर उवाच। कीदृशं निरयं याति जापको वर्णयस्व मे। कौतूहलं हि राजन्मे तद्भवान् वक्तुमर्हति ॥ १ ॥

भीष्म उवाच। धर्मस्यांशप्रसूतोऽसि धर्मिष्ठोऽसि स्वभावतः। धर्ममूलाश्रयं वाक्यं शृणुष्वावहितोऽनघ ॥ २ ॥ अमूनि यानि स्थानानि देवानां परमात्मनाम्। नानासंस्थानवर्णानि नानारूपफलानि च ॥ ३ ॥ दिव्यानि कामचारीणि विमानानि सभास्तथा। आक्रीड़ा विविधा राजन् पद्मिन्यश्चैव काञ्चनाः ॥ ४ ॥ चतुर्णां लोकपालानां शुक्रस्याथ वृहस्पतेः। मरुतां विश्वदेवानां साध्यानामश्विनोरपि ॥५॥ रुद्रादित्यवसूनाञ्च तथान्येषां दिवौकसाम्। एते वै निरयास्तात स्थानस्य परमात्मनः ॥ ६ ॥ अभयञ्चानिमित्तञ्च न तत् क्लेशसमावृतम्। द्वाभ्यां मुक्तं त्रिभिर्मुक्तमष्टाभिस्त्रिभिरेव च ॥ ७ ॥ चतुर्लक्षणवर्ज्जन्तु चतुष्कारणवर्ज्जितम्। अप्रहर्षमनानन्दमशोकं विगत क्लमम् ॥ ८ ॥ कालः सम्पद्यते तत्र कालस्तत्र न वै प्रभुः। स कालस्य प्रभूराजन् स्वर्गस्यापि तथेश्वरः ॥९॥ आत्मकेवलतां प्राप्तस्तत्र गत्वा न शोचति। ईदृशं परमं स्थानं निरयास्ते च तादृशाः ॥ १० ॥ एते ते निरयाः प्रोक्ताः सर्व एव यथायथम्। तस्य स्थानवरस्येह सर्वे निरयसंज्ञिताः ॥ ११ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि जापकोपाख्याने अष्टनवत्यधिकशतोऽध्यायः ॥ १९८ ॥

---

युधिष्ठिर उवाच। कालमृत्युयमानान्ते इक्ष्वाकोर्ब्राह्मणस्य च। विवादो व्याहृतः पूर्वं तद्भवान् वक्तुमर्हति ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। इक्ष्वाकोः सूर्य्यपुत्रस्य यद्वृत्तं ब्राह्मणस्य च ॥ २ ॥ कालस्य मृत्योश्च तथा यद्वृत्तं तन्निबोध मे। यथा स तेषां संवादो यस्मिन् स्थाने-

ऽपि चाभवत् ॥ ३ ॥ ब्राह्मणो जापकः कश्चिद्धर्मवृत्तो महायशाः । षड़ङ्गविन्महाप्राज्ञः पैप्पलादिः स कौशिकः ॥ ४ ॥ तस्यापरोक्षं विज्ञानं षड़ङ्गेषु बभूव ह । वेदेषु चैव निष्णातो हिमवत्पाद-संश्रयः ॥ ५ ॥ सोऽन्त्यं ब्राह्मं तपस्तेपे संहितां संयतो जपन् । तस्य वर्षसहस्रन्तु नियमेन तथा गतम् ॥ ६ ॥ स देव्या दर्शितः साक्षात् प्रीतास्मीति तदा किल । जप्यमावर्त्तयंस्तूष्णीं न स तां किञ्चिदब्रवीत् ॥ ७ ॥ तस्यानुकम्पया देवी प्रीता समभवत्तदा । वेदमाता ततस्तस्य तज्जप्यं समपूजयत् ॥ ८ ॥ समाप्तजप्यस्तूत्थाय शिरसा पादयोस्तथा । पपात देव्या धर्मात्मा वचनञ्चेदमब्रवीत् ॥ ९ ॥ दिष्ट्या देवि प्रसन्ना त्वं दर्शनञ्च गता मम । यदि चापि प्रसन्नासि जप्ये मे रमतां मनः ॥ १० ॥

सावित्र्युवाच । किम्प्रार्थयसि विप्रर्षे किञ्चेष्टं करवाणि ते । प्रब्रूहि जपतां श्रेष्ठ सर्वं तत्ते भविष्यति ॥ ११ ॥ इत्युक्तः स तदा देव्या विप्रः प्रोवाच धर्मवित् । जप्यं प्रति ममेच्छेयं वर्द्धत्विति पुनः पुनः ॥ १२ ॥ मनसश्च समाधिर्मे वर्द्धताहरहः शुभे । तत्त-थेति ततो देवी मधुरं प्रत्यभाषत ॥ १३ ॥ इदञ्चैवापरं प्राह देवी तत्प्रियकाम्यया । निरयं नैव याता त्वं यत्र याता द्विजर्षभाः ॥ १४ ॥ यास्यसि ब्रह्मणः स्थानमनिमित्तमनिन्दितम् । साधये भविता चैतत् यत्त्वयाहमिहार्थिता ॥ १५ ॥ नियतो जप श्चैवाग्रो धर्मस्त्वां समुपैष्यति । कालो मृत्युर्यमश्चैव समायास्यन्ति तेऽन्ति-कम् । भविता च विवादोऽत्र तव तेषाञ्च धर्मतः ॥ १६ ॥

भीष्म उवाच । एवमुक्त्वा भगवती जगाम भवनं स्वकम् । ब्राह्मणोऽपि जपन्नास्ते दिव्यं वर्षशतं तथा । सदा दान्तो जित-क्रोधः सत्यसन्धोऽनसूयकः ॥ १७ ॥ समाप्ते नियमे तस्मिन्नथ विप्रस्य धीमतः । साक्षात् प्रीतस्तदा धर्मो दर्शयामास तं द्विजम् ॥ १८ ॥

धर्म उवाच । द्विजाते पश्य मां धर्मसहं त्वां द्रष्टुमागतः ।

जपस्यास्य फलं यत्तत् सम्प्राप्तं तच्च मे शृणु ॥ १९॥ जिता लोका-
स्त्वया सर्व्वे ये दिव्या ये च मानुषाः । देवानां निलयान् साधो
सर्व्वानुत्क्रम्य यास्यसि ॥ २० ॥ प्राणत्यागं कुरु मुने गच्छ लोकान्
यथेप्सितान् । त्यक्त्वात्मनः शरीरञ्च ततो लोकानवाप्स्यसि ॥२१॥

ब्राह्मण उवाच । किन्नु लोकैर्हि मे धर्म्म गच्छ त्वञ्च यथा-
सुखम् । बहुदुःखसुखं देहं नोत्सृजेयमहं विभो ॥ २२ ॥

धर्म्म उवाच । अवश्यं भो शरीरं ते त्यक्तव्यं मुनिपुङ्गव ।
स्वर्गमारोह भो विप्र किं वा वै रोचतेऽनघ ॥ २३ ॥

ब्राह्मण उवाच । न रोचये स्वर्गवासं विना देहमहं विभो ।
गच्छ धर्म्म न मे श्रद्धा स्वर्गं गन्तुं विनात्मना ॥ २४ ॥

धर्म उवाच । अलं देहे मनः कृत्वा त्यक्त्वा देहं सुखी भव ।
गच्छ लोकानरजसो यत्र गत्वा न शोचसि ॥ २५ ॥

ब्राह्मण उवाच । रमे जपन्महाभाग किन्नु लोकैः सनातनैः ।
सशरीरेण गन्तव्यं मया स्वर्गं न वा विभो ॥ २६ ॥

धर्म उवाच । यदि त्वं नेच्छसे त्यक्तुं शरीरं पश्य वै द्विज ।
एष कालस्तथा मृत्युर्यमश्च त्वामुपागताः ॥ २७ ॥

भीष्म उवाच । अथ वैवस्वतः कालो मृत्युश्च त्रितयं विभो ।
ब्राह्मणं तं महाभागमुपगम्येदमब्रुवन् ॥ २८ ॥

यम उवाच । तपसोऽस्य सुतप्तस्य तथा सुचरितस्य च ।
फलप्राप्तिस्तव श्रेष्ठो यमोऽहं त्वामुपब्रुवे ॥ २९ ॥

काल उवाच । यथावदस्य जप्यस्य फलं प्राप्तमनुत्तमम् ।
कालस्ते स्वर्गमारोढुं कालोऽहं त्वामुपागतः ॥ ३० ॥

मृत्युरुवाच । मृत्युं मां विद्धि धर्म्मज्ञ रूपिणं स्वयमागतम् ।
कालेन चोदितो विप्र त्वामितो नेतुमद्य वै ॥ ३१ ॥

ब्राह्मण उवाच । स्वागतं सूर्य्यपुत्राय कालाय च महात्मने ।
मृत्यवे चाथ धर्माय किं कार्य्यं करवाणि वः ॥ ३२ ॥

भीष्म उवाच । अर्घ्यं पाद्यञ्च दत्त्वा स तेभ्यस्तत्र समागमे ।
अब्रवीत् परमप्रीतः स्वशक्त्या किं करोमि वः ॥ ३३ ॥ तस्मिन्नेवाथ
काले तु तीर्थयात्रामुपागतः । इक्ष्वाकुरगमत्तत्र समेता यत्र ते
विभो ॥ ३४ ॥ सर्वानेव तु राजर्षिः सम्पूज्याथ प्रणम्य च । कुशल
प्रश्नमकरोत् सर्वेषां राजसत्तमः ॥ ३५ ॥ तस्मै सोऽथासनन्दत्त्वा
पाद्यमर्घ्यं तथैव च । अब्रवीद् ब्राह्मणो वाक्यं कृत्वा कुशलसंविदम्
॥ ३६ ॥ स्वागतन्ते महाराज ब्रूहि यद्यदिहेच्छसि । स्वशक्त्या
किं करोमीह तद्भवान् प्रब्रवीतु माम् ॥ ३७ ॥

राजोवाच । राजाहं ब्राह्मणश्च त्वं यदा षट्कर्मसंस्थितः ।
ददानि वसु किञ्चित्ते प्रथितं तद्वदस्व मे ॥ ३८ ॥

ब्राह्मण उवाच । द्विविधा ब्राह्मणा राजन् धर्मश्च द्विविधः
स्मृतः । प्रवृत्ताश्च निवृत्ताश्च निवृत्तोऽहं प्रतिग्रहात् ॥ ३९॥ तेभ्यः
प्रयच्छ दानानि ये प्रवृत्ता नराधिप। अहं न प्रतिगृह्णामि किमिष्टं
किं ददामि ते । ब्रूहि त्वं नृपतिश्रेष्ठ तपसा साधयामि किम् ॥४०॥

राजोवाच । क्षत्रियोऽहं न जानामि देहीति वचनं क्वचित् ।
प्रयच्छ युद्धमित्येवं वादिनः स्मो द्विजोत्तम ॥ ४१ ॥

ब्राह्मण उवाच । तुष्यसि त्वं स्वधर्मेण तथा तुष्टा वयं नृप ।
अन्योऽन्यस्यान्तरं नास्ति यदिष्टं तत् समाचर ॥ ४२ ॥

राजोवाच । स्वशक्त्याहं ददानीति त्वया पूर्वमुदाहृतम् ।
याचे त्वां दीयतां मह्यं जप्यस्यास्य फलं द्विज ॥ ४३ ॥

ब्राह्मण उवाच । युद्धं मम सदा वाणी याचतीति विकत्थसे ।
न च युद्धं मया सार्द्धं किमर्थं याचसे पुनः ॥ ४४ ॥

राजोवाच । वाग्वज्रा ब्राह्मणाः प्रोक्ताः क्षत्रिया बाहुजीविनः ।
वाग्युद्धं तदिदं तीव्रं मम विप्र त्वया सह ॥ ४५ ॥

ब्राह्मण उवाच । सैवाद्यापि प्रतिज्ञा मे स्वशक्त्या किं प्रदीय-
ताम् । ब्रूहि दास्यामि राजेन्द्र विभवे सति मा चिरम् ॥ ४६ ॥

राजोवाच। यत्तद्वर्षशतं पूर्णं जप्यं व जपता त्वया। फलं प्राप्तं तत् प्रयच्छ मम दित्सुर्भवान् यदि ॥ ४७ ॥

ब्राह्मण उवाच। परमं गृह्यतां तस्य फलं यज्जपितं मया। अर्द्धन्त्वमविचारेण फलं तस्य समाप्नुहि ॥ ४८ ॥ अथ वा सर्वमेवेह मामकं जापकं फलम्। राजन् प्राप्नुहि कामं त्वं यदि सर्वमिहेच्छसि ॥ ४९ ॥

राजोवाच। कृतं सर्वेण भद्रं ते जप्यं यद्याचितं मया। स्वस्ति तेऽस्तु गमिष्यामि किञ्च तस्य फलं वद ॥ ५० ॥

ब्राह्मण उवाच। फलप्राप्तिं न जानामि दत्तं यज्जपितं मया। अयं धर्मश्च कालश्च यमो मृत्युश्च साक्षिणः ॥ ५१ ॥

राजोवाच। अज्ञातमस्य धर्मस्य फलं किं मे करिष्यति। फलं ब्रवीषि धर्मस्य न चेज्जप्यकृतस्य माम्। प्राप्नोतु तत् फलं विप्रो नाहमिच्छेऽससंशयम् ॥ ५२ ॥

ब्राह्मण उवाच। नाददेऽपरवक्तव्यं दत्तञ्चास्य फलं मया। वाक्यं प्रमाणं राजर्षे ममाद्य तव चैव हि ॥ ५३ ॥ नाभिसन्धिर्मया जप्ये कृतपूर्वः कदाचन। जप्यस्य राजशार्दूल कथं वेत्स्याम्यहं फलम् ॥ ५४ ॥ ददस्वेति त्वया चोक्तं ददानीति मया तथा। न वाचं दूषयिष्यामि सत्यं रक्ष स्थिरो भव ॥ ५५ ॥ अथैवं वदतो मेऽद्य वचनं न करिष्यसि। महानधर्मो भविता तव राजन्मृषाकृतः ॥५६॥ न युक्तान्तु मृषावाणीं त्वया वक्तुमरिन्दम। तथा मयाप्यभिहितं मिथ्या कर्त्तुं च शक्यते ॥५७॥ संश्रुतञ्च मया पूर्वं ददानीत्यविचारितम्। तद्गृहीष्वाविचारेण यदि सत्ये स्थितो भवान् ॥ ५८ ॥ इहागम्य हि मां राजन् जाप्यं फलमयाचिथाः। तन्मे निसृष्टं गृह्णीष्व भव सत्ये स्थिरोऽपि च ॥ ५९ ॥ नायं लोकेऽस्ति न परो न च पूर्वान् स तारयेत्। कुत एव जनिष्यांस्तु मृषावादपरायणः ॥६०॥ न यज्ञफलदानानि नियमास्तारयन्ति हि।

यथा सत्यं परे लोके तथेह पुरुषर्षभ ॥ ६१ ॥ तपांसि यानि चीर्णानि चरिष्यन्ति च यत्तपः। शतैः शतसहस्रैश्च तैः सत्यान्न विशिष्यते ॥ ६२ ॥ सत्यमेकाक्षरं ब्रह्म सत्यमेकाक्षरं तपः। सत्यमेकाक्षरो यज्ञः सत्यमेकाक्षरं श्रुतम् ॥ ६३ ॥ सत्यं वेदेषु जागर्त्ति फलं सत्ये परं स्मृतम्। सत्याद्धर्मो दमश्चैव सर्वं सत्ये प्रतिष्ठितम् ॥ ६४ ॥ सत्यं वेदास्तथाङ्गानि सत्यं विद्यास्तथा विधिः। व्रतचर्य्या तथासत्यमोङ्कारः सत्यमेवच ॥ ६५ ॥ प्राणिनां जननं सत्यं सत्यं सन्ततिरेव च। सत्येन वायुरभ्येति सत्येन तपते रविः ॥ ६६ ॥ सत्येन चाग्निर्दहति स्वर्गः सत्ये प्रतिष्ठितः। सत्यं यज्ञस्तपो वेदास्तोभा मन्त्राः सरस्वती ॥ ६७ ॥ तुलामारोपितो धर्मः सत्यञ्चैवेति नः श्रुतम्। समकक्षां तुलयतो यतः सत्यं ततोऽधिकम् ॥ ६८ ॥ यतो धर्मस्ततः सत्यं सर्वं सत्येन वर्द्धते। किमर्थमनृतं कर्म कर्त्तुं राजंस्त्वमिच्छसि ॥ ६९ ॥ सत्ये कुरु स्थिरं भावं मा राजन्ननृतं कृथाः। कस्मात्त्वमनृतं वाक्यं देहीति कुरुतेऽशुभम् ॥ ७० ॥ यदि जप्यफलं दत्तं मया नेषिष्यसे नृप। धर्मेभ्यः संपरिभ्रष्टो लोकाननुचरिष्यसि ॥ ७१ ॥ संश्रुत्य यो न दित्सेत याचिता यश्च नेच्छति। उभावानृतिकावेतौ न मृषा कर्त्तुमर्हसि ॥ ७२ ॥

राजोवाच। योद्धव्यं रक्षितव्यञ्च क्षत्रधर्मः किल द्विज। दातारः क्षत्रियाः प्रोक्ता गृह्णीयां भवतः कथम् ॥ ७३ ॥

ब्राह्मण उवाच। न छन्दयामि ते राजन्नापि ते गृहमाव्रजम्। इहागम्य तु याचित्वा न गृह्णीषि पुनः कथम् ॥ ७४ ॥

धर्म उवाच। अविवादोऽस्तु युवयोर्वित्तं मां धर्ममागतम्। द्विजो दानफलैर्युक्तो राजा सत्यफलेन च ॥ ७५ ॥

स्वर्ग उवाच। स्वर्गं मां विद्धि राजेन्द्र रूपिणं स्वयमागतम्। अविवादोऽस्तु युवयोरुभौ तुल्यफलौ युवाम् ॥ ७६ ॥

राजोवाच । कृतं स्वर्गेण मे कार्य्यं गच्छ स्वर्गं यथागतम् । विप्रो यदीच्छते चौनं गन्तुं गृह्णातु मे फलम् ॥ ७७ ॥

ब्राह्मण उवाच । बाल्ये यदि स्यादज्ञानान्मया हस्तः प्रसारितः । निवृत्तलक्षणं धर्म्ममुपासे संहिता जपन् ॥ ७८ ॥ निवृत्तं मां चिराद्राजन् विप्रलोभयसे कथम् । स्वेन कार्य्यं करिष्यामि त्वत्तो नेच्छे फलं नृप । तपःस्वाध्यायशीलोऽहं निवृत्तश्च प्रतिग्रहात् ॥ ७९ ॥

राजोवाच । यदि विप्र विसृष्टं ते जप्यस्य फलमुत्तमम् । आवयोर्यत् फलं किञ्चित् सहितं नौ तदस्त्विह ॥ ८० ॥ द्विजाः प्रतिग्रहे युक्ता दातारो राजवंशजाः । यदि धर्म्मः श्रुतो विप्र सहैव फलमस्तु नौ ॥ ८१ ॥ मा वा भूत् सहभोज्यन्नौ मदीयं फलमाप्नुहि । प्रतीच्छ मत्कृतं धर्म्मं यदि ते मय्यनुग्रहः ॥ ८२ ॥

भीष्म उवाच । ततो विकृतवेशौ द्वौ पुरुषौ समुपस्थितौ । गृहीत्वान्योऽन्यमाविष्ट्य कुचेलावूचतुर्वचः ॥ ८३ ॥ न मे धारयसीत्येको धारयामीति चापरः । इहास्ति नौ विवादोयमयं राजानुशासकः ॥ ८४ ॥ सत्यं ब्रवीम्यहमिदं न मे धारयते भवान् । अनृतं वदसीह त्वमृणं ते धारयाम्यहम् ॥ ८५ ॥ तावुभौ सुभृशं तप्तौ राजानमिदमूचतुः । परीक्ष त्वं यथा स्याव नावामिह विगर्हितौ ॥ ८६ ॥

विरूप उवाच । धारयामि नरव्याघ्र विकृतस्येह गोः फलम् । ददतश्च न गृह्णाति विकृतो मे महीपते ॥ ८७ ॥

विकृत उवाच । न मे धारयते किञ्चित् विरूपोऽयं नराधिप । मिथ्या ब्रवीत्ययं हि त्वां सत्याभासं नराधिप ॥ ८८ ॥

राजोवाच । विरूप किं धारयते भवानस्य ब्रवीतु मे । श्रुत्वा तथा करिष्येऽहमिति मे धीयते मनः ॥ ८९ ॥

विरूप उवाच । शृणुष्वावहितो राजन् यथैतद्धारयाम्यहम् ।

विकृतस्यास्य राजर्षे निखिलेन नराधिप ॥ ९० ॥ अनेन धर्म-प्राप्त्यर्थं शुभा दत्ता पुरानघ । धेनुर्विप्राय राजर्षे तपःस्वाध्याय-शीलिने ॥ ९१ ॥ तस्याश्चायं मया राजन् फलमभ्येत्य याचितः । विकृतेन च मे दत्तं विशुद्धेनान्तरात्मना ॥ ९२ ॥ ततो मे सुकृतं कर्म कृतमात्मविशुद्धये । गावौ च कपिले क्रीत्वा वत्सले बहुदोहने ॥ ९३ ॥ ते चोञ्छवृत्तये राजन्मया समपवर्ज्जिते । यथाविधि यथाश्रद्धं तदस्याहं पुनः प्रभो ॥ ९४ ॥ इहाद्यैव गृहीत्वा तु प्रयच्छे द्विगुणं फलम् । एवं स्यात् पुरुषव्याघ्र कः शुद्धः कोऽत्र दोषवान् ॥ ९५ ॥ एवं विवदमानौ स्वस्वामिहाभ्यागतौ नृप । कुरु धर्ममधर्मं वा विनये नौ समादध ॥ ९६ ॥ यदि नेच्छति मे दानं यथादत्तमनेन वै । भवानत्र स्थिरो भूत्वा मार्गं स्थापयिताद्य नौ ॥ ९७ ॥

राजोवाच । दीयमानं न गृह्णासि ऋणं कस्मात्त्वमद्य वै । यथैव तेऽभ्यनुज्ञानं तथा गृह्णीष्व मा चिरम् ॥ ९८ ॥

विकृत उवाच । धारयामीत्यनेनोक्तं ददानीति तथा मया । नायं मे धारयत्यद्य गच्छतां यत्र वाञ्छति ॥ ९९ ॥

राजोवाच । ददतोऽस्य न गृह्णासि विषमं प्रतिभाति मे । दण्ड्यो हि त्वं मम मतो नास्त्यत्र खलु संशयः ॥ १०० ॥

विकृत उवाच । मयास्य दत्तं राजर्षे गृह्णीयां तत् कथं पुनः । काममत्रापराधो मे दण्डमाज्ञापय प्रभो ॥ १०१ ॥

विरूप उवाच । दीयमानं यदि मया नैषिष्यसि कथञ्चन । नियंस्यति त्वां नृपतिरयं धर्मानुशासकः ॥ १०२ ॥

विकृत उवाच । स्वं मया याचितेनेह दत्तं कथमिहाद्य तत् । गृह्णीयां गच्छतु भवानभ्यनुज्ञां ददानि ते ॥ १०३ ॥

ब्राह्मण उवाच । श्रुतमेतत्त्वया राजन्ननयोः कथितं द्वयोः । प्रतिज्ञातं मया यत्ते तद्गृहाणविचारितम् ॥ १०४ ॥

राजोवाच । प्रस्तुतं सुमहत् कार्य्यमनयोर्गह्वरं यथा । जापकस्य दृढ़ीकारः कथमेतद्भविष्यति ॥ १०५ ॥ यदि तावन्न गृह्णामि ब्राह्मणेनोपवर्ज्जितम् । कथं न लिप्येयमहं पापेन महताद्य वै ॥ १०६ ॥ तौ चोवाच स राजर्षिः कृतकार्य्यौ गमिष्यथः । नेदानीं मामिहासाद्य राजधर्मो भवेन्मृषा ॥ १०७ ॥ स्वधर्मः परिपाल्यस्तु राज्ञामिति विनिश्चयः । विप्रधर्मश्च गहनो मामनात्मानमाविशम् ॥ १०८ ॥

ब्राह्मण उवाच । गृहाण धारयेऽहञ्च याचितं संश्रुतं मया । न चेद्ग्रहीष्यसे राजन् शपिष्ये त्वां न संशयः ॥ १०९ ॥

राजोवाच । धिग्राजधर्मं यस्यायं कार्य्यस्येह विनिश्चयः । इत्यर्थं मे ग्रहीतव्यं कथं तुल्यं भवेदिति ॥ ११० ॥ एष पाणिरपूर्वं मे निक्षेपार्थं प्रसारितः । यन्मे धारयसे विप्र तदिदानीं प्रदीयताम् ॥ १११ ॥

ब्राह्मण उवाच । संहितां जपता यावान् गुणः कश्चित् कृतो मया । तत् सर्वं प्रतिगृह्णीष्व यदि किञ्चिदिहास्ति मे ॥ ११२ ॥

राजोवाच । जलमेतन्निपतितं मम पाणौ द्विजोत्तम । सममस्तु सहैवास्तु प्रतिगृह्णातु वै भवान् ॥ ११३ ॥

विरूप उवाच । कामक्रोधौ विद्धि नौ त्वमावाभ्यां कारितो भवान् । सहेति च यदुक्तं ते समा लोकास्तवास्य च ॥ ११४ ॥ नायं धारयते किञ्चिज्जिज्ञासा त्वत्कृते कृता । कालो धर्मस्तथा मृत्युः कामक्रोधौ तथा युवाम् ॥ ११५ ॥ सर्वमन्योऽन्यनिष्कर्षे निघृष्टं पश्यतस्तव । गच्छ लोकान् जितान् स्वेन कर्मणा यत्र वाञ्छति ॥ ११६ ॥

भीष्म उवाच । जापकानां फलावाप्तिर्मया ते सम्प्रदर्शिता । गतिः स्थानञ्च लोकाश्च जापकेन यथा जिताः ॥ ११७ ॥ प्रयाति संहिताध्यायी ब्रह्माणं परमेष्ठिनम् । अथ वाग्निं समायाति सूर्य्य-

माविशतेऽपि वा ॥ ११८ ॥ स तैजसेन भावेन यदितत्र रमतुरत ।
गुणांस्तेषां समाधत्ते रागेण प्रतिमोहितः ॥ ११९ ॥ एवं सोमे
तथा वायौ भूम्याकाशशरीरगः । स रागस्तत्र वसति गुणांस्तेषां
समाचरन् ॥ १२० ॥ अथ तत्र विरागी स गच्छति त्वथ संशयम् ।
परमव्ययमिच्छन् स तमेवाविशते पुनः ॥ १२१ ॥ अमृताच्चामृतं
प्राप्तः शान्तीभूतो निरात्मवान् । ब्रह्मभूतः स निर्द्वन्द्वः सुखी शान्तो
निरामय ॥ १२२ ॥ ब्रह्मस्थानमनावर्त्तमेकमक्षरसंज्ञकम् । अदुःख-
मजरं शान्तं स्थानं तत् प्रतिपद्यते ॥ १२३ ॥ चतुर्भिर्लक्षणैर्हीनं
तथा षड्भिः सषोडशैः । पुरुषं तमतिक्रम्य आकाशं प्रतिपद्यते
॥ १२४ ॥ अथ नेच्छति रागात्मा सर्वं तदधितिष्ठति । यच्च प्रार्थ-
यते तच्च मनसा प्रतिपद्यते ॥ १२५ ॥ अथ वा वीक्षते लोकान्
सर्वान्निरयसंज्ञितान् । निस्पृहः सर्वतो मुक्तस्तत्र वै रमते सुखम्
॥ १२६ ॥ एवमेषा महाराज जापकस्य गतिर्यथा । एतत्ते सर्व-
माख्यातं किम्भूयः श्रोतुमिच्छसि ॥ १२७ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि जापकोपाख्याने
नवनवत्यधिकशतोऽध्यायः ॥ १९९ ॥

---

युधिष्ठिर उवाच । किमुत्तरं तदा तौ स्म चक्रतुस्तस्य भाषिते ।
ब्राह्मणो वाथ वा राजा तन्मे ब्रूहि पितामह ॥ १ ॥ अथ वा तौ
गतौ तत्र यदेतत् कीर्त्तितं त्वया । संवादो वा तयोः कोऽभूत्
किम्वा तौ तत्र चक्रतुः ॥ २ ॥

भीष्म उवाच । तथेत्येवं प्रतिश्रुत्य धर्मं सम्पूज्य च प्रभो ।
यमं कालञ्च मृत्युञ्च स्वर्गं सम्पूज्य चार्हतः ॥ ३ ॥ पूर्वं ये चापरे
तत्र समेता ब्राह्मणर्षभाः । सर्वान् सम्पूज्य शिरसा राजानं सो-
ऽब्रवीद्द्विजः ॥ ४ ॥ फलेनानेन संयुक्तो राजर्षे गच्छ मुख्यताम् ।

भवता चाभ्यनुज्ञातो जपेयं भूय एव ह ॥ ५ ॥ वरश्च मम पूर्व्वं हि दत्तो देव्या महाबल । श्रद्धा ते जपतो नित्यं भवत्विति विशाम्पते ॥ ६ ॥

राजोवाच । यद्येवमफला सिद्धिः श्रद्धा च जपितुं तव । गच्छ विप्र मया सार्द्धं जापकं फलमाप्नुहि ॥ ७ ॥

ब्राह्मण उवाच । कृतः प्रयत्नः सुमहान् सर्व्वेषां सन्निधाविह । सहतुल्यफलावावां नच्छावो यत्र नौ गतिः ॥ ८॥ व्यवसायं तयोस्तत्र विदित्वा त्रिदशेश्वरः । सह देवैरुपययौ लोकपालैस्तथैव च ॥ ९ ॥ साध्याश्च विश्वे मरुतो वाद्यानि सुमहान्ति च । नद्यः शैलाः समुद्राश्च तीर्थानि विविधानि च ॥ १० ॥ तपांसि संयोगविधिर्व्वेदाः स्तोभाः सरस्वती । नारदः पर्व्वतश्चैव विश्वावसुर्हाहा हुहूः ॥ ११ ॥ गन्धर्व्वश्चित्रसेनश्च परिवारगणैर्युतः । नागाः सिद्धाश्च मुनयो देवदेवः प्रजापतिः ॥ १२ ॥ विष्णुः सहस्रशीर्षश्च देवोऽचिन्त्यः समागमत् । अवाद्यन्तान्तरीक्षे च भेर्य्यस्तूर्य्याणि वा विभो ॥ १३ ॥ पुष्पवर्षाणि दिव्यानि तत्र तेषां महात्मनाम् । ननृतुश्चाप्सरःसङ्घास्तत्र तत्र समन्ततः ॥ १४ ॥ अथ स्वर्गस्तथा रूपी ब्राह्मणं वाक्यमब्रवीत् । संसिद्धस्त्वं महाभागस्त्वञ्च सिद्धस्तथा नृप ॥ १५ ॥ अथ तौ सहितौ राजन्नन्योऽन्यविधिना ततः । विषयप्रतिसंहारमुभावेव प्रचक्रतुः ॥ १६ ॥ प्राणापानावथोदानं समानं व्यानमेव च । एवं तौ मनसि स्थाप्य दधतुः प्राणयोर्मनः ॥ १७ ॥ उपस्थाप्योदरे तौ च नासिकाग्रमधो भ्रुवोः । भ्रुकुट्याञ्चैव मनसा शनैर्धारयतस्तदा ॥ १८ ॥ निश्चेष्टाभ्यां शरीराभ्यां स्थिरदृष्टी समाहितौ । जितात्मानौ तथाधाय मूर्द्धन्यात्मानमेव च ॥ १९ ॥ तालुदेशमथोद्दाल्य ब्राह्मणस्य महात्मनः । ज्योतिर्ज्वाला सुमहती जगाम त्रिदिवं तदा ॥ २० ॥ हाहाकारस्तथा दिक्षु सर्व्वेषां सुमहानभूत् । तज्ज्योतिस्तूयमानं स्म ब्राह्मणं प्राविशत्तदा ॥ २१ ॥

ततः स्वागतमित्याह तत्तेजः प्रपितामहः। प्रादेशमात्रं पुरुषं प्रत्युद्गम्य विशाम्पते ॥ २२ ॥ भूयश्चैवापरं प्राह वचनं मधुरं तदा। जापकैस्तुल्यफलता योगानां नात्र संशयः ॥ २३ ॥ योगस्य तावदेतेभ्य प्रत्यक्षं फलदर्शनम्। जापकानां विशिष्टन्तु प्रत्युत्थानं समाहितम् ॥ २४ ॥ उष्यतां मयि चेत्युक्त्वा चेतयत् सततं पुनः। अथास्यं प्रविवेशास्य ब्राह्मणो विगतज्वरः ॥ २५ ॥ राजाप्येतेन विधिना भगवन्तं पितामहम्। यथैव द्विजशार्दूलस्तथैव प्राविशत्तदा ॥ २६ ॥ स्वयम्भुवमथो देवा अभिवाद्य ततोऽब्रुवन्। जापकानां विशिष्टन्तु प्रत्युत्थानं समाहितम् ॥ २७ ॥ जापकार्थमयं यत्नो यदर्थं वयमागताः। कृतपूजाविमौ तुल्यौ त्वया तुल्यफलाविमौ ॥ २८ ॥ योगजापकयोर्दृष्टिं फलं सुमहदद्य वै। सर्वांल्लोकानतिक्रम्य गच्छेतां यत्र वाञ्छितम् ॥ २९ ॥

ब्रह्मोवाच। महास्मृतिं पठेद्यस्तु तथैवानुस्मृतिं शुभाम्। तावप्येतेन विधिना गच्छेतां मत्सलोकताम् ॥ ३० ॥ यश्च योगे भवेद्भक्तः सोऽपि नास्त्यत्र संशयः। विधिनानेन देहान्ते मम लोकानवाप्नुयात् ॥ ३१ ॥ साधये गम्यताञ्चैव यथा स्थानानि सिद्धये ॥ ३२ ॥

भीष्म उवाच। इत्युक्त्वा स तदा देवस्तत्रैवान्तरधीयत। आमन्त्र्य च ततो देवा ययुः स्वं स्वं निवेशनम् ॥ ३३ ॥ ते च सर्वे महात्मानो धर्मं सत्कृत्य तत्र वै। पृष्ठतोनुययू राजन् सर्वे सुप्रीतचेतसः ॥ ३४ ॥ एतत् फलं जापकानां गतिश्चैषा प्रकीर्त्तिता। यथाश्रुतं महाराज किं भूयः श्रोतुमिच्छसि ॥ ३५ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि जापकोपाख्याने
द्विशततमोऽध्यायः ॥ २०० ॥

युधिष्ठिर उवाच। किं फलं ज्ञानयोगस्य वेदानां नियमस्य च। भूतात्मा च कथं ज्ञेयस्तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। मनोः प्रजापतेर्वादं महर्षेश्च वृहस्पतेः ॥ २ ॥ प्रजापतिं श्रेष्ठतमं प्रजानां देवर्षिसङ्घप्रवरो महर्षिः। वृहस्पतिः प्रश्नमिमं पुराणं पप्रच्छ शिष्योऽथ गुरुं प्रणम्य ॥ ३ ॥ यत् कारणं यत्र विधिः प्रवृत्तो ज्ञाने फलं यत् प्रवदन्ति विप्राः। यन्मन्त्रशब्दैरकृतप्रकाशं तदुच्यतां मे भगवन् यथावत् ॥ ४ ॥ यच्चार्थशास्त्रागममन्त्रविद्भि-र्यज्ञैरनेकैरथ गोप्रदानैः। फलं महद्भिर्यदुपास्यते च किन्तत् कथं वा भविता क्व वा तत् ॥ ५ ॥ मही महीजः पवनोऽन्तरीक्षं जलौकसश्चैव जलं दिवञ्च। दिवौकसश्चापि यतः प्रसूतास्तदुच्यतां मे भगवान् पुराणम् ॥ ६ ॥ ज्ञानं यतः प्रार्थयते नरो वै ततस्तदर्था भवति प्रवृत्तिः। न चाप्यहं वेद परं पुराणं मिथ्याप्रवृत्तिञ्च कथं नु कुर्य्याम् ॥७॥ ऋक्सामसङ्घांश्च यजूंषि चापि छन्दांसि नक्षत्रगतिं निरुक्तम्। अधीत्य च व्याकरणं सकल्पं शिक्षाञ्च भूतप्रकृतिं न वेद्मि ॥८॥ स मे भवान् शंसतु सर्वमेतत् सामान्यशब्दैश्च विशेषणैश्च। स मे भवान् शंसतु तावदेतज्ज्ञाने फलं कर्मणि वा यदस्ति। यथा च देहाच्च्यवते शरीरी पुनः शरीरञ्च यथाभ्युपैति ॥ ९ ॥

मनुरुवाच। यद्यत् प्रियं यस्य सुखं यदाहुस्तदेव दुःखं प्रवदन्त्यनिष्टम्। इष्टञ्च मे स्यादितरच्च न स्यादेतत्कृते कर्मविधिः प्रवृत्तः ॥ १० ॥ इष्टन्त्वनिष्टञ्च न मां भजेतेत्येतत्कृते ज्ञानविधिः प्रवृत्तः ॥ ११ ॥ कामात्मकाश्छन्दसि कर्मयोगा एभिर्विमुक्तः परमश्नुवीत। नानाविधे कर्मपथे सुखार्थी नरः प्रवृत्तो निरयं प्रयाति ॥ १२ ॥

वृहस्पतिरुवाच। इष्टन्त्वनिष्टञ्च सुखासुखे च शापीस्त्वव-च्छन्दति कर्मभिश्च ॥ १३ ॥

मनुरुवाच। एभिर्विमुक्तः परमाविवेश एतत्कृते कर्म्मविधिः प्रवृत्तः। कामात्मकांश्छन्दति कर्मयोग एभिर्विमुक्तः परमाददीत॥ १४॥ आत्मादिभिः कर्म्मभिरिध्यमानो धर्म्मे प्रवृत्तो द्युतिमान् सुखार्थी। परं हि तत् कर्मपथादपेतं निराशिषं ब्रह्म परं ह्युपैति॥ १५॥ प्रजाः सृष्टा मनसा कर्म्मणा च द्वावेवैतौ सत्पथौ लोकजुष्टौ। दृष्टं कर्म शाश्वतञ्चान्तवच्च मनस्त्यागः कारणं नान्यदस्ति॥ १६॥ स्वेनात्मना चक्षुरिव प्रणेता निशात्यये तमसा संवृतात्मा। ज्ञानन्तु विज्ञानगुणेन युक्तं कर्माशुभं पश्यति वर्ज्जनीयम्॥ १७॥ सर्पान् कुशाग्राणि तथोपदानं ज्ञात्वा मनुष्याः परिवर्ज्जयन्ति। अज्ञानतस्तत्र पतन्ति केचित् ज्ञाने फलं पश्य यथा विशिष्टम्॥ १८॥ कृत्स्नस्तु मन्त्रो विधिवत्प्रयुक्तो यज्ञा यथोक्तास्त्विह दक्षिणाश्च। अन्नप्रदानं मनसः समाधिः पञ्चात्मकं कर्मफलं वदन्ति॥ १९॥ गुणात्मकं कर्म वदन्ति वेदास्तस्मान्मन्त्रो मन्त्रपूर्वं हि कर्म। विधिर्विधेयं मनसोपपत्तिः फलस्य भोक्ता तु तथा शरीरी॥ २०॥ शब्दाश्च रूपाणि रसाश्च पुण्याः स्पर्शांश्च गन्धाश्च शुभास्तथैव। नरो न संस्थानगतः प्रभुः स्यादेतत् फलं सिध्यति कर्म लोके॥ २१॥ यद्यच्छरीरेण करोति कर्म शरीरयुक्तः समुपाश्नुते तत्। शरीरमेवायतनं सुखस्य दुःखस्य चाप्यायतनं शरीरम्॥ २२॥ वाचा तु यत् कर्म करोति किञ्चिद्वाचैव सर्वं समुपाश्नुते तत्। मनस्तु यत् कर्म करोति किञ्चिन्मनस्थ एवायमुपाश्नुते तत्॥ २३॥ यथा यथा कर्मगुणं फलार्थी करोत्ययं कर्मफले निविष्टः। तथा तथायं गुणसंप्रयुक्तः शुभाशुभं कर्मफलं भुनक्ति॥ २४॥ मत्स्यो यथा स्रोत इवाभिपातो तथा कृतं पूर्वमुपैति कर्म। शुभे त्वसौ तुष्यति दुष्कृते तु न तुष्यते वै परमः शरीरी॥ २५॥ यतो जगत् सर्वमिदं प्रसूतं ज्ञात्वात्मवन्तो व्यतियान्ति यत्तत्। यन्मन्त्रशब्दैरकृतप्रकाशं तदुच्यमानं शृणु मे परं यत्॥ २६॥

रसैर्विमुक्तं विविधैश्च गन्धैरशब्दमस्पर्शमरूपवच्च । अग्राह्यमव्यक्तमवर्णमेकं पञ्च प्रकारान् सृजे प्रजानाम् ॥ २७ ॥ न स्त्री पुमान्नापि नपुंसकञ्च न सन्न चासत् सदसच्च तन्न । पश्यन्ति यद्‌ब्रह्मविदो मनुष्यास्तदक्षरं न क्षरतीति विद्धि ॥ २८ ॥

इति शान्तिपर्व्वणि मोक्षधर्मपर्व्वणि मनुवृहस्पतिसंवादे एकाधिकद्विशततोऽध्यायः ॥ २०१ ॥

---

मनुरुवाच । अक्षरात् खं ततो वायुस्ततो ज्योतिस्ततो जलम्। जलात् प्रसूता जगती जगत्यां जायते जगत् ॥ १ ॥ एतैः शरीरैर्जलमेव गत्वा जलाच्च तेजः पवनोऽन्तरीक्षम् । खाद्वै निवर्त्तन्ति न भाविनस्ते मोक्षञ्च ते वै परमाप्नुवन्ति ॥ २ ॥ नोष्णं न शीतं मृदु नापि तीक्ष्णं नाम्लं कषायं मधुरं न तिक्तम् । न शब्दवन्नापि च गन्धवत्तन्न रूपवत्तत् परमस्वभावम् ॥ ३ ॥ स्पर्शन्तनुर्वेद रसञ्च जिह्वा घ्राणञ्च गन्धाञ्छ्रवणौ च शब्दान् । रूपाणि चक्षुर्न च तत् परं यद्‌गृह्णन्त्यनध्यात्मविदो मनुष्याः ॥ ४ ॥ निवर्त्तयित्वा रसनां रसेभ्यो घ्राणञ्च गन्धाञ्छ्रवणौ च शब्दात् । स्पर्शात्त्वचं रूपगुणात्तु चक्षुस्ततः परं पश्यति स्वं स्वभावम् ॥ ५ ॥ यतो गृहीत्वा हि करोति यच्च यस्मिंश्च तामारभते प्रवृत्तिम् । यस्मिंश्च यद्येन च यश्च कर्त्ता यत् कारणन्ते समुदायमाहुः ॥ ६ ॥ यद्दाप्यभूद्व्यापकं साधकञ्च यन्मन्त्रवत् स्थास्यति चापि लोके । यः सर्वहेतुः परमात्मकारी तत् कारणं कार्य्यमतो यदन्यत् ॥ ७ ॥ यथा हि कश्चित् सुकृतैर्मनुष्यः शुभाशुभं प्राप्नुतेऽथाविरोधात् । एवं शरीरेषु शुभाशुभेषु स्वकर्मजैर्ज्ञानमिदं निबद्धम् ॥ ८ ॥ यथा प्रदीप्तः पुरतः प्रदीपः प्रकाशमन्यस्य करोति दीप्यन् । तथेह पञ्चेन्द्रियदीपवृक्षा ज्ञानप्रदीप्ताः परवन्त एव ॥ ९ ॥ यथा च राज्ञो बहवो

ह्यमात्याः पृथक् प्रमाणं प्रवदन्ति युक्ताः। तद्वच्छरीरेषु भवन्ति
पञ्च ज्ञानैकदेशाः परमः स तेभ्यः॥ १०॥ यथार्च्चिषोऽग्नेः पवनस्य
वेगो मरीचयोऽर्कस्य नदीषु चापः। गच्छन्ति चायान्ति च सञ्च-
रन्त्यस्तद्वच्छरीराणि शरीरिणान्तु॥ ११॥ यथा च कश्चित् परशुं
गृहीत्वा धूमं न पश्येज्ज्वलनञ्च काष्ठे। तद्वच्छरीरोदरपाणिपादं
छित्त्वा न पश्यन्ति ततो यदन्यत्॥ १२॥ तान्येव काष्ठानि यथा
विमथ्य धूमञ्च पश्येज्ज्वलनञ्च योगात्। तद्वत् सुबुद्धिः सममिन्द्रि-
यात्मा बुधः परं पश्यति तं स्वभावम्॥ १३॥ यथात्मनोऽङ्गं पतितं
पृथिव्यां स्वप्नान्तरे पश्यति चात्मनोऽन्यत्। श्रोत्रादियुक्तः सुमहान्
सुबुद्धिर्लिङ्गात्तथा गच्छति लिङ्गमन्यत्॥ १४॥ उत्पत्तिवृद्धिव्ययस-
न्निपातैर्न युज्यतेऽसौ परमः शरीरी। अनेन लिङ्गेन तु लिङ्ग-
मन्यद्गच्छत्यदृष्टः फलसन्निधोगात्॥ १५॥ न चक्षुषा पश्यति
रूपमात्मनो न चापि संस्पर्शमुपैति किञ्चित्। न चापि तैः साध-
यते तु कार्य्यं ते तं न पश्यन्ति स पश्यते तान्॥ १६॥ यथा समीपे
ज्वलतोऽनलस्य सन्तापजं रूपमुपैति कश्चित्। न चापरं रूपगुणं
विभर्त्ति तथैव तद्दृश्यति रूपमस्य॥ १७॥ तथा मनुष्यः परिमुच्य
कायमदृश्यमन्याद्विशते शरीरम्। विसृज्य भूतेषु महत्सु देहं
तदाश्रयञ्चैव विभर्त्ति रूपम्॥१८॥ खं वायुमग्निं सलिलं तथोर्वीं
समं ततोऽभ्याविशते शरीरी। नानाश्रयाः कर्मसु वर्त्तमानाः
श्रोत्रादयः पञ्च गुणान् श्रयन्ते॥ १९॥ श्रोत्रं खतो घ्राणमथो
पृथिव्यास्तेजोमयं रूपमथो विपाकः। जलाश्रयन्तेज उक्तं रसश्च
वाय्वात्मकः स्पर्शकृतो गुणश्च॥ २०॥ महत्सु भूतेषु वसन्ति पञ्च
पञ्चेन्द्रियार्थाश्च तथेन्द्रियेषु। सर्वाणि चैतानि मनोऽनुगानि बुद्धिं
मनोऽन्वेति मनः स्वभावम्॥ २१॥ शुभाशुभं कर्म कृतं यदन्य-
त्तदेव प्रत्याददते स्वदेहे। मनोऽनुवर्त्तन्ति परावराणि जलौकसः
स्रोत इवानुकूलम्॥ २२॥ चलं यथा दृष्टिपथं परैति सूक्ष्मं

महद्रूपमिवाभिभाति। स्वरूपमालोचयते च रूपं परं तथा बुद्धिपथं परैति ॥ २३ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि मनुवृहस्पतिसम्वादे द्व्यधिकद्विशततोऽध्यायः ॥ २०२ ॥

---

मनुरुवाच। यदिन्द्रियैस्तूपहितं पुरस्तात् प्राप्तान् गुणान् संस्मरते चिराय। तेष्विन्द्रियेषूपहतेषु पश्चात् स बुद्धिरूपः परमः स्वभावः ॥ १ ॥ यथेन्द्रियार्थान् युगपत् समन्तात् नापेक्षते कृत्स्न-मतुल्यकालम्। तथा चलं सञ्चरते विद्वांस्तस्मात् स एकः परमः शरीरी ॥२॥ रजस्तमः सत्त्वमथो तृतीयं गच्छत्यसौ स्थानगुणान् विरूपान्। तथेन्द्रियाख्याविशते शरीरी हुताशनं वायुरिवेन्धन-स्थम् ॥ ३ ॥ न चक्षुषा पश्यति रूपमात्मनो न पश्यति स्पर्शन-मिन्द्रियाणाम्। न श्रोत्रलिङ्गं श्रवणेन दर्शनं तथा कृतं पश्यति तद्विनश्यति ॥४॥ श्रोत्रादीनि न पश्यन्ति स्वं स्वमात्मानमात्मना। सर्वज्ञः सर्वदर्शी च सर्वज्ञस्तानि पश्यति ॥ ५ ॥ तथा हिमवतः पार्श्वं पृष्ठं चन्द्रमसो यथा। न दृष्टपूर्वं मनुजैर्न च तन्नास्ति तावता ॥ ६ ॥ तद्वद्भूतेषु भूतात्मा सूक्ष्मो ज्ञानात्मवानसौ। अदृष्ट-पूर्वश्चक्षुर्भ्यां न चासौ नास्ति तावता ॥ ७ ॥ पश्यन्नपि यथा लक्ष्म जगत् सोमेन विन्दति। एवमस्ति न चोत्पन्नं न च तन्न पराय-णम् ॥ ८ ॥ रूपवन्तमरूपत्वादुदयास्तमने बुधाः। धिया समनु-पश्यन्ति तद्गताः सवितुर्गतिम् ॥ ९ ॥ यथा बुद्धिप्रदीपेन दूरस्थं सुविपश्चितः। प्रत्यासन्नं निनीषन्तं ज्ञेयं ज्ञानाभिसंहितम् ॥१०॥ न हि खल्वनुपायेन कश्चिदर्थोऽभिसिध्यति। सूत्रजालैर्यथा मत्-स्यान् वध्नन्ति जलजीविनः ॥ ११ ॥ मृगैर्मृगाणां ग्रहणं पक्षिणां पक्षिभिर्यथा। गजानाञ्च गजैरेवं ज्ञेयं ज्ञानेन गृह्यते ॥ १२ ॥

अहिरेव ह्यहेः पादान् पश्यतीति हि नः श्रुतम्। तद्वन्मूर्त्तिषु मूर्त्तिस्थं ज्ञेयं ज्ञानेन पश्यति ॥ १३ ॥ नोत्सहन्ते यथा वेत्तमिन्द्रियैरिन्द्रियाण्यपि। तथैवेह परा बुद्धिः परं बोध्यं न पश्यति ॥१४॥ यथा चन्द्रो ह्यमावास्यामलिङ्गत्वान्न दृश्यते। न च नाशोऽस्य भवति तथा विद्धि शरीरिणम् ॥ १५ ॥ क्षीणकोषो ह्यमावास्यां चन्द्रमा न प्रकाशते। तद्वन्मूर्त्तिविमुक्तोऽसौ शरीरी नोपलभ्यते ॥ १६ ॥ यथाकारान्तरं प्राप्य चन्द्रमा भ्राजते पुनः। तद्वल्लिङ्गान्तरं प्राप्य शरीरी भ्राजते पुनः ॥ १७ ॥ जन्म वृद्धिः क्षयश्चास्य प्रत्यक्षेणोपलभ्यते। सा तु चन्द्रमसो वृत्तिर्न तु तस्य शरीरिणः ॥ १८ ॥ उत्पत्तिवृद्धिव्ययसो यथा स इति गृह्यते। चन्द्र एव त्वमावास्यां तथा भवति मूर्त्तिमान् ॥ १९ ॥ नोपसर्पद्विमुञ्चद्वा शशिनं दृश्यते तमः। विसृजंश्चोपसर्पंश्च तद्वत् पश्य शरीरिणम् ॥ २० ॥ यथा चन्द्रार्कसंयुक्तं तमस्तदुपलभ्यते। तद्वच्छरीरसंयुक्तः शरीरीत्युपलभ्यते ॥ २१ ॥ यथा चन्द्रार्कनिर्मुक्तः स राहुर्नोपलभ्यते। तद्वच्छरीरनिर्मुक्तः शरीरी नोपलभ्यते ॥२२॥ यथा चन्द्रो ह्यमावस्यां नक्षत्रैर्युज्यते गतः। तद्वच्छरीरनिर्मुक्तः फलैर्युज्यति कर्मणः ॥ २३ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि मनुबृहस्पतिसम्वादे त्र्यधिकद्विशतोऽध्यायः ॥ २०३ ॥

---

मनुरुवाच। यथा व्यक्तमिदं शेते स्वप्ने चरति चेतनम्। ज्ञानमिन्द्रियसंयुक्तं तद्वत् प्रेत्य भवाभवौ ॥ १ ॥ यथाम्भसि प्रसन्ने तु रूपं पश्यति चक्षुषा। तद्वत् प्रसन्नेन्द्रियत्वाज्ज्ञेयं ज्ञानेन पश्यति ॥ २ ॥ स एव लुलिते तस्मिन् यथा रूपं न पश्यति। तथेन्द्रियाकुलीभावे ज्ञेयं ज्ञानेन पश्यति ॥३॥ अबुद्धिरज्ञानकृता अबुद्ध्या-

क्षुभ्यते मनः । दुष्टस्य मनसः पञ्च सम्प्रदुष्यन्ति मानसाः ॥ ४ ॥ अज्ञानतृप्तो विषयेष्ववगाढ़ो न तृप्यते । अदृष्टवच्च भूतात्मा विषयेभ्यो निवर्त्तते ॥ ५ ॥ तर्षच्छेदो न भवति पुरुषस्येह कल्मषात् । निवर्त्तते तदा तर्षः पापमन्तगतं यदा ॥ ६ ॥ विषयेषु तु संसर्गाच्छाश्वतस्य तु संश्रयात् । मनसा चान्यथा काङ्क्षन् परं न प्रतिपद्यते ॥ ७ ॥ ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्म्मणः । यथादर्शतले प्रख्ये पश्यत्यात्मानमात्मनि ॥८॥ प्रसृतैरिन्द्रियैर्दुःखी तैरेव नियतैः सुखी । तस्मादिन्द्रियरूपेभ्यो यच्छेदात्मानमात्मना ॥ ९ ॥ इन्द्रियेभ्यो मनः पूर्व्वं बुद्धिः परतरा ततः । बुद्धेः परतरं ज्ञानं ज्ञानात् परतरं महत् ॥१०॥ अव्यक्तात् प्रसृतं ज्ञानं ततो बुद्धिस्ततो मनः । मनः श्रोत्रादिभिर्युक्तं शब्दादीन् साधु पश्यति ॥११॥ यस्तांस्त्यजति शब्दादीन् सर्व्वांश्च व्यक्तयस्तथा । विमुञ्चेत् प्राकृतान् ग्रामांस्तान् मुक्त्वामृतमश्नुते ॥१२॥ उद्यन् हि सविता यद्वत् सृजते रश्मिमण्डलम् । स एवास्तमुपागच्छंस्तदेवात्मनि यच्छति ॥ १३ ॥ अन्तरात्मा तथा देहमाविश्येन्द्रियरश्मिभिः । प्राप्येन्द्रियगुणान् पञ्च सोऽस्तमावृत्य गच्छति ॥१४॥ प्रणीतं कर्म्मणा मार्गं नीयमानः पुनः पुनः । प्राप्नोत्ययं कर्म्मफलं प्रवृत्तं धर्ममात्मवित् ॥१५॥ विषया विनिवर्त्तन्ते निराहारस्य देहिनः । रसवर्ज्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते ॥ १६ ॥ बुद्धिः कर्मगुणैर्हीना यदा मनसि वर्त्तते । तदा सम्पद्यते ब्रह्म तत्रैव प्रलयं गतम् ॥ १७॥ अस्पर्शनमशृण्वानमनास्वादमदर्शनम् ॥ अघ्राणमवितर्कञ्च सत्त्वं प्रविशते परम् ॥ १८ ॥ मनस्याकृतयो मग्ना मनस्त्वभिगतं मतिम् । मतिस्त्वभिगता ज्ञानं ज्ञानन्त्वभिगतं परम् ॥ १९ ॥ इन्द्रियैर्मनसः सिद्धिर्न बुद्धिं बुध्यते मनः । न बुद्धिर्बुध्यते व्यक्तं सूक्ष्मं त्वेतानि पश्यति ॥ २० ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि मनुवृहस्पतिसम्वादे चतुरधिकद्विशततोऽध्यायः ॥ २०४ ॥

मनुरुवाच । दुःखोपघाते शारीरे मानसे चाप्युपस्थिते । यस्मिन्नशक्यते कर्त्तुं यत्नस्तं नानुचिन्तयेत् ॥ १ ॥ भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् । चिन्त्यमानं हि चाभ्येति भूयश्चापि प्रवर्त्तते ॥ २ ॥ प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः । एतद्विज्ञान-सामर्थ्यं न बालैः समतामियात् ॥ ३ ॥ अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः । आरोग्यं प्रियसम्वासो गृध्येत्तत्र न पण्डितः ॥ ४ ॥ न जानपदिकं दुःखमेकः शोचितुमर्हति । अशोचन् प्रति-कुर्वीत यदि पश्येदुपक्रमम् ॥ ५ ॥ सुखाद्बहुतरं दुःखं जीविते नास्ति संशयः । स्निग्धस्य चेन्द्रियार्थेषु मोहान्मरणमप्रियम् ॥ ६ ॥ परित्यजति यो दुःखं सुखं वाप्युभयं नरः । अभ्येति ब्रह्म सो-ऽत्यन्तं न ते शोचन्ति पण्डिताः ॥ ७ ॥ दुःखमर्था हि युज्यन्ते पालनेन च ते सुखम् । दुःखेन चाधिगम्यन्ते नाशमेषां न चिन्त-येत् ॥ ८ ॥ ज्ञानं ज्ञेयाभिनिर्वृत्तं विद्धि ज्ञानगुणं मनः । प्रज्ञा-करणसंयुक्तं ततो बुद्धिः प्रवर्त्तते ॥ ९ ॥ यदा कर्मगुणोपेता बुद्धि-र्मनसि वर्त्तते । तदा प्रज्ञायते ब्रह्म ध्यानयोगसमाधिना ॥ १० ॥ सेयं गुणवती बुद्धिर्गुणेष्वेवाभिवर्त्तते । अपराद्भिनिःसृत्य गिरेः शृङ्गादिवोदकम् ॥ ११ ॥ यदा निर्गुणमाप्नोति ध्यानं मनसि पूर्वजः । तदा प्रज्ञायते ब्रह्म निकषं निकषे यथा ॥ १२ ॥ मन-स्त्वपहृतं पूर्वमिन्द्रियार्थनिदर्शकम् । न समक्षगुणापेक्षि निर्गु-णस्य निदर्शकम् ॥ १३ ॥ सर्वाण्येतानि संवार्य्य द्वाराणि मनसि स्थितः । मनस्येकाग्रतां कृत्वा तत् परं प्रतिपद्यते ॥ १४ ॥ यथा महान्ति भूतानि निवर्त्तन्ते गुणक्षये । तथेन्द्रियाण्युपादाय बुद्धि-र्मनसि वर्त्तते ॥ १५ ॥ यदा मनसि सा बुद्धिर्वर्त्ततेऽन्तरचारिणी । व्यवसायगुणोपेता तदा सम्पद्यते मनः ॥ १६ ॥ गुणवद्भिर्गुणोपेतं यदा ध्यानगुणं मनः । तदा सर्वान् गुणान् हित्वा निर्गुणं प्रति-पद्यते ॥ १७ ॥ अव्यक्तस्येह विज्ञाने नास्ति तुल्यं निदर्शनम् । यत्र

शास्ति पदन्यासः कस्तं विषयमाप्नुयात् ॥ १८ ॥ तपसा चानुमानेन गुणैर्जात्या श्रुतेन च । निनीषेत् परमं ब्रह्म विशुद्धेनान्तरात्मना ॥ १९ ॥ गुणहीनो हि तं मार्गं वहिः समनुवर्त्तते । गुणाभावात् प्रकृत्या वा निस्तर्क्यं ज्ञेयसम्मितम् ॥ २० ॥ नैर्गुण्याद्ब्रह्म चाप्नोति सगुणत्वान्निवर्त्तते । गुणप्रचारिणी बुद्धिर्हुताशन इवेन्धने ॥२१॥ यथा पञ्च विमुक्तानि इन्द्रियाणि स्वकर्मभिः । तथा हि परमं ब्रह्म विमुक्तं प्रकृतेः परम् ॥ २२ ॥ एवं प्रकृतितः सर्वे प्रवर्त्तन्ते शरीरिणः । निवर्त्तन्ते निवृत्तौ च स्वर्गञ्चैवोपयान्ति च ॥ २३ ॥ पुरुषः प्रकृतिर्बुद्धिर्विषयाश्चेन्द्रियाणि च । अहङ्कारोऽभिमानश्च समूहो भूतसंज्ञकः ॥ २४ ॥ एतस्माद्या प्रवृत्तिस्तु प्रधानात् संप्रवर्त्तते । द्वितीया मिथुनव्यक्तिमविशेषान्नियच्छति ॥ २५ ॥ धर्मादुत्कृष्यते श्रेयस्तथा श्रेयोऽप्यधर्मतः । रागवान् प्रकृतिं ह्येति विरक्तो ज्ञानवान् भवेत् ॥ २६ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि मनुवृहस्पतिसंवादे पञ्चाधिकद्विशतोऽध्यायः ॥ २०५ ॥

---

मनुरुवाच । यदा तैः पञ्चभिः पञ्च युक्तानि मनसा सह । अथ तद्द्रक्ष्यते ब्रह्म मणौ सूत्रमिवार्पितम् ॥ १ ॥ तदेव च यथा सूत्रं सुवर्णे वर्त्तते पुनः । मुक्तास्वथ प्रवालेषु मृण्मये राजते तथा ॥ २ ॥ तद्वद्गोऽश्वमनुष्येषु तद्वद्धस्तिमृगादिषु । तद्वत् कीटपतङ्गेषु प्रसक्तात्मा स्वकर्मभिः ॥ ३ ॥ येन येन शरीरेण यद्यत् कर्म करोत्ययम् । तेन तेन शरीरेण तत्तत् फलमुपाश्नुते ॥ ४ ॥ यथा ह्येकरसा भूमिरोषध्यर्थानुसारिणी । तथा कर्मानुगा बुद्धिरन्तरात्मानुदर्शिनी ॥५॥ ज्ञानपूर्वा भवेल्लिप्सा लिप्सापूर्वाभिसन्धिता। अभिसन्धिपूर्वकं कर्म कर्ममूलं ततः फलम् ॥ ६ ॥ फलं कर्मात्मकं

विद्यात् कर्म ज्ञेयात्मकं तथा। ज्ञेयं ज्ञानात्मकं विद्याज्ज्ञानं सद-सदात्मकम्॥ ७॥ ज्ञानानाञ्च फलानाञ्च ज्ञेयानां कर्मणां तथा। क्षयान्ते यत् फलं दिव्यं ज्ञानं ज्ञेयप्रतिष्ठितम्॥ ८॥ महद्धि परमं भूतं यत् प्रपश्यन्ति योगिनः। अबुधास्तन्न पश्यन्ति ह्यात्मस्थं गुणबुद्धयः॥ ९॥ पृथिवीरूपतो रूपमपामिह महत्तरम्। अद्भ्यो महत्तरं तेजस्तेजसः पवनो महान्॥ १०॥ पवनाच्च महद्व्योम तस्मात् परतरं मनः। मनसो महती बुद्धिर्बुद्धेः कालो महान् स्मृतः॥ ११॥ कालात् स भगवान् विष्णुर्यस्य सर्वमिदं जगत्। नादिर्न मध्यं नैवान्तस्तस्य देवस्य विद्यते॥ १२॥ अनादित्वाद-मध्यत्वादनन्तत्वाच्च सोऽव्ययः। अत्येति सर्वदुःखानि दुःखं ह्यन्त-वदुच्यते॥१३॥ तद्ब्रह्म परमं प्रोक्तं तद्धाम परमं पदम्। तद्गत्वा कालविषयाद्विमुक्ता मोक्षमाश्रिताः॥ १४॥ गुणेष्वेते प्रकाशन्ते निर्गुणत्वात्ततः परम्। निवृत्तिलक्षणो धर्मस्तथानन्त्याय कल्पते॥ १५॥ ऋचो यजूंषि सामानि शरीराणि व्यपाश्रिताः। जिह्वा-ग्रेषु प्रवर्त्तन्ते यत्नसाध्या विनाशिनः॥ १६॥ न चैवमिष्यते ब्रह्म शरीराश्रयसम्भवम्। न यत्नसाध्यं तद्ब्रह्म नादिमध्यं न चान्तवत्॥ १७॥ ऋचामादिस्तथा साम्नां यजुषामादिरुच्यते। अन्त-श्चादिमतां दृष्टो न त्वादिर्ब्रह्मणः स्मृतः॥ १८॥ अनादित्वादन-न्तत्वात्तदनन्तमथाव्ययम्। अव्ययत्वाच्च निर्दुःखं द्वन्द्वाभावस्ततः परम्॥ १९॥ अदृष्टतोऽनुपायाच्च प्रतिसन्धेश्च कर्मणः। न तेन मर्त्याः पश्यन्ति येन गच्छन्ति तत् परम्॥ २०॥ विषयेषु च संसर्गाच्छाश्वतस्य च दर्शनात्। मनसा चान्यदाकाङ्क्षन् परं न प्रतिपद्यते॥ २१॥ गुणान् यदिह पश्यन्ति तदिच्छन्त्यपरे जनाः। परं नैवाभिकाङ्क्षन्ति निर्गुणत्वाद्गुणार्थिनः॥ २२॥ गुणैर्यस्त्ववरै-र्युक्तः कथं विद्यात् परान् गुणान्। अनुमानाद्धि गन्तव्यं गुणैरव-यवैः परम्॥ २३॥ सूक्ष्मेण मनसा विद्मो वाचा वक्तुं न शक्नुमः।

मनो हि मनसा ग्राह्यं दर्शनेन च दर्शनम् ॥२४॥ ज्ञानेन निर्मलीकृत्य बुद्धिं बुद्ध्या मनस्तथा। मनसा चेन्द्रियग्राममक्षरं प्रतिपद्यते॥ २५ ॥ बुद्धिप्रक्षीणो मनसा समृद्धो निराशिषं निर्गुणमभ्युपैति। परं त्यजन्तीह विलोड्यमाना हुताशनं वायुरिवेन्धनस्तम् ॥ २६ ॥ गुणादाने विप्रयोगे च तेषां मनः सदा बुद्धिपरावराभ्याम् अनेनैव विधिना सम्प्रवृत्तो गुणादाने ब्रह्मशरीरमेति ॥ २७ ॥ अव्यक्तात्मा पुरुषो व्यक्तकर्मा सोऽव्यक्तत्वं गच्छति ह्यन्तकाले। तैरेवायञ्चेन्द्रियैर्वर्द्धमानैर्ग्लायद्भिर्वा वर्त्तते कामरूपः ॥ २८ ॥ सर्वैरयञ्चेन्द्रियैः संप्रयुक्तो देहं प्राप्तः पञ्चभूताश्रयः स्यात्। नासमर्थ्याद्गच्छति कर्मणेह हीनस्तेन परमेणाव्ययेन ॥ २९ ॥ पृथ्व्या नरः पश्यति नान्तमस्या ह्यन्तश्चास्या भविता चेति विद्धि। परं नयन्तीह विलोड्यमानं यथा प्लवं वायुरिवार्णवस्थम् ॥ ३० ॥ दिवाकरो गुणमुपलभ्य निर्गुणो यथा भवेदपगतरश्मिमण्डलः। तथा ह्यसौ मुनिरिह निर्विशेषवान् स निर्गुणं प्रविशति ब्रह्म चाव्ययम् ॥ ३१ ॥ अनागतं सुकृतवतां परां गतिं स्वयम्भुवं प्रभवनिधानमव्ययम्। अनादिमध्यान्तमव्ययं ध्रुवं विचार्य्य तत् परममृतत्वमश्नुते ॥ ३२ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि मनुवृहस्पतिसम्वादे षड्धिकद्विशतोऽध्यायः ॥ २०६ ॥

---

युधिष्ठिर उवाच। पितामह महाप्राज्ञ पुण्डरीकाक्षमच्युतम्। कर्त्तारमकृतं विष्णुं भूतानां प्रभवाप्ययम् ॥ १ ॥ नारायणं हृषीकेशं गोविन्दमपराजितम्। तत्त्वेन भरतश्रेष्ठ श्रोतुमिच्छामि केशवम् ॥ २ ॥

भीष्म उवाच। श्रुतोऽयमर्थो रामस्य जामदग्न्यस्य जल्पतः।

नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ॥ ३ ॥ असितो देवलस्तात वाल्मीकिश्च महातपाः। मार्कण्डेयश्च गोविन्दे कथयत्यद्भुतं महत् ॥ ४ ॥ केशवो भरतश्रेष्ठ भगवानीश्वरः प्रभुः। पुरुषः सर्वमित्येव श्रूयते बहुधा विभुः ॥ ५ ॥ किन्तु यानि विदुर्लोके ब्राह्मणाः शार्ङ्गधन्वनि। महात्मनि महाबाहो शृणु तानि युधिष्ठिर ॥ ६ ॥ यानि चाहुर्मनुष्येन्द्र ये पुराणविदो जनाः। कर्माणि विह गोविन्दे कीर्त्तयिष्यामि तान्यहम् ॥ ७ ॥ महाभूतानि भूतात्मा महात्मा पुरुषोत्तमः। वायुर्ज्योतिस्तथाचापः खञ्च गाञ्चानुकल्पयन् ॥८॥ स दृष्ट्वा पृथिवीञ्चैव सर्वभूतेश्वरः प्रभुः। अप्स्वेव शयनञ्चक्रे महात्मा पुरुषोत्तमः ॥ ९ ॥ सर्वतेजोमयस्तस्मिञ्छयानः पुरुषोत्तमः सोऽग्रजं सर्वभूतानां सङ्कर्षणमकल्पयत् ॥ १० ॥ आश्रयं सर्वभूतानां मनसेतीह शुश्रुमः। स धारयति भूतानि उभे भूतभविष्यती ॥११॥ ततस्तस्मिन्महाबाहो प्रादुर्भूते महात्मनि। भास्करप्रतिमं दिव्यं नाभ्यां पद्ममजायत ॥ १२ ॥ स तत्र भगवान्देवः पुष्करे भ्राजयन्दिशः। ब्रह्मा समभवत्तात सर्वभूतपितामहः ॥ १३ ॥ तस्मिन्नपि महाबाहो प्रादुर्भूते महात्मनि। तमसा पूर्वजो जज्ञे मधुर्नाम महासुरः ॥ १४ ॥ तमुग्रमुग्रकर्माणमुग्रं कर्म्म समास्थितम्। ब्रह्मणोऽपचितिं कुर्वन् जघान पुरुषोत्तमः ॥ १५ ॥ तस्य तात बधात् सर्वे देवदानवमानवाः। मधुसूदनमित्याहुः ऋषभं सर्वसात्वताम् ॥ १६ ॥ ब्रह्मानुससृजे पुत्रान्मानसान्दक्षसप्तमान्। मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् ॥ १७ ॥ मरीचिः कश्यपं तात पुत्रमग्रजमग्रजः। मानसं जनयामास तैजसं ब्रह्मवित्तमम् ॥ १८ ॥ अङ्गुष्ठात् ससृजे ब्रह्मा मरीचेरपि पूर्वजम्। सोऽभवद्भरतश्रेष्ठ दक्षो नाम प्रजापतिः ॥ १९ ॥ तस्य पूर्वमजायन्त दश तिस्रश्च भारत। प्रजापतेर्दुहितरस्तासां ज्येष्ठाभवद्दितिः ॥ २० ॥ सर्वधर्मविशेषज्ञः पुण्यकीर्त्तिर्महायशाः। मारीचः कश्यपस्तात सर्वासा-

सभवत्पतिः ॥ २१ ॥ उत्पाद्य तु महाभागस्तासामवरजा दश ।
ददौ धर्माय धर्म्मज्ञो दक्ष एव प्रजापतिः ॥ २२ ॥ धर्म्मस्य वसवः
पुत्रा रुद्राश्चामिततेजसः । विश्वे देवाश्च साध्याश्च मरुत्वन्तश्च भारत
॥ २३ ॥ अपराश्च यवीयस्यस्ताभ्योऽन्याः सप्तविंशतिः । सोमस्तासां
महाभागः सर्वासामभवत्पतिः ॥ २४ ॥ इतरास्तु व्यजायन्त गन्ध-
र्वांस्तुरगान् द्विजान् । गाश्च किं पुरुषान्मत्स्यानुद्भिज्जांश्च वन-
स्पतीन् ॥ २५ ॥ आदित्यानदितिर्जज्ञे देवश्रेष्ठान्महाबलान् ।
तेषां विष्णुर्वामनोऽभूद्गोविन्दश्चाभवत् प्रभुः ॥ २६ ॥ तस्य विक्र-
मणाच्चापि देवानां श्रीर्व्यवर्द्धत । दानवाश्च पराभूता दैतेयी चासुरी
प्रजा ॥ २७ ॥ विप्रचित्तिप्रधानांश्च दानवानसृजद्दनुः । दितिस्तु
सर्वानसुरान्महासत्त्वानजीजनत् ॥ २८ ॥ अहोरात्रञ्च कालञ्च
यथर्त्तु मधुसूदनः । पूर्वाह्णञ्चापराह्णञ्च सर्वमेवान्वकल्पयत् ॥ २९ ॥
प्रध्याय सोऽसृजन्मेघांस्तथा स्थावरजङ्गमान् । पृथिवीं सोऽसृज-
द्विश्वां सहितां भूरितेजसा ॥ ३० ॥ ततः कृष्णो महाभागः पुनरेव
युधिष्ठिर । ब्राह्मणानां शतं श्रेष्ठं मुखादेवासृजत् प्रभुः ॥ ३१ ॥
बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतः शतम् । पद्भ्यां शूद्रशतञ्चैव
केशवो भरतर्षभ ॥ ३२ ॥ स एवं चतुरो वर्णान् समुत्पाद्य महा-
तपाः । अध्यक्षं सर्वभूतानां धातारमकरोत् स्वयम् ॥ ३३ ॥ वेद-
विद्याविधातारं ब्रह्माणममितद्युतिम् । भूतमातृगणाध्यक्षं विरू-
पाक्षञ्च सोऽसृजत् ॥ ३४ ॥ शासितारञ्च पापानां पितॄणां सम-
वर्त्तिनम् । असृजत् सर्वभूतात्मा निधिपञ्च धनेश्वरम् ॥ ३५ ॥
यादसामसृजन्नाथं वरुणञ्च जलेश्वरम् । वासवं सर्वदेवानामध्यक्ष-
मकरोत् प्रभुः ॥३६॥ यावद्यावदभूच्छ्रद्धा देहं धारयितुं नृणाम् ।
तावत्तावदजीवंस्ते नासीद्यमकृतं भयम् ॥ ३७॥ न चैषां मैथुनो
धर्मो बभूव भरतर्षभ । सङ्कल्पादेव चैतेषामपत्यमुपपद्यते ॥ ३८॥
ततस्त्रेतायुगे काले संस्पर्शाज्जायते प्रजा । न ह्यभून्मैथुनो धर्म-

स्तेषामपि जनाधिप ॥ ३९ ॥ द्वापरे मैथुनो धर्मः प्रजानमभवन्नृप। तथा कलियुगे राजन् द्वन्द्वमापेदिरे जनाः ॥ ४० ॥ एष भूतपतिस्तात स्वध्यक्षश्च तथोच्यते। निरपेक्षांश्च कौन्तेय कीर्त्तयिष्यामि तच्छृणु ॥ ४१ ॥ दक्षिणापथजन्मानः सर्वे नरवरान्ध्रकाः। गुहाः पुलिन्दाः शवराश्चुचका मद्रकैः सह ॥ ४२ ॥ उत्तरापथजन्मानः कीर्त्तयिष्यामि तानपि। यौनकाम्बोजगान्धाराः किराता वर्व्वरैः सह ॥ ४२ ॥ एते पापकृतस्तात चरन्ति पृथिवीमिमाम्। श्वपाकबलगृध्राणां सधर्माणो नराधिप ॥ ४४ ॥ नैते कृतयुगे तात चरन्ति पृथिवीमिमाम्। त्रेताप्रभृति वर्द्धन्ते ते जना भरतर्षभ ॥ ४५ ॥ ततस्तस्मिन्महाघोरे सन्ध्याकाल उपस्थिते। राजानः समसज्जन्त समासाद्येतरेतरम् ॥ ४६ ॥ एवमेष कुरुश्रेष्ठ प्रादुर्भूतो महात्मवान्। देवं देवर्षिराचष्ट नारदः सर्वलोकदृक् ॥ ४७ ॥ नारदोऽप्यथ कृष्णस्य परं मेने नराधिप। शाश्वतत्वं महाबाहो यथावद्भरतर्षभ ॥ ४८ ॥ एवमेष महाबाहु केशवः सत्यविक्रमः। अचिन्त्यः पुण्डरीकाक्षो नैष केवलमानुषः ॥ ४९ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि सर्वभूतोत्पत्तौ सप्ताधिकद्विशततोऽध्यायः ॥ २०७ ॥

---

युधिष्ठिर उवाच। के पूर्व्वमासन् पतयः प्रजानां भरतर्षभ। के चर्षयो महाभागा दिक्षु प्रत्येकशः स्मृताः ॥ १ ॥

भीष्म उवाच। श्रूयतां भरतश्रेष्ठ यन्मां त्वं परिपृच्छसि। प्रजानां पतयो येऽस्मिन् दिक्षु ये चर्षयः स्मृताः ॥ २ ॥ एकः स्वयम्भुर्भगवानाद्यो ब्रह्मा सनातनः। ब्रह्मणः सप्त वै पुत्रा महात्मानः स्वयम्भुवः ॥ ३ ॥ मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः। वशिष्ठश्च महाभागः सदृशो वै स्वयम्भुवा ॥ ४ ॥ सप्त ब्राह्मण इत्येते

पुराणे निश्चयं गताः। अत ऊर्द्धं प्रवच्चामि सर्व्वानेव प्रजापतीन् ॥ ५ ॥ अत्रिवंशे समुत्पन्नः ब्रह्मयोनिः सनातनः। प्राचीनबर्हि-र्भगवांस्तस्मात् प्रचेतसो दश ॥ ६ ॥ दशानां तनयस्त्वेको दक्षो नाम प्रजापतिः। तस्य द्वे नामनी लोके दक्षः क इति चो[illegible] मरीचेः कश्यपः पुत्रस्तस्य द्वे नामनी स्मृते। अरिष्टनेमि[illegible] कश्यपेत्यपरे विदुः ॥ ८ ॥ अत्रेश्चैवौरसः श्रीमान्राजा सोमश्च वीर्य्य-वान्। सहस्रं यश्च दिव्यानां युगानां पर्य्युपासिता ॥ ९ ॥ अर्य्यमा चैव भगवान् ये चास्य तनया विभो। एते प्रदेशाः कथिता भुव-नानां प्रभावनाः ॥ १० ॥ शशविन्दोश्च भार्य्याणां सहस्राणि दशा-च्युत। एकैकस्यां सहस्रन्तु तनयानामभूत्तदा ॥ ११ ॥ एवं शत-सहस्राणि दश तस्य महात्मनः। पुत्राणाञ्च न ते कञ्चिदिच्छ-न्त्यन्यं प्रजापतिम् ॥ १२ ॥ प्रजामाचक्षते विप्राः पुराणाः शाश-विन्दवीम्। स वृष्णिवंशप्रभवो महावंशः प्रजापतेः ॥ १३ ॥ एते प्रजानां पतयः समुद्दिष्टा यशस्विनः। अतः परं प्रवक्ष्यामि देवां-स्त्रिभुवनेश्वरान् ॥ १४ ॥ भगोऽंशश्चार्य्यमा चैव मित्रोऽथ वरुण-स्तथा। सविता चैव धाता च विवस्वांश्च महाबलः ॥ १५ ॥ त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते। इत्येते द्वादशादित्याः कश्यप-स्यात्मसम्भवाः ॥ १६ ॥ नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनावपि। मार्त्तण्डस्यात्मजावेतावष्टमस्य महात्मनः ॥ १७ ॥ ते च पूर्वं सुरा-श्चेति विविधाः पितरः स्मृताः। त्वष्टुश्चैवात्मजः श्रीमान् विश्वरूपो महायशाः ॥ १८ ॥ अजैकपादहिर्ब्रध्नो विरूपाक्षोऽथ रैवतः। हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥ १९ ॥ सावित्रश्च जय-न्तश्च पिनाकी चापराजितः। पूर्वमेव महाभागा वसवोऽष्टौ प्रकी-र्त्तिताः ॥ २० ॥ एत एवंविधा देवा मनोरेव प्रजापतेः। ते च पूर्वं सुराश्चेति द्विविधाः पितरः स्मृताः ॥ २१ ॥ शीलयौवनतस्त्वन्य-स्तथान्यः सिद्धसाध्ययोः। ऋभवो मरुतश्चैव देवानाञ्चादितो

गणाः ॥ २२ ॥ एवमेते समाम्नाता विश्वे देवास्तथाश्विनौ । आदित्याः क्षत्रियास्तेषां विशश्च मरुतस्तथा ॥ २३ ॥ अश्विनौ तु स्मृतौ शूद्रौ तपस्युग्रे समास्थितौ । स्मृतास्त्वङ्गिरसो देवा ब्राह्मणा इति निश्चयः ॥ २४ ॥ इत्येतत् सर्वदेवानां चातुर्वर्ण्यं प्रकीर्त्तितम् । एतान्वै प्रातरुत्थाय देवान् यस्तु प्रकीर्त्तयेत् ॥ २५ ॥ स्वजादन्यकृताच्चैव सर्वपापात् प्रमुच्यते । यवक्रीतोऽथ रैभ्यश्च अर्वावसुपरावसू ॥ २६ ॥ औषिजश्चैव काक्षीवान् वलश्चाङ्गिरसः स्मृतः । ऋषिर्मेधातिथेः पुत्रः कण्वो वर्हिषदस्तथा ॥ २७ ॥ त्रैलोक्यभावनास्तात प्राच्यां सप्तर्षयस्तथा । उन्मुचो विमुचश्चैव स्वस्त्यात्रेयश्च वीर्य्यवान् ॥ २८॥ प्रमुचश्चेध्मवाहश्च भगवांश्च दृढव्रतः । मित्रावरुणयोः पुत्रस्तथागस्त्यः प्रतापवान् ॥ २९ ॥ एते ब्रह्मर्षयो नित्यमास्थिता दक्षिणां दिशम् । उषङ्गुकषो धौम्यः परिव्याधश्च वीर्य्यवान् ॥३०॥ एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः । अत्रेः पुत्रश्च भगवांस्तथा सारस्वतः प्रभुः ॥३१॥ एते चैव महात्मानः पश्चिमामाश्रिता दिशम् । आत्रेयश्च वशिष्ठश्च काश्यपश्च महानृषिः ॥ ३२ ॥ गौतमोऽथ भरद्वाजो विश्वामित्रोऽथ कौशिकः । अथैव पुत्रो भगवान् ऋचीकस्य महात्मनः ॥ ३३ ॥ जमदग्निश्च सप्तैते उदीचीमाश्रिता दिशम् । एते प्रतिदिशं सर्वे कीर्त्तितास्तिग्मतेजसः ॥३४॥ साक्षिभूता महात्मानो भुवनानां प्रभावनाः । एवमेते महात्मानः स्थिता प्रत्येकशो दिशम् ॥ ३५ ॥ एतेषां कीर्त्तनं कृत्वा सर्वपापात् प्रमुच्यते । यस्यां यस्यां दिशि ह्येते तां दिशं शरणं गतः । मुच्यते सर्वपापेभ्यः स्वस्तिमांश्च गृहान् व्रजेत् ॥ ३६ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि स्वस्तिके
अष्टाधिकद्विशतोऽध्यायः ॥ २०८ ॥

युधिष्ठिर उवाच। पितामह महाप्राज्ञ युधि सत्यपराक्रम।
श्रोतुमिच्छामि कार्त्स्न्येन कृष्णमव्ययमीश्वरम् ॥ १ ॥ यच्चास्य
तेजः सुमहत् यच्च कर्म पुरा कृतम्। तन्मे सर्वं यथातत्त्वं ब्रूहि
त्वं पुरुषर्षभ ॥ २ ॥ तिर्य्यग्योनिगतो रूपं कथं धारितवान् प्रभुः।
केन कार्य्यनिसर्गेण तमाख्याहि महाबल ॥ ३ ॥

भीष्म उवाच। पुराहं मृगयां यातो मार्कण्डेयाश्रमे स्थितः।
तत्रापश्यन्मुनिगणान् समासीनान् सहस्रशः ॥ ४ ॥ ततस्ते मधु-
पर्केण पूजाञ्चक्रुरथो मयि। प्रतिगृह्य च तां पूजां प्रत्यनन्दमृषी-
नहम् ॥ ५ ॥ कथैषा कथिता तत्र कश्यपेन महर्षिणा। मनः-
प्रह्लादिनी दिव्या तामिहैकमनाः शृणु ॥ ६ ॥ पुरा दानवमुख्या
हि क्रोधलोभसमन्विताः। बलेन मत्ताः शतशो नरकाद्या महा-
सुराः ॥ ७ ॥ तथैव चान्ये बहवो दानवा युद्धदुर्म्मदाः। न सहन्ते
स्म देवानां समृद्धिं तामनुत्तमाम् ॥ ८ ॥ दानवैरर्द्द्यमानास्तु देवा
देवर्षयस्तथा। न शर्म्म लेभिरे राजन् विशमानास्ततस्ततः ॥ ९ ॥
पृथिवीमार्त्तरूपान्ते समपश्यन्दिवौकसः। दानवैरभिसंस्तीर्णां
घोररूपैर्महाबलैः। भारार्त्तामपहृष्टाञ्च दुःखितां संनिमज्जतीम्
॥ १० ॥ अथादितेयाः सन्त्रस्ता ब्रह्माणमिदमब्रुवन्। कथं शक्ष्या-
महे ब्रह्मन् दानवैरभिमर्द्दनम् ॥ ११ ॥ स्वयम्भूस्तानुवाचेदं निसृ-
ष्टोऽत्र विधिर्मया॥ १२ ॥ ते वरेणाभिसम्पन्ना बलेन च मदेन च।
नावबुध्यन्ति संमूढा विष्णुमव्यक्तदर्शनम् ॥ १३ ॥ वराहरूपिणं
देवमधृष्यममरैरपि। एष वेगेन गत्वा हि यत्र ते दानवाधमाः
॥ १४ ॥ अन्तर्भूमिगता घोरा निवसन्ति सहस्रशः। शमयिष्यति
तच्छ्रुत्वा जहृषुः सुरसत्तमाः ॥ १५ ॥ ततो विष्णुर्महातेजा वाराहं
रूपमास्थितः। अन्तर्भूमिं सम्प्रविश्य जगाम दितिजान् प्रति ॥१६॥
दृष्ट्वा च सहिताः सर्वे दैत्याः सत्त्वममानुषम्। प्रसह्य तरसा सर्वे
सन्तस्थुः कालमोहिताः ॥ १७ ॥ ततस्ते समभिद्रुत्य वराहं जगृहुः

क्षम्। संक्रुद्धाश्च वराहन्तं व्यकर्षन्त समन्ततः ॥ १८॥ दानवेन्द्रा महाकाया महावीर्य्यबलोच्छ्रिताः। नाशक्नुवंश्च किञ्चित्ते तस्य कर्त्तुं तदा विभो ॥ १९ ॥ ततोऽगच्छन् विस्मयन्ते दानवेन्द्रा भयं तथा। संशयं गतमात्मानं मेनिरे च सहस्रशः ॥ २० ॥ ततो देवाधिदेवः स योगात्मा योगसारथिः। योगमास्थाय भगवांस्तदा भरतसत्तम। विननाद महानादं क्षोभयन्दैत्यदानवान् ॥ २१ ॥ संनादिता येन लोकाः सर्वाश्चैव दिशो दश। तेन सन्नादशब्देन लोकानां क्षोभ आगमत् ॥ २२ ॥ सन्त्रस्ताश्च भृशं लोके देवाः शक्रपुरोगमाः। निर्विचेष्टं जगच्चापि बभूवातिभृशं तदा ॥ २३ ॥ स्थावरं जङ्गमञ्चैव तेन नादेन मोहितम्। ततस्ते दानवा सर्वे तेन नादेन भीषिताः ॥ २४ ॥ पेतुर्गतासवश्चैव विष्णुतेजःप्रमोहिताः। रसातलगतांश्चापि वराहस्त्रिदशद्विषः ॥ २५ ॥ खुरैर्विदारयामास मांसमेदोऽस्थिसञ्चयान्। नादेन तेन महता सनातन इति स्मृतः ॥ २६ ॥ पद्मनाभो महायोगी भूताचार्य्यः स भूतराट्। ततो देवगणाः सर्वे पितामहमुपाद्रवन् ॥ २७ ॥ तत्र गत्वा महात्मान ऊचुश्चैव जगत्पतिम्। नादोऽयं कीदृशो देव नैनं विद्म वयं प्रभो ॥ २८ ॥ कोऽसौ हि कस्य वा नादो येन विह्वलितं जगत्। देवाश्च दानवाश्चैव मोहितास्तस्य तेजसा ॥ २९ ॥ एतस्मिन्नन्तरे विष्णुर्वाराहं रूपमास्थितः। उदतिष्ठन्महाबाहो स्तूयमानो महर्षिभिः ॥ ३० ॥

पितामह उवाच। निहत्य दानवपतीन्महावर्ष्मा महाबलः। एष देवो महायोगी भूतात्मा भूतभावनः ॥ ३१ ॥ सर्वभूतेश्वरो योगी मुनिरात्मा तथात्मनः। स्थिरीभवत कृष्णोऽयं सर्वविघ्नविनाशनः ॥ ३२॥ कृत्वा कर्मातिसाध्वेतदशक्यममितप्रभः। समायातः स्वमात्मानं महाभागो महाद्युतिः ॥ ३३ ॥ पद्मनाभो महायोगी महात्मा भूतभावनः। न सन्तापो न भीः कार्य्या शोको

वा सुरसत्तमाः ॥ ३४ ॥ विशिष्टेन प्रभावस्य कालः संशयकारकः ।
लोकान् धारयता तेन नादौ मुक्तौ महात्मना ॥ ३५ ॥ स एष हि
महाबाहुः सर्वलोकनमस्कृतः । अच्युतः पुण्डरीकाक्षः सर्वभूतादि-
रीश्वरः ॥ ३६ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि अन्तर्भूमिविक्रीड़िते
नवाधिकद्विशततोऽध्यायः ॥ २०९ ॥

---

युधिष्ठिर उवाच । योगं मे परमं तात मोक्षस्य वद भारत ।
तमहं तत्त्वतो ज्ञातुमिच्छामि वदताम्वर ॥ १ ॥

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह ॥ २ ॥ कश्चिद्ब्राह्मण-
मासीनमाचार्य्यमृषिसत्तमम् । तेजोराशिं महात्मानं सत्यसन्धं
जितेन्द्रियम् ॥ ३ ॥ शिष्यः परममेधावी श्रेयोऽर्थी सुसमाहितः ।
चरणावुपसंगृह्य स्थितः प्राञ्जलिरब्रवीत् ॥ ४ ॥ उपासनात् प्रस-
न्नोऽसि यदि वै भगवन्मम । संशयो मे महान् कश्चित्तन्मे व्याख्यातु-
मर्हसि ॥ ५ ॥ कुतश्चाहं कुतश्च त्वं तत् सम्यग्ब्रूहि तत् परम् ।
कथञ्च सर्व्वभूतेषु समेषु द्विजसत्तम ॥ ६ ॥ सम्यग्वृत्तानि वर्त्तन्ते
विपरीताः क्षयोदयाः । वेदेषु चापि यद्वाक्यं लौकिकं व्यापकञ्च
यत् । एतद्विद्वन् यथातत्त्वं सर्वं व्याख्यातुमर्हसि ॥ ७ ॥

गुरुरुवाच । शृणु शिष्य महाप्राज्ञ ब्रह्म गुह्यमिदं परम् ।
अध्यात्मं सर्व्वविद्यानामागमानाञ्च यद्वसु ॥ ८ ॥ वासुदेवः परमिदं
विश्वस्य ब्रह्मणो मुखम् । सत्यं ज्ञानमथो यज्ञस्तितिक्षा दम
आर्ज्जवम् ॥ ९ ॥ पुरुषं सनातनं विष्णुं यन्तं वेदविदो विदुः ।
सर्गप्रलयकर्त्तारमव्यक्तं ब्रह्म शाश्वतम् ॥ १० ॥ तदिदं ब्रह्म
वार्ष्णेयमितिहासं शृणुष्व मे । ब्राह्मणो ब्राह्मणैः श्राव्यो राजन्यः

क्षत्रियैस्तथा ॥ ११ ॥ वैश्यो वैश्यैस्तथा श्राव्यः शूद्रः शूद्रैर्महा-
मनाः। माहात्म्यं देवदेवस्य विष्णोरमिततेजसः ॥ १२ ॥ अर्ह-
स्त्वमसि कल्याणं वार्ष्णेयं शृणु यत् परम्। कालचक्रमनाद्यं तं
भावाभावस्वलक्षणम् ॥ १३ ॥ त्रैलोक्यं सर्वभूतेषु चक्रवत् परि-
वर्त्तते। यत्तदक्षरमव्यक्तममृतं ब्रह्म शाश्वतम्। वदन्ति पुरुष-
व्याघ्र केशवं पुरुषर्षभम् ॥ १४ ॥ पितॄन्देवानृषींश्चैव तथा वै यक्ष-
राक्षसान्। नागासुरमनुष्यांश्च सृजते परमोऽव्ययः ॥ १५ ॥ तथैव
वेदशास्त्राणि लोकधर्म्मांश्च शाश्वतान्। प्रलयं प्रकृतिं प्राप्य युगादौ
सृजते पुनः ॥ १६ ॥ यथर्त्तावृतुलिङ्गानि नानारूपाणि पर्य्यये।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥१७॥ अथ यद्यद्यदा
भाति कालयोगाद्युगादिषु। तत्तदुत्पद्यते ज्ञानं लोकयात्राविधा-
नजम् ॥ १८ ॥ युगान्तेऽन्तर्हितान् देवान् सेतिहासान्महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥ १९ ॥ वेदविद्वेद भगवान्
वेदाङ्गानि बृहस्पतिः। भार्गवो नीतिशास्त्रन्तु जगाद जगतो
हितम् ॥ २० ॥ गान्धर्वं नारदो वेद भरद्वाजो धनुर्ग्रहम्। देवर्षि-
चरितं गार्ग्यं कृष्णात्रेयश्चिकित्सितम् ॥ २१ ॥ न्यायतन्त्राण्यनेकानि
तैस्तैरुक्तानि वादिभिः। हेत्वागमसमाचारैर्यदुक्तं तदुपास्यताम्
॥ २२ ॥ अनाद्यं तत् परं ब्रह्म न देवा नर्षयो विदुः। एक-
स्तद्वेद भगवान्धाता नारायणः प्रभुः ॥ २३ ॥ नारायणादृषिगणा-
स्तथा मुख्याः सुरासुराः। राजर्षयः पुराणाश्च परमं दुःखभेषजम्
॥ २४ ॥ पुरुषाधिष्ठितान भावान् प्रकृतिः सूयते यदा। हेतुयुक्त-
मतः पूर्वं जगत् संपरिवर्त्तते ॥ २५ ॥ दीपादन्ये यथा दीपाः
प्रवर्त्तन्ते सहस्रशः। प्रकृतिः सूयते तद्वदानन्त्यान्नापचीयते ॥ २६ ॥
अव्यक्तात् कर्मजा बुद्धिरहङ्कारं प्रसूयते। आकाशञ्चाप्यहङ्कारा-
द्वायुराकाशसम्भवः ॥ २७ ॥ वायोस्तेजस्ततश्चाप अद्भ्योऽथ वसुधो-
द्गता। मूलप्रकृतयोऽष्टौ ता जगदेतास्ववस्थितम् ॥ २८ ॥ ज्ञाने-

न्द्रियाण्यतः पञ्च पञ्चकर्म्मेन्द्रियाण्यपि । विषयाः पञ्च चैकञ्च विकारे षोड़शं मनः ॥ २९ ॥ श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणं ज्ञानेन्द्रियाण्यथ । पादौ पायुरुपस्थश्च हस्तौ वाक्कर्म्मणो अपि ॥ ३० ॥ शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च । विज्ञेयं व्यापकं चित्तं तेषु सर्व्वगतं मनः ॥ ३१ ॥ रसज्ञाने तु जिह्वेयं व्याहृते वाक् तथोच्यते। इन्द्रियैर्व्विविधैर्युक्तं सर्व्वं व्यक्तं मनस्तथा ॥ ३२ ॥ विद्यात्तु षोड़शैतानि दैवतानि विभागशः । देहेषु ज्ञानकर्त्तारमुपासीनमुपासते ॥ ३३ ॥ तद्वत् सोमगुणा जिह्वा गन्धस्तु पृथिवीगुणः । श्रोत्रं नभोगुणञ्चैव चक्षुरग्नेर्गुणस्तथा ॥ ३४ ॥ स्पर्शं वायुगुणं विद्यात् सर्व्वभूतेषु सर्व्वदा ॥ ३५ ॥ मनः सत्त्वगुणं प्राहुः सत्त्वमव्यक्तजं तथा । सर्व्वभूतात्मभूतस्थं तस्माद्बुध्येत बुद्धिमान् ॥ ३६ ॥ एते भावा जगत् सर्व्वं वहन्ति सचराचरम् । श्रिता विरजसं देवं यमाहुः प्रकृतेः परम् ॥ ३७ ॥ नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम् । व्याप्य शेते महानात्मा तस्मात् पुरुष उच्यते ॥ ३८ ॥ अजरः सोऽमरश्चैव व्यक्ताव्यक्तोपदेशवान् । व्यापकः सगुणः सूक्ष्मः सर्व्वभूतगुणाश्रयः ॥ ३९ ॥ यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान् । ज्ञानात्मानं यथा विद्यात् पुरुषं सर्व्वजन्तुषु ॥४०॥ श्रोत्रं वेदयते वेद्यं स शृणोति स पश्यति । कारणं तस्य देहोऽयं स कर्त्ता सर्व्वकर्म्मणाम् ॥ ४१ ॥ अग्निर्दारुगतो यद्वद्भिन्ने दारौ न दृश्यते । तथैवात्मा शरीरस्थो भिन्ने देहे न दृश्यते ॥ ४२॥ अग्निर्यथा ह्युपायेन मथित्वा दारु दृश्यते । तथैवात्मा शरीरस्थो योगेनैवात्र दृश्यते ॥ ४३ ॥ नदीष्वापो यथा युक्ता यथा सूर्य्ये मरीचयः । सन्ततत्वाद्यथा यान्ति तथा देहाः शरीरिणाम् ॥ ४४ ॥ स्वप्नयोगी यथैवात्मा पञ्चेन्द्रियसमायुतः । देहमुत्सृज्य वै याति तथैवात्रोपलभ्यते ॥ ४५ ॥ कर्म्मणा वाध्यते पूर्व्वं कर्म्मणा चोपलभ्यते । कर्म्मणा नीयतेऽन्यत्र स्वकृतेन बलीयसा ॥ ४६ ॥ स तु

देही यथा देहं त्यक्त्वान्यं प्रतिपद्यते। तथान्यं संप्रवक्ष्यामि भूतग्रामं स्वकर्मजम् ॥ ४७ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि वार्ष्णेयाध्यात्मे दशाधिकद्विशततोऽध्यायः ॥ २१० ॥

---

भीष्म उवाच। चतुर्विधानि भूतानि स्थावराणि चराणि च। अव्यक्तप्रभवान्याहुरव्यक्तनिधनानि च। अव्यक्तलक्षणं विद्यादव्यक्तात्मात्मकं मनः ॥ १ ॥ यथाश्वत्थकणीकायामन्तर्भूतो महाद्रुमः। निष्पन्नो दृश्यते व्यक्तमव्यक्तात् सम्भवस्तथा ॥ २ ॥ अभिद्रवत्ययस्कान्तमयो निश्चेतनं यथा। स्वभावहेतुजा भावा यद्वदन्यदपीदृशम् ॥ ३ ॥ तद्वदव्यक्तजा भावाः कर्त्तुः कारणलक्षणाः। अचेतनाश्चेतयितुः कारणादभिसंहताः ॥ ४ ॥ न भूर्न खं द्यौर्भूतानि नर्षयो न सुरासुराः। नान्यदासीदृते जीवमासेदुर्न तु संहतम् ॥ ५ ॥ पूर्वं नित्यं सर्वगतं मनोहेतुमलक्षणम्। अज्ञानकर्मनिर्दिष्टमेतत् कारणलक्षणम् ॥ ६ ॥ तत्कारणैर्हि संयुक्तं कार्य्यसंग्रहकारकम्। येनैतद्वर्त्तते चक्रमनादिनिधनं महत् ॥ ७ ॥ अव्यक्तनाभं व्यक्तारं विकारपरिमण्डलम्। क्षेत्रज्ञाधिष्ठितं चक्रं स्निग्धाक्षं वर्त्तते ध्रुवम् ॥ ८ ॥ स्निग्धत्वात् विलपत् सर्वं चक्रेऽस्मिन् पीड्यते जगत्। तिलपीडैरिवाक्रम्य भोगैरज्ञानसम्भवैः ॥ ९ ॥ कर्मवत् कुरुते तर्षादहङ्कारपरिग्रहः। कार्य्यकारणसंयोगे स हेतुरुपपादितः ॥ १० ॥ नात्येति कारणं कार्य्यं न कार्य्यं कारणं तथा। कार्य्याणान्तूपकरणे कालो भवति हेतुमान् ॥ ११ ॥ हेतुयुक्ताः प्रकृतयो विकाराश्च परस्परम्। अन्योऽन्यमभिवर्त्तन्ते पुरुषाधिष्ठिताः सदा ॥ १२ ॥ राजसैस्तामसैर्भावैश्च्युतो हेतुबलान्वितः। क्षेत्रज्ञमेवानुयाति पांशुर्वातेरितो यथा ॥ १३ ॥ न च

तः सृज्यते भावैर्न ते तेन महात्मना। सरजस्कोऽरजस्कश्च नैव वायुर्भवेत्तथा ॥ १४ ॥ तथैतदन्तरं विद्यात् सत्त्वक्षेत्रज्ञयोर्बुधः। अभ्यासात् स तथायुक्तो न गच्छेत् प्रकृतिं पुनः ॥ १५ ॥ सन्देह-मेतमुत्पन्नमच्छिनद्भगवानृषिः। तथा वार्त्तां समीहेत कृतलक्षण-सम्मिताम् ॥ १६ ॥ वीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः। ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनः ॥ १७ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वार्ष्णेयाध्यात्मे एकादशाधिकद्विशततोऽध्यायः ॥ २११ ॥

---

भीष्म उवाच। प्रवृत्तिलक्षणो धर्मो यथायमुपपद्यते। तेषां विज्ञाननिष्ठानामन्यत्तत्त्वं न रोचते ॥ १ ॥ दुर्लभा वेदविद्वांसो वेदोक्तेषु व्यवस्थिताः। प्रयोजनमहत्त्वात्तु मार्गमिच्छन्ति संस्तुतम् ॥ २ ॥ सद्भिराचरितत्वात्तु वृत्तमेतदगर्हितम्। इयं सा बुद्धि-रन्येत्य यया याति परां गतिम् ॥ ३ ॥ शरीरवानुपादत्ते मोहात् सर्वान् परिग्रहान्। क्रोधलोभादिभिर्भावैर्युक्तो राजसतामसैः ॥४॥ नाशुद्धमाचरेत्तस्मादभीप्सन्देहयापनम्। कर्मणा विवरं कुर्वन्न लोकानाप्नुयाच्छुभान् ॥ ५ ॥ लोहयुक्तं यथा हेम विपक्वं न विरा-जते। तथा पक्वकषायाख्यं विज्ञानं न प्रकाशते ॥ ६ ॥ यश्च धर्मं चरेल्लोभात् कामक्रोधावनुप्लवन्। धर्म्यं पन्थानमाक्रम्य सानुबन्धो विनश्यति ॥ ७ ॥ शब्दादीन् विषयांस्तस्मान्न संरागादयं व्रजेत्। क्रोधो हर्षो विषादश्च जायते ह परस्परात् ॥ ८ ॥ पञ्चभूतात्मके देहे सत्त्वे राजसतामसे। कर्मभिष्टुवते चायं कं वा क्रोशति किं वदन् ॥ ९ ॥ स्पर्शरूपरसाद्येषु सङ्गं गच्छन्ति बालिशाः। नाव-गच्छन्ति विज्ञानादात्मानं पार्थिवं गुणम् ॥ १० ॥ मृन्मयं शरणं यद्वन्मृदैव परिलिप्यते। पार्थिवोऽयं तथा देहो मृद्विकारान्न

नश्यति ॥ ११ ॥ मधु तैलं पयः सर्पिर्मांसानि लवणं गुड़ः।
धान्यानि फलमूलानि मृद्विकाराः सहाम्भसा ॥ १२ ॥ यद्वत्
कान्तारमातिष्ठन्नौत्सुक्यं समनुव्रजेत्। ग्राम्यमाहारमादद्या-
दस्वाद्वपि हि यापनम् ॥ १३ ॥ तद्वत् संसारकान्तारमातिष्ठन्
श्रमतत्परः। यात्रार्थमद्यादाहारं व्याधितो भेषजं यथा ॥ १४ ॥
सत्यशौचार्जवत्यागैर्वर्च्चसा विक्रमेण च। क्षान्त्या धृत्या च बुद्ध्या
च मनसा तपसैव च ॥ १५ ॥ भावान् सर्वानुपावृत्तान् समीक्ष्य
विषयात्मकान्। शान्तिमिच्छन्नदीनात्मा संयच्छेदिन्द्रियाणि च
॥ १६ ॥ सत्त्वेन रजसा चैव तमसा चैव मोहिताः। चक्रवत्
परिवर्त्तन्ते ह्यज्ञानाज्जन्तवो भृशम् ॥ १७ ॥ तस्मात् सम्यक् परी-
क्षेत दोषानज्ञानसम्भवान्। अज्ञानप्रभवं दुःखमहङ्कारं परि-
त्यजेत् ॥ १८ ॥ महाभूतानीन्द्रियाणि गुणाः सत्त्वं रजस्तमः।
त्रैलोक्यं सेश्वरं कर्म अहङ्कारे प्रतिष्ठितम् ॥ १९ ॥ यथेह नियतः
कालो दर्शयत्यार्त्तवान् गुणान्। तद्वद्भूतेष्वहङ्कारं विद्यात् कर्म-
प्रवर्त्तकम् ॥ २० ॥ सम्मोहकं तमो विद्यात् कृष्णमज्ञानसम्भवम्।
प्रीतिदुःखनिबद्धांश्च समस्तांस्त्रीनथो गुणान् ॥ २१ ॥ सत्त्वस्य
रजसश्चैव तमसश्च निबोध तान्। प्रसादो हर्षजा प्रीतिरसन्देहो
धृतिः स्मृतिः। एतान् सत्त्वगुणान् विद्यादिमान्राजसतामसान् ॥२२॥
कामक्रोधौ प्रमादश्च लोभमोहौ भयं क्लमः। विषादशोकावरति-
र्मानदर्पावनार्य्यता ॥ २३ ॥ दोषाणामेवमादीनां परीक्ष्य गुरु-
लाघवम्। विमृषेदात्मसंस्थानमेकैकमनुसन्ततम् ॥ २४ ॥

युधिष्ठिर उवाच। के दोषा मनसा त्यक्ताः के बुद्ध्या
शिथिलीकृताः। के पुनः पुनरायान्ति के मोहादफला इव ॥२५॥
केषां बलाबलं बुद्ध्या हेतुभिर्विमृषेद्बुधः। एष मे संशयस्तात तन्मे
ब्रूहि पितामह ॥ २६ ॥

भीष्म उवाच। दोषैर्मूलादवच्छिन्नैर्विशुद्धात्मा विमुच्यते।

विनाशयति सम्भूतमयस्मयमयो यथा । तथाकृतात्मा सहजैर्दोषैर्नश्यति तामसैः ॥ २७ ॥ राजसं तामसञ्चैव शुद्धात्मकमकल्मषम् । तत् सर्वं देहिनां वीजं सत्त्वमात्मवतः समम् ॥ २८ ॥ तस्मादात्मवता वर्ज्यं रजश्च तम एव च । रजस्तमोभ्यां निर्मुक्तं सत्त्वं निर्मलतामियात् ॥ २९ ॥ अथ वा मन्त्रवद्ब्रूयुरात्मादानाय दुष्कृतम् । सैव हेतुरनादाने शुद्धधर्मानुपालने ॥ ३० ॥ राजसाधर्मयुक्तानि कार्य्याण्यपि समाप्नुते । अर्थयुक्तानि चात्यर्थं कामान् सर्वांश्च सेवते ॥ ३१ ॥ तमसा लोभयुक्तानि क्रोधजानि च सेवते । हिंसाविहाराभिरतस्तन्द्रीनिद्रासमन्वितः ॥ ३२ ॥ सत्त्वस्थः सात्त्विकान् भावान् शुद्धान् पश्यति संश्रितः । स देही विमलः श्रीमान् श्रद्धाविद्यासमन्वितः ॥ ३३ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि वार्ष्णेयाध्यात्मे
द्वादशाधिकद्विशततोऽध्यायः ॥ २१२ ॥

---

भीष्म उवाच । रजसा साध्यते मोहस्तमसा भरतर्षभ । क्रोधलोभौ भयं दर्प एतेषां सादनाच्छुचिः ॥ १ ॥ परमं परमात्मानं देवमक्षयमव्ययम् । विष्णुमव्यक्तसंस्थानं विशुं तं देवसत्तमम् ॥२॥ तस्य मायापिनद्धाङ्गा ज्ञानभ्रष्टा विचेतसः । मानवा ज्ञानसंमोहात्ततः क्रोधं प्रयान्ति वै ॥ ३ ॥ क्रोधात् काममवाप्याथ लोभमोहौ च मानवाः । मानदर्पादहङ्कारमहङ्कारात्ततः क्रिया ॥ ४ ॥ क्रियाभिः स्नेहसम्बन्धात् स्नेहाच्छोकमनन्तरम् । सुखदुःखक्रियारम्भाज्जन्माजन्मकृतक्षणाः ॥ ५ ॥ जन्मतो गर्भवासन्तु शुक्रशोणितसम्भवम् । पुरीषमूत्रविक्लेदं शोणितप्रभवाविलम् ॥६॥ तृष्णाभिभूतस्तैर्बद्धस्तानेवाभिपरिप्लवन् । संसारतन्त्रवाहिन्यस्तत्र बुध्येत योषितः ॥७॥ प्रकृत्या क्षेत्रभूतास्ता नराः क्षेत्रज्ञलक्षणाः ।

तस्मादेता विशेषेण न चाभीयुर्विपश्चितः ॥ ८ ॥ कृत्या ह्येता घोर-रूपा मोहयन्त्यविचक्षणान्। रजस्यन्तर्हिता मूर्त्तिरिन्द्रियाणां सनातनी ॥ ९ ॥ तस्मात्तर्षात्मकाद्रागाद्बीजाज्जायन्ति जन्तवः। स्वदेहजानस्वसंज्ञान् यद्वदङ्गात् कृमींस्त्यजेत्। स्वसंज्ञानस्वकां-स्तद्वत् सुतसंज्ञान् कृमींस्त्यजेत् ॥ १० ॥ शुक्रतो रसतश्चैव देहा-ज्जायन्ति जन्तवः। स्वभावात् कर्मयोगाद्वा तानुपेक्षेत बुद्धिमान् ॥ ११ ॥ रजस्तमसि पर्य्यस्तं सत्त्वञ्च रजसि स्थितम्। ज्ञानाधि-ष्ठितमव्यक्तं बुद्ध्यहङ्कारलक्षणम् ॥ १२ ॥ तद्बीजं देहिनामाहु-स्तद्बीजं जीवसंज्ञितम्। कर्मणा कालयुक्तेन संसारपरिवर्त्तनम् ॥ १३ ॥ रमत्ययं यथा स्वप्ने मनसा देहवानिव। कर्मगर्भैर्गुणै-र्देही गर्भे तदुपलभ्यते ॥ १४ ॥ कर्मणा बीजभूतेन चोद्यते यद्‌-यदिन्द्रियम्। जायते तदहङ्कारात्रागयुक्तेन चेतसा ॥ १५ ॥ शब्द-रागात् श्रोत्रमस्य जायते भावितात्मनः। रूपरागात्तथा चक्षु-र्घ्राणं गन्धचिकीर्षया ॥ १६ ॥ स्पर्शने त्वक् तथा वायुः प्राणापान-व्यपाश्रयः। व्यानोदानौ समानश्च पञ्चधा देहयापनम् ॥ १७ ॥ सञ्जातैर्जायते गात्रैः कर्मजैर्ब्रह्मणा वृतः। दुःखाद्यन्तैर्दुःखमध्यै-र्नरः शारीरमानसैः ॥ १८ ॥ दुःखं विद्यादुपादानादभिमानाच्च वर्द्धते। त्यागात्तेभ्यो निरोधः स्यान्निरोधज्ञो विमुच्यते ॥ १९ ॥ इन्द्रियाणां रजस्येव प्रलयप्रभवावुभौ। परीक्ष्य सञ्चरेद्विद्वान् यथावच्छास्त्रचक्षुषा ॥ २० ॥ ज्ञानेन्द्रियाणीन्द्रियार्थान्नोपसर्पन्त्य-तर्षुलम्। हीनैश्च करणैर्देही न देहं पुनरर्हति ॥ २१ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वार्ष्णेयाध्यात्मे त्रयोदशाधिकद्विशततोऽध्यायः ॥२१३ ॥

भीष्म उवाच। अत्रोपायं प्रवक्ष्यामि यथावच्छास्त्रचक्षुषा। तद्विज्ञानाच्चरन्राजन् प्राप्नुयात् परमां गतिम् ॥ १॥ सर्वेषामेव भूतानां पुरुषश्रेष्ठ उच्यते। पुरुषेभ्यो द्विजानाहुर्द्विजेभ्यो मन्त्रदर्शिनः ॥ २ ॥ सर्वभूतात्मभूतास्ते सर्वज्ञाः सर्वदर्शिनः। ब्राह्मणा वेदशास्त्रज्ञास्तत्त्वार्थगतनिश्चयाः ॥ ३ ॥ नेत्रहीनो यथा ह्येकः कृच्छ्राणि लभतेऽध्वनि। ज्ञानहीनस्तथा लोके तस्माज्ज्ञानविदोऽधिकाः ॥ ४ ॥ तांस्तानुपासते धर्मान् धर्मकामा यथागमम्। न त्वेषामर्थसामान्यमन्तरेण गुणानिमान् ॥ ५ ॥ वाग्देहमनसां शौचं क्षमा सत्यं धृतिः स्मृतिः। सर्वधर्मेषु धर्मज्ञा ज्ञापयन्ति गुणाञ्छुभान् ॥ ६ ॥ यदिदं ब्रह्मणो रूपं ब्रह्मचर्यमिति स्मृतम्। परन्तत् सर्वधर्मेभ्यस्तेन यान्ति परां गतिम् ॥ ७ ॥ लिङ्गसंयोगहीनं यत् शब्दस्पर्शविवर्जितम्। श्रोत्रेण श्रवणञ्चैतच्चक्षुषा चैव दर्शनम् ॥ ८ ॥ वाक् सम्भाषाप्रवृत्तं यत्तन्मनः परिवर्जितम्। बुद्ध्या साध्यवसायीत ब्रह्मचर्यमकल्मषम् ॥ ९ ॥ सम्यग्वृत्तिर्ब्रह्मलोकं प्राप्नुयान्मध्यमः सुरान्। द्विजाग्र्यो जायते विद्वान् कन्यसीं वृत्तिमास्थितः ॥ १० ॥ सुदुष्करं ब्रह्मचर्यमुपायन्तत्र मे शृणु। संप्रवृत्तमुदीर्णञ्च निगृह्णीयाद्द्विजो रजः ॥ ११ ॥ योषितो न कथाः श्राव्या न निरीक्ष्या निरम्बराः। कथञ्चिद्दर्शनादासां दुर्बलानाविशेद्रजः ॥ १२ ॥ रागोत्पन्नश्चरेत् कृच्छ्रमह्नस्त्रिः प्रविशेदपः। मग्नः स्वप्ने च मनसा त्रिर्जपेदघमर्षणम् ॥ १३ ॥ पाप्मानं निर्दहेदेवमन्तर्भूतरजोमयम्। ज्ञानयुक्तेन मनसा सन्ततेन विचक्षणः ॥ १४ ॥ कुणपामेध्यसंयुक्तं यद्वदच्छिद्रबन्धनम्। तद्वद्देहगतं विद्यादात्मानं देहबन्धनम् ॥ १५ ॥ वातपित्तकफान्रक्तं त्वङ्मांसं स्नायुमस्थि च। मज्जां देहं शिराजालैस्तर्पयन्ति रसा नृणाम् ॥ १६ ॥ दश विद्याद्धमन्योऽत्र पञ्चेन्द्रियगुणावहाः। याभिः सूक्ष्माः प्रजायन्ते धमन्योऽन्याः सहस्रशः ॥ १७ ॥ एवमेताः शिरानद्यो

रजोदा देहसागरम्। तर्पयन्ति यथाकालमापगा इव सागरम् ॥ १८ ॥ मध्ये च हृदयस्यैका शिरा तत्र मनोवहा। शुक्रं सङ्कल्पजं नृणां सर्वगात्रैर्विमुञ्चति ॥१९॥ सर्वगात्रप्रतापिन्यस्तस्या ह्यनुगताः शिराः। नेत्रयोः प्रतिपद्यन्ते वहन्त्यस्तैजसं गुणम् ॥ २० ॥ पयस्यन्तर्हितं सर्पिर्यद्वन्निर्मथ्यते खजैः। शुक्रं निर्मथ्यते यद्वद्देहसङ्कल्पजैः खजैः ॥ २१ ॥ स्वप्नेऽप्येवं तथाभ्येति मनः सङ्कल्पजं रजः। शुक्रं सङ्कल्पजं देहात् सृजत्यस्य मनोवहा ॥ २२ ॥ महर्षिर्भगवानत्रिर्वेद तच्छुक्रसम्भवम्। त्रिवीजमिन्द्रदैवत्यं तस्मादिन्द्रियमुच्यते ॥ २३ ॥ ये वै शुक्रगतिं विद्युर्भूतसङ्कल्पकारिकाम्। विरागा दग्धदोषास्ते नाप्नुयुर्देहसम्भवम् ॥ २४ ॥ गुणानां साम्यमागत्य मनसैव मनोवहम्। देहकर्मानुदन् प्राणानन्तकाले विमुच्यते॥२५॥ भविता मनसो ज्ञानं मन एव प्रजायते। ज्योतिष्मद्विरजो नित्यं मन्त्रसिद्धं महात्मना ॥ २६ ॥ तस्मात्तदभिघाताय कर्म कुर्यादकल्मषम्। रजस्तमश्च हित्वेह यथेष्टां गतिमाप्नुयात् ॥ २७ ॥ तरुणाधिगतं ज्ञानं जरादुर्बलतां गतम्। विपक्वबुद्धिः कालेन आदत्ते मानसं वलम् ॥ २८ ॥ स दुर्गमिव पन्थानमतीत्य गुणबन्धनम्। यथा पश्येत्तथा दोषानतीत्यामृतमश्नुते ॥ २९ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि वार्ष्णेयाध्यात्मे चतुर्द्दशाधिकद्विशततोऽध्यायः ॥ २१४ ॥

---

भीष्म उवाच। दुरन्तेष्विन्द्रियार्थेषु सक्ताः सीदन्ति जन्तवः। ये त्वसक्ता महात्मानस्ते यान्ति परमां गतिम् ॥ १ ॥ जन्ममृत्युजरादुःखैर्व्याधिभिर्मानसक्लमैः। दृष्ट्वैव सततं लोकं घटेन्मोक्षाय बुद्धिमान् ॥ २ ॥ वाङ्मनोभ्यां शरीरेण शुचिः स्यादनहङ्कृतः। प्रशान्तो ज्ञानवान् भिक्षुर्निरपेक्षश्चरेत् सुखम् ॥ ३ ॥ अथ वा

मनसः सङ्गं पश्यन् भूतानुकम्पया। तत्राप्युपेक्षां कुर्वीत ज्ञात्वा कर्मफलं जगत् ॥ ४ ॥ यत् कृतं स्याच्छुभं कर्म पापं वा यदि वाश्नुते। तस्माच्छुभानि कर्माणि कुर्य्याद्वाग्बुद्धिकर्मभिः ॥ ५ ॥ अहिंसा सत्यवचनं सर्वभूतेषु चार्ज्जवम्। क्षमा चैवाप्रमादश्च यस्यैते स सुखी भवेत् ॥ ६ ॥ तस्मात् समाहितं बुद्ध्या भूतेषु धारयेत्। यश्चैनं परमं धर्मं सर्वभूतसुखावहम् ॥ ७ ॥ दुःखनिःसरणं वेद सर्वज्ञः स सुखी भवेत्। तस्मात् समाहितं बुद्ध्या मनो भूतेषु धारयेत् ॥ ८ ॥ नापध्यायेन्न स्पृहयेन्नावद्धं चिन्तयेदसत्। अथामोघप्रयत्नेन मनो ज्ञाने निवेशयेत् ॥ ९ ॥ वाचामोघप्रयासेन मनोज्ञं तत् प्रवर्त्तते। विवक्षता च सद्वाक्यं धर्मसूक्ष्ममवेक्षता ॥१०॥ सत्यां वाचमहिंस्राञ्च वदेदनपवादिनीम्। कल्कापेतामपरुषामनृशंसामपैशुनाम् ॥ ११॥ ईदृगल्पञ्च वक्तव्यमविक्षिप्तेन चेतसा। वाक्प्रवद्धो हि संसारो विरागाद्व्याहरेद्यदि ॥ १२ ॥ वुद्ध्याप्यनुगृहीतेन मनसा कर्म तामसम्। रजोभूतैर्हि करणैः कर्मणि प्रतिपद्यते ॥ १३ ॥ स दुःखं प्राप्य लोकेऽस्मिन्नरकायोपपद्यते। तस्मान्मनो वाक्शरीरैराचरेद्धैर्य्यमात्मनः ॥ १४ ॥ प्रकीर्णमेषभारं हि यद्वद्धार्य्येत दस्युभिः। प्रतिलोमां दिशं वुद्ध्वा संसारमबुधास्तथा ॥ १५ ॥ तानेव च यथा दस्युः क्षिप्त्वा गच्छेच्छिवां दिशम्। तथा रजस्तमःकर्माण्युत्सृज्य प्राप्नुयात् सुखम् ॥ १६ ॥ निःसन्दिग्धमनीहो वै मुक्तः सर्वपरिग्रहैः। विविक्तचारी लघ्वाशी तपस्वी नियतेन्द्रियः ॥ १७ ॥ ज्ञानदग्धपरिक्लेशः प्रयोगरतिरात्मवान्। निष्प्रचारेण मनसा परं तदधिगच्छति ॥ १८ ॥ धृतिमानात्मवान् बुद्धिं निगृह्णीयादसंशयम्। मनो बुद्ध्या निगृह्णीयाद्विषयान्मनसात्मनः ॥ १९ ॥ निगृहीतेन्द्रियस्यास्य कुर्वाणस्य मनो वशे। देवतास्तत् प्रकाशन्ते हृष्टा यान्ति तमीश्वरम् ॥ २० ॥ ताभिः संसक्तमनसो ब्रह्म तत् सम्प्रकाशते। एतैश्चापगतैः सत्त्वे ब्रह्मभूयाय

कल्पते ॥ २१ ॥ अथ वा न प्रकाशेत योगतन्त्रैरुपक्रमेत्। येन तन्मयतस्तन्त्रं वृत्तिः स्यात्तत्तदाचरेत् ॥ २२ ॥ कुणकल्माषपिण्याकशाकयावकशक्तवः। तथा मूलफलं भैक्ष्यं पर्य्यायेणोपयोजयेत् ॥ २३ ॥ आहारनियमञ्चैव देशे काले च सात्त्विकम्। तत् परीक्ष्यानुवर्त्तेत तत् प्रवृत्तमनुपूर्वकम् ॥ २४ ॥ प्रवृत्तं नोपरुन्धेत शनैरग्निमिवेन्धयेत्। ज्ञानान्वितं तथा ज्ञानमर्कवत् सम्प्रकाशते ॥२५॥ ज्ञानाधिष्ठानमज्ञानं त्रींल्लोकानधितिष्ठति। विज्ञानानुगतं ज्ञानमज्ञानेनोपकृष्यते ॥ २६ ॥ पृथक्त्वात् संप्रयोगाच्च नासूयुर्वेद शाश्वतम्। स तयोरपवर्गज्ञो वीतरागो विमुच्यते ॥ २७ ॥ वयोऽतीतो जरामृत्यु जित्वा ब्रह्म सनातनम्। अमृतं तदवाप्नोति यत्तदक्षरमव्ययम् ॥ २८ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि वार्ष्णेयाध्यात्मे
पञ्चदशाधिकद्विशततोऽध्यायः ॥ २१५ ॥

---

भीष्म उवाच। निष्कल्मषं ब्रह्मचर्य्यमिच्छता चरितुं सदा। निद्रा सर्वात्मना त्याज्या स्वप्नदोषानवेक्षता ॥ १ ॥ स्वप्ने हि रजसा देही तमसा चाभिभूयते। देहान्तरमिवापन्नश्चरत्यपगतस्पृहः ॥२॥ ज्ञानाभ्यासाज्जागरणं जिज्ञासार्थमनन्तरम्। विज्ञानाभिनिवेशात्तु जागरत्यनिशं सदा ॥ ३ ॥ तत्राह को न्वयं भावः स्वप्ने विषयवानिव। प्रलीनैरिन्द्रियैर्देही वर्त्तते देहवानिव ॥ ४ ॥ अत्रोच्यते यथा ह्येतद्वेद योगेश्वरो हरिः। तथैतदुपपन्नार्थं वर्णयन्ति महर्षयः ॥ ५ ॥ इन्द्रियाणां श्रमात् स्वप्नमाहुः सर्वगतं बुधाः। मनसस्त्वप्रलीनत्वात्तत्तदाहुर्निदर्शनम् ॥ ६ ॥ कार्य्यं व्यासक्तमनसः सङ्कल्पो जाग्रतो ह्यपि। तद्वन्मनोरथैश्वर्य्यं स्वप्ने तद्वन्मनोगतम्॥७॥ संसाराणामसंख्यानां कामात्मा तदवाप्नुयात्। मनस्यन्तर्हितं सर्वं

वेद सोत्तमपूरुषः ॥ ८ ॥ गुणानामपि यद्येतत् कर्मणा चाप्युप-
स्थितम् । तत्तच्छ्रंसन्ति भूतानि मनो यद्भावितं यथा ॥ ९ ॥
ततस्तमुपवर्त्तन्ते गुणा राजसतामसाः । सात्त्विका वा यथा योग-
मानन्त्यर्थफलोदयम् ॥ १० ॥ ततः पश्यन्त्यसंबुद्ध्या वातपित्तकफो-
त्तरान् । रजस्तमोगतैर्भावैस्तदप्याहुर्दुरत्ययम् ॥ ११ ॥ प्रसन्नै-
रिन्द्रियैर्यद्यत् सङ्कल्पयति मानसम् । तत्तत् स्वप्नेऽप्युपगते मनो
दृष्टिर्निरीक्षते ॥ १२ ॥ व्यापकं सर्वभूतेषु वर्त्ततेऽप्रतिघं मनः ।
आत्मप्रभावात्तं विद्यात् सर्वा ह्यात्मनि देवताः ॥ १३ ॥ मनस्यन्त-
र्हितं द्वारं देहमास्थाय मानुषम् । यद्यत् सदसदव्यक्तं स्वपित्यस्मि
न्निदर्शनम् । सर्वभूतात्मभूतस्थं तमध्यात्मगुणं विदुः ॥ १४ ॥
लिप्सेत मनसा यश्च सङ्कल्पादैश्वरं गुणम् । आत्मप्रसादं तं
विद्यात् सर्वा ह्यात्मनि देवताः ॥ १५ ॥ एवं हि तपसा युक्तमर्क-
वत्तमसः परम् । त्रैलोक्यप्रकृतिर्देही तमसोऽन्ते महेश्वरः ॥१६॥
तपो ह्यधिष्ठितं देवैस्तपोघ्नमसुरैस्तमः । एतद्देवासुरैर्गुप्तं तदाहु-
र्ज्ञानलक्षणम् ॥ १७ ॥ सत्त्वं रजस्तमश्चेति देवासुरगुणान् विदुः ।
सत्त्वं देवगुणं विद्यादितरावासुरौ गुणौ ॥ १८ ॥ ब्रह्म तत् परमं
ज्ञानममृतं ज्योतिरक्षरम् । ये विदुर्भावितात्मानस्ते यान्ति परमां
गतिम् ॥ १९ ॥ हेतुमच्छक्यमाख्यातुमेतावज्ज्ञानचक्षुषा । प्रत्या-
हारेण वा शक्यमक्षरं ब्रह्म वेदितुम् ॥ २० ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि वार्ष्णेयाध्यात्मे
षोड़शाधिकद्विशततोऽध्यायः ॥ २१६ ॥

---

भीष्म उवाच । न स वेद परं ब्रह्म यो न वेद चतुष्टयम् ।
व्यक्ताव्यक्तञ्च यत्तत्त्वं संप्रोक्तं परमर्षिणा ॥ १ ॥ व्यक्तं मृत्युमुखं
विद्यादव्यक्तममृतं पदम् । प्रवृत्तिलक्षणं धर्ममृषिर्नारायणोऽब्र-

वीत् ॥ २ ॥ तत्रैवावस्थितं सर्वं त्रैलोक्यं सचराचरम् । निवृत्ति-
लक्षणं धर्ममव्यक्तं ब्रह्म शाश्वतम् ॥ ३ ॥ प्रवृत्तिलक्षणं धर्मं
प्रजापतिरथाब्रवीत् । प्रवृत्तिः पुनरावृत्तिर्निवृत्तिः परमा गतिः
॥ ४ ॥ तां गतिं परमामेति निवृत्तिपरमो मुनिः । ज्ञानतत्त्वपरो
नित्यं शुभाशुभनिदर्शकः ॥ ५ ॥ तदेवमेतौ विज्ञेयावव्यक्तपुरुषा-
वुभौ । अव्यक्तपुरुषाभ्यान्तु तत् स्यादन्यन्महत्तरम् ॥ ६ ॥ तं
विशेषमवेक्षेत विशेषेण विचक्षणः । अनाद्यन्तावुभावेतावलिङ्गौ
चाप्युभावपि ॥ ७ ॥ उभौ नित्यावविचलौ महद्भ्यश्च महत्तरौ ।
सामान्यमेतदुभयोरेवं ह्यन्यद्विशेषणम् ॥ ८ ॥ प्रकृत्या सर्गधर्मिण्या
तथा त्रिगुणधर्मया । विपरीतमतो विद्यात् क्षेत्रज्ञस्य स्वलक्षणम्
॥ ९ ॥ प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् । अग्राह्यौ पुरु-
षावेतावलिङ्गत्वादसंहितौ ॥ १० ॥ संयोगलक्षणोत्पत्तिः कर्मजा
गृह्यते यया । करणैः कर्मनिर्वृत्तिः कर्त्ता यद्यद्विचेष्टते । कीर्त्यते
शब्दसंज्ञाभिः कोऽहमेषोऽप्यसाविति ॥ ११ ॥ उष्णीषवान् यथा
वस्त्रैस्त्रिभिर्भवति संवृतः । संवृतोऽयं तथा देही सत्त्वराजस-
तामसैः ॥ १२ ॥ तस्माच्चतुष्टयं वेद्यमेतैर्हेतुभिरावृतम् । यथा-
संज्ञो ह्ययं सम्यगन्तकाले न मुह्यति ॥ १३ ॥ श्रियं दिव्यामभि-
प्रेप्सुर्वर्ष्म वान्मनसा शुचिः । शरीरैरिन्द्रियैरुग्रैश्चरेन्निष्कल्मषं तपः
॥ १४ ॥ त्रैलोक्यं तपसा व्याप्तमन्तर्भूतेन भास्वता । सूर्य्यश्च चन्द्रमा-
श्चैव भासतस्तपसा दिवि ॥ १५ ॥ प्रकाशस्तपसो ज्ञानं लोके
संशब्दितं तपः । रजस्तमोघ्नं यत् कर्म तपसस्तत् स्वलक्षणम् ॥१६॥
ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते । वाङ्मनोनियमः सम्यङ्-
मानसं तप उच्यते ॥ १७ ॥ विधिज्ञेभ्यो द्विजातिभ्यो ग्राह्यमन्नं
विशिष्यते । आहारनियमेनास्य पाप्मा शाम्यति राजसः ॥ १८ ॥
वैमनस्यञ्च विषये यान्त्यस्य करणानि च । तस्मात्तन्मात्रमादद्या-
द्यावदत्र प्रयोजनम् ॥ १९ ॥ अन्तकाले बलोत्कर्षाच्छनैः कुर्य्या-

दनातुरः । एवं युक्तेन मनसा ज्ञानं यदुपपद्यते ॥ २० ॥ रजो-
वर्ज्योऽप्ययं देही देहवाञ्छब्दवच्चरेत् । कार्य्यैरव्याहतमतिर्वैरा-
ग्यात् प्रकृतिस्थिरः ॥ २१ ॥ आदेहादप्रमादाच्च देहान्ताद्विप्र-
मुच्यते । हेतुयुक्तः सदा सर्गो भूतानां प्रलयस्तथा ॥ २२ ॥ पर-
प्रत्ययसर्गे तु नियतिर्नानुवर्त्तते । भावान्तप्रभवप्रज्ञा आसते ये
विपर्य्ययम् ॥ २३ ॥ धृत्या देहान्धारयन्तो बुद्धिसङ्क्षिप्तचेतसः ।
स्थानेभ्यो ध्वंसमानाश्च सूक्ष्मत्वात्तानुपासते ॥ २४ ॥ यथागमञ्च
गत्वा वै बुद्ध्या तत्रैव बुद्ध्यते । देहान्तं कश्चिदन्वास्ते भावितात्मा
निराश्रयम् ॥ २५ ॥ युक्तं धारणया सम्यक् सतः केचिदुपासते ।
अभ्यस्यन्ति परं देवं विद्युत्संशब्दिताक्षरम् ॥ २६ ॥ अन्तकाले
ह्युपासन्ते तपसा दग्धकिल्बिषाः । सर्व्वे एते महात्मानो गच्छन्ति
परमां गतिम् ॥ २७ ॥ सूक्ष्मं विशेषणं तेषामवेक्षेच्छास्त्रचक्षुषा ।
देहन्तु परमं विद्याद्विमुक्तमपरिग्रहम् । अन्तरीक्षादन्यतरं धार-
णासक्तमानसम् ॥ २८ ॥ मर्त्त्यलोकाद्विमुच्यन्ते विद्यासंसक्तचेतसः ।
ब्रह्मभूता विरजसस्ततो यान्ति परां गतिम् ॥ २९ ॥ एवमेकायनं
धर्म्ममाहुर्वेदविदो जनाः । यथाज्ञानमुपासन्तः सर्व्वे यान्ति परां
गतिम् ॥ ३० ॥ कषायवर्ज्जितं ज्ञानं येषामुत्पद्यतेऽचलम् । यान्ति
तेऽपि परांल्लोकान् विमुच्यन्ते यथाबलम् ॥ ३१ ॥ भगवन्तमजं
दिव्यं विष्णुमव्यक्तसंज्ञितम् । भावेन यान्ति शुद्धा ये ज्ञानतृप्ता
निराशिषः ॥ ३२ ॥ ज्ञात्वात्मस्थं हरिञ्चैव न निवर्त्तन्ति तेऽव्ययाः ।
प्राप्य तत् परमं स्थानं मोदन्तेऽक्षरमव्ययम् ॥ ३३ ॥ एतावदेत-
द्विज्ञानमेतदस्ति च नास्ति च । तृष्णाबद्धं जगत् सर्व्वं चक्रवत्
परिवर्त्तते ॥ ३४ ॥ बिसतन्तुर्यथैवायमन्तस्थः सर्व्वतो बिसे । तृष्णा-
तन्तुरनाद्यन्तस्तथा देहगतः सदा ॥ ३५ ॥ सूच्या सूत्रं यथा
वस्त्रे संसारयति वायकः । तद्वत् संसारसूत्रं हि तृष्णासूच्या
निबध्यते ॥ ३६ ॥ विकारं प्रकृतिञ्चैव पुरुषञ्च सनातनम् । यो

यथावद्विजानाति स विहृष्णो विमुच्यते ॥ ३७ ॥ प्रकाशं भगवानेतदृषिर्नारायणोऽमृतम्। भूतानामनुकम्पार्थं जगाद जगतोगतिः ॥ ३८ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि वार्ष्णेयाध्यात्मे सप्तदशाधिकद्विशततोऽध्यायः ॥ २१७ ॥

---

युधिष्ठिर उवाच। केन वृत्तेन वृत्तज्ञ जनको मिथिलाधिपः। जगाम मोक्षं मोक्षज्ञो भोगानुत्सृज्य मानुषान् ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। येन वृत्तेन वृत्तज्ञो जगाम सुमहत् सुखम् ॥ २ ॥ जनको जनदेवस्तु मिथिलायां जनाधिपः। और्द्ध्वदेहिकधर्माणामासीद्युक्तो विचिन्तने ॥ ३ ॥ तस्य स्म शतमाचार्य्या वसन्ति सततं गृहे। दर्शयन्तः पृथग्धर्मान्नानापाषण्डवासिनः ॥ ४ ॥ स तेषां प्रेत्यभावे च प्रेत्यजातौ विनिश्चये। आगमस्थः सभूयिष्ठमात्मतत्त्वेन तुष्यति ॥५॥ तत्र पञ्चशिखो नाम कापिलेयो महामुनिः। परिधावन्महीं कृत्स्नां जगाम मिथिलामथ ॥ ६ ॥ सर्व्वसन्न्यासधर्माणां तत्त्वज्ञानविनिश्चये। सुपर्य्यवसितार्थश्च निर्द्वन्द्वो नष्टसंशयः ॥ ७ ॥ ऋषीणामाहुरेकं यं कामादवसितं नृषु। शाश्वतं सुखमत्यन्तमन्विच्छन्तं सुदुर्लभम् ॥ ८ ॥ यमाहुः कपिलं सांख्याः परमर्षिं प्रजापतिम्। स मन्ये तेन रूपेण विस्मापयति हि स्वयम ॥ ९ ॥ आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनम्। पञ्चस्रोतसि यः सत्रमास्ते वर्षसहस्रिकम् ॥ १० ॥ यत्र चासीनमागम्य कापिलं मण्डलं महत्। पुरुषावस्थमव्यक्तं परमार्थं न्यवेदयत् ॥ ११ ॥ इष्टसत्रेण संपृष्टो भूयश्च तपसा सुरिः। क्षेत्रक्षेत्रज्ञयोर्व्यक्तिं बुबुधे देवदर्शन ॥१२॥ यत्तदेकाक्षरं ब्रह्म नानारूपं प्रदृश्यते। आसुरिर्मण्डले तस्मिन्

प्रतिपेदे तदव्ययम् ॥ १३ ॥ तस्य पञ्चशिखः शिष्यो मानुष्या पयसा भृतः । ब्राह्मणी कपिला नाम काचिदासीत् कुटुम्बिनी ॥ १४ ॥ तस्याः पुत्रत्वमागम्य स्त्रियाः स पिवति स्तनौ । ततः स कापिलेयत्वं लेभे बुद्धिञ्च नैष्ठिकीम् ॥ १५ ॥ एतन्मे भगवानाह कापिलेयस्य सम्भवम् । तस्य तत् कापिलेयत्वं सर्व्ववित्त्वमनुत्तमम् ॥ १६ ॥ सामान्यं जनकं ज्ञात्वा धर्म्मज्ञो ज्ञानमुत्तमम् । उपेत्य शतमाचार्य्या-न्मोहयामास हेतुभिः ॥ १७ ॥ जनकस्त्वभिसंरक्तः कापिलेयानु-दर्शनात् । उत्सृज्य शतमाचार्य्यान् पृष्ठतोऽनुजगाम तम् ॥ १८ ॥ पञ्चस्रोतसि निष्णातः पञ्चरात्रविशारदः । पञ्चज्ञः पञ्चकृत् पञ्च-गुणः पञ्चशिखः स्मृतः ॥ १९ ॥

जनक उवाच । यत्तदेकाक्षरं ब्रह्म नानारूपं प्रदृश्यते । तन्मे ब्रूहि द्विजश्रेष्ठ त्वं हि वेत्तास्य तत्त्वतः ॥ २० ॥

भीष्म उवाच । तस्मै परमकल्याय प्रणताय च धर्म्मतः । अब्रवीत् परमं मोक्षं यत्तत् सांख्येऽभिधीयते ॥ २१ ॥ जाति-निर्व्वेदमुक्त्वा स कर्म्मनिर्व्वेदमब्रवीत् । कर्म्मनिर्व्वेदमुक्त्वा च सर्व्वनिर्व्वेद-मब्रवीत् ॥ २२ ॥ यदर्थं धर्म्मसंसर्गः कर्म्मणाञ्च फलोदयः । तम-नाश्वासिकं मोहं विनाशि चलमध्रुवम् ॥ २३ ॥ दृश्यमाने विनाशे च प्रत्यक्षे लोकसाक्षिके । आगमात् परमस्तीति ब्रुवन्नपि परा-जितः ॥ २४ ॥ अनात्मा ह्यात्मनो मृत्युः क्लेशो मृत्युर्जरामयः । आत्मानं मन्यते मोहात्तदसम्यक् परं मतम् ॥ २५ ॥ अथ चेदेव-मप्यस्ति यल्लोके नोपपद्यते । अजरोऽयममृत्युश्च राजासौ मन्यते यथा ॥ २६ ॥ अस्ति नास्तीति चाप्येतत्तस्मिन्नसति लक्षणे । किम-धिष्ठाय तद्ब्रूयाल्लोकयात्राविनिश्चयम् ॥ २७ ॥ प्रत्यक्षं ह्येतयो-र्मूलं कृतान्तैतिह्ययोरपि । प्रत्यक्षेणागमो भिन्नः कृतान्तो वा न किञ्चन ॥ २८ ॥ यत्र यत्रानुमानेऽस्मिन् कृतं भावयतोऽपि च । नान्यो जीव शरीरस्य नास्तिकानां मते स्थितः ॥ २९ ॥ रेतो

वटकणीकायां घृतपाकाधिवासनम्। जातिः स्मृतिरयस्कान्तः सूर्य्यकान्तोऽम्बुभक्षणम् ॥ ३० ॥ प्रेत्यभूतात्ययश्चैव देवताद्युपयाचनम्। मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चय ॥ ३१ ॥ न त्वेते हेतवः सन्ति ये केचिन्मूर्त्तिसंस्थिताः। अमर्त्तस्य हि मर्त्त्येन सामान्यं नोपलभ्यते ॥ ३२ ॥ अविद्या कर्मतृष्णा च केचिदाहुः पुनर्भवे। कारणं लोभमोहौ तु दोषाणाञ्च निषेवणम् ॥ ३३ ॥ अविद्यां क्षेत्रमाहुर्हि कर्मवीजं तथा कृतम्। तृष्णा संजननं स्नेह एष तेषां पुनर्भवः ॥ ३४ ॥ तस्मिन् गूढ़े च दग्धे च भिन्ने मरणधर्मिणि। अन्योऽस्माज्जायते देहस्तमाहुः सत्त्वसंक्षयम् ॥ ३५ ॥ यदा स्वरूपतश्चान्यो जातितः शुभतोऽर्थतः। कथमस्मिन् स इत्येव सम्बन्धः स्यादसंहितम् ॥ ३६ ॥ एवं सति च का प्रीतिर्दानविद्यातपोबलैः। यदस्याचरितं कर्म सर्वमन्यत् प्रपद्यते ॥३७॥ अपि ह्ययमिहैवान्यैः प्राकृतैर्दुःखितो भवेत्। सुखितो दुःखितो वापि दृश्यादृश्यविनिर्णयः ॥ ३८ ॥ तथा हि मुषलैर्हन्युः शरीरं तत् पुनर्भवेत्। पृथग्ज्ञानं यदन्यच्च येनैतन्नोपपद्यते ॥ ३९ ॥ ऋतुसंवत्सरौ तिष्यः शीतोष्णेऽथ प्रियाप्रिये। यथातीतानि पश्यन्ति तादृशः सत्त्वसंक्षयः ॥ ४० ॥ जरयाभिपरीतस्य मृत्युना च विनाशिना। दुर्वलं दुर्वलं पूर्वं गृहस्येव विनश्यति ॥ ४१ ॥ इन्द्रियाणि मनो वायुः शोणितं मांसमस्थि च। आनुपूर्व्या विनश्यन्ति स्वन्धातुमुपयान्ति च ॥ ४२ ॥ लोकयात्राविघातश्च दानधर्मफलागमे। तदर्थं वेदशब्दाश्च व्यवहाराश्च लौकिकाः ॥ ४३ ॥ इति सम्यङ्मनस्येते बहवः सन्ति हेतवः। एतदस्तीदमस्तीति न किञ्चित् प्रतिदृश्यते ॥ ४४ ॥ तेषां विमृषतामेव तत्तत् समभिधावताम्। क्वचिन्निविशते बुद्धिस्तत्र जीर्य्यति वृक्षवत् ॥ ४५ ॥ एवमर्थैरनर्थैश्च दुःखिताः सर्वजन्तवः। आगमैरपकृष्यन्ते हस्तिपैर्हस्तिनो यथा ॥४६॥ अर्थांस्तथात्यन्तसुखावहांश्च लिप्सन्त एते बहवो विशुष्काः। महत्तरं

दुःखमनुप्रपन्ना हित्वामिषं मृत्युवशं प्रयान्ति ॥ ४७ ॥ विनाशिनो ह्यध्रुवजीवितस्य किं बन्धुभिर्मित्रपरिग्रहैश्च । विहाय यो गच्छति सर्वमेव क्षणेन गत्वा न निवर्त्तते च ॥ ४८ ॥ भूव्योमतोयानल-वायवोऽपि सदा शरीरं प्रतिपालयन्ति । इतीदमालक्ष्य रतिः कुतो भवेद्विनाशिनोऽप्यस्य न शर्म विद्यते ॥ ४९ ॥ इदमनुपधि-वाक्यमच्छलं परमनिरामयमात्मसाक्षिकम् । नरपतिरभिवीक्ष्य विस्मितः पुनरनुयोक्तुमिदं प्रचक्रमे ॥ ५० ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि पञ्चशिखवाक्ये अष्टादशाधिकद्विशततोऽध्यायः ॥२१८ ॥

---

भीष्म उवाच । जनको जनदेवस्तु ज्ञापितः परमर्षिणा । पुनरेवानुपप्रच्छ साम्पराये भवाभवौ ॥ १ ॥

जनक उवाच । भगवन् यदि न प्रेत्य संज्ञा भवति कस्यचित् । एवं सति किमज्ञानं ज्ञानं वा किं करिष्यति ॥ २ ॥ सर्वमुच्छेद-निष्ठं स्यात् पश्य चैतद्द्विजोत्तम । अप्रमत्तः प्रमत्तो वा किं विशेषं करिष्यति ॥ ३ ॥ असंसर्गो हि भूतेषु संसर्गो वा विनाशिषु । कस्मै क्रियेत कल्प्येत निश्चयः कोऽत्र तत्त्वतः ॥ ४ ॥

भीष्म उवाच । तमसा हि प्रतिच्छन्नं विभ्रान्तमिव चातुरम् । पुनः प्रशमयन् वाक्यैः कविः पञ्चशिखोऽब्रवीत् ॥ ५ ॥ उच्छेदनिष्ठा नेहास्ति भावनिष्ठा न विद्यते । अयं ह्यपि समाहारः शरीरेन्द्रिय-चेतसाम् । वर्त्तते पृथगन्योऽन्यमप्युपाश्रित्य कर्मसु ॥ ६ ॥ धातवः पञ्चधा तोयं खं वायुर्ज्योतिषो धरा । ते स्वभावेन तिष्ठन्ति वियु-ज्यन्ते स्वभावतः ॥ ७ ॥ आकाशं वायुरूष्मा च स्नेहो यश्चापि पार्थिवः । एष पञ्चसमाहारः शरीरमपि नैकधा ॥ ८ ॥ ज्ञान-मूष्मा च वायुश्च त्रिविधः कार्य्यसंग्रहः । इन्द्रियाणीन्द्रियार्थाश्च

स्वभावश्चेतना मनः। प्राणापानौ विकाराश्च धातवश्चात्र निःसृताः ॥ ९ ॥ श्रवणं स्पर्शनं जिह्वा दृष्टिर्नासा तथैव च। इन्द्रियाणीति पञ्चैते चित्तपूर्वं गता गुणाः ॥ १० ॥ तत्र विज्ञानसंयुक्ता त्रिविधा चेतना ध्रुवा। सुखदुःखेति यामाहुरदुःखामसुखेति च ॥ ११ ॥ शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च मूर्त्तयः। एते ह्यामरणात् पञ्च षड्गुणा ज्ञानसिद्धये ॥१२॥ तेषु कर्मनिसर्गश्च सर्वतत्त्वार्थनिश्चयः। तमाहुः परमं शुक्रं बुद्धिरित्यव्ययं महत् ॥ १३ ॥ इमं गुणसमाहारमात्मभावेन पश्यतः। असम्यग्दर्शनैर्दुःखमनन्तं नोपशाम्यति ॥ १४ ॥ अनात्मेति च यद्दृष्टं तेनाहं न ममेत्यपि। वर्त्तते किमधिष्ठाना प्रसक्ता दुःखसन्ततिः ॥ १५ ॥ तत्र सम्यग्वधो नाम त्यागशास्त्रमनुत्तमम्। शृणु यत्तव मोक्षाय भाष्यमाणं भविष्यति ॥१६॥ त्याग एव हि सर्वेषां युक्तानामपि कर्मणाम्। नित्यं मिथ्याविनीतानां क्लेशो दुःखवहो मतः ॥ १७ ॥ द्रव्यत्यागे तु कर्माणि भोगत्यागे व्रतान्यपि। सुखत्यागे तपोयोगं सर्वत्यागे समापना ॥१८॥ तस्य मार्गोऽयमद्वैधः सर्वत्यागस्य दर्शितः। विप्रहाणाय दुःखस्य दुर्गतिस्त्वन्यथा भवेत् ॥ १९ ॥ पञ्च ज्ञानेन्द्रियाण्युक्त्वा मनःषष्ठानि चेतसि। बलषष्ठानि वक्ष्यामि पञ्च कर्मेन्द्रियाणि तु ॥ २० ॥ हस्तौ कर्मेन्द्रियं ज्ञेयमथ पादौ गतीन्द्रियम्। प्रजननानन्दयोः शेफो विसर्गे पायुरिन्द्रियम् ॥ २१ ॥ वाक् च शब्दविशेषार्थमिति पञ्चान्वितं विदुः। एवमेकादशैतानि बुद्ध्याशु विसृजेन्मनः ॥ २२ ॥ कर्णौ शब्दश्च चित्तञ्च त्रयः श्रवणसंग्रहे। तथा स्पर्शे तथा रूपे तथैव रसगन्धयोः ॥ २३॥ एवं पञ्चत्रिका ह्येते गुणास्तदुपलब्धये। येनायं त्रिविधो भावः पर्य्यायात् समुपस्थितः ॥ २४ ॥ सात्त्विको राजसश्चापि तामसश्चापि ते त्रयः। त्रिविधा वेदना येषु प्रसृताः सर्वसाधनाः ॥ २५ ॥ प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता। अकुतश्चित् कुतश्चिद्वा चित्ततः सात्त्विको गुणः ॥ २६ ॥ अतुष्टिः

परितापश्च शोको लोभस्तथाच्चमा। लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुतः॥ २७॥ अविवेकस्तथा मोहः प्रमादः स्वप्नतन्द्रिता। कथञ्चिदपि वर्त्तन्ते विविधास्तामसा गुणाः॥ २८॥ अत्र यत् प्रीतिसंयुक्तं काये मनसि वा भवेत्। वर्त्तते सात्त्विको भाव इत्यपेक्षेत तत्तथा॥ २९॥ यत्त्वसन्तोषसंयुक्तमप्रीतिकरमात्मनः। प्रवृत्तं रज इत्येवं ततस्तदपि चिन्तयेत्॥ ३०॥ अथ यन्मोहसंयुक्तं काये मनसि वा भवेत्। अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत्॥ ३१॥ श्रोत्रं व्योमाश्रितं भूतं शब्दः श्रोत्रं समाश्रितः। नोभयं शब्दविज्ञाने विज्ञानस्येतरस्य वा॥ ३२॥ एवं त्वकचक्षुषी जिह्वा नासिका चेति पञ्चमी। स्पर्शे रूपे रसे गन्धे तानि चेतो मनश्च तत्॥ ३३॥ स्वकर्मयुगपद्भावो दशस्वेतेषु तिष्ठति। चित्तमेकादशं विद्धि बुद्धिर्द्वादशमी भवेत्॥ ३४॥ तेषामयुगपद्भावे उच्छेदो नास्ति तामसः। आस्थितो युगपद्भावो व्यवहारः स लौकिकः॥ ३५॥ इन्द्रियाण्यपि सूक्ष्माणि दृष्ट्वा पूर्वश्रुतागमात्। चिन्तयन्नानुपर्य्येति त्रिभिरेवान्वितो गुणैः॥ ३६॥ यत्तमोपहतं चित्तमाशु संचारमध्रुवम्। करोत्युपरमं काये तदाहुस्तामसं बुधाः॥ ३७॥ यद्यदागमसंयुक्तं न कृच्छ्रमनुशाम्यति। अथ तत्राप्युपादत्ते तमोऽव्यक्तमिहानृतम्॥ ३८॥ एवमेष प्रसंख्यातः स्वकर्मप्रत्ययो गुणाः। कथञ्चिद्वर्त्तते सम्यक् केषाञ्चिद्वा निवर्त्तते॥ ३९॥ एतदाहुः समाचारं चेत्रमध्यात्मचिन्तकाः। स्थितो मनसि यो भावः स वै क्षेत्रज्ञ उच्यते॥ ४०॥ एवं सति क उच्छेदः शाश्वतो वा कथं भवेत्। स्वभावाद्वर्त्तमानेषु सर्वभूतेषु हेतुतः॥ ४१॥ यथार्णवगता नद्यो व्यक्तीर्जहति नाम च। नदाश्च ता नियच्छन्ति तादृशः सत्त्वसंचयः॥ ४२॥ एवं सति कुतः संज्ञा प्रेत्यभावे पुनर्भवेत्। प्रतिसंमिश्रिते जीवे गृह्यमाणे च सर्वतः॥ ४३॥ इमान्तु यो वेद विमोक्षबुद्धिमात्मानमन्विच्छति चाप्रमत्तः। न लिप्यते

कर्मफलैरनिष्टैः पत्रं विसस्येव जलेन सिक्तम् ॥ ४४ ॥ दृढैश्च पाशैर्बहुभिर्विमुक्तः प्रजानिमित्तैरपि दैवतैश्च। यदा ह्यसौ सुखदुःखे जहाति मुक्तस्तदाग्र्यां गतिमेत्यलिङ्गः ॥ ४५॥ श्रुतिप्रमाणागममङ्गलैश्च शेते जरामृत्युभयादभीतः। क्षीणे च पुण्ये विगते च पापे ततो निमित्ते च फले विनष्टे। अलेपमाकाशमलिङ्गमेवमास्थाय पश्यन्ति महत्यशक्ताः ॥ ४६ ॥ यथोर्णनाभिः परिवर्त्तमानस्तन्तुक्षये तिष्ठति पात्यमानः। तथा विमुक्तः प्रजहाति दुःखं विध्वंसते लोष्ट इवाद्रिमृच्छन् ॥ ४७ ॥ यथा रुरुः शृङ्गमथो पुराणं हित्वा त्वचं वाप्युरगो यथा च। विहाय गच्छत्यनवेक्षमाणस्तथा विमुक्तो विजहाति दुःखम् ॥ ४८ ॥ द्रुमं यथा वाप्युदके पतन्तमुत्सृज्य पक्षी निपतत्यसक्तः। तथा ह्यसौ सुखदुःखे विहाय मुक्तः परार्द्ध्यां गतिमेत्यलिङ्गः ॥ ४९ ॥ अपि च भवति मैथिलेन गीतं नगरमुपाहितमग्निनाभिवीक्ष्य। न खलु मम हि दह्यतेऽत्र किञ्चित् स्वयमिदमाह किल स्म भूमिपालः ॥ ५० ॥ इदममृतपदं निशम्य राजा स्वयमिह पञ्चशिखेन भाष्यमाणम्। निखिलमभिसमीक्ष्य निश्चितार्थः परमसुखी विजहार वीतशोकः ॥५१॥ इमं हि यः पठति विमोक्षनिश्चयं महीपते सततमवेक्षते तथा। उपद्रवान्नानुभवत्यदुःखितः प्रमुच्यते कपिलमिवेत्य मैथिलः ॥५२॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि पञ्चशिखवाक्ये ऊनविंशत्यधिकद्विशततोऽध्यायः ॥ २१९ ॥

---

युधिष्ठिर उवाच। किं कुर्वन् सुखमाप्नोति किं कुर्वन् दुःखमाप्नुयात्। किं कुर्वन् निर्भयो लोके सिद्धश्चरति भारत ॥ १ ॥ भीष्म उवाच। दममेव प्रशंसन्ति वृद्धाः श्रुतिसमाधयः।

सर्व्वेषामेव वर्णानां ब्राह्मणस्य विशेषतः ॥ २ ॥ नादान्तस्य क्रिया-
सिद्धिर्यथावदुपपद्यते । क्रिया तपश्च सत्यञ्च दमे सर्वं प्रतिष्ठितम्
॥ ३ ॥ दमस्तेजो वर्द्धयति पवित्रं दम उच्यते । विपाप्मा निर्भयो
दान्तः पुरुषो विन्दते महत् ॥ ४ ॥ सुखं दान्तः प्रस्वपिति सुखञ्च
प्रतिबुध्यते । सुखं लोके विपर्य्येति मनश्चास्य प्रसीदति ॥ ५ ॥
तेजो दमेन ध्रियते तन्न तीक्ष्णोऽधिगच्छति । अमित्रांश्च बहून्नित्यं
पृथगात्मनि पश्यति ॥ ६ ॥ क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा
भयम् । तेषां विप्रतिषेधार्थं राजा सृष्टः स्वयम्भुवा ॥ ७ ॥ आश्र-
मेषु च सर्व्वेषु दम एव विशिष्यते । यच्च तेषु फलं धर्म्मे भूयो दान्ते
तदुच्यते ॥ ८ ॥ तेषां लिङ्गानि वक्ष्यामि येषां समुदयो दमः ।
अकार्पण्यमसंरम्भः सन्तोषः श्रद्दधानता ॥ ९ ॥ अक्रोध आर्ज्जवं
नित्यं नातिवादोऽभिमानिता । गुरुपूजानसूया च दया भूतेष्वपै-
शुनम् ॥ १० ॥ जनवादमृषावादस्तुतिनिन्दाविवर्ज्जनम् । साधु-
कामश्च स्पृहयेन्नायतिं प्रत्ययेषु च ॥ ११ ॥ अवैरकृत् सूपचारः
समो निन्दाप्रशंसयोः । सुवृत्तः शीलसम्पन्नः प्रसन्नात्मात्मवान् प्रभुः
॥ १२ ॥ प्राप्य लोके च सत्कारं स्वर्गं वै प्रेत्य गच्छति । दुर्गमं
सर्वभूतानां प्रापयन्मोदते सुखी ॥ १३ ॥ सर्वभूतहिते युक्तो न स्म
यो द्विषते जनम् । महाह्रद इवाक्षोभ्यः प्रज्ञातृप्तः प्रसीदति ॥१४॥
अभयं यस्य भूतेभ्यः सर्व्वेषामभयं यतः । नमस्यः सर्वभूतानां
दान्तो भवति बुद्धिमान् ॥ १५ ॥ न हृष्यति महत्यर्थे व्यसने च न
शोचति । स वै परिमितप्रज्ञः स दान्तो द्विज उच्यते ॥ १६ ॥
कर्मभिः श्रुतसम्पन्नः सद्भिराचरितः शुचिः । सदैव दमसंयुक्त-
स्तस्य भुङ्क्ते महाफलम् ॥ १७ ॥ अनसूया क्षमा शान्तिः
सन्तोषः प्रियवादिता । सत्यं दानमनायासो नैष मार्गो दुरात्म-
नाम् ॥ १८ ॥ कामक्रोधौ च लोभश्च परस्येर्षा विकत्थना । काम-
क्रोधौ वशे कृत्वा ब्रह्मचारी जितेन्द्रियः ॥ १९ ॥ विक्रम्य घोरे

तपसि ब्राह्मणः संशितव्रतः। कालाकाङ्क्षी चरेल्लोकान्निरपाय इवात्मवान्॥ २०॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि दमप्रशंसायां
विंशत्यधिकद्विशततोऽध्यायः॥ २२०॥

---

युधिष्ठिर उवाच। द्विजातयो व्रतोपेता यदिदं भुञ्जते हविः। अन्नं ब्राह्मणकामाय कथमेतत् पितामह॥ १॥

भीष्म उवाच। अवेदोक्तव्रतोपेता भुञ्जानाः कार्य्यकारिणः। वेदोक्तेषु च भुञ्जाना व्रतलुप्ता युधिष्ठिर॥ २॥

युधिष्ठिर उवाच। यदिदं तप इत्याहुरुपवासं पृथग्जनाः। एतत्तपो महाराज उताहो किं तपो भवेत्॥ ३॥

भीष्म उवाच। मासपक्षोपवासेन मन्यन्ते यत्तपो जनाः। आत्मतन्त्रोपघातस्तु न तपस्तत् सतां मतम्॥ ४॥ त्यागश्च सन्नतिश्चैव शिष्यते तप उत्तमम्। सदोपवासी स भवेत् ब्रह्मचारी सदा भवेत्॥ ५॥ मुनिश्च स्यात् सदा विप्रो दैवतञ्च सदा भवेत्। कुटुम्बिको धर्मकामः सदा स्वप्नश्च भारत॥ ६॥ अमांसादी सदा च स्यात् पवित्रश्च सदा भवेत्। अमृताशी सदा च स्यात् देवतातिथिपूजकः॥ ७॥ विघसाशी सदा च स्यात् सदा चैवातिथिव्रतः। श्रद्दधानः सदा च स्याद्दैवतद्विजपूजकः॥ ८॥

युधिष्ठिर उवाच। कथं सदोपवासी स्याद्ब्रह्मचारी कथं भवेत्। विघसाशी कथञ्च स्यात् सदा चैवातिथिव्रतः॥ ९॥

भीष्म उवाच। अन्तरा प्रातराशञ्च सायमाशन्तथैव च। सदोपवासी स भवेद्यो न भुङ्क्तेऽन्तरा पुनः॥ १०॥ भार्य्यां गच्छन् ब्रह्मचारी ऋतौ भवति वै द्विजः। ऋतवादी भवेन्नित्यं ज्ञाननित्यश्च यो नरः॥ ११॥ न भक्षयेद्वृथामांसममांसाशी भव-

त्यपि। दाननित्यः पवित्रश्च अस्वप्नश्च दिवास्वपन् ॥ १२ ॥ भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु सदा नरः। अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर ॥ १३ ॥ अभुक्तवत्सु नाश्नानः सततं यस्तु वै द्विजः। अभोजनेन तेनास्य जितः स्वर्गो भवत्युत ॥ १४ ॥ देवताभ्यः पितृभ्यश्च भृत्येभ्योऽतिथिभिः सह। अवशिष्टन्तु योऽश्नाति तमाहुर्विघसाशिनम् ॥१५॥ तेषां लोका ह्यपर्य्यन्ताः सदने ब्रह्मणा सह। उपस्थिताश्चाप्सरोभिः परियान्ति दिवौकसः ॥ १६ ॥ देवताभिश्च ये सार्द्धं पितृभिश्चोपभुञ्जते। रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा ॥ १७ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि अमृतप्राश्निके एकविंशत्यधिकद्विशतोऽध्यायः ॥ २२१ ॥

---

युधिष्ठिर उवाच। यदिदं कर्म्म लोकेऽस्मिन् शुभं वा यदि वाशुभम्। पुरुषं योजयत्येव फलयोगेन भारत ॥ १ ॥ कर्त्तास्ति तस्य पुरुष उताहो नेति संशयः। एतदिच्छामि तत्त्वेन त्वत्तः श्रोतुं पितामह ॥ २ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। प्रह्लादस्य च संवादमिन्द्रस्य च युधिष्ठिर ॥ ३॥ असक्तं धूतपाप्मानं कुले जातं बहुश्रुतम्। अस्तब्धमनहङ्कारं सत्त्वस्थं समये रतम् ॥४॥ तुल्यनिन्दास्तुतिं दान्तं शून्यागारनिवेशनम्! चराचराणां भूतानां विदितप्रभवाप्ययम् ॥ ५ ॥ अक्रुध्यन्तमहृष्यन्तमप्रियेषु प्रियेषु च। काञ्चने वाथ लोष्ट्रे वा उभयोः समदर्शनम् ॥ ६ ॥ आत्मनि श्रेयसि ज्ञाने धीरं निश्चितनिश्चयम्। परावरज्ञं भूतानां सर्व्वज्ञं सर्व्वदर्शनम् ॥ ७ ॥ शक्रः प्रह्लादमासीनमेकान्ते संयतेन्द्रियम्। वुभुत्समानस्तत्प्रज्ञामभिगम्येदमब्रवीत् ॥ ८ ॥ यैः कश्चित् सम्मतो लोके

गुणैः स्यात् पुरुषो नृप। भवत्यनपगान् सर्वांस्तान् गुणान् लक्षयामहे ॥९॥ अथ ते लक्ष्यते बुद्धिः समा बालजनैरिह। आत्मानं मन्यमानः सन् श्रेयः किमिह मन्यसे ॥१०॥ बद्धः पाशैश्च्युतः स्थानाद्द्विषतां वशमागतः। श्रिया विहीनः प्रह्लाद शोचितव्ये न शोचसि ॥११॥ प्रज्ञालाभात्तु दैतेय उताहो धृतिमत्तया। प्रह्लाद सुस्थरूपोऽसि पश्य व्यसनमात्मनः ॥१२॥ इति सञ्चोदितस्तेन धीरो निश्चितनिश्चयः। उवाच श्लक्ष्णया वाचा स्वां प्रज्ञामनुवर्णयन् ॥१३॥

प्रह्लाद उवाच। प्रवृत्तिञ्च निवृत्तिञ्च भूतानां यो न बुध्यते। तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः ॥१४॥ स्वभावात् सम्प्रवर्त्तन्ते निवर्त्तन्ते तथैव च। सर्वे भावास्तथाभावाः पुरुषार्थो न विद्यते ॥१५॥ पुरुषार्थस्य चाभावे नास्ति कश्चिच्च कारकः। स्वयं न कुर्वतस्तस्य जातु मानो भवेदिह ॥१६॥ यस्तु कर्त्तारमात्मानं मन्यते साध्वसाधु वा। तस्य दोषवती प्रज्ञा अतत्त्वज्ञेति मे मतिः ॥१७॥ यदि स्यात् पुरुषः कर्त्ता शक्रात्मश्रेयसे ध्रुवम्। आरम्भास्तस्य सिद्धेयुर्न तु जातु पराभवेत् ॥१८॥ अनिष्टस्य हि निवृत्तिरनिर्वृत्तिः प्रियस्य च। लक्ष्यते यतमानानां पुरुषार्थस्ततः कुतः ॥१९॥ अनिष्टस्याभिनिर्वृत्तिमिष्टसंवृत्तिमेव च। अप्रयत्नेन पश्यामः केषाञ्चित्तत् स्वभावतः ॥२०॥ प्रतिरूपतराः केचिद्दृश्यन्ते बुद्धिमत्तराः। विरूपेभ्योऽल्पबुद्धिभ्यो लिप्समाना धनागमम् ॥२१॥ स्वभावप्रेरिताः सर्वे निविशन्ते गुणा यदा। शुभाशुभास्तदा तत्र कस्य किं मानकारणम् ॥२२॥ स्वभावादेव तत् सर्वमिति मे निश्चिता मतिः। आत्मप्रतिष्ठा प्रज्ञा वा मम नास्ति ततोऽन्यथा ॥२३॥ कर्मजन्त्विह मन्यन्ते फलयोगं शुभाशुभम्। कर्मणां विषयं कृत्स्नमहं वक्ष्यामि तच्छृणु ॥२४॥ यथा वेदयते कश्चिदोदनं वायसो वदन्। एवं सर्वाणि कर्माणि स्वभावस्यैव

लक्षणम् ॥ २५ ॥ विकारानेव यो वेद न वेद प्रकृतिं पराम् ।
तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तम्भोऽनुपश्यतः ॥ २६ ॥ स्वभाव-
भाविनो भावान् सर्वानेवेह निश्चयात् । बुध्यमानस्य दर्पो वा मानो
वा किं करिष्यति ॥ २७ ॥ वेद धर्मविधिं कृतस्नं भूतानाञ्चाप्य-
नित्यताम् । तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ॥ २८ ॥
निर्ममो निरहङ्कारो निराशीर्मुक्तबन्धनः । स्वस्थो व्यपेतः पश्यामि
भूतानां प्रभवाप्ययौ ॥ २९ ॥ कृतप्रज्ञस्य दान्तस्य वितृष्णस्य निरा-
शिषः । नायासो विद्यते शक्र पश्यतो लोकविद्यया ॥ ३० ॥ प्रकृतौ
च विकारे च न मे प्रीतिर्न च द्विषे । द्वेष्टारञ्च न पश्यामि यो
ममद्य ममायते ॥ ३१ ॥ नोर्द्ध्वं नावाङ् न तीर्य्यक् च न क्वचिच्छक्र
कामये । न हि ज्ञेये न विज्ञाने न ज्ञाने शर्म विद्यते ॥३२॥

शक्र उवाच । येनैषा लभ्यते प्रज्ञा येन शान्तिरवाप्यते ।
प्रब्रूहि तदुपायं मे सम्यक् प्रह्लाद पृच्छतः ॥ ३३ ॥

प्रह्लाद उवाच । आर्ज्जवेनाप्रमादेन प्रसादेनात्मवत्तया । वृद्ध-
शुश्रूषया शक्र पुरुषो लभते महत् ॥ ३४ ॥ स्वभावाल्लभते प्रज्ञां
शान्तिमेति स्वभावतः । स्वभावादेव तत् सर्वं यतकिञ्चिदनुपश्यसि
॥ ३५ ॥ इत्युक्तो दैत्यपतिना शक्रो विस्मयमागमत् । प्रीतिमांश्च
तदा राजंस्तद्वाक्यं प्रत्यपूजयत् ॥ ३६ ॥ स तदाभ्यर्च्च्य दैत्येन्द्रं
त्रैलोक्यपतिरीश्वरः । असुरेन्द्रमुपामन्त्र्य जगाम स्वं निवे-
शनम् ॥ ३७ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शक्रप्रह्लादसंवादे
द्वाविंशत्यधिकद्विशततोऽध्यायः ॥ २२२ ॥

---

युधिष्ठिर उवाच । यया बुद्ध्या महीपालो भ्रष्टश्रीर्विचरे-
न्महीम् । कालदण्डविनिष्पिष्टस्तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। वासवस्य च सम्वादं बलेर्वैरोचनस्य च ॥ १ ॥ पितामहमुपागम्य प्रणिपत्य कृताञ्जलिः। सर्वानेवासुरान् जित्वा बलिं पप्रच्छ वासवः ॥ ३ ॥ यस्य स्म ददतो वित्तं न कदाचन हीयते। तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ॥ ४ ॥ स वायुर्वरुणश्चैव स रविः स च चन्द्रमाः। सोऽग्निस्तपति भूतानि जलञ्च स भवत्युत। तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ॥ ५ ॥ स एव ह्यस्तमयते स स्म विद्योतते दिशः। स वर्षति स्म वर्षाणि यथा कालमतन्द्रितः। तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम्॥६॥

ब्रह्मोवाच। नैतत्ते साधु मघवन् यदेनमनुपृच्छसि। पृष्टस्तु नानृतं ब्रूयात्तस्माद्वक्ष्यामि ते बलिम् ॥ ७ ॥ उष्ट्रेषु यदि वा गोषु खरेष्वश्वेषु वा पुनः। वरिष्ठो भविता जन्तुः शून्यागारे शचीपते ॥ ८ ॥

शक्र उवाच। यदि स्म बलिना ब्रह्मन् शून्यागारे समेयिवान्। हन्यामेनं न वा हन्यां तद्ब्रह्मन्ननुशाधि माम् ॥ ९ ॥

ब्रह्मोवाच। मा स्म शक्र बलिं हिंसीर्न बलिर्वधमर्हति। न्यायस्तु शक्र प्रष्टव्यस्त्वया वासव काम्यया ॥ १० ॥

भीष्म उवाच। एवमुक्तो भगवता महेन्द्रः पृथिवीन्तदा। चचारैरावतस्कन्धमधिरुह्य श्रिया वृतः ॥ ११ ॥ ततो ददर्श स बलिं खरवेशेन संवृतम्। यथाख्यातं भगवता शून्यागारे कृतालयम् ॥ १२ ॥

शक्र उवाच। खरयोनिमनुप्राप्तस्तुषभक्ष्योऽसि दानव। इयं ते योनिरधमा शोचस्याहो न शोचसि ॥ १३ ॥ अदृष्टं बत पश्यामि द्विषतां वशमागतम्। श्रिया विहीनं मित्रैश्च भ्रष्टवीर्य्यपराक्रमम् ॥ १४ ॥ यत्तद्यानसहस्रैस्त्वं ज्ञातिभिः परिवारितः। लोकान् प्रतापयन् सर्वान् यास्यस्मानवितर्कयन् ॥ १५ ॥ त्वन्मुखाश्चैव दैतेया

व्यतिष्ठंस्तव शासने । अकृष्टपच्या च मही तवैश्वर्य्ये बभूव ह । इदञ्च तेऽद्य व्यसनं शोचस्याहो न शोचसि ॥ १६ ॥ यदातिष्ठः समुद्रस्य पूर्वकूले विलेलिहन् । ज्ञातिभ्यो विभजन् वित्तं तदासीत्ते मनः कथम् ॥ १७ ॥ यत्ते सहस्रसमिता ननृतुर्देवयोषितः । बहूनि वर्षपूगानि विहारे दीप्यतः श्रिया ॥ १८ ॥ सर्वाः पुष्कर-मालिन्यः सर्वाः काञ्चनसप्रभाः । कथमद्य तदा चैव मनस्ते दानवे-श्वर ॥ १९ ॥ छत्रं तवासीत् सुमहत् सौवर्णं रत्नभूषितम् । ननृतुस्तत्र गन्धर्वाः षट् सहस्राणि सप्तधा ॥ २० ॥ यूपस्तवासीत् सुमहान् यजतः सर्वकाञ्चनः । यत्राददः सहस्राणि अयुतानां गवां दश । अनन्तरं सहस्राणि तदासीद्दैत्य का मतिः ॥ २१ ॥ यदा च पृथिवीं सर्वां यजमानोऽनुपर्य्यगाः । शम्याक्षेपेन विधिना तदा-सीत् किन्नु ते हृदि ॥ २२ ॥ न ते पश्यामि भृङ्गारं न छत्रं व्यजने न च । ब्रह्मदत्तञ्च ते माल्यं न पश्याम्यसुराधिप ॥ २३ ॥

बलिरुवाच । न त्वं पश्यसि भृङ्गारं न छत्रं व्यजने न च । ब्रह्मदत्ताञ्च मे मालां न त्वं द्रक्ष्यसि वासव ॥२४॥ गुहायां निहि-तानि त्वं मम रत्नानि पृच्छसि । यदा मे भविता कालस्तदा त्वं तानि द्रक्ष्यसि ॥ २५ ॥ न त्वेतदनुरूपन्ते यशसो वा कुलस्य वा । समृद्धार्थोऽसमृद्धार्थं यन्मां कत्थितुमिच्छसि ॥ २६ ॥ न हि दुःखेषु शोचन्ते न प्रहृष्यन्ति चर्द्धिषु । कृतप्रज्ञा ज्ञानतृप्ताः क्षान्ताः सन्तो मनीषिणः ॥ २७ ॥ त्वन्तु प्राकृतया बुद्ध्या पुरन्दर विकत्थसे । यदाहमिव भावी स्यास्तदा नैवं वदिष्यसि ॥ २८ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि बलिवासवसम्वादे त्रयोविंशत्यधिकद्विशततोऽध्यायः ॥ २२३ ॥

---

भीष्म उवाच। पुनरेव तु तं शक्रः प्रहसन्निदमब्रवीत्। निःश्वसन्तं यथा नागं प्रव्याहाराय भारत॥ १॥

शक्र उवाच। यत्तद्यानसहस्रेण ज्ञातिभिः परिवारितः। लोकान् प्रतापयन् सर्वान् यास्यस्मानवितर्कयन्॥ २॥ दृष्ट्वा सुकृपणाञ्चेमामवस्थामात्मनो बले। ज्ञातिमित्रपरित्यक्तः शोचस्याहो न शोचसि॥ ३॥ प्रीतिं प्राप्यातुलां पूर्वं लोकांश्चात्मवशे स्थितान् विनिपातमिमं वाद्य शोचस्याहो न शोचसि॥ ४॥

बलिरुवाच। अनित्यमुपलक्ष्येह कालपर्य्यायधर्मतः। तस्माच्छक्रो न शोचामि सर्वं ह्येवेदमन्तवत्॥ ५॥ अन्तवन्त इमे देहा भूतानाञ्च सुराधिप। तेन शक्र न शोचामि नापराधादिदं मम॥६॥ जीवितञ्च शरीरञ्च जात्यैव सह जायते। उभे सह विवर्द्धेते उभे सह विनश्यतः॥ ७॥ न हीदृशमहं भावमवशः प्राप्य केवलम्। यदेवमभिजानामि का व्यथा मे विजानतः॥ ८॥ भूतानां निधनं निष्ठा स्रोतसामिव सागरः। नैतत् सम्यग्विजानन्तो नरा मुह्यन्ति वज्रभृत्॥ ९॥ ये त्वेवं नाभिजानन्ति रजोमोहपरायणाः। ते कृच्छ्रं प्राप्य सीदन्ति बुद्धिर्येषां प्रणश्यति॥ १०॥ बुद्धिलाभात्तु पुरुषः सर्वन्नुदति किल्बिषम्। विपाप्मा लभते सत्त्वं सत्त्वस्थः सम्प्रसीदति॥ ११॥ ततस्तु ये निवर्त्तन्ते जायन्ते वा पुनः पुनः। कृपणाः परितप्यन्ते तैरर्थैरभिचोदिताः॥ १२॥ अर्थसिद्धिमनर्थञ्च जीवितं मरणं तथा। सुखदुःखफलञ्चैव न द्वेष्मि न च कामये॥ १३॥ हतं हन्ति हतो ह्येव यो नरो हन्ति कञ्चन। उभौ तौ न विजानीतो यश्च हन्ति हतश्च यः॥ १४॥ हत्वा जित्वा च मघवन् यः कश्चित् पुरुषायते। अकर्त्ता ह्येव भवति कर्त्ता ह्येव करोति तत्॥ १५॥ को हि लोकस्य कुरुते विनाशप्रभवावुभौ। कृतं हि तत् कृतेनैव कर्त्ता तस्यापि चापरः॥ १६॥ पृथिवी ज्योतिराकाशमापो वायुश्च पञ्चमः। एतद्योनीनि भूतानि तत्र का परिदेवना॥१७॥

महाविद्योऽल्पविद्यश्च बलवान् दुर्व्वलश्च यः । दर्शनीयो विरूपश्च सुभगो दुर्भगश्च यः ॥ १८ ॥ सर्व्वं कालः समादत्ते गम्भीरः स्वेन तेजसा । तस्मिन् कालवशंप्राप्ते का व्यथा मे विजानतः ॥ १९ ॥ दग्धमेवानुदहति हतमेवानुहन्यते । नश्यते नष्टमेवाग्रे लब्धव्यं लभते नरः ॥ २० ॥ नास्य द्वीपः कुतः पारो नावारः सम्प्रदृश्यते । नान्तमस्य प्रपश्यामि विधेर्द्दिव्यस्य चिन्तयन् ॥ २१ ॥ यदि मे पश्यतः कालो भूतानि न विनाशयेत् । स्यान्मे हर्षश्च दर्पश्च क्रोधश्चैव शचीपते ॥ २२ ॥ तुषभक्षन्तु मां ज्ञात्वा प्रविविक्तजने गृहे । बिभ्रतं गार्द्दभं रूपमागत्य परिगर्हसे ॥ २३ ॥ इच्छन्नहं विकुर्य्यां हि रूपाणि बहुधात्मनः । विभीषणानि यानीक्ष्य पलायेथा-स्त्वमेव मे ॥ २४ ॥ कालः सर्व्वं समादत्ते कालः सर्व्वं प्रयच्छति । कालेन विहितं सर्व्वं मा कृथा शक्र पौरुषम् ॥ २५ ॥ पुरा सर्व्वं प्रव्यथितं मयि क्रुद्धे पुरन्दर । अवैमि त्वस्य लोकस्य धर्म्मं शक्र सनातनम् ॥ २६ ॥ त्वमप्येवमवेक्षस्व मात्मना विस्मयं गमः । प्रभवश्च प्रभावश्च नात्मसंस्थः कदाचन ॥ २७ ॥ कौमारमिव ते चित्तं तथैवाद्य यथा पुरा । समवेक्षस्व मघवन् बुद्धिं विन्दस्व नैष्ठिकीम् ॥ २८ ॥ देवा मनुष्याः पितरो गन्धर्व्वोरगराक्षसाः । आसन् सर्व्वं मम वशे तत् सर्व्वं वेत्थ वासव ॥ २९ ॥ नमस्तस्यै दिशेऽप्यस्तु यस्यां वैरोचनो बलिः । इति मामभ्यपद्यन्त बुद्धिमात्सर्य्यमोहिताः ॥३०॥ नाहं तदनुशोचामि नात्मभ्रंशं शचीपते । एवं मे निश्चिता बुद्धिः शास्तुस्तिष्ठाम्यहं वशे ॥ ३१ ॥ दृश्यते हि कुले जातो दर्शनीयः प्रतापवान् । दुःखं जीवन् सहामात्यो भवितव्यं हि तत्तथा ॥३२॥ दौष्कुलेयस्तथा मूढ़ो दुज्जातः शक्र दृश्यते । सुखं जीवन् सहामात्यो भवितव्यं हि तत्तथा ॥ ३३ ॥ कल्याणी रूपसम्पन्ना दुर्भगा शक्र दृश्यते । अलक्षणा विरूपा च सुभगा दृश्यतेऽपरा ॥ ३४ ॥ नैतदस्मत्कृतं शक्र नैतच्छक्र त्वया कृतम् । यत्त्वमेवं गतो वज्रिन्

यश्चाप्येवं गता वयम् ॥ ३५ ॥ न कर्म्म भवताप्येतत् कृतं मम शत-
क्रतो । ऋद्धिर्वाप्यथ वानर्द्धिः पर्य्यायकृतमेव तत् ॥ ३६ ॥ पश्यामि
त्वां विराजन्तं देवराजमवस्थितम् । श्रीमन्तं द्युतिमन्तञ्च गर्ज्ज-
मानं ममोपरि ॥ ३७ ॥ एवं नैव न चेत् कालो मामाक्रम्य स्थितो
भवेत् । पातयेयमहं त्वाद्य सवज्रमपि मुष्टिना ॥ ३८ ॥ न तु
विक्रमकालोऽयं शान्तिकालोऽयमागतः । कालः स्थापयते सर्वं
कालः पचति वै तथा ॥ ३९ ॥ माञ्चेदभ्यागतः कालो दानवेश्वर-
पूजितम् । गर्ज्जन्तं प्रतपन्तञ्च कमन्यं नागमिष्यति ॥ ४० ॥ द्वाद-
शानान्तु भवतामादित्यानां महात्मनाम् । तेजांस्येकेन सर्व्वेषां
देवराज धृतानि मे ॥ ४१ ॥ अहमेवोद्वहाम्यापो विसृजामि च
वासव । तपामि चैव त्रैलोक्यं विद्योताम्यहमेव च ॥ ४२ ॥ सं-
रक्षामि विलुम्पामि ददाम्यहमथाददे । संयच्छामि नियच्छामि
लोकेषु प्रभुरीश्वरः ॥४३॥ तदद्य विनिवृत्तं मे प्रभुत्वममराधिप ।
कालसैन्यावगाढ़स्य सर्वं न प्रतिभाति मे ॥ ४४ ॥ नाहं कर्त्ता न
चैव त्वं नान्यः कर्त्ता शचीपते । पर्य्यायेण हि भुज्यन्ते लोकाः
शक्र यदृच्छया ॥ ४५ ॥ मासमासार्द्धवेश्मानमहोरात्राभिसंवृतम् ।
ऋतुद्वारं वर्षमुखमायुर्वेदविदो जनाः ॥ ४६ ॥ आहुः सर्वमिदं
चिन्त्यं जनाः केचिन्मनीषया । अस्याः पञ्चैव चिन्तायाः पर्य्येष्यामि
च पञ्चधा ॥ ४७ ॥ गम्भीरं गहनं ब्रह्म महत्तोयार्णवं यथा ।
अनादिनिधनञ्चाहुरक्षरं क्षरमेव च ॥ ४८ ॥ सत्त्वेषु लिङ्गमाविश्य
निर्लिङ्गमपि तत् स्वयम् । मन्यन्ते ध्रुवमेवैनं ये जनास्तत्त्वदर्शिनः
॥ ४९ ॥ भूतानान्तु विपर्य्यासं कुरुते भगवानिति । न ह्येताव-
द्भवेद्गम्यं न यस्मात् प्रभवेत् पुनः ॥ ५० ॥ गतिं हि सर्वभूताना-
मगत्वा क्व गमिष्यसि । यो धावता न हातव्यस्तिष्ठन्नपि न हीयते
॥ ५१ ॥ तमिन्द्रियाणि सर्वाणि नानुपश्यन्ति पञ्चधा । आहुश्चैनं
केचिदग्निं केचिदाहुः प्रजापतिम् ॥ ५२ ॥ ऋतून्मासार्द्धमासांश्च

दिवसांश्च क्षणांस्तथा । पूर्वाह्णमपराह्णञ्च मध्याह्नमपि चापरे ॥५३॥
मुहूर्त्तमपि चैवाहुरेकं सन्तमनेकधा । तं कालमिति जानीहि
यस्य सर्वमिदं वशे ॥ ५४ ॥ बहूनीन्द्रसहस्राणि समतीतानि
वासव । बलवीर्य्योपपन्नानि तथैव त्वं शचीपते ॥ ५५ ॥ त्वामप्यति-
बलं शक्र देवराजं बलोत्कटम् । प्राप्ते काले महावीर्य्यः कालः
संशमयिष्यति ॥ ५६ ॥ य इदं सर्वमादत्ते तस्माच्छक्र स्थिरो भव ।
मया त्वया च पूर्वैश्च न स शक्यो निवर्त्तितुम् ॥ ५७ ॥ यामेतां
प्राप्य जानीषे राजश्रियमनुत्तमाम् । स्थिता मयीति तन्मिथ्या नैषा
ह्येकत्र तिष्ठति ॥५८॥ स्थिता हीन्द्रसहस्रेषु त्वद्विशिष्टतमेष्वियम् ।
माञ्च लोला परित्यज्य त्वामगाद्विबुधाधिप ॥ ५९ ॥ मैवं शक्र
पुनः कार्षीः शान्तो भवितुमर्हसि । त्वामप्येवंविधं ज्ञात्वा क्षिप्र-
मन्यं गमिष्यति ॥ ६० ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि बलिवासवसंवादे
चतुर्विंशत्यधिकद्विशततोऽध्यायः ॥ २२४ ॥

---

भीष्म उवाच । शतक्रतुरथापश्यद्बलेर्दीप्तां महात्मनः । स्वरू-
पिणीं शरीराद्धि निष्क्रामन्तीं तदा श्रियम् ॥ १ ॥ तां दृष्ट्वा
प्रभयोद्दीप्तां भगवान् पाकशासनः । विस्मयोत्फुल्लनयनो बलिं
पप्रच्छ वासवः ॥ २ ॥

शक्र उवाच । बले केयमनपक्रान्ता रोचमाना शिखण्डिनी ।
त्वत्तः स्थिता सकेयूरा दीप्यमाना स्वतेजसा ॥ ३ ॥

बलिरुवाच । न हीमामासुरीं वेद्मि न दैवीं न च मानुषीम्।
त्वमेनां पृच्छ वा मा वा यथेष्टं कुरु वासव ॥ ४ ॥

शक्र उवाच । का त्वं बलेरपक्रान्ता रोचमाना शिखण्डिनी ।
अजानतो ममाचक्ष्व नामधेयं शुचिस्मिते ॥ ५ ॥ का त्वं तिष्ठसि

मायेव दीप्यमाना स्वतेजसा। हित्वा दैत्येश्वरं सुभ्रु तन्ममाचक्ष्व पृच्छतः ॥ ६ ॥

श्रीरुवाच। न मां विरोचनो वेद नायं वैरोचनो बलिः। आहुर्मां दुःसहेत्येवं विधित्सेति च मां विदुः ॥७॥ भूतिर्लक्ष्मीति मामाहुः श्रीरित्येवञ्च वासव। त्वं मां शक्र न जानीषे सर्वे देवा न मां विदुः ॥ ८ ॥

शक्र उवाच। किमिदं त्वं मम कृते उताहो बलिनः कृते। दुःसहे विजहास्येनं चिरसंवासिनी सती ॥ ९ ॥

श्रीरुवाच। न धाता न विधाता मां विदधाति कथञ्चन। कालस्तु शक्र पर्य्यागान्मैनं शक्रावमन्यथाः ॥ १० ॥

शक्र उवाच। कथं त्वया बलिस्त्यक्तः किमर्थं वा शिखण्डिनि। कथञ्च मां न जह्यास्त्वं तन्मे ब्रूहि शुचिस्मिते ॥ ११ ॥

श्रीरुवाच। सत्ये स्थितास्मि दाने च व्रते तपसि चैव हि। पराक्रमे च धर्मे च पराचीनस्ततो बलिः ॥१२॥ ब्रह्मण्योऽयं पुरा भूत्वा सत्यवादी जितेन्द्रियः। अभ्यसूयद्ब्राह्मणान् वै उच्छिष्टश्चास्पृशद्घृतम् ॥१३॥ यज्ञशीलः पुरा भूत्वा मामेव यजतेत्ययम्। प्रोवाच लोकान्मूढ़ात्मा कालेनोपनिपीड़ितः ॥ १४ ॥ अपाकृता ततः शक्र त्वयि वत्स्यामि वासव। अप्रमत्तेन धार्य्यास्मि तपसा विक्रमेण च ॥ १५॥

शक्र उवाच। नास्ति देवमनुष्येषु सर्वभूतेषु वा पुमान्। यस्त्वामेको विसहितुं शक्नुयात् कमलालये ॥ १६ ॥

श्रीरुवाच। नैव देवो न गन्धर्वो नासुरो न च राक्षसः। यो मामेको विसहितुं शक्तः कश्चित् पुरन्दर ॥ १७ ॥

शक्र उवाच। तिष्ठेथा मयि नित्यं त्वं यथा तद्ब्रूहि मे शुभे। तत् करिष्यामि ते वाक्यमृतं तद्वक्तुमर्हसि ॥ १८ ॥

श्रीरुवाच। स्थास्यामि नित्यं देवेन्द्र यथा त्वयि निबोध तत्। विधिना वेददृष्टेन चतुर्द्धा विभजस्व माम् ॥ १९ ॥

शक्र उवाच। अहं वै त्वां निधास्यामि यथाशक्ति यथाबलम् । न तु मेऽतिक्रमः स्याद्वै सदा लक्ष्मि तवान्तिके ॥ २० ॥ भूमिरेव मनुष्येषु धारिणी भूतभाविनी । सा ते पादं तितिक्षेत समर्था हीति मे मतिः ॥ २१ ॥

श्रीरुवाच । एष मे निहितः पादो योऽयं भूमौ प्रतिष्ठितः । द्वितीयं शक्र पादं मे तस्मात् सुनिहितं कुरु ॥ २२ ॥

शक्र उवाच । आप एव मनुष्येषु द्रवन्त्यः परिचारिणीः । तास्ते पादं तितिक्षन्तामलमापस्तितिक्षितुम् ॥ २३ ॥

श्रीरुवाच । एष मे निहितः पादो योऽयमप्सु प्रतिष्ठितः । तृतीयं शक्र पादं मे तस्मात् सुनिहितं कुरु ॥ २४ ॥

शक्र उवाच । यस्मिन् वेदाश्च यज्ञाश्च यस्मिन्देवाः प्रतिष्ठिताः । तृतीयं पादमग्निस्ते सुधृतं धारयिष्यति ॥ २५ ॥

श्रीरुवाच । एष मे निहितः पादो योऽयमग्नौ प्रतिष्ठितः । चतुर्थं शक्र पादं मे तस्मात् सुनिहितं कुरु ॥ २६ ॥

शक्र उवाच । ये वै सन्तो मनुष्येषु ब्रह्मण्याः सत्यवादिनः । ते ते पादं तितिक्षन्तामलं सन्तस्तितिक्षितुम् ॥ २७ ॥

श्रीरुवाच । एष मे निहितः पादो योऽयं सत्सु प्रतिष्ठितः । एवं हि निहिताः शक्र भूतेषु परिधत्स्व माम् ॥ २८ ॥

शक्र उवाच । भूतानामिह यो वै त्वां मया विनिहितां सतीम् । उपहन्यात् स मे धृष्यस्तथा शृण्वन्तु मे वचः । ततस्त्यक्तः श्रिया राजा दैत्यानां बलिरब्रवीत् ॥ २९ ॥

बलिरुवाच । यावत् पुरस्तात् प्रतपेत्तावद्वै दक्षिणां दिशम् । पश्चिमां तावदेवापि तथोदीचीं दिवाकरः ॥ ३० ॥ तथा मध्यन्दिने सूर्य्यो नास्तमेति यदा तदा । पुनर्द्देवासुरं युद्धं भावि जेतास्मि वस्तदा ॥३१॥ सर्व्वलोकान् यदादित्य एकस्थस्तापयिष्यति। तदा देवासुरे युद्धे जेताहं त्वां शतक्रतो ॥ ३२ ॥

शक्र उवाच। ब्रह्मणास्मि समादिष्टो न हन्तव्यो भवानिति। तेन तेऽहं बले वज्रं न विमुञ्चामि मूर्द्धनि॥ ३३॥ यथेष्टं गच्छ दैत्येन्द्र स्वस्ति तेऽस्तु महासुर। आदित्यो नावतपिता कदाचिन्मध्यतः स्थितः॥ ३४॥ स्थापितो ह्यस्य समयः पूर्वमेव स्वयम्भुवा। अजस्रं परियात्येष सत्येनावतपन् प्रजाः॥ ३५॥ अयनं तस्य षण्मासानुत्तरं दक्षिणं तथा। येन संयाति लोकेषु शीतोष्णे विसृजन्रविः॥ ३६॥

भीष्म उवाच। एवमुक्तस्तु दैत्येन्द्रो बलिरिन्द्रेण भारत। जगाम दक्षिणामाशामुदीचीन्तु पुरन्दरः॥ ३७॥ इत्येतद्बलिना गीतमनहङ्कारसंज्ञितम्। वाक्यं श्रुत्वा सहस्राक्षः खमेवारुरुहे तदा॥ ३८॥

इतिशान्तिपर्वणि मोक्षधर्मपर्वणि श्रीसन्निधाने
पञ्चविंशत्यधिकद्विशततोऽध्यायः॥ २२५॥

---

भीष्म उवाच। अत्रैवोदाहरन्तीममितिहासं पुरातनम्। शतक्रतोश्च सम्वादं नमुचेश्च युधिष्ठिर॥ १॥ श्रिया विहीनमासीनमक्षोभ्यमिव सागरम्। भवाभवज्ञं भूतानामित्युवाच पुरन्दरः॥२॥ बद्धः पाशैश्च्युतः स्थानात् द्विषतां वशमागतः। श्रिया विहीनो नमुचे शोचस्याहो न शोचसि॥ ३॥

नमुचिरुवाच। अनिवार्य्येण शोकेन शरीरञ्चोपतप्यते। अमित्राश्च प्रहृष्यन्ति शोके नास्ति सहायता। तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत्॥ ४॥ सन्तापाद्भ्रश्यते रूपं सन्तापाद्भ्रश्यते श्रियः। सन्तापाद्भ्रश्यते चायुर्द्धर्मश्चैव सुरेश्वर॥ ५॥ विनीय खलु तद्दुःखमागतं वैमनस्यजम्। ध्यातव्यं मनसा हृद्यं कल्याणं संविजानता॥ ६॥ यदा यदा हि पुरुषः कल्याणे कुरुते मनः।

तदा तस्य प्रसिध्यन्ति सर्व्वार्था नात्र संशयः ॥ ७ ॥ एकः शास्ता न द्वितीयोऽस्ति शास्ता गर्भे शयानं पुरुषं शास्ति शास्ता । तेनानुयुक्तः प्रवणादिवोदकं यथा नियुक्तोऽस्मि तथा वहामि ॥८॥ भवाभवौ त्वभिजानन् गरीयो ज्ञानाच्छ्रेयो न तु तद्वै करोमि । आशासु धर्म्यासु परासु कुर्वन् यथा नियुक्तोऽस्मि तथा वहामि ॥९॥ यथा यथास्य प्राप्तव्यं प्राप्नोत्येव तथा तथा । भवितव्यं यथा यच्च भवत्येव तथा तथा ॥ १० ॥ यत्र यत्रैव संयुक्तो धाता गर्भं पुनः पुनः । तत्र तत्रैव वसति न यत्र स्वयमिच्छति ॥ ११ ॥ भावो योऽयमनुप्राप्तो भवितव्यमिदं मम । इति यस्य सदा भावो न स मुह्येत् कदाचन ॥ १२ ॥ पर्य्यायैर्हन्यमानानामभियोक्ता न विद्यते । दुःखमेतत्तु यद्द्वेष्टा कर्त्ताहमिति मन्यते ॥ १३ ॥ ऋषींश्च देवांश्च महासुरांश्च त्रैविद्यवृद्धांश्च वने मुनींश्च । कान् वापदो नोपनमन्ति लोके परावरज्ञास्तु न सम्भ्रमन्ति ॥ १४ ॥ न पण्डितः क्रुध्यति नापि सज्जते न चापि संसीदति न प्रहृष्यति । न चातिकृच्छ्रव्यसनेषु शोचते स्थितः प्रकृत्या हिमवानिवाचलः ॥ १५ ॥ यमर्थसिद्धिः परमा न हर्षयेत्तथैव काले व्यसनं न मोहयेत् । सुखञ्च दुःखञ्च तथैव मध्यमं निषेवते यः सधुरन्धरो नरः ॥ १६ ॥ यां यामवस्थां पुरुषोऽधिगच्छेत्तस्यां रमेतापरितप्यमानः । एवं प्रवृद्धं प्रणुदेन्मनोजं सन्तापमायासकरं शरीरात् ॥ १७ ॥ न तत् सदः स्यात् परिषत् सभा च सा प्राप्य यां न कुरुते सदा भयम् । धर्म्मतत्त्वमवगाह्य बुद्धिमान् योऽभ्युपैति स धुरन्धरो नरः ॥ १८ ॥ प्राज्ञस्य कर्म्माणि दुरन्वयानि न वै प्राज्ञो मुह्यति मोहकाले । स्थानाच्च्युतश्चेन्न मुमोह गौतमस्तावत् कृच्छ्रामापदं प्राप्य वृद्धः ॥१९॥ न मन्त्रबलवीर्य्येण प्रज्ञया पौरुषेण च । न शीलेन न वृत्तेन तथा नैवार्थसम्पदा । अलभ्यं लभते मर्त्त्यस्तत्र का परिदेवना ॥ २० ॥ यदेवमनुजातस्य धातारो विदधुः पुरा । तदेवानुचरिष्यामि किं

मे कृत्यः करिष्यति ॥ २१ ॥ लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति । प्राप्तव्यान्येव चाप्नोति दुःखानि च सुखानि च ॥ २२ ॥ एतद्विदित्वा कार्त्स्न्येन यो न मुह्यति मानवः । कुशली सुखदुःखेषु स वै सर्वधरो नरः ॥ २३ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शक्रनमुचिसम्वादे षड्विंशत्यधिकद्विशततोऽध्यायः ॥ २२६ ॥

---

युधिष्ठिर उवाच । मग्नस्य व्यसने कृच्छ्रे किं श्रेयः पुरुषस्य हि । बन्धुनाशे महीपाल राज्यनाशेऽथ वा पुनः ॥ १ ॥ त्वं हि नः परमो वक्ता लोकेऽस्मिन् भरतर्षभ । एतद्भवन्तं पृच्छामि तन्मे त्वं वक्तुमर्हसि ॥ २ ॥

भीष्म उवाच । पुत्रदारैः सुखैश्चैव वियुक्तस्य धनेन वा । मग्नस्य व्यसने कृच्छ्रे धृतिः श्रेयस्करी नृप । धैर्य्येण युक्तं सततं शरीरं न विशीर्य्यते ॥ ३ ॥ विशोकता सुखं धत्ते धत्ते चारोग्यमुत्तमम् । आरोग्याच्च शरीरस्य स पुनर्विन्दते श्रियम् ॥ ४ ॥ यश्च प्राज्ञो नरस्तात सात्त्विकीं वृत्तिमास्थितः । तस्यैश्वर्य्यञ्च धैर्य्यञ्च व्यवसायश्च कर्मसु ॥ ५ ॥ अत्रैवोदाहरन्तीममितिहासं पुरातनम् । बलिवासवसम्वादं पुनरेव युधिष्ठिर ॥ ६ ॥ वृत्ते दैवासुरे युद्धे दैत्यदानवसंक्षये । विष्णुक्रान्तेषु लोकेषु देवराजे शतक्रतौ । इज्यमानेषु देवेषु चातुर्वर्ण्ये व्यवस्थिते । समृध्यमाने त्रैलोक्ये प्रीतियुक्ते स्वयम्भुवि ॥ ७ ॥ रुद्रैर्वसुभिरादित्यैरश्विभ्याञ्च सुरर्षिभिः । गन्धर्वैर्भुजगेन्द्रैश्च सिद्धैश्चान्यैर्वृतः प्रभुः ॥ ८ ॥ चतुर्द्दन्तं सुदान्तञ्च वारणेन्द्रं श्रिया वृतम् । आरुह्यैरावणं शक्रस्त्रैलोक्यमनुसंययौ ॥ ९ ॥ स कदाचित् समुद्रान्ते कस्मिंश्चिद्गिरिगह्वरे । बलिं वैरोचनिं वज्री ददर्शोपससर्प च ॥ १० ॥ तमैरावतमूर्द्धस्थं

शेच्च देवगणैर्वृतम् । सुरेन्द्रमिन्द्रं दैत्येन्द्रो न शुशोच न विव्यथे ॥ ११ ॥ दृष्ट्वा तमविकारस्थं तिष्ठन्तं निर्भयं बलिम् । अधिरूढ़ो द्विजश्रेष्ठमित्युवाच शतक्रतुः ॥ १२ ॥ दैत्य न व्यथसे शौर्य्यादथ वा वृद्धसेवया । तपसा भावितत्वाद्वा सर्व्वथैतत् सुदुष्करम् ॥ १३ ॥ शत्रुभिर्व्वशमानीतो हीनः स्थानादनुत्तमात् । वैरोचने किमाश्रित्य शोचितव्ये न शोचसि ॥ १४ ॥ श्रैष्ठ्यं प्राप्य स्वजातीनां महाभोगाननुत्तमान् । हृतस्वबलराज्यस्त्वं ब्रूहि कस्मान्न शोचसि ॥ १५ ॥ ईश्वरो हि पुरा भूत्वा पितृपैतामहे पदे । तत्त्वमद्य हृतं दृष्ट्वा सपत्नैः किं न शोचसि ॥ १६ ॥ बद्धश्च वारुणैः पाशैर्व्वज्रेण च समाहतः । हृतदारो हृतधनो ब्रूहि कस्मान्न शोचसि ॥ १७ ॥ नष्टश्रीर्व्विभवभ्रष्टो यन्न शोचसि दुष्करम् । त्रैलोक्यराज्यनाशे हि कोऽन्यो जीवितुमुत्सहेत् ॥ १८ ॥ एतच्चान्यच्च परुषं ब्रुवन्तं परिभूय तम् । श्रुत्वा सुखमसम्भ्रान्तो बलिर्व्वैरोचनोऽब्रवीत् ॥ १९ ॥

बलिरुवाच । निगृहीते मयि भृशं शक्र किं कत्थितेन ते । वज्रमुद्यम्य तिष्ठन्तं पश्यामि त्वां पुरन्दर ॥ २० ॥ अशक्तः पूर्व्वमासीस्त्वं कथञ्चिच्छक्ततां गतः । कस्त्वदन्य इमां वाचं सक्रूरां वक्तुमर्हति ॥२१॥ यस्तु शत्रोर्व्वशस्थस्य शक्तोऽपि कुरुते दयाम् । हस्तप्राप्तस्य वीरस्य तञ्चैव पुरुषं विदुः ॥ २२ ॥ अनिश्चयो हि युद्धेषु द्वयोर्व्विवदमानयोः । एकः प्राप्नोति विजयमेकश्चैव पराजयम् ॥ २३ ॥ मा च ते भूत् स्वभावोऽयमिति दैवतपुङ्गव । ईश्वरः सर्व्वभूतानां विक्रमेण जितो बलात् ॥ २४ ॥ नैतदस्मत्कृतं शक्र नैतच्छक्र कृतं त्वया । यत्त्वमेवं गतो वज्रिन् यद्वाप्येवं गता वयम् ॥ २५ ॥ अहमासं यथाद्य त्वं भविता त्वं यथा वयम् । मावमंस्था मया कर्म्म दुष्कृतं कृतमित्युत ॥ २३ ॥ सुखदुःखे हि पुरुषः पर्य्यायेणाधिगच्छति । पर्य्यायेणासि शक्रत्वं प्राप्तः शक्र न कर्म्मणा ॥ २७ ॥ कालः काले नयति मां त्वाञ्च कालो नयत्ययम् । तेनाहं

त्वं यथा नाद्य त्वञ्चापि न यथा वयम् ॥ २८ ॥ न मातृपितृशुश्रूषा न च दैवतपूजनम्। नान्यो गुणसमाचारः पुरुषस्य सुखावहः ॥२९॥ न विद्या न तपो दानं न मित्राणि न बान्धवाः। शक्नुवन्ति परित्रातुं नरं कालेन पीड़ितम् ॥ ३० ॥ नागामिनमनर्थं हि प्रतिघातशतैरपि। शक्नुवन्ति प्रतिव्योढुमृते बुद्धिबलान्नराः ॥३१॥ पर्य्यायैर्हन्यमानानां परित्राता न विद्यते। इदन्तु दुःखं यच्छक्र कर्त्ताहमिति मन्यसे ॥ ३२ ॥ यदि कर्त्ता भवेत् कर्त्ता न क्रियेत कदाचन। यस्मात्तु क्रियते कर्त्ता तस्मात् कर्त्ताप्यनीश्वरः ॥ ३३ ॥ कालेन त्वामहमजयं कालेनाहं जितस्त्वया। गन्ता गतिमतां कालः कालः कलयति प्रजाः ॥ ३४ ॥ इन्द्र प्राकृतया बुद्ध्या प्रलयं नावबुध्यसे। केचित्त्वां बहु मन्यन्ते श्रैष्ठ्यं प्राप्तं स्वकर्म्मणा ॥ ३५ ॥ कथमस्मद्विधो नाम जानंल्लोकप्रवृत्तयः। कालेनाभ्याहतः शोचेन्मुह्येद्वाप्यथ विभ्रमेत् ॥ ३६ ॥ नित्यं कालपरीतस्य मम वा मद्विधस्य वा। बुद्धिर्व्यसनमासाद्य भिन्ना नौरिव सीदति ॥ ३७॥ अहञ्च त्वञ्च ये चान्ये भविष्यन्ति सुराधिपाः। ते सर्वे शक्र यास्यन्ति मार्गमिन्द्रशतैर्गतम् ॥ ३८ ॥ त्वामप्येवं सुदुर्द्धर्षं ज्वलन्तं परया श्रिया। काले परिणते कालः कालयिष्यति मामिव ॥ ३९ ॥ बहूनीन्द्रसहस्राणि दैवतानां युगे युगे। अभ्यतीतानि कालेन कालो हि दुरतिक्रमः ॥ ४० ॥ इदन्तु लब्ध्वा संस्थानमात्मानं बहु मन्यसे। सर्वभूतभवं देवं ब्रह्माणमिव शाश्वतम् ॥ ४१ ॥ न चेदमचलं स्थानमनन्तं वापि कस्यचित्। त्वन्तु बालिशया बुद्ध्या ममेदमिति मन्यसे ॥ ४२ ॥ अविश्वस्ते विश्वसिषि मन्यसे चाध्रुवे ध्रुवम्। नित्यं कालपरीतात्मा भवत्येवं सुरेश्वर ॥ ४३ ॥ ममेयमिति मोहात्त्वं राजश्रियमभीप्ससि। नेयं तव न चास्माकं न चान्येषां स्थिरा सदा ॥ ४४ ॥ अतिक्रम्य बहूनन्यांस्त्वयि तावदियं गता। किञ्चित् कालमियं स्थित्वा त्वयि वासव चञ्चला। गौर्निपा-

मिवोत्सृज्य पुनरन्यं गमिष्यति ॥ ४५ ॥ राजलोका ह्यतिक्रान्ता यान्न संख्यातुमुत्सहे । त्वत्तो बहुतराश्चान्ये भविष्यन्ति पुरन्दर ॥ ४६ ॥ सवृक्षौषधिरत्नेयं ससत्त्ववनाकरा । तानिदानीं न पश्यामि यैर्भुक्तेयं पुरा मही ॥४७॥ पृथुरैलो मयो भौमो नरकः शम्बरस्तथा । अश्वग्रीवः पुलोमा च स्वर्भानुरमितध्वजः ॥ ४८ ॥ प्रह्लादो नमुचिर्दक्षो विप्रचित्तिर्विरोचनः । ह्रीनिषेवः सुहोत्रश्च भूरिहा पुष्पवान् वृषः ॥ ४९ ॥ सत्येषुर्ऋषभो बाहुः कपिलाश्वो विरूपकः । बाणः कार्त्तस्वरो वह्निर्विश्वदंष्ट्रोऽथ नैर्ऋतिः ॥ ५० ॥ सङ्कोचोऽथ वरीताक्षो वराहोऽश्वो रुचिप्रभः । विश्वजित् प्रतिरूपश्च वृषाण्डो विष्करो मधुः ॥ ५१ ॥ हिरण्यकशिपुश्चैव कैटभश्चैव दानवः । दैतेया दानवाश्चैव सर्व्वे ते नैर्ऋतैः सह ॥ ५२ ॥ एते चान्ये च बहवः पूर्व्वे पूर्व्वतराश्च ये । दैत्येन्द्रा दानवेन्द्राश्च यांश्चान्याननुशुश्रुमः ॥ ५३ ॥ बहवः पूर्व्वदैत्येन्द्राः सन्त्यज्य पृथिवीं गताः । कालेनाभ्याहताः सर्व्वे कालो हि बलवत्तरः ॥ ५४ ॥ सर्व्वैः क्रतुशतैरिष्टं न त्वमेकः शतक्रतुः । सर्व्वे धर्मपराश्चासन् सर्व्वे सततसत्रिणः ॥ ५५ ॥ अन्तरीक्षचराः सर्व्वे सर्व्वेऽभिमुखयोधिनः । सर्व्वे संहननोपेताः सर्व्वे परिघबाहवः ॥ ५६ ॥ सर्व्वे मायाशतधराः सर्व्वे ते कामरूपिणः । सर्व्वे समरमासाद्य न श्रूयन्ते पराजिताः ॥ ६७ ॥ सर्व्वे सत्यव्रतपराः सर्व्वे कामविहारिणः । सर्व्वे वेदव्रतपराः सर्व्वे चैव बहुश्रुताः ॥ ५८ ॥ सर्व्वे सम्मतमैश्वर्य्यमीश्वराः प्रतिपेदिरे । न चैश्वर्य्यमदस्तेषां भूतपूर्व्वो महात्मनाम् ॥ ५९ ॥ सर्व्वे यथार्हदातारः सर्व्वे विगतमत्सराः । सर्व्वे सर्व्वेषु भूतेषु यथावत् प्रतिपेदिरे ॥ ६० ॥ सर्व्वे दाक्षायणीपुत्राः प्राजापत्या महाबलाः । ज्वलन्तः प्रतपन्तश्च कालेन प्रतिसंहृताः ॥ ६१॥ त्वञ्चैवेमां यदा भुक्त्वा पृथिवीं त्यक्ष्यसे पुनः । न शक्ष्यसि तदा शक्र नियन्तुं शोकमात्मनः ॥ ६२ ॥ मुञ्चेच्छां कामभोगेषु मुञ्चेमं श्रीभवं मदम् ।

एवं स्वराज्यनाशे त्वं शोकं संप्रसहिष्यसि॥ ६३॥ शोककाले शुचो मा त्वं हर्षकाले च मा हृषः। अतीतानागतं हित्वा प्रत्युत्पन्नेन वर्त्तय॥६४॥ माञ्चेदभ्यागतः कालः सदा युक्तमतन्द्रितः। क्षमस्व नचिरादिन्द्र त्वामप्युपगमिष्यति॥ ६५॥ त्रासयन्निव देवेन्द्र वाग्भिस्तक्षसि मामिह। संयते मयि नूनं त्वमात्मानं बहु मन्यसे॥ ६६॥ कालः प्रथममायान्मां पश्चात्त्वामनुधावति। तेन गर्ज्जसि देवेन्द्र पूर्वं कालहते मयि॥ ६७॥ को हि स्थातुमलं लोके मम क्रुद्धस्य संयुगे। कालस्तु बलवान् प्राप्तस्तेन तिष्ठसि वासव। यत्तद्वर्षसहस्रान्तं पूर्णं भवितुमर्हति॥ ६८॥ यथा मे सर्वगात्राणि न सुस्थानि महौजसः। अहमैन्द्राच्च्युतः स्थानात्त्वमिन्द्रः प्रकृतो दिवि॥ ६९॥ सुचित्रे जीवलोकेऽस्मिन्नुपास्यः कालपर्य्ययात्। किं हि कृत्वा त्वमिन्द्रोऽद्य किं वा कृत्वा वयं च्युताः॥ ७०॥ कालः कर्त्ता विकर्त्ता च सर्वमन्यदकारणम्। नाशं विनाशमैश्वर्य्यं सुखं दुःखं भवाभवौ॥ ७१॥ विद्वान् प्राप्यैवमत्यर्थं न प्रहृष्येन्न च व्यथेत्। त्वमेव हीन्द्र वेत्थास्मान् वेदाहं त्वाञ्च वासव॥ ७२॥ किं कत्थसे मां किञ्च त्वं कालेन निरपत्रप। त्वमेव हि पुरा वेत्थ यत्तदा पौरुषं मम॥ ७३॥ समरेषु च विक्रान्तं पर्य्याप्तं तन्निदर्शनम्। आदित्याश्चैव रुद्राश्च साध्याश्च वसुभिः सह॥ ७४॥ मया विनिर्ज्जिताः पूर्वं मरुतश्च शचीपते। तमेव शक्र जानासि देवासुरसमागमे॥ ७५॥ समेता विबुधा भग्नास्तरसा समरे मया। पर्वताश्चासकृत् क्षिप्ताः सवना सवनौकसः॥ ७६॥ सटङ्कशिखरा भग्नाः समरे मूर्द्ध्नि ते मता। किन्नु शक्यं मया कर्त्तुं कालो हि दुरतिक्रमः॥ ७७॥ न हि त्वां नोत्सहे हन्तुं सवज्रमपि मुष्टिना। न तु विक्रमकालोऽयं क्षमाकालोऽयमागतः। तेन त्वां मर्षये शक्र दुर्मर्षणतरस्त्वया॥ ७८॥ त्वं मां परिणते काले परीतं कालवह्निना। नियतं कालपाशेन बद्धं शक्र विकत्थसे॥७९॥

अयं स पुरुषः श्यामो लोकस्य दुरतिक्रमः। बद्धा तिष्ठति मां
रौद्रः पशुं रसनया यथा ॥ ८० ॥ लाभालाभौ सुखं दुःखं काम-
क्रोधौ भवाभवौ। वधबन्धप्रमोक्षञ्च सर्व्वं कालेन लभ्यते ॥ ८१ ॥
नाहं कर्त्ता न कर्त्ता त्वं कर्त्ता यस्तु सदा प्रभुः। सोऽयं पचति
कालो मां वृक्षे फलमिवागतम् ॥ ८२ ॥ यान्येव पुरुषः कुर्व्वन्
सुखैः कालेन युज्यते। पुनस्तान्येव कुर्व्वाणो दुःखैः कालेन योज्यते
॥ ८३ ॥ न च कालेन कालज्ञः स्पृष्टः शोचितुमर्हति। तेन शक्र
न शोचामि नास्ति शोके सहायता ॥ ८४ ॥ यदा हि शोचतः
शोको व्यसनं नापकर्षति। सामर्थ्यं शोचतो नास्तीत्यतोऽहं नाद्य
शोचिमि ॥ ८५ ॥ एवमुक्तः सहस्राक्षो भगवान् पाकशासनः।
प्रतिसंहृत्य संरम्भमित्युवाच शतक्रतुः ॥ ८६ ॥ स वज्रमुद्यतं बाहुं
दृष्ट्वा पाशांश्च वारुणान्। कस्येह न व्यथेद्बुद्धिर्मृत्योरपि जिघांसतः
॥ ८७ ॥ स ते न व्यथते बुद्धिरचला तत्त्वदर्शिनी। ध्रुवं न
व्यथसेऽद्य त्वं धैर्य्यात् सत्यपराक्रम ॥ ८८ ॥ को हि विश्वासमर्थेषु
शरीरे वा शरीरभृत्। कर्त्तुमुत्सहते लोके दृष्ट्वा सम्प्रस्थितं जगत्
॥ ८९ ॥ अहमप्येवमेवैनं लोकं जानाम्यशाश्वतम्। कालाग्नावा-
हितं घोरे गुह्ये सततगेऽक्षरे ॥ ९० ॥ न चात्र परिहारोऽस्ति
कालस्पृष्टस्य कस्यचित्। सूक्ष्माणां महताञ्चैव भूतानां परिपच्य-
ताम् ॥ ९१ ॥ अनीशस्याप्रमत्तस्य भूतानि पचतः सदा। अनि-
वृत्तस्य कालस्य क्षयं प्राप्तो न मुच्यते ॥ ९२ ॥ अप्रमत्तः प्रमत्तेषु
कालो जागर्त्ति देहिषु। प्रयत्नेनाप्यपक्रान्तो दृष्टपूर्व्वो न केनचित्
॥ ९३ ॥ पुराणः शाश्वतो धर्म्मः सर्व्वप्राणभृतां समः। कालो न
परिहार्य्यश्च न चास्यास्ति व्यतिक्रमः ॥ ९४ ॥ अहोरात्रांश्च मासांश्च
क्षणान् काष्ठा लवान् कलाः। संपिण्डयति यः कालो वृद्धिं
वार्द्धुषिको यथा ॥ ९५ ॥ इदमद्य करिष्यामि श्वः कर्त्तास्मीति
वादिनम्। कालो हरति सम्प्राप्तो नदीवेग इव द्रुमम् ॥ ९६ ॥

इदानीं तावदेवासौ मया दृष्टः कथं मृतः । इति कालेन क्रियतां प्रलापः श्रूयते नृणाम् ॥ ९७ ॥ नश्यन्त्यर्थास्तथा भोगाः स्थानमैश्वर्य्यमेव वा । जीवितं जीवलोकस्य कालेनागम्य नीयते ॥९८॥ उच्छ्रया विनिपातान्ता भावोऽभावः स एव च । अनित्यमध्रुवं सर्वं व्यवसायो हि दुष्करः ॥ ९९ ॥ सा ते न व्यथते बुद्धिरचला तत्त्वदर्शिनी । अहमासं पुरा चेति मनसापि न बुध्यसे ॥ १०० ॥ कालेनाक्रम्य लोकेऽस्मिन् पच्यमाने बलीयसा । अज्येष्ठमकनिष्ठञ्च क्षिप्यमाणो न बुध्यते ॥ १०१ ॥ ईर्षाभिमानलोभेषु कामक्रोधभयेषु च । स्पृहामोहाभिमानेषु लोकः सक्तो विमुह्यति ॥ १०२ ॥ भवांस्तु भावतत्त्वज्ञो विद्वान् ज्ञानतपोऽन्वितः । कालं पश्यति सुव्यक्तं पाणावामलकं यथा ॥ १०३ ॥ कालचारित्रतत्त्वज्ञः सर्वशास्त्रविशारदः । वैरोचने कृतात्मासि स्पृहणीयो विजानताम् ॥ १०४ ॥ सर्वलोको ह्ययं मन्ये बुद्ध्यापरिगतस्त्वया । विहरन् सर्वतो मुक्तो न क्वचित् परिसज्जसे ॥ १०५ ॥ रजश्च हि तमश्च त्वां स्पृशतो न जितेन्द्रियम् । निष्प्रीतिं नष्टसन्तापमात्मानं त्वमुपाससे ॥ १०६ ॥ सुहृदं सर्वभूतानां निर्वैरं शान्तमानसम् । दृष्ट्वा त्वां मम सञ्जाता त्वय्यनुक्रोशिनी मतिः ॥ १०७ ॥ नाहमेतादृशं बुद्धं हन्तुमिच्छामि बन्धने । आनृशंस्यं परो धर्मो ह्यनुक्रोशश्च मे त्वयि ॥ १०८ ॥ मोक्ष्यन्ते वारुणाः पाशास्तवेमे कालपर्य्ययात् । प्रजानामपचारेण स्वस्ति तेऽस्तु महासुर ॥ १०९ ॥ यदा श्वश्रूं स्नुषा वृद्धां परिचारेण योक्ष्यते । पुत्रश्च पितरं मोहात् प्रेषयिष्यति कर्मसु ॥११०॥ ब्राह्मणैः कारयिष्यन्ति वृषलाः पादधावनम् । शूद्राश्च ब्राह्मणीं भार्य्यामुपयास्यन्ति निर्भयाः ॥ १११ ॥ वियोनिषु विमोक्ष्यन्ति बीजानि पुरुषा यदा । सङ्करं कांस्यभाण्डैश्च बलिञ्चैव कुपात्रिकैः ॥ ११ ॥ चातुर्वर्ण्यं यदा कृत्स्नममर्य्यादं भविष्यति । एकैकस्ते तदा पाशः क्रमशः परिमोक्ष्यते ॥ ११३ ॥ अस्मत्तस्ते भयं नास्ति

समयं प्रतिपालय । सुखीभव निराबाधः स्वस्थचेता निरामयः ॥ ११४ ॥ तमेवमुक्त्वा भगवाञ्छतक्रतुः प्रतिप्रयातो गजराजवाहनः । विजित्य सर्व्वानसुरान् सुराधिपो ननन्द हर्षेण बभूव चैकराट् ॥ ११५ ॥ महर्षयस्तुष्टुवुरञ्जसा च तं वृषाकपिं सर्व्वचराचरेश्वरम् । हिमापहो हव्यमुवाह चाध्वरे तथामृतं चार्पितमीश्वरोऽपि हि ॥ ११६ ॥ द्विजोत्तमैः सवगतैरभिष्टुतो विदीप्ततेजा गतमन्युरीश्वरः । प्रशान्तचेता मुदितः स्वमालयं त्रिपिष्टपं प्राप्य मुमोद वासवः ॥ ११७ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि बलिवासवसंवादे
सप्तविंशत्यधिकद्विशतोऽध्यायः ॥ २२७ ॥

---

युधिष्ठिर उवाच । पूर्व्वरूपाणि मे राजन् पुरुषस्य भविष्यतः । पराभविष्यतश्चैव तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच । मन एव मनुष्यस्य पूर्व्वरूपाणि शंसति । भविष्यतश्च भद्रन्ते तथैव न भविष्यतः ॥ २ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् । श्रिया शक्रस्य संवादं तन्निबोध युधिष्ठिर ॥३॥ महतस्तपसो व्युष्ट्या पश्यँल्लोकौ परावरौ । सामान्यमृषिभिर्गत्वा ब्रह्मलोकनिवासिभिः ॥४॥ ब्रह्मैवामितदीप्तौजाः शान्तपाप्मा महातपाः । विचचार यथाकामं त्रिषु लोकेषु नारदः ॥ ५ ॥ कदाचित् प्रातरुत्थाय पिस्पृक्षुः सलिलं शुचि । ध्रुवद्वारभवां गङ्गां जगामावततार च ॥ ६ ॥ सहस्रनयनश्चापि वज्री शम्बरपाकहा । तस्या देवर्षिजुष्टायास्तीरमभ्याजगाम ह ॥ ७ ॥ तावाप्लुत्य यतात्मानौ कृतजप्यौ समासतः । नद्याः पुलिनमासाद्य सूक्ष्मकाञ्चनवालुकम् ॥ ८ ॥ पुण्यकर्म्मभिराख्याता देवर्षिकथिताः कथाः । चक्रतुस्तौ तथासीनौ महर्षिकथितास्तथा । पूर्व्ववृत्तव्यपेतानि कथयन्तौ समा

हितौ ॥ ९ ॥ अथ भास्करमुद्यन्तं रश्मिजालपुरस्कृतम्। पूर्णं
मण्डलमालोक्य तावुत्थायोपलस्थतुः ॥ १० ॥ अभितस्तूदयन्त-
न्तमर्कमर्कमिवाप्ररम्। आकाशे ददृशे ज्योतिरुद्यतार्चिःसमप्रभम्।
तयोः समीपं संप्राप्तं प्रत्यदृश्यत भारत ॥ ११ ॥ तत् सुपर्णार्क-
र्चितमास्थितं वैष्णवं पदम्। भाभिरप्रतिमं भाति त्रैलोक्यमव-
भासयत् ॥ १२ ॥ तत्राभिरूपशोभाभिरप्सरोभिः पुरस्कृताम्।
बृहतीमंशुमत्प्रख्यां बृहद्भानोरिवार्चिषम् ॥ १३ ॥ नक्षत्रकल्पा-
भरणां तां मौक्तिकसमस्रजम्। श्रियं ददृशतुः पद्मां साक्षात् पद्म-
दलस्थिताम् ॥ १४ ॥ सावरुह्य विमानाग्रादङ्गनानामनुत्तमा।
अभ्यागच्छत् त्रिलोकेशं देवर्षिञ्चापि नारदम् ॥१५॥ नारदानुगतः
साक्षान्मघवांस्तामुपागमत्। कृताञ्जलिपुटो देवीं निवेद्यात्मान-
मात्मना ॥ १६ ॥ चक्रे चानुपमां पूजां तस्याश्चापि स सर्ववित्।
देवराजः श्रियं राजन् वाक्यञ्चेदमुवाच ह ॥ १७ ॥

शक्र उवाच। का त्वं केन च कार्य्येण संप्राप्ता चारुहासिनि।
कुतश्चागम्यते सुभ्रु गन्तव्यं क्व च ते शुभे ॥ १८ ॥

श्रीरुवाच। पुण्येषु त्रिषु लोकेषु सर्वे स्थावरजङ्गमाः।
समात्मभावमिच्छन्तो यतन्ते परमात्मना ॥ १९ ॥ साहं वै पङ्कजे
जाता सूर्य्यरश्मिविबोधिते। भूत्यर्थं सर्वभूतानां पद्मा श्रीः पद्म-
मालिनी ॥ २० ॥ अहं लक्ष्मीरहं भूतिः श्रीश्चाहं बलसूदन।
अहं श्रद्धा च मेधा च सन्नतिर्विजितिः स्थितिः ॥ २१ ॥ अहं धृति-
रहं सिद्धिरहं तद्भूतिरेव च। अहं स्वाहा स्वधा चैव सन्नति-
र्नियतिः स्मृतिः ॥ २२ ॥ राज्ञां विजयमानानां सेनाग्रेषु ध्वजेषु
च। निवासे धर्म्मशीलानां विषयेषु पुरेषु च ॥ २३ ॥ जितकाशिनि
शूरे च संग्रामेष्वनिवर्त्तिनि। निवसामि मनुष्येन्द्रे सदैव बलसूदन
॥ २४ ॥ धर्म्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि। प्रश्रिते
दानशीले च सदैव निवसाम्यहम् ॥ २५ ॥ असुरेष्ववसं पूर्वं

सत्यधर्मनिवन्धना। विपरीतांस्तु तान् बुद्धा त्वयि वासमरोचयम् ॥ २६ ॥

शक्र उवाच। कथं वृत्तेषु दैत्येषु त्वमवात्सीर्वरानने। दृष्ट्वा च किमिहागास्त्वं हित्वा दैतेयदानवान् ॥ २७ ॥

श्रीरुवाच। स्वधर्ममनुतिष्ठत्सु धैर्य्यादचलितेषु च। स्वर्गमार्गाभिरामेषु सत्त्वेषु निरता ह्यहम् ॥ २८ ॥ दानाध्ययनयज्ञेज्यापितृदैवतपूजनम्। गुरूणामतिथीनाञ्च तेषां नित्यमवर्त्तत ॥ २९॥ सुसंमृष्टगृहाश्चासन् जितस्त्रीका हुताग्नयः। गुरुशुश्रूषका दान्ता ब्रह्मण्याः सत्यवादिनः ॥ ३० ॥ श्रद्दधाना जितक्रोधा दानशीलानसूयवः। भृतपुत्रा भृतामात्या भृतदारा ह्यनीर्षवः ॥३१॥ अमर्षेण न चान्योऽन्यं स्पृहयन्ते कदाचन। न च जातूपतप्यन्ते धीराः परसमृद्धिभिः ॥ ३२ ॥ दातारः संग्रहीतार आर्य्याः करुणवेदिनः। महाप्रसादा ऋजवो दृढ़भक्ता जितेन्द्रियाः ॥ ३३ ॥ सन्तुष्टभृत्यसचिवाः कृतज्ञाः प्रियवादिनः। यथार्हमानार्थकरा ह्रीनिषेवा यतव्रताः ॥ ३४ ॥ नित्यं पर्वसु सुस्नाताः स्वनुलिप्ताः स्वलङ्कृताः। उपवासतपःशीलाः प्रतीता ब्रह्मवादिनः ॥ ३५ ॥ नैतानभ्युदियात् सूर्य्यो न चाप्यासन् प्रगेशयाः। रात्रौ दधि च सक्तूंश्च नित्यमेव व्यवर्ज्जयन् ॥ ३६ ॥ कल्यं घृतञ्चान्ववेक्षन् प्रयता ब्रह्मवादिनः। मङ्गल्यान्यपि चापश्यन् ब्राह्मणांश्चाप्यपूजयन् ॥३७॥ सदा हि वदतां धर्मं सदा चाप्रतिगृह्णताम्। अर्द्धञ्च रात्र्याः स्वपतां दिवा चास्वपतां तथा ॥ ३८ ॥ कृपणानाथवृद्धानां दुर्व्वलातुरयोषिताम्। दयाञ्च संविभागञ्च नित्यमेवानुमोदताम् ॥३९॥ त्रस्तं विषण्णमुद्विग्नं भयार्त्तं व्याधितं कृशम्। हृतस्वं व्यसनार्त्तञ्च नित्यमाश्वासयन्ति ते ॥ ४० ॥ धर्ममेवान्ववर्त्तन्त न हिंसन्ति परस्परम्। अनुकूलाश्च कार्य्येषु गुरुवृद्धोपसेविनः ॥ ४१ ॥ पितॄन्देवातिथींश्चैव यथावत्तेऽभ्यपूजयन्। अवशेषाणि चाश्नन्ति नित्यं

सत्यतपोधृताः ॥ ४२॥ नैकेऽश्नन्ति सुसम्पन्नं नागच्छन्त परस्त्रियम्।
सर्वभूतेष्ववर्त्तन्त यथात्मनि दयां प्रति ॥ ४३ ॥ नैवाकाशे न पशुषु
वियोनौ नच पर्वसु । इन्द्रियस्य विसर्गन्ते रोचयन्ति कदाचन ॥४४॥
नित्यं दानं तथा दाच्यमार्ज्जवञ्चैव नित्यदा । उत्साहोऽथानह-
ङ्कारः परमं सौहृदं चमा ॥ ४५ ॥ सत्यं दानं तपः शौचं कारुण्यं
वागनिष्ठुरा । मित्रेषु चानभिद्रोहः सर्वन्तेष्वभवत् प्रभो ॥ ४६ ॥
निद्रा तन्द्रीरसम्प्रीतिरसूयार्थानवेचिता । अरतिश्च विषादश्च
स्पृहा चाप्यविशन्न तान् ॥४७॥ साहमेवं गुणेष्वेव दानवेष्ववसं
पुरा । प्रजासर्गमुपादाय नैकं युगविपर्य्ययम् ॥ ४८ ॥ ततः काल-
विपर्य्यासे तेषां गुणविपर्य्ययात् । अपश्यं निर्गतं धर्मं कामक्रोध-
वशात्मनाम् ॥ ४९ ॥ सभासदाञ्च वृद्धानां सतां कथयतां कथाः ।
प्राहसन्नभ्यसूयंश्च सर्ववृद्धान् गुणावराः ॥ ५० ॥ युवानश्च समा-
सीना वृद्धानभिगतान् सतः । नाभ्युत्थानाभिवादाभ्यां यथापूर्व-
मपूजयन् ॥ ५१ ॥ वर्त्तयत्येव पितरि पुत्रः प्रभवते तथा । अभृत्या
भृत्यतां प्राप्य ख्यापयन्त्यनपत्रपाः ॥५२॥ यथा धर्मादपेतेन कर्मणा
गर्हितेन ये । महतः प्राप्नुवन्त्यर्थान् तेषां तत्राभवत् स्पृहा ॥५३॥
उच्चैश्चाप्यवदन्रात्रौ नीचैस्तत्राग्निरज्वलत् । पुत्राः पितॄनत्यचर-
न्नार्य्यश्चात्यचरन् पतीन् ॥ ५४ ॥ मातरं पितरं वृद्धमाचार्य्यमतिथिं
गुरुम् । गुरुत्वान्नाभ्यनन्दन्त कुमारान्नान्वपालयन् ॥ ५५ ॥ भिक्षां
बलिमदत्त्वा च स्वयमन्नानि भुञ्जते । अनिष्ट्वा संविभज्याथ पितृ-
देवातिथीन् गुरून् ॥ ५६ ॥ न शौचमन्वरुध्यन्त तेषां सूदजना-
स्तथा । मनसा कर्मणा वाचा भक्ष्यमासीदनावृतम् ॥ ५७ ॥ विप्र-
कीर्णानि धान्यानि काकमूषिकभोजनम् । अपावृतं पयोऽतिष्ठ-
दुच्छिष्टाश्चास्पृशन् घृतम् ॥ ५८ ॥ कुद्दालं दात्रपिटकं प्रकीर्णं
कांस्यभोजनम् । द्रव्योपकरणं सर्वं नान्ववैक्षत् कुटुम्बिनी ॥ ५९ ॥
प्राकारागारविध्वंसान्न स्म ते प्रतिकुर्वते । नाद्रियन्ते पशून् बद्धा

यवसेनोदकेन च ॥६०॥ बालानां प्रेक्ष्यमाणानां स्वयं भक्ष्यमभक्षयन्। तथा भृत्यजनं सर्वमसन्तर्प्य च दानवाः ॥ ६१ ॥ पायसं कृशरं मांसमपूपानथ शष्कुलीः। अपाचयन्नात्मनोऽर्थे वृथामांसान्यभक्षयन् ॥ ६२ ॥ उत्सूर्य्यशायिनश्चासन् सर्वे चासन् प्रगेनिशाः। अवर्त्तन् कलहाश्चात्र दिवारात्रं गृहे गृहे ॥ ६३ ॥ अनार्य्याश्चार्य्यमासीनं पर्य्युपासन्न तत्र ह। आश्रमस्थान् विधर्मस्थाः प्राद्विषन्त परस्परम्। सङ्कराश्चाभ्यवर्त्तन्त न च शौचमवर्त्तत ॥ ६४ ॥ ये च वेदविदो विप्रा विस्पष्टमनृचश्च ये। निरन्तरविशेषास्ते बहुमानावमानयोः ॥ ६५ ॥ हारमाभरणं वेशं गतं स्थितमवेक्षितम्। असेवन्त भुजिष्या वै दुर्ज्जनाचरितं विधिम् ॥ ६६ ॥ स्त्रियः पुरुषवेशेन पुंसः स्त्रीवेशधारिणः। क्रीड़ारतिविहारेषु परां मुदमवाप्नुवन् ॥ ६७॥ प्रभवद्भिः पुरा दायानर्हेभ्यः प्रतिपादितान्। नाभ्यवर्त्तन्त नास्तिक्यादर्त्तन्तः सम्भवेष्वपि ॥ ६८ ॥ मित्रेणाभ्यर्थितं मित्र मर्थंसंशयिते क्वचित्। वालकोटाग्रमात्रेण स्वार्थेनाघ्नत तद्वसु ॥६९॥ परस्वादानरुचयो विपण्यव्यवहारिणः। अदृश्यन्तार्य्यवर्णेषु शूद्राश्चापि तपोधनाः ॥ ७० ॥ अधीयन्तेऽव्रताः केचिद्वृथा व्रतमथापरे। अशुश्रूषुर्गुरोः शिष्यः कश्चिच्छिष्यसखो गुरुः ॥ ७१ ॥ पिता चैव जनित्री च श्रान्तौ वृत्तोत्सवाविव। अप्रभुत्वे स्थितौ वृद्धावन्नं प्रार्थयतः सुतान् ॥ ७२ ॥ तत्र वेदविदः प्राज्ञा गाम्भीर्य्ये सागरोपमाः। कृष्यादिष्वभवन् सक्ता मूर्खाः श्राद्धान्यभुञ्जत ॥ ७३॥ प्रातः प्रातश्च सुप्रश्नं कल्पनं प्रेषणक्रियाः। शिष्यान्न प्रहितास्तेषामकुर्वन् गुरवः स्वयम् ॥ ७४ ॥ श्वश्रूश्वशुरयोरग्रे वधूः प्रेष्यानशासत। अन्वशासच्च भर्त्तारं समाहूयाभिजल्पती ॥ ७५ ॥ प्रयत्नेनापि चारक्षच्चित्तं पुत्रस्य वै पिता। व्यभजच्चापि संरम्भाद्दुःखवासं तथा वसन् ॥ ७६ ॥ अग्निदाहेन चौरैर्वा राजभिर्वा हृतं धनम्। दृष्ट्वा द्वेषात् प्राहसन्त सुहृत्सम्भाविता ह्यपि ॥ ७७॥ कृतघ्ना नास्तिकाः

पापा गुरुदाराभिमर्षिणः । अभक्ष्यभक्षणरता निर्मर्य्यादा हतत्विषः ॥ ७८ ॥ तैर्व्वमादीनाचारानाचरत्सु विपर्य्यये । नाहं देवेन्द्र वत्स्यामि दानवेष्विति मे मतिः ॥ ७९ ॥ तन्मां स्वयमनुप्राप्तमभिनन्द शचीपते । त्वयार्च्चितां मां देवेश पुरो धास्यन्ति देवताः ॥ ८० ॥ यत्राहं तत्र मत्कान्ता मद्विशिष्टा मदर्पणाः । सप्त देव्यो जयाष्टम्यो वासमेष्यन्ति तेऽष्टधा ॥ ८१ ॥ आशा श्रद्धा धृतिः क्षान्ति र्विजितिः सन्नतिः क्षमा । अष्टमी वृत्तिरेतासां पुरोगा पाकशासन ॥ ८२ ॥ ताश्चाहञ्चासुरांस्त्यक्त्वा युष्मद्विषयमागताः । त्रिदशेषु निवत्स्यामो धर्म्मनिष्ठान्तरात्मसु ॥ ८३ ॥ इत्युक्तवचनां देवीं प्रीत्यर्थञ्च ननन्दतुः । नारदश्चात्र देवर्षिर्वृत्रहन्ता च वासवः ॥ ८४ ॥ ततोऽनलसखो वायुः प्रववौ देववेश्मसु । इष्टगन्धः सुखस्पर्श सर्व्वेन्द्रियसुखावहः ॥ ८५ ॥ शुचौ चाभ्यर्थिते देशे त्रिदशाः प्रायशः स्थिताः । लक्ष्मीसहितमासीनं मघवन्तं दिदृक्षवः ॥८६॥ ततो दिवं प्राप्य सहस्रलोचनः श्रियोपपन्नः सुहृदा महर्षिणा । रथेन हर्य्यश्वयुजा सुरर्षभः सदः सुराणामभिसत्कृतो ययौ ॥८७॥ अथेङ्गितं वज्रधरस्य नारदः श्रियश्च देव्या मनसा विचारयन् । श्रियै शशंसामरदृष्टपौरुषः शिवेन तत्रागमनं महर्षिः ॥ ८८ ॥ ततोऽमृतं द्यौः प्रववर्ष भास्वती पितामहस्यायतने स्वयम्भुवः । अनाहता दुन्दुभयोऽथ नेदिरे तथा प्रसन्नाश्च दिशश्चकाशिरे ॥ ८९ ॥ यथर्त्तुशस्येषु ववर्ष वासवो न धर्म्ममार्गाद्विचचाल कश्चन । अनेकरत्नाकरभूषणा च भूः सुघोषघोषा भुवनौकसां जये ॥ ९०॥ क्रियाभिरामा मनुजा मनस्विनो बभुः शुभे पुण्यकृतां पथि स्थिताः । नरामराः किन्नरयक्षराक्षसाः समृद्धिमन्तः सुमनस्विनोऽभवन्॥९१॥ न जात्वकाले कुसुमं कुतः फलं पपात वृक्षात् पवनेरितादपि । रसप्रदाः कामदुघाश्च धेनवो न दारुणा वाग्विचचार कस्यचित् ॥ ९२ ॥ इमां सपर्य्यां सह सर्व्वकामदैः श्रियाश्च शक्रप्रमुखैश्च

दैवतैः । पठन्ति ये विप्रसदः समागताः समृद्धकामाः श्रियमाप्नुवन्ति ते ॥ ९३ ॥ त्वया कुरूणाम्वर यत् प्रचोदितं भवाभवस्येह परं निदर्शनम् । तदद्य सर्वं परिकीर्त्तितं मया परीक्ष्य तत्त्वं परिगन्तुमर्हसि ॥ ९४ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्व्वणि लक्ष्मीवासवसम्वादे अष्टविंशत्यधिकद्विशतोऽध्यायः ॥ २२८ ॥

---

युधिष्ठिर उवाच। किंशीलः किंसमाचारः किंविद्य किंपराक्रमः । प्राप्नोति ब्रह्मणः स्थानं यत् परं प्रकृतेर्ध्रुवम् ॥ १ ॥

भीष्म उवाच । मोक्षधर्मेषु निरतो लघ्वाहारो जितेन्द्रियः । प्राप्नोति ब्रह्मणः स्थानं तत् परं प्रकृतेर्ध्रुवम् ॥ २ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् । जैगीषव्यस्य सम्वादमसितस्य च भारत ॥ ३ ॥ जैगीषव्यं महाप्राज्ञं धर्माणामागतागमम् । अक्रुध्यन्तमहृष्यन्तमसितो देवलोऽब्रवीत् ॥ ४ ॥

देवल उवाच । न प्रीयसे वन्द्यमानो निन्द्यमानो न कुप्यसे । का ते प्रज्ञा कुतश्चैषा किन्ते तस्याः परायणम् ॥ ५ ॥

भीष्म उवाच । इति तेनानुयुक्तः स तमुवाच महातपाः । महद्वाक्यमसन्दिग्धं पुष्कलार्थपदं शुचि ॥ ६ ॥

जैगीषव्य उवाच। या गतिर्या परा काष्ठा या शान्तिः पुण्यकर्मणाम् । तान्तेऽहं संप्रवक्ष्यामि महतीमृषिसत्तम ॥७॥ निन्दत्सु च समा नित्यं प्रशंसत्सु च देवल । निह्नुवन्ति च ये तेषां समयं सुकृतञ्च यत् ॥ ८ ॥ उक्ताश्च न वदिष्यन्ति वक्तारमहिते हि तम् । प्रतिहन्तुं न चेच्छन्ति हन्तारं वै मनीषिणः ॥ ९ ॥ नाप्राप्तमनुशोचन्ति प्राप्तकालानि कुर्वते । न चातीतानि शोचन्ति न चैव प्रतिजानते ॥ १० ॥ सम्प्राप्तायाञ्च पूजायां कामादर्थेषु देवल ।

यथोपपत्तिं कुर्वन्ति शक्तिमन्तः कृतव्रताः ॥ ११ ॥ पक्वविद्या महाप्रज्ञा जितक्रोधा जितेन्द्रियाः । मनसा कर्मणा वाचा नापराध्यन्ति कर्हिचित् ॥ १२ ॥ अनीर्षवो न चान्योऽन्यं विहिंसन्ति कदाचन । न च जातूपतप्यन्ते धीराः परसमृद्धिभिः ॥ १३ ॥ निन्दाप्रशंसे चात्यर्थं न वदन्ति परस्य ये । न च निन्दाप्रशंसाभ्यां विक्रियन्ते कदाचन ॥ १४ ॥ सर्वतश्च प्रशान्ता ये सर्वभूतहिते रताः । न क्रुध्यन्ति न हृष्यन्ति नापराध्यन्ति कस्यचित् ॥ १५ ॥ विमुच्य हृदयग्रन्थिं चंक्रमन्ति यथासुखम् । न येषां बान्धवाः सन्ति ये अन्येषां न बान्धवाः ॥ १६ ॥ अमित्राश्च न सन्त्येषां ये चामित्रा न कस्यचित् । य एवं कुर्वते मर्त्त्याः सुखं जीवन्ति सर्वदा ॥ १७ ॥ ये धर्मञ्चानुरुध्यन्ते धर्मज्ञा द्विजसत्तम । ये ह्यतो विच्युता मार्गात्ते हृष्यन्त्युद्विजन्ति च ॥ १८ ॥ आस्थितस्तमहं मार्गमसूयिष्यामि कं कथम् । निन्द्यमानः प्रशस्तो वा हृष्येऽहं केन हेतुना ॥ १९ ॥ यद्यदिच्छन्ति तत्तस्मादभिगच्छन्तु मानवाः । न मे निन्दाप्रशंसाभ्यां ह्रासवृद्धी भविष्यतः ॥ २० ॥ अमृतस्येव संतृप्येदवमानस्य तत्त्ववित् । विषस्येवोद्विजेन्नित्यं सम्मानस्य विचक्षणः ॥ २१ ॥ अवज्ञातः सुखं शेते इह चामुत्र चाभयम् । विमुक्तः सर्वदोषेभ्यो योऽवमन्ता स बध्यते ॥ २२ ॥ परां गतिञ्च ये केचित् प्रार्थयन्ति मनीषिणः । एतद्व्रतं समाहृत्य सुखमेधन्ति ते जनाः ॥ २३ ॥ सर्वतश्च समाहृत्य क्रतून् सर्वान् जितेन्द्रियः । प्राप्नोति ब्रह्मणः स्थानं यत् परं प्रकृतेर्ध्रुवम् ॥ २४ ॥ नास्य देवा न गन्धर्वा न पिशाचा न राक्षसाः । पदमन्ववरोहन्ति प्राप्तस्य परमां गतिम् ॥ २५ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि जैगीषव्यासितसंवादे एकोनत्रिंशदधिकद्विशततोऽध्यायः ॥ २२९ ॥

---

युधिष्ठिर उवाच। प्रियः सर्व्वस्य लोकस्य सर्व्वसत्त्वाभिनन्दिता। गुणैः सर्व्वैरुपेतश्च को न्वस्ति भुवि मानवः॥ १॥

भीष्म उवाच। अत्र ते वर्त्तयिष्यामि पृच्छतो भरतर्षभ। उग्रसेनस्य सम्वादं नारदे केशवस्य च॥ २॥

उग्रसेन उवाच। यस्य सङ्कल्पते लोका नारदस्य प्रकीर्त्तने। मन्ये स गुणसम्पन्नो ब्रूहि तन्मम पृच्छत॥ ३॥

वासुदेव उवाच। कुकुराधिप यान्मन्ये शृणु तान्मे विवक्षतः। नारदस्य गुणान् साधून् संक्षेपेण नराधिप॥ ४॥ न चारित्र-निमित्तोऽस्याहङ्कारो देहपालनः। अभिन्नश्रुतचारित्रस्तस्मात्सर्व्वत्र पूजितः॥ ५॥ अरतिः क्रोधचापल्ये भयं नैतानि नारदे। अदीर्घ-सूत्रः शूरश्च तस्मात् सर्व्वत्रपूजितः॥ ६॥ उपास्यो नारदो वाढ़ं वाचि नास्य व्यतिक्रमः। कामतो यदि वा लोभात् तस्मात् सर्व्वत्र पूजितः॥ ७॥ अध्यात्मविधितत्त्वज्ञः क्षान्तः शक्तो जितेन्द्रियः। ऋजुश्च सत्यवादी च तस्मात् सर्व्वत्र पूजितः॥ ८॥ तेजसा यशसा बुद्ध्या ज्ञानेन विनयेन च। जन्मना तपसा वृद्धस्तस्मात् सर्व्वत्र पूजितः॥ ९॥ सुशीलः सुखसंवेशः सुभोजः स्वादरः शुचिः। सुवाक्यश्चाप्यनीर्षश्च तस्मात् सर्व्वत्र पूजितः॥ १०॥ कल्याणं कुरुते वाढ़ं पापमस्मिन्न विद्यते। न प्रीयते परानर्थैस्तस्मात् सर्व्वत्र पूजितः॥ ११॥ वेदश्रुतिभिराख्यानैरर्थानभिजिगीषति। तिति-क्षुरनवज्ञाता तस्मात् सर्व्वत्र पूजितः॥ १२॥ समत्वाच्च प्रियो नास्ति नाप्रियश्च कथञ्चन। मनोऽनुकूलवादी च तस्मात् सर्व्वत्र पूजितः॥ १३॥ वहुश्रुतश्चित्रकथः पण्डितोऽलालसोऽशठः। अदी-नोऽक्रोधनोऽलुब्धस्तस्मात् सर्व्वत्र पूजितः॥ १४॥ नार्थे धने वा कामे वा भूतपूर्व्वोऽस्य विग्रहः। दोषाश्चास्य समुच्छिन्नास्तस्मात् सर्व्वत्र पूजितः॥ १५॥ दृढ़भक्तिरनिन्द्यात्मा श्रुतवाननृशंसवान्। वीतसंमोहदोषश्च तस्मात् सर्व्वत्र पूजितः॥ १६॥ असक्तः सर्व्व-

गह्नेषु सक्तात्मेव च लक्ष्यते। अदीर्घसंशयो वाग्मी तस्मात् सर्वत्र पूजितः ॥१७॥ समाधिर्नास्य कामार्थे नात्मानं स्तौति कर्हिचित्। अनृषुर्मृदुरुष्वादस्तस्मात् सर्वत्र पूजितः ॥ १८ ॥ लोकस्य विविधं चित्तं प्रेक्षते चाप्यकुत्सयन्। संसर्गविद्याकुशलस्तस्मात् सर्वत्र पूजितः ॥१९॥ नासूयत्यागमं कञ्चित् स्वनयेनोपजीवति। अवन्ध्य-कालो वश्यात्मा तस्मात् सर्वत्र पूजितः ॥ २० ॥ कृतश्रमः कृतप्रज्ञो न च तृप्तः समाधितः। नित्ययुक्तोऽप्रमत्तश्च तस्मात् सर्वत्र पूजितः ॥ २१ ॥ नापत्रपश्च युक्तश्च नियुक्तः श्रेयसे परैः। अभेत्ता पर-गुह्यानां तस्मात् सर्वत्र पूजितः ॥ २२ ॥ न हृष्यत्यर्थलाभेषु ना-लाभेषु व्यथत्यपि। स्थिरबुद्धिरसक्तात्मा तस्मात् सर्वत्र पूजितः ॥ २३॥ तं सर्वगुणसम्पन्नं दक्षं शुचिमनामयम्। कालज्ञञ्च प्रिय-ज्ञञ्च कः प्रियं न करिष्यति ॥ २४ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि वासुदेवोग्रसेनसंवादे त्रिंशदधिकद्विशततोऽध्यायः ॥ २३० ॥

---

युधिष्ठिर उवाच। आद्यन्तं सर्वभूतानां ज्ञातुमिच्छामि कौरव। ध्यानं कर्म च कालञ्च तथैवायुर्युगे युगे ॥१॥ लोकतत्त्वञ्च कार्त्स्न्येन भूतानामागतिं गतिम्। सर्गञ्च निधनञ्चैव कुत एतत् प्रवर्त्तते ॥ २ ॥ यदि तेऽनुग्रहे बुद्धिरस्मास्विह सतांवर। एत-द्भवन्तं पृच्छामि तद्भवान् प्रब्रवीतु मे ॥ ३ ॥ सर्वं हि कथितं श्रुत्वा भृगुभाषितमुत्तमम्। भरद्वाजस्य विप्रर्षेस्ततो मे बुद्धिरुत्तमा ॥ ४ ॥ जाता परमधर्मिष्ठा दिव्यसंस्थानसंस्थिता। ततो भूयस्तु पृच्छामि तद्भवान् वक्तुमर्हति ॥ ५ ॥

भीष्म उवाच। अत्र ते वर्त्तयिष्येऽहमितिहासं पुरातनम्। जगौ यद्भगवान् व्यासः पुत्राय परिपृच्छते॥ ६ ॥ अधीत्य वेदा-

नखिलान् साङ्गोपनिषदस्तथा । अन्विच्छन्नैष्ठिकं कर्म धर्मनैपुण्य-
दर्शनात् ॥ ७ ॥ कृष्णद्वैपायनं व्यासं पुत्रो वैयासकिः शुकः ।
पप्रच्छ सन्देहमिमं छिन्नधर्मार्थसंशयम् ॥ ८ ॥

शुक उवाच । भूतग्रामस्य कर्त्तारं कालज्ञानेन निश्चितम् ।
ब्राह्मणस्य च यत्कृत्यं तद्भवान् वक्तुमर्हति ॥ ९ ॥

भीष्म उवाच । तस्मै प्रोवाच तत् सर्वं पिता पुत्राय पृच्छते ।
अतीतानागते विद्वान् सर्वज्ञः सर्वधर्मवित् ॥ १० ॥

व्यास उवाच । अनाद्यन्तमजं दिव्यमजरं ध्रुवमव्ययम् । अप्र-
तर्क्यमविज्ञेयं ब्रह्माग्रे संप्रवर्त्तते ॥ ११ ॥ काष्ठा निमेषा दश पञ्च
चैव त्रिंशत्तु काष्ठा गणयेत् कलान्ताम् । त्रिंशत्कलश्चापि भवे-
न्मुहूर्त्तो भागः कलाया दशमश्च यः स्यात् ॥ १२ ॥ त्रिंशन्मुहूर्त्तन्तु
भवेदहश्च रात्रिश्च संख्या मुनिभिः प्रणीता । मासः स्मृतो रात्र्य-
हनी च त्रिंशत् संवत्सरो द्वादश मास उक्तः ॥ १३ ॥ संवत्सरं द्वे
अयने वदन्ति संख्याविदो दक्षिणमुत्तरञ्च ॥ १४ ॥ अहोरात्रे
विभजते सूर्य्यो मानुषलौकिके । रात्रिः स्वप्नाय भूतानां चेष्टायै
कर्मणामहः ॥ १५ ॥ पित्र्ये रात्र्यहनी मासः प्रविभागस्तयोः
पुनः । शुक्लोऽहः कर्मचेष्टायां कृष्णः स्वप्नाय शर्वरी ॥ १६ ॥ दैवे
रात्र्यहनी वर्षः प्रविभागस्तयोः पुनः । अहस्तत्रोदगयनं रात्रिः
स्याद्दक्षिणायनम् ॥ १७ ॥ ये ते रात्र्यहनी पूर्वे कीर्त्तिते जीव-
लौकिके । तयोः संख्याय वर्षाग्रं ब्राह्मे वक्ष्याम्यहः क्षपे ॥ १८ ॥
पृथक् संवत्सराग्राणि प्रवक्ष्याम्यनुपूर्वशः । कृते त्रेतायुगे चैव
द्वापरे च कलौ तथा ॥ १९ ॥ चत्वार्य्याहुः सहस्राणि वर्षाणां तत्
कृतं युगम् । तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥२० ॥
इतरेषु ससन्ध्येषु सन्ध्यांशेषु ततस्त्रिषु । एकपादेन हीयन्ते सह-
स्राणि शतानि च ॥ २१ ॥ एतानि शाश्वतान् लोकान् धारयन्ति
सनातनान् । एतद्ब्रह्मविदां तात विदितं ब्रह्म शाश्वतम् ॥ २२ ॥

चतुष्पात् सकलो धर्मः सत्यञ्चैव कृते युगे। नाधर्मेणागमः कश्चित् परस्तस्य प्रवर्त्तते ॥ २३ ॥ इतरेष्वागमाद्धर्मः पादशस्त्ववरोप्यते। चौर्य्यकानृतमायाभिरधर्मश्चोपचीयते ॥ २४ ॥ अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः। कृते त्रेतायुगे त्वेषां पादशो ह्रसते वयः ॥ २५ ॥ वेदवादाश्चानुयुगं ह्रसन्तीति ह नः श्रुतम्। आयुंसि चाशिषश्चैव वेदस्यैव च यत् फलम् ॥ २६ ॥ अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे। अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥ २७ ॥ तपः परं कृतयुगे त्रेतायां ज्ञानमुत्तमम्। द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥ २८ ॥ एतां द्वादशसाहस्रीं युगाख्यां कवयो विदुः। सहस्रपरिवर्त्तन्तद्ब्राह्मं दिवसमुच्यते ॥ २९ ॥ रात्रिमेतावतीञ्चैव तदादौ विश्वमीश्वरः। प्रलये ध्यानमाविश्य सुप्त्वा सोऽन्ते विबुध्यते ॥ ३० ॥ सहस्रयुगपर्य्यन्तमहर्यद्ब्रह्मणो विदुः। रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ ३१ ॥ प्रतिबुद्धो विकुरुते ब्रह्माचय्यं क्षपाचये। सृजते च महद्भूतं तस्माद्व्यक्तात्मकं मनः ॥ ३२ ॥ ब्रह्मतेजोमयं शुक्रं यस्य सर्वमिदं जगत्। एकस्य भूतं भूतस्य द्वयं स्थावरजङ्गमम् ॥ ३३ ॥ अहर्मुखे विबुद्धः सन् सृजतेऽविद्यया जगत्। अग्र एव महद्भूतमाशु व्यक्तात्मकं मनः ॥ ३४ ॥ अभिभूयेह चार्चिष्मान् व्यसृजत् सप्त मानसान्। दूरगं बहुधागामि प्रार्थनासंशयात्मकम् ॥ ३५ ॥ मनःसृष्टिं विकुरुते चोद्यमानं सिसृक्षया। आकाशं जायते तस्मात्तस्य शब्दं विदुः ॥ ३६ ॥ आकाशात्तु विकुर्वाणात् सर्वगन्धवहः शुचिः। बलवान् जायते वायुस्तस्य स्पर्शो गुणो मतः ॥ ३७ ॥ वायोरपि विकुर्वाणाज्ज्योतिर्भवति भास्वरम्। रोचिष्णु जायते शुक्रं तद्रूपगुणमुच्यते ॥३८॥ ज्योतिषोऽपि विकुर्वाणाद्भवन्त्यापो रसात्मिकाः। अद्भ्यो गन्धस्तथा भूमिः पूर्वैषां सृष्टिरुच्यते ॥ ३९ ॥ गुणाः पूर्वस्य पूर्वस्य प्राप्नुवन्त्युत्तरोत्तमम्! तेषां तावद्यथा यच्च तत्तत्तावद्गुणं

स्मृतम् ॥ ४० ॥ उपलभ्याप्सु चेद्गन्धं केचिद्ब्रूयुरनैपुणात् । पृथि
व्यामेव तं विद्यादपां वायोश्च संश्रितम् ॥४१॥ एते सप्तविधात्मानो
नानावीर्य्याः पृथक् पृथक् । नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य
कृत्स्नशः ॥ ४२ ॥ ते समेत्य महात्मानो ह्यन्यन्योमभिसंश्रिताः ।
शरीराश्रयणं प्राप्तास्ततः पुरुष उच्यते ॥ ४३ ॥ शरीरं श्रयणा-
द्भवति मूर्त्तिमत् षोड़शात्मकम् । तमाविशन्ति भूतानि महान्ति
सह कर्म्मणा ॥ ४४ ॥ सर्व्वभूतानि चादाय तपसश्चरणाय ह ।
आदिकर्त्ता स भूतानां तमेवाहुः प्रजापतिम् ॥ ४५ ॥ स वै सृजति
भूतानि स्थावराणि चराणि च । ततः स सृजति ब्रह्मा देवर्षि-
पितृमानवान् ॥ ४६ ॥ लोकान्नदीः समुद्रांश्च दिशः शैलान् वन-
स्पतीन् । नरकिन्नररक्षांसि वयःपशुमृगोरगान् ॥ ४७॥ अव्ययञ्च
व्ययञ्चैव द्वयं स्थावरजङ्गमम् । तेषां ये यानि कर्म्माणि प्राक्सृष्ट्यां
प्रतिपेदिरे ॥ ४८ ॥ तान्येव प्रतिपद्यन्ते सृज्यमानाः पुनः पुनः ।
हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते । तद्भाविताः प्रपद्यन्ते
तस्मात्तत्तस्य रोचते ॥ ४९ ॥ महाभूतेषु नानात्वमिन्द्रियार्थेषु
मूर्त्तिषु । विनियोगञ्च भूतानां धातैव विदधात्युत ॥ ५० ॥ केचित्
पुरुषकारन्तु प्राहुः कर्म्मसु मानवाः । दैवमित्यपरे विप्राः स्वभावं
भूतचिन्तकाः ॥ ५१ ॥ पौरुषं कर्म्म दैवञ्च फलवृत्तिः स्वभावतः ।
त्रय एतेऽपृथग्भूता न विवेकन्तु केचन ॥ ५२ ॥ एवमेवञ्च नैवञ्च
न चोभे नानुभे न च । कर्म्मस्था विषयं ब्रूयुः सत्त्वस्थाः समदर्शिनः
॥ ५३ ॥ तपो निःश्रेयसं जन्तोस्तस्य मूलं शमो दमः । तेन सर्व्वा-
नवाप्नोति यान् कामान्मनसेच्छति ॥ ५४ ॥ तपसा तदवाप्नोति
तद्भूतं सृजते जगत् । स तद्भूतश्च सर्व्वेषां भूतानां भवति प्रभुः ॥५५॥
ऋषयस्तपसा वेदानध्यैषन्त दिवानिशम् । अनादिनिधना विद्या
वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्व्वाः प्रवृत्तयः
॥ ५६ ॥ ऋषीणां नामधेयानि याश्च वेदेषु सृष्टयः । नानारूपञ्च

भूतानां कर्मणाञ्च प्रवर्त्तनम् ॥ ५७ ॥ वेदशब्देभ्य एवादौ निर्मिमीते स ईश्वरः। नामधेयानि चर्षीणां याश्च वेदेषु सृष्टयः ॥५८॥ शर्वर्य्यन्ते सुजातानामन्येभ्यो विदधात्यजः ॥ ५९ ॥ नामभेदतपःकर्मयज्ञाख्या लोकसिद्धयः। आत्मसिद्धिस्तु वेदेषु प्रोच्यते दशभिः क्रमैः ॥ ६० ॥ यदुक्तं वेदवादेषु गहनं वेददर्शिभिः। तदन्तेषु यथायुक्तं क्रमयोगेन लक्ष्यते ॥ ६१ ॥ कर्मजोऽयं पृथग्भावो द्वन्द्वयुक्तोऽपि देहिनः। आत्मसिद्धिस्तु विज्ञानाज्जहाति पुरुषो बलात् ॥ ६२ ॥ द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत्। शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥६३॥ आलम्भयज्ञाः क्षत्राश्च हविर्यज्ञा विशः स्मृताः। परिचारयज्ञाः शूद्रास्तु तपोयज्ञा द्विजातयः ॥ ६४ ॥ त्रेतायुगे विधिस्त्वेव यज्ञानां न कृते युगे। द्वापरे विप्लवं यान्ति यज्ञाः कलियुगे यथा ॥ ६५ ॥ अपृथग्धर्मिणो मर्त्त्या ऋक्सामानि यजूंषि च। काम्या इष्टीः पृथग्दृष्ट्वा तपोभिस्तप एव च ॥ ६६॥ त्रेतायान्तु समस्ता ये प्रादुरासीन्महाबलाः। संयन्तारः स्थावराणां जङ्गमानाञ्च सर्वशः ॥ ६७ ॥ त्रेतायां संहता वेदा यज्ञा वर्णाश्रमास्तथा। संरोधादायुषस्त्वेते भ्रश्यन्ते द्वापरे युगे ॥ ६८ ॥ दृश्यन्ते न च दृश्यन्ते वेदाः कलियुगेऽखिलाः। उत्सीदन्ते सयज्ञाश्च केवला धर्म्मपीड़िताः ॥ ६९ ॥ कृतं युगे यस्तु धर्मो ब्राह्मणेषु प्रदृश्यते। आत्मवत्सु तपोवत्सु श्रुतवत्सु प्रतिष्ठितः ॥ ७० ॥ सधर्मव्रतसंयोगं यथाधर्मं युगे युगे। विक्रियन्ते स्वधर्मस्था वेदवादा यथागमम् ॥ ७१ ॥ यथा विश्वानि भूतानि वृष्ट्या भूयांसि प्रावृषि। सृजन्ते जङ्गमस्थानि तथा धर्मा युगे युगे ॥ ७२ ॥ यथर्त्तुष्वृतु लिङ्गानि नानारूपाणि पर्य्यये। दृश्यन्ते तानि तान्येव तथा ब्रह्महरादिषु ॥ ७३ ॥ विहितं कालनानात्वमनादिनिधनं तथा। कीर्त्तितं तत्पुरस्तात्ते तत् सूते चात्ति च प्रजाः ॥ ७४ ॥ दधाति भवति स्थानं भूतानां समयो मतम्।

स्वभावेनैव वर्त्तन्ते द्वन्द्वयुक्तानि भूरिशः ॥ ७५ ॥ सर्गकालक्रियावेदाः कर्त्ता कार्य्यं क्रियाफलम् । प्रोक्तन्ते पुत्र सर्वं वै यन्मां त्वं परिपृच्छसि ॥ ७६ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने
एकत्रिंशदधिकद्विशततोऽध्यायः ॥ २३१ ॥

---

व्यास उवाच । प्रत्याहारन्तु वक्ष्यामि शर्वर्य्यादौ गतेऽहनि । यथेदं कुरुतेऽध्यात्मं सुसूक्ष्मं विश्वमीश्वरः ॥ १ ॥ दिवि सूर्य्यास्तथा सप्त दहन्ति शिखिनोऽर्च्चिषः । सर्वमेतत्तदार्च्चिभिः पूर्णं जाज्वल्यते जगत् ॥२॥ पृथिव्यां यानि भूतानि जङ्गमानि ध्रुवाणि च । तान्येवाग्रे प्रलीयन्ते भूमित्वमुपयान्ति च ॥ ३ ॥ ततः प्रलीने सर्वस्मिन् स्थावरे जङ्गमे तथा । निर्वृक्षा निस्तृणा भूमिर्दृश्यते कूर्मपृष्ठवत् ॥ ४ ॥ भूमेरपि गुणं गन्धमप आददते यथा । आत्तगन्धा तदा भूमिः प्रलयत्वाय कल्पते ॥ ५ ॥ आपस्तत्र प्रतिष्ठन्ति ऊर्म्मिमत्यो महास्वनाः । सर्वमेवेदमापूर्य्य तिष्ठन्ति च चरन्ति च ॥ ६ ॥ अपामपि गुणं तात ज्योतिराददते यदा । आपस्तदा त्वात्तगुणा ज्योतिःषूपरमन्ति वै ॥ ७ ॥ यदादित्यं स्थितं मध्ये गूहन्ति शिखिनोऽर्च्चिषः । सर्वमेवेदमर्च्चिभिः पूर्णं जाज्वल्यते नभः ॥ ८ ॥ ज्योतिषोऽपि गुणं रूपं वायुराददते यदा । प्रशाम्यति ततो ज्योतिर्वायुर्दोधूयते महान् ॥ ९ ॥ ततस्तु स्वनमासाद्य वायुः सम्भवमात्मनः । अधश्चोर्द्धञ्च तिर्य्यक् च दोधवीति दिशो दश ॥१०॥ वायोरपि गुणं स्पर्शमाकाशं ग्रसते यदा । प्रशाम्यति तदा वायुः खन्तु तिष्ठति नादवत् ॥ ११ ॥ अरूपमरसस्पर्शमगन्धं न च मूर्त्तिमत् । सर्वलोकप्रणदितं खन्तु तिष्ठति नादवत् ॥ १२ ॥ आकाशस्य गुणं शब्दमभिव्यक्तात्मकं मनः । मनसो व्यक्तमव्यक्तं ब्रह्मः

स प्रतिसञ्चरः ॥ १३ ॥ तदात्मगुणमाविश्य मनो ग्रसति चन्द्रमाः। मनस्तुपरते चापि चन्द्रमस्युपतिष्ठते ॥ १४ ॥ तन्तु कालेन महता सङ्कल्पं कुरुते वशे। चित्तं ग्रसति सङ्कल्पस्तच्च ज्ञानमनुत्तमम् ॥ १५ ॥ कालो गिरति विज्ञानं कालं बलमिति श्रुतिः ॥ बलं कालो ग्रसति तु तं विद्या कुरुते वशे ॥ १६ ॥ आकाशस्य तदा घोरं तं विद्वान् कुरुतेत्मनि। तदव्यक्तं परं ब्रह्म तच्छाश्वतमनुत्तमम् ॥ १७ ॥ एवं सर्वाणि भूतानि ब्रह्मैव प्रतिसञ्चरः ॥ १८ ॥ यथावत् कीर्त्तितं सम्यगेवमेतदसंशयम्। बोध्यं विद्यामयं दृष्ट्वा योगिभिः परमात्मभिः ॥ १९ ॥ एवं विस्तारसंक्षेपौ ब्रह्माव्यक्तः पुनः पुनः। युगसहस्रयोरादावहोरात्रस्तथैव च ॥ २० ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने
द्वात्रिंशदधिकद्विशततोऽध्यायः ॥ २३२ ॥

---

व्यास उवाच। भूतग्रामे नियुक्तं यत् तदेतत् कीर्त्तितं मया। ब्राह्मणस्य तु यत् कृत्यं तत्ते वक्ष्यामि तच्छृणु ॥ १ ॥ जातकर्म्मप्रभृत्यस्य कर्म्मणादक्षिणां वताम्। क्रिया स्यादासमावृत्तेराचार्य्ये वेदपारगे ॥ २ ॥ अधीत्य वेदानखिलान् गुरुशुश्रूषणे रतः। गुरूणामनृणो भूत्वा समावर्त्तेत यज्ञवित् ॥ ३ ॥ आचार्य्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम्। आविमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ॥ ४ ॥ प्रजासर्गेण दारैश्च ब्रह्मचर्य्येण वा पुनः। वने गुरुप्रकाशे वा यतिधर्म्मेण वा पुनः ॥५ ॥ गृहस्थस्त्वेष धर्माणां सर्व्वेषां मूलमुच्यते। यत्र पक्वकषायो हि दान्तः सर्व्वत्र सिध्यति ॥ ६ ॥ प्रजावाञ्छ्रोत्रियो यज्वा मुक्त इव ऋणैस्त्रिभिः। अथान्यानाश्रमान् पश्चात् पूतो गच्छेत कर्म्मभिः ॥ ७॥ यत् पृथिव्यां पुण्यतमं विद्यात् स्थानं तदा वसेत्। यतेत तस्मिन् प्रामाण्यं गन्तुं यशसि चोत्तमे॥८॥

तपसा वा सुमहता विद्यानां पारणेन वा। द्रव्यया वा प्रदानैर्वा विप्राणां वर्द्धते यशः ॥ ९ ॥ यावदस्य भवत्यस्मिन् कीर्त्तिर्लोके यशस्करी। तावत् पुण्यकृतां लोकाननन्तान् पुरुषोऽश्नुते ॥ १० ॥ अध्यापयेदधीयीत याजयीत यजेत वा। न वृथा प्रतिगृह्णीयान्न च दद्यात् कथञ्चन ॥ ११ ॥ याज्यतः शिष्यतो वापि कन्याया वा धनं महत्। यद्यागच्छेत् यजेत् दद्यान्नैकोऽश्नीयात् कथञ्चन ॥१२॥ गृहमावसतो ह्यस्य नान्यत्तीर्थं प्रतिग्रहात्। देवर्षिपितृगुर्व्वर्थं वृद्धातुरबुभुक्षताम् ॥ १३ ॥ अन्तर्हितारितप्तानां यथाशक्ति बुभूषताम्। द्रव्याणामतिशक्त्यापि देयमेषां कृतादपि ॥ १४ ॥ अर्हतामनुरूपाणां नादेयं ह्यस्ति किञ्चन। उच्चैःश्रवसमप्यश्वं प्रापणीयं सतां विदुः ॥ १५ ॥ अनुनीय यथाकामं सत्यसन्धो महाव्रतः। स्वैः प्राणैर्ब्राह्मणप्राणान् परित्राय दिवं गतः ॥ १६ ॥ रन्तिदेवश्च साङ्कृत्यो वशिष्ठाय महात्मने। अपः प्रदाय शीतोष्णा नाकपृष्ठे महीयते ॥ १७ ॥ आत्रेयश्चेन्द्रदमनो ह्यर्हते विविधं धनम्। दत्त्वा लोकान् ययौ धीमाननन्तान् स महीपतिः ॥ १८ ॥ शिविरौशीनरोऽङ्गानि सुतञ्च प्रियमौरसम्। ब्राह्मणार्थमुपाहृत्य नाकपृष्ठमितो गतः ॥ १९ ॥ प्रतर्द्दनः काशिपतिः प्रदाय नयने स्वके। ब्राह्मणायातुलां कीर्त्तिमिह चामुत्र चाश्नुते ॥ २० ॥ दिव्यमष्टशलाकन्तु सौवर्णं परमर्द्धिमत्। छत्रं देवावृधो दत्त्वा सराष्ट्रोऽभ्यपतद्दिवम् ॥ २१ ॥ साङ्कृतिश्च तथात्रेयः शिष्येभ्यो ब्रह्म निर्गुणम्। उपदिश्य महातेजा गतो लोकाननुत्तमान् ॥ २२ ॥ अम्बरीषो गवां दत्त्वा ब्राह्मणेभ्यः प्रतापवान्। अर्बुदानि दशैकञ्च सराष्ट्रोऽभ्यपतद्दिवम् ॥ २३ ॥ सावित्री कुण्डले दिव्ये शरीरं जनमेजयः। ब्राह्मणार्थे परित्यज्य जग्मतुर्लोकमुत्तमम् ॥ २४ ॥ सर्व्वरत्नं वृषादर्भिर्युवनाश्वः प्रियाः स्त्रियः। रम्यमावसथञ्चैव दत्त्वा स्वर्लोकमास्थितः ॥ २५ ॥ निमी राष्ट्रञ्च वैदेहो जामदग्न्यो वसु-

श्वराम् । ब्राह्मणेभ्यो ददौ चापि गयश्चोर्वीं सपत्तनाम् ॥ २६ ॥ अवर्षति च पर्ज्जन्ये सर्वभूतानि भूतकृत् । वशिष्ठो जीवयामास प्रजापतिरिव प्रजाः ॥ २७ ॥ करन्धमस्य पुत्रस्तु कृतात्मा मरुतस्तथा । कन्यामङ्गिरसे दत्त्वा दिवमाशु जगाम ह ॥ २८ ॥ ब्रह्मदत्तश्च पाञ्चाल्यो राजा बुद्धिमताम्वरः । निधिं शङ्खं द्विजाग्रेभ्यो दत्त्वा लोकानवाप्तवान् ॥ २९ ॥ राजा मित्रसहश्चापि वशिष्ठाय महात्मने । मदयन्तीं प्रियां दत्त्वा तया सह दिवं गतः ॥ ३० ॥ सहस्रजिच्च राजर्षिः प्राणानिष्टान्महायशाः । ब्राह्मणार्थं परित्यज्य गतो लोकाननुत्तमान् ॥ ३१ ॥ सर्वकामैश्च संपूर्णं दत्त्वा वेश्म हिरण्मयम् । मुद्गलाय गतः स्वर्गं शतद्युम्नो महीपतिः ॥३२॥ नाम्ना च द्युतिमान्नाम शाल्वराजः प्रतापवान् । दत्त्वा राज्यमृचीकाय गतो लोकाननुत्तमान् ॥ ३३ ॥ मदिराश्वश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमाम् । हिरण्यहस्ताय गतो लोकान्देवैरभिष्टुतान् ॥ ३४ ॥ लोमपादश्च राजर्षिः शान्तां दत्त्वा सुतां प्रभुः । ऋष्यशृङ्गाय विपुलैः सर्वकामैरयुज्यत ॥ ३५ ॥ दत्त्वा शतसहस्रन्तु गवां राजा प्रसेनजित् । सवत्सानां महातेजा गतो लोकाननुत्तमान् ॥ ३६ ॥ एते चान्ये च बहवो दानेन तपसैव च । महात्मानो गताः स्वर्गं शिष्टात्मानो जितेन्द्रियाः ॥ ३७ ॥ तेषां प्रतिष्ठिता कीर्त्तिर्यावत् स्थास्यति मेदिनी । दानयज्ञैः प्रजासर्गैरेते हि दिवमाप्नुवन् ॥ ३८ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि शुकानुप्रश्ने त्रयस्त्रिंशदधिकद्विशततोऽध्यायः ॥ २३३ ॥

---

व्यास उवाच । त्रयीविद्यामवेक्षेत वेदेषूक्तामथाङ्गतः । ऋक्सामवर्णाक्षरतो यजुषोऽथर्वणस्तथा । तिष्ठत्येतेषु भगवान् षट्सु

कर्म्मसु संस्थितः। वेदवादिषु कुशला ह्यध्यात्मकुशलाश्च ये।
सत्त्ववन्तो महाभागाः पश्यन्ति प्रभवाप्ययम् ॥ २ ॥ एवं धर्म्मेण
वर्त्तेत क्रियां शिष्टवदाचरेत्। असंरोधेन भूतानां वृत्तिं लिप्सेत
वै द्विजः ॥ ३ ॥ सद्भ्य आगतविज्ञानः शिष्टः शास्त्रविचक्षणः।
स्वधर्म्मेण क्रिया लोके कर्म्मसस्वस्थसङ्करः। तिष्ठते तेषु गृहवान्
षट्सु कर्म्मसु स द्विजः ॥ ४ ॥ पञ्चभिः सततं यज्ञैः श्रद्दधानो
यजेत च। धृतिमानप्रमत्तश्च दान्तो धर्म्मविदात्मवान्। वीतहर्ष-
मदक्रोधो ब्राह्मणो नावसीदति ॥ ५ ॥ दानमध्ययनं यज्ञस्तपो
ह्रीरार्ज्जवं दमः। एतैर्वर्द्धयते तेजः पाप्मानञ्चापकर्षति ॥ ६ ॥
धूतपाप्मा च मेधावी लघ्वाहारो जितेन्द्रियः। कामक्रोधौ वशे
कृत्वा निनीषेद्ब्रह्मणः पदम् ॥ ७ ॥ अग्नींश्च ब्राह्मणांश्चार्च्चेद्देवताः
प्रणमेत च। वर्ज्जयेदुषतीं वाचं हिंसां चाधर्म्मसंहिताम् ॥ ८ ॥
एषा पूर्व्वंगता वृत्तिर्ब्राह्मणस्य विधीयते। ज्ञानागमेन कर्म्माणि
कुर्व्वन् कर्म्मसु सिध्यति ॥ ९ ॥ पञ्चेन्द्रियजलां घोरां लोभकूलां
सुदुस्तराम्। मन्युपङ्कामनाधृष्यां नदीं तरति बुद्धिमान् ॥ १० ॥
कालमभ्युद्यतं पश्येन्नित्यमत्यन्तमोहनम्। महता विधिदृष्टेन बले-
नाप्रतिघातिना ॥ ११ ॥ स्वभावस्रोतसा वृत्तमुह्यते सततं जगत्
॥ १२ ॥ कालोदकेन महता वर्षावर्त्तेन सन्ततम्। मासोर्म्मिणर्त्तु-
वेगेन पक्षोलपतृणेन च ॥ १३ ॥ निमेषोन्मेषफेनेन अहोरात्र-
जलेन च। कामग्राहेण घोरेण वेदयज्ञप्लवेन च ॥ १४ ॥ धर्म्म-
द्वीपेन भूतानां चार्थकामजलेन च। ऋतवाङ्मोक्षतीरेण विहिंसा-
तरुवाहिना ॥ १५ ॥ युगह्रदौघमध्येन ब्रह्मप्रायभवेन च। धात्रा-
सृष्टानि भूतानि कृष्यन्ते यमसादनम् ॥ १६ ॥ एतत् प्रज्ञामयैर्धीरा
निस्तरन्ति मनीषिणः। प्लवैरप्लववन्तो हि किं करिष्यन्त्यचेतसः॥१७॥
उपपन्नं हि यत् प्राज्ञो निस्तरन्नेतरो जनः। दूरतो गुणदोषौ
हि प्राज्ञः सर्व्वत्र पश्यति ॥ १८ ॥ संशयं स कामात्मा चलचित्तो-

ऽल्पचेतनः। अप्राज्ञो न तरत्येनं यो ह्यास्ते न स गच्छति॥१९॥ अप्लवो हि महादोषमुह्यमानो नियच्छति। कामग्राहगृहीतस्य ज्ञानमप्यस्य न प्लवः॥२०॥ तस्मादुन्मज्जनस्यार्थे प्रयतेत विचक्षणः। एतदुन्मज्जनं तस्य यदयं ब्राह्मणो भवेत्॥२१॥ अवदातेषु सञ्जातस्त्रिसन्देहस्त्रिकर्मकृत्। तस्मादुन्मज्जने तिष्ठेत् प्रज्ञया निस्तरेद्यथा॥२२॥ संस्कृतस्य हि दान्तस्य नियतस्य यतात्मनः। प्राज्ञस्यानन्तरा सिद्धिरिह लोके परत्र च॥२३॥ वर्त्तते तेषु गृहवानक्रुध्यन्ननसूयकः। पञ्चभिः सततं यज्ञैर्विघसाशी यजेत च॥२४॥ सतां धर्म्मेण वर्त्तेत क्रियां शिष्टवदाचरेत्। असंरोधेन लोकस्य वृत्तिं लिप्सेदगर्हिताम्॥२५॥ श्रुतविज्ञानतत्त्वज्ञः शिष्टाचारो विचक्षणः। स्वधर्म्मेण क्रियावांश्च कर्म्मणा सोऽप्यसङ्करः॥२६॥ क्रियावान् श्रद्दधानो हि दान्तः प्राज्ञोऽनसूयकः। धर्माधर्म्मविशेषज्ञः सर्वं तरति दुस्तरम्॥२७॥ धृतिमानप्रमत्तश्च दान्तो धर्म्मविदात्मवान्। वीतहर्षमदक्रोधो ब्राह्मणो नावसीदति॥२८॥ एषा पुरातनी वृत्तिर्ब्राह्मणस्य विधीयते। ज्ञानवत्त्वे च कर्माणि कुर्वन् सर्वत्र सिध्यति॥२९॥ अधर्म्मं धर्मकामो हि करोति ह्यविचक्षणः। धर्मं वा धर्मसङ्काशं शोचन्निव करोति सः॥३०॥ धर्मं करोमीति करोत्यधर्ममधर्मकामश्च करोति धर्मम्। उभे बालः कर्मणी न प्रजानन् स जायते म्रियते चापि देही॥३१॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि शुकानुप्रश्ने
चतुस्त्रिंशदधिकद्विशततोऽध्यायः॥२३४॥

---

व्यास उवाच। अथ चेद्रोचयेदेतद्दुह्येत स्रोतसा यथा। उन्मज्जंश्च निमज्जंश्च ज्ञानवान् प्लववान् भवेत्॥१॥ प्रज्ञया निश्चिता धीरास्तारयन्त्यबुधान् प्लवैः। नाबुधास्तारयन्त्यन्यानात्मानं वा

कथञ्चन ॥ २ ॥ छिन्नदोषो मुनिर्योगान्युक्तो युञ्जीत द्वादश । देश-
कर्मानुरागार्थानुपायापायनिश्चयः । चक्षुराहारसंहारैर्मनसा दर्श-
नेन च ॥ ३ ॥ यच्छेद्वाङ्मनसी बुद्ध्या य इच्छेज्ज्ञानमुत्तमम् ।
ज्ञानेन यच्छेदात्मानं य इच्छेच्छान्तिमात्मनः ॥ ४ ॥ एतेषाञ्चेदनु-
द्रष्टा पुरुषोऽपि सुदारुणः । यदि वा सर्ववेदज्ञो यदि वाप्यवेदवो
द्विजः । यदि वा धार्म्मिको यज्वा यदि वा पापकृत्तमः । यदि वा
पुरुषव्याघ्रो यदि वा क्लैब्यधारितः । तरत्येवं महादुर्गं जरामरण-
सागरम् ॥ ६ ॥ एवं ह्येतेन योगेन युञ्जानो ह्येकमन्ततः । अपि
जिज्ञासमानोऽपि शब्दब्रह्मातिवर्त्तते ॥ ७ ॥ धर्मोपस्थो ह्रीवरूथ
उपायापायकूवरः । अपानाक्षः प्राणयुगः प्रज्ञायुर्जीवबन्धनः ॥८॥
चेतनाबन्धुरश्चारुश्चाचारग्रहनेमिमान् । दर्शनस्पर्शनवहो घ्राण-
श्रवणवाहनः ॥ ९ ॥ प्रज्ञानाभिः सर्वतन्त्रप्रतोदो ज्ञानसारथिः ।
क्षेत्रज्ञाधिष्ठितो धीरः श्रद्धादमपुरःसरः ॥ १० ॥ त्यागसूक्ष्मानुगः
क्षेम्यः शौचगो ध्यानगोचरः । जीवयुक्तो रथो दिव्यो ब्रह्मलोके
विराजते ॥ ११ ॥ अथ सन्त्वरमाणस्य रथमेवं युयुक्षतः । अक्षरं
गन्तुमनसो विधिं वक्ष्यामि शीघ्रगम् ॥ १२ ॥ सप्त या धारणाः
कृत्स्ना वाग्यतः प्रतिपद्यते । पृष्ठतः पार्श्वतश्चान्यास्तावत्यस्ताः
प्रधारणाः ॥ १३ ॥ क्रमशः पार्थिवं यच्च वायव्यं खं तथा पयः ।
ज्योतिषो यत्तदैश्वर्य्यमहङ्कारस्य बुद्धितः । अव्यक्तस्य तथैश्वर्य्यं
क्रमशः प्रतिपद्यते ॥ १४ ॥ विक्रमाश्चापि यस्यैते यथा युक्तेषु
योगतः । तथा योगस्य युक्तस्य सिद्धिमात्मनि पश्यत ॥ १५ ॥
निर्मुच्यमानः सूक्ष्मत्वाद्रूपाणीमानि पश्यतः । शैशिरस्तु यथा धूमः
सूक्ष्मः संश्रयते नभः ॥ १६ ॥ तथा देहाद्विमुक्तस्य पूर्वरूपं भव-
त्युत । अथ धूमस्य विरमे द्वितीयं रूपदर्शनम् ॥ १७ ॥ जल-
रूपमिवाकाशे तत्रैवात्मनि पश्यति । अपां व्यतिक्रमे चास्य वह्नि-
रूपं प्रकाशते ॥ १८ ॥ तस्मिन्नुपरते चास्य पीतवस्त्रवद्ध्वजः ।

ऊर्ध्वारूपसवर्णस्य तस्य रूपं प्रकाशते ॥ १९ ॥ अथ श्वेतां गतिं गत्वा वायव्यं सूक्ष्ममप्युत। अशुक्लं चेतसः सौक्ष्ममप्युक्तं ब्राह्मणस्य वै ॥ २० ॥ एतेष्वपि हि जातेषु फलजातानि मे शृणु। जातस्य पार्थिवैश्वर्यैः सृष्टिरत्र विधीयते ॥ २१ ॥ प्रजापतिरिवाक्षोभ्यः शरीरात् सृजते प्रजाः। अङ्गुल्यङ्गुष्ठमात्रेण हस्तपादेन वा तथा ॥ २२ ॥ पृथिवीं कम्पयत्येको गुणो वायोरिति श्रुतिः। आकाशभूतश्चाकाशे सवर्णत्वात् प्रकाशते। वर्णतो गृह्यते चापि कामात् पिबति वाशयान् ॥ २३ ॥ न चास्य तेजसा रूपं दृश्यते शाम्यते तथा। अहङ्कारेऽस्य विजिते पञ्चैते स्युर्वशानुगाः ॥ २४ ॥ षष्ठात्मनि बुद्धौ च जितायां प्रभवत्यथ। निर्दोषप्रतिभा ह्येनं कृत्स्ना समभिवर्त्तते ॥ २५ ॥ तथैव व्यक्तमात्मानमव्यक्तं प्रतिपद्यते। यतो विसरते लोको भवति व्यक्तसंज्ञकः ॥ २६ ॥ तत्राव्यक्तमयीं विद्यां शृणु त्वं विस्तरेण मे। तथा व्यक्तमयञ्चैव सांख्ये पूर्वं निबोध मे ॥ २७ ॥ पञ्चविंशतितत्त्वानि तुल्यान्युभयतः समम्। योगे सांख्येऽपि च तथा विशेषं तत्र मे शृणु ॥ २८ ॥ प्रोक्तं तद्व्यक्तमित्येव जायते वर्द्धते च यत्। जीर्य्यते म्रियते चैव चतुर्भिर्लक्षणैर्युतम् ॥ २९ ॥ विपरीतमतो यत्तु तदव्यक्तमुदाहृतम्। द्वावात्मानौ च वेदेषु सिद्धान्तेष्वप्युदाहृतौ ॥ ३० ॥ चतुर्लक्षणजं त्वाद्यं चतुर्वर्गं प्रचक्षते। व्यक्तमव्यक्तजञ्चैव तथा बुद्धमचेतनम् ॥ ३१ ॥ सत्त्वं क्षेत्रज्ञ इत्येतद्द्वयमप्यनुदर्शितम्। द्वावात्मानौ च वेदेषु विषयेष्वनुरज्यतः ॥ ३२ ॥ विषयात् प्रतिसंहारः सांख्यानां विद्धि लक्षणम्। निर्म्ममश्चानहङ्कारो निर्द्वन्द्वश्छिन्नसंशयः। नैव क्रुध्यति न द्वेष्टि नानृता भाषते गिरः ॥ ३३ ॥ आक्रुष्टस्ताड़ितश्चैव मैत्रेण ध्याति नाशुभम्। वाग्दण्डकर्म्ममनसां त्रयाणाञ्च निवर्त्तकः ॥ ३४ ॥ समः सर्व्वेषु भूतेषु ब्रह्माणमभिवर्त्तते। नैवेच्छति न चानिच्छो यात्रामात्राव्यवस्थितः ॥ ३५ ॥ अलोलुपोऽव्यथो दान्तो न कृतो न

निराकृतिः । नास्येन्द्रियमनेकाग्रं नाविक्षिप्तमनोरथः ॥ ३६ ॥ सर्व्व-भूतसुहृच्चैव: समलोष्टकाञ्चनः । तुल्यप्रियाप्रियो धीरस्तुल्य-निन्दात्मसंस्तुतिः ॥ ३७ ॥ अस्पृहः सर्व्वकामेभ्यो ब्रह्मचर्य्यदृढ़व्रतः । अहिंस्रः सर्व्वभूतानामीदृक्‌सांख्यो विमुच्यते ॥ ३८ ॥ यथा योगा-द्विमुच्यन्ते कारणैर्यैर्निबोध तत् । योगैश्वर्य्यमतिक्रान्तो यो निष्क्रा-मति मुच्यते ॥ ३९ ॥ इत्येषा भावजा बुद्धिः कथिता ते न संशयः एवं भवति निर्द्वन्द्वो ब्रह्माणञ्चाधिगच्छति ॥ ४० ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने
पञ्चत्रिंशदधिकद्विशततोऽध्यायः ॥ २३५ ॥



व्यास उवाच । अथ ज्ञानप्लवं धीरो गृहीत्वा शान्तिमात्मनः । उन्मज्जंश्च निमज्जंश्च ज्ञानमेवाभिसंश्रयेत् ॥ १ ॥

शुक उवाच । किन्तज्ज्ञानमथो विद्यां यया निस्तरते द्वयम् । प्रवृत्तिलक्षणो धर्म्मो निवृत्तिरिति वा वद ॥ २ ॥

व्यास उवाच । यस्तु पश्यन् स्वभावेन विना भावमचेतनः । पुष्यते च पुनः सर्व्वान् प्रज्ञया मुक्तहेतुकान् ॥ ३ ॥ येषाञ्चैकान्त-भावेन स्वभावात् कारणं मतम । श्रुत्वा तृणामृषीणाम्वा ते लभन्ते न किञ्चन ॥ ४ ॥ ये चैनं पक्षमाश्रित्य निवर्त्तन्त्यल्पमेधसः । स्वभावं कारणं ज्ञात्वा न श्रेयः प्राप्नुवन्ति ते ॥ ५ ॥ स्वभावो हि विना-शाय मोहकर्म्ममनोभवः । निरुक्तमेतयोरेतत् स्वभावपरिभावयोः ॥ ६ ॥ कृष्यादीनीह कर्म्माणि शस्यसंहरणानि च । प्रज्ञावद्भिः प्रक्लृप्तानि यानासनगृहाणि च ॥ ७ ॥ आक्रीड़ानां गृहाणाञ्च गदानामगदस्य च । प्रज्ञावन्तः प्रवोक्तारो ज्ञानवद्भिरनुष्ठिताः ॥ ८ ॥ प्रज्ञा संयोजयत्यर्थैः प्रज्ञा श्रेयोऽधिगच्छति । राजानो भुञ्जते राज्यं प्रज्ञया तुल्यलक्षणाः ॥ ९ ॥ परावरन्तु भूतानां

ज्ञानेनैवोपलभ्यते। विद्यया तात सृष्टानां विद्यैवेह परा गतिः ॥ १० ॥ भूतानां जन्म सर्वेषां विविधानाञ्चतुर्विधम्। जरायुजाण्डजोद्भिज्जस्वेदजञ्चोपलक्षयेत् ॥ ११ ॥ स्थावरेभ्यो विशिष्टानि जङ्गमान्युपधारयेत्। उपपन्न हि यच्चेष्टा विशिष्येत विशिष्यया ॥ १२ ॥ आहुर्वै बहुपादानि जङ्गमानि द्वयानि तु। बाहुपादेभ्यो विशिष्टानि द्विपदानि बहून्यपि ॥ १३ ॥ द्विपदानि द्वयान्याहुः पार्थिवानीतराणि च। पार्थिवानि विशिष्टानि तानि ह्यन्नानि भुञ्जते ॥ १४ ॥ पार्थिवानि द्वयान्याहुर्मध्यमान्युत्तमानि तु। मध्यमानि विशिष्टानि जातिधर्मोपधारणात् ॥ १५ ॥ मध्यमानि द्वयान्याहुर्धर्मज्ञानीतराणि च। धर्मज्ञानि विशिष्टानि कार्याकार्योपधारणात् ॥ १६ ॥ धर्मज्ञानि द्वयान्याहुर्वेदज्ञानीतराणि च। वेदज्ञानि विशिष्टानि वेदो ह्येषु प्रतिष्ठितः ॥ १७ ॥ वेदज्ञानि द्वयान्याहुः प्रवक्तॄणीतराणि च। प्रवक्तॄणि विशिष्टानि सर्वधर्मोपधारणात् ॥ १८॥ विज्ञायन्ते हि यैर्वेदाः सधर्माः सक्रियाफलाः। सधर्मा निखिला वेदाः प्रवक्तृभ्यो विनिःसृताः ॥ १९ ॥ प्रवक्तॄणि द्वयान्याहुरात्मज्ञानीतराणि च। आत्मज्ञानि विशिष्टानि जन्माजन्मोपधारणात् ॥ २० ॥ धर्मद्वयं हि यो वेद स धर्मज्ञः स धर्मवित्। स त्यागी सत्यसङ्कल्पः सत्यः शुचिरथेश्वरः ॥ २१ ॥ ब्रह्मज्ञानप्रतिष्ठं हि तं देवा ब्राह्मणं विदुः। शब्दब्रह्मणि निष्णातं परे च कृतनिश्चयम् ॥ २२ ॥ अन्तःस्थञ्च बहिःस्थञ्च साधियज्ञाधिदैवतम्। ज्ञानान्विता हि पश्यन्ति ते देवास्तात ते द्विजाः ॥ २३ ॥ तेषु विश्वमिदं भूतं सर्वञ्च जगदाहितम्। तेषां महात्मभावस्य सदृशं नास्ति किञ्चन ॥ २३ ॥ आद्यन्ते निधनञ्चैव कर्म चातीत्य सर्वशः। चतुर्विधस्य भूतस्य सर्वस्येशाः स्वयम्भुवः ॥ २५ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने षट्त्रिंशदधिकद्विशततोऽध्यायः ॥ २३६ ॥

व्यास उवाच। एषा पूर्वतरा वृत्तिर्ब्राह्मणस्य विधीयते। ज्ञानवानेव कर्म्माणि कुर्वन् सर्वत्र सिध्यति ॥ १ ॥ यत्र चेन्न भवे देवं संशयः कर्म्मसिद्धये। किन्तु कर्म्मस्वभावोऽयं ज्ञानं कर्म्मेति वा पुनः ॥ २ ॥ तत्र वेदविधिः स स्याज्ज्ञानञ्चेत् पुरुषं प्रति। उपपत्त्युपलब्धिभ्यां वर्णयिष्यामि तच्छृणु ॥ ३ ॥ पौरुषं कारणं केचिदाहुः कर्म्मसु मानवाः। दैवमेके प्रशंसन्ति स्वभावमपरे जनाः ॥ ४ ॥ पौरुषं कर्म्म दैवञ्च कालवृत्तिस्वभावतः। त्रयमेतत् पृथग्भूतमविवेकन्तु केचन ॥ ५ ॥ एतदेवञ्च नैवञ्च न चोभे नानुभे तथा। कर्म्मस्था विषयं ब्रूयुः सत्त्वस्थाः समदर्शिनः ॥ ६ ॥ त्रेतायां द्वापरे चैव कलिजाश्च ससंशयाः। तपस्विनः प्रशान्ताश्च सत्त्वस्थाश्च कृते युगे ॥ ७ ॥ अपृथग्दर्शनाः सर्व्वे ऋक्सामसु यजुःषु च। कामद्वेषौ पृथक् कृत्वा तपः कृत उपासते ॥ ८ ॥ तपोधर्म्मेण संयुक्तस्तपोनित्यः सुसंशितः। तेन सर्व्वानवाप्नोति कामान् यान्मनसेच्छति ॥ ९ ॥ तपसा तदवाप्नोति यद्भूत्वा सृजते जगत्। तद्भूतश्च ततः सर्व्वो भूतानां भवति प्रभुः ॥ १० ॥ तदुक्तं वेदवादेषु गहनं वेददर्शिभिः। वेदान्तेषु पुनर्व्यक्तं कर्म्मयोगेन लक्ष्यते ॥ ११ ॥ आरम्भयज्ञाः क्षत्राश्च हविर्यज्ञाः विशः स्मृताः। परिचारयज्ञाः शूद्राश्च जपयज्ञा द्विजातयः ॥१२॥ परिनिष्ठितकार्य्यो हि स्वाध्यायेन द्विजो भवेत्। कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ॥ १३ ॥ त्रेतादौ केवला वेदा यज्ञा वर्णाश्रमास्तथा। संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे ॥ १४ ॥ द्वापरे विप्लवं यान्ति वेदाः कलियुगे तथा। दृश्यन्ते नापि दृश्यन्ते कलेरन्ते पुन किल ॥ १५ ॥ उत्सीदन्ति स्वधर्म्माश्च तत्राधर्म्मेण पीड़िताः। गवां भूमेश्च ये चापामोषधीनाञ्च ये रसाः ॥ १६ ॥ अधर्म्मान्तर्हिता वेदा वेदधर्म्मास्तथाश्रमाः। विक्रियन्ते स्वधर्म्मस्थाः स्थावराणि चराणि च ॥ १७ ॥ यथा सर्व्वाणि भूतानि वृष्टिर्भौमानि वर्षति। सृजते सर्व्वतोऽङ्गानि तथा वेदा

युगे युगे ॥ १८ ॥ निश्चितं कालनानात्वमनादिनिधनञ्च यत् । कीर्त्तितं यत् पुरस्तात्ते सूते यच्चात्ति च प्रजाः ॥ १९ ॥ यच्चेदं प्रभवस्थानं भूतानां संयमो यमः । स्वभावेनैव वर्त्तन्ते द्वन्द्वसृष्टानि भूरिशः ॥ २० ॥ सर्गः कालो धृतिर्वेदाः कर्त्ता कार्य्यं क्रिया फलम् । एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि ॥ २१ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने
सप्तत्रिंशदधिकद्विशततोऽध्यायः ॥ २३७ ॥

---

भीष्म उवाच । इत्युक्तोऽतिप्रशस्यैतत् परमर्षेस्तु शासनम् । मोक्षधर्मार्थसंयुक्तमिदं प्रष्टुं प्रचक्रमे ॥ १ ॥

शुक उवाच । प्रज्ञावान् श्रोत्रियो यज्वा कृतप्रज्ञोऽनसूयकः । अनागतमनैतिह्यं कथं ब्रह्माधिगच्छति ॥ २ ॥ तपसा ब्रह्मचर्य्येण सर्वत्यागेन मेधया । सांख्ये वा यदि वा योग एतत् पृष्टो वदस्व मे ॥ ३ ॥ मनसश्चेन्द्रियाणाञ्च यथैकाग्र्यमवाप्यते । येनोपायेन पुरुषैस्तच्च व्याख्यातुमर्हसि ॥ ४ ॥

व्यास उवाच । नान्यत्र विद्यातपसो नान्यत्रेन्द्रियनिग्रहात् । नान्यत्र सर्वसंत्यागात् सिद्धिं विन्दति कश्चन ॥ ५ ॥ महाभूतानि सर्वाणि पृथक् सिद्धिः स्वयम्भुवः । भूयिष्ठं प्राणभृद्ग्रामे निविष्टानि शरीरिषु ॥ ६ ॥ भूमेर्देहो जलात् स्नेहो ज्योतिषश्चक्षुषी स्मृते । प्राणापानाश्रयो वायुः खेष्वाकाशं शरीरिणाम् ॥ ७ ॥ क्रान्ते विष्णुर्बले शक्रः कोष्ठेऽग्निर्भोक्तुमिच्छति । कर्णयोः प्रदिशः श्रोत्रं जिह्वायां वाक् सरस्वती ॥ ८ ॥ कर्णौ त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी । दर्शनीयेन्द्रियोक्तानि द्वाराण्याहारसिद्धये ॥ ९ ॥ शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः । इन्द्रियार्थान् पृथग्विद्यादिन्द्रियेभ्यस्तु नित्यदा ॥ १० ॥ इन्द्रियाणि मनो युङ्क्ते

वश्यान् यन्तेव वाजिनः। मनसापि सदा युङ्क्ते भूतात्मा हृदया-श्रितः॥ ११॥ इन्द्रियाणां तथैवैषां सर्व्वेषामीश्वरं मनः। नियमे च विसर्गे च भूतात्मा मनसस्तथा॥ १२॥ इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः। प्राणापानौ च जीवश्च नित्यं देहेषु देहि-नाम्॥ १३॥ आश्रयो नास्ति सत्त्वस्य गुणाः शब्दो न चेतना। सत्त्वं हि तेजः सृजति न गुणान् वै कथञ्चन॥ १४॥ एवं सप्तदशं देहे वृतं षोड़शभिर्गुणैः। मनीषी मनसा विप्रः पश्यत्यात्मान-मात्मनि॥ १५॥ न ह्ययं चक्षुषा दृश्यो न च सर्व्वैरपीन्द्रियैः। मनसा तु प्रदीपेन महानात्मा प्रकाशते॥ १६॥ अशब्दस्पर्शरूप-न्तदरसागन्धमव्ययम्। अशरीरं शरीरेषु निरीक्षेत निरिन्द्रियम्॥ १७॥ अव्यक्तं सर्व्वदेहेषु मर्त्त्येषु परमाश्रितम्। योऽनुपश्यति स प्रेत्य कल्पते ब्रह्मभूयसे॥ १८॥ विद्याभिजनसम्पन्ने ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च पण्डिताः समदर्शिनः॥१९॥ स हि सर्व्वेषु भूतेषु जङ्गमेषु ध्रुवेषु च। वसत्येको महानात्मा येन सर्व्वमिदं ततम्॥ २०॥ सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि। यदा पश्यति भूतात्मा ब्रह्म सम्पद्यते तदा॥ २१॥ यावानात्मनि वेदात्मा तावानात्मा परात्मनि। य एवं सततं वेद सोऽमृतत्वाय कल्पते॥ २२॥ सर्व्वभूतात्मभूतस्य सर्व्वभूतहितस्य च। देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः॥ २३॥ शकुन्तानामिवाकाशे मत्स्यानामिव चोदके। यथा गतिर्न दृश्येत तथा ज्ञानविदाङ्गतिः॥ २४॥ कालः पचति भूतानि सर्व्वाण्येवात्मनात्मनि। यस्मिंस्तु पच्यते कालस्तं वेदेह न कश्चन॥ २५॥ न तदूर्द्ध्वं न तिर्य्यक् च नाधो न च पुनः पुनः। न मध्ये प्रतिगृह्णीते नैव किञ्चित् कुतश्चन॥ २६॥ सर्व्वेऽन्तःस्था इमे लोका वाह्यमेषां न किञ्चन। यद्यजस्रं समागच्छेद्यथा वाणो गुणच्युतः॥ २७॥ नैवान्तं कारणस्येया-द्यद्यपि स्यान्मनोजवः। तस्मात् सूक्ष्मात् सूक्ष्मतरं नास्ति स्थूल-

तरं ततः ॥ २८ ॥ सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्। सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ २९ ॥ तदेवाणोरणुतरं तन्महद्भ्यो महत्तरम्। तदन्तः सर्वभूतानां ध्रुवं तिष्ठन्न दृश्यते ॥ ३० ॥ अक्षरञ्च क्षरञ्चैव द्वैधीभावोऽयमात्मनः। क्षरः सर्वेषु भूतेषु दिव्यं त्वमृतमक्षरम् ॥ ३१ ॥ नवद्वारं पुरं गत्वा हंसो हि नियतो वशी। ईशः सर्वस्य भूतस्य स्थावरस्य चरस्य च ॥ ३२ ॥ हानिभङ्गविकल्पानां नवानां सञ्चयेन च। शरीराणामजस्याहुँ-र्हंसत्वं पारदर्शिनः ॥ ३३ ॥ हंसोक्तञ्चाक्षरञ्चैव कूटस्थं यत्तदक्षरम्। तद्विद्वानक्षरं प्राप्य जहाति प्राणजन्मनी ॥ ३४ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने अष्टत्रिंशदधिकद्विशततोऽध्यायः ॥ २३८ ॥

---

व्यास उवाच। पृच्छतस्तव सत्पुत्र यथावदिह तत्त्वतः। सांख्यज्ञानेन संयुक्तं यदेतत् कीर्त्तितं मया ॥ १ ॥ योगकृत्यन्तु ते कृत्स्नं वर्त्तयिष्यामि तच्छृणु। एकत्वं बुद्धिमनसोरिन्द्रियाणाञ्च सर्वशः ॥ २ ॥ आत्मनो व्यापिनस्तात ज्ञानमेतदनुत्तमम्। तदेत-दुपशान्तेन दान्तेनाध्यात्मशीलिना ॥ ३ ॥ आत्मारामेण बुद्धेन बोद्धव्यं शुचिकर्म्मणा। योगदोषान् समुच्छिद्य पञ्च यान् कवयो विदुः ॥ ४ ॥ कामं क्रोधञ्च लोभञ्च भयं स्वप्नञ्च पञ्चमम्। क्रोधं शमेन जयति कामं सङ्कल्पवर्ज्जनात् ॥ ५ ॥ सत्त्वसंसेवनाद्धीरो निद्रामुच्छेत्तुमर्हति। धृत्या शिश्नोदरं रक्षेत् पाणिपादञ्च चक्षुषा ॥ ६ ॥ चक्षुःश्रोत्रे च मनसा मनो वाचञ्च कर्म्मणा। अप्रमादाद्भयं जह्याद्दम्भं प्राज्ञोपसेवनात् ॥ ७ ॥ एवमेतान् योगदोषान् जये-न्नित्यमतन्द्रितः। अग्नींश्च ब्राह्मणांश्चार्च्चेद्देवताः प्रणमेत च ॥ ८ ॥ वर्ज्जयेदुषतीं वाचं हिंसायुक्तां मनोनुगाम्। ब्रह्मतेजोमयं शुक्रं

यस्य सर्व्वमिदं रसः ॥ ९ ॥ एतस्य भूतं भूतस्य दृष्टं स्थावरजङ्ग-
मम् । ध्यानमध्ययनं दानं सत्यं ह्रीरार्ज्जवं क्षमा ॥ १० ॥ शौच-
माचारसंशुद्धिरिन्द्रियाणाञ्च निग्रहः । एतैर्विवर्द्धते तेजः पाप्मा-
नाञ्चापकर्षति ॥ ११ ॥ सिध्यन्ति चास्य सर्व्वार्था विज्ञानञ्च प्रवर्त्तते ।
समः सर्व्वेषु भूतेषु लब्धालब्धेन वर्त्तयन् ॥ १२ ॥ धूतपाप्मा तु
तेजस्वी लघ्वाहारो जितेन्द्रियः । कामक्रोधौ वशे कृत्वा निनीषेद्
ब्रह्मणः पदम् ॥ १३ ॥ मनसश्चेन्द्रियाणाञ्च कृत्वैकाग्र्यं समाहितः ।
पूर्व्वरात्रापरार्द्धे च धारयेन्मन आत्मनि ॥ १४ ॥ जन्तोः पञ्चेन्द्रिय-
स्यास्य यदेकं छिद्रमिन्द्रियम् । ततोऽस्य स्रवते प्रज्ञा दृतेः पादा-
दिवोदकम् ॥ १५ ॥ मनस्तु सर्व्वमादद्यात् कुमीनमिव मत्स्यहा ।
ततः श्रोत्रं ततश्चक्षुर्ज्जिह्वा घ्राणञ्च योगवित् ॥ १६ ॥ तत एतानि
संयम्य मनसि स्थापयेद्यतिः । तथैवापोह्य सङ्कल्पान्मनो ह्यात्मनि
धारयेत् ॥ १७ ॥ पञ्चेन्द्रियाणि सन्धाय मनसि स्थापयेद्यतिः ।
यदैतान्यवतिष्ठन्ति मनःषष्ठान्यथात्मनि ॥ १८ ॥ प्रसीदन्ति च
संस्थाय तदा ब्रह्म प्रकाशते । विधूम इव दीप्तार्च्चिरादित्य इव
दीप्तिमान् ॥ १९ ॥ वैद्युतोऽग्निरिवाकाशे दृश्यतेत्मा तथात्मनि ।
सर्व्वस्तत्र स सर्व्वत्र व्यापकत्वाच्च दृश्यते ॥ २० ॥ तं पश्यन्ति महा-
त्मानो ब्राह्मणा ये मनीषिणः । धृतिमन्तो महाप्राज्ञाः सर्व्वभूत-
हिते रताः ॥ २१ ॥ एवं परिमितं कालमाचरन् संशितव्रतः ।
आसीनो हि रहस्येको गच्छेदक्षरसाम्यताम् ॥ २२ ॥ प्रमोहो
भ्रम आवर्त्तौ घ्राणश्रवणदर्शने । अद्भुतानि रसस्पर्शे शीतोष्णो
मारुताकृतिः ॥ २३ ॥ प्रतिभामुपसर्गांश्चाप्युपसंगृह्य योगतः । तां-
स्तत्त्वविदनादृत्य आत्मन्येव निवर्त्तयेत् ॥ २४ ॥ कुर्य्यात् परिचयं
योगे त्रैकाल्ये नियतो मुनिः । गिरिशृङ्गे तथा चैत्ये वृक्षाग्रेषु च
योजयेत् ॥ २५ ॥ संनियम्येन्द्रियग्रामं कोष्ठे भाण्डमना इव ।
एकाग्रं चिन्तयेन्नित्यं योगान्नोद्वेजयेन्मनः ॥ २६ ॥ येनोपायेन

शक्येत संनियन्तुं चलं मनः। तत्र युक्तो निषेवेत न चैव विचलेत्ततः ॥ २७ ॥ शून्या गिरिगुहाश्चैव देवतायतनानि च। शून्यागाराणि चैकाग्रो निवासार्थमुपक्रमेत् ॥ २८ ॥ नाभिष्वजेत परं वाचा कर्मणा मनसापि वा। उपेक्षको यताहारो लब्धालब्धे समो भवेत् ॥ २९ ॥ यश्चैनमभिनन्देत यश्चैनमपवादयेत्। समस्तयोश्चाप्युभयोर्नाभिध्यायेच्छुभाशुभम् ॥ ३० ॥ न प्रहृष्येत लाभेषु नालाभेषु च चिन्तयेत्। समः सर्वेषु भूतेषु सधर्मा मातरिश्वनः ॥ ३१ ॥ एवं स्वस्थात्मनः साधोः सर्वत्र समदर्शिनः। षण्मासान्नित्ययुक्तस्य शब्दब्रह्मातिवर्त्तते ॥ ३२ ॥ वेदनार्त्ताः प्रजा दृष्ट्वा समलोष्टाश्मकाञ्चनः। एतस्मिन् विरतो मार्गे विरमेन्न च मोहितः ॥ ३३ ॥ अपि वर्णावकृष्टस्तु नारी वा धर्मकाङ्क्षिणी। तावप्येतेन मार्गेण गच्छेतां परमां गतिम् ॥ ३४ ॥ अजं पुराणमजरं सनातनं यदिन्द्रियैरुपलभ्येत निश्चलैः। अणोरणीयो महतो महत्तरं तदात्मना पश्यति मुक्तमात्मवान् ॥ ३५ ॥ इदं महर्षेर्वचनं महात्मनो यथावदुक्तं मनसानुदृश्य च। अवेक्ष्य चेमां परमेष्ठिसाम्यतां प्रयान्ति चाभूतगतिं मनीषिणः ॥ ३६ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने एकोनचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २३९ ॥

---

शुक उवाच। यदिदं वेदवचनं कुरु कर्म त्यजेति च। कां दिशं विद्यया यान्ति कांश्च गच्छन्ति कर्मणा ॥ १ ॥ एतद्वै श्रोतुमिच्छामि तद्भवान् प्रब्रवीतु मे। एतच्चान्योऽन्यवैरूप्ये वर्त्तते प्रतिकूलतः ॥२॥

भीष्म उवाच। इत्युक्तः प्रत्युवाचेदं पराशरसुतः सुतम्। कर्मविद्यामयावेतौ व्याख्यास्यामि क्षराक्षरौ ॥ ३ ॥ यां दिशं विद्यया यान्ति यांश्च गच्छन्ति कर्मणा। शृणुष्वैकमना वत्स गह्वरं ह्येत-

दन्तरम् ॥ ४ ॥ अस्ति धर्म इति प्रोक्तं नास्तीत्यत्रैव यो वदेत् । तस्य पक्षस्य सदृशमिदं मम भवेदथ ॥ ५ ॥ द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्मो निवृत्तौ च सुभाषितः ॥ ६ ॥ कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते । तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ ७ ॥ कर्मणा जायते प्रेत्य मूर्त्तिमान् षोड़शात्मकः । विद्यया जायते नित्यमव्यक्तं ह्यव्ययात्मकम् ॥ ८ ॥ कर्म त्वेके प्रशंसन्ति स्वल्पबुद्धिरता नराः । तेन ते देहजालानि रमयन्त उपासते ॥ ९ ॥ ये तु बुद्धिं परां प्राप्ता धर्मनैपुण्यदर्शिनः । न ते कर्म प्रशंसन्ति कूपं नद्यां पिबन्निव ॥१०॥ कर्मणः फलमाप्नोति सुखदुःखे भवाभवौ । विद्यया तदवाप्नोति यत्र गत्वा न शोचति ॥ ११ ॥ यत्र गत्वा न म्रियते यत्र गत्वा न जायते । न पुनर्जीर्य्यते यत्र यत्र गत्वा न वर्त्तते ॥ १२ ॥ यत्र तद्ब्रह्म परममव्यक्तमचलं ध्रुवम् । अव्याकृतमनायासममृतञ्चावियोगि च ॥ १३ ॥ द्वन्द्वैर्न यत्र बाध्यन्ते मानसेन च कर्मणा । समाः सर्व्वत्र मैत्राश्च सर्व्वभूतहिते रताः ॥ १४ ॥ विद्यामयोऽन्यः पुरुषस्तात कर्ममयोऽपरः । विद्धि चन्द्रमसं दर्शे सूक्ष्मया कलया स्थितम् ॥ १५ ॥ तदेतदृषिणा प्रोक्तं विस्तरेणानुमीयते । नवजं शशिनं दृष्ट्वा वक्रतन्तुमिवाम्बरे ॥ १६ ॥ एकादशविकारात्मा कलासम्भारसंभृतः । मूर्त्तिमानिति तं विद्धि तात कर्मगुणात्मकम् ॥ १७ ॥ देवो यः संश्रितस्तस्मिन्नब्बिन्दुरिव पुष्करे । क्षेत्रज्ञं तं विजानीयान्नित्यं योगजितात्मकम् ॥ १८ ॥ तमो रजश्च सत्त्वञ्च विद्धि जीवगुणात्मकम् । जीवमात्मगुणं विद्यादात्मानं परमात्मनः ॥ १९ ॥ सचेतनं जीवगुणं वदन्ति स चेष्टते जीवयते च सर्व्वम् । ततः परं क्षेत्रविदो वदन्ति प्राकल्पयद्यो भुवनानि सप्त ॥ २० ॥

इति शान्तिपर्व्वणि मोक्षधर्मपर्व्वणि शुकानुप्रश्ने चत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४० ॥

शुक उवाच । चरात् प्रभृति यः सर्गः सगुणानिन्द्रियाणि च । बुद्ध्यैश्वर्यातिसर्गोऽयं प्रधानस्यात्मनः श्रुतम् ॥ १ ॥ भूय एव तु लोकेऽस्मिन् सद्वृत्तिं कालहैतुकीम् । यया सन्तः प्रवर्त्तन्ते तदिच्छाम्यनुवर्त्तितुम् ॥ २ ॥ वेदे वचनमुक्तन्तु कुरु कर्म त्यजेति च । कथमेतद्विजानीयां तच्च व्याख्यातुमर्हसि ॥ ३ ॥ लोकवृत्तान्ततत्त्वज्ञः पूतोऽहं गुरुशासनात् । कृत्वा बुद्धिं विमुक्तात्मा द्रक्ष्याम्यात्मानमव्ययम् ॥ ४ ॥

व्यास उवाच । यथा वै विहिता वृत्तिः पुरस्ताद्ब्रह्मणा स्वयम् । एषा पूर्वतरैः सद्भिराचीर्णा परमर्षिभिः ॥ ५ ॥ ब्रह्मचर्य्येण वै लोकान् जयन्ति परमर्षयः । आत्मनश्च ततः श्रेयांस्यन्विच्छन्मनसात्मनि ॥ ६ ॥ वने मूलफलाशी च तप्यन् सुविपुलं तपः । पुण्यायतनचारी च भूतानामविहिंसकः ॥ ७ ॥ विधूमे सन्नमूषले वानप्रस्थप्रतिश्रये । काले प्राप्ते चरन् भैक्ष्यं कल्पते ब्रह्मभूयसे ॥ ८ ॥ निःस्तुतिर्निर्नमस्कारः परित्यज्य शुभाशुभे । अरण्ये विचरैकाकी येन केनचिदाशितः ॥ ९ ॥

शुक उवाच । यदिदं वेदवचनं लोकवादे विरुध्यते । प्रमाणे चाप्रमाणे च विरुद्धे शास्त्रता कुतः ॥ १० ॥ इतेरच्छ्रोतुमिच्छामि प्रमाणन्तूभयं कथम् । कर्मणामविरोधेन कथं मोक्षः प्रवर्त्तते ॥११॥

भीष्म उवाच । इत्युक्तः प्रत्युवाचेदं गन्धवत्याः सुतः सुतम् । ऋषिस्तत् पूजयन् वाक्यं पुत्रस्यामिततेजसः ॥ १२ ॥

व्यास उवाच । ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः । यथोक्तचारिणः सर्वे गच्छन्ति परमां गतिम् ॥ १३ ॥ एको वाप्याश्रमानेतान् योऽनुतिष्ठेद्यथाविधि । अकामद्वेषसंयुक्तः स परत्र विधीयते ॥ १४ ॥ चतुष्पदी हि निःश्रेणी ब्रह्मण्येषा प्रतिष्ठिता । एतामारुह्य निःश्रेणीं ब्रह्मलोके महीयते ॥ १५ ॥ आयुषस्तु चतुर्भागं ब्रह्मचार्य्यनसूयकः । गुरौ वा गुरुपुत्रे वा वसेद्धर्मार्थ-

कोविदः ॥ १६ ॥ जघन्यशायी पूर्वं स्यादुत्थाय गुरुवेश्मनि । यच्च शिष्येण कर्त्तव्यं कार्य्यं दासेन वा पुनः ॥ १७ ॥ कृतमित्येव तत् सर्वं कृत्वा तिष्ठेत पार्श्वतः । किङ्करः सर्व्वकारी स्यात् सर्वकर्मसु कोविदः ॥ १८ ॥ कर्मातिशेषेण गुरावध्येतव्यं बुभूषता । दक्षिणोऽनपवादी स्यादाहूतो गुरुमाश्रयेत् ॥ १९ ॥ शुचिर्दक्षो गुणोपेतो ब्रूयादिष्टमिवान्तरा । चक्षुषा गुरुमव्यग्रो निरीक्षेत जितेन्द्रियः ॥ २० ॥ नाभुक्तवति चाश्नीयादपीतवति नो पिबेत् । नातिष्ठति तथासीत नासुप्ते प्रस्वपेत च ॥ २१ ॥ उत्तानाभ्यान्तु पाणिभ्यां पादावस्य मृदु स्पृशेत् । दक्षिणं दक्षिणेनैव सव्यं सव्येन पीड़येत् ॥ २२ ॥ अभिवाद्य गुरुं ब्रूयादधीष्व भगवन्निति । इदं करिष्ये भगवन्निदञ्चापि कृतं मया । ब्रह्मंस्तदपि कर्त्तास्मि यद्भवान् वक्ष्यते पुनः ॥ २३ ॥ इति सर्वमनुज्ञाप्य निवेद्य च यथाविधि । कुर्य्यात् कृत्वा च तत् सर्वमाख्येयं गुरवे पुनः ॥ २४ ॥ यांस्तु गन्धान्रसान् वापि ब्रह्मचारी न सेवते । सेवेत तान् समावृत्त इति धर्मेषु निश्चयः ॥ २५ ॥ ये केचिद्विस्तरेणोक्ता नियमा ब्रह्मचारिणः । तान् सर्वाननुचरेन्नित्यं भवेच्चानपगो गुरौ ॥ २६ ॥ स एवं गुरवे प्रीतिमुपहृत्य यथाबलम् । आश्रमादाश्रमेष्वेव शिष्यो वर्त्तेत कर्मणा ॥ २७ ॥ वेदव्रतोपवासेन चतुर्थे चायुषो गते । गुरवे दक्षिणां दत्त्वा समावर्त्तेद्यथाविधि ॥ २८ ॥ धर्मलब्धैर्युतो दारैरग्नीनुत्पाद्य यत्नतः । द्वितीयमायुषो भागं गृहमेधी भवेद्व्रती ॥२९॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने एकचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४१ ॥

---

व्यास उवाच । द्वितीयमायुषो भागं गृहमेधी गृहे वसेत् । धर्मलब्धैर्युतो दारैरग्नीनाहृत्य सुव्रतः ॥ १ ॥ गृहस्थवृत्तयश्चैव

चतस्रः कविभिः स्मृताः। कुशूलधान्यः प्रथमः कुम्भधान्यस्त्वनन्तरम्
॥ २ ॥ अश्वस्तनोऽथ कापोतीमाश्रितो वृत्तिमाहरेत्। एषां परः
परो ज्यायान् धर्मतो धर्मजित्तमः ॥ ३ ॥ षट्कर्मा वर्त्तयत्येक-
स्त्रिभिरन्यः प्रवर्त्तते। द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रे व्यवस्थितः ॥४॥
गृहमेधिव्रतान्यत्र महान्तीह प्रचक्षते। नात्मार्थं पाचयेदन्नं न
वृथा घातयेत् पशून् ॥ ५ ॥ प्राणी वा यदि वाप्राणी संस्कारं
यजुषार्हति। न दिवा प्रस्वपेज्जातु न पूर्वापररात्रिषु ॥ ६ ॥ न
भुञ्जीतान्तराकाले नानृतावाह्वयेत् स्त्रियम्। नास्यानश्नन् गृहे
विप्रो वसेत् कश्चिदपूजितः ॥ ७ ॥ तथास्यातिथयः पूज्या हव्य-
कव्यवहाः सदा। वेदविद्याव्रतस्नाताः श्रोत्रिया वेदपारगाः ॥८॥
स्वधर्मजीविनो दान्ताः क्रियावन्तस्तपस्विनः। तेषां हव्यञ्च कव्य-
ञ्चाप्यर्हणार्थं विधीयते ॥ ९ ॥ नखरैः सम्प्रयातस्य स्वधर्मज्ञाप-
कस्य च। अपविद्धाग्निहोत्रस्य गुरोर्वालीककारिणः ॥ १० ॥ सं-
विभागोऽत्र भूतानां सर्वेषामेव शिष्यते। तथैवापचमानेभ्यः प्रदेयं
गृहमेधिना ॥ ११ ॥ विघसाशी भवेन्नित्यं नित्यञ्चामृतभोजनः।
अमृतं यज्ञशेषं स्याद्भोजनं हविषा समम् ॥ १२ ॥ भृत्यशेषन्तु
योऽश्नाति तमाहुर्विघसाशिनम्। विघसं भृत्यशेषन्तु यज्ञशेषमथा-
मृतम् ॥ १३ ॥ स्वदारनिरतो दान्तो ह्यनसूयुर्जितेन्द्रियः ॥ १४ ॥
ऋत्विक्पुरोहिताचार्य्यैर्मातुलातिथिसंश्रितैः। वृद्धबालातुरैर्वैद्यै-
र्ज्ञातिसम्बन्धिबान्धवैः ॥ १५ ॥ मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण
भार्य्यया। दुहित्रा दासवर्गेण विवादं न समाचरेत् ॥ १६ ॥
एतान् विमुच्य संवादान् सर्वपापैर्विमुच्यते। एतैर्जितस्तु जयति
सर्वान् लोकान्न संशयः ॥ १७ ॥ आचार्य्यो ब्रह्मलोकेशः प्रजा-
पत्ये पिता प्रभुः। अतिथिस्त्विन्द्रलोकस्य देवलोकस्य चर्त्विजः।
जामयोऽप्सरसां लोके वैश्वदेवे तु ज्ञातयः ॥ १८ ॥ सम्बन्धि-
बान्धवा दिक्षु पृथिव्यां मातृमातुलौ। वृद्धबालातुरकृशास्त्वाकाशे

ष्मभविष्याव: ॥ १९ ॥ भ्राता ज्येष्ठः समः पित्रा भार्य्या पुत्रः स्वका तनुः । छाया स्वा दासवर्गश्च दुहिता कृपणं परम् ॥ २० ॥ तस्मादेतैरधिक्षिप्तः सहेन्नित्यमसंज्वरः । गृहधर्म्मपरो विद्वान् धर्म्मशीलो जितक्लमः ॥ २१ ॥ न चार्थबद्धः कर्म्माणि धर्मवान् कश्चिदाचरेत् । गृहस्थवृत्तयस्तिस्रस्तासां निःश्रेयसं परम् ॥ २२ ॥ परं परं तथैवाहुश्चातुराश्रम्यमेव तत् । ये चोक्ता नियमास्तेषां सर्वं कार्य्यं बुभूषता ॥ २३ ॥ कुम्भधान्यैरुञ्छशिलैः कापोतीञ्चास्थितास्तथा । यस्मिंश्चैते वसन्त्यर्हास्तद्राष्ट्रमभिवर्द्धते ॥ २४ ॥ पूर्वापरान् दश परान् पुनाति च पितामहान् । गृहस्थवृत्तिश्चाप्येता वर्त्तयेद्यो गतव्यथः ॥ २५ ॥ स चक्रधरलोकानां सदृशीमाप्नुयाद्गतिम् । जितेन्द्रियाणामथ वा गतिरेषा विधीयते ॥ २६ ॥ स्वर्गलोको गृहस्थानामुदारमनसां हितः । स्वर्गो विमानसंयुक्तो वेददृष्टः सुपुष्पितः ॥ २७ ॥ स्वर्गलोको गृहस्थानां प्रतिष्ठा नियतात्मनाम् ॥ २८ ॥ ब्रह्मणा विहिता योनिरेषा यस्माद्विधीयते । द्वितीयं क्रमशः प्राप्य स्वर्गलोके महीयते ॥ २९ ॥ अतः परं परममुदारमाश्रमं तृतीयमाहुस्त्यजतां कलेवरम् । वनौकसां गृहपतिनामनुत्तमं शृणुष्व शरीरकारिणाम् ॥ ३० ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि शुकानुप्रश्ने
द्विचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४२ ॥

---

भीष्म उवाच । प्रोक्ता गृहस्थवृत्तिस्ते विहिता या मनीषिभिः । तदनन्तरमुक्तं यत् तन्निबोध युधिष्ठिर ॥ १ ॥ क्रमशस्त्ववधूयैनां तृतीयां वृत्तिमुत्तमाम् । संयोगव्रतखिन्नानां वानप्रस्थाश्रमौकसाम् ॥ २ ॥ श्रूयतां पुत्र भद्रन्ते सर्वलोकाश्रमात्मनाम् । प्रेक्षापूर्वं प्रवृत्तानां पुण्यदेशनिवासिनाम् ॥ ३ ॥

व्यास उवाच। गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः। अपत्यस्यैव चापत्यं वनमेव तदाश्रयेत् ॥ ४ ॥ तृतीयमायुषो भागं वानप्रस्थाश्रमे वसेत्। तानेवाग्नीन् परिचरेद्यजमानो दिवौकसः ॥ ५ ॥ नियतो नियताहारः षष्ठभक्तोऽप्रमत्तवान्। तदग्निहोत्रं ता गावो यज्ञाङ्गानि च सर्वशः ॥ ६ ॥ अकालकृष्टं व्रीहियवं नीवारं विघसानि च। हवींषि सम्प्रयच्छेत मखेष्वत्रापि पञ्चसु ॥ ७ ॥ वानप्रस्थाश्रमेऽप्येताश्चतस्रो वृत्तयः स्मृताः। सद्यः प्रक्षालकाः केचित् केचिन्मासिकसञ्चयाः ॥ ८ ॥ वार्षिकं सञ्चयं केचित् केचिद्द्वादशवार्षिकम्। कुर्वन्त्यतिथिपूजार्थं यज्ञतन्त्रार्थमेव वा ॥९॥ अभ्रावकाशा वर्षासु हेमन्ते जलसंश्रयाः। ग्रीष्मे च पञ्चतपसः शश्वच्च मितभोजनाः ॥ १० ॥ भूमौ विपरिवर्त्तन्ते तिष्ठन्ति प्रपदेऽपि। स्थानासनैर्वर्त्तयन्ति सवनेष्वभिषिञ्चते ॥ ११ ॥ दन्तोलूखलिकाः केचिदश्मकुट्टास्तथा परे। शुक्लपक्षे पिबन्त्येके यवागुं क्वथितां सकृत् ॥१२॥ कृष्णपक्षे पिबन्त्यन्ये भुञ्जते वा यथागमम्। मूलैरेके फलैरेके पुष्पैरेके दृढव्रताः। वर्त्तयन्ति यथान्यायं वैखानसगतिं श्रिताः ॥ १३ ॥ एताश्चान्याश्च विविधा दीक्षास्तेषां मनीषिणाम्। चतुर्थश्चौपनिषदो धर्मः साधारणः स्मृतः। वानप्रस्थात् गृहस्थाच्च ततोऽन्यः सम्प्रवर्त्तते ॥ १४ ॥ अस्मिन्नेव युगे तात विप्रैः सर्वार्थदर्शिभिः। अगस्त्यः सप्त ऋषयो मधुच्छन्दोऽघमर्षणः। सांकृतिः सुदिवातण्डिर्यथावासोऽकृतश्रमः ॥ १५ ॥ अहोवीर्य्यस्तथा काव्यस्ताण्ड्यो मेधातिथिर्बुधः। बलवान् कर्णनिर्वाकः शून्यपालः कृतश्रमः ॥ १६ ॥ एवं धर्मं कृतवन्तस्ततः स्वर्गमुपागमन्। तात प्रत्यक्षधर्माणस्तथा यायावरा गणाः ॥ १७ ॥ ऋषीणामुग्रतपसां धर्मनैपुण्यदर्शिनाम्। अन्ये चापरिमेयाश्च ब्राह्मणा वनमाश्रिताः ॥ १८ ॥ वैखानसा वालिखिल्याः सैकताश्च तथापरे। कर्मभिस्ते निरानन्दा धर्मनित्या जितेन्द्रियाः ॥१९॥ गताः प्रत्यक्ष-

धर्माणस्ते सर्वे वनमाश्रिताः । अनक्षत्रास्त्वनाधृष्या दृश्यन्ते ज्योतिषां गणाः ॥ २० ॥ जरया च परिद्यूनो व्याधिना च प्रपीड़ितः । चतुर्थे चायुषः शेषे वानप्रस्थाश्रमं त्यजेत् ॥ २१ ॥ सद्यस्कारां निरूप्येष्टिं सर्ववेदसदक्षिणाम् । आत्मयाजी सोऽऽत्मरतिरात्मक्रीड़ात्मसंश्रयः ॥ २२ ॥ आत्मन्यग्नीन् समारोप्य त्यक्त्वा सर्वपरिग्रहान् । सद्यस्कांश्च यजेद्यज्ञानिष्टीश्चैवेह सर्वदा ॥ २३ ॥ यदैव याजिनां यज्ञादात्मनीज्या प्रवर्त्तते । त्रींश्चैवाग्नीन् यजेत् सम्यगात्मन्येवात्ममोक्षणात् ॥ २४ ॥ प्राणेभ्यो यजुषः पञ्च षट् प्राश्नीयादकुत्सयन् । केशलोमनखान् वाप्य वानप्रस्थो मुनिस्ततः ॥ २५ ॥ आश्रमादाश्रमं पुण्यं पूतो गच्छति कर्मभिः । अभयं सर्वभूतेभ्यो दत्त्वा यः प्रव्रजेद्द्विजः । लोकास्तेजोमयास्तस्य प्रेत्य चानन्त्यमश्नुते ॥ २६ ॥ सुशीलवृत्तो व्यपनीतकल्मषो न चेह चामुत्र च कर्त्तुमीहते । अरोषमोहो गतसन्धिविग्रहो भवेदुदासीनवदात्मविन्नरः ॥ २७ ॥ यमेषु चैवानुगतेषु न व्यथेत् स्वशास्त्रसूत्राहुतिमन्त्रविक्रमः । भवेद्यथेष्टा गतिरात्मवेदिनि न संशयो धर्मपरे जितेन्द्रिये ॥ २८ ॥ अतः परं श्रेष्ठमतीव सद्गुणैरधिष्ठितं त्रीनधिवृत्तिमुत्तमम् । चतुर्थमुक्तं परमाश्रमं शृणु प्रकीर्त्त्यमानं परमं परायणम् ॥ २९ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने
त्रिचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४३ ॥

---

शुक उवाच । वर्त्तमानस्तथैवात्र वानप्रस्थाश्रमे यथा । योक्तव्योत्मा कथं शक्त्या वेद्यं वै काङ्क्षता परम् ॥ १ ॥

व्यास उवाच । प्राप्य संस्कारमेताभ्यामाश्रमाभ्यां ततः परम् । यत् कार्य्यं परमार्थन्तु तदिहैकमनाः शृणु ॥ २ ॥ कषायं पाचयित्वाशु श्रेणिस्थानेषु च त्रिषु । प्रव्रजेच्च परं स्थानं पारिव्राज्यमनु-

त्तमम् ॥ ३ ॥ तद्भवानेवमभ्यस्य वर्त्ततां श्रूयतां तथा। एक एव चरेद्धर्मं सिद्धार्थमसहायवान् ॥४॥ एकश्चरति यः पश्यन्न जहाति न हीयते। अनग्निरनिकेतश्च ग्राममन्नार्थमाश्रयेत् ॥ ५ ॥ अश्वस्तनविधाता स्यान्मुनिर्भावसमाहितः। लघ्वाशी नियताहार सकृदन्ननिषेविता ॥ ६ ॥ कपालं वृक्षमूलानि कुचैलमसहायता। उपेक्षा सर्वभूतानामेतावद्भिक्षुलक्षणम् ॥ ७ ॥ यस्मिन् वाचः प्रविशन्ति कूपे त्रस्ता द्विपा इव। न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥ ८ ॥ नैव पश्येन्न शृणुयादवाच्यं जातु कस्यचित्। ब्राह्मणानां विशेषेण नैव ब्रूयात् कथञ्चन ॥ ९ ॥ यद्ब्राह्मणस्य कुशलं तदेव सततं वदेत्। तूष्णीमासीत निन्दायां कुर्वन् भैषज्यमात्मनः ॥ १० ॥ येन पूर्णमिवाकाशं भवत्येकेन सर्वदा। शून्यं येन जनाकीर्णं तं देवा ब्राह्मणं विदुः ॥ ११ ॥ येन केनचिदाच्छिन्नो येन केनचिदाशितः। यत्र क्वचन शायी च तं देवा ब्राह्मणं विदुः ॥ १२ ॥ अहेरिव गणाद्भीतः सौहित्यान्नरकादिव। कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ॥१३॥ न क्रुध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः। सर्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः ॥ १४ ॥ नाभिनन्देत मरणं नाभिनन्देत जीवितम्। कालमेव प्रतीक्षेत निदेशं भृतको यथा ॥१५॥ अनभ्याहतचित्तः स्यादनभ्याहतवाग्भवेत्। निर्मुक्तः सर्वपापेभ्यो निरमित्रस्य किं भयम् ॥ १६ ॥ अभयं सर्वभूतेभ्यो भूतानामभयं यतः। तस्य मोहाद्विमुक्तस्य भयं नास्ति कुतश्चन ॥ १७ ॥ यथा नागपदेऽन्यानि पदानि पदगामिनाम्। सर्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे ॥ १८ ॥ एवं सर्वमहिंसायां धर्मार्थमपि हीयते। अमृतः स नित्यं वसति यो हिंसां न प्रपद्यते ॥ १९ ॥ अहिंसकः समः सत्यो धृतिमान्नियतेन्द्रियः। शरण्यः सर्वभूतानां गतिमाप्नोत्यनुत्तमाम् ॥२०॥ एवं प्रज्ञानतृप्तस्य निर्भयस्य निराशिषः।

न मृत्युरतिगो भावः स मृत्युमधिगच्छति ॥ २१ ॥ विमुक्तं सर्व्वसङ्गेभ्यो मुनिमाकाशवत् स्थितम् । अस्वमेकचरं शान्तं तं देवा ब्राह्मणं विदुः ॥ २२ ॥ जीवितं यस्य धर्म्मार्थं धर्म्मोहर्य्यर्थमेव च । अहोरात्राश्च पुण्यार्थं तं देवा ब्राह्मणं विदुः ॥ २३ ॥ निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् । निर्मुक्तं बन्धनैः सर्व्वैस्तं देवा ब्राह्मणं विदुः ॥ २४ ॥ सर्व्वाणि भूतानि सुखे रमन्ते सर्व्वाणि दुःखस्य भृशं त्रसन्ते । तेषां भयोत्पादनजातखेदः कुर्य्यान्न कर्म्माणि हि श्रद्दधानः ॥ २५ ॥ दानं हि भूताभयदक्षिणायाः सर्व्वाणि दानान्यधितिष्ठतीह । तीक्ष्णां तनुं यः प्रथमं जहाति सोऽनन्त्यमाप्नोत्यभयं प्रजाभ्यः ॥२६॥ उत्तान आस्ये न हविर्जुहोति लोकस्य नाभिर्जगतः प्रतिष्ठा । तस्याङ्गमङ्गानि कृताकृतञ्च वैश्वानरः सर्व्वमिदं प्रपेदे ॥ २७ ॥ प्रादेशमात्रे हृदि निःसृतं यत्तस्मिन् प्राणानात्मयाजी जुहोति । तस्याग्निहोत्रं हुतमात्मसंस्थं सर्व्वेषु लोकेषु सदेवकेषु ॥ २८ ॥ दैवं त्रिधातुं त्रिवृतं सुपर्णं ये विद्युरग्र्यां परमात्मताञ्च । ते सर्व्वलोकेषु महीयमाना देवाः समर्त्त्या सुकृतं वदन्ति ॥ २९ ॥ वेदांश्च वेद्यञ्च विधिञ्च कृत्स्नमथो निरुक्तं परमार्थताञ्च । सर्व्वं शरीरात्मनि यः प्रवेद तस्यैव देवाः स्पृहयन्ति नित्यम् ॥ ३० ॥ भूमावसक्तं दिवि चाप्रमेयं हिरण्मयं योऽण्डजमण्डमध्ये । पतत्रिणं पक्षिणमन्तरीक्षे यो वेद भोग्यात्मनि रश्मिदीप्तः ॥ ३१ ॥ आवर्त्तमानमजरं विवर्त्तनं षण्णाभिकं द्वादशार सुपर्व्वं । यस्येदमास्योपरि याति विश्वं तत् कालचक्रं निहितं गुहायाम् ॥ ३२ ॥ यः सम्प्रसादं जगतः शरीरं सर्व्वान् स लोकानधिगच्छतीह । तस्मिन् हि सन्तर्पयतीह देवांस्ते वै तृप्ता स्तर्पयन्त्यास्यमस्य ॥ ३३ ॥ तेजोमयो नित्यमयः पुराणो लोकाननन्तानभयानुपैति । भूतानि यस्मान्न त्रसन्ते कदाचित् स भूतानां न त्रसते कदाचित् ॥ ३४ ॥ अगर्हणीयो न च गर्हतेऽन्यान् स वै विप्रः

परमात्मानमीक्षेत्। विनीतमोहो व्यपनीतकल्मषो न चेह चामुत्र च सोऽन्नमर्च्छति ॥ ३५ ॥ अरोषमोहः समलोष्टकाञ्चनः प्रहीणकोषो गतसन्धिविग्रहः। अपेतनिन्दास्तुतिरप्रियाप्रियश्चरन्नुदासीनवदेष भिक्षुकः ॥ ३६ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने चतुश्चत्वारिंशदधिकद्विशततोऽध्यायः॥ २४४ ॥

---

व्यास उवाच। प्रकृत्यास्तु विकारा ये क्षेत्रज्ञस्तैरधिष्ठितः। न चैनं ते प्रजानन्ति स तु जानाति तानपि ॥ १ ॥ तैश्चैवं कुरुते कार्य्यं मनःषष्ठैरिहेन्द्रियैः। सुदान्तैरिव संयन्ता दृढैः परमवाजिभिः ॥ २ ॥ इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यः परमं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ ३ ॥ महतः परमव्यक्तमव्यक्तात् परतोऽमृतम्। अमृतान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥ ४ ॥ एवं सर्व्वेषु भूतेषु गूढ़ात्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ ५ ॥ अन्तरात्मनि संलीय मनःषष्ठानि मेधया। इन्द्रियाणीन्द्रियार्थांश्च बहुचिन्त्यमचिन्तयन् ॥ ६ ॥ ध्यानेनोपरमं कृत्वा विद्यासम्पादितं मनः। अनीश्वरः प्रशान्तात्मा ततोऽर्च्छत्यमृतं पदम ॥ ७ ॥ इन्द्रियाणान्तु सर्व्वेषां वश्यात्मा चलितस्मृतिः। आत्मनः सम्प्रदानेन मर्त्त्यो मृत्युमुपाश्नुते ॥ ८ ॥ आहत्य सर्व्वसङ्कल्पान् सत्त्वे चित्तं निवेशयेत्। सत्त्वे चित्तं समावेश्य ततः कालञ्जरो भवेत् ॥ ९ ॥ चित्तप्रसादेन यतिर्जहातीह शुभाशुभम्। प्रसन्नात्मात्मनि स्थित्वा सुखमत्यन्तमश्नुते ॥ १० ॥ लक्षणन्तु प्रसादस्य यथा स्वप्ने सुखं स्वपेत्। निवाते वा यथा दीपो दीप्यमानो न कम्पते ॥ ११ ॥ एवं पूर्व्वापरे काले युञ्जन्नात्मानमात्मनि। लघ्वाहारो विशुद्धात्मा पश्यत्या-

ज्ञानमात्मनि ॥ १२ ॥ रहस्यं सर्ववेदानामनैतिह्यमनागमम् । आत्मप्रत्ययिकं शास्त्रमिदं पुत्रानुशासनम् ॥ १३ ॥ धर्माख्यानेषु सर्वेषु सत्याख्याने च यद्वसु । दशेदमृक्सहस्राणि निर्म्मथ्यामृतमुद्धृतम् ॥ १४ ॥ नवनीतं यथा दध्नः काष्ठादग्निर्यथैव च । तथैव विदुषां ज्ञानं पुत्र हेतोः समुद्धृतम् ॥१५॥ स्नातकानामिदं शास्त्रं वाच्यं पुत्रानुशासनम् । तदिदं नाप्रशान्ताय नादान्तायातपस्विने ॥ १६ ॥ नावेदविदुषे वाच्यं तथानानुगताय च । नासूयकायानृजवे न चानिर्दिष्टकारिणे ॥ १७॥ न तर्कशास्त्रदग्धाय तथैव पिशुनाय च । श्लाघिने श्लाघनीयाय प्रशान्ताय तपस्विने ॥ १८ ॥ इदं प्रियाय पुत्राय शिष्यायानुगताय च । रहस्यधर्मं वक्तव्यं नान्यस्मै तु कथञ्चन ॥ १९ ॥ यद्यप्यस्य महीं दद्याद्रत्नपूर्णामिमां नरः । इदमेव ततः श्रेय इति मन्येत तत्त्ववित् ॥ २० ॥ अतो गुह्यतरार्थं तदध्यात्ममतिमानुषम् । यत्तन्महर्षिभिर्दृष्टं वेदान्तेषु च गीयते । तत्तेऽहं संप्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ॥ २१ ॥ यच्च ते मनसि वर्त्तते परं यत्र चास्ति तव संशयः क्वचित् । श्रूयतामयमहं तवाग्रतः पुत्र किं हि कथयामि ते पुनः ॥ २२ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने
पञ्चचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४५ ॥

---

शुक उवाच । अध्यात्मं विस्तरेणेह पुनरेव वदस्व मे । यदध्यात्मं यथा चेदं भगवन्नृषिसत्तम ॥ १ ॥

व्यास उवाच । अध्यात्मं यदिदं तात पुरुषस्येह पठ्यते । तत्तेऽहं वर्त्तयिष्यामि तस्य व्याख्यामिमां शृणु ॥ २ ॥ भूमिरापस्तथा ज्योतिर्वायुराकाश एव च । महाभूतानि भूतानां सागरस्योर्मयो यथा ॥ ३ ॥ प्रसार्य्येह यथाङ्गानि कूर्मः संहरते पुनः ।

तद्वन्महान्ति भूतानि यवीयःसु विकुर्वते ॥ ४ ॥ इति तन्मयमेवेदं सर्वं स्थावरजङ्गमम्। सर्गे च प्रलये चैव तस्मिन्निर्दिश्यते तथा ॥५॥ महाभूतानि पञ्चैव सर्वभूतेषु भूतकृत्। अकरोत्तात वैषम्यं यस्मिन् यदनुपश्यति ॥ ६ ॥

शुक उवाच। अकरोद्यच्छरीरेषु कथं तदुपलक्षयेत्। इन्द्रियाणि गुणाः केचित् कथं तानुपलक्षयेत् ॥ ७ ॥

व्यास उवाच। एतत्ते वर्त्तयिष्यामि यथावदनुपूर्वशः। शृणु तत्त्वमिहैकाग्रो यथा तत्त्वं यथा च तत् ॥ ८ ॥ शब्दः श्रोत्रं तथा खानि त्रयमाकाशसम्भवम्। प्राणश्चेष्टा तथा स्पर्श एते वायुगुणास्त्रयः ॥ ९ ॥ रूपञ्चक्षुर्विपाकश्च त्रिधा ज्योतिर्विधीयते। रसोऽथ रसनं स्नेहो गुणास्त्वेते त्रयोऽम्भसः ॥ १० ॥ घ्रेयं घ्राणं शरीरञ्च भूमेरेते गुणास्त्रयः। एतावानिन्द्रियग्रामो व्याख्यातः पाञ्चभौतिकः ॥ ११ ॥ वायोः स्पर्शो रसोऽद्भ्यश्च ज्योतिषो रूपमुच्यते। आकाशप्रभवः शब्दो गन्धो भूमिगुणः स्मृतः ॥ १२ ॥ मनो बुद्धिः स्वभावश्च त्रय एते स्वयोनिजाः। न गुणानतिवर्त्तन्ते गुणेभ्यः परमागताः ॥ १३ ॥ यथा कूर्म इहाङ्गानि प्रसार्य्य विनियच्छति। एवमेवेन्द्रियग्रामं बुद्धिः सृष्ट्वा नियच्छति ॥ १४ ॥ यदूर्द्ध्वं पादतलयोरवाङ्मूर्द्ध्नश्च पश्यति। एतस्मिन्नेव कृत्ये तु वर्त्तते बुद्धिरुत्तमा ॥१५॥ गुणान्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि। मनःषष्ठानि सर्वाणि बुद्ध्यभावे कुतो गुणाः ॥ १६ ॥ इन्द्रियाणि नरे पञ्च षष्ठन्तु मन उच्यते। सप्तमीं बुद्धिमेवाहुः क्षेत्रज्ञं पुनरष्टमम् ॥ १७ ॥ चक्षुरालोचनायैव संशयं कुरुते मनः। बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते ॥ १८ ॥ रजस्तमश्च सत्त्वञ्च त्रय एते स्वयोनिजाः। समाः सर्वेषु भूतेषु तान् गुणानुपलक्षयेत् ॥ १९ ॥ तत्र यत्प्रीतिसंयुक्तं किञ्चिदात्मनि लक्षयेत्। प्रशान्तमिवसंशुद्धं सत्त्वं तदुपधारयेत् ॥ २० ॥ यत्तु सन्तापसंयुक्तं काये मनसि वा भवेत्। प्रवृत्तं रज

इत्येवं तत्र चाप्युपलक्षयेत् ॥ २१ ॥ यत्तु संमोहसंयुक्तमव्यक्तविषयं भवेत्। अप्रतर्क्यमविज्ञेयं तमस्तदुपधार्य्यताम् ॥ २२ ॥ प्रहर्षः प्रीतिरानन्दः साम्यं स्वस्थात्मचित्तता। अकस्माद्यदि वा कस्माद्वर्त्तन्ते सात्त्विका गुणाः ॥ २३ ॥ अभिमानो मृषावादो लोभो मोहस्तथा क्षमा। लिङ्गानि रजसस्तानि वर्त्तन्ते हेत्वहेतुतः ॥२४॥ तथा मोहः प्रमादश्च निद्रा तन्द्रा प्रबोधिता। कथञ्चिदभिवर्त्तन्ते विज्ञेयास्तामसा गुणाः ॥ २५ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि शुकानुप्रश्ने षट्-
चत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४६ ॥

---

व्यास उवाच। मनो विसृजते भावं बुद्धिरध्यवसायिनी। हृदयं प्रियाप्रिये वेद त्रिविधा कर्मचोदना ॥ १ ॥ इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यः परमं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा परो मतः ॥ २ ॥ बुद्धिरात्मा मनुष्यस्य बुद्धिरेवात्मनात्मनि। यदा विकुरुते भावं तदा भवति सा मनः ॥ ३ ॥ इन्द्रियाणां पृथग्भावाद्बुद्धिर्विक्रियते ह्यतः। शृण्वती भवति श्रोत्रं स्पृशती स्पर्श उच्यते ॥ ४ ॥ पश्यती भवते दृष्टीरसती रसनं भवेत्। जिघ्रती भवति घ्राणं बुद्धिर्विक्रियते पृथक् ॥ ५ ॥ इन्द्रियाणि तु तान्याहुस्तेष्वदृश्योऽधितिष्ठति। तिष्ठन्ती पुरुषे बुद्धिस्त्रिषु भावेषु वर्त्तते ॥६ कदाचिल्लभते प्रीतिं कदाचिदपि शोचति। न सुखेन न दुःखेन कदाचिदिह युज्यते ॥ ७ ॥ सेयं भावात्मिका भावांस्त्रीनेतानतिवर्त्तते। सरितां सागरो भर्त्ता महावेलामिवोर्मिमान् ॥ ८ ॥ यदा प्रार्थयते किञ्चित्तदा भवति सा मनः। अधिष्ठानानि वै बुद्ध्यां पृथगेतानि संस्मरेत् ॥ ९ ॥ इन्द्रियाण्येव मेध्यानि विजेतव्यानि कृत्स्नशः ॥ १० ॥ सर्व्वाण्येवानुपूर्व्वेण यद्यदानुविधीयते। अवि-

भागगता बुद्धिर्भावैर्मनसि वर्त्तते ॥ ११ ॥ ये चैव भावा वर्त्तन्ते सर्व्व एष्वेव ते त्रिषु । अन्वर्थाः सम्प्रवर्त्तन्ते रथनेमिमरा इव ॥१२॥ प्रदीपार्थं मनः कुर्य्यादिन्द्रियैर्बुद्धिसत्तमैः । निश्चरद्भिर्यथा योगमुदासीनैर्यदृच्छया ॥१३॥ एवं स्वभावमेवेदमिति विद्वान्न मुह्यति । अशोचन्नप्रहृष्यन् हि नित्यं विगतमत्सरः ॥ १४ ॥ न चात्मा शक्यते द्रष्टुमिन्द्रियैः कामगोचरैः । प्रवर्त्तमानैरनघैर्दुष्करैरकृतात्मभिः ॥ १५ ॥ तेषान्तु मनसा रश्मीन् यदा सम्यङ्नियच्छति । तदा प्रकाशतेऽस्यात्मा दीपदीप्ता यथाकृतिः ॥१६॥ सर्व्वेषामेव भूतानां तमस्यपगते यथा । प्रकाशं लभते सर्व्वं तथेदमुपधार्य्यताम् ॥१७॥ यथा वारिचरः पक्षी न लिप्यति जले चरन् । विमुक्तात्मा तथा योगी गुणदोषैर्न लिप्यते ॥ १८ ॥ एवमेव कृतप्रज्ञो न दोषैर्विषयांश्चरन् । असज्जमानः सर्व्वेषु कथञ्चन न लिप्यते ॥ १९ ॥ त्यक्त्वा पूर्व्वकृतं कर्म रतिर्यस्य सदात्मनि । सर्व्वभूतात्मभूतस्य गुणवर्गेष्वसज्जते ॥ २० ॥ सत्त्वमात्मा प्रसरति गुणान् वापि कदाचन । न गुणा विदुरात्मानं गुणान् वेद स सर्व्वदा ॥ २१ ॥ परिद्रष्टा गुणानाञ्च परिस्रष्टा यथातथम् । सत्त्वक्षेत्रज्ञयोरेतदन्तरं विद्धि सूक्ष्मयोः ॥ २२ ॥ सृजतेऽत्र गुणानेक एको न सृजते गुणान् । पृथग्भूतौ प्रकृत्या तौ सम्प्रयुक्तौ च सर्व्वदा ॥ २३ ॥ यथा मत्स्योऽद्भिरन्यः स्यात् संप्रयुक्तौ तथैव तौ । मशकोदुम्बरौ वापि सम्प्रयुक्तौ यथा सह ॥ २४ ॥ इषीका वा यथा मुञ्जे पृथक् च सह चैव च । तथैव सहितावेतावन्योऽन्यस्मिन् प्रतिष्ठितौ ॥ २५ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने सप्तचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४७ ॥

———

व्यास उवाच । सृजते तु गुणान् सत्त्वं क्षेत्रज्ञस्त्वनुतिष्ठति । गुणान् विक्रियतः सर्वानुदासीनवदीश्वरः ॥ १ ॥ स्वभावयुक्तं तत् सर्वं यदिमान् सृजते गुणान् । ऊर्णनाभिर्यथा सूत्रं सृजते तद्गुणांस्तथा ॥ २ ॥ प्रध्वस्ता न निवर्त्तन्ते प्रवृत्तिर्नोपलभ्यते । एवमेके व्यवस्यन्ति निवृत्तिरिति चापरे ॥ ३ ॥ उभयं सम्प्रधार्य्यैतदध्यवस्येद्यथामति । अनेनैव विधानेन भवेद्गात्माश्रयो महान् ॥४॥ अनादिनिधनो ह्यात्मा तं बुद्ध्वा विचरेन्नरः । अक्रुध्यन्नप्रहृष्यंश्च नित्यं विगतमत्सरः ॥ ५ ॥ इत्येवं हृदयग्रन्थिं बुद्धिचिन्तामयं दृढ़म् । अनित्यं सुखमासीत अशोचंश्छिन्नसंशयः ॥ ६ ॥ ताम्येयुः प्रच्युताः पृथ्व्या यथा पूर्णां नदीं नराः । अवगाढ़ा ह्यविद्वांसो विद्धि लोकमिमं तथा ॥७॥ न तु ताम्यति वै विद्वान् स्थले चरति तत्त्ववित् । एवं यो विन्दतेत्मानं केवलं ज्ञानमात्मनः ॥ ८ ॥ एवं बुद्ध्वा नरः सर्वं भूतानामागतिं गतिम् । समवेच्य च वैषम्यं लभते शममुत्तमम् ॥ ९ ॥ एतद्वै जन्मसामर्थ्यं ब्राह्मणस्य विशेषतः । आत्मज्ञानं शमश्चैव पर्य्याप्तं तत्परायणम् ॥ १० ॥ एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणम् । विज्ञायैतद्विमुच्यन्ते कृतकृत्या मनीषिणः ॥११॥ न भवति विदुषां महद्भयं यदविदुषां सुमहद्भयं परत्र । न हि गतिरधिकास्ति कस्यचिद्भवति हि या विदुषः सनातनी ॥ १२ ॥ लोकमातुरमसूयते जनस्तत्तदेव च निरीक्ष्य शोचते । तत्र पश्य कुशलानशोचतो ये विदुस्तदुभयं कृताकृतम् ॥ १३ ॥ यत् करोत्यनभिसन्धिपूर्वकं तच्च निर्नुदति यत् पुराकृतम् । न प्रियं तदुभयं न चाप्रियं तस्य तज्जनयतीह कुर्वतः ॥ १४ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि शुकानुप्रश्ने
अष्टचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४८ ॥

---

शुक्र उवाच। यस्माद्धर्मात् परो धर्मो विद्यते नेह कश्चन।
यो विशिष्टश्च धर्मेभ्यस्तं भवान् प्रब्रवीतु मे ॥ १ ॥

व्यास उवाच। धर्मं ते संप्रवक्ष्यामि पुराणमृषिभिः कृतम्।
विशिष्टं सर्वधर्मेभ्यस्तमिहैकमनाः शृणु ॥२॥ इन्द्रियाणि प्रमाथीनि
बुद्ध्या संयम्य यत्नतः। सर्वतो निष्पतिष्णूनि पिता बालानिवा-
त्मजान् ॥ ३ ॥ मनसश्चेन्द्रियाणाञ्चाप्यैकाग्र्यं परमं तपः। तज्ज्यायः
सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥ ४ ॥ तानि सर्वाणि सन्धाय मनः-
षष्ठानि मेधया। आत्मतृप्त इवासीत बहु चिन्त्यमचिन्तयन् ॥५॥
गोचरेभ्यो निवृत्तानि यदा स्थास्यन्ति वेश्मनि। तदा त्वमात्मना-
त्मानं परं द्रक्ष्यसि शाश्वतम् ॥ ६ ॥ सर्वात्मानं महात्मानं विधूम-
मिव पावकम्। तं पश्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः ॥७
यथा पुष्पफलोपेतो बहुशाखो महाद्रुमः। आत्मनो नाभिजानीते
क्व मे पुष्पं क्व मे फलम् ॥ ८ ॥ एवमात्मा न जानीते क्व गमिष्ये
कुतस्त्वहम्। अन्यो ह्यत्रान्तरात्मास्ति यः सर्वमनुपश्यति ॥ ९ ॥
ज्ञानदीपेन दीप्तेन पश्यत्यात्मानमात्मना। दृष्ट्वा त्वमात्मनात्मानं
निरात्मा भव सर्ववित् ॥ १० ॥ विमुक्तः सर्वपापेभ्यो मुक्तत्वच इवो-
रगः। परां बुद्धिमवाप्येह विपाप्मा विगतज्वरः ॥ ११ ॥ सर्वतः
स्रोतसं घोरां नदीं लोकप्रवाहिनीम्। पञ्चेन्द्रियग्राहवतीं मनः-
सङ्कल्परोधसम् ॥१२॥ लोभमोहतृणच्छन्नां कामक्रोधसरीसृपाम्।
सत्यतीर्थानृतक्षोभां क्रोधपङ्कां सरिद्वराम् ॥ १३ ॥ अव्यक्तप्रभवां
शीघ्रां दुस्तरामकृतात्मभिः। प्रतरस्व नदीं बुद्ध्या कामग्राहसमा-
कुलाम् ॥ १४ ॥ संसारसागरगमां योनिपातालदुस्तराम्। आत्म-
जन्मोद्भवां तात जिह्वावर्त्तां दुरासदाम् ॥ १५ ॥ यां तरन्ति कृत-
प्रज्ञा धृतिमन्तो मनीषिणः। तां तीर्णः सर्वतो मुक्तो विधूतात्मा-
त्मविच्छुचिः ॥ १६ ॥ उत्तमां बुद्धिमास्थाय ब्रह्मभूयान् भविष्यसि।
सन्तीर्णः सर्वसंसारात् प्रसन्नात्मा निकल्मषः ॥ १७ ॥ भूमिष्ठानीव

भूतानि सर्वतस्थो निशामय । अक्रुध्यन्नपहृष्यंश्च न नृशंसमतिस्तथा । ततो दृक्ष्यसि सर्वेषां भूतानां प्रभवाप्ययौ ॥ १८ ॥ एवं वै सर्वभूतेभ्यो विशिष्टं मेनिरे बुधाः । समं धर्मभृतां श्रेष्ठा मुनयस्तत्त्वदर्शिनः ॥१९॥ आत्मनो व्यापिनो ज्ञानमिदं पुत्रानुशासनम् । प्रयताय प्रवक्तव्यं हितायानुगताय च ॥ २० ॥ आत्मज्ञानमिदं गुह्यं सर्वगुह्यतमं महत् । अब्रुवं यदहं तात आत्मसाक्षिकमञ्जसा ॥ २१ ॥ नैव स्त्री न पुमानेतन्नैव चेदं नपुंसकम् । अदुःखमसुखं ब्रह्म भूतभव्यभवात्मकम् ॥ २२ ॥ नैतज्ज्ञात्वा पुमान् स्त्री वा पुनर्भवमवाप्नुते । अभवप्रतिपत्त्यर्थमेतद्धर्मं विधीयते ॥ २३ ॥ यथा मतानि सर्वाणि तथैतानि यथा तथा । कथितानि मया पुत्र भवन्ति न भवन्ति च ॥ २४ ॥ तत्प्रीतियुक्तेन गुणान्वितेन पुत्रेण सत्पुत्रदमान्वितेन । पृष्टो हि सम्प्रीतमना यथार्थं ब्रूयात् सुतस्येह यदुक्तमेतत् ॥ २५ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने एकोनपञ्चाशदधिकद्विशततोऽध्यायः ॥ २४९ ॥

---

व्यास उवाच । गन्धान्रसान्नानुरुन्ध्यात् सुखं वा नालङ्कारांश्चाप्नुयात्तस्य तस्य । मानञ्च कीर्त्तिञ्च यशश्च नेच्छेत् स वै प्रचारः पश्यतो ब्राह्मणस्य ॥ १ ॥ सर्वान् वेदानधीयीत शुश्रूषुर्ब्रह्मचर्य्यवान् । ऋचो यजूंषि सामानि यो वेद न स वै द्विजः ॥ २ ॥ ज्ञातिवत् सर्वभूतानां सर्ववित् सर्ववेदवित् । नाकामो म्रियते जातु न तेन न च वै द्विजः ॥ ३ ॥ इष्टीश्च विविधा प्राप्य क्रतूंश्चैवाप्तदक्षिणान् । प्राप्नोति नैव ब्राह्मण्यमविधानात् कथञ्चन ॥ ४ ॥ यदा चायं न बिभेति यदा चास्मान्न बिभ्यति । यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ॥ ५ ॥ यदा न कुरुते भावं सर्वभूतेषु

पापकम् । कर्म्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ ६ ॥ कामबन्धनमेवैकं नान्यदस्तीह बन्धनम् । कामबन्धनमुक्तो हि ब्रह्मभूयाय कल्पते ॥ ७ ॥ कामतो मुच्यमानस्तु धूम्राभ्रादिव चन्द्रमाः । विरजाः कालमाकाङ्क्षन् धीरो धैर्य्येण वर्त्तते ॥ ८ ॥ आपूर्य्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् । तद्वत् कामा यं प्रविशन्ति सर्व्वे स शान्तिमाप्नोति नकामकामः ॥ ९ ॥ स कामकान्तो न तु कामकामः स वै कामात् स्वर्गमुपैति देही ॥ १० ॥ वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः । दमस्योपनिषद्दानं दानस्योपनिषत्तपः ॥११॥ तपसोपनिषत्त्यागस्त्यागस्योपनिषत् सुखम् । सुखस्योपनिषत् स्वर्गः स्वर्गस्योपनिषच्छमः ॥ १२ ॥ क्लेदनं शोकमनसोः सन्तापं तृष्णाया सह । सत्त्वमिच्छसि सन्तोषाच्छान्तिलक्षणमुत्तमम् ॥ १३ ॥ विशोको निर्म्ममः शान्तः प्रसन्नात्मा विमत्सरः । षड्भिर्लक्षणवानेतैः समग्रः पुनरिष्यते ॥ १४ ॥ षड्भिः सत्त्वगुणोपेतैः प्राज्ञैरधिगतं त्रिभिः । ये विदुः प्रेत्य चात्मानमिहस्थं तं गुणं विदुः ॥ १५ ॥ अकृत्रिममसंहार्य्यं प्राकृतं निरुपस्कृतम् । अध्यात्मं सुकृतं प्राप्तः सुखमव्ययमश्नुते ॥ १६ ॥ निष्प्रचारं मनः कृत्वा प्रतिष्ठाप्य च सर्व्वशः । यामयं लभते तुष्टिं सा न शक्यात्मनोऽन्यथा ॥ १७ ॥ येन तृप्यत्यभुञ्जानो येन तृप्यत्यवित्तवान् । येनास्नेहो बलं धत्ते यस्तं वेद स वेदवित् ॥ १८ ॥ संगुप्तानात्मनो द्वाराण्यपिधाय विचिन्तयन् । यो ह्यास्ते ब्राह्मणः शिष्टः स आत्मरतिरुच्यते ॥ १९ ॥ समाहितं परे तत्त्वे क्षीणकाममवस्थितम् । सर्व्वतः सुखमन्वेति वपुश्चान्द्रमसं यथा ॥ २० ॥ अविशेषाणि भूतानि गुणांश्च जहतो मुनेः । सुखेनापोह्यते दुःखं भास्करेण तमो यथा ॥ २१ ॥ तमतिक्रान्तकर्म्माणमतिक्रान्तगुणाक्षयम् । ब्राह्मणं विषयाश्लिष्टं जरामृत्यू न विन्दतः ॥ २२ ॥ स यदा सर्व्वतो मुक्तः समः पर्य्यवतिष्ठते । इन्द्रियाणीन्द्रियार्थांश्च

शरीरस्थोऽतिवर्त्तते ॥ २३ ॥ कारणं परमं प्राप्य अतिक्रान्तस्य कार्य्यताम् । पुनरावर्त्तनं नास्ति सम्प्राप्तस्य परम्पदम् ॥ २४ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने
पञ्चाशदधिकद्विशततोऽध्यायः ॥ २५० ॥

---

व्यास उवाच । द्वन्द्वानि मोक्षजिज्ञासुरर्थधर्मावनुष्ठितः । वक्त्रा गुणवता शिष्यः श्राव्यः पूर्वमिदं महत् ॥ १ ॥ आकाशं मारुतो ज्योतिरापः पृथ्वी च पञ्चमी । भावाभावौ च कालश्च सर्वभूतेषु पञ्चसु ॥ २ ॥ अन्तरात्मकमाकाशं तन्मयं श्रोत्रमिन्द्रियम् । तस्य शब्दगुणं विद्यान्मूर्त्तिशास्त्रविधानवित् ॥ ३ ॥ चरणं मारुतात्मेति प्राणापानौ च तन्मयौ । स्पर्शनं चेन्द्रियं विद्यात्तथा स्पर्शञ्च तन्मयम् ॥ ४ ॥ तापः पाकः प्रकाशश्च ज्योतिश्चक्षुश्च पञ्चमम् । तस्य रूपं गुणं विद्यात्ताम्रगौरासितात्मकम् ॥ ५ ॥ प्रक्लेदः क्षुद्रता स्नेह इत्यपामुपदिश्यते । असृङ्मज्जा च यच्चान्यत् स्निग्धं विद्यात्तदात्मकम् । रसनं चेन्द्रियं जिह्वा रसश्चापां गुणो मतः ॥ ६ ॥ सङ्घातः पार्थिवो धातुरस्थिदन्तनखानि च । श्मश्रु रोम च केशाश्च शिरा स्नायु च चर्म्म च ॥ ७ ॥ इन्द्रियं घ्राणसंघातं नासिकेत्यभिसंज्ञिता । गन्धश्चेन्द्रियार्थोऽयं विज्ञेयः पृथिवीमयः ॥ ८ ॥ उत्तरेषु गुणाः सन्ति सर्वसत्त्वेषु चोत्तराः । पञ्चानां भूतसङ्घानां सन्ततिं मुनयो विदुः ॥ ९ ॥ मनो नवममेषान्तु बुद्धिस्तु दशमी स्मृता । एकादशस्त्वनन्तात्मा स सर्वः पर उच्यते ॥ १० ॥ व्यवसायात्मिका बुद्धिर्म्मनो व्याकरणात्मकम् । कर्मानुमानाद्विज्ञेयः स जीवः क्षेत्रसंज्ञकः ॥ ११ ॥ एभिः कालात्मकैर्भावैर्यः सर्वैः सर्वमन्वितम् । पश्यत्यकलुषं कर्म्म स मोहं नानुवर्त्तते ॥ १२ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकानुप्रश्ने
एकपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५१ ॥

व्यास उवाच। शरीरादिप्रमुक्तं हि सूक्ष्मभूतं शरीरिणम्। कर्म्मभिः परिपश्यन्ति शास्त्रोक्तैः शास्त्रवेदिनः ॥ १ ॥ यथा मरीच्यः सहिताश्चरन्ति सर्व्वत्र तिष्ठन्ति च दृश्यमानाः। देहैर्विमुक्ता विचरन्ति लोकांस्तथैव सत्त्वान्यतिमानुषाणि ॥ २ ॥ प्रतिरूपं यथैवाप्सु तापः सूर्य्यस्य लक्ष्यते। सत्त्ववत्सु तथा सत्त्वं प्रतिरूपं स पश्यति ॥ ३ ॥ तानि सूक्ष्माणि सत्त्वानि विमुक्तानि शरीरतः। स्वेन सत्त्वेन सत्त्वज्ञाः पश्यन्ति नियतेन्द्रियाः ॥४॥ स्वपतां जाग्रताञ्चैव सर्व्वेषामात्मचिन्तितम्। प्रधानाद्वैधमुक्तानां जहतां कर्म्मजं रजः ॥ ५ ॥ यथाहनि तथा रात्रौ यथा रात्रौ तथाहनि। वशेतिष्ठति सत्त्वात्मा सततं योगयोगिनाम् ॥ ६ ॥ तेषां नित्यं सदा नित्यो भूतात्मा सततं गुणैः। सप्तभिस्त्वन्वितः सूक्ष्मैश्चरिष्णुरजरामरः ॥ ७ ॥ मनोबुद्धिपराभूतः स्वदेहपरदेहवित्। स्वप्नेष्वपि भवत्येष विज्ञाता सुखदुःखयोः ॥ ८॥ तत्रापि लभते दुःखं तत्रापि लभते सुखम्। क्रोधलोभौ तु तत्रापि कृत्वा व्यसनमर्च्छति ॥ ९ ॥ प्रीणितश्चापि भवति महतोऽर्थानवाप्य हि। करोति पुण्यं तत्रापि जीवन्निव च पश्यति ॥ १० ॥ अहोषान्तर्गतश्चापि गर्भत्वं समुपेयिवान्। दश मासान् वसन् कुक्षौ नैषोऽन्नमिव जीर्य्यते ॥ ११ ॥ तमेतमतितेजोंशं भूतात्मानं हृदि स्थितम्। तमो रजोभ्यामाविष्टा नानुपश्यन्ति मूर्त्तिषु ॥१२॥ योगशास्त्रपरा भूत्वा तमात्मानं परीप्सवः। अनुच्छ्वासान्यमूर्त्तानि यानि वज्रोपमान्यपि ॥ १३ ॥ पृथग्भूतेषु सृष्टेषु चतुर्थाश्रमकर्मसु। समाधौ योगमेवैतच्छाण्डिल्यः शममब्रवीत् ॥ १४ ॥ विदित्वा सप्त सूक्ष्माणि षड़ङ्गञ्च महेश्वरम्। प्रधानविनियोगस्थं परं ब्रह्मानुपश्यति ॥ १५ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वनि शुकानुप्रश्ने
द्विपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५२ ॥

व्यास उवाच । हृदि कामद्रुमश्चित्रो मोहसञ्चयसम्भवः । क्रोधमानमहास्कन्धो विधित्सापरिषेचनः ॥ १ ॥ तस्य चाज्ञानमाधारः प्रमादः परिषेचनम् । सोऽभ्यसूयापलाशो हि पुरा दुष्कृतसारवान् ॥ २ ॥ सम्मोहचिन्ताविटपः शोकशाखो भयाङ्कुरः । मोहनीभिः पिपासाभिर्लताभिरनुवेष्टितः ॥ ३ ॥ उपासते महावृक्षं सुलुब्धास्तत्फलेप्सवः । आयासैः संयुताः पाशैः फलदं परिवेष्ट्य तम् ॥ ४ ॥ यस्तान् पाशान् वशे कृत्वा तं वृक्षमपकर्षति । गतः स दुःखयोरन्तं यजमानस्तयोर्द्वयोः ॥ ५ ॥ संरोहत्यकृतप्रज्ञः सदा येन हि पादपम् । स तमेव ततो हन्ति विषग्रन्थिरिवातुरम् ॥ ६ ॥ तस्यानुगतमूलस्य मूलमुद्ध्रियते बलात् । योगप्रसादात् कृतिना साम्येन परमासिना ॥ ७ ॥ एवं यो वेद कामस्य केवलस्य निवर्त्तनम् । बन्धं वै कामशास्त्रस्य स दुःखान्यतिवर्त्तते ॥ ८ ॥ शरीरं पुरमित्याहुः स्वामिनी बुद्धिरिष्यते । तत्रबुद्धेः शरीरस्थं मनो नामार्थचिन्तकम् ॥ ९ ॥ इन्द्रियाणि मनःपौरास्तदर्थन्तु पराकृतिः । तत्र द्वौ दारुणौ दोषौ तमो नाम रजस्तथा ॥ १० ॥ तदर्थमुपजीवन्ति पौराः सह पुरेश्वरैः । अद्वारेण तमेवार्थं द्वौ दोषावुपजीवतः ॥११॥ तत्र बुद्धिर्हि दुर्द्धर्षा मनः सामान्यमुच्यते । पौराश्चापि मनस्त्रस्तास्तेषामपि चला स्थितिः ॥१२॥ यदर्थं बुद्धिरध्यास्ते सोऽनर्थः परिषीदति । यदर्थं पृथगध्यास्ते मनस्तत् परिषीदति ॥ १३ ॥ पृथग्भूतं मनो बुद्ध्या मनो भवति केवलम् । तत्रैनं विवृतं शून्यं रजः पर्य्यवतिष्ठते ॥ १४ ॥ तन्मनः कुरुते सख्यं रजसा सह सङ्गतम् । तस्मादाय जनं पौरं रजसे संप्रयच्छति ॥१५

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शुकानुप्रश्ने त्रिपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५३ ॥

---

भीष्म उवाच। भूतानां परिसंख्यानं भूयः पुत्र निशामय। द्वैपायनमुखाद्भ्रष्टं श्लाघया परयानघ ॥ १ ॥ दीप्तानलनिभः प्राह भगवान् धूमवर्चसे। ततोऽहमपि वच्यामि भूयः पुत्र निदर्शनम् ॥२ भूमेः स्थैर्य्यं गुरुत्वञ्च काठिन्यं प्रसवार्थता। गन्धो गुरुत्वं शक्तिश्च सङ्घातस्थापना धृतिः ॥ ३ ॥ अपां शैत्यं तथा क्लेदो द्रवत्वं स्नेहसौम्यता। जिह्वा निस्यन्दनञ्चापि भौमानां अपणां तथा ॥ ४ ॥ अग्नेर्दुर्द्धर्षता ज्योतिस्तापः पाकः प्रकाशनम्। शोको रोगो लघुस्तैच्ण्यंञ्च सततञ्चोर्द्धभासिता ॥ ५ ॥ वायोरनियमस्पर्शो वादस्थानं स्वतन्त्रता। बलं शैघ्रञ्च मोचञ्च कर्म चेष्टात्मता भवः ॥ ६ ॥ आकाशस्य गुणः शब्दो व्यापित्वं छिद्रतापि च। अनाश्रयमनालम्बमव्यक्तमविकारिता ॥ ७ ॥ अप्रतीघातिता चैव भूतत्वं विक्कतानि च। गुणाः पञ्चाशतं प्रोक्ता पञ्चभूतात्मभाविता ॥ ८ ॥ धैर्य्योपपत्तिर्व्यक्तिश्च विसर्गः कल्पना चमा। सदसच्चाशुभा चैव मनसो नव वै गुणाः ॥ ९ ॥ इष्टानिष्टविपत्तिश्च व्यवसायः समाधिता। संशयः प्रतिपत्तिश्च बुद्धेः पञ्च गुणान् विदुः ॥ १० ॥

युधिष्ठिर उवाच। कथं पञ्चगुणा बुद्धिः कथं पञ्चेन्द्रिया गुणाः। एतन्मे सर्वमाचच्च सूच्मज्ञानं पितामह ॥ ११ ॥

भीष्म उवाच। आहुः षष्टिं बुद्धिगुणान्वै भूतविशिष्टा नित्यविषक्ता। भूतविभूतीश्चाचरसृष्टाः पुत्र न नित्यं तदिह वदन्ति ॥ १२ ॥ तत् पुत्र चिन्ताकलिलं तदुक्तमनागतं वै तव सम्प्रतीह। भूतार्थतत्त्वं तदवाप्य सर्वं भूतप्रभावाद्भव शान्तबुद्धिः ॥ १३ ॥

इति शान्तिपर्वणि मोचधर्मपर्वणि शुकानुप्रश्ने चतुःपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५४ ॥

---

युधिष्ठिर उवाच। य इमे पृथिवीपाला शेरते पृथिवीतले।
पृतनामध्य एते हि गतसंज्ञा महाबलाः ॥ १ ॥ एकैकशो भीमबला
नागायुतबलास्तथा। एते हि निहताः संख्ये तुल्यतेजोबलैर्नरैः
॥ २ ॥ नैषां पश्यामि हन्तारं प्राणिनां संयुगे परम्। विक्रमे-
णोपसम्पन्नास्तेजोबलसमन्विताः ॥३॥ अथ चेमे महाप्राज्ञाः शेरते
हि गतासवः। मृता इति च शब्दोऽयं वर्त्तत्येषु गतासुषु ॥ ४ ॥
इमे मृता नृपतयः प्रायशो भीमविक्रमाः। तत्र मे संशयो जातः
कुतः संज्ञा मृता इति ॥ ५ ॥ कस्य मृत्युः कुतो मृत्युः केन मृत्यु-
रिह प्रजाः। हरत्यमरसङ्काश तन्मे ब्रूहि पितामह ॥ ६ ॥

भीष्म उवाच। पुरा कृतयुगे तात राजासीदनुकम्पकः। स
शत्रुवशमापन्नः संग्रामे क्षीणवाहनः ॥ ७ ॥ तस्य पुत्रो हरिर्नाम
नारायणसमो बले। स शत्रुभिर्हतः संख्ये सबलः सपदानुगः ॥८॥
स राजा शत्रुवशगः पुत्रशोकसमन्वितः। यदृच्छया शान्तिपरो
ददर्श भुवि नारदम् ॥९॥ तस्मै स सर्वमाचष्ट यथावृत्तं जनेश्वरः।
शत्रुभिर्ग्रहणं संख्ये पुत्रस्य मरणं तथा ॥ १० ॥ तस्य तद्वचनं
श्रुत्वा नारदोऽथ तपोधनः। आख्यानमिदमाचष्टे पुत्रशोकापहं
तदा ॥ ११ ॥

नारद उवाच। राजन् शृणु समाख्यानमद्येदं बहुविस्तरम्।
यथावृत्तं श्रुतञ्चैव मयेदं वसुधाधिप ॥ १२ ॥ प्रजाः सृष्ट्वा महा-
तेजाः प्रजासर्गे पितामहः। अतीव वृद्धा बहुला नामृष्यत पुनः
प्रजाः ॥ १३ ॥ न ह्यन्तरमभूत् किञ्चित् क्वचिज्जन्तुभिरच्युत।
निरुच्छ्वासमिवोन्नद्धं त्रैलोक्यमभवन्नृप ॥ १४ ॥ तस्य चिन्ता
समुत्पन्ना संहारं प्रति भूपते। चिन्तयन्नाध्यगच्छच्च संहारे हेतु-
कारणम् ॥ १५ ॥ तस्य रोषान्महाराज खेभ्योऽग्निरुदतिष्ठत।
तेन सर्वा दिशो राजन्ददाह स पितामहः ॥ १६ ॥ ततो दिवं भुवं
खञ्च जगच्च सचराचरम्। ददाह पावको राजन् भगवत्कोप-

सम्भवः ॥ १७ ॥ तत्रादह्यन्त भूतानि जङ्गमानि ध्रुवाणि च।
महता क्रोधवेगेन कुपिते प्रपितामहे ॥ १८ ॥ ततो हरिजटः
स्थाणुर्वेदाध्वरपतिः शिवः। जगाम शरणं देवो ब्रह्माणं पर-
वीरहा ॥ १९ ॥ तस्मिन्नभिगते स्थाणौ प्रजानां हितकाम्यया।
अब्रवीत् परमो देवो ज्वलन्निव तदा शिवम् ॥ २० ॥ करवाण्यद्य
कं कामं वरार्होऽसि मतो मम। कर्त्ता ह्यस्मि प्रियं शम्भो तव
यद्धृदि वर्त्तते ॥ २१ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि मृत्युप्रजापतिसंवादे
पञ्चपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५५ ॥

---

स्थाणुरुवाच। प्रजासर्गनिमित्तं मे कार्य्यवत्तामिमां प्रभो।
विद्धि सृष्टा त्वया हीमा मा कुप्यासां पितामह ॥ १ ॥ तव तेजो-
ऽग्निना देव प्रजा दह्यन्ति सर्वशः। ता दृष्ट्वा मम कारुण्यं मा
कुप्यासां जगत्प्रभो ॥ २ ॥

प्रजापतिरुवाच। न कुप्ये न च मे कामो न भवेयुः प्रजा इति।
लाघवार्थं धरस्यास्तु ततः संहार इष्यते ॥ ३ ॥ इयं हि मां सदा
देवी भारार्त्ता समचोदयत्। संहारार्थं महादेव भारेणाप्सु
निमज्जती ॥ ४ ॥ यदाहं नाधिगच्छामि बुद्ध्या बहु विचारयन्।
संहारमासां वृद्धानां ततो मां क्रोध आविशत् ॥ ५ ॥

स्थाणुरुवाच। संहारार्थं प्रसीदस्व मा क्रुधो विबुधेश्वर।
मा प्रजाः स्थावरञ्चैव जङ्गमञ्च व्यनीनशन् ॥ ६ ॥ पल्वलानि च
सर्वाणि सर्वञ्चैव तृणोलपम्। स्थावरं जङ्गमञ्चैव भूतग्रामं चतु-
र्विधम् ॥ ७ ॥ तदेतद्भस्मसाद्भूतं जगत् सर्वमुपप्लुतम्। प्रसीद
भगवन् साधो वर एष वृतो मया ॥ ८ ॥ नष्टा न पुनरेष्यन्ति
प्रजा ह्येताः कथञ्चन। तस्मान्निवर्त्ततामेतत्तेजः स्वेनैव तेजसा ॥९॥

उपायमन्यं सम्पश्य भूतानां हितकाम्यया। यथामी जन्तवः सर्वे न दह्येरन् पितामह ॥ १० ॥ अभावं हि न गच्छेयुरुच्छिन्नप्रजनाः प्रजाः। अधिदैवे नियुक्तोऽस्मि त्वया लोकेश्वरेश्वर ॥ ११ ॥ त्वद्भवं हि जगन्नाथ एतत् स्थावरजङ्गमम्। प्रसाद्य त्वां महादेव याचाम्यावृत्तिजाः प्रजाः ॥ १२ ॥

नारद उवाच। श्रुत्वा तु वचनं देवः स्थाणोर्नियतवाङ्मनाः। तेजस्तत् संनिजग्राह पुनरेवान्तरात्मनि ॥१३॥ ततोऽग्निमुपसंहृत्य भगवांल्लोकपूजितः। प्रवृत्तिञ्च निवृत्तिञ्च कल्पयामास वै प्रभुः ॥१४॥ उपसंहरतस्तस्य तमग्निं रोषजं तदा। प्रादुर्बभूव विश्वेभ्यः खेभ्यो नारी महात्मनः ॥ १५ ॥ कृष्णरक्ताम्बरधरा कृष्णनेत्रतलान्तरा। दिव्यकुण्डलसम्पन्ना दिव्याभरणभूषिता ॥ १६ ॥ सा विनिःसृत्य वै खेभ्यो दक्षिणामाश्रिता दिशम्। ददृशाते च तां कन्यां देवौ विश्वेश्वरावुभौ ॥ १७ ॥ तामाहूय तदा देवो लोकानामादि-रीश्वरः। मृत्यो इति महीपाल जहि चेमाः प्रजा इति ॥ १८॥ त्वं हि संहारबुद्ध्या मे चिन्तिता रुषितेन च। तस्मात् संहर सर्वास्त्वं प्रजाः सजड़पण्डिताः ॥ १९ ॥ अविशेषेण चैव त्वं प्रजाः संहर कामिनि। मम त्वं हि नियोगेन श्रेयः परमवाप्स्यसि ॥ २० ॥ एवमुक्ता तु सा देवी मृत्युः कमलमालिनी। प्रदध्यौ दुःखिता बाला साश्रुपातमतीव च ॥ २१ ॥ पाणिभ्याञ्चैव जग्राह तान्यश्रूणि जनेश्वर। मानवानां हितार्थाय ययाचे पुनरेव ह ॥२२

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि मृत्युप्रजापतिसंवादे षट्पञ्चाशदधिकद्विशततोऽध्यायः ॥ २५६ ॥

---

नारद उवाच। विनीय दुःखमबला आत्मनैवायतेक्षणा। उवाच प्राञ्जलिर्भूत्वा लतेवावर्ज्जिता तदा ॥ १ ॥ त्वया सृष्टा कथं

नारी मादृशी वदताम्वर। रौद्रकर्माभिजायेत सर्वप्राणिभयङ्करी ॥ २ ॥ बिभेम्यहमधर्म्मस्य धर्म्यमादिश कर्म्म मे। त्वं मां भीतामवेचस्व शिवेनेचस्व चक्षुषा ॥ ३ ॥ बालान् वृद्धान् वयस्यांश्च न हरेयमनागसः। प्राणिनः प्राणिनामीश नमस्तेऽस्तु प्रसीद मे ॥४॥ प्रियान् पुत्रान् वयस्यांश्च भ्रातॄन् मातॄः पितॄनपि। अपध्यास्यन्ति यद्येवं मृतास्तेषां बिभेम्यहम् ॥ ५ ॥ कृपणाश्रुपरिक्लेदो दहेन्मां शाश्वतीः समाः। तेभ्योऽहं बलवद्भीता शरणं त्वामुपागता ॥६॥ यमस्य भवने देव पात्यन्ते पापकर्म्मिणः। प्रसादये त्वां वरद प्रसादं कुरु मे प्रभो ॥ ७ ॥ एतदिच्छाम्यहं कामं त्वत्तो लोकपितामह। इच्छेयं त्वत्प्रसादार्थं तपस्तप्तुं महेश्वर ॥ ८ ॥

पितामह उवाच। मृत्यो सङ्कल्पिता मे त्वं प्रजासंहारहेतुना। गच्छ संहर सर्वास्त्वं प्रजा मा च विचारय ॥ ९ ॥ एतदेवमवश्यं हि भविता नैतदन्यथा। क्रियतामनवद्याङ्गि यथोक्तं मद्वचोऽनघे ॥ १० ॥ एवमुक्ता महाबाहो मृत्युः परपुरञ्जय। न व्याजहार तस्थौ च प्रह्वा भगवदुन्मुखी ॥ ११ ॥ पुनः पुनरथोक्ता सा गतसत्त्वेव भामिनी। तूष्णीमासीत्ततो देवो देवानामीश्वरेश्वरः ॥१२॥ प्रससाद किल ब्रह्मा स्वयमेवात्मनात्मनि। स्मयमानश्च लोकेशो लोकान् सर्वानवैचत ॥ १३ ॥ निवृत्तरोषे तस्मिंस्तु भगवत्यपराजिते। सा कन्याथ जगामास्य समीपादिति नः श्रुतम् ॥ १४ ॥ अपसृत्याप्रतिश्रुत्य प्रजासंहरणं तदा। त्वरमाणेव राजेन्द्र मृत्युर्धेनुकमभ्यगात् ॥ १५ ॥ सा तत्र परमं देवी तपोऽचरत दुश्चरम्। समा ह्येकपदे तस्थौ दश पद्मानि पञ्च च ॥ १६ ॥ तां तथा कुर्वतीं तत्र तपः परमदुश्चरम्। पुनरेव महातेजा ब्रह्मा वचनमब्रवीत् ॥ १७ ॥ कुरुष्व मे वचो मृत्यो तदनादृत्य सत्वरा। तथैवैकपदे तात पुनरन्यानि सप्त सा ॥ १८ ॥ तस्थौ पद्मानि षट् चैव पञ्च द्वे चैव मानद। भूय पद्मायुतं तात मृगैः सह चचार सा ॥ १९ ॥

हे वायुते नरश्रेष्ठ वाय्वाहारा महामते। पुनरेव ततो राजन् मौनमातिष्ठदुत्तमम ॥ २० ॥ अप्सु वर्षसहस्राणि सप्त चैकञ्च पार्थिव। ततो जगाम सा कन्या कौशिकीं नृपसत्तम ॥ २१ ॥ तत्र वायुजलाहारा चचार नियमं पुनः। ततो ययौ महाभागा गङ्गां मेरुञ्च केवलम् ॥ २२ ॥ तस्थौ दार्विव निश्चेष्टा प्रजानां हितकाम्यया। ततो हिमवतो मूर्द्ध्नि यत्र देवाः समीजिरे ॥ २३ ॥ तत्राङ्गुष्ठेन राजेन्द्र निखर्वमपरं ततः। तस्थौ पितामहञ्चैव तोषयामास यत्नतः ॥ २४ ॥ ततस्तामब्रवीत्तत्र लोकानां प्रभवाप्ययः। किमिदं वर्त्तते पुत्रि क्रियतां मम तद्वचः ॥ २५ ॥ ततोऽब्रवीत् पुनर्मृत्युर्भगवन्तं पितामहम्। न हरेयं प्रजा देव पुनश्चाहं प्रसादये ॥ २६ ॥ तामधर्म्मभयाद्भीतां पुनरेव प्रयाचतीम्। तदाब्रवीद्देव देवो निगृह्येदं वचस्ततः ॥ २७ ॥ अधर्मो नास्ति ते मृत्यो संयच्छेमाः प्रजाः शुभे। मया ह्युक्तं मृषा भद्रे भविता नेह किञ्चन ॥ २८ ॥ धर्म्मः सनातनश्च त्वामिहैवानुप्रवेक्ष्यति। अहञ्च विबुधाश्चैव त्वद्धिते निरताः सदा ॥ २९ ॥ इममन्यञ्च ते कामं ददानि मनसेप्सितम्। न त्वां दोषेण यास्यन्ति व्याधिसंपीड़िताः प्रजाः ॥ ३० ॥ पुरुषेषु स्वरूपेण पुरुषस्त्वं भविष्यसि। स्त्रीषु स्त्रीरूपिणी चैव तृतीयेषु नपुंसकम् ॥३१॥ सैवमुक्ता महाराज कृताञ्जलिरुवाच ह। पुनरेव महात्मानं नेति देवेशमव्ययम् ॥ ३२ ॥ तामब्रवीत्तदा देवो मृत्यो संहर मानवान्। अधर्मस्ते न भविता तथा ध्यास्याम्यहं शुभे ॥ ३३ ॥ यानश्रुबिन्दून् पतितानपश्यं ये पाणिभ्यां धारितास्ते पुरस्तात्। ते व्याधयो मानवान् घोररूपाः प्राप्ते काले कालयिष्यन्ति मृत्यो ॥ ३४ ॥ सर्वेषां त्वं प्राणिनामन्तकाले कामक्रोधौ सहितौ योजयेथाः। एवं धर्मस्त्वामुपैष्यत्यमेयो न चाधर्मं लप्स्यसे तुल्यवृत्तिः ॥ ३५ ॥ एवं धर्मं पालयिष्यस्ययो त्वं न चात्मानं मज्जयिष्यस्यधर्मे। तस्मात् कामं रोचयाभ्यागतं त्वं

संयोज्याथो संहरस्वेह जन्तून् ॥ ३६ ॥ सा वै तदा मृत्युसंज्ञापदेशा भीता शापाद्वाढ़मित्यब्रवीत्तम् । अथो प्राणान् प्राणिनामन्तकाले कामक्रोधौ प्राप्य निर्मोहयन्ति ॥ ३७ ॥ मृत्योर्ये ते व्याधयश्चाश्रुपाता मनुष्याणां रुज्यते यैः शरीरम् । सर्वेषां वै प्राणिनां प्राणनान्ते तस्माच्छोकं मा कृथा बुध्यबुद्ध्या ॥ ३८ ॥ सर्वे देवाः प्राणिनां प्राणनान्ते गत्वा वृत्ताः सन्निवृत्तास्तथैव । एवं सर्वे मानवाः प्राणनान्ते गत्वा वृत्ता देववद्राजसिंह ॥ ३९ ॥ वायुर्भीमो भीमनादो महौजाः स सर्वेषां प्राणिनां प्राणभूतः । नानावृत्तिर्देहिनां देहभेदे तस्माद्वायुर्देवोदेवोविशिष्टाः ॥ ४० ॥ सर्वे देवा मर्त्त्यसंज्ञाविशिष्टाः सर्वे मर्त्त्या देवसंज्ञाविशिष्टाः । तस्मात् पुत्रं मा शुचो राजसिंह पुत्रः स्वर्गं प्राप्यते मोदते ह ॥ ४१ ॥ एवं मृत्युर्देवसृष्टा प्रजानां प्राप्ते काले संहरन्ती यथावत् । तस्याश्चैव व्याधयस्तेऽश्रुपाताः प्राप्ते काले संहरन्तीह जन्तून् ॥ ४२ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि मृत्युप्रजापतिसंवादे
सप्तपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५७ ॥

---

युधिष्ठिर उवाच । इमे वै मानवाः सर्वे धर्म्मम्प्रति विशङ्किताः । कोऽयं धर्म्मः कुतो धर्मस्तन्मे ब्रूहि पितामह ॥ १ ॥ धर्मस्त्वयमिहार्थः किममुत्रार्थोऽपि वा भवेत् । उभयार्थो हि वा धर्मस्तन्मे ब्रूहि पितामह ॥ २ ॥

भीष्म उवाच । सदाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षणम् । चतुर्थमर्थमित्याहुः कवयो धर्मलक्षणम् ॥ ३ ॥ अपि ह्युक्तानि धर्म्याणि व्यवस्यन्त्युत्तरावरे । लोकयात्रार्थमेवेह धर्मस्य नियमः कृतः ॥ ४ ॥ उभयत्र सुखोदर्क इह चैव परत्र च । अलब्ध्वा निपुणं धर्मं पापः पापेन युज्यते ॥ ५ ॥ न च पापकृतः पापान्मुच्यन्ते

केचिद्दापदि । अपापवादी भवति यथा भवति धर्मवित् । धर्मस्य निष्ठा त्वाचारस्तमेवाश्रित्य भोत्स्यसे ॥ ६ ॥ यथा धर्मसमाविष्टो धनं गृह्णाति तस्करः । रमते निर्हरन् स्तेनः परवित्तमराजके ॥७ यदास्य तद्धरन्त्यन्ये तदा राजानमिच्छति । तदा तेषां स्पृहयते ये वै तुष्टाः स्वकैर्धनैः ॥८॥ अभीतः शुचिरभ्येति राजद्वारमशङ्कितः । न हि दुश्चरितं किञ्चिदन्तरात्मनि पश्यति ॥ ९ ॥ सत्यस्य वचनं साधु न सत्याद्विद्यते परम् । सत्येन विधृतं सर्वं सर्वं सत्ये प्रतिष्ठितम् ॥ १० ॥ अपि पापकृतो रौद्राः सत्यं कृत्वा पृथक् पृथक् । अद्रोहमविसंवादं प्रवर्त्तन्ते तदाश्रयाः । ते चेन्मिथोऽधृतिं कुर्य्युर्विनश्येयुरसंशयम् ॥ ११ ॥ न हर्त्तव्यं परधनमिति धर्मः सनातनः । मन्यन्ते बलवन्तस्तं दुर्बलैः संप्रकीर्त्तितम् ॥ १२ ॥ यदा नियतिदौर्बल्यमथैषामेव रोचते । न ह्यत्यन्तं बलवन्तो भवन्ति सुखिनोऽपि वा ॥ १३ ॥ तस्मादनार्ज्जवे बुद्धिर्न कार्य्या ते कदाचन । असाधुभ्योऽस्य न भयं न चौरेभ्यो न राजतः । अकिञ्चित् कस्यचित् कुर्वन्निर्भयः शुचिरावसेत् ॥ १४ ॥ सर्वतः शङ्कते स्तेनो मृगो ग्राममिवेयिवान् । बहुधा चरितं पापमन्यत्रैवानुपश्यति ॥१५॥ मुदितः शुचिरभ्येति सर्वतो निर्भयः सदा । न हि दुश्चरितं किञ्चिदात्मनोऽन्येषु पश्यति ॥ १६ ॥ दातव्यमित्ययं धर्म उक्तो भूतहितेरतैः । तं मन्यन्ते धनयुताः कृपणैः सम्प्रवर्त्तितम् ॥ १७ ॥ यदा नियतिकार्पण्यमथैषामेव रोचते । न ह्यत्यन्तं धनवन्तो भवन्ति सुखिनोऽपि वा ॥ १८ ॥ यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः । न तत् परेषु कुर्वीत जानन्नप्रियमात्मनः ॥ १९ ॥ योऽन्यस्य स्यादुपपतिः स कं किं वक्तुमर्हति । यदन्यस्य ततः कुर्य्यान्न मृष्येदिति मे मतिः ॥२०॥ जीवितं यः स्वयं चेच्छेत् कथं सोऽन्यं प्रघातयेत् । यद्यदात्मनि चेच्छेत तत् परस्यापि चिन्तयेत् ॥ २१ ॥ अतिरिक्तैः संविभजेद्भोगैरन्यानकिञ्चनान् । एतस्मात् कारणाद्धाता कुसीदं

संप्रवर्त्तितम् ॥ २२ ॥ यस्मिंस्तु देवाः समये सन्तिष्ठेरंस्तथा भवेत् । अथ वा लाभसमये स्थितिधर्म्मोऽपि शोभना ॥ २३ ॥ एवं प्रियाभ्युपगतं धर्ममाहुर्मनीषिणः । पश्यैतं लक्षणोद्देशं धर्माधर्मे युधिष्ठिर ॥ २४ ॥ लोकसंग्रहसंयुक्तं विधात्रा विहितं पुरा । सूक्ष्मधर्मार्थनियतं सताञ्चरितमुत्तमम् ॥ २५ ॥ धर्मलक्षणमाख्यातमेतत्ते कुरुसत्तम । तस्मादनार्ज्जवे बुद्धिर्न ते कार्य्या कथञ्चन ॥२६॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि धर्मलक्षणकथने
अष्टपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५८ ॥

---

युधिष्ठिर उवाच । सूक्ष्मं साधुसमुद्दिष्टं नियतं ब्रह्मलक्षणम् । प्रतिभा त्वस्ति मे काचित्तां ब्रूयामनुमानतः ॥ १ ॥ भूयांसो हृदये ये मे प्रश्नास्ते व्याहृतास्त्वया । इदन्त्वन्यत् प्रवक्ष्यामि न राजन्निग्रहादिव ॥ २ ॥ इमानि हि प्राणयन्ति सृज्यन्त्युत्तारयन्ति च । न धर्मपरिपाठेन शक्यो भारत वेदितुम् ॥ ३ ॥ अन्यो धर्मः समस्थस्य विषमस्थस्य चापरः । आपदस्तु कथं शक्याः परिपाठेन वेदितुम् ॥ ४ ॥ सदाचारो मतो धर्मः सन्तस्त्वाचारलक्षणाः । साध्यासाध्यं कथं शक्यं सदाचारो ह्यलक्षणः ॥ ५ ॥ दृश्यते हि धर्मरूपेणाधर्मं प्राकृतश्चरन् । धर्मञ्चाधर्मरूपेण कश्चिदप्राकृतश्चरन् ॥ ६ ॥ पुनरस्य प्रमाणं हि निर्द्दिष्टं शास्त्रकोविदैः । वेदवादाश्चानुयुगं ह्रसन्तीतीह नः श्रुतम् ॥ ७ ॥ अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे । अन्ये कलियुगे धर्मा यथाशक्तिकृता इव ॥८॥ आम्नायवचनं सत्यमित्ययं लोकसंग्रहः । आम्नायेभ्यः पुनर्वेदाः प्रसृताः सर्वतो मुखाः ॥ ९ ॥ ते चेत् सर्वप्रमाणं वै प्रमाणं तत्र विद्यते । प्रमाणेऽप्यप्रमाणेन विरुद्धे शास्त्रता कुतः ॥ १० ॥ धर्मस्य क्रियमाणस्य बलवद्भिर्दुरात्मभिः । या या विक्रियते संस्था ततः सापि प्रणश्यति ॥११॥

विद्म चैवं न वा विद्म शक्यं वा वेदितुं न वा । अणीयान् चुर-धाराया गरीयानपि पर्वतात् ॥ १२ ॥ गन्धर्वनगराकारः प्रथमं सम्प्रदृश्यते । अन्वीच्यमाणः कविभिः पुनर्गच्छत्यदर्शनम् ॥ १३ ॥ निपानानीव गोभ्योऽपि चेत्रे कुल्येव भारत । स्मृतिर्हि शाश्वतो धर्मो विप्रहीणो न दृश्यते ॥ १४ ॥ कामादन्येच्छया चान्ये कारणै-रपरैस्तथा । असन्तोऽपि वृथाचारं भजन्ते बहवोऽपरे ॥ १५ ॥ धर्मो भवति स चिप्रं प्रलापस्त्वेव साधुषु । तथैतानाहुरुन्मत्तानपि चावहसन्त्युत ॥ १६ ॥ महाजना ह्युपावृत्ता राजधर्मसमाश्रिताः । न हि सर्वहितः कश्चिदाचारः सम्प्रवर्त्तते ॥ १७ ॥ तेनैवान्यः प्रभ-वति सोऽपरं बाधते पुनः । दृश्यते चैव स पुनस्तुल्यरूपो यदृच्छया ॥ १८ ॥ येनैवान्यः प्रभवति सोऽपरानपि बाधते । आचाराणा-मनैकाग्र्यं सर्वेषामुपलचयेत् ॥ १९ ॥ चिराभिपन्नः कविभिः पूर्वं धर्म उदाहृतः । तेनाचारेण पूर्वेण संस्था भवति शाश्वती ॥ २० ॥

इति शान्तिपर्वणि मोचधर्म्मपर्वणि धर्मलचणकथने
एकोनषष्ट्यधिकद्विशततोऽध्यायः ॥ २५९ ॥

---

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । तुलाधारस्य वाक्यानि धर्मे जाजलिना सह ॥ १ ॥ वने वनचरः कश्चिज्जाजलिर्नाम वै द्विजः । सागरोद्देशमागम्य तपस्तेपे महा-तपाः ॥२॥ नियतो नियताहारश्चीराजिनजटाधरः । मलपङ्कधरो धीमान् बहून् वर्षगणान् मुनिः ॥ ३ ॥ स कदाचिन्महातेजा जल-वासो महीपते । चचार लोकान् विप्रर्षिः प्रेचमाणो मनोजवः ॥४॥ स चिन्तयामास मुनिर्जलवासे कदाचन । विप्रेच्य सागरान्तां वै महीं सवनकाननाम् ॥ ५ ॥ न मया सदृशोऽस्तीह लोके स्थावर-जङ्गमे । अप्सु वैहायसं गच्छेन्मया योऽन्यः सहेति वै ॥ ६ ॥

अदृश्यमानो रक्षोभिर्जलमध्ये वदंस्तथा। अब्रुवंश्च पिशाचास्तं नैवं त्वं वक्तुमर्हसि ॥ ७ ॥ तुलाधारो वणिग्धर्मा वाराणस्यां महायशाः। सोऽप्येवं नार्हते वक्तुं यथा त्वं द्विजसत्तम ॥ ८ ॥ इत्युक्तो जाजलिर्भूतैः प्रत्युवाच महातपाः। पश्येयं तमहं प्राज्ञं तुलाधारं यशस्विनम् ॥ ९ ॥ इति ब्रुवाणं तमृषिं रक्षांस्युद्धृत्य सागरात्। अब्रुवन् गच्छ पन्थानमास्थायेमं द्विजोत्तम ॥ १० ॥ इत्युक्तो जाजलिर्भूतैर्जगाम विमनास्तदा। वाराणस्यां तुलाधारं समासाद्याब्रवीदिदम् ॥ ११ ॥

युधिष्ठिर उवाच। किं कृतं दुष्करं तात कर्म जाजलिना पुरा। येन सिद्धिं परां प्राप्तस्तन्मे व्याख्यातुमर्हसि ॥ १२ ॥

भीष्म उवाच। अतीव तपसा युक्तो घोरेण स बभूव ह। तथोपस्पर्शनरतः सायं प्रातर्महातपाः ॥ १३ ॥ अग्नीन् परिचरन् सम्यक् स्वाध्यायपरमो द्विजः। वानप्रस्थविधानज्ञो जाजलिर्ज्वलितः श्रिया ॥ १४ ॥ वने तपस्यतिष्ठत् स न च धर्ममवैक्षत। वर्षास्वाकाशशायी च हेमन्ते जलसंश्रयः ॥ १५ ॥ वातातपसहो ग्रीष्मे न च धर्ममविन्दत। दुःखशय्याश्च विविधा भूमौ च परिवर्त्तते ॥१६॥ ततः कदाचित् स मुनिर्वर्षास्वाकाशमास्थितः। अन्तरीक्षाज्जलं मूर्द्ध्ना प्रत्यगृह्णान्मुहुर्मुहुः ॥१७॥ अथ तस्य जटाः क्लिन्ना बभूवुर्ग्रथिताः प्रभो। अरण्यगमनान्नित्यं मलिनो मलसंयुतः ॥ १८ ॥ स कदाचिन्निराहारो वायुभक्षो महातपाः। तस्थौ काष्ठवदव्यग्रो न चचाल च कर्हिचित् ॥ १९ ॥ तस्य स्म स्थाणुभूतस्य निर्विचेष्टस्य भारत। कुलिङ्गशकुनौ राजन्नीड़ं शिरसि चक्रतुः ॥ २० ॥ स तौ दयावान् ब्रह्मर्षिरुपप्रैक्षत दम्पती। कुर्वाणौ नीड़कं तत्र जटासु तृणतन्तुभिः ॥ २१ ॥ यदा न स चलत्येव स्थाणुभूतो महातपाः। ततस्तौ सुखविश्वस्तौ सुखं तत्रोषतुस्तदा ॥ २२ ॥ अतीतास्वथ वर्षासु शरत्काल उपस्थिते। प्राजापत्येन विधिना

विश्वासात् काममोहितौ । तत्रापातयतां राजन् शिरस्यण्डानि खेचरौ ॥ २३ ॥ तान्यबुध्यत तेजस्वी स विप्रः संशितव्रतः । बुद्ध्वा च स महातेजा न चचाल च जाजलिः । धर्मे कृतमना नित्यं नाधर्मं स त्वरोचयत् ॥ २४ ॥ अहन्यहनि चागत्य ततस्तौ तस्य मूर्द्धनि । आश्वासितौ निवसतः सम्प्रहृष्टौ तदा विभो ॥ २५ ॥ अण्डेभ्यस्त्वथ पुष्टेभ्यः प्राजायन्त शकुन्तकाः । व्यवर्द्धन्त च तत्रैव न चाकम्पत जाजलिः ॥ २६ ॥ स रक्षमाणस्त्वण्डानि कुलिङ्गानां धृतव्रतः । तथैव तस्थौ धर्मात्मा निर्विचेष्टः समाहितः ॥ २७ ॥ ततस्तु कालसमये बभूवुस्तेऽथ पक्षिणः । बुबुधे तांस्तु स मुनिर्जातपक्षान् कुलिङ्गकान् ॥ २८ ॥ ततः कदाचित्तांस्तत्र पश्यन् पक्षीन् यतव्रतः । बभूव परमप्रीतस्तदा मतिमतांवरः ॥ २९ ॥ तथा तानपि संवृद्धान् दृष्ट्वा चाप्नुवतां मुदम् । शकुनौ निर्भयौ तत्र ऊषतुश्चात्मजैः सह ॥ ३० ॥ जातपक्षांश्च सोऽपश्यदुड्डीनान् पुनरागतान् । सायं सायं द्विजान् विप्रो न चाकम्पत जाजलिः ॥ ३१ ॥ कदाचित् पुनरभ्येत्य पुनर्गच्छन्ति सन्ततम् । त्यक्ता मातापितृभ्यान्ते न चाकम्पत जाजलिः ॥ ३२ ॥ तथा ते दिवसञ्चापि गत्वा सायं पुनर्नृप । उपावर्त्तन्त तत्रैव निवासार्थं शकुन्तकाः ॥ ३३ ॥ कदाचिद्दिवसान् पञ्च समुत्पत्य विहङ्गमाः । षष्ठेऽहनि समाजग्मुर्न चाकम्पत जाजलिः ॥ ३४ ॥ क्रमेण च पुनः सर्वे दिवसान् सुबहूनथ । नोपावर्त्तन्त शकुना जातप्राणाः स्म ते यदा ॥ ३५ ॥ कदाचिन्मासमात्रेण समुत्पत्य विहङ्गमाः । नैवागच्छंस्ततो राजन् प्रातिष्ठत स जाजलिः ॥ ३६ ॥ ततस्तेषु प्रड़ीनेषु जाजलिर्जातविस्मयः । सिद्धोऽस्मीति मतिञ्चक्रे ततस्तं मान आविशत् ॥ ३७ ॥ स तथा निर्गतान् दृष्ट्वा शकुन्तान्नियतव्रतः । सम्भावितात्मा सम्भाव्य भृशं प्रीतमनाभवत् ॥ ३८ ॥ स नद्यां समुपस्पृश्य तर्पयित्वा हुताशनम् । उदयन्तमथादित्यमुपातिष्ठन्महातपाः ॥ ३९

सम्भाव्य चटकान्मूर्द्ध्नि जाजलिर्जपतांवर। आस्फोटयत्तदाकाशे धर्मः प्राप्तो मयेति वै ॥ ४० ॥ अथान्तरीक्षे वागासीत्तां च शुश्राव जाजलिः। धर्मेण न समस्त्वं वै तुलाधारस्य जाजले ॥ ४१ ॥ वाराणस्यां महाप्राज्ञस्तुलाधारः प्रतिष्ठितः। सोऽप्येवं नार्हते वक्तुं यथा त्वं भाषसे द्विज ॥ ४२ ॥ सोऽमर्षवशमापन्नस्तुलाधार-दिदृक्षया। पृथिवीमचरद्राजन् यत्र सायंगृहो मुनिः ॥ ४३ ॥ कालेन महतागच्छत् स तु वाराणसीं पुरीम्। विक्रीणन्तञ्च पण्यानि तुलाधारं ददर्श सः ॥४४॥ सोऽपि दृष्ट्वैव तं विप्रमायान्तं भाण्डजीवनः। समुत्थाय सुसंहृष्टः स्वागतेनाभ्यपूजयत् ॥ ४५ ॥

तुलाधार उवाच। आयानेवासि विदितो मम ब्रह्मन्न संशयः। ब्रवीमि यत्तु वचनं तच्छृणुष्व द्विजोत्तम ॥ ४६ ॥ सागरानूप-माश्रित्य तपस्तप्तं त्वया महत्। न च धर्मस्य संज्ञां त्वं पुरा वेत्थ कथञ्चन ॥ ४७ ॥ ततः सिद्धस्य तपसा तव विप्र शकुन्तकाः। क्षिप्रं शिरस्यजायन्त ते च सम्भाविता त्वया ॥ ४८ ॥ जातपक्षा यदा ते च गताश्चारीमितस्ततः। मन्यमानस्ततो धर्म्मं चटकप्रभवं द्विज ॥ ४९ ॥ खे वाचं त्वमथाश्रौषीर्मां प्रति द्विजसत्तम। अमर्षवश-मापन्नस्ततः प्राप्तो भवानिह। करवाणि प्रियं किन्ते तद्ब्रूहि द्विजसत्तम ॥ ५० ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि तुलाधारजाजलि-संवादे षष्ट्यधिकद्विशततोऽध्यायः ॥ २६० ॥

---

भीष्म उवाच। इत्युक्तः स तदा तेन तुलाधारेण धीमता। प्रोवाच वचनं धीमान् जाजलिर्जपतांवरः ॥ १ ॥

जाजलिरुवाच। विक्रीणानः सर्वरसान् सर्वगन्धांश्च वाणिज। वनस्पतीनोषधीश्च तेषां मूलफलानि च ॥ २ ॥ अध्यगा नैष्ठिकीं

बुद्धिं कुतस्त्वामिदमागतम् । एतदाचक्ष्व मे सर्वं निखिलेन महा-
मते ॥ ३ ॥

भीष्म उवाच । एवमुक्तस्तुलाधारो ब्राह्मणेन यशस्विना ।
उवाच धर्म्मसूक्ष्माणि वैश्यो धर्मार्थतत्त्ववित् । जाजलिं कष्टतपसं
ज्ञानतृप्तस्तदा नृप ॥ ४ ॥

तुलाधार उवाच । वेदाहं जाजले धर्मं सरहस्यं सनातनम् ।
सर्वभूतहितं मैत्रं पुराणं यं जना विदुः ॥ ५ ॥ अद्रोहेणैव भूता-
नामल्पद्रोहेण वा पुनः । या वृत्तिः स परो धर्मस्तेन जीवामि
जाजले ॥ ६ ॥ परच्छिन्नैः काष्ठतृणैर्मयेदं शरणं कृतम् । अलक्तं
पद्मकं तुङ्गं गन्धांश्चोच्चावचांस्तथा ॥ ७ ॥ रसांश्च तांस्तान् विप्रर्षे
मद्यवर्ज्यान् बहूनहम् । क्रीत्वा वै प्रतिविक्रीणे परहस्तादमायया
॥ ८ ॥ सर्वेषां यः सुहृन्नित्यं सर्वेषाञ्च हिते रतः । कर्मणा मनसा
वाचा स धर्मं वेद जाजले ॥ ९ ॥ नानुरुध्ये विरुध्ये वा न द्वेष्टि न
च कामये । समोऽहं सर्वभूतेषु पश्य मे जाजले व्रतम् ॥ १० ॥
तुला मे सर्वभूतेषु समा तिष्ठति जाजले ॥ ११ ॥ नाहं परेषां
कृत्यानि प्रशंसामि न गर्हये । आकाशस्येव विप्रेन्द्र पश्यन् लोकस्य
चित्रताम् ॥ १२ ॥ इति मां त्वं विजानीहि सर्वलोकस्य जाजले ।
समं मतिमतां श्रेष्ठ समलोष्टाश्मकाञ्चनम् ॥ १३ ॥ यथान्धबधिरो-
न्मत्ता उच्छ्वासपरमाः सदा । देवैरपिहितद्वारा सोपमा पश्यतो
मम ॥१४॥ यथा वृद्धातुरकृशा निस्पृहा विषयान् प्रति । तथार्थ-
कामभोगेषु ममापि विगता स्पृहा ॥ १५ ॥ यदा चायं न बिभेति
यदा चास्मान्न बिभ्यति । यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा
॥ १६ ॥ यदा न कुरुते भावं सर्वभूतेषु पापकम् । कर्मणा मनसा
वाचा ब्रह्म सम्पद्यते तदा ॥ १७ ॥ न भूतो न भविष्योऽस्ति न च
धर्मोऽस्ति कश्चन । योऽभयः सर्वभूतानां स प्राप्नोत्यभयं पदम्
॥ १८ ॥ यस्मादुद्विजते लोकः सर्वो मृत्युमुखादिव । वाक्क्रूरा-

दण्डपरुषात् स प्राप्नोति महद्भयम् ॥ १९ ॥ यथावद्वर्त्तमानानां वृद्धानां पुत्रपौत्रिणाम् । अनुवर्त्तामहे वृत्तमहिंसाणां महात्मनाम् ॥ २० ॥ प्रनष्टः शाश्वतो धर्मः सदाचारेण मोहितः । तेन वैद्यस्तपस्वी वा बलवान् वा विमुह्यते ॥ २१ ॥ आचारात् जाजले प्राज्ञः क्षिप्रं धर्ममवाप्नुयात् । एवं यः साधुभिर्दान्तश्चरेदद्रोहचेतसा ॥ २२ ॥ नद्यामिह यथा काष्ठमुह्यमानं यदृच्छया । यदृच्छयैव काष्ठेन सन्धिं गच्छेत केनचित् ॥ २३ ॥ तत्रापराणि दारूणि संसृज्यन्ते परस्परम् । तृणकाष्ठकरीषाणि कदाचिन्न समीक्षया ॥ २४ ॥ यस्मान्नोद्विजते भूतं जातु किञ्चित् कथञ्चन । अभयं सर्वभूतेभ्यः स प्राप्नोति सदा मुने ॥ २५ ॥ यस्मादुद्विजते विद्वन् सर्वलोको वृकादिव । क्रोशतस्तीरमागाद्य यथा सर्वे जलेचराः ॥२६॥ एवमेवायमाचारः प्रादुर्भूतो यतस्ततः । सहायवान् द्रव्यवान् यः सुभगोऽन्य परस्तथा ॥२७॥ ततस्तानेव कवयः शास्त्रेषु प्रवदन्त्युत । कीर्त्त्यर्थमल्पहृल्लेखाः पटवः कृत्स्ननिर्णयाः ॥ २८ ॥ तपोभिर्यज्ञदानैश्च वाक्यैः प्रज्ञाश्रितैस्तथा । प्राप्नोत्यभयदानस्य यद्यत्फलमिहाश्नुते ॥ २९ ॥ लोके यः सर्वभूतेभ्यो ददात्यभयदक्षिणाम् । स सर्वयज्ञैरीजानः प्राप्नोत्यभयदक्षिणाम् । न भूतानामहिंसाया ज्यायान् धर्मोऽस्ति कश्चन ॥ ३० ॥ यस्मान्नोद्विजते भूतं जातु किञ्चित् कथञ्चन । सोऽभयं सर्वभूतेभ्यः संप्राप्नोति महामुने ॥३१॥ यस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव । न स धर्ममवाप्नोति इह लोके परत्र च ॥ ३२ ॥ सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः । देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ ३३ ॥ दानं भूतभयस्याहुः सर्वदानेभ्य उत्तमम् । ब्रवीमि ते सत्यमिदं श्रद्दधस्व च जाजले ॥ ३४ ॥ स एव सुभगो भूत्वा पुनर्भवति दुर्भगः । व्यापत्तिं कर्मणां दृष्ट्वा जुगुप्सन्ति जनाः सदा ॥ ३५ ॥ अकारणो हि नैवास्ति धर्मः सूक्ष्मो हि जाजले । भूतभव्यार्थमेवेह धर्मः प्रवचनं

श्रुतम् ॥ ३६ ॥ सूक्ष्मत्वान्न स विज्ञातुं शक्यते बहुनिह्नवः । उपलभ्यान्तरा चान्यानाचारानवबुध्यते ॥ ३७ ॥ ये च छिन्दन्ति वृषणान् ये च भिन्दन्ति नस्तकान् । वहन्ति महतो भारान् बध्नन्ति दमयन्ति च ॥ ३८ ॥ हत्वा सत्त्वानि खादन्ति तान् कथं न विगर्हसे । मानुषा मानुषानेव दासभावेन भुञ्जते ॥ ३९ ॥ वधबन्धनिरोधेन कारयन्ति दिवानिशम् । आत्मनश्चापि जानाति यद्दुःखं वधबन्धने ॥ ४० ॥ पञ्चेन्द्रियेषु भूतेषु सर्वं वसति दैवतम् । आदित्यश्चन्द्रमा वायुर्ब्रह्मा प्राणः क्रतुर्यमः ॥४१॥ तानि जीवानि विक्रीय का मृतेषु विचारणा । अजोऽग्निर्वरुणो मेषः सूर्य्योऽश्वः पृथिवी विराट् ॥ ४२ ॥ धेनुर्वत्सश्च सोमो वै विक्रीयैतन्न सिध्यति । का तैले का घृते ब्रह्मन् मधून्यप्यौषधेषु वा ॥ ४३ ॥ अदंशमशके देशे सुखसंवर्द्धितान् पशून् । तांश्च मातुः प्रियान् जानन्नाक्रम्य बहुधा नराः ॥ ४ ॥ बहुदंशाकुलान्देशान्नयन्ति बहुकर्द्दमान् । वाहसंपीड़िता धुर्य्याः सीदन्त्यविधिना परे ॥ ४५ ॥ न मन्ये भ्रूणहत्यापि विशिष्टा तेन कर्मणा । कृषिं साध्विति मन्यन्ते सा च वृत्तिः सुदारुणाः ॥ ४६ ॥ भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम् । तथैवानुड़हो युक्तान् समवेक्षस्व जाजले ॥ ४७ ॥ अघ्न्या इति गवां नाम क एता हन्तुमर्हति । महच्चकाराकुशलं वृषं गां वालभेत्तु यः ॥ ४८ ॥ ऋषयो यतयो ह्येतन्नहुषे प्रत्यवेदयन् गां मातरं चाप्यवधीर्वृषभञ्च प्रजापतिम् ॥ ४९ ॥ अकार्य्यं नहुषाकार्षीर्लप्स्यामस्त्वत्कृते व्यथाम् ॥ ५० ॥ शतञ्चैकञ्च रोगाणां सर्वभूतेष्वपातयन् । ऋषयस्ते महाभागाः प्रजास्वेव हि जाजले ॥ ५१ ॥ भ्रूणहं नहुषं त्वाहुर्न ते होष्यामहे हविः । इत्युक्त्वा ते महात्मानः सर्वतत्त्वार्थदर्शिनः ॥ ५२ ॥ ऋषयो यतयः शान्तास्तपसा प्रत्यवेदयन् । ईदृशानशिवान् घोरानाचारानिह जाजले ॥ ५३ ॥ केवलाचरितत्वात्तु निपुणो नावबुध्यसे । कारणाद्धर्ममन्विच्छेन्न

लोकचरितञ्चरेत् ॥ ५४ ॥ यो हन्याद्यश्च मां स्तौति तत्रापि शृणु जाजले। समौ तावपि मे स्यातां न हि मेऽस्ति प्रियाप्रियम् ॥ ५५ ॥ एतदीदृशकं धर्मं प्रशंसन्ति मनीषिणः। उपपत्त्या हि सम्पन्नो यतिभिश्चैव सेव्यते। सततं धर्मशीलैश्च निपुणो नोपलक्षितः ॥ ५६ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि तुलाधारजाजलि-
संवादे एकषष्ट्यधिकद्विशततोऽध्यायः ॥ २६१ ॥

---

जाजलिरुवाच। अयं प्रवर्त्तितो धर्मस्तुलां धारयता त्वया। स्वर्गद्वारञ्च वृत्तिञ्च भूतानामवरोत्स्यते ॥ १ ॥ कृष्या ह्यन्नं प्रभवति ततस्त्वमपि जीवसि। पशुभिश्चौषधीभिश्च मर्त्त्या जीवन्ति वाणिज ॥ २ ॥ ततो यज्ञः प्रभवति नास्तिक्यमपि जल्पसि। न हि वर्त्तेदयं लोको वार्त्तामुत्सृज्य केवलाम् ॥ ३ ॥

तुलाधार उवाच। वच्म्यामि जाजले वृत्तिं नास्मि ब्राह्मण नास्तिकः। न यज्ञञ्च विनिन्दामि यज्ञवित्तु सुदुर्लभः ॥ ४ ॥ नमो ब्राह्मणयज्ञाय ये च यज्ञविदो जनाः। स्वयज्ञं ब्राह्मणा हित्वा क्षत्रयज्ञमिहास्थिताः ॥ ५ ॥ लुब्धैर्वित्तपरैर्ब्रह्मन्नास्तिकैः सम्प्रवर्त्तितम्। वेदवादानविज्ञाय सत्याभासमिवानृतम् ॥ ६ ॥ इदं देयमिदं देयमिति चायं प्रशस्यते। अतः स्तैन्यं प्रभवति विकर्माणि च जाजले ॥ ७ ॥ यदेव सुकृतं हव्यं तेन तुष्यन्ति देवताः। नमस्कारेण हविषा स्वाध्यायैरौषधैस्तथा ॥ ८ ॥ पूजा स्याद्देवतानां हि यथा शास्त्रनिदर्शनम्। इष्टापूर्त्तादसाधूनां विगुणा जायते प्रजा ॥ ९ ॥ लुब्धेभ्यो जायते लुब्धः समेभ्यो जायते समः। यजमानास्तथात्मानमृत्विजश्च तथा प्रजाः ॥ १० ॥ यज्ञात् प्रजा प्रभवति नभसोऽम्भ इवामलम्। अग्नौ प्रास्ताहुतिर्ब्रह्मन्नादित्यमुप-

गच्छति । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥११॥ तस्मात् सुनिष्ठिताः पूर्व्वं सर्व्वान् कामांश्च लेभिरे । अकृष्टपच्या पृथिवी आशीर्भिर्वीरुधोऽभवन् ॥१२॥ न ते यज्ञेष्वात्मसु वा फलं पश्यन्ति किञ्चन ॥ १३ ॥ शङ्कमानाः फलं यज्ञे ये यजेरन् कथञ्चन । जायन्ते साधवो धूर्त्ता लुब्धा वित्तप्रयोजनाः ॥ १४ ॥ स स्म पापकृतां लोकान् गच्छेदशुभकर्म्मणा । प्रमाणमप्रमाणेन यः कुर्य्यादशुभं नरः । पापात्मासोऽकृतप्रज्ञः सदैवेह द्विजोत्तम ॥ १५ ॥ कर्त्तव्यमिति कर्त्तव्यं वेत्ति वै ब्राह्मणो भयम् । ब्रह्मैव वर्त्तते लोके नैव कर्त्तव्यतां पुनः ॥ १६ ॥ विगुणञ्च पुनः कर्म्म ज्याय इत्यनुशुश्रुम । सर्व्वभूतोपघातश्च फलभावे च संयमः ॥ १७ ॥ सत्ययज्ञा दमयज्ञा अर्थलुब्धार्थतृप्तयः । उत्पन्नत्यागिनः सर्व्वे जना आसन्नमत्सराः ॥१८ क्षेत्रक्षेत्रज्ञतत्त्वज्ञाः स्वयज्ञपरिनिष्ठिता । ब्राह्मं वेदमधीयन्तस्तोषयन्त्यपरानपि ॥ १९ ॥ अखिलं दैवतं सर्व्वं ब्रह्म ब्रह्मणि संश्रितम् । तुष्यन्ति तृप्यतो देवास्तृप्तास्तृप्तस्य जाजले ॥ २० ॥ यथा सर्व्वरसैस्तृप्तो नाभिनन्दति किञ्चन । तथा प्रज्ञानतृप्तस्य नित्यतृप्तिः सुखोदया ॥ २१ ॥ धर्म्माधारा धर्म्मसुखाः कृतस्नव्यवसितास्तथा । अस्ति न स्तत्त्वतो भूय इति प्राज्ञस्त्ववेक्षते ॥ २२ ॥ ज्ञान विज्ञानिनः केचित् परं पारं तितीर्षवः । अतीव पुण्यदं पुण्यं पुण्याभिजनसंहितम् ॥ २३ ॥ यत्र गत्वा न शोचन्ति न च्यवन्ति व्यथन्ति वा । ते तु तद्ब्रह्मणः स्थानं प्राप्नुवन्तीह सात्त्विकाः ॥२४॥ नैव ते स्वर्गमिच्छन्ति न यजन्ति यशोधनैः । सतां वर्त्मानुवर्त्तन्तो यजन्ते त्वविहिंसया ॥ २५ ॥ वनस्पतीनोषधीश्च फलं मूलञ्च ते विदुः । न चैतानृत्विजो लुब्धा याजयन्ति फलार्थिनः ॥ २६ ॥ स्वमेव चार्थं कुर्व्वाणा यज्ञञ्चक्रुः पुनर्द्विजाः । परिनिष्ठितकर्म्माणः प्रजानुग्रहकाम्यया ॥ २७ ॥ तस्मात्तानृत्विजो लुब्धा याजयन्त्यशुभान्नरान् । प्रापयेयुः प्रजाः स्वर्गं स्वधर्म्माचरणेन वै ॥ २८ ॥

इति मे वर्त्तते बुद्धिः समा सर्वत्र जाजले। यानि यज्ञेष्विहेज्यन्ति सदा प्राज्ञा द्विजर्षभाः॥ २९॥ तेन ते देवयानेन पथा यान्ति महामुने। आवृत्तिस्तत्र चैकस्य नास्त्यावृत्तिर्मनीषिणः॥ ३०॥ उभौ तौ देवयानेन गच्छतो जाजले यथा। स्वयञ्चैषामनडुहो युज्यन्ति च वहन्ति च॥ ३१॥ स्वयमुस्राश्च दुह्यन्ते मनःसङ्कल्पसिद्धिभिः। स्वयं यूपानुपादाय यजन्ते स्वाप्तदक्षिणैः॥३२॥ यस्तथा भावितात्मा स्यात् स गामालब्धुमर्हति। ओषधीभिस्तथा ब्रह्मन् यजेरंस्तेन तादृशाः॥ ३३॥ इति त्यागं पुरस्कृत्य तादृशं प्रब्रवीमि ते। निराशिषमनारम्भं निर्नमस्कारमस्तुतिम्॥ ३४॥ अक्षीणं क्षीणकर्म्माणं तं देवा ब्राह्मणं विदुः। न श्रावयन्न च यजन्न ददद्ब्राह्मणेषु च॥ ३५॥ काम्यां वृत्तिं लिप्समानः कां गतिं याति जाजले। इदन्तु दैवतं कृत्वा यथा यज्ञमवाप्नुयात्॥ ३६॥

जाजलिरुवाच। न वै मुनीनां शृणुमः स्म तत्त्वं पृच्छामि ते वाणिज कष्टमेतत्। पूर्वं पूर्वं चास्य नावेक्षमाणा नातः परं तमृषयः स्थापयन्ति॥ ३७॥ यस्मिन्नेवात्मतीर्थे न पशवः प्राप्नुयुर्मुखम्। अथ स्म कर्मणा केन वाणिज प्राप्नुयात् सुखम्। शंस तन्मे महाप्राज्ञ भृशं वै श्रद्दधामि ते॥ ३८॥

तुलाधार उवाच। उत यज्ञा उतायज्ञा मखं नार्हन्ति ते क्वचित्। आज्येन पयसा दध्ना पूर्णाहुत्या विशेषतः॥ ३९॥ वालैः शृङ्गेण पादेन सम्भरत्येव गौर्मखम्। पत्नीन्यासेन विधिना प्रकरोति नियोजनम्॥ ४०॥ इष्टन्तु दैवतं कृत्वा यथा यज्ञमवाप्नुयात्। पुरोडाशो हि सर्वेषां पशूनां मेध्य उच्यते॥ ४१॥ सर्वा नद्यः सरस्वत्यः सर्वे पुण्याः शिलोच्चयाः। जाजले तीर्थमात्मैव मा स्म देशातिथिर्भव॥ ४२॥ एतानीदृशकान् धर्मानाचरन्निह जाजले। कारणैर्धर्ममन्विच्छन् स लोकानाप्नुते शुभान्॥ ४३॥

भीष्म उवाच। एतानीदृशकान् धर्म्मान् तुलाधारः प्रशंसति। उपपत्त्याभिसम्पन्नान्नित्यं सद्भिर्निषेवितान् ॥ ४४ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि तुलाधारजाजलि-
संवादे द्विषष्ट्यधिकद्विशततोऽध्यायः ॥ २६२ ॥

---

तुलाधार उवाच। सद्भिर्वा यदि वासद्भिः पन्थानमिममास्थितम्। प्रत्यक्षं क्रियतां साधु ततो ज्ञास्यसि तद्यथा ॥ १ ॥ एते शकुन्ता बहवः समन्ताद्विचरन्ति ह। तवोत्तमाङ्गे सम्भूताः श्येनाश्चान्याश्च जातयः ॥२॥ आह्वयैतान्महाब्रह्मन् विशमानांस्ततस्ततः। पश्येमान् हस्तपादैश्च श्लिष्टान्देहेषु सर्व्वशः ॥ ३ ॥ सम्भावयन्ति पितरं त्वया सम्भाविताः खगाः। असंशयं पिता वै त्वं पुत्रानाह्वय जाजले ॥ ४ ॥

भीष्म उवाच। ततो जाजलिना तेन समाहूताः पतत्त्रिणः। वाचमुच्चारयन्ति स्म धर्म्मस्य वचनात् किल ॥ ५ ॥ अहिंसादिकृतं कर्म्म इह चैव परत्र च। श्रद्धां निहन्ति वै ब्रह्मन् सा हता हन्ति तं नरम् ॥६॥ समानां श्रद्दधानानां संयतानां सुचेतसाम्। कुर्व्वतां यज्ञ इत्येव न यज्ञो जातु नेष्यते ॥ ७ ॥ श्रद्धा वैवस्वती सेयं सूर्य्यस्य दुहिता द्विज। सावित्री प्रसवित्री च वह्निर्वाङ्मनसी ततः ॥ ८ ॥ वाग्वृद्धं त्रायते श्रद्धा मनोवृद्धञ्च भारत। श्रद्धावृद्धं वाङ्मनसी न यज्ञस्त्रातुमर्हति ॥ ९ ॥ अत्र गाथा ब्रह्मगीताः कीर्त्तयन्ति पुराविदः। शुचेरश्रद्दधानस्य श्रद्दधानस्य चाशुचेः ॥१०॥ देवा वित्तमसन्यन्त सदृशं यज्ञकर्म्मणि। श्रोत्रियस्य कदर्य्यस्य वदान्यस्य च वार्द्धुषेः ॥ ११ ॥ मीमांसित्वोभयं देवाः सममन्नमकल्पयन्। प्रजापतिस्तानुवाच विषमं कृतमित्युत ॥ १२ ॥ श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत्। भोज्यमन्नं वदान्यस्य कदर्य्यस्य न

वार्द्धुषेः॥ १३॥ अश्रद्दधान एवैको देवानां नार्हते हविः। तस्यैवान्नं न भोक्तव्यमिति धर्मविदो विदुः॥ १४॥ अश्रद्धा परमं पापं श्रद्धा पापप्रमोचनी। जहाति पापं श्रद्धावान् सर्पो जीर्णामिव त्वचम्॥ १५॥ ज्यायसी या पवित्राणां निवृत्तिः श्रद्धया सह। निवृत्तशीलदोषो यः श्रद्धावान् पूत एव सः॥ १६॥ किं तस्य तपसा कार्य्यं किं वृत्तेन किमात्मना। श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः॥ १७॥ इति धर्मः समाख्यातः सद्भिर्धर्मार्थदर्शिभिः। वयं जिज्ञासमानास्तु सम्प्राप्ता धर्मदर्शनात्॥ १८॥ श्रद्धां कुरु महा प्राज्ञ ततः प्राप्स्यसि यत् परम्। श्रद्धावान् श्रद्दधानश्च धर्मश्चैव हि जाजले। स्ववर्त्मनि स्थितश्चैव गरीयानेव जाजले॥ १९॥

भीष्म उवाच। ततोऽचिरेण कालेन तुलाधारः स एव च। दिवं गत्वा महाप्राज्ञौ विहरेतां यथासुखम्॥ २०॥ स्वस्वस्थानमुपागम्य स्वकर्मपरिवर्ज्जितम्। एवं बहुविधार्थञ्च तुलाधारेण भाषितम्॥ २१॥ सम्यक् चैतमुपालब्धो धर्मश्चोक्तः सनातनः। तस्य विख्यातवीर्य्यस्य श्रुत्वा वाक्यानि स द्विजः। तुलाधारस्य कौन्तेय शान्तिमेवान्वपद्यत॥ २२॥ एवं बहुमतार्थञ्च तुलाधारेण भाषितम्। यथौपम्योपदेशेन किं भूयः श्रोतुमिच्छसि॥ २३॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि तुलाधारजाजलि संवादे त्रिषष्ट्यधिकद्विशततोऽध्यायः॥ २६३॥

---

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। प्रजानामनुकम्पार्थं गीतं राज्ञा विचख्नुना॥ १॥ छिन्नस्थूणं वृषं दृष्ट्वा विलापञ्च गवां भृशम्। गोग्रहे यज्ञवाटस्य प्रेक्षमाणः स पार्थिवः॥ २॥ स्वस्ति गोभ्योऽस्तु लोकेषु ततो निर्वचनं कृतम्।

हिंसायां हि प्रवृत्तायामाशीरेषा तु कल्पिता ॥ ३ ॥ अव्यवस्थित-मर्य्यादैर्विमूढ़ैर्नास्तिकैर्नरैः। संशयात्मभिरव्यक्तैर्हिंसा समनु-वर्णिता ॥ ४ ॥ सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत्। काम-काराद्विहिंसन्ति बहिर्वेद्यां पशून्नराः ॥ ५ ॥ तस्मात् प्रमाणतः कार्य्यो धर्मः सूक्ष्मो विजानता। अहिंसा सर्वभूतेभ्यो धर्मेभ्यो ज्यायसी मता ॥ ६ ॥ उपोष्य संशितो भूत्वा हित्वा वेदकृताः श्रुतीः। आचार इत्यनाचारः कृपणाः फलहेतवः ॥ ७ ॥ यदि यज्ञांश्च वृक्षांश्च यूपांश्चोद्दिश्य मानवाः। वृथामांसानि खादन्ति नैष धर्मः प्रशस्यते ॥ ८ ॥ सुरा मत्स्यो मधु मांसमासवं कृश-रौदनम्। धूर्त्तैः प्रवर्त्तितं ह्येतत् नैतद्वेदेषु कल्पितम् ॥ ९ ॥ माना-न्मोहाच्च लोभाच्च लौल्यमेतत् प्रकल्पितम्। विष्णुमेवाभिजानन्ति सर्वयज्ञेषु ब्राह्मणाः ॥ १० ॥ पायसैः सुमनोभिश्च तस्यापि यजनं स्मृतम्। यज्ञियाश्चैव ये वृक्षा वेदेषु परिकल्पिताः ॥ ११ ॥ यच्चापि किञ्चित् कर्त्तव्यमन्यच्चोक्षैः सुसंस्कृतम्। महत्सत्त्वैः शुद्धभावैः सर्वं देवार्हमेव तत् ॥ १२ ॥

युधिष्ठिर उवाच। शरीरमापदश्चापि विवदन्त्यविहिंसतः। कथं यात्रा शरीरस्य निरारम्भस्य सेत्स्यते ॥ १३ ॥

भीष्म उवाच। यथा शरीरं न ग्लायेन्नेयान्मृत्युवशं यथा। तथा कर्मसु वर्त्तेत समर्थो धर्ममाचरेत् ॥ १४ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि विचख्नुगीतायां
चतुःषष्टयधिकद्विशततोऽध्यायः ॥ २६४ ॥

---

युधिष्ठिर उवाच। कथं कार्य्यं परीक्षेत शीघ्रं वाथ चिरेण वा। सर्वथा कार्य्यदुर्गेऽस्मिन् भवान्नः परमो गुरुः ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्।

चिरकारैस्तु यत् पूर्वं वृत्तमाङ्गिरसे कुले ॥ २ ॥ चिरकारिक भद्रन्ते भद्रन्ते चिरकारिक । चिरकारी हि मेधावी नापराध्यति कर्म्मसु ॥ ३ ॥ चिरकारी महाप्राज्ञो गौतमस्याभवत् सुतः । चिरेण सर्वकार्य्याणि विमृष्यार्थान् प्रपद्यते ॥ ४ ॥ चिरं सञ्चिन्तयत्यर्थां-श्चिरं जाग्रत् चिरं स्वपन् । चिरं कार्य्याभिपत्तिश्च चिरकारी तथो-च्यते ॥ ५ ॥ अलसग्रहणं प्राप्तो दुर्मेधावी तथोच्यते । बुद्धि-लाघवयुक्तेन जनेनादीर्घदर्शिना ॥ ६ ॥ व्यभिचारे तु कस्मिंश्चि-द्व्यतिक्रम्य परान् सुतान् । पित्रोक्तः कुपितेनाथ जहीमां जननी-मिति ॥ ७ ॥ स तथेति चिरेणोक्त्वा स्वभावाच्चिरकारिकः । विमृष्य चिरकारित्वाच्चिन्तयामास वै चिरम् ॥ ८ ॥ पितुराज्ञां कथं कुर्य्यां न हन्यां मातरं कथम् । कथं धर्म्मच्छले नास्मिन्निमज्जेयमसाधु-वत् ॥ ९ ॥ पितुराज्ञा परो धर्म्मः स्वधर्म्मो मातृरक्षणम् । अस्व-तन्त्रञ्च पुत्रत्वं किं नु मां नानुपीड़येत् ॥ १० ॥ स्त्रियं हत्वा मात-रञ्च को हि जातु सुखी भवेत् । पितरञ्चाप्यवज्ञाय कः प्रतिष्ठा-मवाप्नुयात् ॥ ११ ॥ अनवज्ञा पितुर्युक्ता धारणं मातृरक्षणम् । युक्तक्षमावुभावेतौ नातिवर्त्तेत मां कथम् ॥ १२ ॥ पिता ह्यात्मान-माधत्ते जायायां जज्ञिवानिति । शीलचारित्रगोत्रस्य धारणार्थं कुलस्य च ॥ १३ ॥ सोऽहं मात्रा स्वयं पित्रा पुत्रत्वे प्रकृतः पुनः । विज्ञानं मे कथं न स्याद्द्वौ बुध्ये चात्मसम्भवम् ॥ १४ ॥ जातकर्म्मणि यत् प्राह पिता यच्चोपकर्म्मणि । पर्य्याप्तः स दृढ़ीकारः पितुर्गौरव-निश्चये ॥ १५ ॥ गुरुरग्र्यः परो धर्म्मः पोषणाध्यापनान्वितः । पिता यदाह धर्म्मः स वेदेष्वपि सुनिश्चितः ॥ १६ ॥ प्रीतिमात्रं पितुः पुत्रः सर्वं पुत्रस्य वै पिता । शरीरादीनि देयानि पिता त्वेकः प्रयच्छति ॥ १७ ॥ तस्मात् पितुर्वचः कार्य्यं न विचार्य्यं कथञ्चन । पातकान्यपि पूयन्ते पितुः शासनकारिणः ॥ १८ ॥ भोग्ये भोज्ये प्रवचने सर्वलोकनिदर्शने । भर्त्रा चैव समायोगे सीमन्तोन्नयने

तथा ॥ १९ ॥ पिता धर्म्मः पिता स्वर्गः पिता हि परमन्तपः। पितरि प्रीतिमापन्ने सर्वा प्रीयन्ति देवताः ॥ २० ॥ आशिषस्ता भजन्त्येनं पुरुषं प्राह यत् पिता। निष्कृतिः सर्वपापानां पिता यच्चाभिनन्दति ॥ २१ ॥ मुच्यते बन्धनात् पुष्पं फलं वृन्तात् प्रमुच्यते। क्लिश्यन्नपि सुतं स्नेहैः पिता पुत्रं न मुञ्चति ॥ २२ ॥ एतद्विचिन्तितं तावत् पुत्रस्य पितृगौरवम्। पिता नाल्पतरं स्थानं चिन्तयिष्यामि मातरम् ॥ २३ ॥ यो ह्ययं मयि सञ्जातो मर्त्त्यत्वे पाञ्चभौतिकः। अस्य मे जननी हेतुः पावकस्य यथारणिः ॥२४॥ माता देहारणिः पुंसां सर्वस्यार्त्तस्य निर्वृतिः। मातृलाभे सनाथत्वमनाथत्वं विपर्य्यये ॥ २५ ॥ न च शोचति नाप्येनं स्थाविर्य्यमपकर्षति। श्रिया हीनोऽपि यो गेहमम्बेति प्रतिपद्यते ॥ २६ ॥ पुत्रपौत्रोपपन्नोऽपि जननीं यः समाश्रितः। अपि वर्षशतस्यान्ते स द्विहायनवच्चरेत् ॥ २७ ॥ समर्थं वासमर्थं वा कृशं वाप्यकृशं तथा। रक्षत्येव सुतं माता नान्यः पोष्टा विधानतः ॥ २८ ॥ तदा स वृद्धो भवति तदा भवति दुःखितः। तदा शून्यं जगत्तस्य यदा मात्रा वियुज्यते ॥ २९ ॥ नास्ति मातृ समा छाया नास्ति मातृसमा गतिः। नास्ति मातृसमं त्राणं नास्ति मातृसमा प्रिया ॥३०॥ कुक्षिसन्धारणाद्धात्री जननाज्जननी स्मृता। अङ्गानां वर्द्धनादम्बा वीरसूत्वेन वीरसूः ॥ ३१ ॥ शिशोः शुश्रूषणाच्छुश्रूर्माता देहमनन्तरम्। चेतनावान्नरो हन्याद्यस्य नाशुषिरं शिरः ॥ ३२ ॥ दम्पत्योः प्राणसंश्लेषे योऽभिसन्धिः कृतः किल। तं माता च पिता चेति भूतार्थौ मातरि स्थितः ॥ ३३ ॥ माता जानाति यद्गोत्रं माता जानाति यस्य सः। मातुर्भरणमात्रेण प्रीतिः स्नेहः पितुः प्रजाः ॥ ३४ ॥ पाणिबन्धं स्वयं कृत्वा सहधर्ममुपेत्य च। यदि यास्यन्ति पुरुषा स्त्रियो नार्हन्ति याच्यताम् ॥ ३५ ॥ भरणाद्धि स्त्रिया भर्त्ता पात्याच्चैव स्त्रियाः पतिः। गुणस्यास्य निवृत्तौ तु न भर्त्ता न पुनः

पतिः ॥ ३६ ॥ एवं स्त्री नापराध्नोति नर एवापराध्यति । व्युच्च-
रंश्च महादोषं नर एवापराध्यति ॥ ३७ ॥ स्त्रिया हि परमो
भर्त्ता दैवतं परमं स्मृतम् । तस्यात्मना तु सदृशमात्मानं परमं
ददौ ॥ ३८ ॥ नापराधोऽस्ति नारीणां नर एवापराध्यति । सर्व-
कार्य्यापराध्यत्वान्नापराध्यन्ति चाङ्गनाः ॥ ३९ ॥ यश्चनोक्तोऽथ
निर्द्दिष्टः स्त्रिया मैथुनतृप्तये । तस्य स्मारयतो व्यक्तमधर्मो नास्ति
संशयः ॥ ४० ॥ यावन्नारीं मातरञ्च गौरवे चाधिके स्थिताम् ।
अवध्यान्तु विजानीयुः पशवोऽप्यविचक्षणाः ॥ ४१ ॥ देवतानां समा-
वायमेकस्थं पितरं विदुः । मर्त्त्यानां देवतानाञ्च स्नेहादभ्येति
मातरम् ॥ ४२ ॥ एवं विमृषतस्तस्य चिरकारितया बहु । दीर्घः
कालो व्यतिक्रान्तस्ततोऽन्याभ्यागमत् पिता ॥ ४३ ॥ मेधातिथि-
र्म्महाप्राज्ञो गौतमस्तपसि स्थितः । विमृश्य तेन कालेन पत्न्याः
संस्थाव्यतिक्रमम् ॥ ४४ ॥ सोऽब्रवीद्दुःखसन्तप्तो दुःखेनाश्रूणि वर्त्त-
यन् । श्रुतधैर्य्यप्रसादेन पश्चात्तापमुपागतः ॥ ४५ ॥ आश्रमं मम
सम्प्राप्तस्त्रिलोकेशः पुरन्दरः । अतिथिव्रतमास्थाय ब्राह्मणं रूप-
माश्रितः ॥४६॥ स मया सान्त्वितो वाग्भिः स्वागतेनाभिपूजितः ।
अर्घ्यं पाद्यं यथान्यायं मया च प्रतिपादितम् ॥ ४७ ॥ परवानस्मि
चेत्युक्तः प्रणयिष्यति तेन च । अत्र चाकुशले जाते स्त्रिया नास्ति
व्यतिक्रमः ॥ ४८ ॥ एवं न स्त्री न चैवाहं नाध्वगस्त्रिदशेश्वरः ।
अपराध्यति धर्म्मस्य प्रमादस्त्वपराध्यति ॥ ४९ ॥ ईर्ष्याजं व्यसनं
प्राहुस्तेन चैवोर्द्ध्वरेतसः । ईर्षया त्वहमाक्षिप्तो मग्नो दुष्कृतसागरे
॥ ५० ॥ हत्वा साध्वीञ्च नारीञ्च व्यसनित्वाच्च वासिताम् । भर्त्तव्य-
त्वेन भार्य्याञ्च को नु मां तारयिष्यति ॥ ५१ ॥ अन्तरेण मया-
ज्ञप्तश्चिरकारीत्युदारधीः । यद्यद्य चिरकारी स्यात् स मां त्रायेत
पातकात् ॥ ५२ ॥ चिरकारिक भद्रन्ते भद्रन्ते चिरकारिक ।
यद्यद्य चिरकारी त्वं ततोऽसि चिरकारिकः ॥ ५३ ॥ त्राहि मां

मातरञ्चैव तपो यच्चार्ज्जितं मया। आत्मानं पातकेभ्यश्च भवाद्य चिरकारिकः ॥ ५४ ॥ सहजं चिरकारित्वमतिप्रज्ञतया तव। सफलं तत्तथा तेऽस्तु भवाद्य चिरकारिकः ॥ ५५ ॥ चिरमाशंसितो मात्रा चिरं गर्भेण धारितः। सफलं चिरकारित्वं कुरु त्वं चिरकारिक ॥ ५६ ॥ चिरायते च सन्तापाच्चिरं स्वपिति धारितः। आवयोश्चिरसन्तापादवेक्ष्य चिरकारिक ॥ ५७ ॥ एवं सुदुःखितो राजन् महर्षिर्गौतमस्तदा। चिरकारिं ददर्शाथ पुत्रं स्थितमथान्तिके ॥ ५८ ॥ चिरकारी तु पितरं दृष्ट्वा परमदुःखितः। शस्त्रं त्यक्त्वा ततो मूर्द्ध्ना प्रसादायोपचक्रमे ॥५९॥ गौतमस्तं ततो दृष्ट्वा शिरसा पतितं भुवि। पत्नीञ्चैव निराकारां परामभ्यामगन्मुदम् ॥ ६० ॥ न हि सा तेन संभेद्‌ं पत्नी नीता महात्मना। विजने चाश्रमस्थेन पुत्रश्चापि समाहितः ॥६१॥ हन्या इति समादेशः शस्त्रपाणौ सुते स्थिते। विनीते प्रसवत्यर्थे विवासे चात्मकर्मसु ॥ ६२ ॥ बुद्धिश्चासीत् सुतं दृष्ट्वा पितुश्चरणयोर्नतम्। शस्त्रग्रहणचापल्यं संवृणोति भयादिति ॥ ६३ ॥ ततः पित्रा चिरं स्तुत्वा चिरञ्चाघ्राय मूर्द्धनि। चिरं दोर्भ्यां परिष्वज्य चिरं जीवेत्युदाहृतः ॥ ६४ ॥ एवं स गौतमः पुत्रं प्रीतिहर्षगुणैर्युतः। अभिनद्य महाप्राज्ञ इदं वचनमब्रवीत् ॥ ६५ ॥ चिरकारिक भद्रन्ते चिरकारी चिरं भव। चिराय यदि ते सौम्य चिरमस्मि न दुःखितः ॥ ६६ ॥ गाथाश्चाप्यब्रवीद्विद्वान् गौतमो मुनिसत्तमः। चिरकारिषु धीरेषु गुणोद्देशसमाश्रयाः ॥ ६७ ॥ चिरेण मित्रं बध्नीयाच्चिरेण च कृतं त्यजेत्। धीरेण हि कृतं मित्रं चिरं धारणमर्हति ॥ ६८ ॥ रागे दर्पे च माने च द्रोहे पापे च कर्म्मणि। अप्रिये चैव कर्त्तव्ये चिरकारी प्रशस्यते ॥ ६९ ॥ बन्धूनां सुहृदाञ्चैव भृत्यानां स्त्रीजनस्य च। अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते ॥ ७० ॥ एवं स गौतमस्तत्र प्रीतः पुत्रस्य भारत। कर्मणानेन कौरव्य चिरकारि-

तथा तथा॥ ७१॥ एवं सर्व्वेषु कार्य्येषु विमृश्य पुरुषस्ततः। चिरेण निश्चयं कृत्वा चिरं न परितप्यते॥ ७२॥ चिरं धारयते रोषं चिरं कर्म नियच्छति। पश्चात्तापकरं कर्म न किञ्चिदुपपद्यते॥ ७३॥ चिरं वृद्धानुपासीत चिरमन्वास्य पूजयेत्। चिरं धर्मं निषेवेत कुर्य्याच्चान्वेषणञ्चिरम्॥ ७४॥ चिरमन्वास्य विदुषश्चिरं शिष्टान्निषेव्य च। चिरं विनीय चात्मानं चिरं यात्यनवज्ञताम्॥ ७५॥ ब्रुवतश्च परस्यापि वाक्यं धर्मोपसंहितम्। चिरं पृष्टोपि च ब्रूयाच्चिरं न परितप्यते॥ ७६॥ उपास्य बहुलास्तस्मिन्नाश्रमे सुमहातपाः। समाः स्वर्गं गतो विप्रः पुत्रेण सहितस्तदा॥ ७७॥

इति शान्तिपर्व्वणि मोक्षधर्मपर्व्वणि चिरकारिकोपाख्याने पञ्चषष्ट्यधिकद्विशततोऽध्यायः॥ २६५॥

---

युधिष्ठिर उवाच। कथं राजा प्रजा रक्षेन्न च किञ्चित् प्रघातयेत्। पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह॥ १॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। द्युमत्सेनस्यसंवादं राज्ञा सत्यवता सह॥ २॥ अव्याहृतं व्याजहार सत्यवानिति नः श्रुतम्। वधायोन्नीयमानेषु पितुरेवानुशासनात्॥ ३॥ अधर्मतां याति धर्मो यात्यधर्मश्च धर्मताम्। वधो नाम भवेद्धर्मो नैतद्भवितुमर्हति॥ ४॥

द्युमत्सेन उवाच। अथ चेदवधो धर्मो धर्मः को जातुचिद्भवेत्। दस्यवश्चेन्न हन्येरन् सत्यवन् सङ्करो भवेत्॥ ५॥ ममेदमिति नास्यैतत् प्रवर्त्तेत कलौ युगे। लोकयात्रा न चैव स्यादथ चेदेत्थ शंस नः॥ ६॥

सत्यवानुवाच। सर्व्व एव त्रयो वर्णाः कार्य्या ब्राह्मणबन्धनाः। धर्मपाशनिबद्धानामल्पोऽप्येवं चरिष्यति॥७॥ यो यस्तेषामपचरे-

त्समाचक्षीत वै द्विजः । अयं मे न शृणोतीति तस्मिन्राजा प्रधा-
रयेत् ॥ ८ ॥ तत्त्वाभेदेन यच्छास्त्रं तत्काय्यं नान्यथाविधम् ।
असमीक्ष्यैव कर्म्माणि नीतिशास्त्रं यथाविधि ॥ ९ ॥ दस्यून्निहन्ति
वै राजा भूयसो वाप्यनागसः । भार्य्या माता पिता पुत्रो हन्यते
पुरुषेण ते । परेणापकृतो राजा तस्मात् सम्यक् प्रधारयेत् ॥१०॥
असाधुश्चैव पुरुषो लभते शीलमेकदा । साधोश्चापि ह्यसाधुभ्यः
शोभना जायते प्रजा ॥ ११ ॥ न मूलघातः कर्त्तव्यो नैष धर्म्मः
सनातनः । अपि खल्ववधेनैव प्रायश्चित्तं विधीयते ॥ १२ ॥ उद्वे-
जनेन बन्धेन विरूपकरणेन च । वधदण्डेन ते क्लेश्या न पुरोहित
संसदि ॥ १३ ॥ यदा पुरोहितं वा ते पर्य्येयुः शरणैषिणः । करि-
ष्यामः पुनर्ब्रह्मन् न पापमितिवादिनः ॥ १४ ॥ तदा विसर्गमर्हाः
स्युरितीदं धातृशासनम् ॥ १५ ॥ बिभ्रद्दण्डाजिनं मुण्डो ब्राह्मणो-
ऽर्हति शासनम् । गरीयांसो गरीयांसमपराधे पुनः पुनः । तदा
विसर्गमर्हन्ति न यथा प्रथमे तथा ॥ १६ ॥

द्युमत्सेन उवाच । यत्र यत्रैव शक्येरन् संयन्तुं समये प्रजाः ।
स तावान् प्रोच्यते धर्म्मो यावन्न प्रतिलङ्घ्यते ॥ १७ ॥ अहन्यमानेषु
पुनः सर्व्वमेव पराभवेत् । पूर्व्वं पूर्व्वतरे चैव सुशास्या ह्यभवन् जनाः
॥ १८ ॥ मृदवः सत्यभूयिष्ठा अल्पद्रोहाल्पमन्यवः । पुरा धिग्-
दण्ड एवासीद्वाग्दण्डस्तदनन्तरम् ॥ १९ ॥ आसीदादानदण्डो-
ऽपि वधदण्डोऽद्य वर्त्तते । वधेनापि न शक्यन्ते नियन्तुमपरे जनाः
॥ २० ॥ नैव दस्युर्मनुष्याणां न देवानामिति श्रुतिः । न गन्धर्व्वः
पितॄणाञ्च कः कस्येह न कश्चन ॥ २१ ॥ पद्मं श्मशानाद्दादत्ते
पिशाचाच्चापि दैवतम् । तेषु कः समयं कुर्य्याद्दक्षेषु हतबुद्धिषु ॥२२

सत्यवानुवाच । तान्न शक्नोषि चेत् साधून् परित्रातुमहिंसया ।
कस्यचिद्भूतभव्यस्य लाभेनान्तं तथा कुरु ॥ २३ ॥ राजानो लोक-
यात्रार्थं तप्यन्ते परमं तपः । तेऽपत्रपन्ति तादृग्भ्यस्तथा वृत्ता

भवन्ति च ॥ २४ ॥ विवास्यमानाः सुकृतो न कामाद्‌घ्नन्ति दुष्कृतीन्। सुकृतेनैव राजानो भूयिष्ठं शासते प्रजाः ॥ २५ ॥ श्रेयसः श्रेयसोऽप्येवं वृत्तं लोकोऽनुवर्त्तते। सदैव हि गुरोर्वृत्तमनुवर्त्तन्ति मानवाः ॥ २६ ॥ आत्मानमसमाधाय समाधित्सति यः परान्। विषयेष्विन्द्रियवशं मानवाः प्रहसन्ति तम् ॥ २७ ॥ यो राज्ञो दम्भमोहेन किञ्चित् कुर्य्यादसाम्प्रतम्। सर्वोपायैर्नियम्य स तथा पापान्निवर्त्तते ॥२८॥ आत्मैवादौ नियन्तव्यो दुष्कृतं संनियच्छता। दण्डयेच्च महादण्डैरपि बन्धनमन्तरात् ॥ २९ ॥ यत्र वै पापकृन्नीचो न महद्‌दुःखमर्च्छति। वर्द्धन्ते तत्र पापानि धर्मो ह्रसति च ध्रुवम् ॥ ३० ॥ इति कारुण्यशीलस्तु विद्वान् वै ब्राह्मणोऽन्वशात्। इति चैवानुशिष्टोऽस्मि पूर्व्वैस्तात पितामहैः ॥ ३१ ॥ आश्वासयद्भिः सुभृशमनुक्रोशात्तथैव च। एतत् प्रथमकल्पेन राजा कृतयुगे जयेत् ॥ ३२ ॥ पादोनेनापि धर्मेण गच्छेत्त्रेतायुगे तथा। द्वापरे तु द्विपादेन पादेन त्वपरे युगे ॥ ३३ ॥ तथा कलियुगे प्राप्ते राज्ञो दुश्चरितेन ह। भवेत् कालविशेषेण कला धर्मस्य षोड़शी ॥३४॥ अथ प्रथमकल्पेन सत्यवान् सङ्करो भवेत्। आयुः शक्तिञ्च कालञ्च निर्द्दिश्य तप आदिशेत् ॥ ३५ ॥ सत्याय हि यथा नेह जह्याद्धर्मफलं महत्। भूतानामनुकम्पार्थं मनुः स्वायम्भुवोऽब्रवीत् ॥३६॥

इति शान्तिपर्व्वणि मोक्षधर्मपर्व्वणि द्युमत्सेनसत्यवद्वाक्ये षट्षष्ट्यधिकद्विशतोऽध्यायः ॥ २६६ ॥

---

युधिष्ठिर उवाच। अविरोधेन भूतानां योगः षाड़्गुण्यकारकः। यः स्यादुभयभाग्धर्मस्तन्मे ब्रूहि पितामह ॥ १ ॥ गार्हस्थ्यस्य च धर्मस्य योगधर्मस्य चोभयोः। अदूरसम्प्रस्थितयोः किंस्विच्छ्रेयः पितामह ॥ २ ॥

भीष्म उवाच। उभौ धर्मौ महाभागावुभौ परमदुश्चरौ। उभौ महाफलौ तौ तु सद्भिराचरितावुभौ ॥ ३ ॥ अत्र ते वर्त्तयिष्यामि प्रामाण्यमुभयोस्तयोः। शृणुष्वैकमनाः पार्थ छिन्नधर्मार्थसंशयम् ॥ ४ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम्। कपिलस्य गोश्च संवादं तन्निबोध युधिष्ठिर ॥ ५ ॥ आम्नायमनुपश्यन् हि पुराणं शाश्वतं ध्रुवम्। नहुषः पूर्वमालेभे त्वष्टुर्गामिति नः श्रुतम् ॥ ६ ॥ तां नियुक्तामदीनात्मा सत्त्वस्थः संयमे रतः। ज्ञानवान्नियताहारो ददर्श कपिलस्तथा ॥ ७ ॥ स बुद्धिमुत्तमां प्राप्तो नैष्ठिकीमकुतोभयाम्। सतीमशिथिलां सत्यां वेदा इत्यब्रवीत् सकृत् ॥ ८ ॥ तां गामृषिः स्यूमरश्मि प्रविश्य यतिमब्रवीत्। हंहो वेदा यदि मता धर्माः के नापरे मताः ॥ ९ ॥ तपस्विनो धृतिमन्तः श्रुतिविज्ञानचक्षुषः। सर्वमार्षं हि मन्यन्ते व्याहृतं विदितात्मनः ॥ १० ॥ तस्यैवं गततृष्णस्य विज्वरस्य निराशिषः। का विवक्षास्ति वेदेषु निरारम्भस्य सर्वतः ॥ ११ ॥

कपिल उवाच। नाहं वेदान् विनिन्दामि न विवक्षामि कर्हिचित्। पृथगाश्रमिणां कर्माण्येकार्थानीति नः श्रुतम् ॥१२॥ गच्छत्येव परित्यागी वानप्रस्थश्च गच्छति। गृहस्थो ब्रह्मचारी च उभौ तावपि गच्छतः ॥ १३ ॥ देवयाना हि पन्थानश्चत्वारः शाश्वता मताः। एषां ज्यायःकनीयस्त्वं फलेषूक्तं बलाबलम् ॥ १४ ॥ एवं विदित्वा सर्वार्थानारभेतेति वैदिकम्। नारभेतेति चान्यत्र नैष्ठिकी श्रूयते श्रुतिः ॥ १५ ॥ अनारम्भे हि दोषः स्यादारम्भे दोष उत्तमः। एवं स्थितस्य शास्त्रस्य दुर्विज्ञेयं बलाबलम् ॥ १६ ॥ यदत्र किञ्चित् प्रत्यक्षमहिंसायाः परं मतम्। ऋते त्वागमशास्त्रेभ्यो ब्रूहि तद्यदि पश्यसि ॥ ७ ॥

स्यूमरश्मिरुवाच। स्वर्गकामो यजेतेति सततं श्रूयते श्रुतिः। फलं प्रकल्प्य पूर्वं हि ततो यज्ञः प्रतायते ॥ १८ ॥ अजश्चाश्वश्च

मेषश्च गौश्च पक्षिगणाश्च ये। ग्राम्यारण्याश्चौषधयः प्राणस्यान्नमिति श्रुतिः॥ १९॥ तथैवान्नं ह्यहरहः सायं प्रातर्निरूप्यते। पशवश्चाथ धान्यञ्च यज्ञस्याङ्गमिति श्रुतिः॥ २०॥ एतानि सह यज्ञेन प्रजापतिरकल्पयत्। तेन प्रजापतिर्देवान् यज्ञेनायजत प्रभुः॥ २१॥ तस्यान्योऽन्यवराः सर्वे प्राणिनः सप्तसप्तधा। यज्ञेषूपाकृतं विश्वं प्राहुरुत्तमसंज्ञितम्॥ २२॥ एतच्चैवाभ्यनुज्ञातं पूर्वैः पूर्वतरैस्तथा। को जातु न विचिन्वीत विद्वान् स्वां शक्तिमात्मनः॥२३॥ पशवश्च मनुष्याश्च द्रुमाश्चौषधिभिः सह। स्वर्गमेवाभिकाङ्क्षन्ते न च स्वर्गस्ततो मखात्॥ २४॥ ओषध्यः पशवो वृक्षा वीरुदाज्यं पयो दधि। हविर्भूमिर्दिशः श्रद्धा कालश्चैतानि द्वादश॥ २५॥ ऋचो यजूंषि सामानि यजमानश्च षोड़श। अग्निर्ज्ञेयो गृहपतिः स सप्तदश उच्यते॥ २६॥ अङ्गान्येतानि यज्ञस्य यज्ञो मूलमिति श्रुतिः। आज्येन पयसा दध्ना शकृतामिक्षया त्वचा॥ २७॥ वालैः शृङ्गेण पादेन सम्भरत्येव गौर्मखम्। एवं प्रत्येकशः सर्वं यद्यदस्य विधीयते॥ २८॥ यज्ञं वहन्ति सम्भूय सहर्त्विग्भिः सदक्षिणैः। संहृत्यैतानि सर्वाणि यज्ञं निर्वर्त्तयन्त्युत॥ २९॥ यज्ञार्थानि हि सृष्टानि यथार्था श्रूयते श्रुतिः। एवं पूर्वतराः सर्वे प्रवृत्ताश्चैव मानवाः॥ ३०॥ न हिनस्ति नारभते नाभिद्रुह्यति किञ्चन। यज्ञो यष्टव्य इत्येव यो यजत्यफलेप्सया॥ ३१॥ यज्ञाङ्गान्यपि चैतानि यथोक्तान्यनुपूर्वशः। विधिना विधियुक्तानि धारयन्ति परस्परम्॥ ३२॥ आम्नायमार्षं पश्यामि यस्मिन् वेदाः प्रतिष्ठिताः। तं विद्वांसोऽनुपश्यन्ति ब्राह्मणस्यानुदर्शनात्॥ ३३॥ ब्राह्मणप्रभवो यज्ञो ब्राह्मणार्पण एव च। अनुयज्ञं जगत् सर्वं यज्ञश्चानुजगत् सदा॥ ३४॥ ओमिति ब्रह्मणो योनिर्नमः स्वाहा स्वधा वषट्। यस्यैतानि प्रयुज्यन्ते यथाशक्ति कृतान्यपि॥ ३५॥ न तस्य त्रिषु लोकेषु परलोकभयं विदुः। इति वेदा वदन्तीह सिद्धाश्च पर-

मर्षयः ॥ ३६ ॥ ऋचो यजूंषि सामानि स्तोभाश्च विधिचोदिताः। यस्मिन्नेतानि सर्वाणि भवन्तीह स वै द्विजः ॥ ३७ ॥ अग्न्याधेये यद्भवति यच्च सोमसुते द्विज। यच्चेतरैर्महायज्ञैर्वेद तद्भगवान् पुनः ॥ ३८ ॥ तस्माद्ब्रह्मन् यजेच्चैव याजयेच्चाविचारयन्। यजतः स्वर्गविधिना प्रेत्य स्वर्गफलं महत् ॥३९॥ नायं लोकोऽस्त्ययज्ञानां परश्चेति विनिश्चयः। वेदवादविदश्चैव प्रमाणमुभयं तदा ॥४०॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि गोकापिलीये
सप्तषष्ट्यधिकद्विशततोऽध्यायः ॥ २६७ ॥

---

कपिल उवाच। एतावदनुपश्यन्तो यतयो यान्ति मार्गगाः। नैषां सर्वेषु लोकेषु कश्चिदस्ति व्यतिक्रमः ॥ १ ॥ निर्द्वन्द्वा निर्नमस्कारा निराशीर्बन्धना बुधाः। विमुक्ताः सर्वपापेभ्यश्चरन्ति शुचयोऽमलाः ॥२॥ अपवर्गेऽथ संत्यागे बुद्धौ च कृतनिश्चयाः। ब्रह्मिष्ठा ब्रह्मभूताश्च ब्रह्मण्येव कृतालयाः ॥ ३ ॥ विशोका नष्टरजसस्तेषां लोकाः सनातनाः। तेषां गतिं परां प्राप्य गार्हस्थ्ये किं प्रयोजनम् ॥ ४ ॥

स्यूमरश्मिरुवाच। यद्येषा परमा काष्ठा यद्येषा परमा गतिः। गृहस्थानव्यपाश्रित्य नाश्रमोऽन्यः प्रवर्त्तते ॥ ५ ॥ यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः। एवं गार्हस्थ्यमाश्रित्य वर्त्तन्त इतराश्रमाः ॥ ६ ॥ गृहस्थ एव यजते गृहस्थस्तप्यते तपः। गार्हस्थ्यमस्य धर्मस्य मूलं यत्किञ्चिदेजते ॥ ७ ॥ प्रजनाद्यभिनिर्वृत्ताः सर्वे प्राणभृतो जनाः। प्रजनञ्चाप्युतान्यत्र न कथञ्चन विद्यते ॥ ८ ॥ यास्तु स्युर्बर्हिरोषध्यो वहिरन्यास्तथाद्रिजाः। ओषधिभ्यो वहिर्यस्मात प्राणात् कश्चिन्न दृश्यते ॥ ९ ॥ कस्यैषा वागभवेत् सत्या मोक्षो नास्ति गृहादिति। अश्रद्दधानैरप्राज्ञैः

सूक्ष्मदर्शनवर्जितैः ॥ १० ॥ निराशैरलसैः श्रान्तैस्तप्यमानैः स्वकर्मभिः। शमस्योपरमो दृष्टः प्रव्रज्यायामपण्डितैः ॥ ११ ॥ त्रैलोक्यस्यैव हेतुर्हि मर्य्यादा शाश्वती ध्रुवा। ब्राह्मणो नाम भगवान् जन्मप्रभृति पूज्यते ॥ १२ ॥ प्रागगर्भधानान्मन्त्रा हि प्रवर्त्तन्ते द्विजातिषु। अविश्रब्धेषु वर्त्तन्ते विश्रब्धेष्वप्यसंशयम् ॥ १३ ॥ दाहे पुनः संशयणे संश्रिते पात्रभोजने। दाने गवां पशूनां वा पिण्डानामप्सुमज्जने ॥ १४ ॥ अर्च्चिष्मन्तो वर्हिषदः क्रव्यादाः पितरस्तथा। मृतस्याप्यनुमन्यन्ते मन्त्रा मन्त्राश्च कारणम् ॥ १५ ॥ एवं क्रोशत्सु वेदेषु कुतो मोक्षोऽस्ति कस्यचित्। ऋणवन्तो यदा मर्त्त्याः पितृदेवद्विजातिषु ॥ १६ ॥ श्रिया विहीनैरलसैः पण्डितैः सम्प्रवर्त्तितम्। वेदवादापरिज्ञानं सत्याभासमिवानृतम् ॥ १७ ॥ न वै पापैर्ह्रियते कृष्यते वा यो ब्राह्मणो यजते वेदशास्त्रैः। जर्द्धं यज्ञैः पशुभिः सार्द्धमेति सन्तर्पितस्तर्पयते च कामैः॥१८॥ न वेदानां परिभवान्न शाठेयन न मायया। महत् प्राप्नोति पुरुषो ब्रह्मणि ब्रह्म विन्दते ॥ १९ ॥

कपिल उवाच। दर्शञ्च पौर्णमासञ्च अग्निहोत्रञ्च धीमतः। चातुर्मास्यानि चैवासन् तेषु धर्म्मः सनातनः ॥ २० ॥ अनारम्भाः सुधृतयः शुचयो ब्रह्मसंज्ञिताः। ब्रह्मणैव स्म ते देवांस्तर्पयन्त्यमृतैषिणः ॥ २१ ॥ सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः। देवापि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ २२ ॥ चतुर्द्वारं पुरुषं चतुर्मुखं चतुर्द्धा चैनमुपयाति वाचा। बाहुभ्यां वाच उदरादुपस्थात्तेषां द्वारं द्वारपालो बुभूषेत् ॥ २३ ॥ नाक्षैर्दीव्येन्नाददीतान्यवित्तं न वायोनीयस्य शृतं प्रगृह्णात्। क्रुद्धो न चैव प्रहरेत धीमान् तथास्य तत् पाणिपादं सुगुप्तम् ॥ २४ ॥ नाक्रोशमिच्छेन्न वृथा वदेच्च न पैशुनं जनवादञ्च कुर्य्यात्। सत्यव्रतो मितभाषोऽप्रमत्तस्तथास्य वाग्द्वारमथो सुगुप्तम् ॥ २५ ॥ नानाशनः स्यान्न महा-

शनः स्याद्‌लोलुपः साधुभिरागतः स्यात्। यावार्थमाहारमिहा-
ददीत तथास्य स्याज्जाठरी द्वारगुप्तिः ॥ २६ ॥ न वीर पत्नीं
विहरेत नारीं न चापि नारीमनृतावाह्वयीत। भार्य्याव्रतं ह्यात्मनि
धारयीत तथास्योपस्थद्वारगुप्तिर्भवेत ॥ २७ ॥ द्वाराणि यस्य
सर्व्वाणि सुगुप्तानि मनीषिणः। उपस्थमुदरं बाहू वाक् चतुर्थी
भवेद्द्विज ॥ २८ ॥ मोघान्यगुप्तद्वारस्य सर्व्वाण्येव भवन्त्युत। किं
तस्य तपसा कार्य्यं किं यज्ञेन किमात्मना ॥ २९ ॥ अनुत्तरीय-
वसनमनुपस्तीर्णशायिनम्। बाहूपधानं शाम्यन्तं तं देवा ब्राह्मणं
विदुः ॥ ३० ॥ द्वन्द्वारामेषु सर्व्वेषु य एको रमते मुनिः। परेषा-
मननुध्यायंस्तं देवा ब्राह्मणं विदुः ॥ ३१ ॥ येन सर्व्वमिदं बुद्धं
प्रकृतिर्विकृतिश्च या। गतिज्ञः सर्व्वभूतानां तं देवा ब्राह्मणं विदुः
॥ ३२ ॥ अभयं सर्व्वभूतेभ्यः सर्व्वेषामभयं यतः। सर्व्वभूतात्मभूतो
यस्तं देवा ब्राह्मणं विदुः ॥ ३३ ॥ नान्तरेणानुजानन्ति दानयज्ञ-
क्रियाफलम्। अविज्ञाय च तत् सर्व्वमन्यद्रोचयते फलम् ॥ ३४ ॥
स्वकर्म्मभिः संश्रितानां तपो घोरत्वमागतम्। तं सदाचारमाश्रित्य
पुराणं शाश्वतं ध्रुवम् ॥ ३५ ॥ अशक्नुवन्तश्चरितुं किञ्चिद्धर्म्मेषु
सूचितम्। निरापद्धर्म्म आचारो ह्यप्रमादोऽपराभवः ॥ ३६ ॥ फल-
वन्ति च कर्म्माणि व्युष्टिमन्ति ध्रुवाणि च। विगुणानि च पश्यन्ति
तथा नैकान्तिकानि च ॥ ३७ ॥ गुणाश्चात्र सुदुर्ज्ञेया ज्ञाताश्चात्र
सुदुष्कराः। अनुष्ठिताश्चान्तवन्त इति त्वमनुपश्यसि ॥ ३८ ॥

स्यूमरश्मिरुवाच। यथा च वेदप्रामाण्यं त्यागश्च सफलो
यथा। तौ पन्थानाभुवौ व्यक्तौ भगवंस्तद्ब्रवीहि मे ॥ ३९ ॥

कपिल उवाच। प्रत्यक्षमिह पश्यन्ति भवन्तः सत्पथे स्थिताः।
प्रत्यक्षन्तु किमत्रास्ति यद्भवन्त उपासते ॥ ४० ॥

स्यूमरश्मिरुवाच। स्यूमरश्मिरहं ब्रह्मन् जिज्ञासार्थमिहा-
गतः। श्रेयस्कामः प्रत्यवोचमार्जवान्न विवक्षया ॥ ४१ ॥ इमञ्च

संशयं घोरं भगवान् प्रब्रवीतु मे। प्रत्यक्षमिह पश्यन्तो भवन्तः सत्पथे स्थिताः। किमत्र प्रत्यक्षतमं भवन्तो यमुपासते ॥ ४२ ॥ अन्यत्र तर्कशास्त्रेभ्यः आगमार्थं यथागमम्। आगमो वेदवादास्तु तर्कशास्त्राणि चागमः ॥ ४३ ॥ यथाश्रममुपासीत आगमस्तत्र सिध्यति। सिद्धिः प्रत्यक्षरूपा च दृश्यत्यागमनिश्चयात् ॥ ४४ ॥ नौर्नावीव निबद्धा हि स्रोतसा सुनिबन्धना। क्रियमाणा कथं विप्र कुबुद्धींस्तारयिष्यति। एतद्ब्रवीतु भगवानुपपन्नोऽस्म्यधीहि भोः ॥ ४५ ॥ नैव त्यागी न सन्तुष्टो नाशोको न निरामयः। नानिर्विधित्सो नावृत्तो नापवृत्तोऽस्ति कश्चन ॥ ४६ ॥ भवन्तोऽपि च हृष्यन्ति शोचन्ति च यथा वयम्। इन्द्रियार्थाश्च भवतां समानाः सर्वजन्तुषु ॥ ४७ ॥ एवं चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु। एकमालम्बमानानां निर्णये किं निरामयम् ॥ ४८ ॥

कपिल उवाच। यद्यदाचरते शास्त्रमर्थं सर्वप्रवृत्तिषु। यस्य यत्र ह्यनुष्ठानं तत्र तत्र निरामयम् ॥ ४९ ॥ ज्ञानं प्लावयते सर्वं यो ज्ञानं ह्यनुवर्त्तते। ज्ञानादपेत्य या वृत्तिः सा विनाशयति प्रजाः ॥५०॥ भवन्तो ज्ञानिनो व्यक्तं सर्वतश्च निरामयाः। ऐकात्म्यं नाम कश्चिद्धि कदाचिदुपपद्यते ॥ ५१ ॥ शास्त्रं ह्यबुद्धा तत्त्वेन केचिद्वादबलाज्जनाः। कामद्वेषाभिभूतत्वादहङ्कारवशंगताः ॥५२॥ याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः। ब्रह्मस्तेना निरारम्भा दम्भमोहवशानुगाः ॥५३॥ नैर्गुण्यमेव पश्यन्ति न गुणाननुयुञ्जते। तेषां तमः शरीराणां तम एव परायणम् ॥५४॥ यो यथा प्रकृतिर्जन्तुः प्रकृतेः स्यात्तथानुगः। तस्य द्वेषश्च कामश्च क्रोधो दम्भोऽनृतं मदः ॥ ५५ ॥ नित्यमेवाभिवर्त्तन्ते गुणाः प्रकृतिसम्भवाः। एवं ध्यात्वानुपश्यन्तः संत्यजेयुः शुभाशुभम्। परां गतिमभीप्सन्तो यतयः समये रताः ॥ ५६ ॥

स्यूमरश्मिरुवाच। सर्वमेतन्मया ब्रह्मन् शास्त्रतः परिकीर्त्ति-

तम्। न ह्यविज्ञाय शास्त्रार्थं प्रवर्त्तन्ते प्रवृत्तयः ॥ ५७ ॥ यः कश्चिन्न्याय्य आचारः सर्व्वंशास्त्रमिति श्रुतिः। यदन्यायमशास्त्रं तदित्येषा श्रूयते श्रुतिः ॥ ५८ ॥ न प्रवृत्तिर्ऋते शास्त्रात्काचिदस्तीति निश्चयः। यदन्यद्वेदवादेभ्यस्तदशास्त्रमिति श्रुतिः ॥५९॥ शास्त्रादपेतं पश्यन्ति बहवो व्यक्तमानिनः। शास्त्रदोषान्न पश्यन्ति शोचन्ति च यथावयम् ॥ ६० ॥ इन्द्रियार्थाश्च भवतां समानाः सर्व्वजन्तुषु। एवञ्चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु। एकमालम्बमानानां निर्णये सर्व्वतो दिशम् ॥ ६१ ॥ आनन्त्यं वदमानेन शक्तेनार्व्वाञ्जितात्मना। अविज्ञानहतप्रज्ञा हीनप्रज्ञास्तमोवृताः ॥६२॥ शक्यन्त्वेकेन युक्तेन कृतकृत्येन सर्व्वशः। पिण्डमात्रं व्यपाश्रित्य चरितं सर्व्वतो दिशम् ॥ ६३ ॥ तेनाविवदमानेन व्यक्तेन विजितात्मना। वेदवादं व्यपाश्रित्य मोक्षोऽस्तीति प्रभाषितुम् ॥ ६४ ॥ अपेतन्यायशास्त्रेण सर्व्वलोकविगर्हिणा। इदन्तु दुष्करं कर्म्म कुटुम्बमभिसंश्रितम् ॥ ६५ ॥ दानमध्ययनं यज्ञः प्रजासन्तानमार्ज्जवम्। यद्येतदेवं कृत्वापि न विमोक्षोऽस्ति कस्यचित् ॥ ६६ ॥ धिक्कर्त्तारञ्च कार्य्यञ्च श्रमश्चायं निरर्थकः। नास्तिक्यमन्यथा च स्याद्वेदानां पृष्ठतः क्रिया। एतस्यानन्त्यमिच्छामि भगवन् श्रोतुमञ्जसा ॥ ६७ ॥ यत्त्वं वदस्व मे ब्रह्मन्नुपसन्नोऽस्म्यधीहि भोः। यथा ते विदितो मोक्षस्तथेच्छाम्युपशिक्षितुम् ॥ ६८ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि गोकपिलीये
अष्टषष्ट्यधिकद्विशततोऽध्यायः ॥ २६८ ॥

---

कपिल उवाच। वेदाः प्रमाणं लोकानां न वेदाः पृष्ठतः कृताः। द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत्। शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ १ ॥ शरीरमेतत् कुरुते यद्वेदे

कुरुते तनुम्। कृतशुद्धशरीरो हि पात्रं भवति ब्राह्मणः॥ २॥ आनन्त्यमत्र बुध्येदं कर्मणान्तद्ब्रवीमि ते। निरागममनैतिह्यं प्रत्यक्षं लोकसाक्षिकम्॥ ३॥ धर्म इत्येव ये यज्ञान् वितन्वति निराशिष। उत्पन्नत्यागिनो लुब्धाः कृपासूयाविवर्जिताः। धनानामेष वै पन्थास्तीर्थेषु प्रतिपादनम्॥ ४॥ अनाश्रिताः पापकर्म कदाचित् कर्मयोगनः। मनःसङ्कल्पसंसिद्धा विशुद्धज्ञाननिश्चयाः॥ ५॥ अक्रुध्यन्तोऽनुसूयन्तो निरहङ्कारमत्सराः। ज्ञाननिष्ठास्त्रिशुक्लाश्च सर्वभूतहितेरताः॥ ६॥ आसन् गृहस्था भूयिष्ठा अव्युत्क्रान्ताः स्वकर्मसु। राजानश्च तथा युक्ता ब्राह्मणाश्च यथाविधि॥७॥ समा ह्यार्जवसम्पन्नाः सन्तुष्टा ज्ञाननिश्चयाः। प्रत्यक्षधर्माः शुचयः श्रद्दधानाः परावरे॥ ८॥ पुरस्ताद्भावितात्मानो यथावच्चरितव्रताः। चरन्ति धर्मं कृच्छ्रेऽपि दुर्गे चैवापि संहताः॥ ९॥ संहत्य धर्मं चरतां पुरासीत् सुखमेव तत्। तेषां नासीद्विधातव्यं प्रायश्चित्तं कथञ्चन॥ १०॥ सत्यं हि धर्ममास्थाय दुराधर्षतमा मताः। न मात्रामनुरुध्यन्ते न धर्मच्छलमन्ततः॥११॥ य एव प्रथमः कल्पस्तमेवाभ्याचरन् सह। तेषां नासीद्विधातव्यं प्रायश्चित्तं कदाचन॥ १२॥ तस्मिन् विधौ स्थितानां हि प्रायश्चित्तं न विद्यते। दुर्बलात्मन उत्पन्नं प्रायश्चित्तमिति श्रुतिः॥ १३॥ एवं बहुविधा विप्राः पुराणा यज्ञवाहनाः। त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो यशस्विनः॥ १४॥ यजन्तोऽहरहर्यज्ञैर्निराशीर्बन्धना बुधाः। तेषां यज्ञाश्च वेदाश्च कर्माणि च यथागमम्॥ १५॥ आगमाश्च यथाकालं सङ्कल्पाश्च यथाक्रमम्। अपेत कामक्रोधानां दुश्चराचारकर्मणाम्॥ १६॥ स्वकर्मभिः संसितानां प्रकृत्या संसितात्मनाम्। ऋजूनां शमनित्यानां स्वेषु कर्मसु वर्त्ततनाम्॥ १७॥ सर्वमानन्त्यमेवासीदिति नः शाश्वती श्रुतिः। तेषामदीनसत्त्वानां दुश्चराचारकर्मणाम्॥ १८॥ स्वकर्मभिः सम्भृतानां तपोघोरप्र-

मागतम् । तं सदाचारमाश्चर्य्यं पुराणं शाश्वतं ध्रुवम् ॥ १९ ॥ अशक्नुवद्भिश्चरितुं किञ्चिद्धर्मेषु सूक्ष्मताम् । निरापद्धर्म आचारो ह्यप्रमादोऽपराभवः ॥ २० ॥ सर्ववर्णेषु जातेषु नासीत् कश्चिद्व्यतिक्रमः । व्यस्तमेकञ्चतुर्द्धा हि ब्राह्मणा आश्रमं विदुः ॥ २१ ॥ तं सन्तो विधिवत् प्राप्य गच्छन्ति परमां गतिम् । गृहेभ्य एव निष्क्रम्य वनमन्ये समाश्रिताः । गृहमेवाभिसंश्रित्य ततोऽन्ये ब्रह्मचारिणः ॥ २२ ॥ धर्ममेकं चतुर्द्धा तु आश्रमं ब्राह्मणा विदुः । आनन्त्यं ब्रह्मणः स्थानं ब्राह्मणो नाम निश्चयः ॥ २३ ॥ एत एवंविधा विप्राः पुराणा ब्रह्मचारिणः । त एते दिवि दृश्यन्ते ज्योतिर्भूता द्विजातयः । नक्षत्राणीव धिष्ण्येषु बहवस्तारका गणाः ॥२४॥ आनन्त्यमुपसम्प्राप्ताः सन्तोषादिति वैदिकम् । यद्यागच्छन्ति संसारं पुनर्योनिषु तादृशाः । न लिप्यन्ते पापकृत्यैः कदाचित् कर्मयोनितः ॥ २५ ॥ एवमेव ब्रह्मचारी शुश्रूषुर्घोरनिश्चयः । एवं युक्तो ब्राह्मणः स्यादन्यो ब्राह्मणको भवेत् ॥ २६ ॥ कर्मैवं पुरुषस्याह शुभं वा यदि वाशुभम् ॥२७॥ एवं पक्वकषायाणामानन्त्येन श्रुतेन च । सर्वमानन्त्यमासीद्धि एवं नः शाश्वती श्रुतिः ॥ २८ ॥ तेषामपेततृष्णानां निर्णिक्तानां शुभात्मनाम् । चतुर्थोपनिषद्धर्मः साधारण इति स्मृतिः ॥ २९ ॥ संसिद्धैः साध्यते नित्यं ब्राह्मणैर्नियतात्मभिः । सन्तोषमूलस्त्यागात्मा ज्ञानाधिष्ठानमुच्यते ॥ ३० ॥ अपवर्गमतिर्नित्यो यतिधर्मः सनातनः । साधारणः केवलो वा यथाबलमुपासते ॥ ३१ ॥ गच्छतां गच्छतां क्षेमं दुर्बलोऽत्रावसीदति । ब्रह्मणः पदमन्विच्छन् संसारान्मुच्यते शुचिः ॥ ३२ ॥

स्यूमरश्मिरुवाच । ये भुञ्जते ये ददते यजन्तेऽधीयते च ये । मात्राभिरुपलब्धाभिर्ये वा त्यागं समाश्रिताः ॥ ३३ ॥ एतेषां प्रेत्यभावे तु कतमः स्वर्गजित्तमः । एतदाचक्ष्व मे ब्रह्मन् यथातथ्येन पृच्छतः ॥ ३४ ॥

कपिल उवाच। परिग्रहाः शुभाः सर्वे गुणतामभ्युपागताः। न तु त्यागसुखं प्राप्ता एतत्त्वमपि पश्यसि ॥ ३५ ॥

स्यूमरश्मिरुवाच। भवन्तो ज्ञाननिष्ठा वै गृहस्थाः कर्म्मनिश्चयाः। आश्रमाणाञ्च सर्वेषां निष्ठायामैक्यमुच्यते ॥ ३६ ॥ एकत्वेन पृथक्त्वेन विशेषो नात्र दृश्यते। तद्यथावद्यथान्यायं भगवान् प्रब्रवीतु मे ॥ ३७ ॥

कपिल उवाच। शरीरपक्तिः कर्माणि ज्ञानन्तु परमा गतिः। कषाये कर्मभिः पक्वे रसज्ञाने च तिष्ठति ॥ ३८ ॥ आनृशंस्यं क्षमा शान्तिरहिंसा सत्यमार्ज्जवम्। अद्रोहो नाभिमानश्च ह्रीस्तितिक्षा शमस्तथा ॥ ३९ ॥ पन्थानो ब्रह्मणस्त्वेते एतैः प्राप्नोति यत् परम्। तद्विद्वाननुबुध्येत मनसा कर्मनिश्चयम् ॥ ४० ॥ यां विप्राः सर्वतः शान्ता विशुद्धा ज्ञाननिश्चयाः। गतिं गच्छन्ति सन्तुष्टास्तामाहुः परमां गतिम् ॥४१॥ वेदांश्च वेदितव्यञ्च विदित्वा च तथा स्थितम्। एवं वेदविदित्याहुरतोऽन्यो वातरेचकः ॥ ४२ ॥ सर्वं विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम्। वेदे हि निष्ठा सर्वस्य यद्यदस्ति च नास्ति च ॥ ४३ ॥ एषैव निष्ठा सर्वत्र यत्तदस्ति च नास्ति च। एतदन्तञ्च मध्यञ्च सच्चासच्च विजानतः ॥ ४४ ॥ समाप्तं त्याग इत्येव सर्वं वेदेषु निष्ठितम्। सन्तोष इत्यनुगतमपवर्गे प्रतिष्ठितम् ॥ ४५ ॥ ऋतं सत्यं विदितं वेदितव्यं सर्वस्यात्मा स्थावरं जङ्गमञ्च। सर्वं सुखं यच्छिवमुत्तरञ्च ब्रह्माव्यक्तप्रभवञ्चाव्ययञ्च ॥ ४६ ॥ तेजः क्षमा शान्तिरनामयं शुभं तथाविधं व्योमसनातनं ध्रुवम्। एवं सर्वैः शंस्यते बुद्धिनेत्रैस्तस्मै नमो ब्रह्मणे ब्राह्मणाय ॥ ४७ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि गोकापिलीये
एकोनसप्तत्यधिकद्विशततोऽध्यायः ॥ २६९ ॥

युधिष्ठिर उवाच । धर्म्ममर्थञ्च कामञ्च वेदाः शंसन्ति भारत । कस्य लाभो विशिष्टोऽत्र तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच । अत्र ते वर्त्तयिष्यामि इतिहासं पुरातनम् । कुण्डधारेण यत्प्रीत्या भक्तायोपकृतं पुरा ॥२॥ अधनो ब्राह्मणः कश्चित् कामाद्धर्म्ममवैक्षत । यज्ञार्थं सततोऽर्थार्थी तपोऽतप्यत दारुणम् ॥ ३ ॥ स निश्चयमथो कृत्वा पूजयामास देवताः । भक्त्या न चैवाध्यगच्छद्धनं सम्पूज्य देवताः ॥४॥ ततश्चिन्तामनुप्राप्तः कतमं दैवतन्तु तत् । यन्मे द्रुतं प्रसीदेत मानुषैरजड़ीकृतम् ॥ ५ ॥ सोऽथ सौम्येन मनसा देवानुचरमन्तिके । प्रत्यपश्यज्जलधरं कुण्डधारमवस्थितम् ॥ ६ ॥ दृष्ट्वैव तं महाबाहुं तस्य भक्तिरजायत । अयं मे धास्यति श्रेयो वपुरेतद्धि तादृशम् ॥७॥ सन्निकृष्टश्च देवस्य न चान्यैर्मानुषैर्वृतः । एष मे दास्यति धनं प्रभूतं शीघ्रमेव च ॥ ८ ॥ ततो धूपैश्च गन्धैश्च माल्यैरुच्चावचैरपि । वलिभिर्विविधाभिश्च पूजयामास तं द्विजः ॥ ९ ॥ ततस्त्वल्पेन कालेन तुष्टो जलधरस्तदा । तस्योपकारनियतामिमां वाचमुवाच ह ॥१०॥ ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते तथा । निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥११ आशायास्तनयो धर्म्मः क्रोधोऽसूयासुतः स्मृतः । लोभः पुत्रो निकृत्यायाः कृतघ्नो नार्हति प्रजाम् ॥१२॥ ततः स ब्राह्मणः स्वप्ने कुण्डधारस्य तेजसा । अपश्यत् सर्व्वभूतानि कुशेषु शयितस्तदा ॥१३॥ शमेन तपसा चैव भक्त्या च निरुपस्कृतः । शुद्धात्मा ब्राह्मणो रात्रौ निदर्शनमपश्यत ॥१४॥ मणिभद्रं स तत्रस्थं देवतानां महाद्युतिम् । अपश्यत महात्मानं व्यादिशन्तं युधिष्ठिर॥१५॥ तत्र देवाः प्रयच्छन्ति राज्यानि च धनानि च । शुभैः कर्म्मभिरारब्धाः प्रच्छिन्दन्त्यशुभेषु च ॥ १६ ॥ पश्यतामथ यक्षाणां कुण्डधारो महाद्युतिः । निपत्य पतितो भूमौ देवानां भरतर्षभ ॥१७॥ ततस्तु देववचनान्मणिभद्रो महामनाः । उवाच पतितं भूमौ कुण्डधार किमिष्यते ॥ १८ ॥

कुण्डधार उवाच। यदि देवाः प्रसन्ना मे भक्तोऽयं ब्राह्मणो मम। अस्यानुग्रहमिच्छामि कृतं किञ्चित् सुखोदयम् ॥ १९ ॥ ततस्तं माणिभद्रस्तु पुनर्वचनमब्रवीत्। देवानामेव वचनात् कुण्डधारं महाद्युतिम् ॥ २० ॥

माणिभद्र उवाच। उत्तिष्ठोत्तिष्ठ भद्रन्ते कृतकृत्यः सुखी भव। धनार्थी यदि विप्रोऽयं धनमस्मै प्रदीयताम् ॥ २१ ॥ यावद्धनं प्रार्थयते ब्राह्मणोऽयं सखा तव। देवानां शासनात्तावदसंख्येयं ददाम्यहम् ॥ २२ ॥ विचार्य्य कुण्डधारस्तु मानुष्यं चलमध्रुवम्। तपसे मतिमाधत्त ब्राह्मणस्य युधिष्ठिर ॥ २३ ॥

कुण्डधार उवाच। नाहं धनानि याचामि ब्राह्मणाय धनप्रद। अन्यमेवाहमिच्छामि भक्तायानुग्रहं कृतम् ॥ २४ ॥ पृथिवीं रत्नपूर्णां वा महद्वा रत्नसञ्चयम्। भक्ताय नाहमिच्छामि भवदेष तु धार्मिकः ॥ २५ ॥ धर्मेऽस्य रमतां बुद्धिर्धर्मञ्चैवोपजीवतु। धर्मप्रधानो भवतु ममैषोऽनुग्रहो मतः ॥ २६ ॥

माणिभद्र उवाच। सदा धर्मफलं राज्यं सुखानि विविधानि च। फलान्येवायमश्नातु कायक्लेशविवर्ज्जितः ॥ २७ ॥

भीष्म उवाच। ततस्तदेव बहुशः कुण्डधारो महायशाः। अभ्यासमकरोद्धर्मे ततस्तुष्टास्य देवताः ॥ २८ ॥

माणिभद्र उवाच। प्रीतास्ते देवताः सर्वा द्विजस्यास्य तथैव च। भविष्यत्येष धर्मात्मा धर्मे चाधास्यते मतिम् ॥ २९ ॥ ततः प्रीतो जलधरः कृतकार्य्यो युधिष्ठिर। ईप्सितं मनसो लब्ध्वा वरमन्यैः सुदुर्लभम् ॥ ३० ॥ ततोऽपश्यत चीराणि सूक्ष्माणि द्विजसत्तमः। पार्श्वतोऽभ्यासतो न्यस्तान्यथ निर्वेदमागतः ॥ ३१ ॥

ब्राह्मण उवाच। अयं न सुकृतं वेत्ति को न्वन्यो वेत्स्यते कृतम्। गच्छामि वनमेवाहं वरं धर्मेण जीवितुम् ॥ ३२ ॥

भीष्म उवाच । निर्व्वेदाद्देवतानाञ्च प्रसादात् स द्विजोत्तमः । वनं प्रविश्य सुमहत्तप आरब्धवांस्तदा ॥ ३३ ॥ देवतातिथिशेषेण फलमूलाशनो द्विजः । धर्मे चास्य महाराज दृढ़ा बुद्धिरजायत ॥ ३४ ॥ त्यक्त्वा मूलफलं सर्व्वं पर्णाहारोऽभवद्द्विजः । पर्णं त्यक्त्वा जलाहारः पुनरासीद्द्विजस्तदा ॥ ३५ ॥ वायुभक्षस्ततः पश्चाद्बहून् वर्षगणानभूत् । न चास्य क्षीयते प्राणस्तदद्भुतमिवाभवत् ॥३६॥ धर्मे च श्रद्दधानस्य तपस्युग्रे च वर्त्ततः । कालेन महता तस्य दिव्या दृष्टिरजायत ॥३७॥ तस्य बुद्धिः प्रादुरासीद्यदि दद्यामहं धनम् । तुष्टः कस्यचिदेवेह मिथ्यावाङ्न भवेन्मम ॥ ३८ ॥ ततः प्रहृष्टवदनो भूय आरब्धवांस्तपः । भूयश्चाचिन्तयत् सिद्धो यत् परं सोऽभिमन्यते ॥ ३९ ॥ यदि दद्यामहं राज्यं तुष्टो वै यस्य कस्यचित् । स भवेदचिराद्राजा न मिथ्यावाग्भवेन्मम ॥ ४० ॥ तस्य साक्षात् कुण्डधारो दर्शयामास भारत । ब्राह्मणस्य तपोयोगात् सौहृदेनाभिचोदितः ॥ ४१ ॥ समागम्य स तेनाथ पूजाञ्चक्रे यथाविधि । ब्राह्मणः कुण्डधारस्य विस्मितश्चाभवन्नृप ॥ ४२ ॥ ततोऽब्रवीत् कुण्डधारो दिव्यन्ते चक्षुरुत्तमम् । पश्य राज्ञां गतिं विप्र लोकांश्चैव तु चक्षुषा ॥ ४३ ॥ ततो राजसहस्राणि मग्नानि निरये तदा । दूरादपश्यद्विप्रः स दिव्ययुक्तेन चक्षुषा ॥ ४४ ॥

कुण्डधार उवाच । मां पूजयित्वा भावेन यदि त्वं दुःखमाप्नुयाः । कृतं मया भवेत् किन्ते कश्च तेऽनुग्रहो भवेत् ॥ ४५ ॥ पश्य पश्य च भूयस्त्वं कामानिच्छेत् कथं नरः । स्वर्गद्वारं हि संरुद्धं मानुषेषु विशेषतः ॥ ४६ ॥

भीष्म उवाच । ततोऽपश्यत् स कामञ्च क्रोधं लोभं भयं मदम् । निद्रां तन्द्रीं तथालस्यमावृत्य पुरुषान् स्थितान् ॥ ४७ ॥

कुण्डधार उवाच । एतैर्लोकाः सुसंरुद्धा देवानां मानुषाद्भयम् । तथैव देववचनाद्विघ्नं कुर्व्वन्ति सर्व्वशः ॥ ४८ ॥ न देवै-

रननुज्ञातः कश्चिद्भवति धार्मिकः। एष शक्तोऽसि तपसा दातुं राज्यं धनानि च ॥ ४९ ॥

भीष्म उवाच। ततः पपात शिरसा ब्राह्मणस्तोयधारिणे। उवाच चैनं धर्मात्मा महान्मेऽनुग्रहः कृतः ॥ ५० ॥ कामलोभानुबन्धेन पुरा ते यदसूयितम्। मया स्नेहमविज्ञाय तच्च मे क्षन्तुमर्हसि ॥ ५१ ॥ क्षान्तमेव मयेत्युक्त्वा कुण्डधारो द्विजर्षभम्। संपरिष्वज्य बाहुभ्यां तत्रैवान्तरधीयत ॥ ५२ ॥ ततः सर्वांस्तदा लोकान ब्राह्मणोऽनुचचार ह। कुण्डधारप्रसादेन तपसा सिद्धिमागतः ॥ ५३ ॥ विहायसा च गमनं तथा सङ्कल्पितार्थता। धर्मात् शक्त्या तथा योगात् या चैव परमा गतिः ॥५४॥ देवता ब्राह्मणाः सन्तो यक्षा मानुषचारणाः। धार्मिकान् पूजयन्तीह न धनाढ्यान्न कामिनः ॥ ५५ ॥ सुप्रसन्ना हि ते देवा यत्ते धर्मे रता मतिः। धने सुखकला काचित् धर्मे तु परमं सुखम् ॥ ५६ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि कुण्डधारोपाख्याने सप्तत्यधिकद्विशतोऽध्यायः ॥ २७० ॥

---

युधिष्ठिर उवाच। बहूनां यज्ञतपसामेकार्थानां पितामह। धर्मार्थं न सुखार्थार्थं कथं यज्ञः समाहितः ॥ १ ॥

भीष्म उवाच। अत्र ते वर्त्तयिष्यामि नारदेनानुकीर्त्तितम्। उञ्छवृत्ते पुरावृत्तं यज्ञार्थे ब्राह्मणस्य च ॥ २ ॥

नारद उवाच। राष्ट्रे धर्मोत्तरे श्रेष्ठे विदर्भेष्वभवद्द्विजः। उञ्छवृत्तिरृषिः कश्चिद्यज्ञं यष्टुं समादधे ॥ ३ ॥ श्यामाकमशनन्तत्र सूर्य्यपर्णी सुवर्च्चला। तिक्तञ्च विरसं शाकं तपसा स्वादुतां गतम् ॥ ४ ॥ उपगम्य वने सिद्धिं सर्वभूताविहिंसया। अपि मूलफलैरिष्टो यज्ञः स्वर्ग्यः परन्तप ॥ ५ ॥ तस्य भार्य्या व्रतकृशा शुचिः

पुष्करधारिणी। यज्ञपत्नी समानीता सत्येनानुविधीयते ॥ ६ ॥
सा तु शापपरित्रस्ता तत्स्वभावानुवर्त्तिनी। मायूरजीर्णपर्णानां
वस्त्रं तस्याश्च वर्णितम् ॥ ७ ॥ अकामया कृतस्तत्र यज्ञो होत्रनु-
शासनात्। शुक्रस्य पुनराजातिरपध्यानादधर्म्मवित् ॥८॥ तस्मिन्
वने समीपस्थो मृगोऽभूत् सहवासिकः। वचोभिरब्रवीत् सत्यं
त्वयेदं दुष्कृतं कृतम् ॥ ९ ॥ यदि मन्त्राङ्गहीनोऽयं यज्ञो भवति
वै कृतः। मान्मोः प्रक्षिप होत्रे त्वं गच्छ स्वर्गमनिन्दितः ॥ १० ॥
ततस्तु यज्ञे सावित्री साक्षात्तं संन्यमन्त्रयत्। निमन्त्रयन्ती प्रत्युक्ता
न हन्यां सहवासिनम् ॥ ११ ॥ एवमुक्ता निवृत्ता सा प्रविष्टा यज्ञ-
पावकम्। किन्नु दुश्चरितं यज्ञे दिदृक्षुः सा रसातलम् ॥१२॥ स तु
बद्धाञ्जलिं सत्यमयाचद्धरिणः पुनः। सत्येन सम्परिष्वज्य सन्दिष्टो
गम्यतामिति ॥ १३ ॥ ततः स हरिणो गत्वा पदान्यष्टौ न्यवर्त्तत।
साधु हिंसय मां सत्यं हतो यास्यामि सद्गतिम् ॥ १४ ॥ पश्य
ह्यप्सरसो दिव्या मया दत्तेन चक्षुषा। विमानानि विचित्राणि
गन्धर्व्वाणां महात्मनाम् ॥ १५ ॥ ततः स सुचिरं दृष्ट्वा स्पृहालग्नेन
चक्षुषा। मृगमालोक्य हिंसायां स्वर्गवासं समर्थयत् ॥ १६ ॥ स
तु धर्म्मो मृगो भूत्वा बहुवर्षोषितो वने। तस्य निष्कृतिमाधत्त न
ह्यसौ यज्ञसंविधिः ॥ १७ ॥ तस्य तेनानुभावेन मृगहिंसात्मन-
स्तदा। तपो महत् समुच्छिन्नं तस्माद्धिंसा न यज्ञिया ॥ १८ ॥
ततस्तं भगवान् धर्म्मो यज्ञं याजयत स्वयम्। समाधानञ्च भार्य्याया
लेभे स तपसा परम् ॥ १९ ॥ अहिंसा सकलो धर्म्मो हिंसाधर्म-
स्तथाहितः। सत्यन्तेऽहं प्रवक्ष्यामि यो धर्म्मः सत्यवादिनाम् ॥२०॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि यज्ञनिन्दायामेक-
सप्तत्यधिकद्विशततोऽध्यायः ॥ २७१ ॥

---

युधिष्ठिर उवाच। कथं भवति पापात्मा कथं धर्मं करोति वा। केन निर्व्वेदमादत्ते मोक्षं वा केन गच्छति ॥ १ ॥

भीष्म उवाच। विदिताः सर्व्वधर्मास्ते स्थित्यर्थं त्वन्तु पृच्छसि। शृणु मोक्षं सनिर्व्वेदं पापं धर्मञ्च मूलतः ॥ २ ॥ विज्ञानार्थं हि पञ्चानामिच्छापूर्वं प्रवर्त्तते। प्राप्य ताम् जायते कामो द्वेषो वा भरतर्षभ ॥ ३ ॥ ततस्तदर्थं यतते कर्म चारभते महत्। इष्टानां रूपगन्धानामभ्यासञ्च चिकीर्षति ॥ ४ ॥ ततो रागः प्रभवति द्वेषश्च तदनन्तरम्। ततो लोभः प्रभवति मोहश्च तदनन्तरम् ॥ ५ ॥ लोभमोहाभिभूतस्य रागद्वेषान्वितस्य च। न धर्मे जायते बुद्धि-र्व्याजाद्धर्मं करोति च ॥६॥ व्याजेन चरते धर्ममर्थं व्याजेन रोचते। व्याजेन सिध्यमानेषु धनेषु कुरुनन्दन ॥ ७ ॥ तत्रैव कुरुते बुद्धिं ततः पापं चिकीर्षति। सुहृद्भिर्वार्य्यमाणोऽपि पण्डितैश्चापि भारत। उत्तरं न्यायसम्बद्धं ब्रवीति विधिचोदितम् ॥ ८ ॥ अधर्मस्त्रिविध-स्तस्य वर्द्धते रागमोहजः। पापं चिन्तयते चैव प्रब्रवीति करोति च ॥ ९ ॥ तस्याधर्मप्रवृत्तस्य दोषान् पश्यन्ति साधवः। एकशीलाश्च मित्रत्वं भजन्ते पापकर्मिणः ॥ १० ॥ स नेह सुखमाप्नोति कुत एव परत्र वै। एवं भवति पापात्मा धर्मात्मानन्तु मे शृणु ॥ ११ ॥ यथा कुशलधर्मा स कुशलं प्रतिपद्यते। कुशलेनैव धर्मेण गति-मिष्टां प्रपद्यते ॥१२॥ य एतान् प्रज्ञया दोषान् पूर्व्वमेवानुपश्यति। कुशलः सुखदुःखानां साधूंश्चाप्युपसेवते ॥ १३ ॥ तस्य साधु समा-चाराद्भ्यासाच्चैव वर्द्धते। प्रज्ञा धर्मे च रमते धर्मञ्चैवोपजीवति ॥ १४ ॥ सोऽथ धर्मादवाप्तेषु धनेषु कुरुते मनः। तस्यैव सिञ्चते मूलं गुणान् पश्यति यत्र वै ॥ १५ ॥ धर्मात्मा भवति ह्येवं मित्रञ्च लभते शुभम्। स मित्रधनलाभात्तु प्रेत्य चेह च नन्दति ॥ १६ ॥ शब्दे स्पर्शे रसे रूपे तथा गन्धे च भारत। प्रभुत्वं लभते जन्तु-र्धर्मस्यैतत् फलं विदुः ॥ १७ ॥ स तु धर्मफलं लब्ध्वा न हृष्यति

युधिष्ठिर । अनृष्यमाणो निर्व्वेदमादत्ते ज्ञानचक्षुषा ॥ १८ ॥ प्रज्ञा-चक्षुर्यदा कामे रसे गन्धे न रज्यते । शब्दे स्पर्शे तथा रूपे न च भावयते मनः ॥ १९ ॥ विमुच्यते तदा कामान्न च धर्मं विमुञ्चति । धर्म्मत्यागी च यतते दृष्ट्वा लोकं क्षयात्मकम् ॥ २० ॥ ततो मोक्षाय यतते नानुपायादुपायतः । शनैर्निर्व्वेदमादत्ते पापं कर्म्म जहाति च । धर्मात्मा चैव भवति मोक्षञ्च लभते परम् ॥ २१ ॥ एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि । पाप धर्म्मस्तथा मोक्षो निर्व्वेदश्चैव भारत ॥ २२ ॥ तस्माद्धर्मे प्रवर्त्तेथाः सर्व्वावस्थं युधि-ष्ठिर । धर्मेस्थितानां कौन्तेय सिद्धिर्भवति शाश्वती ॥ २३ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि चतुःप्राश्निके
द्विसप्तत्यधिकद्विशततोऽध्यायः ॥ २७२ ॥

---

युधिष्ठिर उवाच । मोक्षः पितामहेनोक्त उपायान्नानुपायतः । तमुपायं यथा न्यायं श्रोतुमिच्छामि भारत ॥ १ ॥

भीष्म उवाच । त्वय्येवैतन्महाप्राज्ञ युक्तं निपुणदर्शनम् । येनोपायेन सर्व्वार्थं नित्यं मृगयसेऽनघ ॥ २ ॥ करणे घटस्य या बुद्धिर्घटोत्पत्तौ न सा मता । एवं धर्माभ्युपायेषु नान्यद्धर्मेषु कार-णम् ॥ ३ ॥ पूर्व्वे समुद्रे यः पन्था न स गच्छति पश्चिमम् । एकः पन्था हि मोक्षस्य तन्मे विस्तरतः शृणु ॥४॥ क्षमया क्रोधमुच्छि-न्द्यात् कामं सङ्कल्पवर्ज्जनात् । सत्त्वसंसेवनाद्धीरो निद्राञ्च छेत्तु-मर्हति ॥ ५ ॥ अप्रमादाद्भयं रक्षेत् श्वासं क्षेत्रज्ञशीलनात् । इच्छां द्वेषञ्च कामञ्च धैर्य्येण विनिवर्त्तयेत् ॥ ६ ॥ भ्रमं सम्मोह-मावर्त्तमभ्यासाद्विनिवर्त्तयेत् । निद्राञ्च प्रतिभाञ्चैव ज्ञानाभ्यासेन तत्त्ववित् ॥ ७ ॥ उपद्रवांस्तथा रोगान् हितजीर्णमिताशनात् । लोभं मोहञ्च सन्तोषाद्विषयांस्तत्त्वदर्शनात् ॥ ८ ॥ अनुक्रोशादध-

र्मञ्च जयेद्धर्मनवेक्षया। आशत्या च जयेदाशामर्थं सङ्गविवर्ज्जनात्
॥ ९ ॥ अनित्यत्वेन च स्नेहं क्षुधां योगेन पण्डितः। कारुण्ये-
नात्मनो मानं तृष्णाञ्च परितोषतः ॥ १० ॥ उत्थानेन जयेत्तन्द्रीं
वितर्कं निश्चयाज्जयेत्। मौनेन बहुभाषञ्च शौर्य्येण च भयं त्यजेत्
॥ ११ ॥ यच्छेद्वाङ्मनसी बुद्ध्या तां यच्छेज्ज्ञानचक्षुषा। ज्ञान-
मात्मावबोधेन यच्छेदात्मानमात्मना ॥ १२ ॥ तदेतदुपशान्तेन
बोद्धव्यं शुचिकर्म्मणा। योगदोषान् समुच्छिद्य पञ्च यान् कवयो
विदुः ॥ १३ ॥ कामं क्रोधञ्च लोभञ्च भयं स्वप्नञ्च पञ्चमम्। परित्यज्य
निषेवेत यतवाग्योगसाधनात् ॥ १४ ॥ ध्यानमध्ययनं दानं सत्यं
ह्रीरार्ज्जवं क्षमा। शौचमाहारतः शुद्धिरिन्द्रियाणाञ्च संयमम्॥१५
एतैर्विवर्द्धते तेजः पाप्मानमुपहन्ति च। सिध्यन्ति चास्य सङ्कल्पा
विज्ञानञ्च प्रवर्त्तते ॥ १६ ॥ धूतपापः स तेजस्वी लघ्वाहारो जिते-
न्द्रियः। कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् ॥ १७ ॥
अमूढ़त्वमसङ्गित्वं कामक्रोधविवर्ज्जनम्। अदैन्यमनुदीर्णत्वमनुद्वेगो-
ऽव्यवस्थितिः ॥ १८ ॥ एष मार्गो हि मोक्षस्य प्रसन्नो विमलः
शुचिः। तथा वाक्कायमनसां नियमः कामतोऽन्यथा ॥ १९ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि मौनाचारानुवर्णने
त्रिसप्तत्यधिकद्विशततोऽध्यायः ॥ २७३ ॥

---

भीष्म उवाच। अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
नारदस्य च संवादं देवलस्यासितस्य च ॥ १ ॥ आसीनं देवलं
वृद्धं बुद्ध्वा बुद्धिमतां वरम्। नारदः परिपप्रच्छ भूतानां प्रभवा-
प्ययम् ॥ २ ॥

नारद उवाच। कुतः सृष्टमिदं विश्वं ब्रह्मन् स्थावरजङ्गमम्।
प्रलये च कमभ्येति तद्भवान् प्रब्रवीतु मे ॥ ३ ॥

असित उवाच। येभ्यः सृजति भूतानि कालो भावप्रचोदितः। महाभूतानि पञ्चेति तान्याहुर्भूतचिन्तकाः॥ ४॥ तेभ्यः सृजति भूतानि काल आत्मप्रचोदितः। एतेभ्यो यः परं ब्रूयादसद्‌ब्रूयादसंशयम्॥ ५॥ विद्धि नारद पञ्चैतान् शाश्वतानचलान् ध्रुवान्। महतस्तेजसो राशीन् कालषष्ठान् स्वभावतः॥ ६॥ आपश्चैवान्तरीक्षञ्च पृथिवी वायुपावकौ। नासीद्धि परमन्तेभ्यो भूतेभ्यो मुक्तसंशयम्॥ ७॥ नोपपत्त्या न वा युक्त्या त्वसद्‌ब्रूयादसंशयम्। वेत्थ तानभिनिर्वृत्तान् षडेते यस्य राशयः॥ ८॥ पञ्चैव तानि कालश्च भावाभावौ च केवलौ। अष्टौ भूतानि भूतानां शाश्वतानि भवात्ययौ॥ ९॥ अभावं यान्ति तेष्वेव तेभ्यश्च प्रभवन्त्यपि। विनष्टोऽपि च तान्येव जन्तुर्भवति पञ्चधा॥ १०॥ तस्य भूमिमयो देहः श्रोत्रमाकाशसम्भवम्। सूर्य्याच्चक्षुरसो वायोरद्भ्यस्तु खलु शोणितम्॥ ११॥ चक्षुषी नासिकाकर्णौ त्वग्‌जिह्वेति च पञ्चमी। इन्द्रियाणीन्द्रियार्थानां ज्ञानानि कवयो विदुः॥ १२॥ दर्शनं श्रवणं घ्राणं स्पर्शनं रसनं तथा। उपपत्त्या गुणान् विद्धि पञ्च पञ्चसु पञ्चधा॥ १३॥ रूपं गन्धो रसः स्पर्शः शब्दश्चैवाथ तद्गुणाः। इन्द्रियैरुपलभ्यन्ते पञ्चधा पञ्च पञ्चभिः॥ १४॥ रूपं गन्धं रसं स्पर्शं शब्दञ्चैवाथ तद्गुणान्। इन्द्रियाणि न बुध्यन्ते क्षेत्रज्ञस्तैस्तु बुध्यते॥ १५॥ चित्तमिन्द्रियसङ्घातात् परन्तस्मात् परं मनः। मनसस्तु परा बुद्धिः क्षेत्रज्ञो बुद्धितः परः॥ १६॥ पूर्वं चेतयते जन्तुरिन्द्रियैर्विषयान् पृथक्। विचार्य्य मनसा पश्चादथ बुद्ध्या व्यवस्यति॥ १७॥ इन्द्रियैरुपलब्धार्थान् बुद्धिमांस्तु व्यवस्यति। चित्तमिन्द्रियसङ्घातं मनो बुद्धिस्तथाष्टमी॥ १८॥ अष्टौ ज्ञानेन्द्रियाण्याहुरेतान्यध्यात्मचिन्तकाः। पाणिपादञ्च पायुश्च मेहनं पञ्चमं मुखम्॥१९॥ इति संशब्द्यमानानि शृणु कर्म्मेन्द्रियाण्यपि। जल्पनाभ्यवहारार्थं मुखमिन्द्रियमुच्यते॥ २०॥ गमनेन्द्रियं तथा

पादौ कर्म्मणः करणे करौ। पायुपस्थं विसर्गार्थमिन्द्रिये तुल्य-
कर्म्मणी ॥ २१ ॥ विसर्गे च पुरीषस्य विसर्गे चापि कामिके। बलं
षष्ठं षड़ेतानि वाचा सम्यग्यथागमम् ॥ २२॥ ज्ञानचेष्टेन्द्रियगुणाः
सर्वे संशब्दिता मया। इन्द्रियाणां स्वकर्मभ्यः श्रमादुपरमो यदा
॥ २३ ॥ भवतीन्द्रियसंत्यागादथ स्वपिति वै नरः। इन्द्रियाणां
व्युपरमे मनोऽव्युपरतं यदि ॥ २४ ॥ सेवते विषयानेव तद्विद्यात्
स्वप्नदर्शनम्। सात्त्विकाश्चैव ये भावास्तथा तामसराजसाः ॥२५॥
कर्मयुक्तान् प्रशंसन्ति सात्त्विकानितरांस्तथा। आनन्दः कर्म्मणां
सिद्धिः प्रतिपत्तिः परा गतिः ॥ २६ ॥ सात्त्विकस्य निमित्तानि
भावान् संश्रयते स्मृतिः। जन्तुष्वेकतमेष्वेवं भावा ये विधिमास्थिताः
॥ २७ ॥ भावयोरीप्सितं नित्यं प्रत्यक्षं गमनन्तयोः। इन्द्रि-
याणि च भावश्च गुणाः सप्तदश स्मृताः ॥ २८ ॥ तेषामष्टादशो
देही यः शरीरे स शाश्वतः। अथ वा सशरीरास्ते गुणाः सर्वे
शरीरिणाम् ॥२९॥ संश्रितास्तद्वियोगे हि सशरीरा न सन्ति ते।
अथ वा सन्निपातोऽयं शरीरं पाञ्चभौतिकम् ॥ ३० ॥ एकश्च दश
चाष्टौ च गुणा सह शरीरिणा। ऊष्मणा सह विंशो वा सङ्घातः
पाञ्चभौतिकः ॥ ३१ ॥ महान् सन्धारयत्येतच्छरीरं वायुना सह।
तस्य प्रभावयुक्तस्य निमित्तं देहभेदने ॥ ३२ ॥ यथैवोत्पद्यते
किञ्चित् पञ्चत्वं गच्छते तथा। पुण्यपापविनाशान्ते पुण्यपापसमी-
रितः। देहं विशति कालेन ततोऽयं कर्मसम्भवम् ॥ ३३ ॥ हित्वा
हित्वा ह्ययं प्रैति देहाद्देहं कृताश्रयः। कालसञ्चोदितः क्षेत्री
विशीर्णाद्वा गृहाद्गृहम् ॥ ३४ ॥ तत्र नैवानुतप्यन्ते प्राज्ञा निश्चित-
निश्चयाः। कृपणास्त्वनुतप्यन्ते जनाः सम्बन्धदर्शिनः ॥ ३५ ॥ न
ह्ययं कस्यचित् कश्चिन्नास्य कश्चन विद्यते। भवत्येको ह्ययं नित्यं
शरीरे सुखदुःखभृत् ॥ ३६ ॥ नैव सञ्जायते जन्तुर्न च जातु
विपद्यते। याति देहमयं भुक्त्वा कदाचित् परमां गतिम् ॥३७॥

पुण्यपापमयं देहं च्चपयन् कर्म्मसङ्क्षयात्। चीणदेहः पुनर्देही ब्रह्मत्वमुपगच्छति ॥ ३८ ॥ पुण्यपापच्चयार्थं हि सांख्यज्ञानं विधीयते। तत्चये ह्यस्य पश्यन्ति ब्रह्मभावे परां गतिम् ॥ ३९ ॥

इति शान्तिपर्व्वणि मोच्चधर्म्मपर्व्वणि नारदासितसंवादे चतुःसप्तत्यधिकद्विशततोऽध्यायः ॥ २७४ ॥

---

युधिष्ठिर उवाच। भ्रातरः पितरः पौत्रा ज्ञातयः सुहृदः सुता। अर्थहेतोर्हताः क्रूरैरस्माभिः पापकर्म्मभिः ॥ १ ॥ येयमर्थोद्भवा तृष्णा कथमेतां पितामह। निवर्त्तयेयं पापानि तृष्णाया कारिता वयम् ॥ २ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। गीतं विदेहराजेन माण्डव्यायानुपृच्छते ॥३॥ सुसुखं वत जीवामि यस्य मे नास्ति किञ्चन। मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन ॥ ४ ॥ अर्थाः खलु समृद्धा हि वाढ़ं दुःखं विजानताम्। असमृद्धास्त्वपि सदा मोहयन्त्यविचच्चणान् ॥ ५ ॥ यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाच्चयसुखस्यैते नार्हतः षोड़शीं कलाम् ॥ ६ ॥ यथैव शृङ्गं गोः काले वर्द्धमानस्य वर्द्धते। तथैव तृष्णा वित्तेन वर्द्धमानेन वर्द्धते ॥ ७ ॥ किञ्चिदेव ममत्वेन यदा भवति कल्पितम्। तदेव परितापाय नाशे सम्पद्यते पुनः ॥ ८ ॥ न कामाननुरुध्येत दुःखं कामेषु वै रतिः। प्राप्यार्थमुपयुञ्जीत धर्म्मं कामान् विवर्ज्जयेत् ॥ ९ ॥ विद्वान् सर्व्वेषु भूतेषु आत्मना सोपमो भवेत्। कृतकृत्यो विशुद्धात्मा सर्वं त्यजति चैव ह ॥१०॥ उभे सत्यानृते त्यक्त्वा शोकानन्दौ प्रियाप्रिये। भयाभये च संत्यज्य संप्रशान्तो निरामयः ॥ ११ ॥ या दुस्त्यजा दुर्मतिभिर्या न जीर्य्यति जीर्य्यतः। योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम्॥१२

चारित्रमात्मनः पश्यंश्चन्द्रशुद्धमनामयम् । धर्मात्मा लभते कीर्त्तिं प्रेत्य चेह यथासुखम् ॥ १३ ॥ राज्ञस्तद्वचनं श्रुत्वा प्रीतिमानभवद्द्विजः । पूजयित्वा च तद्वाक्यं माण्डव्यो मोक्षमाश्रितः ॥१४॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि माण्डव्यजनकसंवादे पञ्चसप्तत्यधिकद्विशततोऽध्यायः ॥ २७५ ॥

---

युधिष्ठिर उवाच । अतिक्रामति कालेऽस्मिन् सर्व्वभूतभयावहे । किं श्रेयः प्रतिपद्येत तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । पितुः पुत्रेण संवादं तन्निबोध युधिष्ठिर ॥ २ ॥ द्विजातेः कस्यचित् पार्थ स्वाध्यायनिरतस्य वै । पुत्रो बभूव मेधावी मेधावी नाम नामतः ॥३॥ सोऽब्रवीत् पितरं पुत्रः स्वाध्यायकरणे रतम् । मोक्षधर्मार्थकुशलो लोकतत्त्वविचक्षणः ॥ ४ ॥

पुत्र उवाच । धीरः किं स्वित्तात कुर्य्यात् प्रजानन् क्षिप्रं ह्यायुर्भ्रश्यति मानवानाम् । पितस्तथाख्याहि यथार्थयोगं ममानुपूर्व्या येन धर्म्मञ्चरेयम् ॥ ५ ॥

पितोवाच । अधीत्य वेदान् ब्रह्मचर्य्येण पुत्र पुत्रानिच्छेत् पावनार्थं पितॄणाम् । अग्नीनाधाय विधिवच्चेष्टयज्ञो वनं प्रविश्याथ मुनिर्बुभूषेत् ॥ ६ ॥

पुत्र उवाच । एवमभ्याहते लोके सर्व्वतः परिवारिते । अमोघासु पतन्तीषु किं धीर इव भाषसे ॥ ७ ॥

पितोवाच । कथमभ्याहतो लोकः केन वा परिवारितः । अमोघाः काः पतन्तीह किं नु भीषयसीव माम् ॥ ८ ॥

पुत्र उवाच । मृत्युनाभ्याहतो लोको जरया परिवारितः । अहोरात्राः पतन्तीमे तच्च कस्मान्न बुध्यसे ॥ ९ ॥ यदाहमेव

जानामि न मृत्युस्तिष्ठतीति च । सोऽहं कथं प्रतीक्षिष्ये ज्ञानेनापिहितश्चरन् ॥१०॥ रात्र्यां रात्र्यां व्यतीतायामायुरल्पतरं यदा । गाधोदके मत्स्य इव सुखं विन्देत कस्तदा ॥ ११ ॥ पुष्पाणीव विचिन्वन्तमन्यत्र गतमानसम् । अनवाप्तेषु कामेषु मृत्युरभ्येति मानवम् ॥ १२ ॥ श्वः कार्य्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् । न हि प्रतीक्षते मृत्युः कृतं वास्य न वा कृतम् ॥ १३ ॥ अद्यैव कुरु यच्छ्रेयो मा त्वां कालोऽत्यगान्महान् । को हि जानाति कस्याद्य मृत्युकालो भविष्यति ॥ १४ ॥ अकृतेष्वेव कार्य्येषु मृत्युर्वै सम्प्रकर्षति । युवैव धर्मशीलः स्यादनिमित्तं हि जीवितम् । कृते धर्मे भवेत् प्रीतिरिह प्रेत्य च शाश्वती ॥ १५ ॥ मोहेन हि समाविष्टः पुत्रदारार्थमुद्यतः । कृत्वा कार्य्यमकार्य्यम्वा तुष्टिमेषां प्रयच्छति ॥ १६ ॥ तं पुत्रपशुसम्पन्नं व्यासक्तमनसं नरम् । सुप्तं व्याघ्रो मृगमिव मृत्युरादाय गच्छति ॥ १७ ॥ संचिन्वानकमेवैनं कामानामवितृप्तकम् । वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥१८॥ इदं कृतमिदं कार्य्यमिदमन्यत् कृताकृतम् । एवमीहासमायुक्तं मृत्युरादाय गच्छति ॥ १९ ॥ कृतानां फलमप्राप्तं कार्य्याणां कर्मसंज्ञितम् । क्षेत्रापणगृहासक्तं मृत्युरादाय गच्छति ॥ २० ॥ दुर्बलं बलवन्तञ्च प्राज्ञं शूरं जड़ं कविम् । अप्राप्तसर्वकामार्थं मृत्युरादाय गच्छति ॥ २१ ॥ मृत्युर्जरा च व्याधिश्च दुःखञ्चानेककारणम् । असंत्याज्यं यदा मर्त्यैः किं स्वस्थ इव तिष्ठसि ॥ २२ ॥ जातमेवान्तकोऽन्ताय जरा चाभ्येति देहिनम् । अनुषक्ता द्वयेनैते भावाः स्थावरजङ्गमाः ॥ २३ ॥ न मृत्युसेनामायान्तीं जातु कश्चित् प्रबाधते । बलात् सत्यमृते लोकं सत्ये ह्यमृतमाश्रितम् ॥ २४ ॥ मृत्योर्वा गृहमेतद्वै या ग्रामे वसतो रतिः । देवानामेष वै गोष्ठो यदरण्यमिति श्रुतिः ॥ २५ ॥ निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः । छित्त्वैनां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥ २६ ॥

यो न हिंसति सत्त्वानि मनोवाक्कर्म्महेतुभिः। जीवितार्थापनयनैः प्राणिभिर्न स बध्यते ॥ २७ ॥ तस्मात् सत्यव्रताचारः सत्ययोगपरायणः। सत्यागमः सदा दान्तः सत्येनैवान्तकं जयेत् ॥ २८ ॥ अमृतञ्चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम्। मृत्युरापद्यते मोहात् सत्येनापद्यतेऽमृतम् ॥ २९ ॥ सोऽहं सत्यमहिंसार्थी कामक्रोधवहिष्कृतः। समाश्रित्य सुखं क्षेमी मृत्युं हास्याम मर्त्त्यवत् ॥३०॥ शान्तियज्ञरतो दान्तो ब्रह्मयज्ञे स्थितो मुनिः। वाङ्मनः कर्मयज्ञश्च भविष्याम्युदगायने ॥ ३१ ॥ पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति। अन्तवद्भिरुत प्राज्ञः क्षत्रयज्ञैः पिशाचवत् ॥३२॥ आत्मन्येवात्मना जात आत्मनिष्ठोऽप्रजः पितः। आत्मयज्ञो भविष्यामि न मां तारयति प्रजा ॥ ३३ ॥ यस्य वाङ्मनसी स्यातां सम्यक्प्रणिहिते सदा। तपस्त्यागश्च योगश्च स तैः स्वर्गमवाप्नुयात् ॥ ३४ ॥ नास्ति विद्यासमं चक्षुर्नास्ति विद्यासमं बलम्। नास्ति रागसमं दुःखं नास्तित्यागसमं सुखम् ॥ ३५ ॥ नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च। शीले स्थितिर्द्दण्डनिधानमार्ज्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥ ३६ ॥ किन्ते धनैर्बान्धवैर्वापि किन्ते किन्ते दारैर्ब्राह्मण यो मरिष्यसि। आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताः पिता च ॥ ३७ ॥

भीष्म उवाच। पुत्रस्यैतद्वचः श्रुत्वा तथाकार्षीत् पिता नृप। तथा त्वमपि वर्त्तस्व सत्यधर्मपरायणः ॥ ३८ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि पितापुत्रसंवादे षट्सप्तत्यधिकद्विशततोऽध्यायः ॥ २७६ ॥

---

युधिष्ठिर उवाच। किं शीलः किं समाचारः किं विद्यः किं परायणः। प्राप्नोति ब्रह्मणः स्थानं यत् परं प्रकृतेर्ध्रुवम् ॥ १ ॥

भीष्म उवाच । मोक्षधर्म्मेषु निरतो लघ्वाहारो जितेन्द्रियः ।
प्राप्नोति परमं स्थानं यत् परं प्रकृतेर्ध्रुवम् ॥ २ ॥ स्वगृहादभि-
निःसृत्य लाभालाभे समो मुनिः । समुपोढ़ेषु कामेषु निरपेक्षः
परिव्रजेत् ॥ ३ ॥ न चक्षुषा न मनसा न वाचा दूषयेदपि । न
प्रत्यक्षं परोक्षं वा दूषणं व्याहरेत् क्वचित् ॥ ४ ॥ न हिंस्यात्
सर्व्वभूतानि मैत्रायणगतश्चरेत् । नेदं जीवितमासाद्य वैरं कुर्वीत
केनचित् ॥ ५ ॥ अतिवादांस्तितिक्षेत नाभिमन्येत कञ्चन । क्रोध्य-
मानः प्रियं ब्रूयादाक्रुष्टः कुशलं वदेत् ॥ ६ ॥ प्रदक्षिणञ्च सव्यञ्च
ग्राममध्येन चाचरेत् । भैक्षचर्य्यामनापन्नो न गच्छेत् पूर्व्वकेतितः
॥ ७ ॥ अवकीर्णः सुगुप्तश्च वाचा न ह्यप्रियम्वदेत् । मृदुः स्या-
दप्रतिक्रूरो विस्रब्धः स्यादकत्थनः ॥८॥ विधूमे न्यस्तमुषले व्यङ्गारे
भुक्तवज्जने । अतीतपात्रसञ्चारे भिक्षां लिप्सेत वै मुनिः ॥ ९ ॥
प्राणयात्रिकमात्रः स्यान्मात्रालाभेष्वनादृतः । अलाभे न विहन्येत
लाभश्चैनं न हर्षयेत् ॥ १० ॥ लाभं साधारणं नेच्छेन्न भुञ्जीताभि-
पूजितः । अभिपूजितलाभं हि जुगुप्सेतैव तादृशः ॥ ११ ॥ न
चान्नदोषान्निन्देत न गुणानभिपूजयेत् । शय्यासने विविक्ते च
नित्यमेवाभिपूजयेत् ॥ १२ ॥ शून्यागारं वृक्षमूलमरण्यमथ वा
गुहाम् । अज्ञातचर्य्यां गत्वान्यां ततोऽन्यत्रैव सम्विशेत् ॥ १३ ॥
अनुरोधविरोधाभ्यां समः स्यादचलो ध्रुवः । सुकृतं दुष्कृतञ्चोभे
नानुरुध्येत कर्म्मणा ॥१४॥ नित्यतृप्तः सुसन्तुष्टः प्रसन्नवदनेन्द्रियः ।
विभीर्जप्यपरो मौनी वैराग्यं समुपाश्रितः ॥१५॥ अभ्यस्तं भौतिकं
पश्यन् भूतानामागतिं गतिम् । निस्पृहः समदर्शी च पक्वापक्वेन
वर्त्तयन् । आत्मना यः प्रशान्तात्मा लघ्वाहारो जितेन्द्रियः ॥१६॥
वाचो वेगं मनसः क्रोधवेगं हिंसावेगमुदरोपस्थवेगम् । एतान्वेगा-
न्विषहेदै तपस्वी निन्दा चास्य हृदयं नोपहन्यात् ॥१७॥ मध्यस्थ
एव तिष्ठेत प्रशंसानिन्दयोः समः । एतत् पवित्रं परमं परिव्राजक

आश्रमे ॥१८॥ महात्मा सर्वतो दान्तः सर्वत्रैवानपाश्रितः । अपू
दारकः सौम्यो ह्यनिकेत. समाहितः ॥ १९ ॥ वानप्रस्थब्रह्मस्याश्र
न संसृज्येत कर्हिचित् । अज्ञातलिप्सं लिप्सेत न चैनं हर्ष आवि
शेत् ॥ २० ॥ विजानतां मोक्ष एष श्रमः स्यादविजानताम् । मोक्ष-
यानमिदं कृत्स्नं विदुषां हारितोऽब्रवीत् ॥ २१ ॥ अभयं सर्व-
भूतेभ्यो दत्त्वा यः प्रव्रजेद्गृहात् । लोकास्तेजोमयास्तस्य तथा-
नन्त्याय कल्पते ॥ २२ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि हारीतगीतायां
सप्तसप्तत्यधिकद्विशततोऽध्यायः ॥ २७७ ॥

---

युधिष्ठिर उवाच । धन्या धन्या इति जनाः सर्वेऽस्मान् प्रवद-
न्त्युत । न दुःखिततरः कश्चित् पुमानस्माभिरस्ति ह ॥ १ ॥ लोक-
सम्भावितैर्दुःखं यत् प्राप्तं कुरुसत्तम । प्राप्य जातिं मनुष्येषु देवै-
रपि पितामह ॥ २ ॥ कदा वयं करिष्यामः सन्न्यासं दुःखसंज्ञ-
कम् । दुःखमेतच्छरीराणां धारणं कुरुसत्तम ॥ ३ ॥ विमुक्ताः
सप्तदशभिर्हेतुभूतैश्च पञ्चभिः । इन्द्रियार्थैर्गुणैश्चैव अष्टाभिश्च पिता-
मह ॥ ४ ॥ न गच्छन्ति पुनर्भावं मुनयः संशितव्रताः । कदा वयं
गमिष्यामो राज्यं हित्वा परन्तप ॥ ५ ॥

भीष्म उवाच । नास्त्यनन्तं महाराज सर्वं संख्यानगोचरम् ।
पुनर्भावोऽपि विख्यातो नास्ति किञ्चिदिहाचलम् ॥ ६ ॥ न चापि
मन्यसे राजन्नेष दोषः प्रसङ्गतः । उद्योगादेव धर्मज्ञाः कालेनैव
गमिष्यथ ॥ ७ ॥ नेशोऽयं सततं देही नृपते पुण्यपापयोः । तत
एव समुत्थेन तमसा रुध्यतेऽपि च ॥ ८ ॥ यथाञ्जनमयो वायुः
पुनर्मानःशिलं रजः । अनुप्रविश्य तद्वर्णो दृश्यते रञ्जयन्दिशः ॥९॥
तथा कर्मफलैर्देही रञ्जितस्तमसा वृतः । विवर्णो वर्णमाश्रित्य

देहेषु परिवर्त्तते ॥ १० ॥ ज्ञानेन हि यदा जन्तुरज्ञानप्रभवं तमः । व्यपोहति तदा ब्रह्म प्रकाशति सनातनम् ॥११॥ अयत्नसाध्यं मुनयो वदन्ति ये ये चापि मुक्तास्त उपासितव्याः । त्वया च लोकेन च सामरेण तस्मान्न शाम्यन्ति महर्षिसङ्घाः ॥ १२ ॥ अस्मिन्नर्थे पुरा गीतं शृणुष्वैकमना नृप । यथा दैत्येन वृत्रेण भ्रष्टैश्वर्य्येण चेष्टितम् ॥१३॥ निर्ज्जितेनासहायेन हृतराज्येन भारत । अशोचता शत्रुमध्ये बुद्धिमास्थाय केवलाम् ॥ १४ ॥ भ्रष्टैश्वर्य्यं पुरा वृत्रमुशना वाक्यमब्रवीत् । कच्चित् पराजितस्याद्य न व्यथा तेऽस्ति दानव ॥ १५ ॥

वृत्र उवाच । सत्येन तपसा चैव विदित्वा संशयं ह्यहम् । न शोचामि न हृष्यामि भूतानामागतिं गतिम् ॥ १६ ॥ कालसञ्चोदिता जीवा मज्जन्ते नरकेऽवशाः । परितुष्टानि सर्व्वाणि दिव्यान्याहुर्म्मनीषिणः ॥ १७ ॥ क्षपयित्वा तु तं कालं गणितं कालचोदिताः । सविशेषेण कालेन सम्भवन्ति पुनः पुनः ॥१८॥ तिर्य्यग्योनिसहस्राणि गत्वा नरकमेव च । निर्गच्छन्त्यवशा जीवाः कामबन्धनबन्धनाः ॥ १९ ॥ एवं संसरमाणानि जीवान्यहमदृष्टवान् । यथा कर्म्म तथा लाभ इति शास्त्रनिदर्शनम् ॥२०॥ तिर्य्यग्गच्छन्ति नरकं मानुष्यं दैवमेव च । सुखदुःखे प्रियद्वेष्ये चरित्वा पूर्व्वमेव ह । कृतान्तविधिसंयुक्तः सर्व्वलोकः प्रपद्यते ॥ २१ ॥ गतं गच्छन्ति चाध्वानं सर्व्वभूतानि सर्व्वदा । कालसंख्यानसंख्यातं सृष्टिस्थितिपरायणम् ॥२२॥ तं भाषमाणं भगवानुशना प्रत्यभाषत । धीमान् दुष्टप्रलापांस्त्वं तात कस्मात् प्रभाषसे ॥ २३ ॥

वृत्र उवाच । प्रत्यक्षमेतद्भवतस्तथान्येषां मनीषिणाम् । मया यज्जयलुब्धेन पुरा तप्तं महत्तपः ॥ २४ ॥ गन्धानादाय भूतानां रसांश्च विविधानपि । अवर्द्धं त्रीन् समाक्रम्य लोकान् वै स्वेन तेजसा ॥२५॥ ज्वालामालापरिक्षिप्तो वैहायसचरस्तथा । अजेयः सर्व्वभूतानामासन्नित्यमपेतभीः ॥ २६ ॥ ऐश्वर्य्यं तपसा प्राप्तं भ्रष्टं

तच्च स्वकर्मभिः । इतिमास्थाय भगवन्न शोचामि ततस्त्वहम् ॥२७॥ युयुत्सुना महेन्द्रेण पुरा सार्द्धं महात्मना । ततो मे भगवान् दृष्टो हरिर्नारायणः प्रभुः ॥ २८ ॥ वैकुण्ठः पुरुषोऽनन्तः शुक्लो विष्णुः सनातनः । मुञ्जकेशो हरिश्मश्रुः सर्वभूतपितामहः ॥ २९ ॥ नूनन्तु तस्य तपसः सावशेषमिहास्ति वै । यदहं प्रष्टुमिच्छामि भगवन् कर्मणः फलम् ॥ ३० ॥ ऐश्वर्य्यं वै महद्ब्रह्म वर्णे कस्मिन् प्रतिष्ठितम् । निवर्त्तते चापि पुनः कथमैश्वर्य्यमुत्तमम् ॥ ३१ ॥ कस्माद्भूतानि जीवन्ति प्रवर्त्तन्ते तथा पुनः । किं वा फलं परं प्राप्य जीवस्तिष्ठति शाश्वतः ॥ ३२ ॥ केन वा कर्मणा शक्यमथ ज्ञानेन केन वा । तदवाप्तुं फलं विप्र तन्मे व्याख्यातुमर्हसि ॥३३॥ इतीदमुक्तः स मुनिस्तदानीं प्रत्याह यत्तच्छृणु राजसिंह । मयोच्यमानं पुरुषर्षभ त्वमनन्यचित्तः सह सोदरीयैः ॥ ३४ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि वृत्रगीतासु
अष्टसप्तत्यधिकद्विशततोऽध्यायः ॥ २७८ ॥

---

उशनोवाच । नमस्तस्मै भगवते देवाय प्रभविष्णवे । यस्य पृथ्वीतलं तात साकाशं बाहुगोचरम् ॥ १ ॥ मूर्द्धा यस्य त्वनन्तञ्च स्थानं दानवसत्तम । तस्याहं ते प्रवक्ष्यामि विष्णोर्माहात्म्यमुत्तमम् ॥ २ ॥ तयोः स वदतोरेवमाजगाम महामुनिः । सनत्कुमारो धर्म्मात्मा संशयच्छेदनाय वै ॥ ३ ॥ स पूजितोऽसुरेन्द्रेण मुनिनोशनसा तथा । निषसादासने राजन् महार्हे मुनिपुङ्गवः ॥ ४ ॥ तमासीनं महाप्राज्ञमुशना वाक्यमब्रवीत् । ब्रूह्यस्मै दानवेन्द्राय विष्णोर्माहात्म्यमुत्तमम् ॥ ५ ॥ सनत्कुमारस्तु ततः श्रुत्वा प्राह वचोऽर्थवत् । विष्णोर्माहात्म्यसंयुक्तं दानवेन्द्राय धीमते ॥ ६ ॥ शृणु सर्वमिदं दैत्य विष्णोर्माहात्म्यमुत्तमम् । विष्णौ जगत् स्थितं

सर्वमिति विद्धि परन्तप ॥ ७ ॥ सृजत्येष महाबाहो भूतग्रामं
चराचरम् । एष चाक्षिप्यते काले काले विसृज्यते पुनः ॥ ८ ॥
यस्मिन् गच्छन्ति विलयमस्माच्च प्रभवन्त्युत । नैष ज्ञानवता शक्य-
स्तपसा नैव चेज्यया । सम्प्राप्तुमिन्द्रियाणान्तु संयमे नैव शक्यते
॥ ९ ॥ बाह्ये चाभ्यन्तरे चैव कर्मणोर्मनसि स्थितः । निर्मली-
कुरुते बुद्ध्या सोऽमुत्रानन्त्यमश्नुते ॥ १० ॥ यथा हिरण्यकर्त्ता वै
रूप्यमग्नौ विशोधयेत् । बहुशोऽतिप्रयत्नेन महतात्मकृतेन ह ॥११॥
तद्वज्जातिशतैर्जीवः शुध्यतेऽनेन कर्मणा । यत्नेन महता चैवाप्येक-
जातौ विशुध्यते ॥ १२ ॥ लीलयाल्पं यथा गात्रात् प्रमृज्यादात्मनो
रजः । बहुयत्नेन महता दोषनिर्हरणन्तथा ॥१३॥ यथा चाल्पेन
माल्येन वासितं तिलसर्षपम् । न मुञ्चति स्वकं गन्धं तद्वत् सूक्ष्मस्य
दर्शनम् ॥ १४ ॥ तदेव बहुभिर्माल्यैर्वास्यमानं पुनः पुनः । विसृ-
जति स्वकं गन्धं माल्यगन्धे च तिष्ठति ॥ १५ ॥ एवं जातिशतैर्युक्तो
गुणैरेव प्रसङ्गिषु । बुद्ध्या निवर्त्तते दोषो यत्नेनाभ्यासजेन च ॥१६॥
कर्मणा स्वनुरक्तानि विरक्तानि च दानव । यथा कर्मविशेषांश्च
प्राप्नुवन्ति तथा शृणु ॥ १७ ॥ यथावत् सम्प्रवर्त्तन्ते यस्मिंस्तिष्ठन्ति
वा विभो । तत्तेऽनुपूर्व्या व्याख्यास्ये तदिहैकमनाः शृणु ॥ १८ ॥
अनादिनिधनः श्रीमान् हरिर्नारायणः प्रभुः । स वै सृजति भूतानि
स्थावराणि चराणि च ॥ १९ ॥ स वै सर्वेषु भूतेषु क्षरश्चाक्षर एव
च । एकादशविकारात्मा जगत् पिबति रश्मिभिः ॥ २० ॥ पादौ
तस्य महीं विद्धि मूर्द्धानं दिवमित्युत । बाहवस्तु दिशो दैत्य
श्रोत्रमाकाशमेव च ॥ २१ ॥ तस्य तेजोमयः सूर्य्यो मनश्चन्द्रमसि
स्थितम् । बुद्धिर्ज्ञानगता नित्यं रसस्त्वप्सु प्रतिष्ठितः ॥ २२ ॥
भ्रुवोरनन्तरास्तस्य ग्रहा दानवसत्तम । नक्षत्रचक्रं नेत्राभ्यां
पादयोर्भूश्च दानव ॥ २३ ॥ रजस्तमश्च सत्त्वञ्च विद्धि नारायणा-
त्मकम् । सोऽश्रमाणां फलं तात कर्मणस्तत् फलं विदुः ॥ २४ ॥

अकर्मणः फलञ्चैव स एव परमव्ययः । छन्दांसि यस्य रोमाणि
ह्यक्षरञ्च सरस्वती ॥ २५ ॥ बह्वाश्रयो बहुमुखो धर्मो हृदि समा-
श्रितः । स ब्रह्म परमो धर्मस्तपश्च सदसच्च सः ॥ २६ ॥ श्रुति-
शास्त्रग्रहोपेतः षोड़शर्त्विंक्क्रतुश्च सः । पितामहश्च विष्णुश्च सोऽ-
श्विनौ स पुरन्दरः ॥ २७ ॥ मित्रोऽथ वरुणश्चैव यमोऽथ धनद-
स्तथा । ते पृथग्दर्शनास्तस्य संविदन्ति तथैकताम् । एकस्य विद्धि
देवस्य सर्वं जगदिदं वशे ॥ २८ ॥ नानाभूतस्य दैत्येन्द्र तस्यैकत्वं
वदत्ययम् । जन्तुः पश्यति विज्ञानात्ततो ब्रह्म प्रकाशते ॥ २९ ॥
संहारविक्षेपसहस्रकोटीस्तिष्ठन्ति जीवाः प्रचरन्ति चान्ये । प्रजा-
विसर्गस्य च पारिमाख्यं वापीसहस्राणि बहूनि दैत्य ॥३०॥ वाप्यः
पुनर्योजनविस्तृतास्ताः क्रोशञ्च गम्भीरतयावगाढ़ाः । अयामतः
पञ्चशताश्च सर्वाः प्रत्येकशो योजनतः प्रवृद्धाः ॥ ३१ ॥ वाप्या जलं
क्षिप्यति बालकोट्या त्वह्ना सकृच्चाप्यथ न द्वितीयम् । तासां क्षये
विद्धि परं विसर्गं संहारमेकञ्च तथा प्रजानाम् ॥ ३२ ॥ षड्जीव-
वर्णाः परमं प्रमाणं कृष्णो धूम्रो नीलमथास्य मध्यम् । रक्तं पुनः
सह्यतरं सुखन्तु हारिद्रवर्णं सुसुखञ्च शुक्लम् ॥ ३३ ॥ परन्तु शुक्लं
विमलं विशोकं गतक्लमं सिध्यति दानवेन्द्र । गत्वा तु योनिप्रभ-
वानि दैत्य सहस्रशः सिद्धिमुपैति जीवः ॥ ३४ ॥ गतिञ्च यां दर्शन-
माह देवो गत्वा शुभं दर्शनमेव चापि । गतिः पुनर्वर्णकृताः प्रजानां
वर्णस्तथा कालकृतोऽसुरेन्द्र ॥ ३५ ॥ शतं सहस्राणि चतुर्दशेह
परा गतिर्जीवगुणस्य दैत्य । आरोहणान्तत् कृतमेव विद्धि स्थान-
न्तथा निःसरणञ्च तेषाम् ॥ ३६ ॥ कृष्णस्य वर्णस्य गतिर्निकृष्टा स
सज्जते नरके पच्यमानः । स्थानन्तथा दुर्गतिभिस्तु तस्य प्रजा-
विसर्गान् सुबहून् वदन्ति ॥ ३७ ॥ शतं सहस्राणि ततश्चरित्वा
प्राप्नोति वर्णं हरितन्तु पश्चात् । स चैव तस्मिन्निव सत्यनीशो युग-
क्षये तपसा संवृतात्मा ॥ ३८ ॥ स वै यदा सत्त्वगुणेन युक्तस्तमो

व्यपोहन् घटते स्वबुद्ध्या। स लोहितं वर्णमुपैति नीलान्मनुष्य-
लोके परिवर्त्तते च ॥ ३९ ॥ स तत्र संहारविसर्गमेकं स्वधर्मजै-
र्बन्धनैः क्लिश्यमानः। ततः स हारिद्रमुपैति वर्णं संहारविक्षेपशते
व्यतीते ॥ ४० ॥ हारिद्रवर्णस्तु प्रजाविसर्गात् सहस्रशस्तिष्ठति
सञ्चरन् वै। अभिप्रयुक्तो निरये च दैत्य ततः सहस्राणि दशा-
पराणि ॥ ४१ ॥ गतीः सहस्राणि च पञ्च तस्य चत्वारि सम्वर्त्त-
कृतानि चैव। विमुक्तमेनं निरयाच्च विद्धि सर्व्वेषु चान्येषु च सम्भ-
वेषु ॥ ४२ ॥ स देवलोके विहरत्यभीक्ष्णं ततश्च्युतो मानुषता-
मुपैति। संहारविक्षेपशतानि चाष्टौ मर्त्त्येषु तिष्ठत्यमृतत्वमेति ॥४३॥
सोऽस्मादथ भ्रश्यति कालयोगात् कृष्णे तले तिष्ठति सर्व्वकष्टे। यथा
त्वयं सिध्यति जीवलोकस्तत्तेऽभिधास्याम्यसुरप्रवीर ॥४४॥ दैवानि
सव्यूहशतानि सप्त रक्तो हरिद्रोऽथ तथैव शुक्लः। संश्रित्य संधा-
वति शुक्लमेतमष्टावरानर्च्चतमान् स लोकान् ॥ ४५ ॥ अष्टौ च
षष्टिञ्च शतानि यानि मनोविरुद्धानि महाद्युतीनाम्। शुक्लस्य
वर्णस्य परा गतिर्या त्रीण्येव रुद्धानि महानुभाव ॥ ४६ ॥ संहार-
विक्षेपमनिष्टमेकं चत्वारि चान्यानि वसत्यनीशः। षष्ठस्य वर्णस्य
परा गतिर्या सिद्धा विसिद्धस्य गतक्लमस्य ॥ ४७ ॥ सप्तोत्तरन्तत्र
वसत्यनीशः संहारविक्षेपशतं सशेषम्। तस्मादुपावृत्य मनुष्यलोके
ततो महान्मानुषतामुपैति ॥ ४८ ॥ तस्मादुपावृत्य ततः क्रमेण
सोऽग्रेण सन्तिष्ठति भूतसर्गम्। स सप्तकृत्वश्च परैति लोकान् संहार-
विक्षेपकृतप्रभावः ॥ ४९ ॥ सप्तैव संहारमुपप्लवानि सम्भाव्य सन्ति-
ष्ठति जीवलोके। ततोऽव्ययं स्थानमनन्तमेति देवस्य विष्णोरथ
ब्रह्मणश्च। शेषस्य चैवाथ नरस्य चैव देवस्य विष्णोः परमस्य चैव
॥ ५० ॥ संहारकाले परिदग्धकाया ब्रह्माणमायान्ति सदा प्रजा
हि। चेष्टात्मनो देवगणाश्च सर्वे ये ब्रह्मलोकादपरा स्म तेऽपि ॥५१॥
प्रजाविसर्गन्तु सशेषकालं स्थानानि स्वान्येव सरन्ति जीवाः। निः-

शेषतस्तत्पदं यान्ति चान्ते सर्वे देवा ये सदृशा मनुष्याः ॥ ५२ ॥ ये तु च्युताः सिद्धलोकात् क्रमेण तेषां गतिं यान्ति यथानुपूर्व्या। जीवाः परे तद्बलतुल्यरूपाः स्वं स्वं विधिं यान्ति विपर्य्ययेण ॥५३॥ स यावदेवास्ति सशेषभुक् ते प्रजाश्च देव्यौ च तथैव शुक्ले। तावत्तदङ्गेषु विशुद्धभावः संयम्य पञ्चेन्द्रियरूपमेतत् ॥ ५४ ॥ शुद्धां गतिं तां परमां परैति शुद्धेन नित्यं मनसा विचिन्वन्। ततोऽव्ययं स्थानमुपैति ब्रह्म दुष्प्रापमभ्येति स शाश्वतं वै। इत्येतदाख्यातमहीनसत्त्व नारायणस्येह बलं मया ते ॥ ५५ ॥

वृत्र उवाच। एवं गते मे न विषादोऽस्ति कश्चित् सम्यक् च पश्यामि वचस्तथैतत्। श्रुत्वा तु ते वाचमदीनसत्त्व विकल्मषोऽस्म्यद्य तथा विपाप्मा ॥ ५६ ॥ प्रवृत्तमेतद्भगवन्महर्षे महाद्युतेश्चक्रमनन्तवीर्य्यम्। विष्णोरनन्तस्य सनातनन्तत् स्थानं सर्गा यत्र सर्वे प्रवृत्ताः। स वै महात्मा पुरुषोत्तमो वै तस्मिन् जगत् सर्वमिदं प्रतिष्ठितम् ॥ ५७ ॥

भीष्म उवाच। एवमुक्त्वा स कौन्तेय वृत्रः प्राणानवासृजत्। योजयित्वा तथात्मानं परं स्थानमवाप्तवान् ॥ ५८ ॥

युधिष्ठिर उवाच। अयं स भगवान्देवः पितामह जनार्द्दनः। सनत्कुमारो वृत्राय यत्तदाख्यातवान् पुरा ॥ ५९ ॥

भीष्म उवाच। मूलस्थायी महादेवो भगवान् स्वेन तेजसा। तत्स्थः सृजति तान् भावान्नानारूपान्महामनाः ॥ ६० ॥ तुरीयार्द्धेन तस्येमं विद्धि केशवमच्युतम्। तुरीयार्द्धेन लोकांस्त्रीन् भावयत्येव बुद्धिमान् ॥ ६१ ॥ अर्वाक् स्थितस्तु यः स्थायी कल्पान्ते परिवर्त्तते। स शेते भगवानप्सु योऽसावतिबलः प्रभुः। तान् विधाता प्रसन्नात्मा लोकांश्चरति शाश्वतान् ॥ ६२ ॥ सर्वाण्यशून्यानि करोत्यनन्तः सनातनः सञ्चरते च लोकान्। स चानिरुद्धः सृजते महात्मा तत्स्थं जगत् सर्वमिदं विचित्रम् ॥ ६३ ॥

युधिष्ठिर उवाच। वृत्रेण परमार्थज्ञ दृष्टा मन्येऽात्मनो गतिः।
शुभा तस्मात् स सुखितो न शोचति पितामह॥ ६४॥ शुक्लः शुक्ला-
भिजातीयः साध्यो नावर्त्ततेऽनघ। तिर्य्यग्गतेश्च निर्मुक्तो निरयाच्च
पितामह॥ ६५॥ हारिद्रवर्णे रक्ते वा वर्त्तमानस्तु पार्थिव।
तिर्य्यगेवानुपश्येत कर्म्मभिस्तामसैर्वृतः॥ ६६॥ वयन्तु भृशमापन्ना
रक्ता दुःखसुखेऽसुखे। कां गतिं प्रतिपत्स्यामो नीलां कृष्णाधमा-
मथ॥ ६७॥

भीष्म उवाच। शुद्धाभिजनसम्पन्नाः पाण्डवाः संशितव्रताः।
विहृत्य देवलोकेषु पुनर्मानुषमेष्यथ॥ ६८॥ प्रजाविसर्गं च सुखेन
काले प्रत्येत्य देवेषु सुखानि भुक्त्वा। सुखेन संयास्यथ सिद्धसंख्यां
मा वो भयं भूद्विमलाः स्थ सर्व्वे॥ ६९॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वृत्रगीतासु एको-
नाशीत्यधिकद्विशतोऽध्यायः॥ २७९॥

---

युधिष्ठिर उवाच। अहो धर्म्मिष्ठता तात वृत्रस्यामिततेजसः।
यस्य विज्ञानमतुलं विष्णौ भक्तिश्च तादृशी॥ १॥ दुर्विज्ञेयं पद-
न्तात विष्णोरमिततेजसः। कथं वा राजशार्दूल पदन्तु ज्ञात-
वानसौ॥ २॥ भवता कथितं ह्येतत् श्रद्दधे चाहमच्युतम्। भूयस्तु
मे समुत्पन्ना बुद्धिरव्यक्तदर्शनात्॥ ३॥ कथं विनिहतो वृत्रः
शक्रेण पुरुषर्षभ। धर्म्मिष्ठो विष्णुभक्तश्च तत्त्वज्ञश्च परान्वयी॥ ४॥
एतन्मे संशयं ब्रूहि पृच्छते भरतर्षभ। वृत्रस्तु राजशार्दूल यथा
शक्रेण निर्ज्जितः॥ ५॥ यथा चैवाभवद्युद्धं तच्चाचक्ष्व पितामह।
विस्तरेण महाबाहो परं कौतूहलं हि मे॥ ६॥

भीष्म उवाच। रथेनेन्द्रः प्रयातो वै सार्द्धं देवगणैः पुरा।
ददर्शाथागतो वृत्रं धिष्ठितं पर्व्वतोपमम्॥ ७॥ योजनानां शता-

न्यूढं पञ्चोच्छ्रितमरिन्दम। शतानि विस्तरेणाथ त्रीण्येवाभ्यधिकानि वै॥ ८॥ तत् प्रेच्य तादृशं रूपं त्रैलोक्येनापि दुर्जयम्। वृत्रस्य देवाः संत्रस्ता न शान्तिमुपलेभिरे॥ ९॥ शक्रस्य तु तदा राजन्नुरुस्तम्भो व्यजायत। भयाद्वृत्रस्य सहसा दृष्ट्वा तद्रूपमुत्तमम्॥ १०॥ ततो नादः समभवद्वादित्राणाञ्च निःस्वनः। देवासुराणां सर्वेषां तस्मिन् युद्धे ह्युपस्थिते॥ ११॥ अथ वृत्रस्य कौरव्य दृष्ट्वा शक्रमवस्थितम्। न सम्भ्रमो न भीः काचिदास्था वा समजायत॥ १२॥ ततः समभवद्युद्धं त्रैलोक्यस्य भयङ्करम्। शक्रस्य च सुरेन्द्रस्य वृत्रस्य च महात्मनः॥ १३॥ असिभिः पट्टिशैः शूलैः शक्तितोमरमुद्गरैः। शिलाभिर्विविधाभिश्च कार्मुकैश्च महास्वनैः॥ १४॥ शस्त्रैश्च विविधैर्दिव्यैः पावकोल्काभिरेव च। देवासुरैस्ततः सैन्यैः सर्वमासीत् समाकुलम्॥ १५॥ पितामहपुरोगाश्च सर्वे देवगणास्तथा। ऋषयश्च महाभागास्तद्युद्धं द्रष्टुमागमन्॥ १६॥ विमानाग्र्यैर्महाराज सिद्धाश्च भरतर्षभ। गन्धर्वाश्च विमानाग्र्यैरप्सरोभिः समागमन्॥ १७॥ ततोऽन्तरीक्षमावृत्य वृत्रो धर्मभृताम्वरः। अश्मवर्षेण देवेन्द्रं समाकिरदतिद्रुतम्॥ १८॥ ततो देवगणाः क्रुद्धाः सर्वतः शरवृष्टिभिः। अश्मवर्षमपोहन्त वृत्रप्रेरितमाहवे॥ १९॥ वृत्रस्तु कुरुशार्दूल महामायो महाबलः। मोहयामास देवेन्द्रं मायायुद्धेन सर्वशः॥ २०॥ तस्य वृत्रार्द्दितस्याथ मोह आसीच्छतक्रतोः। रथन्तरेण तं तत्र वशिष्ठः समबोधयत्॥ २१॥

वशिष्ठ उवाच। देवश्रेष्ठोऽसि देवेन्द्र दैत्यासुरनिवर्हण। त्रैलोक्यबलसंयुक्तः कस्माच्छक्र विषीदसि॥ २२॥ एष ब्रह्मा च विष्णुश्च शिवश्चैव जगत्पतिः। सोमश्च भगवान्देवः सर्वे च परमर्षयः॥ २३॥ कामार्षीः कश्मलं शक्र कश्चिदेवेतरो यथा। आर्य्यां युद्धे मतिं कृत्वा जहि शत्रून् सुराधिप॥२४॥ एष लोकगुरुस्त्र्यक्षः

सर्वलोकनमस्कृतः । निरीक्षते त्वां भगवांस्त्यज मोहं सुराधिप ॥ २५ ॥ एते ब्रह्मर्षयश्चैव बृहस्पतिपुरोगमाः । स्तवेन शक्र दिव्येन स्तुवन्ति त्वां जयाय वै ॥ २६ ॥

भीष्म उवाच । एवं सम्बोध्यमानस्य वशिष्ठेन महात्मना । अतीव वासवस्यासीद्बलमुत्तमतेजसः ॥ २७ ॥ ततो बुद्धिमुपागम्य भगवान् पाकशासनः । योगेन महता युक्तस्तां मायां व्यपकर्षत ॥ २८ ॥ ततोऽङ्गिरसुतः श्रीमांस्ते चैव सुमहर्षयः । दृष्ट्वा वृत्रस्य विक्रान्तमुपागम्य महेश्वरम् । ऊचुर्वृत्रविनाशार्थं लोकानां हित-काम्यया ॥ २९ ॥ ततो भगवतस्तेजो ज्वरो भूत्वा जगत्पतेः । समाविशत्तदा रौद्रो वृत्रं दैत्यपतिं तदा ॥ ३० ॥ विष्णुश्च भग-वान्देवः सर्वलोकाभिपूजितः । ऐन्द्रं समाविशद्वज्रं लोकसंरक्षणे रतः ॥ ३१ ॥ ततो बृहस्पतिर्धीमानुपागम्य शतक्रतुम् । वशिष्ठश्च महातेजाः सर्वे च परमर्षयः ॥ ३२ ॥ ते समासाद्य वरदं वासवं लोकपूजितम् । ऊचुरेकाग्रमनसो जहि वृत्रमिति प्रभो ॥ ३३ ॥

महेश्वर उवाच । एष वृत्रो महाञ्छक्र बलेन महता वृतः । विश्वात्मा सर्वगश्चैव बहुमायश्च विश्रुतः ॥ ३४ ॥ तदेनमसुरश्रेष्ठं त्रैलोक्येनापि दुर्जयम् । जहि त्वं योगमास्थाय मावमंस्थाः सुरे-श्वर ॥ ३५ ॥ अनेन हि तपस्तप्तं बलार्थममराधिप । षष्टिं वर्ष सहस्राणि ब्रह्मा चास्मै वरं ददौ ॥ ३६ ॥ महत्त्वं योगिनाञ्चैव महामायत्वमेव च । महाबलत्वञ्च तथा तेजश्चाग्र्यं सुरेश्वर ॥३७॥ एतत्त्वां मामकं तेजः समाविशति वासव । व्यग्रमेनं त्वमप्येनं वज्रेण जहि दानवम् ॥ ३८ ॥

शक्र उवाच । भगवंस्त्वत्प्रसादेन दितिजं सुदुरासदम् । वज्रेण निहनिष्यामि पश्यतस्ते सुरर्षभ ॥ ३९ ॥

भीष्म उवाच । आविश्यमाने दैत्ये तु ज्वरेणाथ महासुरे । देवतानामृषीणाञ्च हर्षान्नादो महानभूत् ॥ ४० ॥ ततो दुन्दुभय-

श्चैव शङ्खाश्च सुमहास्वनाः । मुरजा डिण्डिमाश्चैव प्रावाद्यन्त सहस्रशः ॥ ४१ ॥ असुराणान्तु सर्वेषां स्मृतिलोपो महानभूत । मायानाशश्च बलवान् क्षणेन समपद्यत ॥ ४२ ॥ तथाविष्टमथोज्ञाला ऋषयो देवतास्तथा । स्तुवन्तः शक्रमीशानं तथा प्रचोदयन्नपि ॥ ४३ ॥ रथस्थस्य हि शक्रस्य युद्धकाले महात्मनः । ऋषिभिः स्तूयमानस्य रूपमासीत् सुदुर्दृशम् ॥ ४४ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि वृत्रवधे
अशीत्यधिकद्विशततोऽध्यायः ॥ २८० ॥

---

भीष्म उवाच । वृत्रस्य तु महाराज ज्वराविष्टस्य सर्वशः । अभवन् यानि लिङ्गानि शरीरे तानि मे शृणु ॥ १ ॥ ज्वलितास्योऽभवद्घोरो वैवर्ण्यञ्चागमत्परम् । गात्रकम्पश्च सुमहान् श्वासश्चाप्यभवन्महान् । रोमहर्षश्च तीव्रोऽभून्निश्वासश्च महान्नृप ॥ २ ॥ शिवा चाशिवसङ्काशा तस्य वक्त्रात् सुदारुणा । निष्पपात महाघोरा स्मृतिः सा तस्य भारत । उल्काश्च ज्वलितास्तस्य दीप्ताः पार्श्वे प्रपेदिरे ॥ ३ ॥ गृध्राः कङ्का बलाकाश्च वाचोऽमुञ्चन् सुदारुणाः । वृत्रस्योपरि संहृष्टाश्चक्रवत् परिबभ्रमुः ॥ ४ ॥ ततस्तं रथमास्थाय देवाप्यायित आहवे । वज्रोद्यतकरः शक्रस्तं दैत्यं समवैक्षत ॥ ५ ॥ अमानुषमथो नादं स मुमोच महासुरः । वजृम्भश्चैव राजेन्द्र तीव्रज्वरसमन्वितः ॥ ६ ॥ अथास्य जृम्भतः शक्रस्ततो वज्रमवासृजत् । स वज्रः सुमहातेजा कालाग्निसदृशोपमः । क्षिप्रमेव महाकायं वृत्रं दैत्यमपातयत् ॥ ७ ॥ ततो नादः समभवत् पुनरेव समन्ततः । वृत्रं विनिहतं दृष्ट्वा देवानां भरतर्षभ ॥ ८ ॥ वृत्रन्तु हत्वा मघवान् दानवारिर्महायशाः । वज्रेण विष्णुयुक्तेन दिवमेव समाविशत् ॥ ९ ॥ अथ वृत्रस्य कौरव्य शरीरा-

दृष्टिनिःसृता। ब्रह्मवध्या महाघोरा रौद्रा लोकभयावहा ॥ १० ॥ करालदशना भीमा विकृता कृष्णपिङ्गला। प्रकीर्णमूर्द्धजा चैव घोरनेत्रा च भारत ॥ ११ ॥ कपालमालिनी चैव कृत्येव भरतर्षभ। रुधिरार्द्रा च धर्म्मज्ञ चीरवल्कलवासिनी ॥ १२ ॥ साभिनिष्क्रम्य राजेन्द्र तादृग्रूपा भयावहा। वज्रिणं मृगयामास तदा भरतसत्तम ॥ १३ ॥ कस्यचित्त्वथ कालस्य वृवहा कुरुनन्दन। स्वर्गायाभिमुखः प्रायाल्लोकानां हितकाम्यया ॥ १४ ॥ सा विनिःसरमाणन्तु दृष्ट्वा शक्रं महौजसम्। जग्राह वध्या देवेन्द्रं सुलग्ना चाभवत्तदा ॥ १५ ॥ स हि तस्मिन् समुत्पन्ने ब्रह्मवध्याकृते भये। नलिन्या विषमध्यस्थ उवासाब्दगणान् बहून् ॥ १६ ॥ अनुसृत्य तु यत्नात् स तया वै ब्रह्महत्यया। तदा गृहीतः कौरव्य निस्तेजाः समपद्यत ॥ १७ ॥ तस्या व्यपोहने शक्रः परं यत्नं चकार ह। न चाशकत्तां देवेन्द्रो ब्रह्मवध्यां व्यपोहितुम् ॥ १८ ॥ गृहीत एव तु तया देवेन्द्रो भरतर्षभ। पितामहमुपागम्य शिरसा प्रत्यपूजयत् ॥ १९ ॥ ज्ञात्वा गृहीतं शक्रं स द्विजप्रवरवध्यया। ब्रह्मा सञ्चिन्तयामास तदा भरतसत्तम ॥ २० ॥ तामुवाच महाबाहो ब्रह्मवध्यां पितामहः। स्वरेण मधुरेणाथ शान्तयन्निव भारत ॥२१॥ मुच्यतां त्रिदशेन्द्रोऽयं मत्प्रियं कुरु भाविनि। ब्रूहि किन्ते करोम्यद्य कामं किं त्वमिहेच्छसि ॥ २२ ॥

ब्रह्मवध्योवाच। त्रिलोकपूजिते देवे प्रीते त्रैलोक्यकर्त्तरि। कृतमेवेह मन्यामि निवासन्तु विधत्स्व मे ॥ २३ ॥ त्वया कृतेयं मर्य्यादा लोकसंरक्षणार्थिना। स्थापना वै सुमहती त्वया देव प्रवर्त्तिता ॥ २४ ॥ प्रीते तु त्वयि धर्म्मज्ञ सर्व्वलोकेश्वर प्रभो। शक्रादपगमिष्यामि निवासं सम्विधत्स्व मे ॥ २५ ॥

भीष्म उवाच। तथेति तां प्राह तदा ब्रह्मवध्यां पितामह। उपायतः स शक्रस्य ब्रह्मवध्यां व्यपोहत ॥ २६ ॥ ततः स्वयम्भुवा

ध्यातस्तत्र वह्निर्महात्मना। ब्रह्माणमुपसङ्गम्य ततो वचनमब्रवीत्
॥ २७ ॥ प्राप्तोऽस्मि भगवन्देव त्वत्सकाशमनिन्दितः। यत्कर्त्तव्यं
मया देव तद्भवान् वक्तुमर्हति ॥ २८ ॥

ब्रह्मोवाच। बहुधा विभजिष्यामि ब्रह्मवध्यामिमामहम्।
शक्रस्याद्य विमोक्षार्थं चतुर्भागं प्रतीच्छ वै ॥ २९ ॥

अग्निरुवाच। मम मोक्षस्य कोऽन्तो वै ब्रह्मन् ध्यायस्व वै
प्रभो। एतदिच्छामि विज्ञातुं तत्त्वतो लोकपूजित ॥ ३० ॥

ब्रह्मोवाच। यस्त्वां ज्वलन्तमासाद्य स्वयं वै मानवः क्वचित्।
वीजौषधिरसैर्वह्ने न यक्ष्यति तमोवृतः ॥३१॥ तमेषा यास्यति क्षिप्रं
तत्रैव च निवत्स्यति। ब्रह्मवध्या हव्यवाह व्येतु ते मानसोज्वरः ॥३२॥

भीष्म उवाच। इत्युक्तः प्रतिजग्राह तद्वचो हव्यकव्यभुक्।
पितामहस्य भगवांस्तथा च तदभूत् प्रभो ॥ ३३ ॥ ततो वृक्षौ-
षधितृणं समाहूय पितामहः। इममर्थं महाराज वक्तुं समुप-
चक्रमे ॥ ३४ ॥ ततो वृक्षौषधितृणं तथैवोक्तं यथातथम्। व्यथितं
वह्निवद्राजन् ब्रह्माणमिदमब्रवीत् ॥ ३५ ॥ अस्माकं ब्रह्मवध्यायाः
कोऽन्तो लोकपितामह। दैवेनाभिहतानस्मान्न पुनर्हन्तुमर्हसि
॥ ३६ ॥ वयमग्निं तथा शीतं वर्षञ्च पवनेरितम्। सहामः सततं
देव तथाच्छेदनभेदने ॥ ३७ ॥ ब्रह्मवध्यामिमामद्य भवतः शासना-
द्वयम्। ग्रहीष्यामस्त्रिलोकेश मोक्षं चिन्तयतां भवान् ॥ ३८ ॥

ब्रह्मोवाच। पर्वकाले तु सम्प्राप्ते यो वै छेदनभेदनम्। करि-
ष्यति नरो मोहात्तमेषानुगमिष्यति ॥ ३९ ॥

भीष्म उवाच। ततो वृक्षौषधितृणमेवमुक्तं महात्मना।
ब्रह्माणमभिसम्पूज्य जगामाशु यथागतम् ॥ ४० ॥ आहूयाप्सरसो
देवस्ततो लोकपितामहः। वाचा मधुरया प्राह सान्त्वयन्निव
भारत ॥ ४१ ॥ इयमिन्द्रादनुप्राप्ता ब्रह्मवध्या वराङ्गना। चतुर्थ-
मस्या भागांश मयोक्ताः सम्प्रतीच्छत ॥ ४२ ॥

अप्सरस ऊचुः । ग्रहणे कृतबुद्धीनां देवेश तव शासनात् । मोक्षं समयतोऽस्माकं चिन्तयस्व पितामह ॥ ४३ ॥

ब्रह्मोवाच । रजस्वलासु नारीषु यो वै मैथुनमाचरेत् । तमेषा यास्यति क्षिप्रं व्येतु वो मनसो ज्वरः ॥ ४४ ॥

भीष्म उवाच । तथेति हृष्टमनस इत्युक्त्वाप्सरसाङ्गणाः । स्वानि स्थानानि संप्राप्य रेमिरे भरतर्षभ ॥ ४५ ॥ ततस्त्रिलोककृद्देवः पुनरेव महातपाः । अपः सञ्चिन्तयामास ध्यातास्ताश्चाप्यथागमन् ॥ ४६ ॥ तास्तु सर्वाः समागम्य ब्रह्माणममितौजसम् । इदमूचुर्वचो राजन् प्रणिपत्य पितामहम् ॥ ४७ ॥ इमाः स्म देव संप्राप्तास्त्वत्सकाशमरिन्दमम् । शासनात्तव लोकेश समाज्ञापय नः प्रभो ॥ ४८ ॥

ब्रह्मोवाच । इयं वृत्रादनुप्राप्ता पुरुहूतं महाभया । ब्रह्मवध्या चतुर्थांशमस्या यूयं प्रतीच्छत ॥ ४९ ॥

आप ऊचुः । एवं भवतु लोकेश यथा वदसि नः प्रभो । मोक्षं समयतोऽस्माकं सञ्चिन्तयितुमर्हसि ॥ ५० ॥ त्वं हि देवेश सर्वस्य जगतः परमा गतिः । कोऽन्यः प्रसाद्यो हि भवेद्यः कृच्छ्रान्नः समुद्धरेत् ॥ ५१ ॥

ब्रह्मोवाच । अल्पा इति मतिं कृत्वा यो नरो बुद्धिमोहितः । श्लेष्ममूत्रपुरीषाणि युष्मासु प्रतिमोक्ष्यति ॥ ५२ ॥ तमियं यास्यति क्षिप्रं तत्रैव च निवत्स्यति । तथा वो भविता मोक्ष इति सत्यं ब्रवीमि वः ॥ ५३ ॥

भीष्म उवाच । ततो विमुच्य देवेन्द्रं ब्रह्मवध्या युधिष्ठिर । यथाविसृष्टं तं वासमगमद्देवशासनात् ॥ ५४ ॥ एवं शक्रेण सम्प्राप्ता ब्रह्मवध्या जनाधिप । पितामहमनुज्ञाप्य सोऽश्वमेधमकल्पयत् ॥ ५५ ॥ श्रूयते च महाराज सम्प्राप्ता वासवेन वै । ब्रह्मवध्या ततः शुद्धिं हयमेधेन लब्धवान् ॥ ५६ ॥ समवाप्य श्रियं देवो

हस्रारींश्च सहस्रशः। प्रहर्षमतुलं लेभे वासवः पृथिवीपते ॥ ५७ ॥ वृत्रस्य रुधिराच्चैव शिखण्डाः पार्थ जज्ञिरे। द्विजातिभिरभक्ष्यास्ते दीक्षितैश्च तपोधनैः ॥ ५८ ॥ सर्वावस्थां त्वमप्येषां द्विजातीनां प्रियं कुरु। इमे हि भूतले देवाः प्रथिताः कुरुनन्दन ॥५९॥ एवं शक्रेण कौरव्य बुद्धिसौक्ष्म्यान्महासुरः। उपायपूर्वं निहतो वृत्रो ह्यमितेजसा ॥ ६० ॥ एवं त्वमपि कौन्तेय पृथिव्यामपराजितः। भविष्यसि यथा देवः शतक्रतुरमित्रहा ॥ ६१ ॥ ये तु शक्रकथां दिव्यामिमां पर्वसु पर्वसु। विप्रमध्ये वदिष्यन्ति न ते प्राप्स्यन्ति किल्बिषम् ॥ ६२ ॥ इत्येतद्वृत्रमाश्रित्य शक्रस्यात्यद्भुतं महत्। कथितं कर्म्म ते तात किं भूयः श्रोतुमिच्छसि ॥ ६३ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि वृत्रवधे
एकाशीत्यधिकद्विशततोऽध्यायः ॥ २८१ ॥

---

युधिष्ठिर उवाच। पितामह महाप्राज्ञ सर्वशास्त्रविशारद। अस्मिन् वृत्रवधादेव विवक्षा मम जायते ॥ १ ॥ ज्वरेण मोहितो वृत्रः कथितस्ते जनाधिप। निहतो वासवेनेह वज्रेणेति तदानघ ॥ २ ॥ कथमेष महाप्राज्ञ ज्वरः प्रादुर्बभौ कुतः। ज्वरोत्पत्तिं निपुणतः श्रोतुमिच्छाम्यहं प्रभो ॥ ३ ॥

भीष्म उवाच। शृणु राजन् ज्वरस्येमं सम्भवं लोकविश्रुतम्। विस्तरञ्चास्य वक्ष्यामि यादृशश्चैव भारत ॥ ४ ॥ पुरा मेरोर्महाराज शृङ्गं त्रैलोक्यपूजितम्। ज्योतिष्कं नाम सावित्रं सर्वरत्नविभूषितम् ॥ ५ ॥ अप्रमेयमनाधृष्यं सर्वलोकेषु भारत। तत्र देवो गिरितटे हेमधातुविभूषिते। पर्य्यङ्क इव विभ्राजन्नुपविष्टो बभूव ह ॥ ६ ॥ शैलराजसुता चास्य नित्यं पार्श्वे स्थिता बभौ। तथा देवा महात्मानो वसवश्चामितौजसः ॥ ७ ॥ तथैव च महा-

स्थानावश्विनौ भिषजाम्वरौ। तथा वैश्रवणो राजा गुह्यकैरभि-
संवृतः॥ ८॥ यक्षाणामीश्वरः श्रीमान् कैलासनिलयः प्रभुः।
उपासन्त महात्मानमुशना च महामुनिः॥ ९॥ सनत्कुमारप्रमु-
खास्तथैव च महर्षयः। अङ्गिरःप्रमुखाश्चैव तथा देवर्षयोऽपरे
॥ १०॥ विश्वावसुश्च गन्धर्वस्तथा नारदपर्वतौ। अप्सरोगण-
सङ्घाश्च समाजग्मुरनेकशः॥ ११॥ ववौ सुखः शिवो वायुर्नाना-
गन्धवहः शुचिः। सर्वर्त्तुकुसुमोपेताः पुष्पवन्तो द्रुमास्तथा॥ १२॥
तथा विद्याधराश्चैव सिद्धाश्चैव तपोधनाः। महादेवं पशुपतिं
पर्य्युपासन्त भारत॥ १३॥ भूतानि च महाराज नानारूपधरा-
ण्यथ। राक्षसाश्च महारौद्राः पिशाचाश्च महाबलाः॥ १४॥ बहु-
रूपधरा हृष्टा नानाप्रहरणोद्यताः। देवस्यानुचरास्तत्र तस्थिरे
चानलोपमाः॥ १५॥ नन्दी च भगवांस्तत्र देवस्यानुमते स्थितः।
प्रगृह्य ज्वलितं शूलं दीप्यमानः स्वतेजसा॥ १६॥ गङ्गा च सरितां
श्रेष्ठा सर्वतीर्थजलोद्भवा। पर्य्युपासत तं देवं रूपिणी कुरु-
नन्दन॥ १७॥ स एवं भगवांस्तत्र पूज्यमानः सुरर्षिभिः। देवैश्च
सुमहातेजा महादेवो व्यतिष्ठत॥ १८॥ कस्यचित्त्वथ कालस्य
दक्षो नाम प्रजापतिः। पूर्वोक्तेन विधानेन यक्ष्यमाणोऽन्वपद्यत
॥ १९॥ ततस्तस्य मखं देवाः सर्वे शक्रपुरोगमाः। गमनाय
समागम्य बुद्धिमापेदिरे तदा॥ २०॥ ते विमानैर्महात्मनो
ज्वलनार्कसमप्रभैः। देवस्यानुमतेऽगच्छन् गङ्गाद्वारमिति श्रुतिः
॥ २१॥ प्रस्थिता देवता दृष्ट्वा शैलराजसुता तदा। उवाच
वचनं साध्वी देवं पशुपतिं पतिम्॥ २२॥ भगवन् क्व नु
यान्त्येते देवाः शक्रपुरोगमाः। ब्रूहि तत्त्वेन तत्त्वज्ञ संशयो मे
महानयम्॥ २३॥

महेश्वर उवाच। दक्षो नाम महाभागो प्रजानां पतिरुत्तमः।
हयमेधेन यजते तत्र यान्ति दिवौकसः॥ २४॥

उमोवाच। यज्ञमेतं महादेव किमर्थं नाधिगच्छसि। केन
धा प्रतिषेधेन गमनन्ते न विद्यते ॥ २५ ॥

महेश्वर उवाच। सुरैरेव महाभागे पूर्वमेतदनुष्ठितम्।
यज्ञेषु सर्वेषु मम न भाग उपकल्पितः ॥ २६ ॥ पूर्वोपायोपपन्नेन
मार्गेण वरवर्णिनि। न मे सुराः प्रयच्छन्ति भागं यज्ञस्य धर्मतः॥२७

उमोवाच। भगवन् सर्वभूतेषु प्रभावाभ्यधिको गुणैः। अजय्य-
श्चाप्यधृष्यश्च तेजसा यशसा श्रिया ॥ २८ ॥ अनेन ते महाभाग
प्रतिषेधेन भागतः। अतीव दुःखमुत्पन्नं वेपथुश्च ममानघ ॥ २९ ॥

भीष्म उवाच। एवमुक्त्वा तु सा देवी देवं पशुपतिं पतिम्।
तूष्णीं भूताभवद्राजन् दह्यमानेन चेतसा ॥ ३० ॥ अथ देव्या मतं
ज्ञात्वा हृद्गतं यच्चिकीर्षितम्। स समाज्ञापयामास तिष्ठ त्वमिति
नन्दिनम् ॥ ३१ ॥ ततो योगबलं कृत्वा सर्वयोगेश्वरेश्वरः। तं
यज्ञं स महातेजा भीमैरनुचरैस्तदा ॥ ३२ ॥ सहसा घातयामास
देवदेवः पिनाकधृक्। केचिन्नादानमुञ्चन्त केचिद्धासांश्च चक्रिरे
॥ ३३ ॥ रुधिरेणापरे राजंस्तत्राग्निं समवाकिरन्। केचिद्यूपान्
समुत्पाट्य बभ्रमुर्विकृताननाः। आस्यैरन्ये चाग्रसन्त तथैव परि-
चारकान् ॥ ३४ ॥ ततः स यज्ञो नृपते बध्यमानः समन्ततः।
आस्थाय मृगरूपं व खमेवाभ्यगमत्तदा ॥ ३५ ॥ तन्तु यज्ञं तथा-
रूपं गच्छन्तमुपलभ्य सः। धनुरादाय बाणेन तदान्वसरत प्रभुः
॥ ३६ ॥ ततस्तस्य सुरेशस्य क्रोधादमिततेजसः। ललाटात् प्रसृतो
घोरः स्वेदबिन्दुर्बभूव ह ॥ ३७ ॥ तस्मिन् पतितमात्रे च स्वेदबिन्दौ
तदा भुवि। प्रादुर्बभूव सुमहानग्निः कालानलोपमः ॥ ३८ ॥ तत्र
चाजायत तदा पुरुषः पुरुषर्षभ। ह्रस्वोऽतिमात्रं रक्ताक्षो हरि-
श्मश्रुर्विभीषणः ॥ ३९ ॥ ऊर्द्धकेशोऽतिरोमाङ्गः श्येनोलूकस्तथैव
च। करालः कृष्णवर्णश्च रक्तवासास्तथैव च। तं यज्ञं सुमहा-
सत्त्वोऽदहत् कक्षमिवानलः ॥ ४० ॥ व्यचरत् सर्वतो देवान् प्राद्र-

वत् स ऋषींस्तथा। देवाश्चाप्यद्रवन् सर्वे ततो भीता दिशो दश ॥ ४१ ॥ तेन तस्मिन् विचरता पुरुषेण विशाम्पते। पृथिवी व्यच-लद्राजन्नतीव भरतर्षभ ॥ ४२ ॥ हाहाभूतं जगत्सर्वमुपलक्ष्य तदा प्रभुः। पितामहो महादेवं दर्शयन् प्रत्यभाषत ॥ ४३ ॥

ब्रह्मोवाच। भवतोऽपि सुराः सर्वे भागं दास्यन्ति वै प्रभो। क्रियतां प्रतिसंहारः सर्वदेवेश्वर त्वया ॥ ४४ ॥ इमा हि देवताः सर्वा ऋषयश्च परन्तप। तव क्रोधान्महादेव न शान्तिमुपलेभिरे ॥ ४५ ॥ यश्चैव पुरुषो जातः स्वेदात्ते विबुधोत्तम। ज्वरो नामैष धर्मज्ञ लोकेषु प्रचरिष्यति ॥ ४६ ॥ एकीभूतस्य न त्वस्य धारणे तेजसः प्रभो। समर्था सकला पृथ्वी बहुधा सृज्यतामयम् ॥ ४७ ॥ इत्युक्तो ब्रह्मणा देवो भागे चापि प्रकल्पिते। भगवन्तं तथेत्याह ब्रह्माणममितौजसम् ॥ ४८ ॥ परां च प्रीतिमगमदुत्स्मयंश्च पिनाक-धृक्। अवाप च तदा भागं यथोक्तं ब्रह्मणा भवः ॥ ४९ ॥ ज्वरञ्च सर्वधर्मज्ञो बहुधा व्यसृजत्तदा। शान्त्यर्थं सर्वभूतानां शृणु तच्चापि पुत्रक ॥ ५० ॥ शीर्षाभितापो नागानां पर्वतानां शिला-जतु। अपान्तु नीलिकां विद्यान्निर्म्मोकं भुजगेषु च ॥ ५१ ॥ खोरकः सौरभेयाणामूषरं पृथिवीतले। पशूनामपि धर्म्मज्ञ दृष्टि-प्रत्यवरोधनम् ॥ ५२ ॥ रन्ध्रागतमथाश्वानां शिखोद्भेदश्च वर्हि-णाम्। नेत्ररोगः कोकिलस्य ज्वरः प्रोक्तो महात्मना ॥ ५३ ॥ अवीनां पित्तभेदश्च सर्वेषामिति नः श्रुतम्। शुकानामपि सर्वेषां हिक्किका प्रोच्यते ज्वरः। शार्दूलेष्वथ धर्म्मज्ञ श्रमो ज्वर इहो-च्यते ॥ ५४ ॥ मानुषेषु तु धर्म्मज्ञ ज्वरो नामैष भारत। मरणे जन्मनि तथा मध्ये चाविशते नरम् ॥ ५५ ॥ एतन्माहेश्वरं तेजो ज्वरो नाम सुदारुणः। नमस्यश्चैव मान्यश्च सर्वप्राणिभिरीश्वरः ॥ ५६ ॥ अनेन हि समाविष्टो वृत्रो धर्म्मभृताम्वरः। व्यजृम्भत ततः शक्रस्तस्मै वज्रमवासृजत् ॥ ५७ ॥ प्रविश्य वज्रं वृत्रञ्च दारया

माथ भारत। हारितश्च स वज्रेण महायोगी महासुरः। जगाम परमं स्थानं विष्णोरमिततेजसः॥ ५८॥ विष्णुभक्त्या हि तेनेदं जगद्व्याप्तमभूत्तदा। तस्माच्च निहतो युद्धे विष्णोः स्थानमवाप्तवान्॥ ५९॥ इत्येष वृत्रमाश्रित्य ज्वरस्य महती मया। विस्तरः कथितः पुत्र किमन्यत् प्रब्रवीमि ते॥ ६०॥ इमां ज्वरोत्पत्तिमदीनमानसः पठेत् सदा यः सुसमाहितो नरः। विमुक्तरोगः सुसुखी मुदा युतो लभेत कामान् स यथा मनीषितान्॥ ६१॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि ज्वरोत्पत्तिकथने द्व्यशीत्यधिकद्विशततोऽध्यायः॥ २८२॥

---

जनमेजय उवाच। प्राचेतसस्य दक्षस्य कथं वैवस्वतेऽन्तरे। विनाशमगमद्ब्रह्मन् हयमेधः प्रजापतेः॥ १॥ देव्या मन्युकृतं मत्वा क्रुद्धः सर्वात्मकः प्रभुः। प्रसादात्तस्य दक्षेण स यज्ञः सन्धितः कथम्। एतद्वेदितुमिच्छेयं तन्मे ब्रूहि यथातथम्॥ २॥

वैशम्पायन उवाच। पुरा हिमवतः पृष्ठे दक्षो वै यज्ञमाहरत्। गङ्गाद्वारे शुभे देशे ऋषिसिद्धनिषेविते॥ ३॥ गन्धर्वाप्सरसाकीर्णे नानाद्रुमलतावृते। ऋषिसङ्घैः परिवृतं दक्षं धर्मभृताम्वरम्॥ ४॥ पृथिव्यामन्तरीक्षे च ये च स्वर्लोकवासिनः। सर्वे प्राञ्जलयो भूत्वा उपतस्थुः प्रजापतिम्॥ ५॥ देवदानवगन्धर्वाः पिशाचोरगराक्षसाः। हाहा हूहूश्च गन्धर्वौ तुम्बुरुर्नारदस्तथा॥ ६॥ विश्वावसुर्विश्वसेनो गन्धर्वाप्सरसस्तथा। आदित्या वसवो रुद्रा साध्याः सह मरुद्गणैः॥ ७॥ इन्द्रेण सहिताः सर्वे आगता यज्ञभागिनः। उष्मपाः सोमपाश्चैव धूमपा आज्यपास्तथा॥ ८॥ ऋषयः पितरश्चैव आगता ब्रह्मणा सह। एते चान्ये च बहवो भूतग्रामाश्चतुर्विधाः॥ ९॥ जरायुजाण्डजाश्चैव सहसा स्वेदजो-

द्विजैः। आहूता मन्त्रिताः सर्व्वे देवाश्च सह पत्निभिः। विराजन्ते विमानस्था दीप्यमाना इवाग्नयः ॥ १० ॥ तान् दृष्ट्वा मन्युनाविष्टो दधीचिर्वाक्यमब्रवीत्। नायं यज्ञो न वा धर्म्मो यत्र रुद्रो न एज्यते ॥ ११ ॥ वधबन्धं प्रपन्ना वै किन्तु कालस्य पर्य्ययः। किन्तु मोहान्न पश्यन्ति विनाशं पर्य्युपस्थितम्। उपस्थितम् महाघोरं न बुध्यन्ति महाध्वरे ॥ १२ ॥ इत्युक्त्वा स महायोगी पश्यति ध्यान-चक्षुषा। स पश्यति महादेवं देवीञ्च वरदां शुभाम् ॥ १३ ॥ नारदञ्च महात्मानं तस्या देव्याः समीपतः। सन्तोषं परमं लेभे इति निश्चित्य योगवित् ॥ १४ ॥ एकमन्त्रास्तु ते सर्व्वे येनेशो न निमन्त्रितः। अस्माद्देशादपक्रम्य दधीचिर्वाक्यमब्रवीत् ॥ १५ ॥ अपूज्यपूजनाच्चैव पूज्यानाञ्चाप्यपूजनात्। नृघातकसमं पापं शश्वत् प्राप्नोति मानवः ॥ १६ ॥ अनृतं नोक्तपूर्व्वं मे न च वक्ष्ये कदाचन। देवतानामृषीणाञ्च मध्ये सत्यं ब्रवीम्यहम् ॥ १७ ॥ आगतं पशु-भर्त्तारं स्रष्टारं जगतः पतिम्। अध्वरे यज्ञभोक्तारं सर्व्वेषां पश्यतां प्रभुम् ॥ १८ ॥

दक्ष उवाच। सन्ति नो बहवो रुद्राः शूलहस्ताः कपर्द्दिनः। एकादशस्थानगता नाहं वेद्मि महेश्वरम् ॥ १९ ॥

दधीचिरुवाच। सर्व्वेषामेव मन्त्रोऽयं येनाशो न निमन्त्रितः। यथाहं शङ्करादूर्द्ध्वं नान्यं पश्यामि दैवतम्। तथा दक्षस्य विपुलो यज्ञोऽयं न भविष्यति ॥ २० ॥

दक्ष उवाच। एतन्मखेशाय सुवर्णपात्रे हविः समस्तं विधिमन्त्र-पूतम्। विष्णोर्नयाम्यप्रतिमस्य भगं प्रभुर्विभुश्चाहवनीय एषः ॥२१॥

देव्युवाच। किं नाम दानं नियमं तपो वा कुर्य्यामहं येन पतिर्म्ममाद्य। लभेत भागं भगवानचिन्त्यो ह्यर्द्धं तथा भागमथो तृतीयम् ॥ २२ ॥ एवं ब्रुवाणां भगवान् स्वपत्नीं प्रहृष्टरूपः क्षुभि-तामुवाच। न वेत्सि मां देवि कृशोदराङ्गि किन्नाम युक्तं वचनं

महिषि ॥ २३ ॥ अहं विजानामि विशालनेत्रे ध्यानेन हीना न विदन्त्यसन्तः। तवाद्य मोहेन च सेन्द्रदेवा लोकास्त्रयः सर्वत एव मूढ़ाः ॥ २४ ॥ मामध्वरे संशितारः स्तुवन्ति रथन्तरं सामगाश्चोपगान्ति। मां ब्राह्मणा ब्रह्मविदो यजन्ते ममाध्वर्य्यवः कल्पयन्ते च भागम् ॥ २५ ॥

देव्युवाच। सुप्राकृतोऽपि पुरुषः सर्वं स्त्रीजनसंसदि। स्तौति गर्वायते चापि स्वमात्मानं न संशयः ॥ २६ ॥

भगवानुवाच। नात्मानं स्तौमि देवेशि पश्य मे मनुमध्यमे। यं स्रक्ष्यामि वरारोहे यागार्थं वरवर्णिनि ॥ २७ ॥ इत्युक्त्वा भगवान् पत्नीमुमां प्राणैरपि प्रियाम्। सोऽसृजद्भगवान् वक्त्राद्भूतं घोरप्रहर्षणम्। ज्वालामालाकुलाकारं नानाविधभुजायुधम् ॥२८॥ किमाज्ञापयसीत्येवं व्याहरन्तं कृताञ्जलिम्। तमुवाचाक्षिप मखं दक्षस्येति महेश्वरः ॥ २९ ॥ ततो वक्त्राद्विमुक्तेन सिंहेनैकेन लीलया। देव्या मन्युव्यपोहार्थं हतो दक्षस्य वै क्रतुः ॥ ३० ॥ मन्युना च महाभीमा महाकाली महेश्वरी। आत्मनः कर्मसाक्षित्वे तेन सार्द्धं सहानुगा। देवस्यानुमतं मत्वा प्रणम्य शिरसा ततः ॥ ३१ ॥ आत्मनः सदृशः शौर्य्याद्बलरूपसमन्वितः। स एव भगवान् क्रोधः प्रतिरूपसमन्वितः ॥ ३२ ॥ अनन्तबलवीर्य्यश्च अनन्तबलपौरुषः। वीरभद्र इति ख्यातो देव्या मन्युप्रमार्ज्जकः। सोऽसृजद्रोमकूपेभ्यो रौम्यान्नाम गणेश्वरान् ॥ ३३ ॥ रुद्रतुल्या गणा रौद्रा रुद्रवीर्य्यपराक्रमाः। ते निपेतुस्ततस्तूर्णं दक्षयज्ञविहिंसया। भीमरूपा महाकायाः शतशोऽथ सहस्रशः ॥ ३४ ॥ ततः किलकिलाशब्दैराकाशं पूरयन्ति च। तेन शब्देन महता त्रस्तास्तत्र दिवौकसः ॥ ३५ ॥ पर्वताश्च व्यशीर्य्यन्त चकम्पे च वसुन्धरा। मारुताश्चैव घूर्णन्ते चुक्षुभे वरुणालयः ॥३६॥ अग्नयो नैव दीप्यन्ते नैव दीप्यति भास्करः। ग्रहा नैव प्रकाशन्ते नक्षत्राणि च चन्द्रमाः

॥ ३७ ॥ ऋषयो न प्रकाशन्ते न देवा न च मानुषाः । एवन्तु
तिमिरीभूते निर्द्दहन्त्यपमानिताः ॥ ३८ ॥ प्रहरन्त्यपरे घोरा
यूपानुत्पाटयन्ति च । प्रमर्द्दन्ति तथा चान्ये विमर्द्दन्ति तथा परे
॥ ३९ ॥ आधावन्ति प्रधावन्ति वायुवेगा मनोजवाः । चूर्ण्यन्ते
यज्ञपात्राणि दिव्यान्याभरणानि च । विशीर्णा इव दृश्यन्ते तरा
इव नभस्तले ॥ ४० ॥ दिव्यान्नपानभक्ष्याणां राशयः पर्वतोपमाः ।
क्षीरनद्योऽथ दृश्यन्ते घृतपायसकर्द्दमः ॥ ४१ ॥ दधिमण्डोदका
दिव्याः खण्डशर्करवालुकः । षड्रसा निवहन्त्येता गुड़कुल्या मनो-
रमाः ॥ ४२ ॥ उच्चावचानि मांसानि भक्ष्याणि विविधानि च ।
पानकानि च दिव्यानि लेह्यचूष्याणि यानि च ॥ ४३ ॥ भुञ्जते
विविधैर्वक्त्रैर्विलुम्पन्त्याक्षिपन्ति च । रुद्रकोपान्महाकायाः कालाग्नि-
सदृशोपमाः ॥ ४४ ॥ क्षोभयन् सुरसैन्यानि भीषयन्तः समन्ततः ।
क्रीड़न्ति विविधाकाराश्चिक्षिपुः सुरयोषितः ॥ ४५ ॥ रुद्रक्रोधात्
प्रयत्नेन सर्वदेवैः सुरक्षितम् । तं यज्ञमदहच्छीघ्रं रुद्रकर्मा सम-
न्ततः ॥ ४६ ॥ चकार भैरवं नादं सर्वभूतभयङ्करम् । छित्त्वा शिरो
वै यज्ञस्य ननाद च मुमोच ॥ ४७ ॥ ततो ब्रह्मादयो देवा दक्ष-
श्चैव प्रजापतिः । ऊचुः प्राञ्जलयः सर्वे कथ्यतां को भवानिति ॥४८॥

वीरभद्र उवाच । नाहं रुद्रो न वा देवी नैव भोक्तुमिहा-
गतः । देव्या मन्युकृतं मत्वा क्रुद्धः सर्वात्मकः प्रभुः ॥ ४९ ॥ द्रष्टुं
वा नैव विप्रेन्द्रान्नैव कौतूहलेन वा । तव यज्ञविघातार्थं संप्राप्तं
विद्धि मामिह ॥ ५० ॥ वीरभद्र इति ख्यातो रुद्रकोपाद्विनिःसृतः ।
भद्रकालीति विख्याता देव्या कोपाद्विनिःसृता । प्रेषितो देवदेवेन
यज्ञान्तिकमिहागतः ॥ ५१ ॥ शरणं गच्छ विप्रेन्द्र देवदेवमुमा-
पतिम् । वरं क्रोधोऽपि देवस्य वरदानं चान्यतः ॥ ५२ ॥ वीर-
भद्रवचः श्रुत्वा दक्षो धर्मभृताम्वरः तोषयामास स्तोत्रेण प्रणि-
पत्य महेश्वरम् ॥ ५३ ॥

दक्ष उवाच। प्रपद्ये देवमीशानं शाश्वतं ध्रुवमव्ययम्। महादेवं महात्मानं विश्वस्य जगतः पतिम् ॥ ५४ ॥ दक्ष प्रजापतिर्यज्ञैर्द्रव्यैस्तैः सुसमाहितैः। आहूता देवताः सर्वा ऋषयश्च तपोधनाः ॥ ५५ ॥ देवो नाहूयते तत्र विश्वकर्मा महेश्वरः। ततः क्रुद्धा महादेवी गणांस्तत्र व्यसर्जयत् ॥ ५६ ॥ प्रदीप्ते यज्ञवाटे तु विद्रुतेषु द्विजातिषु। तारागणमनुप्राप्ते रौद्रे दीप्ते महात्मनि ॥५७॥ शूलनिर्भिन्नहृदयैः कूजद्भिः परिचारकैः। निखातोत्पाटितैर्यूपैरपविद्धैरितस्ततः ॥ ५८ ॥ उत्पतद्भिः पतद्भिश्च गृध्रैरामिषगृद्धिभिः। पक्षवातविनिर्धूतैः शिवाशतनिनादितैः ॥ ५९ ॥ यक्षगन्धर्वसङ्घैश्च पिशाचोरगराक्षसैः। प्राणापानौ संनिरुध्य वक्त्रस्थानेन यत्नतः ॥ ६० ॥ विचार्य्य सर्वतो दृष्टं बहुदृष्टिरमित्रजित्। सहसा देवदेवेशो ह्यग्निकुण्डात् समुत्थितः ॥ ६१ ॥ बिभ्रत् सूर्य्यसहस्रस्य तेजः सम्वर्त्तकोपमः। स्मितं कृत्वाब्रवीद्वाक्यं ब्रूहि किं करवाणि ते ॥ ६२ ॥ श्राविते च मखाध्याये देवानां गुरुणा ततः। तमुवाचाञ्जलिं कृत्वा दक्षो देवं प्रजापतिः। भीतशङ्कितवित्रस्तः सवास्पवदनेक्षणः ॥ ६३ ॥

दक्ष उवाच। यदि प्रसन्नो भगवन् यदि वाहं भवत्प्रियः। यदि चाहमनुग्राह्यो यदि वा वरदो मम ॥ ६४ ॥ यद्दग्धं भक्षितं पीतमशितं यच्च नाशितम्। चूर्णीकृतापविद्धञ्च यज्ञसम्भारमीदृशम् ॥ ६५ ॥ दीर्घकालेन महता प्रयत्नेन सुसञ्चितम्। तन्न मिथ्या भवेन्मह्यं वरमेतमहं वृणे ॥ ६६ ॥ तथास्त्वित्याह भगवान् भगनेत्रहरो हरः। धर्माध्यक्षो विरूपाक्षस्त्र्यक्षो देवः प्रजापतिः ॥६७॥ जानुभ्यामवनीं गत्वा दक्षो लब्ध्वा भवाद्वरम्। नाम्नामष्टसहस्रेण स्तुतवान् वृषभध्वजम् ॥ ६८ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि दक्षयज्ञविनाशे त्र्यशीत्यधिकद्विशततोऽध्यायः ॥ २८३ ॥

युधिष्ठिर उवाच। यैर्नामधेयैः स्तुतवान् दक्षो देवं प्रजापतिः।
वक्तुमर्हसि मे तात श्रोतुं श्रद्धा ममानघ ॥ १ ॥

भीष्म उवाच। श्रूयन्तां देवदेवस्य नामान्यद्भुतकर्म्मणः।
गूढ़व्रतस्य गुह्यानि प्रकाशानि च भारत ॥ २ ॥

दक्ष उवाच। नमस्ते देवदेवेश देवारिबलसूदन। देवेन्द्र-
बलविष्टम्भ देवदानवपूजित ॥ ३ ॥ सहस्राक्ष विरूपाक्ष त्र्यक्ष
यक्षाधिपप्रिय। सर्वतः पाणिपादान्त सर्वतोऽक्षिशिरोमुख ॥ ४ ॥
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठसि। शङ्कुकर्ण महाकर्ण कुम्भ-
कर्णार्णवालय ॥ ५ ॥ गजेन्द्रकर्ण गोकर्ण पाणिकर्ण नमोऽस्तु ते।
शतोदर शतावर्त्त शतजिह्व नमोऽस्तु ते ॥ ६ ॥ गायन्ति त्वां गाय-
त्रिणो अर्च्चयन्त्यर्कमर्किणः। ब्रह्माणं त्वां शतक्रतुमूर्द्ध्वं खमिव
मेनिरे ॥ ७ ॥ मूर्त्तौ हि ते महामूर्त्ते समुद्राम्बरसन्निभ। सर्वा
वै देवता ह्यस्मिन् गावो गोष्ठ इवासते ॥ ८ ॥ भवच्छरीरे पश्यामि
सोममग्निं जलेश्वरम्। आदित्यमथ वै विष्णुं ब्रह्माणञ्च वृह-
स्पतिम् ॥ ९ ॥ भगवान् कारणं कार्य्यं क्रिया करणमेव च।
असतश्च सतश्चैव तथैव प्रभवाप्ययौ ॥ १० ॥ नमो भवाय सर्वाय
रुद्राय वरदाय च। पशूनां पतये नित्यं नमोऽस्त्वन्धकघातिने ॥११॥
त्रिजटाय त्रिशीर्षाय त्रिशूलवरपाणिने। त्र्यम्बकाय त्रिनेत्राय
त्रिपुरघ्नाय वै नमः ॥ १२ ॥ नमश्चण्डाय मुण्डाय अण्डायाण्ड-
धराय च। दण्डिने समकर्णाय दण्डिमुण्डाय वै नमः ॥ १३ ॥
नमोर्द्धदंष्ट्रकेशाय शुक्लायावतताय च। विलोहिताय धूम्राय
नीलग्रीवाय वै नमः ॥ १४ ॥ नमोऽस्त्वप्रतिरूपाय विरूपाय शिवाय
च। सूर्य्याय सूर्य्यमालाय सूर्य्यध्वजपताकिने ॥ १५ ॥ नमः प्रमथ-
नाथाय वृषस्कन्धाय धन्विने। शत्रुन्दमाय दण्डाय पर्णचीरपटाय
च ॥ १६ ॥ नमो हिरण्यगर्भाय हिरण्यकवचाय च। हिरण्यकृत-
चूड़ाय हिरण्यपतये नमः ॥ १७ ॥ नमः स्तुताय स्तुत्याय स्तुय-

मानाय वै नमः। सर्वाय सर्वभक्षाय सर्वभूतान्तरात्मने ॥ १८ ॥
नमो होत्रेऽथ मन्त्राय शुक्लध्वजपताकिने। नमो नाभाय नाभ्याय
नमः कटकटाय च ॥ १९ ॥ नमोऽस्तु कृशनाशाय कृशाङ्गाय कृशाय
च। संहृष्टाय नमस्तुभ्यं नमः किलकिलाय च ॥ २० ॥ नमोऽस्तु
शयमानाय शयितायोत्थिताय च। स्थिताय धावमानाय मुण्डाय
जटिलाय च ॥ २१ ॥ नमो नर्त्तनशीलाय मुखवादित्रवादिने।
नाट्योपहारलुब्धाय गीतवादित्रशालिने ॥ २२ ॥ नमो ज्येष्ठाय
श्रेष्ठाय बलप्रमथनाय च। कालनाथाय कल्पाय क्षयायोपक्षयाय
च ॥ २३ ॥ भीमदुन्दुभिहासाय भीमव्रतधराय च। उग्राय च
नमो नित्यं नमोऽस्तु दशबाहवे ॥ २४ ॥ नमः कपालहस्ताय
चितिभस्मप्रियाय च। विभीषणाय भीष्माय भीमव्रतधराय च
॥ २५ ॥ नमो विकृतवक्त्राय खड्गजिह्वाय दंष्ट्रिणे। पक्वाम-
मांसलुब्धाय तुम्बीवीणाप्रियाय च ॥ २६ ॥ नमो वृषाय वृष्याय
गोवृषाय वृषाय च। कटङ्कटाय दण्डाय नमः पचपचाय च ॥२७॥
नमः सर्ववरिष्ठाय वराय वरदाय च। वरमाल्यगन्धगस्त्राय वरा-
तिवरदे नमः ॥ २८ ॥ नमो रक्तविरक्ताय भावनायाक्षमालिने।
सम्भिन्नाय विभिन्नाय छायायातपनाय च ॥ २९ ॥ अघोरघोर-
रूपाय घोरघोरतराय च। नमः शिवाय शान्ताय नमः शान्त-
तमाय च ॥ ३० ॥ एकपादबहुनेत्राय एकशीर्ष्णे नमो नमः। क्षुद्राय
क्षुद्रलुब्धाय संविभागप्रियाय च ॥ ३१ ॥ पञ्चालाय सिताङ्गाय
नमः शमशमाय च। नमश्चण्डिकघण्टाय घण्टायाघण्टघण्टिने ॥३२॥
सहस्राध्मातघण्टाय घण्टामालाप्रियाय च। प्राणघण्टाय गन्धाय
नमः कलकलाय च ॥ ३३ ॥ हूंहूंहूंकारपाराय हूंहूंकार-
प्रियाय च। नमः शमशमे नित्यं गिरिवृक्षालयाय च ॥ ३४ ॥
गर्भमांसशृगालाय तारकाय तराय च। नमो यज्ञाय यजिने
हुताय प्रहुताय च ॥ ३५ ॥ यज्ञवाहाय दान्ताय तप्याय तपनाय

च । नमस्तटाय तटयाय तटानाम्पतये नमः ॥ ३६ ॥ अन्नादायान्नपतये नमस्त्वन्नभुजे तथा । नमः सहस्रशीर्षाय सहस्रचरणाय च ॥ ३७ ॥ सहस्रोद्यतशूलाय सहस्रनयनाय च । नमो बालार्कवर्णाय बालरूपधराय च ॥ ३८ ॥ बालानुचरगोप्त्राय बालक्रीड़नकाय च । नमो वृद्धाय लुब्धाय क्षुब्धाय क्षोभणाय च ॥ ३९ ॥ तरङ्गाङ्कितकेशाय मुञ्जकेशाय वै नमः । नमः षट्कर्मतुष्टाय त्रिकर्मनिरताय च ॥ ४० ॥ वर्णाश्रमाणां विधिवत् पृथक्कर्मनिवर्त्तिने । नमो घुष्याय घोषाय नमः कलकलाय च ॥ ४१ ॥ श्वेतपिङ्गलनेत्राय कृष्णरक्तेक्षणाय च । प्राणभग्नाय दण्डाय स्फोटनाय कृशाय च ॥ ४२ ॥ धर्मकामार्थमोक्षाणां कथनीयकथाय च । सांख्याय सांख्यमुख्याय सांख्ययोगप्रवर्त्तिने ॥ ४३ ॥ नमो रथ्यविरथ्याय चतुष्पथरथाय च । कृष्णाजिनोत्तरीयाय व्यालयज्ञोपवीतिने ॥ ४४ ॥ ईशान वज्रसङ्घात हरिकेश नमोऽस्तु ते । त्र्यम्बकाम्बिकनाथाय व्यक्ताव्यक्त नमोऽस्तु ते ॥ ४५ ॥ काम कामद कामघ्न तृप्तातृप्तविचारिणे । सर्व सर्वद सर्वघ्न सन्ध्याराग नमोऽस्तु ते ॥ ४६ ॥ महाबल महाबाहो महासत्त्व महाद्युते । महामेघचयप्रख्य महाकाल नमोऽस्तु ते । स्थूलजीर्णाङ्गजटिले वल्कलाजिनधारिणे ॥ ४७ ॥ दीप्तसूर्य्याग्निजटिले वल्कलाजिनवाससे । सहस्रसूर्य्यप्रतिम तपोनित्य नमोऽस्तु ते ॥ ४८ ॥ उन्मादनशतावर्त्त गङ्गातोयार्द्रमूर्द्धज । चन्द्रावर्त्त युगावर्त्त मेघावर्त्त नमोऽस्तु ते ॥४९॥ त्वमन्नमन्नभोक्ता च अन्नदोऽन्नभुगेव च । अन्नस्रष्टा च पक्ता च पक्वभुक् पवनोऽनलः ॥ ५० ॥ जरायुजाण्डजाश्चैव स्वेदजाश्च तथोद्भिजाः । त्वमेव देवदेवेश भूतग्रामश्चतुर्विधः ॥ ५१ ॥ चराचरस्य स्रष्टा त्वं प्रतिहर्त्ता तथैव च । त्वामाहुर्ब्रह्मविदुषो ब्रह्म ब्रह्मविदाम्वर ॥ ५२ ॥ मनसः परमा योनिः खं वायुर्ज्योतिषां निधिः । ऋक्सामानि तथोङ्कारमाहुस्त्वां ब्रह्मवादिनः ॥ ५३ ॥ हायिहायि

हुवाहार्य्य हुवाहोयि तथासकृत्। गायन्ति त्वां सुरश्रेष्ठ सामगा ब्रह्मवादिनः॥ ५४॥ यजुर्मय ऋङ्मयश्च त्वमाहुतिमयस्तथा। पठ्यसे श्रुतिभिश्चैव वेदोपनिषदाङ्गणैः॥ ५५॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णावराश्च ये। त्वमेव मेघसङ्घाश्च विद्युत्स्तनितगर्ज्जितः॥ ५६॥ संवत्सरस्त्वमृतवो मासो मासार्द्धमेव च। युगं निमेषः काष्ठास्त्वं नक्षत्राणि ग्रहाः कलाः॥ ५७॥ वृक्षाणां ककुदोऽसि त्वं गिरीणां शिखराणि च। व्याघ्रो मृगाणां पततां तार्क्ष्योऽनन्तश्च भोगिनाम्॥ ५८॥ क्षीरोदो ह्युदधीनाञ्च यन्त्राणां धनुरेव च। वज्रः प्रहरणानाञ्च व्रतानां सत्यमेव च॥ ५९॥ त्वमेव द्वेष इच्छा च रागो मोहः क्षमाक्षमे। व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ॥ ६०॥ त्वं गदी त्वं शरी चापी खट्वाङ्गी झर्झरी तथा। छेत्ता भेत्ता प्रहर्त्ता त्वं नेता सन्तापिता मतः॥ ६१॥ दशलक्षणसंयुक्तो धर्मोऽर्थः काम एव च। गङ्गा समुद्राः सरितः पल्वलानि सरांसि च॥ ६२॥ लता वल्ल्यस्तृणौषध्यः पशवो मृगपक्षिणः। द्रव्यकर्मसमारम्भः कालपुष्पफलप्रदः॥ ६३॥ आदिश्चान्तश्च वेदानां गायत्रीओङ्कार एव च॥ ६४॥ हरितो रोहितो नीलः कृष्णो रक्तस्तथारुणः। कद्रुश्च कपिलश्चैव कपोतो मेचकस्तथा॥ ६५॥ अवर्णश्च सुवर्णश्च वर्णकारो घनोपमः। सुवर्णनामा च तथा सुवर्णप्रिय एव च॥ ६६॥ त्वमिन्द्रश्च यमश्चैव वरदो धनदोऽनलः। उपप्लवश्चित्रभानुः स्वर्भानुर्भानुरेव च॥ ६७॥ होत्रं होता च होम्यञ्च हुतञ्चैव तथा प्रभुः। त्रिसौपर्णं तथा ब्रह्म यजुषां शतरुद्रियम्॥ ६८॥ पवित्रञ्च पवित्राणां मङ्गलानाञ्च मङ्गलम्। गिरिको हिण्डुको वृक्षो जीवः पुद्गल एव च॥ ६९॥ प्राणः सत्त्वं रजश्चैव तमश्चाप्रमदस्तथा। प्राणोऽपानः समानश्च उदानो व्यान एव च॥ ७०॥ उन्मेषश्च निमेषश्च क्षुतं जृम्भितमेव च। लोहितान्तर्गता दृष्टिर्महावक्त्रो महोदरः॥ ७१॥ सूचीरोमा

हरिश्मश्रुरूर्द्ध्वकेशश्चाचलः। गीतवादित्रतत्त्वज्ञो गीतवादनकप्रियः॥ ७२॥ मत्स्यो जलचरो जाल्योऽकलकेलिकलः कलिः। अकालश्चातिकालश्च दुष्कालः काल एव च॥ ७३॥ मृत्युः चरश्च कृत्यश्च पक्षोऽपक्षक्षयङ्करः। मेघकालो महादंष्ट्रः सम्वर्त्तकबलाहकः॥ ७४॥ घण्ठोऽघण्टो घटी घण्ठी चरुचेलीमिलीमिली। ब्रह्मकायिकमग्नीनां दण्डी मुण्डस्त्रिदण्डधृक्॥ ७५॥ चतुर्युगश्चतुर्वेदश्चातुर्होत्रप्रवर्त्तकः। चातुराश्रम्यनेता च चातुर्वर्ण्यकरश्च यः॥ ७६॥ सदा चाक्षप्रियो धूर्त्तो गणाध्यक्षो गणाधिपः। रक्तमाल्याम्बरधरो गिरीशो गिरिकप्रियः॥७७॥ शिल्पिकः शिल्पिनां श्रेष्ठः सर्वशिल्पप्रर्त्तकः। भगनेत्राङ्कुशश्चण्डः पुष्णो दन्तविनाशनः॥ ७८॥ स्वाहा स्वधा वषट्कारो नमस्कारो नमोनमः। गूढ़व्रतो गुह्यतपास्तारकस्तारकामयः॥ ७९॥ धाता विधाता सन्धाता विधाता धारणोऽधरः। ब्रह्मा तपश्च सत्यञ्च ब्रह्मचर्य्यमथार्ज्जवम्॥ ८०॥ भूतात्मा भूतकृद्भूतो भूतभव्यभवोद्भवः। भूर्भुवः स्वरितश्चैव ध्रुवो दान्तो महेश्वरः॥ ८१॥ दीक्षितोऽदीक्षितः क्षान्तो दुर्द्दान्तो दान्तनाशनः। चन्द्रावर्त्तो युगावर्त्तः सम्वर्त्तः सम्प्रवर्त्तकः॥ ८२॥ कामो विन्दुरणुः स्थूलः कर्णिकारस्रजप्रियः। नन्दीमुखो भीममुखः सुमुखो दुर्मुखोऽमुखः॥ ८३॥ चतुर्मुखो बहुमुखो रणेष्वग्निमुखस्तथा। हिरण्यगर्भः शकुनिर्महोरगपतिर्विराट्॥८४॥ अधर्महा महापार्श्वश्चण्डधरो गणाधिपः। गोनर्द्दो गोप्रतारश्च गोवृषेश्वरवाहनः॥८५॥ त्रैलोक्यगोप्ता गोविन्दो गोमार्गो मार्ग एव च। श्रेष्ठः स्थिरश्च स्थाणुश्च निष्कम्पः कम्प एव च॥ ८६॥ दुर्वारणो दुर्विषहो दुःसहो दुरतिक्रमः। दुर्द्धर्षो दुष्प्रकम्पश्च दुर्विषो दुर्ज्जयो जयः॥ ८७॥ शशः शशाङ्कः शमनः शीतोष्णक्षुज्ज्वराधिधृक्। आधयो व्याधयश्चैव व्याधिहा व्याधिरेव च॥ ८८॥ मम यज्ञमृगव्याधो व्याधीनामागमो गमः। शिखण्डी पुण्डरी-

कान्तः पुण्डरीकवनालयः ॥ ८९ ॥ दण्डधारस्त्र्यम्बकश्च उग्रदन्तो-ऽण्डनाशनः। विषाग्रपात् सुरश्रेष्ठः सोमपास्त्वं मरुत्पतिः ॥ ९० ॥ अमृतपास्त्वं जगन्नाथ देव देवगणेश्वरः। विषाग्निपा मृत्युपाश्च चीरपाः सोमपास्तथा। मधुश्च्युतानामग्रपास्त्वं त्वमेव तुषिता-ज्यपाः ॥ ९१ ॥ हिरण्यरेताः पुरुषस्त्वमेव त्वं स्त्री पुमांस्त्वञ्च नपुंसकञ्च। बालो युवा स्थविरो जीर्णदंष्ट्रस्त्वं नागेन्द्रः शक्रस्त्वं विश्वकृद्विश्वकर्त्ता ॥ ९२ ॥ विश्वकृद्विश्वकृतां वरेण्यस्त्वं विश्व-बाहो विश्वरूपस्तेजस्वी विश्वतोमुखः। चन्द्रादित्यौ चक्षुषी ते हृदयञ्च पितामहः। महोदधिः सरस्वती वाग्बलमनलोऽनिलः अहोरात्रं निमेषोन्मेषकर्मा ॥ ९३ ॥ न ब्रह्मा न च गोविन्दः पौरा न ऋषयो न ते। माहात्म्यं वेदितुं शक्ता याथातथ्येन ते शिव ॥ ९४ ॥ यामूर्त्तयः सुसूक्ष्मास्ते न मह्यं यान्ति दर्शनम्। ताभि मां सततं रक्ष पिता पुत्रमिवौरसम् ॥ ९५ ॥ रक्ष मां रक्ष-णीयोऽहं तवानघ नमोऽस्तु ते। भक्तानुकम्पी भगवान् भक्तश्चाहं सदा त्वयि ॥ ९६ ॥ यः सहस्राण्यनेकानि पुंसामावृत्य दुर्दृशः। तिष्ठत्येकः समुद्रान्ते स मे गोप्तास्तु नित्यशः ॥ ९७ ॥ यं विनिद्रा जितश्वासाः सत्त्वस्थाः संयतेन्द्रियाः। ज्योतिः पश्यन्ति युञ्जाना-स्तस्मै योगात्मने नमः ॥ ९८ ॥ जटिले दण्डिने नित्यं लम्बोदर-शरीरिणे। कमण्डलुनिषङ्गाय तस्मै ब्रह्मात्मने नमः ॥ ९९ ॥ यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु। कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥ १०० ॥ सम्भक्ष्य सर्वभूतानि युगान्ते पर्य्युपस्थिते। यः शेते जलमध्यस्थस्तं प्रपद्येऽम्बुशायिनम् ॥ १०१ ॥ प्रविश्य वदनं राहोर्यः सोमं पिबते निशि। ग्रसत्यर्कञ्च स्वर्भानुर्भूत्वा मां सोऽभि-रक्षतु ॥ १०२ ॥ ये चानुपतिता गर्भा यथाभागानुपासते। नम-स्तेभ्यः स्वधा स्वाहा प्राप्नुवन्तु मुदन्तु ते ॥ १०३ ॥ येऽङ्गुष्ठमात्राः पुरुषा देहस्थाः सर्वदेहिनाम्। रक्षन्तु ते हि मां नित्यं नित्य-

श्चाप्याययन्तु माम् ॥ १०४ ॥ ये न रोदन्ति देहस्था देहिनो रोदयन्ति च। हर्षयन्ति न हृष्यन्ति नमस्तेभ्योऽस्तु नित्यशः ॥१०५॥ ये नदीषु समुद्रेषु पर्व्वतेषु गुहासु च। वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ॥ १०६ ॥ चतुष्पथेषु रथ्यासु चत्वरेषु तटेषु च। हस्त्यश्वरथशालासु जीर्णोद्यानालयेषु च ॥ १०७ ॥ येषु पञ्चसु भूतेषु दिशासु विदिशासु च। चन्द्रार्कयोर्मध्यगता ये च कन्द्रार्करश्मिषु ॥ १०८ ॥ रसातलगता ये च ये च तस्मै परं गताः। नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्योऽस्तु नित्यशः ॥ १०९ ॥ येषां न विद्यते संख्या प्रमाणं रूपमेवच। असंख्येयगुणा रुद्रा नमस्तेभ्योऽस्तु नित्यशः ॥ ११० ॥ सर्व्वभूतकरो यस्मात् सर्व्वभूतपतिर्हरः। सर्व्वभूतान्तरात्मा च तेन त्वं न निमन्त्रितः ॥ १११ ॥ त्वमेव हीज्यसे यस्मात् यज्ञैर्विविधदक्षिणैः। त्वमेव कर्त्ता सर्व्वस्य तेन त्वं न निमन्त्रितः ॥ ११२ ॥ अथ वा मायया देव सूक्ष्मया तव मोहितः। एतस्मात् कारणाद्वापि तेन त्वं न निमन्त्रितः ॥ ११३ ॥ प्रसीद मम भद्रन्ते भव भावगतस्य मे। त्वयि मे हृदयं देव त्वयि बुद्धिर्मनस्त्वयि ॥ ११४ ॥ स्तुत्वैवं स महादेवं विरराम प्रजापतिः। भगवानपि सुप्रीतः पुनर्दक्षमभाषत ॥ ११५ ॥ परितुष्टोऽस्मि ते दक्ष स्तवेनानेन सुव्रत। बहुनात्र किमुक्तेन मत्समीपे भविष्यसि ॥ ११६ ॥ अश्वमेधसहस्रस्य वाजपेयशतस्य च। प्रजापते मत्प्रसादात् फलभागी भविष्यसि ॥ ११७ ॥ अथैनमब्रवीद्वाक्यं लोकस्याधिपतिर्भवः। आश्वासनकरं वाक्यं वाक्यविद्वाक्यसम्मतम् ॥ ११८ ॥ दक्ष दक्ष न कर्त्तव्यो मन्युर्विघ्नमिमं प्रति। अहं यज्ञहरस्तुभ्यं दृष्टमेतत् पुरातनम् ॥ ११९ ॥ भूयश्च ते वरं दद्मि तं त्वं गृह्णीष्व सुव्रत। प्रसन्नवदनो भूत्वा तदिहैकमनाः शृणु ॥ १२० ॥ वेदात् षडङ्गादुद्धृत्य सांख्ययोगाच्च युक्तितः। तपः सुतप्तं विपुलं दुश्चरं देवदानवैः ॥ १२१ ॥ अपूर्वं सर्व्वतो भद्रं विश्वतोमुखमव्ययम्। अब्दै-

षडङ्गसंयुक्तं गूढमप्राज्ञनिन्दितम् ॥ १२२ ॥ वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित् समम्। गतान्तैरध्यवसितमत्याश्रममिदं व्रतम् ॥ १२३ ॥ मया पाशुपतं दक्ष शुभमुत्पादितं पुरा। तस्य चीर्णस्य तत् सम्यक् फलं भवति पुष्कलम् ॥ १२४ ॥ तच्चास्तु ते महाभाग त्यज्यतां मानसो ज्वरः। एवमुक्त्वा महादेव सपत्नीकः सहानुगः। अदर्शनमनुप्राप्तो दक्षस्यामितविक्रमः ॥ १२५ ॥ दक्षप्रोक्तं स्तवमिमं कीर्त्तयेद्यः शृणोति वा। नाशुभं नाप्नुयात् किञ्चिद्दीर्घमायुरवाप्नुयात् ॥ १२६ ॥ यथा सर्वेषु देवेषु वरिष्ठो भगवाञ्छिवः। तथा स्तवो वरिष्ठोऽयं स्तवानां ब्रह्मसम्मितः ॥ १२७ ॥ यशोराज्यसुखैश्वर्यकामार्थधनकाङ्क्षिभिः। श्रोतव्यो भक्तिमास्थाय विद्याकामैश्च यत्नतः ॥ १२८ ॥ व्याधितो दुःखितो दीनश्चोरग्रस्तो भयार्दितः। राजकार्य्याभियुक्तो वा मुच्यते महतो भयात् ॥ १२९ ॥ अनेनैव तु देहेन गणानां समतां व्रजेत्। तेजसा यशसा चैव युक्तो भवति निर्म्मलः ॥ १३० ॥ न राक्षसाः पिशाचा वा न भूता न विनायकाः। विघ्नं कुर्य्युर्गृहे तस्य यत्रायं पठ्यते स्तवः ॥ १३१ ॥ शृणुयाच्चैव या नारी तद्भक्ता ब्रह्मचारिणी। पितृपक्षे मातृपक्षे पूज्या भवति देववत् ॥ १३२ ॥ शृणुयाद्यः स्तवं कृत्स्नं कीर्त्तयेद्वा समाहितः। तस्य सर्वाणि कर्माणि सिद्धिं गच्छन्त्यभीक्ष्णशः ॥१३३॥ मनसा चिन्तितं यच्च यच्च वाचानुकीर्त्तितम्। सर्वं सम्पद्यते तस्य स्तवस्यास्यानुकीर्त्तनात् ॥ १३४ ॥ देवस्य च गुहस्यापि देव्या नन्दीश्वरस्य च। बलिं सुविहितं कृत्वा दमेन नियमेन च ॥१३५॥ ततस्तु युक्तो गृह्णीयात् नामान्याशु यथाक्रमम्। ईप्सितान् लभते सोऽर्थान् भोगान् कामांश्च मानवः ॥ १३६ ॥ मृतश्च स्वर्गमाप्नोति तिर्य्यक्षु च न जायते। इत्याह भगवान् व्यासः पराशरसुतः प्रभुः ॥ १३७ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि दक्षप्रोक्तशिवसहस्रनामस्तोत्रे चतुरशीत्यधिकद्विशततोऽध्यायः ॥ २८४ ॥

युधिष्ठिर उवाच। अध्यात्मं नाम यदिदं पुरुषस्येह विद्यते।
तदध्यात्मं यतश्चैव तन्मे ब्रूहि पितामह ॥ १ ॥
भीष्म उवाच। सर्व्वज्ञानपरं बुद्ध्या यन्मां त्वमनुपृच्छसि।
तद्व्याख्यास्यामि ते तात तस्य व्याख्यामिमां शृणु ॥ २ ॥ पृथिवी
वायुराकाशमापो ज्योतिश्च पञ्चमम्। महाभूतानि भूतानां सर्व्वेषां
प्रभवाप्ययौ ॥ ३ ॥ स तेषां गुणसङ्घातः शरीरं भरतर्षभ। सततं
हि प्रलीयन्ते गुणास्ते प्रभवन्ति च ॥ ४ ॥ ततः सृष्टानि भूतानि
तानि यान्ति पुनः पुनः। महाभूतानि भूतेभ्यो ऊर्म्मयः सागरे
यथा ॥ ५ ॥ प्रसारयित्वेहाङ्गानि कूर्म्मः संहरते यथा। तद्वद्-
भूतानि भूतानामल्पीयांसि स्थवीयसाम् ॥ ६ ॥ आकाशात् खलु
यो घोषः सङ्घातस्तु महीगुणः। वायोः प्राणो रसस्त्वद्भ्यो रूपं
तेजस उच्यते ॥ ७ ॥ इत्येतन्मयमेवैतत् सर्व्वं स्थावरजङ्गमम्।
प्रलये च तमभ्येति तस्मादुद्दिश्यते पुनः ॥ ८ ॥ महाभूतानि पञ्चैव
सर्व्वभूतेषु भूतकृत्। विषयान् कल्पयामास यस्मिन् यदनुपश्यति
॥ ९ ॥ शब्दश्श्रोत्रे तथा खानि त्रयमाकाशयोनिजम्। रसः
स्नेहश्च जिह्वा च अपामेते गुणाः स्मृताः ॥ १० ॥ रूपञ्चक्षुर्विपा-
कश्च त्रिविधं ज्योतिरुच्यते। घ्रेयं घ्राणं शरीरञ्च एते भूमिगुणाः
स्मृताः ॥ ११ ॥ प्राणः स्पर्शश्च चेष्टा च वायोरेते गुणाः स्मृताः।
इति सर्व्वगुणा राजन् व्याख्याताः पाञ्चभौतिकाः ॥ १२ ॥ सत्त्वं
रजस्तमः कालः कर्म्म बुद्धिश्च भारत। मनःषष्ठानि चैतेषु ईश्वरः
समकल्पयत् ॥ १३ ॥ यदूर्द्ध्वं पादतलयोरवाङ्मूर्द्ध्नश्च पश्यसि। एत-
स्मिन्नेव कृत्स्नेयं वर्त्तते बुद्धिरन्तरे ॥ १४ ॥ इन्द्रियाणि नरे पञ्च
षष्ठन्तु मन उच्यते। सप्तमीं बुद्धिमेवाहुः क्षेत्रज्ञः पुनरष्टमः ॥ १५ ॥
इन्द्रियाणि च कर्त्ता च विचेतव्यानि भागशः। तमः सत्त्वं रज-
श्चैव तेऽपि भावास्तदाश्रयाः ॥ १६ ॥ चक्षुरालोचनायैव संशयं
कुरुते मनः। बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते ॥ १७ ॥

तमः सत्त्वं रजश्चेति कालः कर्म्म च भारत। गुणैर्निनीयते बुद्धि-र्बुद्धिरेवेन्द्रियाणि च ॥ १८ ॥ मनःषष्ठानि सर्वाणि बुद्ध्यभावे कुतो गुणाः। येन पश्यति तच्चक्षुः शृखती श्रोत्रमुच्यते। जिघ्रती भवति घ्राणं रसती रसना रसान् ॥ १९ ॥ स्पर्शनं स्पर्शती स्पर्शान् बुद्धिर्विक्रियतेऽसकृत्। यदा प्रार्थयते किञ्चित् तदा भवति सा मनः ॥ २० ॥ अधिष्ठानानि बुद्ध्या हि पृथगेतानि पञ्चधा। इन्द्रि-याणीति तान्याहुस्तेषु दुष्टेषु दुष्यति ॥ २१ ॥ तिष्ठती पुरुषे बुद्धि-स्त्रिषु भावेषु वर्त्तते। कदाचिल्लभते प्रीतिं कदाचिदपि शोचति ॥२२॥ न सुखेन न दुःखेन कदाचिदपि वर्त्तते। सेयं भावात्मिका भावां-स्त्रीनेतान् परिवर्त्तते ॥ २३ ॥ सरितां सागरो भर्त्ता यथा वेला-मिवोर्म्मिमान्। इति भागवता बुद्धिर्भावे मनसि वर्त्तते ॥ २४ ॥ प्रवर्त्तमानन्तु रजस्तद्भावेनानुवर्त्तते। प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता ॥ २५ ॥ कथञ्चिदुपपद्यन्ते पुरुषे सात्त्विका गुणाः। परिदाहस्तथा शोकः सन्तापो मूर्त्तिरक्षमा ॥ २६ ॥ लिङ्गानि रजसस्तानि दृश्यन्ते चेहहेतुभिः। अविद्या रागमोहौ च प्रमाद-स्तव्धता भयम् ॥ २७ ॥ असमृद्धिस्तथा दैन्यं प्रमादः स्वप्नतन्द्रिता। कथञ्चिदुपवर्त्तन्ते विविधास्तामसा गुणाः ॥ २८ ॥ अत्र यत् प्रीति-संयुक्तं काये मनसि वा भवेत्। वर्त्तते सात्त्विको भाव इत्युपेक्षेत तत्तथा ॥ २९ ॥ अथ यद्दुःखसंयुक्तमप्रीतिकरमात्मनः। प्रवृत्तं रज इत्येव तदसंरभ्य चिन्तयेत् ॥ ३० ॥ अथ यन्मोहसंयुक्तं काये मनसि वा भवेत्। अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ ३१ ॥ इति बुद्धिगताः सर्वा व्याख्याता यावतीरिह। एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणम् ॥३२॥ सत्त्वक्षेत्रज्ञयोरेतदन्तरं विद्धि सूक्ष्मयोः। सृजतेऽत्र गुणानेक एको न सृजते गुणान् ॥ ३३ ॥ पृथग्भूतौ प्रकृत्या तु सम्प्रयुक्तौ च सर्वदा। यथा मत्स्योऽद्भिरन्यः स्यात् सम्प्रयुक्तो भवेत्तथा ॥ ३४ ॥ न गुणा विदुरात्मानं स गुणान्वेद

र्व्वतः। परिद्रष्टा गुणानान्तु संसृष्टा मन्यते यथा ॥ ३५ ॥
आश्रयो नास्ति सत्त्वस्य गुणसर्गेण चेतना। सत्त्वमस्य सृजन्त्यन्ये
गुणान् वेद कदाचन ॥ ३६ ॥ सृजते हि गुणान् सत्त्वं क्षेत्रज्ञः
परिपश्यति । सम्प्रयोगस्तयोरेष सत्त्वक्षेत्रज्ञयोर्ध्रुवः ॥ ३७ ॥
इन्द्रियैस्तु प्रदीपार्थं क्रियते बुद्धिरन्तरा। निश्चक्षुर्भिरजानद्भि-
रिन्द्रियाणि प्रदीपवत् ॥ ३८ ॥ एवं स्वभावमेवैतत् तद्बुद्ध्वा विहरे-
न्नरः। अशोचन्नप्रहृष्यंश्च स वै विगतमत्सरः ॥ ३९ ॥ स्वभाव-
सिद्धमेवैतद्यदिमान् सृजते गुणान् । ऊर्णनाभिर्यथा सूत्रं विज्ञेया-
स्तन्तुवद्गुणाः ॥ ४० ॥ प्रध्वस्ता न निवर्त्तन्ते प्रवृत्तिर्नोपलभ्यते।
प्रत्यक्षेण परोक्षं तदनुमानेन सिध्यति । एवमेके व्यवस्यन्ति
निवृत्तिरिति चापरे ॥ ४१ ॥ इतीमं हृदयग्रन्थिं बुद्धिचिन्तामयं
दृढ़म । विमुच्य सुखमासीत विशोकश्छिन्नसंशयः ॥ ४२ ॥ ताम्येयुः
प्रच्युताः पृथ्वीं मोहपूर्णां नदीं नराः। यथागाधमविद्वांसो बुद्धि-
योगमयं तथा ॥ ४३ ॥ नैव ताम्यति विद्वांसः प्लवन्तः पारमम्भसः
अध्यात्मविदुषो धीरा ज्ञानन्तु परमं प्लवः ॥ ४४ ॥ न भवति
विदुषां महद्भयं यदविदुषां सुमहद्भयं भवेत्। न हि गतिरधि-
कास्ति कस्यचित् सकृदुपदर्शयतीह तुल्यताम् ॥ ४५ ॥ यत्करोति
बहुदोषमेकतस्तच्च दूषयति यत् पुरा कृतम्। नाप्रियं तदुभयं
करोत्यसौ यच्च दूषयति यत् करोति च ॥ ४६ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि पाञ्चभौतिके
पञ्चाशीत्यधिकद्विशतोऽध्यायः ॥ २८५ ॥

---

युधिष्ठिर उवाच। सुदुःखाच्च सुमृत्योश्च त्रसन्ते प्राणिनः सदा।
उभयं नो यथा न स्यात्तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच । अत्राप्युदाहरन्तीममितिहासं पुरातनम् । नारदस्य च सम्वादं समङ्गस्य च भारत ॥ २ ॥

नारद उवाच । उरसेव प्रणमसे बाहुभ्यां तरसीव च । सम्प्रहृष्टमना नित्यं विशोक इव लक्ष्यसे ॥ ३ ॥ उद्वेगं न हि ते किञ्चित् सुसूक्ष्ममपि लक्षये । नित्यतृप्त इव स्वस्थो बालवच्च विचेष्टसे ॥४॥

समङ्ग उवाच । भूतं भव्यं भविष्यच्च सर्वमेतत्तु मानद । तेषां तत्त्वानि जानामि ततो न विमना ह्यहम् ॥ ५ ॥ उपक्रमानहं वेद पुनरेव फलोदयान् । लोके फलानि चित्राणि ततो न विमना ह्यहम् ॥ ६ ॥ अगाधाश्चाप्रतिष्ठाश्च गतिमन्तश्च नारद । अन्धा जड़ाश्च जीवन्ति पश्यास्मानपि जीवतः ॥ ७ ॥ विहितेनैव जीवन्ति अरोगाङ्गा दिवौकसः । बलवन्तोऽबलाश्चैव तस्मादस्मान् सभाजय ॥ ८ ॥ सहस्रिणोऽपि जीवन्ति जीवन्ति शतिनस्तथा । शोकेन चान्ये जीवन्ति पश्यास्मानपि जीवतः ॥ ९ ॥ यदा न शोचेमहि किन्नु नः स्याद्धर्मेण वा नारद कर्मणा वा । कृतान्तवश्यानि यदा सुखानि दुःखानि वा यन्न विधर्षयन्ति ॥ १० ॥ यस्मै प्राज्ञाः कथयन्ते मनुष्याः प्रज्ञामूलो हीन्द्रियाणां प्रसादः । मुह्यन्ति शोचन्ति तथेन्द्रियाणि प्रज्ञालाभो नास्ति मूढ़ेन्द्रियस्य ॥ ११ ॥ मूढ़स्य दर्पः स पुनर्म्मोह एव मूढ़स्य नायं न परोऽस्ति लोकः । न ह्येव दुःखानि सदा भवन्ति सुखस्य वा नित्यशो लाभ एव ॥ १२ ॥ भवात्मकं संपरिवर्त्तमानं न मादृशः संज्वरं जातु कुर्य्यात् । इष्टान् भोगान्नानुबुध्येत् सुखं वा न चिन्तयेत् दुःखमभ्यागतं वा ॥ १३ ॥ समाहितो न स्पृहयेत् परेषां नानागतञ्चाभिनन्देच्च लाभम् । न चापि हृष्येद्विपुलेऽर्थलाभे तथार्थनाशे च न वै विषीदेत् ॥ १४ ॥ न बान्धवा न च वित्तं न कौल्यं न च श्रुतं मन्त्रा न वीर्य्यम् । दुःखात्त्रातुं सर्व एवोत्सहन्ते परत्र शीलेन तु यान्ति शान्तिम् ॥ १५ ॥ नास्ति बुद्धिरयुक्तस्य नायोगाद्विन्दते सुखम् । धृतिश्च

दुःखत्यागश्चेत्युभयन्तु सुखोदयम् ॥ १६ ॥ प्रियं हि हर्षजननं
हर्षं उत्सेकवर्द्धनम् । उत्सेको नरकायैव तस्मात्तान् संत्यजा-
म्यहम् ॥ १७ ॥ एताञ्छोकभयोत्सेकान् मोहनान् सुखदुःखयोः ।
पश्यामि साक्षिवल्लोके देहस्यास्य विचेष्टनात् ॥ १८ ॥ अर्थकामौ
परित्यज्य विशोको विगतज्वरः । तृष्णामोहौ तु संत्यज्य चरामि
पृथिवीमिमाम् ॥ १९ ॥ नच मृत्योर्न चाधर्मान्न लोभान्न कुतश्चन ।
पीतामृतस्येवात्यन्तमिह चामुत्र चाभयम् ॥ २० ॥ एतद्ब्रह्मन्
विजानामि महत् कृत्वा तपोऽव्ययम् । तेन नारद सम्प्राप्तो न मां
शोकः प्रबाधते ॥ २१ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि समङ्गनारदसंवादे
षड़शीत्यधिकद्विशततोऽध्यायः ॥ २८६ ॥

---

युधिष्ठिर उवाच । अतत्त्वज्ञस्य शास्त्राणां सततं संशयात्मनः ।
अकृतव्यवसायस्य श्रेयो ब्रूहि पितामह ॥ १ ॥
भीष्म उवाच । गुरुपूजा च सततं वृद्धानां पर्य्युपासनम् ।
श्रवणञ्चैव शास्त्राणां कूटस्थं श्रेय उच्यते ॥ २ ॥ अत्राप्युदाहरन्ती-
ममितिहासं पुरातनम् । गालवस्य च संवादं देवर्षेर्नारदस्य च
॥ ३ ॥ वीतमोहक्लमं विप्रं ज्ञानतृप्तं जितेन्द्रियम् । श्रेयस्कामो
यतात्मनं नारदं गालवोऽब्रवीत् ॥ ४ ॥ यैः कैश्चित् सम्मतो लोके
गुणैश्च पुरुषो मुने । भवत्यनपगान् सर्वांस्तान् गुणान् लक्षयामहे
॥ ५ ॥ भवानेवम्विधोऽस्माकं संशयं छेत्तुमर्हति । अमूढ़श्चिरमूढ़ानां
लोकतत्त्वमजानताम् ॥ ६ ॥ ज्ञाने ह्येवं प्रवृत्तिः स्यात् कार्य्याणा-
मविशेषतः । यत् कार्य्यं न व्यवस्यामस्तद्भवान् वक्तुमर्हति ॥ ७ ॥
भगवन्नाश्रमाः सर्वे पृथगाचारदर्शिनः । इदं श्रेय इदं श्रेय इति
सर्वे प्रबोधिताः ॥ ८ ॥ तांस्तु विप्रस्थितान् दृष्ट्वा शास्त्रैः शास्त्राभि-

नन्दिनः। स्वशास्त्रैः परितुष्टांश्च श्रेयो नोपलभामहे ॥ ९ ॥ शास्त्रं यदि भवेदेकं श्रेयोव्यक्तं भवेत्तदा। शास्त्रैश्च बहुभिर्भूयः श्रेयो गुह्यं प्रवेशितम् ॥ १० ॥ एतस्मात् कारणाच्छ्रेयः कलिलं प्रतिभाति मे। ब्रवीतु भगवांस्तन्मे उपसन्नोऽस्म्यधीहि भोः ॥ ११ ॥

नारद उवाच। आश्रमास्तात चत्वारो यथासङ्कल्पिताः पृथक्। तान् सर्वाननुपश्य त्वं समाश्रित्येति गालव ॥ १२ ॥ तेषान्तेषान्तथा हि त्वमाश्रमाणान्ततस्ततः। नानारूपं गुणोद्देशं पश्य विप्रस्थितं पृथक् ॥ १३ ॥ न यान्ति चैव ते सम्यगभिप्रेतमसंशयम्। ऋजु-पश्यंस्तथासम्यगाश्रमाणां परां गतिम् ॥ १४ ॥ यत्त निःश्रेयसं सम्यक् तथैवासंशयात्मकम्। अनुग्रहञ्च मित्राणाममित्राणाञ्च निग्रहम् ॥ १५ ॥ संग्रहञ्च त्रिवर्गस्य श्रेय आहुर्मनीषिणः। निवृत्तिः कर्मणः पापात् सततं पुण्यशीलता। सद्भिश्च समुदाचारः श्रेय एतदसंशयम् ॥ १६ ॥ मार्दवं सर्वभूतेषु व्यवहारेषु चार्जवम्। वाक् चैव मधुरा प्रोक्ता श्रेय एतदसंशयम् ॥ १७ ॥ दैवतेभ्यः पितृभ्यश्च संविभागोऽतिथिष्वपि। असंत्यागश्च भृत्यानां श्रेय एतदसंशयम् ॥ १८ ॥ सत्यस्य वचनं श्रेय सत्यज्ञानन्तु दुष्करम्। यद्भूतहितमत्यन्तमेतत् सत्यं ब्रवीम्यहम् ॥ १९ ॥ अहङ्कारस्य च त्यागः प्रमादस्य च निग्रहः। सन्तोषश्चैकचर्य्या च कूटस्थं श्रेय उच्यते ॥ २० ॥ धर्म्मेण वेदाध्ययनं वेदाङ्गानां तथैव च। ज्ञानार्थानाञ्च जिज्ञासा श्रेय एतदसंशयम् ॥ २० ॥ शब्दरूपरसस्पर्शान् सह गन्धेन केवलान्। नात्यर्थमुपसेवेत श्रेयसोऽर्थी कथञ्चन ॥२२॥ नक्तंचर्य्यां दिवास्वप्नमालस्यं पैशुनं मदम्। अतियोगमयोगञ्च श्रेयसोऽर्थी परित्यजेत् ॥ २३ ॥ आत्मोत्कर्षं न मार्गेत परेषां परिनिन्दया। स्वगुणैरेव मार्गेत विप्रकर्षं पृथग्जनात् ॥ २४ ॥ निर्गुणास्त्वेव भूयिष्ठमात्मसम्भाविता नराः। दोषैरन्यान् गुणवतः क्षिपन्त्यात्मगुणक्षयात् ॥ २५ ॥ अनूच्यमानास्तु पुनस्ते मन्यन्ते

महाजनात्। गुणवत्तरमात्मानं स्वेन मानेन दर्पिताः॥ २६॥ अब्रुवन् कस्यचिन्निन्दामात्मपूजामवर्णयन्। विपश्चिद्गुणसम्पन्नः प्राप्नोत्येव महद्यशः॥ २७॥ अब्रुवन् वाति सुरभिर्गन्धः सुमनसां शुचिः। तथैवाव्याहरन् भाति विमलो भानुरम्बरे॥ २८॥ एवमादीनि चान्यानि परित्यक्तानि मेधया। ज्वलन्ति यशसा लोके यानि न व्याहरन्ति च॥ २९॥ न लोके दीप्यते मूर्खः केवलात्मप्रशंसया। अपि चापिहितः श्वभ्रे कृतविद्यः प्रकाशते॥ ३०॥ असदुच्चैरपि प्रोक्तः शब्दः समुपशाम्यति। दीप्यते त्वेव लोकेषु शनैरपि सुभाषितम्॥ ३१॥ मूढानामवलिप्तानामसारं भाषितं बहु। दर्शयत्यन्तरात्मानमग्निरूपमिवांशुमान्॥ ३२॥ एतस्मात् कारणात् प्रज्ञां मृगयन्ते पृथग्विधाम्। प्रज्ञालाभो हि भूतानामुत्तमः प्रतिभाति मे॥ ३३॥ नापृष्टः कस्यचिद्ब्रूयान्नाप्यन्यायेन पृच्छतः। ज्ञानवानपि मेधावी जड़वत् समुपाविशेत्॥ ३४॥ ततो वासम्परीक्षेत धर्म्मनित्येषु साधुषु। मनुष्येषु वदान्येषु स्वधर्म्मनिरतेषु च॥ ३५॥ चतुर्णां यत्र वर्णानां धर्म्मव्यतिक्रमो भवेत्। न तत्र वासं कुर्व्वीत श्रेयोऽर्थी वै कथञ्चन॥ ३६॥ निरारम्भोऽप्ययमिह यथालब्धोपजीवनः। पुण्यं पुण्येषु विमलं पापं पापेषु चाप्नुयात्॥ ३७॥ अपामग्नेस्तथेन्दोश्च स्पर्शं वेदयते यथा। तथा पश्यामहे स्पर्शमुभयोः पुण्यपापयोः॥ ३८॥ अपश्यन्तोऽनुविषयं भुञ्जते विषसाशिनः। भुञ्जानाश्चात्मविषयान् विषयान् विद्धि कर्म्मणाम्॥ ३९॥ यत्रागमयमानानामसत्कारेण पृच्छताम्। प्रब्रूयाद्ब्राह्मणो धर्मं त्यजेत्तं देशमात्मवान्॥ ४०॥ शिष्योपाध्यायिका वृत्तिर्यत्र स्यात् सुसमाहिता। यथावत् शास्त्रसम्पन्ना कस्तं देशं परित्यजेत्॥ ४१॥ आकाशस्था ध्रुवं यत्र दोषान् ब्रूयुर्विपश्चिताम्। आत्मपूजाभिकामा वै को वसेत्तत्र पण्डितः॥ ४२॥ यत्र संलोड़िता लुब्धैः प्रायशो धर्म्मसेतवः। प्रदीप्तमिव चैलान्तं

कस्तं देशं न संत्यजेत् ॥ ४३ ॥ तत्र धर्म्ममनाशङ्काश्चरेयुर्वीत-
मत्सराः । भवेत्तत्र वसेच्चैव पुण्यशीलेषु साधुषु ॥ ४४ ॥ धर्म-
मर्थनिमित्तञ्च चरेयुर्यत्र मानवाः । न ताननुवसेज्जातु ते हि पाप-
कृतो जनाः ॥ ४५ ॥ कर्मणा यत्र पापेन वर्त्तन्ते जीवितेप्सवः ।
व्यवधावेत्ततस्तूर्णं ससर्पाच्छरणादिव ॥ ४६ ॥ येन खट्वां समारूढ़ः
कर्मणानुशयी भवेत् । आदितस्तन्न कर्त्तव्यमिच्छता भवमात्मनः
॥ ४७ ॥ यत्र राजा च राज्ञश्च पुरुषाः प्रत्यनन्तराः । कुटुम्बिना-
मग्रभुजस्त्यजेत्तद्राष्ट्रमात्मवान् ॥ ४८ ॥ श्रोत्रियास्त्वग्रभोक्तारो धर्म-
नित्याः सनातनाः । याजनाध्यापने युक्ता यत्र तद्राष्ट्रमावसेत् ॥४९॥
स्वाहास्वधावषट्कारा यत्र सम्यगनुष्ठिताः । अजस्रञ्चैव वर्त्तन्ते
वसेत्तत्राविचारयन्॥ ५० ॥ अशुचीन् यत्र पश्येत ब्राह्मणान् वृत्ति-
कर्षितान् । त्यजेत्तद्राष्ट्रमासन्नमुपसृष्टमिवामिषम् ॥ ५१ ॥ प्रीय-
माणा नरा यत्र प्रयच्छेयुरयाचिताः । स्वस्थचित्तो वसेत्तत्र कृत-
कृत्य इवात्मवान् ॥ ५२॥ दण्डो यत्राविनीतेषु सत्कारश्च कृतात्मसु ।
चरेत्तत्र वसेच्चैव पुण्यशीलेषु साधुषु ॥ ५३ ॥ उपसृष्टेषु दान्तेषु
दुराचारेषु साधुषु । अविनीतेषु लुब्धेषु सुमहद्दण्डधारणम् ॥५४ ॥
यत्र राजा धर्मनित्यो राज्यं धर्मेण पालयेत् । अपास्य कामान्
कामेशो वसेत्तत्राविचारयन् ॥५५॥ तथा शीला हि राजानः सर्वान्
विषयवासिनः । श्रेयसा योजयन्त्याशु श्रेयसि प्रत्युपस्थिते ॥ ५६ ॥
पृच्छतस्ते मया तात श्रेय एतदुदाहृतम् । न हि शक्यं प्रधानेन
श्रेयः संख्यातुमात्मनः ॥ ५७ ॥ एवं प्रवर्त्तमानस्य वृत्तिं प्रणिहिता-
त्मनः । तपसैवेह बहुलं श्रेयो व्यक्तं भविष्यति ॥ ५८ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि श्रेयोवाचिके
सप्ताशीत्यधिकद्विशततोऽध्यायः ॥ २८७ ॥

---

युधिष्ठिर उवाच । कथं नु युक्तः पृथिवीं चरेदस्मद्विधो नृपः ।
नित्यं कैश्च गुणैर्युक्तः सङ्गपाशाद्विमुच्यते ॥ १ ॥

भीष्म उवाच । अत्र ते वर्त्तयिष्येऽहमितिहासं पुरातनम् ।
अरिष्टनेमिना प्रोक्तं सगरायानुपृच्छते ॥ २ ॥

सगर उवाच । किं श्रेयः परमं ब्रह्मन् कृत्वेह सुखमश्नुते ।
कथं न शोचेन्न क्षुभ्येदेतदिच्छामि वेदितुम् ॥ ३ ॥

भीष्म उवाच । एवमुक्तस्तदा तार्क्ष्यः सर्व्वशास्त्रविदाम्वरः ।
विबुध्य सम्पदञ्चाग्र्‌यां तद्वाक्यमिदमब्रवीत् ॥ ४ ॥ सुखं मोक्षसुखं
लोके न च मूढ़ोऽवगच्छति । प्रसक्तः पुत्रपशुषु धनधान्यसमाकुलः
॥ ५ ॥ सक्तबुद्धिरशान्तात्मा न शक्यं तच्चिकित्सितुम् । स्नेह-
पाशसितो मूढ़ो न स मोक्षाय कल्पते ॥ ६ ॥ स्नेहजानिह ते
पाशान् वक्ष्यामि शृणु तन्मम । सकर्णकेन शिरसा शक्याः श्रोतुं
वजानता ॥ ७ ॥ सम्भाव्य पुत्रान् कालेन यौवनस्थान् निवेश्य च ।
समर्थान् जीवने ज्ञात्वा मुक्तश्चर यथासुखम् ॥ ८ ॥ भार्य्यां पुत्र-
वतीं वृद्धां लालितां पुत्रवत्सलाम् । ज्ञात्वा प्रजह्हि कालेन परार्थ-
मनुदृश्य च ॥ ९ ॥ सापत्यो निरपत्यो वा मुक्तश्चर यथासुखम् ।
इन्द्रियैरिन्द्रियार्थांस्त्वमनुभूय यथाविधि ॥१०॥ कृतकौतूहलस्तेषु
मुक्तश्चर यथासुखम् । उपपत्त्योपलब्धेषु लाभेषु च समो भव ॥११॥
एष तावत् समासेन तव संकीर्त्तितो मया । मोक्षार्थो विस्तरेणाथ
भूयो वक्ष्यामि तत् शृणु ॥ १२ ॥ मुक्ता वीतभया लोके चरन्ति
सुखिनो नराः । सक्तभावा विनश्यन्ति नरास्तत्र न संशयः ॥ १३ ॥
आहारसञ्चयाश्चैव तथा कीटपिपीलिकाः । असक्ताः सुखिनो लोके
सक्ताश्चैव विनाशिनः ॥ १४ ॥ स्वजने न च ते चिन्ता कर्त्तव्या
मोक्षबुद्धिना । इमे मया विना भूता भविष्यन्ति कथन्त्विति ॥ १५ ॥
स्वयमुत्पद्यते जन्तुः स्वयमेव विवर्द्धते । सुखदुःखे तथा मृत्युं स्वय-
मेवाधिगच्छति ॥ १६ ॥ भोजनाच्छादने चैव मात्रा पित्रा च

संग्रहम्। स्वकृतेनाधिगच्छन्ति लोके नास्त्यकृतं पुरा॥ १७॥
धात्रा विहितभक्ष्याणि सर्वभूतानि मेदिनीम्। लोके विपरि-
धावन्ति रक्षितानि स्वकर्मभिः॥ १८॥ स्वयं मृत्पिण्डभूतस्य पर-
तन्त्रस्य सर्वदा। को हेतुः स्वजनं पोष्टुं रक्षितुञ्चाद्दृढात्मनः॥१९॥
स्वजनं हि यदा मृत्युर्हन्त्येव तव पश्यतः। कृतेऽपि यत्ने महति
तत्र बोद्धव्यमात्मना॥ २०॥ जीवन्तमपि चैवैनं भरणे रक्षणे
तथा। असमाप्ते परित्यज्य पश्चादपि मरिष्यसि॥ २१॥ यदा
मृतश्च स्वजनं न ज्ञास्यसि कदाचन। सुखितं दुःखितञ्चापि ननु
बोद्धव्यमात्मना॥ २२॥ मृते वा त्वयि जीवे वा यदा भोक्ष्यति
वै जनः। स्वकृतं ननु बुद्ध्वैवं कर्त्तव्यं हितमात्मनः॥ २३॥ एवं
विजानन् लोकेऽस्मिन् कः कस्येत्यभिनिश्चितः। मोक्षे निवेशय
मनो भूयश्चाप्युपधारय॥ २४॥ क्षुत्पिपासादयो भावा जिता
यस्येह देहिनः। क्रोधो लोभस्तथा मोहः सत्त्ववान्मुक्त एव सः
॥ २५॥ द्यूते पाने तथा स्त्रीषु मृगयायाञ्च यो नरः। न प्रमा-
द्यति सम्मोहात् सततं मुक्त एव सः॥ २६॥ दिवसे दिवसे नाम
रात्रौ रात्रौ पुमान् सदा। भोक्तव्यमिति यः खिन्नो दोषबुद्धिः स
उच्यते॥ २७॥ आत्मभावं तथा स्त्रीषु मुक्तमेवं पुनः पुनः। यः
पश्यति सदा युक्तो यथावन्मुक्त एव सः॥ २८॥ सम्भवञ्च विना-
शञ्च भूतानां चेष्टितं तथा। यस्तत्त्वतो विजानाति लोकेऽस्मिन्मुक्त
एव सः॥ २९॥ प्रस्थं वाहसहस्रेषु यात्रार्थञ्चैव कोटिषु। प्रासादे
मञ्चकं स्थानं यः पश्यति स मुच्यते॥ ३०॥ मृत्युनाभ्याहतं लोकं
व्याधिभिश्चोपपीड़ितम्। अवृत्तिकर्षितञ्चैव यः पश्यति स मुच्यते
॥ ३१॥ यः पश्यति स सन्तुष्टो न पश्यंश्च विहन्यते। यश्चाप्यल्पेन
सन्तुष्टो लोकेऽस्मिन्मुक्त एव सः॥ ३२॥ अग्नीषोमाविदं सर्वमिति
यश्चानुपश्यति। न च संस्पृश्यते भावैरद्भुतैर्मुक्त एव सः॥ ३३॥
पर्य्यङ्कशय्या भूमिश्च समाने यस्य देहिनः। शालयश्च कदन्नञ्च

यस्य स्यान्मुक्त एव सः ॥ ३४ ॥ चौमञ्च कुशचीरञ्च कौशेयं वल्कलानि च । आविकं चर्म्म च समं यस्य स्यान्मुक्त एव सः ॥ ३५ ॥ पञ्चभूतसमुद्भूतं लोकं यश्चानुपश्यति । तथा च वर्त्तते दृष्ट्वा लोकेऽस्मिन्मुक्त एव सः ॥ ३६ ॥ सुखदुःखे समे यस्य लाभालाभौ जयाजयौ । इच्छाद्वेषौ भयोद्वेगौ सर्व्वथा मुक्त एव सः ॥ ३७ ॥ रक्तमूत्रपुरीषाणां दोषाणां सञ्चयांस्तथा । शरीरं दोषबहुलं दृष्ट्वा चैव विमुच्यते ॥ ३८ ॥ वलीपलितसंयोगं कार्श्यं वैवर्ण्यमेव च । कुब्जभावञ्च जरया यः पश्यति स मुच्यते ॥ ३९ ॥ पुंस्त्वोपघातं कालेन दर्शनोपरमन्तथा । बाधिर्य्यं प्राणमन्दत्वं यः पश्यति स मुच्यते ॥ ४० ॥ गतानृषींस्तथा देवानसुरांश्च तथा गतान् । लोकादस्मात् परं लोकं यः पश्यति स मुच्यते ॥ ४१ ॥ प्रभावैरन्वितास्तैस्तै पार्थिवेन्द्राः सहस्रशः । ये गताः पृथिवीं त्यक्त्वा इति ज्ञात्वा विमुच्यते ॥ ४२ ॥ अर्थांश्च दुर्ल्लभांल्लोके क्लेशांश्च सुलभांस्तथा । दुःखञ्चैव कुटुम्बार्थे यः पश्यति स मुच्यते ॥ ४३ ॥ अपत्यानाञ्च वैगुण्यं जनं विगुणमेव च । पश्यन् भूयिष्ठशो लोके को मोक्षं नाभिपूजयेत् ॥ ४४ ॥ शास्त्राल्लोकाच्च यो बुद्धः सर्व्वं पश्यति मानवः । असारमिव मानुष्ये सर्व्वथा मुक्त एव सः ॥ ४५ ॥ एतच्छ्रुत्वा मम वचो भवांश्चरतु मुक्तवत् । गार्हस्थ्ये यदि वा मोक्षे कृता बुद्धिरविक्लवा ॥ ४६ ॥ तत्तस्य वचनं श्रुत्वा सम्यक् स पृथिवीपतिः । मोक्षजैश्च गुणैर्युक्तः पालयामास च प्रजाः ॥ ४७ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि सगरारिष्टनेमिसंवादे अष्टाशीत्यधिकद्विशतोऽध्यायः ॥ २८८ ॥

---

युधिष्ठिर उवाच । तिष्ठते मे सदा तात कौतूहलमिदं हृदि । तदहं श्रोतुमिच्छामि त्वत्तः कुरुपितामह ॥१ ॥ कथं देवर्षिरुशनाः

सदा काव्यो महामतिः। असुराणां प्रियकरः सुराणामप्रिये रतः
॥ २ ॥ वर्द्धयामास तेजश्च किमर्थममितौजसाम्। नित्यं वैरनिव-
द्धाश्च दानवः सुरसत्तमैः ॥ ३ ॥ कथञ्चाप्युशनाः प्राप शुक्रत्वममर-
द्युतिः। ऋद्धिञ्च स कथं प्राप्तः सर्वमेतद्ब्रवीहि मे ॥ ४ ॥ न याति
च स तेजस्वी मध्येन नभसः कथम्। एतदिच्छामि विज्ञातुं निखि-
लेन पितामह ॥ ५ ॥

भीष्म उवाच। शृणु राजन्नवहितः सर्वमेतद्यथातथम्।
यथामति यथा चैतच्छ्रुतपूर्वं मयानघ ॥ ६ ॥ एष भार्गवदायादो
मुनिर्मान्यो दृढव्रतः। सुराणां विप्रियकरो निमित्ते कारणात्मके
॥ ७ ॥ इन्द्रोऽथ धनदो राजा यक्षरक्षोऽधिपः सदा। प्रभविष्णुश्च
कोषस्य जगतश्च तथा प्रभुः ॥ ८ ॥ तस्यात्मानमथाविश्य योग-
सिद्धो महामुनिः। रुद्ध्वा धनपतिं देवं योगेन हृतवान् वसु ॥ ९ ॥
हृते धने ततः शर्म न लेभे धनदस्तथा। आपन्नमन्युः संविग्नः
सोऽभ्यगात् सुरसत्तमम् ॥ १० ॥ निवेदयामास तदा शिवायामि-
मिततेजसे। देवश्रेष्ठाय रुद्राय सौम्याय बहुरूपिणे ॥ ११ ॥
योगात्मकेनोशनसा रुद्ध्वा मम हृतं वसु। योगेनात्मगतं कृत्वा
निःसृतश्च महातपाः ॥ १२ ॥ एतच्छ्रुत्वा ततः क्रुद्धो महायोगी
महेश्वरः। संरक्तनयनो राजन् शूलमादाय तस्थिवान् ॥ १३ ॥
क्वासौ क्वासाविति प्राह गृहीत्वा परमायुधम्। उशना दूरतस्तस्य
बभौ ज्ञात्वा चिकीर्षितम् ॥ १४ ॥ स महायोगिनो बुद्ध्वा तं रोषं
वै महात्मनः। गतिमागमनं वेत्ति स्थानञ्चैव ततः प्रभुः ॥ १५ ॥
सञ्चिन्त्योग्रेण तपसा महात्मनं महेश्वरम्। उशना योगसिद्धात्मा
शूलाग्रे प्रत्यदृश्यत ॥ १६ ॥ विज्ञानरूपः स तदा तपः सिद्धोऽथ
धन्विना। ज्ञात्वा शूलञ्च देवेशः पाणिना समनामयत् ॥ १७ ॥
आनतेनाथ शूलेन पाणिनामिततेजसा। पिनाकमिति चोवाच
शूलमुग्रायुधः प्रभुः ॥ १८ ॥ पाणिमध्यगतं दृष्ट्वा भार्गवं तमुमा-

पतिः । आस्यं विवृत्य ककुद्री पाणिना प्राक्षिपत् शनैः ॥ १९ ॥
स तु प्रविष्ट उशनाः कोष्ठं माहेश्वरं प्रभुः । व्यचरच्चापि तत्रासौ
महात्मा भृगुनन्दनः ॥ २० ॥

युधिष्ठिर उवाच । किमर्थं व्यचरद्राजन्नुशनास्तस्य धीमतः ।
जठरे देवदेवस्य किञ्चाकार्षीन्महाद्युतिः ॥ २१ ॥

भीष्म उवाच । पुरा सोऽन्तर्ज्जलगतः स्थाणुभूतो महाव्रतः ।
वर्षाणामभवद्राजन् प्रयुतान्यर्बुदानि च ॥ २२ ॥ उदतिष्ठत्तपस्तप्त्वा
दुश्चरञ्च महाह्रदात् । ततो देवातिदेवस्तं ब्रह्मा वै समसर्पत ॥२३॥
ततोऽवृद्धिमपृच्छच्च कुशलञ्चैवमव्ययः । तपः सुचीर्णमिति च प्रोवाच
वृषभध्वजः ॥ २४ ॥ तत्संयोगेन वृद्धिञ्चाप्यपश्यत् स तु शङ्करः ।
महामतिरचिन्त्यात्मा सत्यधर्म्मरतः सदा ॥ २५ ॥ स तेनाढ्यो
महायोगी तपसा च धनेन च । व्यराजत महाराज त्रिषु लोकेषु
वीर्य्यवान् ॥ २६ ॥ ततः पिनाकी योगात्मा ध्यानयोगं समाविशत् ।
उशनास्तु समुद्विग्नो निलिल्ये जठरे ततः ॥ २७ ॥ तुष्टाव च महा-
योगी देवं तत्रस्थ एव च । निःसारं काङ्क्षमाणः स तेन स्म प्रति-
च्छन्यते ॥ २८ ॥ उशनास्तु तथोवाच जठरस्थो महामुनिः । प्रसादं
मे कुरुष्वेति पुनः पुनररिन्दम ॥ २९ ॥ तमुवाच महादेवो गच्छ
शिश्नेन मोक्षणम् । इति सर्व्वाणि स्रोतांसि रुद्ध्वा त्रिदशपुङ्गवः ॥३०॥
अपश्यमानस्तद्द्वारं सर्व्वतः पिहितो मुनिः । अर्थ्यक्रामद्दह्यमान इत-
श्चेतश्च तेजसा ॥ ३१ ॥ स वै निष्क्रम्य शिश्नेन शुक्रत्वमभिपेदिवान् ।
कार्य्येण तेन नभसो नागच्छत स मध्यतः ॥ ३२ ॥ विनिष्क्रान्तन्तु
तं दृष्ट्वा ज्वलन्तमिव तेजसा । भवो रोषसमाविष्टः शूलोद्यतकरः
स्थितः ॥ ३३ ॥ अवारयत तं देवी क्रुद्धं पशुपतिं पतिम् । पुत्रत्व-
मगमद्देव्या वारिते शङ्करे च सः ॥ ३४ ॥

देव्युवाच । हिंसनीयस्त्वया नैव मम पुत्रत्वमागतः । न हि
देवोदरात् कश्चित् निःसृतो नाशमर्च्छति ॥ ३५ ॥ ततः प्रीतो

भवो देव्याः प्रहसंस्तेदमब्रवीत् । गच्छत्वेष यथाकाममिति राजन् पुनः पुनः ॥ ३६ ॥ ततः प्रणम्य वरदं देवं देवीमुमान्तथा । उशनाः प्रापतद्धीमान् गतिमिष्टां महामुनिः ॥ ३७ ॥ एतत्ते कथितं तात भार्गवस्य महात्मनः । चरितं भरतश्रेष्ठ यन्मां त्वं परिपृच्छसि ॥३८॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि भवभार्गवसमागमे एकोननवत्यधिकद्विशतोऽध्यायः ॥ २८९ ॥

---

युधिष्ठिर उवाच । अतः परं महाबाहो यच्छ्रेयस्तद्ब्रवीहि मे । न तृप्याम्यमृतस्येव वचसस्ते पितामह ॥ १॥ किं कर्म पुरुषः कृत्वा शुभं पुरुषसत्तम । श्रेयः परमवाप्नोति प्रेत्य चेह च तद्वद ॥२॥

भीष्म उवाच । अत्र ते वर्त्तयिष्यामि यथा पूर्वं महायशाः । पराशरं महात्मानं पप्रच्छ जनको नृपः ॥ ३ ॥ किं श्रेयः सर्वभूतानामस्मिंल्लोके परत्र च । यद्भवेत् प्रतिपत्तव्यं तद्भवान् प्रब्रवीतु मे ॥ ४ ॥ ततः स तपसा युक्तः सर्वधर्मविधानवित् । नृपायानुग्रहमना मुनिर्वाक्यमथाब्रवीत् ॥ ५ ॥

पराशर उवाच । धर्म एव कृतः श्रेयानिह लोके परत्र च । तस्माद्धि परमं नास्ति यथा प्राहुर्मनीषिणः ॥ ६ ॥ प्रतिपद्य नरो धर्मं स्वर्गलोके महीयते । धर्मात्मकः कर्मविधिर्देहिनां नृपसत्तम । तस्मिन्नाश्रमिणः सन्तः स्वकर्माणीह कुर्वते ॥ ७ ॥ चतुर्विधा हि लोकेऽस्मिन् यात्रा तात विधीयते । मर्त्त्या यत्रावतिष्ठन्ते सा च कामात् प्रवर्त्तते ॥ ८ ॥ सुकृतासुकृतं कर्म निषेव्य विविधैः क्रमैः । दशार्द्धप्रविभक्तानां भूतानां बहुधा गतिः ॥ ९ ॥ सौवर्णं राजतञ्चापि यथा भाण्डं निषिच्यते । तथा निषिच्यते जन्तुः पूर्वकर्मवशानुगः ॥ १० ॥ नाबीजाज्जायते किञ्चिन्नाकृत्वा सुखमेधते । सुकृतैर्विन्दते सौख्यं प्राप्य देहक्षयं नरः ॥ ११ ॥ दैवं तात न

पश्यामि नास्ति दैवस्य साधनम्। स्वभावतो हि संसिद्धा देवगन्धर्व्वदानवाः ॥ १२ ॥ प्रेत्य यान्ति कृतं कर्म न स्मरन्ति सदा जनाः। ते वै तस्य फलप्राप्तौ कर्म चापि चतुर्व्विधम् ॥ १३ ॥ लोकयात्राश्रयश्चैव शब्दो वेदाश्रयः कृतः। शान्त्यर्थं मनसस्तात नैतद्वृद्धानुशासनम् ॥ १४ ॥ चक्षुषा मनसा वाचा कर्म्मणा च चतुर्व्विधम्। कुरुते यादृशं कर्म तादृशं प्रतिपद्यते ॥ १५ ॥ निरन्तरञ्च मिश्रञ्च लभते कर्म पार्थिव। कल्याणं यदि वा पापं न तु नाशोऽस्य विद्यते ॥ १६ ॥ कदाचित् सुकृतं तात कूटस्थमिव तिष्ठति। मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते ॥ १७ ॥ ततो दुःखक्षयं कृत्वा सुकृतं कर्म सेवते। सुकृतक्षयाद्दुष्कृतञ्च तद्विद्धि मनुजाधिप ॥ १८ ॥ दमः क्षमा धृतिस्तेजः सन्तोषः सत्यवादिता। ह्रीरहिंसा व्यसनिता दाक्ष्यञ्चेति सुखावहाः ॥ १९ ॥ दुष्कृते सुकृते चापि न जन्तुर्नियतो भवेत्। नित्यं मनः समाधाने प्रयतेत विचक्षणः ॥ २० ॥ नायं परस्य सुकृतं दुष्कृतञ्चापि सेवते। करोति यादृशं कर्म तादृशं प्रतिपद्यते ॥ २१ ॥ सुखदुःखे समाधाय पुमानन्येन गच्छति। अन्येनैव जनः सर्व्वं सङ्गतो यश्च पार्थिवाः ॥ २२ ॥ परेषां यदसूयेत न तत् कुर्य्यात् स्वयं नरः। यो ह्यसूयुस्तथा युक्तः सोऽवहासं नियच्छति ॥ २३ ॥ भीरू राजन्यो ब्राह्मणः सर्व्वभक्ष्यो वैश्योऽनीहावान् हीनवर्णोऽलसश्च। विद्वांश्चाशीलो वृत्तिहीनः कुलीनः सत्याद्विभ्रष्टो ब्राह्मणः स्त्री च दुष्टा ॥ २४ ॥ रागी युक्तः पचमानोऽऽत्महेतोर्मूर्खो वक्ता नृपहीनञ्च राष्ट्रम्। एते सर्व्वे शोच्यतां यान्ति राजन् यश्चायुक्तः स्नेहहीनः प्रजासु ॥ २५ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पराशरगीतायां
नवत्यधिकद्विशततोऽध्यायः ॥ २९० ॥

---

पराशर उवाच। मनोरथरथं प्राप्य इन्द्रियार्थहयं नरः।
रश्मिभिर्ज्ञानसम्भूतैर्यो गच्छति स बुद्धिमान ॥ १ ॥ सेवाश्रितेन
मनसा वृत्तिहीनस्य शस्यते। द्विजातिहस्तान्निर्वृत्ता न तु तुल्यात्
परस्परात् ॥ २ ॥ आयुर्न सुलभं लब्ध्वा नावकर्षेद्विशाम्पते। उत्-
कर्षार्थं प्रयतेत नरः पुण्येन कर्मणा ॥ ३ ॥ वर्णेभ्यो हि परिभ्रष्टो
न वै संमानमर्हति। न तु यत् सत्क्रियां प्राप्य राजसं कर्म सेवते
॥ ४ ॥ वर्णोत्कर्षमवाप्नोति नरः पुण्येन कर्मणा। दुर्लभं तम-
लब्ध्वा हि हन्यात् पापेन कर्मणा ॥ ५ ॥ अज्ञानाद्धि कृतं पापं
तपसैवाभिनिर्नुदेत्। पापं हि कर्म फलति पापमेव स्वयं कृतम्
॥ ६ ॥ तस्मात् पापं न सेवेत कर्म दुःखफलोदयम् ॥ ७ ॥ पापानु-
बन्धं यत् कर्म यद्यपिस्यान्महाफलम्। तन्न सेवेत मेधावी शुचिः
कुशलिनं यथा ॥ ८ ॥ किं कष्टमनुपश्यामि फलं पापस्य कर्मणः।
प्रत्यापन्नस्य हि ततो नात्मा तावद्विरोचते ॥ ९ ॥ प्रत्यापत्तिश्च
यस्येह वालिशस्य न जायते। तस्यापि सुमहांस्तापः प्रस्थित-
स्योपजायते ॥ १० ॥ विरक्तं शोध्यते वस्त्रं न तु कृष्णोपसंहितम्।
प्रयत्नेन मनुष्येन्द्र पापमेवं निबोध मे ॥ ११ ॥ स्वयं कृत्वा तु यः
पापं शुभमेवानुतिष्ठति। प्रायश्चित्तं नरः कर्त्तुमुभयं सोऽश्नुते
पृथक् ॥ १२ ॥ अज्ञानात्तु कृतां हिंसामहिंसा व्यपकर्षति। ब्राह्मणाः
शास्त्रनिर्देशादित्याहुर्ब्रह्मवादिनः ॥ १३ ॥ तथा कामकृतं नास्य
विहिंसैवानुकर्षति। इत्याहुर्ब्रह्मशास्त्रज्ञा ब्राह्मणा ब्रह्मवादिनः
॥ १४ ॥ अहन्तु तावत् पश्यामि कर्म यद्वर्त्तते कृतम्। गुणयुक्तं
प्रकाशत्वा पापेनानुपसंहितम् ॥ १५ ॥ यथा सूक्ष्माणि कर्माणि
फलन्तीह यथातथम्। बुद्धियुक्तानि तानीह कृतानि मनसा सह
॥ १६ ॥ भवत्यल्पफलं कर्म सेवितं नित्यमुल्वणम्। अबुद्धिपूर्वं
धर्मज्ञ कृतमुग्रेण कर्मणा ॥ १७ ॥ कृतानि यानि कर्माणि दैवतै-
र्मुनिभिस्तथा। न च चरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत् ॥१८॥

सञ्चिन्त्य मनसा राजन् विदित्वा शक्यमात्मनः । करोति यः शुभं कर्म्म स वै भद्राणि पश्यति ॥ १९ ॥ नवे कपाले सलिलं संन्यस्तं हीयते यथा । नवेतरे तथा भावं प्राप्नोति सुखभावितम् ॥ २० ॥ सतोयेऽन्यत्तु यत्तोयं तस्मिन्नेव प्रसिच्यते । वृद्धे वृद्धिमवाप्नोति सलिले सलिलं यथा ॥ २१ ॥ एवं कर्म्माणि यानीह बुद्धियुक्तानि पार्थिव । समानि चैव यानीह तानि पुण्यतमान्यपि ॥ २२ ॥ राज्ञा जेतव्याः शत्रवश्चोन्नताश्च सम्यक्कर्त्तव्यं पालनञ्च प्रजानाम् । अग्निश्चेयो बहुभिश्चापि यज्ञैरन्ते मध्ये वा वनमाश्रित्य स्थेयम् ॥ २३ ॥ दमान्वितः पुरुषो धर्म्मशीलो भूतानि चात्मानमिवानुपश्येत् । गरीयसः पूजयेदात्मशक्त्या सत्येन शीलेन सुखं नरेन्द्र ॥ २४ ॥

इतिशान्तिपर्वणि मोक्षधर्मपर्वणि पराशरगीतायां
एकनवत्यधिकद्विशततोऽध्यायः ॥ २९१ ॥

---

पराशर उवाच । कः कस्य चोपकुरुते कश्च कस्मै प्रयच्छति । प्राणी करोत्ययं कर्म्म सर्वमात्मार्थमात्मना ॥ १ ॥ गौरवेण परित्यक्तं निःस्नेहं परिवर्ज्जयेत् । सोदर्य्यं भ्रातरमपि किमुतान्यं पृथग्जनम् ॥ २ ॥ विशिष्टस्य विशिष्टाच्च तुल्यौ दानप्रतिग्रहौ । तयोः पुण्यतरं दानं तद्द्विजस्य प्रयच्छतः ॥ ३ ॥ न्यायागतधनञ्चैव न्यायेनैव विवर्द्धितम् । संरक्ष्यं यत्नमास्थाय धर्मार्थमिति निश्चयः ॥ ४ ॥ न धर्मार्थी नृशंसेन कर्मणा धनमर्ज्जयेत् । शक्तितः सर्वकार्य्याणि कुर्य्यान्नर्द्धिमनुस्मरेत् ॥ ५ ॥ अपो हि प्रयतः शीतास्तापिता ज्वलनेन वा । शक्तितोऽतिथये दत्त्वा क्षुधार्त्तायाश्नुते फलम् ॥ ६ ॥ रन्तिदेवेन लोकेषु सिद्धिः प्राप्ता महात्मना । फलपत्रैरथो मूलैर्मुनीनर्चितवांश्च सः ॥ ७ ॥ तैरेव फलपत्रैश्च समाठरमतोषयत् । तस्माल्लेभे परं स्थानं शैव्योऽपि पृथिवीपतिः ॥८॥

देवतातिथिभृत्येभ्यः पितृभ्यश्चात्मनस्तथा । ऋणवान् जायते मर्त्त्य-स्तस्मादनृणतां व्रजेत् ॥ ९ ॥ स्वाध्यायेन महर्षिभ्यो देवेभ्यो यज्ञ-कर्मणा । पितृभ्यः श्राद्धदानेन नृणामभ्यर्च्चनेन च ॥ १० ॥ वाचा शेषावहार्य्येण पालनेनात्मनोऽपि च । यथावद्भृत्यवर्गस्य चिकीर्षेत् कर्म्म आदितः ॥ ११ ॥ प्रयत्नेन च संसिद्धा धनैरपि विवर्ज्जिताः । सम्यग्घुत्वा हुतवहं मुनयः सिद्धिमागताः ॥ १२ ॥ विश्वामित्रस्य पुत्रत्वमृचीकतनयोऽगमत् । ऋग्भिः स्तुत्वा महाबाहो देवान् वै यज्ञभागिनः ॥ १३ ॥ गतः शुक्रत्वमुशना देवदेवप्रसादनात् । देवीं स्तुत्वा तु गगने मोदते यशसा वृतः ॥ १४ ॥ असितो देवलश्चैव तथा नारदपर्व्वतौ । कक्षीवान् जमदग्न्यश्च रामस्ताण्ड्यस्तथात्म-वान् ॥ १५ ॥ वशिष्ठो जमदग्निश्च विश्वामित्रोऽत्रिरेव च । भर-द्वाजो हरिश्मश्रुः कुण्डधारः श्रुतश्रवाः ॥ १६ ॥ एते महर्षयः स्तुत्वा विष्णुमृग्भिः समाहिताः । लेभिरे तपसा सिद्धिं प्रसादा-त्तस्य धीमतः ॥ १७ ॥ अनर्हाश्चार्हतां प्राप्ताः सन्तं स्तुत्वा तमेव ह । न तु वृद्धिमिहान्विच्छेत् कर्म्म कृत्वा जुगुप्सितम् ॥ १८ ॥ येऽर्था धर्म्मेण ते सत्या येऽधर्म्मेण धिगस्तु तान् । धर्म्मं वै शाश्वतं लोके न जह्याद्धनकाङ्क्षया ॥ १९ ॥ आहिताग्निर्हि धर्म्मात्मा यः स पुण्यकृदुत्तमः । वेदा हि सर्व्वे राजेन्द्र स्थितास्त्रिष्वग्निषु प्रभो ॥ २० ॥ स चाप्यग्न्याहितो विप्रः क्रिया यस्य न हीयते । श्रेयो ह्यनाहिताग्नित्वमग्निहोत्रं न निष्क्रियम् ॥ २१ ॥ अग्निरात्मा च माता च पिता जनयिता तथा । गुरुश्च नरशार्दूल परिचर्य्या यथातथम् ॥ २२ ॥ मानं त्यक्त्वा यो नरो वृद्धसेवी विद्वान् क्लीवः पश्यति प्रीतियोगात् । दाक्ष्येण हीनो धर्म्मयुक्तो न दान्तो लोकेऽस्मिन् वै पूज्यते सद्भिरार्य्यैः ॥ २३ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पराशरगीतायां द्विनवत्यधिकद्विशततमोऽध्यायः ॥ २९२ ॥

पराशर उवाच। वृत्तिः सकाशाद्वर्णेभ्यस्त्रिभ्यो हीनस्य शोभना।
प्रीत्योपनीता निर्द्दिष्टा धर्मिष्ठान् कुरुते सदा॥ १॥ वृत्तिश्चेन्नास्ति
शूद्रस्य पितृपैतामही ध्रुवा। न वृत्तिं परतो मार्गेत् शुश्रूषान्तु
प्रयोजयेत्॥ २॥ सद्भिस्तु सह संसर्गः शोभते धर्म्मदर्शिभिः।
नित्यं सर्वास्ववस्थासु नासद्भिरिति मे मतिः॥ ३॥ यथोदयगिरौ
द्रव्यं सन्निकर्षेण दीप्यते। तथा सत्‌सन्निकर्षेण हीनवर्णोऽपि
दीप्यते॥ ४॥ यादृशेन हि वर्णेन भाव्यते शुक्लमम्बरम्। तादृशं
कुरुते रूपमेतदेवमवेहि मे॥ ५॥ तस्माद्गुणेषु रज्येथा मा दोषेषु
कदाचन। अनित्यमिह मर्त्त्यानां जीवितं हि चलाचलम्॥ ६॥
सुखे वा यदि वा दुःखे वर्त्तमानो विचक्षणः। यश्चिनोति शुभान्येव
स तन्त्राणीह पश्यति॥ ७॥ धर्मादपेतं यत् कर्म यद्यपि स्या-
न्महाफलम्। न तत् सेवेत मेधावी न तद्धितमिहोच्यते॥ ८॥
यो हृत्वा गोसहस्राणि नृपो दद्यादरक्षिता। स शब्दमात्रफल-
भाक् राजा भवति तस्करः॥९॥ स्वयम्भूरसृजच्चाग्रे धातारं लोक-
सत्कृतम्। धातासृजत् पुत्रमेकं लोकानां धारणे रतम्॥ १०॥
तमर्च्चयित्वा वैश्यस्तु कुर्य्यादृत्तार्थमृद्धिमत्। रक्षितव्यन्तु राज-
न्यैरुपयोज्यं द्विजातिभिः॥ ११॥ अजिह्मैरशठक्रोधैर्हव्यकव्य-
प्रयोक्तृभिः। शूद्रैर्निर्मार्ज्जनं कार्य्यमेव धर्मो न नश्यति॥ १२॥
अप्रनष्टे ततो धर्मे भवन्ति सुखिताः प्रजाः। सुखेन तासां राजेन्द्र
मोदन्ते दिवि देवताः॥ १३॥ तस्मात् यो रक्षति नृपः स धर्मेणेति
पूज्यते। अधीते चापि यो विप्रो वैश्यो यश्चार्ज्जने रतः॥ १५॥
यश्च शुश्रूयते शूद्रः सततं नियतेन्द्रियः। अतोऽन्यथा मनुष्येन्द्र
स्वधर्मात् परिहीयते॥ १५॥ प्राणसन्तापनिर्द्दिष्टाः काकिन्योऽपि
महाफलाः। न्यायेनोपार्ज्जिता दत्ताः किमुतान्याः सहस्रशः॥ १६॥
सत्कृत्य हि द्विजातिभ्यो यो ददाति नराधिप। यादृशं तादृशं
नित्यमश्नाति फलमूर्ज्जितम्॥ १७॥ अभिगम्य च तत्तुष्ट्या दत्त-

माहुरभिष्टुतम् । याचितेन तु यद्दत्तं तदाहुर्मध्यमं बुधाः ॥ १८ ॥
अवज्ञया दीयते यत्तथैवाश्रद्धयापि वा । तदाहुरधमं दानं मुनयः
सत्यवादिनः ॥ १९ ॥ अतिक्रामेन्मज्जमानो विविधेन नरः सदा ।
तथा प्रयत्नं कुर्वीत यथा मुच्यते संशयात् ॥ २० ॥ दमेन शोभते
विप्रः क्षत्रियो विजयेन तु । धनेन वैश्यः शूद्रस्तु नित्यं दाक्ष्येण
शोभते ॥ २१ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि पराशरगीतायां
त्रिनवत्यधिकद्विशततोऽध्यायः ॥ २९३ ॥

---

पराशर उवाच । प्रतिग्रहगता विप्रे क्षत्रिये युधिनिर्ज्जिताः ।
वैश्ये न्यायार्ज्जिताश्चैव शूद्रे शुश्रूषयार्ज्जिताः ॥ १ ॥ स्वल्पाप्यर्थाः
प्रशस्यन्ते धर्मस्यार्थे महाफलाः । नित्यं त्रयाणां वर्णानां शुश्रूषुः
शूद्र उच्यते ॥ २ ॥ क्षत्रधर्मा वैश्यधर्मा नावृत्तिः पतते द्विजः ।
शूद्रधर्मा यदा तु स्यात्तदा पतति वै द्विजः ॥ ३ ॥ वाणिज्यं पशु-
पाल्यञ्च तथा शिल्पोपजीविनम् । शूद्रस्यापि विधीयन्ते यदा
वृत्तिर्न जायते ॥ ४ ॥ रङ्गावतरणञ्चैव तथा रूपोपजीविनम् ।
मद्यमांसोपजीव्यञ्च विक्रयं लोहचर्मणोः ॥ ५ ॥ अपूर्विणा न
कर्त्तव्यं कर्म लोके विगर्हितम् । कृतपूर्वन्तु त्यजतो महान् धर्म
इति श्रुतिः ॥ ६ ॥ संसिद्धः पुरुषो लोके यदा चरति पापकम् ।
मदेनाभिप्लुतमनास्तच्च न ग्राह्यमुच्यते ॥ ७ ॥ श्रूयन्ते हि पुराणेषु
प्रजा धिग्दण्डशासनाः । दान्ता धर्मप्रधानाश्च न्यायधर्मानुवृत्तिकाः
॥ ८ ॥ धर्म एव सदा नृणामिह राजन् प्रशस्यते । धर्मवृद्धा गुणा-
नेव सेवन्ते हि नरा भुवि ॥ ९ ॥ तं धर्ममसुरास्तात नामृष्यन्त
जनाधिप । विवर्द्धमानाः क्रमशस्तत्र तेऽन्वाविशन् प्रजाः ॥ १० ॥
तासां दर्पः समभवत् प्रजानां धर्मनाशनः । दर्पात्मानस्ततः पश्चात्

क्रोधस्तासामजायत ॥ ११ ॥ ततः क्रोधाभिभूतानां वृत्तं लज्जा-
समन्वितम् । ह्रीश्चैवाप्यनशद्राजन् ततो मोहो व्यजायत ॥ १२ ॥
ततो मोहपरीतास्ता नापश्यन्त यथा पुरा । परस्परावमर्द्देन
वर्द्धयन्त्यो यथासुखम् ॥ १३ ॥ ताः प्राप्य तु स धिग्दण्डो न कारण-
मतोऽभवत् । ततोऽभ्यगच्छन्देवांश्च ब्राह्मणांश्चावमन्य ह ॥ १४ ॥
एतस्मिन्नेव काले तु देवा देववरं शिवम् । अगच्छञ्छरणं धीरं
बहुरूपं गुणाधिकम् ॥ १५ ॥ तेन स्म ते गगनगाः सपुराः पातिताः
क्षितौ । तिस्रोऽप्येकेन वाणेन देवाप्यायिततेजसा ॥ १६ ॥ तेषा-
मधिपतिस्त्वासीद्भीमो भीमपराक्रमः । देवतानां भयकरः स हतः
शूलपाणिना ॥ १७ ॥ तस्मिन् हतेऽथ स्वं भावं प्रत्यपद्यन्त मानवाः ।
प्रापद्यन्त च वेदान् वै शास्त्राणि च यथा पुरा ॥ १८ ॥ ततोऽभि-
षिच्य राज्ये तु देवानां दिवि वासवम् । सप्तर्षयश्चान्वयुञ्जन्नराणां
दण्डधारणे ॥ १९ ॥ सप्तर्षीणामथोऽर्द्धञ्च विपृथुर्नाम पार्थिवः ।
राजानः क्षत्रियश्चैव मण्डलेषु पृथक् पृथक् ॥ २० ॥ महाकुलेषु
ये जाता वृद्धाः पूर्व्वतराश्च ये । तेषामप्यासुरो भावो हृदयान्नाप-
सर्पति ॥ २१ ॥ तस्मात्तेनैव भावेन सानुषाङ्गेण पार्थिवाः । असुरा-
ण्येव कर्माणि न्यषेवन् भीमविक्रमाः ॥ २२ ॥ प्रत्यतिष्ठंश्च तेष्वेव
तान्येव स्थापयन्त्यपि । भजन्त्येते न चाद्यापि ये बालिशतरा नराः
॥ २३ ॥ तस्मादहं ब्रवीमि त्वां राजन् सञ्चिन्त्य शास्त्रतः । संसिद्धा-
धिगमं कुर्य्यात् कर्म हिंसात्मकं त्यजेत् ॥ २४ ॥ न सङ्करेण द्रविणं
प्रचिन्वीयाद्विचक्षणः । धर्म्मार्थं न्यायमुत्सृज्य न तत् कल्याण-
मुच्यते ॥ २५ ॥ स त्वमेवम्विधो दान्तः क्षत्रियः प्रियबान्धवः ।
प्रजा भृत्यांश्च पुत्रांश्च स्वधर्म्मेणानुपालय ॥ २६॥ इष्टानिष्टसमायोगे
वैरं सौहार्द्दमेव च । अथ जातिसहस्राणि बहूनि परिवर्त्तते
॥ २७ ॥ तस्माद्गुणेषु रज्येथा मा दोषेषु कथञ्चन । निर्गुणोऽपि हि
दुर्बुद्धिरात्मनः सोऽतिरज्यते ॥ २८ ॥ मानुषेषु महाराज धर्म्माधर्म्मौ

प्रवर्त्ततः । न तथान्येषु भूतेषु मनुष्यरहितेष्विह ॥ २९ ॥ धर्मशीलो नरो विद्वानीहकोऽनीहकोऽपि वा । आत्मभूतः सदा लोके चरेद्भूतान्यहिंसया ॥ ३० ॥ यदा व्यपेतहृल्लेखं मनो भवति तस्य वै । नानृतञ्चैव भवति तदा कल्याणमृच्छति ॥ ३१ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि पराशरगीतायां चतुर्नवत्यधिकद्विशततोऽध्यायः ॥ २९४ ॥

---

पराशर उवाच । एष धर्मविधिस्तात गृहस्थस्य प्रकीर्त्तितः । तपोविधिन्तु वक्ष्यामि तन्मे निगदतः शृणु ॥ १ ॥ प्रायेण च गृहस्थस्य ममत्वं नाम जायते । सङ्गागतं नरश्रेष्ठ भावै राजसतामसैः ॥ २ ॥ गृहाण्याश्रित्य गावश्च क्षेत्राणि च धनानि च । दाराः पुत्राश्च भृत्याश्च भवन्तीह नरस्य वै ॥ ३ ॥ एवन्तस्य प्रवृत्तस्य नित्यमेवानुपश्यतः । रागद्वेषौ विवर्द्धेते ह्यनित्यत्वमपश्यतः ॥ ४ ॥ रागद्वेषाभिभूतञ्च नरं द्रव्यवशानुगम् । मोहजाता रतिर्नाम समुपैति नराधिप ॥ ५ ॥ कृतार्थं भोगिनं मत्वा सर्वो रतिपरायणः । लाभं ग्राम्यसुखादन्यं रतितो नानुपश्यति ॥ ६ ॥ ततो लोभाभिभूतात्मा सङ्गाद्वर्द्धयते जनम् । तुष्ट्यर्थञ्चैव तस्येह जनस्यार्थं चिकीर्षति ॥ ७ ॥ स जानन्नपि चाकार्य्यमर्थार्थं सेवते नरः । बालस्नेहपरीतात्मा तत्क्षणाच्चानुतप्यते ॥ ८ ॥ ततो मानेन सम्पन्नो रक्षन्नात्मपराजयम् । करोति येन भोगी स्यामिति तस्माद्विनश्यति ॥ ९ ॥ तथा हि बुद्धियुक्तानां शाश्वतब्रह्मवादिनाम् । अन्विच्छतां शुभं कर्म नराणां त्यजतां सुखम् ॥ १० ॥ स्नेहायतननाशाच्च धननाशाच्च पार्थिव । आधिव्याधिप्रतापाच्च निर्वेदमुपगच्छति ॥ ११ ॥ निर्वेदादात्मसम्बोधः सम्बोधाच्छास्त्रदर्शनम् । शास्त्रार्थदर्शनाद्राजंस्तप एवानुपश्यति ॥ १२ ॥ दुर्लभो हि मनुष्येन्द्र नरः प्रत्यव-

मर्षवान् । यो वै प्रियसुखे चीणस्तपः कर्त्तुं व्यवस्यति ॥ १३ ॥
तपः सर्वगतं तात हीनस्यापि विधीयते । जितेन्द्रियस्य दान्तस्य
स्वर्गमार्गप्रवर्त्तकम् ॥१४॥ प्रजापतिः प्रजाः पूर्वमसृजत्तपसा विभुः ।
क्वचित् क्वचित् व्रतपरो व्रतान्यास्थाय पार्थिव ॥ १५ ॥ आदित्या
वसवो रुद्रास्तथैवाग्न्यश्विमारुताः । विश्वेदेवास्तथा साध्याः पित-
रोऽथ मरुद्गणाः ॥ १६ ॥ यक्षराक्षसगन्धर्वाः सिद्धाश्चान्ये दिवौ-
कसः । संसिद्धास्तपसा तात ये चान्ये स्वर्गवासिनः ॥ १७ ॥ ये
चादौ ब्राह्मणाः सृष्टा ब्रह्मणा तपसा पुरा । ते भावयन्तः पृथिवीं
विचरन्ति दिवं तथा ॥ १८ ॥ मर्त्त्यलोके च राजानो ये चान्ये
गृहमेधिनः । महाकुलेषु दृश्यन्ते तत् सर्वं तपसः फलम् ॥ १९ ॥
कौशिकानि च वस्त्राणि शुभान्याभरणानि च । वाहनासनयानानि
तत् सव तपसः फलम् ॥ २० ॥ मनोऽनुकूलाः प्रमदाः रूपवत्यः
सहस्रशः । वासः प्रासादपृष्ठे च तत् सर्वं तपसः फलम् ॥ २१ ॥
शयनानि च मुख्यानि भोज्यानि विविधानि च । अभिप्रेतानि सर्वाणि
भवन्ति शुभकर्मिणाम् ॥ २२ ॥ नाप्राप्यं तपसः किञ्चित्त्रैलोक्येऽपि
परन्तप । उपभोगपरित्यागः फलान्यकृतकर्म्मणाम् ॥२३॥ सुखितो
दुःखितो वापि नरो लोभं परित्यजेत् । अवेक्ष्य मनसा शास्त्रं
बुद्ध्या च नृपसत्तम ॥ २४ ॥ असन्तोषोऽसुखायेति लोभादिन्द्रिय-
सम्भ्रमः । ततोऽस्य नश्यति प्रज्ञा विद्येवाभ्यासवर्ज्जिता ॥ २५ ॥
नष्टप्रज्ञो यदा तु स्यात्तदा न्यायं न पश्यति । तस्मात् सुखक्षये
प्राप्ते पुमानुग्रं तपश्चरेत् ॥ २६ ॥ यदिष्टं तत् सुखं प्राहुर्द्वेष्यं दुःख-
मिहेष्यते । कृताकृतस्य तपसः फलं पश्यस्व यादृशम् ॥ २७ ॥ नित्यं
भद्राणि पश्यन्ति विषयांश्चोपभुञ्जते । प्राकाश्यञ्चैव गच्छन्ति कृत्वा
निष्कल्मषं तपः ॥ २८ ॥ अप्रियाण्यवमानांश्च दुःखं बहुविधात्म-
कम् । फलार्थी तत् फलं त्यक्त्वा प्राप्नोति विषयात्मकम् ॥ २९ ॥
धर्म्मे तपसि दाने च विचिकित्सा चास्य जायते । स कृत्वा पापकान्येवं

निरयं प्रतिपद्यते ॥ ३० ॥ सुखे तु वर्त्तमाने वै दुःखे वापि नरोत्तम । स्ववृत्ताद्यो न चलते शास्त्रचक्षुः स मानवः ॥ ३१ ॥ इषुप्रपातमात्रं हि स्पर्शयोगी रतिः स्मृता । रसने दर्शने घ्राणे श्रवणे च विशाम्पते ॥ ३२ ॥ ततोऽस्य जायते तीव्रा वेदना तत्क्षयात् पुनः । अबुधा न प्रशंसन्ति मोक्षं सुखमनुत्तमम् ॥ ३३ ॥ ततः फलार्थं सर्वस्य भवन्ति ज्यायसे गुणाः । धर्मवृत्त्या च सततं कामार्थाभ्यां न हीयते ॥ ३४ ॥ अप्रयत्नागताः सेव्या गृहस्थैर्विषयाः सदा । प्रयत्नेनोपगम्यश्च स्वधर्म इति मे मतिः ॥ ३५ ॥ मानिनां कुलजातानां नित्यं शास्त्रार्थचक्षुषाम् । क्रिया धर्मवियुक्तानामशक्त्या संवृतात्मनाम् ॥ ३६ ॥ क्रियमाणं यदा कर्म नाशं गच्छति मानुषम् । तेषां नान्यदृते लोके तपसः कर्म विद्यते ॥३७॥ सर्वात्मना तु कुर्वीत गृहस्थः कर्म निश्चयम् । दाक्ष्येण हव्यकव्यार्थं स्वधर्मं विचरन्नृप ॥ ३८ ॥ यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् । एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥ ३९ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि पराशरगीतायां
पञ्चनवत्यधिकद्विशततोऽध्यायः ॥ २९५ ॥

---

जनक उवाच । वर्णो विशेषो वर्णानां महर्षे केन जायते । एतदिच्छाम्यहं ज्ञातुं तद्ब्रूहि वदताम्वर ॥ १ ॥ यदेतज्जायतेऽपत्यं स एवायमिति श्रुतिः । कथं ब्राह्मणतो जातो विशेषग्रहणङ्गतः ॥ २ ॥

पराशर उवाच । एवमेतन्महाराज येन जातः स एव सः । तपसस्त्वपकर्षेण जातिग्रहणतां गतः ॥ ३ ॥ सुक्षेत्राच्च सुवीजाच्च पुण्यो भवति सम्भवः । अतोऽन्यतरतो हीनादवरो नाम जायते ॥४॥ वक्त्राद्भुजाभ्यामूरुभ्यां पद्भ्याञ्चैवाथ जज्ञिरे । सृजतः प्रजापते-

लोकानिति धर्मविदो विदुः ॥५॥ मुखजा ब्राह्मणास्तात बाहुजाः क्षत्रियाः स्मृताः । ऊरुजा धनिनो राजन् पादजा परिचारकाः ॥ ६ ॥ चतुर्णामेव वर्णानामागमः पुरुषर्षभ । अतोऽन्ये त्वतिरिक्ता ये ते वै सङ्करजाः स्मृताः ॥ ७ ॥ क्षत्रियातिरथाम्बष्ठा उग्रा वैदेहकास्तथा । श्वपाकाः पुक्कसास्तेना निषादाः सूतमागधाः ॥ ८ ॥ अयोगाः करणा व्रात्याश्चण्डालाश्च नराधिप । एते चतुर्भ्यो वर्णेभ्यो जायन्ते वै परस्परात् ॥ ९ ॥

जनक उवाच । ब्रह्मणैकेन जातानां नानात्वं गोत्रतः कथम् । बहूनीह हि लोके वै गोत्राणि मुनिसत्तम ॥ १० ॥ यत्र तत्र कथं जाताः स्वयोनिं मुनयो गताः । शुद्धयोनौ समुत्पन्ना वियोनौ च तथापरे ॥ ११ ॥

पराशर उवाच । राजन्नेतद्भवेद्ग्राह्यमपकृष्टेन जन्मना । महात्मनां समुत्पत्तिस्तपसा भावितात्मनाम् ॥ १२ ॥ उत्पाद्य पुत्रान्मुनयो नृपते यत्र तत्र ह । स्वेनैव तपसा तेषामृषित्वं विदधुः पुनः ॥ १३ ॥ पितामहश्च मे पूर्वमृष्यशृङ्गश्च काश्यपः । वेदस्ताण्ड्यः कृपश्चैव काक्षीवत्कमठादयः ॥ १४ ॥ यवक्रीतश्च नृपते द्रोणश्च वदतांवरः । आयुर्मतङ्गो दत्तश्च द्रुपदो मात्स्य एव च ॥ १५ ॥ एते स्वां प्रकृतिं प्राप्ता वैदेह तपसोऽश्रयात् । प्रतिष्ठाता वेदविदो दमेन तपसैव हि ॥ १६ ॥ मूलगोत्राणि चत्वारि समुत्पन्नानि पार्थिव । अङ्गिराः कश्यपश्चैव वशिष्ठो भृगुरेव च ॥ १७ ॥ कर्मतोऽन्यानि गोत्राणि समुत्पन्नानि पार्थिव । नामधेयानि तपसा तानि च ग्रहणं सताम् ॥ १८ ॥

जनक उवाच । विशेषधर्मान् वर्णानां प्रब्रूहि भगवन्मम । ततः सामान्यधर्मांश्च सर्वत्र कुशलो ह्यसि ॥ १९ ॥

पराशर उवाच । प्रतिग्रहो याजनञ्च तथैवाध्यापनं नृप । विशेषधर्मो विप्राणां रक्षा क्षत्रस्य शोभना ॥ २० ॥ कृषिश्च पशु-

पाल्यञ्च वाणिज्यञ्च विशामपि। द्विजानां परिचर्य्या च शूद्रकर्म्म नराधिप॥ २१॥ विशेषधर्मा नृपते वर्णानां परिकीर्त्तिताः। धर्मान् साधारणांस्तात विस्तरेण शृणुष्व मे॥ २२॥ आनृशंस्यमहिंसा चाप्रमादः संविभागिता। श्राद्धकर्मातिथेयञ्च सत्यमक्रोध एव च॥ २३॥ स्वेषु दारेषु सन्तोषः शौचं नित्यानुसूयता। आत्मज्ञानं तितिक्षा च धर्माः साधारणा नृप॥२४॥ ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः। अत्र तेषामधीकारो धर्मेषु द्विपदाम्वर॥ २५॥ विकर्मावस्थिता वर्णा पतन्ते नृपते त्रयः। उन्नमन्ति यथा सन्तमाश्रित्येह स्वकर्म्मसु॥२६॥ न चापि शूद्रः पततीति निश्चयो न चापि संस्कारमिहार्हतीति वा। श्रुतिप्रवृत्तं न च धर्ममाप्नुते न चास्य धर्मे प्रतिषेधनं कृतम्॥ २७॥ वैदेहकं शूद्रमुदाहरन्ति द्विजा महाराज श्रुतोपपन्नाः। अहं हि पश्यामि नरेन्द्र देवं विश्वस्य विष्णुं जगतः प्रधानम्॥ २८॥ सतां वृत्तमधिष्ठाय निहीनानुज्जिहीर्षवः। मन्त्रवर्ज्जं न दुष्यन्ति कुर्वाणाः पौष्टिकीः क्रियाः॥ २९॥ यथा यथा हि सद्वृत्तमालम्बन्तीतरे जनाः। तथा तथा सुखं प्राप्य प्रेत्य चेह च मोदते॥ ३०॥

जनक उवाच। किं कर्म दूषयत्येनमथो जातिर्महामुने। सन्देहो मे समुत्पन्नस्तन्मे व्याख्यातुमर्हसि॥ ३१॥

पराशर उवाच। असंशयं महाराज उभयं दोषकारकम्। कर्म चैव हि जातिश्च विशेषन्तु निशामय॥३२॥ जात्या च कर्मणा चैव दुष्टं कर्म न सेवते। जात्या दुष्टश्च यः पापं न करोति स पूरुषः॥ ३३॥ जात्या प्रधानं पुरुषं कुर्वाणं कर्म धिक्कृतम्। कर्म तद्दूषयत्येनं तस्मात् कर्म न शोभनम॥ ३४॥

जनक उवाच। कानि कर्माणि धर्म्याणि लोकेऽस्मिन् द्विजसत्तम। न हिंसन्तीह भूतानि क्रियमाणानि सर्वदा॥ ३५॥

पराशर उवाच। शृणु मित्र महाराज यन्मां त्वं परिपृच्छसि।

यानि कर्माण्यहिंस्राणि नरं त्रायन्ति सर्व्वदा ॥ ३६ ॥ सन्न्यस्याग्नीनुदासीनाः पश्यन्ति विगतज्वराः । नैःश्रेयसं कर्मपथं समारुह्य यथाक्रमम् ॥ ३७ ॥ प्रश्रिता विनयोपेता दमनित्याः सुशंसिताः । प्रयान्ति स्थानमजरं सर्व्वकर्मविवर्ज्जिताः ॥ ३८ ॥ सर्व्वे वर्णा धर्म्मकार्य्याणि सम्यक् कृत्वा राजन् सत्यवाक्यानि चोक्ता । त्यक्त्वाधर्म्मं दारुणं जीवलोके यान्ति स्वर्गं नात्र कार्य्यो विचारः॥३९॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पराशरगीतायां
षसवत्यत्यधिकद्विशततोऽध्यायः ॥ २९६ ॥

---

पराशर उवाच । पिता सखायो गुरवस्त्रियश्च न निर्गुणानां प्रभवन्ति लोके । अनन्यभक्ताः प्रियवादिनश्च हिताश्च वश्याश्च तथैव राजन् ॥ १ ॥ पिता परं दैवतं मानवानां मातुर्विशिष्टं पितरं वदन्ति । ज्ञानस्य लाभं परमं वदन्ति जितेन्द्रियार्थाः परमाप्नुवन्ति ॥ २ ॥ रणाजिरे यत्र शराग्निसंस्तरे नृपात्मजो घातमवाप्य दह्यते । प्रयाति लोकानमरैः सुदुर्लभान्निषेवते स्वर्गफलं यथासुखम् ॥ ३ ॥ श्रान्तं भीतं भ्रष्टशस्त्रं रुदन्तं पराङ्मुखं पारिवर्हैश्च हीनम् । अनुद्यन्तं रोगिणं याचमानं न वै हिंस्याद्बालवृद्धौ च राजन् ॥ ४ ॥ पारिवर्हैः सुसंयुक्तमुद्यन्तं तुल्यतां गतम् । अतिक्रमेत्तं नृपतिः संग्रामे क्षत्रियात्मजम् ॥ ५ ॥ तुल्यादिह बधः श्रेयान् विशिष्टाच्चेति निश्चयः । निहीनात् कातराच्चैव कृपणाद्गर्हितो बधः ॥ ६ ॥ पापात् पापसमाचारान्निहीनाच्च नराधिप । पाप एष बधः प्रोक्तो नरकायेति निश्चयः ॥ ७ ॥ न कश्चित्त्राति वै राजन् दिष्टान्तवशमागतम् । सावशेषायुषं वापि कश्चिन्नैवापकर्षति ॥ ८ ॥ स्निग्धैश्च क्रियमाणानि कर्माणीह निवर्त्तयेत् ।

हिंसात्मकानि सर्वाणि नायुरिच्छेत् परायुषा ॥ ९ ॥ गृहस्थानान्तु सर्वेषां विनाशमभिकाङ्क्षताम्। निधनं शोभनं तात पुलिनेषु क्रियावताम् ॥ १० ॥ आयुषि क्षयमापन्ने पञ्चत्वमुपगच्छति। तथा ह्यकरणाद्भवति कारणैरुपपादितम् ॥ ११ ॥ तथा शरीरं भवति देहाद्येनोपपादितम्। अध्वानं गतकश्चायं प्राप्तश्चायं गृहाद्गृहम् ॥ १२ ॥ द्वितीयं कारणं तत्र नान्यत् किञ्चन विद्यते। तद्देहं देहिनां युक्तं मोक्षभूतेषु वर्त्तते ॥ १३ ॥ शिरास्नाय्वस्थिसङ्घातं वीभत्सामेध्यसङ्कुलम्। भूतानामिन्द्रियाणाञ्च गुणानाञ्च समागमम् ॥ १४ ॥ त्वगन्तं देहमित्याहुर्विद्वांसोऽध्यात्मचिन्तकाः। गुणैरपि परिक्षीणं शरीरं मर्त्यतां गतम् ॥ १५ ॥ शरीरिणा परित्यक्तं निश्चेष्टं गतचेतनम्। भूतैः प्रकृतिमापन्नैस्ततो भूमौ निमज्जति ॥ १६ ॥ भावितं कर्मयोगेण जायते तत्र तत्र ह। इदं शरीरं वैदेह म्रियते यत्र तत्र ह ॥ १७ ॥ तत्स्वभावो परो दृष्टो विसर्गः कर्मणस्तथा। न जायते तु नृपते कश्चित् कालमयं पुनः ॥ १८ ॥ परिभ्रमति भूतात्मा द्यामिवाम्बुधरो महान्। स पुनर्जायते राजन् प्राप्येहायतनं नृप ॥ १९ ॥ मनसः परमो ह्यात्मा इन्द्रियेभ्यः परं मनः। विविधानाञ्च भूतानां जङ्गमाः परमा नृप ॥ २० ॥ जङ्गमानामपि तथा द्विपदाः परमा गताः। द्विपदानामपि तथा द्विजा वै परमाः स्मृताः ॥ २१ ॥ द्विजानामपि राजेन्द्र प्रज्ञावन्तः परा मताः। प्रज्ञानामात्मसम्बुद्धाः सम्बुद्धानाममानिनः ॥ २२ ॥ जातमन्वेति मरणं नृणामिति विनिश्चयः। अन्तवन्ति हि कर्माणि सेवन्ते गुणतः प्रजाः ॥ २३ ॥ आपन्ने तूत्तरां काष्ठां सूर्य्ये यो निधनं व्रजेत्। नक्षत्रे च मुहूर्त्ते च पुण्ये राजन् स पुण्यकृत् ॥ २४ ॥ अयोजयित्वा क्लेशेन जनं प्लाव्य च दुष्कृतम्। मृत्युनात्मकृतेनेह कर्मकृत्वात्मशक्तिभिः ॥ २५ ॥ विषमुद्बन्धनं दाहो दस्युहस्तात्तथा बधः। दंष्ट्रिभ्यश्च पशुभ्यश्च प्राकृतो बध उच्यते ॥ २६ ॥ न चेभिः

पुण्यकर्माणो युज्यन्ते चापि सन्धिजैः। एवम्विधैश्च बहुभिरपयैः प्राकृतैरपि ॥२७॥ ऊर्द्ध्वं भित्त्वा प्रतिष्ठन्ते प्राणाः पुण्यवतां नृप। मध्यतो मध्यपुण्यानामधो दुष्कृतकर्म्मणाम् ॥ २८ ॥ एकः शत्रुर्न द्वितीयोऽस्ति शत्रुरज्ञानतुल्यः पुरुषस्य राजन्। येनावृतः कुरुते संप्रयुक्तो घोराणि कर्म्माणि सुदारुणानि ॥ २९ ॥ प्रबाधनार्थं श्रुतिधर्म्मयुक्तं वृद्धानुपास्य प्रभवेत यस्य। प्रयत्नसाध्यो हि स राजपुत्र प्रज्ञाशरेणोन्मथितः परैति ॥ ३० ॥ अधीत्य वेदांस्तपसा ब्रह्मचारी यज्ञाञ्छक्त्या सन्निसृज्येह पञ्च। वनं गच्छेत् पुरुषो धर्म्मकामः श्रेयः स्थित्वा स्थापयित्वा स्ववंशम् ॥ ३१ ॥ उपभोगैरपि त्यक्तं नात्मानं सादयेन्नरः। चण्डालत्वेऽपि मानुष्यं सर्व्वथा तात शोभनम् ॥ ३२ ॥ इयं हि योनिः प्रथमा यां प्राप्य जगतीपते। आत्मा वै शक्यते त्रातुं कर्म्मभिः शुभलक्षणैः ॥ ३३ ॥ कथं न विप्रणश्येम योनितोऽस्या इति प्रभो। कुर्व्वन्ति धर्म्मं मनुजाः श्रुतिप्रामाण्यदर्शनात् ॥ ३४ ॥ यो दुर्ल्लभतरं प्राप्य मानुष्यं द्विषते नरः। धर्म्मावमन्ता कामात्मा भवेत् स खलु वञ्चते ॥ ३५ ॥ यस्तु प्रीतिपुरोगेण चक्षुषा तात पश्यति। दीपोपमानि भूतानि यावदर्थान्न पश्यति ॥ ३६ ॥ सान्त्वेनान्नप्रदानेन प्रियवादेन चाप्युत। समदुःखसुखो भूत्वा स परत्र न हीयते ॥ ३७ ॥ दानं त्यागः शोभना मूर्त्तिरद्भ्यो भूप प्लाव्यं तपसा वै शरीरम्। सरस्वतीनैमिषपुष्करेषु ये चाप्यन्ये पुण्यदेशाः पृथिव्याम् ॥ ३८ ॥ गृहेषु येषामसवः पतन्ति तेषामथो निर्हरणं प्रशस्तम्। यानेन वै प्रापणञ्च श्मशाने शौचेन नूनं विधिना चैव दाहः ॥ ३९ ॥ इष्टिः पुष्टिर्यजनं याजनञ्च दानं पुण्यानां कर्म्मणाञ्च प्रयोगः। शक्त्या पित्र्यं यच्च किञ्चित् प्रशस्तं सर्व्वाण्यात्मार्थे मानवोऽयं करोति॥४०॥ धर्म्मशास्त्राणि वेदाश्च षड़ङ्गानि नराधिप। श्रेयसोऽर्थे विधीयन्ते नरस्याक्लिष्टकर्म्मणः ॥ ४१ ॥

भीष्म उवाच। एतद्वै सर्व्वमाख्यातं मुनिना सुमहात्मना।
विदेहराजाय पुरा श्रेयसोऽर्थे नराधिप॥ ४२॥

इतिशान्तिपर्व्वणि मोक्षधर्मपर्व्वणि पराशरगीतासु
सप्तनवत्यधिकद्विशतोऽध्यायः॥ २९७॥

---

भीष्म उवाच। पुनरेव तु पप्रच्छ जनको मिथिलाधिपः।
पराशरं महात्मानं धर्म्मे परमनिश्चयम्॥ १॥

जनक उवाच। किं श्रेयः का गतिर्ब्रह्मन् किं कृतं न विनश्यति। क्व गतो न निवर्त्तेत तन्मे ब्रूहि महामते॥ २॥

पराशर उवाच। असङ्गः श्रेयसो मूलं ज्ञानं ज्ञानगतिः परा। चीर्णं तपो न प्रणश्येद्वापः क्षेत्रे न नश्यति॥ ३॥ छित्त्वाधर्म्ममयं पाशं यदा धर्म्मेऽभिरज्यते। दत्त्वा भयकृतं दानं तदा सिद्धिमवाप्नुते॥ ४॥ यो ददाति सहस्राणि गवामश्वशतानि च। अभयं सर्व्वभूतेभ्यः सदा तमभिवर्त्तते॥ ५॥ वसन् विषयमध्येऽपि न वसत्येव बुद्धिमान्। संवसत्येव दुर्बुद्धिरसत्सु विषयेष्वपि॥६॥ नाधर्म्मः श्लिष्यते प्राज्ञं पयः पुष्करपर्णवत्। अप्राज्ञमधिकं पापं श्लिष्यते जतुकाष्ठवत्॥ ७॥ नाधर्म्मः कारणापेक्षी कर्त्तारमभिमुञ्चति। कर्त्ता खलु यथाकालं ततः समभिपद्यते॥ ८॥ न भिद्यन्ते कृतात्मानं आत्मप्रत्ययदर्शिनः॥ ९॥ बुद्धिकर्म्मेन्द्रियाणां हि प्रमत्तो यो न बुध्यते। शुभाशुभेषु सक्तात्मा प्राप्नोति सुमहद्भयम्॥१०॥ वीतरागो जितक्रोधः सम्यग्भवति यः सदा। विषये वर्त्तमानोऽपि न स पापेन युज्यते॥ ११॥ मर्य्यादायां धर्म्मसेतुर्निबद्धो नैव सीदति। पुष्टस्रोत इवाशक्तः स्फीतो भवति सञ्चयः॥ १२॥ यथा भानुगतं तेजो मणिः शुद्धः समाधिना। आदत्ते राजशार्दूल तथायोगः प्रवर्त्तते॥१३॥ यथा तिलानामिह पुष्पसंश्रयात् पृथक् पृथक्याति

गुणोऽतिसौम्यताम् । तथा नराणान्तु विभावितात्मनां यथाश्रयं सत्त्वगुणः प्रवर्त्तते ॥ १४ ॥ जहाति दारांश्च जहाति सम्पदः पदञ्च यानं विविधाश्च सत्क्रियाः । त्रिपिष्टपे जातमतिर्यदा नरस्तदास्य बुद्धिर्विषयेषु भिद्यते ॥ १५ ॥ प्रसक्तबुद्धिर्विषयेषु यो नरो न बुध्यते ह्यात्महितं कदाचन । स सर्वभावानुगतेन चेतसा नृपामिषेणेव झषो विकृष्यते ॥ १६ ॥ सङ्घातवन्मर्त्त्यलोकः परस्परमपाश्रितः । कदलीगर्भनिःसारो नौरिवाप्सु निमज्जति ॥ १७ ॥ न धर्मकालः पुरुषस्य निश्चयो न चापि मृत्युः पुरुषं प्रतीक्षते । सदा हि धर्मस्य क्रियैव शोभना यदा नरो मृत्युमुखेऽभिवर्त्तते॥१८॥ यथान्धः स्वगृहे युक्तो ह्यभ्यासादेव गच्छति । तथा युक्तेन मनसा प्राज्ञो गच्छति तां गतिम् ॥ १९ ॥ मरणं जन्मनि प्रोक्तं जन्म वै मरणाश्रितम् । अविद्वान्मोक्षधर्मेषु बद्धो भ्रमति चक्रवत् ॥ २० ॥ बुद्धिमार्गं प्रयातस्य सुखं त्विह परत्र च । विस्तराः क्लेशसंयुक्ताः संक्षेपास्तु सुखावहाः । परार्थं विस्तराः सर्वे त्यागमात्महितं विदुः ॥ २१ ॥ यथा मृणालानुगतमाशु मुञ्चति कर्द्दमम् । तथात्मा पुरुषस्येह मनसा परिमुच्यते ॥ २२ ॥ मनः प्रणयतेऽऽत्मानं स एनमभियुञ्जति । युक्तो यदा स भवति तदा तं पश्यते परम्॥२३॥ परार्थे वर्त्तमानस्तु स्वं कार्य्यं योऽभिमन्यते । इन्द्रियार्थेषु संयुक्तः स्वकार्य्यात् परिमुच्यते ॥ २४ ॥ अधस्तिर्य्यग्गतिञ्चैव स्वर्गं चैव परां गतिम् । प्राप्नोति सुकृतैरात्मा प्राज्ञस्येहेतरस्य च ॥ २५॥ मृण्मये भाजने पक्के यथा वै नश्यति द्रवः । तथा शरीरं तपसा तप्तं विषयमश्नुते ॥ २६ ॥ विषयानश्नुते यस्तु न स भोक्ष्यत्यसंशयम् । यस्तु भोगांस्त्यजेदात्मा स वै भोक्तुं व्यवस्यति ॥ २७॥ नीहारेण हि संवीतः शिश्नोदरपरायणः । जात्यन्ध इव पन्थानमावृतात्मा न बुध्यते ॥ २८ ॥ वणिग्यथा समुद्राद्वै यथार्थं लभते धनम् । तथा मर्त्त्यार्णवे जन्तोः कर्मविज्ञानतो गतिः ॥ २९ ॥ अहोरात्रमयो

लोके जरारूपेण संसरन्। मृत्युर्ग्रसति भूतानि पवनं पन्नगो यथा।३०॥ स्वयं कृतानि कर्माणि जातो जन्तुः प्रपद्यते। नाकृत्वा लभते कश्चित् किञ्चिदस्ति प्रियाप्रियम् ॥३१॥ शयानं यान्तमासीनं प्रवृत्तं विषयेषु च। शुभाशुभानि कर्माणि प्रपद्यन्ते नरं सदा॥३२॥ न ह्यन्यत्तीरमासाद्य पुनस्तर्त्तुं व्यवस्यति। दुर्लभो दृश्यते ह्यस्य विनिपातो महार्णवे ॥ ३३ ॥ यथा भावावसन्ना हि नौर्महाम्भसि तन्तुना। तथा मनोभियोगाद्वै शरीरं प्रचिकीर्षति ॥३४॥ यथा समुद्रमभितः संश्रिताः सरितोऽपराः। तथाद्या प्रकृतिर्योगादभिसंश्रियते सदा ॥ ३५ ॥ स्नेहपाशैर्बहुविधैरासक्तमनसो नराः। प्रकृतिस्था विषीदन्ति जले सैकतवेश्मवत् ॥३६॥ शरीरगृहसंस्थस्य शौचतीर्थस्य देहिनः। बुद्धिमार्गप्रयातस्य सुखं त्विह परत्र च ॥ ३७ ॥ विस्तराः क्लेशसंयुक्ताः सङ्क्षेपास्तु सुखावहाः। परार्थं विस्तराः सर्वे त्यागमात्महितं विदुः ॥ ३८ ॥ सङ्कल्पजो मित्रवर्गो ज्ञातयः कारणात्मकाः। भार्य्यापुत्रश्च दासश्च स्वमर्थमुपभुञ्जते॥३९॥ न माता न पिता किञ्चित् कस्यचित् प्रतिपद्यते। दानपथ्योदनो जन्तुः स्वकर्मफलमश्नुते ॥ ४० ॥ माता पुत्रः पिता भ्राता भार्य्या मित्रजनस्तथा। अष्टापदपदस्थाने दक्ष सूत्रेण लक्ष्यते ॥ ४१ ॥ सर्वाणि कर्माणि पुरा कृतानि शुभाशुभान्यात्मनो यान्ति जन्तोः। उपस्थितं कर्मफलं विदित्वा बुद्धिं तथा चोदयतेऽन्तरात्मा ॥ ४२ ॥ व्यवसायं समाश्रित्य सहायान् योऽधिगच्छति। न तस्य कश्चिदारम्भः कदाचिदवसीदति ॥ ४३ ॥ अद्वैधमनसंयुक्तं शूरं धीरं विपश्चितम्। न श्रीः संत्यजते नित्यमादित्यमिव रश्मयः ॥ ४४ ॥ आस्तिक्यव्यवसायाभ्यामुपायाद्विस्मयाद्धिया। समारभेदनिन्द्यात्मा न सोऽर्थः परिषीदति ॥ ४५ ॥ सर्वे स्वानि शुभाशुभानि नियतं कर्माणि जन्तुः स्वयं गर्भात् संप्रतिपद्यते तदुभयं यत्तेन पूर्वं कृतम्। मृत्युश्चापरिहारवान् समगतिः कालेन विच्छेदिना दारोश्चूर्णमिवा-

स्वसारविहितं कर्मान्तिकं प्रापयेत् ॥ ४६ ॥ स्वरूपतामात्मकृतञ्च
विस्तरं कुलालयं द्रव्यसमृद्धिसञ्चयम् । नरो हि सर्वं लभते यथा-
कृतं शुभाशुभेनात्मकृतेन कर्मणा ॥ ४७ ॥

भीष्म उवाच । इत्युक्तो जनको राजन् यथातथ्यं मनीषिणा ।
श्रुत्वा धर्मविदां श्रेष्ठः परां मुदमवाप ह ॥ ४८ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पराशरगीतायां
अष्टनवत्यधिकद्विशततोऽध्यायः ॥ २९८ ॥

---

युधिष्ठिर उवाच । सत्यं दमं क्षमं प्रज्ञां प्रशंसन्ति पितामह ।
विद्वांसो मनुजा लोके कथमेतन्मतं तव ॥ १ ॥

भीष्म उवाच । अत्र ते वर्त्तयिष्येऽहमितिहासं पुरातनम् ।
साध्यानामिह सम्वादं हंसस्य च युधिष्ठिर ॥ २ ॥ हंसो भूत्वाथ
सौवर्णस्त्वजो नित्यः प्रजापतिः । स वै पर्य्येति लोकांस्त्रीनथ
साध्यानुपागमत् ॥ ३ ॥

साध्या ऊचुः । शकुने वयं स्म देवा वै साध्यास्त्वामनुयुञ्ज्महे ।
पृच्छामस्त्वां मोक्षधर्मं भवांश्च किल मोक्षवित् ॥ ४ ॥ श्रुतोऽसि नः
पण्डितो धीरवादी साधुशब्दश्चरते ते पतत्रिन् । किं मन्यसे श्रेष्ठ-
तमं द्विज त्वं कस्मिन्मनस्ते रमते महात्मन् ॥ ५ ॥ तन्नः कार्य्यं
पक्षिवर प्रशाधि यत् कार्य्याणां मन्यसे श्रेष्ठमेकम् । यत् कृत्वा
वै पुरुषः सर्व्वबन्धैर्विमुच्यते विहगेन्द्रेह शीघ्रम् ॥ ६ ॥

हंस उवाच । इदं कार्य्यममृताशाः शृणोमि तपो दमः सत्य-
मात्माभिगुप्तिः । ग्रन्थीन् विमुच्य हृदयस्य सर्वान् प्रियाप्रिये स्वं
वशमानयीत ॥ ७ ॥ नारुन्तुदः स्यान्न नृशंसवादी न हीनतः
परमभ्याददीत । ययास्य वाचा पर उद्विजेत न तां वदेदुषतीं

पापलोक्याम् ॥८॥ वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि। परस्य नामर्म्मसु ते पतन्ति तान् पण्डितो नावसृजेत् परेषु ॥ ९ ॥ परश्चेदेनमतिवादबाणैर्भृशं विध्येच्छम एवेह कार्य्यः। संरोष्यमाणः प्रतिहृष्यते यः स आदत्ते सुकृतं वै परस्य ॥ १० ॥ क्षेपायमाणमभिषङ्गव्यलीकं निगृह्णाति ज्वलितं यश्च मन्युम्। अदुष्टचेता मुदितोऽनसूयुः स आदत्ते सुकृतं वै परेषाम् ॥ ११ ॥ आक्रुश्यमानो न वदामि किञ्चित् क्षमाम्यहं ताड्यमानश्च नित्यम्। श्रेष्ठं ह्येतद्यत् क्षमामाहुरार्य्याः सत्यं तथैवार्जवमानृशंस्यम् ॥१२॥ वेदस्योपनिषत् सत्यं सत्यस्योपनिषद्दमः। दमस्योपनिषन्मोक्ष एतत्सर्वानुशासनम् ॥ १३ ॥ वाचो वेगं मनसः क्रोधवेगं विधित्सावेगमुदरोपस्थवेगम्। एतान् वेगान् यो विषहेदुदीर्णान् तं मन्येऽहं ब्राह्मणं वै मुनिञ्च ॥ १४ ॥ अक्रोधनः क्रुध्यतां वै विशिष्टस्तथा तितिक्षुरतितिक्षोर्विशिष्टः। अमानुषान्मानुषो वै विशिष्टस्तथाज्ञानाज्ज्ञानविद्वै विशिष्टः ॥ १५॥ आक्रुश्यमानो नाक्रुश्येत् मन्युरेनं तितिक्षतः। आक्रोष्टारं निर्द्दहति सुकृतञ्चास्य विन्दति ॥ १६ ॥ यो नात्युक्तः प्राह रूक्षं प्रियं वा यो वा हतो न प्रतिहन्ति धैर्य्यात्। पापञ्च यो नेच्छति तस्य हन्तुस्तस्येह देवाः स्पृहयन्ति नित्यम् ॥ १७ ॥ पापीयसः क्षमेतैव श्रेयसः सदृशस्य च। विमानितो हतोत्क्रुष्ट एवं सिद्धिं गमिष्यति ॥ १८ ॥ सदाहमार्य्यान्निभृतोऽप्युपासे न मे विधित्सोत्सहते न रोषः। न चाप्यहं लिप्समानः परैमि न चैव किञ्चित् विषयेे नयामि ॥ १९॥ नाहं शप्तः प्रतिशपामि कञ्चित् दमं द्वारं ह्यमृतस्येह वेद्मि। गुह्यं ब्रह्म तदिदं वो ब्रवीमि न मानुषात् श्रेष्ठतरं हि किञ्चित् ॥ २० ॥ निर्मुच्यमानः पापेभ्यो घनेभ्य इव चन्द्रमाः। विरजाः कालमाकाङ्क्षन् धीरो धैर्य्येण सिध्यति ॥ २१ ॥ यः सर्वेषां भवति ह्यर्चनीय उत्सेधनस्तम्भ इवाभिजातः। यस्मै वाचं सुप्रसन्नां वदन्ति

स वै देवान् गच्छति संयतात्मा ॥ २२ ॥ न तथा वक्तुमिच्छन्ति कल्याणान् पुरुषे गुणान् । यथैषां वक्तुमिच्छन्ति नैर्गुण्यमनुयुञ्जकाः ॥ २३ ॥ यस्य वाङ्मनसी गुप्ते सम्यक् प्रणिहिते सदा । वेदास्तपश्च त्यागश्च स इदं सर्वमाप्नुयात् ॥ २४ ॥ आक्रोशनावमानाभ्यां नाबुधान् गर्हयेद्बुधः । तस्मान्न वर्द्धयेदन्यं न चात्मानं विहिंसयेत् ॥ २५ ॥ अमृतस्येव संतृप्येदवमानस्य पण्डितः । सुखं ह्यवमतः शेते योऽवमन्ता स नश्यति ॥ २६ ॥ यत् क्रोधनो यजति यद्ददाति यद्वा तपस्तप्यति यज्जुहोति । वैवस्वतस्तद्धरतेऽस्य सर्वं मोघः श्रमो भवति हि क्रोधनस्य ॥ २७ ॥ चत्वारि यस्य द्वाराणि सुगुप्तान्यमरोत्तमाः । उपस्थमुदरं हस्तौ वाक्चतुर्थी स धर्मवित् ॥ २८ ॥ सत्यं दमं ह्यार्ज्जवमानृशंस्यं धृतिं तितिक्षामतिसेवमानः । स्वाध्यायनित्योऽस्पृहयन् परेषामेकान्तशील्यूर्द्ध्वगतिर्भवेत् सः ॥२९॥ सर्वांश्चैनाननुचरन् वत्सवच्चतुरस्तनान् । न पावनतमं किञ्चित् सत्यादध्यगमं क्वचित् ॥ ३० ॥ आचक्षेऽहं मानुषेभ्यो देवेभ्यः प्रतिसञ्चरन् । सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥ ३१ ॥ यादृशैः सन्निवसति यादृशांश्चोपसेवते । यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥ ३२ ॥ यदि सन्तं सेवति यद्यसन्तं तपस्विनम् यदि वा स्तेनमेव । वासो यथा रङ्गवशं प्रयाति तथा स तेषां वशमभ्युपैति ॥ ३३ ॥ सदा देवाः साधुभिः संवदन्ते न मानुषं विषयं यान्ति द्रष्टुम् । नेन्दुः समः स्यादसमो हि वायुरुच्चावचं विषयं यः स वेद ॥ ३४ ॥ अदुष्टं वर्त्तमाने तु हृदयान्तरपूरुषे । तेनैव देवाः प्रीयन्ते सतां मार्गस्थितेन वै ॥ ३५ ॥ शिश्नोदरे ये निरताः सदैव स्तेना नरा वाक्परुषाश्च नित्यम् । अपेतदोषानपि तान् विदित्वा दूराद्देवाः संपरिवर्ज्जयन्ति ॥ ३६ ॥ न वै देवा हीनसत्त्वेन तोष्याः सर्वाशिना दुष्कृतकर्मणा वा । सत्यव्रता ये तु नरा कृतज्ञा धर्मरतास्तैः सह संभजन्ते ॥ ३७ ॥ अव्याहृतं

व्याहृताच्छ्रेय आहुः सत्यं वदेद्व्याहृतं तद्द्वितीयम् । धर्मं वदे-
द्व्याहृतं तत्तृतीयं प्रियं वदेद्व्याहृतं तच्चतुर्थम् ॥ ३८ ॥

साध्या ऊचुः । केनायमावृतो लोकः केन वा न प्रकाशते ।
केन त्यजति मित्राणि केन स्वर्गं न गच्छति ॥ ३९ ॥

हंस उवाच । अज्ञानेनावृतो लोको मात्सर्य्यान्न प्रकाशते ।
लोभात्त्यजति मित्राणि सङ्गात् स्वर्गं न गच्छति ॥ ४० ॥

साध्या ऊचुः । कः स्विदेको रमते ब्राह्मणानां कः स्विदेको
बहुभिर्जोषमास्ते । क स्विदेको बलवान् दुर्बलोऽपि कः स्विदेषां
कलहं नान्ववैति ॥ ४१ ॥

हंस उवाच । प्राज्ञ एको रमते ब्राह्मणानां प्राज्ञश्चैको बहुभि-
र्जोषमास्ते । प्राज्ञ एको बलवान् दुर्बलोऽपि प्राज्ञ एषां कलहं
नान्ववैति ॥ ४२ ॥

साध्या ऊचुः । किं ब्राह्मणानां देवत्वं किञ्च साधुत्वमुच्यते ।
असाधुत्वञ्च किन्तेषां किमेषां मानुषं मतम् ॥ ४३ ॥

हंस उवाच । स्वाध्याय एषां देवत्वं व्रतं साधुत्वमुच्यते ।
असाधुत्वं परीवादो मृत्युर्मानुष्यमुच्यते ॥ ४४ ॥

भीष्म उवाच । सम्वाद इत्ययं श्रेष्ठः साध्यानां परिकीर्त्तितः ।
क्षेत्रं वै कर्मणां योनिः सद्भावः सत्यमुच्यते ॥ ४५ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि हंसगीतायां
नवनवत्यधिकद्विशतोऽध्यायः ॥ २९९ ॥

---

युधिष्ठिर उवाच । साङ्ख्ये योगे च मे तात विशेषं वक्तु-
मर्हसि । तव धर्मज्ञ सर्वं हि विदितं कुरुसत्तम ॥ १ ॥

भीष्म उवाच । साङ्ख्याः सांख्यं प्रशंसन्ति योगा योगं द्विजा-
तयः । वदन्ति कारणं श्रेष्ठं स्वपक्षोद्भावनाय वै ॥ २ ॥ अनो-

श्वरः कथं मुच्येदित्येतं शत्रुकर्षण । वदन्ति कारणं श्रेष्ठं योगाः सम्यङ्मनीषिणः ॥ ३ ॥ वदन्ति कारणञ्चेदं साङ्ख्याः सम्यग्द्विजातयः । विज्ञायेह गतीः सर्वाः विरक्तो विषयेषु यः ॥ ४ ॥ ऊर्द्ध्वं स देहात् सुव्यक्तं विमुच्येदिति नान्यथा । एतदाहुर्महाप्राज्ञाः साङ्ख्यं वै मोक्षदर्शनम् ॥ ५ ॥ स्वपक्षे कारणं ग्राह्यं समर्थे वचनं हितम् । शिष्टानां हि मतं ग्राह्यं त्वद्विधैः शिष्टसम्मतैः ॥ ६ ॥ प्रत्यक्षहेतवो योगाः साङ्ख्याः शास्त्रविनिश्चयाः । उभे चैते मते तत्त्वे मम तात युधिष्ठिर ॥ ७ ॥ उभे चैते मते ज्ञाने नृपते शिष्टसम्मते । अनुष्ठिते यथाशास्त्रं नयेतां परमां गतिम् ॥ ८ ॥ तुल्यं शौचं तयोर्युक्तं दया भूतेषु चानघ । व्रतानां धारणं तुल्यं दर्शनं न समं तयोः ॥ ९ ॥

युधिष्ठिर उवाच । यदि तुल्यं व्रतं शौचं दया चात्र फलं तथा । न तुल्यं दर्शनं कस्मात्तन्मे ब्रूहि पितामह ॥ १० ॥

भीष्म उवाच । रागं मोहं तथा स्नेहं कामं क्रोधञ्च केवलम् । योगाच्छित्त्वा ततो दोषान् पञ्चैतान् प्राप्नुवन्ति तत् ॥ ११ ॥ तथैव-निमिषाः स्थूला जालं छित्त्वा पुनर्ज्जलम् । प्राप्नुवन्ति तथा योगास्तत्पदं वीतकल्मषाः ॥ १२ ॥ तथैव वागुरां छित्त्वा बलवन्तो यथा मृगाः । प्राप्नुयुर्विमलं मार्गं विमुक्ताः सर्व्वबन्धनैः ॥ १३ ॥ लोभजानि तथा राजन् बन्धनानि बलान्विताः । छित्त्वा योगाः परं मार्गं गच्छन्ति विमलं शिवम् ॥ १४ ॥ अबलाश्च मृगा राजन् वागुरासु तथापरे । विनश्यन्ति न सन्देहस्तद्वद्योगबलादृते ॥१५॥ बलहीनाश्च कौन्तेय यथा जालं गता झषाः । वशं गच्छन्ति राजेन्द्र योगास्तद्वत् सुदुर्बलाः ॥ १६ ॥ यथा च शकुनाः सूक्ष्मं प्राप्य जालमरिन्दम । तत्र सक्ता विपद्यन्ते मुच्यन्ते च बलान्विताः ॥ १७ ॥ कर्म्मजैर्बन्धनैर्बद्धास्तद्वद्योगाः परन्तप । अबला वै विनश्यन्ति मुच्यते च बलान्विताः ॥ १८ ॥ अल्पकश्च यथा राजन् वह्निः

भ्राम्यति दुर्बलः। आक्रान्त इन्धनैः स्थूलैस्तद्वद्योगोऽबलः प्रभो ॥ १९ ॥ स एव च यदा राजन् वह्निर्जातबलः पुनः। समीरणगतः क्षिप्रं दहेत् कृत्स्नां महीमपि ॥ २० ॥ तद्वज्जातबलो योगी दीप्ततेजा महाबलः। अन्तकाल इवादित्यः कृत्स्नं संशोषयेज्जगत् ॥ २१ ॥ दुर्बलश्च यथा राजन् स्रोतसा ह्रियते नरः। बलहीनस्तथा योगी विषयैर्ह्रियतेऽवशः ॥ २२ ॥ तदेव च महास्रोतो विष्टम्भयति वारणः। तद्वद्योगबलं लब्ध्वा व्यूहते विषयान् बहून् ॥ २३ ॥ विशन्ति चावशाः पार्थ योगाद्योगबलान्विताः। प्रजापतीनृषीन् देवान् महाभूतानि चेश्वराः ॥ २४ ॥ न यमो नान्तकः क्रुद्धो न मृत्युर्भीमविक्रमः। ईशते नृपते सर्वे योगस्यामिततेजसः ॥ २५ ॥ आत्मनाञ्च सहस्राणि बहूनि भरतर्षभ। योगः कुर्य्याद्बलं प्राप्य तैश्च सर्वैर्महीञ्चरेत् ॥ २६ ॥ प्राप्नुयाद्विषयान् कश्चित् पुनश्चोग्रं तपश्चरेत्। संक्षिपेच्च पुनस्तात सूर्य्यस्तेजोगुणानिव ॥ २७ ॥ बलस्थस्य हि योगस्य बन्धनेशस्य पार्थिव। विमोक्षे प्रभविष्णुत्वमुपपन्नमसंशयम् ॥ २८ ॥ बलानि योगप्राप्तानि यथैतानि विशाम्पते। निदर्शनार्थं सूक्ष्माणि वक्ष्यामि च पुनस्तव ॥ २९॥ आत्मनश्च समाधाने धारणां प्रति वा विभो। निदर्शनानि सूक्ष्माणि शृणु मे भरतर्षभ ॥ ३० ॥ अप्रमत्तो यथा धन्वी लक्ष्यं हन्ति समाहितः। युक्तः सम्यक् तथा योगी मोक्षं प्राप्नोत्यसंशयम् ॥ ३१ ॥ स्नेहपूर्णे यथा पात्रे मन आधाय निश्चलम्। पुरुषो युक्त आरोहेत् सोपानं युक्तमानसः ॥ ३२ ॥ युक्त्वास्तथायमात्मानं योग पार्थिव निश्चलम्। करोत्यमलमात्मानं भास्करोपमदर्शनम् ॥ ३३ ॥ यथा च नावं कौन्तेय कर्णधारः समाहितः। महार्णवगतां शीघ्रं नयेत् पार्थिव पत्तनम् ॥ ३४ ॥ तद्वदात्मसमाधानं युक्त्वा योगेन तत्त्ववित्। दुर्गमं स्थानमाप्नोति हित्वा देहमिमं नृप ॥ ३५ ॥ सारथिश्च यथा युक्त्वा सदश्वान् सुसमाहितः। देशमिष्टं

नयत्याशु धन्विनं पुरुषर्षभ ॥ ३६ ॥ तथैव नृपते योगी धारणासु
समाहितः। प्राप्नोत्याशु परं स्थानं लक्ष्यं मुक्त इवाशुगः ॥३७॥
प्रविश्यात्मनि चात्मानं योगी तिष्ठति योऽचलः। पापं हन्ति पुनी-
तानां पदमाप्नोति सोऽजरम् ॥ ३८ ॥ नाभ्यां कण्ठे च शीर्षे च
हृदि वक्षसि पार्श्वयोः। दर्शने श्रवणे चापि घ्राणे चामितविक्रमः
॥ ३९ ॥ स्थानेष्वेतेषु यो योगी महाव्रतसमाहितः। आत्मना
सूक्ष्ममात्मानं युङ्क्ते सम्यग्विशाम्पते ॥ ४० ॥ स शीघ्रमचलप्रख्यं
कर्म दग्ध्वा शुभाशुभम्। उत्तमं योगमास्थाय यदीच्छति विमु-
च्यते ॥ ४१ ॥

युधिष्ठिर उवाच। आहारान् कीदृशान् कृत्वा कानि जित्वा
च भारत। योगी बलमवाप्नोति तद्भवान् वक्तुमर्हति ॥ ४२ ॥

भीष्म उवाच। कणानाम्भक्षणे युक्तः पिण्याकस्य च भारत।
स्नेहानां वर्ज्जने युक्तो योगी बलमवाप्नुयात् ॥ ४३ ॥ भुञ्जानो
यावकं रूक्षं दीर्घकालमरिन्दम। एकाहारो विशुद्धात्मा योगी
बलमवाप्नुयात् ॥ ४४॥ पक्षान्मासानृतूंश्चैतान् संवत्सरानहस्तथा।
अपः पीत्वा पयोमिश्रा योगी बलमवाप्नुयात् ॥ ४५ ॥ अखण्डमपि
वा मांसं सततं मनुजेश्वर। उपोष्य सम्यक् शुद्धात्मा योगी बल-
मवाप्नुयात् ॥ ४६ ॥ कामं जित्वा तथा क्रोधं शीतोष्णे वर्षमेव च।
भयं शोकं तथा श्वासं पौरुषान् विषयांस्तथा ॥ ४७ ॥ अरतिं
दुर्ज्जयां चैव घोरां तृष्णाञ्च पार्थिव। स्पर्शं निद्रां तथा तन्द्रां
दुर्ज्जयां नृपसत्तम ॥ ४८ ॥ दीपयन्ति महात्मानः सूक्ष्ममात्मान-
मात्मना। वीतरागा महाप्राज्ञा ध्यानाध्ययनसम्पदा ॥ ४९॥ दुर्ग-
स्त्वेष महापन्था ब्राह्मणानां विपश्चिताम्। यः कश्चिद्व्रजति ह्यस्मिन्
क्षेमेन भरतर्षभ ॥ ५० ॥ यथा कश्चिद्वनं घोरं बहुसर्पसरीसृपम्।
श्वभ्रवत्तोयहीनञ्च दुर्गमं बहुकण्टकम् ॥ ५१ ॥ अभक्तमटवीप्रायं
दावदग्धमहीरुहम्। पन्थानं तस्कराकीर्णं क्षेमेणाभिपतेद्युवा॥५२॥

योगमार्गं तथासाद्य यः कश्चिद्व्रजते द्विजः। क्षेमेणोपरमेन्मार्गा-द्बहुदोषो हि स स्मृतः॥ ५३॥ सुस्थेयं क्षुरधारासु निशितासु महीपते। धारणासु तु योगस्य दुःस्थेयमकृतात्मभिः॥ ५४॥ विपन्ना धारणास्तात नयन्ति न शुभां गतिम्। नेतृहीना यथा नावः पुरुषानर्णवे नृप॥ ५५॥ यस्तु तिष्ठति कौन्तेय धारणासु यथाविधि। मरणं जन्म दुःखञ्च सुखञ्च स विमुञ्चति॥ ५६॥ नानाशास्त्रेषु निष्पन्नं योगेष्विदमुदाहृतम्। परं योगस्य यत्कृत्यं निश्चितं तद्विजातिषु॥ ५७॥ परं हि तद्ब्रह्ममयं महात्मन् ब्रह्माणमीशं वरदञ्च विष्णुम। भवञ्च धर्मञ्च षडाननञ्च यद्ब्रह्म-पुत्रांश्च महानुभावान्॥ ५८॥ तमश्च कष्टं सुमहद्रजश्च सत्त्वञ्च शुद्धं प्रकृतिं पराञ्च। सिद्धिञ्च देवीं वरुणस्य पत्नीं तेजश्च कृत्स्नं सुमहच्च धैर्य्यम्॥ ५९॥ ताराधिपं खे विमलं सतारं विश्वांश्च देवानुरगान् पितॄंश्च। शैलांश्च कृतस्नानुदधींश्च घोरान्नदीश्च सर्वाः सवनान् घनांश्च॥ ३०॥ नागान्नगान् यक्षगणान् दिशश्च गन्धर्व-सङ्घान् पुरुषान् स्त्रियश्च। परस्परं प्राप्य महान् महात्मा विशेत योगी न चिराद्विमुक्तः॥ ६१॥ कथा च येयं नृपते प्रसक्ता देवे महावीर्य्यमतौ शुभेयम्। योगी स सर्वानभिभूय मर्त्त्यान्नारा-यणात्मा कुरुते महात्मा॥ ६२॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि योगविधौ
त्रिशततमोऽध्यायः॥ ३००॥

---

युधिष्ठिर उवाच। सम्यक् त्वयायं नृपते वर्णितः शिष्टसम्मतः। योगमार्गो यथान्यायं शिष्यायेह हितैषिणा॥१॥ साङ्ख्ये त्विदानीं कार्त्स्न्येन विधिं प्रब्रूहि पृच्छते। त्रिषु लोकेषु यज्ज्ञानं सर्वं तद्विदितं हि ते॥ २॥

भीष्म उवाच । शृणु मे त्वमिदं सूक्ष्मं साङ्ख्यानां विदितात्मनाम् । विहितं यतिभिः सर्व्वैः कपिलादिभिरीश्वरैः ॥ ३ ॥ यस्मिन्न विभ्रमाः केचिद्दृश्यन्ते मनुजर्षभ । गुणाश्च यस्मिन् बहवो दोषहानिश्च केवला ॥ ४ ॥ ज्ञानेन परिसङ्ख्याय सदोषान् विषयान्नृप । मानुषान् दुर्ज्जयान् कृत्स्नान् पैशाचान् विषयांस्तथा ॥५॥ राक्षसान् विषयान् ज्ञात्वा यक्षाणां विषयांस्तथा । विषयानौरगान् ज्ञात्वा गान्धर्व्वविषयांस्तथा ॥ ६ ॥ पितॄणां विषयान् ज्ञात्वा तिर्य्यक्षु चरतां नृप । सुपर्णविषयान् ज्ञात्वा मरुतां विषयांस्तथा ॥ ७ ॥ राजर्षिविषयान् ज्ञात्वा ब्रह्मर्षिविषयांस्तथा । आसुरान् विषयान् ज्ञात्वा वैश्वदेवांस्तथैव च ॥ ८ ॥ देवर्षिविषयान् ज्ञात्वा योगानामपि चेश्वरान् । प्रजापतीनां विषयान् ब्रह्मणो विषयांस्तथा ॥ ९ ॥ आयुषश्च परं कालं लोके विज्ञाय तत्त्वतः । सुखस्य च परं तत्त्वं विज्ञाय वदताम्वर ॥ १० ॥ प्राप्ते काले च यद्दुःखं सततं विषयैषिणाम् । तिर्य्यक्षु पततां दुःखं पततां नरके न यत् ॥ ११ ॥ स्वर्गस्य च गुणान् कृत्स्नान् दोषान् सर्व्वांश्च भारत । वेदवादे येऽपि दोषा गुणा ये चापि वैदिकाः ॥ १२ ॥ ज्ञानयोगे च ये दोषा गुणा योगे च ये नृप । साङ्ख्यज्ञाने च ये दोषास्तथैव च गुणा नृप ॥ १३ ॥ सत्त्वं दशगुणं ज्ञात्वा रजो नवगुणान्तथा । तमश्चाष्टगुणं ज्ञात्वा बुद्धिं सप्तगुणान्तथा ॥१४॥ षड्गुणञ्च मनो ज्ञात्वा नभः पञ्चगुणान्तथा । बुद्धिञ्चतुर्गुणां ज्ञात्वा तमश्च त्रिगुणं तथा ॥ १५ ॥ द्विगुणञ्च रजो ज्ञात्वा सत्त्वमेकं गुणं पुनः । मार्गं विज्ञाय तत्त्वेन प्रलये प्रेक्षणे तथा ॥ १६ ॥ ज्ञानविज्ञानसम्पन्नाः कारणैर्भाविताः शुभाः । प्राप्नुवन्ति शुभं मोक्षं सूक्ष्मा इव नभः परम् ॥ १७ ॥ रूपेण दृष्टिं संयुक्तां घ्राणं गन्धगुणेन च । शब्दे सक्तं तथा श्रोत्रं जिह्वां रसगुणेषु च ॥ १८ ॥ तनुं स्पर्शे तथा सक्तां वायुं नभसि चाश्रितम् । मोहं तमसि संयुक्तं लोभमर्थेषु

संश्रितम् ॥ १९ ॥ विष्णुं क्रान्ते बले शक्रं कोष्ठे सक्तं तथानलम्। अपस्तु देवीं समासक्तामापस्तेजसि संश्रिताः ॥ २० ॥ तेजो वायौ तु संसक्तं वायुं नभसि चाश्रितम्। नभो महति संयुक्तं महद्बुद्धौ च संश्रितम् ॥ २१ ॥ बुद्धिं तमसि संसक्ता तमो रजसि संश्रितम्। रजः सत्त्वे तथा सक्तं सत्त्वं सक्तं तथात्मनि ॥ २२ ॥ सक्तमात्मानमीशे च देवे नारायणे तथा। देवं मोक्षे च संसक्तं मोक्षं सक्तन्तु न क्वचित् ॥ २३ ॥ ज्ञात्वा सत्त्वगुणं देहं वृतं षोड़शभिर्गुणैः। स्वभावं चेतनाञ्चैव ज्ञात्वा देहसमाश्रिते ॥ २४॥ मध्यस्थमेकमात्मानं पापं यस्मिन्न विद्यते। द्वितीयं कर्म विज्ञाय नृपते विषयैषिणाम् ॥ २५ ॥ इन्द्रियाणीन्द्रियार्थांश्च सर्वानात्मनि संश्रितान्। दुर्लभत्वञ्च मोक्षस्य विज्ञाय श्रुतिपूर्वकम् ॥ २६ ॥ प्राणापानौ समानञ्च व्यानोदानौ च तत्त्वतः। अधश्चैवानिलं ज्ञात्वा प्रवहञ्चानिलं पुनः ॥ २७ ॥ सप्तवातांस्तथा ज्ञात्वा सप्तधा विहितान् पुनः। प्रजापतीनृषींश्चैव मार्गांश्चैव बहून् वरान् ॥ २८ ॥ सप्तर्षींश्च बहून् ज्ञात्वा राजर्षींश्च परन्तप। सुरर्षीन् महतश्चान्यान् ब्रह्मर्षीन् सूर्य्यसन्निभान् ॥ २९ ॥ ऐश्वर्य्याच्च्यावितान् दृष्ट्वा कालेन महता नृप। महतां भूतसङ्घानां श्रुत्वा नाशञ्च पार्थिव ॥ ३० ॥ गतिञ्चाप्यशुभां ज्ञात्वा नृपते पापकर्मिणाम्। वैतरण्याञ्च यद्दुःखं पतितानां यमक्षये ॥ ३१ ॥ योनीषु च विचित्रासु संसारानशुभांस्तथा। जठरे चाशुभे वासं शोणितोदकभाजने ॥ ३२ ॥ श्लेष्ममूत्रपुरीषे च तीव्रगन्धसमन्विते। शुक्रशोणितसङ्घाते मज्जास्नायुपरिग्रहे ॥ ३३ ॥ शिराशतसमाकीर्णे नवद्वारे पुरेऽशुचौ। विज्ञाय हितमात्मानं योगांश्च विविधान्नृप ॥ ३४ ॥ तामसानाञ्च जन्तूनां रमणीयावृतात्मनाम्। सात्त्विकानाञ्च जन्तूनां कुत्सितं भरतर्षभ ॥ ३५ ॥ गर्हितं महतामर्थे साङ्ख्यानां विदितात्मनाम्। उपप्लवांस्तथा घोरान् शशिनस्तेजसस्तथा ॥ ३६ ॥ ताराणां पतनं

दृष्ट्वा न च वराणाञ्च पर्य्ययम् । द्वन्द्वानां विप्रयोगञ्च विज्ञाय कृपणं नृप ॥ ३७ ॥ अन्योऽन्यभक्षणं दृष्ट्वा भूतानामपि चाशुभम् । बाल्ये मोहञ्च विज्ञाय क्षयं देहस्य चाशुभम् ॥ ३८ ॥ रागे मोहे च संप्राप्ते क्वचित् सत्त्वं समाश्रितम् । सहस्रेषु नरः कश्चिन्मोक्षबुद्धिं समाश्रितः ॥ ३९ ॥ दुर्लभत्वञ्च मोक्षस्य विज्ञाय श्रुतिपूर्वकम् । बहुमानमलब्धेषु लब्धे मध्यस्थतां पुनः ॥ ४० ॥ विषयाणाञ्च दौरात्म्यं विज्ञाय नृपते पुनः । गतासूनाञ्च कौन्तेय देहान् दृष्ट्वा तथा शुभान् ॥ ४१ ॥ वासं लोकेषु जन्तूनां दुःखं विज्ञाय भारत । ब्रह्मघ्नानां गतिं ज्ञात्वा पतितानां सुदारुणाम् ॥ ४२ ॥ सुरापाने च सक्तानां ब्राह्मणानां दुरात्मनाम् । गुरुदारप्रसक्तानाम् गतिं विज्ञाय चाशुभाम् ॥ ४३ ॥ जननीषु च वर्त्तन्ते ये न सम्यक् युधिष्ठिर । सदेवकेषु लोकेषु ये न वर्त्तन्ति मानवाः ॥ ४४ ॥ तेन ज्ञानेन विज्ञाय गतिञ्चाशुभकर्म्मणाम् । तिर्य्यग्योनिगतानाञ्च विज्ञाय गतयः पृथक् ॥ ४५ ॥ वेदवादांस्तथा चित्रमृतूनां पर्य्ययांस्तथा । क्षयं सम्वत्सराणाञ्च मासानाञ्च क्षयं तथा ॥ ४६ ॥ पक्षक्षयं तथा दृष्ट्वा दिवसानाञ्च संक्षयम् । क्षयं वृद्धिञ्च चन्द्रस्य दृष्ट्वा प्रत्यक्षतस्तथा ॥ ४७ ॥ वृद्धिं दृष्ट्वा समुद्राणां क्षयं तेषां तथा पुनः । क्षयं धनानां दृष्ट्वा च पुनर्वृद्धिन्तथैव च ॥ ४८ ॥ संयोगानां क्षयं दृष्ट्वा युगानाञ्च विशेषतः । क्षयञ्च दृष्ट्वा शैलानां क्षयञ्च सरितान्तथा ॥ ४९ ॥ वर्णानाञ्च क्षयं दृष्ट्वा क्षयान्तञ्च पुनः पुनः । जरां मृत्युं तथा जन्म दृष्ट्वा दुःखानि चैव ह ॥ ५० ॥ देहदोषां स्तथा ज्ञात्वा तेषां दुःखञ्च तत्त्वतः । देहविप्लवताञ्चैव सम्यग्विज्ञाय तत्त्वतः ॥ ५१ ॥ आत्मदोषांश्च विज्ञाय सर्वानात्मनि संश्रितान् । स्वदेहादुत्थितान् गन्धांस्तथा विज्ञाय चाशुभम् ॥

युधिष्ठिर उवाच । कान् स्वगात्रोद्भवान् दोषान् पश्यस्यमितविक्रम । एतन्मे संशयं कृत्स्नं वक्तुमर्हसि तत्त्वतः ॥ ५३ ॥

भीष्म उवाच। पञ्च दोषान् प्रभो देहे प्रवदन्ति मनीषिणः। मार्गज्ञाः कापिलाः साङ्ख्याः शृणु तानरिसूदन ॥५४॥ कामक्रोधौ भयं निद्रा पञ्चमः श्वास उच्यते ॥ ५५ ॥ एते दोषाः शरीरेषु दृश्यन्ते सर्वदेहिनाम्। छिन्दन्ति क्षमया क्रोधं कामं सङ्कल्पवर्ज्जनात् ॥ ५६ ॥ सत्त्वसंसेवनान्निद्रामप्रमादाद्भयन्तथा। छिन्दन्ति पञ्चमं श्वासमल्पाहारतया नृप ॥ ५७ ॥ गुणान् गुणशतैर्ज्ञात्वा दोषान् दोषशतैरपि। हेतुन् हेतुशवैश्चित्रैश्चित्रान् विज्ञाय तत्त्वतः ॥ ५८ ॥ अपां फेनोपमं लोकं विष्णोर्मायाशतैर्वृतम्। चित्रभित्तिप्रतीकाशं नलसारमनर्थकम् ॥ ५९ ॥ तमः श्वभ्रनिभं दृष्ट्वा वर्षबुद्बुदसन्निभम्। नाशप्रायं सुखाद्धीनं नाशोत्तरमिहावशम् ॥६०॥ रजस्तमसि संमग्नं पङ्के द्विपमिवावशम्। साङ्ख्या राजन्महाप्रज्ञास्त्यक्ता स्नेहं प्रजाकृतम् ॥ ६१ ॥ ज्ञानयोगेन साङ्ख्येन व्यापिना महता नृप। राजसानशुभान् गन्धांस्तामसांश्च तथाविधान् ॥६२॥ पुण्यांश्च सात्त्विकान् गन्धान् स्पर्शजान् देहसंश्रितान्। छित्त्वाशु ज्ञानशस्त्रेन तपोदण्डेन भारत ॥ ६३ ॥ ततो दुःखोदकं घोरं चिन्ताशोकमहाह्रदम्। व्याधिमृत्युमहाग्राहं महाभयमहोरगम् ॥ ६४ ॥ तमःकूर्मं रजोमीनं प्रज्ञया सन्तरन्त्युत। स्नेहपङ्कं जरादुर्गं ज्ञानद्वीपमरिन्दम ॥ ६५ ॥ कर्मागाधं सत्यतीरं स्थितव्रतमरिन्दम। हिंसाशीघ्रमहावेगं नानारससमाकरम् ॥६६॥ नानाप्रीतिमहारत्नं दुःखज्वरसमीरणम्। शोकतृष्णामहावर्त्तं तीक्ष्णव्याधिमहागजम् ॥ ६७ ॥ अस्थिसङ्घातसङ्घट्टं श्लेष्मफेनमरिन्दम। दानमुक्ताकरं घोरं शोणितह्रदविद्रुमम् ॥ ६८ ॥ हसितोत्क्रुष्टनिर्घोषं नानाज्ञानसुदुस्तरम्। रोदनाश्रुमलक्षारं सङ्गत्यागपरायणम् ॥ ६९ ॥ पुनराजन्मलोकौघं पुत्रबान्धवपत्तनम्। अहिंसासत्यमर्य्यादं प्राणत्यागमहोर्मिणम् ॥ ७० ॥ वेदान्तगमनद्वीपं सर्वभूतदयोदधिम्। मोक्षदुर्लभविषयं वड़वामुखसागरम् ॥ ७१ ॥

तरन्ति यतयः सिद्धा ज्ञानयोगेन भारत। तीर्त्वा च दुस्तरं जन्म विशन्ति विमलं नभः॥ ७२॥ ततस्तान् सुकृतीन् साङ्ख्यान् सूर्य्यो वहति रश्मिभिः। पद्मतन्तुवदाविश्य प्रवहन् विषयान्नृप॥७३॥ तत्र तान् प्रवहो वायुः प्रतिगृह्णाति भारत। वीतरागान् यतीन् सिद्धान् वीर्य्ययुक्तांस्तपोधनान्॥ ७४॥ सूक्ष्मः शीतः सुगन्धश्च सुखस्पर्शश्च भारत। सप्तानां मरुतां श्रेष्ठो लोकान् गच्छति यः शुभान्॥ ७५॥ स तान् वहति कौन्तेय नभसः परमां गतिम्। नभो वहति लोकेश रजसः परमां गतिम्॥ ७६॥ रजो वहति राजेन्द्र सत्त्वस्य परमां गतिम्। सत्त्वं वहति शुद्धात्मन् परं नारायणं प्रभुम्॥७७॥ प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना। परमात्मानमासाद्य तद्भूतायतनामलाः॥ ७८॥ अमृतत्वाय कल्पन्ते न निवर्त्तन्ति वा विभो। परमा सा गतिः पार्थ निर्द्वन्द्वानां महात्मनाम्। सत्यार्ज्जवरतानां वै सर्व्वभूतदयावताम्॥ ७९॥

युधिष्ठिर उवाच। स्थानमुत्तममासाद्य भगवन्तं स्थिरव्रताः। आजन्ममरणं वा ते स्मरन्त्युत न वानघ॥ ८०॥ यदत्र तथ्यं तन्मे त्वं यथावद्वक्तुमर्हसि। त्वदृते पुरुषं नान्यं प्रष्टुमर्हामि कौरव॥८१॥ मोक्षे दोषो महानेष प्राप्य सिद्धिं गतानृषीन्॥८२॥ यदि तत्रैव विज्ञाने वर्त्तन्ते यतयः परे। प्रवृत्तिलक्षणं धर्मं पश्यामि परमं नृप। मग्नस्य हि परं ज्ञानं किन्तु दुःखतरं भवेत्॥ ८३॥

भीष्म उवाच। यथान्यायं त्वया तात प्रश्नः पृष्टः सुसङ्कटः। बुधानामपि संमोहः प्रश्नेऽस्मिन् भरतर्षभ॥ ८४॥ तत्रापि तत्त्वं परमं शृणु सम्यङ्मयेरितम्। बुद्धिश्च परमा यत्र कापिलानां महात्मनाम्॥ ८५॥ इन्द्रियाण्यवबुध्यन्ते स्वदेहे देहिनां नृप। कारणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः॥ ८६॥ आत्मना विप्रहीणानि काष्ठकुड्यसमानि तु। विनश्यन्ति न सन्देहः फेना इव महार्णवे॥ ८७॥ इन्द्रियैः सह सुप्तस्य देहिनः शत्रुतापन।

सूक्ष्मश्चरति सर्वत्र नभसीव समीरणः ॥ ८८ ॥ स पश्यति यथा-
न्यायं स्पर्शान् स्पृशति वा विभो । बुध्यमानो यथा पूर्वमखिलेनेह
भारत ॥ ८९ ॥ इन्द्रियाणीह सर्वाणि स्वे स्वे स्थाने यथाविधि ।
अनीशत्वात् प्रलीयन्ते सर्पा हतविषा इव ॥ ९० ॥ इन्द्रियाणाञ्च
सर्वेषां स्वस्थानेष्वेव सर्वशः । आक्रम्य गतयः सूक्ष्मश्चरत्यात्मा न
संशयः ॥ ९१ ॥ सत्त्वस्य च गुणान् कृत्स्नान् रजसश्च गुणान्
पुनः । गुणांश्च तमसः सर्वान् गुणान् बुद्धेश्च भारत ॥ ९२ ॥
गुणांश्च मनसश्चापि नभसश्च गुणांस्तथा । गुणान् वायोश्च धर्मा-
त्मन् स्नेहजांश्च गुणान् पुनः ॥ ९३ ॥ अपां गुणांस्तथा पार्थ
पार्थिवांश्च गुणानपि । सर्वात्मेव गुणैर्व्याप्य क्षेत्रज्ञो युधिष्ठिर
॥ ९४ ॥ आत्मा च याति क्षेत्रज्ञं कर्मणी च शुभाशुभे । शिष्या
इव महात्मानमिन्द्रियाणि च तं प्रभो ॥ ९५ ॥ प्रकृतिञ्चाप्यतिक्रम्य
गच्छत्यात्मानमव्ययम् । परं नारायणात्मानं निर्द्वन्द्वं प्रकृतेः परम्
॥ ९६ ॥ विमुक्तः पुण्यपापेभ्यः प्रविष्टस्तमनामयम् । परमात्मान-
मगुणं न निवर्त्तति भारत ॥ ९७ ॥ शिष्टं तत्र मनस्तात इन्द्रि-
याणि च भारत । आगच्छन्ति यथाकालं गुरोः सन्देशकारिणः
॥ ९८ ॥ शक्यञ्चाल्पेन कालेन शान्तिं प्राप्तुं गुणार्थिना । एवमुक्तेन
कौन्तेय युक्तज्ञानेन मोक्षिणा ॥ ९९ ॥ साङ्ख्या राजन्महाप्राज्ञा
गच्छन्ति परमां गतिम् । ज्ञानेनानेन कौन्तेय तुल्यं ज्ञानं न
विद्यते ॥ १०० ॥ अत्र ते संशयो मा भूत् ज्ञानं साङ्ख्यं परं मतम् ।
अक्षरं ध्रुवमेवोक्तं पूर्णं ब्रह्म सनातनम् ॥ १०१ ॥ अनादिमध्य-
निधनं निर्द्वन्द्वं कर्त्तृशाश्वतम् । कूटस्थञ्चैव नित्यञ्च यद्वदन्ति मनी-
षिणः ॥ १०२ ॥ यतः सर्वाः सवर्त्तन्ते सर्गप्रलयविक्रियाः । यच्च
शंसन्ति शास्त्रेषु वदन्ति परमर्षयः ॥ १०३ ॥ सर्वे विप्राश्च देवाश्च
तथा समविदो जनाः । ब्रह्मण्यं परमं देवमनन्तं परमच्युतम् ॥ १०४ ॥
प्रार्थयन्तश्च तं विप्रा वदन्ति गुणबुद्धयः । सम्यग्युक्तास्तथा योगाः

साङ्ख्यास्त्वामितदर्शनाः ॥ १०५ ॥ अमूर्त्तेस्तस्य कौन्तेय साङ्ख्यं मूर्त्तिरिति श्रुतिः । अभिज्ञानानि तस्याहुर्मतं हि भरतर्षभ ॥१०६॥ द्विविधानीह भूतानि पृथिव्यां पृथिवीपते । जङ्गमागमसंज्ञानि जङ्गमन्तु विशिष्यते ॥ १०७ ॥ ज्ञानं महद्यद्धि महत्सु राजन् वेदेषु साङ्ख्येषु तथैव योगे । यच्चापि दृष्टं विविधं पुराणे साङ्ख्यागतं तन्निखिलं नरेन्द्र ॥ १०८ ॥ यच्चेतिहासेषु महत्सु दृष्टं यच्चार्थशास्त्रे नृप शिष्टजुष्टे । ज्ञानञ्च लोके यदिहास्ति किञ्चित् साङ्ख्यागतं तच्च महन्महात्मन् ॥ १०९ ॥ शमश्च दृष्टः परमं बलञ्च ज्ञानञ्च सूक्ष्मञ्च यथावदुक्तम् । तपांसि सूक्ष्माणि सुखानि चैव सांख्ये यथावद्विहितानि राजन् ॥ ११० ॥ विपर्य्यये तस्य हि पार्थ देवान् गच्छन्ति सांख्याः सततं सुखेन । तांश्चानुसञ्चार्य्य ततः कृतार्थाः पतन्ति विप्रेषु यतेषु भूयः ॥ १११ ॥ हित्वा च देहं प्रविशन्ति देवं दिवौकसो द्यामिव पार्थ साङ्ख्याः । ततोऽधिकं तेऽभिरता महार्हे साङ्ख्ये द्विजाः पार्थिव शिष्टजुष्टे ॥ ११२ ॥ तेषां न तिर्य्यग्गमनं हि दृष्टं नार्वाग्गतिः पापकृताधिवासः । न वा प्रधाना अपि ते द्विजातयो ये ज्ञानमेकं नृपतेऽनुरक्ताः ॥ ११३ ॥ साङ्ख्यं विशालं परमं पुराणं महार्णवं विमलमुदारकान्तम् । कृत्स्नञ्च साङ्ख्यं नृपते महात्मा नारायणो धारयतेऽप्रमेयम् ॥११४॥ एतन्मयोक्तं नरदेव तत्त्वं नारायणो विश्वमिदं पुराणम् । स सर्गकाले च करोति सर्गं संहारकाले च तदत्ति भूयः । संहृत्य सर्वं निजदेहसंस्थं कृताप्सु शेते जगदन्तरात्मा ॥ ११५ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि साङ्ख्ययोगकथने
एकाधिकत्रिशततोऽध्यायः ॥ १०३ ॥

---

युधिष्ठिर उवाच। किन्तदक्षरमित्युक्तं यस्मान्नावर्त्तते पुनः।
किञ्च तत् क्षरमित्युक्तं यस्मादावर्त्तते पुनः॥ १॥ अक्षरक्षरयो-
र्व्यक्तिं पृच्छाम्यरिनिसूदन। उपलब्धुं महाबाहो तत्त्वेन कुरु-
नन्दन॥ २॥ त्वं हि ज्ञाननिधिर्विप्रैरुच्यते वेदपारगैः। ऋषि-
भिश्च महाभागैर्यतिभिश्च महात्मभिः॥ ३॥ शेषमल्पं दिनानान्ते
दक्षिणायनभास्करे। आवृत्ते भगवत्यर्के गन्तासि परमां गतिम्
॥ ४॥ त्वयि प्रतिगते श्रेयः कुतः श्रोष्यामहे वयम्। कुरुवंश-
प्रदीपस्त्वं ज्ञानदीपेन दीप्यसे॥ ५॥ तदेतच्छ्रोतुमिच्छामि त्वत्तः
कुरुकुलोद्वह। न तृप्यामीह राजेन्द्र शृण्वन्नमृतमीदृशम्॥ ६॥

भीष्म उवाच। अत्र ते वर्त्तयिष्यामि इतिहासं पुरातनम्।
वशिष्ठस्य च सम्वादं करालजनकस्य च॥ ७॥ वशिष्ठं श्रेष्ठ-
मासीनमृषीणां भास्करद्युतिम्। पप्रच्छ जनको राजा ज्ञानं
नैःश्रेयसं परम्॥ ८॥ परमध्यात्मकुशलमध्यात्मगतिनिश्चयम्।
मैत्रावरुणिमासीनमभिवाद्य कृताञ्जलिः॥ ९॥ स्वक्षरं प्रश्रितं
वाक्यं मधुरञ्चाप्यनुल्बणम्। पप्रच्छर्षिवरं राजा करालजनकः
पुरा॥ १०॥ भगवन् श्रोतुमिच्छामि परं ब्रह्म सनातनम्। यस्मान्न
पुनरावृत्तिमाप्नुवन्ति मनीषिणः॥ ११॥ यच्च तत् क्षरमित्युक्तं
यत्रेदं क्षरते जगत्। यच्चाक्षरमिति प्रोक्तं शिवं क्षेम्यमना-
मयम्॥ १२॥

वशिष्ठ उवाच। श्रूयतां पृथिवीपाल क्षरतीदं यथा जगत्।
यन्न क्षरति पूर्व्वेण यावत्कालेन वाप्यथ॥ १३॥ युगं द्वादश-
साहस्रं कल्पं विद्धि चतुर्युगम्। दशकल्पशतावृत्तमहस्तद्ब्राह्म-
मुच्यते॥ १४॥ रात्रिश्चैतावती राजन् यस्यान्ते प्रतिबुध्यते।
सृजत्यनन्तकर्म्माणं महान्तं भूतमग्रजम्॥ १५॥ मूर्त्तिमन्तममू-
र्त्तात्मा विश्वं शम्भुः स्वयम्भुवः। अणिमा लघिमा प्राप्तिरीशानं
ज्योतिरव्ययम्॥ १६॥ सर्व्वतः पाणिपादान्तं सर्व्वतोऽक्षिशिरो-

मुखम् । सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति ॥ १७ ॥ हिरण्य-गर्भो भगवानेष बुद्धिरिति स्मृतः । महानिति च योगेषु विरिञ्चि-रिति चाप्यजः ॥ १८ ॥ साङ्ख्ये च पठ्यते शास्त्रे नामभिर्बहुधा-त्मकः । विचित्ररूपो विश्वात्मा एकोऽक्षर इति स्मृतः ॥ १९ ॥ वृतं नैकात्मकं येन कृतं त्रैलोक्यमात्मना । तथैव बहुरूपत्वात् विश्वरूप इति श्रुतः ॥ २० ॥ एष वै विक्रियापन्नः सृजत्यात्मान-मात्मना । अहङ्कारं महातेजाः प्रजापतिमहङ्कृतम् ॥२१॥ अव्यक्ता-व्यक्तमापन्नं विद्यासर्गं वदन्ति तम् । महान्तञ्चाप्यहङ्कारमविद्या-सर्गमेव च ॥ २२ ॥ अविधिश्च विधिश्चैव समुत्पन्नौ तथैकतः । विद्याविद्येति विख्याते श्रुतिशास्त्रार्थचिन्तकैः ॥ २३ ॥ भूतसर्ग-महङ्कारात् तृतीयं विद्धि पार्थिव । अहङ्कारेषु सर्व्वेषु चतुर्थं विद्धि वै कृतम् ॥ २४ ॥ वायुर्ज्योतिरथाकाशमापोऽथ पृथिवी तथा । शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च ॥ २५ ॥ एवं युगपदुत्पन्न दशवर्गमसंशयम् । पञ्चमं विद्धि राजेन्द्र भौतिकं सर्गमर्थवत् ॥२६ ॥ श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणमेव च पञ्चमम् । वाक् च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च ॥ २७ ॥ बुद्धीन्द्रियाणि चैतानि तथा कर्म्मेन्द्रियाणि च । सम्भूतानीह युगपन्मनसा सह पार्थिव ॥२८॥ एषा तत्त्वचतुर्विंशी सर्व्वाकृतिषु वर्त्तते । यां ज्ञात्वा नाभिशोचन्ति ब्राह्मणास्तत्त्वदर्शिनः ॥ २९ ॥ एतद्देहं समाख्यातं त्रैलोक्ये सर्व्व-देहिषु । वेदितव्यं नरश्रेष्ठ सदेवनरदानवे ॥ ३० ॥ सयक्षभूत-गन्धर्व्वे सकिन्नरमहोरगे । सचारणपिशाचे वै सदेवर्षिनिशाचरे ॥ ३१ ॥ सदंशकीटमशके सपूतिकृमिमूषिके । शुनि श्वपाके चैणेये सचाण्डाले सपुक्कसे ॥ ३२ ॥ हस्त्यश्वखरशार्दूले सवृक्षे गवि चैव ह । यच्च मूर्त्तिमयं किञ्चित् सर्व्वत्रैतन्निदर्शनम् ॥ ३३॥ जले भुवि तथाकाशे नान्यत्रेति विनिश्चयः । स्थानं देहवतामासीदित्येवमनु-शुश्रुम ॥ ३४ ॥ कृत्स्नमेतावतस्तात क्षरते व्यक्तसंज्ञितम् । अह-

न्यहनि भूतात्मा ततः क्षर इति स्मृतः ॥ ३५ ॥ एतदक्षरमित्युक्तं क्षरतीदं यथा जगत्। जगन्मोहात्मकं प्राहुरव्यक्ताव्यक्तसंज्ञकम् ॥ ३६ ॥ महांश्चैवाग्रजो नित्यमेतत् क्षरनिदर्शनम्। कथितन्ते महाराज यस्मां त्वं परिपृच्छसि ॥ ३७ ॥ पञ्चविंशतिमो विष्णुर्निस्तत्त्वस्तत्त्वसंज्ञितः। तत्त्वसंश्रयणादेतत्तत्त्वमाहुर्मनीषिणः॥३८॥ यन्मर्त्त्यमसृजद्व्यक्तं तत्तन्मूर्त्त्यधितिष्ठति। चतुर्विंशतिमोऽव्यक्तो ह्यमूर्त्तः पञ्चविंशकः ॥ ३९ ॥ स एव हृदि सर्वासु मूर्त्तिष्वातिष्ठतेऽऽत्मवान्। केवलश्चेतनो नित्यः सर्वमूर्त्तिरमूर्त्तिमान् ॥ ४० ॥ सर्गप्रलयधर्म्मित्वा स सर्गप्रलयात्मकः। गोचरे वर्त्तते नित्यं निर्गुणं गुणसंज्ञितम् ॥ ४१ ॥ एवमेष महानात्मा सर्गप्रलयकोविदः। विकुर्व्वाणः प्रकृतिमानभिमन्यत्यबुद्धिमान् ॥ ४२ ॥ तमः सत्त्वरजोयुक्तस्तासु तास्विह योनिषु। लीयते प्रतिबुद्धत्वादबुद्धजनसेवनात् ॥ ४३ ॥ सहवासनिवासित्वान्नान्योऽहमिति मन्यते। योऽहं सोऽहमिति ह्युक्त्वा गुणानेवानुवर्त्तते ॥ ४४ ॥ तमसा तामसान् भावान् विविधान् प्रतिपद्यते। रजसा राजसांश्चैव सात्त्विकान् सत्त्वसंश्रयात् ॥ ४५ ॥ शुक्ललोहितकृष्णानि रूपाख्येतानि त्रीणि तु। सर्व्वाख्येतानि रूपाणि यानीह प्राकृतानि वै ॥४६॥ तामसा निरयं यान्ति राजसा मानुषानथ। सात्त्विका देवलोकाय गच्छन्ति सुखभागिनः ॥४७॥ निष्कैवल्येन पापेन तिर्य्यग्योनिमवाप्नुयात्। पुण्यपापेन मानुष्यं पुण्येनैकेन देवताः ॥ ४८ ॥ एवमव्यक्तविषयं क्षरमाहुर्मनीषिणः। पञ्चविंशतिमो योऽयं ज्ञानादेव प्रवर्त्तते॥४९॥

इति शान्तिपर्व्वणि मोक्षधर्मपर्व्वणि वशिष्ठकरालजनकसम्वादे द्व्यधिकत्रिशततोऽध्यायः ॥ ३०२ ॥

---

वशिष्ठ उवाच । एवमप्रतिबुद्धत्वादबुद्धमनुवर्त्तते । देहाद्देह-
सहस्राणि तथा समभिपद्यते ॥ १ ॥ तिर्य्यग्योनिसहस्रेषु कदा-
चिद्देवतास्वपि । उपपद्यति संयोगाद् गुणैः सह गुणक्षयात् ॥२॥
मानुषत्वाद्दिवं यान्ति दिवो मानुष्यमेव च । मानुष्यान्निरयस्थान-
मानन्त्यं प्रतिपद्यते ॥३॥ कोषकारो यथात्मानं कीटः समवरुन्धति ।
सूत्रतन्तुगुणैर्नित्यं तथायमगुणो गुणैः ॥ ४ ॥ द्वन्द्वमेति च निर्द्वन्द्व-
स्तासु तास्विह योनिषु । शीर्षरोगेऽक्षिरोगे च दन्तशूले गलग्रहे
॥ ५ ॥ जलोदरे तृषारोगे ज्वरगण्डविसूचिके । श्वित्रे कुष्ठे-
ऽग्निदग्धे च सिध्मापस्मारयोरपि ॥ ६ ॥ यानि चान्यानि द्वन्द्वानि
प्राकृतानि शरीरिषु । उत्पद्यन्ते विचित्राणि तान्येषोऽप्यभिमन्यते
॥ ७ ॥ तिर्य्यग्योनिसहस्रेषु कदाचिद्देवतास्वपि । अभिमन्यत्यभी-
मानात्तथैव सुकृतान्यपि ॥ ८ ॥ शुक्लवासाश्चतुर्वासाः शायी नित्य-
मधस्तथा । मण्डूकशायी च तथा वीरासनगतस्तथा ॥ ९ ॥ चीर-
धारणमाकाशे शयनं स्थानमेव च । इष्टकाप्रस्तरे चैव कण्टक-
प्रस्तरे तथा ॥ १० ॥ भस्मप्रस्तरशायी च भूमिशय्यातलेषु च ।
वीरस्थानाम्बुपङ्के च शयनं फलकेषु च ॥ ११ ॥ विविधासु च
शय्यासु फलगृध्यान्वितस्तथा । मुञ्जमेखलनग्नत्वं क्षौमकृष्णाजिनानि
च ॥ १२ ॥ शाणीवालपरीधानो व्याघ्रचर्मपरिच्छदः । सिंहचर्म-
परीधानः पट्टवासास्तथैव च ॥ १३ ॥ फलकं परिधानश्च तथा
कण्टकवस्त्रधृक् । कीटकावसनश्चैव चीरवासास्तथैव च ॥ १४ ॥
वस्त्राणि चान्यानि बहून्यभिमन्यत्यबुद्धिमान् । भोजनानि विचि-
त्राणि रत्नानि विविधानि च ॥ १५ ॥ एकरात्रान्तराशित्वमेक-
कालिकभोजनम् । चतुर्थाष्टमकालश्च षष्ठकालक एव च ॥ १६ ॥
षड्रात्रभोजनश्चैव तथैवाष्टाहभोजनः । सप्तरात्रदशाहारो द्वाद-
शाहिकभोजनः ॥ १७ ॥ मासोपवासी मूलाशी फलाहारस्तथैव
च । वायुभक्षोऽम्बुपिण्याकदधिगोमयभोजनः ॥ १८ ॥ गोमूत्र-

भोजनश्चैव शाकपुष्पाद एव च। शैवालभोजनश्चैव तथा चामेन वर्त्तयन् ॥ १९ ॥ वर्त्तयन् शीर्णपर्णैश्च प्रकीर्णफलभोजनः। विविधानि च कृच्छ्राणि सेवते सिद्धिकाङ्क्षया ॥ २० ॥ चान्द्रायणानि विधिवल्लिङ्गानि विविधानि च। चातुराश्रम्यपन्थानमाश्रयत्यपथानपि ॥ २१ ॥ उपाश्रमानप्यपरान् पाषण्डान् विविधानपि। विविक्ताश्च शिलाच्छायास्तथा प्रस्रवणानि च ॥२२॥ पुलिनानि विविक्तानि विविक्तानि वनानि च। देवस्थानानि पुण्यानि विविक्तानि सरांसि च ॥ २३ ॥ विविक्ताश्चापि शैलानां गुहा गृहनिभोपमाः। विविक्तानि च जप्यानि व्रतानि विविधानि च ॥ २४ ॥ नियमान् विविधांश्चापि विविधानि तपांसि च। यज्ञांश्च विविधाकारान् विधींश्च विविधांस्तथा ॥ २५ ॥ वणिक्पथं द्विजं चत्रं वैश्यशूद्रांस्तथैव च। दानञ्च विविधाकारं दीनान्धकृपणादिषु ॥ २६ ॥ अभिमन्यत्यसम्बोधात् तथैव त्रिविधान् गुणान्। सत्त्वं रजस्तमश्चैव धर्मार्थौ काम एव च ॥ २७ ॥ प्रकृत्यात्मानमेवात्मा एवं प्रतिभजत्युत। स्वधाकारवषट्कारौ स्वाहाकारनमस्क्रिये ॥ २८ ॥ याजनाध्यापनं दानं तथैवाहुः प्रतिग्रहम्। यजनाध्ययने चैव यच्चान्यदपि किञ्चन ॥ २९ ॥ जन्ममृत्युविषादे च तथा विशसनेऽपि च। शुभाशुभमयं सर्वमेतदाहुः क्रियापथम् ॥३०॥ प्रकृतिः कुरुते देवी भवं प्रलयमेव च। दिवसान्ते गुणानेतानभ्येत्येकोऽवतिष्ठते ॥ ३१॥ रश्मिजालमिवादित्यस्तत्तत्काले नियच्छति। एवमेषोऽसकृत् सर्वं क्रीड़ार्थमभिमन्यते ॥३२॥ आत्मरूपगुणानेतान् विविधान् हृदयप्रियान्। एवमेतां विकुर्वाणः सर्गप्रलयधर्मिणीम् ॥ ३३ ॥ क्रियां क्रियापथे रक्तस्त्रिगुणां त्रिगुणाधिपः। क्रियां क्रियापथोपेतस्तथा तदित्यमन्यते ॥ ३४ ॥ प्रकृत्या सर्वमेवेदं जगदन्धीकृतं विभो। रजसा तमसा चैव व्याप्तं सर्वमनेकधा ॥३५॥ एवं द्वन्द्वान्यथैतानि समावर्त्तन्ति नित्यशः। ममैवैतानि जायन्ते धावन्ते तानिमा-

निति ॥ ३६ ॥ निस्तत्त्वान्यथैतानि सर्वाणीति नराधिप । मन्यते
यं ह्यबुद्धत्वात्तथैव सुकृतान्यपि ॥ ३७ ॥ भोक्तव्यानि ममैतानि
देवलोकगतेन वै । इहैव चैनं भोक्ष्यामि शुभाशुभफलोदयम् ॥३८॥
सुखमेव तु कर्त्तव्यं सकृत् कृत्वा सुखं मम । यावदन्तञ्च मे सौख्यं
जात्यां जात्यां भविष्यति ॥ ३९ ॥ भविष्यति च मे दुःखं कृतेनेहा-
प्यनन्तकम् । महद्दुःखं हि मानुष्यं निरये चापि मज्जनम् ॥४०॥
निरयाच्चापि मानुष्यं कालेनैष्याम्यहं पुनः । मनुष्यत्वाच्च देवत्वं
देवत्वात् पौरुषं पुनः ॥ ४१ ॥ मनुष्यत्वाच्च निरयं पर्य्यायेणोप-
गच्छति । य एवं वेत्ति नित्यं वै निरात्मात्मगुणैर्वृतः ॥ ४२ ॥
तेन देवमनुष्येषु निरये चोपपद्यते । ममत्वेनावृतो नित्यं तत्रैव
परिवर्त्तते ॥ ४३ ॥ सर्गकोटिसहस्राणि मरणान्तासु मूर्त्तिषु । य
एवं कुरुते कर्म्म शुभाशुभफलात्मकम् ॥ ४४ ॥ स एवं फलमाप्नोति
त्रिषु लोकेषु मूर्त्तिमान् । प्रकृतिः कुरुते कर्म्म शुभाशुभफला-
त्मकम् ॥ ४५ ॥ प्रकृतिश्च तदश्नाति त्रिषु लोकेषु कामगा । तिर्य्यग्-
योनिमनुष्यत्वे देवलोके तथैव च ॥ ४६ ॥ त्रीणि स्थानानि चैतानि
जानीयात् प्राकृतानिह । अलिङ्गात् प्रकृतिस्त्वाहुर्लिङ्गैरनुमिमी-
महे ॥ ४७ ॥ तथैव पौरुषं लिङ्गमनुमानाद्धि मन्यते । स लिङ्गा-
न्तरमासाद्य प्राकृतं लिङ्गमव्रणम् ॥ ४८ ॥ व्रणद्वाराण्यधिष्ठाय
कर्म्मण्यात्मनि मन्यते । श्रोत्रादीनि तु सर्वाणि पञ्च कर्म्मेन्द्रिया-
ण्यथ ॥ ४९ ॥ वागादीनि प्रवर्त्तन्ते गुणेष्विह गुणैः सह । अह-
मेतानि वै कुर्वन् ममैतानीन्द्रियाणि ह ॥ ५० ॥ निरिन्द्रियो हि
मन्येत व्रणवानस्मि निर्व्रणः । अलिङ्गो लिङ्गमात्मानमकालः
कालमात्मनः ॥ ५१ ॥ असत्त्वं सत्त्वमात्मानमतत्त्वं तत्त्वमात्मनः ।
अमृत्युर्मृत्युमात्मानमचरश्चरमात्मनः ॥ ५२ ॥ अक्षेत्रः क्षेत्रमात्मान-
मसर्गः सर्गमात्मनः । अतपास्तप आत्मानमगतिर्गतिमात्मनः ॥५३ ॥

अभवो भवमात्मानमभयो भवमात्मनः । अक्षरः क्षरमात्मानमबुद्धि-
स्त्वभिमन्यते ॥ ५४ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि वशिष्ठकरालजनक-
सम्वादे त्र्यधिकत्रिशतोऽध्यायः ॥ ३०३ ॥

---

वशिष्ठ उवाच । एवमप्रतिबुद्धत्वादबुद्धजनसेवनात् । सर्ग-
कोटिसहस्राणि पतनान्तानि गच्छति ॥ १ ॥ धाम्ना धामसह-
स्राणि मरणान्तानि गच्छति । तिर्य्यग्योनिमनुष्यत्वे देवलोके तथैव
च ॥ २ ॥ चन्द्रमा इव भूतानां पुनस्तत्र सहस्रशः । नीयते प्रति-
बुद्धत्वादेवमेष ह्यबुद्धिमान् ॥ ३ ॥ कला पञ्चदशी योनिस्तद्धाम
प्रतिबुध्यते । नित्यमेतद्धि जानीहि सोमं वै षोड़शीं कलाम् ॥ ४ ॥
कलायां जायतेऽजस्रं पुनः पुनरबुद्धिमान् । धाम तस्योपयुञ्जन्ति
भूय एवोपजायते ॥ ५ ॥ षोड़शी तु कला सूक्ष्मा स सोम उप-
धार्य्यताम् । न तूपयुज्यते देवैर्देवानुपयुनक्ति सा ॥ ६ ॥ एता-
मक्षपयित्वा हि जायते नृपसत्तम । सा ह्यस्य प्रकृतिर्दृष्टा तत्-
क्षतान्मोक्ष उच्यते ॥ ७ ॥ तदेव षोड़शकलं देहमव्यक्तसंज्ञकम् ।
ममायमिति मन्वानस्तत्रैव परिवर्त्तते ॥ ८ ॥ पञ्चविंशो महानात्मा
तस्यैवाप्रतिबोधनात् । विमलस्य विशुद्धस्य शुद्धाशुद्धनिषेवणात्॥९
अशुद्ध एव शुद्धात्मा तादृग्भवति पार्थिव । अबुद्धसेवनाच्चापि
बुद्धोऽप्यबुद्धतां व्रजेत् ॥ १० ॥ तथैवाप्रतिबुद्धोऽपि विज्ञेयो नृप-
सत्तम । प्रकृतेस्त्रिगुणायास्तु सेवनात्त्रिगुणो भवेत् ॥ ११ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि वशिष्ठकरालजनक-
सम्वादे चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४ ॥

---

जनक उवाच। अक्षरक्षरयोरेष द्वयोः सम्बन्ध इष्यते। स्त्रीपुंसोर्वापि भगवन् सम्बन्धस्तद्वदुच्यते ॥ १ ॥ ऋते तु पुरुषं नेह स्त्रीगर्भं धारयत्युत। ऋते स्त्रियं न पुरुषो रूपं निवर्त्तयेत्तथा ॥ २ ॥ अन्योऽन्यस्याभिसम्बन्धादन्योऽन्यगुणसंश्रयात्। रूपं निवर्त्तयेत्येतदेवं सर्व्वासु योनिषु ॥ ३ ॥ रत्यर्थमभिसम्बन्धादन्योऽन्यगुणसंश्रयात्। ऋतौ निवर्त्त्यते रूपं तद्वच्यामि निदर्शनम् ॥४॥ ये गुणाः पुरुषस्येह ये च मातृगुणास्तथा। अस्थि स्नायुश्च मज्जा च जानीमः पितृतो द्विज ॥ ५ ॥ त्वङ्मांसशोणितञ्चेति मातृजान्यपि शुश्रुम। एवमेतद्द्विजश्रेष्ठ वेदे शास्त्रे च पठ्यते ॥ ६ ॥ प्रमाणं यत् स्ववेदोक्तं शास्त्रोक्तं यच्च पठ्यते। वेदशास्त्रप्रमाणञ्च प्रमाणं तत् सनातनम् ॥ ७ ॥ अन्योऽन्यगुणसंरोधादन्योऽन्यगुणसंश्रयात्। एवमेवाभिसम्बद्धौ नित्यं प्रकृतिपुरुषौ ॥ ८ ॥ पश्यामि भगवंस्तस्मान्मोक्षधर्मो न विद्यते। अथ वानन्तरकृतं किञ्चिदेव निदर्शनम्। तन्ममाचक्ष्व तत्त्वेन प्रत्यक्षो ह्यसि सर्व्वदा ॥ ९ ॥ मोक्षकामा वयञ्चापि काङ्क्षामो यदनामयम्। अदेहमजरं नित्यमतीन्द्रियमनीश्वरम् ॥ १० ॥

वशिष्ठ उवाच। यदेतदुक्तं भवता वेदशास्त्रनिदर्शनम्। एवमेतद्यथा चैतन्निगृह्णाति तथा भवान् ॥ ११ ॥ धार्य्यते हि त्वया ग्रन्थ उभयोर्वेदशास्त्रयोः। न च ग्रन्थस्य तत्त्वज्ञो यथावत्त्वं नरेश्वर ॥ १२ ॥ यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः। न च ग्रन्थार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा ॥ १३ ॥ भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः। यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा ॥ १४ ॥ ग्रन्थस्यार्थस्य पृष्टः सन् तादृशो वक्तुमर्हति। यथा तत्त्वाभिगमनादर्थन्तस्य स विन्दति ॥ १५ ॥ न यः संसत्सु कथयेत् ग्रन्थार्थं स्थूलबुद्धिमान्। स कथं मन्दविज्ञानो ग्रन्थं वक्ष्यति निर्णयात् ॥ १६ ॥ निर्णयञ्चापि छिद्रात्मा मतं वक्ष्यति

तत्त्वतः। सोपहासात्मतामेति यस्माच्चैवात्मवानपि ॥१७॥ तस्मात्त्वं शृणु राजेन्द्र यथैतदनुदृश्यते। याथातथ्येन साङ्ख्येषु योगेषु च महात्मसु ॥ १८ ॥ यदेव योगाः पश्यन्ति साङ्ख्यैस्तदनुगम्यते। एकं साङ्ख्यञ्च योगञ्च यः पश्यति स बुद्धिमान् ॥ १९ ॥ त्वङ्मांसं रुधिरं मेदः पित्तं मज्जा च स्नायु च। एतदैन्द्रियकं तात यद्-भवानिदमाह माम् ॥ २० ॥ द्रव्याद्द्रव्यस्य निर्वृत्तिरिन्द्रिया-दिन्द्रियं तथा। देहाद्देहमवाप्नोति वीजाद्वीजं तथैव च॥ २१॥ निरिन्द्रियस्यावीजस्य निर्द्रव्यस्याप्यदेहिनः। कथं गुणा भवि-ष्यन्ति निर्गुणत्वान्महात्मनः॥ २२॥ गुणा गुणेषु जायन्ते तत्रैव निविशन्ति च। एवं गुणाः प्रकृतितो जायन्ते निविशन्ति च ॥२३॥ त्वङ्मांसं रुधिरं मेदः पित्तं मज्जास्थिस्नायुच। अष्टौ तान्यथ शुक्रेण जानीहि प्राकृतानि वै॥ २४ ॥ पुमांश्चैवापुमांश्चैव त्रैलिङ्ग्यं प्राकृतं स्मृतम्। न वापुमान् पुमांश्चैव स लिङ्गीत्यभिधीयते ॥२५॥ अलिङ्गान् प्रकृतिर्लिङ्गैरुपालभ्यति सात्मजैः। यथा पुष्पफलै-र्नित्यमृतवो मूर्त्तयस्तथा॥ २६ ॥ एवमप्यनुमानेन ह्यलिङ्गमुप-लभ्यते। पञ्चविंशति मे स्तात लिङ्गेषु नियतात्मकः ॥२७॥ अनादि-निधनोऽनन्तः सर्वदर्शी निरामयः। केवलन्त्वभिमानित्वाद्गुणेषु गुण उच्यते॥ २८॥ गुणा गुणवतः सन्ति निर्गुणस्य कुतो गुणाः। तस्मादेवं विजानन्ति ये जना गुणदर्शिनः॥ २९ ॥ यदा त्वेष गुणानेतान् प्राकृतानभिमन्यते। तदा स गुणहान्यै तं परमेवानु पश्यति॥ ३० ॥ यत्तद्बुद्धेः परं प्राहुः साङ्ख्ययोगाच्च सर्वशः। बुध्यमानं महाप्राज्ञमबुद्धपरिवर्ज्जनात् ॥ ३१ ॥ अप्रबुद्धमथाव्यक्त-मगुणं प्राहुरीश्वरम्। निर्गुणञ्चेश्वरं नित्यमधिष्ठातारमेव च॥३२॥ प्रकृतेश्च गुणानाञ्च पञ्चविंशतिकं बुधाः। साङ्ख्ययोगे च कुशला बुध्यन्ते परमैषिणः ॥ ३३ ॥ यदा प्रबुद्धा ह्यव्यक्तमवस्थाजन्म-भीरवः। बुध्यमानं प्रबुध्यन्ति गमयन्ति समं तदा॥ ३४ ॥ एत-

न्निदर्शनं सम्यगसम्यगनिदर्शनम् । बुद्धमानाप्रबुद्धाभ्यां पृथक् पृथगरिन्दम ॥३५॥ परस्परेणैतदुक्तं चराचरनिदर्शनम् । एकत्वमचरं प्राहुर्नानात्वं चरमुच्यते ॥ ३६ ॥ पञ्चविंशतिनिष्ठोऽयं यदा सम्यक् प्रवर्त्तते । एकत्वं दर्शनञ्चास्य नानात्वञ्चाप्यदर्शनम् ॥३७॥ तत्त्वनिस्तत्त्वयोरेतत् पृथगेव निदर्शनम् । पञ्चविंशतिसर्गन्तु तत्त्वमाहुर्मनीषिणः ॥ ३८ ॥ निस्तत्त्वं पञ्चविंशस्य परमाहुर्निदर्शनम्। सर्गस्य वर्गमाचारं तत्त्वं तत्त्वात् सनातनम् ॥ ३९ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वशिष्ठकरालजनक-
संवादे पञ्चधिकत्रिशतोऽध्यायः ॥ ३०५ ॥

---

जनक उवाच । नानात्वैकत्वमित्युक्तं त्वयैतदृषिसत्तम । पश्यास्येतद्धि सन्दिग्धमेतयोर्वै निदर्शनम् ॥ १ ॥ तथाबुद्धप्रबुद्धाभ्यां बुध्यमानस्य चानघ । स्थूलबुद्ध्या न पश्यामि तत्त्वमेतन्न संशयः॥२॥ अक्षरक्षतयोरुक्तं त्वया यदपि कारणम् । तदप्यस्थिरबुद्धित्वात् प्रनष्टमिव मेऽनघ ॥ ३ ॥ तदेतच्छ्रोतुमिच्छामि नानात्वैकत्वदर्शनम् । बुद्धञ्चाप्रतिबुद्धञ्च बुध्यमानञ्च तत्त्वतः ॥ ४ ॥ विद्याविद्ये च भगवन्नक्षरं क्षरमेव च । साङ्ख्यं योगञ्च कार्त्स्न्येन पृथक् चैवापृथक् च ह ॥ ५ ॥

वशिष्ठ उवाच । हन्त ते संप्रवक्ष्यामि यदेतदनुपृच्छसि । योगकृत्यं महाराज पृथगेव शृणुष्व मे ॥६॥ योगकृत्यन्तु योगानां ध्यानमेवं परं बलम् । तच्चापि द्विविधं ध्यानमाहुर्विद्याविदो जनाः ॥ ७ ॥ एकाग्रता च मनसः प्राणायामस्तथैव च । प्राणायामस्तु सगुणो निर्गुणो मनसस्तथा ॥ ८ ॥ मूत्रोत्सर्गपुरीषे च भोजने च नराधिप । त्रिकालं नाभियुञ्जीत शेषं युञ्जीत तत्परः ॥ ९ ॥ इन्द्रियाणीन्द्रियार्थेभ्यो निवर्त्त्य मनसा शुचिः । दशद्वादशभिर्वापि

चतुर्विंशात्परन्तप ॥१०॥ सञ्चोदनाभिर्मतिमानात्मानञ्चोदयेदथ ।
तिष्ठन्तमजरं तन्तु यत्तदुक्तं मनीषिभिः ॥ ११ ॥ तैश्चात्मा सततं
ज्ञेय इत्येवमनुशुश्रुम । अतं ह्यहीनमनसो नान्यथेति विनिश्चयः
॥ १२ ॥ विमुक्तः सर्वसङ्गेभ्यो लघ्वाहारो जितेन्द्रियः । पूर्वरात्रे-
ऽपररात्रे धारयीत मनोऽऽत्मनि ॥ १३ ॥ स्थिरीकृत्येन्द्रियग्रामं
मनसा मिथिलेश्वर । मनो बुद्ध्या स्थिरं कृत्वा पाषाण इव
निश्चलः ॥ १४ ॥ स्थाणुवच्चाप्यकम्पः स्याद्गिरिवच्चापि निश्चलः ।
बुधा विधिविधानज्ञास्तदा युक्तं प्रचक्षते ॥ १५ ॥ न शृणोति न
वा घ्राति न रस्यति न पश्यति । न च स्पर्शं विजानाति न सङ्कल्प-
यते मनः ॥ १६ ॥ न चाभिमन्यते किञ्चिन्न च बुध्यति काष्ठवत् ।
तदा प्रकृतिमापन्नं युक्तमाहुर्मनीषिणः ॥ १७ ॥ निर्वाते हि यथा
दीप्यन्दीपस्तद्वत् प्रकाशते । निर्लिङ्गोऽविचलश्चोर्द्ध्वं न तिर्य्यग्गति-
माप्नुयात् ॥ १८ ॥ तदा तमनुपश्येत यस्मिन् दृष्टे न कथ्यते ।
हृदयस्थोऽन्तरात्मेति ज्ञेयो ज्ञस्तात मद्विधैः ॥ १९ ॥ विधूम इव
सप्तार्च्चिरादित्य इव रश्मिमान् । विद्युतोऽग्निरिवाकाशे दृश्यतेऽऽत्मा
तथात्मनि ॥ २० ॥ ये पश्यन्ति महात्मानो धृतिमन्तो मनीषिणः ।
ब्राह्मणा ब्रह्मयोनिस्था ह्ययोनिममृतात्मकम् ॥ २१ ॥ तदेवाहु-
रणुभ्योऽणु तन्महद्भ्यो महत्तरम् । तत्तत्त्वं सर्वभूतेषु ध्रुवं तिष्ठन्न
दृश्यते ॥ २२ ॥ बुद्धिद्रवेण दृश्येत मनोदीपेन लोककृत् । महत-
स्तमसस्तात पारे तिष्ठन्न तामसः ॥ २३ ॥ स तमोनुद इत्युक्तः
सर्वज्ञैर्वेदपारगैः । विमलो वितमस्कश्च निर्लिङ्गो लिङ्गसंज्ञितः ॥२४
योग एष हि योगानां किमन्यद्योगलक्षणम् । एवं पश्यं प्रपश्यन्ति
आत्मानमजरं परम् ॥ २५ ॥ योगदर्शनमेतावदुक्तन्ते तत्त्वतो
मया । साङ्ख्यज्ञानं प्रवक्ष्यामि परिसङ्ख्यानदर्शनम् ॥ २६॥ अव्यक्त-
माहुः प्रकृतिं परां प्रकृतिवादिनः । तस्मान्महत् समुत्पन्नं द्वितीयं
राजसत्तम ॥ २७ ॥ अहङ्कारस्तु महतस्तृतीयमिति नः श्रुतम् ।

पञ्चभूतान्याहङ्कारादाहुः साङ्ख्यात्मदर्शिनः ॥२८॥ एताः प्रकृतय-
श्चाष्टौ विकारश्चापि षोड़श। पञ्च चैव विशेषा वै तथा पञ्चेन्द्रि-
याणि च ॥ २९ ॥ एतावदेव तत्त्वानां साङ्ख्यमाहुर्मनीषिणः।
साङ्ख्ये विधिविधानज्ञा नित्यं साङ्ख्यपथे रताः ॥ ३० ॥ यस्मा-
द्यदभिजायेत तत्तत्रैव प्रलीयते। लीयन्ते प्रतिलोमानि सृज्यन्ते
चान्तरात्मना ॥ ३१ ॥ अनुलोमेन जायन्ते लीयन्ते प्रतिलोमतः।
गुणा गुणेषु सततं सागरस्योर्मयो यथा ॥३२॥ सर्गप्रलय एतावान्
प्रकृतेर्नृपसत्तम। एकत्वं प्रलये चास्य बहुत्वञ्च यथासृजत् ॥ ३३ ॥
एवमेव च राजेन्द्र विज्ञेयं ज्ञानकोविदैः। अधिष्ठातारमव्यक्त-
मस्याप्येतन्निदर्शनम् ॥ ३४ ॥ एकत्वञ्च बहुत्वञ्च प्रकृतेरथतत्त्वतः।
एकत्वं प्रलये चास्य बहुत्वञ्च प्रवर्त्तनात् ॥३५॥ बहुधात्मा प्रकुर्वीत
प्रकृतिं प्रसवात्मिकाम्। तच्च क्षेत्रं महानात्मा पञ्चविंशोऽधि-
तिष्ठति ॥ ३६ ॥ अधिष्ठातेति राजेन्द्र प्रोच्यते यतिसत्तमैः। अधि-
ष्ठानादधिष्ठाता क्षेत्राणामिति नः श्रुतम् ॥ ३७ ॥ क्षेत्रं जानाति
चाव्यक्तं क्षेत्रज्ञ इति चोच्यते। अव्यक्तिके प्रविशति पुरुषश्चेति
कथ्यते ॥ ३८ ॥ अन्यदेव च क्षेत्रं स्यादन्यः क्षेत्रज्ञ उच्यते। क्षेत्र-
मव्यक्तमित्युक्तं ज्ञातारं पञ्चविंशकम् ॥ ३९ ॥ अन्यदेव च ज्ञानं
स्यादन्यज् ज्ञेयं तदुच्यते। ज्ञानमव्यक्तमित्युक्तं ज्ञेयो वै पञ्चविंशक
॥ ४० ॥ अव्यक्तं क्षेत्रमित्युक्तं तथा सत्त्वं तथेश्वरः। अनीश्वर-
मतत्त्वञ्च तत्त्वं तत् पञ्चविंशकम् ॥ ४१ ॥ साङ्ख्यदर्शनमेतावत् परि-
सङ्ख्यानिदर्शनम्। साङ्ख्याः प्रकुर्वते चैव प्रकृतिञ्च प्रचक्षते ॥४२॥
तत्त्वानि च चतुर्विंशत् परिसङ्ख्याय तत्त्वतः। साङ्ख्याः सह
प्रकृत्या तु निस्तत्त्वः पञ्चविंशकः ॥ ४३ ॥ पञ्चविंशोऽप्रकृत्यात्मा
बुध्यमान इति स्मृतः। यदा तु बुध्यतेऽत्मानं तदा भवति केवलः
॥ ४४ ॥ सम्यगदर्शनमेतावद्भाषितं तव तत्त्वतः। एवमेतद्विजा-
नन्तः साम्यतां प्रतियान्त्युत ॥ ४५ ॥ सम्यङ्निदर्शनं नाम प्रत्यक्ष

प्रकृतेस्तथा। गुणतत्त्वान्यथैतानि निर्गुणेभ्यस्तथा भवेत्॥ ४६॥ न त्वेवं वर्त्तमानानामावृत्तिर्विद्यते पुनः। विद्यतेऽक्षरभावत्वादपरं परमव्ययम्॥ ४७॥ पश्येरन्नैकमतयो न सम्यक् तेषु दर्शनम्। तेऽव्यक्तं प्रतिपद्यन्ते पुनः पुनररिन्दम॥ ४८॥ सर्वमेतद्विजानन्तो न सर्वस्य प्रबोधनात्। व्यक्तीभूवाश्च विष्यन्ति व्यक्तस्य वशवर्त्तिनः॥ ४९॥ सर्वमव्यक्तमित्युक्तमसर्वः पञ्चविंशकः। य एनमभिजानन्ति न भयं तेषु वर्त्तते॥ ५०॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि वशिष्ठकरालजनकसम्वादे षड्धिकद्विशतोऽध्यायः॥ २०६॥

---

वशिष्ठ उवाच। साङ्ख्यदर्शनमेतावदुक्तं ते नृपसत्तम। विद्याविद्ये त्विदानीं मे तन्निबोधानुपूर्वशः॥ १॥ अविद्यामाहुरव्यक्तं सर्गप्रलयधर्मि वै। सर्गप्रलयनिर्मुक्तां विद्यां वै पञ्चविंशकः॥२॥ परस्परस्य विद्यास्वै तन्निबोधानुपूर्वशः। यथोक्तमृषिभिस्तात साङ्ख्यस्याभिनिदर्शनम्॥ ३॥ कर्मेन्द्रियाणां सर्वेषां विद्याबुद्धीन्द्रियं स्मृतम्। बुद्धीन्द्रियाणाञ्च तथा विशेषा इति नः श्रुतम्॥४॥ विशेषाणां मनस्तेषां विद्यामाहुर्मनीषिणः। मनसः पञ्चभूतानि विद्या इत्यभिचक्षते॥ ५॥ अहङ्कारस्तु भूतानां पञ्चानां नात्र संशयः। अहङ्कारस्य च तथा बुद्धिर्विद्या नरेश्वर॥ ६॥ विद्या प्रकृतिरव्यक्तं तत्त्वानां परमेश्वरी। विद्या ज्ञेया नरश्रेष्ठ विधिश्च परमः स्मृतः॥ ७॥ अव्यक्तस्य परं प्राहुर्विद्या वै पञ्चविंशकम्। सर्वस्य सर्वमित्युक्तं ज्ञेयं ज्ञानस्य पार्थिव॥ ८॥ ज्ञानमव्यक्तमित्युक्तं ज्ञेयो वै पञ्चविंशकः। तथैव ज्ञानमव्यक्तं विज्ञाता पञ्चविंशकः। विद्याविद्यार्थतत्त्वेन मयोक्ता ते विशेषतः॥९॥ अक्षरञ्च क्षरञ्चैव यदुक्तं तन्निबोध मे। उभावेवाक्षरावुक्तावुभावेतावन-

क्षरौ ॥ १०॥ कारणन्तु प्रवक्ष्यामि याथातथ्यन्तु ज्ञानतः । अनादिनिधनावेतौ उभावेवेश्वरौ मतौ ॥ ११ ॥ तत्त्वसंज्ञावुभावेतौ प्रोच्यते ज्ञानचिन्तकैः। सर्गप्रलयधर्मत्वादव्यक्तं प्राहुरक्षरम् ॥१२॥ तदेतद्गुणसर्गाय विकुर्वाणं पुनः पुनः । गुणानां महदादीनामुत्पत्तिश्च परस्परम् ॥ १३ ॥ अधिष्ठानात् क्षेत्रमाहुरेतत् पञ्चविंशकम् । यदा तु गुणजालन्तदव्यक्तात्मनि सङ्क्षिपेत् ॥ १४ ॥ तदा सह गुणैस्तैस्तु पञ्चविंशो विलीयते । गुणा गुणेषु लीयन्ते तदैका प्रकृतिर्भवेत् ॥ १५ ॥ क्षेत्रज्ञोऽपि यदा तात तत्क्षेत्रे संप्रलीयते । तदाक्षरत्वं प्रकृतिर्गच्छते गुणसंज्ञिता ॥ १६॥ निर्गुणत्वञ्च वै देह गुणेष्वप्रतिवर्त्तनात् । एवमेव च क्षेत्रज्ञक्षेत्रज्ञानपरिक्षये ॥ १७॥ प्रकृत्या निर्गुणस्त्वेष इत्येवमनुशुश्रुम । क्षरो भवत्येष यदा तदा गुणवतीमथ ॥ १८ ॥ प्रकृतिस्त्वभिजानाति निर्गुणत्वं तथात्मनः । तदा विशुद्धो भवति प्रकृतेः परिवर्ज्जनात् ॥ १९ ॥ अन्योऽहमन्येयमिति यदा वुध्यति वुद्धिमान् । तदैष तत्त्वतामेति न चापि मिश्रतां व्रजेत् ॥ २० ॥ प्रकृत्या चैव राजेन्द्र मिश्रो ह्यन्यश्च दृश्यते । यदा तु गुणजालन्तत् प्राकृतं वै जुगुप्सते ॥ २१ ॥ पश्यते च परं पश्यं तदा पश्यन्न सन्त्यजेत् । किं मया कृतमेतावद्योऽहं कालमिमं जनम् ॥ २२ ॥ मत्स्यो जालं ह्यविज्ञानादनुवर्त्तितवानिह । अहमेव हि संमोहादन्यमन्यज्जनाज्जनम् ॥ २३॥ मत्स्यो यथोदकज्ञानादनुवर्त्तितवानिह । मत्स्योऽन्यत्वं यथाज्ञानादुदकान्नाभिमन्यते ॥ २४ ॥ आत्मानं तद्वदज्ञानादन्यच्चैव वेद्म्यहम् । ममास्तु धिगवुद्धस्य योऽहं मग्नमिमं पुनः ॥ २५ ॥ अनुवर्त्तितवान्मोहादन्यमन्यज्जनाज्जनम् । अयमत्र भवेद्बन्धुरनेन सह मे क्षमम् ॥ २६ ॥ साम्यमेकत्वमायातो यादृशस्तादृशस्त्वहम् । तुल्यतामिह पश्यामि सदृशोऽहमनेन वै ॥२७॥ अयं हि विमलो व्यक्तमहमीदृशकस्तथा । योऽहमज्ञानसंमोहा-

दन्यया संप्रवृत्तवान् ॥ २८ ॥ ससङ्गयाहं निःसङ्गः स्थितः काल-मिमं त्वहम्। अनयाहं वशीभूतः कालमेतन्न बुद्धवान् ॥ २९ ॥ उच्चमध्यमनीचानां तामहं कथमावसे। समानयानया चेह सह-वासमहं कथम् ॥ ३० ॥ गच्छाम्यबुद्धभावत्वादेषेदानीं स्थिरो भवे। सहवासं न यास्यामि कालमेतद्धि वञ्चनात् ॥ ३१ ॥ वञ्चि-तोऽस्म्यनया यद्धि निर्विकारो विकारया। न चायमपराध्योऽस्या ह्यपराधो ह्ययं मम ॥ ३२ ॥ योऽहमत्राभवं सक्तः पराङ्मुख-मुपस्थितः। ततोऽस्मि बहुरूपासु स्थितो मूर्त्तिष्वमूर्त्तिमान् ॥३३॥ अमूर्त्तश्चापि मूर्त्तात्मा ममत्वेन प्रधर्षितः। प्राकृतेन ममत्वेन तासु तास्विह योनिषु ॥ ३४ ॥ निर्ममस्य ममत्वेन किं कृतं तासु तासु च। योनिषु वर्त्तमानेन नष्टसंज्ञेन चेतसा ॥ ३५ ॥ न ममात्रा-नयाकार्य्यमहङ्कारकृतात्मया। आत्मानं बहुधा कृत्वा येयं भूयो युनक्ति माम् ॥ ३६ ॥ इदानीमेष बुद्धोऽस्मि निर्ममो निरहङ्कृतः। ममत्वमनया नित्यमहङ्कारकृतात्मकम्। अपत्योहमिमां हित्वा संश्रयिष्ये निरामयम् ॥ ३७ ॥ अनेन साम्यं यास्यामि नानयाह-मचेतया। क्षेमं मम सहानेन नैकत्वमनया सह ॥ ३८ ॥ एवं परमसम्बोधात् पञ्चविंशोऽनुबुद्धवान्। अक्षरत्वं नियच्छेत त्यक्त्वा क्षरमनामयम् ॥ ॥३९॥ अव्यक्तं व्यक्तधर्माणं सगुणं निर्गुणं तथा। निर्गुणं प्रथमं दृष्ट्वा तादृग्भवति मैथिल ॥ ४० ॥ अक्षरक्षरयो-रेतदुक्तं तव निदर्शनम्। मयेह ज्ञानसम्पन्नं तथाश्रुतिनिदर्शनम् ॥ ४१ ॥ निःसन्दिग्धञ्च सूक्ष्मञ्च विबुद्धं विमलं यथा। प्रवक्ष्यामि तु ते भूयस्तन्निबोध यथाश्रुतम् ॥ ४२ ॥ साङ्ख्ययोगौ मया प्रोक्तौ शास्त्रद्वयनिदर्शनात्। यदेव शास्त्रं साङ्ख्योक्तं योगदर्शनमेव तत् ॥ ४३ ॥ प्रबोधनकरं ज्ञानं साङ्ख्यानामवनीपते। विस्पष्टं प्रोच्यते तत्र शिष्याणां हितकाम्यया ॥ ४४ ॥ बृहच्चैवमिदं शास्त्रमित्याहु-र्विदुषो जनाः। अस्मिंश्च शास्त्रे योगानां पुनर्वेदे पुरःसरः ॥४५॥

पञ्चविंशात् परं तत्त्वं पठ्यते न नराधिप। साङ्ख्यानान्तु परं तत्त्वं यथावदनुवर्णितम् ॥ ४६ ॥ बुद्धमप्रतिबुद्धत्वाद्बुध्यमानञ्च तत्त्वतः। बुध्यमानञ्च बुद्धञ्च प्राहुर्योगनिदर्शनम् ॥ ४७ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि अमृतप्राश्निके
एकविंशत्यधिकद्विशततोऽध्यायः ॥ २२१ ॥

---

वशिष्ठ उवाच। अथ बुद्धमथाबुद्धमिमं गुणविधिं शृणु। आत्मानं बहुधा कृत्वा तान्येव प्रतिचक्षते ॥१॥ एतदेवं विकुर्वाणो बुध्यमानो न बुध्यते। गुणान् धारयते ह्येष सृजत्याक्षिपतं तदा ॥ २ ॥ अजस्रं त्विह क्रीड़ार्थं विकरोति जनाधिप। अव्यक्त-बोधनाच्चैव बुध्यमानं वदन्त्यपि ॥ ३ ॥ न त्वेव बुध्यते व्यक्तं सगुणं तात निर्गुणम्। कदाचित्त्वेव खल्वेतदाहुरप्रतिबुद्धकम् ॥ ४ ॥ बुध्यते यदि वा व्यक्तमेतद्वै पञ्चविंशकम्। बुध्यमानो भवत्येव सङ्गात्मक इति श्रुतिः। अनेनाप्रतिबुद्धेति वदन्त्यव्यक्तमच्युतम्॥५॥ अव्यक्तबोधनच्चापि बुध्यमानं वदन्त्युत। पञ्चविंशं महात्मानं न चासावपि बुध्यते ॥ ६ ॥ षड्‌विंशं विमलं बुद्धमप्रमेयं सनातनम्। सततं पञ्चविंशञ्च चतुर्विंशञ्च बुध्यते ॥ ७ ॥ दृश्यादृश्ये ह्यनुगतं स्वभावेन महाद्युते। अव्यक्तमत्र तद्ब्रह्म बुध्यते तात केवलम्॥८॥ केवलं पञ्चविंश्च चतुर्विंशं न पश्यति। बुध्यमानो यदात्मान-मन्योऽहमिति मन्यते ॥९॥ तदा प्रकृतिमानेष भवत्यव्यक्तलोचनः। बुध्यते च परां बुद्धिं विशुद्धाममलां यदा ॥ १० ॥ षड्‌विंशो राजशार्दूल तथा बुद्धत्वमाव्रजेत्। ततस्त्यजति सोऽव्यक्तं सर्ग-प्रलयधर्मि वै ॥ ११ ॥ निर्गुणः प्रकृतिं वेद गुणयुक्तामचेतनाम्। ततः केवलधर्मासौ भवत्यव्यक्तदर्शनात् ॥ १२ ॥ केवलेन समागम्य विमुक्तोऽात्मानमाप्नुयात्। एतत्तु तत्त्वमित्याहुर्निस्तत्त्वमजरा-

मरम् ॥ १३ ॥ तत्त्वसंश्रयणादेतत्तत्त्ववन्न च मानद। पञ्चविंशति-
तत्त्वानि प्रवदन्ति मनीषिणः ॥ १४ ॥ न चैष तत्त्ववांस्तात निस्तत्त्व-
स्त्वेष बुद्धिमान्। एष मुञ्चति तत्त्वं हि क्षिप्रं बुद्धस्य लक्षणम् ॥१५॥
षड्विंशोऽहमिति प्राज्ञो गृह्यमाणोऽजरामरः। केवलेन बले-
नैव समतां यात्यसंशयम् ॥ १६ ॥ षड्विंशेन प्रबुद्धेन बुध्यमानो-
ऽप्यबुद्धिमान्। एतन्नानात्वमित्युक्तं साङ्ख्यश्रुतिनिदर्शनात् ॥१७॥
चेतनेन समेतस्य पञ्चविंशतिकस्य ह। एकत्वं वै भवत्यस्य यदा
बुद्ध्यानुबुध्यते ॥ १८ ॥ बुध्यमानोऽप्रबुद्धेन समतां याति मैथिल।
सङ्गधर्मा भवत्येष निःसङ्गात्मा नराधिप ॥ १९ ॥ निःसङ्गात्मान
मासाद्य षड्विंशकमजं विभुम्। विभुस्त्यजति चाव्यक्तं यदा
त्वेतद्विबुध्यते ॥ २० ॥ चतुर्विंशमसारञ्च षड्विंशस्य प्रबोधनात्।
एष ह्यप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ॥ २१ ॥ प्रोक्तो बुध्यस्व तत्त्वेन
यथाश्रुतिनिदर्शनात्। नानात्वैकत्वमेतावत् द्रष्टव्यं शास्त्रदर्शनात्
॥ २२ ॥ मशकोडुम्बरे यद्वदन्यत्वं तद्वदेतयोः। मत्स्योदके यथा
तद्वदन्यत्वमुपलभ्यते ॥ २३ ॥ एवमेवावगन्तव्यं नानात्वैकत्वमेतयोः।
एतद्धि मोक्ष इत्युक्तमव्यक्तज्ञानसंहितम् ॥ २४ ॥ पञ्चविंशतिक-
स्यास्य योऽयं देहेषु वर्त्तते। एष मोक्षयितव्येति प्राहुरव्यक्तगोच-
रात् ॥ २५ ॥ सोऽयमेवं विमुच्येत नान्यथेति विनिश्चयः। परश्च
परधर्मा च भवत्येष समेत्य वै ॥ २६ ॥ विशुद्धधर्मा शुद्धेन बुद्धेन
च स बुद्धिमान्। विमुक्तधर्मा मुक्तेन समेत्य पुरुषर्षभ ॥ २७ ॥
वियोगधर्मिणा चैव विमुक्तात्मा भवत्यथ। विमोक्षिणा विमो-
क्षश्च समेत्येह तथा भवेत् ॥ २८ ॥ शुचिकर्मा शुचिश्चैव भवत्य-
मितदीप्तिमान्। विमलात्मा च भवति समेत्य विमलात्मना ॥२९॥
केवलात्मा तथा चैव केवलेन समेत्य वै। स्वतन्त्रश्च स्वतन्त्रेण
स्वतन्त्रत्वमवाप्नुते ॥ ३० ॥ एतावदेतत् कथितं मया ते तथ्यं महा-
राज यथार्थतत्त्वम्। अमत्सरत्वं परिगृह्य चार्थं सनातनं ब्रह्म

विशुद्धमाद्यम् ॥ ३१ ॥ अवेदनिष्ठस्य जनस्य राजन् प्रदेयमेतत् परमं त्वया भवेत् । विधित्समानाय विबोधकारणं प्रबोधहेतोः प्रणतस्य शासनम् ॥ ३२ ॥ न देयमेतच्च तथानृतात्मने शठाय क्लीवाय न जिह्मबुद्धये । न पण्डितज्ञानपरोपतापिने देयन्तु देयञ्च निबोध यादृशे ॥ ३३ ॥ श्रद्धान्विताया गुणान्विताय परापवादाद्विरताय नित्यम् । विशुद्धयोगाय बुधाय नित्यं क्रियावते च क्षमिणे हिताय ॥ ३४ ॥ विविक्तशीलाय विधिप्रियाय विवादहीनाय बहुश्रुताय । विजानते चैव न चाहितक्षमे दमे च शक्ताय शमे च देयम् ॥ ३५ ॥ एतैर्गुणैर्हीनतमे न देयमेतत् परं ब्रह्म विशुद्धमाहुः । न श्रेयसा योक्ष्यति तादृशे कृतं धर्मप्रवक्तारमपात्रदानात् ॥ ३६ ॥ पृथ्वीमिमां यद्यपि रत्नपूर्णां दद्यान्न देयं त्विदमव्रताय । जितेन्द्रियायैतदसंशयन्ते भवेत् प्रदेयं परमं नरेन्द्र ॥ ३७ ॥ कराल मा ते भयमस्तु किञ्चिदेतत् श्रुतं ब्रह्म परं त्वयाद्य । यथावदुक्तं परमं पवित्रं विशोकमत्यन्तमनादिमध्यम् ॥ ३८ ॥ अगाधजन्मामरणञ्च राजन् निरामयं वीतभयं शिवञ्च । समीक्ष्य मोहं त्यज वाद्य सर्वं ज्ञानस्य तत्त्वार्थमिदं विदित्वा ॥३९॥ अवाप्तमेतद्धि मया सनातनात् हिरण्यगर्भाद्वदतो नराधिप । प्रसाद्य यत्नेन तमुग्रचेतसं सनातनं ब्रह्म तथाद्य वै तदा ॥ ४० ॥ पृष्टस्त्वया चास्मि यथा नरेन्द्र यथा मयेदं त्वयि चोक्तमद्य । तथावाप्तं ब्रह्मणो मे नरेन्द्र महाज्ञानं मोक्षविदां परायणम् ॥ ४१ ॥

भीष्म उवाच । एतदुक्तं परं ब्रह्म यस्मान्नावर्त्तते पुनः । पञ्चविंशो महाराज परमर्षिनिदर्शनात् ॥ ४२ ॥ पुनरावृत्तिमाप्नोति परं ज्ञानमवाप्य च । नावबुध्यति तत्त्वेन बुध्यमानोऽजरामरम्॥४३॥ एतन्निःश्रेयसकरं ज्ञानं ते परमं मया । कथितन्तत्त्वतस्तात श्रुत्वा देवर्षितो नृप ॥ ४४ ॥ हिरण्यगर्भादृषिणा वशिष्ठेन महात्मना । वशिष्ठादृषिशार्दूलान्नारदोऽवाप्तवानिदम् ॥ ३५ ॥ नारदाद्विदितं

मच्चमेतद्ब्रह्म सनातनम् । मा शुचः कौरवेन्द्र त्वं श्रुत्वैतत् परमं पदं
॥ ४६ ॥ येन चराचरे वित्ते भयं तस्य न विद्यते । विद्यते तु भयं
तस्य यो नैतद्वेत्ति पार्थिव ॥४७॥ अविज्ञानाच्च मूढ़ात्मा पुनः पुन-
रुपाद्रवत् । प्रेत्य जातिसहस्राणि मरणान्तान्युपाश्नुते ॥४८॥ देव-
लोकं तथा तिर्य्यङ्मनुष्यनपि चाश्नुते । यदि शुध्यति कालेन तस्मा-
दज्ञानसागरात्॥४९॥ अज्ञानसागरो घोरो ह्यव्यक्तोऽगाध उच्यते ।
अहन्यहनि मज्जन्ति यत्र भूतानि भारत॥५०॥यस्मादगाधादव्यक्ता-
दुत्तीर्णस्त्वं सनातनात् । तस्मात्त्वं विरजाश्चैव वितमस्कश्च पार्थिव ५१॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि वशिष्ठकरालजनक-
सम्वादे अष्टाधिकत्रिशततोऽध्यायः ॥ ३०८ ॥

---

भीष्म उवाच । मृगयां विचरन् कश्चिद्विजने जनकात्मजः ।
वने ददर्श विप्रेन्द्रमृषिं वंशधरं भृगोः ॥ १ ॥ उपासीनमुपासीनः
प्रणम्य शिरसा मुनिम् । पश्चादनुमतस्तेन पप्रच्छ वसुमानिदम् ॥२॥
भगवन् किमिदं श्रेयः प्रेत्य चापीह वा भवेत् । पुरुषस्याध्रुवे देहे
कामस्य वशवर्त्तिनः ॥ ३॥ सत्कृत्य परिपृष्टः स सुमहात्मा महा-
तपाः । निजगाद ततस्तस्मै श्रेयस्करमिदं वचः ॥ ४ ॥

ऋषिरुवाच । मनसोऽप्रतिकूलानि प्रेत्य चेह च वाञ्छसि ।
भूतानां प्रतिकूलेभ्यो निवर्त्तस्व यतेन्द्रियः ॥५ ॥ धर्म्मः सतां हितः
पुंसां धर्म्मश्चैवाश्रयः सताम् । धर्माल्लोकास्त्रयस्तात प्रवृत्ताः सचरा-
चराः ॥ ६ ॥ स्वादुकामुककामानां वैतृष्णं किं न गच्छसि । मधु
पश्यसि दुर्बुद्धे प्रपातं नानुपश्यसि ॥ ७ ॥ यथा ज्ञाने परिचयः
कर्त्तव्यस्तत् फलार्थिना । तथा धर्मे परिचयः कर्त्तव्यस्तत् फला-
र्थिना ॥ ८ ॥ असता धर्म्मकामेन विशुद्धं कर्म दुष्करम् । सता तु
धर्मकामेन सुकरं कर्म्म दुष्करम् ॥ ९ ॥ वने ग्राम्यसुखाचारो यथा

ग्राम्यस्तथैव सः। ग्रामे वनसुखाचारो यथा वनचरस्तथा ॥ १० ॥
मनोवाक्कायिके धर्मे कुरु श्रद्धां समाहितः। निवृत्तौ वा प्रवृत्तौ
वा संप्रधार्य्य गुणागुणान् ॥ ११ ॥ नित्यञ्च बहु दातव्यं साधुभ्य-
श्चानसूयता। प्रार्थितं व्रतशौचाभ्यां सत्कृतं देशकालयोः ॥ १२ ॥
शुभेन विधिना लब्धमर्हाय प्रतिपादयेत्। क्रोधमुत्सृज्य दद्याच्च
नानुतप्येन्न कीर्त्तयेत् ॥ १३ ॥ अनृशंसः शुचिर्दान्तः सत्यवागार्ज्जवे
स्थितः। योनिकर्मविशुद्धश्च पात्रं स्याद्वेदविद्द्विजः ॥ १४ ॥ सत्-
कृता चैकपत्नी च जात्या योनिरिहेष्यते। ऋग्यजुःसामगो विद्वान्
षट्कर्मा पात्रमुच्यते ॥ १५ ॥ स एव धर्मः सोऽधर्मस्तं तं प्रति नरं
भवेत्। पात्रकर्मविशेषेण देशकालाववेक्ष्य च ॥ १६ ॥ लीलयाल्पं
यथा गात्रात् प्रमृज्यात्तु रजः पुमान्। बहुयत्नेन च महत् पाप-
निर्हरणन्तथा ॥१७॥ विरक्तस्य यथा सम्यग्घृतं भवति भेषजम् ॥
तथा निर्हृतदोषस्य प्रेत्य धर्मः सुखावहः ॥ १८ ॥ मानसं सर्व-
भूतेषु वर्त्तते वै शुभाशुभम्। अशुभेभ्यः समाक्षिप्य शुभेष्वेवावतार-
येत् ॥ १९ ॥ सर्वं सर्वेण सर्वत्र क्रियमाणञ्च पूजयेत्। स्वधर्मे यत्र
रागस्ते कामं धर्मो विधीयताम् ॥ २० ॥ अधृतात्मन् धृतौ तिष्ठ
दुर्बुद्धे बुद्धिमान् भव। अप्रशान्तः प्रशाम्य त्वमप्राज्ञः प्राज्ञवच्चर
॥ २१ ॥ तेजसा शक्यते प्राप्तुमुपायः सहचारिणा। इह च प्रेत्य
च श्रेयस्तस्य मूलं धृतिः परा ॥ २२ ॥ राजर्षिरधृतिः स्वर्गात्
पतितो हि महाभिषः। ययातिः क्षीणपुण्योऽपि धृत्या लोका-
नवाप्तवान् ॥ २३ ॥ तपस्विनां धर्मवतां विदुषाञ्चोपसेवनात्।
प्राप्स्यसे विपुलां बुद्धिं तथा श्रेयोभिपत्स्यसे ॥ २४ ॥

भीष्म उवाच। स तु स्वभावसम्पन्नस्तत् श्रुत्वा मुनिभाषितम्।
विनिवर्त्त्य मनः कामाद्धर्मे बुद्धिञ्चकार ह ॥ २५ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि जनकानुशासने
नवाधिकत्रिशततोऽध्यायः ॥ ३०९ ॥

युधिष्ठिर उवाच। धर्माधर्मविमुक्तं यत् विमुक्तं सर्वसंश्रयात्। जन्ममृत्युविमुक्तञ्च विमुक्तं पुण्यपापयोः॥ १॥ यच्छिवं नित्यमभयं नित्यमक्षरमव्ययम्। शुचि नित्यमनायासं तद्भवान् वक्तुमर्हति॥२॥

भीष्म उवाच। अत्र ते वर्त्तयिष्यामि इतिहासं पुरातनम्। याज्ञवल्क्यस्य सम्वादं जनकस्य च भारत॥ ३॥ याज्ञवल्क्य-मृषिश्रेष्ठं दैवरातिर्महायशाः। पप्रच्छ जनको राजा प्रश्नं प्रश्न-विदाम्वरः॥ ४॥

जनक उवाच। कतीन्द्रियाणि विप्रर्षे कति प्रकृतयः स्मृताः। किमव्यक्तं परं ब्रह्म तस्माच्च परतस्तु किम्॥ ५॥ प्रभवञ्चाप्ययञ्चैव कालसङ्ख्यां तथैव च। वक्तुमर्हसि विप्रेन्द्र त्वदनुग्रहकाङ्क्षिणः॥६॥ अज्ञानात् परिपृच्छामि त्वं हि ज्ञानमयो निधिः। तदहं श्रोतु-मिच्छामि सर्वमेतदसंशयम्॥ ७॥

याज्ञवल्क्य उवाच। श्रूयतामवनीपाल यदेतदनुपृच्छसि। योगानां परमं ज्ञानं साङ्ख्यानाञ्च विशेषतः॥ ८॥ न तवाविदितं किञ्चिन्मान्तु जिज्ञासते भवान्। पृष्टेन चापि वक्तव्यमेष धर्मः सनातनः॥ ९॥ अष्टौ प्रकृतयः प्रोक्ता विकाराश्चापि षोड़श। अथ सप्त तु व्यक्तानि प्राहुरध्यात्मचिन्तकाः॥ १०॥ अव्यक्तञ्च महांश्च तथाहङ्कारमेव च। पृथिवीवायुराकाशमापो ज्योतिश्च पञ्चमम्॥ ११॥ एताः प्रकृतयस्त्वष्टौ विकारानपि मे शृणु। श्रोत्रं त्वक् चैव चक्षुश्च जिह्वा घ्राणञ्च पञ्चमम्॥ १२॥ शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च। वाक् च हस्तौ च पादौ च पायुर्मेढ्रन्तथैव च॥ १३॥ एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु। बुद्धीन्द्रियाण्यथैतानि सविशेषाणि मैथिल॥ १४॥ मनः षोड़शकं प्राहुरध्यात्मगतिचिन्तकाः। त्वञ्चैवान्ये च विद्वांसस्तत्त्वबुद्धिविशा-रदाः॥ १५॥ अव्यक्ताच्च महानात्मा समुत्पद्यति पार्थिव। प्रथमं सर्गमित्येतदाहुः प्राधानिकं बुधाः॥ १६॥ महतश्चाप्यहङ्कार

उत्पन्नो हि नराधिप। द्वितीयं सर्गमित्याहुरेतद्बुद्ध्यात्मकं स्मृतम्
॥ १७ ॥ अहङ्काराच्च सम्भूतं मनो भूतगुणात्मकम्। तृतीयः सर्ग
इत्येष आहङ्कारिक उच्यते ॥ १८॥ मनसस्तु समुद्भूता महाभूता
नराधिपः। चतुर्थं सर्गमित्येतन्मानसं विद्धि मे मतम् ॥१९॥ शब्दः
स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च। पञ्चमं सर्गमित्याहुर्भौतिकं
भूतचिन्तकाः ॥ २० ॥ श्रोत्रं त्वक् चैव चक्षुश्च जिह्वा घ्राणञ्च
पञ्चमम्। सर्गन्तु षष्ठमित्याहुर्बहुचिन्तात्मकं स्मृतम् ॥ २१ ॥ अधः
श्रोत्रेन्द्रियग्राममुत्पद्यति नराधिप। सप्तमं सर्गमित्याहुरेतदैन्द्रि-
यकं स्मृतम् ॥ २२ ॥ ऊर्द्ध्वं स्रोतस्तथा तिर्य्यगुत्पद्यति नराधिप।
अष्टमं सर्गमित्याहुरेतदार्ज्जवकं स्मृतम् ॥२३॥ तिर्य्यक् स्रोतस्त्वधः
स्रोत उत्पद्यति नराधिप। नवमं सर्गमित्याहुरेतदार्ज्जवकं स्मृतम्
॥ २४ ॥ एतानि नव सर्गाणि तत्त्वानि च नराधिप। चतुर्विंशति-
रुक्तानि यथाश्रुतिनिदर्शनात् ॥ २५ ॥ अत ऊर्द्ध्वं महाराज गुण-
स्यैतस्य तत्त्वतः। महात्मभिरनुप्रोक्तां कालसङ्ख्यां निबोध मे ॥२६॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि याज्ञवल्क्यजनक-
सम्वादे दशाधिकत्रिशततमोऽध्यायः ॥ ३१० ॥

---

याज्ञवल्क्य उवाच। अव्यक्तस्य नरश्रेष्ठ कालसङ्ख्यां निबोध
मे। पञ्चकल्पसहस्राणि द्विगुणान्यहरुच्यते ॥ १ ॥ रात्रिरेता-
वती चास्य प्रतिबुद्धो नराधिप। सृजत्योषधिमेवाग्रे जीवनं सर्व-
देहिनाम् ॥ २ ॥ ततो ब्रह्माणमसृजद्धिरण्याण्डसमुद्भवम्। सा
मूर्त्तिः सर्वभूतानामित्येवमनुशुश्रुम ॥ ३ ॥ सम्वत्सरमुषित्वाण्डे
निष्क्रम्य च महामुनिः। सन्दधे स महीं कृत्स्नां दिवमूर्द्ध्वं प्रजा-
पतिः ॥ ४ ॥ द्यावापृथिव्योरित्येष राजन् वेदेषु पठ्यते। तयोः
सकलयोर्मध्ये आकाशमकरोत् प्रभुः ॥ ५ ॥ एतस्यापि च सङ्ख्यानं
वेदवेदाङ्गपारगैः। दशकल्पसहस्राणि पादोनान्यहरुच्यते ॥ ६ ॥

रात्रिमेतावतीञ्चास्य प्राहुरध्यात्मचिन्तकाः । सृजत्यहङ्कारमृषि-
र्भूतं दिव्यात्मकं तथा ॥ ७ ॥ चतुरश्चापरान् पुत्रान् देहात् पूर्वं
महानृषिः । ते वै पितॄणां पितरः श्रूयन्ते राजसत्तम ॥ ८ ॥
देवाः पितॄणाञ्च सुता देवैर्लोकाः समावृताः । चराचरा नरश्रेष्ठ
इत्येवमनुशुश्रुम ॥ ९॥ परमेष्ठी त्वहङ्कारः सृजन् भूतानि पञ्चधा ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ १० ॥ एतस्यापि
निशामाहुस्तृतीयमिह कुर्वतः । पञ्चकल्पसहस्राणि तावदेवाह-
रुच्यते ॥ ११ ॥ शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च । एते
विशेषा राजेन्द्र महाभूतेषु पञ्चसु ॥ १२ ॥ यराविष्टानि भूतानि
अहन्यहनि पार्थिव । अन्योऽन्यं स्पृहयन्त्येते अन्योऽन्यस्य हिते-
रताः ॥ १३ ॥ अन्योऽन्यमतिवर्त्तन्ते अन्योऽन्यस्पर्द्धिनस्तथा । ते
वध्यमाना ह्यन्योऽन्यं गुणैर्हारिभिरव्ययैः । इहैव परिवर्त्तन्ते
तिर्य्यग्योनिप्रवेशिनः ॥ १४ ॥ त्रीणि कल्पसहस्राणि एतेषामह-
रुच्यते । रात्रीरेतावती चैव मनसश्च नराधिप ॥ १५ ॥ मनश्चरति
राजेन्द्र चारितं सर्वमिन्द्रियैः । न चेन्द्रियाणि पश्यन्ति मन एवा-
नुपश्यति ॥ १६ ॥ चक्षुः पश्यति रूपाणि मनसा तु न चक्षुषा ।
मनसा व्याकुले चक्षुः पश्यन्नपि न पश्यति ॥ १७ ॥ यथेन्द्रियाणि
सर्वाणि पश्यन्तीत्यभिचक्षते । न चेन्द्रियाणि पश्यन्ति मन एवात्र
पश्यति ॥ १८ ॥ मनस्युपरते राजन्निन्द्रियोपरमो भवेत् । तदि-
न्द्रियेषूपरमं मनस्युपरमं भवेत् । एवं मनः प्रधानानि इन्द्रियाणि
प्रभावयेत् ॥ १९ ॥ इन्द्रियाणान्तु सर्वेषामीश्वरं मन उच्यते ।
एतद्विशन्ति भूतानि सर्वाणीह महायशः ॥ २० ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि याज्ञवल्क्यजनकसंवादे
एकादशाधिकत्रिशततोऽध्यायः ॥ ३११ ॥

---

याज्ञवल्क्य उवाच । तत्त्वानां सर्गसङ्ख्या च कालसङ्ख्या तथैव

च। मया प्रोक्तानुपूर्व्वेण संहारमपि मे शृणु ॥ १ ॥ यथा सं-
हरते जन्तून् ससर्ज्ज च पुनः पुनः। अनादिनिधनो ब्रह्मा नित्य-
श्चाचर एव च ॥ २ ॥ अहःक्षयमथो बुद्धा निशिस्वप्नमनास्तथा।
चोदयामास भगवानव्यक्तोऽहङ्कृतं नरम् ॥ ३ ॥ ततः शतसह-
स्रांशुरव्यक्तेनाभिचोदितः। कृत्वा द्वादशधात्मानमादित्यो ज्वल-
दग्निवत् ॥ ४ ॥ चतुर्विधं महीपाल निर्द्दहत्याशु तेजसा। जरा-
युजाण्डजस्वेदजोद्भिज्जञ्च नराधिप ॥ ५॥ एतदुन्मेषमात्रेण विनष्टं
स्थाणुजङ्गमम्। कूर्म्मपृष्ठसमा भूमिर्भवत्यथ समन्ततः ॥ ६ ॥
जगद्दग्ध्वामितबलः केवलां जगतीं ततः। अम्भसा बलिना क्षिप्र-
मापूरयति सर्व्वशः ॥ ७ ॥ ततः कालाग्निमासाद्य तदम्भो याति
सङ्क्षयम्। विनष्टेऽम्भसि राजेन्द्र जाज्वलत्यनलो महान् ॥ ८ ॥
तमप्रमेयोऽतिबलं ज्वलमानं विभावसुम्। ऊष्माणं सर्व्वभूतानां
सप्तार्च्चिषमथाञ्जसा ॥ ९ ॥ भक्षयामास भगवान् वायुरष्टात्मको
बली। विचरन्नमितप्राणस्तिर्य्यगूर्द्ध्वमधस्तथा ॥ १० ॥ तमप्रति-
बलं भीममाकाशं ग्रसतेऽात्मना। आकाशमप्यभिनदन्मनो ग्रसति
चाधिकम् ॥ ११ ॥ मनो ग्रसति भूतात्मा सोऽहङ्कारः प्रजापतिः।
अहङ्कारं महानात्मा भूतभव्यभविष्यवित् ॥१२॥ तमप्यनुपमात्मानं
विश्वं शम्भुः प्रजापतिः। अणिमा लघिमा प्राप्तिरीशानो ज्योति-
रव्ययः ॥ १३ ॥ सर्व्वतः पाणिपादान्तः सर्व्वतोऽक्षिशिरोमुखः।
सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति ॥ १४ ॥ हृदयं सर्व्वभूतानां
पर्व्वणाङ्गुष्ठमात्रक। अथ ग्रसत्यनन्तो हि महात्मा विश्वमीश्वरः
॥ १५ ॥ ततः समभवत् सर्व्वमक्षयाव्ययमव्रणम्। भूतभव्यभवि-
ष्याणां स्रष्टारमनघन्तथा ॥ १६ ॥ एषोऽप्ययस्ते राजेन्द्र यथावत्
समुदाहृतः। अध्यात्ममधिभूतञ्च अधिदैवञ्च श्रूयताम् ॥ १७ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि याज्ञवल्क्यजनक-
सम्वादे द्वादशाधिकत्रिशततोऽध्यायः ॥ ३१२ ॥

याज्ञवल्क्य उवाच। पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः। गन्तव्यमधिभूतञ्च विष्णुस्तत्राधिदैवतम्॥ १॥ पायुरध्यात्ममित्याहुर्यथा तत्त्वार्थदर्शिनः। विसर्गमधिभूतञ्च मित्रस्तत्राधिदैवतम्॥ २॥ उपस्थोऽध्यात्ममित्याहुर्यथा योगप्रदर्शिनः। अधिभूतं तथानन्दो दैवतञ्च प्रजापतिः॥३॥ हस्तावध्यात्ममित्याहुर्यथा सङ्ख्यानदर्शिनः। कर्त्तव्यमधिभूतञ्च इन्द्रस्तत्राधिदैवतम्॥४॥ वागध्यात्ममितिप्राहुर्यथा योगनिदर्शिनः। वक्तव्यमधिभूतन्तु वह्निस्तत्राधिदैवतम्॥ ५॥ चक्षुरध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः। रूपमत्राधिभूतन्तु सूर्यश्चाप्यधिदैवतम्॥६॥ श्रोत्रमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः। शब्दस्तत्राधिभूतन्तु दिशस्तत्राधिदैवतम्॥७॥ जिह्वामध्यात्ममित्याहुर्यथाश्रुतिनिदर्शनः। रस एवाधिभूतन्तु आपस्तत्राधिदैवतम्॥ ८॥ घ्राणमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः। गन्ध एवाधिभूतन्तु पृथिवी चाधिदैवतम्॥ ९॥ त्वगध्यात्ममिति प्राहुस्तत्त्वबुद्धिविशारदाः। स्पर्शमेवाधिभूतन्तु पवनश्चाधिदैवतम्॥ १०॥ मनोऽध्यात्ममितिप्राहुर्यथाशास्त्रविशारदाः। मन्तव्यमधिभूतन्तु चन्द्रमाश्चाधिदैवतम्॥ ११॥ आहङ्कारिकमध्यात्ममाहुस्तत्त्वनिदर्शिनः। अभिमानोऽधिभूतन्तु बुद्धिश्चात्राधिदैवतम्॥ १२॥ बुद्धिरध्यात्ममित्याहुर्यथावदभिदर्शिनः। बोद्धव्यमधिभूतन्तु क्षेत्रज्ञश्चाधिदैवतम्॥ १३॥ एषा ते व्यक्तितो राजन् विभूतिरनुदर्शिता! आदौ मध्ये तथान्ते च यथातत्त्वेन तत्त्ववित्॥ १४॥ प्रकृतिर्गुणान् विकुरुते स्वच्छन्देनात्मकाम्यया। क्रीड़ार्थन्तु महाराज शतशोऽथ सहस्रशः॥ १५॥ यथा दीपसहस्राणि दीपान्मर्त्त्याः प्रकुर्वते। प्रकृतिस्तथा विकुरुते पुरुषस्य गुणान् बहून्॥ १६॥ सत्त्वमानन्द उद्रेकः प्रीतिः प्राकाश्यमेव च। सुखं शुद्धित्वमारोग्यं सन्तोषः श्रद्दधानता॥१७॥ अकार्पण्यमसंरम्भः क्षमा धृतिरहिंसता। समता सत्यमानृण्यं मार्द्दवं ह्रीरचापलम्॥ १८॥

शौचमार्ज्जवमाचारमलौल्यं हृदयसम्भ्रमः । इष्टानिष्टवियोगानां कृता-
नामविकत्थना ॥ १९ ॥ दानेन चात्मग्रहणमस्पृहत्वं परार्थता ।
सर्वभूतदया चैव सत्त्वस्यैते गुणाः स्मृताः ॥ २० ॥ रजोगुणानां
सङ्घातो रूपमैश्वर्य्यविग्रहे । अत्यागित्वमकारुण्यं सुखदुःखोप-
सेवनम् ॥ २१ ॥ परापवादेषु रतिर्विवादानाञ्च सेवनम् । अह-
ङ्कारमसत्कारश्चिन्ता वैरोपसेवनम् ॥ २२ ॥ परितापोऽभिहरणं
ह्रीनाशोऽनार्ज्जवन्तथा । भेदः परुषता चैव कामः क्रोधो मद-
स्तथा ॥ २३ ॥ दर्पो द्वेषोऽतिवादश्च एते प्रोक्ता रजोगुणाः । ताम-
सानान्तु सङ्घातं प्रवक्ष्याम्युपधार्य्यताम् ॥ २४ ॥ मोहोऽप्रकाश-
स्तामिस्रमन्धतामिस्रसंज्ञितम् । मरणञ्चान्धतामिस्रं तामिस्रं क्रोध
उच्यते ॥ २५ ॥ तमसो लक्षणानीह भक्षणाद्यभिरोचनम् । भोज-
नानामपर्य्याप्तिस्तथा पेयेष्वतृप्तता ॥ २६ ॥ गन्धवासो विहारेषु
शयनेष्वासनेषु च । दिवास्वप्नेऽतिवादे च प्रमादेषु च वै रतिः ॥२७॥
नृत्यवादित्रगीतानामज्ञानात् श्रद्दधानता । द्वेषो धर्मविशेषाणा-
मेते वै तामसा गुणाः ॥ २८ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि याज्ञवल्क्यजनकसंवादे
त्रयोदशाधिकत्रिशतोऽध्यायः ॥ ३१३ ॥

---

याज्ञवल्क्य उवाच । एते प्रधानस्य गुणास्त्रयः पुरुषसत्तम ।
कृत्स्नस्य चैव जगतस्तिष्ठन्त्यनपगाः सदा ॥ १ ॥ अव्यक्तरूपो भग-
वान् शतधा च सहस्रधा । शतधा सहस्रधा चैव तथा शतसह-
स्रधा । कोटिशश्च करोत्येष प्रत्यगात्मानमात्मना ॥२॥ सात्त्विक-
स्योत्तमं स्थानं राजसस्येह मध्यमम् । तामसस्याधमं स्थानं प्राहु-
रध्यात्मचिन्तकाः ॥ ३ ॥ केवलेनेह पुण्येन गतिमूर्द्ध्वामवाप्नुयात् ।
पुण्यपापेन मानुष्यमधर्म्मेणाप्यधोगतिम् ॥ ४ ॥ द्वन्द्वमेषां त्रयाणान्तु

सन्निपातञ्च तत्त्वतः । सत्त्वस्य रजसश्चैव तमसश्च शृणुष्व मे ॥ ५ ॥ सत्त्वस्य तु रजो दृष्टं रजसश्च तमस्तथा । तमसश्च तथा सत्त्वं सत्त्वस्याव्यक्तमेवच च ॥ ६ ॥ अव्यक्तः सत्त्वसंयुक्तो देवलोकमवाप्नुयात् । रजःसत्त्वसमायुक्तो मानुषेषु प्रपद्यते ॥ ७ ॥ रजस्तमोभ्यां संयुक्तस्तिर्य्यग्योनिषु जायते । राजसैस्तामसैः सत्त्वैर्युक्तो मानुष्यमाप्नुयात् ॥ ८ ॥ पुण्यपापवियुक्तानां स्थानमाहुर्महात्मनाम् । शाश्वतञ्चाव्ययञ्चैवमक्षयञ्चामृतञ्च तत् ॥ ९ ॥ ज्ञानिनां सम्भवं श्रेष्ठं स्थानमव्रणमच्युतम । अतीन्द्रियमबीजञ्च जन्ममृत्युतमोनुदम् ॥१०॥ अव्यक्तस्थं परं यत्तत् पृष्टस्तेऽहं नराधिप । स एव प्रकृतिस्थो हि तत्स्थ इत्यभिधीयते ॥११॥ अचेतना चैवमता प्रकृतिश्चापि पार्थिव। एतेनाधिष्ठिता चैव सृजते संहरत्यपि ॥ १२ ॥

जनक उवाच । अनादिनिधनावेतावुभावेव महामते । अमूर्त्तिमन्तावचलावप्रकम्प्यगुणागुणौ ॥ १३ ॥ अग्राह्यावृषिशार्दूल कथमेको ह्यचेतनः । चेतनावांस्तथा चैकः क्षेत्रज्ञ इति भाषितः ॥१४॥ त्वं हि विप्रेन्द्र कार्त्स्न्येन मोक्षधर्ममुपाससे । साकल्यं मोक्षधर्मस्य श्रोतुमिच्छामि तत्त्वतः ॥ १५ ॥ अस्तित्वं केवलत्वञ्च विनाभावन्तथैव च । देवतानि च मे ब्रूहि स्वहं यान्याश्रितानि वै ॥ १६ ॥ तथैवोत्क्रमिणः स्थानं देहिनो वै विपद्यतः । कालेन यद्धि प्राप्नोति स्थानं तत् प्रब्रवीहि मे ॥ १७ ॥ साङ्ख्यज्ञानञ्च तत्त्वेन पृथग्योगन्तथैव च । अरिष्टानि च तत्त्वानि वक्तुमर्हसि सत्तम । विदितं सर्वमेतत्ते पाणावामलकं यथा ॥ १८ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि याज्ञवल्क्यजनकसंवादे चतुर्द्दशाधिकत्रिशततोऽध्यायः ॥ ३१४ ॥

याज्ञवल्क्य उवाच। न शक्यो निर्गुणस्तात गुणीकर्त्तुं विशाम्पते। गुणवांश्चाप्यगुणवान् यथातत्त्वं निबोध मे॥ १॥ गुणैर्हि गुणवानेव निर्गुणश्चागुणस्तथा। प्राहुरेवं महात्मानो मुनयस्तत्त्वदर्शिनः॥ २॥ गुणस्वभावस्त्वव्यक्तो गुणान्नैवातिवर्त्तते। उपयुङ्क्ते च तानेव स चैवाज्ञः स्वभावतः॥ ३॥ अव्यक्तस्तु न जानीते पुरुषो ज्ञः स्वभावतः। न मत्तः परमोऽस्तीति नित्यमेवाभिमन्यते॥ ४॥ अनेन कारणेनैतदव्यक्तं स्यादचेतनम्। नित्यत्वाच्चाक्षरत्वाच्च क्षरत्वान्न तदन्यथा॥ ५॥ यदज्ञानेन कुर्वीत गुणसर्गं पुनः पुनः। यदात्मानं न जानीते तदात्मापि न मुच्यते॥ ६॥ कर्त्तृत्वाच्चापितत्त्वानां तत्त्वधर्मा तथोच्यते। कर्त्तृत्वाच्चापि सर्गाणां सर्गधर्मा तथोच्यते॥ ७॥ कर्त्तृत्वाच्चापि योगानां योगधर्मा तथोच्यते। कर्त्तृत्वात् प्रकृतीनाञ्च तथा प्रकृतिधर्मिता॥ ८॥ कर्त्तृत्वाच्चापि वीजानां वीजधर्मा तथोच्यते। गुणानां प्रसवत्वाच्च प्रलयत्वात्तथैव च॥ ९॥ उपेक्षत्वादनन्यत्वादभिमानाच्च केवलम्। मन्यन्ते यतयः सिद्धा अध्यात्मज्ञा गतज्वराः॥ १०॥ अनित्यं नित्यमव्यक्तं व्यक्तमेतद्धि शुश्रुम। अव्यक्तैकत्वमित्याहुर्नानात्वं पुरुषास्तथा। सर्वभूतदयावन्तः केवलं ज्ञानमास्थिताः॥ ११॥ अन्यः स पुरुषोऽव्यक्तस्त्वध्रुवो ध्रुवसंज्ञकः। यथा मुञ्ज इषीकाणां तथैवैतद्धि जायते॥१२॥ अन्यच्च मशकं विद्यादन्यच्चोडुम्बरन्तथा। न चोडुम्बरसंयोगैर्मशकस्तत्र लिप्यते॥ १३॥ अन्य एव तथा मत्स्यदन्यदुदकं स्मृतम्। न चोदकस्य स्पर्शेन मत्स्यो लिप्यति सर्वशः॥ १४॥ अन्यो ह्यग्निरुखाप्यन्या नित्यमेवमपुद्धि भोः। न चोपलिप्यते सोऽग्निरुखासंस्पर्शनेन च॥१५॥ पुष्करन्त्वन्य देवात्र तथान्यदुदकं स्मृतम्। न चोदकस्य स्पर्शेन लिप्यते तत्र पुष्करम्॥ १६॥ एतेषां सहवासञ्च निवासञ्चैव नित्यशः। याथातथ्येन पश्यन्ति न नित्यं प्राकृतो जनाः॥ १७॥ ये त्वन्यथैवं पश्यन्ति न

सम्यक् तेषु दर्शनम् । ते व्यक्तं निरयं घोरं प्रविशन्ति पुनः पुनः ॥ १८ ॥ साङ्ख्यदर्शनमेतत्ते परिसङ्ख्यानमुत्तमम् । एवं हि परिसङ्ख्याय साङ्ख्याः केवलतां गताः ॥ १९ ॥ ये त्वन्ये तत्त्वकुशलास्तेषामेतन्निदर्शनम् । अतः परं प्रवक्ष्यामि योगानामनुदर्शनम्॥२०॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि याज्ञवल्क्यजनक-
संवादे पञ्चदशाधिक त्रिशतोऽध्यायः ॥ ३१५ ॥

---

याज्ञवल्क्य उवाच । साङ्ख्यज्ञानं मया प्रोक्तं योगज्ञानं निबोध मे । यथाश्रुतं यथादृष्टं तत्त्वेन नृपसत्तम ॥ १ ॥ नास्ति साङ्ख्यसमं ज्ञानं नास्ति योगसमं बलम् । तावुभावेकचर्य्यौ च उभावनिधनौ स्मृतौ ॥ २ ॥ पृथक् पृथक् प्रपश्यन्ति येऽप्यबुद्धिरता नराः । वयन्तु राजन् पश्याम एकमेव तु निश्चयात् ॥ ३ ॥ यदेव योगाः पश्यन्ति तत् साङ्ख्यैरपि दृश्यते । एकं साङ्ख्यञ्च योगञ्च यः पश्यति स तत्त्ववित् ॥ ४ ॥ रुद्रप्रधानानपरान् विद्धि योगानरिन्दमः । तेनैव चाथ देहेन विचरन्ति दिशो दश ॥ ५ ॥ यावद्धि प्रलयस्तात सूक्ष्मेणाष्टगुणेन ह । योगेन लोकान् विचरन् सुखं संन्यस्य चानघ ॥ ६ ॥ वेदेषु चाष्टगुणिनं योगमाहुर्मनीषिणः । सूक्ष्ममष्टगुणं प्राहुर्नेतरं नृपसत्तम ॥ ७ ॥ द्विगुणं योगकृत्यन्तु योगानां प्राहुरुत्तमम् । सगुणं निर्गुणञ्चैव यथाशास्त्रनिदर्शनम्॥८॥ धारणञ्चैव मनसः प्राणायामश्च पार्थिव । एकाग्रता च मनसः प्राणायामस्तथैव च ॥ ९ ॥ प्राणायामो हि सगुणो निर्गुणं धारयेन्मनः । यद्यदृश्यति मुञ्चन् वै प्राणान्मैथिलसत्तम । वाताधिक्यं भवत्येव तस्मात्तन्न समाचरेत् ॥ १० ॥ निशाया प्रथमे यामे चोदना द्वादश स्मृताः । मध्ये स्वप्नात् परे यामे द्वादशैव तु चोदना ॥ ११ ॥ तदेवमुपशान्तेन दान्तेनैकान्तशीलिना । आत्मारामेण

बुद्धेन योक्तव्योऽत्मा न संशयः ॥ १२ ॥ पञ्चानामिन्द्रियाणान्तु दोषानाक्षिप्य पञ्चधा। शब्दं रूपं तथा स्पर्शं रसं गन्धन्तथैव च ॥१३॥ प्रतिभामपवर्गञ्च प्रतिसंहृत्य मैथिल। इन्द्रियग्राममखिलं मनस्यभिनिवेश्य ह ॥ १४ ॥ मनस्तथैवाहङ्कारे प्रतिष्ठाप्य नराधिप। अहङ्कारन्तथा बुद्धौ बुद्धिञ्च प्रकृतावपि ॥ १५ ॥ एवं हि परिसङ्ख्याय ततो ध्यायन्ति केवलम्। विरजस्कमलं नित्यमनन्तं शुद्धमव्रणम् ॥ १६ ॥ तस्थुषं पुरुषं नित्यमभेद्यमजरामरम्। शाश्वतञ्चाव्ययञ्चैव ईशानं ब्रह्म चाव्ययम् ॥ १७ ॥ युक्तस्य तु महाराज लक्षणान्युपधारय। लक्षणन्तु प्रसादस्य यथा तृप्तः सुखं स्वपेत् ॥ १८ ॥ निवाते तु यथा दीपो ज्वलेत् स्नेहसमन्वितः। निश्चलोर्द्ध्वशिखस्तद्वद्युक्तमाहुर्मनीषिणः ॥ १९ ॥ पाषाण इव मेघोत्थैर्यथा विन्दुभिराहतः। नालञ्चालयितुं शक्यस्तथा युक्तस्य लक्षणम् ॥ २० ॥ शङ्खदुन्दुभिनिर्घोषैर्विविधैर्गीतवादितैः। क्रियमाणैर्न कम्पेत युक्तस्यैतन्निदर्शनम् ॥ २१ ॥ तैलपात्रं यथा पूर्णं कराभ्यां गृह्य पूरुषः। सोपानमारुहेद्भीतस्तर्ज्ज्यमानोऽसि पाणिभिः ॥२२॥ संयतात्मा भयात्तेषां न पात्राद्विन्दुमुत्सृजेत्। तथैवोत्तरमागम्य एकाग्रमनसस्तथा ॥ २३ ॥ स्थिरत्वादिन्द्रियाणान्तु निश्चलत्वात्तथैव च। एवं युक्तस्य तु मुनेर्लक्षणान्युपलक्षयेत् ॥ २४ ॥ स युक्तः पश्यते ब्रह्म यत्तत् परममव्ययम्। महतस्तमसो मध्ये स्थितं ज्वलनसन्निभम् ॥ २५ ॥ एतेन केवलं याति त्यक्त्वा देहमसाक्षिकम्। कालेन महता राजन् श्रुतिरेषा सनातनी ॥ २६ ॥ एतद्धि योगं योगानां किमन्यद्योगलक्षणम्। विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिणः ॥ २७ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि याज्ञवल्क्यजनकसम्वादे षोड़शाधिकत्रिशततोऽध्यायः ॥ ३१६ ॥

याज्ञवल्क्य उवाच । तथैवोत्क्रममाणन्तु शृणुष्वावहितो नृप । पद्भ्यामुत्क्रममाणस्य वैष्णवं स्थानमुच्यते ॥ १ ॥ जङ्घाभ्यान्तु वसून् देवानाप्नुयादिति नः श्रुतम् । जानुभ्याञ्च महाभागान् साध्यान्देवानवाप्नुयात् ॥२॥ पायुनोत्क्रममाणन्तु मैत्रं स्थानमवाप्नुयात् । पृथिवीं जघनेनाथ ऊरुभ्याञ्च प्रजापतिम् ॥३॥ पार्श्वाभ्यां मरुतो देवान्नासाभ्यामिन्दुमेव च । बाहुभ्यामिन्द्रमेवाहुरुरसा रुद्रमेव च ॥ ४ ॥ ग्रीवायान्तु मुनिश्रेष्ठं नरमाप्नोत्यनुत्तमम् । विश्वेदेवान्मुखेनाथ दिशः श्रोत्रेण चाप्नुयात् ॥ ५ ॥ घ्राणेन गन्धवहनं नेत्राभ्यामग्निमेव च । भ्रूभ्याञ्चैवाश्विनौ देवौ ललाटेन पितॄनथ ॥६॥ ब्रह्माणमाप्नोति विभुं मूर्द्ध्ना देवाग्रजं तथा । एतान्युत्क्रमणस्थानान्युक्तानि मिथिलेश्वर ॥ ७ ॥ अरिष्टानि प्रवक्ष्यामि विहितानि मनीषिभिः । सम्वत्सरवियोगस्य सम्भवन्ति शरीरिणः ॥८॥ योऽरुन्धतीं न पश्येत दृष्टपूर्वां कदाचन । तथैव ध्रुवमित्याहुः पूर्णेन्दुं दीपमेव च । खण्डाभासं दक्षिणतस्तेऽपि सम्वत्सरायुषः ॥ ९ ॥ परचक्षुषि चात्मानं ये न पश्यन्ति पार्थिव । आत्मच्छायाकृतीभूतं तेऽपि सम्वत्सरायुषः ॥ १० ॥ अतिद्युतिरतिप्रज्ञा अप्रज्ञा चाद्युतिस्तथा । प्रकृतेर्विक्रियापत्तिः षण्मासान्मृत्युलक्षणम् ॥११॥ दैवतान्यवजानाति ब्राह्मणैश्च विरुध्यते । कृष्णश्यावच्छविच्छायः षण्मासान्मृत्युलक्षणम् ॥ १२ ॥ ऊर्णनाभेर्यथा चक्रं छिद्रं सोमं प्रपश्यति । तथैव च सहस्रांशुं सप्तरात्रेण मृत्युभाक् ॥ १३ ॥ शवगन्धमुपाघ्राति सुरभिं प्राप्य यो नरः । देवतायतनस्थस्तु सप्तरात्रेण मृत्युभाक् ॥ १४ ॥ कर्णनासावनमनं दन्तदृष्टिविरागिता । संज्ञालोपो निरूष्मत्वं सद्यो मृत्युनिदर्शनम् ॥ १५ ॥ अकस्माच्च स्रवेद्यस्य वाममक्षि नराधिप । मूर्द्धतो वोत्पतेद्धूमः सद्यो मृत्युनिदर्शनम् ॥ १६ ॥ एतावन्ति त्वरिष्टानि विदित्वा मानवोऽऽत्मवान् । निशि चाहनि चात्मानं योजयेत् परमात्मनि ॥ १७॥ प्रतीक्षमाण-

स्तत्कालं यत्कालं प्रेतता भवेत्। अथास्य नेष्टं मरणं स्थाणु-
मिच्छेदिमां क्रियाम् ॥ १८ ॥ सर्व्वगन्धान्रसांश्चैव धारयेत नरा-
धिप। तथा हि मृत्युं जयति तत्परेणान्तरात्मना ॥ १९ ॥
सप्ताङ्गधारणञ्चैव विदितात्मा नरर्षभ। जयेच्च मृत्युं योगेन
तत्परेणान्तरात्मना ॥२०॥ गच्छेत् प्राप्याक्षयं कृत्स्नमजन्म शिव-
मव्ययम्। शाश्वतं स्थानमचलं दुष्प्रापमकृतात्मभिः ॥ २१ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि याज्ञवल्क्यजनक-
संवादे सप्तदशाधिकत्रिशततोऽध्यायः ॥ ३१७ ॥

---

याज्ञवल्क्य उवाच। अव्यक्तस्थं परं यत्तत् पृष्टस्तेऽहं नरा-
धिप। परं गुह्यमिमं प्रश्नं शृणुष्वावहितो नृप ॥ १॥ यथार्षेणेह
विधिना चरतावनतेन ह। मयादित्यादवाप्तानि यजूंषि मिथिला-
धिप ॥ २ ॥ महता तपसा देवस्तपिष्णुः सेवितो मया। प्रीतेन
चाहं विभुना सूर्य्येणोक्तस्तथानघ ॥३॥ वरं वृणीष्व विप्रर्षे यदिष्टं
ते सुदुर्लभम्। तत्ते दास्यामि प्रीतात्मा मत्प्रसादो हि दुर्लभः॥४॥
ततः प्रणम्य शिरसा मयोक्तस्तपतां वरः। यजूंषि नोपयुक्तानि
क्षिप्रमिच्छामि वेदितुम् ॥ ५ ॥ ततो मां भगवानाह वितरिष्यामि
ते द्विज। सरस्वतीह वाग्भूता शरीरन्ते प्रवेक्ष्यति ॥ ६ ॥ ततो
मामाह भगवानास्यं त्वं विकृतं कुरु। विवृतञ्च ततो मेऽस्यं प्रविष्टा
च सरस्वती ॥ ७ ॥ ततो विदह्यमानोऽहं प्रविष्टोऽम्भस्तदानघ।
अविज्ञानादमर्षाच्च भास्करस्य महात्मनः ॥ ८ ॥ ततो विदह्यमानं
मामुवाच भगवान्रविः। मुहूर्त्तं सह्यतां दाहस्ततः शीतिभविष्यति
॥ ९ ॥ शीतिभूतञ्च मां दृष्ट्वा भगवानाह भास्करः। प्रतिष्ठास्यति
ते वेदः सखिलः सोत्तरो द्विज ॥ १० ॥ कृत्स्नं शतपथञ्चैव प्रणे-
ष्यसि द्विजर्षभ। तस्यान्ते चापुनर्भावे बुद्धिस्तव भविष्यति ॥ ११॥

प्राप्स्यसे च यदिष्टं तत् साङ्ख्ययोगेप्सितं पदम्। एतावदुक्त्वा भगवानस्तमेवाभ्यवर्त्तत ॥ १२ ॥ ततोऽनुव्याहृतं श्रुत्वा गते देवे विभावसौ। गृहमागत्य संहृष्टोऽचिन्तयं वै सरस्वतीम् ॥ १३ ॥ ततः प्रवृत्तातिशुभा स्वरव्यञ्जनभूषिता। ओँकारमादितः कृत्वा मम देवी सरस्वती ॥ १४ ॥ ततोऽहमर्घ्यं विधिवत् सरस्वत्यै न्यवेदयम्। तपतां च वरिष्ठाय निषस्स्तत्परायणः ॥ १५॥ ततः शतपथं कृत्स्नं सरहस्यं ससंग्रहम्। चक्रे सपरिशेषञ्च हर्षेण परमेण ह ॥ १६ ॥ कृत्वा चाध्ययनं तेषां शिष्याणां शतमुत्तमम्। विप्रियार्थं सशिष्यस्य मातुलस्य महात्मनः ॥ १७ ॥ ततः सशिष्येण मया सूर्य्येणेव गभस्तिभिः। व्यस्तो यज्ञो महाराज पितुस्तव महात्मनः ॥ १८ ॥ मिषतो देवलस्यापि ततोऽर्द्धं कृतवानहम्। स्ववेददक्षिणायार्थे विमर्दे मातुलेन ह ॥ १९ ॥ सुमन्तुनाथ पैलेन तथा जैमिनिनाच वै। पित्रा ते मुनिभिश्चैव ततोऽहमनुमानितः ॥ २० ॥ दश पञ्च च प्राप्तानि यजूंष्यर्कान्मयानघ। तथैव रोमहर्षेण पुराणमवधारितम् ॥ २१ ॥ बीजमेतत् पुरस्कृत्य देवीञ्चैव सरस्वतीम्। सूर्य्यस्य चानुभावेन प्रवृत्तोऽहं नराधिप ॥ २२ ॥ कर्त्तुं शतपथञ्चेदमपूर्वञ्च कृतं मया। यथाभिलषितं मार्गं तथा तच्चोपपादितम् ॥ २३ ॥ शिष्याणामखिलं कृत्स्नमनुज्ञातं ससंग्रहम्। सर्वे च शिष्याः शुचयो गताः परमहर्षिताः ॥ २४ ॥ शाखाः पञ्चदशेमास्तु विद्या भास्करदर्शिताः। प्रतिष्ठाप्य यथाकामं वेद्यं तदनुचिन्तयम् ॥ २५ ॥ किमत्र ब्रह्मण्यमृतं किञ्च वेद्यमनुत्तमम्। चिन्तयंस्तत्र चागत्य गन्धर्वो मामपृच्छत ॥ २६ ॥ विश्वावसुस्ततो राजन् वेदान्तज्ञानकोविदः। चतुर्विंशत्ततोऽपृच्छत् प्रश्नान् वेदस्य पार्थिव ॥ २७॥ पञ्चविंशतिमं प्रश्नं पप्रच्छान्वीक्षिकीं तदा। विश्वाविश्वं तथाश्वाश्वं मित्रं वरुणमेव च ॥ २८॥ ज्ञानं ज्ञेयं तथाज्ञो ज्ञः कस्तपा अतपास्तथा। सूर्य्यादः सूर्य्य इति च

विद्याविद्ये तथैव च ॥ २९ ॥ वेद्यावेद्यन्तथा राजन्नचलं चलमेव च । अपूर्व्वमक्षयं क्षय्यमेतत् प्रश्नमनुत्तमम् ॥ ३० ॥ अथोक्तश्च महाराज राजा गन्धर्व्वसत्तमः । पृष्टवाननुपूर्व्वेण प्रश्नमर्थवदुत्तमम् ॥ ३१ ॥ मुहूर्त्तमुष्यतां तावत् यावद्देवं विचिन्तये । वाढ़मित्येव कृत्वा च तूष्णीं गन्धर्व आस्थितः ॥ ३२ ॥ ततोऽनुचिन्तयमहं भूयो देवीं सरस्वतीम् । मनसा न च मे प्रश्नो दध्नो घृतमिवोद्धृतम् ॥ ३३ ॥ तत्रोपनिषदञ्चैव परिशेषञ्च पार्थिव । मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं पराम् ॥ ३४ ॥ चतुर्थी राजशार्द्दूल विद्यैषा साम्परायिकी । उदीरिता मया तुभ्यं पञ्चविंशादधिष्ठिता ॥ ३५ ॥ अथोक्तस्तु मया राजन् राजा विश्वावसुस्तदा । श्रूयतां यद्भवानस्मान् प्रश्नं संपृष्टवानिह ॥ ३६ ॥ विश्वाविश्वेति यदिदं गन्धर्व्वेन्द्रानुपृच्छसि । विश्वाव्यक्तं परं विद्यात् भूतभव्यभयङ्करम् ॥ ३७ ॥ त्रिगुणं गुणकर्त्तृत्वात् विश्वोऽन्यो निष्कलस्तथा । अश्व-स्तथैव मिथुनमेवमेवानुदृश्यते ॥ ३८ ॥ अव्यक्तं प्रकृतिं प्राहुः पुरुषेति च निर्गुणम् । तथैव मित्रं पुरुषं वारुणं प्रकृतिन्तथा ॥३९॥ ज्ञानन्तु प्रकृतिं प्राहुर्ज्ञेयं निष्कलमेव च । अज्ञश्च ज्ञश्च पुरुषस्तस्मा न्निष्कल उच्यते ॥ ४० ॥ कस्तपा अतपाः प्रोक्तः कोऽसौ पुरुष उच्यते । तपास्तु प्रकृतिं प्राहुरतपा निष्कलः स्मृतः ॥ ४१ ॥ तथै-वावेद्यमव्यक्तं वेद्यः पुरुष उच्यते ॥ ४२ ॥ चलाचलमिति प्रोक्तं त्वया तदपि मे शृणु । चलान्तु प्रकृतिं प्राहुः कारणं क्षयसर्गयोः । आक्षेपसर्गयोः कर्त्ता निश्चलः पुरुषः स्मृतः ॥ ४३ ॥ तथैव वेद्य-मव्यक्तमवेद्यः पुरुषस्तथा । अज्ञावुभौ ध्रुवौ चैव अक्षयौ चाप्युभा-वपि ॥ ४४ ॥ अजौ नित्यावुभौ प्राहुरध्यात्मगतिनिश्चयात् ॥४५॥ अक्षयत्वात् प्रजनने अजमत्राहुरव्ययम् । अक्षयं पुरुषं प्राहु क्षयो ह्यस्य न विद्यते ॥४६॥ गुणक्षयत्वात् प्रकृतिः कर्त्तृत्वादक्षयं बुधाः । एषा तेऽन्वीक्षिकी विद्या चतुर्थी साम्परायिकी ॥ ४७ ॥ विद्यो-

पेतं धनं कृत्वा कर्म्मणा नित्यकर्म्मणि। एकान्तदर्शना वेदाः सर्व्वे विश्वावसो स्मृताः॥ ४८॥ जायन्ते च म्रियन्ते च यस्मिन्नेते यतश्च्युताः। वेदार्थं ये न जानन्ति वेद्यं गन्धर्वसत्तम॥ ४९॥ साङ्गोपाङ्गानपि यदि यश्च वेदानधीयते। वेदवेद्यं न जानीते वेदभारवहो हि सः॥ ५०॥ यो घृतार्थी खरीचीरं मथेद्गन्धर्वसत्तम। विष्ठां तत्रानुपश्येत न मण्डं न च वै घृतम्॥ ५१॥ तथा वेद्यमवेद्यञ्च वेदविद्यो न विन्दति। स केवलं मूढमतिर्ज्ञानभारवहः स्मृतः॥ ५२॥ द्रष्टव्यौ नित्यमेवैतौ तत्परेणान्तरात्मना। यथास्य जन्मनिधने न भवेतां पुनः पुनः॥ ५३॥ अजस्रं जन्मनिधनं चिन्तयित्वा त्रयीमिमाम्। परित्यज्य क्षयमिह अक्षयं धर्म्ममास्थितः॥५४॥ यदानुपश्यतेऽत्यन्तमहन्यहनि काश्यप। तथा स केवलीभूतः षड्विंशमनुपश्यति॥५५॥ अन्यश्च शाश्वतोऽव्यक्तस्तथान्यः पञ्चविंशकः। तस्य द्वावनुपश्येतां तमेकमिति साधवः॥५६॥ ते नैतन्नाभिनन्दन्ति पञ्चविंशकमच्युतम्। जन्ममृत्युभयोद्विग्नाः साङ्ख्याश्च परमैषिणः॥ ५७॥

विश्वावसुरुवाच। पञ्चविंशं यदेतत्ते प्रोक्तं ब्राह्मणसत्तम। तथा तन्न तथा वेति तद्भवान् वक्तुमर्हति॥ ५८॥ जैगिषव्यस्यासितस्य देवलस्य मया श्रुतम्। पराशरस्य विप्रर्षेर्वार्षगण्यस्य धीमतः॥ ५९॥ भृगोः पञ्चशिखस्यास्य कपिलस्य शुकस्य च। गौतमस्यार्ष्टिषेणस्य गर्गस्य च महात्मनः॥ ६०॥ नारदस्यासुरेश्चैव पुलस्त्यस्य च धीमतः। सनत्कुमारस्य ततः शुक्रस्य च महात्मनः॥ ६१॥ कश्यपस्य पितुश्चैव पूर्व्वमेव मया श्रुतम्। तदनन्तरञ्च रुद्रस्य विश्वरूपस्य धीमतः॥ ६२॥ दैवतेभ्यः पितृभ्यश्च दैतेयेभ्यस्ततस्ततः। प्राप्तमेतन्मया कृत्स्नं वेद्यं नित्यं वदन्त्युत॥ ६३॥ तस्मात्तद्वै भवद्बुद्ध्या श्रोतुमिच्छामि ब्राह्मण। भवान् प्रवर्हः शास्त्राणां प्रगल्भश्चातिबुद्धिमान्॥ ६४॥ न तवाविदितं किञ्चि-

ङ्गवान् श्रुतिनिधिः स्मृतः । कथ्यते देवलोके च पितृलोके च
ब्राह्मण ॥ ६५ ॥ ब्रह्मलोकगताश्चैव कथयन्ति महर्षयः । पतिश्च
तपतां शश्वदादित्यस्तव भाषिता ॥ ६६ ॥ साङ्ख्यज्ञानन्त्वया ब्रह्म-
न्नवाप्तं कृत्स्नमेव च । तथैव योगशास्त्रञ्च याज्ञवल्क्य विशेषतः
॥६७॥ निःसन्दिग्धं प्रबुद्धस्त्वं बुध्यमानश्चराचरम् । श्रोतुमिच्छामि
तज्ज्ञानं घृतं मण्डमयं यथा ॥ ६८ ॥

याज्ञवल्क्य उवाच । कृत्स्नधारिणमेवत्वां मन्ये गन्धर्वसत्तम ।
जिज्ञाससे च मां राजंस्तन्निबोध यथाश्रुतम् ॥ ६९ ॥ अबुध्यमानां
प्रकृतिं बुध्यते पञ्चविंशकः । न तु बुध्यति गन्धर्व प्रकृतिः पञ्चविं-
शकम् ॥ ७० ॥ अनेन प्रतिबोधेन प्रधानं प्रवदन्ति तत् । साङ्ख्य-
योगाश्च तत्त्वज्ञा यथाश्रुतिनिदर्शनात् ॥७१॥ पश्यंस्तथैव चापश्यन्
पश्यत्यन्यः सदानघ । षड्विंशं पञ्चविंशञ्च चतुर्विंशञ्च पश्यति ॥७२॥
न तु पश्यति पश्यंस्तु यश्चैनमनुपश्यति । पञ्चविंशोऽभिमन्येत नान्यो-
ऽस्ति परतो मम ॥ ७३ ॥ न चतुर्विंशको ग्राह्यो मनुजैर्ज्ञान-
दर्शिभिः । मत्स्यश्चोदकमन्वेति प्रवर्त्तेत प्रवर्त्तनात् ॥ ७४ ॥ यथैव
बुध्यते मत्स्यस्तथैषोऽप्यनुबुध्यते । सस्नेहः सहवासाच्च साभि-
मानाच्च नित्यशः ॥७५॥ स निमज्जति कालस्य यदैकत्वं न बुध्यते ।
उन्मज्जति हि कालस्य ममत्वेनाभिसंवृतः ॥ ७६॥ यदा तु मन्यते-
ऽन्योऽहमन्य एष इति द्विज । तदा स केवलीभूतः षड्विंशमनु-
पश्यति ॥ ७७ ॥ अन्यश्च राजन्वरस्तथान्यः पञ्चविंशकः । तत्-
स्थानाच्चानुपश्यन्ति एक एवेति साधवः ॥७८॥ तेनैतन्नाभिनन्दन्ति
पञ्चविंशकमच्युतम् । जन्ममृत्युभयाद्भीता योगाः साङ्ख्याश्च काश्यप
॥ ७९ ॥ षड्विंशमनुपश्यन्तः शुचयस्तत्परायणाः । यदा स
केवलीभूतः षड्विंशमनुपश्यति ॥ ८० ॥ तदा स सर्व्वविद्विद्वान्न
पुनर्जन्म विन्दति । एवमप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ॥ ८१ ॥
बुद्धश्चोक्तो यथातत्त्वं मया श्रुतिनिदर्शनात् । पश्यापश्यं यो न

पश्येत् क्षेम्यं तत्त्वञ्च काश्यप। केवलाकेवलञ्चाद्यं पञ्चविंशं परञ्च यत्॥ ८२॥

विश्वावसुरुवाच। तथ्यं शुभञ्चैतदुक्तं त्वया विभो सम्यक् क्षेम्यं दैवताद्यं यथावत्। स्वस्त्यक्षयं भवतश्चास्तु नित्यं बुद्ध्या सदा बुद्धियुक्तं मनस्ते॥ ८३॥

याज्ञवल्क्य उवाच। एवमुक्त्वा संप्रयातो दिवं स विभ्राजन् वै श्रीमता दर्शनेन। दृष्टश्च तुष्ट्या परयाभिनन्द्य प्रदक्षिणं मम कृत्वा महात्मा॥ ८४॥ ब्रह्मादीनां खेचराणां क्षितौ च ये चाधस्तात संवसन्ते नरेन्द्र। तत्रैव तद्दर्शनं दर्शयन् वै सम्यक् क्षेम्यं ये पथं संश्रिता वै॥ ८५॥ साङ्ख्याः सर्वे साङ्ख्यधर्मे रताश्च तद्द्योगा योगधर्मे रताश्च। ये चाप्यन्ये मोक्षकामा मनुष्यास्तेषामेतद्दर्शनं ज्ञानदृष्टम्॥ ८६॥ ज्ञानान्मोक्षो जायते राजसिंह नास्त्यज्ञानादेवमाहुर्नरेन्द्र। तस्माज्ज्ञानं तत्त्वतोऽन्वेषितव्यं येनात्मानं मोक्षयेज्जन्ममृत्योः॥ ७७॥ प्राप्य ज्ञानं ब्राह्मणात् क्षत्रियाद्वा वैश्याच्छूद्रादपि नीचादभीक्ष्णम्। श्रद्धातव्यं श्रद्दधानेन नित्यं श्रद्धिनं जन्ममृत्यू विशेताम्॥ ८८॥ सर्वे वर्णा ब्राह्मणा ब्रह्मजाश्च सर्वे नित्यं व्याहरन्ते च ब्रह्म। तत्त्वं शास्त्रं ब्रह्मबुद्ध्या ब्रवीमि सर्वं विश्वं ब्रह्म चैतत् समस्तम्॥ ८९॥ ब्रह्मास्यतो ब्राह्मणाः सम्प्रसूताः बाहुभ्यां वै क्षत्रियाः संप्रसूताः। नाभ्यां वैश्याः पादतश्चापि शूद्राः सर्वे वर्णा नान्यथा वेदितव्याः॥ ९०॥ अज्ञानतः कर्मयोनिं भजन्ते तां तां राजंस्ते यथा यान्त्यभावम्। तथा वर्णा ज्ञानहीनाः पतन्ते घोराद्ज्ञानात् प्राकृतं योनिजालम्॥ ९१॥ तस्माज्ज्ञानं सर्वतो मार्गितव्यं सर्वत्रस्थं चैतदुक्तं मया ते। तस्थौ ब्रह्मा तस्मिंवांश्चापरो यस्तस्मै नित्यं मोक्षमाहुर्नरेन्द्र॥ ९२॥ यत्ते पृष्टं तन्मया चोपदिष्टं याथातथ्यं तद्विशोको भवस्व। राजन् गच्छस्वैतदर्थस्य पारं सम्यक् प्रोक्तं स्वस्ति ते त्वस्तु नित्यम्॥ ९३॥

भीष्म उवाच। स एवमनुशास्तस्तु याज्ञवल्क्येन धीमता।
प्रीतिमानभवद्राजा मिथिलाधिपतिस्तदा ॥ ९४ ॥ गते मुनिवरे
तस्मिन् कृते चापि प्रदक्षिणम्। दैवरातिर्नरपतिरासीनस्तत्र मोक्ष-
वित् ॥ ९५ ॥ गोकोटिं स्पर्शयामास हिरण्यन्तु तथैव च। रत्ना-
ञ्जलिमथैकञ्च ब्राह्मणेभ्यो ददौ तदा ॥ ९६ ॥ विदेहराज्यञ्च तदा
प्रतिष्ठाप्य सुतस्य वै। यतिधर्ममुपाश्रित्याप्यवसन्मिथिलाधिपः ॥९७॥
साङ्ख्यज्ञानमधीयानो योगशास्त्रञ्च कृत्स्नशः। धर्माधर्मञ्च राजेन्द्र
प्राकृतं परिगर्हयन् ॥ ९८ ॥ अनन्त इति कृत्वा स नित्यं केवल-
माश्रितः। धर्माधर्मौ पुण्यपापे सत्यासत्ये तथैव च ॥ ९९ ॥
जन्ममृत्यू च राजेन्द्र प्राकृतं तदचिन्तयत् ॥ १०० ॥ व्यक्ताव्यक्तस्य
कर्म्मेदमिति नित्यं नराधिप। पश्यन्ति योगाः साङ्ख्याश्च स्वशास्त्र-
कृतलक्षणाः ॥ १०१ ॥ इष्टानिष्टविमुक्तं हि तस्थौ ब्रह्म परात्-
परम्। नित्यं तदाहुर्विद्वांसः शुचि तस्मात् शुचिर्भव ॥ १०२ ॥
दीयते यच्च लभते दत्तं यच्चानुमन्यते। ददाति च नरश्रेष्ठ प्रति-
गृह्णाति यच्च ह ॥ १०३ ॥ ददात्यव्यक्त इत्येतत् प्रतिगृह्णाति यच्च
वै। आत्मा ह्येवात्मनो ह्येकः कोऽन्यस्तस्मात् परो भवेत्। एवं
मन्यस्व सततमन्यथा मा विचिन्तय ॥१०५॥ यस्याव्यक्तं न विदितं
सगुणं निर्गुणं पुनः। तेन तीर्थानि यज्ञाश्च सेवितव्या विपश्चिता
॥ १०५ ॥ न स्वाध्यायैस्तपोभिर्वा यज्ञैर्वा कुरुनन्दन। लभते
व्यक्तिकं स्थानं ज्ञात्वा व्यक्तं महीयते ॥ १०६ ॥ तथैव महत-
स्थानमाहङ्कारिकमेव च। अहङ्कारात् परञ्चापि स्थानानि सम-
वाप्नुयात् ॥ १०७ ॥ ये त्वव्यक्तात् परं नित्यं जानते शास्त्रतत्पराः।
जन्ममृत्युविमुक्तञ्च विमुक्तं सदसच्च यत् ॥ १०८ ॥ एतन्मयाप्तं
जनकात् पुरस्तात् तेनापि चाप्तं नृप याज्ञवल्क्यात्। ज्ञानं विशिष्टं
न तथा हि यज्ञा ज्ञानेन दुर्गं तरते न यज्ञैः ॥१०९॥ दुर्गं जन्म-
निधनञ्चापि राजन् न भौतिकं ज्ञानविदो वदन्ति। यज्ञैस्तपोभि-

नियमैर्व्रतैश्च दिवं समासाद्य पतन्ति भूमौ ॥ ११० ॥ तस्मादुपास्य परं महच्छुचिः शिवं विमोक्षं विमलं पवित्रम्। क्षेत्रं ज्ञात्वा पार्थिव ज्ञानयज्ञमुपास्य वै तत्त्वमृषिर्भविष्यसि ॥ १११ ॥ यदुपनिषदमुपाकरोत्तथासौ जनकनृपस्य पुरा हि याज्ञवल्क्य। यदुपगणितं शाश्वताव्ययं तच्छुभममृतत्वमशोकमर्च्छति ॥ ११२ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि वशिष्ठकरालजनक-
सम्वादे अष्टादशाधिकत्रिशतोऽध्यायः ॥ ३१८ ॥

---

युधिष्ठिर उवाच। ऐश्वर्य्यं वा महत् प्राप्य धनं वा भरतर्षभ। दीर्घमायुरवाप्याथ कथं मृत्युमतिक्रमेत् ॥ १ ॥ तपसा वा सुमहता कर्म्मणा वा श्रुतेन वा। रसायनप्रयोगैर्वा कैर्नाप्नोति जरान्तकः ॥ २ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। भिक्षोः पञ्चशिखस्येह सम्वादं जनकस्य च ॥ ३ ॥ वैदेहो जनको राजा महर्षिं वेदवित्तमम्। पर्य्यपृच्छत् पञ्चशिखं छिन्नधर्मार्थसंशयम् ॥ ४ ॥ केन वृत्तेन भगवन्नतिक्रामेज्जरान्तकौ। तपसा वाथ वा बुद्ध्या कर्मणा वा श्रुतेन वा ॥ ५ ॥ एवमुक्तः स वैदेहं प्रत्युवाचापरोक्षवित्। निवृत्तिर्न तयोरस्ति नानिवृत्तिः कथञ्चन ॥ ६ ॥ न ह्यहानि निवर्त्तन्ते न मासा न पुनः क्षपाः। सोऽयं प्रपद्यतेऽध्वानं चिराय ध्रुवमध्रुवः ॥ ७ ॥ सर्वभूतसमुच्छेदः स्रोतसेवोह्यते सदा। उह्यमानं निमज्जन्तमप्लवे कालसागरे ॥ ८ ॥ जरामृत्यु महाग्राहे न कश्चिदभिपद्यते। नैवास्य कश्चिद्भवति नासौ भवति कस्यचित् ॥ ९ ॥ पथि सङ्गतमेवेदं दारैरन्यैश्च बन्धुभिः। नायमत्यन्तसंवासो लब्धपूर्वो हि केनचित् ॥ १० ॥ क्षिप्यन्ते तेन तेनैव निष्टनन्तः पुनः पुनः। कालेन याता याता हि वायुनेवाभ्र-

सञ्जयाः ॥ ११ ॥ जरामृत्यू हि भूतानां खादितारौ वृकाविव। बलिनां दुर्ब्बलानाञ्च ह्रस्वानां महतामपि ॥१२॥ एवम्भूतेषु भूतात्मा नित्यभूतोऽध्रुवेषु च। कथं हि हृष्येज्जातेषु मृतेषु च न संज्वरेत् ॥ १३ ॥ कुतोऽहमागतः कोऽस्मि क्व गमिष्यामि कस्य वा। कस्मिन् स्थितः क्व भविता कस्मात् किमनुशोचसि ॥ १४ ॥ द्रष्टा स्वर्गस्य कोऽन्योऽस्ति तथैव नरकस्य च। आगमांस्त्वनतिक्रम्य दद्याच्चैव यजेत च ॥ १५ ॥

इति शान्तिपर्व्वणि मोक्षधर्मपर्व्वणि पञ्चशिखजनकसम्वादे एकोनविंशत्यधिकत्रिशतोऽध्याय ॥ ३१९ ॥

---

युधिष्ठिर उवाच। अपरित्यज्य गार्हस्थ्यं कुरुराजर्षिसत्तम। कः प्राप्तो विलयं बुद्ध्या मोक्षतत्त्वं वदस्व मे ॥ १ ॥ संन्यस्यते यथात्मायं व्यक्तस्यात्मा यथा च यत्। परं मोक्षस्य यच्चापि तन्मे ब्रूहि पितामह ॥ २ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्। जनकस्य च सम्वादं सुलभायाश्च भारत ॥ ३ ॥ संन्यासफलिकः कश्चिद्बभूव नृपतिः पुरा। मैथिलो जनको नाम धर्मध्वज इति श्रुतः ॥ ४ ॥ स वेदे मोक्षशास्त्रे च स्वे च शास्त्रे कृतागमः। इन्द्रियाणि समाधाय शशास वसुधामिमाम् ॥ ५ ॥ तस्य वेदविदः प्राज्ञाः श्रुत्वा तां साधुवृत्तताम्। लोकेषु स्पृहयन्त्यन्ये पुरुषाः पुरुषेश्वर ॥ ६ ॥ अथ धर्मयुगे तस्मिन् योगधर्ममनुष्ठिता। महीमनुचचारैका सुलभा नाम भिक्षुकी ॥ ७ ॥ तया जगदिदं कृत्स्नमटन्त्या मिथिलेश्वरः। तत्र तत्र श्रुतो मोक्षे कथ्यमानस्त्रिदण्डिभिः ॥ ८ ॥ सातिसूक्ष्मां कथां श्रुत्वा तथ्यं नेति ससंशया। दर्शने जातसङ्कल्पा जनकस्य बभूव ह ॥ ९ ॥ तत्र सा विप्रहायाथ पूर्व-

रूपं हि योगतः। अविभ्रदनवद्याङ्गी रूपमन्यदनुत्तमम् ॥१०॥ चक्षुर्निमेषमात्रेण लघ्वस्त्रगतिगामिनी। विदेहानां पुरीं सुभ्रूर्जगाम कमलेक्षणा॥ ११॥ सा प्राप्य मिथिलां रम्यां प्रभूतजनसंकुलाम्। भैक्ष्यचर्य्यापदेशेन ददर्श मिथिलेश्वरम्॥ १२॥ राजा तस्याः परं दृष्ट्वा सौकुमार्य्यं वपुस्तदा। केयं कस्य कुतो वेति बभूवागतविस्मयः॥ १३॥ ततोऽस्याः स्वागतं कृत्वा व्यादिश्य च वरासनम्। पूजितां पादशौचेन वरान्नेनाप्यतर्पयत् ॥१४॥ अथ भुक्तवती प्रीत्या राजानं मन्त्रिभिर्वृतम्। सर्वभाष्यविदां मध्ये चोदयामास भिक्षुकी॥ १५॥ सुलभा तस्य धर्मेषु मुक्तो नेति ससंशया। सत्त्वं सत्त्वेन योगज्ञा प्रविवेश महीपतेः॥ १६॥ नेत्राभ्यां नेत्रयोरस्य रश्मीन् संयम्य रश्मिभिः। सा स्म सञ्चोदयिष्यन्ती योगबन्धैर्बबन्ध ह॥ १७॥ जनकोऽप्युत्स्मयन्राजा भावमस्या विशेषयन्। मतिजग्राह भावेन भावमस्या नृपोत्तम॥ १८॥ तदेकस्मिन्नधिष्ठाने सम्वादः श्रूयतामयम्। छत्रादिषु विमुक्तस्य मुक्तायाश्च त्रिदण्डके॥ १९॥

जनक उवाच। भगवत्याः क्व चर्य्येयं कृत्वा क्व च गमिष्यसि। कस्य च त्वं कुतो वेति पप्रच्छैनां महीपतिः॥ २०॥ श्रुते वयसि जातौ च सद्भावो नाधिगम्यते। एष्वर्थेषूत्तरं तस्मात् प्रवेद्यं मत्समागमे॥ २१॥ छत्रादिषु विशेषेषु मुक्तं मां विद्धि तत्त्वतः। स त्वां सम्मन्तुमिच्छामि मानार्हा हि मतासि मे॥ २२॥ यस्माच्चैतन्मया प्राप्तं ज्ञानं वैशेषिकं पुरा। यस्य नान्यः प्रवक्तास्ति मोक्षं तमपि मे शृणु॥ २३॥ पराशरसगोत्रस्य वृद्धस्य सुमहात्मनः। भिक्षोः पञ्चशिखस्याहं शिष्यः परमसम्मतः॥ २४॥ साङ्ख्यज्ञाने च योगे च महीपालविधौ तथा। त्रिविधे मोक्षधर्मेऽस्मिन् गताध्वा छिन्नसंशयः॥ २५॥ स यथाशास्त्रदृष्टेन मार्गेणेह परिभ्रमन्। वार्षिकांश्चतुरो मासान् पुरा मयि सुखोषितः॥ २६॥ तेनाहं

शाङ्ग्यमुखेन सुदृष्टार्थेन तत्त्वतः। श्रावितस्त्रिविधं मोक्षं न च राज्याद्विचालितः ॥ २७ ॥ सोऽहं तामखिलां वृत्तिं त्रिविधां मोक्षसंहिताम्। मुक्तरागश्चराम्येकः पदे परमके स्थितः ॥२८॥ वैराग्यं पुनरेतस्य मोक्षस्य परमो विधिः। ज्ञानादेव च वैराग्यं जायते येन मुच्यते ॥ २९ ॥ ज्ञानेन कुरुते यत्नं यत्नेन प्राप्यते महत्। महद्द्वन्द्वप्रमोक्षाय सा सिद्धिर्या वयोतिगा ॥ ३० ॥ सेयं परमिका बुद्धिः प्राप्ता निर्द्वन्द्वता मया। इहैव गतमोहेन चरता मुक्तसङ्गिना ॥ ३१ ॥ यथा क्षेत्रं मृदूभूतमद्भिराप्लावितं यथा। जनयत्यङ्कुरं कर्म्म नृणां तद्वत् पुनर्भवम् ॥ ३२ ॥ यथा चोत्तापितं वीजं कपाले यत्र तत्र वा। प्राप्याप्यङ्कुरहेतुत्वमवीजत्वान्न जायते ॥ ३३ ॥ तद्वद्भगवता तेन शिखाप्रोक्तेन भिक्षुणा। ज्ञानं कृतमवीजं मे विषयेषु न जायते ॥ ३४ ॥ नाभिरज्यति कस्मिंश्चिन्नानर्थे न परिग्रहे। नाभिरज्यति चैतेषु व्यर्थत्वाद्रागरोषयोः ॥ ३५ ॥ यश्च मे दक्षिणं वाहुं चन्दनेन समुक्षयेत्। सव्यं वास्यापि यस्तक्षेत् समावेतावुभौ मम ॥ ३६ ॥ सुखी सोऽहमवाप्तार्थः समलोष्ट्राश्मकाञ्चनः। मुक्तसङ्गः स्थितो राज्ये विशिष्टोऽन्यैस्त्रिदण्डिभिः ॥ ३७ ॥ मोक्षे हि त्रिविधा निष्ठा दृष्टान्यैर्मोक्षवित्तमैः। ज्ञानं लोकोत्तरं यच्च सर्व्वत्यागश्च कर्म्मणाम् ॥ ३८ ॥ ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः। कर्म्मनिष्ठान्तथैवान्ये यतयः सूक्ष्मदर्शिनः ॥ ३९ ॥ प्रहायोभयमप्येवं ज्ञानं कर्म्म च केवलम्। तृतीयेयं समाख्याता निष्ठा तेन महात्मना ॥ ४० ॥ यमे च नियमे [illegible] परिग्रहे। माने दम्भे तथा स्नेहे सदृशास्ते कुटुम्बिभिः ॥ ४१ ॥ [illegible] स्त्यस्ति मोक्षो ज्ञानेन कस्यचित्। [illegible] परिग्रहे ॥४२॥ येन येन हि [illegible] कर्म्मणा। तत्तदालम्बते सर्व्वं द्रव्यं स्वार्थपरिग्रहे ॥ ४३ ॥ दोषदर्शी तु गार्हस्थ्ये यो व्रजत्याश्रमान्तरे।

त्वत्सृजन् परिग्रहांश्च सोऽपि सङ्गान्न मुच्यते ॥ ४४ ॥ आधिपत्ये तथा तुल्ये निग्रहानुग्रहात्मके। राजभिर्भिक्षुकास्तुल्या मुच्यन्ते केन हेतुना ॥ ४५ ॥ अथ सत्याधिपत्येऽपि ज्ञानेनैवेह केवलम्। मुच्यन्ते सर्वपापेभ्यो देहे परमिके स्थिताः ॥ ४६ ॥ काषायधारणं मौण्ड्यं त्रिविष्टब्धं कमण्डलुः। लिङ्गान्युत्पथभूतानि न मोक्षायेति मे मतिः ॥ ४७ ॥ यदि सत्यपि लिङ्गेऽस्मिन् ज्ञानमेवात्र कारणम्। निर्मोक्षायेह दुःखस्य लिङ्गमात्रं निरर्थकम् ॥ ४८ ॥ अथ वा दुःखशैथिल्यं वीक्ष्य लिङ्गे कृता मतिः। किन्तदेवार्थसामान्यं छत्रादिषु न लक्ष्यते ॥ ४९ ॥ आकिञ्चन्ये न मोक्षोऽस्ति किञ्चन्ये नास्ति बन्धनम्। किञ्चन्ये चेतरे चैव जन्तुर्ज्ञानेन मुच्यते ॥५०॥ तस्माद्धर्मार्थकामेषु तथा राज्यपरिग्रहे। बन्धनायतनेष्वेषु विद्ध्यबन्धे पदे स्थितम् ॥ ५१ ॥ राज्यैश्वर्यमयः पाशः स्नेहायतनबन्धनः। मोक्षाश्मनिशितेनेह छिन्नस्त्यागासिना मया ॥ ५२ ॥ सोऽहमेवङ्गतो मुक्तो जातास्थस्त्वयि भिक्षुके। अयथार्थं हि ते वर्णं वक्ष्यामि शृणु तन्मम ॥ ५३ ॥ सौकुमार्य्यन्तथा रूपं वपुरग्र्यन्तथा वयः। तवैतानि समस्तानि नियमश्चेति संशयः ॥ ५४ ॥ यच्चाप्यननुरूपन्ते लिङ्गस्यास्य विचेष्टितम्। मुक्तोऽयं स्यान्न वेति स्याद्धर्षितो मत्परिग्रहः ॥ ५५ ॥ न च कामसमायुक्ते युक्तेऽप्यस्ति त्रिदण्डकम्। न रक्ष्यते त्वया चेदं विमुक्तस्यास्ति गोपना ॥ ५६ ॥ मत्पक्षसंश्रयाच्चायं शृणु यस्ते व्यतिक्रमः। आश्रयन्त्याः स्वभावेन मम पूर्वं परिग्रहम् ॥ ५७ ॥ प्रवेशस्ते कृतः केन मम राष्ट्रे पुरेऽपि वा। कस्य वा सन्निकर्षात्त्वं प्रविष्टा हृदयं मम ॥५८॥ वर्णप्रवरमुख्यासि ब्राह्मणी क्षत्रियस्त्वहम्। नावयोरेकयोगोऽस्ति मा कृथा वर्णसङ्करम् ॥ ५९ ॥ वर्त्तसे मोक्षधर्मेण त्वं गार्हस्थ्येऽहमाश्रमे। अयञ्चापि सुकष्टस्ते द्वितीयोऽश्रमसङ्करः ॥ ६०॥ सगोत्रां वाऽसगोत्रां वा न वेद त्वां न वेत्थ माम्। सगोत्रमाविशन्त्यास्ते तृतीयो गोत्र-

सङ्करः॥ ६१॥ अथ जीवति ते भर्त्ता प्रोषितोऽप्यथ वा क्वचित्। अगम्या परभार्य्येति चतुर्थो धर्मसङ्करः॥ ६२॥ सा त्वमेतान्यकार्य्याणि कार्य्यापेक्षा व्यवस्यसि। अविज्ञानेन वा युक्ता मिथ्याज्ञानेन वा पुनः॥६३॥ अथ वापि स्वतन्त्रासि स्वदोषेणेह कर्हिचित्। यदि किञ्चित् श्रुतं तेऽस्ति सर्व्वं कृतमनर्थकम्॥ ६४॥ इदमन्यत्तृतीयन्ते भावस्पर्शविघातकम्। दुष्टाया लक्ष्यते लिङ्गं प्रवक्त्र्याः प्रकाशितम्॥ ६५॥ न मय्येवाभिसन्धिस्ते जयैषिण्या जये कृतः। येयं मत्परिषत् कृत्स्ना जेतुमिच्छसि तामपि॥ ६६॥ तथाह्येतस्ततश्च त्वं दृष्टिं स्वां प्रतिमुञ्चसि। मत्पक्षप्रतिघाताय स्वपक्षोद्भावनाय च॥६७॥ सा स्वेनामर्षजेन त्वमृद्धिमोहेन मोहिता। भूयः सृजासि योगांस्त्वं विषामृतमिवैकताम्॥ ६८॥ इच्छतोरव यो लाभः स्त्रीपुंसोरमृतोपमः। अलाभश्चापि रक्तस्य सोऽपि दोषो विषोपमः। मा स्प्राक्षीः साधु जानीष्व स्वशास्त्रमनुपालय॥ ६९॥ कृतेयं हि विजिज्ञासा मुक्तो नेति त्वया मम। एतत् सर्व्वं प्रतिच्छन्नं मयि नार्हसि गूहितुम्॥७०॥ सा यदि त्वं स्वकार्य्येण यद्यन्यस्य महीपतेः। तत्त्वं सत्प्रतिच्छन्ना मयि नार्हसि गूहितुम्॥ ७१॥ न राजानं मृषा गच्छेन्न द्विजातिं कथञ्चन। न स्त्रियं स्त्रीगुणोपेतां हन्युर्ह्येते मृषा गताः॥ ७२॥ राज्ञां हि बलमैश्वर्य्यं ब्रह्म ब्रह्मविदां बलम्। रूपयौवनसौभाग्यं स्त्रीणां बलमनुत्तमम्॥ ७३॥ अत एतैर्बलैरेव बलिनः स्वार्थमिच्छता। आर्ज्जवेनाभिगन्तव्या विनाशाय ह्यनार्ज्जवम्॥ ७४॥ सा त्वं जातिं श्रुतं वृत्तं भावं प्रकृतिमात्मनः। कृत्यमागमने चैव वक्तुमर्हसि तत्त्वतः॥ ७५॥

भीष्म उवाच। इत्येतैरसुखैर्वाक्यैरनुक्तैरसमञ्जसैः। प्रत्यादिष्टा नरेन्द्रेण सुलभा न व्यकम्पत॥ ७६॥ उक्तवाक्ये तु नृपतौ सुलभा चारुदर्शना। ततश्चारुतरं वाक्यं प्रचक्रामाथ भाषितुम्॥७७

सुलभोवाच। नवभिर्नवभिश्चैव दोषैर्वाग्बुद्धिदूषणैः। अपेत-

मुपपन्नार्थमष्टादशगुणान्वितम् ॥ ७८ ॥ सौक्ष्म्यं सांख्यक्रमौ चभौ निर्णयः सप्रयोजनः। पञ्चैतान्यर्थजातानि वाक्यमित्युच्यते नृप ॥ ७९ ॥ एषामेकैकशोऽर्थानां सौक्ष्म्यादीनां सुलक्षणम्। शृणु संसार्थभाषाणां पदार्थपदवाक्यतः ॥ ८० ॥ ज्ञानं ज्ञेयेषु भिन्नेषु यदा भेदेन वर्त्तते। तत्राधिवासिनी बुद्धिस्तत् सौक्ष्म्यमिति वर्त्तते ॥८१॥ दोषाणाञ्च गुणानाञ्च प्रमाणं प्रविभागतः। कञ्चिदर्थमभिप्रेत्य सा सांख्येत्युपधार्य्यताम् ॥ ८२ ॥ इदं पूर्वमिदं पश्चात् वक्तव्यं यद्विवक्षितम्। क्रमयोगन्तमप्याहुर्वाक्यं वाक्यविदो जनाः ॥ ८३ ॥ धर्मकामार्थमोक्षेषु प्रतिज्ञाय विशेषतः। इदं तदिति वाक्यान्ते प्रोच्यते स विनिर्णयः ॥ ८४ ॥ इच्छाद्वेषभवैर्दुःखैः प्रकर्षो यत्र जायते। तत्र या नृपते वृत्तिस्तत् प्रयोजनमिष्यते ॥ ८५॥ तान्येतानि यथोक्तानि सौक्ष्म्यादीनि जनाधिप। एकार्थसमवेतानि वाक्यं मम निशामय ॥ ८६ ॥ उपेतार्थमभिन्नार्थं न्यायवृत्तं न चाधिकम्। नाश्लक्ष्णं न च सन्दिग्धं वक्ष्यामि परमं ततः ॥ ८७ ॥ न गुर्वक्षरसंयुक्तं पराङ्मुखसुखं न च। नानृतं न त्रिवर्गेण विरुद्धं नाप्यसंस्कृतम् ॥८८॥ न न्यूनं कष्टशब्दं वा विक्रमाभिहितं न च। न शेषमनुकल्पेन निष्कारणमहेतुकम् ॥ ८९ ॥ कामात् क्रोधाद्भयाल्लोभाद्दैन्याच्चानार्य्यकात्तथा। ह्रीतोऽनुक्रोशतो मानान्न वक्ष्यामि कथञ्चन ॥ ९० ॥ वक्ता श्रोता च वाक्यञ्च यदाविकलं नृप। सममेति विवक्षायां तदा सोऽर्थः प्रकाशते ॥ ९१ ॥ वक्तव्ये तु यदा वक्ता श्रोतारमवमन्य वै। स्वार्थमाह परार्थन्तत्तदा वाक्यं न रोहति ॥ ९२ ॥ अथ यः स्वार्थमुत्सृज्य परार्थं प्राह मानवः। विशङ्का जायते तस्मिन वाक्यन्तदपि दोषवत् ॥ ९३ ॥ यस्तु वक्ता द्वयोरर्थमविरुद्धं प्रभाषते। श्रोतुश्चैवात्मनश्चैव स वक्ता नेतरो नृप ॥ ९४ ॥ तदर्थवदिदं वाक्यमुपेतं वाक्यसम्पदा। अविक्षिप्तमना राजन्नेकाग्रः श्रोतुमर्हसि। कासि कस्य कुतो वेति त्वयाह-

अभिचोदिता । तत्रोत्तरमिदं वाक्यं राजन्नेकमनाः शृणु ॥९५॥
[illegible] तथा राजन्
प्राणिनामिह सम्भवः ॥ ९६ ॥ शब्दः स्पर्शो रसो रूपं गन्धः पञ्चे-
न्द्रियाणि च । पृथगात्मान आत्मानं संश्लिष्टा जतुकाष्ठवत् ॥९७॥
न चैषां चोदना काचिदस्तीत्येष विनिश्चयः । एकैकस्येह विज्ञानं
नास्त्यात्मनि तथा परे ॥ ९८ ॥ न वेद चक्षुश्चक्षुष्ट्वं श्रोत्रं नात्मनि
वर्त्तते । तथैव व्यभिचारेण न वर्त्तन्ते परस्परम् ॥ ९९ ॥ संश्लि-
ष्टञ्च न जानन्ति यथाप इव पांशवः । बाह्यानन्यानपेक्षन्ते गुणां-
स्तानपि मे शृणु ॥ १०० ॥ रूपं चक्षुः प्रकाशश्च दर्शने हेतवस्त्रयः ।
यथैवात्र तथान्येषु ज्ञानज्ञेयेषु हेतवः ॥ १०१॥ ज्ञानज्ञेयान्तरे
तस्मिन् मनोनामापरो गुणः । विचारयति येनायं निश्चये साध्व-
साधुनी ॥ १०२ ॥ द्वादशस्त्वपरस्तत्र बुद्धिर्नाम गुणः स्मृतः । येन
संशयपूर्व्वेषु बोद्धव्येषु व्यवस्यति ॥ १०३ ॥ अथ द्वादशके तस्मिन्
सत्त्वं नामापरो गुणः । महासत्त्वोऽल्पसत्त्वो वा जन्तुर्येनानुमीयते
॥ १०४ ॥ अहं कर्त्तेति चाप्यन्यो गुणस्तत्र चतुर्दशः । ममायमिति
येनायं मन्यते न ममेति च ॥ १०५ ॥ अथ पञ्चदशो राजन् गुण-
स्तत्रापरः स्मृतः । पृथक्कलासमूहस्य सामग्र्यन्तदिहोच्यते ॥१०६॥
गुणस्त्वेवापरस्तत्र सङ्घात इव षोड़शः । प्रकृतिर्व्यक्तिरित्येतौ गुणौ
यस्मिन् समाश्रितौ ॥ १०७ ॥ सुखासुखे जरामृत्यू लाभालाभौ
प्रियाप्रिये । इति चैकोनविंशोऽयं द्वन्द्वयोग इति स्मृतः ॥ १०८ ॥
ऊर्द्ध्वञ्चैकोनविंशत्या कालो नामापरो गुणः । इतीमं विद्धि विंशत्या
भूतानां प्रभवाप्ययम् ॥ १०९ ॥ विंशकश्चैष सङ्घातो महाभूतानि
पञ्च च । सदसद्भावयोगौ तु गुणावन्यौ प्रकाशकौ ॥ ११० ॥ इत्येवं
विंशकस्यैव गुणाः सप्त च ये स्मृताः । विधिः शुक्रं बलञ्चेति त्रय
एते गुणाः परे ॥ १११ ॥ विंशतिर्द्दश चैवं हि गुणाः सङ्ख्यानतः
स्मृताः । समग्रा यत्र वर्त्तन्ते तच्छरीरमिति स्मृतम् ॥ ११२ ॥

अव्यक्तं प्रकृतिं त्वासां कलानां कश्चिदिच्छति। व्यक्तञ्चासां तथा चान्यः स्थानदर्शी प्रपश्यति ॥११३॥ अव्यक्तं यदि वा व्यक्तं द्वयी-मथ चतुष्टयीम्। प्रकृतिं सर्वभूतानां पश्यन्त्यध्यात्मचिन्तकाः ॥११४॥ सेयं प्रकृतिरव्यक्ता कलाभिर्व्यक्ततां गता। अहञ्च त्वञ्च राजेन्द्र ये चाप्यन्ये शरीरिणः ॥ ११५ ॥ बिन्दुन्यासादयोऽवस्थाः शुक्र-शोणितसम्भवाः। यासामेव निपातेन कललं नाम जायते ॥११६॥ कललाद्बुद्बुदोत्पत्तिः पेशी च बुद्बुदात् स्मृता। पेश्यास्त्वङ्गाभि-निर्वृत्तिर्नखरोमाणि चाङ्गतः ॥ ११७ ॥ सम्पूर्णे नवमे मासि जन्तोर्जातस्य मैथिल। जायते नामरूपत्वं स्त्री पुमान् वेति लिङ्गतः ॥ ११८ ॥ जातमात्रन्तु तद्रूपं दृष्ट्वा ताम्रनखाङ्गुलि। कौमारं रूपमापन्नं रूपतो नोपलभ्यते ॥ ११९ ॥ कौमाराद्यौवन-ञ्चापि स्थाविर्य्यञ्चापि यौवनात्। अनेन क्रमयोगेण पूर्वं पूर्वं न लभ्यते ॥१२०॥ कलानां पृथगर्थानां प्रतिभेदः क्षणे क्षणे। वर्त्तते सर्वभूतेषु सौक्ष्म्यात्तु न विभाव्यते ॥ १२१ ॥ न चैषामव्ययो राजन् लक्ष्यते प्रभवो न च। अवस्थायामवस्थायां दीपस्येवा-र्च्चिषो गतिः ॥ ११२ ॥ तथाप्येवं प्रभावस्य सदश्वस्येव धावतः। अजस्रं सर्वलोकस्य कः कुतो वा न वा कुतः ॥ १२३ ॥ कस्येदं कस्य वा नेदं कुतो वेदं न वा कुतः। सम्बन्धः कोऽस्ति भूतानां स्वैरप्यवयवैरिह ॥ १२४ ॥ यथादित्यान्मणेश्चापि वीरुद्भ्यश्चैव पावकः। जयन्त्येवं समुदयात् कलानामिव जन्तवः ॥ १२५ ॥ आत्मन्येवात्मनात्मानं यथा त्वमनुपश्यसि। एवमेवात्मनात्मानं यथा त्वमनुपश्यसि। एवमेवात्मनात्मानमन्यस्मिन् किं न पश्यसि ॥ १२६ ॥ यद्यात्मान परस्मिंश्च समतामध्यवस्यसि। अथ मां कासि कस्येति किमर्थमनुपृच्छसि ॥ १२७ ॥ इदं मे स्यादिदं नेति द्वन्द्वैर्मुक्तस्य मैथिल। कासि कस्य कुतो वेति वचनैः किं प्रयोजनम् ॥ १२८ ॥ रिपौ मित्रेऽथ मध्यस्थे विजये सन्धिविग्रहे। कृतवान् यो महीपालः

किं तस्मिन् मुक्तलक्षणम् ॥ १२९ ॥ त्रिवर्गं सप्तधा व्यक्तं यो न वेदेह कर्मसु । सङ्गवान् यस्त्रिवर्गेण किं तस्मिन्मुक्तलक्षणम् ॥ १३० ॥ प्रिये चैवाप्रिये चैव दुर्ब्बले बलवत्यपि । यस्य नास्ति समं चक्षुः किन्तस्मिन्मुक्तलक्षणम् ॥ १३१ ॥ तदयुक्तस्य ते मोक्षे योऽभिमानो भवेन्नृप । सुहृद्भिः सन्निवार्य्यस्तेऽविरक्तस्येव भेषजम् ॥ १३२ ॥ तानि तानि तु सञ्चिन्त्य सङ्गस्थानान्यरिन्दम । आत्मनात्मनि संपश्येत् किमन्यन्मुक्तलक्षणम् ॥ १३३ ॥ इमान्यन्यानि सूक्ष्माणि मोक्षमाश्रित्य कानिचित् । चतुरङ्गप्रवृत्तानि सङ्गस्थानानि मे शृणु ॥ १३४ ॥ य इमां पृथिवीं कृत्स्नामेकच्छत्रां प्रशास्ति ह । एक एव स वै राजा पुरमध्यावसत्युत ॥ १३५ ॥ तत्पुरे चैकमेवास्य गृहं यदधितिष्ठति । गृहे शयनमप्येकं निशायां यत्र लीयते ॥१३६॥ शय्यार्द्धन्तस्य चाप्यत्र स्त्रीपूर्व्वमधितिष्ठति । तदनेन प्रसङ्गेन फलेनैवेह युज्यते ॥ १३७ ॥ एवमेवोपभोगेषु भोजनाच्छादनेषु च । गुणेषु परिमेयेषु निग्रहानुग्रहं प्रति ॥ १३८ ॥ परतन्त्रः सदा राजा स्वल्पे सोऽपि प्रसज्जते । सन्धिविग्रहयोगे च कुतो राज्ञः स्वतन्त्रता ॥ १३९ ॥ स्त्रीषु क्रीड़ाविहारेषु नित्यमस्यास्वतन्त्रता । मन्त्रे चामात्यसमितौ कुतस्तस्य स्वतन्त्रता॥१४०॥ यदा त्वाज्ञापयत्यन्यांस्तदास्योक्ता स्वतन्त्रता । अवशः कार्य्यते तत्र तस्मिंस्तस्मिन् क्षणे स्थितः ॥ १४१ ॥ स्वप्नकामो न लभते स्वप्तुं कार्य्यार्थिभिर्ज्जनैः । शयने चाप्यनुज्ञातः सुप्त उत्थाप्यतेऽवशः॥१४२॥ स्नाह्यालभ पिब प्राश जुहुध्यग्नीन् यजेत्यपि । ब्रवीहि शृणु चापीति विवशः कार्य्यते परैः ॥१४३॥ अभिगम्याभिगम्यैवं याचन्ते सततं नराः । न चाप्युत्सहते दातुं वित्तरक्षी महाजनात् ॥१४४॥ दाने कोषक्षयोऽप्यस्य वैरं चास्याप्रयच्छतः । क्षणेनास्योपवर्त्तन्ते दोषा वैराग्यकारकाः ॥ १४५ ॥ प्राज्ञान् शूरांस्तथैवाढ्यानेकस्थानेऽपि शङ्कते । भयमप्यभये राज्ञो यैश्च नित्यमुपास्यते ॥ १४५ ॥

तथा चैते प्रदुष्यन्ति राजन् ये कीर्त्तिता मया । तथैवास्य भयन्तेभ्यो
जायते पश्य यादृशम् ॥ १३७ ॥ सर्वः स्वे स्वे गृहे राजा सर्वः स्वे
स्वे गृहे गृही । निग्रहानुग्रहान् कुर्वन् तुल्यो जनक राजभिः
॥ १४८ ॥ पुत्त्रदारास्तथैवात्मा कोषो मित्त्राणि सञ्चयाः । परैः
साधारणा ह्येते तैस्तैरेवास्य हेतुभिः ॥ १४९ ॥ हतो देशः पुरं
दग्धं प्रधान कुञ्जरो मृतः । लोकसाधारणेष्वेषु मिथ्याज्ञानेन
तप्यते ॥ १५० ॥ अमुक्तो मानसैर्दुःखैरिच्छाद्वेषभयोद्भवैः । शिरो-
रोगादिभीरोगैस्तथैवाभिनिमन्त्रिभिः ॥१५१ ॥ द्वन्द्वैस्तैस्तैरुपहतः
सर्वतः परिशङ्कितः । बहुप्रत्यर्थिकं राज्यमुपास्ते गणयन्निशाः
॥ १५२ ॥ तदल्पसुखमत्यर्थं बहुदुःखमसारवत् । तृणाग्निज्वलन-
प्रख्यं फेणबुद्बुदसन्निभम् ॥ १५३ ॥ को राज्यमभिपद्येत प्राप्य
चोपशमं लभेत् । ममेदमिति यच्चेदं पुरं राष्ट्रञ्च मन्यसे ॥१४५॥
बलं कोषममात्यांश्च कस्यैतानि न वा नृप । मित्त्रामात्यपुरं राष्ट्रं
दण्डः कोषो महीपतिः ॥१५५॥ सप्ताङ्गस्यास्य राजस्य त्रिदण्ड-
स्येव तिष्ठतः । अन्योन्यगुणयुक्तस्य कः केन गुणतोऽधिकः ॥१५६॥
तेषु तेषु हि कालेषु तत्तदङ्गं विशिष्यते । येन यत् सिध्यते कार्य्यं
तत् प्राधान्याय कल्पते ॥ १५७ ॥ सप्ताङ्गश्चैव सङ्घातस्त्रयश्चान्ये
नृपोत्तम । सम्भूय दशवर्गोऽयं भुङ्क्ते राज्यं हि राजवत् । यश्च
राजा महोत्साहः क्षत्रधर्मे रतो भवेत् ॥ १५८ ॥ स तुष्येद्दशभागेन
ततस्त्वन्यो दशावरैः । नास्त्यसाधारणो राजा नास्ति राज्य-
मराजकम् ॥ १५९ ॥ राज्येऽसति कुतो धर्मो धर्मेऽसति कुतः
परम् । योऽप्यत्र परमो धर्म्मः पवित्रं राजराज्ययोः ॥ १६० ॥
पृथिवी दक्षिणा यस्य सोऽश्वमेधेन युज्यते । साहमेतानि कर्माणि
राजदुःखानि मैथिल ॥ १६१ ॥ समर्थो [illegible]
सहस्रशः । [illegible] कुतः परपरिग्रहैः ॥ १६२ ॥ न
मामेवं विधां युक्तामीदृशं वक्तुमर्हसि । ननु नाम त्वया मोक्षः

कृत्स्नः पञ्चशिखात् श्रुतः ॥ १६३ ॥ सोपायः सोपनिषदः सोपा-
सङ्गः सनिश्चयः । तस्य ते मुक्तसङ्गस्य पाशानाक्रम्य तिष्ठतः ॥१६४॥
छत्रादिषु विशेषेषु पुनः सङ्गः कथं नृप । श्रुतं ते न श्रुतं मन्ये मृषा
वापि श्रुतं श्रुतम् ॥ १६५ ॥ अथ वा श्रुतसङ्काशं श्रुतमन्यत् श्रुतं
त्वया । अथापीमासु संज्ञासु लौकिकेषु प्रतिष्ठसे ॥ १६६ ॥ अभि-
षङ्गावरोधाभ्यां बद्धस्त्वं प्राकृतो यथा । सत्त्वेनानुप्रवेशो हि योऽयं
त्वयि कृतो मया ॥१६७॥ किं तवापकृतं तत्र यदि मुक्तोऽसि
सर्व्वशः । नियमो ह्येष वर्णेषु यतीनां वन्यवासिता ॥ १६८ ॥ शून्य-
मावेशयन्त्या च मया किं कस्य दूषितम् । न पाणिभ्यां न बाहुभ्यां
पादोरुभ्यां न चानघ । न गात्रावयवैरन्यैः स्पृशामि त्वां नरा-
धिप ॥ १६९ ॥ कुले महति जातेन ह्रीमता दीर्घदर्शिना । नैतत्
सदसि वक्तव्यं सद्वाऽसद्वा मिथः कृतम् ॥ १७०॥ ब्राह्मणा गुरव-
श्चेमे तथा मान्या गुरूत्तमाः । त्वञ्चाथ गुरुरप्येषामेवमन्योऽन्य-
गौरवम् ॥ १७१ ॥ तदेवमनुसंदृश्य वाच्यावाच्यं परीक्षता । स्त्री-
पुंसोः समवायोऽयं त्वया वाच्यो न संसदि ॥ १७२ ॥ यथा पुष्कर-
पर्णस्थं जलं तत् पर्णमस्पृशत् । तिष्ठत्यस्पृशती तद्वत् त्वयि वत्-
स्यामि मैथिल ॥ १७३ ॥ यदि वाप्यस्पृशन्त्या मे स्पर्शं जानासि
कञ्चन । ज्ञानं कृतमबीजन्ते कथन्तेनेह भिक्षुणा ॥ १७४ ॥ स
गार्हस्थ्याच्च्युतश्च त्वं मोक्षञ्चानाप्य दुर्विदम् । उभयोरन्तराले
वै वर्त्तसे मोक्षवार्त्तिकः ॥ १७५ ॥ न हि मुक्तस्य मुक्तेन ज्ञस्यैकत्व-
पृथक्त्वयोः । भावाभावसमायोगे जायते वर्णसङ्करः ॥ १७६ ॥
वर्णाश्रमाः पृथक्त्वेन दृष्टार्थस्यापृथक्त्विनः । नान्यदन्यदिति ज्ञात्वा
नान्यदन्यत्र वर्त्तते ॥ १७७ ॥ पाणौ कुण्डं तथा कुण्डे पयः पयसि
मक्षिका । आश्रिताश्रययोगेन पृथक्त्वेनाश्रिताः पुनः ॥ १७८ ॥ न
तु कुण्डे पयोभावः पयश्चापि न मक्षिका । स्वयमेवाप्नुवन्त्येते भावा
न तु पराश्रयम् ॥ १७९ ॥ पृथक्त्वादाश्रमाणान्तु वर्णान्यत्वे तथैव च ।

परस्परपृथक्त्वाच्च कथ्यन्ते वर्णसङ्करः ॥ १८० ॥ नास्मि वर्णोत्तमा जात्या न वैश्या नावरा तथा। तव राजन् सवर्णास्मि शुद्धयोनिरविप्लुता ॥ १८१ ॥ प्रधानो नाम राजर्षिर्व्यक्तन्ते श्रोत्रमागतः। कुले तस्य समुत्पन्नां सुलभां नाम विद्धि माम् ॥ १८२ ॥ द्रोणश्च शतशृङ्गश्च चक्रद्वारश्च पर्वतः। मम सत्रेषु पूर्व्वेषां चिता मघवता सह ॥१८३॥ साहं तस्मिन् कुले जाता भर्त्तर्य्यसति मद्विधे। विनीता मोक्षधर्म्मेषु चराम्येका मुनिव्रतम् ॥ १८४ ॥ नास्मि सत्रप्रतिच्छन्ना न परस्वापहारिणी। न धर्म्मसङ्करकरी स्वधर्म्मेऽस्मि धृतव्रता ॥ १८५ ॥ नास्थिरा स्वप्रतिज्ञायां नासमीक्ष्य प्रवादिनी। नासमीक्ष्यागता चेह त्वत् सकाशं जनाधिप ॥ १८६॥ मोक्षे ते भावितां बुद्धिं श्रुत्वाहं कुशलैषिणी। तव मोक्षस्य चाप्यस्य जिज्ञासार्थमिहागता ॥ १८७ ॥ न वर्गस्था ब्रवीम्येतत् स्वपक्षपरपक्षयोः। मुक्तो व्यायच्छते यस्तु शान्तौ यश्च न शाम्यति ॥१८८॥ यथा शून्ये पुरागारे भिक्षुरेकां निशां वसेत्। तथाहं त्वत्शरीरेऽस्मिन्निमां वत्स्यामि शर्व्वरीम् ॥ १८९ ॥ साहं मानप्रमादेन वागातिथ्येन चार्च्चिता। सुप्ता स्वशरणं प्रीता श्वो गमिष्यामि मैथिल ॥१९०॥

भीष्म उवाच। इत्येतानि स वाक्यानि हेतुमन्त्यर्थवन्ति च। श्रुत्वा नाधिजगौ राजा किञ्चिदन्यतः परम् ॥ १९१ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि सुलभाजनकसम्वादे विंशत्यधिकत्रिशततोऽध्यायः ॥ ३२० ॥

---

युधिष्ठिर उवाच। कथं निर्व्वेदमापन्नः शुको वैयासकिः पुरा। एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ १ ॥ अव्यक्ताव्यक्ततत्त्वानां निश्चयं बुद्धिनिश्चयम्। वक्तुमर्हसि कौरव्य देवस्याजस्य या कृतिः ॥ २ ॥

भीष्म उवाच। प्राकृतेन प्रवृत्तेन चरन्तमकुतो भयम्।
अध्याप्य कृत्स्नं स्वाध्यायमन्वशाद्वै पिता सुतम् ॥ ३ ॥

व्यास उवाच। धर्मं पुत्र निषेवस्व सुतीक्ष्णौ च हिमातपौ।
क्षुत्पिपासे च वायुञ्च जय नित्यं जितेन्द्रियः ॥ ४ ॥ सत्यमार्ज्जव-
मक्रोधमनसूयां दमं तपः। अहिंसाञ्चानृशंस्यञ्च विधिवत् परि-
पालय ॥ ५ ॥ सत्ये तिष्ठ रतो धर्मे हित्वा सर्व्वमनार्ज्जवम्।
देवतातिथिशेषेण यात्रां प्राणस्य संलिह ॥ ६ ॥ फेनमात्रोपमे
देहे जीवे शकुनिवत् स्थिते। अनित्ये प्रियसंवासे कथं स्वपिषि
पुत्रक ॥ ७ ॥ अप्रमत्तेषु जाग्रत्सु नित्ययुक्तेषु शत्रुषु। अन्तरं
लिप्समानेषु बालस्त्वं नावबुध्यसे ॥ ८ ॥ अहःसु गच्छमानेषु
क्षीयमाणे तथायुषि। जीविते लिख्यमाने च किमुत्थाय न धावसि
॥ ९ ॥ ऐहलौकिकमीहन्ते मांसशोणितवर्द्धनम्। पारलौकिक-
कार्य्येषु प्रसुप्ता भृशनास्तिकाः ॥ १० ॥ धर्माय येऽभ्यसूयन्ति बुद्धि-
मोहान्विता नराः। अपथा गच्छतान्तेषामनुयातापि पीड्यते॥११॥
ये तु तुष्टाः श्रुतिपरा महात्मानो महाबलाः। धर्म्यं पन्थान-
मारूढ़ास्तानुपास्स्व च पृच्छ च ॥ १२ ॥ उपधार्य्य मतन्तेषां
बुधानां धर्म्मदर्शिनाम्। नियच्छ परया बुद्ध्या चित्तमुत्पथगामि
वै ॥ १३ ॥ अद्यकालिकया बुद्ध्या दूरे श्व इति निर्भयाः। सर्व्व-
भक्षा न पश्यन्ति कर्म्मभूमिमचेतसः ॥ १४ ॥ धर्म्मनिःश्रेणिमास्थाय
किञ्चित् किञ्चित् समारुह। कोषकारवदात्मानं वेष्टयन्नानुबुध्यसे
॥ १५ ॥ नास्तिकं भिन्नमर्य्यादं कूलपातमिव स्थितम्। वामतः
कुरु विस्रब्धो नरं वेणुमिवोद्धतम् ॥ १६ ॥ कामं क्रोधञ्च मृत्युञ्च
पञ्चेन्द्रियजलां नदीम्। नावं धृतिमयीं कृत्वा जन्मदुर्गाणि सन्तर
॥ १७ ॥ मृत्युनाभ्याहते लोके जरया परिपीड़िते। अमोघासु
पतन्तीषु धर्म्मपोतेन सन्तर ॥ १८ ॥ तिष्ठन्तञ्च शयानञ्च मृत्यु-
रन्वेषते यदा। निर्वृतिं लभते कस्मादकस्मान्मृत्युनाशितः ॥ १९ ॥

अचिन्त्यानकमेवैनं कामानामवितृप्तकम् । वृकीवोरणमासाद्य मृत्यु-
रादाय गच्छति ॥ २० ॥ क्रमशः सञ्चितशिखो धर्म्मबुद्धिमयो
महान् । अन्धकारे प्रवेष्टव्यं दीपो यत्नेन धार्य्यताम् ॥ २१ ॥
सम्पतन् देहजालानि कदाचिदिह मानुषे । ब्राह्मण्यं लभते जन्तु-
स्तत् पुत्र परिपालय ॥२२॥ ब्राह्मणस्य तु देहोऽयं न कामार्थाय
जायते । इह क्लेशाय तपसे प्रेत्य त्वनुपमं सुखम् ॥२३॥ ब्राह्मण्यं
बहुभिरवाप्यते तपोभिस्तल्लब्ध्वा न रतिपरेण हेलितव्यम् । स्वाध्याये
तपसि दमे च नित्ययुक्तः क्षेमार्थी कुशलपरः सदा यतस्व ॥२४ ॥
अव्यक्तप्रकृतिरयं कलाशरीरः सूक्ष्मात्मा क्षणत्रुटिशो निमेषरोमा ।
सम्यास्यः समबलशुक्लकृष्णनेत्रो मासाङ्गो द्रवति वयोहयो नराणाम्
॥ २५ ॥ तं दृष्ट्वा प्रसृतमजस्रमुग्रवेगं गच्छन्तं सततमिहानवेक्ष्य-
माणम् । चक्षुस्ते यदि न परप्रणेतृनेयं धर्मे ते भवतु मनः परं
नियम्य ॥ २६ ॥ ये चात्र प्रचलितधर्मकामवृत्ताः क्रोशन्तः सतत-
मनिष्टसम्प्रयोगाः । क्लिश्यन्तः परिगतवेदनाशरीरा बह्वीभिः सुभृश-
मधर्मकारणाभिः ॥ २७ ॥ राजा सदा धर्म्मपरः शुभाशुभस्य गोप्ता
समीक्ष्य सुकृतिनां दधाति लोकान् । बहुविधमपि चरति प्रवि-
शति सुखमनुपगतं निरवद्यम् ॥२८॥ श्वानो भीषणकाया अयो-
मुखानि वयांसि बलगृध्रकुलं पक्षिणाञ्च सङ्घाः । नरकदने रुधि-
रपा गुरुवचननुदमुपरतं विशन्त्यसन्तः ॥ २९ ॥ मर्य्यादा नियताः
स्वयम्भुवा य इहेमाः प्रभिनत्ति दशगुणा मनोऽनुगत्वात् । निवसति
भृशमसुखं पितृविषयविपिनमवगाह्य स पापः ॥ ३० ॥ यो लुब्धः
सुभृशं प्रियानृतश्च मनुष्य सततनिकृतिवञ्चनाभिरतिः स्यात् । उप-
निधिभिरसुखकृत् स परमनिरयगो भृशमसुखमनुभवति दुष्कृत-
कर्मा ॥ ३१ ॥ उष्णां वैतरणीं महानदीमवगाढोऽसिपत्रवनभि-
न्नगात्रः । परशुवनशयो निपतितो वसति च महानिरये भृशार्त्तः
॥ ३२ ॥ महापदानि कत्थसे न चाप्यवेक्षसे परम् । चिरस्य मृत्यु-

कारिकामनागतां न बुध्यसे ॥ ३३ ॥ प्रयायतां किमास्यते समु-
त्थितं महद्भयम्। अतिप्रमाथि दारुणं सुखस्य संविधीयताम्॥३४॥
पुरा मृतः प्रणीयसे यमस्य राजशासनात्। त्वमन्तकाय दारुणैः
प्रयत्नमार्जवे कुरु ॥ ३५ ॥ पुरा समूलबान्धवं प्रभुर्हरत्यदुःखवित्।
तवेह जीवितं यमो न चास्ति तस्य वारकः ॥ ३६ ॥ पुराभिवाति
मारुतो यमस्य यः पुरःसरः। पुरैक एव नीयसे कुरुष्व साम्प-
रायिकम् ॥ ३७ ॥ पुरा स हिक्क एव ते प्रवाति मारुतोऽन्तकः।
पुरा च विभ्रमन्ति ते दिशो महाभयागमे ॥ ३८ ॥ स्मृतिश्च सं-
निरुध्यते पुरा तवेह पुत्रक। समाकुलस्य गच्छतः समाधिमुत्तमं
कुरु ॥ ३९ ॥ शुभाशुभे पुराकृते प्रमादकर्मविप्लुते। स्मरन् पुरा
न तप्यसे निधत्स्व केवलं निधिम् ॥ ४० ॥ पुरा जरा कलेवरं
विजर्ज्जरीकरोति ते। बलाङ्गरूपहारिणी निधत्स्व केवलं निधिम्
॥ ४१ ॥ पुरा शरीरमन्तको भिनत्ति रोगसायकैः। प्रसह्य
जीवितक्षये तपो महत् समाचर ॥ ४२ ॥ पुरा वृका भयङ्करा
मनुष्यदेहगोचराः। अभिद्रवन्ति सर्वतो यतस्व पुण्यशीलने॥४३॥
पुरान्धकारमेकको नु पश्यसि त्वरस्व वै। पुरा हिरण्मयान्नगा-
न्निरीक्षसेऽद्रिमूर्द्धनि ॥ ४४ ॥ पुरा कुसङ्गतानि ते सुहृन्मुखाश्च
शत्रवः। विचालयन्ति दर्शनात् घटस्व पुत्र यत् परम ॥ ४५ ॥
धनस्य यस्य राजतो भयं न चास्ति चौरतः। मृतञ्च यन्न मुञ्चति
समर्ज्जयस्व तद्धनम् ॥ ४६ ॥ न तत्र संविभज्यते स्वकर्मभिः पर-
स्परम्। यदेव यस्य यौतुकं तदेव तत्र सोऽश्नुते ॥ ४७ ॥ परत्र
येन जीव्यते तदेव पुत्र दीयताम्। धनं यदक्षरं ध्रुवं समर्ज्जयस्व
तत् स्वयम् ॥ ४८ ॥ न यावदेव पच्यते महाजनस्य यावकम्।
अपक्व एव यावके पुरा प्रलीयसे त्वर ॥ ४९ ॥ न मातृपुत्रबान्धवा
न संस्तुतः प्रियो जनः। अनुव्रजन्ति सङ्कटे व्रजन्तमेकपातिनम्
॥ ५० ॥ यदेव कर्म केवलं पुराकृतं शुभाशुभम्। तदेव पुत्र

सार्थिकं भवत्यमुत्र गच्छतः ॥ ५१ ॥ हिरण्यरत्नसञ्चयाः शुभा-
शुभेन सञ्चिताः । न तस्य देहसङ्क्षये भवन्ति कार्य्यसाधकाः ॥५२॥
परत्र गामिकस्य ते कृताकृतस्य कर्मणः । न साक्षि आत्मना समो
नृणामिहास्ति कश्चन ॥ ५३॥ मनुष्यदेहशून्यकं भवत्यमुत्र गच्छतः।
प्रविश्य बुद्धिचक्षुषा प्रदृश्यते हि सर्वशः ॥ ५४ ॥ इहाग्निसूर्य्य-
वायव शरीरमाश्रितास्त्रयः । त एव तस्य साक्षिणो भवन्ति
धर्मदर्शिनः ॥ ५५ ॥ अहर्निशेषु सर्वतः स्पृशत्सु सर्वचारिषु ।
प्रकाशगूढ़वृत्तिषु स्वधर्ममेव पालय ॥ ५६ ॥ अनेकपारिपान्थिके
विरूपरौद्रमाक्षिके । स्वमेव कर्म रक्ष्यतां स्वकर्म तत्र गच्छति
॥ ५७ ॥ न तत्र संविभज्यते स्वकर्मणा परस्परम् । तथा कृतं
स्वकर्मजं तदेव भुज्यते फलम् ॥ ५८ ॥ यथाप्सरोगणा फलं
सुखं महर्षिभिः सह । तथाप्नुवन्ति कर्मजं विमानकामगामिनः
॥ ५९ ॥ यथेह यत् कृतं शुभं विपाप्मभिः कृतात्मभिः । तदाप्नुवन्ति
मानवास्तथा विशुद्धयोनयः ॥ ६० ॥ प्रजापतेः सलोकतां बृहस्पतेः
शतक्रतोः । व्रजन्ति ते परां गतिं गृहस्थधर्मसेतुभिः ॥ ६१ ॥
सहस्रशोऽप्यनेकशः प्रवक्तुमुत्सहाम ते । अबुद्धिमोहनं पुनः प्रभु-
र्निनाय पावकः ॥ ६२ ॥ गता त्रिरष्टवर्षता ध्रुवोऽसि पञ्चविंशकः ।
कुरुष्व धर्मसञ्चयं वयो हि तेऽतिवर्त्तते ॥ ६३ ॥ पुरा करोति
सोऽन्तकः प्रमादगोऽसुखां चमूम् । यथा गृहीतमुत्थितस्त्वरस्व
धर्मपालने ॥ ६४ ॥ यथा त्वमेव पृष्ठतस्त्वमग्रतो गमिष्यसि । तथा
गतिं गमिष्यतः किमात्मना परेण वा ॥ ६५ ॥ यदेकपातिनां
सतां भवत्यमुत्र गच्छताम् । भयेषु साम्परायिकं निधत्स्व केवलं
निधिम् ॥ ६६ ॥ सकूलमूलबान्धवं प्रभुर्हरत्यसङ्गवान् । न सन्ति
यस्य वारकाः कुरुष्व धर्मसन्निधिम् ॥ ६७ ॥ इदं निदर्शनं मया
तवेह पुत्र साम्प्रतम् । स्वदर्शनानुमानतः प्रवर्णितं कुरुष्व तत्
॥ ६५ ॥ दधाति यः स्वकर्मणा ददाति यस्य कस्यचित् । अबुद्धि-

मोहजैर्गुणैः स एक एव युज्यते ॥ ६९ ॥ श्रुतं समस्तमश्नुते प्रकुर्वतः शुभाः क्रियाः। तदेतदर्थदर्शनं कृतज्ञमर्थसंहितम् ॥७०॥ निवन्धनी रज्जुरेषा या ग्रामे वसतो रतिः। छित्त्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥ ७१ ॥ किन्ते धनेन किं वन्धुभिस्ते किन्ते पुत्रैः पुत्रक यो मरिष्यसि। आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताश्च सर्व्वे ॥ ७२ ॥ श्वः कार्य्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्। न हि प्रतीयते मृत्युः कृतं वास्य न वा कृतम् ॥ ७३ ॥ अनुगम्य विनाशान्ते निवर्त्तन्ते ह बान्धवाः। अग्नौ प्रक्षिप्य पुरुषं ज्ञातयः सुहृदस्तथा ॥ ७४ ॥ नास्तिकान्निरनुक्रोशान्नरान् पापमते स्थितात्। वामतः कुरु विस्रब्धं परं प्रेप्सुरतन्द्रितः ॥ ७५ ॥ एवमभ्याहते लोके कालेनोपनिपीड़िते। सुमहद्धैर्य्यमालम्ब्य धर्मं सर्वात्मना कुरु ॥ ७६ ॥ अथेमं दर्शनोपायं सम्यग्यो वेत्ति मानवः। सम्यक् स्वधर्मं कृत्वेह परत्र सुखमश्नुते ॥ ७७ ॥ न देहभेदे मरणं विजानतां न च प्रणाशः स्वनुपालिते पथि। धर्मं हि यो वर्द्धयते स पण्डितो य एव धर्माच्च्यवते स मुह्यति ॥७८॥ प्रयुक्तयोः कर्मपथि स्वकर्मणोः फलं प्रयोक्ता लभते यथा कृतम्। निहीनकर्मा निरयं प्रपद्यते त्रिपिष्टपं गच्छति धर्मपारगः ॥७९॥ सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम्। तथात्मानं समादध्यात् भ्रश्येत न पुनर्यथा ॥ ८० ॥ यस्य नोत्क्रामति मतिः स्वर्गमार्गानुसारिणी। तमाहुः पुण्यकर्माणमशोच्यं पुत्र बान्धवैः ॥ ८१ ॥ यस्य नोपहता बुद्धिर्निश्चये ह्यवलम्बते। स्वर्गे कृतावकाशस्य नास्ति तस्य महद्भयम् ॥ ८२ ॥ तपोवनेषु ये जातास्तत्रैव निधनं गताः। तेषामल्पतरो धर्मः कामभोगानजानताम् ॥ ८३ ॥ यस्तु भोगान् परित्यज्य शरीरेण तपश्चरेत्। न तेन किञ्चिन्न प्राप्तं तन्मे बहुमतं फलम् ॥ ८४ ॥ मातापितृसहस्राणि पुत्रदारशतानि च। अनागतान्यतीतानि कस्य ते कस्य वा

वयम् ॥८५॥ अहमेको न मे कश्चिन्नाहमन्यस्य कस्यचित्। न तं पश्यामि यस्याहं तं न पश्यामि यो मम ॥ ८६ ॥ न तेषां भवता कार्य्यं न कार्य्यैस्तव तैरपि। स्वकृतैस्तानि जातानि भवांश्चैव गमिष्यति ॥ ८७ ॥ इह लोके हि धनिनां स्वजनः स्वजनायते। स्वजनस्तु दरिद्राणां जीवतामपि नश्यति ॥ ८८ ॥ संचिनोत्यशुभं कर्म्म कलत्रापेक्षया नरः। ततः क्लेशमवाप्नोति परत्रेह तथैव च ॥८९॥ पश्यति छिन्नभूतं हि जीवलोकं स्वकर्मणा। तत् कुरुष्व तथा पुत्र कृत्स्नं यत् समुदाहृतम् ॥ ९० ॥ तदेतत् संप्रदृश्यैव कर्मभूमिं प्रपश्यता। शुभान्याचरितव्यानि परलोकमभीप्सता ॥९१॥ मासर्त्तुसंज्ञापरिवर्त्तकेन सूर्य्याग्निना रात्रिदिवेन्धनेन। स्वकर्मनिष्ठाफलसाक्षिकेण भूतानि कालः पचति प्रसह्य ॥ ९२ ॥ धनेन किं यन्न ददाति नाश्नुते बलेन किं येन रिपुं न बाधते। श्रुतेन किं येन न धर्ममाचरेत् किमात्मना यो न जितेन्द्रियो वशी ॥ ९३ ॥

भीष्म उवाच। इदं द्वैपायनवचो हितमुक्तं निशम्य तु। शुको गतः परित्यज्य पितरं मोक्षदैशिकम् ॥ ९४ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि पावकाध्ययनं नाम
एकविंशत्यधिकत्रिशततोऽध्यायः ॥ ३२१ ॥

---

युधिष्ठिर उवाच। यदस्ति दत्तमिष्टं वा तपस्तप्तं तथैव च। गुरूणां वापि शुश्रूषा तन्मे ब्रूहि पितामह ॥ १ ॥

भीष्म उवाच। आत्मनानर्थयुक्तेन पापे निविशते मनः। स्वकर्म्मकलुषं कृत्वा क्लेशे महति धीयते ॥ २ ॥ दुर्भिक्षादेव दुर्भिक्षं क्लेशात् क्लेशं भयाद्भयम्। मृतेभ्यः प्रमृता यान्ति दरिद्राः पापकर्म्मिणः ॥ ३ ॥ उत्सवादुत्सवं यान्ति स्वर्गात् स्वर्गं सुखात् सुखम्। श्रद्दधानाश्च दान्ताश्च धनस्थाः शुभकारिणः ॥ ४ ॥ व्यालकुञ्जर-

दुर्गेषु सर्पचोरभयेषु च। हस्तावापेन गच्छन्ति नास्तिकाः किमतः परम् ॥ ५ ॥ प्रियदेवातिथेयाश्च वदान्याः प्रियसाधवः। क्षेम्यमात्मवतां मार्गमास्थिता दत्तदक्षिणाः ॥ ६ ॥ पुलाका इव धान्येषु पूत्यण्डा इव पक्षिषु। तद्विधास्ते मनुष्येषु येषां धर्मो न कारणम् ॥ ७ ॥ सुशीघ्रमपि धावन्तं विधानमनुधावति। शेते सह शयानेन येन येन यथाकृतम् ॥ ८ ॥ पापं तिष्ठति तिष्ठन्तं धावन्तमनुधावति। करोति कुर्व्वतः कर्म छायेवानुविधीयते ॥ ९ ॥ येन येन यथा यद्वयत् पुरा कर्म्मसु निश्चितम्। तत्तदेवोत्तरं भुङ्क्ते नित्यं विहितमात्मना ॥ १० ॥ समानकर्म्मविक्षेपविधानपरिरक्षणम्। भूतग्राममिमं कालः समन्तादपकर्षति ॥ ११ ॥ अचोद्यमानानि यथा पुष्पाणि च फलानि च। स्वं कालं नातिवर्त्तन्ते तथा कर्म पुरा कृतम् ॥ १२ ॥ सम्मानश्चावमानश्च लाभोऽलाभः क्षयाव्ययौ। प्रवृत्ता न निवर्त्तन्ते निधनान्ताः पदे पदे ॥१३॥ आत्मना विहितं दुःखमात्मना विहितं सुखम्। गर्भशय्यामुपादाय भजते पूर्व्वदैहिकम् ॥ १४ ॥ बालो युवा वा वृद्धश्च यत् करोति शुभाशुभम्। तस्यां तस्यामवस्थायां भुङ्क्ते जन्मनि जन्मनि ॥ १५ ॥ यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्। तथा पूर्व्वकृतं कर्म कर्त्तारमनुगच्छति ॥ १६ ॥ मलिनं हि यथा वस्त्रं पश्चात् शुद्ध्यति वारिणा। उपवासैः प्रतप्तानां दीर्घं सुखमनन्तकम् ॥ १७ ॥ दीर्घकालेन तपसा सेवितेन महामते। धर्म्मनिर्धूतपापानां संसिध्यन्ते मनोरथाः ॥ १८ ॥ शकुनानामिवाकाशे मत्स्यानामिव चोदके। पदं यथा न दृश्येत तथा पुण्यकृतां गतिः ॥ १९ ॥ अलमन्यैरुपालब्धैः कीर्त्तितैश्च व्यतिक्रमैः। पेशलञ्चानुरूपञ्च कर्त्तव्यं हितमात्मनः ॥ २० ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि कामसूलिको नाम द्वाविंशत्यधिकत्रिशततोऽध्यायः ॥ ३२२ ॥

युधिष्ठिर उवाच। कथं व्यासस्य धर्मात्मा शुकोयज्ञे महा-
तपाः। सिद्धिञ्च परमां प्राप्तस्तन्मे ब्रूहि पितामह ॥ १ ॥ कस्या-
ञ्चोत्पादयामास शुकं व्यासस्तपोधनः। न ह्यस्य जननीं विद्म
जन्म चाग्र्यं महात्मनः ॥ २ ॥ कथञ्च वालस्य सतः सूक्ष्मज्ञाने
गता मतिः। यथा नान्यस्य लोकेऽस्मिन् द्वितीयस्येह कस्यचित्
॥ ३ ॥ एतदिच्छाम्यहं श्रोतुं विस्तरेण महामते। न हि मे
तृप्तिरस्तीह शृण्वतोऽमृतमुत्तमम् ॥ ४ ॥ माहात्म्यमात्मयोगञ्च
विज्ञानञ्च शुकस्य ह। यथावदनुपूर्व्वेण तन्मे ब्रूहि पितामह॥५॥

भीष्म उवाच। न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ ६ ॥ तपोमूलमिदं
सर्वं यन्मां पृच्छसि पाण्डवः। तदिन्द्रियाणि संयम्य तपो भवति
नान्यथा ॥ ७ ॥ इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्। सं-
नियम्य तु तान्येव सिद्धिमाप्नोति मानवः ॥ ८ ॥ अश्वमेधसहस्रस्य
वाजपेयशतस्य च। योगस्य कलया तात न तुल्यं विद्यते फलम्
॥ ९ ॥ अत्र ते वर्त्तयिष्यामि जन्मयोगफलं यथा। शुकस्याग्र्यां
गतिञ्चैव दुर्विदामकृतात्मभिः ॥ १० ॥ मेरुशृङ्गे किल पुरा कर्णि-
कारवनायुते। विजहार महादेवो भीमैर्भूतगणैर्वृतः ॥ ११ ॥
शैलराजसुता चैव देवी तत्राभवत् पुरा। तत्र दिव्यं तपस्तेपे
कृष्णद्वैपायनस्तदा ॥ १२॥ योगेनात्मानमाविश्य योगधर्मपरायणः।
धारयन् स तपस्तेपे पुत्रार्थं कुरुसत्तम ॥ १३ ॥ अग्नेर्भूमेरपां
वायोरन्तरीक्षस्य वा विभो। धैर्य्येण संमितः पुत्रो मम भूया-
दिति स्म ह ॥ १४ ॥ संकल्पेनाथ योगेन दुष्प्रापमकृतात्मभिः।
वरयामास देवेशमास्थितस्तप उत्तमम् ॥ १५ ॥ अतिष्ठन्मारुता-
हारः शतं किल समाः प्रभुः। आराधयन्महादेवं वहुरूपमुमा-
पतिम् ॥ १६ ॥ तत्र ब्रह्मर्षयश्चैव सर्वे राजर्षयस्तथा। लोक-
पालाश्च लोकेशं साध्याश्च वहुभिः सह ॥ १७॥ आदित्याश्चैव

रुद्राश्च दिवाकरनिशाकरौ । वसवो मरुतश्चैव सागराः सरित-
स्तथा ॥ १८ ॥ अश्विनौ देवगन्धर्वास्तथा नारदपर्वतौ । विश्वा-
वसुश्च गन्धर्वः सिद्धाश्चाप्सरसस्तथा ॥ १९ ॥ तत्र रुद्रो महादेवः
कर्णिकारमयीं शुभाम् । धारयाणः स्रजं भाति ज्योत्स्नामिव
निशाकरः ॥ २० ॥ तस्मिन् दिव्ये वने रम्ये देवदेवर्षिसङ्कुले ।
आस्थितः परमं योगमृषिः पुत्रार्थमच्युतः ॥ २१ ॥ न चास्य
हीयते प्राणो न ग्लानिरुपजायते । त्रयाणामपि लोकानां तद्-
द्भुतमिवाभवत् ॥ २२ ॥ जटाश्च तेजसा तस्य वैश्वानरशिखो-
पमाः । प्रज्वलन्त्यः स्म दृश्यन्ते युक्तस्यामिततेजसः ॥ २३ ॥ मार्क-
ण्डेयो हि भगवानेतदाख्यातवान्मम । स देवचरितानीह कथया-
मास मे सदा ॥२४॥ एता अद्यापि कृष्णस्य तपसा तेन दीपिताः ।
अग्निवर्णा जटास्तात प्रकाशन्ते महात्मनः ॥ २५ ॥ एवम्विधेन
तपसा तस्य भक्त्या च भारत । महेश्वरः प्रसन्नात्मा चकार मनसा
मतिम् ॥ २३ ॥ उवाच चैनं भगवांस्त्र्यम्बकः प्रहसन्निव । एव-
म्विधस्ते तनयो द्वैपायन भविष्यति ॥ २७ ॥ यथा ह्यग्निर्यथा
वायुर्यथा भूमिर्यथा जलम् । यथा च खं तथा शुद्धो भविता ते
सुतो महान् ॥ २८॥ तद्भावभावी तद्बुद्धिस्तदात्मा तदपाश्रयः ।
तेजसावृत्य लोकांस्त्रीन् यशः प्राप्स्यति ते सुतः ॥ २९ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि शुकोत्पत्तौ
त्रयोविंशत्यधिकत्रिशततोऽध्यायः ॥ ३२३ ॥

---

भीष्म उवाच । स लब्ध्वा परमं देवाद्वरं सत्यवतीसुतः ।
अरणी सहिते गृह्य ममन्थाग्निचिकीर्षया ॥ १ ॥ अथ रूपं परं
राजन् बिभ्रतीं स्वेन तेजसा । घृताचीं नामाप्सरसमपश्यद्भगवा-
नृषिः ॥ २ ॥ ऋषिरप्सरसं दृष्ट्वा सहसा काममोहितः । अभव-

भगवान् व्यासो वने तस्मिन् युधिष्ठिर ॥ ३ ॥ सा च दृष्ट्वा तदा
व्यासं कामसम्विग्नमानसम्। शुकीभूत्वा महाराज घृताची समु-
पागमत् ॥ ४ ॥ स तामप्सरसं दृष्ट्वा रूपेणान्येन संवृताम्।
शरीरजेनानुगतः सर्वगात्रातिगेन ह ॥ ५ ॥ स तु धैर्येण महता
निगृह्णन् हृच्छयं मुनिः। न शशाक नियन्तुन्तत् व्यासः प्रविसृतं
मनः। भावित्वाच्चैव भावस्य घृताच्या वपुषा हृतः ॥ ६ ॥ यत्ना-
न्नियच्छतस्तस्य मुनेरग्निचिकीर्षया। अरण्यामेव सहसा तस्य
शुक्रमवापतत् ॥ ७ ॥ सोऽविशङ्केन मनसा तथैव द्विजसत्तमः।
अरणीं ममन्थ ब्रह्मर्षिस्तस्यां यज्ञे शुको नृप ॥ ८ ॥ शुक्रे निर्म-
थ्यमाने स शुको जज्ञे महातपाः। परमर्षिर्महायोगी अरणी-
गर्भसम्भवः ॥ ९ ॥ यथाध्वरे समिद्धोऽग्निर्भाति हव्यमुदावहन्।
तथा रूपः शुको जज्ञे प्रज्वलन्निव तेजसा ॥ १० ॥ बिभ्रत् पितुश्च
कौरव्य रूपवर्णमनुत्तमम्। बभौ तदा भावितात्मा विधूम इव
पावकः ॥ ११ ॥ तं गङ्गा सरितां श्रेष्ठा मेरुपृष्ठे जनेश्वर। स्वरू-
पिणी तदाभ्येत्य स्नापयामास वारिणा ॥ १२ ॥ अन्तरीक्षाच्च
कौरव्य दण्डः कृष्णाजिनञ्च ह। पपात भूमिं राजेन्द्र शुकस्यार्थे
महात्मनः ॥ १३ ॥ जेगीयन्ते स्म गन्धर्वा ननृतुश्चाप्सरो गणाः।
देवदुन्दुभयश्चैव प्रावाद्यन्त महास्वनाः ॥ १४ ॥ विश्वावसुश्च
गन्धर्वस्तथा तुम्बुरुनारदौ। हाहाहूहूश्च गन्धर्वौ तुष्टुवुः शुक-
सम्भवम् ॥ १५ ॥ तत्र शक्रपुरोगाश्च लोकपालाः समागताः।
देवा देवर्षयश्चैव तथा ब्रह्मर्षयोऽपि च ॥ १३ ॥ दिव्यानि सर्व-
पुष्पाणि प्रववर्ष च मारुतः ॥ १७ ॥ जङ्गमाजङ्गमाश्चैव प्रहृष्टम-
भवज्जगत् ॥१८॥ तं महात्मा स्वयं प्रीत्या देव्या सह महाद्युतिः।
जातमात्रं मुनेः पुत्रं विधिनोपानयत्तदा ॥ १९ ॥ तस्य देवेश्वरः
शक्रो दिव्यमद्भुतदर्शनम्। ददौ कमण्डलुं प्रीत्या देववासांसि वा
विभो ॥ २० ॥ हंसाश्च शतपत्राश्च सारसाश्च सहस्रशः। प्रद-

क्षिणमवर्त्तन्त शुक्राश्वाषाश्च भारत ॥ २१ ॥ आरणेयस्ततो दिव्यं प्राप्य जन्म महाद्युतिः । तत्रैवोवास मेधावी व्रतचारी समाहितः ॥ २२ ॥ उत्पन्न मात्रं तं देवाः सरहस्याः ससंग्रहाः । उपतस्थु-र्महाराज यथास्य पितरन्तथा ॥ २३ ॥ बृहस्पतिश्च वव्रे स वेदवेदाङ्गभाष्यवित् । उपाध्यायं महाराज धर्म्ममेवानुचिन्तयन् ॥२४॥ सोऽधीत्य निखिलान् वेदान् सरहस्यान् ससंग्रहान । इति-हासञ्च कार्त्स्न्येन राजशास्त्राणि वा विभो ॥ २५ ॥ गुरवे दक्षिणां दत्त्वा समावृत्तो महामुनिः । उग्रन्तपः समारेभे ब्रह्म-चारी समाहितः ॥ २६ ॥ देवतानामृषीणाञ्च बाल्येऽपि स महा-तपाः । सम्मन्त्रणीयो मान्यश्च ज्ञानेन तपसा तथा ॥ २७ ॥ न तस्य रमते बुद्धिराश्रमेषु नराधिप । त्रिषु गार्हस्थ्यमूलेषु मोक्षधर्म्मानुदर्शिनः ॥ २८ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकोत्पत्तौ चतु-
र्विंशत्यधिकत्रिशततोऽध्यायः ॥ ३२४ ॥

---

भीष्म उवाच । स मोक्षमनुचिन्त्यैव शुकः पितरमभ्यगात् । प्राहाभिवाद्य च गुरुं श्रेयोऽर्थी विनयान्वितः ॥ १ ॥ मोक्षधर्म्मेषु कुशलो भगवान् प्रब्रवीतु मे । यथा मनसः शान्तिः परमा सम्भवेत् प्रभो ॥ २ ॥ श्रुत्वा पुत्रस्य तु वचः परमर्षिरुवाच तम् । अधीष्व तुत्र मोक्षं वै धर्म्मांश्च विविधानपि ॥ ३ ॥ पितुर्नियोगा-ज्जग्राह शुको धर्म्मभृताम्वरः । योगशास्त्रञ्च निखिलं कापिलञ्चैव भारत ॥ ४ ॥ स तं ब्राह्म्या श्रिया युक्तं ब्रह्मतुल्यपराक्रमम् । मेने पुत्रं यदा व्यासो मोक्षधर्म्मविशारदम् ॥ ५ ॥ उवाच गच्छेति तदा जनकं मिथिलेश्वरम् । स ते वक्ष्यति मोक्षार्थं निखिलं मिथिलेश्वरः ॥ ६ ॥ पितुर्नियोगमादाय जगाम मिथिलां नृप ।

प्रष्टुं धर्मस्य निष्ठां वै मोक्षस्य च परायणम्॥ ७॥ उक्तश्च मानुषेण त्वं यथा गच्छेत्यविस्मितः। न प्रभावेण गन्तव्यमन्तरीक्षचरेण वै॥ ८॥ आर्ज्जवेणैव गन्तव्यं न सुखान्वेषिणा तथा। नान्वेष्टव्या विशेषास्तु विशेषा हि प्रसङ्गिनः॥ ९॥ अहङ्कारो न कर्त्तव्यो याज्ये तस्मिन्नराधिपे। स्थातव्यञ्च वशे तस्य स ते छेत्स्यति संशयम्॥ १०॥ स धर्म्मकुशलो राजा मोक्षशास्त्रविशारदः। याज्यो मम स यद्ब्रूयात् तत् कार्य्यमविशङ्कया॥११॥ एवमुक्तः स धर्मात्मा जगाम मिथिलां मुनिः। पद्भ्यां शक्तोऽन्तरीक्षेण क्रान्तुं पृथ्वीं ससागराम्॥१२॥ स गिरींश्चाप्यतिक्रम्य नदीतीर्थसरांसि च। बहुव्यालमृगाकीर्णा अटवीश्च वनानि च॥१३॥ मेरोर्हरेश्च द्वे वर्षे वर्षं हैमवतन्ततः। क्रमेणैव व्यतिक्रम्य भारतं वर्षमासदत्॥१४॥ स देशान् विविधान् पश्यंश्चीनहूननिषेवितान्। आर्य्यावर्त्तमिमं देशमाजगाम महामुनिः॥१५॥ पितुर्वचनमाज्ञाय तमेवार्थं विचिन्तयन्। अध्वानं सोऽतिचक्राम खचरः खे चरन्निव॥१६॥ पत्तनानि च रम्याणि स्फीतानि नगराणि च। रत्नानि च विचित्राणि पश्यन्नपि न पश्यति॥१७॥ उद्यानानि च रम्याणि तथैवायतनानि च। पुण्यानि चैव तीर्थानि सोऽत्यक्रामद्यथाध्वगः॥१८॥ सोऽचिरेणैव कालेन विदेहानाससाद ह। रक्षितान् धर्म्मराजेन जनकेन महात्मना॥१९॥ तत्र ग्रामान् बहून् पश्यन् बह्वन्नरसभोजनान्। पल्लीघोषान् समृद्धांश्च बहुगोकुलसंकुलान्॥२०॥ स्फीतांश्च शालियवसैर्हंससारससेवितान्। पद्मिनीभिश्च शतशः श्रीमतीभिरलंकृतान्॥२१॥ स विदेहानतिक्रम्य समृद्धजनसेवितान्। मिथिलोपवनं रम्यमाससाद समृद्धिमत्॥२२॥ हस्त्यश्वरथसंकीर्णं नरनारीसमाकुलम्। पश्यन्नपश्यन्निव तत् समतिक्रामदच्युतः॥२३॥ मनसा तं वहन् भारं तमेवार्थं विचिन्तयन्।

आत्मारामः प्रसन्नात्मा मिथिलामाससाद ह ॥ २४ ॥ तस्या द्वारं
समासाद्य द्वारपालैर्निवेदितः । स्थितो ध्यानपरो युक्तो विदितः
प्रविवेश ह ॥ २५ ॥ स राजमार्गमासाद्य समृद्धजनसंकुलम् ।
पार्थिवक्षयमासाद्य निःशङ्कः प्रविवेश ह ॥ २६ ॥ तत्रापि द्वार-
पालास्तमुग्रवाचा न्यषेधयन् । तथैव च शुकस्तत्र निर्मन्युः सम-
तिष्ठत ॥ २७ ॥ न चातपाध्वसन्तप्तः क्षुत्पिपासाश्रमान्वितः ।
प्रताम्यति ग्लायति वा नापैति च तथाचलम् ॥ २८ ॥ तेषान्तु
द्वारपालानामेकः शोकसमन्वितः । मध्यङ्गतमिवादित्यं दृष्ट्वा शुक-
मवस्थितम् ॥ २९ ॥ पूजयित्वा यथान्यायमभिवाद्य कृताञ्जलिः ।
प्रावेशयत्ततः कक्षां प्रथमां राजवेश्मनः ॥ ३० ॥ तत्रासीनः शुक-
स्तात मोक्षमेवान्वचिन्तयत् । छायायामातपे चैव समदर्शी सम-
द्युतिः ॥ ३१ ॥ तं मुहूर्त्तादिवागम्य राज्ञो मन्त्री कृताञ्जलिः ।
प्रावेशयत्ततः कक्षां द्वितीयां राजवेश्मनः ॥ ३२ ॥ तत्रान्तःपुर-
सम्बद्धं महच्चैत्ररथोपमम् । सुविभक्तजलाक्रीड़ं रम्यं पुष्पित-
पादपम् ॥ ३३ ॥ शुकं प्रावेशयन्मन्त्री प्रमदावनमुत्तमम् । स
तस्यासनमादिश्य निश्चक्राम ततः पुनः ॥ ३४ ॥ तं चारुवेशाः
सुश्रोण्यस्तरुण्यः प्रियदर्शनाः । सूक्ष्मरक्ताम्बरधरास्तप्तकाञ्चन-
भूषणाः ॥ ३५ ॥ संलापोल्लापकुशला नृत्यगीतविशारदाः । स्मित-
पूर्व्वाभिभाषिण्यो रूपेणाप्सरसां समाः ॥ ३६ ॥ कामोपचार-
कुशला भावज्ञाः सर्व्वकोविदाः । परं पञ्चाशतो नार्य्यो वारमुख्याः
समाद्रवन् ॥ ३७ ॥ पाद्यादीनि प्रतिग्राह्य पूजया परयार्च्चयन् ।
कालोपपन्नेन तदा स्वाद्वन्नेनाभ्यतर्पयन् ॥ ३८ ॥ तस्य भुक्तवत-
स्तात तदन्तःपुरकाननम् । सुरम्यं दर्शयामासुरेकैकश्येन भारत
॥ ३९ ॥ क्रीड़न्त्यश्च हसन्त्यश्च गायन्त्यश्चापि ताः शुभम् । उदार-
सत्त्वं सत्त्वज्ञाः स्त्रियः पर्य्यचरंस्तदा ॥ ४० ॥ आरणेयस्तु शुद्धात्मा
निःसन्देहः स्वकर्म्मकृत् । वश्येन्द्रियो जितक्रोधो न हृष्यति न

कुप्यति ॥ ४१ ॥ तस्मै शय्यासनं दिव्यं देवार्हं रत्नभूषितम्।
सर्व्वास्तरणसंकीर्णं ददुस्ताः परमस्त्रियः ॥ ४२ ॥ पादशौचन्तु
कृत्वैव शुकः सन्ध्यामुपास्य च। निषसादासने पुण्ये तमेवार्थं
विचिन्तयन् ॥ ४३ ॥ पूर्व्वरात्रे तु तत्रासौ भूत्वा ध्यानपरायणः।
मध्यरात्रे यथान्यायं निद्रामाहारयत् प्रभुः ॥ ४४ ॥ ततो मुहूर्त्ता-
दुत्थाय कृत्वा शौचमनन्तरम्। स्त्रीभिः परिवृतो धीमान् ध्यान-
मेवान्वपद्यत ॥ ४५ ॥ अनेन विधिना कार्ष्णिस्तदहः शेषमच्युतः।
ताञ्च रात्रिं नृपकुले वर्त्तयामास भारत ॥ ४६ ॥

इति शान्तिपर्व्वणि मोक्षधर्मपर्व्वणि शुककृतौ पञ्च-
विंशत्यधिकत्रिशततोऽध्यायः ॥ ३२० ॥

---

भीष्म उवाच। ततः स राजा जनको मन्त्रिभिः सह भारतः।
पुरः पुरोहितं कृत्वा सर्व्वाण्यन्तःपुराणि च ॥ १ ॥ आसनञ्च पुर-
स्कृत्य रत्नानि विविधानि च। शिरसा चार्घ्यमादाय गुरुपुत्रं
समभ्यगात् ॥ २ ॥ स तदासनमादाय बहुरत्नविभूषितम्। सर्व्वा-
स्तरणसंस्तीर्णं सर्व्वतोभद्रमृद्धिमत् ॥ ३ ॥ पुरोधसा संगृहीतं
हस्तेनालभ्य पार्थिवः। प्रददौ गुरुपुत्राय शुकाय परमार्च्चितम्
॥ ४ ॥ तत्रोपविष्टं तं कार्ष्णिं शास्त्रतः प्रत्यपूजयत्। पाद्यं
निवेद्य प्रथममर्घ्यं गाश्च न्यवेदयत् ॥ ५ ॥ स च तां मन्त्रवत् पूजां
प्रत्यगृह्णाद्यथाविधि। प्रतिगृह्य च तां पूजां जनकाद्द्विजसत्तमः
॥ ६ ॥ गाञ्चैव समनुज्ञाय राजानमनुमान्य च। पर्य्यपृच्छन्महा-
तेजाः राज्ञः कुशलमव्ययम् ॥ ७ ॥ अनामयञ्च राजेन्द्र शुकः सानु-
चरस्य च। अनुशिष्टस्तु तेनासौ निषसादः सहानुगः ॥ ८ ॥ उदार-
सत्त्वाभिजनो भूमौ राजा कृताञ्जलिः। कुशलञ्चाव्ययञ्चैव पृष्ट्वा
वैयासकिं नृपः ॥ ९ ॥ किमागमनमित्येव पर्य्यपृच्छत पार्थिवः ॥ १० ॥

शुक उवाच । पित्राहमुक्तो भद्रन्ते मोक्षधर्म्मार्थकोविदः ।
विदेहराजो याज्यो मे जनको नाम विश्रुतः ॥ ११ ॥ तत्र गच्छस्व
वै तूर्णं यदि ते हृदि संशयः । प्रवृत्तौ वा निवृत्तौ वा स ते
च्छेत्स्यति संशयम् ॥ १२ ॥ सोऽहं पितुर्नियोगात्त्वामुपप्रष्टुमिहा-
गतः । तन्मे धर्म्मभृतां श्रेष्ठ यथावद्वक्तुमर्हसि ॥१३ ॥ किं कार्य्यं
ब्राह्मणेनेह मोक्षार्थश्च किमात्मकः । कथञ्च मोक्षः प्राप्तव्यो ज्ञानेन
तपसाथ वा ॥ १४ ॥

जनक उवाच । यत् कार्य्यं ब्राह्मणेनेह जन्मप्रभृति तच्छृणु ।
कृतोपनयनस्तात भवेद्वेदपरायणः ॥ १५ ॥ तपसा गुरुवृत्त्या च
ब्रह्मचर्य्येण वा विभो । देवतानां पितॄणाञ्चाप्यनृणो ह्यनसूयकः
॥ १६ ॥ वेदानधीत्य नियतो दक्षिणामपवर्ज्य च । अभ्यनुज्ञा-
मथ प्राप्य समावर्त्तेत वै द्विजः ॥ १७ ॥ समावृत्तश्च गार्हस्थ्ये
स्वदारनिरतो वसेत् । अनसूयुर्यथान्यायमाहिताग्निस्तथैव च ॥१८
उत्पाद्य पुत्रपौत्रन्तु वन्याश्रमपदे वसेत् । तानेवाग्नीन् यथाशास्त्र-
मर्च्चयन्नतिथिप्रियः ॥ १९॥ स वनेऽग्नीन् यथान्यायमात्मन्यारोप्य-
धर्म्मवित् । निर्द्वन्द्वो वीतरागात्मा ब्रह्माश्रमपदे वसेत् ॥ २० ॥

शुक उवाच । उत्पन्ने ज्ञानविज्ञाने निर्द्वन्द्वे हृदि शाश्वते ।
किमवश्यं निवस्तव्यमाश्रमेषु भवेविषु ॥ २१ ॥ एतद्भवन्तं पृच्छामि
तद्भवान् वक्तुमर्हति । यथा वेदार्थतत्त्वेन ब्रूहि मे त्वं जनाधिप॥२२॥

जनक उवाच । न विना ज्ञानविज्ञाने मोक्षस्याधिगमो भवेत् ।
न विना गुरुसम्बन्धं ज्ञानस्याधिगमः स्मृतः ॥ २३ ॥ गुरु प्लाव-
यिता तस्य ज्ञानं प्लव इहोच्यते । विज्ञाय कृतकृत्यस्तु तीर्णस्तदु-
भयं त्यजेत् ॥ २४ ॥ अनुच्छेदाय लोकानां अनुच्छेदाय कर्म्म-
णाम् । पूर्वैराचरितो धर्म्मश्चातुराश्रम्यसङ्कटः ॥ २५ ॥ अनेन
क्रमयोगेन बहुजातिषु कर्म्मणाम् । हित्वा शुभाशुभं कर्म मोक्षो
नामेह लभ्यते ॥ २६ ॥ भावितैः करणैश्चाय बहुसंसारयोनिषु ।

आसादयति शुद्धात्मा मोक्षं वै प्रथमेऽश्रमे ॥ २७ ॥ तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः। त्रिष्वाश्रमेषु को न्वर्थो भवेत् परमभीप्सितः ॥ २८ ॥ राजसांस्तामसांश्चैव नित्यं दोषान् विवर्ज्जयेत्। सात्त्विकं मार्गमास्थाय पश्येदात्मानमात्मना ॥ २९ ॥ सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि। सम्पश्यन्नोपलिप्येत जले वारिचरो यथा ॥ ३० ॥ पक्षिवत् प्रवणादूर्द्ध्वममुत्रानन्त्यमश्नुते। विहाय देहान्निर्मुक्तो निर्द्वन्द्वः प्रशमङ्गतः ॥ ३१ ॥ अत्र गाथा पुरा गीताः शृणु राज्ञा ययातिना। धार्य्यन्ते या द्विजैस्तात मोक्षशास्त्रविशारदैः ॥ ३२ ॥ ज्योतिरात्मनि नान्यत्र सर्वजन्तुषु तत् समम्। स्वयञ्च शक्यते द्रष्टुं सुसमाहितचेतसा ॥ ३३ ॥ न बिभेति परो यस्मान्न बिभेति पराच्च यः। यश्च नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ॥ ३४ ॥ यदा भावं न कुरुते सर्वभूतेषु पापकम्। कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ ३५ ॥ संयोज्य मनसात्मानमीर्ष्यामुत्सृज्य मोहिनीम्। त्यक्त्वा कामञ्च मोहञ्च तदा ब्रह्मत्वमश्नुते ॥ ३६ ॥ यदा श्राव्ये च दृश्ये च सर्वभूतेषु चाप्ययम्। समो भवति निर्द्वन्द्वो ब्रह्म सम्पद्यते तदा ॥ ३७ ॥ यदा स्तुतिञ्च निन्दाञ्च समत्वेनैव पश्यति। काञ्चनञ्चायसञ्चैव सुखदुःखे तथैव च ॥ ३८ ॥ शीतमुष्णं तथैवार्थमनर्थं प्रियमप्रियम्। जीवितं मरणञ्चैव ब्रह्म सम्पद्यते तदा ॥ ३९ ॥ प्रसार्य्येह यथाङ्गानि कूर्मः संहरते पुनः। तथेन्द्रियाणि मनसा संयन्तव्यानि भिक्षुणा ॥ ४० ॥ तमः परिगतं वेश्म यथा दीपेन दृश्यते। तथा बुद्धिप्रदीपेन शक्य आत्मा निरीक्षितुम् ॥ ४१ ॥ एतत् सर्वञ्च पश्यामि त्वयि बुद्धिमताम्वर। यच्चान्यदपि वेत्तव्यं तत्त्वतो वेद तद्भवान् ॥ ४२ ॥ ब्रह्मर्षे विदितश्चापि विषयान्तमुपागतः। गुरोस्तव प्रसादेन तव चैवोपशिक्षया ॥ ४३ ॥ तस्यैव च प्रसादेन प्रादुर्भूतं महामुने। ज्ञानं दिव्यं ममापीदं तेनासि विदितो मम ॥ ४४ ॥ अधिकं तव विज्ञान-

अधिका च गतिस्तव । अधिकन्तव चैश्वर्य्यं तच्च त्वं नानुबुध्यसे ॥ ४५ ॥ बाल्याद्वा संशयाद्वापि भयाद्वाप्यविमोक्षजात् । उत्पन्ने चापि विज्ञाने नाधिगच्छसि तां गतिम् ॥ ४६ ॥ व्यवसायेन शुद्धेन मद्विधैश्छिन्नसंशयः । विमुच्य हृदयग्रन्थीनासादयति तां गतिम् ॥ ४७ ॥ भवांश्चोत्पन्नविज्ञानः स्थिरबुद्धिरलोलुपः । व्यवसाया-दृते ब्रह्मन्नासादयति तत् परम् ॥ ४८ ॥ नास्ति ते सुखदुःखेषु विशेषो नास्ति लोलुपः । नौत्सुक्यं नृत्यगीतेषु न राग उपजा-यते ॥ ४९ ॥ न बन्धुष्वनुबन्धस्ते न भयेष्वस्ति ते भयम् । पश्यामि त्वां महाभाग तुल्यलोष्टाश्मकाञ्चनम् ॥ ५० ॥ अहं त्वामनुपश्यामि ये चाप्यन्ये मनीषिणः । आस्थितं परमं मार्गमक्षयं तमनामयम् ॥ ५१ ॥ यत्फलं ब्राह्मणस्येह मोक्षार्थस्य यदात्मकः । तस्मिन् वै वर्त्तसे ब्रह्मन् किमन्यत् परिपृच्छसि ॥ ५२ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुककृतौ
षड्विंशत्यधिकत्रिशततोऽध्यायः ॥ ३२६ ॥

---

भीष्म उवाच । एतत् श्रुत्वा तु वचनं कृतात्मा कृतनिश्चयः । आत्मनात्मानमास्थाय दृष्ट्वा चात्मनमात्मना ॥ १ ॥ कृतकार्य्यः सुखी शान्तस्तूष्णीं प्रायादुदङ्मुखः । शैशिरं गिरिमुद्दिश्य सधर्म्मा मातरिश्वनः ॥ २ ॥ एतस्मिन्नेव काले तु देवर्षिर्नारदस्तथा । हिमवन्तमियाद्द्रष्टुं सिद्धचारणसेवितम् ॥ ३ ॥ तमप्सरोगणा-कीर्णं शान्तस्वननिनादितम् । किन्नराणां सहस्रैश्च भृङ्गराजै-स्तथैव च ॥ ४ ॥ मद्गुभिः खञ्जरीटैश्च विचित्रैर्जीवजीवकैः । चित्रवर्णैर्मयूरैश्च केकाशतविराजितैः ॥ ५ ॥ राजहंससमूहैश्च हृष्टैः परभृतैस्तथा । पक्षिराजो गरुत्मांश्च यन्नित्यमधितिष्ठति ॥ ६ ॥ चत्वारो लोकपालाश्च देवाः सर्षिगणास्तथा । तत्र नित्यं

समायान्ति लोकस्य हितकाम्यया ॥ ७ ॥ विष्णुना यत्र पुत्रार्थं तपस्तप्तं महात्मना। तत्रैव च कुमारेण वाच्ये क्षिप्ता दिवौकसः ॥ ८ ॥ शक्तिर्न्यस्ता क्षितितले त्रैलोक्यमवमन्य वै। तत्रोवाच जगत् स्कन्दः क्षिपन् वाक्यमिदं तदा ॥ ९ ॥ योऽन्योऽस्ति मत्तोऽभ्यधिको विप्रा यस्याधिकं प्रिया। यो ब्रह्मण्ये द्वितीयोऽस्ति त्रिषु लोकेषु वीर्य्यवान् ॥ १० ॥ सोऽभ्युद्धरत्विमां शक्तिमथवा कम्पयत्विति। तत् श्रुत्वा व्यथिता लोकाः क इमामुद्धरेदिति ॥११॥ अथ देवगणं सर्वं सम्भ्रान्तेन्द्रियमानसम्। अपश्यद्भगवान् विष्णुः क्षिप्तं सासुरराक्षसम् ॥ १२ ॥ किं तत्र सुकृतं कार्य्यं भवेदिति विचिन्तयन्। अनामृष्य ततः क्षेपमवैक्षत च पावकिम् ॥ १३ ॥ संप्रगृह्य विशुद्धात्मा शक्तिं प्रज्वलितां तदा। कम्पयामास सव्येन पाणिना पुरुषोत्तमः ॥ १४ ॥ शक्त्यान्तु कम्प्यमानायां विष्णुना बलिना तदा। मेदिनी कम्पिता सर्वा सशैलवनकानना ॥ १५ ॥ शक्तेनापि समुद्धर्त्तुं कम्पिता सा भवत्तदा। रक्षिता स्कन्दराजस्य धर्षणां प्रभविष्णुना ॥ १६ ॥ तां कम्पयित्वा भगवान् प्रह्लादमिदमब्रवीत्। पश्य शौर्य्यं कुमारस्य नैतदन्यः करिष्यति ॥ १७ ॥ सोऽमृष्यमाणस्तद्वाक्यं समुद्धरणनिश्चितः। जग्राह तां तदा शक्तिं न चैनां स व्यकम्पयत् ॥ १८ ॥ नादं महान्तमुक्त्वा स मूर्च्छितो गिरिमूर्द्धनि। विह्वलः प्रापतद्भूमौ हिरण्यकशिपोः सुतः ॥१९॥ तत्रोत्तरां दिशं गत्वा शैलराजस्य पार्श्वतः। तपोऽतप्यत दुर्द्धर्षं तत्र नित्यं वृषध्वजः ॥ २० ॥ पावकेन परिक्षिप्तं दीप्यता यस्य चाश्रमम्। आदित्यपर्वतं नाम दुर्द्धर्षमकृतात्मभिः ॥ २१ ॥ न तत्र शक्यते गन्तुं यक्षराक्षसदानवैः। दशयोजनविस्तारमग्निज्वालासमावृतम ॥ २२ ॥ भगवान् पावकस्तत्र स्वयं तिष्ठति वीर्य्यवान्। सर्वान् विघ्नान् प्रशमयन्महादेवस्य धीमतः। दिव्यं वर्षसहस्रं हि पादेनैकेन तिष्ठतः ॥ २३ ॥ देवान् सन्तापयंस्तत्र

महादेवो महाव्रतः । ऐन्द्रीं तु दिशमास्थाय शैलराजस्य धीमतः
॥ २४ ॥ विविक्ते पर्वततटे पाराशर्य्यो महातपाः । वेदानध्यापयामास व्यासः शिष्यान्महातपाः ॥ २५ ॥ सुमन्तुञ्च महाभागं वैशम्पायनमेव च । जैमिनिञ्च महाप्राज्ञं पैलञ्चापि तपस्विनम् ॥२६॥
यत्र शिष्यैः परिवृतो व्यास आस्ते महातपाः । तमाश्रमपदं रम्यं ददर्श पितुरुत्तमम् । आरणेयो विशुद्धात्मा नभसीव दिवाकरः
॥ २७ ॥ अथ व्यासः परिक्षिप्तं ज्वलन्तमिव पावकम् । ददर्श सुतमायान्तं दिवाकरसमप्रभम् ॥ २८ ॥ असज्जमानं वृक्षेषु शैलेषु विषयेषु च । योगयुक्तं महात्मानं यथा वाणं गुणच्युतम् ॥२९॥
सोऽभिगम्य पितुः पादावगृह्णादरणीसुतः । यथोपयोगं तैश्चापि समागच्छन्महामुनिः ॥ ३० ॥ ततो निवेदयामास पित्रे सर्वमशेषतः । शुको जनकराजेन सम्वादं प्रीतमानसः ॥ ३१॥ एवमध्यापयञ्छिष्यान् व्यासः पुत्रञ्च वीर्य्यवान् । उवास हिमवत्पृष्ठे पाराशर्य्यो महामुनिः ॥ ३२ ॥ ततः कदाचित् शिष्यास्तं परिवार्य्यावतस्थिरे । वेदाध्ययनसम्पन्नाः शान्तात्मानो जितेन्द्रियाः ॥ ३३॥
वेदेषु निष्ठां सम्प्राप्य साङ्गेष्वपि तपस्विनः । अथोचुस्ते तदा व्यासं शिष्याः प्राञ्जलयो गुरुम ॥ ३४ ॥

शिष्या ऊचुः । महता तेजसा युक्ता यशसा चापि वर्द्धिताः । एकन्त्विदानीमिच्छामो गुरुणानुग्रहं कृतम् ॥ ३५ ॥ इति तेषां वचः श्रुत्वा ब्रह्मर्षिस्तानुवाच ह । उच्यतामिति तद्वत्सा यद्वः कार्य्यं प्रियं मया ॥ ३६ ॥ एतद्वाक्यं गुरोः श्रुत्वा शिष्यास्ते हृष्टमानसाः । पुनः प्राञ्जलयो भूत्वा प्रणम्य शिरसा गुरुम् ॥ ३७ ॥
ऊचुस्ते सहिता राजन्निदं वचनमुत्तमम् । यदि प्रीत उपाध्यायो धन्याः स्मो मुनिसत्तम ॥ ३८ ॥ काङ्क्षामस्तु वयं सर्व्वे वरं दत्तं महर्षिणा । षष्ठः शिष्यो न ते ख्यातिं गच्छेदत्र प्रसीद नः ॥३९॥
चत्वारस्ते वयं शिष्या गुरुपुत्रस्तु पञ्चमः । इह वेदाः प्रतिष्ठेरन्

एषः नः काङ्क्षितो वरः ॥ ४० ॥ शिष्याणां वचनं श्रुत्वा व्यासो वेदार्थतत्त्ववित् । पराशरात्मजो धीमान् परलोकार्थचिन्तकः॥४१॥ उवाच शिष्यान् धर्मात्मा धर्म्यं निःश्रेयसं वचः । ब्राह्मणाय सदा देयं ब्रह्मशुश्रूषवे तथा । ब्रह्मलोके निवासं यो ध्रुवं समभिकाङ्क्षते ॥ ४२ ॥ भवन्तो बहुलाः सन्तु वेदो विस्तार्य्यतामयम् । नाशिष्ये संप्रदातव्यो नाव्रते नाकृतात्मनि ॥ ४३ ॥ एते शिष्यगुणाः सर्व्वे विज्ञातव्या यथार्थतः । नापरीक्षितचारित्रे विद्या देया कथञ्चन ॥ ४५ ॥ यथा हि कनकं शुद्धं तापच्छेदनिघर्षणैः । परीक्षेत तथा शिष्यानीक्षेत् कुलगुणादिभिः ॥ ४५ ॥ न नियोज्यास्त्र वः शिष्या अनियोगे महाभये । यथामति यथापाठं तथा विद्या फलिष्यति ॥ ४६ ॥ सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु । श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः ॥ ४७ ॥ वेदस्याध्ययनं हीदं तच्च कार्य्यं महत् स्मृतम् । स्तुत्यर्थमिह देवानां वेदाः सृष्टाः स्वयम्भुवा ॥ ४८ ॥ यो निर्व्वदेत संमोहात् ब्राह्मणं वेदपारगम् । सोऽभिध्यानाद्ब्राह्मणस्य पराभूयादसंशयम् ॥ ४९ ॥ यश्चाधर्म्मेण विब्रूयाद्यश्चाधर्म्मेण पृच्छति । तयोरन्यतरः प्रैति विद्वेषञ्चाभिगच्छति ॥ ५० ॥ एतद्वै सर्व्वमाख्यातं स्वाध्यायस्य विधिं प्रति । उपकुर्य्याच्च शिष्याणामेतच्च हृदि वो भवेत् ॥ ५१ ॥

इति शान्तिपर्व्वणि मोक्षधर्मपर्व्वणि शिष्यशिक्षायां
सप्तविंत्यधिकत्रिशतोऽध्यायः ॥ ३२७ ॥

---

भीष्म उवाच । एतत् श्रुत्वा गुरोर्वाक्यं व्यासशिष्या महौजसः । अन्योऽन्यं हृष्टमनसः परिषस्वजिरे तदा ॥ १ ॥ उक्ताः स्मो यद्भगवता तदात्वायतिसंहितम् । तन्नो मनसि संरूढं करिष्यामस्तथा च तत् ॥ २ ॥ अन्योन्यं संविभाष्यैवं सुप्रीतमनसः

पुनः। विज्ञापयन्ति स्म गुरुं पुनर्वाक्यविशारदाः ॥ ३ ॥ शैला-
दस्मान्महीं गन्तुं काङ्क्षितं नो महामुने। वेदाननेकधा कर्त्तुं
यदि ते रुचितं प्रभो ॥ ४ ॥ शिष्याणां वचनं श्रुत्वा पराशरसुतः
प्रभुः। प्रत्युवाच ततो वाक्यं धर्मार्थसहितं हितम् ॥ ५ ॥ क्षितिं
वा देवलोकं वा गम्यतां यदि रोचते। अप्रमादश्च व कार्य्यो ब्रह्म
हि प्रचुरच्छलम् ॥ ६ ॥ तेऽनुज्ञातास्ततः सर्वे गुरुणा सत्यवा-
दिना। जग्मुः प्रदक्षिणं कृत्वा व्यासं मूर्द्ध्नाभिवाद्य च ॥ ७ ॥
अवतीर्य्य महीं तेऽथ चातुर्होत्रमकल्पयन्। संयाजयन्तो विप्रांश्च
राजन्यांश्च विशस्तथा ॥ ८ ॥ पूज्यमाना द्विजैर्नित्यं मोदमाना
गृहे रताः। याजनाध्यापनरताः श्रीमन्तो लोकविश्रुताः ॥ ९ ॥
अवतीर्णेषु शिष्येषु व्यासः पुत्रसहायवान्। तूष्णीं ध्यानपरो
धीमान् एकान्ते समुपाविशत् ॥ १० ॥ तं ददर्शाश्रमपदे नारदः
सुमहातपाः। अथैनमब्रवीत् काले मधुराक्षरया गिरा ॥ ११ ॥

नारद उवाच। भो भो ब्रह्मर्षे वाशिष्ठ ब्रह्मघोषो न वर्त्तते।
एको ध्यानपरस्तूष्णीं किमास्से चिन्तयन्निव ॥ १२ ॥ ब्रह्मघोषै-
र्विरहितः पर्वतोऽयं न शोभते। रजसा तमसा चैव सोमः सोप-
प्लवो यथा ॥ १३ ॥ न भ्राजते यथा पूर्वं निषादानामिवालयः।
देवर्षिगणजुष्टोऽपि वेदध्वनिनिराकृतः ॥ १४ ॥ ऋषयश्च हि
देवाश्च गन्धर्वाश्च महौजसः। वियुक्ता ब्रह्मघोषेण न भ्राजन्ते
यथा पुरा ॥ १५ ॥ नारदस्य वचः श्रुत्वा कृष्णद्वैपायनोऽब्रवीत्।
महर्षे यत्त्वया प्रोक्तं वेदवादविचक्षण ॥ १६ ॥ एतन्मनोऽनुकूलं
मे भवानर्हति भाषितुम्। सर्वज्ञः सर्वदर्शी च सर्वत्र च कुतूहली
॥ १७ ॥ त्रिषु लोकेषु यद्वृत्तं सर्वं तव मते स्थितम्। तदाज्ञा-
पय विप्रर्षे ब्रूहि किं करवाणि ते ॥ १८ ॥ यन्मया समनुष्ठेयं
ब्रह्मर्षे तदुदाहर। वियुक्तस्येह शिष्यैर्मे नातिहृष्टमिदं मनः ॥१९॥

नारद उवाच। अनाम्नायमला वेदा ब्राह्मणस्याव्रत मलम्।

मलं पृथिव्या वाहीकाः स्त्रीणां कौतूहलं मलम् ॥ २०॥ अधीयतां भवान् वेदान् सार्द्धं पुत्रेण धीमता। विधुन्वन् ब्रह्मघोषेण रक्षोभयकृतन्तमः ॥ २१ ॥

भीष्म उवाच। नारदस्य वचः श्रुत्वा व्यासः परमधर्म्मवित्। तथेत्युवाच संहृष्टो वेदाभ्यासदृढव्रतः ॥ २२ ॥ शुकेन सह पुत्रेण वेदाभ्यासमथाकरोत्। स्वरेणोच्चैः सशैक्ष्येण लोकानां पूरयन्निव ॥ २३ ॥ तयोरभ्यसतोरेव नानाधर्मप्रवादिनाः। वातोऽतिमात्रं प्रववौ समुद्रानिलवेजितः ॥२४॥ ततोऽनध्याय इति तं व्यासः पुत्रमवारयत्। शुको वारितमात्रस्तु कौतूहलसमन्वितः ॥ २५ ॥ अपृच्छत् पितरं ब्रह्मन् कुतो वायुरभूदयम्। आख्यातुमर्हति भवान् वायोः सर्वं विचेष्टितम् ॥ २६ ॥ शुकस्यैतद्वचः श्रुत्वा व्यासः परमविस्मितः। अनध्यायनिमित्तेऽस्मिन्निदं वचनमब्रवीत् ॥ २७ ॥ दिव्यन्ते चक्षुरुत्पन्नं स्वयन्ते निर्मलं मनः। तमसा रजसा चापि त्यक्तः सत्त्वे व्यवस्थितः ॥ २८ ॥ आदर्शे स्वामिव च्छायां पश्यस्यात्मानमात्मना। न्यस्यात्मनि स्वयं वेदान् बुद्ध्या समनुचिन्तय ॥ २९ ॥ देवयानचरो विष्णोः पितृयानश्च तामसः। द्वावेतौ प्रेत्य पन्थानौ दिवञ्चाधश्च गच्छतः ॥ ३० ॥ पृथिव्यामन्तरीक्षे च यत्र संवान्ति वायवः। सप्तैते वायुमार्गा वै तान्निबोधानुपूर्वशः ॥ ३१ ॥ तत्र देवगणाः साध्या महाभूता महाबलाः। तेषामप्यभवत् पुत्रः समानो नाम दुर्ज्जयः ॥ ३२ ॥ उदानस्तस्य पुत्रोऽभूत् व्यानस्तस्याभवत् सुतः। अपानश्च ततो ज्ञेयः प्राणश्चापि ततोऽपर ॥ ३३ ॥ अनपत्योऽभवत् प्राणो दुर्द्धर्षः शत्रुतापनः। पृथक्कर्म्माणि तेषान्तु प्रवक्ष्यामि यथातथम् ॥३४॥ प्राणिनां सर्वतो वायुश्चेष्टा वर्त्तयते पृथक्। प्राणनाच्चैव भूतानां प्राण इत्यभिधीयते ॥ ३५॥ प्रेरयत्यभ्रसङ्घातान् धूमजांश्चोष्मजांश्च य। प्रथमः प्रथमे मार्गे प्रवहो नाम योऽनिलः। अम्बरे स्नेह-

मभ्येत्य तडिद्रश्मोत्तमद्युतिः ॥ ३६ ॥ आवहो नाम संवाति
द्वितीयः श्वसनो नदन्। उदयं ज्योतिषां शश्वत् सोमादीनां
करोति यः। अन्तर्देहेषु चोदानं वदन्ति मनीषिणः ॥ ३७ ॥
यश्चतुर्भ्यः समुद्रेभ्यो वायुर्धारयते जलम्। उद्धृत्याददते चापो
जीमूतेभ्योऽम्बरेऽनिलः ॥ ३८ ॥ योऽद्भिः संयोज्य जीमूतान्
पर्य्यन्याय प्रयच्छति। उद्वहो नाम वंहिष्ठस्तृतीयः स सदागतिः
॥ ३९ ॥ समुह्यमाना बहुधा येन नीताः पृथग्घनाः। वर्षमोच-
कृतारम्भास्ते भवन्ति घनाघनाः ॥ ४० ॥ संहता येन चाविद्धा
भवन्ति नदतां नदाः। रक्षणार्थाय सम्भूता मेघत्वमुपयान्ति च
॥ ४१ ॥ योऽसौ वहति भूतानां विमानानि विहायसा। चतुर्थः
संवहो नाम वायुः स गिरिमर्द्दनः ॥ ४२ ॥ येन वेगवता रुग्णा
रूक्षेणारुजता नगान्। वायुना सहिता मेघास्ते भवन्ति वला-
हकाः ॥ ४३॥ दारुणोत्पातसञ्चारो नभसस्तनयित्नुमान्। पञ्चमः
स महावेगो विवहो नाम मारुतः ॥ ४४ ॥ यस्मिन् पारिप्लवा
दिव्य वहन्त्यापो विहायसा। पुण्यञ्चाकाशगङ्गायास्तोयं विष्टभ्य
तिष्ठति ॥ ४५ ॥ दूरात् प्रतिहतो यस्मिन्नेकरश्मिर्दिवाकरः। यो
निरंशुरिवाभाति येन भाति वसुन्धरा ॥ ४६ ॥ यस्मादाप्यायते
सोमः क्षीणः सम्पूर्णमण्डलः। षष्ठः परिवहो नाम स वायुर्जय-
ताम्वरः ॥ ४७ ॥ सर्वप्राणभृतां प्राणान् योऽन्तकाले निरस्यति।
यस्य वर्त्मानुवर्त्तेते मृत्युवैवस्वतावुभौ ॥ ४८ ॥ सम्यगन्वीक्षतां
बुद्धा शान्तयाध्यात्मचिन्तकाः। ध्यानाभ्यासाभिरामाणां योऽमृत-
त्वाय कल्पते ॥ ४९ ॥ यं समासाद्य वेगेन दिशोऽन्तं प्रतिपेदिरे।
दक्षस्य दशपुत्राणां सहस्राणि प्रजापतेः ॥ ५० ॥ येन सृष्टः पुरा
भूतो यात्येव न निवर्त्तते। परावहो नाम परो वायुः स दुरति-
क्रमः ॥ ५१ ॥ एवमेते दितेः पुत्रा मारुताः परमाद्भुताः। अना-
रतन्ते संवान्ति सर्वगाः सर्वधारिणः ॥ ५२ ॥ एतत्तु महदाश्चर्य्य

यद्यं पर्वतोत्तमः । कम्पितः सहसा तेन वायुनातिप्रवायता ॥५३॥
विष्णोर्निश्वासवातोऽयं यदा वेगसमीरितः । सहसोदीर्य्यते तात
जगत् प्रव्यथते तदा ॥ ५४ ॥ तस्माद्ब्रह्मविदो वेदान्नाधीयन्तेऽति-
वायति । वायोर्वायुभयं ह्युक्तं ब्रह्मतत्पीड़ितं भवेत् ॥ ५५ ॥
एतावदुक्त्वा वचनं पराशरसुतः प्रभुः । उक्त्वा पुत्रमधीष्वेति
व्योमगङ्गामगात्तदा ॥ ५६ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि वायुविशेषकथने
अष्टाविंशत्यधिकत्रिशततोऽध्यायः ॥ ३२८ ॥

---

भीष्म उवाच । एतस्मिन्नन्तरे शून्ये नारदः समुपागमत् ।
शुकं स्वाध्यायनिरतं वेदार्थान् प्रष्टुमीप्सया ॥ १ ॥ देवर्षिन्तु
शुको दृष्ट्वा नारदं समुपस्थितम् । अर्घ्यपूर्व्वेण विधिना वेदोक्ते-
नाभ्यपूजयत् ॥ २ ॥ नारदोऽथाब्रवीत् प्रीतो ब्रूहि धर्म्मभृताम्वर ।
केन त्वां श्रेयसा वत्स योजयामीति हृष्टवत् ॥ ३ ॥ नारदस्य
वचः श्रुत्वा शुकः प्रोवाच भारत । अस्मिंल्लोके हितं यत्स्यात्तेन
मां योक्तुमर्हसि ॥ ४ ॥

नारद उवाच । तत्त्वं जिज्ञासतां पूर्व्वमृषीणां भावितात्म-
नाम् । सनत्कुमारो भगवानिदम्वचनमब्रवीत् ॥ ५ ॥ नास्ति
विद्यासमं चक्षुर्नास्ति सत्यसमं तपः । नास्ति रागसमं दुःखं
नास्ति त्यागसमं सुखम् ॥ ६ ॥ निवृत्तिः कर्म्मणः पापात् सततं
पुण्यशीलता । सद्वृत्तिः समुदाचारः श्रेय एतदनुत्तमम् ॥ ७ ॥
मानुष्यमसुखं प्राप्य यः सज्जति स मुह्यति । नालं स दुःखमो-
क्षाय संयोगो दुःखलक्षणम् ॥ ८ ॥ सक्तस्य बुद्धिश्चलति मोह-
जालविवर्द्धिनी । मोहजालावृतो दुःखमिह चामुत्र सोऽश्नुते ॥९॥
सर्व्वोपायात्तु कामस्य क्रोधस्य च विनिग्रहः । कार्य्यः श्रेयोऽर्थिना

तौ हि श्रेयोघातार्थमुद्यतौ ॥ १० ॥ नित्यं क्रोधात्तपो रक्षेत् श्रियं रक्षेच्च मत्सरात्। विद्यां मानावमानाभ्यामात्मानन्तु प्रमादतः ॥ ११ ॥ आनृशंस्यं परो धर्मः क्षमा च परमं बलम्। आत्मज्ञानं परं ज्ञानम् न सत्यात् विद्यते परम् ॥ १२ ॥ सत्यस्य वचनं श्रेयः सत्यादपि हितं वदेत्। यद्भूतहितमत्यन्तमेतत् सत्यं मतं मम ॥ १३ ॥ सर्वारम्भपरित्यागी निराशीर्निष्परिग्रहः। येन सर्वं परित्यक्तं स विद्वान् स च पण्डितः ॥ १४ ॥ इन्द्रियैरिन्द्रियार्थान् यश्चरत्यात्मवशैरिह। असज्जमानः शान्तात्मा निर्विकारः समाहितः ॥ १५ ॥ आत्मभूतैरतद्भूतः सह चैव विनैव च। स विमुक्तः परं श्रेयो न चिरेणाधितिष्ठति ॥ १६ ॥ अदर्शनमसंस्पर्शस्तथा सम्भाषणं सदा। यस्य भूतैः सह मुने स श्रेयो विन्दते परम् ॥ १७ ॥ न हिंस्यात् सर्वभूतानि मैत्रायणगतश्चरेत्। नेदं जन्म समासाद्य वैरं कुर्वीत केनचित् ॥ १८ ॥ आकिञ्चन्यं सुसन्तो निराशीस्त्वमचापलम्। एतदाहुः परं श्रेय आत्मज्ञस्य जितात्मनः ॥ १९ ॥ परिग्रहं परित्यज्य भव तात जितेन्द्रियः। अशोकं स्थानमातिष्ठ इह चामुत्र चाभयम् ॥ २० ॥ निरामिषा न शोचन्ति त्यजेदामिषमात्मनः। परित्यज्यामिषं सौम्य दुःखतापाद्विमोक्ष्यसे ॥ २१ ॥ तपोनित्येन दान्तेन मुनिना संयतात्मना। अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ॥ २२ ॥ गुणसङ्गेष्वनासक्त एकचर्य्यारतः सदा। ब्राह्मणो न चिरादेव सुखमायात्यनुत्तमम् ॥ २३ ॥ द्वन्द्वारामेषु भूतेषु य एको रमते मुनिः। विद्धि प्रज्ञानतृप्तं तं ज्ञानतृप्तो न शोचति ॥ २४ ॥ शुभैर्लभति देवत्वं व्यामिश्रैर्जन्म मानुषम्। अशुभैश्चाप्यधोजन्म कर्मभिर्लभतेऽवशः ॥ २५ ॥ तत्र मृत्युजरादुःखैः सततं समभिद्रुतः। संसारे पच्यते जन्तुस्तत् कथं नावबुध्यसे ॥ २६ ॥ अहिते हितसंज्ञस्त्वमध्रुवे ध्रुवसंज्ञकः। अनर्थे चार्थसंज्ञस्त्वं किमर्थं नावबुध्यसे ॥ २७ ॥

संवेष्ट्यमानं बहुभिर्मोहात्तन्तुभिरात्मजैः। कोषकार इवात्मानं वेष्टयन्नावबुध्यसे ॥ २८ ॥ अलं परिग्रहेणेह दोषवान् हि परिग्रहः। कृमिर्हि कोषकारस्तु वध्यते स्वपरिग्रहात् ॥ २९ ॥ पुत्रदारकुटुम्बेषु सक्ताः सीदन्ति जन्तवः। सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ ३० ॥ महाजालसमाकृष्टान् स्थले मत्स्यानिवोद्धृतान्। स्नेहजालसमाकृष्टान् पश्य जन्तून् सुदुःखितान् ॥ ३१ ॥ कुटुम्बं पुत्रदारञ्च शरीरं सञ्चयाश्च ये। पारक्यमध्रुवं सर्वं किं स्वं सुकृतदुष्कृतम् ॥ ३२ ॥ यदा सर्वान् परित्यज्य गन्तव्यमवशेन ते। अनर्थे किं प्रसक्तस्त्वं स्वमर्थं नानुतिष्ठसि ॥ ३३ ॥ अविश्रान्तमनालम्बमपाथेयमदैशिकं। तमः कान्तारमध्वानं कथमेको गमिष्यसि ॥ ३४ ॥ न हि त्वां प्रस्थितं कश्चित् पृष्ठतोऽनुगमिष्यति। सुकृतं दुष्कृतञ्च त्वां यास्यन्तमनुयास्यति ॥ ३५ ॥ विद्या कर्म च शौचञ्च ज्ञानञ्च बहुविस्तरम्। अर्थार्थमनुसार्यन्ते सिद्धार्थश्च विमुच्यते ॥ ३६ ॥ निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः। छित्त्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥ ३७ ॥ रूपकूलां मनःस्रोतां स्पर्शद्वीपां रसावहाम्। गन्धपङ्कां शब्दजलां स्वर्गमार्गदुरावहाम् ॥ ३८ ॥ क्षमारित्रां सत्यमयीं धर्मस्थैर्य्यवटारकाम्। त्यागवाताध्वगां शीघ्रां नौताय्यां तां नदीं तरेत् ॥ ३९ ॥ त्यज धर्ममधर्मञ्च तथा सत्यानृते त्यज। उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ॥ ४० ॥ त्यज धर्ममसंकल्पादधर्मञ्चाप्यलिप्सया। उभे सत्यानृते बुद्ध्या बुद्धिं परमनिश्चयात् ॥ ४१ ॥ अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम्। चर्म्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥ ४२ ॥ जराशोकसमाविष्टं रोगायतनमातुरम्। रजस्वलमनित्यञ्च भूतावासमिमं त्यज ॥ ४३ ॥ इदं विश्वं जगत् सर्वमजगच्चापि यद्भवेत्। महाभूतात्मकं सर्वं महद्यत् परमाणुयात् ॥ ४४ ॥ इन्द्रियाणि च पञ्चैव

तमः सत्त्वं रजस्तथा। इत्येष सप्तदशको राशिरव्यक्तसंज्ञकः ॥ ४५ ॥ सर्व्वैरिहेन्द्रियार्थैश्च व्यक्ताव्यक्तैर्हि संश्रितः। चतुर्विंशक इत्येष व्यक्ताव्यक्तमयो गुणः ॥ ४६ ॥ एतैः सर्व्वैः समायुक्तः पुमानित्यभिधीयते। त्रिवर्गन्तु सुखं दुःखं जीवितं मरणन्तथा ॥ ४७ ॥ य इदं वेद तत्त्वेन स वेद प्रभवाव्ययौ। पारम्पर्य्येण बोद्धव्यं ज्ञानानां यच्च किञ्चन ॥ ४८ ॥ इन्द्रियैर्गृह्यते यद्यत्तत्तद्व्यक्तमिति स्थितिः। अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥ ४९ ॥ इन्द्रियैर्नियतैर्देही धाराभिरिव तप्यते। लोके विततमात्मानं लोकांश्चात्मनि पश्यति ॥ ५० ॥ परावरदृशः शक्तिर्ज्ञानमूला न पश्यति। पश्यतः सर्व्वभूतानि सर्व्वावस्थासु सर्व्वदा ॥ ५१ ॥ सर्व्वभूतस्य संयोगो नाशुभेनोपपद्यते। ज्ञानेन विविधान् क्लेशानतिवृत्तस्य मोहजान् ॥ ५२ ॥ लोके बुद्धिप्रकाशेन लोकमार्गो न रिष्यते। अनादिनिधनं जन्तुमात्मनि स्थितमव्ययम् ॥ ५२ ॥ अकर्त्तारममूर्त्तञ्च भगवानाह तीर्थवित्। यो जन्तुः स्वकृतैस्तैस्तैः कर्म्मभिर्नित्यदुःखितः ॥ ५४ ॥ स दुःखप्रतिघातार्थं हन्ति जन्तूननेकधा। ततः कर्म्म समादत्ते पुनरन्यं नवं बहु ॥ ५५ ॥ तप्यतेऽथ पुनस्तेन भुक्त्वा पथ्यमिवातुरं। अजस्रमेव मोहान्धो दुःखेषु सुखसंज्ञितः ॥ ५६ ॥ वध्यते मथ्यते चैव कर्म्मभिर्मन्थवत् सदा। ततो निवद्धः स्वां योनिं कर्म्मणामुदयादिह ॥ ५७ ॥ परिभ्रमति संसारं चक्रवद्बहुवेदनः। स त्वं निवृत्तवन्धस्तु निवृत्तश्चापि कर्म्मतः ॥ ५८ ॥ सर्व्ववित् सर्व्वजित् सिद्धो भव भावविवर्जितः। संयमेन नवं वन्धं निवर्त्त्य तपसो वलात्। सम्प्राप्ता वहवः सिद्धिमप्यवाधां सुखोदयाम् ॥ ५९ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकनारदसम्वादे एकोनत्रिंशदधिकत्रिशततोऽध्यायः ॥ ३२९ ॥

---

नारद उवाच। यथोक्तं शोकनाशार्थं शास्त्रं शान्तिकरं शिवं।
निशम्य लभते बुद्धिं तां लब्ध्वा सुखमेधते ॥ १ ॥ शोकस्थानसह-
स्राणि भयस्थानशतानि च। दिवसे दिवसे मूढमाविशन्ति न
पण्डितम् ॥ २ ॥ तस्मादनिष्टनाशार्थमितिहासं निबोध मे। ति-
ष्ठते चेद्वशे बुद्धिर्लभते शोकनाशनम् ॥ ३ ॥ अनिष्टसम्प्रयोगाच्च
विप्रयोगात् प्रियस्य च। मनुष्या मानसैर्दुःखैर्युज्यन्ते स्वल्पबुद्धयः
॥ ४ ॥ द्रव्येषु समतीतेषु ये गुणास्तान्न चिन्तयेत्। न तानाद्रिय-
माणस्य स्नेहबन्धः प्रमुच्यते ॥ ५ ॥ दोषदर्शी भवेत्तत्र यत्र रागः
प्रवर्त्तते। अनिष्टवर्द्धितं पश्येत्तथा क्षिप्रं विरज्यते ॥ ६ ॥ नार्थो
न धर्म्मो न यशो योऽतीतमनुशोचति। अप्यभावे न युज्येत
तच्चास्य न निवर्त्तते ॥ ७ ॥ गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव
च। सर्वाणि नैतदेकस्य शोकस्थानं हि विद्यते ॥ ८ ॥ मृतं वा
यदि वा नष्टं योऽतीतमनुशोचति। दुःखेन लभते दुःखं द्वावनर्थौ
प्रपद्यते ॥ ९ ॥ नाश्रु कुर्वन्ति ये बुद्ध्या दृष्ट्वा लोकेषु सन्ततिम्।
सम्यक् प्रपश्यतः सर्वं नाश्रुकर्म्मोपपद्यते ॥ १० ॥ दुःखोपघाते
शारीरे मानसे चाप्युपस्थिते। यस्मिन्न शक्यते कर्त्तुं यत्नस्तन्नानु-
चिन्तयेत् ॥ ११ ॥ भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत्। चिन्त्य-
मानं हि न व्येति भूयश्चापि प्रवर्द्धते ॥ १२ ॥ प्रज्ञया मानसं दुःखं
हन्याच्छारीरमौषधैः। एतद्विज्ञानसामर्थ्यं न बालैः समतामि-
यात् ॥ १३ ॥ अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः। आरोग्यं
प्रियसंवासो गृध्येत्तत्र न पण्डितः ॥ १४ ॥ न जानपदिकं दुःख-
मेकः शोचितुमर्हति। अशोचन् प्रतिकुर्वीत यदि पश्येदुपक्रमम्
॥ १५ ॥ सुखाद्बहुतरं दुःखं जीवितेनात्र संशयः। स्निग्धत्वञ्चे-
न्द्रियार्थेषु मोहान्मरणमप्रियम् ॥ १६ ॥ परित्यजति यो दुःखं
सुखञ्चाप्युभयं नरः। अभ्येति ब्रह्म सोऽत्यन्तं न तं शोचन्ति
पण्डिताः ॥ १७ ॥ त्यजन्ते दुःखमर्था हि पालने न च ते सुखाः।

दुःखेन चाधिगम्यन्ते नाशमेषां न चिन्तयेत् ॥ १८ ॥ अन्यानन्यां धनावस्थां प्राप्य वैशेषिकीं नराः । अतृप्ता यान्ति विध्वंसं सन्तोषं यान्ति पण्डिताः ॥ १९ ॥ सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥२०॥ अन्तो नास्ति पिपासायास्तुष्टिस्तु परमं सुखम् । तस्मात् सन्तोषमेवेह धनं पश्यन्ति पण्डिताः ॥ २१ ॥ निमेषमात्रमपि हि वयो गच्छन्न तिष्ठति । स्वशरीरेष्वनित्येषु नित्यं किमनुचिन्तयेत् ॥२२॥ भूतेषु भावं सञ्चिन्त्य ये बुद्धा मनसः परम् । न शोचन्ति गताध्वानः पश्यन्तः परमां गतिम् ॥ २३ ॥ सञ्चिन्वानकमेवैनं कामानामवितृप्तकम् । व्याघ्रः पशुमिवासाद्य मृत्युरादाय गच्छति ॥२४॥ तथाप्युपायं सम्पश्येद्दुःखस्य परिमोक्षणम् । अशोचन्नारभेच्चैव मुक्तश्चाव्यसनी भवेत् ॥ २५ ॥ शब्दे स्पर्शे च रूपे च गन्धेषु च रसेषु च । नोपभोगात् परं किञ्चिद्धनिनो वा धनस्य वा ॥ २६ ॥ प्राक्सम्प्रयोगाद्भूतानां नास्ति दुःखं परायणं । विप्रयोगात्तु सर्वस्य न शोचेत् प्रकृतिस्थितः ॥ २७ ॥ धृत्या शिश्नोदरं रक्षेत् पाणिपादञ्च चक्षुषा । चक्षुःश्रोत्रे च मनसा मनो वाचञ्च विद्यया ॥ २८ ॥ प्रणयं प्रतिसंहृत्य संस्तुतेष्वितरेषु च । विचरेदसमुन्नद्धः स सुखी स च पण्डितः ॥ २९ ॥ अध्यात्मरतिरासीनो निरपेक्षो निरामिषः । आत्मनैव सहायेन यश्चरेत् स सुखी भवेत् ॥ ३० ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शुकाभिपतने
विंशदधिकत्रिशततोऽध्यायः ॥ ३३० ॥

---

नारद उवाच । सुखदुःखविपर्यासो यदा समुपपद्यते । नैनं प्रज्ञा सुनीतं वा त्रायते नापि पौरुषम् ॥ १ ॥ स्वभावाद्यत्नमा-

तिष्ठेद्दुर्बलवान्नावसीदति । जरामरणरोगेभ्यः प्रियमात्मानमुद्ध-
रेत् ॥ २ ॥ रुजन्ति हि शरीराणि रोगाः शारीरमानसाः । सा-
यका इव तीक्ष्णाग्रा प्रयुक्ता दृढधन्विभिः ॥ ३ ॥ व्यथितस्य
विधित्साभिस्ताम्यतो जीवितैषिणः । अवशस्य विनाशाय शरीर-
मपकृष्यते ॥ ४ ॥ स्रवन्ति न निवर्त्तन्ते स्रोतांसि सरितामिव ।
आयुरादाय मर्त्त्यानां रात्र्यहानि पुनः पुनः ॥ ५ ॥ व्यत्ययो ह्ययम-
त्यन्तं पक्षयोः शुक्लकृष्णयोः । जातान् मर्त्त्यान् जरयति निमेषा-
न्नावतिष्ठते ॥ ६ ॥ सुखदुःखानि भूतानामजरो जरयत्यसौ ।
आदित्यो ह्यस्तमभ्येति पुनःपुनरुदेति च ॥ ७ ॥ अदृष्टपूर्वाना-
दाय भावानपरिशङ्कितान् । इष्टानिष्टान्मनुष्याणामस्तं गच्छन्ति
रात्रयः ॥ ८ ॥ यो यमिच्छेद्यथाकामं कामानान्तदवाप्नुयात् ।
यदि स्यान्न पराधीनं पुरुषस्य क्रियाफलम् ॥ ९ ॥ संयताश्च हि
दक्षाश्च मतिमन्तश्च मानवाः । दृश्यन्ते निष्फलाः सन्तः प्रहीणाः
सर्वकर्मभिः ॥ १० ॥ अपरे बालिशाः सन्तो निर्गुणाः पुरुषा-
धमाः । आशीर्भिरप्यसंयुक्ता दृश्यन्ते सर्वकामिनः ॥ ११ ॥ भूता-
नामपरः कश्चिद्धिंसायां सततोत्थितः । वञ्चनायाञ्च लोकस्य स-
सुखेष्वेव जीर्य्यते ॥ १२ ॥ अचेष्टमानमासीनं श्रीः कञ्चिदुपतिष्ठते ।
कश्चित् कर्मानुसृत्यान्यो नाप्राप्यमधिगच्छति ॥ १३ ॥ अपराधं
समाचक्ष्व पुरुषस्य स्वभावतः । शुक्रमन्यत्र सम्भूतं पुनरन्यत्र
गच्छति ॥ १४ ॥ तस्य योनौ प्रयुक्तस्य गर्भो भवति वा न वा ।
आम्रपुष्पोपमा यस्य निर्वृत्तिरुपलभ्यते ॥ १५ ॥ केषाञ्चित् पुत्र-
कामानामनुसन्तानमिच्छताम् । सिद्धौ प्रयतमानानां न चाण्डमुप-
जायते ॥ १६ ॥ गर्भाच्चोद्विजमानानां क्रुद्धादाशीविषादिव । आयु-
ष्मान् जायते पुत्रः कथं प्रेत्य इवाभवत् ॥ १७ ॥ देवानिष्ट्वा तप-
स्तप्त्वा कृपणः पुत्रगृद्धिभिः । दशमासान् परिधृता जायन्ते कुल-
पांसनाः ॥ १८ ॥ अपरे धनधान्यानि भोगांश्च पितृसञ्चितान् ।

विपुलानभिजानन्ते लब्धास्तैरेव मङ्गलैः ॥ १९ ॥ अन्योन्यं समभिप्रेत्य मैथुनस्य समागमम् । उपद्रव इवाविष्टो योनिं गर्भः प्रपद्यते ॥ २० ॥ शीघ्रं परशरीराणि छिन्नवीजं शरीरिणम् । प्राणिनं प्राणसंरोधे मांसश्लेष्मविचेष्टितम् ॥ २१ ॥ निर्दग्धं परदेहेऽभि परदेहं चलाचलम् । विनश्यन्तं विनाशान्ते नावि नावमिवाहितम् ॥ २२ ॥ सङ्गत्या जठरे न्यस्तं रेतोविन्दुमचेतनम् । केन यत्नेन जीवन्तं गर्भं त्वमिह पश्यसि ॥ २३ ॥ अन्नपानानि जीर्य्यन्ते यत्र भच्याश्च भचिताः । तस्मिन्नेवोदरे गर्भः किं नान्नमिव जीर्य्यते ॥ २४ ॥ गर्भे मूत्रपुरीषाणां स्वभावनियता गतिः । धारणे वा विसर्गे वा न कर्त्ता विद्यतेऽवशः ॥ २५ ॥ स्रवन्ति ह्युदराद्गर्भा जायमानास्तथा परे । आगमेन तथान्येषां विनाश उपपद्यते ॥ २६ ॥ एतस्माद्युयोनिसम्बन्धाद्युयो वीजं परिमुच्यते । प्रजाञ्च लभते काञ्चित् पुनर्द्वन्द्वेषु सज्जति ॥ २७ ॥ स तस्य सहजातस्य सप्तमीं नवमीं दशाम् । प्राप्नुवन्ति ततः पञ्च न भवन्ति गतायुषः ॥ २८ ॥ नाभ्युत्थाने मनुष्याणां योगाः स्युर्नात्र संशयः । व्याधिभिश्च विमथ्यन्ते व्याधैः चुद्रमृगा इव ॥ २९ ॥ व्याधिभिर्मथ्यमानानां त्यजतां विपुलं धनम् । वेदनां नापकर्षन्ति यतमानाश्चिकित्सकाः ॥ ३० ॥ ते चापि निपुणा वैद्याः कुशलाः सम्भृतौषधाः । व्याधिभिः परिकृष्यन्ते मृगा व्याधैरिवार्द्दिताः ॥ ३१ ॥ ते पिवन्तः कषायांश्च सर्पींषि विविधानि च । दृश्यन्ते जरया भग्ना नगा नागैरिवोत्तमैः ॥ ३२ ॥ के वा भुवि चिकित्सन्ते रोगार्त्तान् मृगपचिणः । श्वापदानि दरिद्रांश्च प्रायो नार्त्ता भवन्ति ते ॥ ३३ ॥ घोरानपि दुराधर्षान् नृपतीनुग्रतेजसः । आक्रम्याददते रोगाः पशून् पशुगणा इव ॥ ३४ ॥ इति लोकमनाक्रन्दं मोहशोकपरिप्लुतम् । स्रोतसा सहसा चिप्तं ह्रियमाणं वलीयसा ॥ ३५ ॥ न धनेन न राज्येन नोग्रेण तपसा तथा ।

स्वभावमतिवर्त्तन्ते ये नियुक्ताः शरीरिणः ॥ ३६ ॥ न म्रियेरन्न
जीर्य्येरन् सर्वे स्युः सर्वकामिनः । नाप्रियं प्रतिपश्येयुरुत्थानस्य
फले सति ॥ ३७ ॥ उपर्य्युपरि लोकस्य सर्वो गन्तुं समीहते ।
यतते च यथाशक्ति न च तद्वर्त्तते तथा ॥ ३८ ॥ ऐश्वर्य्यमदमत्तांश्च
मत्तान्मद्यमदेन च । अप्रमत्ताः शठाः शूरा विक्रान्ताः पर्य्युपासते
॥ ३९ ॥ क्लेशाः परिनिवर्त्तन्ते केषाञ्चिदसमीक्षिताः । स्वं स्वञ्च
पुनरन्येषां न किञ्चिदधिगम्यते ॥ ४० ॥ महच्च फलवैषम्यं दृश्यते
कर्म्मसन्धिषु । वहन्ति शिविकामन्ये यान्त्यन्ये शिविकागताः ॥४१॥
सर्वेषामृद्धिकामानामन्ये रथपुरःसराः । मनुष्याश्च शतस्त्रीकाः
शतशो विविधाः स्त्रियः ॥ ४२ ॥ द्वन्द्वारामेषु भूतेषु गच्छन्त्येकै-
कशो नराः । इदमन्यत् पदं पश्य मात्र मोहं करिष्यसि ॥ ४३ ॥
त्यज धर्ममधर्मञ्च उभे सत्यानृते त्यज । उभे सत्यानृते त्यक्त्वा
येन त्यजसि तं त्यज ॥ ४४ ॥ एतत्ते परमं गुह्यमाख्यातमृषि-
सत्तम । येन देवाः परित्यज्य मर्त्तलोकं दिवं गताः ॥ ४५ ॥
नारदस्य वचः श्रुत्वा शुकः परमबुद्धिमान् । सञ्चिन्त्य मनसा धीरो
निश्चयं नाध्यगच्छत ॥ ४६ ॥ पुत्रदारैर्म्महान् क्लेशो विद्याम्नाये
महान् श्रमः । किन्नु स्यात् शाश्वतं स्थानमल्पक्लेशं महोदयम्
॥ ४७ ॥ ततो मुहूर्त्तं सञ्चिन्त्य निश्चितां गतिमात्मनः । परा-
वरज्ञो धर्मस्य परां नैःश्रेयसीं गतिम् ॥ ४८ ॥ कथं त्वहमसंश्लिष्टो
गच्छेयं गतिमुत्तमाम् । नावर्त्तेयं यथा भूयो योनिसङ्करसागरे
॥ ४९ ॥ परं भावं हि काङ्क्षामि यत्र नावर्त्तते पुनः । सर्वसङ्गान्
परित्यज्य निश्चितो मनसा गतिम् ॥ ५० ॥ तत्र यास्यामि यत्रात्मा
शमं मेऽधिगमिष्यति । अक्षयश्चाव्ययश्चैव यत्र स्थास्यामि शाश्वतः
॥ ५१ ॥ न तु योगमृते शक्या प्राप्तुं सा परमा गतिः । अवबन्धो
हि बुद्धस्य कर्मभिर्नोपपद्यते ॥ ५२ ॥ तस्माद्योगं समास्थाय
त्यक्त्वा गृहकलेवरम् । वायुभूतः प्रवेक्ष्यामि तेजोराशिं दिवा-

करम् ॥ ५३ ॥ न ह्येष क्षयतां याति सोमः सुरगणैर्यथा।
कम्पितः पतते भूमिं पुनश्चैवाधिरोहति ॥ ५४ ॥ क्षीयते हि सदा
सोमः पुनश्चैवाभिपूर्य्यते। नेच्छाम्येवं विदित्वैते ह्रासवृद्धी पुनः
पुनः ॥ ५५ ॥ रविस्तु संतापयते लोकान् रश्मिभिरुल्बणैः। सर्व्वत-
स्तेज आदत्ते नित्यमक्षयमण्डलः। अतो मे रोचते गन्तुमादित्यं
दीप्ततेजसम् ॥५६॥ अत्र वत्स्यामि दुर्द्धर्षो निःशङ्केनान्तरात्मना।
सूर्य्यस्य सदने चाहं निक्षिप्येदं कलेवरम् ॥ ५७ ॥ ऋषिभिः सह
यास्यामि सौरं तेजोऽतिदुःसहम्। आपृच्छामि नगान्नागान्
गिरिभूर्व्वीं दिशो दिवम् ॥ ५८ ॥ देवदानवगन्धर्वान् पिशाचो-
रगराक्षसान्। लोकेषु सर्व्वभूतानि प्रवेक्ष्यामि न संशयः ॥५९॥
पश्यन्तु योगवीर्य्यं मे सर्व्वे देवाः सहर्षिभिः। अथानुज्ञाप्य तमृषिं
नारदं लोकविश्रुतम् ॥ ६० ॥ तस्मादनुज्ञां सम्प्राप्य जगाम पितरं
प्रति। सोऽभिवाद्य महात्मानं कृष्णद्वैपायनं मुनिम्। शुकः प्रद-
क्षिणं कृत्वा कृष्णमापृष्टवान्मुनिम् ॥ ६१ ॥ श्रुत्वा चर्षिस्तद्वचनं
शुकस्य प्रीतो महात्मा पुनराह चैनम्। भो भोः पुत्र स्थीयतां
तावदद्य यावच्चक्षुः प्रीणयामि त्वदर्थम् ॥ ६२ ॥ निरपेक्षः शुको
भूत्वा निःस्नेहो मुक्तसंशयः। मोक्षमेवानुसञ्चिन्त्य गमनाय मनो
दधे ॥ ६३ ॥ पितरं स परित्यज्य जगाम मुनिसत्तमः। कैलास-
पृष्ठं विपुलं सिद्धसङ्घनिषेवितम् ॥ ६४ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकाभिपतने
एकत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३१ ॥

---

भीष्म उवाच। गिरिशृङ्गं समारुह्य सुतो व्यासस्य भारत।
समे देशे विविक्ते स निःशलाक उपाविशत् ॥ १ ॥ धारयामास
चात्मानं यथाशास्त्रं यथाविधि। पादप्रभृति गात्रेषु क्रमेण क्रम-

योगवित् ॥ २ ॥ ततः स प्राङ्मुखो विद्वानादित्ये नाचिरोदिते।
पाणिपादं समादाय विनीतवदुपाविशत् ॥ ३ ॥ न तत्र पक्षि-
संघातो न शब्दो नातिदर्शनम्। यत्र वैयासकिर्धीमान् योक्तुं
समुपचक्रमे ॥ ४ ॥ स ददर्श तदात्मानं सर्वसङ्गविनिःसृतम्।
प्रजहास ततो हासं शुकः संप्रेक्ष्य तत्परम् ॥ ५ ॥ स पुनर्योग-
मास्थाय मोक्षमार्गोपलब्धये। महायोगेश्वरो भूत्वा सोऽत्यक्रामद्-
विहायसम् ॥ ६ ॥ ततः प्रदक्षिणं कृत्वा देवर्षिं नारदन्ततः।
निवेदयामास च तं स्वं योगं परमर्षये ॥ ७ ॥

शुक उवाच। दृष्टो मार्गः प्रवृत्तोऽस्मि स्वस्ति तेऽस्तु तपोधन।
त्वत्प्रसादाद्गमिष्यामि गतिमिष्टां महाद्युते ॥ ८ ॥

भीष्म उवाच। नारदेनाभ्यनुज्ञातः शुको द्वैपायनात्मजः।
अभिवाद्य पुनर्योगमास्थायाकाशमाविशत् ॥ ९ ॥ कैलासपृष्ठा-
दुत्पत्य स पपात दिवं तदा। अन्तरीक्षचरः श्रीमान् वायुभूतः
सुनिश्चितः ॥ १० ॥ तमुद्यन्तं द्विजश्रेष्ठं वैनतेयसमद्युतिम्। ददृशुः
सर्वभूतानि मनोमारुतरंहसम् ॥ ११ ॥ व्यवसायेन लोकांस्त्रीन्
सर्वान् सोऽथ विचिन्तयन्। आस्थितो दीर्घमध्वानं पावकार्कसम-
प्रभः ॥ १२ ॥ तमेकमनसं यान्तमव्यग्रमकुतोभयम्। ददृशुः सर्व-
भूतानि स्थावराणि चराणि च ॥ १३ ॥ यथाशक्ति यथान्यायं
पूजां वै चक्रिरे तदा। पुष्पवर्षैश्च दिव्यैस्तमवचक्रुर्दिवौकसः
॥ १४ ॥ तं दृष्ट्वा विस्मिताः सर्वे गन्धर्वाप्सरसां गणाः। ऋषय-
श्चैव संसिद्धाः परं विस्मयमागताः ॥ १५ ॥ अन्तरीक्षगतः कोऽयं
तपसा सिद्धिमागतः। अधःकायोर्द्ध्ववक्त्रश्च नेत्रैः समभिरज्यते॥१६॥
ततः परमधर्मात्मा त्रिषु लोकेषु विश्रुतः। भास्करं समुदीक्षन्
स प्राङ्मुखो वाग्यतोऽगमत्। शब्देनाकाशमखिलं पूरयन्निव
सर्वशः ॥ १७ ॥ तमापतन्तं सहसा दृष्ट्वा सर्वाप्सरोगणाः।
सम्भ्रान्तमनसो राजन्नासन् परमविस्मिताः ॥ १८ ॥ पञ्चचूडाप्रभृ-

तयो भृशमुत्फुल्ललोचनाः । दैवतं कतमद्व्येतदुत्तमां गतिमास्थि-
तम् । सुनिश्चित्मिहायाति विमुक्तमिव निस्पृहम् ॥ १९ ॥ ततः
समभिचक्राम मलयं नाम पर्वतम् । उर्वशी पूर्वचित्तिश्च यं नित्य-
मुपसेवतः ॥ २० ॥ तस्य ब्रह्मर्षिपुत्रस्य विस्मयं ययतुः परम ।
अहो बुद्धिसमाधानं वेदाभ्यासरते द्विजे ॥ २१ ॥ अचिरेणैव
कालेन नभश्चरति चन्द्रवत् । पितृशुश्रूषया बुद्धिं सम्प्राप्तोऽय-
मनुत्तमाम् ॥ २२ ॥ पितृभक्तो दृढ़तपाः पितुः सुदयितः सुतः ।
अनन्यमनसा तेन कथं पित्रा विसर्ज्जितः ॥ २३ ॥ उर्व्वश्या वचनं
श्रुत्वा शुकः परमधर्म्मवित् । उदैचत दिशः सर्वा वचने गतमानसः
॥ २४ ॥ सोऽन्तरीचं महीञ्चैव सशैलवनकाननम् । विलोकयां-
मास तदा सरांसि सरितस्तथा ॥ २५ ॥ ततो द्वैपायनसुतं बहु-
मानात् समन्ततः । कृताञ्जलिपुटाः सर्वा निरीचन्ते स्म देवताः
॥ २६ ॥ अब्रवीत्तास्तदा वाक्यं शुकः परमधर्म्मवित् । पिता
यद्यनुगच्छेन्मां क्रोशमानः शुकेति वै ॥ २७ ॥ ततः प्रतिवचो
देयं सर्वैरेव समाहितैः । एतन्मे स्नेहतः सर्वे वचनं कर्त्तुमर्हथ
॥ २८ ॥ शुकस्य वचनं श्रुत्वा दिशः सर्वाः सकाननाः । समुद्राः
सरितः शैलाः प्रत्यूचुस्तं समन्ततः ॥ २९ ॥ यथाज्ञापयसे
विप्र बाढ़मेवं भविष्यति । ऋषेर्व्याहरतो वाक्यं प्रतिवच्यामहे
वयम् ॥ ३० ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकाभिपतने द्वात्रिंश-
दधिकत्रिशततोऽध्यायः ॥ ३३२ ॥

---

भीष्म उवाच । इत्येवमुक्त्वा वचनं ब्रह्मर्षिः सुमहातपाः ।
प्रातिष्ठत शुकः सिद्धिं हित्वा दोषांश्चतुर्विधान् ॥ १ ॥ तमो ह्यष्ट-
विधं हित्वा जहौ पञ्चविधं रजः । ततः सत्त्वं जहौ धीमान् तद-

द्भुतमिवाभवत् ॥ २ ॥ ततस्तस्मिन् पदे नित्ये निर्गुणे लिङ्गवर्जिते। ब्रह्मणि प्रत्यतिष्ठत् स विधूमोऽग्निरिव ज्वलन् ॥ ३ ॥ उल्कापाता दिशां दाहा भूमिकम्पास्तथैव च। प्रादुर्भूताः क्षणे तस्मिंस्तदद्भुतमिवाभवत् ॥ ४ ॥ द्रुमाः शाखाश्च मुमुचुः शिखराणि च पर्वताः। निर्घातशब्दैश्च गिरिर्हिमवान् दीर्यतीव ह ॥ ५ ॥ न बभासे सहस्रांशुर्न जज्वाल च पावकः। ह्रदाश्च सरितश्चैव चुक्षुभुः सागरास्तथा ॥ ६ ॥ ववर्ष वासवस्तोयं रसवच्च सुगन्धि च। ववौ समीरणश्चापि दिव्यगन्धवहः शुचिः ॥ ७ ॥ स शृङ्गे प्रथमे दिव्ये हिमवन्मेरुसम्भवे। संश्लिष्टे श्वेतपीते द्वे रुक्मरूप्यमये शुभे ॥ ८ ॥ शतयोजनविस्तारे तिर्यगूर्द्ध्वञ्च भारत। उदीचीं दिशमास्थाय रुचिरे संददर्श ह ॥ ९ ॥ सोऽविशङ्केन मनसा तथैवाभ्यपतत् शुकः। ततः पर्वतशृङ्गे द्वे सहसैव द्विधाकृते ॥ १० ॥ अदृश्येतां महाराज तदद्भुतमिवाभवत्। ततः पर्वतशृङ्गाभ्यां सहसैव विनिःसृतः ॥ ११ ॥ न च प्रतिजघानास्य स गतिं पर्वतोत्तमः। ततो महानभूच्छब्दो दिवि सर्वदिवौकसाम् ॥ १२ ॥ गन्धर्वाणामृषीणाञ्च ये च शैलनिवासिनः। दृष्ट्वा शुकमतिक्रान्तं पर्वतञ्च द्विधाकृतम्। साधु साध्विति तत्रासीन्नादः सर्वत्र भारत ॥ १३ ॥ स पूज्यमानो देवैश्च गन्धर्वैर्ऋषिभिस्तथा। यक्षराक्षससङ्घैश्च विद्याधरगणैस्तथा ॥ १४ ॥ दिव्यैः पुष्पैः समाकीर्णमन्तरीक्षं समन्ततः। आसीत् किल महाराज शुकाभिपतने तदा ॥ १५ ॥ ततो मन्दाकिनीं रम्यामुपरिष्टादभिव्रजन्। शुको ददर्श धर्मात्मा पुष्पितद्रुमकाननाम् ॥ १६ ॥ तस्यां क्रीडन्त्यभिरतास्ते चैवाप्सरसां गणाः। शून्याकारं निराकाराः शुकं दृष्ट्वा विवाससः ॥ १७ ॥ तं प्रक्रामन्तमाज्ञाय पिता स्नेहसमन्वितः। उत्तमाङ्गतिमास्थाय पृष्ठतोऽनुससार ह ॥ १८ ॥ शुकस्तु मारुतादूर्द्ध्वं गतिं कृत्वान्तरीक्षगाम्। दर्शयित्वा प्रभावं स्वं ब्रह्मभूतोऽ-

भवत्तदा ॥ १९ ॥ महायोगगतिं लब्ध्वा व्युत्थाय महातपाः। निमेषान्तरमासाद्य शुकाभिपतनं ययौ ॥ २० ॥ स ददर्श द्विधा कृत्वा पर्व्वताग्रं शुकं गतम्। शशंसुर्ऋषयस्तस्य कर्म पुत्रस्य तत्तदा ॥ २१ ॥ ततः शुकेति दीर्घेण शब्देनाक्रन्दितस्तदा। स्वयं पित्रा स्वरेणोच्चैस्त्रींल्लोकाननुनाद्य वै ॥ २२ ॥ शुकः सर्व्वगतो भूत्वा सर्व्वात्मा सर्व्वतो मुखः। प्रत्यभाषत धर्म्मात्मा भोःशब्देनानुनादयन् ॥ २३ ॥ तत एकाक्षरं नादं भोरित्येव समीरयन्। प्रत्याहरज्जगत् सर्व्वमुच्चैः स्थावरजङ्गमम् ॥ २४ ॥ ततः प्रभृति चाद्यापि शब्दानुच्चरितान् पृथक्। गिरिगह्वरपृष्ठेषु व्याहरन्ति शुकं प्रति ॥ २५ ॥ अन्तर्हितः प्रभावन्तु दर्शयित्वा शुकस्तदा। गुणान् सन्त्यज्य शब्दादीन् पदमभ्यगमत् परम् ॥ २६ ॥ महिमानन्तु तं दृष्ट्वा पुत्रस्यामिततेजसः। निषसाद गिरिप्रस्थे पुत्रमेवान्वचिन्तयत् ॥ २७ ॥ ततो मन्दाकिनीतीरे क्रीड़न्त्योऽप्सरसां गणाः। आसाद्य तमृषिं सर्व्वाः सम्भ्रान्ता गतचेतसः ॥ २८ ॥ जले निलिल्यिरे काश्चित् काश्चिद्गुल्मान् प्रपेदिरे। वसनान्याददुः काश्चित्तं दृष्ट्वा मुनिसत्तमम् ॥ २९ ॥ तां मुक्ततान्तु विज्ञाय मुनिः पुत्रस्य वै तदा। सक्ततामात्मनश्चैव प्रीतोऽभूद्व्रीड़ितश्च ह ॥ ३० ॥ तं देवगन्धर्व्ववृतो महर्षिगणपूजितः। पिनाकहस्तो भगवानभ्यागच्छत शङ्करः ॥ ३१ ॥ तमुवाच महादेवः सान्त्वपूर्व्वमिदं वचः। पुत्रशोकाभिसन्तप्तं कृष्णद्वैपायनं तदा ॥ ३२ ॥ अग्नेर्भूमेरपां वायोरन्तरीक्षस्य चैव ह। वीर्य्येण सदृशः पुत्र पुरा मत्तस्त्वया वृतः ॥ ३३ ॥ स तथालक्षणो जातस्तपसा तव सम्भृतः। मम चैव प्रसादेन ब्रह्मतेजोमयः शुचिः ॥ ३४ ॥ स गतिं परमां प्राप्तो दुष्प्रापामजितेन्द्रियैः। दैवतैरपि विप्रर्षे तं त्वं किमनुशोचसि ॥ ३५ ॥ यावत् स्थास्यन्ति गिरयो यावत् स्थास्यन्ति सागराः। तावत्तवाक्षया कीर्त्तिः सपुत्रस्य

भविष्यति ॥ ३६ ॥ छायां स्वपुत्रसदृशीं सर्वतोऽनपगां सदा ।
द्रक्ष्यसे त्वञ्च लोकेऽस्मिन् मत्प्रसादान्महामुने ॥ ३७ ॥ सोऽनुनीतो
भगवता स्वयं रुद्रेण भारत । छायां पश्यन् समावृत्तः स मुनिः
परया मुदा ॥ ३८ ॥ इति जन्मगतिश्चैव शुकस्य भरतर्षभ ।
विस्तरेण समाख्याता यन्मां त्वं परिपृच्छसि ॥ ३९ ॥ एतदाचष्ट
मे राजन् देवर्षिर्नारदः पुरा । व्यासश्चैव महायोगी संजल्पेषु
पदे पदे ॥ ४० ॥ इतिहासमिमं पुण्यं मोक्षधर्मोपसंहितम् ।
धारयेद्यः शमपरः स गच्छेत् परमां गतिम् ॥ ४१ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि शुकाभिपतने त्रय-
स्त्रिंशदधिकत्रिशततोऽध्यायः ॥ ३३३ ॥

---

युधिष्ठिर उवाच । गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ
भिक्षुकः । य इच्छेत् सिद्धिमास्थातुं देवतां कां यजेत सः ॥ १ ॥
कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैःश्रेयसं परम् । विधिना केन
जुहुयात् दैवं पित्र्यं तथैव च ॥ २ ॥ मुक्तश्च कां गतिं गच्छेत्
मोक्षश्चैव किमात्मकः । स्वर्गतश्चैव किं कुर्य्याद्येन न च्यवते दिवः
॥ ३ ॥ देवतानाञ्च को देवः पितृणाञ्च पिता तथा । तस्मात्
परतरं यच्च तन्मे ब्रूहि पितामह ॥ ४ ॥

भीष्म उवाच । गूढं मां प्रश्नवित् प्रश्नं पृच्छसे त्वमिहानघ ।
न ह्येतत्तर्कया शक्यं वक्तुं वर्षशतैरपि ॥ ५ ॥ ऋते देवप्रसादाद्वा
राजन् ज्ञानागमेन वा । गहनं ह्येतदाख्यानं व्याख्यातव्यं तवा-
रिहन् ॥ ६ ॥ अत्राप्युदाहरन्तीममितिहासं पुरातनम् । नार-
दस्य च सम्वादं ऋषेर्नारायणस्य ह ॥ ७ ॥ नारायणो हि
विश्वात्मा चतुर्मूर्त्तिः सनातनः । धर्मात्मजः सम्बभूव पितैवं
मेऽभ्यभाषत । कृते युगे महाराज पुरा स्वायम्भुवेऽन्तरे । नरो

नारायणश्चैव हरिः कृष्णः स्वयम्भुवः ॥ ८ ॥ तेषां नारायणनरौ तपस्तेपतुरव्ययौ। वदर्य्याश्रममासाद्य शकटे कनकामये। अष्टचक्रं हि तद्यानं भूतयुक्तं मनोरमम् ॥ ९ ॥ अवाद्यौ लोकनाथौ तौ कृशौ धमनिसन्ततौ। तपसा तेजसा चैव दुर्निरीक्ष्यौ सुरैरपि ॥ १० ॥ यस्य प्रसादं कुर्व्वाते स देवो द्रष्टुमर्हति ॥ ११ ॥ नूनं तयोरनुमते हृदि हृच्छयचोदितः। महामेरोर्गिरेः शृङ्गात् प्रच्युतो गन्धमादनम्। नारदः सुमहद्भूतं सर्व्वलोकानचीचरत् ॥ १२ ॥ तं देशमगमद्राजन् वदर्य्याश्रममाशुगः। तयोराह्निकवेलायां तस्य कौतूहलं त्वभूत् ॥ १३ ॥ इदं तदास्पदं कृत्स्नं यस्मिंल्लोकाः प्रतिष्ठिताः। सदेवासुरगन्धर्व्वाः सकिन्नरमहोरगाः ॥ १४ ॥ एकामूर्त्तिरियं पूर्व्वं जाता भूयश्चतुर्व्विधा। धर्म्मस्य कुलसन्ताने धर्म्मादिभिर्व्विवर्द्धितः ॥ १५ ॥ अहो ह्यनुगृहीतोऽद्य धर्म्म एभिः सुरैरिह। नरनारायणाभ्याञ्च कृष्णेन हरिणा तथा ॥ १६ ॥ अत्र कृष्णो हरिश्चैव कस्मिंश्चित् कारणान्तरे। स्थितौ धर्म्मोत्तरौ ह्येतौ तथा तपसि धिष्ठितौ ॥ १७ ॥ एतौ हि परमं धाम कानयोराह्निकक्रिया। पितरौ सर्व्वभूतानां दैवतञ्च यशस्विनौ। कां देवतान्तु यजतः पितॄन् वा कान् महामती ॥ १८ ॥ इति सञ्चिन्त्य मनसा भक्त्या नारायणस्य तु। सहसा प्रादुरभवत् समीपे देवयोस्तदा ॥ १९ ॥ कृते दैवे च पित्रे च ततस्ताभ्यां निरीक्षितः। पूजितश्चैव विधिना यथा प्रोक्तेन शास्त्रतः ॥ २० ॥ तं दृष्ट्वा महदाश्चर्य्यमपूर्व्वं विधिविस्तरम्। उपोपविष्टः सुप्रीतो नारदो भगवानृषिः ॥ २१ ॥ नारायणं संनिरीक्ष्य प्रसन्नेनान्तरात्मना। नमस्कृत्य महादेवमिदं वचनमब्रवीत् ॥ २२ ॥

नारद उवाच। वेदेषु सपुराणेषु साङ्गोपाङ्गेषु गीयसे। त्वमजः शाश्वतो धाता मतोऽमृतमनुत्तमम्। प्रतिष्ठितं भूतभव्यं त्वयि सर्व्वमिदं जगत् ॥२३॥ चत्वारो ह्याश्रमा देव सर्व्वे गार्हस्थ्य-

मूलकाः। यजन्ते त्वामहरहर्नानामूर्त्तिसमास्थितम् ॥ २४ ॥ पिता माता च सर्वस्य जगतः शाश्वतो गुरुः। कं त्वद्य यजसे देवं पितरं कं न विद्महे ॥ २५ ॥

श्रीभगवानुवाच। अवाच्यमेतद्वक्तव्यमात्मगुह्यं सनातनम्। तव भक्तिमतो ब्रह्मन् वक्ष्यामि तु यथायथम् ॥ २६ ॥ यत्तत् सूक्ष्ममविज्ञेयमव्यक्तमचलं ध्रुवम्। इन्द्रियैरिन्द्रियार्थैश्च सर्वभूतैश्च वर्ज्जितम् ॥ २७ ॥ स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते। त्रिगुणव्यतिरिक्तो वै पुरुषश्चेति कल्पित ॥ २८ ॥ तस्माद्व्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम। अव्यक्ताव्यक्तभावस्था या सा प्रकृतिरव्यया ॥ २९ ॥ तां योनिमावयोर्विद्धि योऽसौ सदसदात्मकः। आवाभ्यां पूज्यते सो हि दैवे पित्रे च कल्प्यते ॥३०॥ नास्ति तस्मात् परोऽन्यो हि पिता देवोऽथ वा द्विज। आत्मा हि नः स विज्ञेयस्ततस्तं पूजयामहे ॥ ३१ ॥ तेनैषा प्रथिता ब्रह्मन्मर्य्यादा लोकभाविनी। दैवं पित्र्यञ्च कर्त्तव्यमिति तस्यानुशासनम् ॥ ३२ ॥ ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तथा यमः। मरीचिरङ्गिराविश्च पुलस्त्यः पुलह क्रतुः ॥ ३३ ॥ वशिष्ठः परमेष्ठी च विवस्वान् सोम एव च। कर्द्दमश्चापि यः प्रोक्तः क्रोधोऽवाक्क्रीत एव च ॥ ३४ ॥ एकविंशतिरुत्पन्नास्ते प्रजापतयः स्मृताः। तस्य देवस्य मर्य्यादां पूजयन्तः सनातनीम् ॥ ३५ ॥ दैवं पित्र्यञ्च सततं तस्य विज्ञाय तत्त्वतः। आत्मप्राप्तानि च ततः प्राप्नुवन्ति द्विजोत्तमाः ॥३५॥ स्वर्गस्था अपि ये केचित्तान्नमस्यन्ति देहिनः। ते तत्प्रसादाद्गच्छन्ति तेनादिष्टफलाङ्गतिम् ॥ ३७ ॥ ये हीनाः सप्तदशभिर्गुणैः कर्मभिरेव च। कलाः पञ्चदश त्यक्तास्ते मुक्ता इति निश्चयः ॥३८॥ मुक्तानान्तु गतिर्ब्रह्मन् क्षेत्रज्ञ इति कल्पिता। स हि सर्वगुणश्चैव निर्गुणश्चैव कथ्यते ॥ ३९ ॥ दृश्यते ज्ञानयोगेन आवाञ्च प्रसृतौ ततः। एवं ज्ञात्वा तमात्मानं पूजयाव सनातनम्॥४०॥

तं वेदाश्चाश्रमाश्चैव नानामतसमास्थिताः। भक्त्या संपूजयन्त्याशु
गतिञ्चैषां ददाति सः ॥ ४१ ॥ ये तु तद्भाविता लोके ह्येकान्तित्वं
समास्थिताः। एतदभ्यधिकन्तेषां यत्ते तं प्रविशन्त्युत ॥ ४२ ॥
इति गुह्यसमुद्देशस्तव नारद कीर्त्तितः। भक्त्या प्रेम्णा च विप्रर्षे
अस्मद्भक्त्या च ते श्रुतः ॥ ४३ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये
चतुस्त्रिंशदधिकत्रिशततोऽध्यायः ॥ ३३४ ॥

---

भीष्म उवाच। स एवमुक्तो द्विपदां वरिष्ठो नारायणेनोत्तम-
पूरुषेण। जगाद वाक्यं द्विपदां वरिष्ठं नारायणं लोकहिताधि-
वासम् ॥ १ ॥

नारद उवाच। यदर्थमात्मप्रभवेन जन्म कृतं त्वया धर्मगृहे
चतुर्द्धा। तत् साध्यतां लोकहितार्थमद्य गच्छामि द्रष्टुं प्रकृतिं
तवाद्याम् ॥ २ ॥ पूजां गुरूणां सततं करोमि परस्य गुह्यं न तु
भिन्नपूर्वम्। वेदाः स्वधीता मम लोकनाथ तप्तं तपो नानृतमुक्त-
पूर्वम् ॥ ३ ॥ गुप्तानि चत्वारि यथागमं मे शत्रौ च मित्रे च समो-
ऽस्मि नित्यम्। तञ्चादिदेवं सततं प्रपन्न एकान्तभावेन वृणोम्य-
जस्रम् ॥ ४ ॥ एभिर्विशेषैः परिशुद्धसत्त्वः कस्मान्न पश्येयमनन्त-
मीशम्। तत् पारमेष्ठस्य वचो निशम्य नारायणः शाश्वतधर्म-
गोप्ता ॥ ५ ॥ गच्छेति तं नारदमुक्तवान् स सम्पूजयित्वात्मविधि-
क्रियाभिः। ततो विसृष्टः परमेष्ठिपुत्रः सोऽभ्यर्चयित्वा तमृषिं
पुराणम् ॥ ६ ॥ खमुत्पपातोत्तमयोगयुक्तस्ततोऽधिमेरौ सहसा
निलिल्ये। तत्रावतस्थे च मुनिर्मुहूर्त्तमेकान्तमासाद्य गिरेः स
शृङ्गे ॥ ७॥ आलोकयन्नुत्तरपश्चिमेन ददर्श चाप्यद्भुतमुक्तरूपम्।
क्षीरोदधेरुत्तरतो हि द्वीपः श्वेतः सनाम्ना प्रथितो विशालः॥८॥

मेरोः सहस्रैः स हि योजनानां द्वात्रिंशतोर्द्ध्वं कविभिर्निरुक्तः।
अनिन्द्रियाश्चानशनाश्च तत्र निस्पन्दहीनाः सुसुगन्धिनस्ते ॥ ९ ॥
श्वेताः पुमांसो गतसर्वपापाश्चक्षुर्मुषः पापकृतां नराणाम्। वज्रास्थिकायाः सममानोन्माना दिव्यान्वयरूपाः शुभसारोपेताः ॥१०॥
छत्राकृतिशीर्षा मेघौघनिनादाः समसुष्कचतुष्का राजीवशतपादाः।
षष्ट्यादन्तैर्युक्ताः शुक्लैरष्टाभिर्दंष्ट्राभिर्येजिह्वाभिर्ये विश्ववक्त्रं लेलिह्यन्ते सूर्य्यप्रख्यम् ॥ ११ ॥ भक्त्या देवं विश्वोत्पन्नं यस्मात् सर्वे लोकाः सम्प्रसूताः। वेदाः धर्मा मुनयः शान्ता देवाः सर्वे तस्य निसर्गाः ॥ १२ ॥

युधिष्ठिर उवाच। अनिन्द्रिया निराहारा अनिस्पन्दाः सुगन्धिनः। कथन्ते पुरुषा जाताः का तेषां गतिरुत्तमा ॥ १३ ॥
ये च मुक्ता भवन्तीह नरा भरतसत्तम। तेषां लक्षणमेतद्धि तच्छ्वेतद्वीपवासिनाम् ॥ १४ ॥ तस्मान्मे संशयं छिन्धि परं कौतूहलं हि मे। त्वं हि सर्वकथा रामस्त्वाञ्चैवापाश्रिता वयम् ॥१५॥

भीष्म उवाच। विस्तीर्णैषा कथा राजन् श्रुता मे पितृसन्निधौ। यैषा तव हि वक्तव्या कथा सारो हि सा मता ॥ १६ ॥
राजोपरिचरो नाम बभूवाधिपतिर्भुवः। आखण्डलसख ख्यातो भक्तो नारायणं हरिम्। धार्मिको नित्यभक्तश्च पितुर्नित्यमतन्द्रितः। साम्राज्यं तेन सम्प्राप्तं नारायणवरात् पुरा ॥ १७ ॥
सात्त्वतं विधिमास्थाय प्राक्सूर्य्यमुखनिःसृतम्। पूजयामास देवेशं तच्छेषेण पितामहान् ॥ १८ ॥ पितृशेषेण विप्रांश्च संविभज्याश्रितांश्च सः। शेषान्नभुक् सत्यपरः सर्वभूतेष्वहिंसकः ॥ १९ ॥
सर्वभावेन भक्तः स देवदेवं जनार्द्दनम्। अनादिमध्यनिधनं लोककर्त्तारमव्ययम् ॥२०॥ तस्य नारायणे भक्तिं वहतो मित्रकर्षिणः।
एकं शय्यासनं देवो दत्तवान् देवराट् स्वयम् ॥ २१ ॥ आत्मराज्यं धनञ्चैव कलत्रं वाहनन्तथा। यत्तद्भागवतं सर्वमिति तत् प्रोक्षितं

सदा ॥२२॥ काम्यनैमित्तिका राजन् यज्ञियाः परमक्रियाः। सर्वाः सात्त्वतमास्थाय विधिं चक्रे समाहितः ॥२३॥ पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः। प्रायणं भगवत्प्रोक्तं भुञ्जते चाग्रभोजनम् ॥२४॥ तस्य प्रशासतो राज्यं धर्म्मेणामित्रघातिनः। नानृता वाक् समभवन्मनोदुष्टं न चाभवत् ॥२५॥ न च कायेन कृतवान् स पापं परमण्वपि। ये हि ते ऋषयः ख्याताः सप्त चित्रशिखण्डिनः ॥ २६ ॥ तैरेकमतिभिर्भूत्वा यत् प्रोक्तं शास्त्रमुत्तमम्। वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ॥ २७ ॥ आस्यैः सप्तभिरुद्गीर्णं लोकधर्म्ममनुत्तमम्। मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥ २८ ॥ वशिष्ठश्च महातेजास्ते हि चित्रशिखण्डिनः। सप्त प्रकृतयो ह्येतास्तथा स्वायम्भुवोऽष्टमः। एताभिर्धार्य्यते लोकस्ताभ्यः शास्त्रं विनिःसृतम् ॥ २९ ॥ एकाग्रमनसो दान्ता मुनयः संयमे रताः। भूतभव्यभविष्यज्ञाः सत्यधर्म्मपरायणाः ॥ ३० ॥ इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम्। लोकान् सञ्चिन्त्य मनसा ततः शास्त्रं प्रचक्रिरे ॥ ३१ ॥ तत्र धर्म्मार्थकामा हि मोक्षः पश्चाच्च कीर्त्तितः। मर्य्यादा विविधाश्चैव दिवि भूमौ च संस्थिताः॥ ३२ ॥ आराध्य तपसा देवं हरिं नारायणं प्रभुम्। दिव्यं वर्षसहस्रं वै सर्वे ते ऋषिभिः सह ॥ ३३ ॥ नारायणानुशिष्टा हि तदा देवी सरस्वती। विवेश तानृषीन् सर्वान् लोकानां हितकाम्यया ॥ ३४ ॥ ततः प्रवर्त्तिता सम्यक् तपोविद्भिर्द्विजातिभिः। शब्दे चार्थे च हेतौ च एषा प्रथम सर्गजा ॥ ३५॥ आदावेव हि तच्छास्त्रमोङ्कारस्वरपूजितम्। ऋषिभिः श्रावितं तत्र यत्र कारुणिको ह्यसौ ॥ ३६ ॥ ततः प्रसन्नो भगवानर्निर्द्दिष्टशरीरगः। ऋषीनुवाच तान् सर्वानदृश्यः पुरुषोत्तमः ॥ ३७ ॥ कृतं शतसहस्रं हि श्लोकानामिदमुत्तमम्। लोकतन्त्रस्य कृत्स्नस्य यस्माद्धर्मः प्रवर्त्तते ॥ ३८ ॥ प्रवृत्तौ च निवृत्तौ च यस्मादेतद्भविष्यति। यजु-

ऋक्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥ ३९ ॥ यथाप्रमाणं हि मया कृतो ब्रह्मप्रसादतः। रुद्रस्य क्रोधजो विप्रा यूयं प्रकृतयस्तथा ॥ ४० ॥ सूर्य्याचन्द्रमसौ वायुर्भूमिरापोऽग्निरेव च। सर्वे च नक्षत्रगणा यच्च भूताभिशब्दितम् ॥ ४१ ॥ अधिकारेषु वर्त्तन्ते यथा स्वं ब्रह्मवादिनः। सर्वे प्रमाणं हि यथा तथा तच्छास्त्रमुत्तमम् ॥ ४२ ॥ भविष्यति प्रमाणं वै एतन्मदनुशासनम्। तस्मात् प्रवक्ष्यते धर्म्मान्मनुः स्वायम्भुवः स्वयम् ॥ ४३ ॥ उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः। तदा प्रवक्ष्यतः शास्त्रं युष्मन्मतिभिरुद्धृतम् ॥ ४४ ॥ स्वायम्भुवेषु धर्म्मेषु शास्त्रे चौशनसे कृते। बृहस्पतिमते चैव लोकेषु प्रतिचारिते ॥ ४५ ॥ युष्मत्कृतमिदं शास्त्रं प्रजापालो वसुस्ततः। बृहस्पतिसकाशाद्वै प्राप्स्यते द्विजसत्तमाः ॥ ४६ ॥ स हि सद्भाविनो राजा मद्भक्तश्च भविष्यति। तेन शास्त्रेण लोकेषु क्रियाः सर्वाः करिष्यति ॥ ४७ ॥ एतद्धि युष्मच्छास्त्राणां शास्त्रमुत्तमसंज्ञितम्। एतदर्थ्यञ्च धर्म्यञ्च रहस्यञ्चैतदुत्तमम् ॥ ४८ ॥ अस्य प्रवर्त्तनाच्चैव प्रजावन्तो भविष्यथ। स च राजा श्रिया युक्तो भविष्यति महान्वसुः ॥ ४९ ॥ संस्थिते तु नृपे तस्मिन् शास्त्रमेतत् सनातनम्। अन्तर्द्धास्यति तत् सर्वमेतद्वः कथितं मया ॥ ५० ॥ एतावदुक्त्वा वचनमदृश्यः पुरुषोत्तमः। विसृज्य तानृषीन् सर्वान् कामपि प्रस्थितो दिशम् ॥ ५१ ॥ ततस्ते लोकपितरः सर्वलोकार्थचिन्तकाः। प्रावर्त्तयन्त तच्छास्त्रं धर्म्मयोनिं सनातनम् ॥ ५२ ॥ उत्पन्नेऽङ्गिरसे चैव युगे प्रथमकल्पिते। साङ्गोपनिषदं शास्त्रं स्थापयित्वा बृहस्पतौ ॥ ३ ॥ जग्मुर्यथेप्सितं देशं तपसे कृतनिश्चयाः। धारणाः सर्वलोकानां सर्वधर्म्मप्रवर्त्तकाः ॥ ५४ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये

पञ्चत्रिंशदधिकत्रिशततोऽध्यायः ॥ ३३५ ॥

भीष्म उवाच। ततोऽतीते महाकल्पे उत् पन्नेऽङ्गिरसः सुते।
बभूवुर्निर्वृता देवा जाते देवपुरोहिते॥ १॥ बृहद्ब्रह्म महच्चेति
शब्दाः पर्य्यायवाचकाः। एभिः समन्वितो राजन् गुणैर्विद्वान् बृह-
स्पतिः॥ २॥ तस्य शिष्यो बभूवाग्र्यो राजोपरिचरो वसुः।
अधीतवांस्तदा शास्त्रं सम्यक् चित्रशिखण्डिजम्॥ ३॥ स राजा
भावितः पूर्व्वं दैवेन विधिना वसुः। पालयामास पृथिवीं दिव-
माखण्डलो यथा॥४॥ तस्य यज्ञो महानासीदश्वमेधो महात्मनः।
बृहस्पतिरुपाध्यायस्तत्र होता बभूव ह॥ ५॥ प्रजापतिसुताश्चात्र
सदस्याश्चाभवंस्त्रयः। एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः॥६॥
धनुषाख्योऽथरैभ्यश्च अर्व्वावसुपरावसू। ऋषिर्मेधातिथिश्चैव ताण्ड्य-
श्चैव महानृषिः॥ ७॥ ऋषिः शान्तिर्महाभागस्तथा वेदशिराश्च
यः। ऋषिश्रेष्ठश्च कपिलः शालिहोत्रपिता स्मृतः॥ ८॥ आद्यः
कठस्तैत्तिरिश्च वैशम्पायनपूर्व्वजः। कण्वोऽथ देवहोत्रश्च एते
षोड़श कीर्त्तिताः॥ ९॥ सम्भृताः सर्व्वसम्भारास्तस्मिन्राजन्महा-
क्रतौ। न तत्र पशुघातोऽभूत् स राजैवास्थितोऽभवत्॥ १०॥
अहिंस्रः शुचिरक्षुद्रो निराशीः कर्म्मसंस्तुतः। आरण्यकपदोद्भूता
भागास्तत्रोपकल्पिताः॥ ११॥ प्रीतस्ततोऽस्य भगवान् देवदेवः
पुरातनः। साक्षात्तं दर्शयामास सोऽदृश्योऽन्येन केनचित्॥१२॥
स्वयम्भागमुपाघ्राय पुरोडाशं गृहीतवान्। अदृश्येन हृतो भागो
देवेन हरिमेधसा॥ १३॥ बृहस्पतिस्ततः क्रुद्धः स्रुचमुद्यम्य
वेगितः। आकाशं घ्नन् स्रुचः पातैरोषादश्रूण्यवर्त्तयत्॥ १४॥
उवाच चोपरिचरं मया भागोऽयमुद्यतः। ग्राह्यः स्वयं हि देवेन
मत्प्रत्यक्षं न संशयः॥ १५॥

युधिष्ठिर उवाच। उद्यता यज्ञभागा हि साक्षात् प्राप्ताः
सुरैरिह। किमर्थमिह न प्राप्तो दर्शनं स हरिर्विभुः॥ १६॥

भीष्म उवाच। ततः स तं समुद्भूतं भूमिपालो महान् वसुः।

प्रसादयामास मुनिं सदस्यास्ते च सर्वशः ॥ १७ ॥ ऊचुश्चैन-
मसम्भ्रान्ता न रोषं कर्त्तुमर्हसि । नैष धर्मः कृतयुगे यस्त्वं रोष-
मचीकृथाः ॥ १८ ॥ अरोषणो ह्यसौ देवो यस्य भागोऽयमुद्यतः ।
न शक्य स त्वया द्रष्टुमस्माभिर्वा बृहस्पते ॥ १९ ॥ यस्य प्रसादं
कुरुते स वै तं द्रष्टुमर्हति । एकतद्वितत्रिताश्चोचुस्ततश्चित्रशिख-
ण्डिनः ॥ २० ॥ वयं हि ब्रह्मणः पुत्रा मानसाः परिकीर्त्तिताः ।
गता निःश्रेयसार्थं हि कदाचिद्दिशमुत्तराम् ॥ २१ ॥ तप्त्वा वर्ष-
सहस्राणि चरित्वा तप उत्तमम् । एकपादाः स्थिताः सम्यक् काष्ठ-
भूताः समाहिताः ॥ २२ ॥ मेरोरुत्तरभागे तु क्षीरोदस्यानु-
कूलतः । स देशो यत्र नस्तप्तं तपः परमदारुणम् ॥ २३ ॥ कथं
पश्येमहि वयं देवं नारायणन्त्विति । अथ व्रतस्यावभृथे वागुवा-
चाशरीरिणी । स्निग्धगम्भीरया वाचा प्रहर्षणकरी विभो ॥२५॥
सुतप्तं वस्तपो विप्राः प्रसन्नेनान्तरात्मना । यूयं जिज्ञासवो भक्ताः
कथं द्रक्ष्यथ तं विभुम् ॥ २६ ॥ क्षीरोदधेरुत्तरतः श्वेतद्वीपो
महाप्रभः । तत्र नारायणपरा मानवाश्चन्द्रवर्चसः ॥ २७ ॥
एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमम् । ते सहस्रार्चिषं देवं
प्रविशन्ति सनातनम् ॥ २८ ॥ अनिन्द्रिया निराहारा अनिष्पन्दाः
सुगन्धिनः । एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः । गच्छध्वं
तत्र मुनयस्तत्रात्मा मे प्रकाशितः ॥ २९ ॥ अथ श्रुत्वा वयं सर्वे
वाचं तामशरीरिणीम् । यथाख्यातेन मार्गेण तं देशं प्रतिपेदिरे
॥ ३० ॥ प्राप्य श्वेतं महाद्वीपं तच्चित्तास्तद्दिदृक्षवः । ततोऽस्म-
द्दृष्टिविषयस्ततोऽप्रतिहतोऽभवत् । न च पश्याम पुरुषं तत्तेजो-
हृतदर्शनाः ॥ ३१ ॥ ततो न प्रादुरभवद्विज्ञानं देवयोगजम् । न
किलातप्ततपसा शक्यते द्रष्टुमञ्जसा ॥ ३२ ॥ ततः पुनर्वर्षशतं तप्त्वा
तात्कालिकं महत् । व्रतावसाने च शुभान्नरान्ददृशिरे वयम्
॥ ३३ ॥ श्वेतांश्चन्द्रप्रतीकाशान् सर्वलक्षणलक्षितान् । नित्या-

ञ्जलिकृतान् ब्रह्म जपतः प्रागुदङ्मुखान् ॥ ३४ ॥ मानसो नाम स जपो जप्यते तैर्म्महात्मभिः । तेनैकाग्रमनस्त्वेन प्रीतो भवति वै हरिः ॥ ३५ ॥ याभवन्मुनिशार्दूल भा सूर्य्यस्य युगक्षये । एकैकस्य प्रभा तादृक् साभवन्मानवस्य ह ॥ ३६ ॥ तेजोनिवासः स द्वीप इति वै मेनिरे वयम् । न तत्राभ्यधिकः कश्चित् सर्व्वे ते समतेजसः ॥ ३७ ॥ अथ सूर्य्यसहस्रस्य प्रभां युगपदुत्थिताम् । सहसा दृष्टवन्तः स्म पुनरेव बृहस्पते ॥ ३८ ॥ सहिताश्चाभ्यधावन्त ततस्ते मानवा द्रुतम् । कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः ॥ ३९ ॥ ततो हि वदतां तेषामश्रौष्म विपुलं ध्वनिम् । बलिः किलोपक्रियते तस्य देवस्य तैर्नरैः ॥४०॥ वयन्तु तेजसा तस्य सहसा हृतचेतसः । न किञ्चिदपि पश्यामो हतचक्षुर्बलेन्द्रियाः ॥ ४१ ॥ एकस्तु शब्दो विततः श्रुतोऽस्माभिरुदीरितः । जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ॥ ४२ ॥ नमस्तेऽस्तु हृषीकेश महापुरुष पूर्व्वज । इति शब्दः श्रुतोऽस्माभिः शिक्षाक्षरसमन्वितः ॥ ४३ ॥ एतस्मिन्नन्तरे वायुः सर्व्वगन्धवहः शुचिः । दिव्यान्युवाह पुष्पाणि कर्म्मण्याश्चौषधीस्तथा ॥ ४४ ॥ तैरिष्टः पञ्चकालज्ञैर्हरिरेकान्तिभिर्नरैः । भक्त्या परमया युक्तैर्म्मनोवाक्कर्म्मभिस्तथा ॥४५॥ नूनन्तत्रागतो देवो यथा तैर्वागुदीरिता । वयन्त्वेनं न पश्यामो मोहितास्तस्य मायया ॥४६॥ मारुते सन्निवृत्ते च बलौ च प्रतिपादिते । चिन्ताव्याकुलितात्मानो जाताः स्मोऽङ्गिरसाम्वर ॥ ४७ ॥ मानवानां सहस्रेषु तेषु वै शुद्धयोनिषु । अस्मान्न कश्चिन्मनसा चक्षुषा वाप्यपूजयत् ॥ ४८ ॥ तेऽपि स्वस्था मुनिगणा एकभावमनुव्रताः । नास्मासु दधिरे भावं ब्रह्मभावमनुष्ठिताः ॥ ४९ ॥ ततोऽस्मान् सुपरिश्रान्तां स्तपसा चातिकर्षितान् । उवाच खस्थं किमपि भूतं तत्राशरीरकम् ॥ ५० ॥

देव उवाच । दृष्टाः पुरुषाः श्वेताः सर्व्वेन्द्रियविवर्जिताः । दृष्टो भवति देवेश एभिर्द्दष्टैर्द्विजोत्तमैः ॥ ५१ ॥ गच्छध्वं मुनयः सर्व्वे

यथागतमितोऽचिरात्। न स शक्यस्त्वभक्तेन द्रष्टुं देवः कथञ्चन ॥५२॥
कामं कालेन महता एकान्तित्व मुपागतैः। शक्यो द्रष्टुं स भगवान्
प्रभामण्डलदुर्दृशः। महत् कार्य्यञ्च कर्त्तव्यं युष्माभिर्द्दिजसत्तमाः
॥ ५३ ॥ इतः कृतयुगेऽतीते विपर्य्यासङ्गतेऽपि च। वैवस्वतेऽन्तरे
विप्राः प्राप्ते त्रेतायुगे पुनः। सुराणां कार्य्यसिद्धार्थं सहाया वै
भविष्यथ ॥ ५४ ॥ ततस्तदद्भुतं वाक्यं निशम्यैवामृतोपमम्। तस्य
प्रसादात् प्राप्ताः स्मो देशमीप्सितमञ्जसा ॥ ५५ ॥ एवं सुतपसा
चैव हव्यकव्यैस्तथैव च। देवोऽस्माभिर्न दृष्टः स कथं त्वं द्रष्टुमर्हसि
॥ ५६ ॥ नारायणो महद्भूतं विश्वसृक्‌हव्यकव्यभुक्। अनादि-
निधनोऽव्यक्तो देवदानवपूजितः ॥ ५७ ॥ एवमेकतवाक्येन द्वित-
त्रितमतेन च। अनुनीतः सदस्यैस्तु वृहस्पतिरुदारधीः। समानय-
त्ततो यज्ञं दैवतं समपूजयत् ॥ ५८ ॥ समाप्तयज्ञो राजापि प्रजां
पालितवान् वसुः। ब्रह्मशापाद्दिवो भ्रष्टः प्रविवेश महीं ततः ॥५९॥
स राजा राजशार्दूल सत्यधर्म्मपरायणः। अन्तर्भूमिगतश्चैव सततं
धर्म्मवत्सलः ॥ ६० ॥ नारायणपरो भूत्वा नारायणपरं जपन्।
तस्यैव च प्रसादेन पुनरेवोत्थितस्तु सः ॥ ६१ ॥ महीतलाद्गतः स्थानं
ब्रह्मणः समनन्तरम्। पराङ्गतिमनुप्राप्त इति नैष्ठिकमञ्जसा ॥६२॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि नारायणीये षट्-
त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३६ ॥

---

युधिष्ठिर उवाच। यदा भागवतोऽत्यर्थमासीद्राजा महान्
वसुः। किमर्थं स परिभ्रष्टो विवेश विवरं भुवः ॥ १ ॥

भीष्म उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
ऋषीणाञ्चैव सम्वादं त्रिदशानाञ्च भारत ॥ २ ॥ अजेन यष्टव्य-
मिति प्राहुर्द्देवा द्विजोत्तमान्। स च च्छागोऽप्यजो ज्ञेयो नान्यः
पशुरितिस्थितिः ॥ ३ ॥

ऋषय ऊचुः। वीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः। अजसंज्ञानि वीजानि छागं नो हन्तुमर्हथ ॥ ४ ॥ नैष धर्म्मः सतां देवा यत्र वध्येत वै पशुः। इदं कृतयुगं श्रेष्ठं कथं वध्येत वै पशुः ॥ ५ ॥

भीष्म उवाच। तेषां संवदतामेवमृषीणां विबुधैः सह। मार्गागतो नृपश्रेष्ठस्तं देशं प्राप्तवान् वसुः। अन्तरीक्षचरः श्रीमान् समग्रबलवाहनः ॥ ६ ॥ तं दृष्ट्वा सहसायान्तं वसुं ते त्वन्तरीक्षगम्। ऊचुर्द्विजातयो देवानेष च्छेत्स्यति संशयम् ॥ ७ ॥ यज्वा दानपतिः श्रेष्ठः सर्व्वभूतहितप्रियः। कथं स्विदन्यथा ब्रूयादेष वाक्यं महान् वसुः ॥ ८ ॥ एवं ते संविदं कृत्वा विबुधा ऋषयस्तथा। अपृच्छन् सहसाभ्येत्य वसुं राजानमन्तिकात् ॥ ९ ॥ भो राजन् केन यष्टव्यमजेनाहो स्विदौषधैः। एतन्नः संशयं छिन्धि प्रमाणं नो भवान् मतः ॥ १० ॥ स तान् कृताञ्जलिर्भूत्वा परिपप्रच्छ वै वसुः। कस्य वै को मतः कामो ब्रूत सत्यं द्विजोत्तमाः ॥ ११ ॥

ऋषय ऊचुः। धान्यैर्यष्टव्यमित्येव पक्षोऽस्माकं नराधिप। देवानान्तु पशुः पक्षो मतो राजन् वदस्व नः ॥ १२ ॥

भीष्म उवाच। देवानान्तु मतं ज्ञात्वा वसुना पक्षसंश्रयात्। छागेनाजेन यष्टव्यमेवमुक्तं वचस्तदा ॥ १३ ॥ कुपितास्ते ततः सर्व्वे मुनयः सूर्य्यवर्च्चसः। ऊचुर्वसुं विमानस्थं देवपक्षार्थवादिनम् ॥ १४ ॥ सुरपक्षो गृहीतस्ते यस्मात्तस्माद्दिवः पत। अद्यप्रभृति ते राजन्नाकाशे विहता गतिः। अस्मच्छापाभिघातेन महीं भित्त्वा प्रवेक्ष्यसि ॥ १५ ॥ ततस्तस्मिन्मुहूर्त्तेऽथ राजोपरिचरस्तदा। अधो वै सम्बभूवाशु भूमेर्विवरगो नृप। स्मृतिस्त्वेवं न विजहौ तदा नारायणाज्ञया ॥ १६ ॥ देवास्तु सहिताः सर्व्वे वसोः शापविमोक्षणम्। चिन्तयामासुरव्यग्राः सुकृतं हि नृपस्य तत् ॥ १७ ॥ अनेनास्मत्कृते राज्ञा शापः प्राप्तो महात्मना। अस्य प्रतिप्रियं

कार्य्यं सहितैर्नो दिवौकसः ॥ १८ ॥ इति बुद्ध्या व्यवस्याशु गत्वा निश्चयमीश्वराः । ऊचुः संहृष्टमनसो राजोपरिचरं तदा ॥ १९ ॥ ब्रह्मण्यदेवभक्तस्त्वं सुरासुरगुरुर्हरिः । कामं स तव तुष्टात्मा कुर्य्याच्छापविमोचणम् ॥ २० ॥ मानना तु द्विजातीनां कर्त्तव्या वै महात्मनाम् । अवश्यं तपसा तेषां फलितव्यं नृपोत्तम ॥ २१ ॥ यतस्त्वं सहसा भ्रष्ट आकाशान्मेदिनीतलम् । एकन्त्वनुग्रहं तुभ्यं दद्मो वै नृपसत्तम ॥ २२ ॥ यावत्त्वं शापदोषेण कालमासिष्यसेऽनघ । भूमेर्विवरगो भूत्वा तावत्त्वं कालमाप्स्यसि ॥ २३ ॥ यज्ञेषु सुहुतां विप्रैर्वसोर्द्धारां समाहितैः । प्राप्स्यसेऽस्मदनुध्यानान्मा च त्वां ग्लानिरस्पृशत् ॥ २४ ॥ न क्षुत्पिपासे राजेन्द्र भूमेश्छिद्रे भविष्यतः । वसोर्धाराभिपीतत्वात्तेजसाप्यायितेन च । स देवोऽस्मद्वरात् प्रीतो ब्रह्मलोकं हि नेष्यति ॥ २५ ॥ एवं दत्त्वा वरं राज्ञे सर्वे ते च दिवौकसः । गताः स्वभवनं देवा ऋषयश्च तपोधनाः ॥ २६ ॥ चक्रे वसुस्ततः पूजां विश्वक्सेनाय भारत । जप्यं जगौ च सततं नारायणमुखोद्गतम् ॥ २७ ॥ तत्रापि पञ्चभिर्यज्ञैः पञ्चकालानरिन्दम । अयजद्धरिं सुरपतिं भूमेर्विवरगोऽपि सन् ॥ २८ ॥ ततोऽस्य तुष्टो भगवान् भक्त्या नारायणो हरिः । अनन्यभक्तस्य सततस्तत्परस्य जितात्मनः ॥ २९ ॥ वरदो भगवान् विष्णुः समीपस्थं द्विजोत्तमम् । गरुत्मन्तं महावेगमाबभाषेप्सितं तदा ॥ ३० ॥ द्विजोत्तम महाभाग पश्यतां वचनान्मम । सम्राड्राजा वसुर्नाम धर्म्मात्मा संशितव्रतः । ब्राह्मणानां प्रकोपेण प्रविष्टो वसुधातलम् ॥ ३१ ॥ मानितास्ते तु विप्रेन्द्रास्तन्तु गच्छ द्विजोत्तम ॥ ३२ ॥ भूमेर्विवरसंगुप्तं गरुडेह ममाज्ञया । अधश्चरं नृपश्रेष्ठं खेचरं कुरु माचिरम् ॥ ३३ ॥ गरुत्मानथ विक्षिप्य पक्षौ मारुतवेगवान् । विवेश विवरं भूमेर्यत्रास्ते पार्थिवो वसुः ॥ ३४ ॥ तत एनं समुत्क्षिप्य सहसा विनतासुतः । उत्पपात

नमस्तूर्णं तत्र चैनमसुस्तुत ॥ ३५ ॥ तस्मिन्मुहूर्त्ते संजज्ञे राजोपरिचरः पुनः । सशरीरो गतश्चैव ब्रह्मलोकं नृपोत्तमः ॥ ३६ ॥ एवन्तेनापि कौन्तेय वाग्दोषाद्देवताज्ञया । प्राप्ता गतिरधस्तात्तु द्विजशापान्महात्मना ॥ ३७ ॥ केवलं पुरुषस्तेन सेवितो हरिरीश्वरः । ततः शीघ्रं जहौ शापं ब्रह्मलोकमवाप च ॥ ३८ ॥

भीष्म उवाच । एतत्ते सर्वमाख्यातं सम्भूता मानवा यथा । नारदोऽपि यथा श्वेतं द्वीपं स गतवानृषिः । तत्ते सर्वं प्रवक्ष्यामि शृणुष्वैकमना नृप ॥ ३९ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि शुकाभिपतने एकत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३१ ॥

---

भीष्म उवाच । प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः । ददर्श तानेव नरान् श्वेतांश्चन्द्रसमप्रभान् ॥ . पूजयामास शिरसा मनसा तैश्च पूजितः । दिदृक्षुर्जप्यपरमः सर्व्वकृच्छ्रगतः स्थितः ॥२॥ भूत्वैकाग्रमना विप्र ऊर्द्ध्ववाहुः समाहितः । स्तोत्रं जगौ स विश्वाय निर्गुणाय गुणात्मने ॥ ३ ॥

नारद उवाच । नमस्ते देवदेवेश निष्क्रिय निर्गुण लोकसाक्षिन् क्षेत्रज्ञ पुरुषोत्तम अनन्त पुरुष महापुरुष पुरुषोत्तम त्रिगुण प्रधान अमृत अमृताख्य अनन्ताख्य व्योम सनातन सदसद्व्यक्ताव्यक्त ऋतधामन् आदिदेव वसुप्रद प्रजापते सुप्रजापते वनस्पते महाप्रजापते ऊर्ज्जस्पते वाचस्पते जगत्पते मनस्पते दिवस्पते मरुत्पते सलिलपते पृथिवीपते दिक्पते पूर्व्वनिवास गुह्य ब्रह्मपुरोहित ब्रह्मकायिक महाराजिक चातुर्म्महाराजिक आभासुर महाभासुर सप्तमहाभाग याम्य महायाम्य संज्ञासंज्ञ तुषित महातुषित प्रमर्द्दन परिनिर्म्मित अपरिनिर्मित वशवर्त्तिन् अपरिनिन्दित अपरिमित

वशवर्त्तिन् अवशवर्त्तिन् यज्ञ महायज्ञ यज्ञसम्भव यज्ञयोने यज्ञगर्भ यज्ञहृदय यज्ञस्तुत यज्ञभागहर पञ्चयज्ञ पञ्चकालकर्त्तृपते पञ्चरात्रिक वैकुण्ठ अपराजित मानसिक नामनामिक परस्वामिन् सुस्नात हंस परमहंस महाहंस परमयाज्ञिकः सांख्ययोग सांख्यमूर्त्ते अमृतेशय हिरण्येशय देवेशय कुशेशय ब्रह्मेशय पद्मेशय विश्वेश्वर विष्वक्सेन त्वं जगदन्वयः त्वं जगत्प्रकृतिः तवाग्निरास्यं वड़वामुखोऽग्निः त्वमाहुतिः सारथि त्वं वषट्कारः त्वं ओङ्कारः त्वं तपः त्वं मनः त्वं चन्द्रमाः त्वं चक्षुराज्यं त्वं सूर्य्यः त्वं दिशांगजः त्वं दिग्भानुः विदिग्भानो हयशिरः प्रथमत्रिसौपर्णः वर्णधर पञ्चाग्ने त्रिणाचिकेत षड़ङ्गनिधान प्राग्ज्योतिष ज्येष्ठसामग सामिकव्रतधर अथर्वशिराः पञ्चमहाकल्प फेणपाचार्य्य वालिखिल्य वैनगर्भ कौशिक पुरुष्टुत पुरुहूत विश्वकृत् विश्वरूप अनन्तगते अनन्तभोग अनन्त अनादे अमध्य अव्यक्तमध्य अव्यक्तनिधन व्रतावास समुद्राधिवास यशोवास तपोवास दमावास लक्ष्म्यावास विद्यावास कीर्त्त्यावास श्रीवास सर्व्वावास वासुदेव सर्वच्छन्दक हरिहय हरिमेध महायज्ञभागहर वरप्रदसुखप्रद धनप्रद हरिमेध यम नियम महानियम कृच्छ्र अतिकृच्छ्र महाकृच्छ्र सर्वकृच्छ्र नियमधर निवृत्तभ्रम प्रवचनगत पृश्निगर्भप्रवृत्त प्रवृत्तवेदक्रिय अज सर्व्वगते सर्वदर्शिन् अग्राह्य अचल महाविभूते माहात्म्यशरीर पवित्र महापवित्र हिरण्मय बृहत् अप्रतर्क्य अविज्ञेय ब्रह्माग्र प्रजासर्गकर प्रजानिधनकर महामायाधर चित्रशिखण्डिन् वरप्रद पुरोडाशभागहर गताध्वर छिन्नसंशय सर्वतोवृत्त ब्राह्मणरूप ब्राह्मणप्रिय विश्वमूर्त्ते महामूर्त्ते वान्धव भक्तवत्सल ब्रह्मण्यदेव भक्तोऽहं त्वां दिदृक्षुरेकान्तदर्शनाय नमोनमः॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि नारायणीये महापुरुषस्तवे अष्टत्रिंशदधिकत्रिशततमोऽध्यायः॥ ३३८॥

भीष्म उवाच। एवं स्तुतः स भगवान् गुह्यैस्तथ्यैश्च नामभिः।
तं मुनिं दर्शयामास नारदं विश्वरूपधृक्॥ १॥ किञ्चिच्चन्द्रा-
द्विशुद्धात्मा किञ्चिच्चन्द्राद्विशेषवान्। कृशानुवर्णः किञ्चिच्च किञ्चि-
द्धिष्ण्याकृतिः प्रभुः॥ २॥ शुकपत्रनिभः किञ्चित् किञ्चित् स्फाटिक-
सन्निभः। नीलाञ्जनचयप्रख्यो जातरूपप्रभः क्वचित्॥ ३॥ प्रवा-
लाङ्कुरवर्णश्च श्वेतवर्णस्तथा क्वचित्। क्वचित् सुवर्णवर्णाभो वैदूर्य्य-
सदृशः क्वचित्॥ ४॥ नीलवैदूर्य्यसदृश इन्द्रनीलनिभः क्वचित्।
मयूरग्रीववर्णाभो मुक्ताहारनिभः क्वचित्॥ ५॥ एतान् बहुवि-
धान् वर्णान् रूपैर्विभ्रत् सनातनः। सहस्रनयनः श्रीमाञ्छतशीर्षः
सहस्रपात॥ ६॥ सहस्रोदरबाहुश्च अव्यक्त इति च क्वचित्।
ओङ्कारमुद्गिरन् वक्त्रात् सावित्रीञ्च तदन्वयाम्॥ ७॥ शेषेभ्यश्चैव
वक्त्रेभ्यश्चतुर्व्वेदान् गिरन् बहून्। आरण्यकं जगौ देवो हरि-
र्नारायणो वशी॥ ८॥ वेदीं कमण्डलुं शुभ्रान् मणीनुपानहौ
कुशान्। अजिनं दन्तकाष्ठञ्च ज्वलितञ्च हुताशनम्। धारया-
मास देवेशो हस्तैर्यज्ञपतिस्तदा॥ ९॥ तं प्रसन्नं प्रसन्नात्मा नारदो
द्विजसत्तमः। वाग्यतः प्रणतो भूत्वा ववन्दे परमेश्वरम्॥ १०॥
तमुवाच नतं मूर्द्ध्ना देवानामादिरव्ययः॥ ११॥

श्रीभगवानुवाच। एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः। इमं
देशमनुप्राप्ता मम दर्शनलालसाः॥ १२॥ न च मां ते ददृशिरे
न च द्रक्ष्यति कश्चन। ऋते ह्येकान्तिकश्रेष्ठात् त्वञ्चैवैकान्तिकोत्तमः
॥ १३॥ ममैतास्तनवः श्रेष्ठा जाता धर्म्मगृहे द्विज। तास्त्वं
भजस्व सततं साधयस्व यथागतम्॥ १४॥ वृणीष्व च वरं विप्र
मत्तस्त्वं यदिहेच्छसि। प्रसन्नोऽहं तवाद्येह विश्वमूर्त्तिरिहा-
व्ययः॥ १५॥

नारद उवाच। अद्य मे तपसो देव यमस्य नियमस्य च।
सद्यः फलमवाप्तं वै दृष्टो यद्भगवान्मया॥ १६॥ वर एष ममा-

त्यन्तं दृष्टस्त्वं यत् सनातनः। भगवन् विश्वदृक् सिंहः सर्वमूर्त्ति-र्महान् प्रभुः॥ १७॥

भीष्म उवाच। एवं सन्दर्शयित्वा तु नारदं परमेष्ठिनम्। उवाच वचनं भूयो गच्छ नारद मा चिरम्॥ १८॥ इमे ह्यनिन्द्रियाहारा मद्भक्ताश्चन्द्रवर्चसः। एकाग्राश्चिन्तयेयुर्मां नैषां विघ्नो भवेदिति॥ १९॥ सिद्धा ह्येते महाभागाः पुरा ह्येकान्तिनोऽभवन्। तमोरजोभिर्निर्मुक्ता मां प्रवेक्ष्यन्त्यसंशयम्॥ २०॥ न दृश्यश्चक्षुषा योऽसौ न स्पृश्यः स्पर्शनेन च। न घ्रेयश्चैव गन्धेन रसेन च विवर्जितः॥ २१॥ सत्त्वं रजस्तमश्चैव न गुणास्तं भजन्ति वै। यश्च सर्वगतः साक्षी लोकस्यात्मेति कथ्यते॥ २२॥ भूतग्रामशरीरेषु नश्यत्सु न विनश्यति। अजो नित्यः शाश्वतश्च निर्गुणो निष्कलस्तथा॥ २३॥ द्विर्द्वादशेभ्यस्तत्त्वेभ्यः ख्यातो यः पञ्चविंशकः। पुरुषो निष्क्रियश्चैव ज्ञानदृश्यश्च कथ्यते॥ २४॥ यं प्रविश्य भवन्तीह मुक्ता वै द्विजसत्तमाः। स वासुदेवो विज्ञेयः परमात्मा सनातनः॥ २५॥ पश्य देवस्य माहात्म्यं महिमानञ्च नारद। शुभाशुभैः कर्मभिर्यो न लिप्यति कदाचन॥ २६॥ सत्त्वं रजस्तमश्चेति गुणानेतान् प्रचक्षते। एते सर्वशरीरेषु तिष्ठन्ति विचरन्ति च॥ २७॥ एतान् गुणांस्तु क्षेत्रज्ञो भुङ्क्ते नैभिः स भुज्यते। निर्गुणो गुणभुक्चैव गुणस्रष्टा गुणाधिकः॥ २८॥ जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते। ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते॥ २९॥ खे वायुः प्रलयं याति मनस्याकाशमेव च। मनो हि परमं भूतं तदव्यक्ते प्रलीयते॥ ३०॥ अव्यक्तं पुरुषे ब्रह्मन् निष्क्रिये सम्प्रलीयते। नास्ति तस्मात् परतरः पुरुषाद्वै सनातनात्॥ ३१॥ नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम्। ऋते तमेकं पुरुषं वासुदेवं सनातनम्॥ ३२॥ सर्वभूतात्मभूतो हि वासुदेवो महाबलः। पृथिवी वायुराकाश-

मापो ज्योतिश्च पञ्चमम् ॥ ३३ ॥ ते समेता महात्मानः शरीरमिति संज्ञितम् । तदा विशति यो ब्रह्मन्नदृश्यो लघुविक्रमः । उत्पन्न एव भवति शरीरं चेष्टयन् प्रभुः ॥ ३४ ॥ न विना धातुसङ्घातं शरीरं भवति क्वचित् ॥ ३५ ॥ न च जीवं विना ब्रह्मन् वायवश्चेष्टयन्तुरत । स जीवं परिसङ्ख्यातः शेषः सङ्कर्षणः प्रभुः ॥ ३६ ॥ तस्मात् सनत्कुमारत्वं यो लभेत् स्वेन कर्म्मणा । यस्मिंश्च सर्वभूतानि प्रलयं यान्ति संक्षये । स मनः सर्वभूतानां प्रदुम्नः परिपठ्यते ॥ ३७ ॥ तस्मात् प्रसूतो यः कर्त्ता कारणं कार्य्यमेव च । तस्मात् सर्वं सम्भवति जगत्स्थावरजङ्गमम् । सोऽनिरुद्धः स ईशानो व्यक्तः स सर्वकर्म्मसु ॥ ३८ ॥ यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः । ज्ञेयः स एव राजेन्द्र जीवः सङ्कर्षणः प्रभुः ॥ ३९ ॥ सङ्कर्षणाच्च प्रदुम्नो मनोभूतः स उच्यते । प्रद्युम्नाद्योऽनिरुद्धस्तु सोऽहङ्कारः स ईश्वरः ॥ ४० ॥ मत्तः सर्वं सम्भवति जगत्स्थावरजङ्गमम् । अक्षरञ्च क्षरञ्चैव सच्चासच्चैव नारद ॥ ४१ ॥ मां प्रविश्य भवन्तीह मुक्ता भक्तास्तु ये मम । अहं हि पुरुषो ज्ञेयो निष्क्रियः पञ्चविंशकः ॥ ४२ ॥ निर्गुणो निष्कलश्चैव निर्द्वन्द्वो निष्परिग्रहः । एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते । इच्छन्मुहूर्त्तान्नश्येयमीशोऽहं जगतो गुरुः ॥ ४३ ॥ माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि ॥ ४४ ॥ मयैतत् कथितं सम्यक् तव मूर्त्तिचतुष्टयम् । अहं कर्त्ता च कार्य्यञ्च कारणञ्चापि नारद ॥ ४५ ॥ अहं हि जीवसङ्घातो मयि जीवः समाहितः । नैवं ते बुद्धिरत्राभूत् दृष्टो जीवो मयेति वै ॥ ४६ ॥ अहं सर्वत्रगो ब्रह्मन् भूतग्रामान्तरात्मकः । भूतग्रामशरीरेषु नश्यत्सु न नशाम्यहम् ॥ ४७ ॥ सिद्धा हि ते महाभागा नरा ह्येकान्तिनोऽभवन् । तमोरजोभ्यां निर्मुक्ताः प्रवेक्ष्यन्ति च मां मुने ॥ ४८ ॥ हिरण्यगर्भो लोकादिश्चतुर्वक्त्रोऽनिरुक्तगः ।

ब्रह्मा सनातनो देवो मम बह्वर्थचिन्तकः ॥ ४९ ॥ ललाटश्चैव मे रुद्रो देवः क्रोधाद्विनिःसृतः। पश्यैकादश मे रुद्रान् दक्षिणं पार्श्वमास्थितान् ॥ ५० ॥ द्वादशैव तथादित्यान् वामपार्श्वं समास्थितान्। अग्रतश्चैव मे पश्य वसूनष्टौ सुरोत्तमान् ॥ ५१ ॥ नासत्यञ्चैव दस्रञ्च भिषजौ पश्य पृष्ठतः। सर्व्वान् प्रजापतीन् पश्य पश्य सप्त ऋषीं स्तथा ॥ ५२ ॥ वेदान् यज्ञांश्च शतशः पश्यामृतमथौषधीः। तपांसि नियमांश्चैव यमानपि पृथग्विधान् ॥ ५३ ॥ तथाष्टगुणमैश्वर्य्यमेकस्थं पश्य मूर्त्तिमत। श्रियं लक्ष्मीञ्च कीर्त्तिञ्च पृथिवीञ्च ककुद्मिनीम् ॥ ५४ ॥ वेदानां मातरं पश्य मत्स्थां देवीं सरस्वतीम्। ध्रुवञ्च ज्योतिषां श्रेष्ठं पश्य नारद खेचरम् ॥ ५५ ॥ अम्भोधरान् समुद्रांश्च सरांसि सरितस्तथा। मूर्त्तिमतः पितृगणां श्चतुरः पश्य सत्तम। त्रींश्चैवेमान् गुणान् पश्य मत्स्थान्मूर्त्तिविवर्ज्जितान् ॥ ५६ ॥ देवकार्य्यादपि मुने पितृकार्य्यं विशिष्यते। देवानाञ्च पितॄणाञ्च पिता ह्येकोऽहमादितः ॥ ५७ ॥ अहं हयशिरा भूत्वा समुद्रे पश्चिमोत्तरे। पिवामि सुहुतं हव्यं कव्यञ्च श्रद्धयान्वितम् ॥ ५८ ॥ मया सृष्टः पुरा ब्रह्मा मां यज्ञमयजत् स्वयम्। ततस्तस्मिन् वरान् प्रीतो दत्तवानस्म्यनुत्तमान् ॥ ५९ ॥ मत्पुत्रत्वञ्च कल्पादौ लोकाध्यक्षत्वमेव च। अहङ्कारकृतञ्चैव नामपर्य्यायवाचकम् ॥ ६० ॥ त्वया कृताञ्च मर्य्यादां नातिक्रंस्यति कश्चन। त्वञ्चैव वरदो ब्रह्मन् वरेप्सूनां भविष्यसि ॥ ६१ ॥ सुरासुरगणानाञ्च ऋषीणाञ्च तपोधन। पितॄणाञ्च महाभाग सततं संशितव्रत। विविधानाञ्च भूतानां त्वमुपास्यो भविष्यसि ॥ ६२ ॥ प्रादुर्भावगतश्चाहं सुरकार्य्येषु नित्यदा। अनुशास्यस्त्वया ब्रह्मन् नियोज्यश्च सुतो यथा ॥ ६३ ॥ एतांश्चान्यांश्च रुचिरान् ब्रह्मणेऽमिततेजसे। अहं दत्त्वा वरान् प्रीतो निवृत्तिपरमोऽभवम् ॥ ६४ ॥ निर्व्वाणं सर्वधर्म्माणां निवृत्तिः परमा स्मृता। तस्मान्निवृत्तिमा-

पन्नश्चरेत् सर्व्वाङ्गनिर्वृतः ॥ ६५ ॥ विद्यासहायवन्तञ्च आदित्यस्थं समाहितम् । कपिलं प्राहुराचार्य्याः साङ्ख्यनिश्चितनिश्चयाः ॥६६॥ हिरण्यगर्भो भगवानेष च्छन्दसि सुष्टुतः । सोऽहं योगरतिर्ब्रह्मन् योगशास्त्रेषु शब्दितः ॥ ६७ ॥ एषोऽहं व्यक्तिमागत्य तिष्ठामि दिवि शाश्वतः । ततो युगसहस्रान्ते संहरिष्ये जगत् पुनः ॥ ६८ ॥ कृत्वा मत्स्थानि भूतानि स्थावराणि चराणि च । एकाकी विद्यया सार्द्धं विहरिष्ये जगत् पुनः ॥ ६९ ॥ ततो भूयो जगत् सर्वं करिष्यामीह विद्यया । अस्मन्मूर्त्तिश्चतुर्थी या सासृजच्छेषनव्ययम् ॥ ७० ॥ स हि सङ्कर्षणः प्रोक्तः प्रद्युम्नं सोऽप्यजीजनत् । प्रद्युम्नादनिरुद्धोऽहं सर्गो मम पुनः पुनः ॥ ७१ ॥ अनिरुद्धात्तथा ब्रह्मा तन्नाभिकमलोद्भवः । ब्रह्मणः सर्वभूतानि चराणि स्थावराणि च ॥ ७२ ॥ एतां सृष्टिं विजानीहि कल्पादिषु पुनः पुनः । यथा सूर्य्यस्य गगणादुदयास्तमने इह ॥ ७३ ॥ नष्टे पुनर्बलात् काल आनयत्यमितद्युतिः । तथा बलादहं पृथ्वीं सर्वभूतहिताय वै ॥ ७४ ॥ सत्त्वैराक्रान्तसर्वाङ्गां नष्टां सागरमेखलाम् । आनयिष्यामि स्वस्थानं वाराहं रूपमास्थितः । हिरण्याक्षं वधिष्यामि दैतेयं बलगर्वितम् ॥ ७५ ॥ नारसिंहं वपुः कृत्वा हिरण्यकशिपुं पुनः । सुरकार्य्ये हनिष्यामि यज्ञघ्नं दितिनन्दनम् ॥ ७६ ॥ विरोचनस्य बलवान् बलिः पुत्रो महासुरः । अवध्यः सर्वलोकानां सदेवासुररक्षसाम् । भविष्यति स शक्रञ्च स्वराज्याच्च्यावयिष्यति ॥ ७७ ॥ त्रैलोक्येऽपहृते तेन विमुखे च शचीपतौ । अदित्यां द्वादशादित्यः सम्भविष्यामि कश्यपात् ॥७८॥ ततो राज्यं प्रदास्यामि शक्रायामिततेजसे । देवताः स्थापयिष्यामि स्वेषु स्थानेषु नारद ॥ ७९ ॥ बलिञ्चैव करिष्यामि पातालतलवासिनम् । दानवञ्च बलिं श्रेष्ठमवध्यं सर्वदैवतैः ॥ ८० ॥ त्रेतायुगे भविष्यामि रामो भृगुकुलोद्वहः । क्षत्त्रञ्चोत्सादयिष्यामि

सन्तद्धवलवाहनम् ॥ ८१ ॥ सन्ध्यांशे समनुप्राप्ते त्रेतायां द्वापरस्य च। अहं दाशरथी रामो भविष्यामि जगत्पतिः ॥ ८२ ॥ त्रितोपघाताद्वैरूप्यमेकतोऽथ द्वितस्तथा। प्राप्स्येते वानरत्वं हि प्रजापतिसुतावृषी ॥ ८३ ॥ तयोर्ये त्वन्वये जाता भविष्यन्ति वनौकसः। महाबलाः महावीर्य्याः शक्रतुल्यपराक्रमाः। ते सहाया भविष्यन्ति सुरकार्य्ये मम द्विज ॥ ८४ ॥ ततो रक्षःपतिं घोरं पुलस्त्यकुलपांसनम्। हनिष्ये रावणं रौद्रं सगणं लोककण्टकम् ॥ ८५ ॥ द्वापरस्य कलेश्चैव सन्धौ पर्य्यवसानिके। प्रादुर्भावः कंसहेतोर्मथुरायां भविष्यति ॥ ८६ ॥ तत्राहं दानवान् हत्वा सुबहून् देवकण्टकान्। कुशस्थलीं करिष्यामि निवेशं द्वारकां पुरीम् ॥ ८७॥ वसानस्तत्र वै पुर्य्यामदितेर्विप्रियङ्करम्। हनिष्ये नरकं भौमं मुरुं पीठञ्च दानवम् ॥ ८८ ॥ प्राग्ज्योतिषपुरं रम्यं नानाधनसमन्वितम्। कुशस्थलीं नयिष्यामि हत्वा वै दानवोत्तमम् ॥ ८९ ॥ महेश्वरमहासेनौ बाणप्रियहितैषिणौ। पराजेष्याम्यथोद्युक्तौ देवलोकनमस्कृतौ ॥ ९० ॥ ततः सुतं बलेर्जित्वा बाणं बाहुसहस्रिणम्। विनाशयिष्यामि ततः सर्वान् सौभनिवासिनः ॥ ९१ ॥ यः कालयवनख्यातो गार्ग्यतेजोऽभिसंवृतः। भविष्यति वधस्तस्य मत्त एव द्विजोत्तम ॥ ९२ ॥ जरासन्धश्च बलवान् सर्वराजविरोधनः। भविष्यत्यसुरः स्फीतोभूमिपालो गिरिव्रजे ॥ ९३ ॥ मम बुद्धिपरिस्पन्दाद्वधस्तस्य भविस्यति। शिशुपालं वधिष्यामि यज्ञे धर्म्मसुतस्य वै ॥ ९४ ॥ समागतेषु बलिषु पृथिव्यां सर्वराजसु। वासविः सुसहायो वै मम ह्येको भविष्यति ॥ ९५ ॥ युधिष्ठिरं स्थापयिष्ये स्वराज्ये भ्रातृभिः सह। एवं लोका वदिष्यन्ति नरनारायणावृषी ॥ ९६ ॥ उद्युक्तौ दहतः क्षत्रं लोककार्य्यार्थमीश्वरौ। कृत्वा भारावतरणं वसुधाया यथेप्सितम् ॥ ९७॥ सर्वसात्वतमुख्यानां द्वारकायाश्च सत्तम। करिष्ये प्रलयं घोरमात्म-

ज्ञानाभिसंवृतम् ॥ ९८ ॥ कर्म्माण्यपरिमेयाणि चतुर्मूर्त्तिधरो ह्यहम्। कृत्वा लोकान् गमिष्यामि स्वानहं ब्रह्मसत्कृतान् ॥ ९९ ॥ हंसः कूर्म्मश्च मत्स्यश्च प्रादुर्भावाद्विजोत्तम। वराहो नारसिंहश्च वामनो राम एव च। रामो दाशरथिश्चैव सात्वतः कल्किरेव च ॥ १०० ॥ यदा वेदश्रुतिर्नष्टा मया प्रत्याहृता पुनः। सवेदाः सश्रुतीकाश्च कृताः पूर्वं कृते युगे ॥ १०१ ॥ अतिक्रान्ता पुराणेषु श्रुतास्ते यदि वा क्वचित्। अतिक्रान्ताश्च वहवः प्रादुर्भावा ममोत्तमाः ॥ १०२ ॥ लोककार्य्याणि कृत्वा च पुनः स्वां प्रकृतिं गताः। न ह्येतत् ब्रह्मणा प्राप्तमीदृशं मम दर्शनम् ॥ १०३ ॥ यत्त्वया प्राप्तमद्येह एकान्तगतबुद्धिना। एतत्ते सर्वमाख्यातं ब्रह्मन् भक्तिमते मया। पुराणञ्च भविष्यञ्च सरहस्यञ्च सत्तम ॥ १०४ ॥

भीष्म उवाच। एवं स भगवान्देवो विश्वमूर्त्तिधरोऽव्ययः। एतावदुक्त्वा वचनं तत्रैवान्तर्दधे पुनः ॥ १०५ ॥ नारदोऽपि महातेजाः प्राप्यानुग्रहमीप्सितम्। नरनारायणौ द्रष्टुं वदर्य्याश्रममाद्रवत् ॥ १०६ ॥ इदं महोपनिषदं चतुर्वेदसमन्वितम्। साङ्ख्ययोगकृतं तेन पञ्चरात्रानुशब्दितम् ॥ १०७ ॥ नारायणमुखोद्गीतं नारदोऽश्रावयत् पुनः। ब्रह्मणः सदने तात यथादृष्टं यथाश्रुतम् ॥ १०८ ॥

युधिष्ठिर उवाच। एतदाश्चर्य्यभूतं हि माहात्म्यं तस्य धीमतः। किं वै ब्रह्मा न जानीते यतः शुश्राव नारदात् ॥ १०९ ॥ पितामहोऽपि भगवां स्तस्माद्देवादनन्तरः। कथं स न विजानीयात् प्रभावममितौजसः ॥ ११० ॥

भीष्म उवाच। महाकल्पसहस्राणि महाकल्पशतानि च। समतीतानि राजेन्द्र सर्गाश्च प्रलयाश्च ह ॥ १११ ॥ सर्गस्यादौ स्मृतो ब्रह्मा प्रजासर्गकरः प्रभुः। जानाति देवप्रवरं भूयश्चातोऽधिकं नृप ॥ ११२ ॥ परमात्मानमीशानमात्मनः प्रभवं तथा। ये

लन्ये ब्रह्मसदने सिद्धसंघाः समागताः ॥ ११३ ॥ तेभ्यस्तत् श्रावयामास पुराणं वेदसम्मितम्। तेषां सकाशात् सूर्य्यस्तु श्रुत्वा वै भावितात्मनाम् ॥ ११४ ॥ आत्मानुगामिनां राजन् श्रावयामास वै ततः। षट्षष्टिर्हि सहस्राणि ऋषीणां भावितात्मनाम् ॥ ११५ ॥ सूर्य्यस्य तपतो लोका निर्म्मिता ये पुरःसराः। तेषामकथयत् सूर्य्यः सर्व्वेषां भावितात्मनाम् ॥ ११६ ॥ सूर्य्यानुगामिभिस्तात ऋषिभि स्तैर्म्महात्मभिः। मेरौ समागता देवाः श्राविताश्चेदमुत्तमम् ॥ ११७ ॥ देवानान्तु सकाशाद्वै ततः श्रुत्वाऽसितो द्विजः। श्रावयामास राजेन्द्र पितॄणां मुनिसत्तमः ॥ ११८ ॥ मम चापि पिता तात कथयामास शान्तनुः। ततो मयापि श्रुत्वा च कीर्त्तितं तव भारत ॥ ११९ ॥ सुरैर्व्वा मुनिभिर्व्वापि पुराणं यैरिदं श्रुतम्। सर्व्वे ते परमात्मानं पूजयन्ति समन्ततः ॥ १२० ॥ इदमाख्यानमार्षेयं पारम्पर्य्यागतं नृप। नावासुदेवभक्ताय त्वया देयं कथञ्चन ॥ १२१ ॥ मत्तोऽन्यानि च ते राजन्नुपाख्यानशतानि वै। यानि श्रुतानि सर्व्वाणि तेषां सारोऽयमुद्धृतः ॥ १२२ ॥ सुरासुरैर्यथा राजन्निर्म्मथ्यामृतमुद्धृतम्। एवमेतत् पुरा विप्रैः कथामृतमिहोद्धृतम् ॥ १२३ ॥ यश्चेदं पठते नित्यं यश्चेदं शृणुयान्नरः। एकान्तभावोपगत एकान्तेषु समाहितः ॥ १२४ ॥ प्राप्य श्वेतं महाद्वीपं भूत्वा चन्द्रप्रभो नरः। स सहस्रार्च्चिषं देवं प्रविशेन्नात्र संशयः ॥ १२५ ॥ मुच्येदार्त्तस्तथा रोगात् श्रुत्वेमामादितः कथाम्। जिज्ञासुर्ल्लभते कामान् भक्तो भक्तगतिं व्रजेत् ॥ १२६ ॥ त्वयापि सततं राजन्नभ्यर्च्च्यः पुरुषोत्तमः। स हि माता पिता चैव कृत्स्नस्य जगतो गुरुः ॥ १२७ ॥ ब्रह्मण्यदेवो भगवान् प्रीयतां ते सनातनः। युधिष्ठिर महाबाहो महाबुद्धिर्ज्जनार्द्दनः ॥ १२८ ॥

वैशम्पायन उवाच। श्रुत्वैतदाख्यानवरं धर्म्मराड्जनमेजय। भ्रातरश्चास्य ते सर्व्वे नारायणपराभवन् ॥ १२९ ॥ जितं भगवता

तेन पुरुषिणेति भारत। नित्यं जप्यपरा भूत्वा सरस्वतीमुदैरयन्
॥ १३० ॥ यो ह्यस्माकं गुरुश्रेष्ठः कृष्णद्वैपायनो मुनिः। जगौ
परमकं जप्यं नारायणमुदीरयन्॥ १३१ ॥ गतान्तरीचात् सततं
चीरोदममृताशयम्। पूजयित्वा च देवेशं पुनरायात् स्वमा-
श्रमम् ॥ १३२ ॥

भीष्म उवाच। एतत्ते सर्वमाख्यातं नारदोक्तं मयेरितम्।
पारम्पर्य्यागतं ह्येतत् पित्रा मे कथितं पुरा ॥ १३३ ॥

सूत उवाच। एतत्ते सर्वमाख्यातं वैशम्पायनकीर्त्तितम्। जन-
मेजयेन तत् श्रुत्वा कृतं सम्यग्यथाविधि ॥ १३४ ॥ यूयं हि तप्त-
तपसः सर्वे च चरितव्रताः। सर्वे वेदविदो मुख्या नैमिषारण्य-
वासिनः ॥ १३५ ॥ शौनकस्य महासत्रं प्राप्ताः सर्वे द्विजोत्तमाः।
यजध्वं सुहुतैर्यज्ञैः शाश्वतं परमेश्वरम्। पारम्पर्य्यागतं ह्येतत्
पित्रा मे कथितं पुरा ॥ १३६ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि नारायणीये
एकोनचत्वारिंशदधिकत्रिशतोऽध्यायः ॥ ३३९ ॥

---

शौनक उवाच। कथं स भगवान्देवो यज्ञेष्वग्रहरः प्रभुः।
यज्ञधारी च सततं वेदवेदाङ्गवित्तथा ॥ १ ॥ निवृत्तश्चास्थितो
धर्मे क्षमी भागवतः प्रभुः। निवृत्तिधर्म्मान् विदधे स एव भग-
वान प्रभुः ॥ २ ॥ कथं प्रवृत्तिधर्मेषु भागार्हा देवताः कृताः।
कथं निवृत्तिधर्म्माश्च कृता व्यावृत्तबुद्धयः ॥ ३ ॥ एतन्नः संशयं
सूत छिन्धि गुह्यं सनातनम्। त्वया नारायणकथा श्रुता वै
धर्म्मसंहिताः ॥ ४ ॥

सौतिरुवाच। जनमेजयेन यत् पृष्टः शिष्यो व्यासस्य धीमतः।
तत्तेऽहं कथयिष्यामि पौराणं शौनकोत्तम ॥ ५ ॥ श्रुत्वा माहात्म्य-

मेतस्य देहिनां परमात्मनः। जनमेजयो महाप्राज्ञो वैशम्पायनमब्रवीत् ॥ ६ ॥

जनमेजय उवाच। इमे सब्रह्मका लोकाः ससुरासुरमानवाः। क्रियास्वभ्युदयोक्तासु सक्ता दृश्यन्ति सर्वशः ॥ ७ ॥ मोक्षश्चोक्तस्त्वया ब्रह्मन्निर्वाणं परमं सुखम्। ये तु मुक्ता भवन्तीह पुण्यपापविवर्ज्जिताः। ते सहस्रार्च्चिषं देवं प्रविशन्तीह शुश्रुम ॥ ८ ॥ अयं हि दुरनुष्ठेयो मोक्षधर्म्मः सनातनः। यं हित्वा देवताः सर्व्वा हव्यकव्यभुजोऽभवन् ॥ ९ ॥ किन्नु ब्रह्मा च रुद्रश्च शक्रश्च वलभित् प्रभुः। सूर्य्यस्ताराधिपो वायुरग्निर्व्वरुण एव च ॥ १० ॥ आकाशं जगती चैव ये च शेषा दिवौकसः। प्रलयं न विजानन्ति आत्मनः परिनिर्म्मितम् ॥ ११ ॥ ततस्ते नास्थिता मार्गं ध्रुवमक्षरमव्ययम्। स्मृति कालपरीमानं प्रवृत्तिं ये समास्थिताः ॥ १२ ॥ दोषः कालपरीमाणे महानेष क्रियावताम्। एतन्मे संशयं विप्र हृदि शल्यमिवार्पितम्। छिन्धीतिहासकथनात् परं कौतूहलं हि मे ॥१३॥ कथं भागहराः प्रोक्ता देवता क्रतुषु द्विज। किमर्थञ्चाध्वरे ब्रह्मन्निज्यन्ते त्रिदिवौकसः ॥ १४ ॥ ये च भागं प्रगृह्णन्ति यज्ञेषु द्विजसत्तम। ते यजन्तो महायज्ञैः कस्य भागं ददन्ति वै ॥ १५ ॥

वैशम्पायन उवाच। अहो गूढ़तमः प्रश्नस्त्वया पृष्टो जनेश्वर। नातप्ततपसा ह्येष नावेदविदुषा तथा। नापुराणविदा चैव शक्यो व्याहर्त्तुमञ्जसा ॥ १६ ॥ हन्त ते कथयिष्यामि यन्मे पृष्टः पुरा गुरुः। कृष्णद्वैपायनो व्यासो वेदव्यासो महानृषिः ॥ १७ ॥ सुमन्तुर्जैमिनिश्चैव पैलश्च सुदृढ़व्रतः। अहं चतुर्थः शिष्यो वै पञ्चमश्च शुकः स्मृतः ॥ १८ ॥ एतान् समागतान् सर्व्वान् पञ्चशिष्यान्दमान्वितान्। शौचाचारसमायुक्तान् जितक्रोधान् जितेन्द्रियान्। वेदानध्यापयामास महाभारतपञ्चमान् ॥ १९ ॥ मेरौ गिरिवरे रम्ये सिद्धचारणसेविते। तेषामभ्यस्यतां वेदान् कदाचित्

संशयोऽभवत् ॥ २० ॥ एष वै यस्त्वया पृष्टस्तेन तेषां प्रकीर्त्तितः।
ततः श्रुतो मया चापि तवाख्येयोऽद्य भारत ॥ २१ ॥ शिष्याणां
वचनं श्रुत्वा सर्व्वाज्ञानतमोनुदः। पराशरसुतः श्रीमान् व्यासो
वाक्यमथाब्रवीत् ॥ २२ ॥ मया हि सुमहत्तप्तं तपः परमदारुणम्।
भूतं भव्यं भविष्यञ्च जानीयामिति सत्तमा ॥ २३ ॥ तस्य मे तप्त-
तपसो निगृहीतेन्द्रियस्य च। नारायणप्रसादेन क्षीरोदस्यानु-
कूलतः। त्रैकालिकमिदं ज्ञानं प्रादुर्भूतं यथेप्सितम् ॥ २४ ॥
तत् शृणुध्वं यथान्यायं वक्ष्ये संशयमुत्तमम्। यथावृत्तं हि कल्पादौ
दृष्टं मे ज्ञानचक्षुषा ॥ २५ ॥ परमात्मेति यं प्राहुः सांख्या योग-
विदो जनाः। महापुरुषसंज्ञां स लभते स्वेन कर्म्मणा। तस्मात्
प्रसूतमव्यक्तं प्रधानं तं विदुर्बुधाः ॥ २६ ॥ अव्यक्ताद्व्यक्तमुत्पन्नं
लोकसृष्ट्यर्थमीश्वरात्। अनिरुद्धो हि लोकेषु महानात्मेति क-
थ्यते ॥ २७ ॥ योऽसौ व्यक्तत्वमापन्नो निर्म्ममे च पितामहम्।
सोऽहङ्कार इति प्रोक्तः सर्वतेजोमयो हि सः ॥२८॥ पृथिवी वायु-
राकाशमापो ज्योतिश्च पञ्चमम्। अहङ्कारप्रसूतानि महाभूतानि
पञ्चधा ॥ २९ ॥ महाभूतानि सृष्ट्वैव तान् गुणान्निर्म्ममे पुनः।
भूतेभ्यश्चैव निष्पन्ना मूर्त्तिमन्तश्च तान् शृणु ॥ ३० ॥ मरीचिरङ्गि-
राश्चात्रिः पुलस्त्यः पुलहः क्रतुः। वशिष्ठश्च महात्मा वै मनुः स्वाय-
म्भुवस्तथा। ज्ञेयाः प्रकृतयोऽष्टौ ता यासु लोकाः प्रतिष्ठिताः ॥३१॥
वेदवेदाङ्गसंयुक्तान् यज्ञान् यज्ञाङ्गसंयुतान्। निर्म्ममे लोकसिद्धर्थं
ब्रह्मा लोकपितामहः। अष्टाभ्यः प्रकृतिभ्यश्च जातं विश्वमिदं
जगत् ॥३२॥ रुद्रो रोषात्मको जातो दशान्यान् सोऽसृजत् स्वयम्।
एकादशैते रुद्रास्तु विकारपुरुषाः स्मृताः ॥ ३३ ॥ ते रुद्राः प्रकृति-
श्चैव सर्वे चैव सुरर्षयः। उत्पन्ना लोकसिद्ध्यर्थं ब्रह्माणं समुप-
स्थिताः ॥ ३४ ॥ वयं सृष्टा हि भगवं स्त्वया च प्रभविष्णुना।
येन यस्मिन्नधीकारे वर्त्तितव्यं पितामह ॥ ३५ ॥ योऽसौ त्वयाभि-

निर्दिष्टो ह्यधिकारोऽर्थचिन्तकः। परिपाल्यः कथन्तेन साहङ्कारेण कर्त्तृणा॥ ३६॥ प्रदिशस्व बलन्तस्य योऽधिकारार्थचिन्तकः। एवमुक्तो महादेवो देवांस्तानिदमब्रवीत्॥ ३७॥

ब्रह्मोवाच। साध्वहं ज्ञापितो देवा युष्माभिर्भद्रमस्तु वः। ममाप्येषा समुत्पन्ना चिन्ता या भवतां मता॥ ३८॥ लोकत्रयस्य कृत्स्नस्य कथं कार्य्यः परिग्रहः। कथं बलक्षयो न स्यात् युष्माकं ह्यात्मनश्च मे॥ ३९॥ इतः सर्वेऽपि गच्छामः शरणं लोकसाक्षिणम्। महापुरुषमव्यक्तं स नो वक्ष्यति यद्धितम्॥ ४०॥ ततस्ते ब्रह्मणा सार्द्धमृषयो विबुधास्तथा। क्षीरोदस्योत्तरं कूलं जग्मुर्लोकहितार्थिनः॥ ४१॥ ते तपः समुपातिष्ठन् ब्रह्मोक्तं वेदकल्पितम्। स महानियमो नाम तपश्चर्य्या सुदारुणा॥ ४२॥ ऊर्द्ध्वं दृष्टिर्बाहवश्च एकाग्रञ्च मनोऽभवत्। एकपादाः स्थिता सर्वे काष्ठभूताः समाहिताः॥ ४३॥ दिव्यं वर्षसहस्रन्ते तपस्तप्त्वा सुदारुणम्। शुश्रुवुर्मधुरां वाणीं वेदवेदाङ्गभूषिताम्॥ ४४॥

श्रीभगवानुवाच। भो भोः सब्रह्मका देवा ऋषयश्च तपोधनाः। स्वागतेनार्च्च्य वः सर्वान् श्रावये वाक्यमुत्तमम्॥ ४५॥ विज्ञातं वो मया कार्य्यं तच्च लोकहितं महत्। प्रवृत्तियुक्तं कर्त्तव्यं युष्मत्प्राणोपबृंहणम्॥ ४६॥ सुतप्तञ्च तपो देवा ममाराधनकाम्यया। भोक्ष्यथास्य महासत्त्वास्तपसः फलमुत्तमम्॥ ४७॥ एष ब्रह्मा लोकगुरुर्महाल्लोकपितामहः। यूयञ्च विबुधाश्रेष्ठा मां यजध्वं समाहिताः॥ ४८॥ सर्वे भागान् कल्पयध्वं यज्ञेषु मम नित्यशः। तथा श्रेयोऽभिधास्यामि यथाधीकारमीश्वराः॥ ४९॥

वैशम्पायन उवाच। श्रुत्वैतद्देवदेवस्य वाक्यं हृष्टतनूरुहाः। ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः॥ ५०॥ वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन्। तस्मिन् सत्रे सदा ब्रह्मा स्वयं भागमकल्पयत्॥ ५१॥ देवा देवर्षयश्चैव स्वं स्वं भागमकल्पयन्। ते कार्त्त-

गुणधर्म्मिणो भागाः परमसत्कृताः ॥ ५२ ॥ प्राङ्गरादित्यवर्णं तं पुरुषं तमसः परम्। बृहन्तं सर्वगं देवं ईशानं वरदं प्रभुम् ॥५३॥ ततोऽथ वरदो देवस्तान् सर्वानमरान् स्थितान्। अशरीरो बभाषेदं वाक्यं खस्थो महेश्वरः ॥ ५४ ॥ येन यः कल्पितो भागः स तथा मामुपागतः। प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणम् ॥ ५५ ॥ एतद्वो लक्षणं देवा मत्प्रसादसमुद्भवम्। खयं यज्ञैर्यजमानाः समाप्तवरदक्षिणैः। युगे युगे भविष्यध्वं प्रवृत्तिफलभागिनः ॥ ५६ ॥ यज्ञैर्ये चापि यक्ष्यन्ति सर्वलोकेषु वै सुराः। कल्पयिष्यन्ति वो भागांस्ते नरा वेदकल्पितान् ॥ ५७ ॥ यो मे यथा कल्पितवान् भागमस्मिन्महाक्रतौ। स यथा यज्ञभागार्हो वेदसूत्रे मया कृतः ॥ ५८ ॥ यूयं लोकान् भावयध्वं यज्ञभागफलोचिताः। सर्वार्थचिन्तका लोके यथाधीकारनिर्म्मिताः ॥५९॥ याः क्रिया प्रचरिष्यन्ति प्रवृत्तिफलसत्कृताः। आभिराप्यायितबला लोकान् वै धारयिष्यथ ॥ ६० ॥ यूयं हि भाविता यज्ञैः सर्वयज्ञेषु मानवैः। मां ततो भावयिष्यध्वमेषा वो भावना मम ॥ ६१ ॥ इत्यर्थं निर्म्मिता वेदा यज्ञाश्चौषधिभिः सह। एभिः सम्यक् प्रयुक्तैर्हि प्रीयन्ते देवताः क्षितौ ॥ ६२ ॥ निर्म्माणमेतद्युष्माकं प्रवृत्तिगुणकल्पितम्। मया कृतं सुरश्रेष्ठा यावत् कल्पक्षयादिह। चिन्तयध्वं लोकहितं यथाधीकारमीश्वराः ॥ ६३ ॥ मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः। वशिष्ठ इति सप्तैते मानसा निर्म्मिता हि ते ॥ ६४ ॥ एते वेदविदो मुख्या वेदाचार्य्याश्च कल्पिताः। प्रवृत्तिधर्म्मिणश्चैव प्राजापत्ये च कल्पिताः ॥ ६५ ॥ अयं क्रियावतां पन्था व्यक्तीभूतः सनातनः। अनिरुद्ध इति प्रोक्तो लोकसर्गकरः प्रभुः ॥ ६६ ॥ सनः सनत्सुजातश्च सनकः ससनन्दनः। सनत्कुमारः कपिलः सप्तमश्च सनातनः ॥६७॥ सप्तैते मानसाः प्रोक्ता ऋषयो ब्रह्मणः सुताः। स्वयमागतविज्ञाना

निवृत्तिं धर्म्ममास्थिताः ॥ ६८ ॥ एते योगविदो मुख्याः साङ्ख्य-
ज्ञानविशारदाः । आचार्य्या धर्म्मशास्त्रेषु मोक्षधर्म्मप्रवर्त्तकाः ॥६९॥
यतोऽहं प्रसृतः पूर्वमव्यक्तात्त्रिगुणो महान् । तस्मात् परतरो
योऽसौ क्षेत्रज्ञ इति कल्पितः ॥ ७० ॥ सोऽहं क्रियावतां पन्थाः
पुनरावृत्तिदुर्लभः । यो यथा निर्मितो जन्तुर्यस्मिन् यस्मिंश्च कर्मणि
॥ ७१ ॥ प्रवृत्तौ वा निवृत्तौ वा तत्फलं सोऽश्नुते महत् । एष
लोकगुरुर्ब्रह्मा जगदादिकरः प्रभुः ॥ ७२ ॥ एष माता पिता चैव
युष्माकञ्च पितामहः । मयानुशिष्टो भविता सर्वभूतवरप्रदः ॥ ७३ ॥
अस्य चैवात्मजो रुद्रो ललाटाद्यः समुत्थितः । ब्रह्मानुशिष्टो भविता
सर्वभूतधरः प्रभुः ॥ ७४ ॥ गच्छध्वं स्वानधीकारान् चिन्तयध्वं
यथाविधि । प्रवर्त्तन्तां क्रियाः सर्वाः सर्वलोकेषु मा चिरम् ॥७५॥
प्रदिश्यन्ताञ्च कर्म्माणि प्राणिनां गतयस्तथा । परिनिष्ठितकालानि
आयूंषीह सुरोत्तमाः ॥ ७६ ॥ इदं कृतयुगं नाम कालः श्रेष्ठः
प्रवर्त्तितः । अहिंस्या यज्ञपशवो युगेऽस्मिन्न तदन्यथा ॥ ७७ ॥
चतुष्पात् सकलो धर्म्मो भविष्यत्यत्र वै सुराः । ततस्त्रेतायुगं नाम
त्रयी यत्र भविष्यति ॥ ७८ ॥ प्रोक्षिता यत्र पशवो वधं प्राप्स्यन्ति
वै मखे । यत्र पादश्चतुर्थो वै धर्म्मस्य न भविष्यति ॥ ७९ ॥ ततो
वै द्वापरं नाम मिश्रः कालो भविष्यति । द्विपादहीनो धर्म्मश्च
युगे तस्मिन् भविष्यति ॥ ८० ॥ ततस्तिष्येऽथ सम्प्राप्ते युगे कलि-
पुरस्कृते । एकपादस्थितो धर्म्मो यत्र तत्र भविष्यति ॥ ८१ ॥ देवा
देवर्षयोश्चोचुस्तमेवं वादिनं गुरुम् । एकपादस्थिते धर्म्मे यत्र क्वचन
गामिनि । कथं कर्त्तव्यमस्माभिर्भगवंस्तद्वदस्व नः ॥ ८२ ॥

श्रीभगवानुवाच । यत्र वेदाश्च यज्ञाश्च तपः सत्यं दमस्तथा ।
अहिंसाधर्म्मसंयुक्ताः प्रचरेयुः सुरोत्तमाः । स वो देशः सेवितव्यो
मा वोऽधर्म्मः पदा स्पृशेत् ॥ ८३ ॥

व्यास उवाच । तेऽनुशिष्टा भगवता देवाः सर्षिगणास्तथा ।

नमस्कृत्य भगवते जग्मुर्द्देशान् तथेप्सितान् ॥ ८४ ॥ गतेषु त्रिदिवौकःसु ब्रह्मैकःपर्य्यवस्थितः। ददृशे भगवन्तन्तमनिरुद्धतनौ स्थितम् ॥ ८५ ॥ तं देवो दर्शयामास कृत्वा हयशिरो महत्। साङ्गानावर्त्तयन् वेदान् कमण्डलुत्रिदण्डधृक् ॥ ८६ ॥ ततोऽश्वशिरसं दृष्ट्वा तं देवममितौजसम। लोककर्त्ता प्रभुर्ब्रह्मा लोकानां हितकाम्यया ॥ ८७ ॥ मूर्द्ध्ना प्रणम्य वरदं तस्थौ प्राञ्जलिरग्रतः। स परिष्वज्य देवेन वचनं श्रावितस्तदा ॥ ८८ ॥

भगवानुवाच। लोककार्य्यगतीः सर्वास्त्वं चिन्तय यथाविधि। धाता त्वं सर्वभूतानां त्वं प्रभुर्जगतो गुरुः। त्वय्यावेशितभारोऽहं धृतिं प्राप्स्याम्यथाञ्जसा ॥ ८९ ॥ यदा च सुरकार्य्यन्ते अविषह्यं भविष्यति। प्रादुर्भावं गमिष्यामि तदात्मज्ञानदेशिकम् ॥ ९० ॥ एवमुक्त्वा हयशिरास्तत्रैवान्तरधीयत। तेनानुशिष्टो ब्रह्मापि स्वं लोकमचिराद्गतः ॥ ९१ ॥ एवमेष महाभाग पद्मनाभः सनातनः। यज्ञेष्वग्रहरः प्रोक्तो यज्ञधारी च नित्यदा ॥ ९२ ॥ निवृत्तिञ्चास्थितो धर्मं गतिमक्षयधर्मिणाम्। प्रवृत्तिधर्म्मान्विदधे कृत्वा लोकस्य चित्रताम् ॥ ९३ ॥ स आदिः स मध्यः स चान्तः प्रजानां स धाता स धेयः स कर्त्ता स कार्य्यं। युगान्ते प्रसुप्तः सुसंक्षिप्य लोकान् युगादौ प्रबुद्धो जगद्ध्यतसर्ज्ज ॥ ९४ ॥ तस्मै नमध्वं देवाय निर्गुणाय महात्मने। अजाय विश्वरूपाय धाम्ने सर्वदिवौकसाम् ॥ ९५ ॥ महाभूताधिपतये रुद्राणां पतये तथा। आदित्यपतये चैव वसूनां पतये तथा ॥ ९६ ॥ अश्विभ्यां पतये चैव मरुतां पतये तथा। वेदयज्ञाधिपतये वेदाङ्गपतयेऽपि च ॥ ९७ ॥ समुद्रवासिने नित्यं हरये मुञ्जकेशिने। शान्ताय सर्वभूतानां मोक्षधर्म्मानुभाषिणे ॥ ९८ ॥ तपसान्तेजसाञ्चैव पतये यशसामपि। वचसां पतये नित्यं सरितां पतये तथा ॥ ९९ ॥ कपर्द्दिने वराहाय एकशृङ्गाय धीमते। विवस्वतेऽश्वशिरसे चतुर्मूर्त्तिधृते सदा ॥१००॥

गुह्याय ज्ञानदृश्याय अक्षराय क्षराय च। एष देवः सञ्चरति सर्वत्र गतिरव्ययः ॥ १०१ ॥ एष चैतत् परं ब्रह्म ज्ञेयो विज्ञानचक्षुषा। एवमेतत् पुरा दृष्टं मया वै ज्ञानचक्षुषा ॥ १०२ ॥ कथितं तच्च वै सर्वं मया पृष्टेन तत्त्वतः। क्रियतां मद्वचः शिष्याः सेव्यतां हरिरीश्वरः। गीयतां वेदशब्दैश्च पूज्यताञ्च यथाविधि ॥ १०३ ॥

वैशम्पायन उवाच। इत्युक्तास्तु वयन्तेन वेदव्यासेन धीमता। सर्वे शिष्याः सुतश्चास्य शुकः परमधर्मवित् ॥ १०४ ॥ स चास्माकमुपाध्यायः सहास्माभिर्विशाम्पते। चतुर्वेदोद्गताभिस्तमृग्भिः समभितुष्टुवे ॥ १०५ ॥ एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि। एवं मेऽकथयद्राजन् पुरा द्वैपायनो गुरुः ॥ १०६ ॥ यश्चेदं शृणुयान्नित्यं यश्चैनं परिकीर्त्तयेत्। नमो भगवते कृत्वा समाहितमतिर्न्नरः ॥ १०७ ॥ भवत्यरोगो मतिमान् वलरूपसमन्वितः। आतुरो मुच्यते रोगाद्बद्धो मुच्येत वन्धनात्। कामान् कामी लभेत् कामं दीर्घञ्चायुरवाप्नुयात् ॥ १०८ ॥ ब्राह्मणः सर्ववेदी स्यात् क्षत्रियो विजयी भवेत्। वैश्यो विपुललाभः स्याच्छूद्रः सुखमवाप्नुयात् ॥ १०९ ॥ अपुत्रो लभते पुत्रं कन्या चैवेप्सितं पतिम्। लग्नगर्भा विमुच्येत गर्भिणी जनयेत् सुतम् ॥ ११० ॥ वन्ध्या प्रसवमाप्नोति पुत्रपौत्रसमृद्धिमत्। क्षेमेण गच्छेदध्वानमिदं यः पठते पथि। यो यं कामं कामयते स तमाप्नोति च ध्रुवम् ॥ १११ ॥ इदं महर्षेर्वचनं विनिश्चितं महात्मनः पुरुषवरस्य कीर्त्तितम्। समागमञ्चर्षिदिवौकसामिमं निशम्य भक्ताः सुसुखं लभन्ते ॥ ११२ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४० ॥

---

जनमेजय उवाच । अस्तौषीद्यैरिमं व्यासः शिष्यो मधु-
सूदनम् । नामभिर्विविधैरेषां निरुक्तं भगवन्मम ॥ १ ॥ वक्तु-
मर्हसि शुश्रूषोः प्रजापतिपतेर्हरेः । श्रुत्वा भवेयं यत् पूतः शर-
च्चन्द्र इवामलः ॥ २ ॥

वैशम्पायन उवाच । शृणु राजन् यथाचष्ट फाल्गुनस्य हरिः
प्रभुः । प्रसन्नात्मात्मनो नाम्नां निरुक्तं गुणकर्म्मजम् ॥ ३ ॥ नामभिः
कीर्त्तितैस्तस्य केशवस्य महात्मनः । पृष्टवान् केशवं राजन् फा-
ल्गुनः परवीरहा ॥ ४ ॥

अर्ज्जुन उवाच । भगवन् भूतभव्येश सर्व्वभूतसृगव्यय । लोक-
धाम जगन्नाथ लोकानामभयप्रद ॥ ५ ॥ यानि नामानि ते देव
कीर्त्तितानि महर्षिभिः । वेदेषु सपुराणेषु यानि गुह्यानि कर्मभिः
॥ ६ ॥ तेषां निरुक्तं त्वत्तोऽहं श्रोतुमिच्छामि केशव । न ह्यन्यो
वर्णयेन्नाम्नां निरुक्तं त्वामृते प्रभो ॥ ७ ॥

श्रीभगवानुवाच । ऋग्वेदे सयजुर्वेदे तथैवाथर्वसामसु । पुराणे
सोपनिषदे तथैव ज्योतिषेऽर्ज्जुन ॥ ८ ॥ साङ्ख्ये च योगशास्त्रे च
आयुर्वेदे तथैव च । बहूनि मम नामानि कीर्त्तितानि महर्षिभिः
॥ ९ ॥ गौणानि तत्र नामानि कर्म्मजानि च कानि चित् । निरुक्तं
कर्म्मजानां त्वं शृणुष्व प्रयतोऽनघ ॥ १० ॥ कथ्यमानं मया तात त्वं
हि मेऽर्द्धं स्मृतः पुरा । नमोऽतियशसे तस्मै देहिनां परमात्मने
॥ ११ ॥ नारायणाय विश्वाय निर्गुणाय गुणात्मने । यस्य प्रसा-
दजो ब्रह्मा रुद्रश्च क्रोधसम्भवः ॥ १२ ॥ योऽसौ योनिर्हि सर्वस्य
स्थावरस्य चरस्य च । अष्टादशगुणं यत्तत् सत्त्वं सत्त्ववतां वर ।
प्रकृतिः सा परा मह्यं रोदसी योगधारिणी ॥ १३ ॥ ऋता सत्या-
मराजय्या लोकानामात्मसंज्ञिता । तस्मात् सर्वाः प्रवर्त्तन्ते सर्गप्रलय-
विक्रियाः ॥ १४ ॥ तपो यज्ञश्च यष्टा च पुराणः पुरुषो विराट् ।
अनिरुद्ध इति प्रोक्तो लोकानां प्रभवाव्ययः ॥ १५ ॥ ब्राह्मे रात्रि-

क्षये प्राप्ते तस्य ह्यमित तेजसः। प्रसादात् प्रादुरभवत् पद्मं पद्म-निभेक्षण ॥ १६ ॥ ततो ब्रह्मा समभवत् स तस्यैव प्रसादजः। अह्नः क्षये ललाटाच्च सुतो देवस्य वै तथा ॥ १७ ॥ क्रोधाविष्टस्य संजज्ञे रुद्रः संहारकारकः। एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजावुभौ ॥ १८ ॥ तदादेशितपन्थानौ सृष्टिसंहारकारकौ। निमित्तमात्रं तावत्र सर्वप्राणिवरप्रदौ ॥ १९ ॥ कपर्द्दी जटिलो मुण्डः श्मशान-गृहसेवकः। उग्रव्रतधरो रुद्रो योगी परमदारुणः ॥ २० ॥ दक्ष-क्रतुहरश्चैव भगनेत्रहरस्तथा। नारायणात्मको ज्ञेयः पाण्डवेय युगे युगे ॥ २१ ॥ तस्मिन् हि पूज्यमाने वै देवदेवे महेश्वरे। संपूजितो भवेत् पार्थ देवनारायणः प्रभुः ॥ २२ ॥ अहमात्मा हि लोकानां विश्वानां पाण्डुनन्दन। तस्मादात्मानमेवाग्रे रुद्रं संपू-जयाम्यहम् ॥ २३ ॥ यद्यहं नार्च्चयेयन्वै ईशानं वरदं शिवम्। आत्मानं नार्च्चयेत् कश्चिदिति मे भावितात्मनः ॥ २४ ॥ मया प्रमाणं हि कृतं लोकः समनुवर्त्तते। प्रमाणानि हि पूज्यानि ततस्तं पूज-याम्यहम् ॥ २५ ॥ यस्तं वेत्ति स मां वेत्ति योऽनु तं स हि मामनु। रुद्रो नारायणश्चैव सत्त्वमेकं द्विधाकृतम् ॥ २६ ॥ लोके चरति कौन्तेय व्यक्तिस्थं सर्वकर्मसु। न हि मे केनचिद्देयो वरः पाण्डव-नन्दन ॥ २७ ॥ इति सञ्चिन्त्य मनसा पुराणं रुद्रमीश्वरम्। पुत्रार्थमाराधितवानहमात्मानमात्मना ॥ २८ ॥ न हि विष्णुः प्रण-मति कस्मैचिद्विबुधाय च। ऋतआत्मानमेवेति ततो रुद्रं भजा-म्यहम् ॥ २९ ॥ सब्रह्मकाः सरुद्राश्च सेन्द्रा देवाः सहर्षिभिः। अर्च्चयन्ति सुरश्रेष्ठं देवं नारायणं हरिम् ॥ ३० ॥ भविष्यतां वर्त्त-ताञ्च भूतानाञ्चैव भारत। सर्वेषामग्रणीर्विष्णुः सेव्यः पूज्यश्च नित्यशः ॥ ३१ ॥ नमस्व हव्यदं विष्णुं तथा शरणदं नम। वरदं नमय कौन्ते हव्यकव्यभुजं नम ॥ ३२ ॥ चतुर्विधा मम जना भक्ता एवं हि मे श्रुतम्। तेषामेकान्तिनः श्रेष्ठा ये चैवानन्य-

देवताः। अहमेव गतिस्तेषां निराशीः कर्म्मकारिणाम् ॥ ३३ ॥
ये च शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः। सर्वे च्यवन-
धर्म्मास्ते प्रतिबुद्धस्तु श्रेष्ठभाक्॥ ३४ ॥ ब्रह्माणं शितिकण्ठञ्च
याश्चान्या देवताः स्मृताः। प्रबुद्धचर्य्याः सेवन्तो मामेवैष्यन्ति यत्
परम्॥ ३५॥ भक्तं प्रति विशेषस्ते एष पार्थानुकीर्त्तितः॥ ३६ ॥
त्वञ्चैवाहञ्च कौन्तेय नरनारायणौ स्मृतौ। भारावतरणार्थन्तु
प्रविष्टौ मानुषीं तनुम्॥ ३७ ॥ जानाम्यध्यात्मयोगांश्च योऽहं
यस्माच्च भारत। निवृत्तिलक्षणो धर्म्मस्तथाभ्युदयिकोऽपि च॥३८॥
नराणामयनं ख्यानमहमेकः सनातनः। आपो नारा इति प्रोक्ता
आपो वै नरसूनवः। अयनं मम तत्पूर्वमतो नारायणो ह्यहम्
॥ ३९ ॥ छादयामि जगद्विश्वं भूत्वा सूर्य्य इवांशुभिः। सर्वभूता-
धिवासश्च वासुदेवस्ततो ह्यहम्॥ ४० ॥ गतिश्च सर्वभूतानां प्रजन-
श्चापि भारत। व्याप्ता मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम
॥ ४१ ॥ अधिभूतानि चान्तेषु तदिच्छंश्चास्मि भारत। क्रमणा-
च्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञित॥ ४२ ॥ दमात् सिद्धिं परीप्-
सन्तो मां जनाः कामयन्ति ह। दिवञ्चोर्व्वीञ्च मध्यञ्च तस्माद्दामो-
दरो ह्यहम्॥ ४३ ॥ पृश्निरित्युच्यते चान्नं वेदा आपोऽमृतस्तथा।
ममैतानि सदा गर्भ पृश्निगर्भस्ततो ह्यहम्॥ ४४ ॥ ऋषयः प्राहु-
रेवं मां त्रितं कूपनिपातितम्। पृश्निगर्भ त्रितंपाहीत्येकतद्वितपा-
तितम्॥ ४५ ॥ ततः स ब्रह्मणः पुत्र आद्यो ह्यृषिवरस्त्रितः। उत्त-
तारोदपानाद्वै पृश्निगर्भानुकीर्त्तनात्॥ ४६ ॥ सूर्य्यस्य तपतो लोका-
नग्नेः सोमस्य चाप्युत। अंशवो यत् प्रकाशन्ते मम ते केशसंज्ञिताः।
सर्वज्ञाः केशवं तस्मान्मामाहुर्द्विजसत्तमः॥ ४७ ॥ स पत्नामाहिते
गर्भे उतथ्येन महात्मना। उतथ्येऽन्तर्हिते चैव कदाचिद्देवमायया।
बृहस्पतिरथाविन्दत् पत्नीं तस्य महात्मनः॥ ४८ ॥ ततो वै तमृषि-
श्रेष्ठं मैथुनोपगतन्तथा। उवाच गर्भः कौन्तेय पञ्चभूतसम-

न्वितः॥ ४९॥ पूर्व्वागतोऽहं वरद नार्हस्यम्वां प्रबाधितुम्। एत-
द्बृहस्पतिः श्रुत्वा चुक्रोध च शशाप च॥ ५०॥ मैथुनायागतो
यस्मात्त्वयाहं विनिवारितः। तस्मादन्धो यास्यसि त्वं मच्छापा-
न्नात्र संशयः॥ ५१॥ स शापादृषिमुख्यस्य दीर्घन्तम उपेयिवान्।
स हि दीर्घतमा नाम नाम्ना ह्यासीदृषिः पुरा॥ ५२॥ वेदान-
वाप्य चतुरः साङ्गोपाङ्गान् सनातनान्। प्रयोजयामास तदा नाम-
गुह्यमिदं मम। आनुपूर्व्वेण विधिना केशवेति पुनः पुनः॥ ५३॥
स चक्षुष्मान् समभवद्गोतमश्चाभवत् पुनः। एवं हि वरदं नाम
केशवेति ममार्ज्जुन॥ ५४॥ देवानामथ सर्व्वेषामृषीणाञ्च महा-
त्मनाम्। अग्निः सोमेन संयुक्त एकयोनित्वमागतः। अग्नीषोम-
मयं तस्माज्जगत् कृत्स्नं चराचरम्॥ ५५॥ अपि हि पुराणे भवति
एकयोन्यात्मकावग्नीषोमौ देवाश्चाग्निमुखा इति। एकयोनित्वाच्च
परस्परमर्हन्तो लोकानधारयन्त इति॥ ५६॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये
एकचत्वारिंशदधिकत्रिशतोऽध्यायः॥ ३४१॥

---

अर्ज्जुन उवाच। अग्नीषोमौ कथं पूर्व्वमेकयोनी प्रवर्त्तितौ।
एष मे संशयो जातस्तं छिन्धि मधुसूदनः॥ १॥

श्रीभगवानुवाच। हन्त ते वर्त्तयिष्यामि पुराणं पाण्डुनन्दन।
आत्मतेजोद्भवं पार्थ शृणुष्वैकमना मम॥ २॥ सम्प्रक्षालनकाले-
ऽतिक्रान्ते चतुर्युगसहस्रान्ते अव्यक्ते सर्व्वभूतप्रलये सर्व्वभूतस्थावर-
जङ्गमे॥ ३॥ ज्योतिर्धरणिवायुरहिते अन्धे तमसि जलैकार्णवे
लोके। आप इत्येवं ब्रह्मभूतसंज्ञकेऽद्वितीये प्रतिष्ठिते॥ ४॥ न वै
रात्र्यां न दिवसे न सति नासति न व्यक्ते न चाप्यव्यक्ते व्यवस्थिते
॥ ५॥ एवमस्यामवस्थायां नारायणगुणाश्रयादजरानरादनिन्द्रि-
यादग्राह्यादसम्भवात् सत्यादहिंस्राल्ललामाद्विविधप्रवृत्तिविशेषाद-

वैराद्दयादमराद्जराद्मूर्त्तितः सर्वव्यापिनः सर्वकर्त्तुः शाश्वतस्तमसः पुरुष प्रादुर्भुतो हरिरव्ययः ॥ ६ ॥ निदर्शनमपि ह्यत्र भवति ॥ ७ ॥ नासीदहो न रात्रिरासीन्न सदासीन्नासदासीत्तम एव पुरस्ताद्भवद्विश्वरूपंसा विश्वरूपस्य रजनी हि एवमस्यार्थोऽनुभाष्यः ॥ ८ ॥ तस्येदानीं तमसः सम्भावस्य पुरुषस्य ब्रह्मयोनेर्ब्रह्मणः प्रादुर्भावे स पुरुषः प्रजाः सिसृक्षमाणो नेत्राभ्यामग्नीषोमौ ससर्ज । ततो भूतसर्गेषु सृष्टेषु प्रजाः क्रमवशाद्ब्रह्मक्षत्रमुपातिष्ठन् यः सोमस्तद्ब्रह्म ते ब्राह्मणाः योऽग्निस्तत् क्षत्रं क्षत्राद्ब्रह्म बलवत्तरं कस्मादिति लोकप्रत्यक्षगुणमेतत् तद्यथा। ब्राह्मणेभ्य परं भूतं नोत्पन्नपूर्वं दीप्यमानेऽग्नौ जुहोति यो ब्राह्मणमुखे जुहोतीति कृत्वा ब्रवीमि भूतसर्गः कृतो ब्रह्मणा भूतानि च प्रतिष्ठाप्य त्रैलोक्यं धार्य्यतइति मन्त्रवादोऽपि हि भवति ॥ ९ ॥ त्वमग्ने यज्ञानां होता विश्वेषां हितो देवानां मानुषाणाञ्च जगत इति ॥ १० ॥ निदर्शनञ्चात्र भवति विश्वेषामग्ने यज्ञानां त्वं होतेति त्वं हितो देवैर्म्मनुष्यैर्जगत इति ॥ ११ ॥ अग्निर्हि यज्ञानां होता कर्त्ता स चाग्निर्ब्रह्म ॥ १२ ॥ नह्यृते मन्त्राणां हवनमस्ति न विना पुरुषं तपः सम्भवति हविर्म्मन्त्राणां संपूजा विद्यते देवमानुषऋषीणामनेन त्वं होतेति नियुक्त । ये च मानुषहोत्राधिकारास्ते च ब्राह्मणस्य हि याजनं विधीयते । न क्षत्रवैश्ययोर्द्विजात्योस्तस्मात् ब्राह्मणा ह्यग्निभूता यज्ञानुद्वहन्ति । यज्ञास्ते देवांस्तर्पयन्ति देवाः पृथिवीं भावयन्ति शतपथेऽपि ब्राह्मणमुखे भवति ॥ १३ ॥ अग्नौ समिद्धे स जुहोति यो विद्वान् ब्राह्मणमुखेनाहुतिं जुहोति ॥ १४ ॥ एवमप्यग्निभूता ब्राह्मणा विद्वांसोऽग्निं भावयन्ति । अग्निर्विष्णुः सर्वभूतान्यनुप्रविश्य प्राणान् धारयतीति ॥ १५ ॥ अपि चात्र सनत्कुमारगीताः श्लोका भवन्ति । ब्रह्मा विश्वं सृजत् पूर्वं सर्वादिर्निरवस्कृतं । ब्रह्मघोषैर्दिवं गच्छन्त्यमराः ब्रह्मयोनयः । ब्राह्मणानां

मतिर्वाक्यं कर्म्मश्रद्धातपांसि च। धारयन्ति महीं द्याञ्च शैक्यो वागमृतन्तथा॥ १६॥ नास्ति सत्यात् परो धर्म्मो नास्ति मातृसमो गुरुः। ब्राह्मणेभ्यः परं नास्ति प्रेत्य चेह च भूतये॥ १७॥ नैषामुच्चा वहति नोत वाहा न गर्गरो मथ्यति सम्प्रदाने। अपध्वस्ता दस्युभूता भवन्ति येषां राष्ट्रे ब्राह्मणा वृत्तिहीनाः॥ १८॥ वेदपुराणेतिहासप्रामाण्यान्नारायणमुखोद्गताः सर्वात्मानः सर्वकर्त्तारः सर्वभावाश्च ब्राह्मणाश्च वाक्संयमकाले हि तस्य वरप्रदस्य देवदेवस्य ब्राह्मणाः प्रथमं प्रादुर्भूताः। इत्यञ्च सुरासुरविशिष्टा ब्राह्मणा यत्र मया ब्रह्मभूतेन पुरा स्वयमेवोत्पादिता सुरासुरमहर्षयः भूतविशेषाः स्थापिता निगृहीताश्च अहल्याधर्षणनिमित्तं हि गौतमाद्धरिश्मश्रुतामिन्द्रः प्राप्तः कौशिकनिमित्तञ्चेन्द्रो मुष्कवियोगं मेषवृषणत्वञ्चावाप। अश्विनोर्ग्रहप्रतिषेधाद्यतवज्रस्य पुरन्दरस्य च्यवनेन स्तम्भितौ बाहू क्रतुवधप्राप्तमन्युना च दक्षेण भूयस्तपसाचात्मानं संयोज्य नेत्राकृतिरन्या ललाटेरुद्रस्योत्पादिता त्रिपुरवधार्थं दीक्षामुपगतस्य रुद्रस्य उशनसा जटाः शिरस उत्कृत्य प्रयुक्ताः। ततः प्रादुर्भूता भुजगास्तैरस्य भुजगैः पीड्यमानः कण्ठो नीलतामुपगतः। पूर्व्वे च मन्वन्तरे स्वायम्भुवे नारायणहस्तग्रहणान्नीलकण्ठत्वमेव च। अमृतोत्पादनपुरश्चरणतामुपगतस्याङ्गिरसो वृहस्पतेरुपस्पृशतो न प्रसादं गतवत्यः किलापः। अथ वृहस्पतिरपां चुक्रोध यस्मान्ममोपस्पृशतः कलुषीभूता न च प्रसादमुपगतास्तस्मादद्यप्रभृतिझषमकरकच्छपजन्तुभिः कलुषीभवितेति तदाप्रभृत्यापो यादोभिः संकीर्णाः संप्रवृत्ताः। विश्वरूपो हि वै त्वाष्टः पुरोहितो देवानामासीत् स्वस्रीयोऽसुराणां स प्रत्यक्षं देवेभ्यो भागमदाद् परोक्षमसुरेभ्यः। अथ हिरण्यकशिपुं पुरस्कृत्य विश्वरूपमातरं स्वसारमसुरा वरमयाचन्त हे स्वसः अयन्ते पुत्रस्त्वाष्ट्रो विश्वरूपस्त्रिशिरा देवानां पुरोहितः प्रत्यक्षं देवेभ्यो

आगमदात् परोचमस्माकं ततो देवा वर्द्धन्ते वयं चीयामस्तदेनं त्वं वारयितुमर्हसि तथा यथास्मान् भजेदिति। अथ विश्वरूपं नन्दनवनमुपगतं मातोवाच पुत्र किं परपचवर्द्धनस्त्वं मातुलपचं नाशयसि नार्हस्येवं कर्त्तुमिति। स विश्वरूपो मातुर्वाक्यमनतिक्रमणीयमिति मत्वा संपूज्य हिरण्यकशिपुमगात्। हैरण्यगर्भाच्च वशिष्ठाद्धिरण्यकशिपुः शापं प्राप्तवान्। यस्मात्त्वयान्यो वृतो होता तस्मादसमाप्तयज्ञस्त्वमपूर्व्वात् सत्त्वजाताद्वधं प्राप्स्यसीति। तच्छापदानाद्धिरण्यकशिपुः प्राप्तवान् वधं। अथ विश्वरूपो मातृपचवर्द्धनोऽत्यर्थं तपस्यभवत्तस्य व्रतभङ्गार्थमिन्द्रो वह्वीः श्रीमत्योऽप्सरसो नियुयोज। ताश्च दृष्ट्वा मनः चुभितं तस्याभवत् तासु चाप्सरःसु न चिरादेव सक्तोऽभवत्। सक्तञ्चैनं ज्ञात्वा अप्सरस ऊचुः। गच्छामहे वयं यथागतमिति तास्त्वाष्ट्र उवाच। क्व गमिष्यथास्यतां तावन्मया सह श्रेयो भविष्यतीति तास्तमब्रुवन् वयं देवस्त्रियोऽप्सरसः इन्द्रं देवं वरदं पुरा प्रभविष्णुं वृणीमह इति। अथ ता विश्वरूपोऽब्रवीदद्यैव सेन्द्रा देवा न भविष्यन्तीति। ततो मन्त्रान् जजाप तैर्म्मन्त्रैरवर्द्धत त्रिशिराः। एकेनास्येन सर्व्वलोकेषु यथावद्द्विजैः क्रियावद्भिर्यज्ञेषु सुहुतं सोमं पपौ। एकेनान्नं एकेन सेन्द्रान्देवानथेन्द्रस्तं विवर्द्धमानं सोमपानाप्यायितसर्व्वगात्रं दृष्ट्वा चिन्तामापेदे सह देवैः। ते देवाः सेन्द्रा ब्रह्माणमभिजग्मुः। त ऊचुः। विश्वरूपेण सर्व्वयज्ञेषु सुहुतः सोमः पीयते वयमभागाः संवृत्ताः। असुरपचो वर्द्धते वयं चीयामः। तदर्हसि नो विधातुं श्रेयोऽनन्तरमिति तान् ब्रह्मोवाच। ऋषिर्भार्गवस्तपस्तप्यते दधीचः स याच्यतां वरः। स यथा कलेवरं जह्यात्तथा विधीयतां। तस्यास्थिभिर्व्वज्रं क्रियतामिति। ततो देवास्तत्रागच्छन् यत्र दधीचो भगवानृषिस्तपस्तेपे सेन्द्रा देवास्तं तथाभिगम्योचुर्भगवंस्तपः सुकुशलमभिन्नञ्चेति।

तान्दधीच उवाच। स्वागतं भवद्भ्य उच्यतां किं क्रियतामिति यद्वक्ष्यथ तत् करिष्यामि ते तमब्रुवन्। शरीरपरित्यागं लोकहितार्थं भवान् कर्त्तुमर्हतीति। अथ दधीचस्तथैवाविमनाः सुखदुःखसमो महायोगी आत्मानं समाधाय शरीरपरित्यागञ्चकार। तस्य परमात्मन्यपसृते तान्यस्थीनि धाता संगृह्य वज्रमकरोत्। तेन वज्रेणाभेद्येनाप्रधृष्येण ब्रह्मास्थिसम्भूतेन विष्णुप्रविष्टेन इन्द्रो विश्वरूपं जघान। शिरसाञ्चास्य च्छेदनमकोरत् तस्मादनन्तरं विश्वरूपगात्रमथनसम्भवं त्वाष्ट्रोत्पादितमेवारिं वृत्रमिन्द्रो जघान। तस्यां द्वैधीभूतायां ब्रह्मवध्यायां भयादिन्द्रो देवराज्यं पर्य्यत्यजत्। अप्सुसम्भवाञ्च शीतलां मानससरोगतां नलिनीं प्रतिपेदे। तत्र चैश्वर्य्ययोगादणुमात्रो भूत्वा बिसग्रन्थिं प्रविवेश। अथ ब्रह्मवध्याभयप्रनष्टे त्रैलोक्यनाथे शचीपतौ जगदनीश्वरं बभूव। देवाञ्जस्तमश्चाविवेश मन्त्रा न प्रावर्त्तन्त महर्षीणां रक्षांसि प्रादुरभवन्। ब्रह्म चोत्सादनं जगाम। अनिन्द्राश्चाबला लोकाः सुप्रधृष्या बभूवुः। अथ देवा ऋषयश्चायुषः पुत्रं नहुषं नाम देवराज्येऽभिषिषिचुः। नहुषः पञ्चभिः शतैर्ज्योतिषां ललाटे ज्वलद्भिः सर्वभूततेजोहरैस्त्रिपिष्टपं पालयाम्बभूव। अथ लोकाः प्रकृतिमापेदिरे। स्वस्थाश्च हृष्टाश्च बभूवुः अथोवाच नहुषः सर्वं मां शक्रोपभुक्तं उपस्थितमृते शचीमिति स एवमुक्त्वा शचीसमीपमगमत्। उवाच चैनां सुभगेऽहमिन्द्रो देवानां भजस्व मामिति। तं शची प्रत्युवाच प्रकृत्या त्वं धर्म्मवत्सलः सोमवंशोद्भवश्च नार्हसि परपत्नीधर्षणं कर्त्तुमिति तामथोवाच नहुषः। ऐन्द्रं पदमध्यास्यते मया। अहमिन्द्रस्य राज्यरत्नहरो नात्राधर्मः कश्चित्त्वमिन्द्रोपभुक्तेति। सा तमुवाचास्ति मम किञ्चिद्व्रतमपर्य्यवसितं तस्यावभृथे त्वामुपगमिष्यामि कैश्चिदेवाहोभिरिति। स शच्यैवमभिहितो जगाम। अथ शची दुःखशोकार्त्ता भर्त्तृदर्शनलालसा नहुषभयगृहीता बृहस्पति-

मुपागच्छत्। स च तामत्युद्विग्नां दृष्ट्वैव ध्यानं प्रविश्य भर्त्तृकार्य्य-
तत्परां ज्ञात्वा बृहस्पतिरुवाच। अनेनैव व्रतेन तपसा चान्विता
देवीं वरदामुपश्रुतिमाह्वय। तदा सा ते इन्द्रं दर्शयिष्यतीति।
साथ महानियमस्थिता देवीं वरदामुपश्रुतिं मन्त्रैराह्वयति। सोप-
श्रुतिः शचीसमीपमगादुवाच चैनामियमस्मीति। त्वयाहूतोपस्थिता
किन्ते प्रियं करवाणीति। तां मूर्द्ध्ना प्रणम्योवाच शची भगवत्य-
र्हास मे भर्त्तारं दर्शयितुं त्वं सत्या ऋता चेति सैनां मानसं सरोऽ-
नयत्। तत्रेन्द्रं बिसग्रन्थिगतमदर्शयत्। तामथ पत्नीं कृशां ग्लाना-
ञ्चेन्द्रो दृष्ट्वा चिन्तयाम्बभूवः। अहो मम दुःखमिदमुपगतं नष्टं हि
मामियमन्विष्य यत् पत्न्यभ्यागमद्दुःखार्त्तेति।

तामिन्द्र उवाच। कथं वर्त्तयसीति सा तमुवाच। नहुषो
मामाह्वयति पत्नीं कर्त्तुं कालश्चास्य मया कृत इति।

तामिन्द्र उवाच। गच्छ नहुषस्त्वया वाच्यः अपूर्व्वेण मामृषि-
युक्तेन यानेन त्वमधिरूढ़ उद्वहस्वेति। इन्द्रस्य महान्ति वाह-
नानि सन्ति मनःप्रियाण्यधिरूढ़ानि मया त्वमन्येनोपायातुमर्हसीति
सैवमुक्ता हृष्टा जगाम। इन्द्रोऽपि बिसग्रन्थिमेवाविवेश भूयः
अथेन्द्राणीमभ्यागतां दृष्ट्वा तामुवाच नहुषः पूर्णः स काल इति तं
शच्यब्रवीच्छक्रेण यथोक्तं स महर्षियुक्तं वाहनमधिरूढ़ः शचीसमी-
पमुपागच्छत् अथ मैत्रावरुणिः कुम्भयोनिरगस्त्य ऋषिवरो महर्षीन्
धिक्क्रियमाणांस्तान्नहुषेणापश्यत् पद्भ्याञ्च तमस्पृशत्। ततः स
नहुषमब्रवीत् अकार्य्यप्रवृत्त पाप पतस्व महीं सर्पो भव यावद्भूमि-
र्गिरयश्च तिष्ठेयुस्तावदिति स महर्षिवाक्यसमकालमेव तस्माद्या-
नादवापतत् अथानिन्द्रं पुनस्त्रैलोक्यमभवत्। ततो देवाश्च ऋष-
यश्च भगवन्तं विष्णुं शरणमिन्द्रार्थेऽभिजग्मुः ऊचुश्चैनं भगवन्निन्द्रं
ब्रह्महत्याभिभूतं त्रातुमर्हसीति ततः स वरदस्तानब्रवीत् अश्वमेधं
यज्ञं वैष्णवं शक्रोऽभियजतां ततः स्वस्थानं प्राप्स्यतीति। ततो

देवा ऋषयश्चेन्द्रं नापश्यन् यदा शचीमूचुः गच्छ सुभगे इन्द्रमानय-
स्वेति। सा पुनस्तत् सरः समभ्यगच्छदिन्द्रश्च तस्मात् सरसः प्रत्यु-
त्थाय बृहस्पतिमभिजगाम बृहस्पतिश्चाश्वमेधं महाक्रतुं शक्रायाह-
रत् तत्र कृष्णसारङ्गं मेध्यमश्वमुत्सृज्य वाहनं तमेव कृत्वा इन्द्रं
मरुत्पतिं बृहस्पतिः स्वं स्थानं प्रापयामास। ततः स देवराट्
देवैर्ऋषिभिस्तूयमानस्त्रिपिष्टपस्थो निष्कल्मषो बभूव ब्रह्मवध्याञ्च
चतुर्षु स्थानेषु वनिताग्निवनस्पतिगोषु व्यभजत्। एवमिन्द्रो ब्रह्म-
तेजः प्रभावोपबृंहितः शत्रुवधं कृत्वा स्वं स्थानं प्रापितः। आका-
शगङ्गागतश्च पुरा भरद्वाजो महर्षिरुपास्पृशत् त्रीन् क्रमान् क्रमता
विष्णुनाभ्यासादितः। स भरद्वाजेन सलिलेन पाणिनोरसिताडितः
सलक्षणोरस्कः संवृत्तः। भृगुणा महर्षिणा शप्तोऽग्निः सर्वभक्ष-
त्वमुपानीतः॥ ५७॥ अदितिर्वै देवानामन्नमपचत्। एतद्भुक्त्वाऽ-
सुरान् हनिष्यन्तीति। तत्र बुधो व्रतचर्य्यासमाप्तावागच्छददिति-
ञ्चावोचत् भिक्षां देहीति तत्र देवैः पूर्वमेतत् प्राश्यन्नान्येनेत्यदिति-
र्भिक्षां नादात्। अथ भिक्षाप्रत्याख्यानरुषितेन बुधेन ब्रह्मभूतेन
अदितिः शप्ता अदितेरुदरे भविष्यति व्यथा विवस्वतो द्वितीयजन्म-
न्यण्डसंज्ञिस्य अण्डमातुरदित्याः स्मारितः स मार्त्तण्डो विवस्वान-
भवत् श्राद्धदेवः॥ ५८॥ दक्षस्य या वै दुहितरः षष्टिरासन् ताभ्यः
कश्यपाय त्रयोदश प्रादात् दश धर्म्माय दश मनवे सप्तविंशतिमि-
न्दवे तासु तुल्यासु नक्षत्राख्यां गतासु सोमो रोहिण्यामप्यधिक-
प्रीतिमानभूत्ततस्ताः शिष्टाः पत्न्य ईर्षावत्यः पितुः समीपं गत्वा इम-
मर्थं शशंसुः। भगवन्नस्मासु तुल्यप्रभासु सोमो रोहिणीं प्रत्य-
धिकं भजतीति। सोऽब्रवीद्यक्ष्मैनमाविश्यत इति दक्षशापात्
सोमं राजानं यक्ष्मा विवेश स यक्ष्मणाविष्टो दक्षमगमत् दक्षश्चैन-
मब्रवीत् न समं वर्त्तयसीति तत्रर्षयः सोममब्रुवन् क्षीयसे यक्ष्मणा
पश्चिमस्यां दिशि समुद्रे हिरण्यसरस्तीर्थं तत्र गत्वा आत्मानमभि-

षेवयस्वेति । अथागच्छत् सोमस्तत्र हिरण्यसरस्तीर्थं गत्वा चात्मनः सेचनमकरोत् । स्नात्वा चात्मानं पाप्मनो मोचयामास तत्र चाव-भासितस्तीर्थे यदा सोमस्तदाप्रभृति च तीर्थं तत्प्रभासमिति नाम्ना ख्यातं बभूव तच्छापादद्यापि सोमः अमावास्यान्तरास्थः पौर्णमासी-मात्रेऽधिष्ठितः । मेघलेखाप्रतिच्छन्नं वपुर्दर्शयति मेघसदृशं वर्ण-मगमत् । तदस्य शशलक्ष्म विमलमभवत् ॥ ५९ ॥ स्थूलशिरा महर्षिर्मेरोः प्रागुत्तरे दिग्विभागे तपस्तेपे । तपस्तप्यमानस्य सर्व-गन्धवहः शुचिर्वायुर्विवायमानः शरीरमस्पृशत् स तपसा तापित-शरीरः कृशो वायुनोपवीज्यमानो हृदये परितोषमगमत् । तत्र किल तस्यानिलव्यजनकृतपरितोषस्य सद्यो वनस्पतयः पुष्पशोभां निदर्शितवन्त इति । स एतान् शशाप न सर्वकालं पुष्पवन्तो भवि-ष्यथेति ॥ ६० ॥ नारायणो लोकहितार्थं वड़वामुखो नाम पुरा महर्षिर्बभूव । तस्य मेरौ तपस्तप्यतः समुद्र आहूतो नागतस्ते-नामर्षितेनात्मगात्रोष्मणा समुद्रस्तिमितजलः कृतः स्वेदप्रस्यन्दन-सदृशश्चास्य लवणभावो जनितः । उक्तश्चाप्यपेयो भविष्यस्येतच्च ते तोयं वड़वामुखसंज्ञितेन पीयमानं मधुरं भविष्यति । तदेतदद्यापि वड़वामुखसंज्ञितेनानुवर्त्तिना तोयं समुद्रात् पीयते ॥ ६१ ॥ हिम-वतो गिरेर्दुहितरमुमां कन्यां रुद्रश्चकमे भृगुरपि च महर्षिर्हिम-वन्तमागत्याब्रवीत् । कन्यामिमां मे देहीति तमब्रवीद्धिमवानभि-लषितो वरो रुद्र इति । तमब्रवीद्भृगुर्यस्मात्त्वयाहं कन्यावरणा-कृतभावः प्रत्याख्यातस्तस्मान्न रत्नानां भवान् भाजनं भविष्यतीति । अद्यप्रभृत्येतदवस्थितमृषिवचनं तदेवं विधं माहात्म्यं ब्राह्मणानाम् ॥ ६२ ॥ क्षत्त्रमपि च ब्राह्मणप्रसादादेव शाश्वतीमव्ययाञ्च पृथिवीं पत्नीमभिगम्य बुभुजे । तदेतद्ब्रह्माग्नीषोमीयं तेन जगद्धार्य्यते ॥ ६३ ॥ उच्यते च । सूर्य्याचन्द्रमसौ चक्षुः केशाश्चैवांशवः स्मृताः । बोधयंस्तापयंश्चैव जगदुत्तिष्ठते पृथक् ॥ ६४ ॥ बोधनात्तपनाच्चैव

जगतो हर्षणं भवेत्। अग्नीषोमकृतैरेभिः कर्म्मभिः पाण्डुनन्दन। हृषीकेशोऽहमीशानो वरदो लोकभावनः॥ ६५॥ इलोपहूतो योगेन हरे भागं क्रतुष्वहम्। वर्णश्च मे हरिश्रेष्ठस्तस्माद्धरिरहं स्मृतः॥ ६६॥ धाम सारो हि भूतानामृतञ्चैव विचारितम्। ऋतधामा ततो विप्रैः सत्यश्चाहं प्रकीर्त्तितः॥ ६७॥ नष्टाञ्च धरणीं पूर्व्वमविन्दं वै गुहागताम्। गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः॥ ६८॥ शिपिविष्टेति चाख्यायां हीनरोमा च यो भवेत्। तेनाविष्टन्तु यत् किञ्चित् शिपिविष्टेति च स्मृतः॥ ६९॥ यास्को मामृषिरव्यग्रो नैकयज्ञेषु गीतवान्। शिपिविष्ट इति ह्यस्मात् गुह्यनामधरो ह्यहम्॥ ७०॥ स्तुत्वा मां शिपिविष्टेति यास्क ऋषिरुदारधीः। मत्प्रसादादधोनष्टं निरुक्तमभिजग्मिवान्॥ ७१॥ न हि जातो न जायेयं न जनिष्ये कदाचन। क्षेत्रज्ञः सर्व्वभूतानां तस्मादहमजः स्मृतः॥ ७२॥ नोक्तपूर्व्वं मया क्षुद्रमश्लीलं वा कदाचन। ऋता ब्रह्मसुता सा मे सत्या देवी सरस्वती॥ ७३॥ सच्चासच्चैव कौन्तेय मयावेशितमात्मनि। पौष्करे ब्रह्मसदने सत्यं मामृषयो विदुः॥ ७४॥ सत्त्वान्न च्युतपूर्व्वोऽहं सत्त्वं वै विद्धि मत्कृतम्। जन्मनीहाभवत् सत्त्वं पौर्व्विकं मे धनञ्जय॥ ७५॥ निराशीः कर्म्मसंयुक्तः सत्त्वतश्चाप्यकल्मषः। सत्त्वतज्ञानदृष्टोऽहं सत्त्वतामिति सात्त्वतः॥ ७६॥ कृषामि मेदिनीं पार्थ भूत्वा कार्ष्णायसो महान्। कृष्णवर्णश्च मे यस्मात्तस्मात् कृष्णोऽहमर्जुन॥ ७७॥ मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना। वायुश्च तेजसा सार्द्धं वैकुण्ठत्वं ततो मम॥ ७८॥ निर्व्वाणं परमं ब्रह्म धर्म्मोऽसौ पर उच्यते। तस्मान्न च्युतपूर्व्वोऽहमच्युतस्तेन कर्म्मणा॥ ७९॥ पृथिवीनभसी चोभे विश्रुते विश्वतोमुखे। तयोः सन्धारणार्थं हि मामधोक्षजमञ्जसा॥ ८०॥ निरुक्तं वेदविदुषो वेदशब्दार्थचिन्तकाः। ते मां गायन्ति प्राग्वंशे अधोक्षज इति स्थितिः॥ ८१॥ शब्द

एकपदैरेष व्याहृतः परमर्षिभिः । नान्यो ह्यधोक्षजो लोके ऋते नारायणं प्रभुम् ॥ ८२ ॥ घृतं ममार्च्चिषो लोके जन्तूनां प्राणधारणम् । घृतार्च्चिरहमव्यग्रैर्वेदज्ञैः परिकीर्त्तितः ॥ ८३ ॥ त्रयो हि धातवः ख्याताः कर्म्मजा इति ये स्मृताः । पित्तं श्लेष्मा च वायुश्च एष सङ्घात उच्यते ॥ ८४ ॥ एतैश्च धार्य्यते जन्तुरेतैः क्षीणैश्च क्षीयते । आयुर्वेदविदस्तस्मात्त्रिधातुं मां प्रचक्षते ॥ ८५ ॥ वृषो हि भगवान् धर्म्मः ख्यातो लोकेषु भारत । निघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम् ॥ ८६ ॥ कपिर्वराहः श्रेष्ठश्च धर्म्मश्च वृष उच्यते । तस्माद्वृषाकपिं प्राह कश्यपो मां प्रजापतिः ॥ ८७ ॥ न चादिं न मध्यं तथा चैव नान्तं कदाचिद्विदन्ते सुराश्चासुराश्च । अनाद्यो ह्यमध्यस्तथाचाप्यनन्तः प्रगीतोऽहमीशो विभुर्लोकसाक्षी ॥ ८८ ॥ शुचीनि श्रवणीयानि शृणोमीह धनञ्जय । न च पापानि गृह्णामि ततोऽहं वै शुचिश्रवाः । एकशृङ्गः पुरा भूत्वा वराहो नन्दिवर्द्धनः । इमाञ्चोद्धृतवान् भूमिमेकशृङ्गस्ततो ह्यहम् ॥ ८९ ॥ तथैवासं त्रिककुदो वाराहं रूपमास्थितः । त्रिककुत्त्वेन विख्यातः शरीरस्य प्रमापणात् ॥ ९० ॥ विरिञ्च इति यत् प्रोक्तं कापिलज्ञानचिन्तकैः । स प्रजापतिरेवाहं चेतनात् सर्वलोककृत् ॥ ९१ ॥ विद्यासहायवन्तं मामादित्यस्थं सनातनम् । कपिलं प्राहुराचार्य्याः सांख्या निश्चितनिश्चयाः ॥ ९२ ॥ हिरण्यगर्भो द्युतिमान् य एष छन्दसि स्तुतः । योगैः सम्पूज्यते नित्यं स एवाहं भुवि स्मृतः ॥ ९३ ॥ एकविंशतिशाखं ऋग्वेदं मां प्रचक्षते । सहस्रशाखं यत् साम ये वै वेदविदो जनाः । गायन्त्यारण्यके विप्रा मद्भक्तास्ते हि दुर्लभाः ॥ ९४ ॥ षट्पञ्चाशतमष्टौ च सप्तत्रिंशतमित्युत । यस्मिञ्छाखा यजुर्वेदे सोऽहमाध्वर्य्यवे स्मृतः ॥ ९५ ॥ पञ्चकल्पमथर्वाणं कृत्याभिः परिबृंहितम् । कल्पयन्ति हि मां विप्रा अथर्वाणविदस्तथा ॥ ९६ ॥ शाखाभेदश्च ये केचिद्याश्च शाखासु गीतयः ।

स्वरवर्णसमुच्चाराः सर्वांस्तान् विद्धि मत्कृतान् ॥९७॥ यत्तद्धयशिरः पार्थ समुदेति वरप्रदम्। सोऽहमेवोत्तरे भागे क्रमाक्षरविभागवित् ॥ ९८ ॥ वामादेशितमार्गेण मत्प्रसादान्महात्मना। पाञ्चालेन क्रमः प्राप्तस्तस्माद्भूतात् सनातनात् ॥ ९९ ॥ वाभ्रव्यगोत्रः स बभौ प्रथमं क्रमपारगः। नारायणाद्वरं लब्ध्वा प्राप्य योगमनुत्तमम् ॥ १०० ॥ क्रमं प्रणीय शिक्षाञ्च प्रणयित्वा स गालवः। कण्डरीकोऽथ राजा च ब्रह्मदत्तः प्रतापवान् ॥ १०१ ॥ जातीमरणजं दुःखं स्मृत्वा स्मृत्वा पुनः पुनः। सप्तजातिषु मुख्यत्वाद्योगानां सम्पदङ्गतः ॥ १०२ ॥ पुराहमात्मजः पार्थ प्रथितः कारणान्तरे। धर्मस्य कुरुशार्दूल ततोऽहं धर्मजः स्मृतः ॥ १०३ ॥ नरनारायणौ पूर्वं तपस्तेपतुरव्ययम्। धर्मयानं समारूढ़ौ पर्वते गन्धमादने ॥ १०४ ॥ तत्काल-समये चैव दक्षयज्ञो बभूव ह। न चैवाकल्पयद्भागं दक्षो रुद्रस्य भारत ॥ १०५ ॥ ततो दधीचिवचनाद्दक्षयज्ञमपाहरत्। ससर्ज्ज शूलं कोपेन प्रज्वलन्तं मुहुर्मुहुः ॥ १०६ ॥ तच्छूलं भस्मसात् कृत्वा दक्षयज्ञं सविस्तरम्। आवयोः सहसागच्छद्दर्य्याश्रममन्तिकात् ॥ १०७ ॥ वेगेन महता पार्थ पतन्नारायणोरसि। ततस्तत्तेजसा-विष्टाः केशा नारायणस्य ह। बभूवुर्मुञ्जवर्णास्तु ततोऽहं मुञ्जकेश-वान् ॥ १०८॥ ततः शूलं विनिर्द्धूतं हुङ्कारेण महात्मना। जगाम शङ्करकरं नारायणसमाहतम् ॥ १०९ ॥ अथ रुद्र उपाधावत्तावृषी तपसान्वितौ। तत एनं समुद्धूतं कण्ठे जग्राह पाणिना। नारा-यणः स विश्वात्मा तेनास्य शितिकण्ठता ॥ ११० ॥ अथ रुद्रविघा-तार्थमिषीकां नर उद्धरत्। मन्त्रैश्च संयुयोजाशु सोऽभवत् परशु र्महान् ॥ १११ ॥ क्षिप्तश्च सहसा तेन खण्डनं प्राप्तवांस्तदा। ततोऽहं खण्डपरशुः स्मृत परशुखण्डनात् ॥ ११२ ॥

अर्जुन उवाच। अस्मिन् युद्धे तु वार्ष्णेय त्रैलोक्यशमदे तदा। को जयं प्राप्तवांस्तत्र शंसैतन्मे जनार्द्दन ॥ ११३ ॥

श्रीभगवानुवाच। तयोः संलग्नयोर्युद्धे रुद्रनारायणात्मनोः।
उद्विग्नाः सहसा कृत्स्नाः सर्व्वलोकास्तदाभवन् ॥ ११४ ॥ नागृह्णात्
पावकः शुभ्रं मखेषु सुहुतं हविः। वेदा न प्रतिभान्तिस्म ऋषीणां
भावितात्मनाम् ॥ ११५ ॥ वेदान्रजस्तमश्चैव समाविविशतुस्तदा।
वसुधा सञ्चकम्पे च नभश्च विपफाल ह ॥ ११६ ॥ निष्प्रभाणि च
तेजांसि ब्रह्मा चैवासनच्युतः। अगाच्छोषं समुद्रश्च हिमवांश्च
व्यशीर्य्यत ॥ ११७ ॥ तस्मिन्नेवं समुत्पन्ने निमित्ते पाण्डुनन्दन।
ब्रह्मा वृतो देवगणैर्ऋषिभिश्च महात्मभिः ॥ ११८ ॥ आजगामाशु
तं देशं यत्र युद्धमवर्त्तत। सोऽञ्जलिप्रग्रहो भूत्वा चतुर्वक्त्रो निरु-
क्तगः ॥ ११९ ॥ उवाच वचनं रुद्रं लोकानामस्तु वै शिवम्।
न्यस्यायुधानि विश्वेश जगतो हितकाम्यया ॥ १२० ॥ यदक्षर-
मथाव्यक्तमीशं लोकस्य भावनम्। कूटस्थं कर्त्तृनिर्द्वन्द्वमकर्त्तेति च
यं विदुः ॥ १२१ ॥ व्यक्तिभावगतस्यास्य एका मूर्त्तिरियं शुभा।
नरो नारायणश्चैव जातौ धर्म्मकुलोद्वहौ ॥ १२२ ॥ तपसा महता
युक्तौ देवश्रेष्ठौ महाव्रतौ। अहं प्रसादजस्तस्य कुतश्चित् कारणा-
न्तरे ॥ १२३ ॥ त्वञ्चैव क्रोधजस्तात पूर्व्वसर्गे सनातनः। मया च
सार्द्धं वरदं विबुधैश्च महर्षिभिः ॥ १२४ ॥ प्रसादयाशु लोकानां
शान्तिर्भवतु मा चिरम्। ब्रह्मणा त्वेवमुक्तस्तु रुद्रः क्रोधाग्निमुत्-
सृजन् ॥ १२५ ॥ प्रसादयामास ततो देवं नारायणं प्रभुम्।
शरणञ्च जगामाद्यं वरेण्यं वरदं प्रभुम् ॥ १२६ ॥ ततोऽथ वरदो
देवो जितक्रोधो जितेन्द्रियः। प्रीतिमानभवत्तत्र रुद्रेण सह
सङ्गतः ॥ १२७ ॥ ऋषिभिर्ब्रह्मणा चैव विबुधैश्च सुपूजितः। उवाच
देवमीशानमीशः स जगतो हरिः ॥ १२८ ॥ यस्त्वां वेत्ति स मां
वेत्ति यस्त्वामनु स मामनु। नावयोरन्तरं किञ्चिन्मा ते भूद्बुद्धि-
रन्यथा ॥ १२९ ॥ अद्यप्रभृति श्रीवत्सः शूलाङ्को मेभवत्वयम्।
मम पाण्यङ्कितश्चापि श्रीकण्ठस्त्वं भविष्यसि ॥ १३० ॥

श्रीभगवानुवाच । एवं लक्षणमुत्पाद्य परस्परकृतन्तदा । सख्यञ्चैवातुलं कृत्वा रुद्रेण सहितावृषी ॥ १३१ ॥ तपस्तेपतुरव्यग्रौ विसृज्य त्रिदिवौकसः । एष ते कथितः पार्थः नारायणजयो मृधे ॥ १३२ ॥ नामानि चैव गुह्यानि निरुक्तानि च भारत । ऋषिभिः कथितानीह यानि सङ्कीर्त्तितानि ते ॥ १३३ ॥ एवं बहुविधै रूपैश्चरामीह वसुन्धराम् । ब्रह्मलोकञ्च कौन्तेय गोलोकञ्च सनातनम् ॥ १३४ ॥ मया त्वं रक्षितो युद्धे महान्तं प्राप्तवान् जयम् ॥ १३५ ॥ यस्तु ते सोऽग्रतो याति युद्धे सम्प्रत्युपस्थिते । तं विद्धि रुद्रं कौन्तेय देवदेवं कपर्द्दिनम् ॥ १३६ ॥ कालः स एव कथितः क्रोधजेति मया तव । निहतास्तेन वै पूर्वं हतवानसि यान्रिपून् ॥१३७॥ अप्रमेयप्रभावं तं देवदेवमुमापतिम् । नमस्व देवं प्रयतो विश्वेशं हरमव्ययम् ॥ १३८ ॥ यश्च ते कथितः पूर्वं क्रोधजेति पुनः पुनः । तस्मिन् प्रभावमेवाग्रे यत् श्रुतन्ते धनञ्जय ॥ १३९ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि नारायणीये द्विचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४२ ॥

---

शौनक उवाच । सौते सुमहदाख्यानं भवता परिकीर्त्तितम् । यत् श्रुत्वा मुनयः सर्व्वे विस्मयं परमं गताः ॥ १ ॥ सर्व्वाश्रमाभिगमनं सर्व्वतीर्थावगाहनम् । न तथा फलदं सौते नारायणकथा यथा ॥ २ ॥ पाविताङ्गाः स्म संवृत्ताः श्रुत्वेमामादितः कथाम् । नारायणाश्रयां पुण्यां सर्व्वपापप्रमोचनीम् ॥ ३ ॥ दुर्द्दर्शो भगवान् देवः सर्व्वलोकनमस्कृतः । सब्रह्मकैः सुरैः कृत्स्नैरन्यैश्चैव महर्षिभिः ॥ ४ ॥ दृष्टवान्नारदो यत्तु देवं नारायणं हरिम् । नूनमेतद्ध्यनुमतं तस्य देवस्य सूतज ॥ ५ ॥ यद्दृष्टवान् जगन्नाथमनिरुद्धतनौ स्थितम् । यत् प्राद्रवत् पुनर्भूयो नारदो देवसत्तमौ । नरनारायणौ द्रष्टुं कारणन्तद्ब्रवीहि मे ॥ ६ ॥

सूत उवाच । तस्मिन् यज्ञे वर्त्तमाने राज्ञः पारिक्षितस्य वै । कर्म्मान्तरेषु विधिवद्वर्त्तमानेषु शौनक ॥ ७ ॥ कृष्णद्वैपायनं व्यास-मृषिं वेदनिधिं प्रभुम् । परिपप्रच्छ राजेन्द्रः पितामहपितामहम् ॥ ८ ॥

जनमेजय उवाच । श्वेतद्वीपान्निवृत्तेन नारदेन सुरर्षिणा । ध्यायता भगवद्वाक्यं चेष्टितं किमतः परम् ॥ ९ ॥ बदर्य्याश्रम-मागम्य समागम्य च तावृषी । कियन्तं कालमवसत् कां कथां पृष्टवांश्च सः ॥ १० ॥ इदं शतसहस्राद्धि भारताख्यानविस्तरात् । आमथ्य मतिमन्थेन ज्ञानोदधिमनुत्तमम् ॥ ११ ॥ नवनीतं यथा दध्नो मलयाच्चन्दनं यथा । आरण्यकञ्च वेदेभ्य ओषधिभ्योऽमृतं यथा ॥ १२ ॥ समुद्धृतमिदं ब्रह्मन् कथामृतमिदं तथा । तपोनिधे त्वयोक्तं हि नारायणकथाश्रयम् ॥ १३ ॥ स ईशो भगवा-न्देवः सर्व्वभूतात्मभावनः । अहो नारायणं तेजो दुर्द्धर्षं द्विजसत्तम ॥ १४ ॥ यत्राविशन्ति कल्पान्ते सर्व्वे ब्रह्मादयः सुराः । ऋषयश्च सगन्धर्व्वा यच्च किञ्चिच्चराचरम् ॥ १५ ॥ न ततोऽस्ति परं मन्ये पावनं दिवि चेह च । सर्व्वाश्रमाभिगमनं सर्व्वतीर्थावगाहनम् ॥१६॥ न तथा फलदञ्चापि नारायणकथा यथा । सर्व्वथा पाविताः स्मेह श्रुत्वेमामादितः कथाम् ॥ १७ ॥ हरेर्व्विश्वेश्वरस्येह सर्व्वपापप्रणा-शिनीम् । न चित्रं कृतवांस्तत्र यदार्य्यो मे धनञ्जयः ॥ १८ ॥ वासुदेवसहायो यः प्राप्तवान् जयमुत्तमम् । न चास्य किञ्चिदप्राप्यं मन्ये लोकेष्वपि त्रिषु ॥ १९ ॥ त्रैलोक्यनाथो विष्णुः स यथासीत् साह्यकृत् स वै । धन्याश्च सर्व्व एवासन् ब्रह्मंस्ते मम पूर्व्वजाः ॥२०॥ हिताय श्रेयसे चैव येषामासीज्जनार्द्दनः । तपसाथ सुदृश्यो हि भगवाल्लोंकपूजितः ॥ २१ ॥ यद्दृष्टवन्तस्ते साक्षात् श्रीवत्साङ्कविभू-षणम् । तेभ्यो धन्यतरश्चैव नारदः परमेष्ठिजः ॥ २२ ॥ न चाल्प-तेजसमृषिं वेद्मि नारदमव्ययम् । श्वेतद्वीपं समासाद्य येन दृष्टः

स्वयं हरिः ॥ २३ ॥ देवप्रसादानुगतं व्यक्तं तत्तस्य दर्शनम् । यद्दृष्टवांस्तदा देवमनिरुद्धतनौ स्थितम् ॥ २४ ॥ बदरीमाश्रमं यत्तु नारदः प्राद्रवत् पुनः । नरनारायणौ द्रष्टुं किं नु तत् कारणं मुने ॥ २५ ॥ श्वेतद्वीपान्निवृत्तश्च नारदः परमेष्ठिजः । बदरीमाश्रमं प्राप्य समागम्य च तावृषी ॥ २६ ॥ कियन्तं कालमवसत् प्रश्नान् कान् पृष्टवांश्च ह । श्वेतद्वीपादुपावृत्ते तस्मिन् वा सुमहात्मनि ॥ २७ ॥ किमब्रूतां महात्मानौ नरनारायणावृषी । तदेतन्मे यथातत्त्वं सर्वमाख्यातुमर्हसि ॥ २८ ॥

वैशम्पायन उवाच । नमो भगवते तस्मै व्यासायामिततेजसे । यस्य प्रासादद्वक्ष्यामि नारायणकथामिमाम् ॥ २९ ॥ प्राप्य श्वेतं महाद्वीपं दृष्ट्वा च हरिमव्ययम् । निवृत्तो नारदो राजंस्तरसा मेरुमागमत् ॥ ३० ॥ हृदयेनोद्वहन् भारं यदुक्तं परमात्मना । पश्चादस्याभवद्राजन्नात्मनः साध्वसं महत् ॥ ३१ ॥ यद्गत्वा दूरमध्वानं क्षेमी पुनरिहागतः । मेरोः प्रचक्राम ततः पर्वतं गन्धमादनम् ॥ ३२ ॥ निपपात च खात्तूर्णं विशालां बदरीमनु । ततः स ददृशे देवौ पुराणावृषिसत्तमौ ॥ ३३ ॥ तपश्चरन्तौ सुमहदात्मनिष्ठौ महाव्रतौ । तेजसाभ्यधिकौ सूर्यात् सर्वलोकविरोचनात् । श्रीवत्सलक्षणौ पूज्यौ जटामण्डलधारिणौ ॥ ३४ ॥ जालपादभुजौ तौ तु पादयोश्चक्रलक्षणौ । व्यूढोरस्कौ दीर्घभुजौ तथा मुष्कचतुष्किणौ ॥ ३५ ॥ षष्टिदन्तावष्टभुजौ मेघौघसदृशस्वनौ । स्वास्यौ पृथुललाटौ च सुभ्रू सुहनुनासिकौ ॥ ३६ ॥ आतपत्रेण सदृशे शिरसी देवयोस्तयोः । एवं लक्षणसम्पन्नौ महापुरुषसंज्ञितौ ॥ ३७ ॥ तौ दृष्ट्वा नारदो हृष्टस्ताभ्याञ्च प्रतिपूजितः । स्वागतेनाभिभाष्याथ पृष्टश्चानामयन्तथा । बभूवान्तर्गतमतिर्निरीक्ष्य पुरुषोत्तमौ ॥ ३८ ॥ सदोगतास्तत्र ये वै सर्वभूतनमस्कृताः । श्वेतद्वीपे मया दृष्टास्तादृशावृषिसत्तमौ ॥ ३९ ॥ इति सञ्चिन्त्य मनसा

कृत्वा चाभिप्रदक्षिणम्। स चोपविविशे तत्र पीठे कुशमये शुभे ॥ ४० ॥ ततस्तौ तपसां वासौ यशसां तेजसामपि। ऋषी शमदमोपेतौ कृत्वा पूर्व्वाह्निकं विधिम् ॥ ४१ ॥ पश्चान्नारदमव्यग्रौ पाद्यार्घ्याभ्यामथार्च्चतः। पीठयोश्चोपविष्टौ तौ कृतातिथ्याह्निकौ नृप ॥ ४२ ॥ तेषु तत्रोपविष्टेषु स देशोऽभिव्यराजत। आज्याहुतिमहाज्वालैर्यज्ञवाटो यथाग्निभिः ॥ ४३ ॥ अथ नारायणस्तत्र नारदं वाक्यमब्रवीत्। सुखोपविष्टं विश्रान्तं कृतातिथ्यं सुखस्थितम् ॥ ४४ ॥ नरनारायणावूचतुः। अपीदानीं स भगवान् परमात्मा सनातनः। श्वेतद्वीपे त्वया दृष्ट आवयोः प्रकृतिः परा ॥४५॥

नारद उवाच। दृष्टो मे पुरुषः श्रीमान् विश्वरूपधरोऽव्ययः। सर्व्वे लोका हि तत्रस्थास्तथा देवाः सहर्षिभिः ॥ ४६ ॥ अद्यापि चैनं पश्यामि युवां पश्यन् सनातनौ। यैर्लक्षणैरुपेतः स हरिरव्यक्तरूपधृक् ॥ ४७ ॥ तैर्लक्षणैरुपेतौ हि व्यक्तरूपधरौ युवाम्। दृष्टौ युवां मया तत्र तस्य देवस्य पार्श्वतः ॥ ४८ ॥ पृष्टैव चागतोऽस्म्यद्य विसृष्टः परमात्मना ॥ ४९ ॥ को हि नाम भवेत्तस्य तेजसा यशसा श्रिया। सदृशस्त्रिषु लोकेषु ऋते धर्म्मात्मजौ युवाम् ॥ ५० ॥ तेन मे कथितः कृत्स्नो धर्म्मः क्षेत्रज्ञसंज्ञितः। प्रादुर्भावाश्च कथिता भविष्या इह ये यथा ॥ ५१ ॥ तत्र ये पुरुषाः श्वेताः पञ्चेन्द्रियविवर्ज्जिताः। प्रतिबुद्धाश्च ते सर्व्वे भक्ताश्च पुरुषोत्तमम्। तेऽर्च्चयन्ति सदा देवं तैः सार्द्धं रमते च सः ॥ ५२ ॥ प्रियभक्तो हि भगवान् परमात्मा द्विजप्रियः। रमते सोऽर्च्यमानो हि सदा भागवतप्रियः ॥ ५३ ॥ विश्वभुक् सर्व्वगो देवो माधवो भक्तवत्सलः। स कर्त्ता कारणञ्चैव कार्य्यञ्चातिबलद्युतिः ॥ ५४ ॥ हेतुश्चाज्ञाविधानञ्च तत्त्वञ्चैव महायशाः। तपसा योज्य सोऽऽत्मानं श्वेतद्वीपात् परं हि यत् ॥ ५५ ॥ तेज इत्यभिविख्यातं स्वयं भासावभासितम्। शान्तिः सा त्रिषु लोकेषु विहिता भावितात्मना ॥५६॥

एतया शुभया बुद्या नैष्ठिकं व्रतमास्थितः। न तत्र सूर्य्यस्तपति न सोमोऽभिविराजते। न वायुर्व्वाति देवेशे तपश्चरति दुश्चरम् ॥ ५७ ॥ वेदीमष्टनलोत्सेधां भूमावास्थाय विश्वकृत्। एकपाद-स्थितो देव ऊर्द्ध्ववाहुरुदङ्मुखः ॥ ५८ ॥ साङ्गानावर्त्तयन् वेदां-स्तपस्तेपे सुदुश्चरम्। यद्ब्रह्मा ऋषयश्चैव स्वयं पशुपतिश्च यत् ॥५९॥ शेषाश्च विबुधश्रेष्ठा दैत्यदानवराक्षसाः। नागाः सुपर्णा गन्धर्व्वाः सिद्धा राजर्षयश्च ये ॥ ६० ॥ हव्यं कव्यञ्च सततं विधियुक्तं प्रयु-ज्यते। कृत्स्नन्तु तस्य देवस्य चरणावुपतिष्ठते ॥ ६१ ॥ याः क्रियाः सम्प्रयुक्ताश्च एकान्तगतबुद्धिभिः। ताः सर्व्वाः शिरसा देवः प्रति-गृह्णाति वै स्वयम् ॥ ६२ ॥ न तस्यान्यः प्रियतरः प्रतिबुद्धैर्महा-त्मभिः। विद्यते त्रिषु लोकेषु ततोऽस्म्यैकान्तिकङ्गतः ॥ ६३ ॥ इह चैवागतस्तेन विसृष्टः परमात्मना। एवं मे भगवान्देवः स्वयमाख्या-तवान् हरिः। आसिष्ये तत्परो भूत्वा युवाभ्यां सह नित्यशः ॥६४॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि नारायणीये त्रिचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४३ ॥

---

नरनारायणावूचतुः। धन्योऽस्यनुगृहीतोऽसि यत्ते दृष्टः स्वयं प्रभुः। न हि तं दृष्टवान् कश्चित् पद्मयोनिरपि स्वयम् ॥ १ ॥ अव्यक्तयोनिर्भगवान्दुर्द्दर्शः पुरुषोत्तमः। नारदैतद्धि नौ सत्यं वचनं समुदाहृतम् ॥ २ ॥ नास्य भक्तात् प्रियतरो लोके कश्चन विद्यते। ततः स्वयं दर्शितवान् स्वमात्मानं द्विजोत्तम ॥ ३ ॥ तपो हि तप्यतस्तस्य यत् स्थानं परमात्मनः। न तत् संप्राप्नुते कश्चिदृते ह्यावां द्विजोत्तम ॥ ४ ॥ या हि सूर्य्यसहस्रस्य समस्तस्य भवे-द्द्युतिः। स्थानस्य सा भवेत्तस्य स्वयन्तेन विराजता ॥ ५ ॥ तस्मा-दुत्तिष्ठते विप्र देवाद्विश्वभुवः पतेः। क्षमा क्षमावतां श्रेष्ठ यया

भूमिन्तु युज्यते ॥ ६ ॥ तस्माच्चोत्तिष्ठते देवात् सर्वभूतहिताद्रसः। आपो हि तेन युज्यन्ते द्रवत्वं प्राप्नुवन्ति च ॥ ७ ॥ तस्माद्देवसमुद्भूतं तेजोरूपगुणात्मकम्। येन संप्रज्यते सूर्य्यस्ततो लोके विराजते ॥ ८ ॥ तस्माद्देवात् समुद्भूतः स्पर्शस्तु पुरुषोत्तमात्। येन स्म युज्यते वायुस्ततो लोकान् विवात्यसौ ॥ ९ ॥ तस्माच्चोत्तिष्ठते शब्दः सर्वलोकेश्वरात् प्रभोः। आकाशं युज्यते येन ततस्तिष्ठत्यसंवृतम् ॥ १० ॥ तस्माच्चोत्तिष्ठते देवात् सर्वभूतगतं मनः। चन्द्रमा येन संयुक्तः प्रकाशगुणधारणः ॥ ११ ॥ सद्भूतोत्पादकं नाम तत् स्थानं वेदसंज्ञितम्। विद्यासहायो यत्रास्ते भगवान् हव्यकव्यभुक् ॥ १२ ॥ ये हि निष्कलुषा लोके पुण्यपापविवर्ज्जिताः। तेषां वै क्षेममध्वानं गच्छतां द्विजसत्तम ॥ १३ ॥ सर्वलोके तमोहन्ता आदित्यो द्वारमुच्यते। आदित्यदग्धसर्व्वाङ्गा अदृश्याः केनचित् क्वचित् ॥ १४ ॥ परमाणुभूता भूत्वा तु तं देवं प्रविशन्त्युत। तस्मादपि च निर्मुक्ता अनिरुद्धतनौ स्थिताः ॥ १५ ॥ मनोभूतास्ततो भूत्वा प्रद्युम्नं प्रविशन्त्युत। प्रद्युम्नाच्चापि निर्म्मुक्ता जीवं सङ्कर्षणन्ततः ॥ १६ ॥ विशन्ति विप्रप्रवराः सांख्या भागवतैः सह। ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा ॥ १७ ॥ प्रविशन्ति द्विजश्रेष्ठाः क्षेत्रज्ञं निर्गुणात्मकम्। सर्व्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः ॥१८॥ समाहितमनस्काश्च नियताः संयतेन्द्रियाः। एकान्तभावोपगता वासुदेवं विशन्ति ते ॥ १९ ॥ आवामपि च धर्म्मस्य गृहे जातौ द्विजोत्तम। रम्यां विशालामाश्रित्य तप उग्रं समास्थितौ ॥ २० ॥ ये तु तस्यैव देवस्य प्रादुर्भावाः सुरप्रियाः। भविष्यन्ति त्रिलोकस्थास्तेषां स्वस्तीत्यथो द्विज ॥ २१ ॥ विधिना स्वेन युक्ताभ्यां यथापूर्वं द्विजोत्तम। आस्थिताभ्यां सर्वकृच्छ्रं व्रतं सम्यगनुत्तमम् ॥ २२ ॥ आवाभ्यामपि दृष्टस्त्वं श्वेतद्वीपे तपोधन। समागतो भगवता सङ्कल्पं कृतवांस्तथा ॥ २३ ॥ सर्वं हि नौ संवि-

दितं त्रैलोक्ये सचराचरे। यद्भविष्यति वृत्तं वा वर्त्तते वा शुभाशुभम्। सर्वं स ते कथितवान् देवदेवो महामुने ॥ २४ ॥

वैशम्पायन उवाच। एतत् श्रुत्वा तयोर्व्वाक्यं तपस्युग्रे च वर्त्तते। नारदः प्राञ्जलिर्भूत्वा नारायणपरायणः ॥ २५ ॥ जजाप विधिवन्मन्त्रान्नारायणगतान् बहून्। दिव्यं वर्षसहस्रं हि नरनारायणाश्रमे ॥ २६ ॥ अवसत् स महातेजा नारदो भगवानृषिः। तमेवाभ्यर्च्चयन् देवं नरनारायणौ च तौ ॥ २७ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये चतुश्चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४४ ॥

---

वैशम्पायन उवाच। कस्यचित्त्वथ कालस्य नारदः परमेष्ठिजः। दैवं कृत्वा यथान्यायं पित्र्यञ्चक्रे ततः परम् ॥ १ ॥ ततस्तं वचनं प्राह ज्येष्ठो धर्म्मात्मजः प्रभुः। क इज्यते द्विजश्रेष्ठ दैवे पित्र्ये च कल्पिते ॥ २ ॥ त्वया मतिमतांश्रेष्ठ तन्मे शंस यथागमम्। किमेतत् क्रियते कर्म्म फलं वास्य किमिष्यते ॥ ३ ॥

नारद उवाच। त्वयैतत् कथितं पूर्वं दैवं कर्त्तव्यमित्यपि। दैवतञ्च परो यज्ञः परमात्मा सनातनः ॥ ४ ॥ ततस्तद्भावितो नित्यं यजे वैकुण्ठमव्ययम्। तस्माच्च प्रसृतः पूर्वं ब्रह्मा लोकपितामहः ॥ ५ ॥ मम वै पितरं प्रीतः परमेष्ठ्यप्यजीजनत्। अहं सङ्कल्पजस्तस्य पुत्त्रः प्रथमकल्पितः ॥ ६ ॥ यजामि वै पितॄन् साधो नारायणविधौ कृते। एवं स एव भगवान् पिता माता पितामहः ॥ ७ ॥ इज्यते पितृयज्ञेषु तथा नित्यं जगत्पतिः। श्रुतिश्चाप्यपरा देवी पुत्त्रान् हि पितरोऽयजन् ॥ ८ ॥ वेदश्रुतिः प्रनष्टा च पुनरध्यापिता सुतैः। ततस्ते मन्त्रदाः पुत्त्राः पितृत्वमुपपेदिरे ॥ ९ ॥ नूनं सुरैस्तद्विदितं युवयोर्भावितात्मनोः। पुत्त्राश्च पितरश्चैव पर-

स्वरमपूजयन् ॥ १० ॥ त्रीन् पिण्डान्नरस्य वै पृथ्व्यां पूर्वन्दत्वा कुशानिति । कथन्तु पिण्डसंज्ञान्ते पितरो लेभिरे पुरा ॥ ११ ॥ नरनारायणावूचतुः । इमां हि धरणीं पूर्वं नष्टां सागरमेखलाम् । गोविन्द उज्जहाराशु वाराहं रूपमास्थितः ॥ १२ ॥ स्थापयित्वा तु धरणीं स्वे स्थाने पुरुषोत्तमः । जलकर्द्दमलिप्ताङ्गो लोककार्य्यार्थमुद्यतः ॥ १३ ॥ प्राप्ते चाह्निककाले तु मध्यदेशगते रवौ । दंष्ट्राविलग्नांस्त्रीन् पिण्डान् विधूय सहसा प्रभुः ॥ १४ ॥ स्थापयामास वै पृथ्व्यां कुशानास्तीर्य्य नारद । स तेष्वात्मानमुद्दिश्य पित्र्यञ्चक्रे यथाविधि ॥ १५ ॥ सङ्कल्पयित्वा त्रीन् पिण्डान् विधूयविधिना प्रभुः । आत्मगात्रोष्मसम्भूतैः स्नेहगर्भैस्तिलैरपि ॥ १६ ॥ प्रोच्यापवर्गं देवेशः प्राङ्मुखः कृतवान् स्वयम् । मर्य्यादास्थापनार्थञ्च ततो वचनमुक्तवान् ॥ १७ ॥

वृषाकपिरुवाच । अहं हि पितरः स्रष्टुमुद्यतो लोककृत् स्वयम् । तस्य चिन्तयतः सद्यः पितृकार्य्यविधीन् परान् ॥ १८ ॥ दंष्ट्राभ्यां प्रविनिर्द्धूता ममैते दक्षिणां दिशं । आश्रिता धरणीं पिण्डास्तस्मात् पितर एव ते ॥ १९ ॥ त्रयोर्मूर्त्तिविहीना वै पिण्डमूर्त्तिधरास्त्विमे । भवन्तु पितरो लोके मया सृष्टाः सनातनाः ॥ २० ॥ पिता पितामहश्चैव तथैव प्रपितामहः । अहमेवात्र विज्ञेयस्त्रिषु पिण्डेषु संस्थितः ॥ २१ ॥ नास्ति मत्तोऽधिकः कश्चित् को वान्योऽर्च्यो मया स्वयम् । को वा मम पिता लोके अहमेव पितामहः ॥ २२ ॥ पितामहपिता चैव अहमेवात्र कारणम् । इत्येतदुक्त्वा वचनं देवदेवो वृषाकपिः ॥ २३ ॥ वाराहपर्वते विप्र दत्त्वा पिण्डान् स विस्तरान् । आत्मानं पूजयित्वैव तत्रैवादर्शनं गतः ॥ २४ ॥ एषा तस्य स्थितिर्विप्र पितरः पिण्डसंज्ञिता । लभन्ते सततं पूजां वृषाकपिवचो यथा ॥ २५ ॥ ये यजन्ति पितॄन्देवान् गुरूंश्चैवातिथींस्तथा । गाश्चैव द्विजमुख्यांश्च पृथिवीं मातरं

तथा ॥ २६ ॥ कर्म्मणा मनसा वाचा विष्णुमेव यजन्ति ते । अन्तर्गत स भगवान् सर्वसत्त्वशरीरगः ॥ २७ ॥ समः सर्वेषु भूतेषु ईश्वरः सुखदुःखयोः । महान्महात्मा सर्वात्मा नारायण इति श्रुतः ॥ २८ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि नारायणीये पञ्चचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४५ ॥

---

वैशम्पायन उवाच । श्रुत्वैतन्नारदो वाक्यं नरनारायणेरितम । अत्यन्तं भक्तिमान्देवे एकान्तित्वमुपेयिवान् ॥ १ ॥ प्रोष्य वर्षसहस्रन्तु नरनारायणाश्रमे । श्रुत्वा भगवदाख्यानं दृष्ट्वा च हरिमव्ययम् । हिमवन्तं जगामाशु यत्रास्य स्वक आश्रमः ॥ २ ॥ तावपि ख्याततपसौ नरनारायणावृषी । तस्मिन्नेवाश्रमे रम्ये तेपतुस्तप उत्तमम् ॥ ३ ॥ त्वमप्यमितविक्रान्तः पाण्डवानां कुलोद्वहः । पावितात्माद्य संवृत्तः श्रुत्वेमामादितः कथाम् ॥ ४ ॥ नैव तस्यापरो लोके नायं पार्थिव सत्तम । कर्म्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम ॥ ५ ॥ मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः । यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिम् ॥ ६ ॥ कथं नाम भवेद्द्वेष्य आत्मा लोकस्य कस्यचित् । आत्मा हि पुरुषव्याघ्र ज्ञेयो विष्णुरिति स्थिति ॥ ७ ॥ य एष गुरुरस्माकं ऋषिर्गन्धवतीसुतः । तेनैतत् कथितं तात माहात्म्यं परमव्ययम् । तस्माच्छ्रुतं मया चेदं कथितञ्च तवानघ ॥ ८ ॥ नारदेन तु संप्राप्त सरहस्यः ससंग्रहः । एष धर्म्मो जगन्नाथात् साक्षान्नारायणान्नृप ॥ ९ ॥ एवमेष महान् धर्म्मः स ते पूर्व्वं नृपोत्तम । कथितो हरिगीतासु समासविधिकल्पितः ॥ १० ॥ कृष्णद्वैपायनं व्यासं विद्धि नारायणं भुवि । को ह्यन्यः पुरुषव्याघ्र महाभारतकृद्भवेत् ।

धर्म्मान्नानाविधांश्चैव को ब्रूयात्तमृते प्रभुम् ॥ ११ ॥ वर्त्ततां ते महायज्ञो यथा सङ्कल्पितस्त्वया। सङ्कल्पिताश्वमेधस्त्वं श्रुतधर्म्मश्च तत्त्वतः ॥ १२ ॥

सौतिरुवाच। एतत्तु महदाख्यानं श्रुत्वा पार्थिव सत्तमः। ततो यज्ञसमाप्त्यर्थं क्रियाः सर्व्वाः समारभत् ॥ १३ ॥ नारायणीयमाख्यानमेतत्ते कथितं मया। पृष्टेन शौनकाद्येषु नैमिषारण्यवासिषु ॥ १४ ॥ नारदेन पुरा यद्वै गुरवे तु निवेदितम्। ऋषीणां पाण्डवानाञ्च शृण्वतोः कृष्णभीष्मयोः ॥ १५ ॥ स हि परमर्षिजनभुवनपतिः पृथुधरणिधरः श्रुतिविनयनिधिः। शमनियमनिधिर्यमनियमपरो द्विजवरसहितस्तव भवतु गतिः ॥ १६ ॥ हरिरमरहितो ह्यसुरवधकरस्तपसां निधिः सुमहतां यशसाञ्च भाजनम्। मधुकैटभहा कृतधर्म्मविदां गतिदोऽभयदो मखभागहरोऽस्तु शरणं स ते ॥ १७ ॥ त्रिगुणो विगुणश्चतुरात्मधरः पूर्त्तेष्टयोश्च फलभागहरः। विदधातु नित्यमजितोऽतिबलो गतिमात्मगां सुकृतिनामृषीणाम् ॥ १८ ॥ तं लोकसाक्षिणमजं पुरुषं पुराणं रविवर्णमीश्वरं गतिं बहुशः। प्रणमध्वमेकमनसो यतः सलिलोद्भवोऽपि तमृषिं प्रणतः ॥ १९ ॥ स हि लोकयोनिरमृतपदं सूक्ष्मं परायणमचलं हि पदं। तत् सांख्ययोगिभिरुदारधृतं बुद्ध्या यतात्मभिरिदं सनातनम् ॥ २० ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये
षट्चत्वारिंशदधिकत्रिशतोऽध्यायः ॥ ३४६ ॥

---

जनमेजय उवाच। श्रुतं भगवतस्तस्य माहात्म्यं परमात्मनः। जन्म धर्म्मगृहे चैव नरनारायणात्मकम् ॥ १ ॥ महावराहसृष्टा च पिण्डोत्पत्तिः पुरातनी। प्रवृत्तौ च निवृत्तौ च यो यथा

परिकल्पितः ॥ २ ॥ तथा च नः श्रुतो ब्रह्मन् कथ्यमानस्त्वयानघ। यच्च तत् कथितं पूर्वं त्वया हयशिरो महत् ॥ ३ ॥ हव्यकव्यभुजो विष्णोरुदक् पूर्वे महोदधौ। तच्च दृष्टं भगवता ब्रह्मणा परमेष्ठिना ॥ ४ ॥ किन्तदुत्पादितं पूर्वं हरिणा लोकधारिणा। रूपं प्रभावं महतामपूर्वं धीमताम्वर ॥ ५ ॥ दृष्ट्वा हि विबुधश्रेष्ठमपूर्वममितौजसम्। तदश्वशिरसं पुण्यं ब्रह्मा किमकरोन्मुने ॥ ६ ॥ एतन्नः संशयं ब्रह्मन् पुराणं ज्ञानसम्भवम्। कथमस्योत्तममते महापुरुषनिर्म्मितम् ॥ ७ ॥ पाविताः स्म त्वया ब्रह्मन् पुण्यां कथयता कथाम् ॥ ८ ॥

वैशम्पायन उवाच। कथयिष्यामि ते सर्वं पुराणं वेदसम्मितम्। जगौ यद्भगवान् व्यासो राज्ञः पारिक्षितस्य वै ॥ ९ ॥ श्रुत्वाश्वशिरसो मूर्त्तिं देवस्य हरिमेधसः। उत्पन्नसंशयो राजा एतदेवमचोदयत् ॥ १० ॥

जनमेजय उवाच। यत्तद्दर्शितवान् ब्रह्मा देवं हयशिरोधरम्। किमर्थं तत् समभवत्तन्ममाचक्ष्व सत्तम ॥ ११ ॥

वैशम्पायन उवाच। यत् किञ्चिदिह लोके वै देहसत्त्वं विशाम्पते। सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिभिः ॥ १२ ॥ ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट्। भूतान्तरात्मा वरदः सगुणो निर्गुणोऽपि च ॥ १३ ॥ भूतप्रलयमत्यन्तं शृणुष्व नृपसत्तम। धरण्यामथ लीनायामप्सु चैकार्णवे पुरा ॥ १४ ॥ ज्योतिर्भूते जले चापि लीने ज्योतिषि चानिले। वायौ चाकाशसंलीने आकाशे च मनोऽनुगे ॥ १५ ॥ व्यक्ते मनसि संलीने व्यक्ते चाव्यक्ततां गते। अव्यक्ते पुरुषं याते पुंसि सर्वगतेऽपि च ॥ १६ ॥ तम एवाभवत् सर्वं न प्राज्ञायत किञ्चन। तमसो ब्रह्मसंभूतं तमो मूलामृतात्मकं ॥ १७ ॥ तद्विश्वभावसंज्ञान्तं पौरुषीं तनुमाश्रितम्। सोऽनिरुद्ध इति प्रोक्तस्तत् प्रधानं प्रचक्षते ॥ १८ ॥ तदव्यक्तमिति ज्ञेयं त्रिगुणं

नृपसत्तम । विद्यासहायवान्देवो विष्वक्सेनो हरिः प्रभुः ॥ १९ ॥ अप्स्वेव शयनं चक्रे निद्रायोगमुपागतः । जगतश्चिन्तयन् सृष्टिं चित्रां बहुगुणोद्भवाम् ॥ २० ॥ तस्य चिन्तयतः सृष्टिं महानात्मगुणः स्मृतः । अहङ्कारस्ततो जातो ब्रह्मा स तु चतुर्मुखः ॥ २१ ॥ हिरण्यगर्भो भगवान् सर्वलोकपितामहः । पद्मेऽनिरुद्धात् सम्भूतस्तदा पद्मनिभेक्षण ॥ २२ ॥ सहस्रपत्रे द्युतिमानुपविष्टः सनातनः । ददृशेऽद्भुतसङ्काशो लोकानापोमयान् प्रभुः ॥ २३ ॥ सत्त्वस्थः परमेष्ठी स ततो भूतगणान् सृजन् । पूर्वमेव च पद्मस्य पत्रे सूर्य्यांशुसप्रभे ॥ २४ ॥ नारायणकृतौ विन्दू अपामास्तां गुणोत्तरौ । तावपश्यत् स भगवाननादिनिधनोऽच्युतः ॥ २५ ॥ एकस्तत्राभवद्विन्दुर्मध्वाभो रुचिरप्रभः । स तामसो मधुर्जातस्तदा नारायणाज्ञया । कठिनस्त्वपरो विन्दुः कैटभो राजसस्तु सः ॥ २६ ॥ तावभ्यधावतां श्रेष्ठौ तमोरजोगुणान्वितौ । वलवन्तौ गदाहस्तौ पद्मनालानुसारिणौ ॥ २७ ॥ ददृशातेऽरविन्दस्थं ब्रह्माणममितप्रभम् । सृजन्तं प्रथमं वेदांश्चतुरश्चारुविग्रहान् ॥ २८ ॥ ततो विग्रहवन्तौ तौ वेदान् दृष्ट्वासुरत्तमौ । सहसा जगृहतुर्वेदान् ब्रह्मणः पश्यतस्तदा ॥ २९ ॥ अथ तौ दानवश्रेष्ठौ वेदान् गृह्य सनातनान् । रसां विविशतुस्तूर्णमुदक्पूर्वे महोदधौ ॥ ३० ॥ ततो हृतेषु वेदेषु ब्रह्मा कश्मलमाविशत् । ततो वचनमीशानं प्राह वेदैर्विनाकृतः ॥ ३१ ॥

ब्रह्मोवाच । वेदा मे परमं चक्षुर्वेदा मे परमं वलम् । वेदा मे परमं धाम वेदा मे ब्रह्म चोत्तरम् ॥ ३२ ॥ मम वेदा हृताः सर्वे दानवाभ्यां वलादितः । अन्धकारा हि मे लोका जाता वेदैर्विनाकृताः ॥ ३३ ॥ वेदानृते हि किं कुर्य्यां लोकानां सृष्टिमुत्तमाम् । अहो वत महद्दुःखं वेदनाशनजं मम ॥ ३४ ॥ प्राप्तं दुनोति हृदयं तीव्रं शोकपरायणम् । को हि शोकार्णवे मग्नं मामितोऽद्य समुद्धरेत् । वेदांस्तांश्चानयेन्नष्टान् कस्य चाहं प्रियो भवे ॥ ३५ ॥

इत्येवं भाषमाणस्य ब्रह्मणो नृपसत्तम। हरेस्तोत्रार्थमुद्भूता बुद्धिर्बुद्धिमताम्बर। ततो जगौ परं जप्यं प्राञ्जलिः प्रग्रहः प्रभुः ॥३६॥

ब्रह्मोवाच। ओं नमस्ते ब्रह्महृदय नमस्ते मम पूर्वज। लोकाद्य भुवनश्रेष्ठ साङ्ख्ययोगनिधे प्रभो॥ ३७॥ व्यक्ताव्यक्तकराचिन्त्य क्षेमं पन्थानमास्थितः। विश्वभुक् सर्वभूतानामन्तरात्मन्नयोनिज ॥ ३८॥ अहं प्रसादजस्तुभ्यं लोकधाम स्वयम्भुवः॥ ३९॥ त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम्। चाक्षुषं वै द्वितीयं मे जन्म चासीत् पुरातनम्॥ ४०॥ तत्प्रसादात्तु मे जन्म तृतीयं वाचिकं महत्। त्वत्तः श्रवणजञ्चापि चतुर्थं जन्म मे विभो॥ ४१॥ नासत्यञ्चापि मे जन्म त्वत्तः परममुच्यते। अण्डजञ्चापि मे जन्म त्वत्तः षष्ठं विनिर्म्मितम्॥ ४२॥ इदञ्च सप्तमं जन्म पद्मजन्मेति वै प्रभो। सर्गे सर्गे ह्यहं पुत्त्रस्तव त्रिगुणवर्ज्जितः॥ ४३॥ प्रथमः पुण्डरीकाक्ष प्रधानगुणकल्पितः। त्वमीश्वरस्वभावश्च कर्म्मबन्धः स्वयम्भुवः॥ ४४॥ त्वया विनिर्म्मितोऽहम्वै वेदचक्षुर्वयोऽतिगः। ते मे वेदा हृताश्चक्षुरन्धो जातोऽस्मि जागृहि। ददस्व चक्षुंषि मम प्रियोऽहं ते प्रियोऽसि मे॥ ४५॥ एवं स्तुतः स भगवान् पुरुषः सर्व्वतोमुखः। जहौ निद्रामथ तदा वेदकार्य्यार्थमुद्यतः। ऐश्वर्य्येण प्रयोगेण द्वितीयान्तनुमास्थितः॥ ४६॥ सुनासिकेन कायेन भूत्वा चन्द्रप्रभस्तदा। कृत्वा हयशिरः शुभ्रं वेदानामालयः प्रभुः॥ ४७॥ तस्य मूर्द्धा समभवद्द्यौः सनक्षत्रतारका। केशाश्चास्याभवन्दीर्घा रवेरंशुसमप्रभाः॥ ४८॥ कर्णावाकाशपाताले ललाटं भूतधारिणी। गङ्गा सरस्वती श्रोण्यौ भ्रुवावास्तां महोदधी॥ ४९॥ चक्षुषी सोमसूर्य्यौ ते नासा सन्ध्या पुनः स्मृता। ओंकारस्त्वथ संस्कारो विद्युज्जिह्वा च निर्म्मिता॥ ५०॥ दन्ताश्च पितरो राजन् सोमपा इति विश्रुताः। गोलोको ब्रह्मलोकश्च ओष्ठावास्तां महात्मनः। ग्रीवा चास्याभवद्राजन् कालरात्रिर्गुणोत्तरा॥ ५१॥ एतद्धयशिरः

कृत्वा नानामूर्त्तिभिरावृतम् । अन्तर्द्दधौ स विश्वेश्वो विवेश च
रसां प्रभुः ॥ ५२ ॥ रसां पुनः प्रविष्टश्च योगं परममास्थितः ।
शैक्ष्यं स्वरं समास्थाय उद्गीथं प्रासृजत् स्वरम् ॥ ५३ ॥ सस्वरः
सानुनादी च सर्व्वगः स्निग्ध एव च । वभूवान्तर्म्महीभूतः सर्व्वभूत-
गुणो हितः ॥ ५४ ॥ ततस्तावसुरौ कृत्वा वेदान् समयवन्धनान् ।
रसातले विनिक्षिप्य यतः शब्दस्ततो द्रुतौ ॥ ५५ ॥ एतस्मिन्नन्तरे
राजन् देवो हयशिरोधरः । जग्राह वेदानखिलान् रसातल-
गतो हरिः ॥ ५६ ॥ प्रादाच्च ब्रह्मणे भूयस्ततः स्वां प्रकृतिं गतः
॥ ५७ ॥ स्थापयित्वा हयशिर उदक्पूर्व्वे महोदधौ । वेदाना-
मालयश्चापि वभूवाश्वशिरास्ततः ॥ ५८ ॥ अथ किञ्चिदपश्यन्तौ
दानवौ मधुकैटभौ । पुनराजग्मतुस्तत्र वेगितौ पश्यताञ्च तौ ।
यत्र वेदा विनिक्षिप्तास्तत् स्थानं शून्यमेव च ॥ ५९ ॥ तत उत्तम-
मास्थाय वेगं वलवताम्बरौ । पुनरुत्तस्थतुः शीघ्रं रसानामालया-
त्तदा ॥ ६० ॥ ददृशाते च पुरुषं तमेवादिकरं प्रभुम् । श्वेतं
चन्द्रविशुद्धाभमनिरुद्धतनौ स्थितम् ॥ ६१ ॥ भूयोऽप्यमितविक्रान्तं
निद्रायोगमुपागतम् । आत्मप्रमाणरचिते अपामुपरि कल्पिते ॥ ६२ ॥
शयने नागभोगाढ्ये ज्वालामालासमावृते । निष्कल्मषेण सत्त्वेन
सम्पन्नं रुचिरप्रभम् ॥ ६३ ॥ तं दृष्ट्वा दानवेन्द्रौ तौ महाहासम-
मुञ्चताम् । ऊचतुश्च समाविष्टौ रजसा तमसा च तौ ॥ ६४ ॥ अयं
स पुरुषः श्वेतः शेते निद्रामुपागतः । अनेन नूनं वेदानां कृतमा-
हरणं रसात् ॥ ६५ ॥ कस्यैष को नु खल्वेष किञ्च स्वपिति भोग-
वान् । इत्युच्चारितवाक्यौ तौ वोधयामासतुर्हरिम् ॥ ६६ ॥ युद्धा-
र्थिनौ हि विज्ञाय विबुद्धः पुरुषोत्तमः । निरीक्ष्य चासुरेन्द्रौ तौ
ततो युद्धे मनो दधे ॥ ६७ ॥ अथ युद्धं समभवत्तयोर्नारायणस्य
वै । रजस्तमोविष्टतनू तावुभौ मधुकैटभौ । ब्रह्मणोऽपचितिं कुर्व्वन्
जघान मधुसूदनः ॥ ६८ ॥ ततस्तयोर्वधेनाशु वेदापहरणेन च ।

शोकापनयनञ्चक्रे ब्रह्मणः पुरुषोत्तमः॥ ६९ ॥ ततः परिवृतो ब्रह्मा हरिणा वेदसत्कृतः। निर्म्ममे स तदालोकान् कृत्स्नान् स्थावरजङ्गमान्॥ ७०॥ दत्त्वा पितामहायाग्र्यां मतिं लोकविसर्गिकीम्। तत्रैवान्तर्दधे देवो यत एवागतो हरिः॥ ७१॥ तौ दानवौ हरिर्हत्वा कृत्वा हयशिरस्तनुम्। पुनः प्रवृत्तिधर्म्मार्थं तामेव विदधे तनुम्॥ ७२॥ एवमेव महाभागो बभूवाश्वशिरा हरिः। पौराणमेतत् प्रख्यातं रूपं वरदमैश्वरम्॥ ७३॥ यो ह्येतद्ब्राह्मणो नित्यं शृणुयाद्धारयीत वा। न तस्याध्ययनं नाशमुपगच्छेत् कदाचन॥ ७४॥ आराध्य तपसोग्रेण देवं हयशिरोधरम्। पञ्चालेन क्रमः प्राप्तो देवेन पथि देशिते॥ ७५॥ एतद्धयशिरो राजन्नाख्यानन्तव कीर्त्तितम्। पुराणं वेदसमितं यन्मां त्वं परिपृच्छसि॥ ७६॥ यां यामिच्छेत्तनुं देवः कर्त्तुं कार्य्यविधौ क्वचित्। तां तां कुर्य्याद्धि कुर्व्वाणः स्वयमात्मानमात्मना॥ ७७॥ एष वेदनिधिः श्रीमानेष वै तपसो निधिः। एष योगश्च साङ्ख्यञ्च ब्रह्मचाग्र्यं हरिर्विभुः॥ ७८ ॥ नारायणपरं सत्यमृतं नारायणात्मकम्। नारायणपरो धर्म्मः पुनरावृत्तिदुर्लभः॥ ८०॥ प्रवृत्तिलक्षणश्चैव धर्म्मो नारायणात्मकः। नारायणात्मको गन्धो भूमौ श्रेष्ठतमःस्मृतः॥ ८१॥ अपाञ्चापि गुणा राजन्रसा नारायणात्मकाः। ज्योतिषाञ्च परं रूपं स्मृतं नारायणात्मकम्॥ ८२॥ नारायणात्मकश्चापि स्पर्शो वायुगुणःस्मृतः। नारायणात्मकश्चैव शब्द आकाशसम्भवः॥ ८३॥ मनश्चापि ततो भूतमव्यक्तगुणलक्षणम्। नारायणपरः कालो ज्योतिषामयनञ्च यत्॥ ८४॥ नारायणपरा कीर्त्तिः श्रीश्च लक्ष्मीश्च देवताः। नारायण परं साङ्ख्यं योगो नारायणात्मकः॥ ८५॥ कारणं पुरुषोह्येषां प्रधानञ्चापि कारणम्॥ ८६॥ अधिष्टानं तथा कर्त्ता कारणञ्च पृथग्विधम्। विविधा च तथा चेष्टा दैवञ्चैवात्र पञ्चमम्॥ ८७॥ पञ्चकारण-

सङ्ख्यातो निष्ठा सर्व्वत्र वै हरिः। तत्त्वं जिज्ञासमानानां हेतुभिः सर्व्वतोमुखैः ॥ ८८ ॥ तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः। ब्रह्मादीनां सलोकानामृषीणाञ्च महात्मनाम् ॥ ८९ ॥ साङ्ख्यानां योगिनाञ्चापि यतीनामात्मवेदिनाम्। मनीषितं विजानाति केशवो न तु तस्य ते ॥ ९० ॥ ये केचित् सर्व्वलोकेषु दैवं पित्र्यञ्च कुर्व्वते। दानानि च प्रयच्छन्ति तप्यन्ते च तपो महत् ॥ ९१ ॥ सर्व्वेषामाश्रयो विष्णुरैश्वरं विधिमास्थितः। सर्व्वभूतकृतावासो वासुदेवेति चोच्यते ॥ ९२ ॥ अयं हि नित्यः परमो महर्षिर्महाविभूतिर्गुणवर्ज्जिताख्यः। गुणैश्च संयोगमुपैति शीघ्रं कालो यथार्त्तावृतुसंप्रयुक्तः ॥ ९३ ॥ नैवास्य विन्दन्ति गतिं महात्मनो न चागतिं कश्चिदिहानुपश्यति। ज्ञानात्मकाः सन्ति हि ये महर्षयः पश्यन्ति नित्यं पुरुषं गुणाधिकम् ॥ ९४ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये सप्तचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४७ ॥

---

जनमेजय उवाच। अहो ह्येकान्तिनः सर्व्वान् प्रीणाति भगवान् हरिः। विधिप्रयुक्तां पूजाञ्च गृह्णाति भगवान् स्वयम् ॥ १ ॥ ये तु दग्धेन्धना लोके पुण्यपापविवर्ज्जिताः। तेषां त्वयाभिनिर्द्दिष्टा पारम्पर्य्यागता गतिः ॥ २ ॥ चतुर्थ्याञ्चैव ते गत्यां गच्छन्ति पुरुषोत्तमम्। एकान्तिनस्तु पुरुषा गच्छन्ति परमं पदम् ॥ ३ ॥ नूनमेकान्तधर्म्मोऽयं श्रेष्ठो नारायणप्रियः। अगत्वा गतयस्तिस्रो नियच्छन्त्यव्ययं हरिम् ॥ ४ ॥ सहोपनिषदान् वेदान् ये विप्राः सम्यगास्थिताः। पठन्ति विधिमास्थाय ये चापि यतिधर्म्मिणः ॥ ५ ॥ तेभ्यो विशिष्टं जानामि गतिमेकान्तिनां नृणाम्। केनैष धर्म्मः कथितो देवेन ऋषिणापि वा ॥ ६ ॥ एकान्तिनाञ्च का चर्य्या

कदा चोत्पादिता विभो। एतन्मे संशयं छिन्धि परं कौतूहलं हि मे॥ ७॥

वैशम्पायन उवाच। समुपोढ़ेष्वनीकेषु कुरुपाण्डवयोर्मृधे। अर्ज्जुने विमनस्के च गीता भगवता स्वयम्॥ ८॥ अगतिश्च गतिश्चैव पूर्वन्ते कथिता मया। गहनो ह्येष धर्म्मो वै दुर्विज्ञेयोऽकृतात्मभिः॥ ९॥ सम्मितः सामवेदेन पुरैवादियुगे कृतः। धार्य्यते स्वयमीशेन राजन्नारायणेन च॥ १०॥ एतदर्थं महाराज पृष्टः पार्थेन नारदः। ऋषिमध्ये महाभागः शृण्वतोः कृष्णभीष्मयोः॥११॥ गुरुणा च ममाप्येष कथितो नृपसत्तम। यथा तत् कथितं तत्र नारदेन तथा शृणु॥ १२॥ यदासीन्मानसं जन्म नारायणमुखोद्गतम्। ब्रह्मणः पृथिवीपाल तदा नारायणः स्वयम्॥ १३॥ तेन धर्म्मेण कृतवान् दैवं पित्र्यञ्च भारत। फेनपा ऋषयश्चैव तं धर्मं प्रतिपेदिरे॥ १४॥ वैखानसाः फेनपेभ्यो धर्ममेतं प्रपेदिरे। वैखानसेभ्यः सोमस्तु ततः सोऽन्तर्द्दधे पुनः॥ १५॥ यदासीच्चाचुषं जन्म द्वितीयं ब्रह्मणो नृप। तदा पितामहेनैव सोमाद्धर्म्मः परिश्रुतः॥ १६॥ नारायणात्मको राजन् रुद्राय प्रददौ च तम्। ततो योग स्थितो रुद्रः पुरा कृतयुगे नृप॥ १७॥ वालिखिल्यानृषीन् सर्व्वान् धर्म्ममेतदपादयत्। अन्तर्द्दधे ततो भूयस्तस्य देवस्य मायया॥ १८॥ तृतीयं ब्रह्मणो जन्म यदासीद्वाचिकं महत्। अत्रैष धर्म्मः सम्भूतः स्वयं नारायणान्नृप॥ १९॥ सुपर्णो नाम तमृषिः प्राप्तवान् पुरुषोत्तमात्। तपसा वै सुतप्तेन दमेन नियमेन च॥ २०॥ त्रिः परिक्रान्तवानेतत् सुपर्णो धर्म्ममुत्तमम्। यस्मात्तस्माद्व्रतं ह्येतत् त्रिसौपर्णमिहोच्यते॥ २१॥ ऋग्वेदपाठपठितं व्रतमेतद्धि दुश्चरम्। सुपर्णाच्चाप्यधिगतो धर्म्म एष सनातनः॥ २२॥ वायुना द्विपदां श्रेष्ठ कथितो जगदायुषा। वायोः सकाशात् प्राप्तश्च ऋषिभिर्विघसाशिभिः॥ २३॥ ततो महोदधि-

श्चैव प्राप्तवान् धर्म्ममुत्तमम् । अन्तर्दधे ततो भूयो नारायणसमा-
हितः ॥ २४ ॥ यदा भूयः श्रवणजा सृष्टिरासीन्महात्मनः । ब्रह्मणः
पुरुषव्याघ्र तत्र कीर्त्तयतः शृणु ॥ २५ ॥ जगत्स्रष्टुमना देवो हरि-
र्नारायणः स्वयम् । चिन्तयामास पुरुषं जगत् सर्गकरं प्रभुम्
॥ २६ ॥ अथ चिन्तयतस्तस्य कर्णाभ्यां पुरुषः स्मृतः । प्रजासर्ग-
करो ब्रह्मा तमुवाच जगत्पतिः ॥ २७ ॥ सृज प्रजाः पुत्र सर्वा
मुखतः पादतस्तथा । श्रेयस्तव विधास्यामि बलं तेजश्च सुव्रत
॥ २८ ॥ धर्म्मञ्च मत्तो गृह्णीष्व सात्त्वतं नाम नामतः । तेन सृष्टं
कृतयुगं स्थापयस्व यथाविधि ॥ २९ ॥ ततो ब्रह्मा नमश्चक्रे देवाय
हरिमेधसे । धर्मञ्चाग्र्यं स जग्राह सरहस्यं ससंग्रहम् ॥ ३० ॥
आरण्यकेन सहितं नारायणमुखोद्भवम् । उपदिश्य ततो धर्मं
ब्रह्मणेऽमिततेजसे ॥ ३१ ॥ त्वं कर्त्ता युगधर्म्माणां निराशीःकर्म-
संज्ञितम् । जगाम तमसः पारं यत्राव्यक्तं व्यवस्थितम् ॥ ३२ ॥
ततोऽथ वरदो देवो ब्रह्मा लोकपितामहः । असृजत् स ततो
लोकान् कृत्स्नान् स्थावरजङ्गमान् ॥ ३३ ॥ ततः प्रावर्त्तत तदा
आदौ कृतयुगं शुभम् । ततो हि सात्त्वतो धर्म्मो व्याप्य लोकानव-
स्थितः ॥ ३४ ॥ तेनैवाद्येन धर्मेण ब्रह्मा लोकविसर्गकृत् । पूजया-
मास देवेशं हरिं नारायणं प्रभुम् ॥ ३५ ॥ धर्मप्रतिष्ठाहेतोश्च
मनुं स्वारोचिषन्ततः । अध्यापयामास तदा लोकानां हितकाम्यया
॥ ३६ ॥ ततः स्वारोचिषः पुत्रं स्वयं शङ्खपदं नृप । अध्यापयत्
पुराव्यग्रः सर्वलोकपतिर्विभुः ॥ ३७ ॥ ततः शङ्खपदश्चापि पुत्र-
मात्मजमौरसम् । दिशां पालं सुवर्णाभमध्यापयत भारत । सोऽ-
न्तर्दधे ततो भूयः प्राप्ते त्रेतायुगे पुनः ॥ ३८ ॥ नासत्ये जन्मनि पुरा
ब्रह्मणः पार्थिवोत्तम । धर्ममेतं स्वयं देवो हरिर्नारायणः प्रभुः
॥ ३९ ॥ तज्जगादारविन्दाक्षो ब्रह्मणः पश्यतस्तदा । सनत्कुमारो
भगवांस्ततः प्राधीतवान्नृप ॥ ४० ॥ सनत्कुमारादपि च वीरणो

वै प्रजापतिः। कृतादौ कुरुशार्दूल धर्ममेतदधीतवान् ॥ ४१ ॥
वीरणश्चाप्यधीत्यैनं रैभ्याय मुनये ददौ। रैभ्यः पुत्राय शुद्धाय
सुव्रताय सुमेधसे ॥ ४२ ॥ कुक्षिनाम्ने स प्रददौ दिशां पालाय
धर्मिणे। ततोऽप्यन्तर्दधे भूयो नारायणमुखोद्भवः ॥ ४३ ॥ अण्डजे
जन्मनि पुनर्ब्रह्मणे हरियोनये। एष धर्मः समुद्भूतो नारायण-
मुखात् पुनः ॥ ४४ ॥ गृहीतो ब्रह्मणा राजन् प्रयुक्तश्च यथा विधि।
अध्यापिताश्च मुनयो नाम्ना बर्हिषदो नृप ॥ ४५ ॥ बर्हिषद्भ्यश्च
सम्प्राप्तः सामवेदान्तगं द्विजम्। ज्येष्ठं नाम्नाभिविख्यातं ज्येष्ठसाम-
व्रतो हरिः ॥ ४६ ॥ ज्येष्ठाच्चाप्यनुसंक्रान्तो राजानमविकम्पनम्।
अन्तर्दधे ततो राजन्नेष धर्मः प्रभोर्हरेः ॥ ४७ ॥ यदिदं सप्तमं
जन्म पद्मजं ब्रह्मणो नृप। तत्रैष धर्मः कथितः स्वयं नारायणेन
ह ॥ ४८ ॥ पितामहाय शुद्धाय युगादौ लोककारिणे। पिता-
महश्च दक्षाय धर्ममेतं पुरा ददौ ॥ ४९ ॥ ततो ज्येष्ठे तु दौहित्रे
प्रादाद्दक्षो नृपोत्तम। आदित्ये सवितुर्ज्येष्ठे विवस्वान् जगृहे ततः
॥ ५० ॥ त्रेतायुगादौ च ततो विवस्वान् मनवे ददौ। मनुश्च
लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ ॥ ५१ ॥ इक्ष्वाकुणा च कथितो
व्याप्य लोकानवस्थितः। गमिष्यन्ति क्षयान्ते च पुनर्नारायणं नृप
॥ ५२ ॥ यतीनाञ्चापि यो धर्मः स ते पूर्वं नृपोत्तम। कथितो
हरिगीतासु समासविधिकल्पितः ॥ ५३ ॥ नारदेन सुसम्प्राप्तः
सरहस्यः ससंग्रहः। एष धर्मो जगन्नाथात् साक्षान्नारायणान्नृप
॥ ५४ ॥ एवमेष महान् धर्म आद्यो राजन् सनातनः। दुर्विज्ञेयो
दुष्करश्च सात्त्वतैर्धार्य्यते सदा ॥ ५५ ॥ धर्मज्ञानेन चैतेन सुप्रयुक्तेन
कर्मणा। अहिंसाधर्मयुक्तेन प्रीयते हरिरीश्वरः ॥ ५६ ॥ एक-
व्यूहविभागो वा क्वचिद्द्विव्यूहसंज्ञितः। त्रिव्यूहश्चापि संख्यातश्चतु-
र्व्यूहश्च दृश्यते ॥५७॥ हरिरेव हि क्षेत्रज्ञो निर्ममो निष्कलस्तथा।
जीवश्च सर्वभूतेषु पञ्चभूतगुणातिगः ॥ ५८ ॥ मनश्च प्रथितं राजन्

पञ्चेन्द्रियसमीरणम्। एष लोकविधिर्धीमानेष लोकविसर्गकृत् ॥ ५९ ॥ अकर्त्ता चैव कर्त्ता च कार्य्यं कारणमेव च। यथेच्छति तथा राजन् क्रीड़ते पुरुषोऽव्ययः ॥ ६० ॥ एष एकान्तधर्मस्ते कीर्त्तितो नृपसत्तम। मया गुरुप्रसादेन दुर्विज्ञेयोऽकृतात्मभिः ॥ ६१ ॥ एकान्तिनो हि पुरुषा दुर्लभा बहवो नृप। यद्येकान्तिभिराकीर्णं जगत् स्यात् कुरुनन्दन ॥ ६२ ॥ अहिंसकैरात्मविद्भिः सर्वभूतहिते-रतैः। भवेत् कृतयुगप्राप्तिराशीः कर्मविवर्जिताः ॥ ६३ ॥ एवं स भगवान् व्यासो गुरुर्मम विशाम्पते। कथयामास धर्मज्ञो धर्मराज्ञे द्विजोत्तमः ॥ ६४ ॥ ऋषीणां सन्निधौ राजन् शृण्वतोः कृष्ण-भीष्मयोः। तस्याप्यकथयत् पूर्वं नारदः सुमहातपाः ॥ ६५ ॥ देवं परमकं ब्रह्म श्वेतं चन्द्राभमच्युतम्। यत्र चैकान्तिनो यान्ति नारायणपरायणाः ॥ ६६ ॥

जनमेजय उवाच। एवं बहुविधं धर्मं प्रतिबुद्धैर्निषेवितम्। न कुर्वन्ति कथं विप्रा अन्ये नानाव्रते स्थिताः ॥ ६७ ॥

वैशम्पायन उवाच। तिस्रः प्रकृतयो राजन् देहबन्धेषु निर्मिताः। सात्त्विकी राजसी चैव तामसी चैव भारत ॥ ६८ ॥ देहबन्धेषु पुरुषः श्रेष्ठः कुरुकुलोद्वह। सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षाय निश्चितः ॥ ६९ ॥ अत्रापि स विजानाति पुरुषं ब्रह्मवित्तमम्। नारायणपरो मोक्षस्ततो वै सात्त्विकः स्मृतः ॥ ७० ॥ मनीषितञ्च प्राप्नोति चिन्तयन् पुरुषोत्तमम्। एकान्तभक्तिः सततं नारायण-परायणः ॥ ७१ ॥ मनीषिणो हि ये केचिद्यतयो मोक्षधर्मिणः। तेषां विच्छिन्नतृष्णानां योगक्षेमवहो हरिः ॥ ७२ ॥ जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्त्विकस्तु स विज्ञेयो भवेन्मोक्षेषु निश्चितः ॥ ७३ ॥ सांख्ययोगेन तुल्यो हि धर्म एकान्तसेवितः ॥ ७४ ॥ नारायणात्मके मोक्षे ततो याति परां गतिम्। नारायणेन दृष्टश्च प्रतिबुद्धो भवेत् पुमान् ॥ ७५ ॥ एवमात्मेच्छया राजन् प्रतिबुद्धो

न जायते। राजसी तामसी चैव व्यामिश्रे प्रकृती स्मृते॥ ७६॥ तदात्मकं हि पुरुषं जायमानं विशाम्पते। प्रवृत्तिलक्षणैर्युक्तं नावेक्षति हरिः स्वयम्॥ ७७॥ पश्यत्येनं जायमानं ब्रह्मा लोकपितामहः। रजसा तमसा चैव मानसं समभिप्लुतम्॥ ७८॥ कामं देवाश्च ऋषयः सत्त्वस्था नृपसत्तम। हीनाः सत्त्वेन सूक्ष्मेण ततो वैकारिकाः स्मृताः॥ ७९॥

जनमेजय उवाच। कथं वैकारिको गच्छेत् पुरुषः पुरुषोत्तमम्। वद सर्वं यथा दृष्टं प्रवृत्तिञ्च यथाक्रमम्॥ ८०॥

वैशम्पायन उवाच। सुसूक्ष्मं सत्त्वसंयुक्तं संयुक्तं त्रिभिरक्षरैः। पुरुषः पुरुषं गच्छेन्निष्क्रियः पञ्चविंशकः॥ ८१॥ एवमेकं सांख्ययोगं वेदारण्यकमेव च। परस्पराङ्गान्येतानि पञ्चरात्रञ्च कथ्यते। एष एकान्तिनां धर्मो नारायणपरात्मकः॥ ८२॥ यथा समुद्रात् प्रसृता जलौघास्तमेव राजन् पुनराविशन्ति। इमे तथा ज्ञानमहाजलौघा नारायणं वै पुनराविशन्ति॥ ८३॥ एष ते कथितो धर्मः सात्त्वतः कुरुनन्दन। कुरुष्वैनं यथान्यायं यदि शक्तोऽसि भारत॥ ८४॥ एवं हि स महाभागो नारदो गुरवे मम। श्वेतानां यतिनाञ्चाह एकान्तगतिमव्ययाम्॥ ८५॥ व्यासश्चाकथयत् प्रीत्या धर्मपुत्राय धीमते। स एवायं मया तुभ्यमाख्यातः प्रसृतो गुरोः॥ ८६॥ इत्थं हि दुश्चरो धर्म एष पार्थिवसत्तम। यथैव त्वं तथैवान्ये भवन्तीह विमोहिताः॥ ८७॥ कृष्ण एव हि लोकानां भावनो मोहनस्तथा। संहारकारकश्चैव कारणञ्च विशाम्पते॥८८॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि एकान्तिभावे अष्टचत्वारिंशदधिकत्रिशततोऽध्यायः॥ ३४८॥

---

जनमेजय उवाच। साङ्ख्ययोगं पञ्चरात्रं वेदारन्यकमेव च। ज्ञानान्येतानि ब्रह्मर्षे लोकेषु प्रचरन्ति ह ॥ १ ॥ किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने। प्रब्रूहि वै मया पृष्टः प्रवृत्तिञ्च यथाक्रमम् ॥ २ ॥

वैशम्पायन उवाच। जज्ञे बहुज्ञं परमत्युदारं यं द्वीपमध्ये सुतमात्मयोगात्। पराशरात् सत्यवती महर्षिं तस्मै नमोऽज्ञानतमोनुदाय ॥ ३ ॥ पितामहाद्यं प्रवदन्ति षष्ठं महर्षिमार्षेयविभूतियुक्तम्। नारायणस्यांशजमेकपुत्रं द्वैपायनं वेदमहानिधानम् ॥ ४ ॥ तमादिकालेषु महाविभूतिर्नारायणो ब्रह्ममहानिधानम्। ससर्ज्ज पुत्रार्थमुदारतेजा व्यासं महात्मानमजं पुराणम् ॥ ५ ॥

जनमेजय उवाच। त्वयैव कथितः पूर्वं सम्भवो द्विजसत्तम। वशिष्ठस्य सुतः शक्तिः शक्तेः पुत्त्रः पराशरः। पराशरस्य दायादः कृष्णद्वैपायनो मुनिः ॥ ६ ॥ भूयो नारायणसुतं त्वमेवैनं प्रभाषसे। किमतः पूर्व्वजं जन्म व्यासस्यामिततेजसः। कथयस्वोत्तममते जन्म नारायणोद्भवम् ॥ ७ ॥

वैशम्पायन उवाच। वेदार्थान् वेत्तुकामस्य धर्म्मिष्ठस्य तपोनिधेः। गुरोर्म्मे ज्ञाननिष्ठस्य हिमवत्पाद आसतः ॥ ८ ॥ कृत्वा भारतमाख्यानं तपःश्रान्तस्य धीमतः। शुश्रूषान्तत्परा राजन् कृतवन्तो वयं तदा ॥ ९ ॥ सुमन्तुर्जैमिनिश्चैव पैलश्च सुदृढ़व्रतः। अहं चतुर्थः शिष्यो वै शुको व्यासात्मजस्तथा ॥ १० ॥ एभिः परिवृतो व्यासः शिष्यैः पञ्चभिरुत्तमैः। शुशुभे हिमवत्पादे भूतैर्भूतपतिर्यथा ॥ ११ ॥ वेदानावर्त्तयन् साङ्गान् भारतार्थांश्च सर्व्वशः। तमेकमनसं दान्तं युक्ता वयमुपास्महे ॥ १२ ॥ कथान्तरेऽथ कस्मिंश्चित् पृष्टोऽस्माभिर्द्विजोत्तमः। वेदार्थान् भारतार्थांश्च जन्म नारायणात्तथा ॥ १३ ॥ स पूर्व्वमुक्त्वा वेदार्थान् भारतार्थांश्च तत्त्ववित्। नारायणादिदं जन्म व्याहर्त्तुमुपचक्रमे ॥ १४ ॥

व्यास उवाच। शृणुध्वमाख्यानवरमिदमार्षेयमुत्तमम्। आदि-
कालोद्भवं विप्रास्तपसाधिगतं मया ॥ १५ ॥ प्राप्ते प्रजाविसर्गे वै
सप्तमे पद्मसम्भवे। नारायणो महायोगी शुभाशुभविवर्ज्जितः
॥ १६ ॥ ससृजे नाभितः पूर्वं ब्रह्माणममितप्रभः। ततः स प्रादुर-
भवदथैनं वाक्यमब्रवीत् ॥ १७ ॥ मम त्वं नाभितो जातः प्रजासर्ग-
करः प्रभुः। सृज प्रजास्त्वं विविधा ब्रह्मन् सजड़पण्डिताः ॥१८॥
स एवमुक्तो विमुखश्चिन्ताव्याकुलमानसः। प्रणम्य वरदं देवमुवाच
हरिमीश्वरम् ॥ १९ ॥ का शक्तिर्म्मम देवेश प्रजाः स्रष्टुं नमोऽस्तु
ते। अप्रज्ञावानहं देव विधत्स्व यदनन्तरम् ॥ २० ॥ स एव-
मुक्तो भगवान् भूत्वाथान्तर्हितस्ततः। चिन्तयामास देवेशो बुद्धिं
बुद्धिमताम्वरः ॥ २१ ॥ स्वरूपिणी ततोबुद्धिरुपतस्थे हरिं प्रभुम्।
योगेन चैनां निर्योगः स्वयं नियुयुजे तदा ॥ २२ ॥ स तामैश्वर्य्य-
योगस्थां तदा गतिमतीं सतीं। उवाच वचनं देवो बुद्धिं वै प्रभु-
रव्ययः ॥ २३ ॥ ब्रह्माणं प्रविशस्वेति लोकसृष्टार्थसिद्धये। तत-
स्तमीश्वरादिष्टा बुद्धिः क्षिप्रं विवेश सा ॥ २४ ॥ यथैनं बुद्धिसंयुक्तं
पुनः स ददृशे हरिः। भूयश्चैव वचः प्राह सृजेमा विविधाः प्रजाः
॥ २५ ॥ वाढ़मित्येव कृत्वासौ यथाज्ञां शिरसा दधे। एवमुक्त्वा
स भगवान् तत्रैवान्तरधीयत ॥ २६ ॥ प्रापचैनं मुहूर्त्तेन स्वस्थानं
देवसंज्ञितम्। ताञ्चैव प्रकृतिं प्राप्य एकीभावगतोऽभवत् ॥ २७ ॥
अथास्य बुद्धिरभवत् पुनरन्या तदा किल। सृष्टाः प्रजा इमाः
सर्व्वा ब्रह्मणा परमेष्ठिना ॥ २८ ॥ दैत्यदानवगन्धर्व्वरक्षोगणसमा-
कुला। जाता हीयं वसुमती भाराक्रान्ता तपस्विनी ॥ २९ ॥
बहवो बलिनः पृथ्व्यां दैत्यदानवराक्षसाः। भविष्यन्ति तपोयुक्ता
वरान् प्राप्स्यन्ति चोत्तमान् ॥ ३० ॥ अवश्यमेव तैः सर्व्वैर्वरदानेन
दर्पितैः। व्याधितव्याः सुरगणाः ऋषयश्च तपोधना ॥ ३१ ॥ तत्र
न्याय्यमिदं कर्त्तुं भारावतरणं मया। अथ नानासमुद्भूतैर्वसुधायां

यथाक्रमम् ॥ ३२ ॥ निग्रहेण च पापानां साधूनां प्रग्रहेण च। इयं तपस्विनी सत्या धारयिष्यति मेदिनी ॥ ३३ ॥ मया ह्येषा हि ध्रियते पातालस्थेन भोगिना। मया धृता धारयति जगद्विश्वं चराचरम्। तस्मात् पृथ्व्याः परित्राणं करिष्ये सम्भवङ्गतः ॥ ३४ ॥ एवं सञ्चिन्तयित्वा तु भगवान्मधुसूदनः। रूपाण्यनेकान्यसृजत् प्रादुर्भावे भवाय सः ॥ ३५ ॥ वाराहं नारसिंहञ्च वामनं मानुषन्तथा। एभिर्म्मया निहन्तव्या दुर्विनीताः सुरारयः ॥ ३६ ॥ अथ भूयो जगत्स्रष्टा भोः शब्देनानुनादयन्। सरस्वतीमुच्चचार तत्र सारस्वतोऽभवत् ॥ ३७ ॥ अपान्तरतमा नाम सुतो वाक्सम्भवः प्रभुः। भूतभव्यभविष्यज्ञ सत्यवादी दृढ़ब्रतः ॥ ३८ ॥ तमुवाच नतं मूर्द्ध्ना देवानामादिरव्ययः। वेदाख्याने श्रुतिः कार्य्या त्वया मतिमताम्वर ॥ ३९ ॥ तस्मात् कुरु यथाज्ञप्तं ममैतद्वचनं मुने। तेन भिन्नास्तदा वेदा मनोः स्वायम्भुवेऽन्तरे ॥ ४० ॥ ततस्तुतोष भगवान् हरिस्तेनास्य कर्म्मणा। तपसा च सुतप्तेन यमेन नियमेन च ॥ ४१ ॥ मन्वन्तरेषु पुत्र त्वमेवमेवं प्रवर्त्तकः। भविष्यस्यचलो ब्रह्मन्नप्रधृष्यश्च नित्यशः ॥ ४२ ॥ पुनस्तिष्ये च सम्प्राप्ते कुरवो नाम भारताः। भविष्यन्ति महात्मानो राजानः प्रथिता भुवि ॥ ४३ ॥ तेषां त्वत्तः प्रसूतानां कुलभेदो भविष्यति। परस्परविनाशार्थं त्वामृते द्विजसत्तम ॥ ४४ ॥ तत्राप्यनेकधा वेदान् भेत्स्यसे तपसान्वितः। कृष्णे युगे च सम्प्राप्ते कृष्णवर्णो भविष्यसि ॥ ४५ ॥ धर्म्माणां विविधानाञ्च कर्त्ता ज्ञानकरस्तथा। भविष्यसि तपोयुक्तो न च रागाद्विमोक्ष्यसे ॥ ४६ ॥ वीतरागश्च पुत्रस्ते परमात्मा भविष्यति। महेश्वरप्रसादेन नैतद्वचनमन्यथा ॥ ४७ ॥ यं मानसं वै प्रवदन्ति विप्राः पितामहस्योत्तमबुद्धियुक्तम्। वशिष्ठमग्र्यञ्च तपोनिधानं यस्यातिसूर्य्यं व्यतिरिच्यते भाः ॥ ४८ ॥ तस्यान्वये चापि ततो महर्षिः पराशरो नाम महाप्रभावः। पिता स ते वेदनिधिर्वरिष्ठो

महातपा वै तपसो निवासः ॥ ४९ ॥ कानीनगर्भः पितृकन्यकायां तस्मादृषिस्त्वं भविता च पुत्रः ॥ ५० ॥ भूतभव्यभविष्याणां छिन्नसर्व्वार्थसंशयः। ये ह्यतिक्रान्तकाः पूर्वं सहस्रयुगपर्य्ययाः ॥ ५१ ॥ तांश्च सर्वान् मयोद्दिष्टान् द्रक्ष्यसे तपसान्वितः। पुनर्द्रक्ष्यसि चानेकसहस्रयुगपर्य्ययान् ॥ ५२ ॥ अनादिनिधनं लोके चक्रहस्तञ्च मां मुने। अनुध्यानान्मम मुने नैतद्वचनमन्यथा ॥ ५३ ॥ भविष्यति महासत्त्वः ख्यातिश्चाप्यतुला तव। शनैश्चरः सूर्य्यपुत्रो भविष्यति मनुर्महान् ॥ ५४ ॥ तस्मिन्मन्वन्तरे चैव मन्वादिगणपूर्वकः। त्वमेव भविता वत्स मत्प्रसादान्न संशयः ॥ ५५ ॥ यत्किञ्चिद्विद्यते लोके सर्वन्तन्मद्विचेष्टितम्। अन्यो ह्यन्यं चिन्तयति स्वच्छन्दं विदधाम्यहम् ॥ ५६ ॥ एवं सारस्वतमृषिमपान्तरतमन्तथा। उक्त्वा वचनमीशानः साधयस्वेत्यथाब्रवीत्। सोऽहं तस्यप्रसादेन देवस्य हरिमेधसः ॥ ५७ ॥ अपान्तरतमा नाम ततो जातोऽज्ञया हरेः। पुनश्च जातो विख्यातो वशिष्ठकुलनन्दनः ॥ ५८ ॥ तदेतत् कथितं जन्म मया पूर्वकमात्मनः। नारायणप्रसादेन तथा नारायणांशजम् ॥ ५९ ॥ मया हि सुमहत्तप्तं तपः परमदारुणम्। पुरा मतिमतां श्रेष्ठाः परमेण समाधिना ॥६०॥ एतद्वः कथितं सर्वं यन्मां पृच्छत पुत्रकाः। पूर्वजन्म भविष्यञ्च भक्तानां स्नेहतो मया ॥ ६१ ॥

वैशम्पायन उवाच। एष ते कथितः पूर्वं सम्भवोऽस्मद्गुरोर्नृप। व्यासस्याक्लिष्टमनसो यथा पृष्टः पुनः शृणु ॥ ६२ ॥ सांख्यं योगं पञ्चरात्रं वेदाः पाशुपतन्तथा। ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥ ६३ ॥ सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते। हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः ॥ ६४ ॥ अपान्तरतमाश्चैव वेदाचार्य्यः स उच्यते। प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ॥ ६५ ॥ उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः। उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ॥ ६६ ॥ पञ्चरात्रस्य कृत्-

त्त्वस्य वेत्ता तु भगवान् स्वयम्। सर्व्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते॥ ६७॥ यथागमं यथाज्ञानं निष्ठा नारायणः प्रभुः। न चैनमेवं जानन्ति तमोभूता विशाम्पते॥ ६८॥ तमेव शास्त्रकर्त्तारः प्रवदन्ति मनीषिणः। निष्ठां नारायणमृषिं नान्योऽस्तीति वचो मम॥ ६९॥ निःसंशयेषु सर्व्वेषु नित्यं वसति वै हरिः। ससंशयान् हेतुबलान्नाध्यावसति माधवः॥ ७०॥ पञ्चरात्रविदो ये तु यथाक्रमपरा नृप। एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै॥७१॥ सांख्यञ्च योगञ्च सनातने द्वे वेदाश्च सर्व्वे निखिलेन राजन्। सर्व्वैः समस्तैरृषिभिर्निरुक्तो नारायणो विश्वमिदं पुराणम्॥ ७२॥ शुभाशुभं कर्म्म समीरितं यत् प्रवर्त्तते सर्व्वलोकेषु किञ्चित्। तस्मादृषेस्तद्भवतीति विद्याद्दिव्यन्तरीक्षे भुवि चाप्सु चेति॥ ७३॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये द्वैपायनोत्पत्तौ एकोनपञ्चाशदधिकत्रिशततमोऽध्यायः॥ ३४९॥

---

जनमेजय उवाच। बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु। को ह्यत्र पुरुषः श्रेष्ठः का वा योनिरिहोच्यते॥ १॥

वैशम्पायन उवाच। बहवः पुरुषा लोके साङ्ख्ययोगविचारणे। नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह॥ २॥ बहूनां पुरुषाणाञ्च यथैका योनिरुच्यते। तथा तं पुरुषं विश्वं व्याख्यास्यामि गुणाधिकम्॥ ३॥ नमस्कृत्वा च गुरवे व्यासाय विदितात्मने। तपोयुक्ताय दान्ताय वन्द्याय परमर्षये॥ ४॥ इदं पुरुषसूक्तं हि सर्व्ववेदेषु पार्थिव। ऋतं सत्यञ्च विख्यातमृषिसिंहेन चिन्तितम्॥५॥ उत्सर्गेणापवादेन ऋषिभिः कपिलादिभिः। अध्यात्मचिन्तामाश्रित्य शास्त्राण्युक्तानि भारत॥ ६॥ समासतस्तु यद्व्यासः पुरुषैकत्वमुक्तवान्। तत्तेऽहं संप्रवक्ष्यामि प्रसादादमितौजसः॥ ७॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम्। ब्रह्मणा सह संवादं त्र्यम्बकस्य विशाम्पते ॥ ८ ॥ क्षीरोदस्य समुद्रस्य मध्ये हाटकसप्रभः। वैजयन्त इतिख्यातः पर्वतः प्रवरो नृप ॥ ९ ॥ तत्राध्यात्मगतिं देव एकाकी प्रविचिन्तयन्। वैराजसदनान्नित्यं वैजयन्तं निषेवते ॥ १० ॥ अथ तत्रासतस्तस्य चतुर्वक्त्रस्य धीमतः। ललाटप्रभवः पुत्रः शिव आगाद्यदृच्छया ॥ ११ ॥ आकाशेन महायोगी पुरा त्रिनयनः प्रभुः। ततः खान्निपपाताशु धरणीधरमूर्द्धनि ॥ १२ ॥ अग्रतश्चाभवत् प्रीतो ववन्दे चापि पादयोः। तं पादयोर्निपतितं दृष्ट्वा सव्येन पाणिना ॥ १३ ॥ उत्थापयामास तदा प्रभुरेकः प्रजापतिः। उवाच चैनं भगवांश्चिरस्यागतमात्मजम् ॥ १४ ॥

पितामह उवाच। स्वागतन्ते महाबाहो दिष्ट्या प्राप्तोऽसि मेऽन्तिकम्। कच्चित्ते कुशलं पुत्र स्वाध्यायतपसोः सदा ॥ १५ ॥ नित्यमुग्रतपास्त्वं हि ततः पृच्छामि ते पुनः ॥ १६ ॥

रुद्र उवाच। त्वत्प्रसादेन भगवन् स्वाध्यायतपसोर्मम। कुशलञ्चाव्ययञ्चैव सर्वस्य जगतस्तथा ॥ १७ ॥ चिरदृष्टो हि भगवान् वैराजसदने मया। ततोऽहं पर्वतं प्राप्तस्त्विमं त्वत्पादसेवितम् ॥ १८ ॥ कौतूहलञ्चापि हि मे एकान्तगमनेन ते। नैतत् कारणमल्पं हि भविष्यति पितामह ॥ १९ ॥ किन्तु तत् सदनं श्रेष्ठं क्षुत्पिपासाविवर्ज्जितम्। सुरासुरैरध्युषितं ऋषिभिश्चामितप्रभैः ॥ २० ॥ गन्धर्वैरप्सरोभिश्च सततं सन्निषेवितम्। उत्सृज्येमं गिरिवरमेकाकी प्राप्तवानसि ॥ २१ ॥

ब्रह्मोवाच। वैजयन्तो गिरिवरः सततं सेव्यते मया। अत्रैकाग्रेण मनसा पुरुषश्चिन्त्यते विराट् ॥ २२ ॥

रुद्र उवाच। बहवः पुरुषा ब्रह्मं स्त्वया सृष्टाः स्वयम्भुवा। सृज्यन्ते चापरे ब्रह्मन् स चैकः पुरुषो विराट् ॥ २३ ॥ को ह्यसौ

चिन्त्यते ब्रह्मं त्वयैकः पुरुषोत्तमः । एतन्मे संशयं ब्रूहि महत् कौतूहलं हि मे ॥ २४ ॥

ब्रह्मोवाच । बहवः पुरुषाः पुत्र ये त्वया समुदाहृताः । एवमेतदतिक्रान्तं द्रष्टव्यं नैवमित्यपि ॥ २५ ॥ आधारन्तु प्रवच्यामि एकस्य पुरुषस्य ते । बहूनां पुरुषाणां स यथैका योनिरुच्यते ॥२६॥ तथा तं पुरुषं विश्वं परमं सुमहत्तमम् । निर्गुणं निर्गुणीभूत्वा प्रविशन्ति सनातनम् ॥ २७ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि नारायणीये पञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५० ॥

---

ब्रह्मोवाच । शृणु पुत्र यथा ह्येष पुरुषः शाश्वतोऽव्ययः । अक्षयश्चाप्रमेयश्च सर्वगश्च निरुच्यते ॥ १ ॥ न स शक्यस्त्वया द्रष्टुं मयान्यैर्व्वापि सत्तम । सगुणैर्निर्गुणैर्विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः ॥ २ ॥ अशरीरः शरीरेषु सर्व्वेषु निवसत्यसौ । वसन्नपि शरीरेषु न स लिप्यति कर्म्मभिः ॥ ३ ॥ ममान्तरात्मा तव च ये चान्ये देहसञ्ज्ञिताः । सर्व्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् ॥ ४ ॥ विश्वमूर्द्धा विश्वभुजो विश्वपादाक्षिनासिकः । एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥ ५ ॥ क्षेत्राणि हि शरीराणि वीजञ्चापि शुभाशुभम् । तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥ ६ ॥ नागतिर्न गतिस्तस्य ज्ञेया भूतेषु केनचित् । सांख्येन विधिना चैव योगेन च यथाक्रमम् ॥ ७ ॥ चिन्तयामि गतिञ्चास्य न गतिं वेद्मि चोत्तराम् । यथाज्ञानन्तु वच्यामि पुरुषन्तु सनातनम् ॥ ८ ॥ तस्यैकत्वं महत्त्वञ्च स चैकः पुरुषः स्मृतः । महापुरुषशब्दं स विभर्त्त्येकः सनातनः ॥ ९ ॥ एको हुताशो बहुधा समिध्यते एकः सूर्य्यस्तपसो योनिरेका । एको वायुर्बहुधा वाति

लोके महोदधिश्चाम्भसां योनिरेकः। पुरुषश्चैको निर्गुणो विश्व-
रूपस्तं निर्गुणं पुरुषञ्चाविशन्ति ॥ १० ॥ हित्वा गुणमयं सर्वं कर्म्म
हित्वा शुभाशुभम्। उभे सत्यानृते त्यक्त्वा एवं भवति निर्गुणः
॥ ११ ॥ अचिन्त्यञ्चापि तं ज्ञात्वा भावसूक्ष्मञ्चतुष्टयम्। विचरेद्
योऽसमुन्नद्धः स गच्छेत् पुरुषं शुभम् ॥ १२ ॥ एवं हि परमात्मानं
केचिदिच्छन्ति पण्डिताः। एकात्मानं तथात्मानमपरे ज्ञानचिन्तकाः
॥ १३ ॥ तत्र यः परमात्मा हि स नित्यं निर्गुणः स्मृत। स हि
नारायणो ज्ञेयः सर्व्वात्मा पुरुषो हि सः। न लिप्यते फलैश्चापि
पद्मपत्रमिवाम्भसा ॥ १४ ॥ कर्म्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स
युज्यते ॥ १५ ॥ स सप्तदशकेनापि राशिना युज्यते च सः। एवं
बहुविधः प्रोक्तः पुरुषस्ते यथाक्रमम् ॥ १६ ॥ यत्तत् कृतस्नं लोक-
तन्त्रस्य धाम वेद्यं परं बोधनीयः स बोद्धा। मन्ता मन्तव्यं प्राशिता
प्राशनीयं घ्राता घ्रेयं स्पर्शिता स्पर्शनीयम् ॥ १७ ॥ द्रष्टा द्रष्टव्यं
श्राविता श्रावणीयं ज्ञाता ज्ञेयं सगुणं निर्गुणञ्च। यद्वै प्रोक्तं तात
सम्यक् प्रधानं नित्यञ्चैतच्छाश्वतञ्चाव्ययञ्च ॥ १८ ॥ यद्वै सूते धातु-
राद्यं निधानं तद्वै विप्राः प्रवदन्तेऽनिरुद्धम्। यद्वै लोके वैदिकं
कर्म्म साधु आशीर्युक्तं तद्धि तस्यैव भाव्यम् ॥ १९ ॥ देवः सर्व्वे
मुनयः साधुशान्तास्तं प्राग्वंशे यज्ञभागं यजन्ते। अहं ब्रह्मा आद्य
ईशः प्रजानां तस्माज्जातस्त्वञ्च मत्तः प्रसूतः। मत्तो जगज्जङ्गमं
स्थावरञ्च सर्व्वे वेदाः सरहस्या हि पुत्र ॥ २० ॥ चतुर्विभक्तः पुरुषः
स क्रीड़ति यथेच्छति। एवं स भगवान् स्वेन ज्ञानेन प्रतिबोधितः
॥ २१ ॥ एतत्ते कथितं पुत्र यथावदनुपृच्छतः। सांख्यज्ञाने तथा
योगे यथावदनुवर्णितम् ॥ २२ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि नारायणीये एक-
पञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५१ ॥

---

युधिष्ठिर उवाच । धर्माः पितामहेनोक्ता मोक्षधर्माश्रिताः शुभाः । धर्म्ममाश्रमिणां श्रेष्ठं वक्तुमर्हति मे भवान् ॥ १ ॥

भीष्म उवाच । सर्व्वत्र विहितो धर्म्मः स्वर्गः सत्यफलं महत् । बहुद्वारस्य धर्म्मस्य नेहास्ति विफला क्रिया ॥ २ ॥ यस्मिन् यस्मिंश्च विषये यो यो याति विनिश्चयम् । स तमेवाभिजानाति नान्यं भरतसत्तम ॥ ३ ॥ इमान्त्वं नरव्याघ्र श्रोतुमिच्छसि मे कथाम् । पुरा शक्रस्य कथितं नारदेन महर्षिणा ॥ ४ ॥ महर्षिर्नारदो राजन् सिद्धस्त्रैलोक्यसम्मतः । पर्य्येति क्रमशो लोकान् वायुरव्याहतो यथा ॥ ५ ॥ स कदाचिन्महेष्वास देवराजालयङ्गतः । सत्कृतश्च महेन्द्रेण प्रत्यासन्नगतोऽभवत् ॥ ६ ॥ तं कृतक्षणमासीनं पर्य्यपृच्छच्छचीपतिः । महर्षे किञ्चिदाश्चर्य्यमस्ति दृष्टं त्वयानघ ॥७॥ यदा त्वमपि विप्रर्षे त्रैलोक्यं सचराचरम् । जातकौतूहलो नित्यं सिद्धश्चरसि साक्षिवत् ॥ ८ ॥ न ह्यस्त्यविदितं लोके देवर्षे तव किञ्चन । श्रुतं वाप्यनुभूतं वा दृष्टं वा कथयस्व मे ॥ ९ ॥ तस्मै राजन् सुरेन्द्राय नारदो वदताम्वरः । आसीनायोपपन्नाय प्रोक्तवान् विपुलां कथाम् ॥ १० ॥ यथा येन च कल्पेन स तस्मै द्विजसत्तमः । कथां कथितवान् पृष्टस्तथा त्वमपि मे शृणु ॥ ११ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि उञ्छवृत्त्युपाख्याने द्विपञ्चाशदधिकत्रिशततोऽध्यायः ॥ ३५२ ॥

---

भीष्म उवाच । आसीत् किल नरश्रेष्ठ महापद्मे पुरोत्तमे । गङ्गाया दक्षिणे तीरे कश्चिद्विप्रः समाहितः ॥ १ ॥ सौम्यः सोमान्वये वेदे गताध्वा छिन्नसंशयः । धर्म्मनित्यो जितक्रोधो नित्यतृप्तो जितेन्द्रियः ॥ २ ॥ तपःस्वाध्यायनिरतः सत्यः सज्जनसम्मतः । न्यायप्राप्तेन वित्तेन स्वेन शीलेन चान्वितः ॥ ३ ॥ ज्ञातिसम्बन्धिविपुले

पुत्रदारादिसम्मिते। कुले महति विख्याते विशिष्टां वृत्तिमास्थितः
॥ ४ ॥ स पुत्रान् बहुलान्दृष्ट्वा विपुले कर्म्मणि स्थितः। कुलधर्मा-
श्रितो राजन् धर्म्मचर्य्यास्थितोऽभवत् ॥ ५ ॥ ततः स्वधर्म्मं वेदोक्तं
यथाशास्त्रोक्तमेव च। शिष्टाचीर्णञ्च धर्म्मञ्च त्रिविधं चिन्त्य चेतसा
॥ ६ ॥ किन्नु मे स्याच्छुभं कृत्वा किं कृतं किं परायणम्। इत्येवं
खिद्यते नित्यं न च याति विनिश्चयम् ॥ ७ ॥ तस्यैवं खिद्यमानस्य
धर्म्मं परममास्थितः। कदाचिदतिथिः प्राप्तो ब्राह्मणः सुसमाहितः
॥ ८ ॥ स तस्मै सत्क्रियाञ्चक्रे क्रियायुक्तेन हेतुना। विश्रान्तं
सुखमासीनमिदं वचनमब्रवीत् ॥ ९ ॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि उञ्छवृत्त्युपाख्याने
त्रिपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५३ ॥

---

ब्राह्मण उवाच। समुत्पन्नाभिधानोऽस्मि वाङ्माधुर्य्येण तेऽनघ।
मित्रत्वमभिपन्नस्त्वं किञ्चिद्वक्ष्यामि तच्छृणु ॥ १ ॥ गृहस्थधर्म्मं
विप्रेन्द्र कृत्वा पुत्रगतन्त्वहम्। धर्मं परमकं कुर्य्यां को हि मार्गो
भवेद्द्विज ॥ २ ॥ अहमात्मानमास्थाय एक एवात्मनि स्थितः।
कर्त्तुं काङ्क्षामि नेच्छामि वद्धः साधारणैर्गुणैः ॥ ३ ॥ यावदेत-
दतीतं मे वयः पुत्रफलाश्रितम्। तावदिच्छामि पाथेयमादातुं
पारलौकिकम् ॥ ४ ॥ अस्मिन् हि लोकसम्भारे परम्पारमभीप्-
सतः। उत्पन्ना मे मतिरियं कुतो धर्म्ममयः प्लवः ॥ ५ ॥ संयुज्य-
मानानि निशम्य लोके निर्य्यात्यमानानि च सात्त्विकानि। दृष्ट्वा तु
धर्म्मध्वजकेतुमालां प्रकीर्य्यमाणामुपरि प्रजानाम् ॥ ६ ॥ न मे मनो
रज्यति भोगकाले दृष्ट्वा यतीन् प्रार्थयतः परत्र। तेनातिथे बुद्धि-
बलाश्रयेण धर्मेण धर्मे विनियुङ्क्ष्व मां त्वम् ॥ ७ ॥

भीष्म उवाच। सोऽतिथिर्वचनं तस्य श्रुत्वा धर्माभिभाषिणः।
प्रोवाच वचनं श्लक्ष्णं प्राज्ञो मधुरया गिरा ॥ ८ ॥

अतिथिरुवाच। अहमप्यत्र मुह्यामि ममाप्येष मनोरथः। न च संनिश्चयं यामि बहुद्वारे त्रिपिष्टपे॥ ९॥ केचिन्मोक्षं प्रशंसन्ति केचिद्यज्ञफलं द्विजाः। वानप्रस्थाश्रयाः केचिद्गार्हस्थ्यं केचिदाश्रिताः॥ १०॥ राजधर्माश्रयं केचित् केचिदात्मफलाश्रयम्। गुरुधर्माश्रयं केचित् केचिद्वाक्संयमाश्रयम्॥ ११॥ मातरं पितरं केचित् शुश्रूषन्तो दिवङ्गताः। अहिंसया परे स्वर्गं सत्येन च तथा परे॥ १२॥ आहवेऽभिमुखाः केचिन्निहताः स्त्रिदिवं गताः। केचिदुञ्छव्रतैः सिद्धाः स्वर्गमार्गं समाश्रिताः॥ १३॥ केचिदध्ययने युक्ता वेदव्रतपराः शुभाः। बुद्धिमन्तो गताः स्वर्गं तुष्टात्मानो जितेन्द्रियाः॥ १४॥ आर्जवेनापरे युक्ता निहता नार्जवैर्जनैः। ऋजवो नाकपृष्ठे वै शुद्धात्मानः प्रतिष्ठिताः॥ १५॥ एवं बहुविधैर्लोके धर्म्मद्वारैरनावृतैः। ममापि मतिराविग्ना मेघलेखेव वायुना॥ १६॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि उञ्छवृत्त्युपाख्याने चतुःपञ्चाशदधिकत्रिशततमोऽध्यायः॥ ३५४॥

---

अतिथिरुवाच। उपदेशन्तु ते विप्र करिष्येऽहं यथाक्रमम्। गुरुणा मे यथाख्यातमर्थतस्तन्तु मे शृणु॥ १॥ यत्र पूर्वाभिसर्गे वै धर्मचक्रं प्रवर्त्तितम्। नैमिषे गोमतीतीरे तत्र नागाह्वयं पुरम्॥ २॥ समग्रैस्त्रिदशैस्तत्र इष्टमासीद्द्विजर्षभ। यत्रेन्द्रातिक्रमं चक्रे मान्धाता राजसत्तमः॥ ३॥ कृताधिवासो धर्मात्मा तत्र चक्षुःश्रवा महान्। पद्मनाभो महानागः पद्म इत्येव विश्रुतः॥ ४॥ स वाचा कर्मणा चैव मनसा च द्विजर्षभ। प्रसादयति भूतानि त्रिविधे वर्त्मनि स्थितः॥ ५॥ साम्ना भेदेन दानेन दण्डेनेति चतुर्विधम्। विषमस्थं समस्थञ्च चक्षुर्ध्यानेन रक्षति॥ ६॥ तमतिक्रम्य विधिना प्रष्टुमर्हसि काङ्क्षितम्। स ते परमकं धर्मं न मिथ्या दर्शयिष्यति॥ ७॥ स

हि सर्वातिथिर्नागो बुद्धिशास्त्रविशारदः। गुणैरनुपमैर्युक्तः समस्तैराभिकामिकैः ॥ ८ ॥ प्रकृत्या नित्यसलिलो नित्यमध्ययने रतः। तपोदमाभ्यां संयुक्तो वृत्तेनानवरेण च ॥९॥ यज्वा दानपतिः क्षान्तो वृत्ते च परमे स्थितः। सत्यवागनसूयुश्च शीलवान्नियतेन्द्रियः ॥ १० ॥ शेषान्नभोक्ता वचनानुकूलो हिताज्जवोत्कृष्टकृताकृतज्ञः। अवैरकृद्भूतहिते नियुक्तो गङ्गाह्रदाम्भोऽभिजनोपपन्नः ॥ ११ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि उञ्छवृत्त्युपाख्याने पञ्चपञ्चाशदधिकत्रिशततोऽध्यायः ॥ ३५५ ॥

---

ब्राह्मण उवाच। अतिभारोऽद्य तस्यैव भारावतरणं महत्। पराश्वासकरं वाक्यमिदं मे भवतः श्रुतम् ॥ १ ॥ अध्वक्लान्तस्य शयनं स्थानक्लान्तस्य चासनम्। तृषितस्य च पानीयं क्षुधार्त्तस्य च भोजनम् ॥ २ ॥ ईप्सितस्येव सम्प्राप्तिरन्नस्य समयेऽतिथेः। एषितस्यात्मनः काले वृद्धस्येव सुतो यथा ॥ ३ ॥ मनसा चिन्तितस्येव प्रीतिस्निग्धस्य दर्शनम्। प्रह्लादयति मां वाक्यं भवता यदुदीरितम् ॥ ४ ॥ दत्तचक्षुरिवाकाशे पश्यामि विमृषामि च। प्रज्ञानवचनाद्योऽयमुपदेशो हि मे कृतः ॥ ५ ॥ वाढमेवं करिष्यामि यथा मे भाषते भवान्। इमां हि रजनीं साधो निवसस्व मया सह ॥ ६ ॥ प्रभाते यास्यति भवान् पर्य्याश्वस्तः सुखोषितः। असौ हि भगवान् सूर्य्यो मन्दरश्मिरवाङ्मुखः ॥ ७ ॥

भीष्म उवाच। ततस्तेन कृतातिथ्यः सोऽतिथिः शत्रुसूदन। उवास किल तां रात्रिं सह तेन द्विजेन वै ॥ ८ ॥ चतुर्थधर्मसंयुक्तं तयोः कथयतोस्तदा। व्यतीता सा निशा कृत्स्ना सुखेन दिवसोपमा ॥ ९ ॥ ततः प्रभातसमये सोऽतिथिस्तेन पूजितः। ब्राह्मणेन यथा शक्त्या स्वकार्य्यमभिकाङ्क्षता ॥ १० ॥ ततः स विप्रः

कृतकर्म्मनिश्चयः कृताभ्यनुज्ञः स्वजनेन धर्म्मकृत्। यथोपदिष्टं भुजगेन्द्रसंश्रयं जगाम कालेषु कृतैकनिश्चयः॥ ११॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि उञ्छवृत्त्युपाख्याने षट्पञ्चाशदधिकत्रिशतोऽध्यायः॥ ३५६॥

---

भीष्म उवाच। स वनानि विचित्राणि तीर्थानि च सरांसि च। अभिगच्छन् क्रमेण स्म कञ्चिन्मुनिमुपस्थितः॥ १॥ तं स तेन यथोद्दिष्टं नागं विप्रेण ब्राह्मणः। पर्य्यपृच्छद्यथान्यायं श्रुत्वैव च जगाम सः॥ २॥ सोऽभिगम्य यथान्यायं नागायतनमर्थवित्। प्रोक्तवानहमस्मीति भोः शब्दालङ्कृतं वचः॥ ३॥ ततस्य वचनं श्रुत्वा रूपिणी धर्म्मवत्सला। दर्शयामास तं विप्रं नागपत्नी पतिव्रता॥४॥ सा तस्मै विधिवत् पूजां चक्रे धर्मपरायणा। स्वागतेनागतं कृत्वा किं करोमीति चाब्रवीत्॥ ५॥

ब्राह्मण उवाच। विश्रान्तोऽर्च्चितश्चास्मि भवत्या श्लक्ष्णया गिरा। द्रष्टुमिच्छामि भवति देवं नागमनुत्तमम्॥ ६॥ एतद्धि परमं कार्य्यमेतन्मे परमेप्सितम्। अनेन चार्थिनास्म्यद्य सम्प्राप्तः पन्नगालयम्॥ ७॥

नागभार्य्योवाच। आर्य्यः सूर्य्यरथं वोढुं गतोऽसौ माससारिकः। सप्ताष्टभिर्दिनैर्विप्र दर्शयिष्यत्यसंशयम्॥ ८॥ एतद्विदितमार्य्यस्य विवासकरणं मम। भर्त्तुर्भवतु किञ्चान्यत् क्रियतां तद्वदस्व मे॥ ९॥

ब्राह्मण उवाच। अनेन निश्चयेनाहं साध्वि सम्प्राप्तवानिह। प्रतीक्षन्नागमं देवि वत्स्याम्यस्मिन्महावने॥ १०॥ सम्प्राप्तस्यैव चाव्यग्रमावेद्योऽहमिहागतः। ममाभिगमनं प्राप्तो वाच्यश्च वचनं त्वया॥ ११॥ अहमप्यत्र वत्स्यामि गोमत्याः पुलिने शुभे। कालं

परिमिताहारो यथोक्तं परिपालयन् ॥१२॥ ततः स विप्रस्तां नागीं समाश्वास्य पुनः पुनः। तदेव पुलिनं नद्याः प्रययौ ब्राह्मणर्षभः ॥१३॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि उञ्छवृत्त्युपाख्याने सप्तपञ्चाशदधिकत्रिशततमोऽध्यायः॥ ३५७ ॥

---

भीष्म उवाच। अथ तेन नरश्रेष्ठ ब्राह्मणेन तपस्विना। निराहारेण वसता दुःखितास्ते भुजङ्गमाः ॥ १ ॥ सर्वे सम्भूय सहिता ह्यस्य नागस्य बान्धवाः। भ्रातरस्तनया भार्य्या ययुस्तं ब्राह्मणं प्रति ॥ २ ॥ तेऽपश्यन् पुलिने तं वै विविक्ते नियतव्रतम्। समासीनं निराहारं द्विजं जप्यपरायणम् ॥ ३ ॥ ते सर्वे समतिक्रम्य विप्रमभ्यर्च्य चासकृत्। ऊचुर्वाक्यमसन्दिग्धमातिथेयस्य बान्धवाः ॥४॥ षष्ठो हि दिवसस्तेऽद्य प्राप्तस्येह तपोधन। न चाभिभाषसे किञ्चिदाहारं धर्मवत्सल ॥ ५॥ अस्मानभिगतश्चासि वयञ्च त्वामुपस्थिताः। कार्य्यञ्चातिथ्यमस्माभिर्वयं सर्वे कुटुम्बिनः ॥ ६ ॥ मूलं फलं वा पर्णं वा पयो वा द्विजसत्तम। आहारहेतोरन्नं वा भोक्तुमर्हसि ब्राह्मण ॥ ७ ॥ त्यक्ताहारेण भवता वने निवसता त्वया। बालवृद्धमिदं सर्वं पीड्यते धर्मसङ्करात्॥ ८॥ न हि नो ब्रह्महा कश्चित् जातापत्यो मृतोऽपि वा। पूर्वाशी वा कुले ह्यस्मिन् देवतातिथिबन्धुषु॥ ९ ॥

ब्राह्मण उवाच। उपदेशेन युष्माकमाहारोऽयं कृतो मया। द्विगुणं दशरात्रं वै नागस्यागमनं प्रति॥ १० ॥ यद्यष्टरात्रेऽतिक्रान्ते नागमिष्यति पन्नगः। तदाहारं करिष्यामि तन्निमित्तमिदं व्रतम् ॥ ११ ॥ कर्त्तव्यो न च सन्तापो गम्यताञ्च यथागतम्। तन्निमित्तमिदं सर्वं नैतद्भेत्तुमिहार्हथ॥ १२॥ ते तेन समनुज्ञाता ब्राह्मणेन भुजङ्गमाः। स्वमेव भवनं जग्मुरकृतार्था नरर्षभ ॥ १३ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि उञ्छवृत्त्युपाख्याने अष्टपञ्चाशदधिकत्रिशततमोऽध्यायः॥ ३५८ ॥

भीष्म उवाच। अथ काले बहुतिथे पूर्णे प्राप्तो भुजङ्गमः। दत्ताभ्यनुज्ञः स्वं वेश्म कृतकर्मा विवस्वता ॥ १ ॥ तं भार्य्याप्युपचक्राम पादशौचादिभिर्गुणैः। उपसन्नाञ्च तां साध्वीं पन्नगः पर्य्यपृच्छत ॥ २ ॥ अथ त्वमसि कल्याणि देवतातिथिपूजने। पूर्व्वमुक्तेन विधिना युक्तियुक्तेन तत्समम् ॥ ३ ॥ न खल्वस्यकृतार्थेन स्त्रीबुद्ध्या मार्द्दवीकृता। मद्वियोगेन सुश्रोणि विमुक्ता धर्म्मसेतुना ॥ ४ ॥

नागभार्य्योवाच। शिष्याणां गुरुशुश्रूषा विप्राणां वेदधारणम्। भृत्यानां स्वामिवचनं राज्ञो लोकानुपालनम् ॥ ५ ॥ सर्व्वभूतपरित्राणं क्षत्रधर्म्म इहोच्यते। वैश्यानां यज्ञसंवृत्तिरातिथेयसमन्विता ॥ ६ ॥ विप्रक्षत्रियवैश्यानां शुश्रूषा शूद्रकर्म्म तत्। गृहस्थधर्म्मो नागेन्द्र सर्व्वभूतहितैषिता ॥ ७ ॥ नियताहारता नित्यं व्रतचर्य्या यथाक्रमम्। धर्म्मो हि धर्म्मसम्बन्धादिन्द्रियाणां विशेषतः ॥ ८ ॥ अहं कस्य कुतो वापि कः को मे ह भवेदिति। प्रयोजनमतिर्नित्यमेवं मोक्षाश्रमे भवेत् ॥ ९ ॥ पतिव्रतात्वं भार्य्यायाः परमो धर्म्म उच्यते। तवोपदेशान्नागेन्द्र तच्च तत्त्वेन वेद्मि वै ॥ १० ॥ साहं धर्म्मं विजानन्ती धर्म्मनित्ये त्वयि स्थिते। सत्पथं कथमुत्सृज्य यास्यामि विपथं पथः ॥ ११ ॥ देवतानां महाभाग धर्म्मचर्य्या न हीयते। अतिथीनाञ्च सत्कारे नित्ययुक्तास्म्यतन्द्रिता ॥ १२ ॥ सप्ताष्टदिवसास्त्वद्य विप्रस्येहागतस्य वै। तच्च कार्य्यं न मे ख्याति दर्शनं तव काङ्क्षति ॥ १३ ॥ गोमत्यास्त्वेष पुलिने त्वद्दर्शनसमुत्सुकः। आसीनो वर्त्तयन् ब्रह्म ब्राह्मणः संशितव्रतः ॥ १४ ॥ अहं त्वनेन नागेन्द्र सत्यपूर्व्वं समाहिता। प्रस्थाप्यो मत्सकाशं स सम्प्राप्तो भुजगोत्तमः ॥ १५ ॥ एतच्छ्रुत्वा महाप्राज्ञ तत्र गन्तुं त्वमर्हसि। दातुमर्हसि वा तस्य दर्शनं दर्शनश्रवः ॥ १६ ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि उञ्छवृत्त्युपाख्याने एकोनषष्ट्यधिकत्रिशततोऽध्यायः ॥ ३५९ ॥

नाग उवाच। अथ ब्राह्मणरूपेण कं तं समनुपश्यसि। मानुषं केवलं विप्रं देवं वाथ शुचिस्मिते ॥ १ ॥ को हि मां मानुषः शक्तो द्रष्टुकामो यशस्विनि। सन्दर्शनरुचिर्वाक्यमाज्ञापूर्वं वदिष्यति ॥ २ ॥ सुरासुरगणानाञ्च देवर्षीणाञ्च भाविनि। ननु नागा महावीर्य्याः सौरभेयास्तरस्विनः ॥ ३ ॥ वन्दनीयाश्च वरदा वयमप्यनुयायिनः। मनुष्याणां विशेषेण नावेच्या इति मे मतिः ॥ ४ ॥

नागभार्य्योवाच। आर्ज्जवेन विजानामि नासौ देवोऽनिलाशन। एवं तस्मिन् विजानामि भक्तिमानतिरोषणः ॥ ५ ॥ स हि कार्य्यान्तराकाङ्क्षी जलेप्सुः स्तोकको यथा। वर्षं वर्षप्रियः पक्षी दर्शनन्तव काङ्क्षति ॥ ६ ॥ हित्वा त्वद्दर्शनं किञ्चिद्विघ्नं न प्रतिपालयेत्। तुल्योऽप्यभिजने जातो न कश्चित् पर्य्युपासते ॥ ७ ॥ तद्रोषं सहजं त्यक्त्वा त्वमेनं द्रष्टुमर्हसि। आशाच्छेदेन तस्याद्य नात्मानं दग्धुमर्हसि ॥ ८ ॥ आशया ह्यभिपन्नानामकृत्वाश्रुप्रमार्ज्जनम्। राजा वा राजपुत्रो वा भ्रूणहत्यैव युज्यते ॥ ९ ॥ मौने ज्ञानफलावाप्तिर्द्दानेन च यशो महत्। वाग्मित्वं सत्यवाक्येन परत्र च महीयते ॥१०॥ भूप्रदानेन च गतिं लभत्याश्रमसम्मिताम्। न्याय्यस्यार्थस्य सम्प्राप्तिं कृत्वा फलमुपाश्नुते ॥ ११ ॥ अभिप्रेतामसंश्लिष्टां कृत्वा चात्महितं क्रियाम्। न याति निरयं कश्चिदिति धर्म्मविदो विदुः ॥ १२ ॥

नाग उवाच। अभिमानेन मानो मे जातिदोषेण वै महान्। रोषः सङ्कल्पजः साध्वि दग्धो वागग्निना त्वया ॥ १३ ॥ न च रोषादहं साध्वि पश्येयमधिकं तमः। तस्य वक्तव्यतां यान्ति विशेषेण भुजङ्गमाः ॥ १४ ॥ रोषस्य हि वशं गत्वा दशग्रीवः प्रतापवान्। तथा शक्रप्रतिस्पर्द्धी हतो रामेण संयुगे ॥ १५ ॥ अन्तःपुरगतं वत्सं श्रुत्वा रामेण निर्हृतम्। धर्षणारोषसंविग्नाः कार्त्तवीर्य्यसुता हताः ॥ १६ ॥ जामदग्न्येन रामेण सहस्रनयनोपमः। संयुगे निहतो रोषात् कार्त्तवीर्य्यो महाबलः ॥ १७ ॥

तदेष तपसां शत्रुः श्रेयसां विनिपातकः । निगृहीतो मया रोषः श्रुत्वैवं वचनन्तव ॥ १८ ॥ आत्मानञ्च विशेषेण प्रशंसाम्यनपायिनी । यस्य मे त्वं विशालाक्षि भार्य्या गुणसमन्विता ॥ १९ ॥ एष तत्रैव गच्छामि यत्र तिष्ठत्यसौ द्विजः । सर्व्वथा चोक्तवान् वाक्यं स कृतार्थः प्रयास्यति ॥ २० ॥

इति शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वणि उञ्छवृत्त्युपाख्याने षष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६० ॥

---

भीष्म उवाच । स पन्नगपतिस्तत्र प्रययौ ब्राह्मणं प्रति । तमेव मनसा ध्यायन् कार्य्यवत्तां विचारयन् ॥ १ ॥ तमतिक्रम्य नागेन्द्रो मतिमान् स नरेश्वर । प्रोवाच मधुरं वाक्यं प्रकृत्या धर्म्मवत्सलः ॥ २ ॥ भो भोः क्षाम्याभिभाषे त्वं न रोषं कर्त्तुमर्हसि । इह त्वमभिसम्प्राप्तः कस्यार्थे किं प्रयोजनम् ॥ ३ ॥ आभिमुख्या-दतिक्रम्य स्नेहात् पृच्छामि ते द्विज । विविक्ते गोमतीतीरे कं वा त्वं पर्य्युपाससे ॥ ४ ॥

ब्राह्मण उवाच । धर्म्मारण्यं हि मां विद्धि नागं द्रष्टुमिहागतम् । पद्मनाभं द्विजश्रेष्ठं तत्र मे कार्य्यमाहितम् ॥ ५ ॥ तस्य चाहमसान्निध्यं श्रुतवानस्मि तं गतम् । स्वजनं तं प्रतीक्षामि पर्ज्जन्यमिव कर्षकः ॥ ६ ॥ तस्य चाक्लेशकरणं स्वस्तिकारसमाहितम् । आवर्त्तयामि तद्ब्रह्म योगयुक्तो निरामयः ॥ ७ ॥

नाग उवाच । अहो कल्याणवृत्तस्त्वं साधुः सज्जनवत्सलः । अवाच्यस्त्वं महाभाग परं स्नेहेन पश्यसि ॥ ८ ॥ अहं स नागो विप्रर्षे यथा मां विन्दते भवान् । आज्ञापय यथा स्वैरं किं करोमि प्रियं तव ॥ ९ ॥ भवन्तं स्वजनादस्मि सम्प्राप्तं श्रुतवानहम् । अतस्त्वां स्वयमेवाहं द्रष्टुमभ्यागतो द्विज ॥ १० ॥ सम्प्राप्तश्च भवानद्य

कृतार्थः प्रतियास्यति। विस्रब्धो मां द्विजश्रेष्ठ विषये योक्तुमर्हसि ॥ ११ ॥ वयं हि भवता सर्वे गुणक्रीता विशेषतः। यस्त्वमात्महितं त्यक्त्वामामेवेहानुरुध्यसे ॥ १२ ॥

ब्राह्मण उवाच। आगतोऽहं महाभाग तव दर्शनलालसः। कञ्चिदर्थमनर्थज्ञः प्रष्टुकामो भुजङ्गम ॥ १३ ॥ अहमात्मानमात्मस्थो मार्गमाणोऽत्मनो गतिम्। वासार्थिनं महाप्राज्ञं चलचित्तमुपास्मि ह ॥ १४ ॥ प्रकाशितस्त्वं स्वगुणैर्यशोगर्भगभस्तिभिः। शशाङ्ककरसंस्पर्शैर्हृद्यैरात्मप्रकाशितैः ॥ १५ ॥ तस्य मे प्रश्नमुत्पन्नं छिन्धि त्वमनिलाशन। पश्चात् कार्य्यं वदिष्यामि श्रोतुमर्हति तद्भवान् ॥१६॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि उञ्छवृत्त्युपाख्याने एकषष्ट्यधिकत्रिशततोऽध्यायः ॥ ३६१ ॥

---

ब्राह्मण उवाच। विवस्वतो गच्छति पर्य्ययेण वोढुं भवांस्तं रथमेकचक्रम्। आश्चर्य्यभूतं यदि तत्र किञ्चिद्दृष्टं त्वया शंसितुमर्हसि त्वम् ॥ १ ॥

नाग उवाच। आश्चर्य्याणामनेकानां प्रतिष्ठा भगवान्रविः। यतो भूताः प्रवर्त्तन्ते सर्वे त्रैलोक्यसम्मताः ॥ २ ॥ यस्य रश्मिसहस्रेषु शाखास्विव विहङ्गमाः। वसन्त्याश्रित्य मुनयः संसिद्धा दैवतैः सह ॥ ३ ॥ यतो वायुर्विनिःसृत्य सूर्य्यरश्म्याश्रितो महान्। विजृम्भत्यम्बरे तत्र किमाश्चर्य्यमतः परम् ॥ ४ ॥ विभज्य तन्तु विप्रर्षे प्रजानां हितकाम्यया। तोयं सृजति वर्षासु किमाश्चर्य्यमतः परम् ॥ ५ ॥ यस्य मण्डलमध्यस्थो महात्मा परमत्विषा। दीप्तः समीक्षते लोकान् किमाश्चर्य्यमतः परम् ॥ ६ ॥ शुक्रो नामासितः पादो यस्य वारिधरोऽम्बरे। तोयं सृजति वर्षासु किमाश्चर्य्यमतः परम् ॥ ७ ॥ योऽष्टमासांस्तु शुचिना किरणेनोज्झितं पयः। प्रत्यादत्ते

पुनः काले किमाश्चर्य्यमतः परम् ॥ ८ ॥ तस्य तेजोविशेषेषु स्वय-
मात्मा प्रतिष्ठितः । यतो बीजं मही चेयं धार्य्यते सचराचरा ॥ ९ ॥
यत्र देवो महाबाहुः शाश्वतः पुरुषोत्तमः । अनादिनिधनो विप्र
किमाश्चर्य्यमतः परम् ॥ १० ॥ आश्चर्य्याणामिवाश्चर्य्यमिदमेकन्तु मे
शृणु । विमले यन्मया दृष्टमम्बरे सूर्य्यसंश्रयात् ॥ ११ ॥ पुरा
मध्याह्नसमये लोकांस्तपति भास्करे । प्रत्यादित्यप्रतीकाशः सर्वतः
समदृश्यत ॥ १२ ॥ स लोकांस्तेजसा सर्वान् स्वभासाभिविभासयन् ।
आदित्याभिमुखोऽभ्येति गगणं पाटयन्निव ॥ १३ ॥ हुताहुतिरिव
ज्योतिर्व्याप्य तेजोमरीचिभिः । अनिर्द्देश्येन रूपेण द्वितीय इव
भास्करः ॥१४॥ तस्याभिगमनप्राप्तौ हस्तौ दत्तौ विवस्वता । तेनापि
दक्षिणो हस्तो दत्तः प्रत्यर्च्चनार्थिना ॥ १५ ॥ ततो भित्त्वैव गगणं
प्रविष्टो रश्मिमण्डलम् । एकीभूतञ्च तत्तेजः क्षणेनादित्यताङ्गतम्
॥ १६ ॥ तत्र नः संशयो जातः तयोस्तेजःसमागमे । अनयोः को
भवेत् सूर्य्यो रथस्थो योऽयमागतः ॥ १७ ॥ ते वयं जातसन्देहाः
पर्य्यपृच्छामहे रविम् । क एष दिवमाक्रम्य गतः सूर्य्य इवापरः ॥१८॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि उञ्छवृत्त्युपाख्याने
द्विषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६२ ॥

---

सूर्य्य उवाच । नैष देवोऽनिलसखो नासुरो न च पन्नगः ।
उञ्छवृत्तिव्रते सिद्धो मुनिरेष दिवं गतः ॥ १ ॥ एष मूलफलाहारः
शीर्णपर्णाशनस्तथा । अब्भक्षो वायुभक्षश्च आसीद्विप्रः समाहितः
॥ २ ॥ भवश्चानेन विप्रेण संहिताभिरभिष्टुतः । स्वर्गद्वारे कृतो-
द्योगो येनासौ त्रिदिवं गतः ॥ ३ ॥ असङ्गतिरनाकाङ्क्षी नित्य-
मुञ्छशिलाशनः । सर्वभूतहिते युक्त एष विप्रो भुजङ्गमाः ॥ ४ ॥
न हि देवा न गन्धर्वा नासुरा न च पन्नगाः । प्रभवन्तीह भूतानां

प्राप्तानामुत्तमां गतिम्। एतद्दिवं विधं दृष्टमाश्चर्य्यं तत्र मे द्विज ॥५॥ संसिद्धो मानुषः कामं योऽसौ सिद्धगतिं गतः। सूर्य्येण सहितो ब्रह्मन् पृथिवी परिवर्त्तते ॥ ६ ॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि उञ्छवृत्त्युपाख्याने त्रिषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६३ ॥

---

ब्राह्मण उवाच। आश्चर्य्यं नात्र सन्देहः सुप्रीतोऽस्मि भुजङ्गम। अन्वर्थोपगतैर्वाक्यैः पन्थानश्चास्मि दर्शितः ॥ १ ॥ स्वस्ति तेऽस्तु गमिष्यामि साधो भुजगसत्तम। स्मरणीयोऽस्मि भवता सम्प्रेषणनियोजनैः ॥ २ ॥

नाग उवाच। अनुक्त्वा हृद्गतं कार्य्यं क्वेदानीं प्रस्थितो भवान्। उच्यतां द्विज यत् कार्य्यं यदर्थं त्वमिहागतः ॥ ३ ॥ उक्तानुक्ते कृते कार्य्ये मामामन्त्र्य द्विजर्षभ। मया प्रत्यभ्यनुज्ञातस्ततो यास्यसि सुव्रत ॥ ४ ॥ न हि मां केवलं दृष्ट्वा त्यक्त्वा प्रणयवानिह। गन्तुमर्हसि विप्रर्षे वृक्षमूलगतो यथा ॥ ५ ॥ त्वयि चाहं द्विजश्रेष्ठ भवान्मयि न संशयः। लोकोऽयं भवतः सर्वः का चिन्ता मयि तेऽनघ ॥ ६ ॥

ब्राह्मण उवाच। एवमेतन्महाप्राज्ञ विदितात्मन् भुजङ्गम। नातिरिक्तास्त्वया देवाः सर्वथैव यथातथम् ॥ ७ ॥ य एव त्वं स एवाहं योऽहं स तु भवानपि। अहं भवांश्च भूतानि सर्वे यत्र गताः सदा ॥ ८ ॥ आसीत्तु मे भोगिपते संशयः पुण्यसञ्चये। सोऽहमुञ्छव्रतं साधो चरिष्याम्यर्थसाधनम् ॥ ९ ॥ एष मे निश्चयः साधो कृतं कारणमुत्तमम्। आमन्त्रयामि भद्रन्ते कृतार्थोऽस्मि भुजङ्गम ॥१०॥

इति शान्तिपर्वणि मोक्षधर्मपर्वणि उञ्छवृत्त्युपाख्याने चतुःषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६४ ॥

---

भीष्म उवाच। स चामन्त्र्योरगश्रेष्ठं ब्राह्मणः कृतनिश्चयः।
दीक्षाकाङ्क्षी तदा राजंश्च्यवनं भार्गवं श्रितः॥ १॥ स तेन कृत-
संस्कारो धर्म्ममेवाभितस्थिवान्। तथैव च कथामेतां राजन्
कथितवांस्तदा॥ २॥ भार्गवेणापि राजेन्द्र जनकस्य निवेशने।
कथैषा कथिता पुण्या नारदाय महात्मने॥ ३॥ नारदेनापि
राजेन्द्र देवेन्द्रस्य निवेशने। कथिता भारतश्रेष्ठ पृष्टेनाक्लिष्ट-
कर्म्मणा॥ ४॥ देवराजेन च पुरा कथितैषा कथा शुभा। सम-
स्तेभ्यः प्रशस्तेभ्यो विप्रेभ्यो वसुधाधिप॥ ५॥ यदा च मम रामेण
युद्धमासीत् सुदारुणम्। वसुभिश्च तदा राजन् कथेयं कथिता
मम॥ ६॥ पृच्छमानाय तत्त्वेन मया चैवोत्तमा तव। कथेयं
कथिता पुण्या धर्म्या धर्मभृताम्वर॥ ७॥ यदयं परमो धर्मो
यन्मां पृच्छसि भारत। आसीद्वीरो ह्यनाकाङ्क्षी धर्मार्थकरणे
नृप॥ ८॥ स च किल कृतनिश्चयो द्विजो भुजगपतिप्रतिदेशि-
तात्मकृत्यः। यमनियमसहो वनान्तरं परिगणितोञ्छशिलाशनः
प्रविष्टः॥ ९॥

इति शान्तिपर्वणि मोक्षधर्म्मपर्वणि उञ्छवृत्त्युपाख्याने
पञ्चषष्ट्यधिकत्रिशततोऽध्यायः॥ ३६५॥

समाप्तमिदं मोक्षधर्म्मपर्वं।

---

॥ समाप्तञ्च शान्तिपर्वं॥

